श्रीमद्भगवत्पतञ्जलिमुनिविरचितं

# व्याकरणमहाभाष्यम्

महामहोपाध्याय श्रीनागोजिभट्टविरचितमहा-
भाष्यप्रदीपोद्योतोद्भासितेन महामहो-
पाध्यायश्रीकैयटोपाध्याय-
विरचितेन प्रदीपेन
विराजितम्

सम्पादकः

श्रीगुरुप्रसादशास्त्री




प्रतिभा प्रकाशन, दिल्ली

It is a reproduction of earlier edition of Vyakarana Mahabhasya first published in 1938 edited by Pt. Nand Kishore Shastri, Varanasi

श्रीमद्भगवत्पतञ्जलिमुनिविरचितम्

# व्याकरणमहाभाष्यम्

तद्व्याख्यानभूतेन उपाध्यायकैयटप्रणीतेन भाष्यप्रदीपेन, तद्व्याख्यानभूतेन नागेशभट्टविरचितेन भाष्यप्रदीपोद्द्योतेन, भाष्यव्याख्यानभूतेन भट्टोजिदीक्षितविरचितेन शब्दकौस्तुभेन च विराजितः

श्रीगुरुप्रसादशास्त्रिविरचितया

भाष्यादिव्याख्यानभूतयाऽभिनवराजलक्ष्मीटीकया चाऽलङ्कृतः

तस्य नवाह्निकरूपः

## प्रथमो भागः (प्रथमं खण्डम्)

संस्कर्त्ता

श्रीगुरुप्रसादशास्त्री

सम्पादकः

पण्डितनन्दकिशोरशास्त्री




प्रतिभा प्रकाशन, दिल्ली

If any defect is found in this book please return the copy by V.P.P. to the publisher for exchange free of cost and / or postage.

*The publication has been brought out with the financial asistance from Rashtriya Sanskrit Sansthan New Delhi*

प्रथम संस्करण - 1938

पुनर्मुद्रण - 1999

ISBN : 81-85268-91-6 (सैट)

मूल्य : रू. 375/- (9 भाग)
(रुपये तीन सौ पचहत्तर प्रति सैट (नौ भाग)

प्रकाशक

**प्रतिभा प्रकाशन**

(प्राच्य-विद्या-प्रकाशक एवं पुस्तक-विक्रेता)
29/5, शक्ति नगर, दिल्ली - 110007
दूरभाष : 7451485

मुद्रक :
तरुण आफसैट प्रैस, दिल्ली

It is a reproduction of earlier edition of Vyākaraṇa Mahābhāṣya first published in 1938 edited by Pt. Nand Kishore Shastri, Varanasi

# PATAÑJALI'S VYĀKARAṆA MAHĀBHĀṢYA

WITH

KAIYAṬA'S *PRADĪPA*

AND

BHAṬṬOJI DĪKṢITA'S *ŚABDAKAUSTUBHA*

AND

NĀGOJIBHAṬṬA'S *UDDYOTA*

With the Commentary *Rājalakṣmī*

BY

**Pt. Guruprasad Shastri**

*Edited by*

**Pt. Nandkishore Shastri**

Under the Supervision of Pt. T.P. UPADHYAYA, M.A.

**(Navāhnika Vol. 1)**




**Pratibha Prakashan**
**Delhi**

If any defect is found in this book please return the copy by V.P.P. to the publisher for exchange free of cost and / or postage.

*The publication has been brought out with the financial asistance from Rashtriya Sanskrit Sansthan New Delhi*

Ist Edition in 1938

Reprinted in 1999

ISBN : 81-85268-91-6 (for set)

Rs. 375/- Set For 9 vols.

(Rs. Three hundred seventy five only for nine vols.)

*Published by :*

**Pratibha Prakashan**

(Oriental Publishers & Booksellers)

29/5, Shakti Nagar

Delhi-110007

Phone : 7451485

*Printed at :*

**Tarun Offset Printers, Delhi**

॥ श्रीः ॥

महामहोपाध्यायभट्टोजिदीक्षितविरचितेन शब्दकौस्तुभेन समलङ्कृतम् ।

# व्याकरण-महाभाष्यम्

## तद्व्याख्यानभूतः कैयटविरचितः प्रदीपः

### तद्व्याख्यानभूतो नागेशभट्टविरचित उद्द्योतः ।

### भाष्यादित्रिवलिव्याख्यानभूता श्रीगुरुप्रसादशास्त्रिविरचिताऽभिनवराजलक्ष्मीश्च ।

## तत्र प्रथमाध्याये प्रथमपादे प्रथममाह्निकम्

*( अथ श्रीनागोजीभट्टकृत उद्द्योतः )*

नत्वा साम्बशिवं देवीं वागधिष्ठानिकां गुरून् ।
पाणिन्यादिमुनीन् वन्द्यान् पितरौ च **सतीशिवौ** ॥१॥
**नागेशभट्टो** नागेशभाषितार्थविचक्षणः ।
**हरिदीक्षित**पादाब्जसेवनावाप्तसन्मतिः ॥ २ ॥
याचकानां कल्पतरोररिकक्षहुताशनात् ।
शृङ्गवेरपुराधीश**रामतो**[1] लब्धजीविकः ॥ ३ ॥
नाऽविस्तीर्णं न विस्तीर्णं मध्यानामपि बोधकृत् ।
**भाष्य-प्रदीप**–व्याख्यानं कुर्वेऽहं तु यथामति ॥४॥

*( अथ श्रीकैयटकृतः प्रदीपः )*

सर्वाकारं निराकारं विश्वाध्यक्षमतीन्द्रियम् ॥
सदसद्रूपताऽतीतमदृश्यं मायया वृतैः ॥ १ ॥

---

*अथ श्रीगुरुप्रसादशास्त्रिकृता राजलक्ष्मीः*

नुमोऽनवद्यसद्ग्रन्थविद्योद्भासितदिङ्मुखान् ।
मरुमण्डलमार्त्तण्ड**स्नेहिरामा**भिधान् गुरून् ॥ १ ॥
**महाभाष्यप्रदीपादित्रिवलि**ग्रन्थिभेदिनी ।
**राजलक्ष्मीः** परं टीका विद्वज्जनमनोहरा ॥ २ ॥

**(उद्द्योते–)** साम्बशिवादीन् नत्वा अहं नागेशभट्टो मध्यानामपि बोधकृत् महाभाष्यप्रदीपव्याख्यानं यथामति कुर्वे इत्यन्वयः। **साम्बशिवं**=जगत्पालनादिशक्तिविशिष्टं शिवं ब्रह्म, अर्द्धनारीश्वरं वा।**वागधिष्ठानिकां**=वागधिष्ठात्रीं सरस्वतीम्। **गुरून्**=जगद्गुरून्।गुरूनिति वन्द्यानिति च पाणिन्यादिमुनित्रयविशेषणमित्यन्ये। **पितरौ**=स्वमातापितरौ॥ नागोजीभट्टः स्वकीयस्य प्रसिद्धस्य 'नागेशभट्टे'त्युपनाम्नः स्वयमेवार्थमाह–**नागेशभाषितेति** । **नागेशभट्टः**–फणिभाषितभाष्याब्धिसारज्ञ इत्यर्थः। प्राचीनव्याख्यातृवैलक्षण्यसूचक**स्तु**शब्दः।

**(प्रदीपे–)**'नारायणं प्रणम्य सरस्वतीं च नत्वा गुरोर्महेश्वरस्य चरणवन्दनञ्च कृत्वाऽहं कैयटो यथागमं महाभाष्यार्णवाऽवारपारीणं विवृतिप्लवं विधास्ये'इत्येवमत्रान्वयो बोध्यः । तत्र **सर्वाकार**मित्यत्र–सर्वे आकारा[2] घटपटादयो यस्यासौ सर्वाकारस्तमिति, सर्वेषां घटपटादीनामाकार उपादानकरणमिति वा विग्रहः । एवं **निराकार**मित्यत्र–निर्गता आकारा यस्मात्तमिति–निष्क्रान्त आकारात्तमिति वा विग्रहः । यथा मृदादीनां घटपटादिकार्यातिरिक्तं दृश्यं–बहिरिन्द्रियवेद्यं–स्वरूपं वर्त्तते एवं ब्रह्मणो घटपटादिकार्यातिरिक्तं बहिरिन्द्रियगोचरं रूपं नास्तीति ब्रह्मणो निराकारता सूपपन्ना ।

**विश्वाध्यक्षं**–लोकद्रष्टारम् । लोककर्त्तारमिति वा । **अतीन्द्रियम्**–इन्द्रियरहितम् । **सदसद्रूपतातीतम्**–अनिर्वचनीयताऽतीतम् । प्रपञ्चधर्मसदसत्त्वरहितमिति वा ।

---

**( महामहोपाध्यायश्रीभट्टोजिदीक्षित**विरचितः–**श्रीशब्दकौस्तुभः )**

विश्वेशं सच्चिदानन्दं वन्देऽहं योऽखिलं जगत् ।
चरीकर्त्ति बरीभर्त्ति संजरीहर्त्ति लीलया ॥ १ ॥
नमस्कुर्वे जगद्वन्द्यं **पाणिन्या**दिमुनित्रयम् ।
श्री**भर्तृहरि**मुख्यांश्च सिद्धान्तस्थापकान्बुधान् ॥ २ ॥

---

१ 'धीशाद्रामतो' इति पाठान्तरम् ।

२ यद्विवर्त्तभूतं जगदित्यर्थः ।

प्र.] ज्ञानलोचनसंप्रेक्ष्य नारायणमजं विभुम् ॥
प्रणम्य परमात्मानं सर्वविद्याविधायिनम् ॥ २ ॥
पुरुषाः प्रतिपद्यन्ते देवत्वं यदनुग्रहात् ॥
सरस्वतीं च तां नत्वा सर्वविद्याधिदेवताम् ॥ ३ ॥
पदवाक्यप्रमाणानां पारं यातस्य धीमतः ॥
गुरोर्महेश्वरस्यापि कृत्वा चरणवन्दनम् ॥ ४ ॥
महाभाष्यार्णवाऽवारपारीणं विवृतिप्लवम् ॥
यथागमं विधास्येऽहं कैयटो जैयटात्मजः ॥ ५ ॥

**(उद्योतः-)** भाष्यं व्याचिकीर्षुः शिष्टाचारप्राप्तं मङ्गलं शिष्यशिक्षायै निबध्नाति-**सर्वेति**। क्त्वान्तानां पञ्चमश्लोकोत्तरार्धेनाऽन्वयः। **सर्वाकारत्वं**-सर्वोपादानकारणत्वान्मृदादिवत्॥ कार्यातिरिक्तदृश्यस्वरूपाऽभावात्-**निराकारत्वम्**। कर्तृत्वात्-**विश्वाध्यक्षत्वम्**। **'स ऐक्षते'**ति श्रुतेः। **अतीन्द्रियत्वं**-विगतेन्द्रियत्वेन। **'पश्यत्यचक्षुः'** इत्यादिश्रुतेः॥ सर्वप्रत्यक्षीकरणं तु स्वरूपचैतन्येनैव इन्द्रियाऽविषयत्वेन वाऽतीन्द्रियत्वम्॥ **सदसद्रूपता**-प्रपञ्चधर्मः। एतच्च 'क्रिया'मिति सूत्रे वक्ष्यते। **तामतीतं**-तद्रहितमित्यर्थः। एवं च सदेवेति भावः। नन्वीदृशमस्माभिः कुतो न गृह्यत इत्यत आह-**अदृश्यमित्यादि**॥ **'मायया वृते'**रित्यस्य कृत्यमाह-**ज्ञानेति**। **तत्त्वमस्या**दिमहावाक्यजनिताऽखण्डाऽद्वितीयसच्चिदानन्दब्रह्माकारा वृत्तिर्ज्ञानं, तदेव **लोचनं** तेन **संप्रेक्ष्य**मित्यर्थः॥ **नारायणमित्यादि**। सर्वनरसमूहाऽन्तर्यामिणमित्यर्थः॥ **सर्वविद्याः**-वेदरूपाः,[2] **तद्विधायिनम्**॥ वचनसन्दर्भविशेषरूपे ग्रन्थे समुचितत्वाद्वागधिदेवतां नमति-**पुरुषा इति**। **देवत्वं**-पाण्डित्यम्। सम्प्रदायशुद्धिं द्योतयन् गुरुं नमति-**पदेति**। व्याकरणमीमांसातर्काणामित्यर्थः॥ **धीमतः**-ऊहाऽपोहकुशलस्य॥

**महाभाष्येति**। व्याख्यातृत्वेऽप्यस्येष्ट्यादिकथनेनाऽन्वाख्यातृत्वादितरभाष्यवैलक्षण्येन महत्त्वम्॥ अवारपारयोर्भवम्। प्लूयतेऽनेनेति **प्लवं**-सेतुम्॥

**यथागमम्**। सम्प्रदायमनतिलङ्घ्येत्यर्थः॥

※ राजलक्ष्मीः ※

केवलसद्रूपमिति यावत्। **ज्ञानलोचनसंप्रेक्ष्यमिति**। अखण्डाऽद्वितीयसच्चिदानन्दब्रह्माकारा चित्तवृत्तिः-**ज्ञानं**,तद्रूपेण **लोचनेन सम्प्रेक्ष्यं**-साक्षात्करणीयमित्यर्थः।एवञ्च ज्ञानरूपेण लोचनेन यः संप्रेक्ष्यस्तमिति कर्मधारयगर्भस्तृतीयातत्पुरुष इत्यवधेयम्। **नारायणमिति**। नराणां समूहो नारम्, नारमयनं-स्थानं यस्यासौ नारायणस्तमिति विग्रहः। सर्वजगन्नियन्तारमिति तदर्थः। **अजं**=शाश्वतम्। कूटस्थञ्च। **विभुं**=व्यापकम्। 'प्रणम्ये'त्यत्र नत्वेत्येतावदुक्त्यैव सिद्धे 'प्र'पदोपादानं कार्याऽव्यवहितप्राक्क्षणवृत्तित्वरूपकारणत्वस्य नतौ बोधनाय। **ब्राम्**=अचिन्त्यमाहात्म्यातिशयाम्। सर्वविद्याधिष्ठातृभूताम्। बुद्धितत्त्वरूपिणीमिति वा। **पदेति**। **पदं**-पदसाधुत्वान्वाख्यायकं व्याकरणशास्त्रम्। **वाक्यम्**-अर्थबोधकं मीमांसाशास्त्रम्। **प्रमाणं**-तर्कशास्त्रम्। न्यायशास्त्रमिति यावत्। **पारं यातस्य**=तदीयगूढतत्त्वविदः।

**महेश्वरस्यापि**=महेश्वराभिधस्य गुरोश्च। **अपि**श्चार्थे। **महेति**। महच्च तद्भाष्यञ्च महाभाष्यम्। अवारञ्च पारञ्च-अवारपारे। अवारपारयोर्भवः-अवारपारीणः। महाभाष्यमेव अर्णवः-समुद्रस्तस्याऽवारपारीणः-महाभाष्यार्णवाऽवारपारीणः। तं-**महाभाष्यार्णवावारपारीणम्**। अत्र 'देवदत्तस्य गुरुकुल'मितिवन्निरूपकांशे नित्यसापेक्षाभ्यामवारपारशब्दाभ्यां 'राष्ट्रावारपाराद्घखौ' विति खप्रत्ययः। **यथागमं**=यथोपदेशम्। वास्तुशास्त्रोपदेशाद्यनुसारेणेति सेतुपक्षेऽर्थः। वैयाकरणसम्प्रदायानुसारेणेति विवृतिपक्षेऽर्थः।

विवृतिरेव प्लवः-विवृतिप्लवः, तं **विवृतिप्लवम्**।

**कैयट इति**। कस्यापत्यं स्त्री **की,** कस्य ब्रह्मणः स्त्री वा **की**-सरस्वती। कीमटति-उपासकत्वेनोपतिष्ठते इति क्यटः। क्यट एव **कैयटः**। प्रज्ञादित्वात्स्वार्थिकोऽण्। सरस्वतीभक्त इत्यर्थः। यद्वा कस्य जलस्यापत्यं जलपूर्णाञ्जलेरुद्भूतत्वात्-**किः**-पतञ्जलिः। किमटति-स्वामित्वेनाऽवगच्छतीति क्यटः। स **एव कैयटः**। एवञ्च साक्षात्पतञ्जलिरेवाहं महाभाष्यं व्याख्यास्ये इति गूढोऽभिप्रायः। एवमन्येऽप्यर्था ऊह्याः। **क्त्वान्तानां**='प्रणम्य' 'नत्वा' 'कृत्वा' इति क्त्वान्तपदप्रतिपाद्याऽर्थानाम्। **उत्तरार्द्धेन**='यथागमं विधास्येऽह'मितिपञ्चमश्लोकोत्तरार्द्धप्रतिपाद्यप्रधानवाक्यार्थघटकक्रियया। विधानक्रिययेति यावत्।

**सर्वेति**। घटपटादिसकलजगदुपादानकारणत्वादित्यर्थः। **उपादानकारणं**-यदभिन्नं कार्यमुत्पद्यते तत्। समवायिकारणमितियावत्। **प्रपञ्चेति**। प्रपञ्चस्य जगतः। **धर्मः**-आरोपितं सत्त्वम्, वास्तविकञ्चाऽसत्त्वं। मिथ्यात्वमिति यावत्। प्रपञ्चो हि स्वाधिष्ठानब्रह्मगतसत्त्वेनाऽऽरोपितेन सन्, वस्तुतोऽसंश्च। तदेवमत्र-सच्चासच्च सदसती, सदसती रूपं यस्याऽसौ सदसद्रूपः, तस्य भावः-सदसद्रूपतेति विग्रहः। एवञ्च आरोपितं सत्त्वं, वास्तवन्त्वसत्त्वम्प्रपञ्चस्य। **तदतीतं**=तद्रहितम्। शुद्धसत्त्वरूपमित्यर्थः। **ऊहः**-ग्रहणम्। उपादानम्। **अपोहः**-परित्यागः। अभिनवकल्पनाकुशलस्येत्यर्थः। **अस्य**=महाभाष्यस्य। **व्याख्यातृत्वेऽपि**=पाणिनीयव्याख्यानभूतत्वेऽपि। **इष्ट्यादीत्यादि**पदेन-'उपसङ्ख्यान' 'वक्तव्य'परिग्रहः। **अन्वाख्या-**

**(शब्द०)**नत्वा **लक्ष्मीधरं** तातं सुमनोवृन्दवन्दितम्।
फणिभाषितभाष्याब्धेः **शब्दकौस्तुभमुद्धरे** ॥ ३ ॥
परिभाव्य बहून्ग्रन्थान्योऽर्थः क्लेशेन लभ्यते।
तमशेषमनायासादितो गृह्णीत सज्जनाः! ॥ ४ ॥

1 'संलक्ष्यं' इति पाठान्तरम्।

2 'सर्वविद्या-वेदरूपा' पाठा०।

प्र.] भाष्याऽब्धिः क्वाऽतिगम्भीरः क्वाहं मन्दमतिस्ततः।
छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् ॥६॥
तथापि हरिबद्धेन सारेण ग्रन्थसेतुना ।
क्रममाणः शनैः पारं तस्य प्राप्तोऽस्मि पङ्गुवत् ॥७॥

**(उद्योतः) भाष्येति** मयूरव्यंसकादिसमासो रूपकं चेति बोध्यम् ॥ **पिशुनत्वं**—दुष्टत्वम्॥

नन्वेवं कथं प्रवृत्तिरत आह—**तथापीति**। तत्रत्यसारांश एवात्र निबद्ध इति भावः॥ **शनैरित्य**नेनात्यन्तग्रन्थाऽसङ्कोचः । **पङ्गुवदित्य**नेन व्याख्येयांशाऽपरित्यागो, व्याख्यानस्याऽविस्तृतत्वं च बोध्यते ॥

(ग्रन्थारम्भप्रयोजन**प्रतिज्ञा**भाष्यम्)

*अथ शब्दानुशासनम् ॥*

**अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते। शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् ॥**

(प्रदीपः) भाष्यकारो विवरणकारत्वाद्व्याकरणस्य साक्षात्प्रयोजनमाह—**अथ शब्दानुशासनमिति** । प्रयोजनप्रयोजनानि तु रक्षोहादीनि पश्चाद्वक्ष्यन्ते[२]। स्ववाक्यं व्याख्यातुं तदवयव**मथ**शब्दं तावद्व्याचष्टे—**अथेत्ययमिति** । इतिशब्दोऽथशब्दस्य स्वरूपेऽवस्थापनाय प्रयुक्तः । एवं हि पदान्तरैः सामानाधिकरण्येन सम्बन्धे सत्य**थ**शब्दो व्याख्यातुं शक्यते। स्वरूपेऽवस्थितश्च सर्वनाम्ना परामृश्यते—**अयमिति**।**'शब्द' इति** स्वरूपकथनं विस्पष्टप्रतिपत्त्यर्थम्। **अधिकारार्थ इति**। अधिकारः-प्रस्तावो द्योत्यत्वेनाऽस्य प्रयोजनमित्यर्थः। निपातानाञ्च द्योतकत्वं **वाक्यपदीये** निर्णीतम्॥ अथशब्दस्याऽधिकारार्थत्वे यो वाक्यार्थः संपद्यते तं दर्शयति-**शब्दानुशासनमिति** । अनेकक्रियाविषयस्यापि शब्दा-

## ॐ राजलक्ष्मीः ॐ

**वृत्त्वात्**—विवरणकारत्वात्। **सम्प्रदायः**=अविच्छिन्नगुरुपरम्परा। भाष्य एव अब्धिः—भाष्याब्धिरिति विग्रहः। **रूपकमिति**। 'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपक'मिति लक्षणलक्षितमुपमेयस्योपमानाऽभेदेन कथनं रूपकमलङ्कारो भाष्यमेवाऽब्धिरित्यत्रेत्यर्थः। **दुष्टत्वमिति**। 'पिशुनौ खलसूचकौ' इत्यमरप्रामाण्यात्खलवाचकस्याऽत्र पिशुनशब्दस्य ग्रहणम्। सूचकवाचकस्याऽत्र ग्रहणे फलाभावादित्यर्थः। **तत्रत्येति**। हरिव्याख्यासारांश एवेत्यर्थः, सारपदप्रयोगस्वारस्यात्। **अत्र**= प्रदीपाख्ये महाभाष्यव्याख्याने। **बोध्यते इति** । पङ्गुर्हि नातिदीर्घैः पदन्यासैः पन्थानमपरित्यजन्नेव गम्यं ग्रामादिकं गच्छति, तद्वदहं व्याख्याकारः कैयटः स्वल्पमपि गहनं प्रदेशमत्यजन्व्याख्येयं महाभाष्यं व्याख्यास्यामीति लभ्यत इत्यर्थः।

**भाष्ये**—'अथ शब्दानुशासन'मित्यस्य 'प्रारभ्यते' इति शेषः। **(प्रदीपे-) विवरणकारत्वादिति**। व्याख्यातृत्वात्। व्याख्यातुश्च मूलानुक्तावश्यकपदार्थप्रदर्शकत्वस्यौचित्यादित्यर्थः। **व्याकरणस्य**=सूत्रवार्त्तिकभाष्यात्मकस्य। **साक्षात्प्रयोजनमिति**। मुख्यं शब्दज्ञानरूपं प्रयोजनं ब्रुवञ्छब्दानु-

शासनाख्यशास्त्रारम्भप्रतिज्ञामाहेत्यर्थः।

**प्रयोजनं**=शब्दज्ञानरूपम्। **प्रयोजनप्रयोजनानीति**। शब्दज्ञानरूपस्य व्याकरणप्रयोजनस्यैव किं प्रयोजनमिति जिज्ञासायां शब्दज्ञानस्य प्रयोजनानि वेदरक्षादीनीत्यर्थः।

परेतु[१]—'अथ शब्दानुशासन'मित्यनेन साधवःशब्दाः,साधुशब्दानामसाधुशब्देभ्यो विवेको वा व्याकरणस्य विषयो भगवता प्रदर्शितः। रक्षोहागमादयस्तु व्याकरणस्य प्रयोजनानि। स्वतः पुरुषार्थानां पुरुषार्थादुपकारकाणामेव वा प्रयोजनत्वस्यौचित्यात्। प्रयोजननिरूपणस्य च अध्ययनानुकूलप्रेक्षावत्प्रवृत्तिं प्रतीष्टसाधनताज्ञानजननमात्रेणैवाऽर्थवत्त्वादध्ययनस्य च विवेकज्ञानपर्यन्तत्वाज्ज्ञानस्य तादृशाध्ययनान्तर्गततया शब्दज्ञानस्य प्रयोजनताया वक्तुमशक्यत्वात्। अतएव **शब्दकौस्तुभे**—'प्रेक्षावत्प्रवृत्तये व्याकरणस्य विषयं भगवान् भाष्यकारः प्रादर्शयदथशब्दानुशासनमिति'—,इत्युक्तम्। 'आदौ विषयं निरूप्य **रक्षो**हेत्यादिना प्रयोजनानि प्रतिपाद्य **किमिद**मित्यादिना ततोऽधिकारी निरूप्यते इति सन्दर्भशुद्धिरप्यस्मन्मते बोध्येति श्री**बालशास्त्रिचरणा**नुसारिणो **गौडाः**।

**तं दर्शयति**=शब्दानुशासनपदार्थं प्रतिपादयंस्तमेव

## ॐ शब्दकौस्तुभः ॐ

समर्प्य लक्ष्मीरमणे भक्त्या **श्रीशब्दकौस्तुभम्।**
**भट्टोजिभट्टो** जनुषः साफल्यं लब्धुमीहते ॥ ५॥

प्रेक्षावत्प्रवृत्तये व्याकरणस्य विषयं भगवान्भाष्यकारः प्रादर्शयत्—**अथ शब्दानुशासनमिति। अथ**शब्दः प्रारम्भस्य द्योतको नतु वाचको निपातत्वादुपसर्गवत्। न च तेऽपि वाचका एवेति वाच्यम्, उपास्यते गुरुरनुभूयते सुखमित्यादौ धातोः सकर्मकक्रियापरत्वं विना कर्मणि लकाराऽयोगेन वाचकत्वे स्थिते उपसर्गाणां द्योतकत्वस्यैव युक्तत्वात् । ननूक्तयुक्त्याऽस्तूपसर्गाणां द्योतकता, निपातान्तरं तु वाचकमेवेति चेन्न; 'साक्षात्क्रियते' अलङ्क्रियते, 'ऊरीक्रियते' इत्यादौ कर्मणि लकारेण कर्मीभूतस्य गुर्वादेरभिधानसिद्धये धात्वर्थं प्रति कर्ममिति वदन्तौ कैयटनागेशौ तु भ्रान्तावेवेतीत्याहुः।

१ **परेतु** शास्त्रारम्भप्रयोजनसूचकं भगवतः कात्यायनस्य वार्तिकमेतत्। 'भाष्यकारस्यैतद्व्याकरणप्रयोजनप्रदर्शनवाक्य'-

२ 'वक्ष्यति' पा०।

नुशासनस्य प्रारभ्यमाणता[1]ऽथशब्दसन्निधानेन प्रतीयते। व्याकरणस्य चेदमन्वर्थं नाम-**शब्दानुशासन**मिति। अत्र चाऽऽचार्यस्य कर्तुः प्रयोजनाभावादनुपादानादुभयप्राप्त्यभावा**न्नोभयप्राप्तौ कर्मणी**त्यनेन षष्ठी, अपि तु **'कर्तृकर्मणोः कृती'**त्यनेनेति-**'कर्मणि चे'ति** समासप्रतिषेधाऽप्रसङ्गादिध्मप्रव्रश्चनादिवत्समासः॥

**(उद्द्योतः)** यद्यपि पाणिनिना **'ब्राह्मणेन निष्कारणः'** इत्यादिश्रुतेः सन्ध्योपासनादाविव प्रत्यवायपरिहारार्थितयैवोत्तमाधिकारिप्रवृत्तिसंभवात्प्रयोजनं नोक्तम्। वार्तिककृताऽपि **'शास्त्रपूर्वके प्रयोगे धर्मः'**इत्यनेन मध्यमाधिकारिणः परमप्रयोजनं दर्शितम्। भगवांस्तु[2] विवरणकारत्वान्मन्दाधिकारिणां प्रवृत्तेः प्ररोचकप्रयोजन[3]प्रतिपत्तिप्रवणत्वाद्व्यवहितेषु स्वर्गाऽपूर्वादिष्वनाश्वासात्साक्षात्प्रयोजनं शब्दव्युत्पत्तिलक्षणं वदतीत्याह-**भाष्यकार इति।** तत्र शब्दज्ञानरूपे प्रयोजने उक्ते विषयोऽप्युक्त एव। शास्त्रजन्यज्ञानविषयस्यैव शास्त्रविषयत्वादिति बोध्यम्। तज्जिज्ञासुरधिकारी, प्रतिपाद्यप्रतिपादकभावः सम्बन्ध इति,-अर्थादेव लब्धम्। ननु **कानि पुन**रित्यादिना प्रयोजनानि वक्ष्यति, तेन पौनरुक्त्यमत आह-**साक्षादिति।** तदेवाह-**प्रयोजनप्रयोजनानीति। व्याख्यातु**मित्यस्य,-'शब्दानुशासनमित्यादिने'ति शेषः॥ **तावत्**-प्रथमम्। **व्याचष्टे इति।** 'पदार्थज्ञानायाऽऽनन्तर्यार्थकत्वनिरासाय चे'ति शेषः।

## ❀ राजलक्ष्मीः ❀

वाक्यार्थं दर्शयति। **प्रारभ्यमाणता**=आरब्धता। वर्त्तमानसमीपे भूते लट्। **सन्निधानेनेति।** अथशब्दस्य प्रारम्भद्योतकत्वादित्याशयः। **अन्वर्थम्**=अनुशिष्यन्तेऽसाधुभ्यो विविच्य बोध्यन्ते साधवः शब्दा अनेन तत्-शब्दानुशासनमित्येवमन्वर्थम्। **आचार्यस्य**-भगवतः पाणिनेः **कर्त्तुः** = शब्दकर्मकानुशासनकर्त्तुः। वार्तिककारस्येति तु **गौडाः।** उद्द्योतकृतस्तु आचार्यपदेन भाष्यकारमभिप्रयन्ति।

**प्रयोजनाभावादिति।** प्रयुज्यतेऽनेन तत्प्रयोजनं-फलं, तदभावात्—तत्प्रयोगसाधकफलाभावादित्यर्थः।

ननु स्वातिरिक्तशाकटायनाद्याचार्यव्यावृत्तिरेव कर्तृवाचकपदप्रयोगफलमित्यत आह-**अनुपादानादिति।** सतोऽपि कर्त्तुरविवक्षितत्वादित्यर्थः। 'शब्दानामिदमन्वाख्यानं नार्थाना'मित्यर्थनिवृत्तावेव तात्पर्यात्सतोऽपि कर्त्तुरविवक्षायाः सम्भवादित्यभिप्रायः।

**(उद्द्योते-) श्रुतिरिति।** 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे'ति हि श्रुतिशरीरम्। 'वेदाध्ययनवद्व्याकरणाध्ययने नित्यत्वात्प्राप्ते' इतिशेषः। **प्रत्यवायः**=पापम्। **एव**कारेण-प्रयोजनानुसन्धानव्युदासः। **परमेति।** पार्यन्तिकेत्यर्थः। परम्परया प्रयोजनमिति यावत्। साक्षात्प्रयोजनन्तु वार्त्तिककृता नोक्तमिति तु तत्त्वम्।

**भगवांस्तु**-सकलज्ञाननिधिः पतञ्जलिस्तु। **विवरणकारत्वात्**=व्याख्यातृत्वात्। अस्य 'शब्दव्युत्पत्तिलक्षणं साक्षात्प्रयोजनं वदती'त्यनेनान्वयः। विवरणकारो हि सन्दर्भशुद्धये उक्तमनुक्तं दुरुक्तञ्च समीकुर्वन् व्याख्येयं विशदं व्याचष्टे इति पूर्वाचार्यानुक्तस्यापि प्रदर्शने न दोष इत्यवधेयम्।

**व्यवहितेषु**=व्यवहितेषु फलेषु। तत्र स्वर्गादि व्यवहितं फलं, जन्मान्तरलभ्यत्वात्। **अपूर्वं**=पुण्यम्। तस्य च स्वर्गादिफलसाधनत्वात्फलत्वं बोध्यमिति सर्वमनवद्यम्।

**अनाश्वासात्**=अविश्वासात्। असन्तोषाद्वा। **शब्दव्युत्पत्तिः**=साधुशब्दज्ञानम्।

**तत्र**=अनुबन्धचतुष्टयमध्ये। **विषयः**=साधुशब्दात्मकः। **ज्ञानेति।** शब्दज्ञानेत्यर्थः। **इति**=इति तु। एवञ्चानुबन्धचतुष्टयमेतावता प्रदर्शितमित्यवधेयम्। शब्दज्ञानरूपे प्रयोजने साक्षात्त्वं च-अव्यवधानेन ज्ञायमानत्वेन पुरःस्फूर्त्तिकत्वात्। **तदेवाह**=साक्षात्पदोपादानफलमाह। रक्षोहादीनां प्रयोजनप्रयोजनता तु 'शाब्दज्ञानरूपस्य प्रयोजनस्यैव किं प्रयोजन'-

## ❀ शब्दकौस्तुभः ❀

त्वस्य वाच्यत्वात्। उपसर्गत्वापेक्षया निपातत्वस्याऽधिकवृत्तितया तदवच्छेदेनैव द्योतकताकल्पनाच्च, सामान्ये प्रमाणानां पक्षपातात्। निपातत्वं चाऽखण्डोपाधिरूपं, जातिरूपं, शब्दस्वरूपमेव वेति पक्षत्रयेऽपि प्रादिचादिसाधारणमेव। 'प्रत्वादिप्रत्येकपर्यवसन्नं त'दिति पक्षेऽपि प्रादीनां चादिभ्यो वैलक्षण्याऽनिरुक्तेः। केवलानामप्रयोगेणाऽन्यलभ्यतापि तुल्यैव। 'विजयते' इत्यत्र धातोर्विशिष्टजय इव 'घटश्चे'त्यत्र समुचितघटे घटशब्दस्याऽपि लक्षणायाः सम्भवात्। किञ्च चादीनां वाचकत्वे 'समानाधिकरणप्रातिपदिकार्थयोरभेदान्वय' इति व्युत्पत्तिर्निपातेतरविषयकतया विना प्रमाणं सङ्कोचनीया स्यात्, स्याच्च समुच्चयादिशब्दयोगइव चादियोगेपि घटादेः षष्ठी। किञ्च समुच्चयादिपदैरुपस्थिते यथा विशेषणसम्बन्धस्तथा चादिभिरुपस्थिते स्यात्। द्योतकत्वपक्षे तु पदार्थैकदेशत्वान्न तत्र विशेषणान्वयः। अपि च 'शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिवे'त्यादौ उस्रसदृशैः शरैः रससदृशानुदीच्यानुद्धरिष्यन्नित्यादिरर्थः। स च उस्रादिशब्दानां तत्सदृशपरत्वे इवशब्दस्य च तात्पर्यग्राहकत्वे सत्येव लभ्यते, अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधजनकताऽपि भज्येत। इवशब्दात्तु तृतीया दुर्लभा, असत्त्वार्थकतया कारकविभक्त्ययोगात्। एवमप्युस्रादिभ्यस्तृतीयाऽनन्वयस्याऽनुद्धाराच्च। नन्वेवं 'नञ्तत्पुरुषस्योत्तरपदार्थादिप्राधान्य'मित्यादिसिद्धान्ता भज्येरन्निति चेन्न; पूर्वपदद्योत्यं

1 'आरभ्यमाणता' इति पा०। 2 तथापि भगवान्' पा०। 3 प्रयोजनज्ञानाधीनत्वादित्यर्थः।

भाष्यत्वादेव च स्ववाक्यव्याख्यानमिति भावः ॥ नन्विति विनाऽप्यथ**शब्दोऽधिकारार्थ** इत्येवोच्यतामत आह–**एवं हीति ॥ पदान्तरैः**–**शब्द**पदा**धिकारार्थ**पद**प्रयुज्यत** इतिपदैः ॥ **व्याख्यातुमिति ।** 'अधिकारार्थत्वेने'ति शेषः ॥ **'अथेतिशब्दोऽधिकारार्थ'**इत्युक्ते आनन्तर्याद्यर्थकत्वमप्रमाणमिति भ्राम्येदतो**ऽय**मिति भाष्ये । योऽयमस्मिन् वाक्ये स इत्यर्थः ॥ **विस्पष्टेति । न वेती**त्यादावर्थपरताया दर्शनेन तथा भ्रमं निवर्तयितुमित्यर्थः ॥ ननु निपातानां द्योतकत्वादभिधेयवाच्यर्थ**शब्दोऽनुपपन्नोऽत आह–**अधिकार इति ॥ प्रस्ताव इति ।** प्रारम्भ इत्यर्थः । स चार्थाद्व्याख्यायमानस्य । अर्थशब्दः प्रयोजनवाचीति भावः ॥

**निपातानां च द्योतकत्वमिति ।** निपातानां द्योतकत्वं चेत्यर्थः । उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारस्याऽ**व्ययं विभक्ती**तिसूत्रे भाष्ये स्पष्टत्वात् । उपसर्गाणां तु द्योतकत्वमेवेति स्पष्टं **गतिर्गता**विति सूत्रे भाष्ये इति तत्रैव निरूपयिष्यामः । अत एव 'साक्षात्क्रियते गुरु'रित्यादि सङ्गच्छते । प्रारम्भक्रियाविषयत्वद्योतकस्यापि अथशब्दस्याऽन्यार्थं नीयमानदध्यादिवन्मङ्गलत्वमर्पात्युभयार्थमथशब्दः प्रयुज्यत इति फलितम् ॥ **परे** त्वत्र वाचकत्वमेवेच्छन्ति । अधिकृतमिति च तदर्थं वदन्ति ॥ भाष्ये–**प्रयुज्यत** इत्यनेन वर्तमाननिर्देशेन सर्वलोकसिद्धमस्याधिकारार्थत्वं न तु वृद्ध्यादिवत्पारिभाषिकमिति ध्वनितम् ॥ ननु विवरणेऽ**धिकृत**मित्यधिकं, वाचकपदाभावात्, द्योतकतानुपपत्तिश्चेत्यत आह–**अनेकेति ।** 'उच्यते' 'श्रूयते' 'क्रियते' इति ॥

**प्रतीयत इति ।** एतावतैव द्योतकत्वमिति भावः ॥

ननु भावसाधनस्यानुशासनपदस्य[1] शास्त्रपदेन सामानाधिकरण्यमनुपपन्नमत आह-**व्याकरणस्य चेति ।** अन्वर्थत्वात्प्रयोजनाभिधानोपपत्तिः ।**अनुशिष्यन्ते**ऽसाधुशब्देभ्यो विविच्य ज्ञाप्यन्तेऽनेनेति करणल्युडन्ततया 'शास्त्र'पदेन सामानाधिकरण्यमिति भावः । इदमेव ध्वनयितुं भाष्ये 'नाम'पदोपादानम् ॥ नामनामिनोरभेदा**न्नाम शास्त्र**मिति सामानाधिकरण्यम् ॥ अनेनैवाऽपभ्रंशानामविषयत्वं सूचितं, ध्वनीनां[2] च ॥ **केषा**मिति प्रश्नस्तु 'किं लौकिकमात्रविषयं[3] शाकटायनादिशास्त्रमधिकृतम्, उत वैदिकमात्रविषयं[3] प्रातिशाख्यम्'

## ❀ राजलक्ष्मीः ❀

मित्याकाङ्क्षाशान्तये तदभिधानादेवेत्यवधेयम् । **पदार्थज्ञानाय**–अथपदार्थज्ञानाय । **आनन्तर्येति ।** 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथे'त्यमरोक्तानन्तर्याद्यर्थेत्यर्थः । **भाष्यत्वादेवेति । 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥'** इति भाष्यलक्षणात्स्ववाक्यार्थवर्णनस्यापि लाभात् ।

**स्ववाक्येति ।** 'अथ शब्दानुशासन'मिति स्ववाक्येत्यर्थः । **आनन्तर्याद्यर्थकत्वम्**=अथशब्दस्य कोशोक्तमानन्तर्याद्यर्थकत्वम् । **भ्राम्ये**दित्यस्य 'कश्चन प्रतिपत्ते'तिशेषः । **यः**–अथ शब्दः । **अस्मिन्वाक्ये**='अथशब्दानुशासन'मिति वाक्ये । **अर्थेति ।** 'इतिशब्दसंनिधाने' इत्यादिः । **तथा भ्रमम्**–अथशब्दस्यार्थपरत्वभ्रमम् । **स च**=प्रारम्भश्च । **व्याख्यायमानस्येति ।** 'अथशब्दानुशासन'मित्युक्तेः । **उपसर्गेति ।** प्राद्युपसर्गातिरिक्तचादिनिपातानामित्यर्थः । **अतएव**-उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारेण प्रकृते निपातानां द्योतकत्वस्यापि स्वीकारादेव ।

**मङ्गलत्वं**=स्वरूपतो मङ्गलत्वम् । स्वमतमाह–**परे**-**स्त्विति ।** न च वाचकत्वपक्षेऽधिकारं जानातीत्यर्थे–'अथ जानाती'ति प्रयोगापत्तिरिति वाच्यम्, अथशब्दस्याधिक्रियमाणार्थकतायाःस्वसमभिव्याहृतप्रथमान्तपदार्थान्वयबोधं प्रत्येव साकाङ्क्षतायाश्च स्वीकारेणाऽदोषात् । अतएव शब्दानुशासनस्य प्रारम्भइत्यर्थे 'शब्दानुशासनस्याथे'ति न प्रयोगः । द्योतकत्वपक्षे त्वधिक्रियते इत्यस्याध्याहारे एवाथशब्दस्य तात्पर्यग्राहकतेत्यत आह–**अनेकक्रियेति । अत्र**–अथशब्दे । **तदर्थम्**=अथशब्दार्थम् । **अस्य**=अथशब्दस्य । **विवरणे**=भाष्यकारकृतव्याख्याने । **इति**=इत्यादि । **एतावतैवेति ।** वाचकपदाऽसमभिव्याहारेऽपि अथ शब्दस्य प्रकरणादिवत्तात्पर्यग्राहकतयैव क्रियाविशेषाक्षेपकत्वरूपं द्योतकत्वं, 'प्रादेशं विलिखती'त्यादिवदित्यर्थः । **इदमेव**=शब्दानुशासनपदस्य अन्वर्थत्वमेव । **इति**=इत्येवम् । **सामानाधीति ।** भाष्ये सामानाधिकरण्येन प्रयोग इत्यर्थः । **अनेनैवेति ।** अन्वर्थत्वेनैवेत्यर्थः । 'ध्वनीनाचे'त्यस्य–'अविषयत्वं सूचित'मितिशेषः । नन्वेवं सन्देहाऽसम्भवात्कथं प्रश्नसङ्गतिरत आह–**प्रश्नस्त्विति ।** एवञ्च प्रश्नोऽयं भाष्ये लौकिकानामेव उत वैदिकानामेवेत्याशयेनैव

## ❀ शब्दकौस्तुभः ❀

प्रति प्राधान्यमिति तदर्थात् । द्योत्यार्थेनाऽप्यर्थवत्त्वेति प्रातिपदिकत्वसिद्धिः । अत एव येषां द्योत्योऽप्यर्थो नास्ति-'तुहि च स्म ह वै पादपूरणे'इत्यमरकोशात्, 'कमीमिद्विति पादपूरणार्थाः' इति**निरुक्ता**च्च,–तदर्थं 'निपातस्यानर्थकस्ये'ति वार्त्तिकारम्भ इत्यवधेयम् । स्फुटश्चेदं**कैयटा**दिग्रन्थेषु । अत एवाऽऽकृत्यधिकरणे **भट्टैरुक्तम्**-**'चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः । क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥ तयोरर्थाभिधाने हि व्यापारो नैव विद्यते । यदर्थद्योतकौ तौ तु वाचकस्स विचार्यते'** ॥ इति ।

यत्तु-अर्थवत्सूत्रे 'अधीते' इत्यादौ धातोरनर्थकता, उपसर्गविशिष्टस्य वाचकतेति **कैश्चि**दुक्तं, तदभ्युच्चयमात्रम् । 'सर्वस्य 'द्वे' इति सूत्रे कैयटादिग्रन्थोऽप्येवमेव । पूर्वोत्तरमीमांसयोस्तत्र तत्र 'नञः पर्युदासे लक्षणे'ति ग्रन्था अप्येव-

१ 'भावसाधनानुशासनशब्दस्य पा० ।

२ अयं पाठो न सार्वत्रिकः । ३ 'विषय' पा० ।

इतीति **परे** ॥ ननु **कर्मणि चे**ति निषेधात्कथं कर्मषष्ठ्यन्तेन समासोऽत आह–**अत्र चाचार्यस्येति**। उभयोरुपादान एवोभयप्राप्तिरित्यात्मसमाने इति सूत्रे भाष्ये स्पष्टम् ॥

**कर्तृकर्मणो**रिति षष्ठ्यामपि समासनिषेधः कुतो नेत्यत आह–**इध्मेति**। **च**स्येत्यर्थकतया कर्मणीत्युच्चार्य विहित-षष्ठ्या एव समासनिषेध इति भावः ॥

भाष्ये–'**शास्त्र**'मित्यस्य 'कर्तव्यत्वेने'ति शेषः। विवरण-कारत्वाद्व्याख्यातव्यत्वेनेति शेष उचित इत्यन्ये ॥ शास्त्रत्वं चास्य साधुत्वरूपैकप्रयोजनसम्बद्धत्वाद्बोध्यम् ॥

[ व्याख्येयशब्दनिर्णयाधिकरणे **आक्षेप**भाष्यम् ]

**केषां शब्दानाम् ? ॥**

(प्रदीपः) शब्दशब्दस्य सामान्यशब्दत्वा-द्विना प्रकरणादिना विशेषेऽवस्थानाऽभावात्तन्त्रीशब्द-काकवाशितादीनामप्यनुशासनप्रसङ्ग इति मत्वा पृच्छति—**केषामिति**। उत्तरपदार्थान्तर्गतस्यापि पूर्वपदार्थस्य बुद्ध्या प्रविभागात्किमा प्रत्यवमर्शः। यथा 'राजपुरुष' इत्युक्ते 'कस्य राज्ञः ?' इति ॥

(उद्द्योतः) **सामान्यशब्दत्वादिति**। लोक-व्यवहारे ध्वनावपभ्रंशे च 'शब्द'शब्दप्रयोगादिति भावः ॥ एतेन 'ध्वनिव्यङ्ग्य एव **तपर**सूत्रादौ शब्दशब्दप्रयोगादिदं चिन्त्य'मित्यपास्तम् ॥ ननु 'व्रीहीन् प्रोक्षती'त्यादौ सामान्य-शब्दस्याऽप्यपूर्वीयेषु विशेषेषु प्रवृत्तिवद्वाचके साधौ तद्विशेषे प्रवृत्तिर्भविष्यतीत्यत आह–**विनेति**। व्रीहिशब्दस्य तु प्रक-रणाद्विशेषे प्रवृत्तिरिति भावः। **वाशितादीना**मित्यादिना-ऽपभ्रंशसङ्ग्रहः। ननूत्तरपदार्थसंसृष्टपूर्वपदार्थस्य कथं सर्व-नाम्ना परामर्शोऽत आह–**उत्तरपदार्थान्तर्गतस्येति**। ततः पृथगुपस्थित्यविषयस्येत्यर्थः। **बुद्ध्या**–मानस्या[1]। यद्वा वाक्यजन्यबुद्ध्या।

[ सिद्धान्तवादिनः **समाधान**भाष्यम् ]

**लौकिकानां वैदिकानाञ्च।**

[ सिद्धान्तवादिन **उदाहरण**भाष्यम् ]

**तत्र लौकिकास्तावद्गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति ॥ वैदिकाः खल्वपि– शन्नो देवीरभिष्टये। इषे त्वोर्जे त्वा। अग्निमीळे पुरोहितम्। अग्न आयाहि वीतये इति ॥**

(प्रदीपः) सिद्धान्तवादी तु व्याकरणस्य वेदाङ्गत्वा-त्सामर्थ्याद्विशेषावगतिरिति मत्वाह—**लौकिकाना-मिति**। लोके विदिता इति,–**लोकसर्वलोकाट्ठ**गिति

### ❀ राजलक्ष्मीः ❀

इति ध्वनितम्। **इति**=इत्याशयकम्। **परे**–भाष्यानुयायिनो नागेशभट्टाः। **समासइति**। शब्दानुशासनमित्यत्रेत्यर्थः। **उभयोः**=कर्तृकर्मणोः। **समासेति**। 'कर्मणि चे'ति समास-निषेध इत्यर्थः। **विवरणकारत्वात्**=भाष्यकारस्य विवरण-कारत्वाद्व्याकरणशास्त्रकर्तृत्वाभावात्। **'वेदितव्य'**मित्यस्य 'शिष्यै'रिति शेषः। **अस्य**=भाष्यस्य।

**(कैयटे–) सामान्येति**। अपभ्रंशतन्त्रीशब्दकाक-वाशितादिसाधारणत्वादित्यर्थः। **विशेषे**=वाचके साधौ शब्दविशेषे। **पूर्वपदार्थस्य**=शब्दपदार्थस्य।

**(उद्द्योते–) प्रकरणात्**–यागप्रकरणात्। **उत्तर-पदार्थेति**। अनुशासनपदार्थैकार्थीभावापन्नशब्दपदार्थस्ये-त्यर्थः। **सर्वनाम्ना**–किंशब्देन। **ततः**=उत्तरपदार्थात्। **मानस्येति**। मानसबोधेन। नतु शाब्दबुद्ध्येत्यर्थः। नियमेन मानस्या बुद्ध्या तत्प्रविभागाऽसम्भवादाह-**यद्वेति**। **वाक्येति**। वाक्यैकदेशेऽपि वाक्यशब्दप्रयोगात्**केषां शब्दानामिति** वाक्यैकदेशजन्यशाब्दबुद्ध्येत्यर्थः।

**(भाष्ये–)** 'वैदिकानां लौकिकानाञ्चे'ति वक्तव्ये लौकिका-नामादावुपादानं ब्राह्मणवसिष्ठन्यायेन, लोकमात्रवृत्तिशब्द-मात्रबोधकतया लौकिकानां व्यापकत्वाच्चेति ध्येयम्।

**(कैयटे–) सामर्थ्यादिति**। सामर्थ्यस्य च– 'संयोगो विप्रयोगश्चे'त्युपक्रम्य 'सामर्थ्यमौचिती देश'इत्या-दिना शब्दार्थस्य निर्णये विशेषस्मृतिहेतुत्वं काव्यप्रकाशे स्पष्टमुक्तमित्यवधेयम्। **विदिताः**–प्रसिद्धाः। वैदिकपदानु-

### ❀ शब्दकौस्तुभः ❀

मेत्र, उक्तयुक्तेः। अस्तु वा मतान्तरं 'निपाता वाचका' इति, सर्वथापि 'प्रादयो द्योतकाश्चादयस्तु वाचका' इत्येवंरूपमर्द्ध-जरतीयं नैयायिकाभ्युपगतमप्रामाणिकमेवेति दिक्।

**(पृष्ठे.४)** अनुपूर्वकः शासिर्विविच्य ज्ञापने दृष्टः। तद्यथा– 'अक्षेत्रवित्क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः'। यथा वा 'संपूषन्विदुषा नय यो अञ्जसानुशासति य एवेदमिति ब्रवत्'। अत्र[2] हि गुणत्रयोपेतेन सद्गुरुणाऽस्मान् शिक्षयेति पूषा प्रार्थ्यते। तत्र **अञ्जसेति** शैघ्र्यमुक्तम्। **अनुशासतीति** विविच्य बोधकत्वं। बहुलञ्छन्दसीति शपो न लुक्। 'इद-मित्थमेवे'ति 'यो ब्रूया'दिति प्रमेयनिष्कर्ष उक्तः। 'ब्रव'दि-त्यत्र 'लेटोऽडाटा'वित्यट् ॥ तथा च अनुशिष्यन्ते विविच्य असाधुभ्यो विभज्य बोध्यन्ते येनेति करणे ल्युट्। ततः **शब्दा-ना**मिति कर्मणि षष्ठी। तदन्तेन समासः। न च 'कर्म्मणि-

१ 'मनसा' पा०।

२ 'संपूष'न्नित्यादिश्रुतौ।

ठञ् । अथ वा भवार्थेऽध्यात्मादित्वाट्ठञ् । एवं वेदे भवा वैदिकाः। वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनाय पृथगुपादानम् । यथा—**ब्राह्मणा आयाता वसिष्ठोऽप्यायात** इति वसिष्ठस्य। तेषां तु प्राधान्यं यत्नेनाऽपभ्रंशपरिहारात् । अथ वा भाषाशब्दानामेव लौकिकत्वमिति भेदेन निर्देशः। तत्र लोके पदानुपूर्वीनियमाभावात्पदान्येव दर्शयति—**गौरश्व इति**। वेदे त्वानुपूर्वीनियमाद्वाक्यान्युदाहरति—**शं न इति**।

**( उद्द्योतः ) वेदाङ्गत्वादिति**। तत्त्वं चाऽऽगमसिद्धम्। अनेन तन्त्रीशब्दादीनामविषयता सूचिता। न च वेदाङ्गत्वाद्वैदिका एव विषयाः स्युः। तत्र-तत्र **'भाषायां' 'छन्दसी'**त्याद्युक्त्योभयोरपि विषयत्वात्। ननु चिदानन्दस्वरूपब्रह्मातिरिक्तस्य सर्वस्य लोकपदार्थत्वाद्वेदस्यापि लोकान्तर्गतत्वाद्वेदेनाभिधानं न युज्यत इत्यत आह—**वैदिकानामिति**। 'वैदिकानां लौकिकत्वेपी'ति[1] पाठः। **तेषां त्विति**। लौकिकानां याज्ञे कर्मण्येव तत्परिहारः, तेषां तु सर्वत्रेति भावः। **भाषाशब्दानामिति। भाषा**—प्रयोज्यप्रयोजकवृद्धव्यवहारः, तत्र प्रयुज्यमानानामित्यर्थः। एवंच वेदमात्रान्तर्गत—**कर्णेभिर्देवासो गृभ्णामी**[2]त्याद्यतिरिक्तपरता लौकिकशब्दस्य, तैस्तद्व्यवहाराऽदर्शनात्। अत एव 'गौरश्व' इत्यादीनां लौकिकोदाहरणत्वसङ्गतिः। लोके स्वरानादराद्वेदे तदादराच्च स्वरविशिष्टानां वेदमात्रविषयतामभिप्रेत्य **'शं न'** इत्यादीनां वैदिकोदाहरणत्वसङ्गतिरिति भावः॥ लोके पदानामुदाहरणत्वोक्तौ वेदे वाक्यानामेव तत्त्वोक्तावाशयमाह—**तत्रेति**। पदान्तरसमभिव्याहारेण स्वरविशेषाच्च वेदे वाक्यानामुदाहरणत्वोक्तिरित्यपि बोध्यम्॥ 'लोकवेदसाधारणतया पाणिनीयशब्दानुशासनस्यैवाऽत्राधिकृतत्वम्, न तु शाकटायनादिव्याकरणस्ये'त्युत्तराशयं **परे**। भाष्ये—**लौकिकास्तावदिति**। तावच्छब्दोऽनुक्रमे। पूर्वं लौकिका उदाह्रियन्ते, पश्चाद्वैदिका इत्यर्थः। वैदिकानां प्रधानत्वेऽपि लौकिकानां पूर्वनिर्देशस्तद्वदादरसूचनार्थः।

## ❀ राजलक्ष्मीः ❀

रोधेनाह—**अथवेति**। ननु वैदिकानां प्राधान्यं किंमूलकमत आह—**यत्नेनेति। तेषां**=वैदिकानाम्। **यत्नेन**=सर्वतोभावेन। 'परिहारादि'त्यस्य 'बोध्य'मिति शेषः। प्रत्यवायपरिहारार्थं वेदे सर्वथाऽपभ्रंशपरिहार इति भावः। **तत्र**-तयोर्मध्ये।

**शन्न इति**। अत्र-प्रसिद्धर्ग्यजुःसामाथर्वणां क्रमेणप्रदर्शनमकृत्वाऽथर्वयजुर्ऋक्साम्नां वैपरीत्येन 'शन्न'इत्यादिना प्रदर्शनन्तु रक्षःपिशाचादिविघ्नव्युदाससाधनमन्त्रघटिततया भवननिर्माणसाधनीभूतशान्त्यादिमन्त्रघटिततया च प्रथममथर्वोपस्थितेः, ततश्चाध्वर्युकर्ममन्त्रप्रदर्शकतया यजुषां भित्तिस्थानीयानामुपस्थितेः, ततश्च चित्रस्थानीययोर्ऋक्सामयोर्मध्ये प्रकृतिभूतदर्शपौर्णमासहौत्रोपयोगिन ऋग्वेदस्योपस्थितेः, ततश्च पारिशेष्यात्सोमादिसाधनतया च साम्नामुपस्थितेरिति **श्रीबालशास्त्रिचरणाः**। केचित्तु-भाष्यकृत आथर्वणिकत्वान्मङ्गलार्थक 'शं'पदघटितत्वाद्**देवी**रित्यादिशुद्धच्छान्दसपदघटितत्वाच्चादावथर्वोपादानं, तत आध्वर्यवकर्मोपकारकत्वाद्यजुषां, तत ऋत्विक्कर्मोपकारिकाणामृचामुपादानम्, अध्वर्योर्ऋत्विजश्च क्रमेणोपस्थितेः। ततः परिशेष्यात्साम्नामित्येव क्रमपरित्यागे बीजमाहुः।

**( उद्द्योते- ) तत्त्व**—वेदाङ्गत्वम्। **आगमेति**। पूर्वोक्त 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयः'इत्यादिश्रुतिसिद्धं, 'मुखं व्याकरणं स्मृत'मित्यादिसिद्धमिति चार्थः। **प्रयुज्येति**। घटमानयेत्यादीनामित्यर्थः। **एवञ्च**—भाषाशब्दानामेव लौकिकत्वे च। **पदानां**—गौरश्व इत्यादिपदानामेव। **वाक्यानां**—'शन्न'इत्यादीनाम्। **तत्त्वोक्तौ**—उदाहरणत्वोक्तौ। **आशयं**—भाष्याशयम्। स्वरीत्याह—**लोकेति**। लौकिकवैदिकोभयशब्दसाधारणतयेत्यर्थः। **अत्र**—'अथ शब्दानुशासन'मिति भाष्यवाक्ये। करणस्याधिकरणत्वविवक्षया च सप्तमी। 'बोध्यते' इति शेषः। **परे**—भाष्यानुसारिणो **भट्टाः**। **परे** इत्यस्य 'वर्णयन्ती'तिशेषः। **तद्वत्**—वैदिकवदेव।

## ❀ शब्दकौस्तुभः ❀

चे'ति सूत्रेण समासनिषेधः शङ्क्यः, तत्र 'च'शब्दस्य इतिशब्दार्थतया 'कर्म्मणीतिशब्दवता उभयप्राप्ताविति सूत्रेण या षष्ठी तदन्तं न समस्यते' इत्यर्थात्। इयं तु 'कर्त्तृकर्मणो'रिति विहिता षष्ठी न तूभयप्राप्ताविति। आचार्यस्य कर्त्तृत्वं वस्तुतः सत्त्वेऽपीहाऽनुपादानात् 'चित्रं गवां दोहोऽगोपेने'त्यत्रहि आश्चर्यं प्रतिपाद्यं, तच्च यद्यशिक्षितो दोग्धा दुर्दोहा गावश्च दोग्धव्यास्तदैव निर्वहति नत्वन्यथा, अतः कर्तृकर्मणोर्विशिष्योपादानादस्त्युभयप्राप्तिः। इह तु 'शब्दानामिदमनुशासनं नत्वर्थाना'मित्यर्थनिवृत्तिपरं वाक्यं न तु कर्त्तृविशेषनिवृत्तिपरम्, अतो नास्त्युभयप्राप्तिः। अस्तु वा यथाकथंचिदुभयप्राप्तिस्तथापि न क्षतिः; उभयप्राप्ताविति सूत्रेऽविशेषेण विभाषेतिपक्षस्यापि वक्ष्यमाणतया नियमाऽप्रवृत्तिपक्षे 'आचार्यस्य शब्दानुशासन'मितिप्रयोगसम्भवात्। शेषलक्षणा षष्ठी वाऽस्तु। तस्माद्वैदिका लौकिकाश्च साधवः शब्दा इह विषय इति स्थितम्। वेदे भवा वैदिकाः। अध्यात्मादित्वाट्ठञ्। एवं लोके भवा **लौकिकाः**। यद्वा—लोके विदिता लौकिकाः। 'तत्र विदित' इतिवर्त्तमाने 'लोकसर्वलोकाट्ठञ्'। प्रातिशाख्येष्विव न वैदिकैकदेशमात्रमिह विषयो न वा व्याकरणान्तरेष्विव छान्दसपरित्याग इति सूचयितुमुभयोपादानम्॥

१ 'वैदिकानामपि लौकिकत्वेन' इति 'वैदिकानां लौकिकत्वेन' इति 'वैदिकानामपि लौकिकत्वेऽपि' इति च पाठा.। २ 'गृणामि' पा०।

[ प्रश्नवादिनः शब्दस्वरूपनिर्धारणार्थकप्रश्नभाष्यम् ]

**अथ-गौरित्यत्र कः शब्दः ? ॥**

**( प्रदीपः )** अयं गौरयं शुक्ल इति शब्दार्थयोरभेदेन लोके व्यवहारदर्शनाच्छब्दस्वरूपनिर्धारणाय पृच्छति-**अथेति।** 'गौ'रिति विज्ञाने प्रतिभासमानेषु वस्तुषु कः शब्द इत्यर्थः ॥

**(उद्द्योतः) अभेदेन लोके इति।** अभेदेनैवेत्यर्थः । शब्दपरत्वाभिप्रायेणाऽस्य गौरिति प्रयोगाभावादिति भावः । पुरोवर्तिव्यक्तिं पश्यतो वाचकजिज्ञासया 'कोऽय'मिति प्रश्ने 'अयं गौः' 'अयं (च) वर्णः शुक्ल' इत्युत्तरस्थले संनिहितमुद्दिश्य तादात्म्येन शब्दविधेयताप्रतीतेरिति तात्पर्यम् ॥ शब्दार्थयोस्तादात्म्यमेव शक्तिः । स्पष्टं चेदं पातञ्जलभाष्ये इति **मञ्जूषायामस्माभिर्हर्यादि**संमततया व्युत्पादितम् । अत एव जात्यादिव्यक्त्योरिव **'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः'** इत्यादौ शब्दार्थयोरपि अभेदेन व्यवहारः ।

**अथ गौरिति** भाष्ये-'अथे'त्यस्य 'पृच्छयते' इति शेषः । किं पृच्छयते, तदाह-**गौरित्यत्रेत्यादि ॥ कः शब्द इति।** कः शब्दशब्दाभिधेय इति प्रश्नः । **प्रतिभासमानेषु ।** शब्दजातिव्यक्त्यादिषु । नन्वेवं गुणक्रिययोः शब्दत्वाऽऽशङ्काऽनुपपन्ना, नहि ते अपि गौरितिशब्दजन्यबोधे भासेते इति चेन्न; गुणगुणिनोः क्रियाक्रियावतोश्चाऽभेदात् । शब्दार्थयोश्च तत्त्वात् । **तदभिन्नाभिन्नस्येति** न्यायेन तच्छङ्कोपपत्तेः । यथा परमकारणाऽभिन्नकार्यकारणकस्य परमकारणेनाऽप्यभेदः । यद्वा **गुणसमूहो द्रव्यमिति** पक्षे **तस्य भाव** इति सूत्रस्थभाष्यसंमते समूहस्य गोशब्दवाच्यत्वेऽवयवभूतगुणादीनामपि तद्वाच्यत्वमिति शङ्का बोध्या । अत्र **गौरिति विज्ञाने** इति सामान्योक्त्या तदाकारप्रत्यक्षादिज्ञानेऽपि गुणादीनां सामान्यरूपेण भानम् । अत एव प्रत्यक्षदृष्टेऽपि आम्रफलादौ रसविशेषादिजिज्ञासा, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वादित्य**न्ये** ॥ निरूपितं चैतन्मञ्जूषायाम् ॥

[ तत्त्वबुभुत्सोः प्रश्नवादिन **आशङ्का**भाष्यम् ]

**किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः ? ॥**

**( प्रदीपः )** तान्येव वस्तूनि क्रमेण निर्दिशति-**किं यत्तदिति ।** 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददते' इति कामचारतः **स शब्द** इति पुंलिङ्गेन निर्देशः ।

**( उद्द्योतः ) 'यत्त'**दिति समुदायो यद्वृत्तार्थे वर्तते, तस्यैव पुनस्तद्वृत्तेन 'स' इत्यनेन परामर्शः। यद्वा प्रसिद्धौ (तत्)। ननु यदित्यस्य नपुंसकत्वेन तच्छब्देपि नपुंसकलिङ्गमेवोचितमत आह-**उद्दिश्यमानेति** । सिद्धवत्कीर्तन**मुद्देशः ।** प्रतिपाद्यतया विधेयतया वा कीर्तनं-**प्रतिनिर्देशः ।** यथा 'शैत्यं हि यत्सा प्रकृतिर्जलस्ये' त्यादौ स्त्रीलिङ्गनिर्देशः । **तल्लिङ्गमिति ।** तयोर्लिङ्गमित्यर्थः ।

---

### ❀ राजलक्ष्मीः ❀

**( भाष्ये- ) अथेति** प्रश्ने । 'गौरिति'इति ज्ञानाकारप्रदर्शनम् । गौरित्यस्मिन् प्रत्यक्षे, शाब्दज्ञाने च । **अत्र**-विषयभूतेषु वस्तुषु मध्ये । **कः शब्दः**-कः शब्दशब्दाभिधेय इत्यर्थः ।

**( प्रदीपे- ) इति**—इत्यादिरीत्या । **व्यवहारेति ।** आप्तव्यवहारेत्यर्थः । 'व्यवहारदर्शना'दित्यस्य-'सन्देहोदया' दितिशेषः । **निर्धारणाय**-निर्णयाय ।

**( उद्द्योते- ) संनिहितं**=सास्नालाङ्गूलादियुतं समीपदेशस्थं पिण्डम् । **अतएव**-तदात्म्यस्यैव शक्तित्वादेव । 'किं पृच्छयते' इत्यस्य 'इत्येवं शङ्काया'मितिशेषः ।

**तत्त्वा**दित्यत्र **चो** भिन्नक्रमः।-शब्दार्थयोरभेदाच्चेत्यर्थः । **अत्र**=भाष्ये, कैयटे च । **सामान्यरूपेण**-रूपत्वादिना । **भानमिति ।** अस्य 'इत्येवं सूचित'मितिशेषः । **अतएव**-गुणादीनां सामान्यरूपेण भानादेव । **रसविशेषादीत्यादि**पदेन-गन्धादिशेषादिपरिग्रहः ।

**( भाष्ये- )** सास्ना च लाङ्गूलञ्च ककुदञ्च खुराश्च विषाणे च एषां समाहारः-सास्नालाङ्गूलककुदखुरविषाणम्, तदस्यास्तीति सास्नालाङ्गूलककुदखुरविषाणी, स चासावर्थश्च, तद्रूपमिति विग्रहो बोध्यः ।

'किं'मित्यस्य 'शब्द'इत्यनन्तरं योजना बोध्या । एवञ्च 'यत्तत्सास्नादिमदर्थरूपं वस्तु स शब्दशब्दाभिधेयः किमित्यर्थः।

**(प्रदीपे-)निर्दिशतीति**-तत्त्वं बुभुत्सुः स एव प्रश्नवादी तान्येव वस्तूनि क्रमेण निर्दिशतीत्यर्थः । **प्रतिनिर्दिश्यमानो**-विधेयः । **इति ।** इतिहेतोः कामचारादित्यर्थः ।

**( उद्द्योते- ) समुदायः**=सर्वनामशब्दसमुदायः । **यद्वृत्तेति । यदा**-यच्छब्देन, **वृत्तं**-निष्पन्नं,-**यद्वृत्तं**-विभक्त्यन्तमात्रं-यदिति, तस्यैवार्थे-यच्छब्दार्थे इति तदर्थः ।

---

### ❀ शब्दकौस्तुभः ❀

स्यादेतत्,-गौरित्यादिः शब्द इह विषयः;तत्र च गकार औकारो विसर्गश्च घटकः, व्युत्पाद्यते तु 'डो'प्रत्ययवादेशादिकं, नचैतद्गौरितिबोधे भासते। तथाचाऽर्थान्तरता। गौरित्यनेन परिनिष्ठितेन सह डोप्रभृतीनां सम्बन्धविशेषस्तत्प्रतिपत्त्युपयोगिता चास्तीति तद्व्युत्पादनमिति चेन्न; शब्दान्तरव्यावृत्तस्य सम्बन्धस्योपयोगस्य च दुर्वचत्वात्। द्रव्यगुणादिपदार्थानामिह व्युत्पाद्यतापत्तेश्च। अस्ति हि तेषां गौरित्यनेन वाच्यवाचकभावादिः

[ सिद्धान्तिनो द्रव्यस्य शब्दत्वनिराकरणभाष्यम् ]

**'ने'त्याह; द्रव्यं नाम तत् ॥**

(प्रदीपः) **नेत्याहेति ।** भिन्नेन्द्रियग्राह्यत्वान्न द्रव्यं शब्द इति प्रतीतम्, अपि तु द्रव्यमिति। यदि च[1] द्रव्यानुशासनं विवक्षितमभविष्यत्—**'अथ द्रव्यानुशासन'**मित्येवाऽवक्ष्यत् ॥

(उद्द्योतः) भाष्योक्तहेतुमुपपादयति—**भिन्नेन्द्रियेति ।** सामान्यव्यतिरिक्तत्वे सति श्रोत्रेन्द्रियग्राह्यत्वं हि शब्दलक्षणमिति भावः। **यदि च द्रव्येति ।** यदि द्रव्यं शब्दशब्दाभिधेयं स्यादित्यर्थः। तथा हि सति द्रव्यादीनां तन्त्रान्तरे निरूपितत्वात्तस्य वैयर्थ्यापत्तिरित्यपि बोध्यम्। तत्र द्रव्यस्य क्रियाद्याश्रयत्वात्पूर्वमुक्तिः। क्रियागुणौ च जात्याश्रयाविति तयोस्ततः पूर्वमुक्तिः। वैशेषिकसिद्धगुणानामपि संयोगविभागादीनां क्रियात्वं ध्वनयितुं गुणात्प्राक् क्रियोक्तिरिति ध्येयम्। **यत्तर्हि शुक्ल** इत्यादौ गुणस्य शब्दत्वशङ्कापरे वाक्ये 'इति'शब्देन प्रकारार्थेन सुरभ्यादिभेदभिन्नगन्धादिलिङ्गसङ्ख्यादिरूपगुणसङ्ग्रह इति न न्यूनता।

ननु शब्दस्यापि गुणत्वाद्**गुणो नाम स** इत्युत्तरमसङ्गतम्, तस्य द्रव्यत्वे **द्रव्यं नाम त**दित्युत्तराऽसङ्गतिरिति चेन्न; उक्तद्रव्याश्रितो गुणो नाम स इत्यर्थात्[2] ॥

[ प्रश्नवादिनः क्रियायाः शब्दत्वाशङ्काभाष्यम् ]

**यत्तर्हि—तदिङ्गितं चेष्टितं निमिषितं[3]मिति स शब्दः ? ॥**

(प्रदीपः) अनेनैव न्यायेन गुणक्रियासामान्यानां निराकृतेऽपि शब्दत्वे, प्रपञ्चार्थं तच्चोद्यपूर्वकं निराकरोति—**यत्तर्हीति ।** गोशब्दार्थे चैषां संभवाच्छब्दत्वमाशङ्क्यते। परिहारस्तु पूर्ववत् ॥

तत्र—**इङ्गितम्**—अभिप्रायस्य सूचकः शरीरस्थितो[?]…

*(continued below)*

॥ राजलक्ष्मीः ॥

**नपुंसकत्वेन**-नपुंसकलिङ्गार्थाभिधायित्वेन। **स्त्रीलिङ्गेति ।** अत्र शैत्यशब्दस्य क्लीबत्वेऽपि विधेयप्रकृतिलिङ्गोपादानात्स्त्रे**ति** स्त्रीलिङ्गनिर्देश उपपद्यते इति भावः। **तयोरिति ।** प्रक्रान्तयोरुद्दिश्यमानप्रतिनिर्दिश्यमानयोरित्यर्थः।

(भाष्ये–) **नेत्याहेति ।** 'नासौ शब्दशब्दाभिधेय'इति गोनर्दीय आहेत्यर्थः। कुत एतदित्यत आह—**द्रव्यमिति ।** यतो द्रव्यं नाम—द्रव्यमितिप्रसिद्धं तत्, अतो नासौ शब्दशब्दाभिधेय इत्यर्थः। **नाम**शब्दः प्रसिद्धार्थकः।

(प्रदीपे–) **भिन्नेन्द्रियेति ।** शब्दग्राहकश्रोत्रेन्द्रियाऽतिरिक्तचक्षुरिन्द्रियग्राह्यत्वादित्यर्थः। **प्रतीतं**=प्रसिद्धम्। **अपितु**=किन्तु। **'द्रव्य'**मित्यस्य 'प्रतीत'मितिशेषः। गुणाश्रयत्वेन गुणसमूहत्वेन वेति हेतुरत्राक्षेपेण बोध्यः। **अभविष्यत्**=भवेत्। **अवक्ष्यत्**–वदेत्।

(उद्द्योते–) **हेतुं**='द्रव्यं नाम त'दिति हेतुम्। **सतीति ।** अत्र लक्षणे सत्यन्तेन–शब्दत्वादेर्व्युदासः। विशेष्यदलेन च द्रव्यादिनिरासः। **तस्य**=द्रव्यादिनिरूपणस्य। द्रव्यानुशासनस्येति यावत्। **तत्र**=गौरित्यादौ भासमानानां द्रव्यगुणादीनां मध्ये। **सिद्धेति ।** तन्मतसिद्धेत्यर्थः। **प्रकारार्थेन**=सादृश्यार्थेन। **गन्धादी**त्यादिना–स्पर्शादिसङ्ग्रहः। **सङ्ख्यादी**त्यादिना शक्तिरूपकारकपरिग्रहः। प्रसङ्गादत्रैव शङ्कते–**नन्विति । तस्य**=शब्दस्य। **द्रव्यत्वे**=द्रव्यत्वे तु। **उक्तेति ।** पूर्वोक्तविषाण्यादिद्रव्याश्रित इत्यर्थः। परेतु–'द्रव्यं नाम' 'गुणो नामे'–त्यादौ श्रोत्राग्राह्यत्वेन द्रव्यगुणयोर्विशेषणाच्छ्रोत्राग्राह्यं द्रव्यं नाम तदित्यर्थेन, मतभेदेन शब्दस्य द्रव्यत्वे गुणत्वे वा न-'नेत्याह द्रव्यं नाम तत्' 'गुणो नाम तत्' इत्यु**त्तरा**सङ्गतिरित्याहुः।

(भाष्ये–) **यत्तर्हीति ।** यदि द्रव्यं न शब्दस्तर्हि यत्तदिङ्गितं चेष्टितं निमिषितं वा स किं शब्द इति योजना। इङ्गितादेर्द्रव्यान्यत्वाच्छब्दत्वमस्त्वित्याशङ्कितुरभिप्रायः।

(प्रदीपे–) **अनेनैव न्यायेनेति ।** श्रोत्रेन्द्रियभिन्नचक्षुरादीन्द्रियग्राह्यत्वादेवेत्यर्थः। **प्रपञ्चार्थं**–शिष्यबुद्धिवैशद्यार्थम्। 'प्रसिद्धवन्तरावगमायेत्यर्थ' इत्यन्ये। **तत्**-तेषां शब्दत्वम्। **चोद्येति ।** प्रश्नेत्यर्थः। **निराकरोति**-सिद्धान्ती निराकरोति। **पूर्ववदिति ।** 'भिन्नेन्द्रियग्राह्यत्वान्न क्रिया शब्द इति प्रतीतम्, अपि तु क्रियेति। यदि च क्रियानुशासनं विवक्षितमभविष्यत्–'अथ क्रियानुशासन'मित्येवावक्ष्य'दित्यादि रीत्येत्यर्थः। **तत्र**–तेषामिङ्गितादीनां त्रयाणां मध्ये। **शरीर-**

॥ शब्दकौस्तुभः ॥

सम्बन्धः। अत एव शाब्दबोधे गवि समवायेन गोत्वमिव शक्त्याख्यसम्बन्धेन शब्दो विशेषणतया भासते। चाक्षुषबोधेऽपि व्यक्त्या स्मारितः शब्दो विशेषणमित्यभ्युपगमः। आह च-**'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा। तथैव सर्वशब्दानामेते पृथगवस्थिते'।** इति॥**'यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम्। पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षमः ॥'** इति च॥ युक्तं चैतत्, गृहीतशक्तिकं प्रति शब्देनार्थस्येव अर्थेन शब्दस्यापि स्मरणे बाधकाभावात्। अत एव गोत्वस्येव गोशब्दस्यापि व्यक्तिविशेषणत्वाऽविशेषात्संसर्गोऽपि तादात्म्यमेवास्तु। एवं गोगुणादिभिरपि। 'तदभिन्नाऽभिन्नस्य तदभेदा'दित्याशयेऽनाथ **गौरित्यत्र कः शब्द** इति प्रघट्टके

1 'यदि हि' पा०। 2 'इति तदर्थात्'। पा०।

3 'इति' कात्यिकः।

२

व्यापारः। **चेष्टितं**–कायपरिस्पन्दः। **निमिषितम्**–अक्षिव्यापारः ॥

( **उद्द्योतः** ) श्रोत्राऽग्राह्यत्वादेव क्रियादीनां शब्दत्वे निरस्ते किमुत्तरग्रन्थेनेत्यत आह–**अनेनैवेति। गोशब्दार्थे चैषां संभवादिति**। अभेदसम्भवात्। तेन **तदभिन्नाऽभिन्नस्य तदभिन्नत्व**मिति न्यायेन शब्दत्वाशङ्का तेषामिति भावः । यद्वा गोशब्दार्थे–गुणसमूहे समूहितया एषां संभवादित्यर्थः । **शरीरव्यापारो**–रोमाञ्चादिः ।

[ सिद्धान्तिनः क्रियाया शब्दत्वनिराकरणभाष्यम् ]

**'ने'त्याह; क्रिया नाम सा ॥**

[ प्रश्नवादिनो गुणस्य शब्दत्वाशङ्काभाष्यम् ]

**यत्तर्हि तच्छुक्लो नीलः कपिलः कपोत इति स शब्दः ? ॥**

( **प्रदीपः** ) **शुक्लो नील इति** । द्रव्यस्य प्रागुपन्यासाद्गुणमात्राभिधायिनोऽत्र शुक्लादयो द्रष्टव्याः ॥

[ **सिद्धान्तवादिनस्तन्निराकरणभाष्यम्** ]

**'ने'त्याह; गुणो नाम सः ॥**

[ सामान्यस्य शब्दत्वाशङ्काभाष्यम् ]

**यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं,–स शब्दः ? ॥**

## ❀ राजलक्ष्मीः ❀

**व्यापारः**=मुखप्रसादमुखवैवर्ण्यरोमाञ्चादिः[2] । **कायपरिस्पन्दः**=आगमननिर्गमनादिः । **अक्षिव्यापारः**=अक्षिसङ्कोचनभ्रमङ्गादिः ।

(**उद्द्योते**–) **गोशब्दार्थे**=सास्नाविषाण्यादिरूपे पिण्डे । **एषाम्**=इङ्गितादिक्रियाणाम् । **सम्भवात्**=अभेदसम्भवात् । एवञ्च गोशब्दार्थाऽभिन्नस्येङ्गितादेर्गोशब्दार्थाऽभिन्नगोशब्दत्वं–'तदभिन्नाभिन्नस्य तदभिन्नत्व'मिति न्यायेन सिद्धमिति शब्दत्वाशङ्केङ्गितादीनामिति कैयटाशयं **नागेशभट्टाः प्राहुः** ।

( **उद्द्योते**– ) सम्भवपदस्याऽभेदसम्भवपरतया व्याख्यानेऽपरितुष्यन्पक्षान्तरमाह–**यद्वेति । गुणसमूहे इति** । 'गुणसमूहो द्रव्य'मितिरीत्या गोशब्दार्थे गुणसमूहे **समूहितया**=अवयवतया, **एषाम्**=इङ्गितादिक्रियाणां, सम्भवात्–उपलम्भादित्यर्थः। एवञ्च गोशब्दे गोशब्दार्थे गुणसमूहेसमूहिनामिङ्गितादीनामभेदोऽपि सिद्ध एव, गवातिरिक्तावयविनोऽनुपलम्भादित्याशयः ।

( **भाष्ये**– ) **नेति** । नेदं युक्तमिति प्रत्याचष्टे भाष्यकार इति यावत् । कुत एतदत आह–**क्रियेति** । इङ्गितादेः प्राधान्येन कृदन्तधातूपस्थाप्यतया क्रियात्वान्न शब्दशब्दाभिधेयत्वं, भिन्नेन्द्रियग्राह्यत्वेन शब्दात्क्रियाया भेदस्य प्रसिद्धत्वादित्याशयः । **यदिति** । यदि क्रिया न शब्दस्तर्हि यत्तच्छुक्लादिकं गवि दृश्यते स किं शब्दशब्दाभिधेय इत्यर्थः ।

( **प्रदीपे**– ) शुक्लादयः शब्दा गुणे गुणिनि च वर्त्तन्ते, तदत्र केषां ग्रहणमित्याशङ्क्याह–**द्रव्यस्येति** । **कपिलः**–पीताधिको हरिद्रक्तसितवर्णः । चित्रवर्णविशेष इति यावत् । 'सितपीतहरिद्रक्तः **कडार**स्तृणवह्निवत्। अयन्तूद्रिक्तपीताङ्गः **कपिलो** गोविभूषणः' इति शब्दार्णवात् । **कपोतः**–चित्रः कपोताभो वर्णः ( 'कबूतरी रंग' इति ) प्रसिद्धः । अत्र भाष्ये–**इति**शब्दः प्रकारार्थः, सुरभ्यादिभेदभिन्नगन्धादिलिङ्गसङ्ख्यादिगुणान्तरसङ्ग्राहकइति न तेषां शब्दत्वाशङ्काऽभावाद्भाष्ये न्यूनतेत्यवधेयम् ।

( **भाष्ये**– ) यदि गुणस्य शब्दत्वाऽभावस्तर्हि यत्तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स किं शब्द इत्यक्षरार्थः ।

## ❀ शब्दकौस्तुभः ❀

द्रव्यगुणकर्मसामान्यैः सह शब्दस्याऽभेदो भाष्यकृद्भिराशङ्क्य निराकृतः । तत्र निराकरणग्रन्थस्यायमाशयः,–समसत्ताकभेदाऽभेदौ विरुद्धावेव, अन्यथा त्वदुक्तरीत्या सत्तागुणत्वाद्यभेदात्सुखदुःखस्वर्गनरकादेरप्यभेदापत्तौ प्रवृत्तिनिवृत्तिव्यवस्था न स्यात्, न स्याच्च भेदग्रहाद्भ्रमनिवृत्तिः । जातिव्यक्त्यादिसम्बन्धस्त्वतिरिक्त एवेति । एवमेव शब्देनाऽपि सहाऽस्त्येव सम्बन्धो द्रव्यादीनामिति स्थितम् ॥

अस्ति च द्रव्यादिव्युत्पादनस्य प्रकृते उपयोगोपि, 'अस्मिन्नर्थेऽयं साधु'रित्यर्थविशेषं पुरस्कृत्यैव साधुत्वस्य वक्तव्यत्वात् । अत एव वाजिनि दरिद्रे च क्रमेण अश्वशब्दोऽस्वशब्दश्च साधुर्व्युत्क्रमेण त्वसाधुरिति सिद्धान्तः । ननु यथा वैशेषिकादीनामेतच्छास्त्रसिद्धमेव प्रकृतिप्रत्ययविभागमुपजीव्य पदार्थव्युत्पादनाय प्रवृत्तिः, प्रकृतिप्रत्ययादिविचारस्तु काचित्कः प्रासङ्गिकस्तथेहापि लोकप्रसिद्धं दर्शनान्तरसिद्धं च पदार्थजातमुपजीव्य शब्दमात्रव्युत्पादनं न विरुध्यत इति चेत्, अस्तु तावदेवं तथापि डोप्रभृतिव्युत्पादनं निष्फलमेवेति चेत्, अत्रोच्यते,-'गौस्तिष्ठति' 'देवदत्तः पचती'त्यादयः श्रृङ्गग्राहिकया तावज्जन्मसहस्रेणापि बोधयितुं बोद्धुं चाऽशक्याः, आनन्त्यात्। अतः प्रकृतिप्रत्ययविभागकल्पनारूपी लघुभूत उपायः समाश्रीयते लिपिवत् । आरोपित एव च तत्र सम्बन्धः। प्रसिद्धो हि स्थूलारुन्धतीशाखाचन्द्रादिन्यायो लोके, पञ्चकोशावतरणन्यायश्चोत्तरमीमांसायाम् । तात्पर्यविषयाऽबाधाच्च प्रामाण्यम् । एवैव ह्यर्थवादेष्वपि गतिः । आत्मवपोत्खेदनप्रभृतीनां बाधेऽपि तात्पर्य-

१ 'न'दिति क्वचिन्नास्ति ।

२ इङ्ग्यते भावो येन तदिति व्युत्पत्तेः ।

वाचकत्वमिच्छन्ति, वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात्, आनर्थक्ये तु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावात्, अभिव्यक्तिपक्षे तु क्रमेणैवाभिव्यक्त्या समुदायाभावादेकस्मृत्युपारूढानां च वाचकत्वे 'सरो' 'रस' इत्यादावर्थप्रतिपत्त्यविशेषप्रसङ्गात्तद्व्यतिरिक्तः स्फोटो नादाभिव्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापितः। **उच्चारितेन ।** प्रकाशितेनेत्यर्थः ।

**(उद्द्योतः)** भाष्ये-**उच्चारितेनेति ।** शारीरमारुताभिहतकण्ठादिस्थानैः साक्षादवयवद्वारा[2] वाऽभिव्यक्तेन येनेत्यर्थः । अत्र विषाणान्तैरवयवैर्गुणादयोऽप्युपलक्ष्यन्ते । **संप्रत्ययो**-ज्ञानम् ।

ननु प्रत्यायकशब्दस्य वर्णसमूहरूपतया **येने**त्येकवचनमयुक्तम् । न च 'वन'मितिवत्समूहाभिप्रायं तत्; समूहस्य स्थिरस्य निरूपयितुमशक्यत्वादत आह-**वैयाकरणा इति ।** वर्णव्यतिरिक्तपदानभ्युपगमे एकैकस्य वर्णस्य वाचकत्वं, समुदायस्य वा ? । नाद्य इत्याह-**वर्णानां प्रत्येकमिति ।** द्वितीयमनूद्य दूषयति-**आनर्थक्ये तु प्रत्येकमिति ।** 'प्रत्येकमानर्थक्ये तु समुदायस्य वाचकत्वमुपेयम्, तत्तु न युक्तम्' इति शेषः । यतस्तत्र नयद्वयम्-उत्पद्यमानसमुदायस्याभिव्यज्यमानसमुदायस्य वा वाचकत्वमिति । तत्राद्यं दूषयति—**उत्पत्तिपक्षे इति ।** 'उत्पत्त्यभावा'दित्यस्य समुदायाभावादित्यनेनान्वयः । द्वितीयं दूषयति-**अभिव्यक्तीति ।** उत्पन्नाभिव्यक्तेर्ध्वंस्तत्वादित्यर्थः॥ ननु पक्षद्वयेऽपि पूर्वपूर्ववर्णानुभवहेतुकैकस्मृत्युपारूढानां वाचकत्वमस्त्वत आह-**एकस्मृतीति ।** ननु येन क्रमेणानुभूता वर्णास्तेनैव क्रमेणैकस्मृत्युपारूढानां वाचकत्वेन नार्थप्रतीत्यविशेषप्रसङ्गः, अन्यथा त्वयापि वर्णानां स्फोटव्यञ्जकत्वाभ्युपगमात् कथं पूर्वोक्तदोषान्निस्तारस्तवापीत्यत आह-**विस्तरेणेति ।** इदमेकं पदमेकं वाक्यमिति प्रत्ययः स्फोटसत्त्वे तदैक्ये च प्रमाणम् । अनुभवक्रमेणैव स्मरणमित्यर्थे दृढप्रमाणाभावाच्च । क्रमेणानुभूतानां व्युत्क्रमेणापि स्मरणदर्शनात् । मम तु यथा पटे नानारञ्जकद्रव्याहितनानावर्णोपरागः क्रमेण, तथा एकस्मिन्नेव तस्मिन्नुच्चारणक्रमेण क्रमवानेव तत्तद्वर्णस्वरूपानुरागः, स च स्थिरः, तस्य च मनसा ग्रहणमिति न दोषः॥ अत्र **येने**त्येकवचनेन **विषाणिना**मिति बहु-

## ❀ राजलक्ष्मीः ❀

**वाक्यस्येति ।** 'आनर्थक्यप्रसङ्गा'दित्यादिपञ्चम्यन्तानां-'स्फोटो वाचको व्यवस्थापित' इत्यत्र हेतुता बोध्या । **आनर्थक्ये तु**-वर्णानां प्रत्येकमानर्थक्यात्प्रत्येकस्याऽवाचकत्वेऽपि । **'प्रत्येक'**मित्यस्य 'वर्णाना'मित्यादिः । **अविशेषेति ।** रेफसकारादिवर्णानामुभयत्राऽप्यविशेषादित्यर्थः । तद्व्यतिरिक्तः=वर्णातिरिक्तः ।

**(उद्द्योते-) साक्षादिति**-अखण्डस्फोटपक्षाभिप्रायकम् । 'अवयवद्वारा वे'ति तु सखण्डस्फोटपक्षाभिप्रायेणेति विवेकः । **विषाणान्तैः**-इनिप्रत्ययप्रकृतिभूतैः । **गुणादयः**-पूर्वोक्ता गुणक्रियादयः । **ज्ञानमिति ।** न तु स्मरणं, नागेशमते पदार्थोपस्थितेः स्मृतित्वस्यानङ्गीकारादित्याशयः । **समूहाभिप्रायमिति ।** अनुद्भूतावयवभेदकसमूहाभिप्रायमित्यर्थः । **द्वितीयं**-'समुदायस्य वाचकत्व'मिति पक्षम् । **प्रत्येकमानर्थक्ये त्विति ।** वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णानामानर्थक्ये तु । **तत्तु**=तदपि । **तत्र**=समुदायस्य वाचकत्वे हि । **नयद्वयं**-मतद्वयम् । **उत्पद्यमानेति ।** उत्पद्यमानस्य वर्णसमुदायस्येत्यर्थः । **उत्पन्नेति ।** उत्पन्नाया अभिव्यक्तिक्रियाया इत्यर्थः । **पूर्वेति ।** रामघटपटादिशब्दादौ पूर्वपूर्वरेफादिवर्णानां योऽनुभवस्तज्जन्यो यः संस्कारस्तत्सहकृतो योऽन्त्यवर्णानामनुभवस्तद्धेतुका या रामादिसर्ववर्णानामेका स्मृतिस्तामुपारूढानां तद्विषयीभूतानां रेफादिवर्णानां रामादिवाचकत्वमस्त्वित्यर्थः । एवञ्च पूर्वोक्तनयद्वयेऽपि समुदायवाचकतापक्षोऽदुष्ट एवेत्याशयः। **तस्य**-स्फोटस्य । **अर्थेति ।** घटपटाद्यर्थेत्यर्थः । । **वर्ण इति ।** न तु प्रकृते ध्वनिरित्यर्थः। स्फोटानङ्गीकर्त्ता शङ्कते-**नन्विति । अविशेषेति ।** सरो रस इत्यादौ स्फोटानङ्गीकर्तृमतेऽपि मम मते नार्थप्रतीत्यविशेषप्रसङ्ग इत्यर्थः । **अन्यथा**-येन क्रमेणेत्याद्यनङ्गीकारे । त्वयापि=स्फोटाऽङ्गीकर्त्रापि। **पूर्वोक्तदोषात्**-सरो रस इत्यादावर्थप्रतीत्यविशेषप्रसङ्गात् । **प्रत्ययः**-ज्ञानम् । तदैक्ये=स्फोटैक्ये । **ममेति**-स्फोटवादिनः । **तस्मिन्**--स्फोटे । **स च**-स्फोटश्च । तस्य च=स्फोटस्य च । **मनसेति ।** न तु श्रोत्रेण, स्फोटस्य श्रोत्रेन्द्रियाऽग्राह्यत्वादितिभावः। **अत्र**-भाष्ये । **अनेकेति ।** भिन्नकर्तृकतयाऽनेकव्यक्तिविषयकतया चानेक-

## ❀ शब्दकौस्तुभः ❀

वर्णव्यत्यासादिना शक्ततावच्छेदकानुपूर्वीभङ्गस्य प्रतिपदमौत्सर्गिकत्वात्तत्र च केनचित्कचित्प्रथमं शक्तिग्रहात्केन कस्य स्मारणमित्यत्र विनिगमनाविरहाद्वृषभो वृषभो वृप इत्यादाविव 'कर्' 'कार्' 'कुर्' 'चकर्' इत्यादीनां प्रयोगसमवायिनां सर्वेषामेव वर्णानान्तत्तदानुपूर्व्यवच्छिन्नानां वाचकतेति **वर्णस्फोटपक्षः ।** करप्रभृतयो वाचका नवेति चेह विप्रतिपत्तिशरीरम् । रामं रामेण रामाय हरये हरौ हरीनित्यादौ परिनिष्ठिते रूपे कियानंशो द्रव्यादिवाचकः, कियांश्च कर्मत्वादेरित्यस्य विनिगन्तुमशक्यतया 'राम'मित्यादिपरिनिष्ठितं पद-

१ 'प्रतीत्यविशेष' पा० ।

२ 'स्थानैरवयवद्वाराऽभिव्यक्तरये'ति पाठान्तरम् ।

वचनेन चानेकोच्चारणविषयगौरित्यस्यैकत्वं सूचितम् । भेदप्रत्ययस्त्वौपाधिक इत्याद्यस्मत्कृतमञ्जूषायां शक्तिवादे द्रष्टव्यम् ॥ नन्वेवं तस्य ताल्वोष्ठपुटव्यापारविषयत्वाभावादुच्चारितेनेत्युक्तमत आह–**प्रकाशितेनेति** । अभिव्यञ्जकैरिति शेषः ॥

### [ समाधानान्तरभाष्यम् ]

**अथवा–प्रतीतपदार्थको लोके ध्वनिः 'शब्द' इत्युच्यते । तद्यथा–'शब्दं कुरु', 'मा शब्दं कार्षीः', 'शब्दकार्ययं माणवकः' इति ध्वनिं कुर्वन्नेवमुच्यते । तस्माद्ध्वनिः शब्दः ॥**

### ❀ राजलक्ष्मीः ❀

त्वमुच्चारणस्येति बोध्यम् । **एवञ्च**–गौरित्यस्यैकत्वे च । **वाचकस्य**=स्फोटस्य । **सूचितं**=युक्तम् । 'समुचित'मिति कचित्पाठः । **भेदप्रत्ययः**–घटपटादिशब्दानां परस्परभेदप्रतीतिस्तु । **औपाधिकः**–घकारपकारादिवर्णोपाधिभेदनिबन्धनः । **एवं**=स्फोटस्य वर्णाद्यतिरिक्तत्वे । **तस्य**–स्फोटस्य । **उच्चारितेनेति** । भाष्ये येनोच्चारितेनेत्युक्तिरित्यर्थः ।

**( भाष्ये– ) प्रतीतेति** । प्रतीतश्चासौ पदार्थश्च प्रतीतपदार्थः, स एव प्रतीतपदार्थकः। स्वार्थे कन् । पदार्थपदस्य तद्बोधके लक्षणा । तदेवं प्रसिद्धो गवादिपदार्थबोधक इत्यर्थो लभ्यते । **ध्वनिः**=ककारादिवर्णात्मको ध्वनिः । लोके–व्यवहर्त्तृषु । 'लोक'इत्यस्य च 'प्रतीत'इत्यनेनान्वयः । 'इत्युच्यते' 'इत्यनेनाऽस्मिन्पक्षे भाष्यकृतोऽनास्था सूच्यते ।

### ❀ शब्दकौस्तुभः ❀

मेव वाचकं कर्मत्वादिविशिष्टस्येति **पदस्फोटपक्षः**[2] । दधीदं हरेव विष्णोवेत्यादावपिविनिगमनाविरहतौल्याद्वाक्यमेवविशिष्टार्थे शक्तमिति **वाक्यस्फोटः**[3] । 'एकःपट'इतिवदेकं पदं वाक्यंवेत्यबाधितप्रतीतेर्वर्णातिरिक्तमेव पदं वाक्यं वा अखण्डं वर्णव्यङ्ग्यम् । एकत्वप्रतीतिरौपाधिकीति चेत्, पटेऽपि तथात्वापत्तेः। कः पदार्थोसाविति चेत् । भावः । भावविशेषेषु कान्तर्भवतीति चेत्; स्वत्परिभाषितेषु द्रव्यादिषु मान्तर्भूत्, नह्येतावता प्रमाणसिद्धं प्रत्याख्यातुं शक्यते । अनियतपदार्थवादे गौरवमितिचेत्; व्यक्तीयत्ता तवापि नास्ति । उपाधीयत्ता तु सर्वैः सुवचा । भावत्वाऽभावत्वाभ्यां नित्यत्वानित्यत्वादिना वा विभजनात् । भावविभाजकोपाधयस्तु घटविभाजकोपाधिवदेवाऽनावश्यकाः । अस्मिंश्च पक्षद्वये वर्णा अप्यनावश्यकाः । नन्वनुभवसिद्धास्त इति चेत् ? व्यञ्जकध्वनिविशेषोपहितस्फोट एव ककाराद्यात्मना व्यवह्रियत इत्यभ्युपगमात्; **भट्ट**मते तारो मन्दो गकार इतिवदद्वैतसिद्धान्ते विषयसम्बन्धजन्यवृत्तिवैचित्र्येण व्यङ्ग्ये स्वरूपसुखे वैचित्र्यवच्च । अतएव **वाचस्पति**-

भाष्ये [६ पृष्ठे] 'लौकिकानां वैदिकानाश्चे'ति वार्त्तिकेनेदं **परे** ।

**( प्रदीपः ) अथ वेति** । अन्यत्र ध्वनिस्फोटयोर्भेदस्य व्यवस्थापितत्वादिहाऽभेदेन व्यवहारेपि न दोषः, 'द्रव्यादयो न शब्दशब्दवाच्या'[1] इत्यत्र तात्पर्यात् । **ध्वनिं कुर्वन्निति** । विधिप्रतिषेधयोरप्र[2]वृत्तविषयत्वात्कथमस्य त्रिभिः सम्बन्धः ? । उच्यते–शब्दं कुर्वन्नपि 'शब्दं कुर्वि'त्युच्यते,–विरामाऽऽशङ्कायां तन्निवृत्तये । तथाऽनभिमतशब्दश्रवणो[3]द्विजितेनोच्यते–'मा शब्दं कार्षी'रिति ॥

**( उद्द्योतः )** भाष्ये–**अथवा प्रतीतपदार्थक इति** । लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रे-

लोकप्रसिद्धिमेव दर्शयति–**तद्यथेति** । 'ध्वनिं कुर्वन् 'शब्दकार्ययं माणवक' इत्येवमुच्यते' इति योजना । **तस्मात्**–लोकव्यवहारात् । **ध्वनिः**–कादिवर्णरूपो ध्वनिः ।

**( प्रदीपे– ) इह**–भाष्ये । दोषाभावे हेतुं निर्दिशति–**द्रव्यादय इति** । **तात्पर्यात्**=इत्यत्रैव भाष्यकृतामभिप्रायात् । **विधीति** । 'शब्दं कुर्वि'तिविधेः, 'मा शब्दंकार्षी'रिति निषेधस्य चेत्यर्थः । **अप्रवृत्तेति** । प्रवृत्तस्य प्रेरणाया निषेधस्य चाऽसम्भवादित्यर्थः। **अस्य**='ध्वनिं कुर्व'न्नित्यस्य । **त्रिभिरिति** । शब्दं कुर्वित्यादिभिस्त्रिभिर्वाक्यैः । एकेन सम्बन्धस्य सम्भवेऽपि समुदायेनाऽसम्भवात्त्रिभिरित्युक्तमित्यवधेयम् । **तन्निवृत्तये**–विरामनिवृत्तये । **तथा**–शब्दंकुर्वाणे ।

**( उद्द्योते– )** लोकपदार्थमाह–**व्यवहर्त्तृष्विति** । 'लोके' इत्यस्य–प्रतीतौ बोधे वाऽन्वयः । प्रतीतपदार्थमाह–

**मिश्राः–तत्त्वबिन्दौ** 'वस्तुतः ककारादतिरिच्यमानमूर्त्तेर्गकारस्याभावा'दितिस्फोटवादिमतमुपन्यास्थन् । यथावा अखण्डेष्वपि ऋकारादिषु वर्णेषु वर्णान्तरसमानाकारैकदेशावभासस्तथात्रपक्षे वर्णावभासोपि भविष्यति । उक्तंच **वोपदेवेन–'शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् । औपाधिको वा भेदोस्तु वर्णानां तारमन्दवत् ॥'**इति॥ **भर्तृहरिप्याह–'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च । वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥'** इति ॥ तस्मादखण्डं पदं वाक्यं वेति पक्षापि व्यक्तिस्फोटावान्तरभेदाः । **जातिस्फोट**वादिनस्तु–घोत्तरटत्वादिकं शक्ततावच्छेदकतया आद्यपक्षत्रयेपि यथायथं वाच्यम् । अन्यथा सरो रस इत्यादावर्थविशेषप्रतीत्यनापतेः । तच्च उपाधिरूपम् । उपाधिश्च परंपरासंबद्धा जातिरेव । सा च सर्वाधिष्ठानब्रह्मस्वरूपात्मिका । तथा च शक्यांऽश इव शक्तांशेपि न्यायसम्येनाकृत्यधिकरणरीत्या ब्रह्मतत्त्वमेव तत्तदुपहितं वाच्यं वाचकं च । अविद्या, आविद्यकधर्मविशेषो वा जातिरिति पक्षे तु सैव वाचिकास्त्वित्याहुः ॥

१ 'शब्दवाच्याः'पा०। २ 'निषेधयो'पा० ।३ 'उद्वेजितेन'पा०।

न्द्रियग्राह्यत्वाद्वर्णरूपध्वनिसमूह एव शब्द इत्यर्थः। तस्याऽर्थबोधकताप्यविचारितमणीयस्यैव लोके सिद्धा। तादृशस्यैव शास्त्रेणान्वाख्यानमिति तात्पर्यम्। तदाह–**अन्यत्रेति**। सङ्ग्रहादौ तपरसूत्रे भाष्ये चेत्यर्थः। ध्वनिपदेनात्र वैखरी। **स्फोट**पदेनाभिव्यञ्जकत्वादिको मध्यमावस्थ आन्तरः शब्द उच्यते॥ **कथमस्येति**। कुर्वन्नित्यस्य वर्तमानार्थत्वादित्यर्थः॥

## ॐ राजलक्ष्मीः ॐ

**प्रसिद्धइति**। **वर्णरूपेति**। वर्णरूपो यो ध्वनिस्तत्समूहो वा स एव शब्द इत्यर्थः। तस्य=ध्वनेस्तत्समूहस्य च। तादृशस्य–अविचारितरमणीयस्य। **अत्र**–प्रदीपे। **वैखरी**–श्रोत्रग्राह्यः।

## ॐ शब्दकौस्तुभः ॐ

अष्टावप्येते पक्षाः सिद्धान्तग्रन्थेषु तत्रतत्रोपनिबद्धाः। तथा हि–स्थानिवत्सूत्रे 'सर्वे सर्वपदादेशा' इतिभाष्यग्रन्थः,–'पचतेर्थो ऽनेनेति अर्थवदिह पदं न तु सुप्तिङन्तमेव, तथाच एरुरित्यस्य तेस्तुरित्यर्थ' इति टीकाग्रन्थश्च **वर्ण**स्फोटेनुकूलः। तथा स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वमिति स्थानेन्तरपरिभाषयैव तस्थस्थमिपामित्यादिषु निर्वाहात्तदर्थं यथासङ्ख्यसत्रं नारब्धव्यमिति भाष्यमपि॥ **पदस्फोटवाक्य**स्फोटौ तु इहैव प्रघट्टके–'येनोच्चारितेने'ति भाष्यप्रतीकमुपादाय कैयटेन भाष्यार्थतया वर्णितौ। 'वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वे'ति वदता तयोरखण्डताप्युक्ता। 'नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्य'मिति तत्रतत्र भाष्ये सखण्डतोक्ता। 'मायानिश्चलयन्त्रेषु कैतवानृतराशिषु। अयोघने शैलशृङ्गे शरीराङ्गे कूटमस्त्रिया'मित्यमरः। पस्पशायामेव प्रघट्टकान्तरे 'किंपुन'रित्यादि भाष्यमुपादाय 'के चिद्वर्णस्फोटमपरे पदस्फोटं चाहु'रिति वदता **कैयटेन,** अइउणित्यत्र व्यक्तिस्फोटजातिस्फोटयोर्बलाबलं चिन्तयता, प्रत्याहाराह्निकान्ते 'अक्षरं न क्षरं विद्या'दिति भाष्यव्याख्यावसरे 'व्यवहारनित्यता तु वर्णपदवाक्यस्फोटानां, नित्यत्वं तु जातिस्फोटस्ये'ति प्रतिपादयता, अनुपदमेव 'ब्रह्मतत्त्वमेव हि शब्दरूपतया प्रतिभातीत्यर्थ' इति व्याचक्षाणेन सर्वे पक्षाः सूचिता एव। यदा तु 'अविद्यैव जाति'रिति पक्षस्तदभिप्रायेण जातिस्फोटस्यापि व्यवहारनित्यतेति 'अक्षरं न क्षरं विद्या'दित्यस्य कैयटीये पाठान्तरम्। आद्यन्तौ टकिताविति सूत्रे च भाष्यएव **वर्णस्फोटपद**स्फोटावुक्तौ। 'असत्यमेव प्रकृतिप्रत्ययविभागं तदर्थं चाश्रित्य रेखागवयन्यायेन सत्यस्य पदस्फोटस्य व्युत्पादनमभिप्रेत'मिति तत्रैव **कैयटः**। 'अर्थवद्धातुः', 'स्वं रूपं शब्दस्य', तपरस्तत्कालस्ये'त्यादिसूत्रेष्वपि स्पष्टमिदं भाष्यकैयटादावित्यलं बहुना॥

जातेश्च ब्रह्मात्मकत्वमुक्तं **हरिणा–'सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु। जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥ तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते। सा नित्या सा महानात्मा तामाहुस्त्वतलादयः'** इति॥ धातोः स्फोटत्वमपि प्रघट्टकान्तरे स एवाह,–**अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता। कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः॥'** इति।

यद्यपीहाष्टौ पक्षा उक्तास्तथापि **वाक्यस्फोट**पक्षे तात्पर्यं ग्रन्थकृताम्। तत्रापि **जातिस्फोट** इत्यवधेयम्। पूर्वपूर्वोपमर्देनैवोत्तरोत्तरोपन्यासात्। तथा च प्रथमव्युत्पत्तेर्व्यवहाराधीनतया संपूर्णस्य वाक्यस्य विशिष्टे प्राथमिकः शक्तिग्रह इति निर्विवादम्। आवापोद्वापाभ्यामवयवानां शक्तिरिति न्यायोपष्टम्भेन त्यज्यतइति दर्शनान्तराणां पन्थाः। एकादेशादिस्थले उक्तरीत्या निगमनाविरहेण कैश्चित्पररूपादिस्थले पूर्वलोपाद्यभ्युपगमेन च व्याकरणानां कलहे सति अवयवशक्तेर्दुरुपपादतया प्राथमिकशक्तिग्रह एव प्रमारूप इति तु सैद्धान्तिकः पन्थाः। उक्तं च हरिणा–**'तत्र यन्मुख्यमेकेषां तत्रैतेषां विपर्ययः'** इति। **'ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले। देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः॥'** इति च। एवंस्थिते 'निपाता द्योतका विकरणा अनर्थका' इत्यादिविचारोपि प्रक्रियादशायामेव। आह च–**'अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम्। धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः'** इति॥ **तादृशोऽ**खण्ड इत्यर्थः। एवं च नामार्थयोरभेद एव संसर्गः। प्रत्ययार्थः प्रधानमित्यादिव्युत्पत्तयोपि प्रक्रियाश्रया एव। उक्तं च–**'किंगर्भजन्ये किंगर्भः कीदृग्भातीति नो मते। विचारः फलितः सर्वः प्रकृतिप्रत्ययाश्रयः॥'** इति। आरोपितस्यापि पारमार्थिके उपायता न विरुद्धा, लिपिस्थूलारुन्धतीशाखाचन्द्रादीनां लौकिकदृष्टान्तानामर्थवादवाक्यपञ्चकोशावतरणादीनां तन्त्रान्तरसिद्धानां पूर्वत्रासिद्धादीनां चैतच्छास्त्रसिद्धानां प्रागेव दर्शितत्वात्। तदेवं पक्षभेदेन अविद्यैव, ब्रह्मैव वा स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या **स्फोट**इति स्थितम्। आह च–**'शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते॥'** इति। **'समारम्भस्तु भावानामनादि ब्रह्म शाश्वत'**मिति च। तदेवं 'वराटिकान्वेषणाय प्रवृत्तश्चिन्तामणिं लब्धवा'निति वासिष्ठरामायणोक्ताऽऽभाणकन्यायेन शब्दविचाराय प्रवृत्तः सन् प्रसङ्गादद्वैते औपनिषदे ब्रह्मण्यपि व्युत्पद्यतामित्यभिप्रायेण भगवान्भर्तृहरिर्विवर्तवादादिकमपि प्रसङ्गाद्व्युदपादयत्, तत्तु तन्त्रान्तरे स्फुटं प्रकृते नातीवोपयुक्तं चेति नेह तन्यते॥

॥*॥ इति स्फोटस्वरूपव्युत्पादनम् ॥*॥

[ शब्दानुशासनप्रयोजनजिज्ञासाभाष्यम् ]

**कानि पुनः शब्दानुशासनस्य प्रयोजनानि ?॥**

( प्रदीपः ) **कानि पुनरिति** । किं सन्ध्योपासनादिवद्व्याकरणाध्ययनं नित्यं कर्म, अथ काम्यमिति प्रश्नः ॥

( उद्द्योतः ) भाष्ये **कानि पुनः शब्दानुशास**नस्येति । शब्दज्ञानफलकव्याकरणाध्ययनस्येत्यर्थः । तदाह—**किं सन्ध्येति** । शब्दज्ञानद्वाराऽध्ययनस्य तदज्ञानप्राप्तप्रत्यवायपरिहारः फलमुत तदतिरिक्तमपि किंचिदिति प्रश्नाशय इत्यर्थः । प्रयोजनशब्दः करणव्युत्पत्त्या प्रयोजकपरोपि । तेन व्याकरणाध्ययनस्य प्रयोजकं किंचिदस्ति नवेत्यपि प्रश्नाशयो बोध्यः । अत एवोत्तरे आगमपदोपादानम् । **नपुंसकमनपुंसकेने**त्येकशेषः[2] । तत्रैकवद्भावस्य वैकल्पिकत्वात्प्रश्ने बहुवचनमुत्तरे एकवचनं बोध्यम् ॥

## ❀ राजलक्ष्मीः ❀

( **भाष्ये** ) **शब्दानुशासनस्य**—साधुशब्दज्ञानप्रयोजनकव्याकरणाध्ययनस्य । अतएव कैयटे—'व्याकरणाध्ययन'मित्युक्तम् । **प्रयोजनानि**=फलानि प्रवर्त्तकश्च । परेत्वागमपदं वेदबोधितफलपरं, व्याकरणाध्ययनस्य च वेदबोधितं प्रत्यवायपरिहाररूपं फलमस्त्येवेति न दोष इत्याहुः।

( **उद्द्योते—** ) भाष्ये शब्दानुशासनपदमत्र न व्याकरणपरं, तस्य क्रियात्वाभावेन नित्यत्वकाम्यत्वयोरसम्भवात्कैयटासङ्गतेरत आह-**शब्देति** । लाक्षणिको भाष्ये शब्दानुशासनशब्द इतिभावः। **शब्देति** । किं साक्षात्फलभूतशब्दज्ञानद्वारा व्याकरणाध्ययनस्य शब्दाऽज्ञानप्रयुक्तप्रत्यवायपरिहार एव फलमित्यर्थः । **तदतिरिक्तमपि**=प्रत्यवायपरिहारातिरिक्तमपि । **किञ्चित्**—किञ्चित्फलम् । **करणेति** । प्रयुज्यतेऽनेनेति व्युत्पत्त्येत्यर्थः । **प्रयोजकः**—प्रवर्त्तकः । **अतएव**—प्रवर्त्तकप्रश्नस्याप्यन्तर्भावादेव । **एकशेषः**—प्रयोजनश्च प्रयोजनानि च—प्रयोजनानीत्येवं विग्रहे नपुंसकस्य प्रयोजनशब्दस्यैकशेषः । **तत्र**=एकशेषे । **बहुवचनमिति** । प्रयोजनानीतिबहुवचनप्रयोगो भाष्ये इत्यर्थः । **एकवचनमिति** । 'रक्षोहागमलघ्वसन्देहाः प्रयोजन'मित्येकवचनमित्यर्थः ।

## ❀ शब्दकौस्तुभः ❀

स्यादेतत् । 'चं लिख' 'चकारस्त्रुटित' इत्यादिव्यवहारालिपावेव शब्दभ्रमवतां तत्रैव वाचकत्वाभिमानजुषां बालानां पुस्तकमुपयुज्यते यथा तथैव भेदग्रहवतामपीति वस्तुस्थितिः । एवमिहापि प्रकृत्यादिविभागे परमार्थिकत्वाभिमानवतामपि उपयुज्यतएव शास्त्रं तत्किमर्थं कल्पनाव्युत्पादनक्लेशः ? । अत एव हि भाष्यकारोपि 'शब्दो नित्योऽनित्यो वे'ति विकल्प्य उभयथापि व्याकरणारम्भस्य निष्प्रत्यूहत्वाद्यथातथास्त्वित्युदासिष्यते इति चेत् ; सत्यं, व्युत्पत्त्यर्थं वस्तुस्थितिः कथिता । पक्षभेदेषु हि गौणमुख्येषु व्युत्पादितेषु तत्र परस्परविरुद्धतया भासमाना अपि सिद्धान्तग्रन्था व्यवस्थापयितुं शक्यन्ते । 'स्वार्थद्रव्यादीनां पञ्चानां क्रमेण भान'मित्यादिवक्ष्यमाणमपि कल्पनयैवोपपादयितुं शक्यत इति दिक् ॥

नन्वस्तु साधुशब्दो विषयः, अस्तु च प्रकृतिप्रत्ययादिकल्पनया तद्व्युत्पादनोपपत्तिः, तथापि व्याकरणाध्ययनस्याऽनुष्ठापकं किमिति चेत् ? । नित्याध्ययनविधिरिति गृहाण । श्रूयते हि—**'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयोज्ञेयश्चे'ति । निष्कारणो**—दृष्टकारणनिरपेक्षो नित्य इति यावत् । कार्यतेऽनुष्ठाप्यतेऽनेनेति कारणं—फलम् । ब्राह्मणेन षडङ्गो वेदो ऽध्येयो ज्ञेयश्चेत्यन्वयः । तथा च साङ्गवेदाध्ययनतदर्थज्ञानरूपोयं धर्मो नित्यः—सन्ध्योपासनादिवदित्यर्थः । 'श्रुतिरे'वेति हरदत्तादयः । 'स्मृति'रिति तु भट्टाचार्याः । तत्र यदि स्मृतिरेवेति प्रामाणिकं तर्हि 'आगमः खल्वपी'ति भाष्येऽप्यागममूलकत्वादागमः—स्मृतिरेवेति व्याख्येयम् । **अङ्गत्वं** चाङ्गत्वेन संस्तवात् । उक्तं हि शिक्षायाम्—**'मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते । निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे ॥ शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान्प्रचक्षते ।'** इति ॥ उपकारकतयाप्यङ्गत्वम् । **व्याकरणं** हि अर्थविशेषमाश्रित्य स्वरविशेषादीन्विदधत्पदार्थविशेषनिर्णये उपयुज्यते । **ज्योतिष**मपि स्वाध्यायोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयति । **निरुक्तं** तु व्याकरणस्यैव परिशिष्टप्रायं, बाहुलकादिसाध्यानां लोपागमविकारादीनां प्रायशस्तत्र सङ्ग्रहात् । **छन्दोविचिति**रपि गायत्र्यादिलक्षणद्वारा 'गायत्र्या यजती'त्यादिविध्यर्थनिर्णये उपयुज्यते । **शिक्षापि** वर्णोच्चारणप्रकारं दर्शयति । **कल्पसूत्राण्य**पि प्रकरणान्तरपठितस्य न्यायलभ्यस्य शाखान्तराधीतस्य चाङ्गजातस्योपसंहारेण प्रयोगं दर्शयन्ति । तस्मात्षडप्यङ्गानि । तेष्वपि **प्रधानं व्याकरणम् ।** पदपदार्थावगमस्य व्याकरणाधीनत्वात् । वाक्यार्थज्ञानस्य तन्मूलकत्वात् । अत एव तस्य शिक्षायां मुखत्वेन निरूपणं कृतम् । मन्वादिस्मृतिष्वपि अङ्गाध्ययनविधयः प्रसिद्धा एव । तथा चाध्ययनविधिर्व्याकरणाध्ययनस्यानुष्ठापक इति स्थितम् । तथा च सन्ध्योपासनादेरभावे प्रत्यवायोऽनुष्ठाने च पापक्षय इति यथाभ्युपेयते तथा व्याकरणाध्ययनस्याप्यननुष्ठानेऽनुष्ठाने च बोध्यम् ॥

---

१ पाणिनीयव्याकरणस्येत्यर्थः ।

२ नपुंसवैकशेषइत्यर्थः ।

[ रक्षादिप्रयोजनान्तरप्रदर्शनभाष्यम् ]

।⁂। **रक्षोहागमलघ्वसन्देहाः प्रयोजनम्** ।⁂।

[ रक्षार्थत्वोपपादनभाष्यम् ]

**रक्षार्थं वेदानामध्येयं व्याकरणम् । लोपाऽऽगमवर्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यतीति ॥ [ –रक्षा ] ॥**

( प्रदीपः ) पारम्पर्येण पुरुषार्थसाधनतामस्याह–**रक्षेति**। लोके लोपाद्यदृष्टं वेदे दृष्ट्वा भ्राम्येदवैयाकरणः, वैयाकरणस्तु न भ्रमति[2], वेदार्थं चाध्यवस्यति । तत्र **लोपागम**योरुदाहरणं–'देवा अदुह्र'ति । दुहेर्लङो झस्याऽदादेशे कृते 'लोपस्त आत्मनेपदे'ष्विति तलोपः, 'बहुलं छन्दसी'ति रुटि सति रूपमेतत् । **वर्णविकारो** यथा–'उद्ग्राभं च निग्राभं चे'ति। 'हृग्रहोर्भश्छन्दसि हस्येति वक्तव्य'मिति हकारस्य[3] भकारः । 'उदि ग्रह' इत्यत्र 'उद्ग्राभनिग्राभौ च च्छन्दसि स्रगुद्यमननिपातनयो'रिति वचनादुन्निपूर्वाद्ग्रहेर्घञ् ॥

( उद्द्योतः ) **पुरुषार्थो** धर्मो, मोक्षश्च । ननु शिष्याचार्यसंबन्ध एव महान् वेदरक्षाहेतुः, किं व्याकरणेनेत्यत आह—**लोके इति । भ्राम्येदिति ।** भ्रमेण पाठान्तरं कल्पयेदित्यर्थः । न चाचार्यवचनाद्भ्रमनिवृत्तिः, भ्रंशशङ्कया तेष्वविश्वासात् । वेदार्थावगमद्वारापि व्याकरणं पुरुषार्थसाधनमित्याह–**वेदार्थं चेति** । एवं च वेदार्थज्ञानपूर्वकं शुद्धतत्तन्मन्त्रैस्तद्विहितकर्मानुष्ठानेन वक्ष्यमाणरीत्या वा मोक्षश्च पुरुषार्थो व्याकरणाध्ययनस्य फलमिति भावः । **विकार इति** । लोपस्तु न विकार इति पृथग्गणितः । भावरूप एव चादेशोऽत्र विकारः । **हृग्रहोर्भ इति ।** इदं च गृभ्णामीत्याद्यर्थमावश्यकम् । एतेन **'उद्ग्राभनिग्राभौ**

⁂ **राजलक्ष्मीः** ⁂

**( भाष्ये– )** रक्षा च ऊहश्च आगमश्च लघु च असन्देहश्च–रक्षोहागमलघ्वसन्देहा इति विग्रहः । **रक्षार्थमिति।** रक्षायै इति रक्षार्थम् । **अर्थ**शब्दोऽत्र प्रयोजनार्थकः । रक्षा च वेदरक्षैव ग्राह्या नत्वसाधुभ्यः साधूनां रक्षेत्याशयेनाह–**वेदानामिति** । व्याकरणस्वरूपसत्तामात्रेण वेदरक्षाया असम्भवादाह–**अध्येयमिति । व्याकरणमिति ।** शब्दानुशासनव्याकरणयोः पर्यायशब्दत्वात्प्रश्ने शब्दानुशासनपदस्य, उत्तरे व्याकरणपदस्य चोपादानेऽपि न दोषः । ननु व्याकरणाध्ययनमात्रेणैव कथं वेदरक्षेत्यत आह–**लोकेति** । व्याकरणाध्ययनावगतवर्णलोपागमवर्णविकारो गृहीतप्रकृतिप्रत्ययविभागो वेदान्पालयिष्यतीत्यर्थः । हिर्हेतौ । **सम्यक्**–वेदार्थावगतिपूर्वकम् ।

**( प्रदीपे– ) पारम्पर्येण**=परम्परया । वेदरक्षाद्वारेण, यज्ञाद्यनुष्ठानद्वारेण च । **अस्य**=व्याकरणाध्ययनस्य । 'लोके आत्मनेत्यादावदृष्टम् (त्मना देवेष्वित्यादावाकार–) लोपादिकं वेदे दृष्ट्वा' इत्यन्वयः । **अवैयाकरणः**=अनधीतव्याकरणः । **भ्राम्येत्**=पाठान्तरं कल्पयेत् । **तत्र**–लोपादिषु ।

**( उद्द्योते– ) शिष्याचार्येति** । गुरुशिष्यपरम्परेत्यर्थः । सम्प्रदाय इति यावत् । **व्याकरणेन**=व्याकरणाध्ययनेन । **भ्रंशेति** । अपभ्रंशोऽयमाचार्यस्य यदात्मना देवेष्विति पठितव्ये प्रमादात् त्मना देवेष्विति पठतीत्याशङ्कयेत्यर्थः। **व्याकरणं**–व्याकरणाध्ययनम् । **वक्ष्यमाणेति** । ब्रह्माभेदबुद्ध्यत्यर्थः । **विकारः**–विकारत्वेन भगवतोऽत्राभिमतः । भावरूपादेशस्यैवात्र विकारपदेन ग्रहणादिति भावः । **चो हेतौ** । **इदं च**='हृग्रहोर्भश्छन्दसी'ति वार्तिकञ्च । **गृभ्णामीत्यादी**त्यादिना जभार संजभारेत्यादेः परिग्रहः । **अस्या**पीत्यपिना घञो ग्रहणम् ।

**एतेन**–सूत्रस्य 'गृभ्णामि त्वा सौभगत्वाये'त्याद्यर्थमावश्य-

⁂ **शब्दकौस्तुभः** ⁂

**रक्षाप्रभृतीनि** फलान्तराण्यपि सन्ति । तथा च भाष्यम् **'कानि पुनरस्य प्रयोजनानि ?, रक्षोहागमलघ्वसन्देहाः प्रयोजन**'मिति[1] । अत्र प्रयुज्यते प्रवर्त्यतेऽनेनेति करणल्युडन्तः, प्रयोजयतीति कर्तृव्युत्पत्त्या बाहुल्कात्कर्तृल्युडन्तो वा, उभयथापि प्रवर्त्तकविधिपरः पुँल्लिङ्गः **प्रयोजन**शब्द एकः । फलपरः क्लीबोऽपरः । उभयोर्नपुंसकैकशेषे एकवद्भावस्य वैकल्पिकतया प्रश्ने बहुवचनमुत्तरे एकवचनं च बोध्यम् । तत्र **आगमः** प्रवर्त्तकः । रक्षोहलाघवाऽसन्देहास्तु फलानीति **विवेकः** । तत्र प्रवर्त्तक आगमो व्याख्यातः । फलानि व्याख्यायन्ते,–तत्र **रक्षा** वेदसंरक्षणम् । तथाहि भाषायामदृष्टा लोपागमवर्णविकाराश्छन्दसि दृश्यन्ते ते केवलप्रयोगशरणैः प्रामादिकाः सम्भाव्येरन् । वैयाकरणस्तु लक्षणदर्शी तदेव रूपं स्थापयति । तत्र लोपोदाहरणम् 'त्मना देवेषु विविदे मितद्रुः'। **त्मना**–आत्मनेत्यर्थः। 'मन्त्रेष्वाङ्यादेरात्मन' इत्याकारलोपः ॥ **आगमो** यथा–'देवासः ब्राह्मणासः'। 'आज्जसेरसु'गित्यसुगागमः। **लोपागमौ** यथा–'देवा अदुह्र' । अदुहतेत्यर्थः । दुहेर्लङो झस्याऽदादेशे कृते 'लोपस्त आत्मनेपदे'ष्विति तलोपः । 'बहुलं छन्दसी'तिरुडागमः। एतेन 'नाशिरं दुह्रे विश्वा इत्तें धेनवो दुह्रे' इत्यादिलडन्तमपि व्याख्यातम् । **वर्णविकारो** यथा–'गृभ्णामि ते सौभगत्वाय' । 'हृग्रहोर्भश्छन्दसि हस्ये'ति वक्तव्यमिति भकारः। प्रत्ययोपि छान्दसोस्ति, यथा,–**उद्ग्राभं च निग्राभं चेति ।** 'उदिग्रह' इतिसूत्रे 'उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्य-

1 इदं वार्त्तिकमेवेति **परे** । भाष्यमिदमिति **कैयटादयः** ।

2 'भ्राम्यति' । 3 'हस्य भकारः' पा० ।

**चेत्य**नेनैव भस्यापि सिद्धत्वादेतदुपन्यासश्चिन्त्य इति परास्तम् । अन्यार्थमावश्यकेन तेनैव भस्य सिद्धौ तदंशे निपातनाश्रयणवैयर्थ्यात् । निरूर्वाद्ग्रहेर्घञ्विधायकाभावादाह–**उद्ग्राभनिग्राभौ चेति** ॥

[ ऊहार्थत्वोपपादनभाष्यम् ]

**ऊहः खल्वपि—न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः । ते चाऽवश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः । तान्नाऽवैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् ॥ [ –ऊहः ] ॥**

**( प्रदीपः ) ऊहः खल्वपीति ।** इह यस्मिन्यागे इतिकर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा **प्रकृतिः** । येन चोपजीव्यते सा–**विकृतिः** । 'प्रकृतिवद्विकृतिः कर्त्तव्ये'तिमीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग्विजानाति । तत्राऽग्नेर्मन्त्रोऽस्ति–'अग्नये त्वा जुष्टं निर्वपामी'ति । तत्र 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति सौर्ये चरौ मन्त्र ऊह्यते–'सूर्याय त्वा जुष्टं निर्वपामी'ति । विस्तरेण तु **भर्तृहरिणा** प्रदर्शित ऊहः ।

**( उद्द्योतः )** भाष्ये **ऊहः खल्वपी**त्यस्य 'प्रयोजन'-मिति शेषः । **खल्वपीति** निपातसमुदायो निश्चयार्थः ॥ ननु यत्र प्रकरणे ये मन्त्राः पठितास्तत्र तेषां तथैव प्रयोग इष्ट इति नोहेन प्रयोजनमित्याशङ्क्य प्रकृतावूहाभावेऽपि विकृतावूह इति दर्शयितुं प्रकृतिशब्दार्थमाह–**इहेति । यस्मिन्**–आग्नेयादौ । **यागान्तरेण**–सौर्यादिना । प्रकृतिविकृत्यवगमश्च द्विदेवत्यत्वैकदेवत्यत्वादिसाम्येन बोध्यः । अन्यत्र पठितमन्त्राणां कथमन्यत्र गमनमत आह–**प्रकृतिवदिति ।** यथा सोपकारा प्रकृतिरनुष्ठीयते, तथा विकृतिरपीति तदर्थः । तदनेनोपकारातिदेशे तत्पृष्ठभावेन पदार्था अप्यतिदिश्यन्ते, इतिकर्तव्यतायां भावनायाः साकाङ्क्ष-

## ❀ राजलक्ष्मीः ❀

कत्वेन । **एतदिति ।** भत्वविधायकशास्त्रोपन्यास इत्यर्थः । **तेनैव**='हृग्रहोर्भ'इत्यनेनैव । **तदंशे**–भादेशांशे । **विधायकेति ।** विधायकसूत्रेत्यर्थः । उत्पूर्वाद्ग्रहेर्घञो लोके 'उदि ग्रह'इत्यनेन सिद्धत्वा**न्निपूर्वा**दित्युक्तम् ।

**(भाष्ये–)** खल्विति निश्चये । **अपिः** समुच्चये । **सर्वैर्लिङ्गैः**–सकललिङ्गबोधकटाबादिभिः । युक्ता इति शेषः । **सर्वाभिर्विभक्तिभिः**–सर्वविभक्त्यन्तपदैः । न निगदिताः–न पठिताः । **ते**=मन्त्राः । **पुरुषेण**–ऋत्विगादिना । **यथायथं**–यथोचितम् । **विपरिणमयितव्याः**–तत्तल्लिङ्गादिबोधकपदघटिताः पाठ्याः । **तस्मादिति ।** यस्मादवैयाकरणो न शक्नोति सम्यग्विपरिणमयितुन्तस्मादित्यर्थः ।

**( प्रदीपे– ) इह**–प्रकृतिविकृतियागयोर्मध्ये वेदे वा । **इतिकर्त्तव्यता**–विधिः । **उपजीव्यते**–आश्रीयते । **सा**–स यागः । **प्रकृतिः**–प्रकृतियाग इत्युच्यते ।

परेतु–यत्र संपूर्णमङ्गजातं निर्दिष्टं सा प्रकृतिः, यत्र संपूर्णमङ्गजातं नोपदिष्टं सा विकृतिरितिलक्षणम्बोध्यमित्याहुः ।

**प्रत्ययादीति ।** आदिना लिङ्गपरिग्रहः । **सम्यक्**–यथायोग्यम् । **तत्र**–प्रकृतौ । अग्नेर्मन्त्रः–अग्निसम्बन्धिनिर्वपनप्रकाशको मन्त्रः । **तत्र**=विकृतौ । **इति सौर्ये इति ।** इत्यनेन विधिना बोधिते सूर्यदेवतोद्देश्यके चरुद्रव्यके यागे इत्यर्थः ।

**(उद्द्योते–)पठिताः**–यथैव पठिताः । **प्रकृतिविकृत्यवगमश्च**=प्रकृतिविकृतिभावज्ञानञ्च । **अन्यत्र**–प्रकृतौ । **अन्यत्र**–विकृतौ । **यथेति ।** प्रकृतिपठितान्यङ्गानि येनोपकारेण प्रकृतिमुपकुर्वन्ति तेनोपकारेण तानिविकृतिमुपकुर्वन्तीत्यर्थः । **सोपकारा**=उपकारकैरङ्गैः सहिता । **विकृतिरपी**त्यस्य–'अनुष्ठीयते' इति शेषः ।

**पृष्ठभावेन**–तदनुगामितया । **इतिकर्त्तव्येति ।** 'भावनाया इतिकर्तव्यतायां साकाङ्क्षत्वा'दित्यन्वयः । इतिकर्त्तव्यतारहितस्य यागादेः कर्मणोऽसम्भवादितिकर्त्तव्यतायामाख्यातवाच्यभावनायाः साकाङ्क्षत्वादित्यर्थः । आख्याते भावनाया विधेयत्वात्तस्याश्चांऽशत्रययोगितया 'किं' 'केन' 'कथं'-मित्येवं क्रमशः साध्यसाधनेतिकर्त्तव्यताकाङ्क्षानियततया इतिकर्त्तव्यतां विना साध्यसाधनयोरन्वयाऽयोगात्पदार्थातिदेशस्या-

## ❀ शब्दकौस्तुभः ❀

मननिपातनयो'रिति वचनादुन्निपूर्वाद्ग्रहेर्घञ् । तत्र उत्पूर्वात्सूत्रेण लोकेपि सिद्धो घञ् । निपूर्वात्तु वार्त्तिकोक्तश्छन्दस्येव । सन्निवेशविशेषयुक्ताः पात्रविशेषाःस्रुचः । इह तु जुहूपभृतोरेव ग्रहणम् । 'उद्ग्राभं चेति जुहूमुद्यच्छति, निग्राभञ्चेत्युपभृतं नियच्छती'ति वचनात् । भकारादेशः प्राग्वत् ।

**ऊहोऽपि** प्रयोजनम् । तथाहि–यत्राङ्गजातं सम्पूर्णमुपदिष्टं सा प्रकृतिः । यथा–दर्शपूर्णमासौ । यत्र नोपदिष्टं सा विकृतिः । यथा–'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इति विहितो यागः । तत्र वैकृतस्य विधेर्विषयभूतायां भावनायां करणीभूते यागे उपकारकाकाङ्क्षायां तन्मुखेन प्राकृतमङ्गजातं प्राप्यते । वैदिके करणे तादृशानामेवाङ्गानामपेक्षितत्वात् । तेषामेव प्रकृतौ क्लृप्तत्वात् । 'प्रकृतिवद्विकृतिः कर्त्तव्ये'ति **पूर्वमीमांसायां** स्थितम् । तत्र यस्याङ्गस्य प्रकृतौ य उपकारः क्लृप्तस्तस्य विकृतावसंभवे निवृत्तिः । यथा प्रकृताववघातस्य वैतुष्यमुपकारतया क्लृप्तं तस्य कृष्णलेष्वसंभावादवघातस्य निवृत्तिः ।

त्वात् । एतन्मूलकमेव **प्रकृतिव**दितीति मीमांसकसरणिः । पदार्थान्तर्गताश्च मन्त्राः । तत्र अग्निसंबन्धिनिर्वापप्रकाशकमन्त्रस्थाग्निपदस्य सूर्यसंबन्धिनिर्वापप्रकाशनाऽसमर्थत्वात्तदपहाय तत्स्थाने सूर्यायेत्यूह्यमित्याह–**तत्राग्नेरिति । मन्त्र उह्यत इति ।** यद्यप्यूहे न मन्त्रत्वम् , तथाप्येकदेशस्योहेपि अनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात्तद्घटिते समुदाये मन्त्रत्वव्यवहारः, कर्मणः साङ्गत्वं चेति बोध्यम् । सोऽयं प्रकृत्यूहः । अन्येऽप्यूह्याः । ऊहज्ञस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमिति बोध्यम् । भाष्ये **लिङ्गपदं** च प्रकृत्यादेरुपलक्षणम् । **यथायथमिति** । अर्थप्रकाशनसामर्थ्यानतिलङ्घनेनेत्यर्थः ।

[ आगमार्थत्वोपपादनभाष्यम् ]

**आगमः खल्वपि–'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे'ति । प्रधानं षडङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान्भवति ॥ [–आगमः[1] ]**

( प्रदीपः ) **आगम इति ।** आगमः प्रयोजकः[2] प्रवर्त्तको नित्यकर्मतां व्याकरणाध्ययनस्य दर्शयति । **प्रयोजन**शब्देन च फलं प्रयोजकश्चोच्यते ।

**निष्कारण इति ।** दृष्टं कारणमनपेक्ष्येत्यर्थः । **प्रधानं चेति ।** पदपदार्थावगमस्य व्याकरणनिमित्तत्वात्तन्मूलत्वाद्वाक्यवाक्यार्थावसायस्येति भावः ।

( उद्द्योतः ) ननु वक्ष्यमाणस्य न व्याकरणफलत्वमत आह–**प्रवर्तक इति । नित्यकर्मतामिति ।** एतेन नित्यकाम्यता व्याकरणाध्ययनस्येत्युक्तम् । नित्यत्वं चाध्येयज्ञेयपदार्थविशेषणीभूताऽध्ययनज्ञानयोर्बोध्यम् । अत्र **ब्राह्मणेने**त्युक्तेऽन्यस्यैवमध्ययनं काम्यमेवेति सूचयतीति कश्चित् । **निष्कारण इति ।** कारणशब्दः फलपरः । ननु नित्यत्वेऽपि प्रत्यवायपरिहाररूपं फलमस्त्येवेत्यत आह–**दृष्टमिति ।** अध्ययनादिनिष्ठं कारणानपेक्षत्वं विषये आरोप्य 'निष्कारणो

### ❀ राजलक्ष्मीः ❀

वश्यकत्वादिति तु तत्त्वम् । **तत्र**–आग्नेयादियागे प्रकृतौ । **मन्त्रेति ।** 'अग्नये त्वा जुष्ट'मिति मन्त्रेत्यर्थः । **असमर्थत्वादिति ।** तेन मन्त्रेण चाग्नेययागे प्रकृतिसमवेताग्निसम्बन्धिनिर्वापप्रकाशनरूपः प्रकृतेरुपकारो विहित इति विकृतेरपि स उपकारस्तत्समवेतसूर्यादिदेवतासम्बन्धिनिर्वापप्रकाशनरूपः कर्त्तव्यः, प्रकृतिवद्विकृतिरितिन्यायात् । स चाग्निपदघटितेन तेन मन्त्रेण कर्त्तुं न शक्यते इत्यर्थः । **तदपहाय**=अग्नये इति पदमपहाय । **न मन्त्रत्वमिति ।** 'अनाम्नाता अमन्त्राः' इत्यापस्तम्बसूत्रोक्तेरितिभावः । **अनेकपदसमुदाये**–अवशिष्टेऽनेकपदघटितसमुदाये । **प्रत्यभिज्ञानात्**–एकदेशविकृतन्यायेन मन्त्रत्वप्रत्यभिज्ञायाः सत्त्वात् । तद्घटिते=ऊहघटिते पदसमुदाये । **व्यवहार इ**ति । महाग्रामादिवद्भूयसा व्यपदेशादितिभावः । **सोऽयम्**–'अग्नये' इत्यत्र 'सूर्याये'त्यूहः । एकाररूपप्रत्ययोहस्तत्र नान्तरीयक इति न प्रकृत्यूहत्वोक्त्यसङ्गतिः । **अन्येऽपि**–प्रकृतिलिङ्गवचनाद्यूहा अपि । ते च शब्दकौस्तुभे विशदं प्रदर्शिता इति नेह तन्यन्ते । **ऐहिकसुखसिद्धिः**–अर्थकामाद्यैहलौकिकसुखसिद्धिरपि । हिशब्दोऽप्यर्थे । स च सिद्धिपदोत्तरं योज्यः । 'चार्थे स' इत्यन्ये ।

(भाष्ये–) **आगमः**–श्रुतिः । **खल्वपी**त्यस्य 'प्रयोजक' इति शेषः । तमेवाह–**ब्राह्मणेनेति । प्रधानमि**त्यनेनावश्याध्येयतामस्य सूचयति । **( प्रदीपे– ) दृष्ट**–वेदरक्षादिकम् । **पदपदार्थावगमस्य**–पदपदार्थज्ञानस्य । **व्याकरणनिमित्तत्वाद्**=व्याकरणनिमित्तकत्वात् । **तन्मूलत्वात्**–पदपदार्थज्ञाननिमित्तकत्वात् । **वाक्येति ।** वेदवेदार्थज्ञानस्येत्यर्थः

**( उद्द्योते– ) वक्ष्यमाणेति ।** 'ब्राह्मणेन निष्कारण' इति श्रुतेः । **व्याकरणफलत्वं**–व्याकरणसम्बन्धिफलत्वम् । व्याकरणाध्ययनफलत्वमिति यावत् । **नित्यकर्मता**मिति कैयटे कर्मपदं–काम्यपरं, क्रियते–फलाभिसन्धिपूर्वकमनुष्ठीयते यत्तत्कर्मेति व्युत्पत्तेरित्याशयेनाह-**एतेनेति ।** कर्मपदोपादानेनेत्यर्थः । एवञ्च नित्यत्वं काम्यत्वञ्चेति द्वैरूप्यमत्र बोध्यमित्याशयः । सन्ध्यावन्दनादिवदेतदनध्ययने प्रत्यवायात्तदध्ययनज्ञानयोर्नित्यत्वं, रक्षादिप्रयोजनसत्त्वात्तयोः काम्यत्वं चेति विवेकः । **अत्र**–पूर्वोक्तश्रुतौ । **निष्कारण इति ।** 'निष्कारणो धर्म'इत्यत्र भाष्ये । **फल इति ।** कार्यते यागादिरनेन तत् कारणमितिव्युत्पत्त्या स्वर्गादिफलवाचकः कारणशब्द इत्यर्थः । एवञ्च 'निष्कारण' इत्यस्य फलानुसन्धानरहितो नित्य इत्यर्थो लभ्यते इत्याशयः । **कारणानपेक्षत्वं**-फलानपेक्षत्वम् । **विषये**-

### ❀ शब्दकौस्तुभः ❀

मन्त्रा अप्यङ्गम् । तेषां चानुष्ठेयार्थप्रकाशनं कार्यम् । तत्र प्रकृतौ यस्य मन्त्रस्य यदभिधेयं तच्चेद्विकृतौ साकल्येन नास्ति तदा कृत्स्नस्य मन्त्रस्य निवृत्तिः । यथा–'अवरक्षो दिवः सपत्नं वध्यास'मित्यवघातमन्त्रस्य कृष्णलेषु । यस्य त्वेकदेशस्याभिधेयं नास्ति तस्य तावन्मात्रं निवर्त्तते । यथा–'अग्नये त्वा जुष्टं निर्वपामी'त्यस्य मन्त्रस्यावयवभूतं देवताभिधायि पदमौषधद्रव्यकत्वेन एकदेवताकत्वेन चाग्नेयविकारभूते सौर्ये निवर्त्तते । अग्निशब्दे च लुप्तद्वारकतया निवर्तमाने एकारोपि निवर्त्तते । अकारान्तेतरप्रकृतिसन्निधानेनैव हि एकारस्य सम्प्रदानं वाच्यम् । अकारान्तात्तु यशब्दस्य । ततश्चतुर्थ्यन्तं-सूर्यायेत्याद्युदात्तमग्नयेइत्यस्य मध्योदात्तस्य स्थाने ऊह्यम् ।

1 अयं पाठः सम्प्रति लुप्तः सर्वत्र ।

2 'प्रयोजनः' पा० ।

वेद' इति प्रयोगः।आगमपदेन श्रुतिः। श्रुतावपि जनमेजयाद्युपाख्यानवत्पौरुषेयव्याकरणस्यापि नित्यताबोधनमुपपद्यते। यद्वा **तेन प्रोक्त**मिति सूत्रभाष्यरीत्या वेदार्थवद्व्याकरणार्थोऽप्यनादित्वरूपनित्यतावानिति श्रुत्या तस्य नित्यत्वबोधनमिति बोध्यम्। धर्मत्वं च वेदस्य पुरुषयत्नसाध्यतया धर्मत्वेनाभिमताध्ययनज्ञानकर्मत्वेनौपचारिकमित्याहुः।**षडङ्गः** शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्यौतिषाङ्गसहितः। **वेदः** स्वशाखारूपः। **अध्येय** इत्यतः–प्रेरणाविषयाध्ययनकर्मेति बोधः॥ यद्यपि **तेन प्रोक्त**मिति सूत्रे भाष्ये वक्ष्यमाणया रीत्या वेदत्वं शब्दतदर्थोभयनिष्ठम्, तथापि **ज्ञेय** इत्यस्य सम्यगर्थबोधपर्यवसाय्यध्ययनं कार्यमित्यर्थे तात्पर्यम्। अत एव **'समानमीहमानानामधीयानानां च केचिदर्थैर्युज्यन्ते केचिन्ने'**ति वक्ष्यति भाष्यकृत्। अध्ययनतथाज्ञानयोश्च समुच्चयः। अनेनाऽतादृशस्याऽधर्मत्वं सूचयति। श्रुत्या मिलितस्यैव धर्मत्वबोधनात्। तथा च व्यासः—

**'वेदार्थज्ञो जपं जप्त्वा तथवाध्ययनं द्विजः।**
**कुर्वन् स्वर्गमवाप्नोति नरकं तु विपर्यये'**इति॥

**जप**पदं मन्त्रसाध्यकर्ममात्रोपलक्षणम्। ज्ञाधातोश्च ज्ञानानुकूलो मनःप्रणिधानविषयेन्द्रियसंयोगसंपादनादिरूपो व्यापारोऽर्थस्तस्यैवात्र विधेयत्वम्। एतेन–ज्ञानस्याऽविधेयत्वादिदं चिन्त्यमित्यपास्तम्। ननु गुणानां परस्परसम्बन्धाऽभावात् 'षडङ्गेषु प्रधान'मित्यनुपपन्नमत आह–**पदेति**। एवञ्च वेदार्थज्ञाने व्याकरणं प्रधानं करणमिति भावः। भाष्ये–**प्रधाने कृतो यत्न इति**। प्रधानविषये निर्वृत्त इत्यर्थः। अन्यथा यत्नविषयकृतेरसंभवादसङ्गतिः स्पष्टैव। भाष्ये **फलवा**नित्यत्र-फलपदेन वाक्यार्थावगमो विवक्षितः। एतच्छास्त्रं च पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगीति बोध्यम्। एवं च व्याकरणानध्ययनप्रयुक्तस्य वेदार्थाऽज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारकतयाऽस्य नित्यत्वमिति बोध्यम्॥

[ लघ्वर्थत्वोपपादनभाष्यम् ]

**लघ्वर्थं चाध्येयं व्याकरणम्। 'ब्राह्मणेनाऽवश्यं शब्दा ज्ञेयाः'इति। नचाऽन्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम्॥ [–लघु]॥**

---

❀ **राजलक्ष्मीः** ❀

वेदे। **उपाख्यानवदिति**। यथा जनमेजयाद्युपाख्यानस्य प्रवाहनित्यतया श्रुत्याऽभिधानं तथैव पौरुषेयस्य व्याकरणस्यापि नित्यविधिविषयत्वं न विरुद्धमित्याशयः। सिद्धान्तरीत्याह–**यद्वेति**। आनुपूर्व्या अनित्यत्वेऽपि व्याकरणार्थोऽनादितया नित्य एवेति भावः। **श्रुत्या**–'ब्राह्मणेन निष्कारण' इत्यादिश्रुत्या। **तस्य**=व्याकरणस्य। वेदे 'चोदनालक्षणोऽर्थो धर्म' इति धर्मलक्षणाऽभावादाह–**धर्मत्वञ्चेति**। **प्रेरणेति**। अध्येयशब्दे कर्मणि अचो यदिति यत्प्रत्ययः। स च 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे'ति सूत्राद्विधिरूपे प्रैषे इति प्रेरणेत्याद्यर्थलाभ इत्यर्थः। **उभयेति**। व्यासज्यवृत्तीत्यर्थः। एवञ्च श्रुतौ ज्ञेय इति पदं व्यर्थम्, अध्येय इत्यनेनैव अर्थबोधपर्यवसाय्यध्ययनं कार्यमित्यर्थस्य लाभेनार्थस्यापि ज्ञानद्वाराऽध्ययनस्य सम्भवादित्याकूतम्। **अतएव**–सम्यगर्थपर्यवसाय्यध्ययनं कार्यमित्यर्थे तात्पर्यादेव। **तथा ज्ञानम्**–सम्यगर्थविषयकं ज्ञानम्। **समुच्चय इति**। श्रुतौ 'ज्ञेयश्चे'ति समुच्चयार्थकचकारोपादानात्समुच्चयलाभ इति भावः। श्रुतौ चकाराऽपाठे तु 'विनाऽपि चं चार्थो गम्यते' इति भाष्योक्तेः समुच्चयार्थलाभ इत्यवधेयम्। **अनेन**–श्रुत्या समुच्चितयोरेव धर्मत्वप्रतिपादनेन। **अतादृशस्य**–प्रत्येकस्य। **मिलितस्य**–समुच्चितयोरध्ययनतथाज्ञानयोः। स्वोक्तार्थं प्रमाणयति–**तथेति**। **जप्त्वा**–जपं यज्ञादिकञ्च विधाय। **विपर्यये**–प्रत्येकानुष्ठानेतु। **अत्र**–अध्येयो ज्ञेयश्चेति श्रुतौ। **अविधेयत्वादिति**। ज्ञानस्य कर्त्तुमकर्त्तुमन्यथा कर्त्तुं चाऽशक्यत्वाद्वाक्यादिरूपप्रमाणपरतन्त्रस्य तस्य विधेयताया असम्भवाच्चेति भावः। **अपास्तमिति**। पूर्वोक्तव्यापारस्यैव विधेयत्वेनाऽदोषादिति भावः। गुणानाम्=शिक्षाद्यङ्गानाम्। **सम्बन्धाभावादिति**। तथाच प्रधानाप्रधानव्यवहारस्याऽसम्भव इति बोध्यम्। **ज्ञाने**–ज्ञानम्प्रति। एवञ्च षट्स्वङ्गेषु वर्त्तमानं व्याकरणं वेदार्थज्ञानं प्रति मुख्यं करणमिति भाष्यार्थो बोध्य इति भावः। **प्रधानविषये**–व्याकरणाध्ययनविषये। निर्वृत्ते-सम्पन्ने। **अन्यथा**–यथाश्रुते तु। **वाक्येति**। वेदेत्यर्थः। **एवञ्च**–व्याकरणस्य वेदार्थावगमोपयोगित्वे च। अस्य=व्याकरणस्य। **नित्यत्वं**–फलानुसन्धानशून्यप्रवृत्तिकत्वम्।

**(भाष्ये–) लघ्वर्थं**–प्रक्रियारूपलघुभूतोपायज्ञानार्थम्। प्रकृतिप्रत्ययविभागादिरूपया प्रक्रियया हि लाघवेन

---

❀ **शब्दकौस्तुभः** ❀

सोयं **प्रकृत्यूहः**। लिङ्गस्य क्वचिदूहः। यथा–'देवीरापः शुद्धाः स्थे'त्यप्सु विनियुक्तो मन्त्रः–तस्याज्ये **ऊहः**–'देवाज्य शुद्धमसी'ति। प्रत्ययमात्रस्य क्वचिदूहः। यथा–'माभेर्मासंविक्था' इति पुरोडाशेऽवदानमन्त्रः, तस्य धानासूहः–'माभैष्ट मा संविक्ध्व'मित्यादिरिति हरदत्तादयः। याज्ञिकास्तु'संविग्ध्व'मित्यूहमाहुः। युक्तं चैतत्। प्रकृतावनिट्कतया विजिर् पृथग्भावइत्यस्य प्रयोगो न तु ओविजी भयचलनयोरित्यस्येत्यवधारणात्।

**लाघवमपि** प्रयोजनम्। तथाहि–अध्यापनं ब्राह्मणस्य वृत्तिस्तन्निर्वाहश्च वैदुष्याधीनः। वैदुष्यं च साध्वसाधुविवेकः। स च न प्रतिपदपाठादिना सम्भवति, शब्दानामानन्त्यात्।

(प्रदीपः) **लघ्वर्थमिति ।** लाघवेन शब्दज्ञानमस्य प्रयोजनम् । **ब्राह्मणेनेति ।** अध्यापनं ब्राह्मणस्य वृत्तिः । नचाऽशब्दज्ञमुपश्लिष्यन्ति च्छात्रा[1] इति ॥

(उद्द्योतः) **अवश्य**मित्यनेन विवक्षितं दर्शयति–**अध्यापनमिति ।** लाघवं च प्रतिपदपाठापेक्षया प्रकृत्यादिविभागेनान्वाख्यानस्य विवक्षितम् ।

[ असन्देहार्थत्वोपपादनभाष्यम् ]

**असन्देहार्थं चाऽध्येयं व्याकरणम् । याज्ञिकाः पठन्ति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेते'ति । तस्यां सन्देहः— स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि वा पृषन्ति[2] यस्याः सेयं स्थूलपृषतीति ?। तां नाऽवैयाकरणः स्वरतोऽध्यवस्यति—यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः । अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति ॥**

(प्रदीपः) **असन्देहार्थमिति ।** सन्देहस्य प्रागभावोऽत्र द्रष्टव्यो न तु प्रध्वंसाभावः । न हि वैयाकरणस्य संशय उत्पद्य विनश्यति, इतरस्यैव तदुत्पादात् । **स्वरत इति ।** पूर्वपदप्रकृतिस्वराद्बहुव्रीह्यर्थावसाय इत्यर्थः ।

(उद्द्योतः) नन्वसन्देहः—सन्देहाभावः । स च नात्यन्ताभावः, तस्य नित्यत्वात् । न च ध्वंसः, तत्तद्विषयकव्याकरणज्ञानवतः सन्देहस्यैवाऽभावेन तदसंभवात् । यस्य त्वधीतव्याकरणस्यापि कचित्सन्देहः स तद्विषयकवैयाकरणत्वाभाववानेव, वेदनार्थे हि तत्र प्रत्ययोऽत आह–**प्रागभाव इति ।** तत्परिपालनं च शास्त्राध्ययनफलम् । न तु स्वरूपं, तस्याऽजन्यत्वात् । तत्पालनं च प्रतियोगिजनककारणविध्वंसनं, प्रागभावस्य प्रतियोगिजन्मनाश्यत्वादिति बोध्यम् ।

भाष्ये **याज्ञिकाः पठन्तीति ।** यज्ञकाण्डभवा वैदिकाः शब्दा याज्ञिकास्ते पठन्तीत्यर्थः । **'ऋषिः पठति' 'श्रृणोत ग्रावाणः'** इतिवत्प्रयोगः । तत्र **ऋषिर्वेदः ।** **सन्सूत्रे** भाष्ये

## ※ राजलक्ष्मीः ※

शास्त्रप्रवृत्तिः शक्या कर्त्तुमित्याशयः । **इति ।** अतो हेतोर्लब्वर्थमध्येयं व्याकरणमित्यर्थः । **न च**–नहि । **अन्तरेण**–व्याकरणाध्ययनं विना । **(प्रदीपे–)** लब्विति भाष्ये भावप्रधानो निर्देश इत्याशयेन व्याचष्टे–**लाघवेनेति ।** **न च**–नहि । **उपश्लिष्यन्ति**–सेवन्ते । भजन्ति । **इति**–इत्यतो वृत्त्यर्थमप्यध्येयं व्याकरणमित्यर्थः । **(उद्द्योते–) लाघवञ्चेति ।** न तु शब्दज्ञाननिष्ठं लाघवमभिप्रेतमित्यर्थः । **(भाष्ये–) असन्देहार्थं**–सन्देहप्रागभावपरिपालनार्थम् । सन्देहानुत्पत्त्यर्थमिति यावत् । **तस्यां**–श्रुतौ । स्थूलपृषत्यां वा । **अनड्वाही**–गौः । **पृषती**–शब्देनात्र मत्वर्थलक्षणया पृषत्वती ग्राह्या । पृषत्वती च बिन्दुमती । **पृषन्ति**–बिन्दवः । स्वरतोऽध्यवसायप्रकारमाह–**यदीति । बहुव्रीहिरिति ।** 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरस्य तत्र विधानादित्याशयः । **तत्पुरुषः**–प्रकृते कर्मधारयः ।

**(प्रदीपे–) प्रागभावेति ।** प्रागभावस्य चाऽजन्यतया तत्प्रयोज्यत्वरूपं फलत्वम्प्रागभावे विवक्षितम् । तच्च प्रतियोगिसामग्रीविघटनेन प्रागभावपरिरक्षणरूपम् । परे त्वत्यन्ताभाव एवाऽसन्देहपदार्थः, सन्देहकारणस्याऽज्ञानस्याऽभावात्मकज्ञानस्य प्रयोज्यतायाः सन्देहाभावे कार्याभावत्वेन सूपपादत्वादित्याहुः । **इतरस्यैव**–वैयाकरणस्यैव । **पूर्वपदेति ।** मन्त्रे पठ्यमानादित्यर्थः । **अवसायः**–निश्चयः ।

**(उद्द्योते–) तस्य**–अत्यन्ताभावस्य । **तदसम्भवात्**–ध्वंसाऽसम्भवात् । **तत्र**–वैयाकरणशब्दे । **प्रत्ययः**–अण्प्रत्ययः । **तदिति ।** प्रागभावेत्यर्थः । **शास्त्रेति ।** व्याकरणेत्यर्थः । **स्वरूपं**–प्रागभावः । **तस्य**–प्रागभावस्य ।

## ※ शब्दकौस्तुभः ※

तस्मादुत्सर्गापवादरूपलक्षणद्वारा तद्बोधने लाघवम् । अन्यथा तु गौरवम् ।

**असन्देहोपि** प्रयोजनम् । तथाहि–'स्थूलपृषतीमनड्वाहीमालभेते'ति श्रूयते । तत्र सन्देहः कर्मधारयोयं बहुव्रीहिर्वेति ?। तत्र कर्मधारयपक्षे 'पृषती'शब्देन मत्वर्थलक्षणया पृषत्वती बिन्दुमती गौरेवाभिधीयते, स्थूलापि सैव, बिन्दूनां स्थौल्यं तानवं वा यथा तथास्तु । बहुव्रीहौ तु स्थौल्यं पृषत्स्वेवेति, गौस्तु स्थूला कृशा वेत्यत्रानादरः । तत्र लकाराकारे उदात्तत्वं दृष्ट्वा पूर्वपदप्रकृतिस्वरेण बहुव्रीहिं वैयाकरणो निश्चिनोति । ततश्च निश्चयेन प्रतिबन्धात्संशयानुत्पादः । स एवाऽसन्देहः । अर्थाभावेऽव्ययीभावादसन्देहमिति स्यादिति चेन्न, पर्यायेणाव्ययीभावतत्पुरुषसंज्ञाद्वयमपीह भवतीति द्वितीये उपपादयिष्यमाणत्वात् । अत एवोभयथा मुनिप्रयोगः–अद्भुतायामसंहितमिति, अथाऽसंहितयेति च । एवं 'इन्द्रपीतस्योपहूतो भक्षयामी'त्यादावपि स्वरेणैव बहुव्रीहिनिर्णये इन्द्रपीताधिकरणमवैयाकरणान्प्रति सार्थकम् । 'कृत्वा चिन्ता'न्यायेन वा नेयमिति दिक् । तदेवं रक्षोहलाघवासन्देहाख्यानि चत्वारि फलानि व्याख्यातानि । आगमस्तु प्रवर्त्तक इत्युक्तम् । भाष्ये तु सन्दर्भशुध्यर्थं फलचतुष्टस्य प्राक् पश्चाद्वा प्रवर्त्तके वक्तव्ये मध्ये

---

1 'तमुपश्लिष्यन्ति शिष्याः' पा० ।

2 'स्थूलानि पृषन्त्यस्याः' पा. ।

एष प्रयोगः। **ताम्**—अनड्वाहीम्। कस्तर्हि निश्चयस्तत्राह—**पूर्वपदेति**।

[ व्याकरणाध्ययनसाधकागमप्रतीकभाष्यम् ]

**इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि—'तेऽसुराः'। 'दुष्टः शब्दः'। 'यदधीतम्'। 'यस्तु प्रयुङ्क्ते'। 'अविद्वांसः'। 'विभक्तिं कुर्वन्ति'। 'यो वा इमाम्'। 'चत्वारि'। 'उत त्वः'। 'सक्तुमिव'। 'सारस्वतीम्'। 'दशम्यां पुत्रस्य'। 'सुदेवो असि वरुणेति ॥**

( प्रदीपः ) मुख्यानि प्रयोजनानि प्रदर्श्यानुषङ्गिकाणि प्रदर्शयति—**इमानि चेति**। **भूय इति**। पुनरित्यर्थः। आनुषङ्गिकत्वाच्चैषां वर्गद्वयोपादानम्।

( उद्द्योतः ) नन्वम्लेच्छत्वादीनां बहुत्वाद्बहूनामनुग्रहो न्याय्य इति प्रथमतोभिधानं युक्तमत आह—**मुख्यानीति**। प्रधानत्वादेव तेषां प्रथमतोभिधानमिति भावः। तेषां प्रधानत्वं च पदपदार्थज्ञानाधीनत्वेनान्तरङ्गत्वात्। वक्ष्यमाणानां च बहिरङ्गशब्दापशब्दप्रयोगविधिनिषेधविषयत्वादानुषङ्गिकत्वं बोध्यम्। ननु **भूय** इत्येकवचनमनुपपन्नं **प्रयोजनानी**त्यनेन सामानाधिकरण्यादत आह—**पुनरिति**। **इमानि चेति**। चः समुच्चये। भाष्ये **प्रयोजनानीति**। प्रवर्तकानि फलानि चेत्यर्थः। तत्र वक्ष्यमाणवाक्यानि प्रवर्तकानि, तद्बोध्यानि फलानीति विवेकः।

ननु रक्षादिभिः सहैवैतानि कुतो न पठितानीत्यत आह—**आनुषङ्गिकत्वादिति**। एषामानुषङ्गिकत्वं तेषां प्रधानत्वं बोधयितुं तथोक्तिरिति भावः।

[ **ते सुरा** इत्येतद्व्याख्याभाष्यम् ]

**तेऽसुराः। 'तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुस्तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः' ॥ 'म्लेच्छा मा भूमे'त्यध्येयं व्याकरणम्।—तेऽसुराः ॥**

( प्रदीपः ) **तेऽसुरा इति**। निन्दार्थवादेन **'न म्लेच्छितवा'** इति म्लेच्छनं निषिध्यते। तत्र

---

❀ **राजलक्ष्मीः** ❀

**अनड्वाहीमिति**। अर्थसन्देहस्य स्थूलपृषतीशब्दे सत्त्वेऽपि अन्ततो गत्वाऽनड्वाह्यामेव सन्देह इत्याशयः।

( **भाष्ये**— ) **इमानि**—वक्ष्यमाणानि। 'विभक्तिं कुर्वन्ती'ति न मन्त्रप्रतीकधारणं किन्तु वाक्यार्थकथनमात्रम्। 'सारस्वती'मिति च वाक्यघटकपदनिर्देश इत्यवधेयम्।

( **प्रदीपे**— ) **मुख्यानि**—वेदरक्षादीनि। **भूय** इति पश्चादर्थेऽव्ययमित्याशयेनाह—**पुनरिति**।

( **उद्द्योते**— ) **इति**—इत्यनेन न्यायेन। **प्रथमतः**—रक्षादितः प्रागेव। **तेषां**—वेदरक्षादीनाम्। **वक्ष्यमाणानाञ्च**—'तेऽसुरा'इत्यादीनाञ्च। **बहिरङ्गेति**। बहिरङ्गौ यौ शब्दापशब्दप्रयोगयोर्विधिनिषेधौ यद्विषयत्वादित्यर्थः। बहिरङ्गत्वं च तयोर्विलम्बोपस्थितिकत्वाद्बोध्यम्। **तत्र**=तयोर्मध्ये। **तद्बोध्यानि**='म्लेच्छा मा भूमे'त्यादि बोध्यानि अम्लेच्छत्वादीनि। **तेषां**—रक्षादीनाम्। **तथा**—पृथक्।

(**भाष्ये**—) प्रथमं 'तेऽसुरा'इति मन्त्रप्रतीकम्। **'हवै'** इति प्रसिद्धौ। **यत्**—यस्मात् एषोऽपशब्दः—**म्लेच्छः**—म्लेच्छतया प्रसिद्ध इत्यर्थः। उपसंहरति—**म्लेच्छा मा भूमेति**। भाष्ये अन्ते पुनस्तेऽसुरा इत्युक्तिस्तत्समाप्तिबोधनाय, दार्ढ्यार्थं स्मारणाय चेति बोध्यम्।

(**प्रदीपे**—) **म्लेच्छनम्**—अपशब्दोच्चारणम्। **तत्र**—श्रुतौ।

---

❀ **शब्दकौस्तुभः** ❀

तदुक्त्या फलसंदंशेन नित्यानामपि फलपर्यवसानमस्तीति सूचितम्। फलं तु पापक्षयः, प्रत्यवायानुत्पत्तिर्वा। 'धर्मेण पापमपनुदति'। **'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छती'**त्यादिवचनानीह साधकानीति दिक्।

**इमानि च भूय** इत्यादिभाष्येण प्रवर्त्तकवचनान्तराणि उदाहृत्य व्याख्यातानि। तद्यथा—'ते सुरा हेलयो हेलय' इति कुर्वन्तः पराबभूवुस्तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द'इति ब्राह्मणम्। अत्र 'न म्लेच्छितवै' एतस्य विवरणं—'नापभाषितवै' इति। उभयत्रापि 'कृत्यार्थे तवैकेन्केन्यत्वन' इति 'तवै'प्रत्ययः। धातूनामनेकार्थतया निन्दावचनान्म्लेच्छधातोः कर्मणि घञ्। तेनापशब्दसामानाधिकरण्यं न विरुध्यते। अत्र 'न म्लेच्छितव्य'मिति निषेधस्य 'तेऽसुरा' इत्यर्थवादः। न चेह रात्रिसत्रन्यायेन आर्थवादिकं फलमस्त्विति वाच्यम्; 'द्रव्यसंस्कारकर्मसु परा-

---

१ **गौडास्तु** ॥ * ॥ इमानि च भूयस्तेऽसुरा दुष्टः शब्दो यदधीतं यस्तु प्रयुङ्क्तेऽविद्वांसो विभक्तिं कुर्वन्ति यो वा इमां चत्वार्युतत्वः सक्तुमिव सारस्वतीं दशम्यां पुत्रस्य सुदेवो असि वरुणेति ॥*॥ इति वार्त्तिकं लुप्तम्। तद्व्याख्यानमेव—'इमानि च भूयः' इत्यादिना कृतमुपलभ्यते सम्प्रति भाष्ये! अस्य वार्त्तिकत्वाभावेऽग्रे भाष्यकृताम्—'अपर आहे'त्यादिना—व्याख्यान्तरोपन्यासोऽनुचितः स्यात्। स्वोक्तेरपरकृताया व्याख्यायाः स्वयमुपन्यासस्याऽयुक्तत्वात्। अस्य वार्त्तिकत्वे तु तद्घटकैकदेशस्याऽपरकृता व्याख्या भाष्यकृता निबद्धेति सूपपन्नमित्याहुः। अत्र युक्तत्वाऽयुक्तत्वे सुधीभिर्विवेच्ये।

**केचिदाहुः**–'**हैहेप्रयोगे हैहयोः**'इति प्लुते प्रकृतिभावे च कर्त्तव्ये तदकरणं म्लेच्छनमिति । पदद्विर्वचने वाक्यद्विर्वचनं लत्वं च म्लेच्छनमित्य**परे** । '**न म्लेच्छितवा**' इत्यस्य पर्यायो **नापभाषितवा** इति । '**कृत्यार्थे**'इति 'तवै'प्रत्ययः । म्लेच्छे[1] इति कर्मणि घञ् ।

(**उद्द्योतः**) ननु **पराबभूवुस्तस्माद्ब्राह्मणेने**ति श्रुतौ पराभवस्यापशब्दभाषणफलत्वावगतेः 'पराभूता मा भूमेत्यध्येयम्' इति वक्तुमुचितमत आह–**निन्दार्थवादेनेति** । 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्या'दिति न्यायेन '**यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती**'त्यादावपापश्लोकश्रवणस्य प्राशस्त्यमात्रपरत्वादिति भावः । प्रकरणाच्च क्लत्वङ्गमयं[2] निषेधः । **केचिदाहुरिति** । अत्राऽरुचिबीजं तु '**सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तव्यः**' इति । **पदेति** । 'सर्वस्य द्वे' इत्यत्र पदग्रहणस्य वार्तिककृतोक्तत्वादिति भावः । ननु नेदं द्वित्वं, किं त्वैच्छिकः पुनः प्रयोगोऽत आह–**लत्वं चेति** । **न म्लेच्छितवै** इत्येतन्म्लेच्छभाषाविषयमिति भ्रमनिवृत्त्यर्थं तद्विवरणं–**नापभाषितवै** इति । **हवै** इति प्रसिद्धौ । अपशब्दत्वं व्याकरणानुगतशब्दस्येषद्भ्रंशन एव प्रसिद्धमिति भावः । ननु म्लेच्छो नाम पुरुषविशेषो देशविशेषो वा स कथमपशब्दोऽत आह–**घञिति** । निन्दावचनान्म्लेच्छतेरिति भावः । निन्दा च शास्त्रबोधितविपरीतोच्चारणेन पापसाधनत्वात् । एवंच म्लेच्छा इत्यस्य निन्द्या इत्यर्थ इति दिक् ।

[ **दुष्टःशब्द** इत्येतद्व्याख्यानभाष्यम् ]

**दुष्टः शब्दः**—

**'दुष्टः शब्दः स्वरतो वर्णतो वा**
**मिथ्या प्रयुक्तो न तमर्थमाह ।**
**स वाग्वज्रो यजमानं हिनस्ति**
**यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥'इति॥**

❀ **राजलक्ष्मीः** ❀

**प्रकृतिभावे**–तत्प्रयुक्ते 'प्लुतप्रगृह्या' इति प्रकृतिभावे । **कर्त्तव्ये**–'है ३ अरयः' इत्यमुच्चारणे करणीये । **तदकरणं**=तथानुच्चारणम् । **कर्मणीति** । म्लेच्छयते इति म्लेच्छइति विग्रहः । नतु करणे घञितिभावः । करणे घञो दौर्लभ्यस्याऽन्यत्र व्यवस्थापितत्वात् ।

(**उद्द्योते**–) **निन्दार्थेति** । **श्रुतौ** 'तेऽसुरा'इति निन्दार्थवादपूर्वकं 'न म्लेच्छितवै' इत्यपसंहारेण म्लेच्छनमेव निषिध्यते इत्यर्थः । तेन नायमपूर्वो विधिः किन्तर्हि ? अर्थवादइति लभ्यते इति कैयटाशयः ।

**न्यायेन**–पूर्वमीमांसासूत्रोपनिबद्धेन । **अपापश्लोकश्रवणस्य**–पापश्लोकश्रवणाऽभावस्य । **प्राशस्त्येति** । यथा तस्य प्राशस्त्यमात्रपरता नतु स्वार्थपरता तथाऽत्रापीत्यर्थः । **अस्य**–'तेऽसुरा' इत्यस्य । ननु निषेधे द्रव्यत्वाद्यभावात्कथं न्यायसञ्चारावसरोऽत आह–**प्रकरणादिति** । प्रकरणबलादेव त्वित्यर्थः । **अयं**–निषेधः । अङ्गशब्दस्य 'अङ्गं शरीरोऽवयव'इत्यादिकोशप्रामाण्येन नित्यक्लीबतयाऽङ्गमितिक्लीबनिर्देशः । **वार्त्तिकेति** । पदाधिकारस्य तत्राभावादित्याशयः । **इदं** 'हैलयो हेलय'इतीदम् । **पुनरिति** । तात्पर्यद्योतनाय पुनः प्रयोग इत्यर्थः । **म्लेच्छभाषेति** । यवनादिम्लेच्छभाषानिषेधविषयमित्यर्थः । इति–इत्येवम् । **निन्देति** । धातूनामनेकार्थत्वान्म्लेच्छतेर्निन्दार्थकतेत्याशयः । **विपरीतेति** । शास्त्रबोधिताद्विपरीतं यदुच्चारणं, तेन तद्विषयत्वेनेत्यर्थः । **एवञ्च**–म्लेच्छतेर्निन्दार्थकत्वे च, शास्त्रबोधितविपरीतोच्चारणविषयतया पापसाधनत्वे चेति वा । इत्थञ्च वर्णस्याप्यन्यथोच्चारणे दोष उपदर्शितः ।

(**भाष्ये**–) वर्णापराधे दोषमुक्त्वा वाक्यापराधे दोषमाह–**दुष्ट इति** । **सः**–स्वरवर्णदुष्टः शब्दः । **वाग्वज्रः**–ऋत्विग्वाग्रूपो वज्रः **हिनस्ति**=हिंस्यात् । लिङर्थे छान्दसोलेट् ।

❀ **शब्दकौस्तुभः** ❀

र्थत्वात्फलश्रुतिरर्थवादः स्या'दिति न्यायेन अपापश्लोकश्रवणवत्प्राशस्त्यमात्रपरत्वात् । 'प्रकारणात्क्लत्वङ्गं ह्ययं निषेध' इति 'यर्वाणस्तर्वाणो नामे'त्यादावुत्तरग्रन्थे भाष्यकारैरेव स्फुटीकरिष्यते । अत एव–'इहापि पराभूता मा भूमेत्यध्येयं व्याकरण'मिति नोपसंहृतं किं तु 'म्लेच्छा मा भूमे'त्येव । **म्लेच्छाः**–निन्द्याः । शास्त्रबोधितविपरीतानुष्ठानादिति भावः । अत्र 'हैहेप्रयोगे हैहयो'रितिप्लुते, प्लुतत्वप्रयुक्ते प्रकृतिभावे च कर्त्तव्ये तदकरणं म्लेच्छनमित्ये**के** । 'ननु सर्वः प्लुतः साहसमनिच्छता विभाषा कर्त्तव्य' इति भाष्यकृता वक्ष्यमाणत्वान्नैष दोष इति चेत्, सत्यम्; अत एवाऽपरितोषाद्वाक्यद्विर्वचनं म्लेच्छनमित्य**परै**र्व्याख्यातम् । 'सर्वस्य द्वे'इत्यत्र पदग्रहणस्य चोदितत्वादिति तेषां भावः । ननु नेदं शास्त्रीयं द्विर्वचनं किं तु तात्पर्यद्योतनार्थमैच्छिकः पुनः प्रयोगः,–'अनावृत्तिः शब्दादनावृत्तिः शब्दा'दितिवदिति चेत्, तर्ह्याम्रेडितस्वरानुपपत्तिः । यदि तु तत्राम्रेडितस्वरविनिर्मुक्त एव पाठस्तर्हि अरिशब्दे रेफस्य लत्वमपशब्द इत्यवधेयम् । इदं च भाष्यादिषु प्रसिद्धं श्रुतिपाठमनुसृत्य व्याख्यातम् । अयं च पाठः क्वचिच्छाखायामन्वेषणीयः । माध्यन्दिनानां शतपथब्राह्मणे तु 'हेलवो हेलव इति वदन्त' इति पठित्वा 'तस्माद्ब्राह्मणो न म्लेच्छे'दिति पठ्यते । तत्र यकारस्थाने वकारोऽपशब्द इति स्पष्टमेव ।

तथा शिक्षासु पठ्यते–'**मन्त्रो हीनः स्वरतो वर्णतो**

१ 'म्लेच्छाः' पा० ।

२ 'क्लत्वङ्गोऽयं' पा० ।

**'दुष्टाञ्छब्दान्मा प्रयुक्ष्मही'त्यध्येयं व्याकरणम् ॥ [-दुष्टः शब्दः] ॥**

[ प्रदीपः ] **दुष्टः शब्द इति।** स्वरेण स्वरतः। आद्यादित्वात्तसिः। **मिथ्याप्रयुक्त इति।** यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन्नाभिमतमर्थमाहेत्यर्थः। **वागेव वज्रो** हिंसकत्वात्। **यथेन्द्रशत्रु**शब्दः स्वरदोषाद्यजमानं हिंसितवानित्यर्थः। इन्द्रस्याभिचारो वृत्रेणारब्धस्तत्रेन्द्रशत्रुर्वर्धस्वेति मन्त्र ऊहितः। तत्रेन्द्रस्य शातयिता शमयिता वा भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितो न तु रूढिशब्दः, तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थाऽभेदः। तत्रेन्द्राऽमित्रत्वे सिद्ध सतीन्द्रस्य शत्रुर्भवेत्यत्रार्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्त ऋत्विजा प्रयुक्त इत्यर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता सम्पन्नः। इन्द्रशत्रुत्वस्य च विधेयत्वात्सम्बोधनविभक्तेरनुवाद्यविषयत्वादिहाऽभावः। यथा-'राजा भव युध्यस्वे'ति॥ ऊह्यमानस्य चाऽमन्त्रत्वाद्**यज्ञकर्मणीति** जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विधीयमानेह न भवति।

( **उद्योतः** ) असर्वनामत्वात्तसोऽप्राप्तेराह-**स्वरेणेति। आद्यादित्वादिति च।** तमित्यस्य यच्छब्दापेक्षित्वादाह-**यदर्थेति। मिथ्याप्रयुक्त** इत्यस्य विवरणं-**ततोर्थान्तरमिति।** न केवलं तदर्थं नाहेत्येतावत्, प्रत्यवायोत्पादनद्वारा हिंसकोऽपीत्याह-**वागेवेति।** यथाऽध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिः, एवं तत्कृतापशब्दप्रयोगात्तस्मिन् प्रत्यवाय इत्याशयः। तत्र दृष्टान्तमाह-**यथेति। वृत्रेणेति।** हेतौ तृतीया। फलमपीह हेतुः। **मन्त्र इति।** न चोहितस्य कथं मन्त्रत्वमिति वाच्यम्। मन्त्रशब्दस्य बोधकपरत्वात्। अतएव **'मन्त्रो हीनः स्वरतः'** इति प्रसिद्धमपि शिक्षापाठं विहाय भाष्ये-**'दुष्टः शब्द'** इति पठितं, तत्रत्यमन्त्रशब्दस्य शब्दमात्रपरतेति सूचयितुम्। शत्रुशब्दस्याऽमित्रपर्यायत्वे बहुव्रीहितत्पुरुषयोरविशेषोऽत आह-**तत्रेन्द्रस्येति।** शदेर्ण्यन्तादौणादिकः क्रुन्। प्रज्ञादिगणे निपातनाद्ध्रस्वत्वम्। शमेस्तु तत्वम्। संबोधनविभक्त्यभावायाह-**इन्द्रशत्रुत्व-**

## ❀ राजलक्ष्मीः ❀

( **प्रदीपे-** ) **न तमर्थमाहे**त्यस्यार्थः-**नाभिमतमर्थमाहेति।** इन्द्रशत्रुरित्यस्यार्थमाह-**इन्द्रशत्रुशब्दइति। तत्र**-आभिचारिके कर्मणि। **क्रियाशब्दः**-यौगिकशत्रुशब्दः। **अत्र**-'इन्द्रशत्रुर्वर्द्धस्वे'त्यूहिते वाक्ये। **तदाश्रयणे हि**-रूढिशब्दाश्रयणे तु। यद्वा हिर्हेतौ। **अर्थेति।** अभिमतोर्थभेदो न स्यादित्यर्थः।

क्रियाशब्दाश्रयणे यथार्थभेदस्तथादर्शयति-**तत्रेन्द्रेति। तत्र**-ऊहिते इन्द्रशत्रुरित्यादिवाक्ये। **शत्रुः**-विनाशकः। **अन्तोदात्त इति।** इन्द्रस्य शत्रुरिति षष्ठीतत्पुरुषे कृन्नन्ततया नित्स्वरेण शत्रुशब्दस्याद्युदात्ततया शेषनिघातेन तस्मिन्स्वरेऽवस्थिते इन्द्रशत्रुशब्दोऽन्तोदात्तो भवति। एवं हि प्रयोक्तव्य आसीत्। परं प्रमादादाद्युदात्त इन्द्रशत्रुशब्दः प्रयुक्तः। आद्युदात्तत्वं च तस्य बहुव्रीहावेव सम्भवति। तथाहि 'ऋत्रेन्द्रे'त्यादिना उणादिषु इन्द्रशब्दस्य रन्नन्तस्य साधनान्नित्स्वरेण तस्याद्युदात्तता। बहुव्रीहिसमासे च 'बहुव्रीहौ प्रकृत्ये'ति पूर्वपदप्रकृतिस्वरेण तस्यैव स्वरः शिष्यते इति आद्युदात्ततोपपद्यते। एवञ्च बहुव्रीहिसमासेन प्रयोगादिन्द्र एव शातयिता तस्य जात इत्याशयः। **इह**-'इन्द्रशत्रुर्वर्द्धस्वे'त्यत्र।

( **उद्योते-** ) **तसः**-'पञ्चम्यास्तसि'ल्लिति तसिलः। **तदर्थ**-तमर्थम्। **प्रत्यवायेति।** यजमानस्याधर्मोत्पादनद्वारा हिंसक इत्यर्थः। **फलमपीति।** एवञ्च वृत्रप्रादुर्भावरूपफलाय त्वष्ट्रा आरब्धोऽभिचार इत्यर्थो लभ्यते। **अतएव**-ऊहितस्य मन्त्रत्वाभावादेव। **तत्रत्येति।** शिक्षास्थितेत्यर्थः। **शब्देति।** बोधकमात्रपरतेत्यर्थः। **शत्रुशब्दस्येति।** तस्य वैरिपर्यायत्वे इत्यर्थः। **अविशेषः**-स्वरे भेदेऽपि अर्थे भेदो न स्यात्। **शमेरिति।** शमेः प्रज्ञादिगणे निपातनात्तकारादेश इत्यर्थः। **अत्र**-इन्द्रशत्रुर्वर्द्धस्वेत्यत्र। **तद्वा-**

## ❀ शब्दकौस्तुभः ❀

**वा मिथ्याप्रयुक्तो न तमर्थमाह। सवाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधा'**दिति। **स्वरेण**-स्वरतः। 'हीयमानपापयोगाच्चे'ति तसिः। **मिथ्याप्रयुक्तः**-यदर्थप्रतिपादनाय प्रयुक्तस्ततोर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन्। अत एव तमर्थं नाहेत्यर्थः। वागेव वज्रः हिंसकत्वात्। **यजमानं हिनस्तीति।**-यथाध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिरेवमध्वर्युकृतादपशब्दप्रयोगाद्यजमाने प्रत्यवाय इत्यर्थः। **यथेत्यु**दाहरणे। **इन्द्रशत्रुः**-इन्द्रशत्रुशब्दः। पुरा किल विश्वरूपाख्ये त्वष्टुः पुत्रे इन्द्रेण हते सति कुपितस्त्वष्टा इन्द्रस्य हन्तारं वृत्राख्यं पुत्रान्तरमुत्पिपादयिषुराभिचारिकं यागं कृतवान्। तत्र च इन्द्रस्य शातयिता शत्रुः हिंसक इति यावत्। तथाभूतःसन् वर्धस्वेतिप्रतिपादितुं 'इन्द्रशत्रुर्वर्धस्वे'तिप्रयुक्तम्। ण्यन्ताच्छदेरौणादिकः क्रुन्प्रत्ययः। प्रज्ञादिगणे निपातनाद्ध्रस्वः। इन्द्रशत्रुत्वस्य/विधेयत्वान्न सम्बोधनविभक्तिः। तस्या अनुवाद्यविषयकत्वात्। अत एव राजन् युध्यस्व राजा भव युध्यस्वेत्यनयोर्व्यवस्थयैव प्रयोगः। राजत्वस्य सिद्धत्वे सम्बोधनविभक्तिर्न तु विधेयत्वेपीति। एवं स्थिते इन्द्रशत्रुशब्दे तत्पुरुष-

१ 'नाभिमतमर्थं नाहेत्यर्थः' पा०।

२ 'शमयिता शातयिता वा' पा०।

स्येति। नन्वत्र **यज्ञकर्मणी**त्येकश्रुतौ प्राप्तायां पूर्वपदप्रकृतिस्वरकरणं स्वरापराध इति वक्तुं युक्तम्। न च तथैवास्तु। शतपथब्राह्मणतद्भाष्यविरोधात्। तत्र हि आद्युदात्तत्वकरणमेव स्वरापराध उक्त इत्यादि स्पष्टमस्मत्कृतैकश्रुत्यवादेऽत आह–**ऊह्यमानस्य चेति**। तदुक्तम्–**'अनाम्नातेष्वमन्त्रत्व'**मिति। नचाऽस्याऽमन्त्रत्वे लौकिकशब्देन क्रियमाणस्य कर्मणः कथं फलजनकत्वमिति वाच्यम्; **सूर्याय त्वे**त्यादेर्लौकिकघटितस्य ऊहविधायकशास्त्रबलेन फलजनकत्ववदुपपत्तेरित्याहुः।

[ **यदधीत**मितिव्याख्यानभाष्यम् ]

**यदधीतम्–**

**'यदधीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥'**

॥ राजलक्ष्मीः ॥

ष्येति। शतपथब्राह्मणसायणभाष्येत्यर्थः। **लौकिकशब्देन**-ऋत्विगाद्यूहितेनाऽवैदिकेन शब्देन। **सूर्यायेति**। 'अग्नये त्वा जुष्टं निर्वपामी'त्यत्रोहिते 'सूर्याये'त्यादेरित्यर्थः।

(**भाष्ये–**) **शब्द्यते**–उच्चार्यते। अनग्नाविति बहुव्रीहिस्तत्पुरुषो वा। **अनग्नौ**–अग्निरहिते, कुण्डादौ,

॥ शब्दकौस्तुभः ॥

समासप्रयुक्तेऽन्तोदात्ते वक्तव्ये प्रमादादाद्युदात्तः किलोक्तः। तथा च पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थो लब्धः। इन्देर्हि धातोरौणादिके 'ऋज्रेन्द्रे'त्यादिना रन्प्रत्यये कृते इन्द्रशब्द आद्युदात्तो व्युत्पादितः। तेनेन्द्र एवास्य हिंसकः सम्पन्न इति श्रुतीतिहासपुराणादिषु प्रसिद्धम्। तदिहोदाहरणतयोक्तम्। स्यादेतद्, यज्ञकर्मणि ह्येकश्रुत्येह भवितव्यं, सा च तत्पुरुषबहुव्रीह्योरविशिष्टेति। अत्राहुः–जपादिपर्युदासेन मन्त्रेष्वेव एकश्रुतिर्विधीयते। स्वेच्छया प्रयुज्यमानश्च मन्त्रो न भवति। तदुक्तं भेदलक्षणे **जैमिनिना**-'अनाम्नातेष्वमन्त्रत्व'मिति। **आपस्तम्ब**श्चाह–'अनाम्नाता अमन्त्रा यथा प्रवरोहनामधेयग्रहणानी'ति। अत एव 'मन्त्रो हीन' इति पाठस्य शिक्षायां प्रसिद्धत्वेपि ऊह्यमानस्याऽमन्त्रतया यथेन्द्रशत्रुरिति वाक्यशेषोऽसङ्गतः स्यादतो मन्त्रशब्दः शब्दमात्रपर इत्याशयेन भाष्ये–'दुष्टः शब्द' इति पठितम्। ननु 'स्वाहेन्द्रशत्रुर्वर्द्धस्वे'ति वेदे पठ्यत एवेतिचेत्, सत्यम्; ऊहितं यदमन्त्रभूतमनुकार्यं तदनुकरणस्य पाठेऽपि अर्थपरस्यानुकार्यस्य लौकिकत्वानपायात्। नन्विन्द्रशत्रुशब्दस्य लौकिकत्वे कथं स्वरप्रयुक्तयोर्गुणदोषयोः प्रसक्तिः, स्वरस्य वेदमात्रविषयकत्वादिति चेन्न; स्वरविधौ छन्दोधिकाराभावात्। एतावानेव हि भेदो–यच्छन्दसि त्रैस्वर्यमेकश्रुतिश्च व्यवस्थया-

**तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम्। [–यदधीतम्[1]]।**

(**प्रदीपः**) **अविज्ञातमिति,**–अविदितस्वरादिसंस्कारत्वादर्थाऽपरिज्ञानाद्वा। **निगदेनेति**। पाठमात्रेण। **न तज्ज्वलतीति**। निष्फलं भवति। **अनर्थकमिति**। निष्प्रयोजनम्॥

(**उद्द्योतः**) नन्वधीतमविज्ञातमिति विरुद्धमत आह–**अविदितेति**। **शुष्कैध** इति सान्तक्लीबैधःशब्देनादन्तपुँल्लिङ्गेन वा निर्वाह्यम्। निरुक्ते तु **यद्गृहीतमविज्ञात**मिति पठ्यते। तत्र–**गृहीतं**–शब्दतः। **अविज्ञात**मर्थत इति बोध्यम्॥ भाष्ये–**तस्मादनर्थकमिति**। अनेन निन्दार्थवादेन निष्प्रयोजनाध्ययनाऽनौचित्येन निष्प्रयोजनं नाध्येयमिति निषेधकल्पनादिति भावः। अतो निषिद्धमध्ययनं मा भूदिति व्याकरणमध्येयमिति तात्पर्यम्।

भस्मनां चये वेति बहुव्रीहिपक्षेऽर्थः। तत्पुरुषे तु अनग्नौ–जलादावित्यर्थः, नञो विरोधार्थकत्वात्। 'प्रक्षिप्त'मिति शेषः। **न ज्वलति–**न प्रज्वलति, नैव प्रकाशते।

(**प्रदीपे–**) **अविदितेति**। अविज्ञातस्वरादिसंस्कारकत्वादित्यर्थः।

(**उद्द्योते–**) **तत्र**–निरुक्तसंमते पाठेऽपि। एवमनार्थमेद इत्याशयः। **अनेन**–'यदधीत'मित्यादिना।

ऽऽश्रीयते, लोके त्वैच्छिक वकल्पः। अत एव 'एकश्रुत्या सूत्रपाठस्त्रैस्वर्येण वे'ति पक्षद्वयमपि तत्र-तत्रोपन्यस्तमिति वक्ष्यामः। नन्वेवम् 'उच्चैस्तरां वे'तिसूत्राद्विकल्पानुवृत्त्यैव सिद्धौ 'विभाषा छन्दसी'त्यत्र विभाषाग्रहो व्यर्थः स्यात्। प्रसज्यप्रतिषेधे तु नायं दोषः, 'यज्ञकर्मणी'त्यस्य निवृत्तये पुनर्विभाषाग्रहणात्। न च पर्युदासपक्षेऽप्येवमेवास्त्विति वाच्यम्, नित्यविकल्पविध्योर्विषयभेदस्यावश्यकतया आरम्भसामर्थ्यादेव तन्निवृत्तिसिद्धेः। प्रसज्यप्रतिषेधे तु नारम्भसामर्थ्यम्; ऊहादिष्व मन्त्रेषु चरितार्थस्य पूर्वविधेरुत्तरेणच्छन्दोमात्रविषयकेण बाधसम्भवात्। नह्यूहादीनां छन्दस्त्वमस्ति, मन्त्रब्राह्मणेतरत्वात्। तस्मादसमर्थसमासमाश्रित्यापि प्रसज्यप्रतिषेध एवागत्या स्वीकर्त्तुमुचित इति चेन्न, पर्युदासपक्षेपि मन्त्रे नित्यं, ब्राह्मणे वेति विषयविभागसंभवेन यज्ञकर्मनिवृत्तये विभाषाग्रहणसम्भवात्। उक्ताऽपरितोषादेव तु के चिज्जपादिषु प्रसज्यप्रतिषेधमाश्रित्य इहाप्येकश्रुतेः प्राप्तौ सत्यां तदकरणं बहुव्रीहिस्वरकरणं च **स्वरतोऽपराधादित्यस्यार्थ** इत्याहुः।

श्रूयते च–**'यदधीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हि चित्॥'** **निगदेन,**–पाठमात्रेण। 'शुष्कैध'इति सान्तेन क्लीबेन एधःशब्देन अकारान्तेन वा पुँल्लिङ्गेन निर्वाह्यम्। **न ज्वलति,**–

[1] 'सुवादि' पा०।

[ यस्तुप्रयुङ्क्तेव्याख्यानभाष्यम् ]

यस्तु प्रयुङ्क्ते—

'यस्तु प्रयुङ्क्ते कुशलो विशेषे
शब्दान्यथावद्व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र
वाग्योगविद्दुष्यति चापशब्दैः ॥'

[ 'दुष्यति चापशब्दैः' ]

कः ? ॥

वाग्योगविदेव ॥

कुत एतत् ? ॥

यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति । यथैव हि शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽप्यधर्मः ॥

अथ वा भूयानधर्मः प्राप्नोति । भूयांसोऽपशब्दाः, अल्पीयांसः शब्दा इति । एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । तद्यथा–'गौ'रित्यस्य शब्दस्य-गावी गोणी गोता गोपोतलिकेत्यादयो बहवोऽपभ्रंशाः । अथ योऽवाग्योगविदज्ञानं तस्य शरणम् ॥

( प्रदीपः ) यस्तु प्रयुङ्क्ते इति । अनेनाऽभ्युदयहेतुत्वं व्याकरणाध्ययनस्य[१] दर्शयति । विशेष इति । स एव शब्दः क्वचिदर्थे केनचिन्निमित्तेन प्रयुक्तः साधुरन्यथाऽसाधुः[२] । यथाऽश्वेऽस्वशब्दो धनाऽभावनिमित्तकः साधुर्जातिनिमित्तकोऽसाधुः । गवि च गोणीशब्दः साधर्म्यात्प्रयुक्तः साधुर्जातिनिमित्तकोऽसाधुः ।

क इति । वाग्योगविदः श्रुतत्वाद्दोषदर्शनाच्च प्रश्नः । प्रष्टैव परमतमाशङ्क्याह–वाग्योगविदेवेति । एवमशब्दज्ञानेऽपीति । यथा श्लैष्मिकद्रव्यसेवया श्लैष्मिकव्याधिसम्भवस्तद्विपरीतसेवया त्वारोग्यं तथाऽत्रापि यथोक्तं न्याय्यमिति भावः ।

भूयांसोऽल्पीयांस इति,–परमतापेक्षया प्रकर्षप्रत्ययः । यदि मन्यसे बहवः शब्दा अल्पेऽपशब्दाः, अङ्गभूयस्त्वाच्च फलभूयस्त्वमिति, तन्न; यस्माद्भूयांसोऽपशब्दा अल्पीयांसः सुशब्दाः । अज्ञानमिति । तथा च तिरश्चां ब्रह्महत्यादिफलाऽभावः ।

( उद्द्योतः ) एकः पूर्वपरयोरित्यत्र भाष्यपठितैकः शब्द इत्यादिश्रुतिमूलकमाह–भाष्ये–यस्त्विति । अभ्युदयहेतुत्वम्–अदृष्टद्वारा पुरुषार्थसाधनत्वम् । कुशलः–अधीतव्याकरणः । लक्षणस्मरणपूर्वकं यः प्रयुङ्क्ते इति

❀ राजलक्ष्मीः ❀

( भाष्ये– ) निषेधविधिविषयफलान्युक्त्वा काम्यविधिविषयं फलं दर्शयति–यस्त्विति । कुशलः–यथाशास्त्रं शब्दप्रयोगवित् । विशेषे–शक्यलक्ष्यादितत्तदर्थविशेषे । स–वाग्योगवित् । प्रयोगवित् । जयम्–उत्कर्षम् । परत्र–स्वर्गलोके । एतावता शब्दविदः प्रशंसोपनिबद्धा । अथ 'दुष्यति चापशब्दैः' इत्यत्र कर्तुरनुपादानात्पृच्छति–क इति । एकदेशी स्वयमेव उत्तरयति–वागिति । वाग्योगविदः कथं दोष इत्याशयेन तटस्थः पृच्छति–कुत इति । असौ–वाग्योगविद्वैयाकरणः । अधर्म इति । अपशब्दज्ञानादधर्मोऽपीत्यर्थः । शब्दा इतीति । इतिरत्र हेतौ । यतो बहवोऽपशब्दा अतो भूयानधर्मः प्राप्नोति । बहव इति । देशकालावस्थादिभेदेनैकस्यापि शब्दस्यापशब्दानां भूयस्त्वमित्यर्थः । अवागिति । अवैयाकरण इत्यर्थः । अज्ञानम्–निषेधशास्त्राऽज्ञानम् । शरणम्–प्रत्यवायपरिहारकम् । एवञ्च विदुषो दोषः, मूर्खस्य तु नापशब्दोच्चारणेऽपि दोष इति व्याकरणस्य नित्याध्ययनं युक्तं, न तु शब्दव्युत्पादनार्थत्वं । व्याकरणाध्ययनस्य प्रत्युत प्रत्यवायहेतुत्वादिति लब्धम् । इयञ्च व्याख्या एकदेशिनः । असिद्धान्तस्य प्रतिपादनात् ।

( प्रदीपे– ) अनेन–यस्त्वित्यादिपद्येन । स एव–अस्वादिशब्द एव । जातिनिमित्तकः–अश्वत्वादिजातिप्रवृत्तिनिमित्तकः । साधर्म्यात्–आवपनविशेषगोणीसाधर्म्यात् । साधर्म्यमूलकादभेदारोपादिति यावत् । प्रयुक्तः–गवि प्रयुक्तः । जातिप्रयुक्तः–गोत्वजातिप्रवृत्तिनिमित्तेन प्रयुक्तः । श्लैष्मिकेति । दध्यादीत्यर्थः । व्याधिः–कासश्वासादिरोगः । तद्विपरीतेति । श्लेष्मघ्नशुण्ठीपिप्पल्यादीत्यर्थः ।

❀ शब्दकौस्तुभः ❀

न प्रकाशते, निष्फलं भवतीत्यर्थः । निरुक्ते–'अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा चे'त्युपक्रम्य–'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मे'ति मन्त्रमुदाहृत्य यद्गृहीतमविज्ञातमित्यादि पठितम् । तत्रापि गृहीतं–शब्दतः, अविज्ञातं तु–अर्थतः । प्रकृतिप्रत्ययादिविभागेनेत्यादि शेषं प्राग्वत् ।

१ अयं पाठः क्वचिन्नास्ति मन्ये कैयटादपि पूर्वं भ्रष्टः ।
२ 'व्याकरणस्य' पा० । ३ 'अन्यथात्वसाधुः' पा० ।
४ 'अस्वे' पा० । ५ 'श्लैष्मिको व्याधिर्भवति' पा० ।
६ 'भूयांसो ह्यपशब्दाः' पा० । ७ 'शब्दाः' पा० ।

फलति। **विशेष इति**। अर्थविशेष इत्यर्थः। तदाह-**स एवेति**। **साधर्म्यात्**-साधर्म्यमूलकादभेदारोपात्। भाष्ये-**यथावत्**-अम्बूकृतादिदोषरहितम्। वाचो योगः प्रकृतिप्रत्ययविभागेनार्थविशेषपरत्वं, तद्वेत्तीति **वाग्योगवित्**। **श्रुतत्वादिति**। एकत्र जयाभिदोषयोश्चकारेण समुच्चयप्रतिपादनाच्चेत्यपि बोध्यम्। **दोषदर्शनादिति**। शास्त्रस्याऽधर्महेतुत्वं दोष इत्यर्थः। वादिप्रतिवादिपूर्वपक्षोत्तरपक्षतया[1] व्याख्यानेऽसामञ्जस्यं मत्वाह-**प्रष्टैवेति**।

भाष्ये-**कुत एतदिति**। वाग्योगविदो दोषः कुत इत्यर्थः। ननु साधुज्ञानस्य यथा धर्मजनकता शास्त्रोक्ता न तथाऽसाधुज्ञानस्याऽधर्मजनकता शास्त्रोक्तेत्यत आह-**यथेति**। एवं चाऽपशब्दज्ञानमधर्मसाधनं, धर्महेतुशब्दज्ञानविरोधित्वात्, यद्यद्विरोधि तत्तद्विरोधिफलकं यथा श्लैष्मिकद्रव्यसेवेत्यनुमानं प्रमाणमिति भावः। एवं च शास्त्रस्याऽधर्महेतुतया तत्र प्रवृत्तिर्न स्यादिति नेदं वचो व्याकरणाध्ययनानुष्ठापकं स्यादिति तात्पर्यम्। नन्वस्त्वधर्मोऽपि, तथापि धर्माधिक्याद्याऽध्येयं व्याकरणमत आह-भाष्ये-**अथवेति**। **अङ्गभूयस्त्वादिति**। **अङ्गानां**-धर्मजनकानां **भूयस्त्वादित्यर्थः**। एवं च यज्ञादेः पापजनकत्वेऽप्यधिकधर्मजनकत्वाद्यथा तत्र प्रवृत्तिस्तथा प्रकृतेऽपीति भावः। **अल्पीयांसः शब्दा इति**। एवं च श्वदृतिप्रक्षिप्तक्षीरवदनुपादेयं तद्विज्ञानमिति भावः। नन्वेवं सामर्थ्यादवाग्योगविदेव'दुष्यती'त्यत्र कर्ताऽस्त्वत आह-भाष्ये-**अथ योऽवाग्योगविदिति**।

[ आक्षेपभाष्यम् ]

**विषम उपन्यासः। नात्यन्तायाऽज्ञानं शरणं भवितुमर्हति। यो ह्यजानन्वै ब्राह्मणं हन्यात्सुरां वा पिबेत्सोऽपि मन्ये पतितः स्यात्।**

( प्रदीपः ) **नात्यन्तायेति**। पुरुषाणां विधिनिषेधयोरधिकारात्तत्परिज्ञाने प्रयत्नस्य न्याय्यत्वात्।

( उद्द्योतः ) अत्यन्तमित्यर्थेऽत्यन्तायेत्यव्ययम्। **पुरुषाणामिति**। मनुष्याणामित्यर्थः। तिरश्चामत्यन्ताऽयोग्यत्वादस्त्वज्ञानं शरणं मनुष्याणां तु योग्यत्वात्तैर्निषिद्धानुष्ठानवर्जनार्थमवश्यं शास्त्रं विज्ञेयम्। अतोऽवाग्योगविदो महाननर्थ इति भावः। तत्र **नात्यन्तायेत्यनेन** शास्त्राऽज्ञानं नैव शरणं, दोषद्वयप्रसङ्गात्, किं तु वध्यादेर्ब्राह्मणत्वाद्यज्ञानमेव पापाऽनुत्पत्तौ प्रयोजकमिति ध्वनितम्।

भाष्ये-**यो ह्यजानन्निति**। निषेधशास्त्रमजानन् ब्राह्मणत्वादिज्ञानपूर्वकं तद्वधादि कुर्यात्सोऽपि पतित एवेत्यर्थः।

[ सिद्धान्तिनः **समाधान**भाष्यम् ]

**एवं तर्हि—'सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः'। कः ? ॥ अवाग्योगविदेव। अथ यो वाग्योगविद्विज्ञानं तस्य शरणम् ॥**

( प्रदीपः ) प्रकरणात्सामर्थ्यं बलीय इत्याह-**अवाग्योगविदिति**। वाग्योगवित्तूभयज्ञोऽपि शब्दान्प्रयुङ्क्ते नाऽपशब्दानिति ज्ञानपूर्वकात्प्रयोगादभ्युदयभाग्भवति[2]।

( उद्द्योतः ) **प्रकरणादिति**। संनिधेरित्यर्थः। नन्वेवं वाग्योगविदोऽपशब्दज्ञानादधर्मः स्यादत आह-**वाग्योगेति**। एवं चाऽपशब्दप्रयोग एवाऽधर्महेतुर्न ज्ञानमात्रमिति न दोष इति भावः।

---

❀ राजलक्ष्मीः ❀

( उद्द्योते- ) **वाचः**-शब्दस्य। **दोषः**-वाग्योगविदो दोषः। **एवञ्च**-लोकदृष्टान्तसत्त्वे च। **एवञ्च**-अनुमानप्रमाणस्य सत्त्वे च। **अध्येयमिति**। अपशब्दज्ञानजन्यनान्तरीयकपापनिरासस्तु कूपखानकन्यायेन परिहर्तुं शक्य इत्याशयः। **धर्मजनकानां**-साधुशब्दानाम्। एवश्च-उक्तन्यायाङ्गीकारे च। **पापेति**। हिंसादिपूर्वकत्वेन पापजनकता यागादेः स्फुटैव। **एवञ्च**-भूयःपापजनकत्वे च। **श्वदृतिः**-कुक्कुरचर्मनिर्मिता भस्त्रा। 'मसक' इति लोके प्रसिद्धा। **सद्विज्ञानं**-साधुशब्दविज्ञानम्। व्याकरणशास्त्रमिति यावत्।

( भाष्ये- ) **विषमः**-अनुचितः। **उपन्यासः**-हेतुप्रदर्शनम्। **अजानन्**-निषेधविधिमजानन्। **मन्ये**-निश्चिनोमि।

( उद्द्योते- ) **अव्ययं**-विभक्तिप्रतिरूपकमव्ययम्। **मनुष्याणां**-मनुष्यमात्रस्य। **अनर्थः**-पापमेव, न पुण्यमपि। **तत्र**-भाष्ये। **शास्त्राज्ञानं**-निषेधविध्यज्ञानम्।

( भाष्ये- ) सिद्धान्ती तावदुत्तरयति-**एवमिति**। व्याख्यानेन निर्वाहाभावे। **विज्ञानम्**-लक्षणस्मरणपूर्वकमर्थविशेषे साधुशब्दप्रयोगात्मकम्।

( प्रदीपे- ) **इत्याह**-इत्याशयेन सिद्धान्तवादी अन्यथा व्याचष्टे। **उभयज्ञः**=साध्वसाधुशब्दज्ञः। **शब्दान्**-साधुशब्दान्। 'अभ्युदयभा'गित्यस्य-वाग्योगविदितिशेषः।

(उद्द्योते-) **सन्निधेः**-अन्यतराकाङ्क्षारूपात्स्थानाख्यप्रमाणात्। उभयाकाङ्क्षारूपस्य प्रकरणस्यात्राऽसंभवाद्यथाश्रुतं तु न युक्तम्। **एवमिति**। अपशब्दज्ञानस्य प्रत्यवायजनकत्वाङ्गीकारे। **एवञ्च**-अपशब्दप्रयोगस्यैवाऽधर्मजनकत्वे च।

---

१ 'र्वपक्षोत्तरपरतया' पा०

२ 'पूर्वकप्रयोगात्' पा०

[ यस्त्विति श्लोकमूलजिज्ञासार्थमाक्षेपभाष्यम् ]

**क्व पुनरिदं पठितम् ? ॥**

[ समाधानभाष्यम् ]

**भ्राजा नाम श्लोकाः ॥**

( प्रदीपः ) श्लोकस्याऽपरिज्ञानात्पृच्छति–**क्व पुनरिति** । प्रातिपदिकार्थप्रश्ने चाऽत्रे[1] तात्पर्यम्–किं तदस्ति यत्रेदं पठितमित्यर्थः । अत एव 'श्लोका' इति प्रथमान्तेनोत्तरम् । अन्यथा श्लोकेष्विति वाच्यं[2] स्यात् ।

( उद्द्योतः ) **भ्राजा नाम** कात्यायनप्रणीताः श्लोका इत्याहुः ।

[ आक्षेपभाष्यम् ]

**किञ्च भोः श्लोका अपि प्रमाणम् ? ॥**

( प्रदीपः ) आप्तोक्तत्वाऽपरिज्ञानादाह–**किंच भो इति** ।

[ आक्षेपाशयजिज्ञासाप्रश्नभाष्यम् ]

**किं चाऽतः ? ॥**

( उद्द्योतः ) भाष्ये **किं चात इति** । अतः प्रश्नात्किं विवक्षितमित्यर्थः ।

[ प्रश्नवादिनः स्वाशयप्रकाशनभाष्यम् ]

**यदि श्लोका अपि प्रमाणमयमपि श्लोकः प्रमाणं भवितुमर्हति—**

**'यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ॥ पीतंन गमयेत्स्वर्गं किं तत्क्रतुगतं नयेत्॥'इति॥**

( प्रदीपः ) **यदुदुम्बरेति** । अयं श्लोकः सौत्रामणियागे सुरापानस्य दुष्टत्वमुद्भावयति ॥

( उद्द्योतः ) **उदुम्बरं**–ताम्रम् । **दुष्टत्वमिति** । इदमुपलक्षणम्, अन्यत्राप्यदुष्टत्वस्य ।

[ सिद्धान्तिनः समाधानभाष्यम् ]

**प्रमत्तगीत एष तत्रभवतः । यस्त्वप्रमत्तगीतस्तत्प्रमाणम् ॥ [ यस्तु प्रयुङ्क्ते[4] ] ।**

( प्रदीपः ) **प्रमत्तगीत इति** । प्रमादेन विप्रतिपन्नत्वेन गीत इत्यर्थः । कात्यायनोपनिबद्धभ्राजाख्यश्लोकमध्यपठितस्य त्वस्य श्लोकस्य श्रुतिरनुग्राहिकाऽस्ति—**'एकः शब्दः सुज्ञातः[3] सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवती'ति ॥**

( उद्द्योतः ) ननु कर्तरि क्तान्तप्रमत्तशब्दस्य गीतशब्देन समासोऽनुपपन्नः, **तत्र भवत** इत्यनेन साकाङ्क्षत्वादत आह–**प्रमादेनेति** । भावे क्तान्त इति भावः । **विप्रतिपन्नत्वेन**–वेदविषयविप्रतिपत्त्याश्रयत्वेन । तत्त्वं स्वस्मिन्नारोप्य दैत्यनाशाय पूज्यस्यापि भगवत ईश्वरस्य तथोक्तिरिति स न प्रमाणमिति भावः । भाष्ये–यस्त्वप्रमादेन गीतो यस्य कस्यापि तत्प्रमाणमिति प्रतिनिर्देशलिङ्गम् ।

ननु कथं ज्ञातम्–'अयमप्रमत्तगीतः' इत्यत आह–**श्रुतिरनुग्राहिकेति** ।

---

**❀ राजलक्ष्मीः ❀**

**(प्रदीपे–) अपरिज्ञानात्**–तन्मूलस्याऽपरिज्ञानात् । **अर्थः**–फलितोऽर्थः । **अत एव**–तत्र तात्पर्यादेव । **कात्यायनः**–वार्त्तिककारः ।

**(भाष्ये–) श्लोकाः**–श्रुतिस्मृतिप्रतिपादितार्थविषयकाः श्लोकाः । **प्रमाणं**–धर्माधर्मव्यवस्थायां प्रमाणम् । **अयमपि**–बुद्धेनोपनिबद्धोऽपि ।

**( उद्द्योते– ) अत इति** । 'किंचात' इति निपातसमुदायः किमित्यर्थे वर्त्तते इत्यन्ये । **अन्यत्र**–यागादन्यत्र यथेच्छं पानगोष्ठीभोजनादौ सुरतादौ च ।

**यदुदुम्बरेति** । ताम्रवर्णानां–लोहितवर्णानां, **घटीनां**–कलसीनां **मण्डलं** समूहः–लक्षणया तत्स्थं मद्यं–यदि पीतं सत्स्वर्गं पातारं न गमयति तत्–तर्हि क्रतुगतं स्वल्पं तन्मद्यं पातारं किं स्वर्गं नयेत्–नैव नेतुं शक्नुयादित्यर्थः ।

**( प्रदीपे– ) प्रमादेनेति** । प्रमत्तशब्दार्थः । प्रमादपदार्थमाह–**विप्रतिपन्नत्वेनेति** ।

**( उद्द्योते– ) कर्त्तरीति** । प्रमाद्यतीति प्रमत्त इति विग्रहे निष्पन्नेनेत्यर्थः । **इत्यनेनेति** । कर्त्तृषष्ठ्यन्तेनेत्यर्थः । 'सापेक्षमसमर्थवद्भवती'ति न्यायेनाऽसामर्थ्यात्समासोऽनुपपन्न इत्याशयः । **भावे इति** । भावार्थकक्तप्रत्ययान्तः प्रमत्तशब्द इत्यर्थः । **विप्रतिप्रत्तिः**–विरोधः । **तत्त्वं**–विप्रतिपन्नत्वम् । **तथा**–वेदविरुद्धा । **प्रतिनिर्देशेति** । प्रमाणगतनपुंसकलिङ्गेन भाष्ये 'त'दिति क्लीबनिर्देश इत्यर्थः ।

**अयम्**–'यस्तु प्रयुङ्क्ते'इत्ययम् ।

---

**❀ शब्दकौस्तुभः ❀**

अन्यत्रापि श्रूयते–**'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवती'**ति । एतच्च 'एकः पूर्वपरयो'रिति सूत्रे भाष्यकृद्वक्ष्यति । एतन्मूलकमेव कात्यायनप्रणीतेषु भ्राजाख्येषु श्लोकेषु स्मर्यते–**'यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयंपरत्र वाग्योगविद्दुष्यति चापशब्दै'**रिति॥ **दुष्यति चापशब्दै**रित्यत्र,–अवैयाकरणः कर्त्ता सामर्थ्याद्बोध्यः ।

---

[1] 'प्रश्न एवात्र' पा० । [2] 'वक्तव्यं' पा० ।

[3] 'सम्यग्ज्ञातः ( शास्त्रान्वितः ) सुप्रयुक्तः' पा० ।

[ अविद्वांस इत्येतद्व्याख्यानभाष्यम् ]

**अविद्वांसः—**

**'अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः। कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥' 'अभिवादे स्त्रीवन्मा भूमे'त्यध्येयं व्याकरणम्॥ [ -अविद्वांसः ] ॥**

( प्रदीपः ) **स्त्रीष्विवेति** । प्रत्यभिवादे हि गुरुणा प्लुतः कार्यः । यस्तु प्लुतं कर्तुं न जानाति स स्त्रीवद्वक्तव्योऽयमहमिति, न तु 'अभिवादये देवदत्तोऽह'मित्यादिना संस्कृतवाक्येनेत्यर्थः ॥

( उद्द्योतः ) भाष्ये-**अविद्वांस इति** । अत्र योग्यत्वाद्व्याकरणं कर्म बोध्यम् । **प्रत्यभिवादे**-अभिवादानन्तरप्रयोज्ये वचने **नाम्नो**ऽभिवादकनाम्नष्टेः **प्लुतिं** कर्तुं **ये न** जानन्ति **तेषु कामं**-निःशङ्कं **विप्रोष्य**-प्रवासादेत्य यद्वा **कामं**-विध्यनुसारमन्तरैवेत्यर्थः । 'अयमह'मित्यनुकरणस्यानितिपरत्वेऽपि कृञ्योगाभावाद्गतित्वाभावेन 'वदे'दित्यस्य तिङन्तत्वेन च समासाऽभाव इत्याहुः । अत्र कचित् 'अयमहमिति वदेत् । अनुकरणं चानितिपरमिति गतित्वात्समासः' इति पाठो दृश्यते सोऽपपाठः ।

भाष्ये-**स्त्रीवदिति** । तद्वत्करणेन सूचित[1]शास्त्राऽज्ञानित्वकृतापमानप्रयुक्तदुःखभाजो मा[2] भूमेति भावः ।

[ विभक्तिं कुर्वन्तीत्येतद्व्याख्यानभाष्यम् ]

**विभक्तिं कुर्वन्ति—**

**याज्ञिकाः पठन्ति-'प्रयाजाः सविभक्तिकाः कार्याः' इति । न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम्॥ [ विभक्तिं कुर्वन्ति ] ॥**

(प्रदीपः) **प्रयाजा इति**। प्रयाजमन्त्रा ऊह्यमानाऽग्निशब्दप्रकृतिकविभक्तियुक्ता इत्यर्थः । 'समिधः[4] समिधोग्नेऽग्न आज्यस्य व्यन्तु अग्निरग्नि'रिति ।

( उद्द्योतः ) ननु प्रकृतौ प्रयाजमन्त्राः सविभक्तिका एव पठ्यन्ते तत्किमनेन वचनेनेत्यत आह-**प्रयाजेति** । ऊह्यमाना याऽग्निशब्दप्रकृतिकविभक्तिस्तद्युक्ता इत्यर्थः । नन्वग्निशब्दप्रकृतिकेत्यसङ्गतम् , अपूर्वविभक्तिमात्रविधाने **'न केवलः प्रत्यय'**इति निषेधात्किंचित्प्रातिपदिकप्रकृतिकाः सर्वा विभक्तयः प्रयोक्तव्या इति प्राप्नोतीति चेन्न, 'त्वमग्ने प्रयाजानुयाजानां पुरस्तात्त्वं पश्चा'दिति मन्त्रवर्णेनाग्निशब्दप्रकृतिका एव ता इत्याशयात् । तत्राग्नेर्देवताया एकत्वादेकवचनमेव । विभक्तयश्च प्रथमाद्वितीयातृतीयाषष्ठीसप्तम्य एवेति **श्रौत**संप्रदायः ।

८ राजलक्ष्मीः ८

## ॐ राजलक्ष्मीः ॐ

( भाष्ये-) **अविद्वांसः**-व्याकरणमविद्वांसः । अनधीतव्याकरणा इति यावत् । **कामं**-यथेच्छम् । **स्त्रीष्विव**-पूज्यजनन्यादीनां पुरत इव । **तेषु**-तेषामपि पुरतो गत्वा । **अयमहम्**-'अयमहं चैत्रः समायातो भवतां दर्शनाये'त्येवमेव । 'वदेत्-आत्मानं निवेदयेत् । स्वपरिचयं वदेन्न त्वभिवादनं कुर्यादित्यर्थः ।

( प्रदीपे- ) **गुरुणा**-पित्रादिना पूज्येन । **प्लुतः**-अभिवादकनाम्नष्टेः प्लुतः । **स्त्रीवदिति**। 'राम राम' 'पालागन' इत्यादि भाषाशब्दैरेव सत्कारन्तेषाङ्कुर्यादित्यर्थः ।

(उद्द्योते-) **वचने**-आशीर्वादवाक्यघटकस्य । **आहुः**-भाष्यतत्त्वविदो भट्टादयः प्राहुः । **अत्र**-कैयटे । **क्वचित्**-केषुचिदादर्शेषु । 'संस्कृतवाक्येनेत्यर्थ'इत्यनन्तरमिति शेषः । **अपपाठइति**। पूर्वोक्तरीत्या समासासम्भवादपपाठ इत्यर्थः । **शास्त्राज्ञानित्वेति** । शास्त्राज्ञानप्रयुक्तापमानेत्यर्थः ।

( भाष्ये- ) **विभक्तिं कुर्वन्ति**-विभक्तिं कुर्युः । लेटः प्रयोगोऽयं-**कुर्वन्तीति** । **न च**-नहि । चो हेतौ । यतः व्याकरणाध्ययनं विना प्रयाजाः-प्रयाजमन्त्राः सविभक्तिकाः कर्तुं न शक्या इत्यर्थः । 'अतो व्याकरणमध्येय'मिति शेषः ।

( उद्द्योते- ) **पठ्यन्त इति** । एवञ्च 'प्रकृतिवद्विकृति'रित्यतिदेशवचनेन सविभक्तिकानामेवातिदेशस्य सिद्धेः किमनेन 'सविभक्तिकाः कार्या' इति विधिनेत्यर्थः । **अपूर्वेत्यस्य**-'यत' इत्यादिः । **सर्वाः**=सर्वाश्च प्रथमादयः । **तत्र**-तासां सर्वासां विभक्तीनां मध्ये। **एवेति** । मतभेदेनेतिशेषः ।

## ॐ शब्दकौस्तुभः ॐ

तथा—**'अविद्वांसः प्रत्यभिवादे नाम्नो येन प्लुतिं विदुः । कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत्॥'** 'अयमह'मित्यस्य अनुकरणं चानितिपरमिति गतिसंज्ञा । ततो गतिसमासेऽपि 'अस्यवामीय'मित्यादाविवानुकरणत्वादेव विभक्तेर्लुङ् ।

याज्ञिकाः पठन्ति—**'प्रयाजाः सविभक्तिकाः कार्या'** इति । यद्यपि प्रकृतौ प्रयाजमन्त्राः सविभक्तिका एव पठ्यन्ते तथापि यदि आधानादनन्तरं यजमान उदरव्यथावान् स्याद्यदि वा संवत्सरमध्ये तस्य महती विपत्स्यात्तदा नैमित्तिकीं पुनराधेयेष्टिं विधाय तत्रेदमाम्नातं **'प्रयाजाः सविभक्तिका'** इति । तत्र केवलं विभक्तेः प्रयोगानर्हत्वात्प्रकृतिराक्षिप्यते, सा चाग्निशब्दरूपा न तु या का चित् । निरुक्ते देवताकाण्डे,-अथ **'किंदेवताः प्रयाजानुयाजाः'** इति प्रश्न-

१ 'सूचिते'ति कचिन्नास्ति ।
२ 'शास्त्राज्ञानकृते'ति पा० । ३ 'माभूमेतीति भाव'पा०

४ 'समिधोऽग्ने आज्यस्य व्यन्तु अग्नेऽग्ने' इति, पा० । अन्ते-'अग्निरग्ने' इति च पा० ।

[ **यो वा इमा**मिति व्याख्यानभाष्यम् ]

**यो वा इमाम्,–'यो वा इमां पदशः स्वरशोऽक्षरशश्च[1] वाचं विदधाति स आर्त्विजीनो भवति'। 'आर्त्विजीनाः स्यामे'-त्यध्येयं व्याकरणम् ॥ [ यो वा इमाम् ] ॥**

( प्रदीपः ) **पदश इति** । पदं पदमिति 'सङ्ख्यैकवचनाच्च[2] वीप्साया'मिति शस्। **स्वरश इति। स्वर** उदात्तादिः । **अक्षरश इति। अक्षरं**—व्यञ्जनसहितोऽच् । **आर्त्विजीन इति।** ऋत्विजमर्हत्यार्त्विजीनो यजमानः । ऋत्विक्कर्मार्हतीति याजकोऽप्यार्त्विजीनः । 'यज्ञर्त्विग्भ्यां घखञा'विति सूत्रेण 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसङ्ख्यान'मिति वार्त्तिकेन च खञ्। 'विद्वान्यजेत' 'विद्वान्याजये'दिति द्वयोरपि विदुषोरधिकारात्।

( उद्द्योतः ) **व्यञ्जनसहित** इति। यथा 'ये यजामहे' इति पञ्चाक्षरमिति । 'वर्णं वाहुः[3] पूर्वसूत्रे' इति भाष्याद्वर्णमात्रमित्यन्ये । सकृत्प्रयुक्तार्त्विजीनशब्दस्योभयपरत्वे युक्तिमाह–**विद्वानिति।** वेदार्थज्ञ इत्यर्थः ।

❀ राजलक्ष्मीः ❀

( **भाष्ये-** ) **यः** पुमान्, **वै** इति निश्चयेन, **इमाम्**–प्रत्यक्षमनुभूयमानाम्, **वाचं**–वेदरूपां, **पदशः**–पदं पदं, **स्वरशः**–प्रतिस्वरम्, **अक्षरशः**–प्रत्यक्षरञ्च, **विदधाति** संस्करोति स **आर्त्विजीनः**–यजमानः ऋत्विक् च भवति । यजमानर्त्विक्पदयोरन्यो भवतीत्यर्थः । उपसंहरति–**आर्त्विजीना इति**। यजमाना ऋत्विजश्चेत्यर्थः । धर्मार्थकामादिसिद्धये व्याकरणमध्येयमिति यावत् ।

( **प्रदीपे-** ) **उदात्तादिरिति।** अचः स्वरा इति परिभाषितः स्वरस्तु नात्र ग्राह्यः, अक्षरशब्दस्य पृथगुक्तेः। अक्षरब्रह्मणो व्यावृत्तये आह–**व्यञ्जनेति। वार्त्तिकेन च**–वार्त्तिकेनैव। **विद्वान्**–विद्वानेव । **इति**। इति श्रुतेः। **द्वयोरपि**–यजमानस्य याजकस्य च।

( **उद्द्योते-** ) व्यञ्जनसहितस्याचोऽक्षरपदेन ग्रहणे भाष्यं मानमुपन्यस्यति–**यथेति।** आदिपदेन 'यजेतेत्यक्षरम्' इत्यादिभाष्यपरिग्रहः । **वर्णमात्रम्**–अच्सहितं, तद्रहितं, केवलो वाऽच्।

❀ शब्दकौस्तुभः ❀

वतार्य मन्त्रवर्णादीनुदाहृत्य 'आग्नेया इति तु स्थिति'रित्युपसंहारात्। तस्मादादितश्चतुर्षु प्रयाजेषु चतस्रो विभक्तयोऽग्निशब्दप्रकृतिकाः पठ्यन्ते इत्यादिश्रौतग्रन्थेषु द्रष्टव्यम्॥

१ 'अक्षरशो वाचं' पा०।

[ चत्वारीत्येतद्व्याख्यानभाष्यम् ]

**चत्वारि—**

**'चत्वारि शृङ्गा त्रयो अस्य पादा**
**द्वे शीर्षे सप्त हस्तासो अस्य ।**
**त्रिधा बद्धो वृषभो रोरवीति**
**महो देवो मर्त्याँ आविवेश' ॥**

**'चत्वारि शृङ्गाणि'-चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । 'त्रयो अस्य पादाः'–त्रयः काला भूतभविष्यद्वर्त्तमानाः। 'द्वे शीर्षे'–द्वौ शब्दात्मानौ नित्यः कार्यश्च । 'सप्तहस्तासो अस्य'-सप्त विभक्तयः।'त्रिधा बद्धः'–त्रिषु स्थाने बद्ध उरसि कण्ठे शिरसीति । 'वृषभो'–वर्षणात्। 'रोरवीति'–शब्दं करोति ॥**

**कुत एतत् ? ॥ रौतिः शब्दकर्मा ॥**

**'महो देवो मर्त्याँ आविवेशे'ति,–महान्देवः शब्दः॥ मर्त्या–मरणधर्माणो मनुष्या-**

( **भाष्ये-** ) धर्मार्थकामसाधनतां व्याकरणाध्ययनस्योक्त्वा मोक्षसाधनतामप्याह–**चत्वारीति। शृङ्गा**–शृङ्गाणि। **त्रयो अस्ये**त्यत्र 'प्रकृत्यान्तः पादमव्यपरे' इति प्रकृतिभावादेङः पदान्तादिति पूर्वरूपं स्वरसन्धिर्न । **शीर्षे इति।** 'उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रिया'मिति कोशाददकारान्तः शीर्षशब्दः क्लीबेऽस्ति तस्येदं रूपम्। 'हस्तास' इति च देवास इतिवत् आसज्जेरसुगित्यसुकि छान्दसं रूपं बोध्यम्। **मह इति।** मह्यते पूज्यते इति महः। कर्मणि 'घञर्थे कविधान'मिति कः। महच्छब्दपर्यायोऽयं महशब्दोऽस्मादेव प्रामाण्यादित्यवधेयम्। **शृङ्गाणि**–शृङ्गस्थानीयानि । **पदजातानि**–पदानि । **नाम**–सुबन्तम्। **आख्यातं**–तिङन्तम्। **पादाः**–पादस्थानीयाः। **शब्दात्मानौ**–शब्दभेदौ। **त्रिधे**त्यस्य त्रिभिः प्रकारैर्बद्ध इत्यर्थः। फलितार्थमाह–**त्रिष्विति। बद्धः**–प्रतिबद्धः। अवस्थितः। तद्व्यञ्जकध्वनेरभावादनभिव्यक्त इति वा। **वृषभः**–ज्ञानादिमोक्षादिफलप्रदः। **महान्**–परं। **देवः**–ब्रह्म। **मर्त्यान्**–विदुषः। **आविवेश**–शब्दव्याजेन समनुप्रविष्ट इत्यर्थः। स्वाभेदमाविश्चकारेतियावत्। **कुत इति।** कस्मा-

तथान्यत्रापि–**'यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीन' इति।**पदंपदमिति'संख्यैकवचनाच्च वीप्साया'मिति शस्। **स्वर** उदात्तादिः। **अक्षरं** व्यञ्जनसहितोऽच्। ऋत्विजमर्हतीत्यार्त्विजीनो यजमानः।

२ 'वचनातिदेशात्' पा०। ३ 'चाहुः' पा०।

स्तानाविवेश। 'महता देवेन नः साम्यं यथा स्या'दित्यध्येयं व्याकरणम् ॥

(प्रदीपः) **चत्वारीति,**-शब्दस्य वृषभत्वेन निरूपणम्। **त्रयः काला इति।** लडादिविषयाः। **नित्यः कार्यश्चेति।** व्यङ्ग्यव्यञ्जकभेदेन।

**सप्त विभक्तय इति।** सुप इत्यर्थः। केचित्तु तिङामपरिग्रहप्रसङ्गात्सह शेषेण सप्त कारकाणि विभक्तिशब्दाभिधेयानीति व्याचक्षते।

**वर्षणादिति।** कामानां ज्ञानपूर्वकानुष्ठानफलत्वात्। **महतेति।** परेण ब्रह्मणेत्यर्थः ॥

(उद्द्योतः) **चत्वारीति,**-ऋङ्मन्त्रः। **शब्दस्येति।** शब्दशास्त्रप्रतिपाद्यस्येत्यर्थः। वृषभाकारः शब्दशास्त्रप्रतिपाद्यः शब्दो रोरवीति 'महान् देवोऽन्तर्यामिरूपः शब्दो मर्त्यानाविवेश', स्वाभेदमाविष्कृतवानिति मन्त्रतात्पर्यम्। महतो देवस्य शब्दब्रह्मणो व्याकरणज्ञेप्यतया व्याकरणज्ञस्तदाविष्ट इव भवतीति यावत्। भाष्ये-**पदजातानि**-परापश्यन्तीमध्यमावैखरीरूपाणि। अत एवाग्रे 'निपाताश्चे'ति चकारः सङ्गच्छते। **नामाख्यातेति।** नामशब्देन सुबन्तं, नमत्याख्यातार्थं प्रति विशेषणीभवतीति व्युत्पत्तेः। **आख्यातं** तिङन्तम्। उपसर्गनिपातयोः पृथगुपादानं गोबलीवर्दन्यायेन। **व्यङ्ग्यः**-आन्तरः **व्यञ्जको**-वैखरीरूपः। तिङ्विभक्तीनां षट्त्वादाह-**सुप इति। सह शेषेणेति।** शेषः षष्ठ्यर्थः। तत्सहितकारकाभिधायकत्वेन सुप्तिङोरुभयोरपि सङ्ग्रह इति भावः। भाष्ये-**उरसीत्यादि। 'हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम्। उरस्यं तं विजानीयात्।' 'स्युर्मूर्धन्या ऋटुरषाः'** इत्युक्तेर्मूर्धैव शिरः॥ **कण्ठ** इत्यनेन मुखान्तर्गतकण्ठादिस्थानमुपलक्ष्यते॥ ननु **वर्षति**-मूत्रेण भूमिं सिञ्चतीति 'वृषभ'इत्युच्यते तत्कथं शब्द एवमित्यत आह-**कामानामिति।** मेघ उदकमिवोक्तचतुःशृङ्गत्वादिगुणवैशिष्ट्येन ज्ञानपूर्वकं प्रयोगेण कामानां दानादित्यर्थः। द्विशृङ्गद्विपाद्विकरकण्ठमात्रबद्धलौकिकवृषभादस्य व्यतिरेकः। किं रोरवीति, तत्राह-भाष्ये **महान्देव** इत्यादि। **महान्**-परब्रह्मस्वरूपो **देवो**ऽन्तर्यामिरूपः शब्दो मर्त्येष्वाविष्ट इत्यर्थः। तदावेशफलमाह-**महता देवेनेति। साम्यं**-सायुज्यम्। तदुक्तं **हरिणा**-

**'अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥'**

"आह च-**'चत्वारि शृङ्गा त्रयोअस्य पादा'** इत्यादि ऋङ्मन्त्रः। इह द्वौ शब्दात्मानौ कार्यो नित्यश्च। तत्रान्त्यः

## ❀ राजलक्ष्मीः ❀

द्रोरवीतीत्यस्य शब्दं करोतीत्यर्थ इत्यर्थः। उत्तरयति-**रौतिरिति।** रुधातुरित्यर्थः।

(प्रदीपे-) **निरूपणं**-प्रतिपादनम्। कालस्याऽमूर्त्ततयाऽवयवत्वासम्भवादाह-**लडादीति।** लडादिदशलकारद्योत्या इत्यर्थः। **व्यङ्ग्यः**-स्फोटः। **व्यञ्जकः**-ककारादिर्वर्णः। **सुप इति।** तिङान्तु कालद्योतकलडादिपदेन ग्रहणं शक्यमित्याशयः। **शेषेण**-स्वस्वामिभावादिसम्बन्धेन। एवञ्चात्र पक्षे तिङामपि कर्माद्यर्थतया तेषां सङ्ग्रहः सिद्ध इत्याशयः। त्रयः काला इत्यनेनैव तिङां सङ्ग्रहादिदमयुक्तिमित्यत्राऽरुचिः। **कामानां**-मोक्षादीनाम्। **अनुष्ठानेति।** कर्मानुष्ठानेत्यर्थः।

(उद्द्योते-) **शब्दशास्त्रेति।** व्याकरणशास्त्रप्रतिपाद्यस्य स्फोटरूपस्य शब्दब्रह्मण इत्यर्थः। **शब्दः**-शब्दब्रह्मरूपः स्फोटः। **रोरवीति**-शब्दं करोति। गर्जति। शब्दायमानः स किं कथयतीत्यत आह-**महानिति। मर्त्यान्**-मनुष्येषु। **आविवेश**-तेषु स्वाभेदं प्रकटीचकार। **अतएव**-पदजातपदेन परापश्यन्त्यादीनां नामाख्यातादीनाञ्च ग्रहणस्य भाष्यकृदभिप्रेतत्वादेव। **चकारः**-समुच्चयार्थकश्चकारः। अन्यथा तत्र चकारोपादानं व्यर्थमेव स्यादित्याशयः। **व्युत्पत्तेरिति।** आख्यातार्थं प्रति विशेषणत्वञ्च सुबन्तस्यैव सम्भवतीति नामपदेन तद्ग्रहणमित्याशयः। **आख्यातम्**-आख्यातशब्दप्रतिपाद्यम्। 'आख्यातमाख्यातेने'त्यादिलिङ्गादिति बोध्यम्। **आन्तरः**-मध्यमावस्थः। **वैखरीरूपः**-श्रोत्रेन्द्रियग्राह्यः। **षट्त्वात्**-तिप्तसादित्रिकाणां षट्त्वात्। कालद्योतकलडादिना तेषां सङ्ग्रहस्य सम्भवाच्चेत्यपि बोध्यम्। उरसः कण्ठादिवाह्यतया स्थानपदव्यवहार्यतायास्तत्राऽप्रसिद्धेराह-**हकारमिति। पञ्चमैः**-णकारनकारादिभिः। **अन्तस्थाभिः**-यवरलैः। **उरस्यम्**-उरःस्थानजन्यम्। **मूर्धैवेति।** ननु नासिकादीनां मूर्धपदेनग्रहणमित्याशयः। **उच्यते**-शब्दव्युत्पत्तिवेदिभिरभिधीयते।

**एवम्**-वृषभशब्दाभिधेयः। **मेघ इति।** मेघो यथाजलं वर्षति तथैव शब्दरूपो वृषभः सकलान्कामानभिवर्षतिइतिशेषः। अत्र हेतुमुपन्यस्यति-**उक्तेति। प्रयोगेण** शब्दप्रयोगेण। **कामानाम्**-स्वर्गापवर्गादीनाम्। एवञ्च वृषभसादृश्यमस्योपपन्नमित्याशयः। **फलं**-फलप्रदर्शनपुरस्परं प्रकृतोपयोगम्। **सायुज्यम्**-अभेदः। **आहेत्यस्य** ऋङ्मन्त्र इत्यनेन सम्बन्धः। अमुमर्थमृङ्मन्त्रोऽप्याहेत्यर्थः।

## ❀ शब्दकौस्तुभः ❀

ऋत्विक्कर्मार्हतीत्यार्त्विजीनो याजकः। 'यज्ञर्त्विग्भ्यां घखञा' वितिसूत्रेण 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसङ्ख्यान'मितिवार्त्तिकेन च खञ्। यजने याजने च विदुष एवाधिकार इति भावः।

---

१ 'व्याकरणे'ति क्वचिन्न।

२ 'उदकमिव चतुःशृङ्ग' पा०। ३ 'ज्ञानपूर्वकप्रयोगे' पा०।

सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभस्तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषो विच्छिद्याहंकारग्रन्थीनत्यन्तं संसृज्यते"इति तदर्थं तद्व्याख्यातारः ॥

**अपर आह—**

**'चत्वारि वाक्परिमिता पदानि**
**तानि विदुर्ब्राह्मणा ये मनीषिणः ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति**
**तुरीयं वाचो मनुष्या वदन्ति ॥'**

**'चत्वारि वाक्परिमिता पदानि।' चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । 'तानि विदुर्ब्राह्मणा ये मनीषिणः ।'–मनस ईषिणो मनीषिणः । 'गुहा त्रीणि निहिता नेङ्गयन्ति ।'–गुहायां त्रीणि निहितानि नेङ्गयन्ति,–न चेष्टन्ते, न निमिषन्तीत्यर्थः । 'तुरीयं वाचो मनुष्या वदन्ति ।'–तुरीयं वा[2] एतद्वाचो यन्मनुष्येषु वर्त्तते चतुर्थमित्यर्थः ।**
**[–चत्वारि ] ।**

( प्रदीपः ) **चत्वारी**त्यनेनैकदेशेन सैंदशेन[3] वाक्यान्तरमपि सूच्यत इत्याह–**अपर आहेति ।** परिमितानीति प्राप्ते 'शेश्छन्दसि बहुल'मिति शेर्लोपे परिमितेति भवति । **परिमितानि** परिच्छिन्नान्येतावन्त्येवेत्यर्थः । मनीषिशब्दः पृषोदरादित्वात्साधुः । कथं मनीषिण एव विदन्तीत्याह–**गुहेति** । अज्ञानमेव गुहा तस्यामित्यर्थः । 'सुपां सुलु'गिति सप्तम्या लुक् । व्याकरणप्रदीपेन तु तानि प्रकाशन्ते । तत्र चतुर्णां पदजातानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरणा वदन्ति । **नेङ्गयन्ती**त्यस्यैव व्याख्यानं–न चेष्टन्ते, न निमिषन्तीति ।

( उद्द्योतः ) **एतावन्त्येवेति । वाक्परिमितानीति** षष्ठीतत्पुरुषः । **पदजातानि ।** परापश्यन्तीमध्यमावैखर्यः, नामादीनि च । नामादीनां मध्ये च एकैकं चतुष्पादम् । भाष्ये-**मनस ईषिणः ।** चित्तशुद्धिक्रमेण वशीकर्त्तारो विषयान्तरेभ्यो व्यावृत्त्या हिंसका वा । ते च वैयाकरणाः । अन्येषां तदज्ञाने हेतुमाह–**गुहेति ।** एकैकस्य नामादिरूपस्य चतुर्थं भागम् । एकैकस्य चतुरंशत्वात् ।

**⚜ राजलक्ष्मीः ⚜**

**इह**–ऋङ्मन्त्रे । 'शब्दात्मानौ' इत्यस्य प्रतिपाद्याविति शेषः । **कार्यः**–व्यञ्जको वैखरीरूपः ककारादिवर्णः । **नित्यः**–व्यङ्ग्यः आन्तरो मध्यमावस्थः स्फोटरूपः । **तस्मिन्**–शब्दब्रह्मणि शब्दवृषभे । 'संसृज्यते' इत्यनेनान्वयोऽस्य बोध्यः । **तदर्थं**–हरिकारिकार्थम् । **तद्व्याख्यातारः**–हरिकारिकाव्याख्यातारो हेलाराजादयः ।

**(भाष्ये–) अपरइति । 'इमानिचभूयः'** इत्यादिपूर्वोक्तवार्त्तिकस्थ 'चत्वारी'त्येतत्प्रतीकव्याख्यानमन्योऽन्यथाकरोतीत्यर्थं इति**गौडाः ।** अपरोक्तां व्याख्यां भाष्यकार आहेत्यर्थं इति तु गतानुगतिकाः । स्वोक्तप्रयोजनस्यान्येन कृतं व्याख्यानान्तरं भगवता कथमुपनिबद्धमिति तु ते एव प्रष्टव्याः । **इषिण इति ।** औणादिके इनि प्रत्यये रूपम् । मनसोजातिवाचकात्सुप्यजाताविति णिनेरप्राप्तेः । **न निमिषन्ति** न प्रकाशयन्ते । **यमिति ।** वाचः–परापश्यन्तीमध्यमावैखरीरूपाया नामाख्यातोपसर्गनिपातरूपायाश्च प्रत्येकं तुरीयं–चतुर्थभागं **मनुष्याः**–अवैयाकरणा लोका **वदन्ति**–भाषन्ते इत्यर्थः । मनीषिण एव संपूर्णां पादचतुष्टयवतीं वाचं भाषन्ते, अवैयाकरणास्तु केवलं वैखरीरूपं तुरीयं पादमात्रं भाषन्ते इति यावत् । **'वै**–इति निश्चये, एतद्वाचः तुरीयं यन्मनुष्येषु वर्त्तते' इत्यन्वयः ।

**( प्रदीपे– ) एकदेशेन**–मन्त्रवाक्यैकदेशेन । 'पूर्वोक्तेने'ति शेषः । **परिच्छिन्नानि**–परिगणितानि । **मनीषीति ।** मनीषाशब्दः पृषोदरादित्वात्साधुस्ततः इनिरित्यर्थः । **इत्याह**–इत्यतस्तत्र हेतुमाह । **अज्ञानमेव**–व्याकरणाद्यज्ञानमपि । अप्यर्थकादेवशब्दाद्धृदयादिदेशोऽत्र ग्राह्यः ।

**तानि**–त्रीणि परापश्यन्त्यादिरूपाणि । **तत्र**–तेषां मध्ये । **चतुर्थभागं**–वैखरीरूपम् । **मनुष्या** इत्यस्य विवरणम्–**अवैयाकरणा इति । न निमिषन्ति**–न जानन्ति ।

**(उद्द्योते–) षष्ठीति ।** वाचः परिमितानीति विग्रहः । एतेन वागिति सुपांसुलुगिति लुप्तषष्ठ्यन्तमिति केषांचिद्व्याख्यानं नोचितमिति ध्वनितम् ।

**⚜ शब्दकौस्तुभः ⚜**

ऋग्वेदेपि बहवो मन्त्रवर्णाः–**चत्वारि शृङ्गा, चत्वारि वाक्, उतत्वः पश्यन्, सक्तुमिवे**त्यादयः ।

**'तितउ परिपवनं भवती'**ति भाष्यम् । 'चालनी तितउः पुमा'निति तु अमरस्य प्रमाद **इत्येके ।** वस्तुतस्तूक्तभाष्यानुरोधादमरग्रन्थे पुंस्त्वाऽयोगमात्रं व्यवच्छेद्यं न त्वन्ययोगोऽपि । तथा च पुंनपुंसकवर्गे–'स्याद्वास्तु हिङ्गु तितउ' इति त्रिकाण्डशेषः । अत एव तितउमाचष्टे तितापयतीत्यभियुक्तग्रन्था अपि सङ्गच्छन्तइति दिक् ॥

याज्ञिकाः पठन्ति–**'आहिताग्निरपशब्दं प्रयुज्य प्राय-**

१ 'व्याख्यातारः' पा० । २ 'तुरीयं ह वै' इति पाठे । हवै–प्रसिद्धौ ।

३ इदंपदं क्वचिन्न ।

परादीनां वा त्रयोंऽशा मध्यमान्ताः । **गुहा** अज्ञानं, हृदयादिरूपा च । वैयाकरणस्तु शास्त्रबलेन तद्बललब्धयोगेन च गुहान्धकारं विदार्य सर्वं जानातीति भावः । **न निमिषन्तीति**–ज्ञानसामान्यविषयत्वाभाव उच्यते । भाष्ये–**यन्मनुष्येषु वर्तत इति ।** ज्ञानविषयतया तद्वाचश्चतुर्थमित्यन्वयः । 'तस्मात्सकलपदज्ञानाय मनीषित्वाय[1] चाऽध्येयं व्याकरण'मिति शेषः । हरिरप्याह—

**'वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।**
**अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्' ॥ इति।**

'तत्र श्रोत्रविषया **वैखरी । मध्यमा** हृदयदेशस्था पदप्रत्यक्षानुपपत्त्या व्यवहारकारणम् । **पश्यन्ती** तु लोकव्यवहारातीता । योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति । **परायां** तु नेति **'त्रय्या'** इत्युक्तम् ।

**'स्वरूपज्योतिरेवान्तः परा वागनपायिनी ।**
**तस्यां दृष्टस्वरूपायामधिकारो निवर्त्तते ॥'**

–इत्युक्तेः । **अनेकतीर्थभेदायाः**–नामाख्यातादिवीणावेणुमृदङ्गशब्दादिरूपानेकभेदायाः । आह खल्वपि–'चत्वारि वाक्परिमिता पदानी'ति ऋङ्मन्त्रः–'इति **तद्व्याख्यातारः ॥**

[ उतत्व इत्येतद्व्याख्यानभाष्यम् ]

**उतत्वः—'उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।**
**उतो त्वस्मै तन्वं विसस्रे**
**जायेव पत्य उशती सुवासाः ॥'**

**'उत त्वः' । अपि खल्वेकः पश्यन्नपि न पश्यति वाचम्[2] । अपि खल्वेकः शृण्वन्नपि न शृणोत्येनामिति ।–अविद्वांसमाहार्धम् ॥**

**'उतो त्वस्मै तन्वं विसस्रे' । तनुं विवृणुते । 'जायेव पत्य उशती सुवासाः' । तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते, एवं वाग्वाग्विदे स्वात्मानं[3] विवृणुते । वाङ्नो विवृणुयादात्मानमित्यध्येयं व्याकरणम् ।– उत त्वः ॥**

( प्रदीपः ) **उतत्व इति ।** त्वशब्दोऽन्यवाची । उतशब्दोऽपिशब्दस्यार्थे । स च भिन्नक्रमः । प्रत्यक्षेण शब्दस्वरूपमुपलभमानोऽप्यर्थाऽपरिज्ञानान्न पश्यतीत्यर्थः । **उतो इति ।** 'उत-उ' इति निपातसमाहारः । **अविद्वांसमाहार्धमिति ।** अविद्वल्लक्षणमर्थमर्धर्चं आहेत्यर्थः ।

॥ राजलक्ष्मीः ॥

**एकैकं**–प्रत्येकं नामादिकम् । **चतुष्पादं**–परापश्यन्त्यादिभिश्चतुष्पादम् । 'ईषिण' इत्यस्यार्थमाह–**चित्तेति ।** ईश-ऐश्वर्ये इत्यस्य पृषोदरादित्वान्मूर्धन्यादेशे रूपमितिपक्षे–**वशीकर्त्तार इति ।** हिंसार्थकस्य ईषधातो रूपमितिपक्षे त्वाह **हिंसका इति । हृदयादीति ।** आदिना नाभ्यादेर्ग्रहणम् । नामादिपक्षे आह–**शास्त्रेति ।** परापश्यन्त्यादिपक्षे आह–**तद्बलेति ।** शास्त्रबलेत्यर्थः । **गुहेति ।** अज्ञानान्धकारो हृदयान्धकारश्चात्र गुहाऽन्धकारपदेन ग्राह्यः । **सर्वं**-पादचतुष्टयसहितम् । नामादिपक्षे–**सकलेति ।** परापश्यन्त्यादिपक्षे–**मनीषित्वाय चेति । शेषइति ।** भाष्ये इत्यर्थं इत्यनन्तरं–'तस्मा'दित्यादिः शेषो बोध्य इत्यर्थः । **वैखर्याइति । अनेकतीर्थभेदायाः**–नैकभेदायाः वैखर्या मध्यमायाः पश्यन्त्याश्च **अद्भुतं**–महाविभूतिमत्, **परं**–श्रेष्ठम्, **एतत्**–व्याकरणात्मकम् **पदं स्थान**मस्तीत्यर्थो बोध्यः । **श्रोत्रविषया**–श्रोत्रेन्द्रियग्रहणयोग्या । तत्रापि–पश्यन्त्यामपि । **अनपायिनी**–नित्या । **तस्यां**–परस्यां वाचि । **दृष्टस्वरूपायां**–ज्ञाततत्त्वायां सत्याम् । **अधिकारः**–लौकिकोऽधिकारः । **अनेकतीर्थेति ।** तीर्थपदेनेह कारणमित्याशयेनाह–**नामेति ।** यद्वा–तीर्थपदेन शास्त्रं ग्राह्यम् । तेन अनेकशास्त्रभेदभिन्नाया इत्यर्थः । **तद्व्याख्येति ।** हरिकारिकाव्याख्यातार इत्यर्थः ।

( **भाष्ये–** ) सरस्वतीप्रत्यक्षदर्शनसिद्धिहेतुतां व्याकरणस्य दर्शयति–**उतत्व** इत्यादिना । **उतेत्यस्य** विवरणम्–**अपीति ।** खल्विति निश्चये । त्व इत्यस्यार्थः–**एकइति ।** अवैयाकरण इत्यर्थः । **न पश्यति**–अर्थापरिज्ञानान्न तत्त्वतो जानाति । **शृण्वन्नपि**–आपाततः स्वरूपेण शृण्वन्नपि । **न शृणोति** तत्त्वतो न शृणोति । तदर्थाऽपरिज्ञानेन फलाभावान्निष्फलं **तच्छ्रवण**मित्याशयः । **अर्धम्**–अस्या ऋचोऽर्धम् । **उतो इति ।** अत्र–'उत–उ' इतिच्छेदः । 'उ'इति निश्चये । उतशब्दः पूर्ववदेवाऽप्यर्थे । **त्वस्मै**–वैयाकरणाय-कस्मैचित् । **विवृणुते**–प्रकाशयति । **तनुं**–स्वात्मानम् । 'उशती'त्यस्यार्थो भाष्ये–**कामयमानेति ।** वश कान्तावित्यस्य शतरि रूपम् ।

( **प्रदीपे–** ). **स च** अपिशब्दार्थक उतशब्दः । **भिन्नेति ।** पश्यन्नित्यस्योत्तरं द्रष्टव्य इत्यर्थः । पश्यन्नित्यस्यार्थमाह–**प्रत्यक्षेणेति ।** श्रोत्रेन्द्रियेणेत्यर्थः ।

॥ शब्दकौस्तुभः ॥

**श्चित्तीयां सारस्वतीमिष्टिं निर्वपे'**दिति। तथा–**'दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद्घोषवदाद्यन्तरन्तस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं तद्धि**

1 'मनीषित्वाय वा' पा० ।

2 इदं क्वचिन्नास्ति । 3 'स्वमात्मानं' पा० ।

**(उद्द्योतः) उत त्व इति। उतशब्दोऽप्यर्थे ।** बहूनामपि समानपृष्ठोदरपाणिपादानामध्ययनमधीयानानामेकः कश्चित्पश्यन्नपि स्वभ्यस्ताध्ययनोऽपि तीक्ष्णबुद्धिरपि सन्न पश्यति, अर्थानभिज्ञत्वात्। अर्थपरिज्ञानफला हि वागित्यभिप्रायः। एवमेकः शृण्वन्नपि न शृणोत्येनां वाचम्। य एव अर्थं सम्यगवबुध्यते तेनैव सा सम्यक् श्रुता भवति। एवमर्थेनाऽविद्वांसं निन्दित्वाऽर्थान्तरेण विद्वांसं स्तौति–**उतो त्वस्मै ।** अप्येकस्मै कस्मैचिद्वैयाकरणाय तन्वं शरीरं **विसस्रे** विवृणोति प्रकाशयति। सम्यक् ज्ञानं हि प्रकाशनमर्थस्य। अर्थो हि वाचः शरीरम्। अथोपमायुक्तयोत्तमया[1] [2]वाचां प्रसादेन तमेव स्तौति–यथा जाया विवृतसर्वाङ्गावयवा भूत्वोशती कामयमाना भर्त्रे प्रेम्णा दर्शयत्यात्मानम्। कस्मिन् काले? यदा सुवासा निर्णिक्तवासा नीरजस्का ऋतुकालेषु। तदा अतितमां स्त्री पुरुषं प्रार्थयते। यथा तत्पुरुषस्तां यथावत्पश्यति शृणोति च तद्वचनार्थं नान्यदा घनपटप्रावृतशरीराम्, एवं स एवैनां वाचं पदशः प्रकृतिप्रत्ययविभागेन विगृह्यार्थमस्याः पश्यति शृणोति चेत्यर्थः। अयमर्थो निरुक्तभाष्ययोः स्पष्टः।

भाष्ये–**वाग्विदे**–वैयाकरणाय।

[ **सक्तुमिवे**त्येतव्याख्याभाष्यम् ]

**सक्तुमिव–**

**'सक्तुमिव तितउना पुनन्तो**
**यत्र धीरा मनसा वाचमक्रत ।**
**अत्रा सखायः सख्यानि जानते**
**भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥'**

**'सक्तु'–सचतेर्दुर्धावो भवति, कसतेर्वा विपरीताद्विकसितो भवति। 'तितउ'–परिपवनं भवति–ततवद्वा तुन्नवद्वा। 'धीरा'–ध्यानवन्तः। 'मनसा'–प्रज्ञानेन। 'वाचमक्रत'–वाचमकृषत। 'अत्रा सखायः सख्यानि जानते'। अत्रा सखायः सन्तः सख्यानि जानते।**

**क? ॥**

**य एष दुर्गो मार्ग एकगम्यो वाग्विषयः।**

**के पुनस्ते? ॥ वैयाकरणाः ॥**

**कुत एतत्? ।**

**'भद्रैषां लक्ष्मीर्निहिताऽधिवाचि।' एषां वाचि भद्रा लक्ष्मीर्निहिता भवति। लक्ष्मीर्लक्षणाद्भासनात्परिवृढा भवति। –सक्तुमिव ॥**

❀ राजलक्ष्मीः ❀

**(उद्द्योते–) अध्ययनम्**–अध्येयं शास्त्रम्। **एकः**–अतत्त्ववित्। **पश्यन्नपी**त्यस्यैव विवरणं–**स्वभ्यस्तेति। अप्येकस्मै**-कस्मैचित्। **अर्थो हि**–यतोऽर्थ एव। **उपमायुक्तया**–जायासादृश्यवत्या। **वाचां प्रसादेन**–वाकर्तृकप्रसादेन। **तमेव**-वैयाकरणमेव। **निर्णिक्तेति।** सुधौतवस्त्रा। ऋतुस्नातेति यावत्। **तदा**–ऋतुकाले। **तत्पुरुषः**–तत्पतिः। स पुरुष इति वा। **तां**–जायाम्। **घनेति।** निबिडतमेत्यर्थः। **एवम्**–इत्थमेव। **स एव**–वैयाकरण एव। **अस्याः**–वाचः। **(भाष्ये–)**ब्रह्मसायुज्यप्राप्तिसाधनतां व्याकरणाध्ययनस्य दर्शयति भगवान्–**सक्तुमिवेति।** अस्या अर्थः उद्द्योते द्रष्टव्यः। सक्तुः–सक्तुशब्दः। **सचतेः**–सचधातोः। निष्पद्यत इति शेषः। अर्थमाह–**दुर्धाव इति।** तुषादिसङ्कुलतया शोधयितुमशक्यो भवतीत्यर्थः। विनिगमनाविरहादाह–**यद्वा कसतेरिति।** यतः–'कस गतिशासनयो'रित्यस्मादित्यर्थः। **विपरीतात्**–पृषोदरादितया कृतवर्णव्यत्ययात्। 'तुन्प्रत्यये निष्पन्नोऽतः' इति शेषः। **विकसितः**–विकसितार्थप्रतिपादकोऽयमित्यर्थः। **परिपवनमिति।** परि–सर्वतः पूयतेऽनेनेतिकरणेल्युट्। शोधनमित्यर्थः। तुषादिनिराससाधनमिति यावत्। अस्यान्यत्रातिप्रसक्तत्वादाह–**ततेति।** विस्तृतमिवेत्यर्थः। मतुपि रूपमेतत्। एवमग्रेऽपि। **तुन्नवदिति। तुन्नानि**–च्छिद्राणि। एवञ्च तुन्नवदित्यस्य प्रशस्तविपुलच्छिद्रयुक्तमित्यर्थः। **धीराः**–विद्वांसो वैयाकरणाः। **वाचमकृषत**-वाचं शुद्धां कृतवन्तः। 'अत्रा सखायः सख्यानि जानते' इत्यस्यार्थमाह–**समानेति। समानख्यातयः**–ब्रह्मैक्यबुद्धयः सन्तः। **सख्यानि**–सायुज्यं। **जानते**–प्राप्नुवन्तीत्यर्थः। **केति।** क सायुज्यं लभन्ते इत्यर्थः। **मार्ग इति।** दुर्गममार्गगम्यः। **एकगम्यः**–ज्ञानगम्यः। **वाग्विषयः**–वेदरूपया वाचा श्रोतव्यः। 'आत्मावाअरे श्रोतव्य'इत्युक्तेः। 'अवाग्विषय' इति केचिदत्रच्छेदमिच्छन्ति; 'यतो वाचो निवर्त्तन्ते' इति श्रुतेः। **ते**–सायुज्यप्राप्तिकर्त्तारः। **एतदिति।** वैयाकरणानामेव कुतस्तथात्वमित्यर्थः। **भद्रैषामिति।** अत्र **वाची**त्यस्यावृत्तिः कार्या। तथा च यतः–एषां–वैयाकरणानां वाचि,–**वाचि**–वेदाख्ये शब्दब्रह्मणि या **लक्ष्मीः**–वेदान्तेषु

❀ शब्दकौस्तुभः ❀

**प्रतिष्ठिततमं भवति द्व्यक्षरं वा नाम कृतं कुर्यान्न तद्धित'**मिति। नामकरणे अधिकारिणः पितुर्ये त्रयः पुरुषास्तानन्नु कायति–अभिधत्ते इति **त्रिपुरुषानूकम्।** 'अन्येषामपि दृश्यते'इति दीर्घः। 'त्रिपुरुषे'त्यत्र पात्रादित्वात्स्त्रीत्वाभावः। मूलविभुजादित्वात्कः। यत्तूपपदाऽविवक्षया

१ **उत्तमया**–मध्यमादिरूपया। अन्त्यार्धरूपयेति केचित्।

२ 'वाचाऽन्त्यपादेन' पा०।

( प्रदीपः ) **सचतेरिति ।** षच सेचन इत्यस्य । **दुर्धाव इति ।** दुःशोधः । यथा तितउना सक्तोस्तुषाद्यपनीयते तथा व्याकरणेन वाचोऽपशब्दा इत्यर्थः । **कसतेरिति ।** पृषोदरादित्वाद्वर्णव्यत्ययः । **ततवदिति ।** विस्तारयुक्तमित्यर्थः । **तुन्नवदिति ।** बहुच्छिद्रम् । **धीरा इति ।** वैयाकरणाः । **वाचमक्रतेति ।** अपशब्देभ्यो विविक्तां कृतवन्तः । **'मन्त्रे घसे'**ति लेर्लुकि सत्यक्रतेति रूपम् । **अत्रा सखाय इति । 'ऋचि तुनुघे'ति** दीर्घः । सखायः–समानख्यातयो भेदग्रहस्य निवृत्तत्वात्सर्वमेकमिति मन्यन्ते ।

**सख्यानीति ।** सायुज्यानीत्यर्थः । **एकगम्य इति ।** ज्ञानेनैव प्राप्यः ।

**वाचीति ।** वेदाख्ये ब्रह्मणि या लक्ष्मीर्वेदान्तेषु परमार्थसंविल्लक्षणोक्ता सैषां निहितेत्यर्थः ॥

( उद्द्योतः ) भाष्ये—**सक्तुमिवेति** । ये **यत्र** व्याकरणे **धीरा** ध्यानवन्तः सन्त**स्तितउना सक्तुमिव** ध्यानयुक्त**मनसा** तत्करणकज्ञानेन **वाचमक्रत** अकृषत–असाधुभ्यो विविक्तां कृतवन्तस्ते तत्करणेन शुद्धचित्ता **अत्र**–ब्रह्मप्रतिपादकशब्दे शब्दार्थयोरभेदबुद्धया **सखायः** समानख्यातयः समानज्ञानाः–तच्छब्दे ब्रह्मैकत्वज्ञानवन्तस्तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मनिरूपिताऽभेदज्ञानवन्तः **सख्यानि** सायुज्यानि **जानते** प्राप्नुवन्तीत्यर्थः । यत **एषां वाचि भद्रा लक्ष्मीः** स्वप्रकाशब्रह्मरूपा **अधि** अधिकं **निहिता** स्थिता भवतीति ऋगर्थः । **सचतेर्दुर्धाव इति ।** यतः सचतेरतो दुःशोध्यार्थप्रतिपादको भवतीत्यर्थः । तितउशब्द इत एव भाष्यान्नपुंसकः । 'चालनी तितउः पुमा'निति कोशात्पुँल्लिङ्गोपि । **विस्तारेति ।** 'तनोतेर्डउः सन्वच्चे'ति व्युत्पत्तेरिति भावः । **तुन्नेति ।** तुदधातोः कर्मणि क्तः सन्वच्चेति भावः । **ध्यानं**–ज्ञातार्थभावनम् । **मनसेति ।** व्यापारपरं, तदाह–**प्रज्ञानेनेति ।** भाष्ये–**क्वेति ।** 'किं तद्यत्र सायुज्यानि प्राप्नुवन्ति' इति प्रश्नः । उत्तरयति–**य एष इति ।** दुर्गमार्गप्राप्यत्वाद्दुर्गमार्गत्वोपचारः । दुर्गत्वमेवाह–**एकेति । ज्ञानेनैवेति ।** निर्विकल्पकज्ञानेनैवेत्यर्थः । अत एव दुर्गत्वं 'नान्यः पन्था' इति श्रुतेरिति भावः । भाष्ये 'वाग्विषय' इति च्छेदः । अत एव श्रवणोपपत्तिः । **वाग्** वेदरूपाऽत्र । **वेदान्तेष्विति । 'सत्यं ज्ञान'**मित्यादिषु । **परमार्थसंविल्लक्षणा**–परमार्थब्रह्ममात्रविषयज्ञानविषयाऽखण्डार्थरूपा सैषां वाचि निहितेत्यर्थः । सर्वोऽपि वेदस्तेषां ब्रह्मपरो 'वेदैश्च सर्वैरहमेव वेद्य' इत्युक्तेरिति भावः । अयं भावः–ये शास्त्रतः प्रकृतिप्रत्ययविभागेन साधूञ्ज्ञात्वा शास्त्रार्थध्यानवन्तो मानसज्ञानेन **वाचम**साधुभ्यः पृथक् कृतवन्तस्ते तज्ज्ञानपूर्वकसाधुशब्दप्रयोगैर्लब्धान्तःकरणशुद्धयोऽत्र य एष **दुर्गो मार्गो** ब्रह्मरूपस्तत्रात्मना सह–**समानख्यातयस्त्य**क्तभेदभावनाः **सख्यानि**–सायुज्यानि प्राप्नुवते । यत **एषां वाचि**–वेदाख्ये ब्रह्मणि या **भद्रा लक्ष्मीः**–सर्वभासकब्रह्मरूपा सा **अधि**–अधिकं **निहिता**–भवति । एतच्छास्त्रसाध्यप्रयोगव्यङ्ग्यस्य ध्वनिरूपवैखरीरूपरूषितस्यैव तैर्वाचकत्वस्वीकारेण तस्य चात्यन्तविचारे ब्रह्मातिरेके मानानुपलम्भेन तत्तदुपाधिभिन्नचित[1] एव बोधकतया तैर्ग्रहात् ।

### ❀ राजलक्ष्मीः ❀

या परमार्थसंवित्स्वरूपा लक्ष्मीः **सा**–निहिता स्थापितेत्यर्थः ।

**( प्रदीपे– ) सक्तोः**–सक्तोः सकाशात् । **वाचः**–वाचः सकाशात् । 'अपशब्दा' इत्यस्य–'अपनीयन्ते' इतिशेषः । 'धीरा'इत्यस्य व्याकरणविषयकध्यानवन्त इत्यर्थविवक्षयाऽऽह–**वैयाकरणा इति । विविक्तां**–पृथग्भूताम् । शुद्धाम् । संस्कृतामिति यावत् ।

**( उद्द्योते– ) ये**–वैयाकरणाः। **व्याकरणे धीराः**–व्याकरणविषयकध्यानवन्तः । **शब्दे**–व्याकरणप्रतिपाद्ये-ब्रह्मप्रतिपादके शब्दे । **तच्छब्दे**–ब्रह्मप्रतिपादके व्याकरणनिष्पन्ने शब्दे । **एषां**–व्याकरणे धीराणाम् । **लक्ष्मीः**–सम्पत्तिः । **भवतीति ।** यतो भवत्यतः सायुज्यानि जानते इत्यन्वयः । **सचतेः**–औणादिककर्मतुन्नन्तात्सचतेः । 'रूप'मिति शेषः । **भावनमिति ।** सततं परिशीलनम् । चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपमिति यावत् ।

**'उपचार'** इत्यस्य ब्रह्मणीति शेषः । अतएव–ज्ञानगम्यत्वादेव । दुर्गत्वं–ज्ञानमार्गस्यातिगहनत्वम् । **ब्रह्मपरः**–ब्रह्मतात्पर्यकः । **ये**-वैयाकरणाः । **शास्त्रतः**–व्याकरणतः । **साधून्**–साधुशब्दान् । **ध्वनीति ।** ध्वनिरूपाया वैखर्या रूपेण **रूषितस्य** आलिङ्गितस्य । **तैः**=वैयाकरणैः । **तस्य**–

### ❀ शब्दकौस्तुभः ❀

'आतश्चोपसर्गे'इति कं कृत्वा ततः षष्ठीतत्पुरुष इति; तत्तु 'कर्मण्य'णितिसूत्रे 'अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेने'ति वार्त्तिकस्य, 'नदीसूत्रे स्थास्थाविति मूलनिभुजादित्वात्क' इति भाष्यस्य चाऽननुगुणम् । अत एव गङ्गाधरादिशब्दानां संज्ञाशब्दत्वमिति **प्राञ्चः ।** वस्तुतस्तु प्रथमं कर्माविवक्षायामनूकपदं व्युत्पाद्य पश्चात्कर्मसंबन्धेऽप्यदोषः । वार्त्तिकादिकं तु प्रथममेव कर्मविवक्षामभिप्रेत्य, अन्यथा कृतपूर्व्यादिषु का गतिः? । अतएव 'शक्यं च क्षुदुपहन्तु'मिति**भाष्य**व्याख्यायां 'बहिरङ्गस्त्रीत्वप्रतीत्याऽन्तरङ्गः पदसंस्कारो न विहन्यत' इति

[1] चिद्रूपस्य ब्रह्मणः ।

एवं सर्वबोधकेषु ब्रह्मबुद्धौ जातायां तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मबुद्धिर्वैयाकरणानामिति । यत्तु पदपदार्थवाक्यार्थमर्यादया **'सत्य'**मित्यादितस्तेषां तद्बोधात्सा तेषां वाचि निहितेति । तन्न; 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे'ति श्रुत्या ब्रह्मणस्तन्मर्यादया शब्दाऽबोध्यत्वोक्तेः । तत्र ह्यप्राप्येत्यस्य संबन्धज्ञानेऽविषयीभूयाऽसंबध्य चेत्यर्थः । आद्यं शब्दे, अन्त्यं मनसि । शुद्धचित्तस्य तूभयमपि बोधकमखण्डविषयस्य,–'दृश्यते त्वग्र्यया बुद्ध्ये'ति श्रुत्यन्तरात्, न तु पदपदार्थमर्यादयेति बोध्यम् । **'लक्षणा'**दित्यस्य व्याख्या-**भासनादिति । परिवृढा**–अज्ञाननिवर्तने प्रभ्वी । एते च मन्त्राः सर्वानुक्रमभाष्येऽन्यत्र विनियुक्ता अपि भाष्यप्रामाण्यादेतत्तात्पर्यका अपीति बोध्यम् । **चत्वारी**त्यादि ऋक्चतुष्टयं व्याकरणस्य मोक्षजनकत्वं प्रतिपादयति ।

[ **सारस्वती**मित्येतद्व्याख्यानभाष्यम् ]

**'सारस्वतीम्' । याज्ञिकाः पठन्ति– 'आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपे'दिति ॥**

**'प्रायश्चित्तीया मा भूमे'त्यध्येयं व्याकरणम् । सारस्वतीम्** [११] **॥**

( प्रदीपः ) **प्रायश्चित्तीयामिति ।** भवार्थे वृद्धाच्छः । **प्रायश्चित्तीया इति ।** प्रायश्चित्ताय पापशोधनाय श्रुतिस्मृतिविहिताय कर्मणे हितास्तन्निमित्तोत्पादना मा भूमेत्यर्थः ॥

( उद्द्योतः ) **भवार्थे इति ।** प्रायश्चित्तसाधनत्वेन तद्भवत्वम् ।

[ **दशम्यां** पुत्रस्येतद्व्याख्यानभाष्यम् ]

**दशम्यां पुत्रस्य– याज्ञिकाः पठन्ति—'दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद्घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं, तद्धि प्रतिष्ठिततमं भवति, द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्'– इति । न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् ॥ दशम्यां** [१२] **पुत्रस्य ॥**

( प्रदीपः ) **दशम्युत्तरकालमिति ।** दशम्या उत्तर इति 'पञ्चमी'ति योगविभागात्समासः । ततः कालशब्देन बहुव्रीहिः । क्रियाविशेषणं चैतत् । दश दिनान्यशौचं भवतीति दशम्युत्तरकालमित्युक्तम् । येऽपि गृह्यकाराः पठन्ति–'**दशम्यां पुत्रस्ये'ति,** तैरपि 'दशम्या'मिति सामीपिकमधिकरणं व्याख्येयम् । **घोषवदादीति ।** घोषवन्तो ये वर्णाः शिक्षायां प्रदर्शितास्तदादि । **अन्तरन्तःस्थमिति ।** मध्ये यरलवा यस्य तदित्यर्थः । **त्रिपुरुषानूकमिति ।** नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्ताननुकायत्यभिधत्त इति त्रिपुरुषानूकम् । **'अन्येषामपि दृश्यते'** इति दीर्घः ।

( उद्द्योतः ) **पञ्चमीति योगविभागादिति ।** सुप्सुपेति तु युक्तम् । ननु दशम्यां पुत्रस्येति प्रयोजनस्वरूपगणने भाष्ये उक्तम् । गृह्येऽपि तथैव पठ्यतेऽतो दशम्युत्तरकालमित्ययुक्तमत आह–**तैरपीति । शिक्षायामिति ।** ते च हशः । अन्तरन्तस्था यस्येत्यर्थः । **त्रिपुरुषानूकम् ।**

❀ राजलक्ष्मीः ❀

शब्दस्य । **सत्यमिति** । 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतेः । **तद्बोधात्**–ब्रह्मैक्यबोधात् । **तेषां**–वैयाकरणानाम् । **सा**–परमार्थलक्षणा संवित् । **तन्मर्यादया**–पदपदार्थवाक्यार्थमर्यादया । **आद्यमिति ।** सम्बन्धज्ञानेऽविषयीभूयेत्यर्थो वाक्यपक्षे योज्यः । असम्बध्येत्यर्थो मनसि योज्य इत्यर्थः । **उभयं**–वाङ्मनसरूपम् । **प्रभ्वी**–समर्था । **एते**–चत्वारीत्यादयऋङ्मन्त्राः । **अन्यत्र**–अग्निध्यानादौ । **एतदिति ।** व्याकरणाध्ययनस्य मोक्षसाधनत्वादिबोधकाः । **[ भाष्ये– ] प्रयुज्य**–यज्ञमध्ये प्रयुज्य । **प्रायश्चितीयां**–प्रायश्चित्तसाधनभूताम् । **सारस्वतीं**–सरस्वतीदेवताकाम् । **प्रायश्चित्तीयाः**–प्रायश्चित्ताय हिताः प्रायश्चित्तीयाः । तस्मैहितमित्यर्थे वृद्धाच्छ इतिच्छः ।

**( उद्द्योते– ) प्रायश्चित्तेति ।** अन्तःकरणशुद्धिसाधनतया इष्टेः प्रायश्चित्तभवतेत्याशयः ।

**( भाष्ये– )** व्याकरणस्य नामकरणेऽप्युपयोगमाह–**दशम्यामिति । याज्ञिकाः**–यज्ञकाण्डोक्ता मन्त्राः । गृह्यश्रौतसूत्रकारादयो वा । दशम्यामित्यौपश्लेषिकेऽधिकरणे सप्तमीत्याशयेन व्याचष्टे–**दशम्युत्तरेति । घोषवदादि**–घोषप्रयत्नवर्णादि । घोषवन्तश्च–हयवरलाः, वर्गाणां पञ्चमाश्चतुर्थास्तृतीयाश्च वर्णाः । **अवृद्धं**–वृद्धसञ्ज्ञकाकाराद्यक्षररहितम् । **कृतं**–कृदन्तम् । **न तद्धितं**–न तद्धितप्रत्ययान्तम् । **न च**–नहि । अन्तरेण=विना । 'विज्ञातु'मित्यस्य 'अतो व्याकरणमध्येय'मिति शेषः । **क्रियेति ।** दशम्युत्तरः कालो यस्मिन्कर्मणि तत्–दशम्युत्तरकालम् ।

**( प्रदीपे– ) उक्तामिति ।** वार्तिककारधृतस्य 'दशम्यां पुत्रस्ये'ति प्रतीकस्य भाष्यकृता 'दशम्युत्तरकाल'मिति

❀ शब्दकौस्तुभः ❀

**कैयटो**ऽपि वक्ष्यति । विवक्षा च लोकप्रसिद्ध्यनुसारिणी न तु स्वायत्तेति'विपराभ्यां जे'रित्यादावपि'पूर्वं धातुःसाधनेनयुज्यते' इति पक्षमुपष्टभ्य 'विजयती'त्यादि नापादनीयमिति दिक् ।

त्रिपुरुषशब्दे द्विगुः । मूलविभुजादित्वात्कः । भाष्ये–**अनरीति** । अमनुष्येऽरिभिन्ने इति वार्थः ।

[ **सुदेवो** असीति व्याख्यानभाष्यम् ]

**'सुदेवो असि'—**

**'सुदेवो असि वरुण ! यस्य ते सप्त सिन्धवः ।**
**अनु क्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥'**

**'सुदेवो असि वरुण!'।–सत्यदेवोऽसि । 'यस्य ते सप्त सिन्धवः' । सप्त विभक्तयः । 'अनुक्षरन्ति काकुदम्' । काकुदं–तालु । काकुर्जिह्वा साऽस्मिन्नुद्यत इति काकुदम् । 'सूर्म्यं सुषिरामिव' । तद्यथा–शोभनामूर्मिं सुषिरामग्निरन्तः प्रविश्य दहत्येवं ते सप्त सिन्धवः सप्त विभक्तयस्ताल्वनुक्षरन्ति । तेनाऽसि सत्यदेवः । 'सत्यदेवाः स्यामे'त्यध्येयं व्याकरणम् । सुदेवो [13] असि ॥**

( प्रदीपः ) **सुदेवो असीति ।** वरुणस्येयं स्तुतिः । यतो हेतोर्व्याकरणज्ञानाद्वरुण ! सत्यदेवोऽसि ततो हेतोरन्येऽपि सत्यदेवा भवन्तीत्यर्थः । **सिन्धवइति ।** नद्य इव विभक्त[1]य इत्यर्थः । **अनुक्षरन्तीति ।** ताल्वनुप्राप्य प्रकाशन्त इत्यर्थः । **सास्मिन्नुद्यत इति ।** अनेकार्थत्वाद्धातूनामुत्क्षिप्यत इत्यर्थः । **सूर्म्यमिति ।** सूर्मीमिति प्राप्ते **अमि पूर्व** इत्यत्र 'वा छन्दसी'त्यनुवृत्त्या यणादेशः ॥

( उद्द्योतः ) **सत्यदेव इति ।** वरुणे यथा सत्येन दीव्यति द्योतत इति यौगिकोऽयं शब्दस्तथान्येष्वपीत्यर्थः । **यस्येति**–प्रथमास्थाने षष्ठी । यस्मात्ते काकुदं तालु प्राप्य सिन्धवः सप्त समु[2]द्ररूपाः सप्तविभक्तयोऽनुक्षरन्ति प्रकाशन्ते इत्यर्थः । **अनेकार्थत्वादिति ।** वदेरधिकरणे 'घञर्थे' इति कः । शकन्धु[3]वत्पररूपं, पृषोदरादित्वाद्वैकस्योकारस्य लोपः । नुदेर्वाऽधिकरणे कः । पृषोदरादित्वान्नुलोपः । **सूर्मी**–शोभनामयःप्रतिमाम् । **सुषिराम्**–'ऊषसुषी'ति 'र'प्रत्ययेन सच्छिद्रां प्रविश्याग्निर्यथा तत्रत्यं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति एवं तालुदेशे प्रकाशं प्राप्य विभक्तयो–विभक्त्यन्ताः शब्दाः शारीरं पापमपाकुर्वन्तीत्यर्थः। अनेन स्वर्गप्राप्तिःफलमित्युक्तम् ।

---

[ प्रयोजनान्वाख्याने **शङ्का**भाष्यम् ]

**किं पुनरिदं व्याकरणमेवाधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते, न पुन-**

---

### ❀ राजलक्ष्मीः ❀

गृह्यसूत्रानुसारेण व्याख्यानं कृतं न 'दशम्यां पुत्रस्ये'ति गृह्यसूत्रान्तरपाठानुसारेण, 'दशम्या'मितिगृह्यसूत्रपाठस्यापि दशम्युत्तरकालमित्येवं व्याख्यानस्यावश्यकत्वादित्याशयः । एवञ्च **'एतानि च भूय'** इत्यादि वार्त्तिकमेवेतिसिद्धम् । अन्यथा (भाष्यकृत एव तथा वचने) प्रतीकस्य व्याख्यानस्य च तुल्यतैव भाष्यकृता कथं न कृतेति शङ्का दुरुद्धरा स्यादिति **गौडाः** । **त्रयः**–पितृपितामहप्रपितामहाः । तान्–तदन्यतमम् ।

( **उद्द्योते–** ) **युक्तमिति ।** योगविभागस्य भाष्यानुक्तत्वेनाऽप्रामाणिकत्वादिति भावः । **कः**–कै शब्दे इत्यस्माद्धातोः कप्रत्ययः । **अमनुष्ये**–देवे । **अरिभिन्ने**–सुहृदादौ च।

( **भाष्ये–** ) वैयाकरणमहत्त्वसूचकमृष्मन्त्रमुपन्यस्यति–**सुदेव इति ।** 'प्रकृत्यान्तः पादमव्यपदे' इति प्रकृतिभावान्न पूर्वरूपम् । **सत्यदेवः**–सत्येनाऽवभासमानः, सत्यरूपो वा, सत्यं–प्रत्यक्षमनुभूयमानप्रभावो वा देव इति । **अनुक्षरन्ति**–अनुस्रवन्ति । प्रादुर्भवन्ति । प्रकाशन्ते वा ।

( **उद्द्योते–** ) **सत्येन**–साधुशब्दप्रयोगरूपेण । **अयं**–सत्यदेवशब्दः । **अन्येषु**–वैयाकरणेषु । **पररूपमिति ।** एवञ्च–काकोरुदं काकुदमिति विग्रह इत्यपि बोध्यम् । **सुषिरां**–सच्छिद्राम् । **ताल्विति ।** वरुणस्येति शेषः। **अनेन**-ऋङ्मन्त्रेण, वरुणतुल्यताप्रतिपादनेन वा । **फलमिति ।** वरुणवत्स्वर्गे विद्योतते इत्युक्त्या वैयाकरणस्य स्वर्गप्राप्तिरुक्तैवेत्याशयः ।

( **भाष्ये–** ) **किं पुनः**–कुतो हेतोः । 'इद'मित्यस्य प्रयोजनमित्यनेनान्वयः । **इदं–रक्षो**हेत्यादिनोक्तम् । **अधिजिगांसेति ।** पिपठिषुभ्य इत्यर्थः । **अन्यदपि**–व्याकरणातिरिक्तं ।

---

### ❀ शब्दकौस्तुभः ❀

तथा च ऋग्वेद एव पठ्यते–**'सुदेवो असि वरुण ! यस्य ते सप्त सिन्धवः । अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिवे'ति** । अस्यार्थः–हे वरुण ! सत्यदेवोसि यस्य ते **काकुदं** तालु, काकुर्जिह्वा सा उद्यते उत्क्षिप्यतेऽस्मिन्निति काकुदं, वदेरुत्क्षेपणमर्थः, धातूनामनेकार्थत्वात्, ततो 'घञर्थे कविधान'मित्यधिकरणे कः । सम्प्रसारणम् । षष्ठीतत्पुरुषे शकन्ध्वादित्वात्पररूपम् । 'नुद प्रेरणे' इत्यस्मादधिकरणे कः, पृषोदरादित्वान्नुशब्दस्य लोप इत्यन्ये । निरुक्तस्वरसोप्येवम् । सप्त सिन्धव इव **सिन्धवो** विभक्तयः । **अनुक्षरन्ति**–तालु प्राप्य प्रकाशन्ते इत्यर्थः । अत्र दृष्टान्तः,–यथा सच्छिद्रां लोहमयीं प्रतिमां प्रविश्याऽग्निः प्रकाशते तथेति । अग्निर्हि तत्रत्यं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति तथा विभक्तयोऽपि शारीरं पापमपाकुर्वन्तीति भावः । 'सूर्मी स्थूणाऽयःप्रतिमे'त्यमरः । स्मर्यते च–'सूर्मीं ज्वलन्तीमालिङ्गेन्मृत्यवे गुरुतल्पग'इति । 'अमि पूर्व' इत्यत्र 'वा छन्दसी'त्यनुवृत्तेर्यणादेशः।

---

१ 'सप्त विभक्तयः' पा० । २ सप्तेति क्वचिन्नास्ति । ३ 'शकन्ध्वादित्वात्पर' पा० ।

रन्यदपि किञ्चित्?। ॐ इत्युक्त्वा वृत्तान्तशः 'श'मित्येवमादीञ्शब्दान्पठन्ति?॥

(प्रदीपः) **किं पुनरिति।** ननु **कानि पुनरस्ये**ति येन पृष्टं, स एव कथं पृच्छति-'किं पुन'रिति?। एवं तर्हि भाष्यकारः प्रयोजनान्वाख्यानस्य विषयविभागं दर्शयति। पुरा वेदाध्ययनात्पूर्वं व्याकरणमधीयते ते बाल्यात्प्रष्टुमसमर्था इति न प्रयोजनमन्वाख्येयम्। अद्यत्वे तु स्वल्पायुष्ट्वात्पूर्वमेव वेदं प्रधानमधीयते ततः प्रष्टुं समर्थत्वाद्व्याकरणाध्ययनस्य प्रयोजनं पृच्छन्तीत्यवश्यान्वाख्येयं प्रयोजनम्। **न पुनरन्यदिति।** वेदमप्यधिजिगांसमानेभ्य इत्यर्थः। **ॐमित्युक्त्वेति।** अभ्युपगम्येत्यर्थः। **वृत्तान्तश इति।** वृत्तान्तः प्रपाठक उच्यते। वृत्तान्तं वृत्तान्तं पठन्तीत्यर्थः।

(उद्द्योतः) **एवं तर्हीति।** 'वेदातिरिक्तविषय एव प्रयोजनान्वाख्यानं, न तु वेदविषये' इत्येवंरूपं **विषयविभागम्।** तृतीयस्य प्रश्न इत्यन्ये। किंचित्पदार्थमाह-**वेदमपीति।** शेषपूरणमन्यत्। किं **तत्किंचि**दित्याकाङ्क्षायामाह-भाष्ये- **ओमित्युक्त्वेति।** **पठन्ती**त्यस्यानन्तरमेते**भ्योऽपी**ति शेषः। एवंच वेदमधिजिगांसमानेभ्यो वेदाध्ययनप्रयोजनं किमिति नान्वाख्यायत इति प्रश्नः। वेदाध्ययनवद्व्याकरणाध्ययनमपि प्रयोजनमन्तरैव करिष्यन्तीति प्रयोजनविचारो व्यर्थ इति तात्पर्यम्। नन्वोमित्यधिकमत आह-**अभ्युपगम्येति।** 'विनैव प्रयोजनज्ञान'मिति शेषः।

[समाधानभाष्यम्]

पुराकल्प एतदासीत्—'संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माऽधीयते। तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते'। तदद्यत्वे न तथा। वेदमधीत्य त्वरिता वक्तारो भवन्ति-'वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः, अनर्थकं व्याकरणम्' इति। तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृद्भूत्वा—आचार्य इदं शास्त्रमन्वाचष्टे-'इमानि प्रयोजनान्यध्येयं व्याकरणम्'-इति॥

(प्रदीपः) **अद्यत्व इति।** 'अद्यत्वे'शब्दो निपातोऽस्मिन् काल इत्यत्रार्थे वर्तते।

**त्वरिता इति।** विवाहादौ।

(उद्द्योतः) भाष्ये उत्तरमाह-**पुराकल्पे इति।** युगान्तरे इत्यर्थः। **संस्कार** उपनयनम्। **करण** आभ्यन्तरप्रयत्नः।

❀ राजलक्ष्मीः ❀

**किञ्चित्**-वेदमपि। 'अधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते' इत्यनुषज्यते। **किञ्चित्**पदार्थमाह-**ओमिति।** ॐकारमुच्चार्य। **शमिति।** 'शन्नो देवीरभिष्टये' इत्येवमादीन् वेदान्।

(प्रदीपे-) **स एव**-स एव प्रष्टा। **भाष्यकारः**-भगवान्पतञ्जलिरेव। **विषयविभागं**-वेदातिरिक्ते व्याकरणादौ विषये एव प्रयोजनान्वाख्यानमावश्यकं, न वेदे इत्येवंरूपं विषयविभागम्। **पुरा**-युगादौ। द्वापरादौ वा। **ते**-अध्येतारः। **प्रयोजनं**-व्याकरणाध्यनप्रयोजनम्। **अद्यत्वे**-सम्प्रति। **प्रयोजनमिति।** तच्च ग्रन्थादौ वार्त्तिककृता भाष्यकारेण वाऽन्वाख्यातमिति भावः।

(उद्द्योते-) **एवञ्च**-अत्र प्रयोजनान्वाख्याने च। किमेतावतेत्यत आह-**वेदाध्ययनवदिति।** **प्रयोजनमन्तरा**-प्रयोजनकथनं तज्ज्ञानं च विनाऽपि। ननु 'ओ'मित्यस्य 'हरिः ॐ' इत्युक्त्वेत्यर्थ इति नाधिक्यं, 'ॐमिति ब्राह्मणः प्रवक्ष्यन्नाहे'ति शिक्षोपनिषदुक्तेर्वेदप्रारम्भे ॐकारोच्चरणस्यावश्यकत्वादिति चेदुक्त्वेत्यस्याधिक्येनैव कैयटे 'अभ्युपगम्येत्यर्थ' इत्युक्तिरित्याशयात्। **अभ्युपेति।** 'अधीष्वे'त्याचार्येणोक्ते तदाज्ञामभ्युपगम्य विनैव प्रयोजनज्ञानम्पठन्तीत्यर्थः।

(भाष्ये-) 'एत'दिति क्रियाविशेषणम्। एवमासीदित्यर्थः। **तेभ्यः**-वैयाकरणेभ्यः। उपदिश्यन्ते' इत्यस्य 'इती'ति शेषः। वक्तार इत्यस्य-**इती**त्यन्तं कर्म बोध्यम्। **नः**-अस्माकम्। **लोकात्**-काव्यकोशादिभ्यो, लोकव्यवहाराच्च। **विप्रतीति।** विरुद्धबुद्धिभ्यः। **इदं शास्त्रमनु**-व्याकरणशास्त्रमुद्दिश्य। **आचष्टे**-उपदिशति। किन्तदित्यत आह-**इमानीति॥** (प्रदीपे-) **वर्त्तत इति।** एवञ्च त्वप्रत्ययानुपपत्तिः परिहृतेति भावः। विवाहादावित्यस्य 'उत्सुका' इतिशेषः।

❀ शब्दकौस्तुभः ❀

'सुषिरा'मित्यत्रार्शआद्यच्। अभेदोपचारो वेत्याहुः। वस्तुतस्तु 'ऊषसुषिमुष्कमधो र' इति मत्वर्थीयो रप्रत्ययः। 'रन्ध्रं श्वभ्रं वपा सुषि'रित्यमरः। 'सरन्ध्रे सुषिरं त्रि'ष्विति च। सुष्यतीति **सुषिरिति क्षीरस्वामी।** 'गर्ते गर्त्तान्विते वाद्ये विशेषे सुषिरं त्रि'ष्विति शाश्वतः॥ ❀ **इति प्रयोजनप्रपञ्चः** ❀

१ केचित्तु 'किञ्चि'दित्यन्तं शङ्का, ॐ इत्युक्त्वे'त्यादिना समाधानमित्याहुः। २ 'स्वल्पायुष्यात्पूर्वं वेदं' पा०। ३ 'प्रतीत्य पठन्ति' पा०। ४ 'एतेभ्यः'। ५ 'आचार्यः सुहृद्भूत्वा' पा०।

प्रयत्नः । **अनुप्रदानं**–नादादिबाह्यप्रयत्नः । तेनाधीतव्याकरणशिक्षेभ्य[1] इत्यर्थः । ते तदानीमपि कर्मानुष्ठानफलकत्वं वेदस्य जानन्तो नित्यत्वं वा तदध्ययनस्य जानन्तो न तदध्ययनप्रयोजनं पृच्छन्तीति न कदाचिदपि वेदाध्ययनप्रयोजनोपदेश इति तात्पर्यम् । **न तथेति** । किं तु विपरीतमित्यर्थः । भाष्ये–**आचार्यपदेन** शास्त्राध्यापको भाष्यकृदेव विवक्षितः । **इदं शास्त्रमिति** । प्रयोजनान्वाख्यानमित्यर्थः ।

[ विषयप्रयोजननिरूपणोपसंहारभाष्यम् ]

**उक्तः शब्दः । स्वरूपमप्युक्तम् । प्रयोजनान्यप्युक्तानि ॥**

**(उद्द्योतः)** भाष्ये **उक्तः शब्द इति । लौकिकानां वैदिकानां** चेत्यनेन विषयभूतः शब्द उक्त इत्यर्थः । **स्वरूपमपीति । अथ गौरित्यदिना** । अयमुपसंहारो ग्रन्थस्य, विषयप्रयोजननिरूपणमेतावता कृतमिति बोधयितुम् । तेनैव संबन्धाधिकारिणावुक्ताविति तौ पृथङ्नोक्तौ ।

*( अथ शब्दानुशासनं प्रारभ्यते )*

[ शब्दानुशासनप्रकारजिज्ञासाभाष्यम् ]

**शब्दानुशासनमिदानीं कर्त्तव्यम् । तत्कथं कर्त्तव्यम् ? । किं शब्दोपदेशः कर्त्तव्यः, आहोस्विदपशब्दोपदेशः, आहोस्विदुभयोपदेश इति ? ॥**

**(प्रदीपः) उभयोपदेश इति** । हेयोपादेयोपदेशे स्पष्टा प्रतिपत्तिर्भवतीत्युभयोपदेश उद्भावितः ।

( सिद्धान्त्येकदेशिनः समाधानभाष्यम् )

**अन्यतरोपदेशेन कृतं स्यात् । तद्यथा, भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यते । 'पञ्च पञ्चनखा भक्ष्याः' इत्युक्ते गम्यत एतद्'तोऽन्येऽभक्ष्या' इति ।**

**अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः । तद्यथा,–'अभक्ष्यो ग्राम्यकुक्कुटः' 'अभक्ष्यो ग्राम्यसूकरः' इत्युक्ते गम्यत एतदा'रण्यो भक्ष्य'–इति ।**

[ दार्ष्टान्तिके उपसंहारभाष्यम् ]

**एवमिहापि यदि तावच्छब्दोपदेशः क्रियते,**

❀ **राजलक्ष्मीः** ❀

**( उद्द्योते– ) शिक्षा**–पाणिनीयादिशिक्षा । अधीतव्याकरणेभ्योऽधीतशिक्षेभ्यश्चेत्यर्थः । **ते**=अध्येतारः । **तदानीमपि**–वेदाध्ययनकाले प्रौढिमापन्ना अपि । अपिना अल्पकालपरिग्रहः । **विपरीतम्**–अल्पायुष्ट्वाद्वेदाध्ययनोत्तरमङ्गाध्ययनम् । **भाष्यकृदेवेति** । परेतु वार्त्तिककृदुक्तान्येवैतानि प्रयोजनानीत्याचार्यपदेन वार्त्तिककृदेव भाष्यकृतोऽभिप्रेतः । भगवताऽऽत्मन आचार्यपदेन क्वापि व्यवहारस्याऽकरणात् । आचार्यपदेन भाष्ये सूत्रवार्त्तिककारयोरेव प्रायोग्रहणात् । आत्मनस्तु–गोनर्दीयस्त्वाहेत्यादिरीत्या भाष्यकृतो व्यवहारस्य प्रसिद्धत्वान्नागेशोक्तं न युक्तमित्याहुः ।

**( भाष्ये– ) स्वरूपं**–शब्दस्वरूपम् । 'अथ गौ'रित्यादिना 'ध्वनिः शब्द' इत्यन्तेन । **प्रयोजनानि**–रक्षोहादीनि ।

**( उद्योते– ) विषयेति** । लौकिको वैदिकश्चेत्यर्थः ।

**( भाष्ये– ) इदानीम्**–अनुबन्धचतुष्टयनिरूपणानन्तरम् । प्रश्नवादी विशिष्य पृच्छति–**किमिति** । 'आहोस्वि'दिति निपातसमुदायोऽथवेत्यर्थे बोध्यः । **उभयेति** । शब्दापशब्दयोरित्यर्थः ।

**( प्रदीपे– )** ननूभयोपदेशोद्भावने किं बीजमत आह–**हेय इति** । एवञ्च स्पष्टप्रतिपत्तये लाघवानादरेणोभयोपदेशोद्भावनमित्याशयः ।

**( भाष्ये– ) अन्यतर इति** । शब्दोपदेशेनापशब्दोपदेशेन वेत्यर्थः । **कृतं**–सिद्धमिष्टम् । शब्दानुशासनं सिद्धं स्यादिति यावत् । विनिगमनाविरहादेकतरपक्षानाश्रयणम् । **तद्यथेति । तत्**–अन्यतरोपदेशेनेष्टसिद्धिः । **यथेति** । दृष्टान्ते यथा भक्ष्यादिनियमेनाभक्ष्यादिप्रतिषेधो गम्यते तथेहापि भविष्यतीत्यर्थः । **भक्ष्यनियमेन**–रागतः प्राप्तस्य भक्ष्यस्य पञ्चनखादेर्नियमेन–पुनर्विधानेन । **गम्यते**–अर्थादेव प्रतीयते । लभ्यते इति वा । **पञ्चनखाः**–गोधाकूर्मप्रभृतयः पञ्च स्मृतावुक्ताः । अतोऽन्ये–पञ्चातिरिक्ताः

❀ **शब्दकौस्तुभः** ❀

इत्येवं विषयप्रयोजनयोरुक्तयोः सम्बन्धाधिकारिणावुक्तप्रायावेवेति पृथङ्नोक्तौ ।

इह येन प्रयोजनं पृष्टन्ततोऽन्य एव **तटस्थ** इत्थम्प्रत्यवतिष्ठते,–ननु यथाधीष्वेत्याचार्येणोक्ते प्रयोजनप्रश्नमकृत्वैव वेदमधीयते । तद्वदङ्गभूतं व्याकरणमप्यध्येष्यन्ते, तत्किं प्रयोजनवर्णनक्लेशेनेति । अत्रेदमुत्तरम्,–प्रायेणेदानीन्तनानामल्पायुष्कत्वाद्विघ्नबहुलत्वाच्च प्रधानभूतो वेदस्तावत्पठ्यते । तदध्ययनकाले च बाल्यात्प्रयोजनादिकं प्रष्टुमसमर्थाः शिष्या गुरुणोपदिश्यमानं वेदं गृह्णन्तीति युक्तम् । ततो गृहीतवेदाः प्रौढिमापन्ना विवाहार्थं त्वरमाणा व्याकरणाध्ययनाय गुरुणा प्रेर्यमाणा अपि न सहसा प्रवर्त्तन्ते, 'वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः, अनर्थकं व्याकरणम्' इति च प्रत्यवतिष्ठन्ते । तान्प्रति युक्तमेव प्रयोजनादिवर्णनम् । पूर्वकल्पेषु व्याकरणशिक्षादीनि लक्षणानि प्रथमं पाठयित्वा तत्तल्लक्षणानुसन्धानपूर्वकं लक्ष्यभूतं वेदं ग्राहयन्तः स्थिताः । तदा परं

1 'शिष्येभ्यः' पा० ।

**'गौरित्येतस्मिन्नुपदिष्टे गम्यत एत'द्गाव्यादयोऽपशब्दा' इति। अथाऽप्यपशब्दोपदेशः क्रियते,-गाव्यादिषूपदिष्टेषु गम्यत एत- 'द्गौरित्येष शब्द'-इति ।**

(प्रदीपः) यद्यपि प्रतिपत्तिः स्पष्टा, गौरवन्तु भवतीत्याह-**अन्यतरेति**। शब्दापशब्दयोरित्यर्थः। अन्यतराऽन्यतमशब्दावव्युत्पन्नौ स्वभावाद्बिबहुविषये निर्धारणे वर्त्तेते। **पञ्चेति**। आर्थित्वाद्भक्षणं प्राप्तं पञ्चसु पञ्चनखेषु नियम्यमानं सामर्थ्यादन्येभ्यो निवर्तते। न त्वयं विधिः, अप्राप्तेरभावात् ॥

(उद्द्योतः) कियत्तच्चोऽन्यत्र डतराभावादाह—**अन्यतरान्येति**। तत्र सुशब्दोपदेशः प्रयोगविध्यर्थोनुवादः। अपशब्दोपदेशस्तु प्रयोगप्रतिषेधार्थः। **पञ्चपञ्चनखा** इत्यस्य नियमत्वं दर्शयति- **अर्थित्वादिति**। **नियम्यमानं**-पुनः शब्देन बोध्यमानमित्यर्थः। नन्वस्य परिसङ्ख्यात्वात्कथं नियमत्वेन व्यवहारः। अस्ति च नियमपरिसङ्ख्ययोर्भेदः। पाक्षिकाऽप्राप्तिकाऽप्राप्तांश[1]परिपूरणफलो **नियमः**। अन्यनिवृत्तिफला च **परिसंख्ये**ति चेन्न। नियमेप्यप्राप्तांशपरिपूरणरूप[2]फलबोधनद्वाराऽऽर्थान्यनिवृत्तेः सत्त्वेन अभेदमाश्रित्योक्तेः। **विधिरिति**। अपूर्वविधिरित्यर्थः। ये तु पञ्चपदस्य तदतिरिक्ते लक्षणा, भक्ष्यपदस्य चाभक्ष्ये सेति वदन्ति तेषां पदद्वये लक्षणागौरवम्। अस्यैव नियमत्वेन 'भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यत' इति भाष्यविरोधश्च। नियमपदस्य तद्बोधके लक्षणायां सैव दोषः। अक्षराऽस्वारस्यं च। 'नियम्यमानं भक्षणं सामर्थ्यादन्येभ्यो निवर्तते'इति कैयटासङ्गतिश्च। दृष्टान्तदार्ष्टान्तिकयोरत्यन्तवैषम्यापत्तिश्च। अन्यनिवृत्तिफला परिसंख्येत्यभियुक्तोक्तिविरोधश्च। सिद्धस्य पुनर्विधानात्प्रापकप्रमाणस्य तदितराविषयत्वरूपसङ्कोचकल्पनम्। तेनान्येषां भक्षणाभावस्तद्भक्षणे प्रायश्चित्तं च सिध्यति। एवसमभिव्याहारे सोपि स्फुटमस्याऽर्थस्यैव द्योतकः। 'अन्ययोगव्यवच्छेद

## ❀ राजलक्ष्मीः ❀

पञ्चनखाः। **आरण्यः**-अरण्ये भवः सूकरादिः। **अपशब्दा इति**। गवादेः शब्दस्योपदेशे तदतिरिक्तानामपशब्दत्वस्यार्थादेव लाभादित्याशयः। **गाव्यादिषु**-अपशब्देषु गाव्यादिषु।

**(प्रदीपे-) यद्यपीति**। उभयोपदेशे यद्यपि प्रतिपत्तॄणां **प्रतिपत्तिः**-ज्ञानं, **स्पष्टा**-आनायासेन स्पष्टं भवतीत्यर्थः। 'तथापी'ति शेषः। **गौरवम्**-उभयोपदेशे गौरवम्। **अव्युत्पन्नौ**-प्रकृतिप्रत्ययकल्पनाशून्यौ। **स्वभावादिति**। शब्दशक्तिस्वाभाव्यादेवान्यतरशब्दो द्विविषये निर्धारणेऽन्यतमशब्दश्च बहुविषये निर्धारणे वर्त्तते इत्यर्थः। **अर्थित्वात्**-रागित्वात्। **भक्षणं**-पञ्चनखानामन्येषाञ्च भक्षणम्। **अयं**-'पञ्च पञ्चनखा' इत्ययम्। **अप्राप्तेः**-पञ्चनखभक्षणाऽप्राप्तेः। विधेश्च 'विधिरत्यन्तमप्राप्तौ' इत्युक्तेरप्राप्तिविषयत्वादितिभावः।

**(उद्द्योते-) प्रयोगेति**। अपशब्दप्रयोगेत्यर्थः। **अस्य**-'पञ्च पञ्चनखा' इत्यस्य। भेदमेवाह-**पाक्षिकेति**। पाक्षिका अप्राप्तिर्यस्यासौ पाक्षिकाऽप्राप्तिकः, स चासावप्राप्तांशश्च पाक्षिकाऽप्राप्तिकाऽप्राप्तांशस्तस्य परिपूरणं फलं यस्यासावितिविग्रहः। तथाविधो नियम इत्यर्थः। **चस्त्वर्थे**। तदुक्तं- 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चाऽन्यत्र च प्राप्तौ परिसङ्ख्येति गीयते'इति। **आर्थान्यनिवृत्तेः**-आर्थ्या अन्यनिवृत्तेः। यथा व्रीहीनवहन्तीत्यत्र व्रीह्यवहननमवहननातिरिक्तेन नखविदलनादिना वितुषीकरणं निवर्त्तयति।

**अभेदं**-नियमपरिसङ्ख्ययोरभेदम्। तदाश्रयणे चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः। **येत्विति**। शाब्दान्यनिवृत्तिसम्पादनाय क्लिश्यन्त इत्यर्थः। **सा**-लक्षणा। **तेषां**-तन्मते। 'पञ्च पञ्चनखातिरिक्ता भक्षत्वाऽभावन्त' इति शाब्दबोधाच्छाब्दान्यनिवृत्तेः सम्भवेऽपी'ति शेषः।

**अस्यैव**-उक्तार्थस्यैव। **विरोधश्चेति**। गम्यतेपदस्वारस्येन तादृशार्थस्याशाब्दत्वस्यैव लाभात्तद्भाष्यविरोधस्तन्मते स्पष्ट इत्यर्थः। **सैव**-लक्षणैव। **अभियुक्तोक्तीति**। अन्यनिवृत्तेस्तन्मते शाब्दत्वेन फलत्वोक्तेरयुक्तत्वादित्याशयः। नन्वेवं पञ्चपञ्चनखातिरिक्तभक्षणे दोषो न लभ्येतेति सकलस्मृतिसिद्धान्तविलोपापत्तिरत आह-**सिद्धस्येति**। रागप्राप्तस्येत्यर्थः। **पुनरिति**। 'पञ्च पञ्चनखा'इत्यनेन पञ्चपञ्चनखभक्षणस्य पुनर्विधानादित्यर्थः। **प्रापकप्रमाणस्य**-रागादेः। **इतरेति**। पञ्चपञ्चनखारिक्ताऽविषयत्वरूपेत्यर्थः। **तेन**-तथा सङ्कोचेन। **अन्येषां**-पञ्च पञ्चनखातिरिक्तानाम्। **सोऽपि**-

## ❀ शब्दकौस्तुभः ❀

बाल्यावस्थायां व्याकरणपाठात्प्रयोजनप्रश्नविरहे तत्प्रतिपादनमपि न कर्त्तव्यमेवेति। यद्यपि **'श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान्। ततः परं तु च्छन्दांसि शुक्लेषु नियतः पठेत्। वेदाङ्गानि रहस्यं च कृष्णपक्षेषु सम्पठे'**दिति **मनु**वचनस्य, 'अत ऊर्ध्वमनध्यायेष्वङ्गान्यधीयीते'त्यादिस्मृत्यन्तराणां च पर्यालोचनया वेदवेदाङ्गाध्ययनसमकालता लभ्यते तथापि ऋषिवचनत्वाऽविशेषाद्भाष्यकारोक्तेर्मानवादेश्च व्रीहियववद्विकल्प एवेति तत्त्वम्। तदेवमनुबन्ध-

१ 'पाक्षिकप्राप्तिकाऽप्राप्तांश' पा०।

२ 'रूपे'ति कचिन्न।

एवकारार्थ इति तु सामान्यप्रमाणसङ्कोचफलितमर्थमादाय नेयम्। **भक्ष्यनियम इति**। भक्ष्यानुमतिरूप उपदेश इत्यर्थः।

[ प्रश्नवादिन **आक्षेप**भाष्यम् ]

**किं पुनरत्र ज्यायः ? ॥**

**( प्रदीपः ) किं पुनरिति ।** उभयोपदेशाद्गुरोर्द्वावपि प्रशस्यौ, तयोः को ज्यायानित्यर्थः ।

[ सिद्धान्तिनः **समाधान**भाष्यम् ]

**लघुत्वाच्छब्दोपदेशः । लघीयाञ्छब्दोपदेशो गरीयानपशब्दोपदेशः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद्यथा–'गौ'रित्यस्य शब्दस्य–गावीगोणीगोतागोपोतलिकेत्येवमादयोऽपभ्रंशाः । इष्टान्वाख्यानं खल्वपि भवति ॥**

**( प्रदीपः ) इष्टेति ।** साधुशब्दप्रयोगाद्धर्मावाप्तिरित्यर्थः । अथवा उपादेयोपदेशात्साक्षात्प्रतिपत्तिर्भवतीति भावः ।

---

❀ **राजलक्ष्मीः** ❀

एवकारोऽपि । **इति तु**–इत्यभियुक्तव्यवहारस्तु । **नेयं**–सङ्गमनीयम् । **( भाष्ये– ) ज्यायः**–नितरां श्रेष्ठमुपदिष्टम् ।

**( प्रदीपे– ) गुरोरिति**। गुरुभूतादुभयोपदेशादित्यर्थः । **द्वावपि**–शब्दोपदेशापशब्दोपदेशौ द्वावपि प्रत्येकम्। **तयोः**-तयोरपि मध्ये । **ज्यायान्**–अतिशयेन श्रेष्ठः ।

**( भाष्ये– ) शब्दोपदेशः**–गवादिसाधुशब्दोपदेशः। ज्यायानितिशेषः । ज्यायस्त्वञ्च तेषामल्पीयस्त्वादेवेति स्फुटीकुर्वन्नाह–**एकैकस्येति** । शब्दोपदेशे साक्षादिष्टसाधनतामाह–**इष्टेति** । तस्यैव धर्मजनकत्वादिति भावः ।

**खल्वपि**–निश्चयेन । 'साधुशब्दोपदेशे' इति शेषः ।

**( प्रदीपे– ) उपादेय इति** । ग्राह्यसाधुशब्देत्यर्थः ।

---

❀ **शब्दकौस्तुभः** ❀

चतुष्टयस्य सुस्थत्वात्साधुशब्दव्युत्पादनं कर्त्तव्यमिति स्थितम्।

ननु किमिदं साधुत्वम् ? । साधयति बोधयतीति व्युत्पत्त्या बोधकत्वं तदिति चेन्न; गाव्यादावपि तत्सत्त्वात् । शक्तत्वं तदिति चेन्न; पचतीत्यादौ विकरणानामसाधुतापत्तेः, तेषामनर्थकत्वात् । डुपचष्लट् इत्यादीनां साधुतापत्तेश्च । तेषामपि लक्ष्येऽर्थेऽशक्तेः । क चिच्छक्ततायास्तु अश्वाऽस्वादिष्वतिप्रसक्तेः । वृत्तिमत्त्वं तदिति चेन्न; द्योतकेषु निपातेष्वव्याप्तेः । औपसन्दानिकी शक्तिरेव द्योतनेति चेत्, प्रोत्तरजित्वघोत्तरटत्वयोरविशेषेण विनिगमनाविरहाच्छक्ततापत्तौ व्यासज्यवृत्तिशक्तौ विश्रान्तेः । ततश्च अट्द्विर्वचनाद्यव्यवस्थापत्तिः । न च जातिविशेष एव साधुतेति वाच्यम्, कत्वादिना सङ्करापत्तेरिति । अत्राहुः–'**अनपभ्रष्टताऽनादिर्यद्वाभ्युदययोग्यता । व्यक्तिक्रियाव्यञ्जनीया वा जातिः काऽपीह साधुता॥**'**इति**। अस्यार्थः–शक्तिवैकल्यादिप्रयुक्तमन्यथोच्चारणमपभ्रष्टता । तद्विरहोऽनपभ्रष्टता । सैव साधुता। सा चार्थविशेषान्तर्भावेणैव । तथाहि यमर्थं शक्त्या लक्षणया वा बोधयितुं द्योतयितुं वा यादृक्शब्दोऽनादिः प्रयुक्तस्तस्मिन्नर्थे दोषादन्यथात्वं प्राप्तः सोऽसाधुः, अन्यथा तु साधुरिति । येपि गाव्यादिष्वेव प्रथमं व्युत्पन्नाः सन्तस्तान्प्रयुञ्जते तेषामप्यन्यथोच्चारणमस्त्येव । तत्र च दोषप्रयोज्यताऽस्त्येव, मूलप्रयोक्तुर्भ्रमाद्यन्यतमत्वात् । यद्वा–अनादिता साधुता । अनादिरिति तु श्लोके भावप्रधानो निर्देशः । आदेरभावोऽनादिरिति वा । असन्देह इतिवत्तत्पुरुषः । अभ्युदययोग्यता वाऽस्तु साधुता । रत्नतत्त्ववच्छास्त्रपरिशीलनशालिभिर्गम्यो जातिविशेषो वेति । यत्तु जातिसङ्कर इत्युक्तं, तन्न, गुणगतजातौ तस्याऽदोषत्वात् । तथाहि–यस्य देवदत्तादेरनोष्ठ्या वर्णा एव पूर्वं श्रुतास्तस्य कुड्यादिव्यवहितस्य ओष्ठ्यवर्णेषु श्रुतेषु यदनुमानं जायते तदोष्ठ्यानोष्ठ्यसाधारणतदनुमापकजात्यङ्गीकारे सत्येव घटते न तु तत्तद्व्याप्यनानाजातिस्वीकारे । ओष्ठ्यवर्णवृत्त्यसाधारणजातेः प्रागगृहीतत्वेनाऽनुमितिसामग्रीवैकल्यात्। वस्तुतस्तु उपाधिसङ्करवदेव जातिसङ्करोपि सर्वत्रास्तु, दूषकताबीजाऽनिरुक्तेः । विनिगमकाऽभावेन भूतत्वमूर्त्तत्वयोरिव शरीरत्वपृथिवीत्वयोर्द्वयोरपि जातित्वभङ्गापत्तेश्च । तस्माच्चतुर्विधमपि साधुत्वं निर्दोषं व्याकरणैकगम्यञ्च । एवमसाधुत्वमपि चतुर्द्धा । अपभ्रष्टता, सादिता, प्रत्यवाययोग्यता, तदवच्छेदकजातिविशेषो वेति । टिघुभादिसंज्ञासु यद्यपि पुण्यपापजनकतारूपे साधुत्वासाधुत्वे न स्तस्तथापि अनपभ्रष्टत्वरूपं साधुत्वमस्त्येव । तदेवानुशासनप्रवृत्तावुपयोगि, भस्येत्यादिसौत्रनिर्देशात्, 'कुत्वं कस्मान्न भवती'त्यादिभाष्याच्चेत्याहुः । एवं चानादित्वमभ्युदययोग्यत्वं वा अनपभ्रष्टतामात्रेण न सिध्यति, किन्तु पौरुषेयसङ्केतविरहविशिष्टेनेत्यवधेयम् । तदेतदुक्तम्–'**यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः । कथं नु तासां साधुत्वं नैव ताः साधवो मताः । अनपभ्रंशरूपत्वाञ्चाप्यासामपशब्दता । हस्तचेष्टा यथा लोके तथा सङ्केतिता इमाः**'। ततश्च,–**नासां प्रयोगेऽभ्युदयः प्रत्यवायोपि वा भवेत् । लाघवेनार्थबोधार्थं प्रयुज्यन्ते**

---

१ भाष्यवार्त्तिकमेतदिति **गौडाः** । 'च्छब्दोपदेश एव ज्यायान्' पा० । २ 'गाव्यादयोऽप' पा० ।

[ शब्दोपदेशे प्रकारविशेषजिज्ञसयाऽऽक्षेपभाष्यम् ]

**अथैतस्मिञ्शब्दोपदेशे सति किं शब्दानां प्रतिपत्तौ प्रतिपदपाठः कर्तव्यः ? । गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इत्येवमादयः शब्दाः पठितव्याः ? ॥**

( उद्योतः ) भाष्ये–**प्रतिपत्तावित्यस्य**–उपायभूत इति शेषः ।

[ सिद्धान्तिनः **समाधान**भाष्यम् ]

**'ने'त्याह । अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः ! एवं हि श्रूयते–'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम' । बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालो, नचान्तं जगाम । किं पुनरद्यत्वे[2] ! यः सर्वथा[3] चिरं जीवति वर्षशतं जीवति । चतुर्भिश्च प्रकारैर्विद्योपयुक्ता[4] भवति–आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति । तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात् ! । तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः ।**

( प्रदीपः ) **बृहस्पतिरिन्द्रायेति** । प्रतिपदपाठस्याऽशक्यत्वं प्रतिपादयितुमयमर्थवादः । **शब्दानामिति** । शब्दपारायणशब्दो योगरूढः

❀ राजलक्ष्मीः ❀

( **भाष्ये-** ) **अथेति** । अथशब्द आनन्तर्ये । अथकिमिति निपातसमुदायः प्रश्ने इत्यन्ये । **एतस्मिन्**–लघीयसि समुचिते च । **शब्दोपदेश इति** । साधुशब्दोपदेशे कर्त्तव्यतया व्यवस्थापिते सतीत्यर्थः । **प्रतिपत्तौ**–प्रतिपत्त्यर्थम् । **प्रतीति** । पदं पदं प्रतीति प्रतिपदं, प्रतिपदं पाठः–प्रतिपदपाठः । पदस्य पदस्य पाठ इत्यर्थः । प्रत्येकं साधुगवादिपदानांपाठः कर्त्तव्य इति यावत् । प्रष्टैव प्रतिपदपाठस्य स्वरूपमुपदर्शयति–**गौरिति । आहेति** । गोनर्दीयो भाष्यकारो नेत्युत्तरमत्राहेत्यर्थः । नैतन्मम मतमित्यर्थः । कुत एतदत आह–**अनभ्युपाय इति । एष प्रतिपदपाठः**-गौरश्व इत्यादिप्रतिपदपाठः । **श्रूयते**–श्रुतौ पठ्यते । **दिव्यमिति** । दिव्यवर्षसहस्रं यावत् । मनुष्याणामेकं वर्षं देवानामेकोऽहोरात्रः । तादृशैः ३६० दिनैश्च दैवं वर्षं, तेषां सहस्रं च मानुषाणां ३६००००० वर्षाणि ज्ञेयानि । **बृहस्पतिः**–सकलशास्त्रपारज्ञो देवगुरुः । **इन्द्राय**–चतुर्दशभुवनाधिपतये सर्वसमृद्धिसम्पन्नाय महेन्द्राय । **प्रतिपदोक्तानां**–गवादिनाम् । **शब्दपारायणं**–तन्नाम्ना प्रसिद्धं शब्दसङ्ग्रहरूपं ग्रन्थविशेषम् । **अन्तं**–शब्दानामन्तम् । **बृहस्पतिश्च**–साक्षात्सुरगुरुश्च । **इन्द्रश्च**–साक्षाद्देवराजश्च । **नच**=नैव । **अद्यत्वे**–सम्प्रति । तादृशानां गुरुशिष्यकालानां सर्वथाऽसम्भवादिदानीं तेषां समाप्तिः सर्वथा न सम्भाव्यते इत्याशयः । **सर्वथा**–नितान्तम् । महता पुण्येन नानोपायैश्च कथङ्कथमपि । **चिरं**–बहुकालम् । **वर्षशतम्**–वर्षाणां शतमेव । **च**–किञ्च । **प्रकारैः**=मार्गैः । विशेषैः । **विद्या**–शास्त्रम् । **उपयुक्ता**-सफला । **आगमकालः**–अध्ययनकालः । **तत्र**–चतुर्णां कालानां मध्ये । **अस्य**–अध्येतुः । **आगमनकालेनैव**–अध्ययनकालेनैव । **पर्युपयुक्तं**–व्यतीतम् । **तस्मादिति** । यतोऽध्ययनकालेनैवच्छात्राणां कृत्स्नस्यायुषः प्रतिपदपाठे क्षयस्तस्मादित्यर्थः । **अनभ्युपायः**–उचित उपायः । श्रेष्ठो मार्गः ।

( **प्रदीपे-** ) **अयं**–बृहस्पतिरिन्द्रायेत्यादिश्रुत्युक्तः । **शब्दपारायणेति** । शब्दानां पारमयते गच्छति येन तच्छब्द-

❀ शब्दकौस्तुभः ❀

**तु केवलम्'**॥ इति । तदयं निर्गलितोर्थः,–**यास्त्वेताःस्वेच्छया संज्ञाः** क्रियन्तइति पक्षे, **'अनिदंप्रथमाः शब्दाः साधवः परिकीर्तिताः । त एव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिताः पुम्भिरपशब्दा इतीरिताः ॥'** इति च साध्वसाधुलक्षणे आश्रीयमाणे टिघुभादीनां साध्वसाधुबहिर्भावः स्पष्ट एव । तेषामप्यनादितेति पक्षे तु चतुर्विधापि प्रागुक्ता साधुतास्त्येव । उक्तञ्च–**'व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित् । नित्यएव तु सम्बन्धो डित्थादिषु गवादिवत् ॥ वृद्ध्यादीनां च शास्त्रेऽस्मिञ्छक्त्यवच्छेदलक्षणः । अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यवत् ॥'** इति । पक्षद्वयेप्यनुशासनविषयता निर्विवादेति । नामकरणे त्वयं विशेषः,–'कृतं कुर्यान्न तद्धित'मित्यादिगृह्यसूत्राऽविरोधिनामेव साधुता । तद्विरोधिनां तु देशभाषानुसारेण क्रियमाणानां कूचीसश्चोत्यादिनामधेयानामसाधुतैव । तदेतदॢक्सूत्रे वार्तिकव्याख्यावसरे स्फुटीकरिष्यते॥ ❀**इति साधुत्वनिर्वचनम्**❀

व्युत्पादनं च प्रकृतिप्रत्ययादिकल्पनया उत्सर्गापवादरूपलक्षणैरेव, न तु साध्वसाध्वोर्वा अन्यतरस्य वा प्रतिपदपाठेन । शब्दानामानन्त्येन तदसम्भवादित्युक्तम् । स्यादेतत् ।

१ भाष्यवार्त्तिकमिदमिति गौडाः ।
२ इदं मध्यमणिन्यायेनोभयत्रान्वेति ।
३ 'सर्वश्चिरं' पा. । सर्वेभ्यश्चिरमिति तदर्थः ।
४ 'उपयुज्यते' पा. । ५ 'अद्यक्यताम्' पा० ।

शास्त्रविशेषस्य। तत्र 'प्रतिपदोक्ताना'मिति विशेषणाभिधानाय गम्यमानार्थस्यापि 'शब्दाना'मित्यस्य प्रयोगः ॥ एकदेशोपयोगादपि लोके 'उपयुक्त'मित्युच्यते, यथौषधसंस्कृतघृतमात्रैकदेशोपयोगे 'उपयुक्तं घृत'मिति व्यवहारः, तथेह नेति प्रतिपादयति–**चतुर्भिरिति । आगमकालो**–ग्रहणकालः । **स्वाध्यायकालो**ऽभ्यासकालः। **प्रवचनकालो**ऽध्यापनकालः । **व्यवहारो**–याज्ञे कर्मणि ॥

**( उद्द्योतः ) अनभ्युपाय इति।** तत्त्वं चाशक्यत्वेन कृत्स्नाभिमतानभ्युपायत्वात् । तत्रार्थवादमाह–**बृहस्पतिरिति।** ननु 'शब्दाना'मिति पुनरुक्तमत आह–**योगरूढ इति।** अर्थपौनरुक्त्यमाशङ्क्य निराकरोति–**तत्रेति।** ननु यावदेवाऽध्येष्यते तावदेवाभ्युपयुक्तं स्यादत आह–भाष्ये **चतुर्भिरिति।** उक्तमेव तदाशयमाह–**एकदेशेत्यादि।** विद्योपयोगाधारभूतानां कालानां विद्यां प्रत्यप्याधारत्वात्। तस्य च करणत्वविवक्षा बोध्या। चतुर्षु कालेषु विद्योपयुज्यते

### ❀ राजलक्ष्मीः ❀

पारायणमिति विग्रहेण शब्दस्य प्रतिपाद्यताया लाभेऽपि तत्र शब्देषु 'प्रतिपदोक्ताना'मिति विशेषणस्य सम्बन्धं बोधयितुं पुनः 'शब्द'पदोपादानमित्याशयः ।

**तत्र**–श्रुतौ । **उपयोगे**–सेवनेऽपि । **व्यवहारः**–लोके यथा व्यवहारो भवति। **इह**–शास्त्रे। **न**–न व्यवहारः । **याज्ञे इति।** यज्ञकर्मादावूहादिषूपयोग इत्यर्थः ।

**( उद्द्योते– ) तत्त्वञ्च**–अनभ्युपायपाठत्वञ्च। 'प्रतिपादस्ये'ति शेषः । **अशक्यत्वेन**–गवादिशब्दानामानन्त्यात्प्रतिपदपाठस्याऽशक्यतया । **कृत्स्नेति ।** सकलाभीष्टसाधुशब्दप्रतिपत्त्यौपयिकत्वाभावादित्यर्थः । **तत्र**–अनभ्युपायत्वे । **अर्थपौनरुक्त्यमिति ।** शब्दपारायणमिति नाम्नैव शब्दानां प्रतिपाद्यतायाः प्रतीतेः सम्भवात्पुनः शब्दपदोपादानादर्थपौनरुक्त्यमित्यर्थः। **अभ्युपयुक्तम्**–अभीष्टसाधकम्। 'किं सकलेने'तिशेषः।

**तदाशयं**–भाष्याशयम् । ननु भाष्ये 'चतुर्भिः प्रकारै'रित्युपक्रम्य 'आगमकालेने'त्यादिना आगमकालादयश्चत्वारो विद्यायाः प्रकारा उक्तास्ते न सङ्गच्छन्ते, 'क्रिया भेदाय कालस्तु' इत्यभियुक्तोक्तेः कालस्योपयोगरूपक्रियाधार-

### ❀ शब्दकौस्तुभः ❀

लक्षणप्रणयनमपि किं जातिपक्षमाश्रित्य उत व्यक्तिपक्षम्?। आद्ये'सकृद्गतौ यद्बाधितं तद्बाधितमेवे'ति न सिध्येत्। तथाहि–

१ 'यज्ञकर्मणि' पा० ।

इति फलितोर्थः। तत्राद्ययोर्विद्यार्थ्ययं बुद्धिमानित्यादरपूर्वकमन्नवस्त्रादिलाभरूप उपयोगः। तृतीये प्रतिष्ठा सच्छिष्यलाभद्वारार्थप्राप्तिः सत्कारविशेषश्च। चतुर्थे यज्ञाद्यनुष्ठानकालेऽपशब्दप्रयोगप्रयुक्तप्रायश्चित्ताऽभावः कर्मसाङ्गता दक्षिणालाभः प्रतिष्ठा चेत्युपयोगः। तादृशश्चोपयोगः सर्वाध्ययन एव। भाष्ये–**पर्युपयुक्तमिति।** समाप्तमित्यर्थः। **पर्यवसन्न**मिति पाठान्तरम्। न चेष्टापत्तिः, विद्योच्छेदापत्तेः। कर्मसु प्रायश्चित्तविधिवैयर्थ्यापत्तेश्च ॥

[ शास्त्रनिर्माणरीति**प्रश्न**भाष्यम् ]

**कथं तर्हीमे शब्दाः प्रतिपत्तव्याः ? ॥**

[ सिद्धान्तिनः **समाधान**भाष्यम् ]

**किंचित्सामान्यविशेषवल्लक्षणं[२] प्रवर्त्यम्। येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन् ॥**

**किं पुनस्तत् ? ॥ उत्सर्गापवादौ । कश्चिदुत्सर्गः कर्त्तव्यः, कश्चिदपवादः ॥**

त्वेऽपि विद्याधारत्वासम्भवादित्यत आह–**विद्योपयोगेति। आधारत्वादिति।** परम्परया विद्यां प्रत्याधारतयेत्यर्थः। 'विद्यां प्रति कालस्य प्रकारताश्रयणं भाष्ये'इति शेषः। **तस्य**–आधारभूतस्यापि-कालस्य च । **तत्र**–चतुर्णां मध्ये । **आद्ययोः**–आगमकालस्वाध्यायकालयोः । 'आदरपूर्वक'मित्यस्य 'यजमानैरन्नादिदाना'दितिशेषः । उपयोगः–फलम् । 'विशेषश्चे'त्यस्य 'विद्याया उपयोग'इत्यनुषङ्गः । कृत्स्नस्यायुष एकस्मिन्नेव समाप्ताविष्टापत्तिं परिहरति–**न चेति। विद्योच्छेदेति।** फलाभावेन विद्याविलोपापत्तेरित्यर्थः। **कर्मस्विति।** ग्रहणकालेनैव सर्वेषां कृत्स्नस्यायुषो विगमात्कर्माऽनुष्ठानस्यैवाऽभावादपशब्दोच्चारणादिप्रायश्चित्तादिविधीनां वैयर्थ्यमित्याशयः।

**( भाष्ये– ) इमे**–साधवः शब्दाः। **प्रतिपत्तव्याः**–स्वरूपतोऽपि येषां परिगणनमशक्यं कथं ते शास्त्रेण प्रतिपत्तव्याः?। **किञ्चित्**–लघुभूतम्। **लक्षणं**–व्याकरणशास्त्रम्। **प्रवर्त्यं**–विरचनीयम्। **अल्पेन**–लघुभूतेन। **यत्नेन**–व्याकरणशास्त्ररूपेण यत्नेन। **महत इति।** 'नित्यवीप्सयो'रिति वीप्सायां द्वित्वम्। **तत्**–सामान्यविशेषयोः स्वरूपम्। **किं पुनः**–कीदृशन्तावत्। कीदृशौ सामान्यविशेषाविति यावत्। **कश्चिदिति।** व्याकरणशास्त्रे कश्चिद्योगः–उत्सर्गः कर्त्तव्य इत्यर्थः। **अपवाद** इत्यस्य 'कर्त्तव्य'इत्यनुषञ्जनीयम्।

जातौ पदार्थे द्वयोर्विध्योः परस्परपरिहारेण तत्तज्जात्याक्रान्तव्यक्तिविशेषे चरितार्थयोः कच्चिदेकत्र प्रसङ्गे परस्परप्रतिबन्धादप्रतिपत्तिरेव स्यात्, सत्प्रतिपक्षवत्। तथा च वक्ष्यति–'अप्र-

२ मतुप्प्रत्ययान्तं क्लीबलिङ्गं लक्षणविशेषणम् ।

**( प्रदीपः ) किंचिदिति ।** सामान्यविशेषौ यस्मिंस्तत्सामान्यविशेषवत् । 'कर्मण्यण्', 'आतोऽनुपसर्गे क' इत्यादि ॥

**( उद्द्योतः )** ननु तदात्मकत्वाल्लक्षणस्य मतोरनुपपत्तिरत आह–**सामान्यविशेषाविति । लक्षणं** शास्त्रमित्यर्थः ।

[ उत्सर्गापवादस्वरूपजिज्ञासाभाष्यम् ]

**कथंजातीयकः पुनरुत्सर्गः कर्तव्यः, कथंजातीयकोऽपवादः ? ॥**

**( उद्द्योतः )** भाष्ये–**कथंजातीयक इति ।** केन प्रकारेणेत्यर्थः । एतेनैवंजातीयकेन शास्त्रेण सुशब्दोपदेशप्रवृत्तिः पाणिनेरुचितेति सूचितम् ।

[ समाधानभाष्यम् ]

**सामान्येनोत्सर्गः[1] कर्त्तव्यः । तद्यथा– 'कर्मण्यण्' ।**

**तस्य विशेषेणाऽपवादः । तद्यथा– 'आतोऽनुपसर्गे कः' ॥**

[ पदार्थनिर्णयाधिकरणे शङ्काभाष्यम् ]

**किं पुनराकृतिः पदार्थः, आहोस्विद्द्रव्यम् ? ॥**

[ सिद्धान्तिनः **समाधान**भाष्यम् ]

**'उभय'मित्याह ॥**

[ लक्षणैकचक्षुष्कस्या**क्षेप**भाष्यम् ]

**कथं ज्ञायते ? ॥**

[ एकदेशिनः **समाधान**भाष्यम् ]

**उभयथा ह्याचार्येण सूत्राणि पठितानि । आकृतिं पदार्थं मत्वा–'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्या'मित्युच्यते । द्रव्यं पदार्थं मत्वा'सरूपाणाम्–' इत्येकशेष आरभ्यते ॥**

**( प्रदीपः )** सकलशास्त्रव्यवस्थैकतरपक्षाश्रयणे न सिध्यतीति पक्षद्वयाश्रयणं प्रश्नपूर्वकं करोति–**किं पुनरिति ।** आकृतिपक्षे केवले[2] आश्रीयमाणे

❀ **राजलक्ष्मीः** ❀

**(प्रदीपे-) सामान्येति ।** सामान्यश्च विशेषश्च सामान्यविशेषाविति विग्रहः । **तत्**–पाणिनीयं व्याकरणशास्त्रम् ।

**( उद्द्योते- ) तदात्मकत्वात्**–सामान्यविशेषात्मकत्वात् । लक्षणस्य–सूत्राणाम् । **मतोः**–सामान्यविशेषवदिति मतुपः । आदिना–'इको यणचि' 'अकः सवर्णे दीर्घः' इत्यादिकं ग्राह्यम् ।

**एवंजातीयकेन**–सामान्यविशेषवता । **शास्त्रेण**–अष्टाध्यायीरूपेण पाणिनीयेन व्याकरणेन ।

**( भाष्ये- ) पदार्थ इति ।** उत्सर्गापवादसूत्रगतानां पदानां जातिरर्थो व्यक्तिर्वेति प्रश्नः । **उभयमिति ।** क्वचिदुत्सर्गापवादशास्त्रस्थपदानां जातिरर्थः, क्वचित्तु तेषां व्यक्तिरर्थः । लक्ष्यानुरोधेन जातिं व्यक्तिं वा पदार्थमाश्रित्य भगवतः पाणिनेः सूत्रं प्रवृत्तमिति सिद्धान्तिनः समाधानस्याशयः ।

**कथमिति ।** सूत्रकृतोभयं पदार्थमाश्रित्य सूत्राणि प्रणीतानीति कथं ज्ञायते इति प्रमाणजिज्ञासया लक्ष्यानुरोधिसिद्धान्त्याशयानभिज्ञस्य लक्षणैकचक्षुष्कस्य प्रश्नः । **उभयथेति । हि**-यत **आचार्येण** पाणिनिना **उभयथा**–जातिपक्षसाधकव्यक्तिपक्षसाधकस्वरूपप्रकारद्वयेन **सूत्राणि**–जात्याख्यायामिति सरूपाणामिति च सूत्रद्वयं पठितमित्यर्थः । 'सूत्राणी'त्यत्रार्षत्वाद्बहुवचनम्, अत्र सूत्रद्वयस्यैवोक्तेरिति व्याख्यातारः । **जातिमिति ।** व्यक्तेः पदार्थत्वे व्यक्तिबहुत्वादेव 'ब्राह्मणाः पूज्याः' इत्यादौ बहुवचने सिद्धे 'जात्याख्याया'मितिसूत्रं व्यर्थं स्यात् । तदारम्भाच्च जातिपक्षाश्रयेण शास्त्रं प्रणीतमिति निश्चीयते इत्यर्थः । **द्रव्यं**–व्यक्तिम् । जातेः पदार्थत्वे जातेरेकत्वेन एकशब्दप्रयोगाद्बहूनां प्रयोगस्य प्राप्तेरेवाभावादेकशेषविधायकं सरूपसूत्रं व्यर्थं स्यात् । तदारम्भात्तु व्यक्तिं पदार्थं मत्वा शास्त्रं प्रणीतमिति निश्चय इत्यर्थः । **एकशेषः**–एकशेषविधायको योगः ।

**( प्रदीपे- ) सकलेति ।** निखिलपाणिनिसूत्रव्यवस्थेत्यर्थः । **पक्षाश्रयणे**–एकतरपक्षाश्रयणे सति । **इति**–इति हेतोः । **पक्षद्वयाश्रयणं**–लक्ष्यानुरोधाद्व्यवस्थितपक्षद्वयाश्रयणम् ।

❀ **शब्दकौस्तुभः** ❀

तिपत्तिर्वोभयोस्तुल्यबलत्वा'दिति । तत्र च विप्रतिषेधसूत्रं विध्यर्थं–'परं तावद्भवती'ति । तस्मिंश्च कृते यदि पूर्वस्य निमित्तमस्ति तर्हि भवत्येव तत् । यथा 'भिन्धकी'त्यत्र भिनद्दु हि इति स्थिते परत्वाद्धिभावे कृते पुनः प्रसङ्गविज्ञानादकज्भवति । तदेवं जातिपक्षे पुनःप्रसङ्गविज्ञानं यद्यपि सिध्यति तथापि सकृद्गताविति न सिध्यति । तथा च जुहुतात्त्वमित्यत्र जुहु हि इति स्थिते धिभावं बाधित्वा परत्वात्तातङि कृते स्थानिवद्भावेन स्यादेव धिः । व्यक्तिपक्षे तु सकलव्यक्त्युद्देश्यकस्य शास्त्रस्य व्यक्त्यन्तरे चरितार्थत्वासम्भवाद्विकल्पप्रसङ्गे निय-

१ 'सामान्ये उत्सर्गः' पा. ।

२ 'केवलेपि च' पा० ।

'सकृद्गतौ विप्रतिषेध'इत्यादि नोपपद्यते, केवलेऽपि[1] व्यक्तिपक्षे 'पुनः प्रसङ्गविज्ञाना'दित्यादि न घटते। तस्माल्लक्ष्यसिद्धये क्वचित्प्रदेशे कश्चित्पक्षः परिगृह्यते । तत्र **जातिवादिन** आहुः–'जातिरेव शब्देन प्रतिपाद्यते, व्यक्तीनामानन्त्यात्संबन्धग्रहणासंभवात्। सा च जातिःसर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीत्यवसीयते। तत्र गवादयः शब्दा[2] भिन्नद्रव्यसमवेतां जातिमभिदधति । तस्यां प्रतीतायां तदावेशात्तदवच्छिन्नं द्रव्यं प्रतीयते । शुक्लादयः शब्दा गुणसमवेतां जातिमाचक्षते । गुणे तु तत्संबन्धात्प्रत्ययः, द्रव्ये संबन्धिसंबन्धात् । संज्ञाशब्दानामप्युत्पत्तिप्रभृत्याऽऽविनाशात् पिण्डस्य कौमारयौवनाद्यवस्थाभेदेऽपि 'स एवाय'मित्यभिन्नप्रत्ययनिमित्ता डित्थत्वादिका जातिर्वाच्या । क्रियास्वपि जातिर्विद्यते सैव धातुवाच्या[3] । पठति पठतः पठन्तीत्यादेरभिन्नस्य प्रत्ययस्य सद्भावात्तन्निमित्तजात्यभ्युपगमः ॥

**व्यक्तिवादिन**स्त्वाहुः–शब्दस्य व्यक्तिरेव वाच्या । जातेस्तूपलक्षणभावेनाश्रयणादानन्त्यादिदोषानवकाशः ॥

**( उद्द्योतः ) आकृतिपक्षे इति ।** तत्र उद्देश्यतावच्छेदकजात्याक्रान्ते क्वचिच्चरितार्थयोर्द्वयोः सत्प्रतिपक्षन्यायेन विरोधस्थले उभयोरप्यप्राप्तौ **विप्रतिषेधे पर**मिति विध्यर्थं न तु नियमार्थमिति **सकृद्गता**विति न सिद्ध्यति । व्यक्तौ तु तत्तद्व्यक्तिविषययोरपि शास्त्रयोरचारितार्थ्यात्पर्यायेणोभयप्राप्तौ नियमार्थं तदिति **पुनःप्रसङ्गे**त्यादि न सिद्ध्यतीत्यर्थः । इदं च **विप्रतिषेधसूत्रे** दूषयिष्यते[4] । **तस्यां प्रतीतायामिति।** शब्दशक्यत्वेन गृहीतायामित्यर्थः । एवम**भिदधती**त्यस्याभिधाविषयत्वेन गृह्णन्तीत्यर्थः । **तदावेशात्**–तत्समवायात्। **प्रतीयत इति ।** अविनाभावाच्छब्दजन्यबोधविषयो भवतीत्यर्थः । **प्रत्ययो**–ज्ञानम् । **उपलक्षणभावेनेति ।** शक्य-

❀ **राजलक्ष्मीः** ❀

**करोति**–सिद्धान्ती व्यवस्थापयति। **आश्रीयमाणे**–सर्वत्राऽत्र-शास्त्रे आश्रीयमाणे । **इत्यादि**–इतीयं परिभाषा । **केवलेऽपि व्यक्तिपक्षे**–केवले व्यक्तिपक्षे आश्रीयमाणे । **तस्मात्**–सकलशास्त्रव्यवस्थाया एकतरपक्षाश्रयणेनाऽसिद्धत्वादेव । **लक्ष्यसिद्धये**–लक्ष्यानुरोधेन । **कश्चित्पक्षः**–यथायथं जात्यादिपक्षः । **तत्र**–जातिव्यक्तिपक्षयोर्मध्ये । **जातिः**–गोत्वादिजातिः । **प्रतिपाद्यते**–गवादिशब्दैर्लाघवात्प्रतिपाद्यते । हेत्वन्तरमाह-**व्यक्तीनामिति । सम्बन्धेति ।** सङ्केतसम्बन्धेत्यर्थः। जातिसत्त्वे प्रमाणमाह-**सचेति । प्रत्ययेति ।** 'अयं गौः' 'अयं गौः' इत्यादिज्ञानेत्यर्थः । **तत्र**–द्रव्यगुणक्रियासंज्ञाशब्दानां मध्ये । **भिन्नेति ।** नाना गवादिद्रव्यैरित्यर्थः । **तस्यां**–गोत्वादिजातौ । **तदावेशात्**–तद्वैशिष्ट्यात्। तदवच्छिन्नं–जात्यवच्छिन्नम् । **द्रव्यं**–गवादिव्यक्तयः । **गुणसमवेतां जातिं**-शुक्लादिगुणसमवेतां शुक्लत्वादिजातिम् । **गुणे**–शुक्लादौ गुणे तु । **तत्सम्बन्धात्**–जातिसम्बन्धात् । **द्रव्ये**–शुक्लपटादौ तु । **सम्बन्धिसम्बन्धात्**–जात्यवच्छिन्नगुणसमवायात् । 'प्रत्यय' इत्यनुषज्यते । परे तु एवं परम्पराश्रयणे भूतलादेरपि बोधप्रसङ्ग इति चिन्त्यमिदमित्याहुः । सञ्ज्ञाशब्देषु व्यक्तेरैक्याज्जातेरसम्भवात्तत्र कथं जातिर्वाच्येत्याशङ्कायामाह–**सञ्ज्ञेति ।** डित्थादिसञ्ज्ञा( यदृच्छा )–शब्दानामित्यर्थः । अस्य 'जातिर्वाच्ये'त्यत्रान्वयः । **पिण्डस्य**–देवदत्तादेः । **सैव**–तत्तत्क्रियागतगमनत्वादिजातिरेव ।

तत्र जातिसत्त्वे मानमाह-**पठतीति । इत्यादेः**-इत्यादौ । **अभिन्नस्येति ।** 'तदेवेदं पठनं' 'सैवेयं पठनक्रिये' त्याद्यभिन्नस्येत्यर्थः । **तन्निमित्तेति ।** अभेदप्रत्ययनिमित्तगमनत्वादिजात्यभ्युपगम इत्यर्थः । **व्यक्तिरेवेति ।** वाहदोहादिसम्बन्धस्य स्वरसतो गवादिव्यक्तावेव प्रतीतेर्व्यक्तिरेव वाच्येत्यर्थः । **(उद्द्योते–) तत्र**–जातिपक्षे । **नन्विति ।** प्राप्तेरभावात् । प्राप्तौ सत्यामेव आरभ्यमाणो विधिर्नियमार्थो भवति । **तत्**–विप्रतिषेधसूत्रम् । **अविनाभावात्**–व्याप्तेः । **उपलक्षणभावेनेति ।** व्यक्तिशाब्दबोधस्य सधर्मितावच्छेदककत्वनिर्वाहाय असाधारणधर्माणां तत्प्रकारतया भानस्यावश्यकतयाऽपूर्वव्यक्तिभानोपपत्तये शक्तिज्ञाने शक्यतावच्छेदकानां तेषामनुगतेन केन चिद्रूपेण प्रवेशस्यावश्यं वक्तव्यतया गोपदादिशक्यतावच्छेदकानां सामानाधिकरण्येन

❀ **शब्दकौस्तुभः** ❀

मार्थं सूत्रं–'परमेव भवति न तु पूर्व'मिति। तथा चैतत्सूत्रबलेन तत्र पूर्वलक्षणस्य व्यक्त्यन्तरमात्रविषयकत्वं कल्प्यत इति एतद्व्यक्तिविषयकलक्षणाभाव एव पर्यवस्यति । तथा च जुहुतात्त्वमित्यादेः सिद्धावपि भिन्धकीत्यादि व्यक्तिपक्षे न सिध्यति। तस्मादशक्यमन्यतरपक्षाश्रयणेन लक्षणप्रणयनमिति चेत्, सत्यम्; अत एव लक्ष्यानुरोधात्पक्षद्वयमप्याश्रीयते–क्वचित्कश्चित्पदार्थ इति । तत्र **जातिवादिना**मयं भावः–लाघवाज्जातिर्वाच्या, व्यक्तीनामानन्त्येन तासां वाच्यत्वे गौरवम् । वाहदोहाद्यन्वयस्तु लक्षितायां व्यक्ताविति । **व्यक्तिवादिनस्त्वाहुः,**–अनुपपत्तिं विनापि व्यक्तिप्रतीतेरनुभवसिद्धतया व्यक्तिरेव वाच्या । 'त्व'प्रत्ययादिकं विना जातेः प्राधान्येना-

१ 'केवले' पा० । २ 'शब्दा भिन्ना भिन्न' पा० । ३ 'अभिधेया' पा० । ४ 'निरूपयिष्यते' पा० ।

तावच्छेदकत्वेनेत्यर्थः । तत्र तु न शक्तिरिति मञ्जूषायां प्रतिपादितम् ।

भाष्ये–**जात्याख्यायामिति ।** व्यक्तौ पदार्थे 'संपन्ना व्रीहय' इति व्यक्तिबहुत्वाद्बहुवचनं सिद्धमेवेति व्यर्थं तत्स्यादिति भावः । **सरूपाणामिति ।** आकृतेरेकत्वादेवैकशब्दप्रयोगोपपत्तौ तदुक्तिसंभवो व्यक्तिपक्ष एवेति भावः । न चाकृतिपक्षेऽपि 'अक्षाः' 'पादा' इत्याद्यर्थं स आवश्यक इति वाच्यम्, तावतीषु काश्चिदेकां जातिं स्वीकृत्य तस्या एव शब्दवाच्यत्वं, परम्परयाऽत्रे व्यक्तिप्रत्यय इति **सरूपसूत्रे** कैयटेनैव वक्ष्यमाणत्वात् । **'जातौ न जाति'**रिति परेषां दर्शनं नाऽस्माकमिति च तत्रोक्तम् ॥

[ शब्दनित्यत्वाऽनित्यत्वविचारे **आक्षेप**भाष्यम् ]

**किं पुनर्नित्यः शब्दः, आहोस्वित्कार्यः?।**

**( प्रदीपः ) किं पुनरिति ।** विप्रतिपत्त्या संशयः । **केचि**द्ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमाहुः । **अन्ये** वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति । वाक्यस्फोट**मपरे** सङ्गिरन्ते ।

### ॐ राजलक्ष्मीः ॐ

गोत्वादेरशक्यस्यैवाऽनुगमकत्वेनाश्रयणमिति भावः । **तत्र तु**–शक्यतावच्छेदकीभूतायां जातौ तु ।

**सः**–एकशेषविधिः । सरूपाणामिति सूत्रमिति यावत् । **तावतीषु**–नानाऽक्षगतासु नानाऽक्षत्वादिजातिषु । **तस्याः**–नानाक्षत्वगताया एकस्या एवाक्षत्वत्वजातेः । **शब्दवाच्यत्व**मित्यस्य 'स्वीक्रियते' इतिशेषः । **परम्परयेति ।** तदाश्रयाश्रयत्वादिना सम्बन्धेनेत्यर्थः । ननु अक्षत्वजातौ कथमेकाऽक्षत्वत्वजातिः शक्या स्वीकर्त्तुं, जातौ जातेरनङ्गीकारादत आह–**जाताविति । परेषां**–तार्किकाणाम् । **दर्शनं**–मतम् । **तत्र**–सरूपसूत्रे । **उक्तं**–कैयटेनोक्तम् ।

### ॐ शब्दकौस्तुभः ॐ

ऽप्रतीतेश्च । वाहाद्यन्वयोऽप्येवं समञ्जसः । यत्तूक्तं व्यक्तीनामानन्त्यमिति; नैतद्बाधकम् । शक्यतावच्छेदिकाया जातेरैक्यात् । नन्वेवं जातेरपि वाच्यत्वमायातमिति चेन्न; अकार्यत्वेपि कार्यतावच्छेदकत्ववदशक्तत्वेपि शक्यतावच्छेदकत्वसम्भवात् । अत एव लक्ष्यतावच्छेदके लक्षणा नेति नैयायिकाभ्युपगमः । तस्माज्जातिरुपलक्षणं; व्यक्तिमात्रं तु वाच्यमिति । यत्तु सरूपसूत्रे भाष्ये वक्ष्यते–'नह्याकृतिपदार्थकस्य द्रव्यं न पदार्थ' इत्यादि; तत्तु जातिव्यक्त्योरन्यतरेण विशिष्टस्याऽपरस्य वाच्यतेत्येवंरूपं मतान्तरम् । तथा चाकृत्यधिकरणे **भट्टै**रुक्तम्–

**'नियोगेन[२] विकल्पेन[३] द्वे वा सह समुच्चिते[४] ।**
**सम्बन्धः[५] समवायो[६] वा विशिष्टा[७] वैकयेतरा ॥'** इति ।

१ 'अत्रे' ति क्वचिन्न ।

**अन्ये** तु ध्वनिरेव शब्दः स च कार्यस्तद्व्यतिरेकेणाऽन्यस्याऽनुपलम्भादित्याचक्षते ॥

**( उद्द्योतः ) विप्रतिपत्त्येति ।** शब्दानां नित्यत्वे व्यर्थं व्याकरणशास्त्रमिति प्रश्नाशयः । **केचित्**–मीमांसकाः । **वर्णात्मकमिति ।** पदवाक्ये च वर्णसमूहरूपे एवेति तदाशयः। अत्र मते 'एकं पटपद'मित्याद्यनुपपत्तेराह–**अन्ये** वैयाकरणाः । **अपरे**–त एव मुख्याः । पदे वर्णानामिव वाक्ये पदानां कल्पितत्वात् । तेषामर्थवत्त्वमपि काल्पनिकमिति वाक्यस्यैव शब्दत्वमिति तद्भावः । **अन्ये त्विति ।** वैशेषिकादयः । **ध्वनिरिति ।** स च वर्णाऽवर्णात्मकत्वेन द्विविधः । एवं च कण्ठादिवच्छास्त्रमपि तस्य कारणमित्याशयः ।

[ **सिद्धान्तिनः** समाधानभाष्यम् ]

**सङ्ग्रह एतत्प्राधान्येन परीक्षितम्–'नित्यो वा स्यात्कार्यो वे'ति । तत्रोक्ता दोषाः, प्रयोजनान्यप्युक्तानि । तत्र त्वेष[१] निर्णयः–'यद्येव नित्योऽथापि कार्यः, उभयथाऽपि लक्षणं प्रवर्त्य'मिति ॥**

**( प्रदीपे- ) विप्रतिपत्तिः**–विरोधः । विरुद्धनानाकोट्युपस्थानात्संशय इति यावत् । विप्रतिपत्तिमेव दर्शयति–**केचिदिति । ध्वनीति ।** ककारादिध्वनिव्यङ्ग्यम् । **वर्णात्मकं**–वर्णस्फोटम् । **सङ्गिरन्ते**–वदन्ति । **ध्वनिः**–वर्णः । **कार्यः**–अनित्यः । **तद्व्यतिरेकेणेति ।** तद्भिन्नस्य नित्यस्य स्फोटस्यानुपलम्भादित्यर्थः । **( उद्द्योते- ) तदाशयः**–मीमांसकाशयः । **अत्र मते**–मीमांसकमते । 'अन्ये'इत्यस्य 'इती'तिशेषः । **त एव**–वैयाकरणा एव । **तद्भावः**–वाक्यस्फोटवादिनामाशयः । **वर्णावर्णेति ।** व्यक्ताव्यक्तेत्यर्थः ।

**( भाष्ये- ) तत्रतु**–सङ्ग्रहे एव । **यद्येव** यद्यपि । नित्यो वा भवतु कार्योवा भवत्विति यावत् । **उभयथाऽपि**–

तत्र जातिरेव व्यक्तिरेव वा वाच्येति इहत्यं मतद्वयं 'नियोगेने'त्यनेनोपनिबद्धम् । चतुर्थचरणेन तु सरूपसूत्रोक्तं मतद्वयमुपनिबद्धमिति विवेकः । यद्यपि जातिव्यक्तिपक्षयोरन्यतरस्य न्यायेन बाध आवश्यकस्तथापीह शास्त्रे संज्ञापरिभाषादिवलक्ष्यसिद्ध्युपायतया उभयाश्रयणे किमपि बाधकं नास्तीत्यवधेयम् । वस्तुतस्तु भट्टोक्ताष्टपक्षीमध्ये विकल्पेनेति तृतीयः पक्षोऽत्र प्रक्रियादशायां स्थितः । विकल्पश्च लक्ष्यानुरोधाद्व्यवस्थितो न त्वैच्छिक इत्यन्यदेतत् । समुच्चयपक्षं चतुर्थमाश्रित्यापि क्वचित्कस्य चिद्विवक्षा अपरस्य त्वविवक्षेति गृहीत्वा प्रक्रियानिर्वाहः सुकर इति दिक् ।

'यदि हि व्यक्तिरेवेत्येतत्सार्वत्रिकमभिमतं स्यात्तर्हि जात्याख्यायामिति सूत्रं नारभेत । यदि च जातिरेवेति तर्हि सरूप-

२ 'तत्राप्येप' पा० ।

(प्रदीपः) **सङ्ग्रह इति**। ग्रन्थविशेषे॥

(उद्द्योतः) **सङ्ग्रहो** व्याडिकृतो लक्षश्लोकसङ्ख्यो ग्रन्थ इति प्रसिद्धिः। भाष्ये-**उभयथापीति**। एवं च निष्फलोऽयं विचार इति भावः। साधुत्वज्ञानाय उभयथापि शास्त्रमावश्यकमिति तात्पर्यम्।

[शास्त्रस्य धर्मजनकताधिकरणे **आक्षेप**भाष्यम्]

**कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्?॥**

(प्रदीपः) **कथं पुनरिति**। किमाचार्य एव स्रष्टा शब्दार्थसंबन्धानाम्, अथ स्मर्तेति प्रश्नः।

(उद्द्योतः) अथ पाणिनिसूत्रव्याख्यानभूतं वार्तिकमवतारयति-**कथं पुनरिति**। अत एवात्रैव पाणिनिनामग्रहणम्। इतः पूर्वं तु सवार्तिकशास्त्रान्वाख्यानप्रयोजनविषयप्रदर्शनपरो भाष्यकारस्यैव ग्रन्थ इति बोध्यम्। **शब्दार्थसंबन्धानामिति**। शब्दाश्चार्थाश्च संबन्धाश्चेति द्वन्द्वः। एवं च

❀ **राजलक्ष्मीः** ❀

पक्षद्वयेऽपि। **लक्षणं**-शास्त्रम्। सूत्राणीति यावत्। **प्रवर्त्यं**-साधुत्वज्ञानाय करणीयम्। तत्र तत्र प्रसक्तानां दोषाणां प्रतिविधानस्य कर्तुं शक्यत्वादित्याशयः।

(उद्द्योते-) **एवञ्च**-उभयथा शास्त्रारम्भस्यावश्यकत्वे च। **अयं**-नित्यो वाऽनित्यो वेत्ययं विचारः।

ननु तदारम्भावश्यकतानिश्चयः कथमत आह-**साधुत्वेति**। **तात्पर्यं**-भाष्यकृतोऽभिप्रायः। सङ्ग्रहकृतो व्याडेराशय इतिवाऽर्थः।

(भाष्ये-) **इदं लक्षणं**-शब्दानुशासनं नाम व्याकरणशास्त्रम्। **कथमिति**। अनित्ये वा शब्दार्थसम्बन्धे, नित्ये शब्दार्थसम्बन्धे वा प्रवृत्तमिदं शास्त्रमिति प्रश्नाशयः।

(प्रदीपे-) **आचार्यः**-पाणिनिः। **स्रष्टेति**। अनित्यत्वात्तेषामाचार्य एव तेषां स्रष्टेत्यर्थः। **अथेति**प्रश्ने पक्षान्तरे वा। **स्मर्त्तेति**। नित्यत्वात्तेषां स्मर्त्तैव केवलमित्यर्थः।

(उद्द्योते-) **पाणिनीति**। अष्टाध्यायीव्याख्यानेत्यर्थः। **अतएव**-पाणिनिसूत्रव्याख्यानभूतत्वादेव। **सवार्त्तिकशास्त्रेति**। शब्दानुशासनशास्त्रेत्यर्थः। **प्रयोजनेति**। सवार्त्तिकशास्त्रान्वाख्यानस्य यत्प्रयोजनं विषयश्च तत्प्रदर्शनपर इत्यर्थः। **ग्रन्थ इति**। **परेतु** इतः पूर्वमपि **'अथ शब्दानुशासन'**मिति, **'रक्षोहे'**ति, **'इमानि च भूय'** इत्यादि च

❀ **शब्दकौस्तुभः** ❀

सूत्रं नारभेते'ति **भाष्यम्**। ननु यस्मिन्वने एक एवाम्रवृक्षस्तत्रापि लक्षणया जातिपरत्वे 'इह आम्राः सन्ती'ति प्रयोगं साधयितुं 'जात्याख्याया'मिति सूत्रमस्तु। तथा जातिपक्षेपि

१ अयं पाठः क्वाचित्कः।

किमपूर्वशब्दनिष्पादनद्वारार्थविशेषसंबन्धनिष्पादकत्वं शास्त्रस्य, किं वा सिद्धशब्दार्थसंबन्धबोधकत्वमिति प्रश्नार्थ इति तात्पर्यम्।

[**समाधान**वार्त्तिकप्रथमखण्डम्]

॥*॥ *सिद्धे शब्दार्थसंबन्धे* ॥*॥

[वार्त्तिकव्याख्यानभाष्यम्]

**सिद्धे शब्देऽर्थे सम्बन्धे चेति॥**

(प्रदीपः) **सिद्ध इति**। तत्र नित्यः शब्दो जातिस्फोटलक्षणो व्यक्तिस्फोटलक्षणो वा। **कार्यशब्दिका**नामपि मते प्रवाहनित्यतया। अर्थस्यापि जातिलक्षणस्य नित्यत्वम्। द्रव्यपक्षेऽपि सर्वशब्दानामसत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यमिति नित्यता, प्रवाहनित्यतया वा। संबन्धस्यापि व्यवहारपरम्परयाऽनादित्वान्नित्यता॥

त्रीणीमानि वार्त्तिकानि भगवतः कात्यायनस्यैव। शब्दानुशासनमिति चाष्टाध्याय्या मुख्यं नामान्तरम्। अत एव **ऋग्वेदभाष्ये उपोद्घाते सायणाचार्यः**-"तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्त्तिके दर्शितः" इत्याह। 'सिद्धे शब्दार्थे'त्यादिवार्त्तिकन्तु आदितश्चतुर्थं पञ्चमं वा वार्त्तिकम्। विषयप्रयोजननिरूपणानन्तरम्-पाणिनीयशब्दानुशासनव्याख्यानस्य वार्त्तिककृत्कृतस्येतएव प्रवृत्तत्वान्मङ्गलार्थं **सिद्ध**शब्दप्रयोगस्तत्रेति सर्वं समञ्जसम्। 'शब्दानुशासनमिदानीं कर्त्तव्य'मित्युक्त्या ततः पूर्वं पठितानाम**थ शब्दानुशासन**मित्यादिवार्त्तिकानां शब्दानुशासनबहिर्भूतत्वं च स्पष्टमेव भगवतोक्तम्। एवञ्चात्र कैयटहरदत्तनागेशादयः सर्वे भ्रान्ता एवेति **गौडाः**।

**तात्पर्यं**-कैयटतात्पर्यम्। एवञ्च न कैयटाऽसङ्गतिः। (**प्रदीपः**-) **शब्दः**-ध्वनिव्यङ्ग्यः। **तत्र**-नित्यत्ववादिमते। मतभेदेनाह-**जातीति**। **स्फोटलक्षण इति**। तत्स्वरूप इत्यर्थः। **कार्येति**। कार्यशब्दमाह-कार्यशब्दिकः। 'तदाहेति माशब्दादिभ्य'इति ठक्। **इति**-इतिमते। **प्रवाहनित्यतया**-अनादिव्यवहारनित्यतया। 'शब्दस्य नित्यत्व'मितिशेषः। **अर्थस्यापि**-जातिपक्षे अर्थस्य घटत्वपटत्वादेरपि च। **द्रव्यपक्षे**-व्यक्तिपक्षे। **सर्वशब्दानां**-घटपटादिशब्दानाम्। **असत्य इति**। घटत्वाद्युपाध्यवच्छिन्नं घटादिरूप-

नानार्थानुरोधात्सरूपसूत्रमस्तु। वक्ष्यति हि वार्त्तिककृत्-'व्यर्थेषु च मुक्तसंशय'मिति। सत्यम्। लक्ष्यानुरोध एव पक्षद्वयाश्रये शरणम्। अत एवोदाहृतसूत्रयोर्भाष्यकृता प्रत्याख्यास्यमानत्वेऽप्यदोषः।

( उद्योतः ) **सिद्धे शब्दार्थसंबन्धे** इति वार्तिके समाहारद्वन्द्वात्सप्तमी । संबन्धश्च प्रत्यासत्त्या शब्दार्थयोरेव । त्रयाणामात्यन्तिकाऽविश्लेषप्रदर्शनाय समाहारनिर्देश इति बोध्यम् । **व्यक्तिस्फोटेति ।** सा पदवाक्यरूपा नित्यैवेति तद्भावः । एतच्चोपपादितं प्राक् । **कार्यशब्दिकानामिति ।** 'कार्यशाब्दिकाना'मिति त्वपपाठः । उत्तरपदवृद्धेर्दुर्लभत्वात् । **असत्योपाधीति ।** जातिर्हि तन्मते आविद्यको धर्मविशेषः । यद्वा सर्वेषां धर्माणां ब्रह्मण्यध्यस्तत्वेन शुक्तिरजतादिज्ञाने शुक्त्यादीनां विशेष्यत्ववत्सर्वत्राधिष्ठानभूतं ब्रह्मैव विशेष्यम् । विशेष्यमेव च द्रव्यमिति भावः । शब्दार्थयोर्नित्यत्वपक्षे तत्संबन्धस्य नित्यत्वेऽप्यनित्यत्वपक्षे कथं संबन्धस्य नित्यत्वमत आह–**संबन्धस्येति ।** प्रवाहनित्यतया तयोरिव तस्यापि नित्यत्वमिति भावः ।

[ येतु[2] व्यक्तीनामाविद्यकत्वेन तदवच्छिन्नं ब्रह्मैव जातिरिति, तन्न; अनेकव्यक्तीनामाविद्यकानां कल्पने गौरवात् । 'अपागादग्नेरग्नित्व'मिति श्रुत्या जातेरेवाऽनित्यत्वबोधनाच्च । अतएव जातेर्व्यवहारनित्यतामाकृतेः प्रवाहनित्यतामेवाग्रे वक्ष्यति भाष्यकृत्[2] । ] । शब्दार्थयोः संबन्धश्च शक्तिरूपं तादात्म्यमेवेत्यन्यत्र प्रपञ्चितम् ।

[ वार्त्तिकस्थ**सिद्ध**शब्दार्थनिरूपणे आक्षेपभाष्यम् ]

**अथ सिद्धशब्दस्य कः पदार्थः ? ॥**

(प्रदीपः) सिद्धशब्दस्य नित्याऽनित्ययोर्दर्शनात्पृच्छति–**अथेति ॥**

( उद्योतः ) भाष्ये–**सिद्धशब्दस्य कः पदार्थ इति ।** अत्र पदार्थशब्दो रूढः । सिद्धशब्दसंबन्धी कः पदार्थ इत्यर्थः ॥

[ समाधानभाष्यम् ]

**नित्यपर्यायवाची सिद्धशब्दः ॥**

( प्रदीपः ) **नित्येति ।** नित्यलक्षणस्यार्थस्य पर्यायेण वाचकः, तमेवार्थं कदाचिन्नित्यशब्द आह कदाचित्सिद्धशब्द इत्यर्थः ॥

[ प्रश्नभाष्यम् ]

**कथं ज्ञायते ? ॥**

[ उत्तरभाष्यम् ]

**यत्कूटस्थेष्वविचालिषु भावेषु वर्त्तते । तद्यथा–सिद्धा द्यौः, सिद्धा पृथिवी, सिद्धमाकाशमिति ॥**

( प्रदीपः ) **कूटस्थेष्विति ।** अविनाशिषु । **अविचालिष्विति ।** देशान्तरप्राप्तिरहितेषु ॥

( उद्योतः ) भाष्ये–**कूटस्थेष्विति ।** कूटमयोघनस्तद्वत्तिष्ठन्ति ये तेषु । संसर्गिनाशेपि स्वयमनष्टेष्वित्यर्थः ।

## ❀ राजलक्ष्मीः ❀

मित्यर्थः । **नित्यता**–घटपटादेरर्थस्य नित्यता । **प्रवाहनित्यतया वा**–व्यवहारनित्यतया वा । 'अर्थस्य नित्यत्व' मिति शेषः । **सम्बन्धस्यापि**–शब्दार्थसम्बन्धस्यापि । **(उद्योते–) समाहारद्वन्द्वात्**–शब्दाश्चार्थाश्च सम्बन्धाश्चैषां समाहार इति विग्रहकात्समाहारद्वन्द्वात् । **सा**–व्यक्तिः । **तद्भावः**–समाधातुराशयः । **एतच्च**–जातिव्यक्तिस्फोटस्य नित्यत्वञ्च । **प्राक्**–स्फोटनिरूपणावसरे । **दुर्लभत्वादिति ।** अनुशतिकादिषु पाठाभावेनोभयपदवृद्धेरभावेनोत्तरपदवृद्धेर्दौर्लभ्यमित्यर्थः । **तन्मते**–द्रव्यनित्यतावादिवेदान्तिमते । **शुक्तीति ।** शुक्त्यध्यस्तरजतादिज्ञाने इत्यर्थः । **शुक्त्यादीनाम्**–रजताधिष्ठानभूतानां शुक्त्यादीनाम् । **इति भाव इति ।** एवञ्च द्रव्यस्य ब्रह्माऽभिन्नतया नित्यत्वं सूपपन्नमित्याशयः । **तयोरिव**–शब्दार्थयोरिव । **तस्यापि**–सम्बन्धस्यापि । प्रवाहनित्यतयैवेति शेषः । **अन्यत्र**–मञ्जूषायाम् ।

( **भाष्ये–** ) **पदार्थः**–पदस्यार्थः । सिद्धशब्दस्य कोऽर्थ इति यावत् ।

( **प्रदीपे–** ) **नित्यानित्ययोः**–वाचकत्वेनेति शेषः । नित्यानित्यार्थवाचकत्वस्येत्यर्थः ।

( **उद्योते** ) **अत्र**–भाष्ये । **रूढः**–अर्थो रूढः । एवञ्च 'शब्द' 'पद' शब्दयोर्न पौनरुक्त्यमित्याशयः ।

( **प्रदीपे–** ) तयोः पर्यायेण वाचकत्वमेव दर्शयति–**तमेवेति । सिद्ध इति ।** रूढ्येति शेषः ।

( **उद्योते–** ) **अयोघन इति ।** यत्र संस्थाप्य लौहं मुद्गरैर्लौहकारेण ताड्यते स लौहकारोपकरणविशेषोऽयोघनः । ( 'ऐरण' इति प्रसिद्धः ) । **तिष्ठन्तीति ।** प्रचलत्स्वपि विनश्यत्स्वपि च लौहमुद्गरादिषु कूटं यथा निश्चलमेव तिष्ठति तथैव निश्चला इत्यर्थः । **संसर्गीति ।**

## ❀ शब्दकौस्तुभः ❀

इदानीं वार्तिककारः शास्त्रस्य नियमविधिरूपतया सार्थक्यमाह–**'सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे धर्मनियमो यथा लौकिकवैदिकेषु' ।** लोकादेव हि प्रथमव्युत्पत्तिः । अव्युत्पन्नं प्रति व्याकरणादीनामप्रवृत्तेः । 'अर्थवदधातु' रित्यादि हि व्याकरणं शक्तिग्रहोपजीवकम् । तथा च समर्थसूत्रेपि वार्त्तिकम्–**'अर्थादेशना' दिति ।** अनेकमन्यपदार्थ इत्यादिकं हि लोक-

1 'मतें' इति क्वचिन्नास्ति ।

2 अयं पाठः क्वाचित्कः ।

नन्वयोघनस्यापि तर्हि नित्यत्वं स्यादत आह–**अविचालिष्विति**। भाष्ये द्यावापृथिव्याद्यपि व्यावहारिकनित्यत्वाभिप्रायेण दृष्टान्तितम्। आकाशस्यापि व्यावहारिकनित्यत्वमेवाचार्याभिमतम्। एवं च तत्र रूढत्वान्नित्यवाचकस्यैव ग्रहणमिति भावः।

[ **आक्षेप**भाष्यम् ]

**ननु च भोः कार्येष्वपि वर्तते। तद्यथा–सिद्ध ओदनः, सिद्धः सूपः, सिद्धा यवागूरिति। यावता कार्येष्वपि वर्तते, तत्र कुत एत'न्नित्यपर्यायवाचिनो ग्रहणं न पुनः कार्ये यः सिद्धशब्द[1]स्तस्ये'ति ?॥**

( प्रदीपः ) **ननु चेति**। सिद्धशब्दात्क्रियानिष्पन्नोऽप्यर्थोऽवगम्यत इत्यर्थः॥

[ **समाधान**भाष्यम् ]

**सङ्ग्रहे तावत्कार्यप्रतिद्वन्द्विभावान्मन्यामहे 'नित्यपर्यायवाचिनो ग्रहण'मिति॥ इहापि तदेव॥**

( प्रदीपः ) **सङ्ग्रहे तावदिति**। तत्र हि 'किं कार्यः शब्दोऽथ सिद्धः' इति पक्षद्वयविचारः कृतः। तत्र कार्यप्रतिपक्षार्थाभिधायी सामर्थ्यात्सिद्धशब्द इति स्थितम्। तत्समानतन्त्रत्वादिहापि तथैव युक्तमित्यर्थः॥

---

❀ **राजलक्ष्मीः** ❀

लौहादीत्यर्थः। **एवञ्च**–नित्यपर्यायवाचकत्वे च। **तत्र**–नित्ये। **ग्रहणमिति**। 'योगाद्रूढिर्बलीयसी'त्युक्तेः। **भावः**–समाधानभाष्याशयः।

**( भाष्ये- ) कार्येषु**–कार्यतयाऽनित्येषु। अनित्यत्वे कार्यत्वं हेतुः। **यावता**–यतः। **वर्त्तते** इत्यस्य–'अत' इति शेषः। यद्वा यत्रेत्यस्यार्थे–यावतेति विभक्तिप्रतिरूपको निपातः। **ग्रहणं**–सिद्धशब्दस्य ग्रहणम्। **कार्ये**–वाचकत्वं सप्तम्यर्थः। अनित्यवाची। 'तस्ये'त्यत्र 'ग्रहण'मित्यनुषज्यते।

**( प्रदीपे- ) तत्र हि**-सङ्ग्रहे हि। **कृत इति**।

---

❀ **शब्दकौस्तुभः** ❀

सिद्धमर्थमनूद्य साधुत्वान्वाख्यानपरम्। ततश्च लोकादेव शब्दे अर्थे तयोः सम्बन्धे च सिद्धेऽर्थबोधनाय शब्दप्रयोगेपि प्रसक्ते गवादय एव प्रयोक्तव्या न तु गाव्यादय इति

[ नियमपरकसमाधानान्तरभाष्यम् ]

**अथवा सन्त्येकपदान्यप्यवधारणानि। तद्यथा–'अब्भक्षो' 'वायुभक्ष' इति। अप एव भक्षयति, वायुमेव भक्षयतीति गम्यते। एवमिहापि सिद्ध एव, न साध्य इति॥**

( प्रदीपः ) **अथवेति**। 'एव'शब्दप्रयोगे **द्विपद**मवधारणं, द्योतकत्वेनैवशब्दस्यापेक्षणात्। यदा तु द्योतकमन्तरेण सामर्थ्यादवधारणं गम्यते तदा त**देकपद**मित्युच्यते। तत्र सर्व एवापो भक्षयन्तीत्यब्भक्षश्रुतिः सामर्थ्यान्नियममवगमयति–'अप एव भक्ष[2]यन्ती'ति। इहापि नित्यानित्यव्यतिरेकेण राश्यन्तराभावात्सिद्धशब्दोपादानान्नियमोऽवगम्यते–'सिद्ध एवे'ति। कार्याणां तु पदार्थानां प्राक्प्रध्वंसावस्थ[3]योरपि सत्त्वात्सिद्धता नास्तीति न ते सिद्धा एव॥

**( उद्द्योतः )** ग्रन्थान्तराऽनालोचनेपि नियामकमाह–भाष्ये–**अथवेति**। एतेन तत्समानतन्त्रत्वाद्व्यक्त्येकपदार्थवादोऽपि तव स्यादित्यपास्तम्। नन्वे**कपदानी**त्युक्त्वाऽ**ब्भक्ष** इत्यस्य पदद्वयात्मकस्योदाहरणत्वमसङ्गतमत आह–**एवशब्देति**। नियमप्रत्यायकसामर्थ्यं दर्शयति–**इहापीति**। कार्यवाचिन एव ग्रहणाभावे मूलमाह–**कार्याणामिति**। 'प्राक्प्रध्वंसावस्थयो'रिति पाठः। भाष्ये–**अप एवेति**

---

उपनिबद्ध इत्यर्थः। यद्वा–इति पक्षद्वयमुत्थाप्येदं वार्त्तिकमवतारितमित्यर्थः। **तत्र**–सङ्ग्रहे। **प्रतिपक्षेति**। नित्येत्यर्थः। **सामर्थ्यात्**–प्रतिपक्षभावात्। **तत्समानेति**। सङ्ग्रहतुल्येत्यर्थः। शब्दानुशासनतया तुल्यता। **तन्त्रं**–शास्त्रम्।

**( भाष्ये- ) एकपदानीति**। एकं पदं येषु तानि–एकपदानीति विग्रहः। **अवधारणानि**–अवधारणवाक्यानि। **इति**–इत्यवधारणं गम्यते।

**( प्रदीपे- )** सिद्धता–सिद्धावस्थैव।

**( उद्द्योते- ) तव**–भाष्यकृतः। **अप एवेतीति**। अप एवेत्यादीत्यर्थः। **गम्यते इतीति**। गम्यते इत्यन्तमितीत्यर्थः। **समासे**–'अब्भक्ष'इत्यादौ।

---

नियमार्थं शास्त्रम्। नियमफलन्तु धर्मः। तत्र स्मार्त्तो दृष्टान्तः–'प्राङ्मुखोऽन्नानि भुञ्जीते'त्यादिर्लौकिकशब्देनोक्तः। 'व्रीहीनवहन्ती'त्यादिश्च वैदिकशब्देनोक्तः। 'धर्मनियम' इति च षष्ठीतत्पुरुषोऽश्वघासादिवत्, न तु चतुर्थीतत्पुरुषः, प्रकृतिविकृतिभावविरहात्।

---

1 'सिद्धशब्द इति' इति पा०। 2 'भक्षयन्ती'ति क्वचिन्नास्ति। 3 'प्रागभावप्रध्वंसाभावयोः' 'प्राक्प्रध्वंसाभावयोः'पा०।

गम्यते इति। वाक्ये इव समासेऽपि सामर्थ्यात्तदतिरिक्तभक्षणाभावो गम्यत इत्यर्थः।

[ तृतीयसमाधानभाष्यम् ]

**अथवा—पूर्वपदलोपोऽत्र द्रष्टव्यः—अत्यन्तसिद्धः सिद्ध इति। तद्यथा-देवदत्तो दत्तः, सत्यभामा भामेति।**

**( प्रदीपः ) अथवेति।** कथं पुनर्देवदत्तशब्दे संज्ञात्वेन विनियुक्ते एकदेशः प्रयुज्यते। न ह्यसौ संज्ञात्वेन विनियुक्तः। नचैकदेशात्स्मर्यमाणस्य समुदायस्य वाचकत्वमुपपद्यते। प्रतीयमानस्य प्रत्यायकत्वाऽसंभवादुच्चार्यमाणस्यैव वाचकत्वात्। एवं तर्ह्यनुनिष्पादिन्योऽवयवसरूपाः संज्ञा विनियोगकाले विनियुक्ता एव। लोपस्तु वर्णानां साधुत्वं मा भूदित्यन्वाख्यायते। इहापि नित्याऽनित्ययोर्निष्पन्नत्वाऽविशेषात्सिद्धश्रुतिरुपात्ता प्रकर्षं गमयति—'अत्यन्तसिद्ध'इति।

**( उद्द्योतः ) अथवेति।** मनुष्यवृक्षाद्यपेक्षयाकाशादीनामप्यत्यन्तं सिद्धत्वमिति भावः। **प्रतीयमानस्येति।** एतदणुदित्सूत्रे उपपादयिष्यते। **एवं तर्हीति।** एवमेव 'घटपदं कलशपर्याय' इत्यादिप्रयोगाः। अन्यथा 'पर्याय-

वाची'ति प्रयोज्यं स्यात्। 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप' इति लोपविधायकं तर्हि किमर्थमत आह—**लोपस्त्विति। वर्णानाम्—**'दे'इत्यादीनाम्। तत्रापि क्वचित्पूर्वपदस्यैव, क्वचिदुत्तरपदस्यैव, क्वचिदुभयोरिति लोकव्यवहारेण निर्णेयम्, एवं वर्णानां शक्त्यभावोऽपि तत एव निर्णेय इति तत्त्वम्। **निष्पन्नत्वेति।** विद्यमानकालसंबन्धो **निष्पन्नत्वम्।**

[ न्यायानुसारिचतुर्थसमाधानभाष्यम् ]

**अथवा—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः॥**

**( प्रदीपः )** न्यायाद्वा नित्यत्वं शब्दादीनां स्थितमित्याह-**अथवेति।** नहि सन्देहमात्रादलक्षणता भवति, पुनः प्रमाणान्तरेण निश्चयोत्पादात्।

**( उद्द्योतः )** ननु निर्युक्तिकं व्याख्यानमयुक्तं, विपरीतस्यापि संभवादत आह—**न्यायाद्वेति।** वृद्धव्यवहारादेव पदार्थसंबन्धानां नित्यत्वं सङ्ग्रहादौ स्थितमिति व्याख्यानतः सिद्धशब्देन तदेवोपात्तमित्यर्थः।

[ आक्षेपभाष्यम् ]

**किं पुनरनेन वर्ण्येन? । किं न महता कण्ठेन नित्यशब्द एवोपात्तो यस्मिन्नुपादीयमानेऽसन्देहः स्यात्? ॥**

---

❀ **राजलक्ष्मीः** ❀

**( भाष्ये- )** आकाशादेरपि न वास्तवं सिद्धत्वं, सिद्धव्यवहारस्तु व्यवहारनित्यत्वादेवेति दृष्टान्ताऽसिद्धिं मनसिकृत्याह-**अथवेति। तद्यथेति।** यथा 'देवदत्त' इत्यादौ 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वक्तव्य' इति देवादेर्लोपो भवति तथेहाप्यत्यन्तपदलोपो द्रष्टव्य इत्यर्थः।

**( प्रदीपे- )** शङ्कते-**कथमिति। विनियुक्त इति।** सङ्केतित इत्यर्थः। देवदत्त इति हि सञ्ज्ञा न तु दत्त इति कथं तस्य सञ्ज्ञिबोधकतेत्याशयः। **असौ**—देवादिरेकदेशः। **विनियुक्तः**—बोधितः। सङ्केतित इति यावत्। न च—नहि। **एकदेशादिति।** देवादित 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारक'मिति न्यायेन देवदत्तादेः स्मरणादित्यर्थः। कुत एतदत आह—**प्रतीयमानस्येति। प्रतीयमानस्य**—स्मर्यमाणस्य देवदत्तादेः। **उच्चार्यमाणस्य**—देवादेः। उत्तरयति-**एवमिति।** प्रतीयमानस्य प्रत्यायकत्वाऽसम्भवेनोच्चार्यमाणस्यैव वाचकत्वे सतीत्यर्थः। **अनुनिष्पादिन्यः**—पश्चाद्भाविन्यः। अवयवसरूपाः—देवाद्यवयवसमानाकाराः। **विनियोगकाले**—सङ्केतकाले। नामादिकरणकाले पित्रादि-

नेति यावत्। **विनियुक्ताः**—देवदत्तादिषु पिण्डेषु सङ्केतिता एव। **अन्वाख्यायते**—वार्त्तिककृताऽऽरभ्यते। **सिद्धश्रुतिः**—सिद्धपदश्रवणम्। **(उद्द्योते-) एतत्**—प्रतीयमानस्याऽप्रत्यायकत्वम्। **एवमेव**—घटपदसङ्केतकाले कलसादेरपि सङ्केतितत्वेन तेषां तत्पर्यायत्वादेव। **अन्यथा**-पूर्वोक्तरीत्या तत्पर्यायत्वाभावे। **पर्यायेति।** घटशब्दार्थपर्यायकलसरूपार्थवाचकत्वेन 'पर्यायवाची'त्येव प्रयोज्यं स्यान्नतु 'पर्याय' इति, घटशब्दस्यकलशब्दस्य च मिथः पर्यायत्वाभावात्। मम तु घटरूपेऽर्थे घटशब्द इव कलसशब्दोऽपि सङ्केतित इति भवति सोऽपि तत्पर्याय इति न दोष इत्याशयः। **तत्रापि**—देवदत्त इत्यादौ। 'पूर्वपदस्यैवे'त्यस्य 'साधुत्व'मितिशेषः। एवमग्रेऽपि। उभयोः—पूर्वोत्तरपदयोः। **तत एव**—लोकव्यवहारादेव। **विद्यमानेति।** विद्यमानतैव निष्पन्नतेत्यर्थः।

**( प्रदीपे- ) स्थितं**—व्यवस्थितम्।

**(उद्द्योते-) स्थितं**—व्यवस्थापितम्। **तदेव**—नित्यमेव।

**( भाष्ये- ) वर्ण्येन**—व्याख्यानापेक्षार्थनिर्णयेन। सन्देहजनकेनेति यावत्। **महता शब्देन**—उच्चैःशब्देन। निर्भयमिति यावत्। असन्दिग्धं हि लोके उच्चैर्निर्भयमुच्यते।

---

१ 'स्मर्यमाणसमुदाय' पा०।

२ 'शब्दादीनां नित्यत्वं' पा०।

( प्रदीपः ) **वर्ण्येनेति** । प्रयत्नव्याख्यातःयेनेत्यर्थः ।

[ समाधानभाष्यवार्त्तिकम् ]

**मङ्गलार्थम्[1] ॥**

**माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति ॥**

( प्रदीपः ) **माङ्गलिक इति** । अगर्हिताऽभीष्टार्थसिद्धिर्मङ्गलं,तत्प्रयोजन आचार्यो-**माङ्गलिकः**। **प्रथन्त इति** । अध्ययन याऽविच्छेदात् । **वीरपुरुषाणीति** । श्रोतॄणां परैरपराजयात् । **आयुष्मत्पुरुषाणीति** । शास्त्रानुष्ठाने[2] धर्मोपचयादायुर्वर्द्धनात् । **सिद्धार्था इति** । अध्ययननिर्वृत्तिरेवं[3] तेषां सिद्धिः ॥

( उद्द्योतः ) **सिद्धिर्मङ्गलमिति** । तस्या मङ्गलत्वं च कार्ये कारणरूपोपचारादिति बोध्यम् । **तत्प्रयोजनमस्येति** प्राग्वतीयष्ठञ् । तत्र मङ्गलानुष्ठानप्रयोजनान्याह–भाष्ये–**मङ्गलादीनीत्यादिना** । ग्रन्थे तन्निबन्धनस्य फलमाह–**अध्येतारश्चेत्यादिना** । आनुषङ्गिकमङ्गलसंपत्त्येत्यर्थः । **अध्ययननिर्वृत्तिः**–तत्समाप्तिः । **सिद्धिः**–सिद्धिविषयोऽर्थः । **मङ्गलार्थ**मित्यनेनेत एव वार्तिकप्रवृत्तिः सूचिता ।

[ नित्यशब्दोपादानेऽप्यनिस्तारप्रदर्शकभाष्यम् ]

**अयं खलु[4] नित्यशब्दो नावश्यं कूटस्थेष्वविचालिषु भावेषु वर्त्तते ॥**

**किं तर्हि ? ॥**

**आभीक्ष्ण्येऽपि वर्तते । तद्यथा–नित्यप्रहसितो नित्यप्रजल्पित इति । यावताऽऽभीक्ष्ण्येऽपि वर्तते तत्राप्यनेनैवार्थः स्यात्–'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति । पश्यति त्वाचार्यो–'मङ्गलार्थश्चैव सिद्धशब्द आदितः प्रयुक्तो भविष्यति, शक्ष्यामि चैनं नित्यपर्यायवाचिनं वर्णयितु' मिति । अतः सिद्धशब्द एवोपात्तो न नित्यशब्दः ॥**

( प्रदीपः ) **नावश्यमिति** । ततश्चाभीक्ष्ण्येन ये शब्दाः प्रयुज्यन्ते आगोपालाङ्गनं तेषामेवान्वाख्यानं स्यान्न विरलप्रयोगाणाम् । विनापि च क्रियापदप्रयोगेणाभीक्ष्ण्यवृत्तिर्नित्यशब्दः प्रयुज्यते । यथा–'आश्चर्यमनित्ये' 'नित्यवीप्सयो'रिति ॥

(उद्द्योतः)'असन्दिग्धो नित्यशब्दः किं न प्रयुक्त'इत्युक्तं, तत्रापि सन्देहमाह–भाष्ये–**अयं खल्विति । आभीक्ष्ण्येन** बाहुल्येन । 'अभीक्ष्ण'मिति पाठेऽप्ययमेवार्थः । **प्रयुज्यन्त इति** । साक्षाच्छब्दे आभीक्ष्ण्याऽसंभवात्प्रयोगद्वारा तद्ग्राह्यम् । एवञ्च नित्यशब्दोपादानेऽपि सप्रयोजनकोट्यन्तरसंभवेन तत्रापि सन्देह एवेति भावः । **'नित्ये शब्दार्थसंबन्धे'** इत्यस्य **शब्दार्थसंबन्धे** ज्ञाते सति **नित्ये** नित्यप्रयोगविषये शब्दे शास्त्रं प्रवृत्तमित्यर्थः स्यादिति तात्पर्यम् । नन्वाभीक्ष्ण्यवाचिनो नित्यं क्रियापदसाकाङ्क्षतया कथं केवलस्य प्रयोगोऽत आह–**विनापि चेति** ।

---

❀ **राजलक्ष्मीः** ❀

( प्रदीपे– ) **अगर्हितेति** । निर्विघ्नेत्यर्थः । **माङ्गलिकः**–मङ्गलाकाङ्क्षी । निर्विघ्नसमाप्तिकाम इति यावत् । **अविच्छेदा**दित्यस्य 'वर्द्धन्ते' इतिशेषः । **निर्वृत्तिः**–निष्पत्तिः । **तेषाम्**–अध्येतॄणाम् ।

( उद्द्योते– ) **कार्ये**–अभीष्टार्थसिद्धिरूपे कार्ये । **कारणेति** । तत्कारणीभूतनत्यादिरूपमङ्गलत्वोपचारादित्यर्थः। **प्रवृत्तिः**–प्रारम्भः । **परे** तु 'अथशब्दानुशासन'मित्यत एव वार्त्तिकप्रवृत्तिः, शब्दानुशासनव्याख्यानारम्भे पठ्यमानतया त्वस्य वार्त्तिकस्येह मङ्गलार्थसिद्धपदघटिततेति तु **गौडाः** ।

( भाष्ये– ) **अयमिति** । अयं नित्यशब्दोऽपीत्यर्थः । **खलु**शब्दोऽप्यर्थे । **नावश्यं**–न केवलम् । **यावता**–यतः । 'वर्त्तते' इत्यस्य 'अतः' इतिशेषः । **अनेनैव**–अनेन न्यायेनैन । **अर्थः**–सन्दहनिवृत्तिरूपोऽर्थः । **पश्यतीति** । सिद्धशब्दं प्रयुञ्जान आचार्यो विचारयतीत्यर्थः । मङ्गलार्थश्चैव भविष्यतीत्यन्वयः । **चकारो**ऽप्यर्थे । मङ्गलार्थता च तस्य स्वरूपेण परार्थं नीयमानदध्यादिवदित्याशयः । **एवं**–सिद्धशब्दम् । ( **प्रदीपे–** ) **ततश्च**–आभीक्ष्ण्यार्थकनित्यपदोपादाने च । **आगोपालाङ्गनं**–गोपालवधूपर्यन्तमपि । आपामरम् । **विरलप्रयोगाणां**–विद्वत्प्रयोज्यानां स्वल्पप्रयोगाणाम् ।

( उद्द्योते– ) **सप्रयोजनेति** । आगोपाङ्गनं प्रसिद्धानामेवेदमन्वाख्यानं न तु विरलप्रयोगाणां शब्दानामिति प्रयोजनवत्कोट्यन्तरेत्यर्थः । आभीक्ष्ण्यवाचिनोवा नित्यशब्दस्य ग्रहणं कूटस्थादिवाचिनो वेति चात्र कोटिद्वयं बोध्यम् । **तत्रापि**–नित्यपदोपादानेऽपि । आभीक्ष्ण्यवाचिनो ग्रहणे यादृशोऽर्थः सम्पद्यते तं दर्शयति–**नित्येइति** । **अर्थः**–वार्त्तिकार्थः ।

---

१ 'मङ्गलार्थंच' । नेदं वार्त्तिकमित्यन्ये । २ 'शास्त्रार्थानु' पा० ३ 'निष्पत्तिरेव' पा० । ४ 'खल्वपि' पा० ।

[ पदार्थनिर्णयाधिकरणे-**आशङ्का**भाष्यम् ]

**अथ कं पुनः पदार्थं मत्वैष विग्रहः क्रियते-'सिद्धे शब्देऽर्थे संबन्धे चे'ति ? ॥**

[ सिद्धान्तिनः **समाधान**भाष्यम् ]

**'आकृति'मित्याह ॥**

[ आक्षेपभाष्यम् ]

**कुत एतत् ? ॥**

[ समाधानभाष्यम् ]

**आकृतिर्हि नित्या, द्रव्यमनित्यम् ॥**

[ आक्षेपभाष्यम् ]

**अथ द्रव्ये पदार्थे कथं विग्रहः कर्तव्यः ? ॥**

[ समाधानभाष्यम् ]

**'सिद्धे शब्दे अर्थसंबन्धे चे'ति । नित्यो ह्यर्थवतामर्थैरभिसंबन्धः ॥**

**(प्रदीपः) अर्थसंबन्धे चेति ।** द्रव्यपक्षे द्रव्यस्याऽनित्यत्वादर्थग्रहणं संबन्धविशेषणार्थमुपात्तम् । अनित्येऽर्थे कथं संबन्धस्य नित्यतेति चेत्, योग्यतालक्षणत्वात्संबन्धस्य । तस्याश्च शब्दाश्रयत्वाच्छब्दस्य च नित्यत्वाददोषः ॥

**(उद्योतः)** नन्वेवमर्थग्रहणं व्यर्थमत आह-**द्रव्यपक्षे इति । योग्यता**-बोधजनकत्वयोग्यता, तादात्म्यम् । तदुक्तं भाष्ये-'नित्योह्यर्थवता'मिति । शब्दानामित्यर्थः। ननु तादात्म्यस्य संबन्धत्वे कथं तस्य नित्यत्वमिति चेन्न; नष्टभाविवस्तुनोऽपि शब्देन बोधाद्बौद्धार्थेन तस्य तादात्म्यं नित्यमित्याशयात् । शब्दवृत्तिधर्मस्यैवाऽर्थवृत्तिधर्माऽभेदमापन्नस्य तादात्म्यत्वेनाऽदोषाच्च । **शब्दस्य च नित्यत्वादिति ।** आकाशवत्तन्निष्ठः शब्दोऽपि नित्यः। व्यञ्जकाभावात्तु न सर्वदोपलम्भ इतिभावः॥

[ द्रव्यपदार्थाङ्गीकारभाष्यम् ]

**अथवा द्रव्य एव पदार्थे एष विग्रहो न्याय्यः-'सिद्धे शब्देऽर्थे सम्बन्धे चे'ति। द्रव्यं हि नित्यमाकृतिरनित्या ॥**

[ आक्षेपभाष्यम् ]

**कथं ज्ञायते ? ॥**

[ **समाधान**भाष्यम् ]

**एवं हि दृश्यते लोके मृत्कया चिदाकृत्या युक्ता पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते, घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते ॥**

**तथा सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते, रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते, कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते । पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः । आकृतिरन्या चान्या च भवति, द्रव्यं पुनस्तदेव । आकृत्युपमर्देन द्रव्यमेवाऽवशिष्यते ॥**

**( प्रदीपः ) द्रव्यं हि नित्यमिति ।** असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थः। **आकृतिरिति ।** संस्थानम् । ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्यत्वादनित्यत्वम्, 'आत्मैवेदंसर्व'मिति श्रुतिवचनात् ॥

---

❀ **राजलक्ष्मीः** ❀

**तात्पर्यं**-नित्यशब्दस्याभीक्ष्ण्यपर्यायस्य ग्रहणमापादयतो भाष्यकृतस्तात्पर्यम् । **केवलस्य**-क्रियापदविरहितस्य ।

**(भाष्ये-) अथेति ।** पृच्छयते इत्यर्थः। **कं पदार्थं**-जातिं वा व्यक्तिं वा पदार्थम् । **आकृतिमिति ।** 'आकृतिः पदार्थः'इति पक्षमाश्रित्यैष विग्रहः क्रियते इत्याह भाष्यकारो गोनर्दीय इत्यर्थः । **आकृतिः**-जातिः । पदार्थद्वयस्यापि प्राक्प्रक्रान्तत्वाच्छङ्कोपपत्तिः ।

**( प्रदीपे- ) द्रव्यस्य**-घटादेरर्थस्य । **सम्बन्धेति ।** नित्यसम्बन्धेत्यर्थः । **अर्थे**-द्रव्ये । **अनित्ये**-अनित्ये सति । निष्कृष्टार्थमाह-**तादात्म्यमिति । कथमिति ।** सम्बन्धस्य द्विष्ठत्वादर्थस्याऽनित्यत्वे तद्रूपस्य तादात्म्यसम्बन्धस्याप्यनित्यत्वमुचितमित्याशयः । **बौद्धार्थेन**-बुद्धिस्थेन शशशृङ्गादिपदार्थेन सह । तस्य-घटादिशब्दस्य । बौद्धार्थाऽस्वीकर्तृमतेऽप्याह-**शब्दवृत्तीति।**

**शब्दवृत्तीति।** घटत्वादीत्यर्थः । **अर्थेति ।** घटवृत्तिघटत्वादीत्यर्थः । **भावः**-शब्दनित्यतावादिनामभिप्रायः । **सर्वदेति ।** नित्यस्यापि शब्दस्य सर्वदा भानमित्यर्थः ।

**(भाष्ये-) द्रव्ये एव**-द्रव्येऽपि पदार्थे । **आकृतिः**-संस्थानम् । **मृत्**-मृत्तिकैव । **कयाचिदिति ।** संस्थानविशेषवतीत्यर्थः । **रुचकाः**-कंसाकृतयः, आभरणविशेषा वा ।

---

१ 'सर्वदा शब्दोपलम्भः' पा० ।

२ अपिः क्वचिन्न ।

(उद्द्योतः) ननु घटादिद्रव्यस्य कथं नित्यतेत्यत आह–असत्येति। स च कम्बुग्रीवादिमदाकारादिरूपस्तद्व्यङ्ग्यजातिरूपो वा। भाष्ये यद्याकृतिशब्देन तद्व्यङ्ग्यमुच्यते तर्हि तदप्याविद्यकत्वेन व्यञ्जकानित्यत्वेन चाऽनित्यमित्याह–जातेरपीति। अनेनैतत्प्रकरणस्थाकृतिपदस्य व्यङ्ग्यव्यञ्जकोभयपरतां सूचयति। गौतमेनाप्युक्तं–'जात्याकृतिव्यक्तयः पदार्थः' इति। भाष्ये 'खदिराङ्गारसवर्णे कुण्डले भवत' इति प्रयोगादच्यन्ते विकृतेः कर्तृत्वं बोध्यम्।

[आकृतिपदार्थाभ्युपगमभाष्यम्]

**आकृतावपि पदार्थ एष विग्रहो न्याय्यः[1]- 'सिद्धे शब्देऽर्थे संबन्धे चे'ति॥**

(उद्द्योतः) आकृतिपदेन जातिरित्यभिप्रायेण भाष्ये–आकृतावपि पदार्थ इति॥

[आक्षेपस्मारणभाष्यम्]

**ननु चोक्तम्–'आकृतिरनित्ये'ति?॥**

[समाधानभाष्यम्]

**नैतदस्ति। नित्याऽऽकृतिः॥**

**कथम्?॥**

**न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति। द्रव्यान्तरस्था तूपलभ्यते॥**

(प्रदीपः) न क्वचिदुपरतेति। अनभिव्यक्तेत्यर्थः। अद्वैतेन लोके व्यवहाराभावाद्व्यवहारे चाऽऽकृतेरेकाकारपरामर्शहेतुत्वान्नित्यत्वम्॥

(उद्द्योतः) 'क्वचिदुपरतेति कृत्वा न सर्वत्रोपरते'त्यन्वयः। ननूपरमो नाशश्चेत्तत्काले एवान्यत्र सत्त्वं विरुद्धमत आह–अनभीति। ननु परमार्थदृष्ट्या सर्वमनित्यमत आह–अद्वैतेनेति। नित्यत्वमिति। सर्वदा एकाकारपरामर्शदर्शनेन यावद्व्यवहारकालं तस्या अपि ध्रुवादित्वेन नित्यत्वमिति भावः॥

[समाधानसाधकनित्यलक्षणान्तरभाष्यम्]

**अथवा नेदमेव नित्यलक्षणम्—'ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्य'मिति।**

**तदपि[2] नित्यं यस्मिंस्तत्त्वं न विहन्यते॥**

**किं पुनस्तत्त्वम्?॥ तस्य भावस्तत्त्वम्॥**

**आकृतावपि तत्त्वं न विहन्यते॥**

(प्रदीपः) अथवेति,–असत्यत्वेऽपि तत्त्वतो लोकव्यवहाराश्रयणेन जातेर्नित्यत्वं साध्यते। त्रिविधा चाऽनित्यता। संसर्गानित्यता यथा–स्फटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन पररूपभासः। उपधानापगमे स्वरूपप्रतिभासात्परिणामाऽभावः॥ परिणामानित्यता यथा–बदरीफलस्य



एवं कटकाः स्वस्तिका वाऽलङ्कारविशेषाः। आवृत्तः–कुट्टनच्छेदनतापनादिना वर्त्तुलतां नीतः। पुनः स्वरूपं नीतश्च। खदिराङ्गारेति। रक्तवर्णेत्यर्थः। आकृतिः–संस्थानम्। द्रव्यं–सुवर्णादि।

(प्रदीपे–) द्रव्यस्य नित्यतामुपपादयति–असत्य इति। ब्रह्मदर्शने–अद्वैतवादिनये। (उद्द्योते–) सच–उपाधिश्च। तद्व्यङ्ग्येति। तादृशाकारादिव्यङ्ग्येत्यर्थः। तद्व्यङ्ग्यम्–कम्बुग्रीवादिमदाकारव्यङ्ग्यम्। तदपि–जातिस्वरूपन्तदपि। आविद्यकत्वेन–मायिकत्वेन। व्यञ्जकेति। आकारेत्यर्थः। अनेन–जात्याकृत्योरनित्यत्वप्रतिपादनेन। व्यङ्ग्यव्यञ्जकोभयेति। जातिसंस्थानोभयपरतेत्यर्थः। विकृतेः–कुण्डलयोः। कर्तृत्वमिति। अत एव 'भवत' इत्यत्र तत्र द्विवचनोपपत्तिरित्याशयः।

(भाष्ये–) अद्वैतिमते जात्याकृत्योरनित्यत्वेन ब्रह्मरूपद्रव्यस्य च नित्यत्वेन विग्रहं समर्थ्य मतान्तरेणाकृतेर्नित्यत्वात्तत्र तद्विग्रहस्य न्याय्यतामाह–आकृतावपीति। अस्य यद्वेत्यादिः। अथवा–वेदान्तिमतेऽपि व्यवहारकालिकमाकृतेरपि नित्यत्वमस्तीति तन्मतेऽपीदं भाष्यं सुयोजमिति कैयटोपाध्यायाः। उपरतेति। एकस्यां घटादिव्यक्तौ विनष्टायां सा तत्रोपरताऽपि न सर्वत्रोपरता भवति, किन्तु तदतिरिक्तघटादिव्यक्तावुपलभ्यते एवेति व्यक्तिनाशेऽपि तन्नाशाभावात्तस्या नित्यत्वमित्यर्थः। यावदिति। व्यवहारकालपर्यन्तम्। तस्याः–आकृतेः। ध्रुवादित्वेन–ध्रुवकूटस्थाविचाल्यादित्वेन। नेदमेवेति। लक्षणान्तरमपि नित्यस्यास्तीत्यर्थः। किन्तल्लक्षणमत आह–तदपीति। यस्मिन्–संस्थाने। अवयवसंस्थानरूपायामाकृताविति यावत्। 'नष्टेपी'ति शेषः। तत्त्वं–तद्वृत्तिर्धर्मो घटत्वादिः। न विहन्यते–न विनश्यति। 'आश्रयप्रवाहाऽविच्छेदा'दिति शेषः। तस्य–घटादिद्रव्यस्य। भावः–तद्वृत्तिर्धर्मो घटत्वद्रव्यत्वादिः। स्पष्टश्चेदमुद्द्योते।

(प्रदीपे–) 'तत्त्वत' इत्यस्य पूर्वत्राऽन्वयः। तत्त्वतोऽसत्यत्वेपि–परमार्थदशायां जातेर्मिथ्यात्वेऽपि। साध्यते–अथवेत्यादि ग्रन्थेन भाष्यकृता साध्यते। लक्षणे विशेषणानां

१ न्याय्यः–उचितः। समर्थयितुं शक्य इत्यर्थः।

२ लक्षणान्तरं दर्शयति–तदपीति।

श्यामतातिरोभावे लौहित्यस्याविर्भावः॥ **प्रध्वंसाऽनित्यता**–सर्वात्मना विनाशः । एतत्त्रिविधाऽनित्यताप्रतिक्षेपेण नित्यतां प्रतिपादयितुमुक्तं–**ध्रुवमित्यादि**। तत्र **'ध्रुवं' 'कूटस्थ'**मिति संसर्गानित्यता परिहृता। **'अविचाली'**ति परिणामाऽनित्यता। **'अनपाये'**त्यादिना-प्रध्वंसाऽनित्यता ॥

**( उद्द्योतः )** अथावयवसंस्थानरूपाया जातिव्यञ्जिकाया आकृतेर्यावद्व्यवहारकालं मध्ये मध्ये उत्पत्तौ नाशेऽपि प्रकारान्तरेण नित्यत्वमाह–भाष्ये **अथवेति**। नित्यत्वलक्षणे ध्रुवपदस्यैव व्याख्यानं–**कूटस्थमिति**। रूपान्तरापत्तिर्**विचालः**। यथा पयसो दध्यादिरूपता। अनेन परिणामाऽनित्यता परास्ता । उत्पत्तेः सत्तापर्यन्तत्वाद**नुत्पत्ती**त्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ। **अवृद्धी**त्यनेन तृतीयो वृद्धिलक्षणः। **अनुपजनेति** चतुर्थः परिणामः । **अनपायेति**–पञ्चमोऽपचयः। एतद्रूपविकाररहितमिति तदर्थः ॥ **अव्ययेति**–षष्ठो विनाशः। इदं च ब्रह्मविषयं नित्यत्वं, यावद्व्यवहारमेकरूपस्थितपदार्थविषयं च। अयमेव न नित्यशब्दार्थः; प्रवाहाविच्छेदेऽतादृश्यपि नित्यत्वव्यवहारादित्याह भाष्ये–**तदपीति**। **यस्मिंस्तत्त्वमिति**। यस्मिन्विहतेऽपि तद्वृत्तिधर्मो न विहन्यते इत्यर्थः। प्रवाहनित्यता चाऽनेनोक्ता। तन्नाशेपि तद्धर्मो न नश्यति, आश्रयप्रवाहाऽविच्छेदादिति भावः ॥

[ नित्यत्वानित्यत्वविचारानवसरबोधकभाष्यम् ]

**अथवा किं न एतेन–'इदं नित्यमिदमनित्य'मिति ?। यन्नित्यं तं पदार्थं मत्वैष विग्रहः-क्रियते 'सिद्धे शब्देऽर्थे सम्बन्धे चे'ति॥**

**( प्रदीपः ) यन्नित्यमिति**। बुद्धिप्रतिभासः शब्दार्थो यदा यदा शब्द उच्चारितस्तदा[2] तदाऽर्थाकारा बुद्धिरुपजायते इति प्रवाहनित्यत्वादर्थस्य नित्यत्वमित्यर्थः ॥

**( उद्द्योतः ) यन्नित्यमिति** । व्यक्तिजात्याकृतीनां मध्ये यन्नित्यमित्यर्थः ।

ननु शशशृङ्गादिपदार्थानां कथं नित्यत्वं तेषां स्वरूपस्यैवाभावादत आह–**बुद्धिप्रतिभास इति**। बाह्यः पदार्थो न शाब्दबोधे विषयः, किंतु बौद्धः । स च प्रवाहनित्य इति भावः ॥ एतच्च **मञ्जूषायां** विस्तरेण निरूपितम् ॥

[ वार्त्तिकद्वितीयखण्डावतरणभाष्यम् ]

**कथं पुनर्ज्ञायते–'सिद्धः शब्दोऽर्थः सम्बन्धश्चे'ति ? ॥**

[ समाधानवार्त्तिकद्वितीयखण्डम् ]

॥ * ॥ लोकतः ॥ * ॥

[ वार्त्तिकव्याख्यानभाष्यम् ]

**यल्लोकेऽर्थमर्थमुपादाय शब्दान्प्रयुञ्जते नैषां निर्वृत्तौ यत्नं कुर्वन्ति । ये पुनः कार्या भावा निर्वृत्तौ तावत्तेषां यत्नः क्रियते ।**

---

**❀ राजलक्ष्मीः ❀**

सार्थक्याय भूमिकामारचयति–**त्रिविधेति**। **पररूपेति**। लाक्षाजपाकुसुमादिरूपेत्यर्थः । **उपधानापगमे**–लाक्षाद्यपगमे सति तु। **परिणामाभावः**–रूपान्तरप्रतिभासाऽभावः। अनित्यत्वाभाव इति यावत्। **बदरीफलस्य**-बदरीफलाम्रफलादेः। **लौहित्यस्य**–लौहित्यपीतत्वादेः। **प्रतिक्षेपेण**–निरासेन।

**(उद्द्योते–)** यथाश्रुतकैयटोक्तरीत्या व्याख्याने पौनरुक्त्यमतः प्रकारान्तरेण व्याचष्टे–**अथावयवेति**। 'अव्यय'-मित्येतावतैव सिद्धेऽनेकविशेषणोपादानं भाष्ये व्यर्थमतस्तत्सार्थक्याय निरुक्तोक्तषड्भावविकारनिरासपरतया लक्षणं योजयति–**उत्पत्तेरिति** । **अपचयः**–ह्रासः । तदुक्तं निरुक्ते–'षड्भावविकारा भवन्ति, जायतेऽस्ति वर्द्धते विपरिणमतेऽपक्षीयते विनश्यती'ति। **इदञ्च**–'ध्रुव'मित्यादिना-भाष्ये प्रदर्शितं संसर्गानित्यत्वादिराहित्यरूपं षड्भावविकारशून्यत्वरूपञ्च नित्यत्वम्। **ब्रह्मविषयं**-ब्रह्मणि वर्त्तते। **एकरूपेति** । जात्यादिपदार्थविषयञ्चेत्यर्थः । **अतादृश्यपि**–पूर्वोक्तलक्षणाभाववत्यपि। **आश्रयेति**। जात्याश्रयेत्यर्थः।

**( भाष्ये– ) किं न इति**। न वयं नित्यानित्यपदार्थविवेचनाय प्रवृत्ताः, किन्तु शब्दानामनुशासनायैव प्रवृत्ता इति किमेतेन विचारेणाऽस्माकं प्रयोजनमित्यर्थः।

**( प्रदीपे– ) बुद्धिप्रतिभासः**–बौद्धः। **शब्दार्थः**–पदार्थः। **शब्दः**–घटादिर्वन्ध्यापुत्रादिश्च। **अर्थाकारा**–घटपटाद्यर्थाकारा। **अर्थस्य**-घटपटादेः। बाह्यः–बहिर्विद्यमानः। बौद्धः–बुद्धिस्थः। **स च**=बौद्धः पदार्थश्च।

**( भाष्ये– ) कथमिति**। अर्थसम्बन्धयोर्व्याकरणाऽनिष्पाद्यतया नित्यत्वसम्भवेऽपि शब्दस्य व्याकरणनिष्पाद्यतया कथं नाम नित्यत्वमित्यर्थः। **यत्**–यतः। **अर्थमर्थम्**-प्रत्यर्थम्। मुहुर्मुहुः। **एषां**–शब्दानाम्। **निर्वृत्तौ**–निष्पत्तौ। **कार्याः**–घटपटादयोऽनित्याः। **भावाः**–पदार्थाः।

---

१ **नः**–अस्माकम् **एतेन** विचारेण किं–न किमपि प्रयोजनमित्यर्थः। २ 'तदा तदर्थाकारा' 'तदार्थाकारा' पा०।

**तद्यथा-घटेन कार्यं करिष्यन्कुम्भकारकुलं गत्वाह-'कुरु घटं कार्यमनेन करिष्यामी'ति । न तद्वच्छब्दान्प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाह-'कुरु शब्दान्प्रयोक्ष्य' इति । तावत्येवार्थमुपादाय शब्दान्प्रयुञ्जते ॥**

( प्रदीपः ) **लोकत इति** । अन्यथा कार्येषु वस्तुषु लोकव्यवहारः, अन्यथा नित्येषु । शाब्दश्च व्यवहारोऽनादिवृद्धव्यवहारपरम्पराव्युत्पत्तिपूर्वक इति शब्दानां नित्यत्वम् । घटादयस्त्वर्थक्रियार्थिभिरन्यत आनीयन्ते, उत्पादविनाशयुक्ताश्चोपलभ्यन्ते । नैवं शब्दादयः ।

**तावत्येवार्थमिति** । बुद्ध्या वस्तु निरूप्येत्यर्थः॥

( उद्द्योतः ) **शब्दादीनां नित्यत्वमिति** । व्याकरणाऽनिष्पाद्यत्वमित्यर्थः ।

**तावत्येवेति** । वैयाकरणकुलमगत्वैवेत्यर्थः ॥

---

[ वार्तिकतृतीयखण्डावतारणायाक्षेपभाष्यम् ]

**यदि तर्हि लोक एषु प्रमाणम्, किं शास्त्रेण क्रियते ? ॥**

[ समाधानवार्तिकतृतीयखण्डम् ]

*॥ * ॥ लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः ॥ * ॥*

[ वार्तिकतृतीयखण्डव्याख्यानभाष्यम् ]

**लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते ॥**

[ पदार्थजिज्ञासाभाष्यम् ]

**किमिदं धर्मनियम इति ? ॥**

[ समाधानभाष्यम् ]

**धर्माय नियमो धर्मनियमः, धर्मार्थो वा नियमो धर्मनियमः, धर्मप्रयोजनो वा नियमो धर्मनियमः ॥**

( प्रदीपः ) अत्र भाष्यकारेण संभवन्तीमप्येकवाक्यतामनाश्रित्य वाक्यत्रयं व्यवस्थापितम् । **'सिद्धे शब्दार्थसंबन्धे** शास्त्रं प्रवृत्त'मित्येकं वाक्यम् । कथं ज्ञायत इति प्रश्ने-**'लोकतो** ज्ञायते' इति द्वितीयम् । 'लोकत' इत्यस्यावृत्त्या **'लोकतोऽर्थप्रयुक्त'** इत्यादि तृतीयम् । **शब्दप्रयोग इति** प्रयोगग्रहणेन 'प्रयोगाद्धर्मो न तु ज्ञानमात्रा'दित्युक्तं भवति । अर्थेनात्मप्रत्यायनाय प्रयुक्तो**ऽर्थप्रयुक्तः** । **धर्माय नियम इति**,-चतुर्थ्या तादर्थ्यं प्रतिपाद्यते । संबन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः, चतुर्थीसमासस्य प्रकृतिविकारभाव एव विधानात् । **धर्मार्थ इति** । धर्मार्थत्वान्नियम एव 'धर्म'शब्देनाभिधीयते इति कर्मधारयः समासः । **धर्मप्रयोजन इति** । लिङादिविषयेण नियोगाख्येन धर्मेण प्रयुक्त इत्यर्थः ॥

---

❀ **राजलक्ष्मीः** ❀

यत्नमेव दर्शयति-**तद्यथेति** । **तत्**-यत्नकरणम् । **यथा**-येन प्रकारेण । 'तथा प्रदर्शयाम' इति शेषः । **तद्वत्**-घटाद्यर्थं कुम्भकारकुलगमनवत् । **प्रयुयुक्षमाणः**-प्रयोक्तुमिच्छन् । **कुरु**-निष्पादय । **प्रयोक्ष्ये**-प्रयोगन्तेषांकरिष्यामि ।

( **प्रदीपे-** ) **अन्यथा**-प्रकारान्तरेण । 'नित्येषु' इत्यस्य 'वस्तुषु लोकव्यवहार' इत्यनुषज्यते । **शाब्दश्च**-शब्दविषयकश्च । तत्सम्बन्धिप्रयोगादिरूप इति यावत् । **अर्थक्रियार्थिभिः**-जलाहरणाद्यर्थिभिः। कार्यार्थिभिः । **अन्यतः**-कुलालनिलयादितः। **उत्पादेति** । तेषां व्यवहारे क्षयोपचयौ दृश्येते इत्यर्थः । **नैवमिति** । नान्यतस्ते आनीयन्ते न च ते प्रयुज्यमानाः क्षयं गच्छन्तीत्यर्थः ।

( **भाष्ये** ) **एषु**-शब्देषु । **प्रमाणम्**-व्युत्पादकम् ।

'न शास्त्रन्तर्ही'तिशेषः । **लोकतः**-लोकवृद्धव्यवहारादितः । **अर्थप्रयुक्ते**-अर्थमनुसन्धाय प्रत्यर्थं शब्दप्रयोगे सिद्धेपि ।

**(प्रदीपे-) अत्र**-'सिद्धे शब्दार्थे'ति वार्त्तिकव्याख्यावसरे। **एकवाक्यताम्**-'शब्दार्थसम्बन्धे लोकादेव सिद्धे,शब्दप्रयोगे चार्थप्रत्यायनाय लोकादेव सिद्धे शास्त्रेण धर्मनियमः-क्रियते' इत्येवं सम्भवन्तीमप्येकवाक्यताम् । **उक्तमिति** । प्रयोगे धर्मनियमो न तु ज्ञाने इत्यर्थादुक्तमित्यर्थः । **इति चतुर्थ्येति** । इत्येवंविग्रहगतचतुर्थ्या। **प्रतिपाद्यते इति** । 'न तु प्रकृते चतुर्थ्यन्तेन समासे भगवतस्तात्पर्य'मिति शेषः । **प्रकृतीति** । यूपाय दारु यूपदार्वित्यादावेवेत्यर्थः । **कर्मधारय इति** । 'धर्मश्चासौ नियम' इति विग्रह इत्याशयः । **लिङादिविषयेण**-लिङादिवाच्येन ।

**नियोगाख्येन**-नियोगापरपर्यायेण कार्येण ।

---

१ 'यदि लोक एषु शब्देषु' इति पा० ।

२ 'शास्त्रप्रवृत्तिः' पा० ।

(उद्द्योतः) ननु सकृदन्वितस्य **लोकत** इत्यस्य **पुनरर्थप्रयुक्ते** इत्यनेनान्वयः कथम्?। वार्तिके चैकवाक्यतयैवान्वयः प्रतीयतेऽत आह-**अत्रेति**। **अनाश्रित्येति**। न्यूनतापरिहारायेत्यर्थः। **लोकत** इत्यस्य च-लोकव्यवहारत इत्यर्थः।

भाष्ये-**अर्थप्रयुक्ते इति**। अर्थज्ञानप्रयोजनेन कृत इत्यर्थः। परस्य विशिष्टार्थबोधो भवत्विति शब्दः प्रयुज्यते, प्रयोगेणाविर्भूतशब्दज्ञानेनार्थज्ञानादिति भावः। एवं प्राप्ते शब्दप्रयोगे शास्त्रेणास्येयं प्रकृतिरयं प्रत्यय इत्यादिप्रकृत्यादिविभागज्ञानद्वारा गवादय एव प्रयुक्ता धर्मजनकाः, न गाव्यादय इति नियमः क्रियत इति तात्पर्यम्॥ **विधानादिति**। तादर्थ्यस्य षष्ठ्यर्थत्वबोधनाय त्वेवं प्रयोग इति भावः। **चतुर्थीति** योगविभागो न भाष्यारूढः। **सुप्सुपेति** समास इत्यप्यगतिकगतिरित्येवं व्याख्यातम्॥

द्वितीयपक्षात्तृतीये विशेषं दर्शयति-**लिङादीति**। प्रभाकराङ्गीकृतमतेनेदम्। तन्मते हि लिङादीनामपूर्वसञ्ज्ञकं कार्यं वाच्यम्। तदेव च स्वस्मिन् पुरुषं प्रयुञ्जानं **नियोग** इत्युच्यते। स एव धर्मः। तेन प्रयुज्यते आक्षिप्यते इति कर्मल्युडन्तः **प्रयोजनशब्दः**। स चाऽसाधुनिवृत्तिरूपो नियमः। **धर्मप्रयोजन** इति षष्ठीसमासः। एवंच **द्वितीये** धर्मफलको नियम इत्यर्थः। **तृतीये** धर्मप्रयोज्य इत्यर्थ इति भेदः॥ केचित्तु **धर्माय नियम** इत्यनेन प्रत्यवायपरिहाररूपधर्मायाऽयं नियमः। असाधुप्रयोगेऽधर्मोत्पत्तेः॥ **धर्मार्थो नियम** इत्यनेन धर्मस्य यज्ञादेरङ्गभूत इत्यर्थः। **'नानृतं वदे'**दिति क्रत्वङ्गवाक्येन क्रतुवैगुण्यस्य बोधनात्॥

**धर्मप्रयोजनो नियम** इत्यनेनैकः **शब्द** इति श्रुतेर्नियमाऽदृष्टं पुरुषार्थकरं सूचितमित्याहुः॥

---

[ दृष्टान्तपरं वार्तिकस्य चतुर्थखण्डम् ]

॥ * ॥ *यथा लौकिकवैदिकेषु* ॥ * ॥

[ वार्तिकव्याख्यानभाष्यम् ]

**प्रियतद्धिता दाक्षिणात्याः[1]-'यथा लोके वेदे चे'ति प्रयोक्तव्ये 'यथा लौकिकवैदिके' ष्विति प्रयुञ्जते[2]॥**

**अथवा युक्त एवाऽत्र तद्धितार्थः-'यथा-लौकिकेषु वैदिकेषु च कृतान्तेषु'॥**

**लोके तावत्-'अभक्ष्यो ग्राम्यकुक्कुटः' 'अभक्ष्यो ग्राम्यसूकर' इत्युच्यते। भक्ष्यं च नाम क्षुत्प्रतिघातार्थमुपादीयते। शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्। तत्र नियमः क्रियते-'इदं भक्ष्यमिदमभक्ष्य'-मिति॥**

**तथा-खेदात्स्त्रीषु प्रवृत्तिर्भवति। समानश्च खेदविगमो गम्यायां चाऽगम्यायां च। तत्र नियमः क्रियते-'इयं गम्येयमगम्ये'ति॥**

(प्रदीपः) **प्रियतद्धिता इति**। नायमपशब्दः किंतु ये लोकवेदयोर्भवा अवयवास्ते लोकवेदशब्दाभ्याममिधातुं शक्यन्ते। आधाराधेयभावकल्पनया तु तद्धितप्रयोगः प्रियतद्धितत्वनिमित्तः। यथा कश्चिद्वनस्पतय इति प्रयुङ्क्ते कश्चिद्वानस्पत्यमिति समूहप्रत्ययान्तम्। **अथवेति**। नात्राऽवयवा-

---

### ❀ राजलक्ष्मीः ❀

(उद्द्योते-) **अन्वयः**-भाष्येऽन्वयः। ननु प्रयोगस्यार्थधीजनकता कथमित्यत आह-**प्रयोगेणेति**। आविर्भूतो यः शब्दस्तस्य **यज्ज्ञानं**-श्रोतुः श्रावणप्रत्यक्षं, तेन च पदार्थस्य-'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारक'मितिरीत्या यत्-**ज्ञानं**-स्मरणम्,-उपस्थितिर्भवति ततश्चार्थबोधइतिभावः। शब्दप्रयोगाच्छब्दस्याभिव्यक्तिः, अभिव्यक्तस्य परेण श्रवणं, श्रवणात्तदर्थोपस्थितिस्ततश्च तस्य बोध इति हि प्रक्रिया। एवम्-इत्थम्। **प्राप्ते**-लोकवृद्धव्यवहारात्सिद्धे। 'शास्त्रेणे'त्यस्य 'नियमः क्रियते' इत्यनेनान्वयः। ननु चतुर्थीतियोगविभागादेव समासोऽस्त्वित्यत आह-**चतुर्थीतीति**। **इति**-इत्यतः। **एवं**-षष्ठीसमासपरतया। **व्याख्यातं**-कैयटेन भाष्यं व्याख्यातम्। **तन्मते**-प्रभाकर(गुरु)मते। **तदेव**-

कार्यमेव। **स्वस्मिन्**-धर्मे। **नियोग इति**। नियोजयति स्वस्मिन् पुरुषमिति नियोग इति विग्रहः। **स एव**-नियोग एव। **नियमाऽदृष्टं**-नियमजन्यं पुण्यम्। **पुरुषार्थकरं**-मोक्षादिसिद्धिदम्।

(भाष्ये-) **प्रियेति**। प्रियास्तद्धितास्तद्धितान्तशब्दा येषान्ते तथोक्ताः। **अत्र**-लौकिकेत्यादौ। **तद्धितः**-'लोकसर्वलोका'दिति ठञ्। तथा सत्यर्थमाह-**यथेति**। **कृतान्तः**-दृष्टान्तः। तत्र लौकिकं दृष्टान्तमाह-**लोक इति**। **अनेन**-बुभुक्षितेन। **श्वेति**। अभक्ष्येनापीत्यर्थः। **प्रतिहन्तुं**-दूरीकर्तुम्।

(प्रदीपे-) **अयं**-लौकिकेत्यादिप्रयोगः। **अवयवाः**-लोकवेदान्तर्गताः। **तद्धितप्रयोगः**-लौकिकेत्यादितद्धितान्तप्रयोगः। 'समूहप्रत्ययान्त'मित्यस्य 'यथाभिलाष'-

---

[1] प्रकृते भगवान् वार्त्तिककारो दाक्षिणात्यो बोध्यः।

[2] वार्त्तिककाराः।

वयाविविभागः,किं तर्हि लोकवेदव्यतिरिक्तः सिद्धान्तः शब्दार्थौ भवरूप इत्यर्थः। **लौकिकः**,–स्मृत्युपनिबद्धः। **वैदिकः**–श्रुत्युपनिबद्धः। **शक्यं चानेनेति।** शकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः। ततः पदान्तर³सम्बन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वादन्तरङ्गं संस्कारं न बाधते इति 'शक्यं क्षु'दित्युक्तम्। यदा तु पूर्वमेव विशेषविवक्षा तदा 'शक्या क्षु'दिति भवत्येव। यदा तु प्रतिघातस्यैव क्षुत्कर्म, शकेस्तु प्रतिघातस्तदा 'क्षुधं प्रतिहन्तुं शक्य'मिति भवति। **खेदादिति।** खेदयतीति **खेदो** रागः। इन्द्रियनियमाऽसामर्थ्यं वा **खेदः**॥

**(उद्द्योतः)** नन्वीदृशो धर्मनियमः क्व दृष्टोऽत आह भाष्ये—**यथेति।** 'ननु लोकवेदयो'रित्येव सिद्धे तद्धितनिर्देशोऽयुक्तोऽत आह–**प्रियतद्धिता इति।** नन्वन्यार्थेऽन्यशब्दप्रयोगेऽपशब्दत्वं स्यादत आह–**नायमिति। ते वेदलोकेति।** अवयवे समुदायशब्दप्रयोगदर्शनादिति भावः। **आधाराधेयकल्पनया त्विति।** 'लोकवेदरूप⁴समुदायतदवयवयो'रित्यादिः। **नात्रावयवावयविविभाग इति। 'तत्र भव'** इत्यादिव्यवहारप्रयोजको विभागारोपोऽवयवावयविनोर्नेत्यर्थः। **कृतान्तेषु। कृतान्तः**–सिद्धान्तः। तत्प्रतिपादकवाक्येष्वित्यर्थः। **'भक्ष्यं च नाम्ने'**त्यस्य 'तद्भवति य'दिति शेषः। 'शक्यं क्षु'दिति सामानाधिकरण्यं कथं, भिन्नलिङ्गत्वादत आह–**शकेरिति। तदा क्षुधमिति।** ननु प्रधानक्रियानिरूपितशक्तेरभिधाने गुणक्रियानिरूपितशक्तेरनभिहिताया अभिहितवत्प्रकाशस्य **'स्वादुमि णमु'**लित्यत्र वक्ष्यमाणत्वेन कथमेतदिति चेन्न; प्रधानतिङन्तार्थक्रियानिरूपितशक्तेरेवायं स्वभावो यत्स्वसमानाधिकरणगुणशक्तेरभिहितवत्प्रकाश इत्यभिमानात्। वस्तुत इदमयुक्तमेवेति **'स्वादुमी'**त्यत्र निरूपयिष्यामः॥

**खेद इति।** एवं च ग्रामकुक्कुटपरदारादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया आरण्यतद्भक्षणस्वदारगमनयोर्यथा दोषाभावो यथा च ग्राम्यकुक्कुटभक्षणपरदारगमनयोरधर्मस्तथा शास्त्रजनितज्ञानपूर्वके गवादिप्रयोगेऽपूर्वोत्पत्तिरूपं फलं शास्त्रेण बोध्यते, तेषां साधुत्वबोधनात्। अर्थादपशब्दानामधर्मजनकत्वं बोध्यते, एकविधेस्तदितरनिषेधफलकत्वात्। यथैकनिषेधस्यापराभ्यनुज्ञाफलकत्वमिति भावः। दृष्टान्तता त्वंशेन, वक्ष्यमाणवैदिकानां तु सर्वांशेनेति बोध्यम्॥

[ वैदिकदृष्टान्तप्रदर्शनभाष्यम् ]

**वेदे खल्वपि–'पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्य आमिक्षाव्रतो वैश्यः' इत्युच्यते। व्रतं च नामाभ्यवहारार्थमुपादीयते। शक्यं चाऽनेन शालिमांसादीन्यपि व्रतयितुम्। तत्र नियमः क्रियते॥**

**तथा–'बैल्वः खादिरो वा यूपः स्या'दित्युच्यते। यूपश्च नाम पश्वनुबन्धार्थमुपादीयते। शक्यं चानेन यत्किंचिदेव काष्ठमुच्छ्रित्याऽनुच्छ्रित्य वा पशुरनुबन्द्धुम्। तत्र नियमः क्रियते॥**

**तथा–अग्नौ कपालान्यधिश्रित्याऽभिमन्त्रयते–'भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्व'मिति। अन्तरेणापि मन्त्रमग्निर्दहनकर्मा कपालानि सन्तापयति। तत्र च नियमः क्रियते–'एवं क्रियमाणमभ्युदयकारि भवती'ति॥**

**(प्रदीपः) पयोव्रत इति।** सत्यामर्थितायां पय एव व्रतयतीति नियमोऽयं न तु विधिः,अर्थित्वाभावे कारणाऽभावात्॥

---

❀ **राजलक्ष्मीः** ❀

मिति शेषः। **भवरूपः**–भवरूपस्तद्धितार्थः। **शकेः**–शकधातोः। 'स्त्रीलिङ्गक्षुच्छब्दसामानाधिकरण्यात्प्रा'गिति शेषः। **पदान्तरेति।** क्षुत्पदसम्बन्धादित्यर्थः। **बाधते**–निवर्त्तयति। **इति**–इत्यतः। **रागः**–अनुरागः। अभिलाषश्च। **असामर्थ्यं**–कामोपतापाऽसहिष्णुता।

**(उद्द्योते–) अन्यार्थे**–लोके इत्याद्यर्थे। **अन्येति।** लौकिकेत्यादीत्यर्थः। **प्रधानक्रियेति।** मर्षणादिक्रियेत्यर्थः। **शक्तेः**–कर्मत्वादिशक्तेः। **गुणक्रियेति।** प्रतिहननादिगौणक्रियेत्यर्थः। **तिङन्तेति।** प्रकृते च शक्यमिति कृदन्तं न तिङन्तमिति न तद्विषयताऽत्रास्तीति न 'क्षुधमिति द्वितीयानुपपत्तिरित्याशयः। **इदं**–'क्षुधं प्रतिहन्तुं शक्य'मिति प्रयोगोपपादनम्। स्वमतमाह–**वस्तुत इति। लौकिकानाम्**–'अभक्ष्यो ग्राम्यकुक्कुट'इत्यादीनाम्। **अंशेनेति।** लौकिके दृष्टान्ते हि परदारगमने दोषः, स्वभार्यागमने दोषाभावः, दार्ष्टान्तिके तु शास्त्रपूर्वके प्रयोगे धर्मः, अन्यथा दोष इति न दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्यम्। **सर्वांशेनेति।** यथा पयसा वर्त्तने धर्मोऽन्यथाऽधर्मस्तथा शास्त्रपूर्वके प्रयोगे धर्मोऽन्यथाऽधर्म इति सर्वथा दृष्टान्तदार्ष्टान्तिकयोः साम्यमित्यर्थः।

**(भाष्ये–) पयो** दुग्धम्। **आमिक्षेति।** तप्ते पयसि दध्नो योगे सति यद्भवति साऽऽमिक्षा। शक्यमिति भावे प्रत्ययः।

---

१ 'भावः' पा०। २ 'व्यतिरिक्तसिद्धान्तशब्दार्थोभयरूपः' पा०। ३ 'शब्दान्तर' पा०। ४ 'लोकरूप' पा०।

**( उद्द्योतः ) व्रतयतीति ।** अभ्यवहार्यत्वेनोपादत्ते इत्यर्थः । भाष्ये–**उच्छ्रित्यानुच्छ्रित्य वेति ।** सन्तक्ष्याऽसन्तक्ष्य वेत्यर्थः । निखन्याऽनिखन्य वेत्यर्थ इत्यन्ये ।

[ दार्ष्टान्तिके उपसंहारभाष्यम् ]

**एवमिहापि—समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते–'शब्देनैवार्थोऽभिधेयो नापशब्देने'ति । 'एवं क्रियमाणमभ्युदयकारि भवती'ति ॥**

**( प्रदीपः ) समानायामिति ।** यद्यपि साक्षादपभ्रंशा न वाचकास्तथापि स्मर्यमाणसाधुशब्दव्यवधानेनाऽर्थं प्रत्याययन्ति । केचिच्चापभ्रंशाः परम्परया निरूढिमागताः साधुशब्दानस्मारयन्त एवाऽर्थं प्रत्याययन्ति । **अन्ये तु** मन्यन्ते–'साधुशब्दवदपभ्रंशा अपि साक्षादर्थस्य वाचका' इति ॥

**(उद्द्योतः)** ननु अपभ्रंशा न वाचकाः, वाच्यप्रतीत्यन्यथानुपपत्त्या कल्प्यमानशक्तेः शिष्टप्रयुक्तसंस्कृतेष्वेव कल्पनात् । तदनुसारेणैव चापभ्रंशानां साधुस्मरणेन बोधकत्वोपपत्तेः **'समानाया'**मित्यनुपपन्नमिति शङ्कते–**यद्यपीति । तथापीति ।** एवंच वाचकत्वाभावेऽप्यर्थप्रत्यायकत्वाऽविशेषेण **'समानाया'**मित्युक्तम् । **निरूढिमागता इति ।** ते च शक्तिभ्रमेण बोधका इति भावः। शक्तिभ्रमश्चेत्थम्–केनचित् गवीति प्रयुक्ते गौरिति साधुशब्दस्मरणात्[1] प्रयोज्यस्य बोधेऽपि तटस्थस्य गवीशब्दादेवास्य गोबोध इति भ्रमस्तन्मूलकोऽन्येषामपि भ्रम इति । वस्तुतो विनिगमनाविरहाद्भाषाशब्देष्वपि शक्तिरेवेत्याह–**अन्ये त्विति । साधुत्वं** चैतन्मते शब्दगतधर्मसाधनतावच्छेदकवैजात्यमेव । यद्यपि **साधूनेव भाषेते**ति न श्रूयते, तथापि फलनिर्देशवाक्ये तन्निर्देशादेवेदृशविधिः कल्प्यते । तत्र के साधव इत्याकाङ्क्षायामेत एव साधव इति व्याकरणेन प्रतिपादनात्[2]तद्द्वारा शास्त्रेण धर्मनियमो विधीयत इति बोध्यम् । भाष्ये–**शब्देनैवेति ।** साधुनेत्यर्थः । **एवं क्रियमाणमिति ।** शास्त्रज्ञानपूर्वकमुच्चार्यमाणमित्यर्थः ।

---

[ अप्रयुक्तशब्दसाधुत्वविचारे **आक्षेप**वार्तिकम् ]

*॥ * ॥ अस्त्यप्रयुक्तः ॥ * ॥*

[ व्याख्याभाष्यम् ]

**सन्ति वै शब्दा अप्रयुक्ताः । तद्यथा–'ऊष' 'तेर' 'चक्र' 'पेचे'ति ॥**

[ प्रश्नाशयजिज्ञासाभाष्यम् ]

**किमतो यत्सन्त्यप्रयुक्ताः ? ॥**

[ आशयाविष्कारभाष्यम् ]

**प्रयोगाद्धि भवाञ्छब्दानां साधुत्वमध्यवस्यति । य इदानीमप्रयुक्ता नाऽमी साधवः स्युः ॥**

**(प्रदीपः) अस्त्यप्रयुक्त इति ।** प्रयोगमूलत्वादस्याः स्मृतेरप्रयुक्तानामप्यन्वाख्यानाद[3]प्रामाण्यमाशङ्कते ॥

---

**❀ राजलक्ष्मीः ❀**

**(प्रदीपे–) सत्यामर्थितायाम्**–इच्छायां सत्याम् । **व्रतयति**–पिबति । **सन्तक्ष्यासन्तक्ष्य**–तक्षणादिना संस्कृत्य, तथा संस्कारमकृत्वैव वा ।

**निरूढिम्**–प्रसिद्धिम् ।

**( उद्द्योते– ) वाच्येति ।** वाच्यस्य प्रतीतेरन्यथाऽनुपपत्त्या कल्प्यमानाया शक्तेरित्यर्थः । **वाचकत्वाभावेऽपि**–अपभ्रंशानां वाचकत्वाभावेऽपि । **उक्तमिति ।** भाष्ये उक्तमिति न तदसङ्गतिरित्याशयः । **प्रयोज्यस्य**–नियोज्यस्य शिष्यादेः । **वैजात्यमिति ।** व्याकरणाभिव्यञ्जनीयो जातिविशेष इत्यर्थः । **न श्रूयते**–नैषा श्रुतिः । **फलनिर्देशवाक्ये**–'एकः शब्दः सम्यग्ज्ञात'इत्यादौ । **तन्निर्देशादेव**–साधुशब्दनिर्देशादेव । **ईदृशेति ।** 'साधूनेव भाषेते'तीत्यर्थः । शब्द इति शेषः ।

**( भाष्ये– )** 'अप्रयुक्त'इति वार्त्तिके जात्यभिप्रायमेकवचनमित्याशयेनाह–**शब्दा इति ।** अप्रयुक्त इत्येवं दोषदातुस्तव कोऽभिप्राय इत्याशयेन तटस्थ आशङ्कते–**किमत इति ।** दोषदाता स्वाशयमाह–**प्रयोगाद्धीति । अध्यवस्यति**–निश्चिनोति ।

**(प्रदीपे–)** अप्रयुक्तशब्दविचारस्य प्रासङ्गिकतां प्रति-

---

**❀ शब्दकौस्तुभः ❀**

ननु यदि प्रयुक्तानामिदमन्वाख्यानं तर्हि किमर्थमप्रयुक्ता अपि 'ऊष' 'तेर' 'चक्र' 'पेचे'त्यादयो व्युत्पाद्यन्त इति चेन्न; आर्षज्ञानं विनाऽप्रयुक्तताया दुरवधारणत्वात् । महान्हि प्रयोगविषयः । तथा च भाष्यम्–**'सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गा सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाऽऽथर्वणो वेदो वाको-**

---

१ 'साधुस्मरणात्' पा० । २ 'निष्पादनात्' पा० ।

३ 'प्रयुक्तानामन्वाख्यानस्याऽप्रामाण्यं पा० ।

( उद्द्योतः ) 'अस्त्यप्रयुक्त' इत्यादेः प्रकृतोपयोगमाह–प्रयोगमूलत्वादिति । 'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः' इत्यनेन प्रयुक्तेषु साध्वसाधुषु प्रयुक्तसाध्वन्वाख्यानेन तेषु धर्मः प्रयुक्ताऽसाधुष्वधर्म इत्यर्थकेनेदं सूचितम् । एवं चाऽप्रयुक्तानामप्रयोगेणैवाऽसाधुत्वानुमानादसाधूनामप्यनेनान्वाख्यानादप्रामाण्यमिति भावः । वार्तिकोक्तनियमानुपपत्तिश्चेत्यपि बोध्यम् ॥ भाष्ये किमत इति । अप्रयुक्तसत्त्वे नाऽस्माकमनिष्टं, साधुमात्रार्थत्वाद्व्याकरणस्येत्यर्थः । उत्तरम्–प्रयोगादिति । तथा चाऽप्रयोगादसाधुत्वानुमानमिति भावः ॥

[ आक्षेपासङ्गतिसूचकतटस्थभाष्यम् ]

**इदं तावद्विप्रतिषिद्धम्–यदुच्यते–'सन्ति वै शब्दा अप्रयुक्ता' इति । यदि सन्ति नाऽप्रयुक्ताः, अथाऽप्रयुक्ता न सन्ति, 'सन्ति चाप्रयुक्ताश्चे'ति विप्रतिषिद्धम् । प्रयुञ्जान एव खलु भवानाह–'सन्ति शब्दा अप्रयुक्ता' इति ! । कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यात् ? ॥**

( प्रदीपः ) यथा घटादीनां विनाऽप्यर्थक्रियया सत्त्वं गम्यते नैवं शब्दानां, ते हि सर्वदा व्यवहाराय प्रयुज्यमानाः सन्तः सत्त्वेनाऽवसीयन्ते इत्याह–इदमिति । कश्चेदानीमिति उपहासपरम् ॥

( उद्द्योतः ) विप्रतिषिद्धत्वमुपपादयति–यथेति । एवं च सत्त्वे प्रयोग आवश्यक एव । अप्रयोगे च सत्त्वमेव न स्यादिति भावः । ननु लक्षणवशेन सत्त्वं, केनाप्यप्रयोगाच्चाऽप्रयुक्तत्वमिति न विरोधोऽतो भाष्ये–प्रयुञ्जान एवेति । ननु मया प्रयुक्तश्चेत्किं, तत्र सोपहासमाह–कश्चेदानीमिति । स्वयमेव प्रयोगं कृत्वा 'सन्ति चाऽप्रयुक्ता' इत्यादीनां शब्दानां प्रयोगे साधुर्योग्यः स्यादित्यर्थः । त्वत्प्रयोगेणैव प्रयुक्तत्वाऽवगमे ऽप्रयुक्तत्वोक्तिर्विरुद्धेति भावः ॥

[ आक्षेपसङ्गतिप्रदर्शकमुत्तरभाष्यम् ]

**नैतद्विप्रतिषिद्धम् । 'सन्ती'ति तावद्ब्रूमो यदेताञ्शास्त्रविदः शास्त्रेणानुविदधते । 'अप्रयुक्ता' इति ब्रूमो यल्लोकेऽप्रयुक्ता इति ॥**

**यदप्युच्यते–'कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्या'दिति । न ब्रूमोऽस्माभिरप्रयुक्ता इति ॥ किं तर्हि ? ॥ लोकेऽप्रयुक्ता इति ॥**

( प्रदीपः ) उत्तरं तु—शास्त्रदृष्ट्या प्रकृतिप्रत्ययादिसद्भावादनुमितसत्त्वाः, व्यवहारे तु न दृश्यन्त इत्युक्तम् ॥

[ आक्षेपभाष्यम् ]

**ननु च भवानप्यभ्यन्तरो लोके ? ॥**

[ समाधानभाष्यम् ]

**अभ्यन्तरोऽहं लोके, न त्वहं लोकः ॥**

---

❀ राजलक्ष्मीः ❀

पादयन्नाह–प्रयोगेति । अस्याःस्मृतेः–व्याकरणस्मृतेः ।

( उद्द्योते- ) वार्तिकोक्तेति । 'शास्त्रेण धर्म'इति पूर्वमुक्तस्य नियमस्यानुपपत्तिरित्यर्थः । यदि अप्रयुक्तान्वाख्यानं शास्त्रेण क्रियेत तर्हि शास्त्रस्याऽपूर्वविधित्वेन वैयर्थ्याभावान्नियमानुपपत्तिरिति भावः । उत्तरं–आक्षेपकस्य तटस्थं प्रत्युत्तरम् ।

( भाष्ये- ) तटस्थः पूर्वपक्षमेव दूषयति–इदमिति । इति–इत्येवमभिधानम् । विप्रतिषिद्धम्–मिथो विप्रतिषिद्धम् । प्रयुञ्जानः–ऊषेत्यादिशब्दान् प्रयुञ्जान एव । 'इत्याहे'त्यन्वयः । भवज्जातीयकः–भवादृशः । शब्दानां प्रयोगे–सन्त्यप्रयुक्ता इति भाषणे ।

( प्रदीपे- ) अर्थक्रियया–जलानयनादिव्यापारेण । सत्त्वेनावसीयन्ते–सन्तीति निश्चीयन्ते ।

( उद्द्योते- ) एवञ्च–तत्सत्तानिश्चयाय तत्प्रयोगस्यावश्यकत्वे च ।

(भाष्ये-) प्रश्नवादी तटस्थं प्रतिसमाधत्ते–नैतदिति । अनुविदधते–संस्कुर्वन्ति । यत्–यतः । अप्रयुक्ताः अर्थबोधनायाऽप्रयुक्ताः । उपहासमपनयति–यदपीति । न ब्रूम इति । नहि मत्प्रयोगो लोकप्रयोगः । व्यवहारे तेषामप्रयोगादित्याशयः ।

---

❀ शब्दकौस्तुभः ❀

वाक्यमितिहासः पुराणं वैद्यकमित्येतावान्प्रयोगस्य विषय' इति । बहृचानामाम्नायो बाहृच्यम् । 'छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्य' इति ञ्यप्रत्ययः । 'चरणाद्धर्माम्नाययो'रित्युक्तत्वादाम्नाये । अथर्वणा प्रोक्तो वेद अथर्वा, उपचारात्प्रयोग इत्येके । वसन्तादिषु 'अथर्वन्' 'आथर्वण' इत्युभयोः पाठसामर्थ्यात्प्रोक्तप्रत्ययस्य वैकल्पिको लुगिति तु तत्त्वम् । अत एव भाष्ये वक्ष्यते–'तेन प्रोक्तमिति प्रकृत्य ऋषिभ्यो

---

१ 'सत्त्वे' पा० ।

२ 'यदि तावत्सन्ति' पा० ।

**( प्रदीपः ) न त्वहं लोक इति** । यथा लोकोऽर्थावगमाय शब्दान् प्रयुङ्क्ते नैवं मयैतेऽर्थे प्रयुक्ता अपि तु स्वरूपपदार्थका इत्यर्थः ॥

**( उद्योतः )** ननु लोकान्तर्भूतस्य **'न त्वहं लोक'** इति वचो विरुद्धमत आह–**यथेति** । अर्थबोधाय शब्दान्प्रयुञ्जानो हि मम लोकत्वेनाऽभिमत इत्यर्थः ॥

---

[ **समाधान**वार्तिकम् ]

॥ ∗ ॥ *अस्त्यप्रयुक्त इति चेन्नाऽर्थे शब्दप्रयोगात्* ॥ ∗ ॥

[ व्याख्याभाष्यम् ]

**अस्त्यप्रयुक्त इति चेत् । तन्न ॥ किं कारणम् ? ॥ 'अर्थे शब्दप्रयोगात्' । अर्थे शब्दाः प्रयुज्यन्ते । सन्ति चैषां शब्दानामर्था येष्वर्थेषु प्रयुज्यन्ते ॥**

**( प्रदीपः ) अर्थे शब्दप्रयोगादिति** । अर्थसद्भावः शब्दसद्भावे लिङ्गम् । न हि विना शब्देनाऽर्थप्रत्यायनमुपपद्यते ॥

**( उद्योतः )** भाष्ये–**अर्थे शब्दप्रयोगादिति** । अर्थविषयकज्ञानाय शब्दप्रयोगादित्यर्थः । तदाशयमाह–**अर्थसद्भाव इति** ॥

---

[ दोषान्तरप्रदर्शकं वार्तिकम् ]

॥ ∗ ॥ *अप्रयोगः प्रयोगान्यत्वात्* ॥ ∗ ॥

[ व्याख्याभाष्यम् ]

**अप्रयोगः खल्वप्येषां शब्दानां न्याय्यः॥ कुतः? ॥ 'प्रयोगान्यत्वात्' । यदेषां शब्दानामर्थेऽन्याञ्छब्दान्प्रयुञ्जते । तद्यथा–'ऊषे'त्यस्य शब्दस्यार्थे–'क यूयमुषिताः' 'तेरे'त्यस्यार्थे–'क यूयं तीर्णाः'। 'चक्रे'त्यस्यार्थे–'क यूयं कृतवन्तः' । 'पेचे'त्यस्यार्थे–'क यूयं पक्वन्त'इति ॥**

**( प्रदीपः )** इतरोऽन्यथासिद्धतामाह–**अप्रयोग इति** । यतोऽन्ये तेषामर्थानां सन्ति वाचकास्ततो नैषामनुमानमुपपद्यते । यद्यप्यूषेत्यस्य उषिता इति समानार्थो न भवति, परोक्षतादेर्विशेषस्याऽनवगमात्तथापि तत्प्रत्यायनाय पदान्तरसहितः प्रयुज्यते ॥

**( उद्योतः )** भाष्ये–**प्रयोगान्यत्वादिति** । प्रयुज्यत इति **प्रयोगः**–शब्दः, सोऽन्यो यस्यार्थस्यास्ति तत्त्वादित्यर्थः । सर्वनाम्नः[3] परनिपातः पूर्वनिपातप्रकरणाऽनित्यत्वात् । **पदान्तरसहित इति** । **पदान्तरं**–'क यूय'मिति । तत्र 'के'त्यनेन साधनपारोक्ष्यं, निष्ठया भूतत्वं कर्तृत्वं च । 'यूय'मित्यनेन मध्यमपुरुषबोध्यमाभिमुख्यं चेतनत्वं वा । बहुत्वं च । वसेः साक्षाद्गत्य**र्थाकर्मके**त्यत्र निर्देशात्तरतेर्गत्यर्थत्वा-

---

॥ राजलक्ष्मीः ॥

**( भाष्ये- )** अस्त्यप्रयुक्तइत्याचार्यान्तरीयवार्त्तिकोत्थापितामाशङ्कां वार्त्तिककारो निरस्यति–**अस्त्यप्रयुक्त इतीति** । एवञ्चोषादेरर्थसद्भावात्प्रयोगसद्भावोनुमीयते इत्याशयः ।

**( भाष्ये- ) एषाम्**–ऊषतेरादीनाम् । एवञ्च तेषां सत्ताऽवगम्यत एवेति न तेऽप्रयुक्ता इत्याशयः ।

**( भाष्ये- ) एषाम्**–ऊषादीनाम् । न्याय्यः–उचितः ।

**( प्रदीपे- ) इतरः**–शङ्ककः कश्चित् । **अन्यथासिद्धताम्**–शब्दानुमापकार्थप्रतीतेरन्यथासिद्धताम् ।

**तेषाम्**–ऊषादीनाम् । **एषाम्**–ऊषादीनाम् । एवञ्चार्थसद्भावेन हेतुनोषादीनामनुमानं न सम्भवति, अर्थप्रतीतेरन्यथाऽप्युपपत्तेर्हेतोर्व्यभिचरितत्वादित्याशयः । **प्रयुज्यते**–भाष्ये प्रयुक्तम् ।

**( उद्योते- ) इत्यर्थ इति** । शब्दान्तरस्य तदर्थवाचकस्य सत्त्वादित्यर्थ इति यावत् । एवं सति–'अन्यप्रयोगत्वा'दिति प्राप्ते आह–**परनिपातइति**। 'सर्वनामसङ्ख्ययोरुपसङ्ख्यान'मितिपूर्वनिपातवार्त्तिकस्यैतत्प्रयोगादेवाऽनित्यत्वम् । 'तपरः' 'जहत्स्वार्थे'त्यादि प्रयोगा अप्येवं सिद्ध्यन्ति । राजदन्तादित्वं वा कल्प्यमिति परे । **साधनेति** । कर्त्तुः पारोक्ष्य-

---

॥ शब्दकौस्तुभः ॥

लुग्वक्तव्यः । वसिष्ठोऽनुवाकः । ततो वक्तव्यमथर्वणो वेति । तमधीते आथर्वणिकः । वसन्तादित्वाट्ठक् । दाण्डिनायनादिसूत्रे निपातनाट्टिलोपाभावः । आथर्वणिकस्याम्नाय आथर्वणः । 'आथर्वणिकस्येकलोपश्चे'ति आथर्वणिकादण् , तत्सन्नियोगेनेकलोपश्च।

प्रकृतमनुसरामः,–एतावन्तं प्रयोगविषयं पर्यालोचयितुमशक्तैरप्यस्मदादिभिर्लक्षणानुगतानां प्रयोगोऽस्तीत्यनुमेयम् । अस्ति च त्वयोदाहृतानामपि वेदे प्रयोगः'–'सप्तास्ये रेवती रेव ऊष' । 'यन्मे नरः श्रुत्यं ब्रह्म चक्र' । 'यत्रानश्चक्रा जरसं तनूना'मिति ।

---

१ 'शब्द' पा० । २ 'प्रयोगे' पा० ।

३ 'सर्वनाम्ना'मिति पा० ।

त्कर्तरि क्तः। नन्वाख्याते क्रियाविशेष्यको बोधोऽत्र च कर्तृविशेष्यक इति कथं लिङन्तसमानार्थत्वमिति चेन्न; विषयताविशेषानादरेण तथोक्तेः। न चाख्याते क्रियाविशेष्यकबोधे 'पक्ष्यति–भवति' 'अपाक्षीद्भवती'ति भूवादिसूत्रस्थभाष्यप्रयोगविरोधः, अतीतानागतपाककर्तृकसत्ताया वर्तमानत्वासङ्गतेरिति वाच्यम्; वर्तमानसामीप्ये तत्र लटः सत्त्वात्। 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्यादौ यत्कर्तृको यागस्तत्कर्तृकं तरणमिति बोधः। अत एव 'ह्रस्वो नपुंसके' इति सूत्रे 'रमते ब्राह्मणकुलमिति क्रियाप्रधान'मिति भाष्ये उक्तम्॥

---

[ सिद्धान्तिनः **समाधान**वार्तिकम् ]

॥ * ॥ *अप्रयुक्ते दीर्घसत्रवत्* ॥ * ॥

[ व्याख्याभाष्यम् ]

**यद्यप्यप्रयुक्ताः,–अवश्यं दीर्घसत्रवल्लक्षणेनानुविधेयाः। तद्यथा दीर्घसत्राणि वार्षशतिकानि वार्षसहस्रिकाणि च। न चाऽद्यत्वे कश्चिदप्याहरति। केवलमृषिसंप्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणाऽनुविदधते॥**

( प्रदीपः ) संप्रत्यप्रयुज्यमानानामपि पूर्वं प्रयुक्तत्वादनुशासनं कर्तव्यमित्याह–**अप्रयुक्ता इति। ऋषिसंप्रदाय इति।** वेदाध्ययनमित्यर्थः॥

( उद्द्योतः ) नन्वप्रयुक्तानुशासने निर्मूलत्वाच्छास्त्रस्याऽप्रामाण्यं स्यादत आह—**संप्रतीति।** पाणिनेर्व्याकरणप्रणयनकाले इत्यर्थः। पूर्वप्रयोगसत्ता च व्याकरणप्रणयनादेवानुमीयत इति भावः। इदमपि यत्र भाष्यवार्तिककाराभ्यामप्रयुक्तत्वं नोक्तं तदभिप्रायकमनुमानं बोध्यम्। **वार्षशतिकानीति।** **वर्ष**शब्दो दिवसपरः, यथाश्रुत एव वा। **आहरति।** सामग्र्यभावादिति भावः। ननु सत्राणां बहुयजमानकानामृषिभिर्वसिष्ठादिभिः संप्रदीयमानत्वाभावाद्**दविसंप्रदाय** इत्ययुक्तमत आह–**वेदेति।** भाष्ये '**कृत्वे**'त्यनन्तरम**धीयते** इति शेषः। | याज्ञिकाश्च कल्पसूत्रेणान्वाचक्षत इत्यर्थः। अत्र सत्राणां कर्मत्वम्॥

---

[ **समाधाना**न्तरवार्तिकम् ]

॥ * ॥ *सर्वे देशान्तरे* ॥ * ॥

[ व्याख्याभाष्यम् ]

**सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते॥**

( प्रदीपः ) **सर्व इति।** इदमत्र तात्पर्यम्–यस्य कस्य चिद्वचनात्प्रयोगाऽप्रयोगौ न व्यवतिष्ठेते, अपि तु शिष्टानामेव वचनात्॥

[ **आक्षेप**भाष्यम् ]

**नचैवोपलभ्यन्ते॥**

( उद्द्योतः ) अनुपलब्ध्याऽप्रयुक्तत्वं शङ्कते–भाष्ये **न चैवेति।**

---

### ❀ राजलक्ष्मीः ❀

मित्यर्थः। **आख्याते**–तिङन्ते। **अत्र**–उषिता इत्यादौ कृदन्ते। **विषयतेति।** प्रकारताविशेष्यतानादरेण केवलविषयतामात्रमादृत्य तथोक्तेरित्यर्थः। एवञ्च 'समानविषयकत्वं समानार्थत्व'मिति लक्षणं न तु 'समानविशेष्यकत्वं समानार्थत्व'मिति लक्षणमित्याशयः। समानविषयत्वञ्चोभयत्र तुल्यमेव। विषयता च–विशेष्यताप्रकारतोभयरूपेति न दोष इत्यवधेयम्। **सत्तायाः**–आख्यातार्थबोधे विशेष्यभूतायाः सत्तायाः। **तत्र**–'भवती'त्यत्र। **अतएव**–क्रियाविशेष्यकबोधस्य तत्र स्वीकारादेव।

**( भाष्ये– ) यद्यपीति।** कृपादयो यद्यपीदानी मप्रयुक्ता इत्यर्थः। 'तथापी'तिशेषः। **लक्षणेन**–शास्त्रेण। सूत्रेण व्याकरणेन वा। **अनुविधेयाः**–संस्कार्याः। लक्षणं तत्र प्रवर्त्यमिति यावत्। **आहरति**–करोति। ऋषिः–वेदः। सम्प्रदायः–अध्ययनम्। **अनुविदधते**–अन्वाचक्षते।

**अत्र**–'अनुविदधते' इत्यत्र।

**( भाष्ये– )** एतेषां क्वचिदपि देशेऽवश्यं प्रयोगो भवेदित्याशयेन समाधानान्तरमाह–**सर्वेइति।** एवञ्च विरलप्रयोगस्यापि शास्त्रविषयताऽस्त्येवेत्याशयः।

**( उद्द्योतेः– ) अनुपलब्ध्येति।** योग्यानुपलब्ध्येत्यर्थः। यदि ते प्रयुज्यन्तेऽवश्यं तेषामुपलब्धिः स्यात्, न च ते सम्प्रत्युपलभ्यन्ते, अतस्ते न प्रयुज्यन्ते इत्यनुमीयन्ते इत्याशय आशङ्कितुः।

---

### ❀ शब्दकौस्तुभः ❀

ननु यदि लक्षणेनानादितासिद्धिस्तर्हि वचन्त्यादीनामपि स्यादिति चेन्न; नहि 'वचिरन्तिपरः प्रयुज्यत'इत्यभियुक्तानामविगीतव्यवहारेण सामान्यशास्त्रस्य सङ्कोचात्। अभ्युपगतो हि विशेषविपयिण्या पतितस्य कर्मानधिकारस्मृत्याऽग्निहोत्रादिश्रुतीनां सङ्कोचः, विशेषविषयेण

---

१ लक्षणया च वर्षशब्दस्य दिवसपरतेति बोद्धव्यम्।

[ समाधानभाष्यम् ]

**उपलब्धौ यत्नः क्रियताम् । महाञ्शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं नवधाऽऽथर्वणो वेदो वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः। एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य 'सन्त्यप्रयुक्ता' इति वचनं केवलं साहसमात्रमेव ॥**

( प्रदीपः ) **[वाकोवाक्यमिति।]** 'वाकोवाक्य'शब्देनोक्तिप्रत्युक्तिरूपो ग्रन्थ उच्यते। यथा– 'किं स्विदावपनं महत्' 'भूमिरावपनं मह'दिति । पूर्वचरितसङ्कीर्तन**मितिहासः** । वंशाद्यनुकीर्तनं–**पुराणम्** ॥

( उद्द्योतः ) [ **त्रयो लोका इति** । भूर्भुवःस्वरात्मका इत्यर्थः । ] इतरलोकापेक्षया वसुमत्यां शब्दबाहुल्यात्तस्याः पृथग्ग्रहणम् । **भुव**रित्यनेनान्त्यपातालपर्यन्तसङ्ग्रहः। **स्व**रित्यनेनोपरितनसकलसङ्ग्रहः । **रहस्यम्**–उपनिषत्, मन्वादिस्मृतयो वा। वेदनिगूढार्थप्रकाशकत्वात् । एवं च **देशान्तर**शब्दः शास्त्रान्तरवेदान्तरोपलक्षक इति बोध्यम्॥

[ शब्दानां विषयनैयत्यप्रदर्शकभाष्यम् ]

**एतस्मिंश्चाऽतिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते ।**

**तद्यथा–शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते 'शव' इति । हम्मतिः सुराष्ट्रेषु । रंहतिः प्राच्यमध्येषु । गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु । दात्रमुदीच्येषु ॥**

( प्रदीपः ) **विकार इति** । जीवतो मृतावस्था विकारस्तत्रेत्यर्थः ॥

( उद्द्योतः ) भाष्ये–'**हंमति**'रित्यत्र '**रंहति**'रित्यत्र च 'गतिकर्मे'त्यनुकर्षः । **दातिर्लवनार्थ इति** । क्तिवन्तं क्तिजन्तं वा । लवनेऽर्थे दातिशब्दं **प्राच्याः** प्रयुञ्जते, तत्राऽर्थे दात्रशब्द**मुदीच्या** इत्यर्थः ॥

[ प्रयोगप्रदर्शनभाष्यम् ]

**ये चाप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते ॥**

**क ? ॥ वेदे ।**

**तद्यथा—'सप्तास्ये रेवतीरेवदूष' । 'यद्वो रेवती रेवत्यां तमूष' । 'यन्मे नरः श्रुत्यं ब्रह्म चक्र' । 'यत्रा नश्चक्रा जरसं तनूनाम्' इति ॥**

---

[ शब्दज्ञानस्य धर्मजनकताधिकरणे **आक्षेप**भाष्यम् ]

**किं पुनः–शब्दस्य ज्ञाने धर्मः, आहोस्वित्प्रयोगे ? ॥**

( प्रदीपः ) **किं पुनरिति** । 'एकः शब्दः सम्यग्ज्ञातः [ शास्त्रान्वितः ] सुप्रयुक्तः स्वर्गे लोके कामधुग्भवती'ति श्रुतिः । तत्र किं सम्यग्ज्ञातः कामधुग्भवति, सुप्रयोगात्तु सम्यग्ज्ञातत्वानुमानमि-

---

❀ **राजलक्ष्मीः** ❀

( **भाष्ये**– ) **प्रयोगविषयः**–प्रयोगदेशः । **आथर्वण इति**। अथर्वणा ऋषिणा प्रोक्तो वेदः–आथर्वणः । आथर्वणमधीयते आथर्वणिकाः, तेषामाम्नाय आथर्वण इति विग्रहः । **अननुनिशम्य**–अनालोच्य ।

( **प्रदीपे**– ) **इति**–इत्येवं श्रुतिः ।

( **उद्द्योते**– ) **देशान्तरशब्दः**–'सर्वे देशान्तरे' इति वार्त्तिकस्थदेशान्तरशब्दः ।

( **भाष्ये**– ) **नियतविषयाः**–नियतदेशाः । **गतिकर्मा**–गत्यर्थकः ।

**गमिं**–गमधातुम् । प्राच्येषु इत्यस्य 'प्रयुज्यते'–इतिशेषः ।

---

❀ **शब्दकौस्तुभः** ❀

शिष्टाचारेण सामान्यस्मृतेः सङ्कोचश्च । तदुक्तम्,–'आनर्थक्यप्रतिहतानां विपरीतं बलाबल'मिति । यत्र तु अप्रयोगः सन्दिग्धः शास्त्रानुगमश्च तत्र निष्प्रत्यूहमनुमानम् । तदुक्तम्–'यथालक्षणमप्रयुक्ते'इति । **अप्रयुक्ते**–अनिश्चितप्रयोगे इत्यर्थः । निश्चिताऽप्रयोगे तु लक्षणं न प्रवर्त्तत एवेति निष्कर्षः । न चैवं 'ब्राह्मणो[2] ब्रवणा'दिति कल्पसूत्रप्रयोगरूपेणापि विशेषविषयाचारेण ब्रुवोवचिरित्यादीनां सङ्कोचापत्तिः । त्रिशङ्क्वाद्ययाज्य-

१ अयं पाठः क्वचित्र ।

२ 'ब्रह्मणो' पा० ।

त्यर्थः, आहोस्वित्सुप्रयुक्तः कामधुग्भवति, सुप्रयुक्तत्वं तु सम्यग्ज्ञानादित्यर्थ इति **प्रश्नः** ॥

**( उद्द्योतः )** वार्तिकोक्तो धर्मनियमः श्रुतिसिद्धस्तस्यामुभयोः श्रवणात्प्रश्न इत्याह—**एकः शब्द इति**। तत्र **'यदैकस्मादपूर्वं तदेतरत्तदर्थं'**मिति न्यायाद्द्वयोः साम्येन फलसंबन्धाभावाद्विकल्पाऽयोगेनैकस्य प्राधान्यमपरस्याङ्गत्वं कल्प्यम्। तत्र **'प्रथमं वा नियम्येते'**ति न्यायाश्रयेणाह—**तत्र किमिति**। **'सर्वत्रैव हि विज्ञानं संस्कारित्वेन गम्यते। पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम्॥'** इति न्यायेन ज्ञानस्य ज्ञेयशेषतया धर्महेतुत्वाभावात्, प्रयोगाङ्गतया दृष्टार्थत्वाच्च, प्रयोगस्य फलं प्रति संनिहितत्वाच्चाह—**आहोस्विदिति** ॥

[ प्रत्याक्षेपभाष्यम् ]

**कश्चात्र विशेषः ?** ॥

[ शब्दज्ञाने धर्म इत्येतत्पक्षदूषणवार्तिकम् ]

॥ * ॥ *ज्ञाने धर्म इति चेत्तथाऽधर्मः* ॥ * ॥

[ व्याख्याभाष्यम् ]

**'ज्ञाने धर्म' इति चेत्तथाऽधर्मोऽपि प्राप्नोति। यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति। यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्मः ॥**

**( प्रदीपः ) ज्ञाने धर्म इति चेदिति।** यथा श्लेष्मणः प्रकोपनं स्नेहद्रव्यं, रूक्षं तु वायोस्तथेहापि प्राप्तमिति भावः ॥

**( उद्द्योतः ) यथा श्लेष्मण इति।** तथा धर्मजनकज्ञानविपरीतत्वात्तद्विपरीतजनकत्वेनापशब्दज्ञानादधर्मप्राप्तिरित्यर्थः ॥

[ शब्दज्ञानेऽधर्माधिक्यप्रदर्शनभाष्यम् ]

**अथवा भूयानधर्मः प्राप्नोति। भूयांसो ह्यपशब्दा अल्पीयांसः शब्दाः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद्यथा 'गौ'रित्यस्य गावीगोणीगोतागोपोतलिकेत्येवमादयोऽपभ्रंशाः ॥**

---

[ शब्दज्ञाने धर्म इतिपक्षे दूषणान्तरवार्तिकम् ]

॥ * ॥ *आचारे नियमः* ॥ * ॥

[ व्याख्याभाष्यम् ]

**आचारे पुनर्ऋषिर्नियमं वेदयते—'तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः' इति ॥**

**( प्रदीपः ) आचारे इति।** प्रयोगे। ऋषिर्वेदः ॥

**( उद्द्योतः ) प्रयोगे इति।** एवंच प्रयोगादेवाऽधर्मवद्धर्मोऽपीति ज्ञानाद्धर्म इति वेदविरुद्धमिति भावः ॥

---

❀ राजलक्ष्मीः ❀

**(उद्द्योते-)तस्यां**—श्रुतौ। **उभयोः**—'सम्यग्ज्ञात' इति, 'सुप्रयुक्त' इत्युभयोः। **यदेति**। एकस्माद्यदाऽपूर्वं—धर्मः—उत्पद्यते तदा तदितरत्—अपरं **तदर्थं**—तदङ्गमेव भवति नत्वपूर्वमुत्पादयतीति न्यायार्थः। 'न्याया'दित्यस्य 'एकस्य प्राधान्य'मित्यत्रान्वयः। **सर्वत्रैवेति**। विज्ञानं हि सर्वत्र **संस्कारितया**—संस्कारजनकतया गम्यते। किञ्च आत्मविज्ञानातिरिक्तं सर्वं ज्ञानं **पराङ्गं**—ज्ञेयाङ्गमप्रधानं भवतीति न्यायार्थः। **ज्ञेयेति**। साधुशब्देत्यर्थः। **प्रयोगाङ्गतयेति**—प्रयोगाङ्गतयैवाऽदृष्टजनकतयेत्यर्थः। **फलमिति**। स्वर्गादिफलमित्यर्थः।

**( प्रदीपे- ) रूक्षं**—स्नेहविपरीतम्।

**( उद्द्योते- ) तद्विपरीतेति**। धर्मविपरीतजनकत्वेनेत्यर्थः। **प्राप्तिरिति**। एवञ्चाऽधर्मजनकतया शास्त्रमनुपादेयं स्यादित्याशयः।

**( भाष्ये- ) अथवा**—किञ्च।

---

❀ शब्दकौस्तुभः ❀

याजनेनापि स्मृतिसङ्कोचापत्तेस्तुल्यत्वात्। तत्र धर्मबुद्ध्याऽनुष्ठानं नास्तीति चेत्; इहापि साधुत्वबुद्ध्या प्रयोगो नास्तीति तुल्यम्। 'यर्वाणस्तर्वाण' इति वदभियुक्तानामपि असाधुप्रयोगस्य क्रतोर्बहिरुपपत्तेश्च। अत एवेतिहासपुराणादिष्वपशब्दा अपि सन्तीति **हरदत्तः**। नदीसंज्ञासूत्रे भाष्येऽपि स्पष्टमेतत्। केचित्तु आर्षग्रन्थेष्वपि च्छन्दसि विहितस्य व्यत्ययस्य प्रवृत्त्या साधुतां समर्थयन्ते। न च गौणमुख्यन्यायेन मुख्ये छन्दस्येव तत्प्रवृत्तिः, स्वरितत्वप्रतिज्ञया तद्बाधात्। वक्ष्यति हि स्वरितेनाधिकार इति सूत्रे—'अविशेषायाऽधिकं कार्य'मिति। गौणमुख्यन्यायो हि स्वरितत्वप्रतिज्ञास्थले न प्रवर्त्तते इत्यर्थः। उपपादयिष्यते चेदम्। अत एवार्षत्वात्साधुतेति तत्रतत्रोद्घोषः सङ्गच्छत इति दिक् ॥

यद्यपि अप्राप्तांशपूरणफलको **नियम**विधिः, इतरव्यावृत्ति-

---

१ इदं प्रायो न दृश्यते। २ 'तुः' क्वचिन्न। ३ 'गाव्यादयोऽपभ्रंशाः' पा०। ४ इतिः क्वाचित्कः।

[ अथ प्रयोगपक्षाङ्गीकारभाष्यम् ]

**अस्तु तर्हि प्रयोगे ॥**

[ प्रयोगपक्षे दूषणवार्तिकम् ]

॥ ❋ ॥ *प्रयोगे सर्वलोकस्य* ॥ ❋ ॥

[ व्याख्याभाष्यम् ]

**यदि प्रयोगे धर्मः, सर्वो लोकोऽभ्युदयेन युज्येत ! ॥**

[ उपालम्भभाष्यम् ]

**कश्चेदानीं भवतो मत्सरो, यदि सर्वो लोकोऽभ्युदयेन युज्येत ? ॥**

[ समाधानभाष्यम् ]

**न खलु कश्चिन्मत्सरः । प्रयत्नानर्थक्यं तु भवति । फलवता च नाम प्रयत्नेन भवितव्यम् । न च प्रयत्नः फलाद्व्यतिरेच्यः॥**

( प्रदीपः ) **नच प्रयत्न इति** । यदि प्रयत्नेन विना फलं स्यात्प्रयत्नस्य[1] वैयर्थ्यमापद्येतेत्यर्थः ॥

( उद्द्योतः ) भाष्ये **फलाद्व्यतिरेच्य इति** । फलवद्वस्त्वभावप्रतियोगी न कार्य इत्यर्थः । **यत्नवैयर्थ्यमिति** । व्याकरणाध्ययनविषयकप्रयत्नवैयर्थ्यमित्यर्थः ॥

[ समाधाने आक्षेपभाष्यम् ]

**ननु च ये कृतप्रयत्नास्ते साधीयः शब्दान्प्रयोक्ष्यन्ते, त एव साधीयोऽभ्युदयेन योक्ष्यन्ते ॥**

( उद्द्योतः ) **साधीय इति**–क्रियाविशेषणम् । शास्त्रसंस्कारवतां प्रभूतशब्दप्रयोगजन्यबहुपूर्वद्वारा बहुतराभ्युदयफलत्वमित्यर्थः ॥

[ समाधानसाधकभाष्यम् ]

**व्यतिरेकोऽपि वै लक्ष्यते । दृश्यते हि–कृतप्रयत्नाश्चाऽप्रवीणाः, अकृतप्रयत्नाश्च प्रवीणाः । तत्र फलव्यतिरेकोऽपि स्यात्॥**

( प्रदीपः ) **व्यतिरेक इति**–परिहासः ।

( उद्द्योतः ) भाष्ये–**तत्र फलव्यतिरेक इति** । कौशल्व्यतिरेकवत्[2] फलव्यतिरेकोऽपि स्यादिति तस्य व्याकरणाऽध्ययनं व्यर्थमेव स्यादिति भावः ॥

## ❁ राजलक्ष्मीः ❁

'प्रयोगे' इत्यस्य 'धर्म' इति शेषः । **प्रयोगे**–प्रयोगे 'यदि धर्मस्तर्हि' । **सर्वलोकस्येति** । सर्वस्यैव लोकस्य 'धर्मः स्या'दित्यर्थः । **युज्येतेति** । यो हि अर्थं बुद्ध्वा शब्दं विज्ञाय शास्त्रान्वितं–शास्त्रसंस्कृतं शब्दं प्रयुङ्क्ते सोऽनधीतव्याकरणोऽपि अभ्युदयेन युज्येतेत्यर्थः । सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वित इत्यस्य–यथाकथञ्चिज्ज्ञातः शास्त्रव्युत्पादितः सुप्रयुक्तः शब्दो धर्मजनक इत्यर्थादित्याशयः ।

(उद्द्योते–) **फलवदिति** । फलवति-सफले-वर्त्तमानो योऽभावस्तत्प्रतियोगी यत्नो न कार्यः । तत्र फलवति यदि प्रयत्नाभावः स्यात्तर्हि तदभावप्रतियोगिता यत्ने स्यादतः फलवति यत्नः र [illegible]दैवावतिष्ठते यत्नं विना फलं न भवतीत्याशयः ।

( **भाष्ये–** ) **कृतप्रयत्नाः**–प्रयत्नाधीतव्याकरणाः । **साधीयः**–प्रभूतेनाभ्युदयेन । **कृतप्रयत्नाः**–अधीतव्याकरणाः । **अप्रवीणाः**–शब्दप्रयोगादावकुशलाः । **अकृतप्रयत्नाः**–अनधीतव्याकरणा अपि लौकिकाः ।

## ❁ शब्दकौस्तुभः ❁

फलकस्तु नित्यप्राप्तिविषयकः **परिसङ्ख्या**[3]विधिरिति पूर्वोत्तरमीमांसयोर्व्यवहारस्तथापीह शास्त्रे परिसङ्ख्यापि नियमशब्देन व्यवह्रियते । तेन 'पञ्च पञ्चनखा भक्ष्या' इत्यस्य नियमोदाहरणतया उपन्यासो न विरुद्धः । न चासौ मीमांसकरीत्यापि नियमो भवत्विति वाच्यम्; पञ्चातिरिक्तभक्षणे प्रायश्चित्तविधेरसङ्गतत्वापत्तेः । पञ्चानामभक्षणे प्रायश्चित्तापत्तौ 'गृहेपि निवसन् विप्रो मुनिर्मांसविवर्जना'दित्यादिस्मृतिव्याकोपाच्च । अत एव त्रिदोषापि परिसङ्ख्यैव तत्राश्रितेति दिक् ।

अत्रेदमवधेयम्,–नियमातिक्रमे कृते अपूर्वं परं न भवति, दृष्टस्त्वर्थाववोधो भवत्येव । अवहननातिक्रमे कृतेपि वैतुष्यवत्, दिगन्तराभिमुखभोजने तृप्तिवच्च । न चापभ्रंशानामवाचकतया कथमर्थाववोधइति वाच्यम्, शक्तिभ्रमवतां बाधकाभावात् । विशेषदर्शिनस्तु द्विविधाः,–तत्तद्वाचकसंस्कृतविशेषज्ञानवन्तस्तद्विकलाश्च । तत्र आद्यानां साधुस्मरणद्वाराऽर्थबोधः । द्वितीयानां तु बोध्यार्थसंबद्धार्थान्तरवाचकस्य स्मृतौ सत्यां ततो लक्षणया बोधः, सर्वनामस्मृतेर्वा, तदर्थज्ञापकत्वेन रूपेण साधुस्मृतेर्वा, अर्थाध्याहारपक्षाश्रयणाद्वेति यथायथं बोध्यम् । **अपरे** त्वाहुः–अपभ्रंशा अपि वाचका एव । तथाहि–'अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छाशक्ति'रिति मते भगवदिच्छायाः सन्मात्रविषयकत्वादपभ्रंशैस्तु बोधजननस्य शक्तिभ्रमदशायां तेनाप्युपगमाद्दुर्वारा शक्तिः । 'पदार्थान्तरं त'दिति मतेऽपि कल्पकं साध्वसाध्वोस्तुल्यमेव । असाधुस्मरणद्वारा साधुर्बोधक इति वैपरीत्यस्यापत्तेश्च । स्वीकृतं हि परेण तिबादिस्मारितानां लादीनामसाधूनामपि बोधकत्वम् । ननु साधूनामल्पत्वात्तत्रैव लाघवाच्छक्तिः

1 'प्रयत्नवैयर्थ्यम्' पा० । २ पठतामपि प्रावीण्याभाववदित्यर्थः । फलम्–अभ्युदयः । ३ अयं विषयः ४० पृष्ठे कैयटादौ द्रष्टव्यः ।

[ उभयपक्षनिराकरणभाष्यम् ]

**[१]एवं तर्हि नापि ज्ञान एव धर्मो नापि प्रयोग एव ॥**

**किं तर्हि ? ॥**

[ सिद्धान्तिसमाधानवार्तिकम् ]

*॥ * ॥ शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन ॥ * ॥*

[ व्याख्याभाष्यम् ]

**शास्त्रपूर्वकं यः शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यते । 'तत्तुल्यं वेदशब्देन' । वेदशब्दा अप्येवमभिवदन्ति-'योऽग्निष्टोमेन यजते य उ चैनमेवं वेद' । 'योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद' ॥**

(**प्रदीपः**) **तत्तुल्यमिति ।** वेदः शब्दो यस्यार्थस्य स **वेदशब्दः ।** तस्य यथा ज्ञात्वाऽनुष्ठानं तथा शब्दानामपि प्रकृत्यादिविभागज्ञानपूर्वकः प्रयोग इत्यर्थः ॥

(**उद्द्योतः**) **शास्त्रपूर्वके इति ।** व्याकरणाध्ययनपूर्वके इत्यर्थः । तत्र वेदाङ्गत्वादेतद्व्याकरणाध्ययनपूर्वकप्रयोगे एव धर्म इति **प्रामाणिकाः । वेदः शब्द इति ।** बोधक इत्यर्थः । प्रमाणमित्यर्थो वा । **तस्य यथेति ।** तस्य यथा **'य उ चैनमेवं वेदे'ति** ग्रन्थेन वेदतो ज्ञात्वाऽनुष्ठानं फलायोक्तन्तथाऽस्यापि शास्त्रज्ञानपूर्वकः प्रयोगः फलायेत्येकः **शब्द** इत्यादिनोक्तमित्यर्थः ॥

[ सिद्धान्तिवार्तिकस्य व्याख्यान्तरभाष्यम् ]

**अपर आह-'तत्तुल्यं वेदशब्देने'ति । यथा वेदशब्दा नियमपूर्वमधीताः फलवन्तो**

---

❀ **राजलक्ष्मीः** ❀

**फलव्यतिरेकः**-फलविरहः ।

(**भाष्ये-**) सिद्धान्ती सिद्धान्तवार्त्तिकमवतारयति-**एवमिति । किं तर्हि**-कथन्तर्हि धर्मः । को वा सिद्धान्त इति वार्थः । **शास्त्रपूर्वके**-व्याकरणाध्ययनपूर्वके । **प्रयोगे**-साधुशब्दप्रयोगे । **अभ्युदयः**-अभीष्टसिद्धिर्भवति । **तत्**-प्रयोगात्मकम् । **वेदशब्देन**-वेदबोधितेनाग्निष्टोमादिना । **तुल्यम्**-सदृशम् । यथाऽग्निष्टोमादेर्वेदाध्ययनपूर्वकं प्रयोगे-धर्मः श्रुतिचोदितस्तथा साधुशब्दानामपि व्याकरणज्ञानपूर्वकं प्रयोगे धर्मः श्रुतिबोधित इति भावः । अत्र च 'एकःशब्दः सम्यग्ज्ञात' इति श्रुतिः प्रमाणम् । तत्र 'सम्यग्ज्ञात' इत्यनेन प्रकृतिप्रत्ययविभागपूर्वकं ज्ञात इत्यस्य, 'शास्त्रान्वित' इत्यनेन व्याकरणशास्त्रज्ञानपूर्वकं तथा ज्ञात इत्यस्य, 'सुप्रयुक्त' इत्यनेनार्थानुसन्धानपूर्वकं स्थानप्रयत्नादिविभागेन प्रयुक्त इत्यस्यापि च बोधितत्वादिति तत्त्वम् ।

(**भाष्ये-**) **वेदशब्दाः**-श्रुतयः । तद्वाक्यानीति वा । **एनम्**-अग्निष्टोमम् । **एवं वेद**-वेदाध्ययनपूर्वकं वेद ।

(**प्रदीपे-**) **तस्य**-वेदशब्दस्याग्निष्टोमादेः ।

(**उद्द्योते-**) **एतदिति ।** पाणिनीयेत्यर्थः । **तस्य**-अग्निष्टोमादेः । **फलायोक्तम्**-फलायेत्युक्तम् । **अस्यापि**-

---

❀ **शब्दकौस्तुभः** ❀

कल्प्यतइति चेत्; न वयमपूर्वं किंचित्कल्पयामः किं तु यथा घटजननसामर्थ्यमेव दण्डादेः शक्तिः, तथा घटबोधजननसामर्थ्यमेव घटादिपदानां शक्तिः। सा च कारणत्वाऽपरपर्याया शक्तिभ्रमाद्बोधं वदता त्वयाप्यभ्युपेतैव । शक्तिग्रहस्य भ्रमत्वं परं त्यज्यतां, विषयाऽबाधादिति ब्रूमः । नन्वेवं गौणमुख्यविभागोच्छेदः, सर्वे सर्वस्य वाचका इति पर्यवसानादिति चेत्; त्वत्पक्षेपीश्वरेच्छाया गौणादावतिप्रसङ्गस्य तुल्यत्वात् । सुहृद्भावेन पृच्छामीतिचेत्,-प्रचुरतरप्रयोगतद्विरहाभ्यां गौणमुख्यविभाग इति गृहाण । ननु जनकत्वेनाऽगृहीतादपि तर्हि कारणात्कार्योदयः स्यादेवेति चेत्; पदार्थस्मृतिरापाद्यते वाक्यर्थबोधो वा ?। नाद्यः,-सम्बन्धग्रहं विना तदयोगात् । नान्त्यः,-द्वाराभावात् । पदार्थस्मरणं हि द्वारम् । एवं च महदेव लाघवम् । साधुस्मारणकल्पनाक्लेशश्च न भवतीति । साधुत्वं तु जातिविशेषात्मकमित्युक्तमेव । 'समानायामर्थावगतौ शब्दैश्चापशब्दैश्चे'तिभाष्यमप्येतत्पक्षपातीति दिक् ॥

*** इत्यपशब्दानां वाचकत्वावाचकत्वविचारः * ।**

'प्रयोग'शब्दमुपाददानो वार्त्तिककारःप्रयोगाद्धर्मो न तु ज्ञानमात्रादिति सूचयति । युक्तं चैतत् । 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्त' इत्यत्र ज्ञानप्रयोगयोरुपादानस्याविशेषेपि प्रतिपदाधिकरणन्यायेन 'यदैकस्मादपूर्वं तदेतरत्तदर्थ'मितिप्रयोगात्फलं, ज्ञानं तु तदङ्गमित्यभ्युपगमात् । प्रयोगस्य फलम्प्रति सन्निहितत्वाच्च । ज्ञानस्य तु व्यवहितत्वात् । ज्ञानस्य प्रयोगाङ्गतायां दृष्टार्थतालाभाच्च । उक्तं च भट्टैः-**सर्वत्रैव हि विज्ञानं संस्कारि[२]त्वेन गम्यते । पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम् ॥' इति ।** अत एव 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदे'त्यादिष्वपि ज्ञानपूर्वकानुष्ठानात्फलमित्येव सिद्धान्तः । तदुक्तं वार्तिककृता **'तत्तुल्यं वेदशब्देने'ति ।** वेदः शब्दो विधायको यस्यार्थस्य अश्वमेधादेस्तेनेदं तुल्यमित्यर्थः । तेन वैदिकशब्दानापि पक्ष-

---

१ उभयत्रापि दोषस्य सत्त्वादाह-**एवमिति ।**

२ 'संस्कारत्वेन' पा० ।

**भवन्त्येवं यः शास्त्रपूर्वकं शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यत इति ॥**

**( प्रदीपः ) अपर आहेति ।** वेदश्चासौ शब्दश्च वेदशब्द इति कर्मधारयः ॥

[ पुनर्ज्ञाने **धर्म** इतिपक्षस्वीकारभाष्यम् ]

**अथ वा पुनरस्तु–'ज्ञान एव धर्म' इति॥**

[ आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तं–'ज्ञाने धर्म इति चेत्तथाऽधर्म' इति ॥**

[ आक्षेपनिराकरणभाष्यम् ]

**नैष दोषः, शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम् । शब्दश्च शब्दज्ञाने धर्ममाह, नापशब्दज्ञानेऽधर्मम् ॥ यच्च पुनरशिष्टाऽप्रतिषिद्धं, नैव तद्दोषाय भवति, नाभ्युदयाय । तद्यथा हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति, नाऽभ्युदयाय ॥**

**( उद्द्योतः )** भाष्ये–**प्रमाणमिति ।** प्रामाणिकमित्यर्थः । **शब्दश्च शब्दज्ञाने इति । 'एकः शब्दः सम्यग्ज्ञात'** इत्यादिः । **'हेलयो हेलय'** इत्यादि तु अपशब्दप्रयोगेऽधर्ममाह, न तु ज्ञाने इति भावः । यद्यपि तत्र **'प्रयुक्त'** इत्यप्युक्तं, तथाप्यवैयाकरणस्य सम्यक्प्रयोगादपि धर्माऽभावेन ज्ञानमेव तद्धेतुः । प्रयोगस्तु तस्य द्वारमिति भावः ॥

[ समाधानान्तरवार्तिकम् ]

[।*॥*अभ्युपायो वाऽपशब्दज्ञानं शब्दज्ञाने*॥*।]

[ समाधानान्तरवार्तिकव्याख्याभाष्यम् ]

**अथ वाऽभ्युपाय एवापशब्दज्ञानं शब्दज्ञाने । यो ह्यपशब्दाञ्जानाति शब्दानप्यसौ जानाति । तदेवं 'ज्ञाने धर्मः' इति ब्रुवतोऽर्थादापन्नं भवति–'अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्मः' इति ॥**

## ❀ राजलक्ष्मीः ❀

साधुशब्दस्यापि । 'वेदशब्द'शब्दं वेदोदितकर्मार्थकतया स्वयंव्याख्याय वेदवाक्यपरतया व्याख्यातुर्मतमुपन्यस्यति–**अपर इति ।** अन्यो वार्त्तिकव्याख्याता कश्चित् । **वेदशब्दाः**–श्रुतिवाक्यानि । **नियमपूर्वं**–ब्रह्मचर्यादिनियमपूर्वकं यथा स्यात्तथा । क्रियाविशेषणमेतत् । **एवमिति ।** लोकेऽपि अर्थबोधनायोपात्ता घटमानयेत्यादिशब्दा व्याकरणशास्त्राध्ययनपूर्वकमुच्चारिता अभ्युदयजनकाः सफला भवन्तीत्यर्थः ।

फलितार्थमाह–**य इति । शास्त्रपूर्वक**मिति क्रियाविशेषणम् । **ज्ञाने एव**–साधुशब्दज्ञान एव । ननु ज्ञानपूर्वकं प्रयोगे । **अशिष्टाऽप्रतिषिद्धम्**–अविहितश्चाऽनिषिद्धश्च । अविहिताऽनिषिद्धे दोषस्याभ्युदयस्य चाऽभावं दृष्टान्तेन बोधयति–**तद्यथेति ।**

**( उद्द्योते– )** ननु 'हेलयो हेलय'इत्यादिनाऽपशब्दज्ञानेऽधर्म इत्युक्तमेवेत्यत आह–**हेलय इति । तत्र**–'एकः शब्द' इति श्रुतौ । **उक्तमिति ।** एवञ्च शब्दस्य ज्ञान इव प्रयोगेऽपि धर्म इत्यस्य लाभाच्छब्दश्च **शब्दज्ञाने धर्म**मित्यादि भाष्योक्तमनुपपन्नमित्याशयः । **धर्माभावेन**–श्रुतिबोधितस्वर्गसम्पादकाऽपूर्वविशेषाभावेन । **ज्ञानं**–सुशब्दज्ञानम् । **तद्धेतुः**–स्वर्गजनकतादृशाऽपूर्वहेतुः । **तस्य**–ज्ञानस्य ।

**( भाष्ये– ) अभ्युपायः**–सहकारि ।

## ❀ शब्दकौस्तुभः ❀

कोटिप्रविष्टतया दृष्टान्तासङ्गतिरिति नाशङ्कनीयम् । 'तेऽसुरा' इति पूर्वोदाहृतश्रुतिरपि अपशब्दप्रयोगात्प्रत्यवायं बोधयन्ती साधुप्रयोगाद्धर्मं गमयति । वाजसनेयिनां ब्राह्मणे 'तस्मादेषा-व्याकृता वागुद्यत' इति श्रुतिरप्येवम् । भाष्ये तु अभ्युपेत्यवादेन साधुज्ञानात्फलमित्यमपि पक्षः समर्थितः । नचैवमपशब्दज्ञानादधर्मोऽपि स्यादिति वाच्यम्, यावद्वचनं वाचनिकमित्यभ्युपगमात् । 'न म्लेच्छितवा'इत्यादिनाऽसाधुप्रयोगस्यैव निषेधाच्च । न च व्याकरणाध्ययने प्रवृत्तस्य परिनिष्ठितपचत्यादिबोधार्थं डुपचष्प्रभृतीनां प्रयोगोऽप्यावश्यक एवेति वाच्यम्; तदीयज्ञानमात्रेण निर्वाहात् । अत एवालौकिकम्प्रक्रियावाक्यमूहमात्रस्य गोचर इति नित्यसमासेष्वस्वपदविग्रहाभ्युपगमः । अथ व्युत्पादनार्थं तत्प्रयोग आवश्यक इत्याग्रहस्तथापि न क्षतिः । अनपभ्रष्टत्वेन तेषां प्रत्यवायाऽजनकत्वात् । नह्येते शक्तिवैकल्यादिप्रयुक्ताः, येन गाव्यादिसाम्यं भजेरन् । अथ सादित्वादसाधुतेत्याग्रहस्तथापि न क्षतिः । शब्दस्वरूपपरत्वात् । अनुकरणानां सर्वत्र साधुताभ्युपगमात् । नहि 'हेलयो हेलय'इति श्रुतिपाठोऽपि प्रत्यवायजनकः । शब्दस्वरूपमात्रपरा एते भिन्ना एव साधवश्चेति तु तुल्यम् । अत एव 'स्वाहेन्द्रशत्रुर्वर्द्धस्वे'तिश्रुतावाद्युदात्तस्य पाठेऽपि तत्प्रत्याय्यस्यार्थपरस्य ऊहितस्यानाम्नानादमन्त्रतया जपादिपर्युदासेन मन्त्रे विधीयमाना एकश्रुतिर्न प्रसक्तेति प्रागुक्तम् । अत एव साधु-

१ इदं वार्त्तिकं कुत्रापि नोपलभ्यते, व्याख्याभाष्यसद्भावात्त्वनुमाय गौडैरुद्धृतम् ।

( प्रदीपः ) **अथवेति** । अपशब्दज्ञाननान्तरीयकत्वाच्छब्दज्ञानस्य पृथक्फलमपशब्दज्ञानस्य नास्तीत्यर्थः ॥

( उद्द्योतः ) भाष्ये-**अभ्युपाय एवेति** । अपशब्दज्ञाननान्तरीयकं शब्दज्ञानमिति शब्दज्ञानेन फले जननीये सहकारितैवाऽपशब्दज्ञानस्य न पृथक्फलतेति भावः ॥ **अपशब्दज्ञानम्**-अपशब्दत्वेन तज्ज्ञानम् । एवं **'शब्दज्ञाने'** इत्यपि । अपशब्दत्वेन तज्ज्ञाने हि तद्भिन्नत्वेन शब्दज्ञानं भवति । **'यो ह्ये'ति** भाष्यस्य य एव अपशब्दाञ्जानात्यसावेव शब्दाञ्जानातीति तज्ज्ञानसमानाधिकरणशब्दज्ञानादेव धर्म इति न ततो विपरीतफलकल्पना युक्तेति भावः । तदाह-**अपशब्दज्ञाननान्तरीयकत्वादिति**। बहुव्रीहिः।न हि वह्न्यानयननान्तरीयकं ततः पात्रानयनं पृथक्फलं भवति ॥

[ समाधानान्तरवार्त्तिकम् ]

*[ ॥ * ॥ कूपखानकवद्वा[1] ॥ * ॥ ]*

[ समाधानान्तरवार्तिकव्याख्याभाष्यम् ]

**अथ वा कूपखानकवदेतद्भविष्यति । तद्यथा कूपखानकः कूपं खनन्यद्यपि मृदा पांसुभिश्चावकीर्णो भवति । सोऽप्सु संजातासु तत एव तं गुणमासादयति येन च स दोषो निर्हण्यते[2]; भूयसा चाभ्युदयेन योगो भवति ।**

**एवमिहापि यद्यप्यपशब्दज्ञानेऽधर्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन च स दोषो निर्घानिष्यते भूयसा चाभ्युदयेन योगो भविष्यति ॥**

( प्रदीपः ) **दोष इति** । उत्कृष्टधर्मफलावाप्तौ स्वल्पमधर्मफलमुत्पन्नमप्यनुत्पन्नकल्पं भवतीत्यर्थः ॥

( उद्द्योतः ) **'तुष्यतु दुर्जन'** इति न्यायेनापशब्दज्ञानस्य विपरीतत्वमात्रेणाऽधर्मसाधनत्वमभ्युपगम्यापि भाष्ये समाध्यन्तरमाह-**अथ वा कूपेति । मृत्**-आर्द्रा । **पांसुः**-शुष्का । 'यत्कर्मनान्तरीयककर्मजन्यो यो विपरीतत्वमात्रेण कल्प्योऽवैधो दोषः स तत्कर्मजन्यफलनाश्यो, यथा कूपखनननान्तरीयकशरीरव्यापारजन्यो मृल्लेपस्तत्फलजलनाश्य' इति सामान्यतोदृष्टानुमानात्तन्नाशानुमानमिति बोध्यम् । **उत्कृष्टधर्मेति** । धर्मस्य विधिबोध्यत्वादुत्कृष्टत्वम् । अधर्मस्य तु वचनाऽबोध्यत्वेन विपरीतत्वमात्रेण कल्प्यस्याऽल्पत्वेन तत्फलधर्मनाश्यत्वम् । यागीयहिंसाया **'न हिंस्या'**दिति वचनेन दुष्टताबोधनाद्दुष्टत्वमेवेत्यन्यत्र विस्तरः ॥

❀ **राजलक्ष्मीः** ❀

( प्रदीपे ) **फलं**-प्रत्यवायादिफलम् ।

( उद्द्योते- ) **तज्ज्ञानम्**-गाव्याद्यपशब्दज्ञानम् । **तज्ज्ञाने**-अपशब्दज्ञाने । **ततः**-अपशब्दज्ञानात् । **ततः**-वह्न्यानयनात् ।

(भाष्ये-) **एतत्**-अपशब्दज्ञानम् । **कूपखानकवत्**-कूपखानकेन तुल्यम् । **अवकीर्णः**-विलिप्तदेहः । 'भवती'त्यस्य-'तथापी'ति शेषः । **तत एव**-अद्भ्य एव । **तद्गुणं**-तादृशं स्नानादिसंस्कारातिशयम् । **आसादयति**-लभते । **स दोषः**-पांसुलेपादिरूपः । **निर्हण्यते**-निरस्तो भवति । **अभ्युदयेन**-पुण्येन । **इहापि**-शब्दज्ञानस्थलेऽपि । **तेन च**-तेन धर्मेण च ।

( **प्रदीपे-** ) **अनुत्पन्नकल्पं**-तुच्छत्वादपरिगणनीयतयाऽनुत्पन्नमिव ।

( **उद्द्योते-** ) **आर्द्रा**-पिच्छिला मृत् । **शुष्का**-धूलिः । ननु शब्दज्ञानस्य धर्मसाधनतैव, नाऽधर्मनाशकता, तत्र मानाभावादत आह-**यदिति । अवैधः**-विध्यबोधितः । **तन्नाशेति** । अधर्मनाशानुमानमित्यर्थः । **वचनेति** । निषेधविध्यबोध्यत्वेन । **तत्फलेति** । साधुशब्दज्ञानफलेत्यर्थः ।

❀ **शब्दकौस्तुभः** ❀

त्वाऽसाधुत्वयोरेकस्मिन् सद्भावोऽभावश्चेति विरुद्धस्य दुरुपपादतया 'अर्थभेदाच्छब्दभेद'इति दर्शनं प्रवृत्तम् । न च 'प्रकृतिवदनुकरण'मित्यतिदेशेनापशब्दानुकरणस्याऽसाधुता शङ्क्या,-असाधूनां शास्त्रीयप्रकृतित्वाभावात् । असाधुत्वस्य शास्त्रीयकार्यत्वाभावाच्च । न ह्यशास्त्रीयमप्यतिदिश्यत इति 'ऋलृक्'सूत्रे भाष्ये स्फुटमेतत् । श्वपचप्रभृतिप्रयोगादपशब्दज्ञानाद्वा प्रत्यवायो नास्तीति प्रागुक्तरीत्या स्थितेपि अभ्युपेत्यापि प्रत्यवायं भाष्ये- **कूपखानक**न्याय उदाहृतः । तथाहि-कूपं खनन् यद्यपि कर्दमेन लिप्यत एव तथापि ततो लब्धेन जलेन तं मलं दूरीकरोति फलान्तरं च लभते तथेहापि परिनिष्ठितरूपज्ञानात्पूर्वोत्पन्नप्रत्यवायनिरासं फलान्तरं च लभत इति सोयं **कूपखानक**न्यायः । कूपं खनतीति विग्रहे कर्मण्यणि प्राप्ते वासरूपन्यायेन ण्वुल् । नित्यसमासत्वाभावात्कूपस्य खानक इति स्वपदविग्रहः । न च शिल्पिनि ष्वुना सरूपेण ण्वुलो बाधः स्यादिति वाच्यम्, इह खननकर्तृत्वमात्रस्य विवक्षया शिल्पित्वस्याऽविवक्षितत्वात् । तस्मा-

१ इदं वार्त्तिकमासीत्पूर्वमिति व्याख्याभाष्यदर्शनादनुमीयते इति **गौडाः** । २ 'येन सच' पा० ।

[ दूषणान्तरनिरासवार्त्तिकम् ]

*[ ॥ * ॥ आचारे[1] नियम इति चेद्याज्ञे कर्मणि स नियमोऽन्यत्राऽनियमः ॥ * ॥ ]*

[ व्याख्याभाष्यम् ]

**यदप्युच्यते–'आचारे नियमः' इति याज्ञे कर्मणि स नियमोऽन्यत्राऽनियमः । एवं हि श्रूयते–'यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः पराऽपरज्ञा विदितवेदितव्या अधिगतयाथातथ्याः ।' ते तत्रभवन्तो यद्वा नस्तद्वा न इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे पुनः कर्मणि नापभाषन्ते । तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितन्ततस्ते पराभूताः ॥**

**( प्रदीपः ) प्रत्यक्षधर्माण इति ।** योगजे[2]प्रत्यक्षेण सर्वं विदितवन्तः ॥ **परापरज्ञा इति ।** विद्याऽविद्याप्रविभागज्ञाः ॥

**( उद्द्योतः )** भाष्ये–**अन्यत्रानियम इति ।** यज्ञे सुशब्दप्रयोगाद्धर्मोऽपशब्दप्रयोगादधर्म इति तत्रैव तयोः प्रयोगनियमः । तदतिरिक्तस्थले तु सुशब्दापशब्दयोः प्रयोगेऽनियमः । योऽपि यज्ञे दोषः सोऽपि तदङ्गभूतसंकल्पोहादिविषये एव । श्रुतौ **'हेलयो हेलयो नश्यध्व'**मित्यूह एव । **'विदितवेदितव्या'** इत्यनेन श्रवणमनननिदिध्यासनसंपदुक्ता । **'अधिगतयाथातथ्या'** इत्यनेन साक्षात्कार उक्तः। याथातथ्ये स्वार्थे ष्यञ् । वेदितव्यस्य यद्यथातथास्वरूपं सत्यं स्वरूपं शुद्धचिदानन्दरूपं तदधिगतं प्रत्यक्षेण प्राप्तं यैरित्यर्थः । **याज्ञे पुनरिति ।** अनेन तत्त्वज्ञानिनामपि कर्माधिकारं सूचयति । **'प्रयुञ्जते'** इति वर्तमानसमीपे भूते लट् । एवं **'नापभाषन्त'** इत्यपि । एवं तन्नामानो बभूवुरित्यर्थः ॥

---

[ व्याकरणपदार्थनिरूपणे आक्षेपभाष्यम् ]

**अथ 'व्याकरण'मित्यस्य शब्दस्य कः पदार्थः ? ॥**

**( प्रदीपः ) अथेति ।** उक्तमिदं 'न चान्तरेण व्याकरण'मित्यादि, तत्र पक्षद्वयेऽपि दोषदर्शनात्पदार्थप्रश्नः ॥

**( उद्द्योतः )** व्याकरणपदार्थविचारस्य सङ्गतिं दर्शयितुमाह–**उक्तमिदमिति ।** आदिना–**'तस्मादध्येयं व्याकरण'**मित्यादि पुनः पुनरुक्तिर्गृह्यते ॥

[ समाधानभाष्यम् ]

**सूत्रम् ॥**

[ सूत्रे व्याकरणे आक्षेपवार्तिकम् ]

*॥*॥ सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः ॥*॥*

---

### ❀ राजलक्ष्मीः ❀

**( भाष्ये– ) सः**-सुशब्दप्रयोगात्मकः । **अन्यत्र**–लोकप्रयोगादौ । **तत्र भवन्तः**–पूज्याः । **नापभाषन्ते इति ।** ते यज्ञे यद्वानस्तद्वान इत्येव भाषन्ते न यर्वाणस्तर्वाण इत्यर्थः । **तैः**–हेलयो हेलय इतिवादिभिः ।

**( प्रदीपे– ) विद्याविद्येति ।** ज्ञानाऽज्ञानेत्यर्थः ।

**( उद्द्योते– ) तत्रैव**-यज्ञएव । **तयोः**–सुशब्दापशब्दयोः । **तदङ्गेति ।** यज्ञाङ्गभूतेत्यर्थः । **ऊह एवेति ।** एवञ्च तत्राऽपशब्दोच्चारणादसुराणां पराभवो युक्त एवेत्याशयः । **पदार्थः**–अर्थः ।

**( प्रदीपे– ) पक्षद्वयेऽपि**–सूत्रपक्षे शब्दपक्षे च ।

**( उद्द्योते– ) उक्तिः**–भाष्यकृदुक्तिः ।

---

### ❀ शब्दकौस्तुभः ❀

त्सर्वथापि गव्यादिप्रयोगे प्रत्यवाय इति स्थितम् । तत्रेदं भाष्ये सिद्धान्तितं–याज्ञे कर्मण्येवायम् । 'न म्लेच्छितवा' इत्यस्य क्रतुप्रकरणे पाठात् । क्रतुप्रयोगाद्बहिस्तु अपशब्दं प्रयुञ्जानो न दुष्यति । एवं हि श्रूयते–**'यर्वाणस्तर्वाणो नामऋषयो बभूवुः प्रत्यक्षधर्माणः परावरज्ञा'** इति । **प्रत्यक्षधर्माणो**–योगजधर्मबलेन साक्षात्कृतधर्माः । अत्रायं श्रुतेराशयः–योगिन एते विरक्तत्यतिशयाल्लौकिकेष्वर्थेष्वाग्रहविरहेण यथा तथास्माकं भवत्वितिविवक्षवो 'यद्वानस्तद्वान'इति वक्तव्ये 'यर्वाणस्तर्वाण' इत्यूचुः । याज्ञे कर्मणि पुनः साधूनेव प्रयुक्तवन्तस्तेन 'यर्वाणस्तर्वाण'इत्येवं रूपामेव संज्ञां मुनयो लेभिर इति । **भट्टाश्चाहुः–स्त्र्युपायमांसभक्षादिपुरुषार्थेष्वपि श्रितः । प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥' इति ।** अपरे त्वाहुः–'क्रतोर्बहिः प्रयोगेपि पुरुषः प्रत्यवैति ही'ति । तेषामयमाशयः–'नानृतं वदे'दित्यादिनारभ्याधीतः पुरुषार्थोपि निषेधस्तावदस्तीति निर्विवादम् । तत्र निषेध्यमनृतं द्विधा,-शब्दानृतमर्थानृतं चेति । शब्दस्यार्थस्य वा विपरीतप्रतिपत्तिहेतुभूतमुच्चारणमनृतवदनम् । एवं च यथाऽर्थानृतं वदतः प्रत्यवायस्तथा शब्दानृतमपीति तुल्यम् । क्रतुमध्ये पुनरपभाषणे पुरुषोपि प्रत्यवैति, क्रतुरपि विगुण इति वचनद्वयबलात्सिध्यतीतिदिक् । यथा च प्रयोगे साधूनां नियमस्तथा साधुत्वज्ञानेपि व्याकरणस्य नियम एवेत्यवधेयम् । 'व्याकृता वागुद्यत'इतिप्रागुक्तश्रुतेः । **व्याकृता–**

---

१ लेखकप्रमादाद्बहोः कालादिदं वार्तिकं लुप्तं भवेदिति व्याख्योपलम्भादनुमीयते । २ 'योगिप्रत्यक्षेण' पा० ।

[ व्याख्यानभाष्यम् ]

**सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते– 'व्याकरणस्य सूत्र'मिति ॥ किं हि तदन्यत्सूत्राद्व्याकरणं यस्याऽदः सूत्रं स्यात् ? ॥**

**( प्रदीपः ) षष्ठ्यर्थ इति ।** द्वाभ्यामपि शब्दाभ्यामष्टाध्याय्याः प्रतिपादनाद्व्यतिरेकाभावः । सामान्यविशेषशब्दतया तु द्वयोः सहप्रयोगो न विरुध्यते। यदा त्वष्टाध्याय्येकदेशः 'सूत्र'शब्देनोच्यते तदा षष्ठ्यर्थोऽप्युपपद्यते ॥

**( उद्द्योतः )** ननु सूत्रसमुदायस्य व्याकरणस्येदं सूत्रमित्युपपद्यतेऽत आह–**द्वाभ्यामिति ।** सूत्रपदेनाप्यष्टाध्याय्येव यदोच्यते तदापीष्यतेऽयं प्रयोगः, स न सिध्येदित्यर्थः। ननु किमुच्यते–'**षष्ठ्यर्थोऽनुपपन्न**' इति, पर्यायतया सहप्रयोगोऽपि न स्यादत आह–**सामान्यविशेषेति।** सूत्रं **सामान्यं,** व्याकरणं **विशेषः।** **सूत्र**शब्देनाष्टाध्याय्येव, तदेकदेशे तु योगव्यवहार एव '**योगे योगे उपतिष्ठत**'इत्यादौ। **यदा त्विति । 'सूत्राणि चाप्यधीयाने**'इति भाष्ये वक्ष्यमाणत्वादिति भावः। वस्तुत एकदेशस्य सूत्रत्वेऽपि तस्यापि साक्षात्परम्परया वा व्याकरणत्वात्षष्ठ्यर्थानुपपत्तिरेवेति तत्त्वम् ।

[ सूत्रे व्याकरणे **दोषान्तर**वार्तिकम् ]

॥ * ॥ *शब्दाऽप्रतिपत्तिः* ॥ * ॥

[ व्याख्याभाष्यम् ]

**शब्दानां चाऽप्रतिपत्तिः प्राप्नोति,– 'व्याकरणाच्छब्दान्प्रतिपद्यामहे' इति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते ॥**

**किं तर्हि ?॥ व्याख्यानतश्च ॥**

**( प्रदीपः ) शब्दाप्रतिपत्तिरिति ।** न हि व्याख्यानरहितसूत्रमात्रश्रवणाच्छब्दाः प्रतीयन्ते ॥

**( उद्द्योतः )** समुदायस्यातिरिक्तत्वेऽपि दोषमाह–भाष्ये–**शब्दाप्रतिपत्तिरिति ।** 'व्याकरणाच्छब्दान्प्रतिपद्यामहे' इति शब्दविषयव्यवहाराऽसिद्धिः प्राप्नोतीत्यर्थः। यतः केवलसूत्रेभ्यः शब्दप्रतिपत्तिर्न दृश्यते, व्याकरणस्य शब्दप्रतिपत्तिहेतुत्वं च लोकसिद्धम्, 'व्याकरणाच्छब्दान्प्रतिपद्यामहे'इति व्यवहारात्। सेयं प्रतिपत्तिसाधनता सूत्राद्व्यावर्तमाना तद्व्याप्यां व्याकरणशब्दवाच्यतां व्यावर्त्तयतीति भावस्तदाह–**नहीति ॥**

[ दोषनिरासभाष्यम् ]

**ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति ॥**

[ दोषस्थापनभाष्यम् ]

**न केवलानि चर्चापदानि व्याख्यानं– 'वृद्धिः', 'आत्', 'ऐ'जिति ॥**

**किं तर्हि ? ॥**

**उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति ॥**

**( प्रदीपः ) समुदितमिति ।** समुदायादेवाऽर्थावसायोत्पादादित्यर्थः ॥

**( उद्द्योतः )** भाष्ये–**चर्चापदानि ।** चर्च्यमानानि विभज्यमानानीत्यर्थः। **वाक्याध्याहार इति। वाक्य**घटकपदानां सूत्रान्तरे श्रुतानां स्वरितत्वप्रतिज्ञयाऽ**ध्याहारः** कल्पनमित्यर्थः । यद्वा 'वाक्याध्याहार' इत्यनेन वार्तिककृद्वाक्यानां सूत्रतात्पर्यविषयता वाक्यैकदेशन्यायेन सूचिता ॥

[ एकदेशिनः पक्षान्तराश्रयणभाष्यम् ]

**एवं तर्हि–शब्दः ।**

**( उद्द्योतः ) शब्द इति ।** लक्ष्यमित्यर्थः। अत्र पक्षे षष्ठ्यर्थ उपपद्यते । शब्दाऽप्रतिपत्तिहेतुता तु तदवस्था ॥

[ शब्द इति पक्षेऽनुपपत्तिप्रदर्शकं वार्तिकम् ]

॥ * ॥ *शब्दे ल्युडर्थः* ॥ * ॥

[ व्याख्याभाष्यम् ]

**यदि शब्दो व्याकरणं, ल्युडर्थो नोपपद्यते–'व्याक्रियन्ते शब्दा अनेने'ति व्याकरणम् । नहि शब्देन किंचिद्व्याक्रियते ॥ केन तर्हि ? ॥ सूत्रेण ॥**

---

**❀ राजलक्ष्मीः ❀**

**(उद्द्योते-) योगव्यवहारः**–सूत्रेषु तु योग इति व्यवहारः ।

**( भाष्ये– ) शब्दः**–शब्द एव व्याकरणपदार्थः । **ल्युडर्थः**–करणम् । करणत्वमिति यावत् ।

**(उद्द्योते) लक्ष्यम्**–अष्टाध्यायीसूत्रलक्ष्यं शालीयादि।

---

**❀ शब्दकौस्तुभः ❀**

व्याकरणसंस्कृतेति हि तदर्थः। '**व्याकरण**'शब्दश्च योगरूढ्या लक्ष्यलक्षणसमुदायपरः सूत्रमात्रपरो वेति पक्षद्वयमपि भाष्ये स्थितम् । तत्राद्ये पक्षे सूत्रमात्रमधीयाने 'वैयाकरण'शब्द-

---

१ 'व्याख्याना'मिति पा० ।

(प्रदीपः) **शब्द इति।** करणे ल्युड्विधीयते । शब्दश्च व्याक्रियमाणत्वात्कर्म न करणमिति भावः ।

( उद्द्योतः ) ननु 'राजभोजना' इतिवत्कर्मणि ल्युटि न दोषोऽत आह–**करणे इति।** कर्मणि स तु काचित्क इति भावः ॥

[ अनुपपत्त्यन्तरवार्तिकम् ]

॥ * ॥ *भवे च[1] तद्धितः*[1] ॥ * ॥

[ व्याख्याभाष्यम् ]

**भवे च तद्धितो नोपपद्यते–'व्याकरणे भवो योगो वैयाकरणः' इति । नहि शब्दे भवो योगः ॥ क तर्हि ? ॥ सूत्रे ॥**

( प्रदीपः ) **भवे चेति।** शब्देऽप्यन्वाख्या[2]यकत्वेन भवो योग इति चेन्मीमांसादियोगस्यापि शब्दं प्रति विचारकत्वाद्वैयाकरणत्वप्रसङ्गः ॥

[ अनुपपत्त्यन्तरवार्तिकम् ]

॥ * ॥ *प्रोक्तादयश्च तद्धिताः* ॥ * ॥

[ व्याख्यानभाष्यम् ]

**प्रोक्तादयश्च तद्धिता नोपपद्यन्ते, पाणिनिना प्रोक्तं पाणिनीयम् , आपिशलं काशकृत्स्नमिति । नहि पाणिनिना शब्दाः प्रोक्ताः ॥ किं तर्हि ? ॥ सूत्रम् ॥**

[ अभिहिताभिधानदोषसूचकभाष्यम् ]

**किमर्थमिदमुभयमुच्यते–'भवे [ च[4] तद्धितः' ] 'प्रोक्तादयश्च तद्धिताः' इति। न 'प्रोक्तादयश्च तद्धिताः' इत्येव भवेऽपि तद्धितश्चोदितः स्यात् ? ॥**

[ दोषनिरासभाष्यम् ]

**पुरस्तादिदमाचार्येण दृष्टं–'भवे च तद्धितः' इति, तत्पठितम् । तत उत्तरकालमिदं दृष्टम्–'प्रोक्तादयश्च तद्धिताः' इति, तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ॥**

( प्रदीपः ) **न चेदानीमिति ।** लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्त्तिकानामुपपत्त्या दोषाभावः॥

( उद्द्योतः ) **लक्षणप्रपञ्चाभ्यामिति ।** यथा कर्मधारयप्रकरणे अलुक्प्रकरणे च । विजिगीषुकथायां[3] हि अभिहिताभिधानमशक्तिसूचकत्वाद्दोषाय । इह तु व्युत्पादनार्थत्वान्न दोषकृदिति भावः । पूर्वं सामान्ये उक्ते पश्चाद्विशेषकथनं प्रपञ्चार्थमिति युज्यते, अत्र तु विपरीतमिति न तत्साम्यमित्यन्ये ॥

[ प्रथमाक्षेपनिराकरणभाष्यम् ]

**अयं तावददोषो—यदुच्यते–'शब्दे ल्युडर्थः' इति । नावश्यं करणाधिकरणयोरेव ल्युड्विधीयते ॥ किं तर्हि ? ॥ अन्येष्वपि कारकेषु–'कृत्यल्युटो बहुल'मिति । तद्यथा प्रस्कन्दनं प्रपतनमिति ॥**

( प्रदीपः ) **प्रस्कन्दनमिति ।** यद्यप्ययं भीमादिस्तथापि 'कृत्यल्युटो बहुल'मित्यस्यैव 'भीमादयोऽपादाने' इत्ययं प्रपञ्च इति भावः ॥

[ करणल्युट्समर्थनपरपक्षान्तरभाष्यम् ]

**अथ वा शब्दैरपि शब्दा व्याक्रियन्ते । तद्यथा 'गौ'रित्युक्ते सर्वे सन्देहा निवर्त्तन्ते' 'नाश्वो न गर्दभ' इति ॥**

❀ **राजलक्ष्मीः** ❀

( प्रदीपे– ) **करणमिति ।** कर्मत्वकरणत्वयोश्च गुणप्रधानभावात्तत्कर्मणस्तत्करणत्वं नोपपद्यत इत्याशयः । **अन्वाख्यायकत्वेन**–संस्कारकत्वेन। तत्साधकत्वेनेतियावत्। **विचारकत्वात्**–विचारादिना संस्कारकत्वात् ।

( भाष्ये– ) **इत्येव**–इत्यनेन वार्त्तिकेनैव। **तद्धितः**–तद्धितानुपपत्तिः। **चोदितः**–आशङ्कितः। **पुरस्तात्**–आदौ। **आचार्येण**–वार्तिककृता कात्यायनेन । **दृष्टं**–निर्मितम् । स्मृतमिति वा। **सूत्राणि**–सूत्राणि वार्त्तिकानि च ।

( प्रदीपे– ) **लक्षणेति ।** सामान्यशास्त्रत्वविशेषशास्त्रत्वाभ्यामित्यर्थः । **मूलेति ।** पाणिनीयसूत्रवदित्यर्थः ।

(उद्द्योते–) **कर्मधारयेति।** तत्रहि–'विशेषणं विशेष्येण बहुल'मिति सूत्रेणैव सिद्धे तदिग्रमतत्समाससूत्राणि तत्प्रपञ्चार्थतयैव सफलानि, तथाऽत्रापि पूर्ववार्त्तिकस्योत्तरवार्त्तिकं प्रपञ्चभूतमिति भावः। **अलुगिति।** 'अलुगुत्तरपदे'इत्यस्य–अग्रिमाण्यलुग्विधायकानि सूत्राणि प्रपञ्चभूतानीत्याशयः ।

❀ **शब्दकौस्तुभः** ❀

प्रयोगो भाक्तः । समुदायवाचका हि शब्दाः क्वचिदवयवेपि प्रयुज्यन्ते । यथा 'पूर्वे पञ्चाला' 'उत्तरे पञ्चाला'इति । द्वितीयपक्षे तु'व्याकरणस्य सूत्र'मितिप्रयोगो राहोः शिर इतिवन्नेयः।

1 अयमंशः क्वचित्पुस्तके न वार्त्तिके पठ्यते ।

२ 'न्वाख्यापकत्वेन' पा०। ३ शास्त्रार्थे विवादे । ४ पुनरुक्तिः ।

( प्रदीपः ) गौरित्युक्ते इति । सास्नादिमति यदा कंचित्प्रति 'अयं गौः' इत्युच्यते तदा तत्र वाचकान्तराणां निवृत्तिः कृता भवति, एवमेकस्मिन्नुदाहरणे उपन्यस्ते सर्वाणि तत्सदृशानि शब्दान्तराणि प्रतीयन्ते ॥

( उद्द्योतः ) प्रतीयन्त इति । एवं च विपरीतव्यावृत्तिः सदृशसङ्ग्रहश्च व्याकृतिरिति भावः । एतेन शब्दाऽप्रतिपत्तिरप्यत्र पक्षे उद्धृता ॥

[ दोषान्तरस्मारणभाष्यम् ]

अयं तर्हि दोषः–'भवे [ च[1] तद्धितः' ] 'प्रोक्तादयश्च तद्धिताः'—इति ॥

[ समाधानवार्तिकावतरणभाष्यम् ]

एवं तर्हि–

[ सिद्धान्तिसमाधानवार्तिकम् ]

॥ ※ ॥ *लक्ष्यलक्षणे व्याकरणम्* ॥ ※ ॥

[ व्याख्याभाष्यम् ]

लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवतीति ॥

[ पदार्थजिज्ञासाभाष्यम् ]

किं पुनर्लक्ष्यं, किं लक्षणम्[2] ? ॥

( उद्द्योतः ) व्यावर्त्यव्यावर्तकरूपलक्षणस्यातिप्रसक्तत्वात्पृच्छति भाष्ये-किं पुनरिति ॥

[ समाधानभाष्यम् ]

शब्दो लक्ष्यः, सूत्रं लक्षणम् ॥

[ सिद्धान्ते दोषप्रदर्शकभाष्यम् ]

एवमप्ययं दोषः–समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते । सूत्राणि चाप्यधीयान इष्यते–'वैयाकरण'इति ॥

[ दोषनिरासभाष्यम् ]

नैष दोषः । समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्त्तन्ते । तद्यथा 'पूर्वे पञ्चालाः' 'उत्तरे पञ्चालाः' 'तैलं भुक्तम्' 'घृतं भुक्तम्' 'शुक्लो' 'नीलः' 'कपिलः' 'कृष्ण' इति । एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेष्वपि वर्त्तते ॥

( प्रदीपः ) पूर्वे पञ्चाला इति । जनपदान्तरनिवृत्तिविवक्षायामेकदेशेऽपि समुदायरूपारोपात्प्रयोगः । तैलमिति । यदौषधसंस्कृता घृततैलमात्रा भवति तदेदमुदाहरणम् । आकृतिवाचित्वे तु घृततैलशब्दयोः संस्थानप्रमाणनिरपेक्षा सर्वत्र मुख्या वृत्तिः । शुक्ल इति । अशुक्लेऽप्यवयवेऽवयवान्तरस्य शौक्ल्यात्समुदायस्य शुक्लत्वे सति तदारोपात्प्रयोगः ॥

( उद्द्योतः ) जनपदान्तरेति—भावप्रधानो निर्देशः । यदेति । मात्रा–परिच्छिन्नोंऽशः । औषधसंस्कृते तत्र समुदाये घृतादिशब्दस्य रूढिरिति भावः । अशुक्लेऽप्यवयवे इति,–'प्रयोग' इत्यनेनान्वेति । आरोपादिति,–समुदायस्य शुक्लत्वे अशुक्लावयवे प्रयोगे च हेतुः । तत्र समुदाये शुक्लत्वारोपे हेतुः–अवयवान्तरस्य शौक्ल्यादिति । वनैकदेशे[3] पुष्पिते 'पुष्पितं वन'मितिवदेकदेशेऽपि शुक्ले 'शुक्लः पटः' इति व्यवहार इति बोध्यम् ॥

[ सिद्धान्तिनः प्रथमपक्षाभ्युपगमभाष्यम् ]

अथ वा पुनरस्तु सूत्रम् ॥

[ आक्षेपस्मारणभाष्यम् ]

ननु चोक्तम्—'सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः'—इति ॥

[ आक्षेपनिरासभाष्यम् ]

नैष दोषः । व्यपदेशिवद्भावेन भविष्यति ॥

( प्रदीपः ) व्यपदेशिवद्भावेनेति । यथा 'राहोः शिर' इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदव्यवहारः, एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते, सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते ॥

( उद्द्योतः ) शब्दार्थभेदादिति । अनेकावस्थाऽप्रतिपत्तेर्नियमानुपपत्तिः । पदच्छेदविग्रहयोजनादिभिः सूत्रार्थस्यैवाऽभिव्यञ्जनात् । अत एव ह्युत्सूत्रमुच्यमानमप्युपेक्ष्यते । यत्रैव तु सूत्रस्य तात्पर्यलेशोऽप्यस्ति तदेव तु गृह्यते ।

※ शब्दकौस्तुभः ※

अष्टाध्याय्या एकदेशःसूत्रमित्यत्रयवावयविभावे षष्ठीति वास्तु । 'अस्य वनस्यायं वृक्ष' इत्यादिवत् । नचैवमपि सूत्रमात्राच्छब्दा-

१ अयमंशः कचिदपि नोपलभ्यते ।

२ 'किंच लक्षणम्' पा० । ३ 'पुष्पिते' इति क्वचिन्न ।

युक्तं शिरो 'राहु'शब्दार्थः । यत्किंचिदेकावस्थायुक्तं तच्छिरः-शब्दार्थः । तादृशराहुशब्दार्थस्य तादृशशिरःपदार्थोऽवयव इति षष्ठ्यर्थोपपत्तिरिति भावः । **सूत्रशब्देन तु समुदायरूपतेति** । अनेकावस्थायुक्तस्य तस्य व्याकृतिक्रियाकरणावस्थाविशिष्टमवयव इति तद्रूपावयवस्याऽयं समुदाय इत्यर्थः । ईदृशस्थले विकल्पात्मकं ज्ञानं वस्तुशून्यमेव । व्यपदेशिवद्भावविषयेऽप्येवमेव 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति योगसूत्रे **पतञ्जल्युक्तेरित्यन्ये** ॥

[ आक्षेपान्तरमनूद्य तन्निरासभाष्यम् ]

**यदप्युच्यते–"शब्दाप्रतिपत्तिरिति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते ॥ किं तर्हि ?॥ व्याख्यानतश्चे"ति॥ परिहृतमेतत्, 'तदेव सूत्रं विगृहीतं व्याख्यानं भवती'ति ॥**

[ दोषस्मारणभाष्यम् ]

**ननु चोक्तम्–"न केवलानि चर्चापदानि व्याख्यानं–'वृद्धिः आत् ऐ'जिति, किंतर्हि ?, उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवती"ति ॥**

[ समाधानभाष्यम् ]

**अविजानत एतदेवं भवति । सूत्रत एव हि शब्दान् प्रतिपद्यन्ते । आतश्च सूत्रत एव, यो ह्युत्सूत्रं कथयेन्नादो गृह्येत ॥**

( प्रदीपः ) **सूत्र एवेति** । पदच्छेदादिभिः सूत्रार्थस्यैवाऽभिव्यञ्जनात् । **आत इति** निपातः । अतश्च हेतोरित्यर्थः ॥ **नाद इति** । नैतदित्यर्थः ॥ अथवा **नादो**ऽर्थरहितत्वाद्घोषमात्रमेवेत्यर्थः ॥

( उद्योतः ) भाष्ये–**अविजानत इति** । मन्दबुद्धेरित्यर्थः । **सूत्र एवेति** । एतन्मूलमेव पठ्यते **'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके'** इति ।

**[ इति व्याकरणपदार्थनिरूपणाधिकरणम् ॥ ]**

[ वर्णोपदेशप्रयोजनाधिकरणे **आक्षेपभाष्यम्** ]

**अथ किमर्थो वर्णानामुपदेशः ? ॥**

( प्रदीपः ) **किमर्थ इति** । नहि वर्णोपदेशेन कस्यचित्साधुशब्दस्यानुशासनमिति भावः ॥

( उद्योतः ) ननु लोकप्रसिद्धमातृकापाठेनैव वर्णज्ञानसंभवान्माहेश्वरी[2] वर्णसमाम्नायः किमर्थ इति पृच्छति–भाष्ये **किमर्थ इति** । पाणिनये महादेवकृत इत्यर्थः । ननु साधुत्वान्वाख्यानं फलमत आह–**नहीति** ।

[ समाधानवार्त्तिकम् ]

॥ * ॥ *वृत्तिसमवायार्थ उपदेशः* ॥ * ॥

[ व्याख्याभाष्यम् ]

**वृत्तिसमवायार्थो वर्णानामुपदेशः ॥**

[ समासप्रश्नभाष्यम् ]

**किमिदं वृत्तिसमवायार्थ इति ? ॥**

[ समाधानभाष्यम् ]

**वृत्तये समवायो वृत्तिसमवायः । वृत्त्यर्थो वा समवायो वृत्तिसमवायः । वृत्तिप्रयोजनो वा समवायो वृत्तिसमवायः॥**

**का पुनर्वृत्तिः ?॥ शास्त्रप्रवृत्तिः ॥**

**अथ कः समवायः? ॥**

**वर्णानामानुपूर्व्येण संनिवेशः ॥**

**अथ क उपदेशः ? ॥ उच्चारणम् ॥**

**कुत एतत् ? ॥**

**दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह–उपदिष्टा इमे वर्णा इति ॥**

( प्रदीपः ) **वृत्तिसमवायार्थ इति** । लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः । धर्मनियमवत्समासः । **वृत्त्यर्थ इति** । शास्त्रप्रवृत्तिप्रत्यासन्नत्वं

---

❀ राजलक्ष्मीः ❀

( भाष्ये– ) **व्याख्यानतश्चेति** । सूत्रात्तद्व्याख्यानाच्चेत्यर्थः । शङ्कते–**नन्विति** । **भवतीति** । एवञ्च सूत्रस्यैव व्याकरणपदार्थत्वेऽपि नोक्तदोषः, सूत्रस्यैव विगृहीतस्य व्याख्यानत्वादित्याशयः । **केचित्तु**–'शब्दाप्रतिपत्ति' रित्याक्षेपसाधकभाष्यमित्याहुः । समाधत्ते–**न केवलेति** ।

---

❀ शब्दकौस्तुभः ❀

तदुक्तम्–'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके'इति। अत एव बहुलग्रहणादिकं सार्थकमिति दिक् ॥

नन्वेवं किं वर्णोपदेशेन ? न हि तद्बलेन कस्यचिच्छब्दस्य साधुत्वमवगम्यते । न च कलध्माताद्दिदोषरहितवर्णस्वरूपप्रतिपत्तिरेव तत्फलमिति वाच्यम्; लोकत एवाऽविप्लुतवर्णप्रतीतेरवश्यं वाच्यत्वात् । अन्यथा प्लुतादिपाठस्याऽपीह कर्त्तव्यतापत्तेः । तदुक्तम्–'इष्टबुद्ध्यर्थश्चेदु-

---

१ सूत्रातिरिक्तानां व्याख्यानत्वमित्येतदित्यर्थः ।

२ भाष्यकृदनुक्तमेषां माहेश्वरत्वं स्ववासनया नागेश आहेत्यवधेयम्।

समवायस्य दर्शयति। 'इग्यण' इत्यादौ हि यथासङ्ख्यशास्त्रं वर्णसंनिवेशमात्रादेवाऽवतिष्ठते। **वृत्तिप्रयोजन इति।** पारम्पर्येण शास्त्रप्रवृत्तावस्याऽङ्गत्वम्। सति हि समवाये इत्संज्ञा। तत आदिरन्त्येनेति। ततो **ढ्लोप** इत्यादिशास्त्रप्रवृत्तिः॥

( उद्द्योतः ) उत्तरम्—**वृत्तिसमवायार्थं इति। वृत्तिः** शास्त्रप्रवृत्तिस्तदुपयोगी **समवायो** वर्णगतः क्रमविशेषः, स बोध्यत्वे**नार्थः** प्रयोजनं यस्य स तथोक्तः। सति ह्यक्षरसमाम्नायेऽजादिसंज्ञाभिर्लाघवेन शास्त्रप्रवृत्ति**रिग्यण** इत्यादौ

## ❀ राजलक्ष्मीः ❀

( प्रदीपे ६९ पृष्ठे ) **समुदायात्**—उदाहरणप्रत्युदाहरणादिसमुदायात्। एवञ्च सूत्रस्य व्याकरणपदार्थत्वे शब्दाऽप्रतिपत्तिः स्पष्टैवेत्याशयः।

( उद्द्योते ) 'वाक्यघटके'त्यस्यार्थः-'**सूत्रान्तरे इति।**

( भाष्ये ६९ पृष्ठे ) एकदेशी 'लक्ष्यं व्याकरण'मित्याह—**एवमिति।** ( उद्द्योते ) **लक्ष्यं**—सुद्ध्युपास्य इत्याद्यष्टाध्याय्या लक्ष्यम्। **तदवस्थेति।** लक्ष्येण लक्ष्यप्रतीतेरसम्भवादित्याशयः। **परेतु** सुद्ध्युपास्य इत्यादिलक्ष्यैर्'मध्वपास्य' दध्यानयादेर्लक्ष्यान्तरस्य प्रतिपत्त्या दोषद्वयोद्धार एवास्मिन्पक्षे इति नागेशोक्तं चिन्त्यमित्याहुः।

( प्रदीपे ७०पृष्ठे ) **अयं**—'प्रस्कन्दन'मित्यादिः। **तत्र**—गवि। **वाचकान्तराणां**—पटादिशब्दानाम्।

( उद्द्योते ) **एतेन**—'अथवे'ति भाष्येण।

( भाष्ये ७१ पृष्ठे ) 'दोष' इत्यस्य—'अनुद्धृत' इति शेषः। वर्त्तते इतिवा। सिद्धान्ती वार्त्तिकमवतारयति—**एवन्तर्हीति।** उक्तपक्षद्वयस्य पूर्वोक्तरीत्या दुष्टत्वे सतीत्यर्थः। **समुदितमिति।** एवञ्च व्याकरणत्वं व्यासज्यवृत्तीत्यवधेयम्।

## ❀ शब्दकौस्तुभः ❀

दात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेश'इति। तत्र एकश्रुत्या सूत्रपाठादुदात्तादिस्वरत्रयस्यापि कर्त्तव्यः पाठ इत्युक्तम्। त्रैस्वर्येण पाठे हि अन्यतमस्य उच्चारणादेव सिद्धौ द्वयोरेव कर्त्तव्यतां ब्रूयात्। अत एव च लोके त्रैस्वर्यमेकश्रुत्या सह विकल्प्यत इति ज्ञाप्यते। एतच्च 'विभाषा छन्दसी'त्यत्र स्फुटीकरिष्यामः। ननु निर्देशस्य जातिपरत्वात्प्लुतादिसङ्ग्रहः से स्यतीतिचेन्न; संवृतकलप्रभृतीनामपि सङ्ग्रहापत्तेः। तदुक्तम् 'आकृत्युपदेशात्सिद्धमितिचेत्संवृतादीनां प्रतिषेध'इति। तत्र ह्रस्वस्याऽवर्णस्य संवृतगुणकत्वेपि तदितरेषामर्चां संवृतत्वं दोषः। आदिशब्दात्कलः। स च स्वोचितस्थानभ्रष्टः। तथा श्वासभूयिष्ठतया ह्रस्वोपि दीर्घवल्लक्ष्यमाणो ध्मातः। एवं

दीर्घोपि ह्रस्ववत्कालसङ्कोचेनोच्यमानोऽर्धकः। एवं करणादिभ्रंशादपि बहवो दोषाः शिक्षाप्रातिशाख्यादिषु प्रसिद्धाः। तत्तद्दोषविशिष्टानामपिअत्वादिजात्याक्रान्तत्वाज्जातिपरनिर्देशपक्षे तेषत्रतिव्याप्तिरितिस्थितम्। न च गर्गादिबिदादिपाठस्य तत्रेणोभयार्थतया वर्णशुद्धिलाभः॥ अपठितेषु प्रातिपदिकेषु तथाप्यक्षतेः।

स्यादेतत्—सर्वा अज्व्यक्तयो हल्व्यक्तयश्च शास्त्रान्ते शुद्धाः पठिष्यन्ते अ अ इतिवत्। नचैवं गौरवम्, तद्बलेन सर्वेषामनुबन्धानां प्रत्याख्यानात्। इत्संज्ञालोपयोरपि त्यागात्। तथाहि शीङ्घातोर्ङकारं परित्यक्ष्यामः। ईकारं च कलं पठिष्यामः। 'ङित आत्मनेपद'मित्यस्य स्थाने 'कलादात्मनेपद'मिति पठिष्यामः। कलश्च प्रक्रियादशायामेव। यथा ङकारः।

यथासङ्ख्यप्रवृत्तिश्चेति भावः। अनेनाऽस्य शास्त्रबहिर्भूतत्वं सूचितम्। अत एव **मङ्गलार्थं महतः शास्त्रौघस्यादितो वृद्धिशब्दं पठती**'ति वक्ष्यति। अन्यकर्तृकत्वं च सूचितम्। 'पाणिनिशास्त्रप्रवृत्त्यर्थं उपदेश' इत्युक्ते उपदेशे गुरुकर्तृकतायाः स्वरसतः प्रतीतेः। सिद्धोच्चारणेपि 'मन्त्रोपदेश' इत्यादावुपदेशव्यवहारात्। '**अनुबन्धकरणार्थं**' इत्यत्र करणपदेनेतरस्य सिद्धत्वसूचनात्। तत्करणं चोपदेशकर्तृकर्तृकमेव प्रत्यासत्तेरित्याहुः। भाष्ये—**किमिदमिति।** कोऽयं समास इति प्रश्नः। **धर्मनियमवदिति।** षष्ठीसमासः[2]। पक्षत्रयभेदमुपपादयति—**शास्त्रेति।** आद्यतात्पर्यं तूक्तं

**एवमपि**—समुदितस्य व्याकरणत्वाङ्गीकारेऽपि। **समुदाये**—लक्ष्यलक्षणसमुदाये। **अवयवे**—तदेकदेशे।

( उद्द्योते ७१ पृष्ठे ) '**वनैकदेशे**' इत्यस्य 'पुष्पिते सती'ति शेषः। क्वचित्तथैव पाठः। **व्यवहार इति। शुद्धे** एकदेशे पटत्वारोपात्तद्व्यवहार इत्यर्थः। सिंहावलोकनन्यायेन लोकव्यवहारानुमोदितं 'सूत्रं व्याकरण'मिति पक्षं समर्थयते भाष्ये—**अथवेति।** ( ७२ पृष्ठे ) **अविजानतः**—सूत्रस्यैव सर्वः प्रपञ्च इति तत्त्वमविदुषः। **एतदेवं**—समुदितं व्याख्यानमित्येवम्। वस्तुतस्त्वमाह—**सूत्रत एवेति।**

( भाष्ये ७२ पृष्ठे ) **वर्णानाम्**—अइउणादीनाम्।

( उद्द्योते ७२ पृष्ठे ) नन्वकारादिवर्णज्ञानमेव तत्प्रयोजनमत आह—**लोकेति। मातृका**—'ककहरा' इतिप्रसिद्धः—'कखगघङ' इत्यादिवर्णसमुदायः। एतेन वर्णोपदेशोऽयं पाणिनिकृत एवेतिस्पष्टं लभ्यते। 'पाणिनये महादेवकृत' इति नागेशभट्टोक्तिस्तु स्ववासनयैव न प्रमाणानुगृहीतेति**गौडाः।**

( भाष्ये ७२ पृष्ठे ) **आह**—उच्चारयिता कथयति। परेतु—अइउणादिसूत्रपाठानन्तरं पाणिनिना 'उपदिष्टा इमे वर्णा'इत्युक्तम्भवेदिति योजयन्ति।

( उद्द्योते ७३ पृष्ठे ) आद्यसमासफलमाह—**सतिहीति।**

१ 'प्रत्याहारसिद्धि'रितिशेषः।

२ वृत्तेः समवाय इत्येव मित्यर्थः।

**'लाघवेन शास्त्रप्रवृत्त्यर्थः'** इति । ननु नेदमाद्योच्चारणमस्यानादित्वात्, तत्कथमुपदेशत्वव्यवहारोऽत आह भाष्ये–**उच्चारणमिति ।** ढक्कानिनादेनाभिव्यक्तिरित्यर्थः ॥

[ प्रयोजनान्तरवार्तिकम् ]

॥ * ॥ *अनुबन्धकरणार्थश्च* ॥ * ॥

[ व्याख्यानभाष्यम् ]

**अनुबन्धकरणार्थश्च वर्णानामुपदेशः–'अनुबन्धानासङ्क्ष्यामी'ति । नह्यनुपदिश्य वर्णाननुबन्धाः शक्या आसङ्क्तुम् । स एष वर्णानामुपदेशो वृत्तिसमवायार्थश्चाऽनुबन्धकरणार्थश्च । वृत्तिसमवायश्चानुबन्धकरणं च प्रत्याहारार्थम् । प्रत्याहारो वृत्त्यर्थः ॥**

(प्रदीपः) **प्रत्याहारार्थमिति ।** प्रत्याहारशब्देनाऽणादिकाः संज्ञा उच्यन्ते ॥

( उद्द्योतः ) फलान्तरमाह–**अनुबन्धकरणार्थश्चेति ।** अनुबन्धबोधनार्थ इत्यर्थः । **चेनाऽ**कारस्य विवृतगुणत्वसङ्ग्रहः, उपलक्षणत्वेन वा । अनुबन्धत्वं च समुदायान्त्य वे सति, नान्यथेति तात्पर्यम् । ननु 'प्रत्याहार'शब्देन सूत्रं चेत्तादर्थ्यमनुबन्धानामनुपपन्नमत आह–**प्रत्याहारशब्देनेति ।** अधिकरणव्युत्पत्त्या, अर्श आद्यचा वेति भावः । भाष्ये–**वृत्त्यर्थ इति ।** लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः । एतेन प्रत्याहारद्वारा समवायस्य[२] वृत्त्यर्थता दर्शिता ॥

[ वर्णोपदेशप्रयोजनान्तरवार्तिकम् ]

॥ * ॥ *इष्टबुद्ध्यर्थश्च* ॥ * ॥

[ व्याख्यानभाष्यम् ]

**इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः–'इष्टान्वर्णान्भोत्स्यामहे' इति । न ह्यनुपदिश्य वर्णानिष्टा वर्णाः शक्या विज्ञातुम् ॥**

( प्रदीपः ) **इष्टबुद्ध्यर्थश्चेति ।** सति ह्युपदेशे 'कलादिदोषरहिता ये वर्णा निर्दिष्टास्तथैव प्रयोक्तव्या' इत्युक्तं भवति ॥

( उद्द्योतः ) **भोत्स्यामहे इति**–अन्तर्भावितण्यर्थः । बोधयिष्यामह इत्यर्थः । एवं **'विज्ञातु'**मित्यस्य विज्ञापयितुमित्यर्थः । **सति ह्युपदेशे इति ।** एवं च व्याकरणाध्येतॄणामक्षरसमाम्नायेनैवावश्यकेनेष्टवर्णज्ञाने सिद्धे न तदर्थं मातृका पाठनीयेति भावः ॥

[ इष्टबुद्ध्यर्थत्वे **आक्षेपवार्तिकम्** ]

॥ * ॥ *इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामुपदेशः* ॥*॥

[ व्याख्यानभाष्यम् ]

**इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः कर्तव्यः । एवङ्गुणा अपि हि वर्णा इष्यन्ते ॥**

( प्रदीपः ) एकश्रुत्या हि सूत्राणां पाठात्सर्वेषामुदात्तादीनामुपदेशः कर्तव्य इत्याह–**इष्टबुद्ध्यर्थश्चेति चेदिति ॥**

( उद्द्योतः ) **एकश्रुत्येति ।** त्रैस्वर्येण[३] पाठे तु द्वयोरेव कर्त्तव्यतां वदेदित्यर्थः । तेषां लोकतः सिद्धौ तु दोषरहितानाम्–

## ❀ राजलक्ष्मीः ❀

द्वितीयसमासप्रयोजनमाह–**इग्यणइति** ( ७३ पृष्ठे ) । तृतीयसमासप्रयोजनन्तु इत्सञ्ज्ञादिप्रवृत्तिरित्यनुसन्धेयम् । **अनेन**–वृत्तिसमवायेति वार्त्तिकेन । **अस्य** वर्णसमाम्नायस्य । **शास्त्रेति ।** शब्दानुशासनाख्याष्टाध्यायीत्यर्थः । **अन्यकर्तृकत्वमिति ।** वार्त्तिकेनेत्यादिः । **उपदेश इति ।** परेतूपदेशइत्यस्य उच्चारणमात्रार्थकताया भाष्य एव स्पष्टमुक्तेरिदं चिन्त्यम् । 'मन्त्रोपदेश' इत्यप्ययुक्तम् । नहि स्वगुरूपदिष्टो मन्त्रः केनापि बहिः प्रकाश्यते । एवञ्च भगवता पाणिनिनैवेमानि सूत्राणि उच्चारितानीत्याहुः।युक्तं चैतत्–अतएव भाष्यकृता–'अनुबन्धानासङ्क्ष्यामी'त्यनुपदमेव वक्ष्यते।**(उद्द्योते)एवञ्च** पूर्वोक्तफलत्रयसद्भावे च। **त्रैस्वर्येणपाठे तु**-उदात्तानुदात्तादिना पाठे तु। **द्वयोरेवेति।** एकस्योदात्तादेरुच्चारणादेव सिद्धत्वादिति भावः । **तेषाम्**–उदात्तादीनाम् । 'बोधस्ये'ति शेषः । सिद्धान्तमतमाह–**त्रैस्व-**

## ❀ शब्दकौस्तुभः ❀

प्रयोगे तु शुद्ध एव । प्रत्यापत्तेः शास्त्रान्ते करणमपि शास्त्रीयसकलकार्यं प्रत्यसिद्धतालाभाय । एवं च प्रक्रियायां दोषस्य कलादेराश्रयणेपि परिनिष्ठितरूपे न कश्चिद्दोषः । यथा यथान्यासपक्षेपि अकारस्य विवृतता प्रक्रियामात्रविषया न तु प्रयोगसमवायिनी तद्वदिह पक्षे कलादयोऽपीति न कश्चिद्विशेषः। 'धर्मिकल्पनात'इति न्यायश्चेह बोध्यः । ङकारादयो हि धर्मिण एव त्वया पाठ्याः । मया तु उभयपठनीयस्य ईकारस्य कलत्वमात्रं कल्प्यमिति । नन्वस्मिन्पक्षे 'स्वरितञित' इत्यत्र कथं कार्यमिति चेत्, 'ध्मातात्कर्त्रभिप्राय' इति । एवमाद्यन्तौ टकितावित्यत्र 'आद्यन्तौ कलध्माता'विति । इडाद्यागमाश्च निरनुबन्धाः कलाः पाठ्याः । आनुगादयो ध्माताः । 'डुकृ'ञित्यस्य स्थाने 'कृ' इति द्विदोषं पाठ्यम् । 'आदिरन्त्येने'त्यत्रापि 'आदिकलौ सहे'त्युक्त्वा 'अउ'इत्यादिकाः संज्ञाः करिष्यन्ते ।

१ नहि–न च । २ अइउण्ऋऌगित्यादिक्रमविशेषस्य व्याकरणशास्त्रोपकारितेत्यर्थः । ३ 'त्रैस्वर्यपाठे' पा० ।

मपि तत एव सिद्धेरुपदेशवैयर्थ्यापत्तिरिति भावः । त्रैस्वर्येण पाठेऽपि अन्यतमपाठेऽन्यस्य कर्तव्यत्वाभिप्रायेण सर्वेषां ग्रहणमित्य**न्ये** ॥

[ **सिद्धान्त**वार्तिकम् ]

॥ * ॥ *आकृत्युपदेशात्सिद्धम्*[1] ॥ * ॥

[ व्याख्यानभाष्यम् ]

**अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिः। तथोवर्णाकृतिः ॥**

( प्रदीपः ) **आकृत्युपदेशादिति** । उपात्तोऽपि विशेषो नान्तरीयकत्वाज्जातिप्राधान्यविवक्षायां न विवक्ष्यत इत्यर्थः ॥

**( उद्द्योतः )** आकृत्युपदेशे किमित्यकारादिह्रस्वव्यक्तिविशेषोपादानं?, तदुपादाने व्यक्त्यन्तरग्रहणानापत्तिश्चेत्यत आह–**उपात्त इति ।** नान्तरीयकत्वं च–तं विना जातेरुच्चारयितुमशक्यत्वात् ॥

॥ * ॥ *आकृत्युपदेशात्सिद्धमिति चेत्संवृतादीनां प्रतिषेधः* ॥ * ॥

[ व्याख्यानभाष्यम् ]

**'आकृत्युपदेशात्सिद्ध'मिति चेत्संवृतादीनां प्रतिषेधो वक्तव्यः ॥**

[ संवृतादिपदार्थजिज्ञासाभाष्यम् ]

**के पुनः संवृतादयः ? ॥**

[ संवृतादिनामनिर्देशभाष्यम् ]

**संवृत[1]: कलो[2] ध्मात[3] एणीकृतो[4]ऽम्बू[5]ऽकृतोऽर्धको[6] ग्रस्तो[7] निरस्त[8]: प्रगीत[9] उपगीत[10]: क्ष्विण्णो[11] रोमशो[12] इति ॥**

[ व्याख्यान्तरभाष्यम् ]

**अपर आह[2]–**

**'ग्रस्तं निरस्तमवलम्बितं निर्हत-**
**मम्बूकृतं ध्मातमथो विकम्पितम् ।**
**सन्दष्टमेणीकृतमर्धकं द्रुतं**
**विकीर्णमेताः स्वरदोषभावनाः ॥'**

**इति ॥ अतोऽन्ये व्यञ्जनदोषाः ॥**

( प्रदीपः ) **संवृतादीनामिति** । ऐकारा[3]दीनां संवृतत्वं दोषो न त्वकारस्य, तस्य संवृतगुणत्वात्, तत्र सन्ध्यक्षरेषु विवृततमेषूच्चार्येषु संवृतत्वं दोषः । **कलः**–स्थानान्तरनिष्पन्नः काकलिकत्वेन प्रसिद्धः । **ध्मातः**–श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते । **एणीकृतो**ऽविशिष्टः, 'किमयमोकार अथौकार' इति यत्र सन्देहः । **अम्बूकृतो** यो व्यक्तोऽप्यन्तर्मुख इव श्रूयते । **अर्धको**–दीर्घोपि ह्रस्व इव । **ग्रस्तो**–जिह्वामूले निगृहीतः । अव्यक्त इत्यपरे । **निरस्तो**–निष्ठुरः । **प्रगीतः**–सामवदुच्चारितः । **उपगीतः**–समीपवर्णान्तरगीत्याऽनुरक्तः । **क्ष्विण्णः**– कम्पमान इव । **रोमशो**–गम्भीरः । **अविलम्बितो**–वर्णान्तराऽसंभिन्नः । **निर्हतो**–रूक्षः । **सन्दष्टो**–वर्धित इव । **विकीर्णो**–वर्णान्तरे प्रसृतः । एकोऽप्यनेकनिर्भासीत्य**परे** । **स्वरदोषभावना इति** । स्वरदोषगोत्राणि । अनन्ता हि दोषा अशक्तिप्रमादकृताः ॥

( **उद्द्योते** ) **तं विना**–ह्रस्वादिव्यक्तिं विना । **तादृशेति** । संवृतादिदोषसहितानामित्यर्थः । एवञ्चाऽकारस्य ह्रस्वस्य संवृतत्वं गुणो न दोष इति तस्य प्रतिषेधाभावेऽपि नाऽसङ्गतिः ।

❀ **राजलक्ष्मीः** ❀

**र्येणेति । (भाष्ये)** समाधत्ते–**आकृतीति** । जातीत्यर्थः । **कुलं**–अष्टादशाऽवर्णसमूहम् ।

❀ **शब्दकौस्तुभः** ❀

कलेनेति तृतीयानिर्देशे सति तु अप्राधान्यात्सिद्धान्त इव चरमवर्णस्य संज्ञा न स्यात् । 'ढलोप'इत्यादौ 'अण'इत्यपनीय 'अ-ओ'रिति करिष्यते। स्वरसन्धिस्त्वसन्देहाय न करिष्यते । तस्मात्सर्वमनुबन्धकार्यादिकं कलादिभिरेव सिध्यतीति चेत्; सत्यम् । सिध्यत्येवम्–अपाणिनीयं तु भवतीति चेत् ; अत्रोच्यते–**इष्टसिद्ध्यर्थो वर्णोपदेशः ।** एवं चाकृत्युपदेशादेव उदात्तादिसिद्धमङ्गीकृत्य कलादिष्वतिप्रसङ्ग इत्थं परिहार्यः,– **'आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः। उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः ॥'** इति । यत्तु अग्रहणेषु प्रातिपदिकेषु प्राप्ता एवेति; तन्न; त्वयापि प्रतिपदपाठस्यावश्याश्रयणीयत्वात् । अन्यथा 'शश'इत्यत्र 'षष'इत्यपि

१ इदं वार्त्तिकं भाष्यकृत एवाग्रिमवार्त्तिकावतारणाय, पूर्वेषामाचार्याणां वेति **गौडाः।** २'अपरआहे'त्यतोऽग्रेगौडास्तु "॥*॥ आकृत्युपदेशात्सिद्धमिति चेद्ग्रस्तादीनां प्रतिषेधः ॥*॥ आकृत्युपदेशात्सिद्धमिति चेद्ग्रस्तादीनां प्रतिषेधो वक्तव्यः ॥ के पुनर्ग्रस्तादयः ? ग्रस्तं निरस्तमवलम्बितम्–" इत्येवमत्र पठन्ति । ३ 'आकारादीनाम्' पा० ।

**( उद्द्योतः ) संवृतादीनामिति** भाष्ये। तादृशदोषसहितानामाकृतिग्रहणात्प्राप्तस्य ग्रहणस्य प्रतिषेधो वक्तव्य इत्यर्थः। तदाह–**एकारादीनां संवृतत्वमिति। अविशिष्ट इति।** संश्लिष्टः। सन्दिग्ध इति यावत्। **ह्रस्व इवेति।** तद्वत्कालसङ्कोचेनोच्चारित इत्यर्थः। **निष्ठुर इति।** त्वरित इत्यन्ये। **गोत्राणीति।** स्वरदोषजातय इत्यर्थः॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**नैष दोषः।**

[ समाधानवार्तिकम् ]

*[ ॥ * ॥ गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिः ॥ * ॥ ]*[1]

[ व्याख्याभाष्यम् ]

**गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिर्भविष्यति॥**

**( उद्द्योतः )** भाष्ये–**गर्गादिबिदादिपाठादिति।** संवृतादिदोषरहितानामेव तत्र पाठादिति भावः॥

[ समाधाननिरासवार्तिकम् ]

*[ ॥*॥ समुदायसाधुत्वार्थं तु गर्गादिबिदादिपाठः ॥*॥ ]*[1]

**अस्त्यन्यद्गर्गादिबिदादिपाठे प्रयोजनम्॥ किम्?॥**

**समुदायानां साधुत्वं यथा स्यादिति॥**

**( प्रदीप ) अस्त्यन्यदिति।** 'गर्ग' इत्यादिनैव संनिवेशेन गर्गादीनां साधुत्वं यथा स्याद्गार्ग्य इत्यादीनां मा भूत्। ततश्च तद्गतानामेवाऽकारादीनां दोषनिवृत्तिः कृता स्यात्, न तु समुदायान्तरस्थानाम्। यद्यपि प्रत्ययविध्यर्थो गर्गादीनां पाठस्तथापि प्रसङ्गात्समुदायसाधुत्वार्थोऽपि भवति।

**( उद्द्योतः ) साधुत्वमिति।** निवृत्तकलादिदोषवत्त्वमित्यर्थः। **गार्ग्य इत्यादीनामिति।** तत्रत्यानां कलादिदोषनिवृत्तिर्न स्यादित्यर्थः। तदाह–**ततश्चेति।** परेतु **समुदायानाम्**–एतत्प्रकृतिकयञन्तसमुदायानां **साधुत्वं यथा स्या**दित्यर्थं पाठश्चरितार्थो न कलादिदोषं निवर्तयेदित्येव भाष्यार्थः, **'पाठश्चैव विशेष्यत'** इत्यग्रिमभाष्यस्वरसादित्याहुः॥

[ एकदेशि**समाधान**वार्त्तिकम् ]

*[ ॥ * ॥ प्रत्यापत्तिवचनम् ॥ * ॥ ]*[2]

[ एकदेशि**समाधान**भाष्यम् ]

**एवं तर्ह्यष्टादशधा भिन्नां निवृत्तकलादिकामवर्णस्य प्रत्यापत्तिं वक्ष्यामि॥**

**( प्रदीपः ) निवृत्तकलादिकामिति।** अकारस्य संवृतत्वा**न्निवृत्तसंवृतत्वादिका**मिति नोक्तम्। अकारस्य निदर्शनार्थत्वात्सर्ववर्णानां शास्त्रान्ते प्रत्यापत्तिरित्यर्थः।

**( उद्द्योतः ) निदर्शनार्थत्वादिति।** तत्राऽवर्णस्य **'अ अ'** इति कृतैव, तद्वत्तदनन्तरमन्येषामपि करिष्यामीति भावः। एतेनाऽवर्णप्रत्यापत्तेः कृतत्वाद्व**क्ष्यामी**त्यनुपपन्नमिति परास्तम्॥

[ प्रत्यापत्तिवचने गौरवप्रदर्शकं भाष्यम् ]

**सा तर्हि वक्तव्या॥**

---

### ❀ राजलक्ष्मीः ❀

**( प्रदीपे ) अविशिष्टेति।** स्वगतभेदकविशेषरहित इत्यर्थः। अत एव सन्देहाभिधानोपपत्तिः। **जातयः**–समूहाः। भेदा इति वा। **पाठादिति।** तत्र पठितानामध्ययनाध्यायनावसरे शुद्धानामेवोपदेशादित्यर्थः। **(प्रदीपे) संनिवेशेन**–आनुपूर्वीविशिष्टानाम्। **ततश्च**–संनिवेशविशिष्टगर्गादीनामेव ततः साधुत्वप्रतीतेश्च। **तद्गतानाम्**–गर्गादिगतानाम्। **दोषनिवृत्तिः कृता स्यात्**–गर्गादिपाठेन दोषाणां–संवृतादिदोषाणां–निवृत्तिः कृता स्यात्। **समुदायान्तरेति।** घटपटगार्ग्यवात्स्यादिसमुदायान्तरेत्यर्थः।

**( उद्द्योते )** भाष्यस्य व्याख्यान्तरमाह–**परेस्त्विति। एतदिति।** गर्गादीत्यर्थः।

**(भाष्ये) एवं तर्हि**–संवृतादीनां प्रतिषेधस्यावश्यकत्वेतु।

**( उद्द्योते ) तत्र**–वर्णेषु मध्ये। शास्त्रान्ते इति वा। **तदनन्तरम्**–'अ अ' इत्यनन्तरम्। **अन्येषाम्**–इकारादीनाम्। **प्रत्यापत्तिः**–पुनः स्वस्वरूपविधानम्।

---

### ❀ शब्दकौस्तुभः ❀

स्यात्, मश्चके मञ्चक इति, पलाशे पलाष इति। स्यादेतत्। स्वरवर्णानुपूर्वीनिर्णयाय यदि प्रतिपदपाठस्तर्हि कलादिनिवृत्तिरपि तत एवास्तु। उणादिसूत्रात्पृषोदरादिसूत्राद्वा साधुत्वाभ्यनुज्ञानं, विशेषावधारणं तु निघण्ट्वादिनेति चेत्कलादिनिवृत्तिरपि शिक्षादिग्रन्थेनाऽस्तु। सत्यम्। आनुषङ्गिकी

---

१ इदं वार्तिकं न क्वचिदपि पुस्तके दृश्यते। अनुमाय तु स्थापितमस्माभिः। २ इदं वा वार्तिकं, 'प्रत्यापत्तिवचनासिद्ध'मिति वा वार्तिकमत्र लुप्तमिति विभाव्यास्माभिरत्रेदं वार्तिकं स्थापितम्। तत्त्वं भगवानेव वेत्ति।

(उद्द्योतः) भाष्ये–सा तर्हि वक्तव्येति। तथा च प्रत्यापत्त्याश्रवणे गौरवमिति भावः॥

[एकदेशिनः **समाधान**वार्तिकम्]

॥ * ॥ *लिङ्गार्था तु प्रत्यापत्तिः* ॥ * ॥

[व्याख्यानभाष्यम्]

**लिङ्गार्था सा तर्हि भवति॥**

(उद्द्योतः) **लिङ्गार्था त्विति।** अनुबन्धस्थानीय-तत्तद्धात्वादिगतकलादिलिङ्गनिवृत्त्यर्थेत्यर्थः। नाऽऽकृतिनिर्देश-प्रयुक्तदोषपरिहारमात्रप्रयोजना प्रत्यापत्तिः, किं तु सर्वानु-बन्धेत्संज्ञाशास्त्राद्यकरणफलिकापीति न गौरवमिति भावः॥

[कलादिलिङ्गकरणे **आक्षेप**भाष्यम्]

**तत्तर्हि वक्तव्यम्॥**

(उद्द्योतः) तदेव विवृणोति–**तत्तर्हीत्यादिना।** धात्वादिगतकलादिलिङ्गमित्यर्थः॥

[कलादिलिङ्गकरणावश्यकताप्रदर्शकभाष्यम्]

**यद्यप्येतदुच्यते अथवैतर्हि अनेकमनु-बन्धशतं नोच्चार्यमित्संज्ञा च न वक्तव्या, लोपश्च न वक्तव्यः। यदनुबन्धैः क्रियते तत्कलादिभिः करिष्यते॥**

(प्रदीपः) **यदनुबन्धैरिति।** यथा स्वरितत्व-मधिकारार्थमेवमात्मनेपदार्थं कलादिकं प्रतिज्ञाय **'कलादात्मनेपद'**मित्यादि करिष्यते न त्व**'नुदात्त-ङित'** इत्यादि। ननु चानुबन्धाऽभावे कथमणा-दिकाः संज्ञा उपपद्यन्ते?। **'आदिरन्त्येने'**त्यत्रा**'दिः कलैः सहे'**त्युक्त्वा 'अ-उ' इत्यादिकाः संज्ञाः करि-ष्यन्ते, स्वरसन्धिश्चाऽसन्देहाय न करिष्यते इत्यदोषः।

(उद्द्योतः) **अथ वै तर्हीत्यस्य–,** तथापीत्यर्थः। **अनेकमनुबन्धशतमिति।** एकैकस्यानुबन्धस्य शतश उच्चारणं, तादृशाश्चाऽनेके उच्चारणीया इत्यर्थः। **यथेति।** एधश्याद्योऽनुदात्तङितः कलदोषयुक्ताः पाठ्याः। स्वरित-ञितश्च ध्माताः। तत्र **'कलादात्मनेपदम्' 'ध्मातात्कर्तृ-गामिनि क्रियाफले'** इति सूत्रे कार्ये। एवं टकितौ कलध्मातौ पठित्वाद्यन्तौ **कलध्माताविति** पाठ्यम्। एवं ड्वितोऽर्द्धकदोषयुक्तान् पठित्वा**'अर्द्धकात्क्रिरिति'**। टितश्च ग्रस्तान्पठित्वा **'ग्रस्तादथु'**रित्यादि बोध्यम्। एते च कलादयः प्रक्रियादशायामेव। प्रयोगे तु शुद्ध एव, शास्त्रान्ते प्रत्यापत्तिकरणात्। **'आदिः कलैः सहे'**ति पाठः॥

[**आक्षेप**भाष्यम्]

**सिद्ध्यत्येवमपाणिनीयं तु भवति॥**

(उद्द्योतः) भाष्ये–**अपाणिनीयमिति।** वर्ण-समाम्नायसमर्थनाय प्रवृत्तस्य एकदोषपरिहाराय सकलशास्त्र-स्य व्याख्यानसापेक्ष्यगुरुप्रकारेणाऽन्यथाकरणे **वृश्चिकभिये-**त्यादिन्याय आपततीति भावः॥

[सिद्धान्तिभाष्यम्]

**यथान्यासमेवास्तु॥**

[आक्षेपस्मारणभाष्यम्]

**ननु चोक्तम्–* 'आकृत्युपदेशात्सिद्धं-चेत्संवृतादीनां प्रतिषेधः' इति॥**

[**समाधान**भाष्यम्]

**परिहृतमेतत्,–'गर्गादिबिदादिपाठा-त्संवृतादीनां निवृत्तिर्भविष्यति'–इति॥**

[दोषस्मारणभाष्यम्]

**ननु चान्यद्गर्गादिबिदादिपाठे प्रयोजन-**

❀ राजलक्ष्मीः ❀

(भाष्ये) **सा** शास्त्रान्ते पठनीया प्रत्यापत्तिः। **प्रत्यापत्तिः**–अकारादेः शुद्धः पाठः। (उद्द्योते) **नि-वृत्त्यर्थेति।** कलादिदोषयुताऽवर्णैर्वर्णादिनिरासाय शुद्धस्य तस्य ग्रहणाय च शास्त्रान्ते प्रत्यापत्तिः पठनीयेत्यर्थः।

(भाष्ये) **तत्**–कलादिलिङ्गम्। **वक्तव्यं**–किमवश्यं वक्तव्यं, यदर्थं प्रत्यापत्तिरावश्यिकीत्यर्थः। **अथवैतर्हि**–तथापि। यद्वा–**यद्यपि**–यद्वा। **अथवैतर्हि**–तदेत्यर्थः। एवञ्च लाघवमस्तीत्याशयः। (प्रदीपे) **अधिकारार्थम्**–अधि-काराय। 'यथा भगवता पाणिनिना प्रतिज्ञायते' इति शेषः।

**संज्ञाः**–प्रत्याहाराः। 'अ'णित्यस्य स्थाने 'अ–उ' इति प्रत्याहारः कार्य इत्याशयः। (भाष्ये) **एवं**-कलादिदोष-सहितपाठे। (उद्द्योते) **वृश्चिकभियेतीति।** 'वृश्चिकभिया पलायितस्य सर्पमुखे पात' इति हि न्यायशरीरम्।

❀ शब्दकौस्तुभः ❀

कलादिनिवृत्तिः, वर्णोपदेशस्य मुख्यं फलं तु प्रत्याहार-निष्पत्तिः। प्रत्याहारशब्दस्तु अणादिसंज्ञापरः,–'प्रत्याह्रियन्ते वर्णा ए'ष्विति व्युत्पत्तेः। न च ग्रहणकशास्त्रेण निष्पादितासु अकारादिसंज्ञास्वतिप्रसक्तिः, योगरूढ्यभ्युपगमात्। तस्मा-

१ संवृतादि ग्रहणापत्तिरूपेत्यर्थः।

मुक्तम् ॥ किम् ? ॥

समुदायानां साधुत्वं यथा स्यादिति ॥

[ समाधानभाष्यम् ]

एवं तर्ह्युभयमनेन क्रियते–पाठश्चैव विशेष्यते, कलादयश्च निवर्त्यन्ते ॥

[ आक्षेपभाष्यम् ]

कथं पुनरेकेन यत्नेनोभयं लभ्यम् ? ॥

[ उत्तरप्रत्युत्तरभाष्यम् ]

लभ्यमित्याह ॥ कथम् ? ॥

द्विगता अपि हेतवो भवन्ति। तद्यथा–'आम्राश्च सिक्ताः पितरश्च प्रीणिता'इति। तथा वाक्यानि द्विष्ठानि भवन्ति–'श्वेतो धावति'। 'अलम्बुसानां याते'ति ॥

( प्रदीपः ) **उभयमिति**। यथाभूता गर्गादिस्था अकारादयस्तथाभूता एव सर्वत्र प्रयोक्तव्या इति प्रतिपाद्यते इत्यर्थः। **द्विगता इति**। द्वावर्थौ गताः–प्रयोजनद्वयसंपादकाः इत्यर्थः। **तथा वाक्यान्यपीति**। शब्दस्याप्यर्थवद्द्विगतत्वमित्यर्थः॥

( उद्द्योतः ) नन्वपठितेषु दोषनिवृत्तिर्न कृता स्यादत आह–**यथाभूता इति**। गर्गाद्यकारादिषु एकरूपेण पठितेषु तज्जातीया एव ते सर्वत्र साधव इत्यनुमातुं शक्यत इति भावः। भाष्ये–**पाठश्चैवेति**। **विशेष्यते**–तत्तत्प्रत्ययवैशिष्ट्येन बोध्यते इत्यर्थः। **'द्विष्ठानी'**त्यस्य द्वयोरर्थयोस्तिष्ठन्तीत्यर्थ[1] इत्याह–**शब्दस्यापीति**। तत्र 'कः कीदृशो धावती'ति प्रश्ने–**'श्वेत'** इत्युत्तरम्। 'श्वा-इत' इति च्छेदेन 'क' इत्यस्योत्तरम्। 'श्वेत' इतिच्छेदेन 'कीदृश'इत्यस्योत्तरमिदम्। एवं 'केषां जनपदानां गन्ता' 'को वा समर्थ'इति प्रश्ने उत्तरम्–**अलमित्यादि**। **अलंबुसा** देशविशेषाः। **बुसानां**–पलालै[2]र्णानां **याता** प्राप्तिमान् **अलं** समर्थ इति

संवृतादयः। **(उद्द्योते–) एतेन**–प्रकृते उपदेशपदस्यानुवादार्थकतया व्याख्यानेन। **एवं**–प्रातिपादिकोच्चारणेन। **इत्यस्मिन्**–इत्यस्मिन्वार्त्तिके। **इत्यपि**–इत्यपि वार्त्तिकम्। एवञ्च वृत्तिसमवायार्थो वर्णानामुपदेश इत्येव स्थितमित्याशयः।

[1] तन्त्रादिनोभयपरमित्युत्तराशयः। [2] **बुसः**–'भूसा' 'तूडा' इति भाषायां प्रसिद्धः।

चार्थः। **पातेति** क्वचित्पाठः। 'पा रक्षणे'इत्यस्य रूपम्॥

[ दोषप्रसङ्गनिरासोक्तिप्रत्युक्तिभाष्यम् ]

अथ वा इदं तावदयं प्रष्टव्यः–'क्वेमे संवृतादयः श्रूयेर'न्निति ? ॥ आगमेषु ॥ आगमाः शुद्धाः पठ्यन्ते ॥ विकारेषु तर्हि ॥ विकारा अपि शुद्धाः पठ्यन्ते ॥ प्रत्ययेषु तर्हि ॥ प्रत्यया अपि शुद्धाः पठ्यन्ते ॥ धातुषु तर्हि ॥ धातवोऽपि शुद्धाः पठ्यन्ते॥ प्रातिपदिकेषु तर्हि ॥ प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते ॥

यानि तर्ह्यग्रहणानि प्रातिपदिकानि ? ॥

एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्तव्यः। 'शशः' 'षष' इति मा भूत्, 'पलाशः' 'पलाष' इति मा भूत्, 'मञ्चको' 'मञ्जक'इति मा भूत् ॥

'आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः। उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः' ॥ १ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥

–❀❀❀–

( प्रदीपः ) **अथ वेति**। केवलानां वर्णानां लोके प्रयोगाभावाद्धात्वादीनां च शुद्धानां पाठात् तत्स्थत्वाच्च वर्णानां न कश्चिद्दोषः। **यानि तर्हीति**। डित्थादीनि। **एतेषामपीति**। शिष्टप्रयुक्तत्वेनोणादीनां पृषोदरादीनां च साधुत्वाभ्यनुज्ञानात्सर्वेषामत्र सङ्ग्रहः सिद्धः ॥ ❀ **इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य प्रथमे पादे प्रथमाह्निकम् ॥ १ ॥** ❀

❀ **राजलक्ष्मीः** ❀

( भाष्ये ) **समुदायानां**–गर्गादिसमुदायानाम्। **अनेन**–गर्गादिपाठेन। **द्विगताः**–प्रयोजनद्वयसाधकाः। **इमे**–येषां संवृतादीनां निरासाय प्रयास आवश्यकस्त इमे

❀ **शब्दकौस्तुभः** ❀

दादिरन्त्येनेत्येतत्सूत्रसिद्धाः संज्ञाः प्रत्याहारशब्दवाच्यास्तन्निष्पत्तये च वर्णोपदेश इति स्थितम् ॥

॥*॥ इति श्री**भट्टोजीदीक्षित**विरचिते **श्रीशब्दकौस्तुभे** प्रथमस्याध्यायस्य **प्रथमपादे प्रथममाह्निकम्** ॥१॥ ॥*॥

———

(उद्द्योतः) **केवलानामिति।** एवं च कलादिदोषाणां न कुत्रापि प्रसक्तिरिति भावः। भाष्ये-**तद्ग्रहणानीति।** कार्यविधावकृतानुवादानीत्यर्थः। **उपदेश इति।** **ङ्याप्प्रातिपदिका**दित्यादावनुवादरूपेण ग्रहणमित्यर्थः। एतेनोद्देशश्च **प्रातिपदिकानां नोपदेश इत्यादेच** इति सूत्रस्थभाष्यविरोध इत्यपास्तम्। नन्वेवमतिप्रसङ्गः स्यादत आह-**शिष्टेति।** एवं **संवृतादीनां प्रतिषेध** इत्यस्मिन् प्रत्याख्याते **इष्टबुद्ध्यर्थं** इत्यपि प्रत्याख्यातप्रायमेवेत्यलम्॥

इति **शिवभट्टसुतसतीगर्भजनागोजीभट्टेन** कृते **भाष्यप्रदीपोद्द्योते** प्रथमाध्यायस्य प्रथमे पादे आद्यमाह्निकम्। **इति पस्पशाह्निकम्॥१॥**

---

# अथ द्वितीयं प्रत्याहाराह्निकम्।

*अइउण्॥ १॥*

[ विवृतोपदेशवार्तिकम् ]

*॥*॥अकारस्य विवृतोपदेश आकारग्रहणार्थः॥*॥*

[ व्याख्याभाष्यम् ]

**अकारस्य विवृतोपदेशः कर्तव्यः॥**

**किं प्रयोजनम्?॥**

**आकारग्रहणार्थः। आकारः सवर्णग्रहणेनाऽऽकारमपि यथा गृह्णीयात्॥**

---

❀ **राजलक्ष्मीः** ❀

(भाष्ये) **अकारस्य**-अइउणिति सूत्रस्थाऽकारस्य। **विवृतोपदेशः**-विवृतोऽयमिति प्रतिज्ञा, विवृतगुणकस्याकारस्योच्चारणमिति वा।

---

❀ **शब्दकौस्तुभः** ❀

**अइउण्।** संज्ञासूत्रमिदम्, 'आदिरन्त्येन सहेते'त्यनेन सहैकवाक्यत्वात्। 'अइउ'णित्येषामादिरकारोऽन्त्येन णकारादिना सहितः सन्नाद्यन्ताभ्यामाक्षिप्तानां मध्यगानां स्वस्य च संज्ञेति हि वाक्यार्थः। अत्र अकारादीनां स्वरूपेण अनुकार्येण वा सतोऽप्यर्थवत्त्वस्याविवक्षितत्वात्प्रातिपदिकत्वं नेति 'गवित्ययमाहे'त्यादाविव विभक्तेरनुत्पत्तिः। 'सुपां सुलु'गिति लुग्वा। 'छन्दोवत्सूत्राणी'तिभाष्यकारेष्टया छन्दोगेषु[1] व्याकरणसूत्रेष्वपि छान्दसकार्यातिदेशात्। यूस्त्र्याख्याविति सूत्रे छन्दःप्रदेशेषु गौणमुख्यन्यायो न प्रवर्त्तते इति वक्ष्यमाणत्वाद्वा।

स्यादेतत्-स्वरसन्धिनेह भाव्यम्। तत्र 'अ' इत्यत्र विभक्तेरुत्वयत्वलोपेषु वृक्ष इहेत्यादाविव लोपाऽसिद्ध्या

---

1 'छदोऽङ्गेषु' इति पाठो भवेत्।

(प्रदीपः) **अइउण्।** सर्ववर्णानविशेषेण विचार्य विशेषेणाऽत्र विचारः क्रियते-**अकारस्येति।** अत्राऽकारादीनां स्वरूपेणानुकार्येण वा सतोऽप्यर्थवत्त्वस्याऽविवक्षितत्वाद्विभक्त्यनुत्पत्तिः। स्वरसन्धिस्तु न प्रवर्तते, वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात्। तत्राकारस्य संवृतत्वाद्दीर्घप्लुतयोर्विवृतत्वात्प्रयत्नभेदात्सवर्णसंज्ञाया अप्रसङ्गात्प्रदेशेष्वकारेण दीर्घप्लुतयोर्ग्रहणं न प्राप्नोतीति विवृतत्वमस्योपदिश्यते। विवृतस्य गुणस्योपदेशो विवृतोपदेशः। तत्र गुणस्य नित्यसापेक्षत्वादकारापेक्षत्वेऽपि समासः। यथा-'देवदत्तस्य गुरुकुल'मिति। **आकारग्रहणार्थ इति।** 'विवृतोपदेशस्य प्रयोजन'मिति सामर्थ्यादवगमाच्चोद्यानुरूपमुत्तरं न भवतीति न चोदनीयम्॥ **सवर्णग्रहणेनेति** येन शास्त्रेणाणुदित्सवर्णस्येत्यनेन सवर्णा गृह्यन्ते तेन कारणेनेत्यर्थः॥

(उद्द्योतः) ननु चतुर्दशसूत्र्याः प्रयोजनमुक्तमेव तत्किं पुनरत्र तद्ग्रहणेनेत्याशङ्क्याह-**सर्वेति। विशेषेण**-तत्तद्रूपेण। प्रत्येकं वर्णेभ्यो विभक्तिमाशङ्क्याह-**स्वरूपेणेति।** शब्दजन्यज्ञानविषयो हि शब्दस्यार्थः। एवं च स्वरूपमपि स्वजन्यबोधविषयत्वेनाऽर्थः। अनुकार्यमर्थं इति तु स्पष्टमेव। एवं विद्यमानस्याप्यर्थवत्त्वस्याऽविवक्षितत्वाद**र्थवत्सूत्रे**ऽग्रहणादित्यर्थः। स्वरूपस्य श्रोत्रगृहीतस्यैव शाब्दे भानोपपत्तौ न

---

(प्रदीपे) **विचार्य**-पस्पशाह्निके विचार्य। **अत्र**-द्वितीयाह्निकादौ। (उद्द्योते) **तद्ग्रहणेन**-चतुर्दशसूत्रीविषयकविचारेण। **वर्णेभ्यः**-अकारादिभ्यः। **स्वरूपं**-शब्दः। **विद्यमानस्य**-अकारादौ वर्तमानस्य।

---

सन्धिर्नेति समाधानेपि, इकारस्य इकोऽसवर्णइति, ऋकारस्य ऋत्यक इतिप्रकृतिभावसम्भवेपि एदैतोरयायौ दुर्वारौ। यत्तु वर्णोपदेशकाले अजादिसंज्ञानामनिष्पादात्सन्धिर्नेति। तच्चिन्त्यम्। वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्त्तमानानां यणादीनां 'सुध्युपास्य'इत्यादौ तटस्थ इव उद्देश्यतावच्छेदकरूपाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेरावश्यकत्वात्। अन्यथा 'तुल्यास्यप्रयत्न'मित्यादौ सवर्णदीर्घो न स्यात्। तथाऽर्थवत्सूत्रान्तर्गतानां प्रातिपदिकत्वं, प्रत्ययः परश्चेत्यादौ सुप्रत्ययो, 'ङ्याप्प्रातिपदिकात्' 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचन'मित्यादौ तत्तद्विभक्तिः, 'ससजुषो'रित्यत्र रुः, 'खरवसानयो'रितिसूत्रे विसर्गश्च न स्यादिति सर्वोपप्लवः स्यात्। 'स्वाध्यायोऽध्येतव्य' इत्यस्य 'नेह नाने'त्यादिश्रुतेश्च स्वरिम-

तत्र शक्तिः कल्प्या । अनुकार्यं च सादृश्येनोपस्थापयतीति न तत्रापि वृत्तिः । वृत्याऽर्थबोधकत्वं चाऽर्थवत्त्वमर्थवत्सूत्रे निविष्टमिति भावः । अनुकरणत्वभङ्गान्न विभक्तिरिति तत्त्वम् । सौत्रत्वाद्वा । कारप्रत्ययोऽपि बाहुलकान्न ॥ **स्वरसन्धिस्त्विति ।** सौत्रात्वात्संहिताया अविवक्षणाद्वेति भावः ॥ **अजादिसंज्ञानामनिष्पादादिति** तु चिन्त्यं, वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां यणादीनां 'सुद्ध्युपास्य' इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेर्दुर्वारत्वात् । अन्यथा 'तुल्यास्यप्रयत्न'मि यादौ सवर्णदीर्घादि न स्यात् । **अत्र**–सूत्रे । **तत्रेति** पाठेऽप्ययमेवार्थः । वाक्यपरिसमाप्तिन्यायेनेह ग्रहणकशास्त्राऽप्रवृत्तेः सावर्ण्येऽपि नात्र तद्ग्रहणमिति व्यर्थो विवृतोपदेशोऽत आह–**प्रदेशेष्विति । अकः सवर्ण** इत्यादौ । तत्राप्यकारः संवृत एवेति भावः । ननु विवृतपदस्य गुणिपरत्वे सविशेषणत्वात्समासो न स्यादत आह–**विवृतस्य गुणस्येति** ॥ भाष्ये **कर्त्तव्य** इत्यस्य प्रतिज्ञेय इत्यर्थः । एतेन तस्योच्चारयितुमशक्यत्वमित्यपास्तम् ॥ भाष्ये **किं प्रयोजन**मित्यत्र 'उद्दिश्ये'त्यध्याहारः । 'कर्तव्य' इत्यनुषङ्गश्च । नन्वाकारग्रहणं सवर्णग्रहणमेवेति भेदाभावात्कथं तस्य करणत्वत आह–**येन शास्त्रेणेति ॥**

[ आकृतिपक्षाभिप्रायेणाक्षेपभाष्यम् ]

**किं च कारणं न गृह्णीयात् ? ॥**

**(प्रदीपः) किं च कारणमिति ।** आकृतिपक्षाश्रयेण ग्रहणकशास्त्रस्य प्रत्याख्यानादाकारस्याप्यत्वजातिसद्भावात्सिद्धं ग्रहणमिति भावः । अत्र च 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'मिति प्रथमा कृता । तेन कस्मात्कारणादित्यर्थः संपद्यते ॥

**( उद्द्योतः )** नन्वाकृतिभेदात्कथं तत्पक्षेऽप्यकारेणाऽऽकारग्रहणमत आह–**आकारस्यापीति ।** केवलकण्ठ्यत्वे सति स्वरत्वमत्वजातिव्यञ्जकमिति दीर्घप्लुतयोरपि सेति भावः । प्रातिपदिकार्थमात्रे प्रथमायां यथाश्रुतेऽन्वयो न जायतेऽत आह–**अत्र चेति ॥**

[ व्यक्तिपक्षाश्रयेण **समाधान**भाष्यम् ]

**विवारभेदात् ।**

**( प्रदीपः ) विवारभेदा**दित्यत्र तु कारणशब्दप्रयोगाभावात्प्रायग्रहणादसर्वनाम्नो वा प्रथमाद्वितीययोरभावाद्विभाषा गुणे स्त्रियामिति पञ्चमी विहिता । विवारयति विकासयति आस्यमिति **विवारः**–प्रयत्नः । व्यक्तिपक्षे ग्रहणकशास्त्रारम्भाद्दोषापत्तिः ॥

**( उद्द्योतः )** उत्तरेऽपि तर्हि प्रथमा कुतो नेत्यत आह–**प्रयोगाभावादिति ।** निमित्तादिशब्दप्रयोगाभावेऽपि तदर्थे गम्यमाने स्यादेव विभक्तिरत आह–**प्रायग्रहणादिति । विभाषा गुणे इति । निमित्ते**त्यादिवार्त्तिके 'सर्वासा'मित्येतन्न पञ्चमीतृतीयाविधायकं किं तु **हेता**विति **विभाषागुणेति** सिद्धयोस्तयोरन्याभिरबाधायानुवादकमेवेति भावः ॥ **विवारयतीति ।** स चाभ्यन्तरप्रयत्नः । **दोषापत्तिः ।** 'दण्डाढक'मित्यादौ दीर्घानापत्तिर्दोष इत्यर्थः ।

ननु प्रयत्नभेदेऽपि जातिसद्भावात्स्यादेव ग्रहणमत उक्तं–**व्यक्तिपक्ष इति ॥**

❀ राजलक्ष्मीः ❀

**अनुकार्यञ्च**–अभेदपक्षे अनुकरणं हि स्वार्थभूतमनुकार्यञ्च । **वृत्तिः**–शक्तिः । **वृत्त्येति ।** न तु यथा कथञ्चित्सादृश्यादिनाऽर्थबोधकत्वमर्थवत्त्वं तत्राभिप्रेतमित्यर्थः । भेदपक्षेऽप्याह–**अनुकरणत्वेति । अविवक्षणाद्वेति ।** 'वाक्ये तु सा विवक्षामपेक्षते' इत्युक्तेः संहिताया विवक्षाधीनत्वात् । परिनिष्ठतसमुदायत्वेन अइउणादीनां वाक्यत्वाभ्युपगमात् । **तटस्थे**–उपजीव्योपजीवकभावानाक्रान्ते । **तद्ग्रहणम्**–आकारग्रहणम् । **गुणीति ।** विवृतत्वगुणवदकारोपदेश इत्येवं तस्य गुणिपरत्व इत्यर्थः । **तस्य**–विवृतगुणस्य ।

❀ शब्दकौस्तुभः ❀

न्नपि यथा प्रवृत्तिस्तथा दीर्घादीनामपीति चेत्तुल्यं यणादावपि । नन्वेवं ग्रहणकशास्त्रमपि 'अणोऽप्रगृह्यस्ये'त्यादौ तटस्थइव स्वस्मिन्नपि प्रवर्त्तेत । ततश्च दीर्घाणामनण्त्वेन सवर्णग्राहकत्वं नास्तीतिसिद्धान्तोपि भज्येतेति चेन्न; वैषम्यात् । पदार्थसंसर्गो हि वाक्यार्थः, तद्बोधश्च पदार्थबोधोत्तरभावी । तथा च अण्शब्देन ये उपस्थितास्तेषां सवर्णग्राहकत्वं सूत्रार्थः । अण्शब्दश्च आदिरन्त्येनेतिसूत्रेण अक्षरसमाम्नायपठितेषु सङ्केतित इति तानेवात्रोपस्थापयति । तथा च अष्टादशानामपि अकारः संज्ञेति पर्यवसन्ने सूत्रान्तरे[१]ऽस्य चावित्यादिषु अकारोऽष्टादशानामुपस्थापक इत्युचितं, नतु ग्रहणकसूत्रेपि । एतद्वाक्यार्थबोधात्प्रागष्टादशस्वगृहीतशक्तिकत्वात् । नहि 'सिचि वृद्धि'रित्यादावादैचामुपस्थापकोऽपि वृद्धिशब्दो 'वृद्धिरादै'जिति संज्ञासूत्रे तानुपस्थापयति । किन्तु स्वरूपमेव । संज्ञासूत्रे च सामानाधिकरण्यादादैचां वृद्धिशब्दवाच्यत्वावधारणे सूत्रान्तरेषु संज्ञिनामुपस्थितिर्निर्बाधेति दिक् । तस्मादइउणित्यादौ स्वरसन्धिः प्राप्नोत्येवेति चेत्; सत्यम् । संहिताविरहान्न यणादयः । अनित्या हि वाक्ये संहिता । उक्तञ्च–**'संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते'** ॥ इति ।

१ शिवदत्तशास्त्रिणा त्विदं व्याख्यानमनुचिते स्थानेऽज्ञानात्स्थापितमासीत्तदस्माभिर्यथास्थानं निवेशितम् ।

[ व्यक्तिपक्षे आक्षेपे न्यूनतोद्भावनभाष्यम् ]

**किमुच्यते–'विवारभेदा'दिति, न पुनः कालभेदादपि । यथैव ह्ययं विवारभिन्न एवं कालभिन्नोऽपि ?॥**

( प्रदीपः ) व्यक्तिपक्षे भेदान्तरसद्भावादाह–**किमुच्यत इति ॥**

[ समाधानभाष्यम् ]

**सत्यमेव तत् । वक्ष्यति–'तुल्यास्यप्रयत्नं सवर्ण'मित्यत्रास्यग्रहणस्य प्रयोजनम्–'आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्ती'ति । बाह्यश्च पुनरास्यात्कालः । तेन स्यादेव कालभिन्नस्य ग्रहणं न पुनर्विवारभिन्नस्य ।**

( प्रदीपः ) **बाह्यश्चेति ।** प्रयत्नाभिनिर्वृत्तत्वात्कालस्य प्रयत्नत्वमभ्युपगम्य शङ्का । बाह्यत्वेन परिहारः । प्रसिद्धपरिमाणवस्त्वन्तरगतपरिच्छेदकक्रियान्तरापेक्षणात्कालव्यवहारस्य–बाह्यत्वं कालस्य । यथा व्रीहेः प्रस्थादिव्यवहारः परिमाणद्रव्यकृतः, एवमत्रापि मात्रादिव्यपदेशो निमेषादिक्रिया(भेद)कृतः । अथ वा नाभिप्रदेश एव विशिष्टप्रयत्नारम्भाद्दीर्घादिनिष्पत्त्या नाभेश्चाऽस्याद्बाह्यत्वात्कालस्य बाह्यत्वम् । विवृतत्वादीनां चाऽऽस्यवर्तिप्रयत्ननिष्पाद्यत्वादाभ्यन्तरत्वम् । द्रुतादिवृत्तयस्तु यथा न भेदिकास्तथा **तपरसूत्रे** वक्ष्यते ॥

( उद्द्योतः ) ननु कालस्य व्यापकत्वाद्बाह्यत्वेन समाधानमयुक्तम् । किं च 'कालो न प्रयत्न' इति तद्भेदे कथं सवर्णत्वाऽप्राप्तिरत आह–**प्रयत्नाभिनीति ।** बाह्यत्वं व्युत्पादयति–**प्रसिद्धेति ।** प्रसिद्धपरिमाणं यद्वस्त्वन्तरगतं परिच्छेदकक्रियान्तरं,–परिच्छेद्यक्रियपिक्षयान्यत्तदपेक्षणादित्यर्थः। एवं च बाह्यपरिच्छेदकक्रियापेक्षया बाह्यत्वोक्तिरिति भावः। 'क्रियैवं कालो नातिरिक्त'इति मते इदम्।'अतिरिक्तः क्षणसमूहः काल' इति मते परिहरति–**अथ वेति ।** अयं भावः–नाभिप्रदेशावच्छिन्नयत्नेन प्रेरितो वायुस्तत्तत्स्थानाभिघातोत्तरं वर्णाभिव्यञ्जक इति शिक्षादौ स्पष्टम् । वायोरल्पत्वाधिक्यानि च ह्रस्वत्वदीर्घत्वादिरूपकालव्यञ्जकानीति । ननु ह्रस्वदीर्घयोः कालभेदादतो भिस इत्यादौ दीर्घाऽग्रहणवद्विलम्बितवृत्त्योच्चारितस्य ह्रस्वाकारस्यापि द्रुतमध्यापेक्षया कालाधिक्यादैस्भावविधायके ग्रहणानापत्तिरत आह–**द्रुतादीति ॥**

⊛ राजलक्ष्मीः ⊛

( उद्द्योते ८० पृ० ) ननु विवारशब्दो बाह्यप्रयत्न एव प्रसिद्ध इत्यत आह–**सचेति ।** एवञ्च विवारपदं भाष्ये विवृतार्थकम् । विवृतञ्चाभ्यन्तरप्रयत्न एवेति भावः । **(भाष्ये)** ननु व्यक्तिपक्षाभिप्रायेणैव भाष्ये विवारभेदादितिशङ्का सम्भवति, व्यक्तिपक्षे च भेदान्तरमप्यस्ति, तदनुपादानाच्च न्यूनतेत्याह **–किमुच्यत इति । ( भाष्ये )** विवारभिन्नस्य–विवृतभिन्नस्य । **( प्रदीपे ) अत्रापि**–अकारादौ । **मात्रेति ।**

⊛ शब्दकौस्तुभः ⊛

समासग्रहणं गोबलीवर्दन्यायेन । 'एकपदे' इत्यनेनैव तत्सङ्ग्रहसिद्धेः । इयं च प्राचां परिभाषा एकदेशानुमतिद्वारा संहिताधिकारेणैव ज्ञापिता । असंहितायां यणादिनिवृत्त्यर्थो हि संहिताधिकारः । अत एव–'**हे रोहिणि ! त्वमसि शीलवतीषु धन्या एनं निवारय पतिं सखि ! दुर्विनीतम् । जालान्तरेण मम वासगृहं प्रविष्टः श्रोणीतटं स्पृशति किं कुलधर्म एषः ?॥**' इत्यत्र 'धन्या–एन'मित्यस्य नाऽसाधुता । अत एव आलङ्कारिकैश्च्युतसंस्कृतित्वापेक्षया पृथगेव विसन्धिता नाम दोषान्तरङ्गणितम् । तच्चेहास्तीत्यन्यदेतत् ॥

नन्वेवमप्यसंहितायां कालव्यवायादेव यणादेरप्राप्तौ किं संहिताधिकारेणेतिचेन्न; संहिताधिकारबहिर्भूतानां कालव्यवायेपि प्रवृत्तिं ज्ञापयितुं तदारम्भात् । तेन 'अग्नाविष्णू इत्यग्नाविष्णू' इत्यादावग्रहेप्यानङादयः । 'अग्निमीळे' इत्यत्र पदविभागेपि निघातः । 'ते नो रासंता'मित्यादौ नसादयश्च सिद्ध्यन्ति । नन्वेवं पुरः हितमित्यवग्रहे हितशब्दस्य स्वरितत्वं बह्वृचैः पठ्यमानमसङ्गतं स्यात्, 'तयोर्य्वावची'ति संहिताधिकार आ शास्त्रसमाप्तेरिति सिद्धान्तात् । स्वरितविधेश्च तदन्तर्भूतत्वात् । अत एव तैत्तिरीया अवग्रहे हितशब्दमनुदात्तं पठन्ति । अत एव बह्वृचा अप्यग्निमीळ इत्यस्य पदविभागपाठे निघातमेव कुर्वन्ति न तु स्वरितमपीति चेत्सत्यम् ; प्रातिशाख्ये विशेषविधानात्स्वरितसिद्धिः । उक्तं हि–'**यथा सन्धीयमानानामनेकीभवतां स्वरः । उपदिष्टस्तथा विद्यादक्षराणामवग्रहे ॥**' इति । सदेवमङउणित्यादौ संहिताविरहान्न सन्धिरिति स्थितम् । केचित्तु चादिपाठन्निपातसंज्ञा । 'निपात एका'जितिप्रगृह्यत्वं, ततः प्रकृतिभावः । यद्यपि अनिपातानामपीह ग्रहणमिष्टं दध्यश्चो दाक्षिः प्लाक्षिरित्यादिसिद्धये, तथापि न सर्वा व्यक्तयः साक्षान्निर्देष्टव्याः,

१ **परिमाणद्रव्यकृतः**–प्रस्थादिमानपात्रकृतः । 'परिमाणन्तु सर्वतः' इत्युक्तेः । २ 'एवं मात्रादि' पा० ।
३ **प्रसिद्धपरिमाणम्**–इयत्तया प्रसिद्धं परिमाणम् ।

**वस्त्वन्तरगतं**–चक्षुर्गतं । **परिच्छेदकक्रियान्तरं**–निमेषोन्मेषादिक्रियान्तरम् । **परिच्छेद्यक्रिया**–उच्चारणक्रिया ।
४ **क्रियैव**–परिच्छेदकनिमेषादिक्रियैव ।

[ विवृतोपदेशे आक्षेपभाष्यम् ]

**किं पुनरिदं विवृतस्योपदिश्यमानस्य[1] प्रयोजनमन्वाख्यायते[2], आहोस्वित्संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यते[3] ?॥**

( प्रदीपः ) **किंपुनरिति।** किं सूत्रकारेणैव विवृतोपदेशः कृतो, वार्तिककारेण तु तस्य प्रयोजनमुक्तम्, अथवाऽकृत एव विवृतोपदेशो वार्त्तिककृता चोद्यत्वेनोपन्यस्त इति प्रश्नः। दुरवधारत्वादुपदिष्टोऽपि विवृतो व्याख्यानेन विना न शक्यते ज्ञातुमिति प्रत्यक्षेऽप्यकारे प्रश्नोऽयं नाऽसमञ्जसः॥

( उद्द्योतः ) 'उपदिश्यमानस्ये'त्यत्र वार्तिककृतः कर्तृत्वे पक्षयोर्भेदो न स्यादत आह–**किं सूत्रकारेणेति। सूत्रकारो**–महेश्वरो, वेदपुरुषो वा, **'येनाक्षरसमाम्नाय'**मित्याद्यैतिह्यादित्याहुः। ननु प्रत्यक्षतोऽकारे श्रुते, तद्गतगुणस्यापि ज्ञातत्वात्प्रश्नोऽयमसङ्गतोऽत आह–**दुरवधारत्वादिति।** विवृतत्वादीनां श्रोत्रेन्द्रियग्राह्यत्वाभावादिति भावः॥

[ **समाधान**भाष्यम् ]

**विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते ?॥ कथं ज्ञायते ?॥**

**यदयम्–'अ अ'–इत्यकारस्य विवृतस्य संवृतताप्रत्यापत्तिं शास्ति[4]॥**

( प्रदीपः ) तत्र[5] प्रत्यापत्त्या पूर्वः पक्ष आश्रितः। अन्यथा शास्त्रान्ते प्रत्यापत्तिवचनमनर्थकं स्यात्, स्वरूपप्रच्यवाऽभावात्॥

( उद्द्योतः ) **अन्यथा**–संवृतत्वे[6]। स्वरूपप्रच्यवे हि पुनः संवृतविधानं युक्तं स्यादिति[7] भावः॥

[ ज्ञापकत्वविघटनभाष्यम् ]

**नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेत-**

बोधनमित्यर्थः। तत्र पाणिनिं प्रति विवृत एव भगवता शम्भुना

---

**॥ राजलक्ष्मीः ॥**

एकमात्रिकत्वादिव्यवहार इत्यर्थः।

**(प्रदीपे) चोद्यत्वेन**–कर्त्तव्यत्वेन। प्रतिज्ञेयत्वेनेतिवा।

**दुरवधारत्वादिति।** अन्ये तु **'किं पुन'**रिति प्रश्नस्यायं भावः,–सूत्रकारेण पाणिनिना 'अइउ'णित्यत्र बोधकत्वेन तात्पर्यविषयत्वं विवृते बुद्ध्वा शास्त्रं प्रणीतमाहोस्वित्संवृते इति। किमयं स्वतः सिद्धः संवृतोऽथवा विवृतस्य स्थाने अ अ इति सूत्रनिष्पन्न इति तु परमार्थः। उच्चारितादन्यस्मिन्नप्युच्चरितेन प्रतिसन्धीयमाने'त्रेख्य' इत्यत्र त्रिशब्दे बोधकत्वेन तात्पर्यविषयताया दृष्टत्वात्। 'उपदिश्यमानस्ये'त्यस्य पाणिनिं प्रति महेश्वरेण बोध्यमानस्येत्यर्थः। पूर्वत्राप्युपदेश इत्यस्य

बोधितः, संवृते हि बोधिते विवृतस्य कलादीनामिव वार्णसाधुत्वस्यैवाभावेन प्रसङ्गस्यैवाभावात्तस्य स्थाने पाणिनिना संवृतस्य विधानमनुपपन्नं स्यादिति पूर्वस्य पक्षस्याश्रयणम्। नन्वेवं संवृतस्य वार्णसाधुत्वनापत्तिः, वर्णसमाम्नायस्य तद्बोधकस्य संवृतेऽप्रवृत्तेरिति चेन्नैवम्, प्रत्यापत्त्यैव तद्बोधनात्। वर्णसमाम्नाये संवृतपाठेन तदनुमानाच्च। इत्थं च प्रत्यक्षेऽप्यकारे विवृतत्वस्य स्ववधारत्वेपि प्रश्नस्य सामञ्जस्ये विवृतत्वादेरप्रत्यक्षत्वमभिमन्यमाने प्रदीपविवरणे चिन्त्ये इति **श्रीबालशास्त्रिचरणा** आहुः॥

**( भाष्ये ) संवृतताप्रत्यापत्तिं**–विवृतस्य पुनः संवृतत्वविधानम्। **( भाष्ये )** ज्ञापकताविघटनं दूषयन् ज्ञापकतां साधयति–**नैतदस्तीति।**

---

**॥ शब्दकौस्तुभः ॥**

आनन्त्यात्। किं तु काचिद्व्यक्तिर्निर्दिश्यमाना स्वसदृशीरितरा अपि गृह्णातीति वक्ष्यते। तत्र किं निपातव्यक्तिरेव निर्दिश्यतामुत तदितरेति संशये आद्यकोटिरेव युक्ता। संहिताकार्यविरहेण निर्दिश्यमानरूपस्य स्फुटप्रतीतिसिद्धेरित्याहुः।

**कार**प्रत्ययस्तु न भवति, बहुलग्रहणात्। स हि 'रोगाख्यायां ण्वुल्बहुल'मित्यत्रोपसङ्ख्यातः। अन्ये तु 'इक्श्तिपौ धातुनिर्देशे' इत्यतो निर्देशशब्दः कारप्रत्ययविधावनुवर्तते। **निर्देशश्च** प्रतिपादनम्। तेन प्रयोगविशेषनिष्ठानां वर्णानां प्रतिपादने प्रत्ययः। इह तु आनुपूर्वीसंपादनमात्रे तात्पर्यं न तु 'कविपुत्र'इत्यादौ दृष्टानामकारादीनां प्रतिपादने, अतः कारप्रत्ययाभाव इत्याहुः। अनुकार्यानुकरणयोरभेदविवक्षापक्षे तु अर्थवत्त्वस्याऽविवक्षिततया वर्णवाचित्वाभावात्कारप्रत्ययाभावः।

अत्रेदमवधेयम्–अकारः संवृतः। **'विवृतकरणाः स्वरास्तेभ्य एओ विवृततरौ, ताभ्यामैऔ, ताभ्यामप्याकारः। संवृतोऽकार'** इति शिक्षावाक्यात्। विवृतसंवृतादयः शब्दाः शुक्लादिवद्धर्मे धर्मिणि च प्रयुज्यन्ते। तेन विवृतं करणं प्रयत्नो येषां येषां ते तथाभूताः स्वरा इकारादय इत्यर्थः। यत्तु छन्दोगविशेषैरिवर्णोवर्णऋकाराणां संवृतता-

---

१ **उपदिश्यमानस्य**–सूत्रकृतोपदिश्यमानस्य।

२ **अन्वाख्यायते**–वार्त्तिककृता प्रयोजनमुच्यते।

३ **चोद्यते**–वार्त्तिककृतोपदेशश्चोद्यते कर्त्तव्यतया।

४ अकारस्य विवृतत्वाभावे तु कमुद्दिश्य संवृतविधानंस्यात्।

५ **तत्र**–'अ अ' इत्यत्र। **पूर्वः पक्षः**–प्रयोजनान्वाख्यानपक्षः। **स्वरूपप्रच्यवाभावात्**–संवृतत्वविगमाभावात्।

६ **संवृतत्वे**–अइउणित्यत्रापि संवृतत्वे।

७ मम तु अइउणिति सूत्रे सूत्रकृता विवृतस्यैवोच्चारणात्स्वरूपस्य संवृतत्वस्य प्रच्यवात्पुनस्तल्लाभाय युक्तं प्रत्यापत्तिविधानमित्याशयः।

**स्य वचने प्रयोजनम्॥ किम्?॥**

**'अतिखट्वः' 'अतिमाल' इत्यत्रान्तर्यतो विवृतस्य विवृतः प्राप्नोति, संवृतः स्यादित्येवमर्था प्रत्यापत्तिः ॥**

**(प्रदीपः) अस्ति ह्यन्यदिति ।** प्रयोग[1] एव प्राप्ते विवृतत्वे संवृतत्वप्रत्यापत्तिः स्यादित्यज्ञापकमेतदित्यर्थः । नन्विहाऽसति विवृतोपदेशे सावर्ण्याभावादकारेणाऽऽकारस्याग्रहणादच्त्वाभावात्कथमतिखट्व इति ह्रस्वः ?। नैष दोषः, **'उदीचामातः स्थाने'** इति ज्ञापकाद्भवत्याकारस्य[2] ह्रस्वः ।

**(उद्द्योतः) प्रयोग एवेति ।** 'अतिखट्व' इत्यादिप्रयोगे ह्रस्वेनान्तरतम्याद्विवृतोऽकारः प्राप्तः संवृत एव भवित्वित्यर्थं प्रत्यापत्तिवच इति भावः ॥ **नन्विति ।** **'अच**श्चे'त्युक्तेरच एव ह्रस्वत्वेन भाव्यमिति भावः। **गोस्त्रियो**रित्यत्रैतद्वारणार्थमेवोपस्थितिः स्यादिति तात्पर्यम् । **उदीचामात इति ।** न चापो**न्यतरस्या**मिति ह्रस्वे चरितार्थमिदम् । न[3] चात्राऽच्परिभाषोपतिष्ठते, फलाभावादिति वाच्यम्, शास्त्र[4]स्याल्पविषयतापत्तेर्गोशब्दसाहचर्येण स्त्र्यंशेऽप्यच**श्चे**त्यस्याप्रवृत्तेश्च । तदंशे[5] हि फलाभावान्न प्रवर्तते इति दिक् ॥

[ ज्ञापकत्वसाधकभाष्यम् ]

**नैतदस्ति । नैव लोके न च वेदेऽकारो विवृतोऽस्ति ॥**

**कस्तर्हि ?॥ संवृतः । योऽस्ति स भविष्यति । तदेतत्प्रत्यापत्तिवचनं ज्ञापकमेव भविष्यति-'विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते'इति ॥**

**(प्रदीपः) नैव लोक इति ।** प्रयुक्तानामनुशासनात्प्रयोगे च विवृतस्याकारस्याऽभावा[6]त्संवृत एव भविष्यतीति प्रत्यापत्तिर्ज्ञापिकैव ॥

[ विशेषजिज्ञासाभाष्यम् ]

**कः पुनरत्र विशेषः-'विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायेत, संवृतस्योपदिश्यमानस्य वा विवृतोपदेशश्चोद्येते'ति?॥**

**(प्रदीपः) कः पुनरिति ।** 'विवृतोपदेश' इत्यत्र 'कृत' इति वा, 'कर्तव्य' इति वा वाक्यशेषाध्याहारे न कश्चिद्विशेष इत्यर्थः ॥

**(उद्द्योतः)** नन्वाद्यपक्षे प्रयोजनान्वाख्यानमात्रपरत्वं, द्वितीये विवृतोपदेशपरत्वमपीति विशेषस्य स्पष्टत्वमत आह- **विवृतोपदेश इत्यत्रेति ॥**

[ समाधानभाष्यम् ]

**न खलु कश्चिद्विशेषः । आहोपुरुषिकामात्रं तु । भवानाह-'संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यत' इति । वयं तु ब्रूमो-'विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत' इति ॥**

**(प्रदीपः) आहोपुरुषिकेति ।** अहो अहं पुरुष इत्यहङ्कारवानहोपुरुषः, तस्य भाव इति मनोज्ञादित्वाद्वुञ् । अहंकारवत्त्वमित्यर्थः ॥

**(उद्द्योतः) आहोपुरुषिके**त्यत्र वुञः प्राक **मयूरव्यंसका**दित्वात्समासः । **अहो** इति अहमित्यर्थे । तत्र प्रयोजनान्वाख्यानमित्येव ज्यायः, प्रत्यापत्तेः। अकर्तृके आज्ञापादनाभावाच्चेत्याहुः ॥

[ धात्वादिषु विवृतत्वप्रतिज्ञावार्त्तिकम् ]

*॥ * ॥ तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः ॥ * ॥*

---

❀ **राजलक्ष्मीः** ❀

**(भाष्ये) इति**-इत्यत्र ज्ञापकं भविष्यति ।

**(प्रदीपे)** आद्यपक्षे आह-**कृत इतीति** । विवृतोपदेशपक्षे आह-**कर्तव्य इतीति** ।

**(भाष्ये) न खल्विति** । एवञ्च वादिपराजय एवं फलं नान्यदित्याशयः । **(उद्द्योते) अकर्तृके**-अपौरुषेये अइउणित्यादौ वेदे । **आज्ञेति** । नवीनकरणस्याज्ञाया अयुक्तत्वादित्यर्थः । **(भाष्ये) अन्यत्रापि**-अन्यत्र (धात्वादौ)

---

❀ **शब्दकौस्तुभः** ❀

मिच्छद्भिरुक्तं 'ऋृतः संवृता अन्यश्चार्भवसाम्न' इति; तत्तु तदीयशाखाविशेषमात्रपरं न तु सार्वत्रिकम् । यथा सात्यमुग्रिराणायनीयानामेव 'सुजाते ए अश्वसूनृते' 'अध्वर्यो ओ अद्रिभिः सुत'मित्यादावेकमात्र एकार ओकारश्च, न त्वन्येषां, तद्वत् । इकारादौ वा यथा तथास्तु । अकारस्य संवृतत्वं तु निर्विवादमेव । तथाप्यसौ प्रक्रियादशायामाकारेण दीर्घेण प्लुतेन च सह सावर्ण्यसिद्धये विवृततरोऽस्मिन्सूत्रे निर्दिश्यते ।

---

१ **प्रयोगे**-अतिखट्वादौ प्रयोगे । **विवृतत्वे**-अकारस्य विवृतत्वे ।

२ अन्यथाऽऽकारस्थानिकस्याकारस्य क्वाप्यभावात्सूत्रमेव व्यर्थं स्यादित्याशयः ।

३ **न च**-नहि । ४ **शास्त्रस्य**-ह्रस्वशास्त्रस्योदीचामित्यस्य । ५ **तदंशे**-गोशब्दांशे । ६ 'स्यासम्भवात्' पा० ।

[ व्याख्याभाष्यम् ]

**तस्यैतस्याक्षरसमाम्नायिकस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः कर्तव्यः ॥**

**काऽन्यत्र ? ॥ धातुप्रातिपदिकप्रत्ययनिपातस्थस्य ॥ किं प्रयोजनम् ? ॥ सवर्णग्रहणार्थः। आक्षरसमाम्नायिकेनाऽस्य ग्रहणं यथास्यात् ॥ किं च कारणं न स्यात् ? ॥**

**विवारभेदादेव ॥**

( प्रदीपः ) **तस्येति** । यदा प्रत्याहारे विवृतोऽकार उपदिष्टस्तदा प्रयत्नभेदात्तेन संवृतस्याऽकारस्यग्रहणाभावादच्कार्यं न स्यादिति तत्सिद्धये सर्वस्याऽकारस्य विवृतत्वं कर्तव्यमित्यर्थः । तेन 'शाम्यती'त्यादौ दीर्घादि सिध्यति । ननु च सर्वेषामकाराणां यत्सामान्यं तदनुकरणमत्राऽकारः । तस्य च विवृतत्वे प्रतिज्ञायमाने सर्वेषां तत्प्रतिज्ञातं भवतीति किमुच्यते 'तस्य विवृतोपदेशा'दिति ? । एवं तर्हि यदा कस्यचिदेवाकारस्येदमनुकरणं, स्वरूपपदार्थको वाऽकारस्तदेदमुच्यत इत्यदोषः ॥

( उद्योतः ) प्रत्यापत्त्या **'अइउ'** णित्यत्रैव प्रक्रियादशायां सर्वत्राऽकारो विवृतः प्रतिज्ञात इत्यजानञ्शङ्कते-भाष्ये-**तस्य विवृतोपदेशादिति** । **'तस्ये'**त्यस्य-वर्णसमाम्नायस्थस्येत्यर्थः । **संवृतस्येति** । धात्वादिस्थस्येत्यर्थः ।

ननु'**अइउ**'णित्यादौ कस्यानुकरणमित्यत्र विनिगकमाभावादाह-**स्वरूपपदेति** । स्वरूपपदार्थकत्वं यथा तथोक्तम्। भाष्ये **विवारभेदादिति** । प्रयत्नभेदादित्यर्थः । ग्राहकस्य विवृतत्वाद्ग्राह्यस्य संवृतत्वादिति भावः ॥

[ धात्वादौ विवृतत्वप्रतिज्ञाबाधकभाष्यम् ]

**आचार्यप्रवृत्तिर्ज्ञापयति-भवत्याक्षरसमाम्नायिकेन धात्वादिस्थस्य ग्रहणमिति, यदयमकः सवर्णे दीर्घ इति प्रत्याहारेऽको ग्रहणं करोति ॥**

**कथं कृत्वा ज्ञापकम् ?॥ नहि द्वयोराक्षरसमाम्नायिकयोर्युगपत्समवस्थानमस्ति ॥**

( प्रदीपः ) **यदयमिति** । यत्र हि ककारेण चिह्नेन प्रत्याहारस्थो विवृतो निर्दिष्टः, तेन च संवृतस्याऽग्रहणे 'इकः सवर्णे' इति वक्तव्यम् । **न हि द्वयोरिति** । यद्यप्येकोऽपि विवृतो नास्ति, तथापि ह्यधिष्ठानत्वादेकादेशस्य 'द्वयो'रित्युक्तम् ॥

---

❀ राजलक्ष्मीः ❀

विद्यमानस्यापि अकारस्य । **कान्यत्र**-कुत्रान्यत्र विद्यमानस्याकारस्य विवृतोपदेशः कार्यः । **अस्य**-धात्वादिस्थस्य ।

( **प्रदीपे** ) **सामान्यम्**-अत्वरूपं सामान्यम् । **कस्यचिदिति** । व्यक्तिपक्षे इति यावत् । **स्वरूपपदार्थक इति** । नत्वनुकरणमिति भावः । एवञ्च व्यक्त्यभिप्रायेणेयं शङ्केति भावः ।

( **भाष्ये** ) **आक्षरसमाम्नायिकेन**-विवृतेन । **धात्वादिस्थस्य**-संवृतस्यापि 'पच्'धात्वादिघटकाकारस्य । **ज्ञापकमिति** । आक्षरसमाम्नायिकेष्वाकृतिपक्ष इत्यस्य ज्ञापकमित्याशयः ।

( **प्रदीपे** ) **अत्र हि**-'अक' इत्यत्र हि । **निर्दिष्ट इति** । निर्दिष्ट इति ज्ञायते इत्यर्थः । **तेन च**-विवृतेन च । **संवृतस्य**-धात्वादिस्थस्याऽकारस्य । **विवृतो नास्तीति** ।

---

❀ शब्दकौस्तुभः ❀

विवृततरत्वं च प्रयोगदशायां मा भूदित्येतदर्थं शास्त्रान्ते 'अ अ' इति सूत्रं कृतम् । तेन हि विवृततरमनूद्य संवृतो विधीयते । न चानुवाद्यसमर्पकेणाऽकारेण दीर्घप्लुतयोरपि ग्रहणकशास्त्रबलात्सङ्ग्रहः स्यादिति वाच्यम् , 'अद' इति तपरनिर्देशस्य एकशेषेण ह्रस्वषट्कनिर्देशस्य वा सिद्धान्तयिष्यमाणत्वात् । वक्ष्यति हि तत्र वार्तिककारः-'सिद्धं तु तपरनिर्देशादेकशेषनिर्देशाद्वा । स्वरानुनासिकभिन्नानां भगवतः पाणिनेः सिद्ध'मिति । शास्त्रान्ते च विधीयमानः संवृतः शास्त्रीयकार्ये सर्वत्राऽसिद्धएवेति न क्वापि प्रक्रियायां सावर्ण्यप्रतिबन्धः । शास्त्रान्ते च विधीयमानं प्रत्यापत्तिवचनमेव ज्ञापकमिह विवृततर उपदिष्ट इत्यस्यार्थस्य । यत्तु अत्रत्यं वार्त्तिकम्-**'अकारस्य विवृतोपदेश आकारग्रहणार्थ'**इति । तत्र विवृतशब्दो विवृततरत्वपरः, उदाहृतशिक्षानुरोधात् । ननु शुक्लतरोऽपि शुक्लो भवत्येव यथा तथेह विवृततरस्याप्याकारस्य विवृतत्वानपायात्सावर्ण्यं यथाश्रुतेऽपि सेत्स्यतीति चेन्न; सवर्णसंज्ञायां तुल्यप्रयत्नत्वस्य विवृततरत्वाद्यवान्तरधर्मपुरस्कारेणैव वक्तव्यत्वात् । अन्यथा ओदौतोरपि सावर्ण्यापत्तौ गां गा इत्यत्रेव नावं नावः ग्लावं ग्लाव इत्यादावपि 'औतोम्शसो'रित्यात्वं प्रवर्त्तेत । ईदूदेदित्येकारान्तस्य विधीयमाना प्रगृह्यसंज्ञा 'करवावहै' इत्यादावपि प्रवर्त्तेत । 'एङः पदान्तादती'ति पूर्वरूपं 'कस्मै अदात्' 'विष्णौ अस्ता'त्यादावपि स्यात् । किंचैवं हकारादीनामीषद्विवृतत्वादकारादीनाञ्च विवृतत्वा सावर्ण्याप्रसक्तेर्नाज्झलाविति सूत्रं न कर्त्तव्यमिति भाष्यसिद्धान्तो व्याकुप्येत ।

---

१ पूर्वपरयोः स्थाने जायमानत्वादित्यर्थः ।

( उद्द्योतः ) **प्रत्याहारे इति ।** सङ्ग्राहके शास्त्र इत्यर्थः । **वक्तव्यमिति ।** एवं च प्रयत्नभेदेनाऽसवर्णस्यापि अत्वजात्याक्रान्तस्य विवृतेनाकारेण ग्रहणं ज्ञाप्यत इत्यर्थः । **यद्यप्येकोऽपीति ।** प्रत्युच्चारणं वर्णान्यत्वादाक्षरसमाम्नायिकस्य प्रयोगेऽभावादिति भावः । **आदिरन्त्येने**त्यस्य चान्त्यसदृशेन सहोच्चार्यमाण आदिसदृश इत्याद्यर्थः । तत्र ककारादिचिह्नेनाऽगादिशब्दस्थस्तत्सदृशत्वाद्विवृत एव । सादृश्यं च व्यक्तिभेदे सति सर्वधर्मसाम्यप्रयुक्तं ग्राह्यम् । तस्य च प्रयोगस्थेऽभावेप्यनेन तद्ग्रहणं ज्ञाप्यत इति तात्पर्यम् । केचित्तु 'देवदत्त अजस्ती'त्यादौ प्रत्याहारलिङ्गेनैक आक्षरसमाम्नायिकोऽस्ति तदर्थं भाष्ये **द्वयोरि**त्युक्तमित्याहुः । भाष्ये **युगपत्समवस्थानमि**त्यस्य **प्रयोगे** इत्यादिः ॥

[ ज्ञापकत्वविघटकभाष्यम् ]

**नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ किम् ?॥**

**यस्याक्षरसमाम्नायिकेन ग्रहणमस्ति तदर्थमेतत्स्यात्–'खट्वाढकं' 'मालाढक'मिति । सति प्रयोजने न ज्ञापकं भवति । तस्माद्विवृतोपदेशः कर्तव्यः ॥**

( प्रदीपः ) **नैतदिति ।** 'अक' इत्यकारेण विवृतेन दीर्घस्य विवृतस्य ग्रहणादज्ञापकमेतदित्यर्थः ॥

[ आक्षेपभाष्यम् ]

**क एष यत्नश्चोद्यते–विवृतोपदेशो नाम । विवृतो वोपदिश्येत संवृतो वा को न्वत्र विशेषः ? ॥**

( प्रदीपः ) **क एष यत्न इति ।** धात्वादयः पठितास्तत्राऽकारो विवृतः पठ्यतां न(हि)किंचिद्गौरवं भवति, तत्किमुच्यते–'अन्यत्रापि विवृतोपदेशः कर्तव्य इ(ती')ति प्रश्नः ॥

---

❀ **राजलक्ष्मीः** ❀

प्रयोगे एकस्यापि विवृतस्य सम्भवो नास्तीत्यर्थः ।

**( उद्द्योते )** नन्वगेव प्रत्याहार इति 'प्रत्याहारेऽको ग्रहण'मिति भाष्यप्रयोगानुपपत्तिरत आह–**सङ्ग्राहकइति ।** अकः सवर्ण इति लक्षणे इत्यर्थः । ननु प्रत्युच्चारणं वर्णानां भेदे य आक्षरसमाम्नायिकोऽकारः स न अगित्यत्रेति कथमगादिप्रत्याहारसिद्धिरत आह–**आदिरन्त्येनेत्यस्येति । अगादिशब्दस्थः**–अगादिशब्दस्थोऽकारः । **व्यक्तिभेदे**–केवलं व्यक्तिमात्रस्य भेदे सति । **तस्य च**–सादृश्यस्य च । **प्रयोगस्थ इति ।** तस्य संवृतत्वादित्यर्थः । **अनेन**–अग्रहणेन । **तद्ग्रहणं**–धात्वादिस्थस्य संवृतस्यापि ग्रहणम् । **केचित्तु**–भाष्यतत्त्वविदः । **प्रत्याहारलिङ्गेन**–ककारादिना । परे तु कादिचिह्नैस्तत्सदृशत्वेऽपि तत्त्वाभावादिदं न युक्तयुक्तमित्याहुः ॥

पूर्वपक्षी ज्ञापकत्वं विघटयन्नाह–**नैतदस्तीति । एतस्य**–अक इत्यस्य । **एतत्**–अक इति । एकदेशी शङ्कते–**क एष इति ।** 'चोद्यते' इत्यस्य 'वार्त्तिककृते'ति शेषः । विवृतोपदेशे को यत्नः, अकारोच्चारणं कर्त्तव्यमेव, तद्विवृतं संवृतं वा करणीयमेव । तथा च विवृतसंवृतयोरुच्चारणे विशेषाभावाद्विवृतोच्चारणमेव करिष्यते को विशेष इत्याशयः ।

---

❀ **शब्दकौस्तुभः** ❀

एओङित्यादिसूत्रद्वयं ङकारचकाररूपानुबन्धद्वयकरणं चेह लिङ्गम् । अन्यथा हि अन्यतरेणैव सर्वत्र व्यवहरेत् । किम्बहुना ऐकारौकाकारावपि न निर्दिशेदाकारादीनामिव सावर्ण्येन सिद्धेरिति दिक् । तस्मादत्रत्यभाष्यवार्तिकयोर्विवृतशब्दो विवृततरं लक्षयतीत्येव तत्त्वम् । यद्वा–विवृतप्रतिज्ञानसामर्थ्याद्विवृततरेण सह सावर्ण्यं सेत्स्यतीत्यवधेयम् । एवं च भाष्यादिग्रन्थो यथाश्रुत एवास्तु । एतच्च **न्यासकारहरदत्त**ग्रन्थमनुसृत्य उदाहृतशिक्षावाक्योपष्टम्भेन व्याख्यातम् । **परमार्थतस्तु**–आकारो विवृत इत्येव भाष्यवार्तिकस्वरससिद्धं, न तु विवृततर इति । तथा च **पाणिनीयशिक्षा–'स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् । तेभ्योपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥'** इति । प्रागुक्तं तु मतान्तरं, न तु पाणिनीयम् । अत एव एओङ्सूत्रे भाष्यकैयटादौ—'अकारस्य विवृतत्वाद्विवृततराभ्यां सन्ध्यक्षरभागाभ्यां न सावर्ण्य'मित्युक्तम् । एवं च वृत्तिग्रन्थस्यापि यथाश्रुतस्य सौष्ठवे **न्यासकारहरदत्ता**भ्यां कृतं भङ्क्त्वा व्याख्यानमनादेयम् । अथ वा 'नाज्झला'विति पठतः सूत्रकृतो मते विवृततरस्यापि विवृतत्वमात्रेण सावर्ण्यमस्तु, 'चत्वार आभ्यन्तराः प्रयत्नाः सवर्णसंज्ञायामाश्रीयन्त' इति वृत्तिग्रन्थस्वरसात् । न चैवमेङैचोरतिप्रसङ्गः, वर्णसमाम्नाये पृथङ्निर्देशसामर्थ्यादनुबन्धद्वयसामर्थ्याद्वा तत्र सावर्ण्याप्रवृत्तेरिति दिक् ।

ननु दण्डाढकमित्यादौ दीर्घेण सह दीर्घ एकादेशः सावर्ण्यस्य फलमित्यस्तु, प्लुतेन तु सावर्ण्यस्य किं फलमिति चेत्; 'इह अ३ग्निदत्ते'ति 'गुरोरनृत' इति प्लुते कृते तेन सह पूर्वस्य दीर्घ एकादेशः फलमिति गृहाण । न च दीर्घे कर्तव्ये प्लुतस्यासिद्धत्वं शङ्क्यम् । 'प्लुतप्रगृह्या अची'तिज्ञापकेन 'सिद्धः प्लुतः स्वरसन्धि'ष्विति वक्ष्यमाणत्वात् ।

स्यादेतत्–आक्षरसमाम्नायिकस्य अकारस्य कृतेपि विवृतत्वे धातुप्रातिपदिकप्रत्ययनिपातस्थस्य संवृतत्वादत्त्वं न स्यात् ।

---

१ गौरवं भवतीति किमुच्यते इत्यर्थः ।

[ समाधानभाष्यम् ]

**स एष सर्व एवमर्थो यत्नः क्रियते । यान्येतानि प्रतिपदिकान्यग्रहणानि तेषामेतेनाभ्युपायेनोपदेशश्चोद्यते, तद्गुरु भवति । तस्माद्वक्तव्यम्–'धात्वादिस्थश्च विवृत' इति ॥**

( प्रदीपः ) **यानीति** । प्रतिपदपाठस्याऽशक्यत्वात्तस्य 'विवृतोपदेशा'दित्यनेन सर्वस्याकारस्य विवृतोपदेशः कार्यतया चोद्यत इत्यर्थः । **धात्वादिस्थ इति** । अग्रहणप्रातिपदिकार्थे विवृतत्वेऽवश्यचोदनीये धात्वादिस्थस्यापि संवृतस्यैव पठितस्य कार्यार्थं विवृतत्वं प्रतिज्ञेयम् । अन्यथा दोषरूपविवृतोच्चारणे प्रयत्नस्य गौरवं स्यात् ॥

( उद्द्योतः ) **एवमर्थ इति** । वृत्तावेवंशब्द प्रकारवति वर्तते इति बहुव्रीहिः । **प्रातिपदिकानीति**। धातुप्रत्यययोरप्युपलक्षणं बोध्यम् । सर्वाण्यग्रहणानि प्रातिपदिकादीनि विवृताकारयुक्तानि पठनीयानीत्यर्थः । **तद्गुरु भवति तस्मादिति** । यतः सर्वोच्चारणं गुरु, अतो धात्वादिस्थ इति वाच्यमित्यर्थः । ननु धातूनां बहुधा पाठाद्धात्वादी त्ययुक्तमत आह–**अग्रहणेति**। 'प्रातिपदिके'त्युपलक्षणम् ॥ **धात्वादिस्थस्यापीति** । पठितधात्वादिस्थस्यापीत्यर्थः । एतेनाऽग्रहणधात्वादीत्येव वक्तुमुचितमित्यपास्तम् ।

**संवृतस्यैवेति** । एवं च[1] धात्वादिस्थश्च विवृतवत्कार्यं लभत इत्यतिदेशोऽयमिति भावः । **अन्यथेति**। गुणोच्चारण.दोषोच्चारणे यत्नाधिक्यमिति भावः ॥

[ एकदेशिनः प्रयोजनान्तरवार्तिकम् ]

*॥*॥ दीर्घप्लुतवचने च संवृतानिवृत्त्यर्थः ॥*॥*

[ व्याख्याभाष्यम् ]

**दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थो विवृतोपदेशः कर्तव्यः । दीर्घप्लुतौ संवृतौ मा भूतामिति । वृक्षाभ्याम्, देवदत्ता ३ इति ॥**

( प्रदीपः ) विवृतत्वप्रतिज्ञाने प्रयोजनान्तरमाह–**दीर्घेति** । असति विवृतत्वप्रतिज्ञाने संवृतस्याऽकारस्य स्थाने सावर्ण्यात्संवृतयोरेव दीर्घप्लुतयोः प्रसङ्ग इत्यर्थः ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**नैष दोषः[2] । नैवं लोके न च वेदे दीर्घप्लुतौ संवृतौ स्तः ॥ कौ तर्हि ?॥ विवृतौ ॥ यौ स्तस्तौ भविष्यतः ॥**

( प्रदीपः ) **नैव लोक इति** । असत्यपि सावर्ण्ये लिङ्गादकारस्य संवृतस्य विवृतौ दीर्घप्लुतौ भविष्यतः, यदयमतो दीर्घो यञि अतो रोरप्लुतादप्लुत इत्याहेति भावः ॥

( उद्द्योतः ) ननु संवृतयोस्तयोरभावेऽपि संवृतस्य विवृतौ न स्यातामेव, आन्तरतम्याभावात् । न चेको यणिव एच इगिवानन्तरतमावपि भविष्यतः, सामर्थ्येन तत्र तथाङ्गीकारेऽपि खट्वाढकमित्यादौ चरितार्थस्याकः **सवर्णे** इत्यादेर्विषये तथा कल्पने मानाभावादत आह–**असत्यपीति** । **सावर्ण्ये इति** । आन्तरतम्ये इत्यर्थः । एवं

❀ राजलक्ष्मीः ❀

( भाष्ये ) सिद्धान्ती समाधत्ते–**स एष इति** । **अभ्युपायेन** वार्तिकरूपेण । **उपदेशः**–उच्चारणम् । **इति**–इत्येवमतिदेशवाक्यम् ।

**धात्वादीति** । पठितधात्वादीत्यर्थः ।

( **उद्द्योते** ) एवंशब्दस्य प्रकारार्थतयाऽर्थ शब्देन कथं समासोऽसामानाधिकरण्यादत आह–**वृत्ताविति** । **इति**-इत्यतः सामानाधिकरण्यात् । तथा च **एवम्**–एतत्प्रकारकः **अर्थः**–प्रयोजनं यस्यासावेतत्प्रकारक इत्येवमर्थोऽत्र बोध्य इत्याशयः । **उपलक्षणमिति** । पूर्ववदेव धातुप्रत्यययोरप्युपलक्षणमित्यर्थः । एकदेशी प्रयोजनान्तरमाह–**दीर्घेति** ।

( **प्रदीपे** ) **विवृतत्वप्रतिज्ञाने**–धात्वादौ विवृतत्वप्रतिज्ञाने । सिद्धान्ती दोषं निरस्यति–**नैवेति** ।

( **प्रदीपे** ) लिङ्गमेवाह–**यदयमिति** ।

❀ शब्दकौस्तुभः ❀

आक्षरसमाम्नायिकेन भिन्नप्रयत्नानाममीपामग्रहणात् । ततश्च 'श्रमामष्टाना'मितिदीर्घोऽलोन्त्यस्यैव स्यान्न त्वकारस्य । 'अच्श्चे'तिपरिभाषाया बाधादनुपस्थितेः । तथा 'दृप'दित्यत्र प्रातिपदिकस्यान्त उदात्तो भवतीत्येतन्न स्यात् । 'नायक'इत्यत्र प्रत्ययाकारस्यानच्त्वादायादेशो न स्यात् । 'अवनमतो'त्यत्र 'निपाता आद्युदात्ता' 'उपसर्गाश्चाभिवर्ज'मित्याद्युदात्तत्वं न स्यात् । किं च–'अस्य च्वा'वित्यादौ अकारस्य संवृतत्वेनाऽनण्त्वादसति ग्राहकत्वे 'शुक्लीभवती'त्यादावेवेत्त्वं स्यान्न तु 'मालीभवती'त्यादौ । न चाक्षरसमाम्नायिकस्य विवृतत्वप्रतिज्ञासामर्थ्यात्तत्सदृशेषु धात्वादिस्थेष्वपि तत्कार्यप्रवृत्तिरिति वाच्यम्; खट्वाढक'मित्यादौ दीर्घसम्पादनेन विवृतत्वप्रतिज्ञायाः साफल्ये सति सामर्थ्यविरहात् । तथाहि–'अकः सवर्णे' इत्यत्र आदिरन्त्येनेतिवचनादनयोरेवाकारककारयोरनुकरणमिति

१ चकारः क्वचिन्न ।

२ 'नैष दोषः' इति क्वचिन्न ।

चातो दीर्घ इति, अतो रोरित्यत्राप्लुतादित्यतो विशेषणं च सामान्यापेक्षं ज्ञापकमिति भावः ॥

[ एकदेशिनः प्रयोजनसाधकं भाष्यम् ]

**'स्थानी प्रकल्पयेदेतावनुस्वारो यथा यणम् ।'**

**संवृतः स्थानी, संवृतौ दीर्घप्लुतौ प्रकल्पयेत् । 'अनुस्वारो यथा यणम्'। तद्यथा– सँय्यँन्ता सँव्वँत्सरः यँल्लोकं तँल्लोकमिति– अनुस्वारः स्थानी यणमनुनासिकं प्रकल्पयति ॥**

( **उद्द्योतः** ) संवृतदीर्घादिवदनुनासिकयवलानामपि वेदलोकयोरसत्त्वं मन्यमान आह– भाष्ये **स्थानी प्रकल्पयेदित्यादि** ॥

[ प्रयोजननिराकरणभाष्यम् ]

**विषमै उपन्यासः । युक्तं यत्सतस्तत्र प्रक्लृप्तिर्भवति । सन्ति हि यणः सानुनासिकाः निरनुनासिकाश्च । दीर्घप्लुतौ पुनर्नैव लोके नैव च वेदे संवृतौ स्तः ॥ कौ तर्हि ? ॥ विवृतौ ॥ यौ स्तस्तौ भविष्यतः ॥**

( **प्रदीपः** ) **सतस्तत्रेति** । अशक्यत्वाद्दीर्घप्लुतयोः संवृतयोरुच्चारणस्येत्यर्थः ।

( **उद्द्योतः** ) तद्वत्संवृतौ दीर्घप्लुतावपि कुतो न सन्ताविल्यत आह–**अशक्यत्वादिति** । केचित्तु शिष्टसंमतत्वात्ते सन्तः, इमौ तु न तथेति भाव इत्याहुः । **सन्ति हि यण इति** भाष्ये यण इति बाहुल्याभिप्रायेण, रेफस्यानुनासिकत्वाभावादिति बोध्यम् ॥

[ समाधानभाष्यम् ]

**एवमपि कुत एतत्,—'तुल्यस्थानौ प्रयत्नभिन्नौ भविष्यतः, न पुनस्तुल्यप्रयत्नौ स्थानभिन्नौ स्यातामीकार ऊकारो वे'ति ?॥**

( **प्रदीपः** ) **एवमपीति** । असति विवृतत्वप्रतिज्ञाने संवृतस्याकारस्य संवृतावेवेकारोकारौ

---

**॥ राजलक्ष्मीः ॥**

( **उद्द्योते** ) **मन्यमानः**–इत्यस्यैकदेशीति शेषः ।

( **भाष्ये** ) सिद्धान्ती एकदेशिनो दृष्टान्तं विघट्टयन्नाक्षेपं निराकरोति–**विषम इति** ।

( **भाष्ये** ) **नैव लोके न च वेदे इति** । प्रत्याहारे संवृतोपदेशे तस्यैवाज्झस्वादिसंज्ञासु सतीषु अतिमालादौ सवर्णदीर्घादेरेवाभावेन टाबादिस्थस्यास्याकारस्य संवृतस्यैव संविज्ञानेनोक्तोदाहरणे संवृतस्यैव सवर्णदीर्घस्य वा सत्त्वेन तत्स्थाने संवृतस्यैव प्राप्त्या तद्वैयर्थ्येन ज्ञापकत्वं सम्यगेवेति भावः । 'दीर्घप्लुतवचने चे'ति तृतीयवार्त्तिके प्रयोजनकथनं तु अन्यत्र विवृतोपदेशस्य । तेन तत्प्रत्याख्याने'नैव लोके न च वेदे' इत्यस्यापि एवमेव तात्पर्यम् । न पुनर्ह्रस्वस्य विवृताकारस्य दीर्घप्लुतयोश्च संवृतयोरत्यन्ताऽसत्त्वविषयकम् । 'क्ङिति चे'त्यादाववसाने ह्रस्वविवृतस्य साम्प्रतिकैर्बह्वृचादिवैदिकैः पठ्यमानस्य प्रत्यक्षसिद्धत्वात् । एवं दीर्घप्लुतयोः संवृतावर्णयोरुच्चारणस्य सुशकत्वस्य स्पष्टत्वात् । न च दीर्घस्यैवाकारस्य द्रुतवृत्त्या तथोच्चारणमात्रं, तथा ह्रस्वसंवृताकारस्य विलम्बितवृत्त्या दीर्घत्वादिप्रतिभास इति वाच्यम्, इकारादिषु द्रुतादिवृत्त्याऽवर्ण इव वैलक्षण्यानुपलम्भेन तत्प्रतिभासस्य द्रुतादिवृत्तिप्रयोज्यताया वक्तुमशक्यत्वात् । कैयटस्यापि विवृतह्रस्वाकारादीनामसाधुत्वएवाभिप्रायो न पुनरत्यन्तासत्त्वइत्यपि शक्यते वक्तुम् । अत एव 'धात्वादिस्थ इती'ति प्रतीकमुपादाय विवृतोच्चारणप्रयत्नस्य गौरवमुद्भावितवान्न त्वसम्भवम् । एतदनुरोधेन 'यत्सतस्तत्रेती'तिप्रतीके दीर्घप्लुतयोः संवृतयोरुच्चारणस्याशक्यत्वं कैयटेनोक्तं, तस्यापि कलध्मातादीनामिव वार्णसाधुताऽभावादशक्यत्वे एवाभिप्रायो वर्णनीय इति श्री**बालशास्त्रि**चरणाः ।

( **उद्द्योते** ) **तद्वत्**–यण्वत् । **सन्तौ**–विद्यमानौ । सत्याविति यावत् । **सन्तः**–वर्त्तमानाः । **इमौ**–संवृतौ-दीर्घप्लुतौ ।

( **भाष्ये** ) एकदेशी शङ्कते–**एवमिति** । अनान्तरतमादेशस्वीकारेऽपि । प्रयत्नभिन्ना'वित्यस्य 'दीर्घप्लुता-

---

**॥ शब्दकौस्तुभः ॥**

निर्णीतं, तेन प्रत्याहारगतेन विवृतेनाकारेण सावर्ण्याद्दीर्घप्लुतयोर्ग्रहणे 'खट्वाढक'मित्यादि सिध्यति । असति तु विवृतत्वे 'अस्य च्वा'वित्यादिष्विव प्रत्याहारेष्वपि संवृतस्य ह्रस्वस्यैव कार्यं स्यान्न तु दीर्घप्लुतयोरितिफलभेदस्य स्पष्टतया क्व विवृतत्वप्रतिज्ञायाः सामर्थ्यम् ? । अथोच्येत–प्रत्यासत्त्याऽऽक्षरसमाम्नायिकस्यैव विवृतत्वं ज्ञाप्यते इति न ब्रूमः किं तु सामान्यापेक्षं ज्ञापकम्,–'इह शास्त्रे यावानकारः स सर्वोपि–प्रक्रियायां विवृतो बोद्धव्य' इति । एवमपि प्रत्युच्चारणं वर्णानां भेदेनास्य च्वावित्यादावुच्चारितस्याऽनण्त्वेन सवर्णग्राहकता न स्यात्, किं त्वकः सवर्णइत्यादौ प्रत्याहारएव सवर्णग्राहकत्वं स्यात् । एवमिकारादयोपीकोयणचीत्यादावेव ग्राहकाः स्युर्न

---

१ दृष्टान्तदार्ष्टान्तिकयोरस्त्यत्र महद्वैषम्यमित्यर्थः ।

प्राभुतः 'व्वृतः संवृता अन्यत्राभवसात्र' इति कश्चि-दीकारोकारयोः संवृतत्वस्याभ्युपगमात् ॥

( उद्द्योतः ) नन्वीकारोकारयोः कथं संवृतत्वमत आह–व्वृतः संवृता इति । ईऊऋत इत्यर्थः । क्वचित्तु 'ख्वत'इति पाठः । ईकारोकाराऽकारा इत्यर्थः ॥

[ समाधानभाष्यम् ]

**वक्ष्यति 'स्थानेऽन्तरतमः' इत्यत्र स्थान इत्यनुवर्तमाने, पुनः स्थानेग्रहणस्य प्रयोजनम्,—'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयो भवति'–इति ॥**

[ अक्षरसमाम्नाये जातिपक्षाधिकरणे आक्षेपवार्तिकम् ]

*॥ * ॥ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमा-णत्वात् ॥ * ॥*

[ व्याख्याभाष्यम् ]

**तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति–'अस्य च्वौ'–'यस्येति च' । किं कारणम् ?। अनण्त्वात् । न ह्येतेऽणो येऽनुवृत्तौ । के तर्हि ?। येऽक्षरसमाम्नाये उपदिश्यन्ते ॥**

( प्रदीपः ) **तत्रानुवृत्तिनिर्देश इति । अकः सवर्णे दीर्घ** इत्यादावयमेवाकारोऽनुकृत इति ककारादिना चिह्नेन ज्ञायते । ततश्चाऽण्वात्तस्य ग्राहकत्वमस्तु । **अस्य च्वा**वित्यादौ त्वकारस्यानण्त्वाद्ग्राहकत्वं न प्राप्नोतीत्यर्थः । **वृत्तिः**—शास्त्रस्य लक्ष्ये प्रवृत्तिस्तदनुगतो निर्देशोऽनुवृत्तिनिर्देशः ॥

( उद्द्योतः ) एवंचाद्यप्रयोजनार्थमेव सर्वत्राकारस्य विवृतत्वं प्रतिज्ञेयमिति स्थिते शङ्कते भाष्ये–**तत्रानुवृत्तीति** । एतद्विशेषणोपादानस्य फलमाह–**अकः सवर्ण इति ॥ अनण्त्वादिति** । अक्षरसमाम्नायेऽपठितत्वादाकारस्येवानण्त्वमित्यर्थः । प्रत्युच्चारणं वर्णभेदेऽपि**'अक'** इत्यादौ ककारेण चिह्नेनैतदनुकरणत्वानुमानमिति भावः । **तदनुगत इति** । साक्षाल्लक्ष्यसंस्कारकबोधजनक इत्यर्थः ॥

[ एकदेशिसमाधानवार्तिकम् ]

*॥ * ॥ एकत्वादकारस्य सिद्धम् ॥ * ॥*

[ व्याख्याभाष्यम् ]

**एकोऽयमकारो, यश्चाक्षरसमाम्नाये, यश्चानुवृत्तौ, यश्च धात्वादिस्थः ।**

( प्रदीपः ) **एकत्वादकारस्येति** । एकैवाकारव्यक्तिः, उदात्तादिभेदप्रतिभासस्तु व्यञ्जकध्वनिकृतः खड्गतैलादर्शादिभेदे प्रतिबिम्बप्रतिभासभेदवत् । अकारस्य निदर्शनार्थत्वादिकारादीनामप्यैक्यं बोध्यम् ॥

( उद्द्योतः ) ननूदात्तादिविरुद्धधर्माध्यासाद्भेदः स्यादत आह–**उदात्तादीति । प्रतिबिम्बप्रतिभासभेदवदिति** । भिन्नभिन्नाकारप्रतिबिम्बप्रतिभासवदित्यर्थः । **इकारादीनामपीति** । सर्वध्वनिभिरेकस्य स्फोटस्यैव तत्तद्रूपेणाभिव्यञ्जनात् । तत्तद्रूपाभिव्यक्तिकृतश्च परम्परं भेदव्यवहारोऽपीति भावः ॥

[ आक्षेपवार्तिकम् ]

*॥ * ॥ अनुबन्धसङ्करस्तु ॥ * ॥*

[ व्याख्याभाष्यम् ]

**अनुबन्धसङ्करस्तु प्राप्नोति । 'कर्मण्यण्' 'आतोऽनुपसर्गे कः' इति केऽपि णित्कृतं प्राप्नोति ॥**

---

❀ राजलक्ष्मीः ❀

कारा'विति शेषः । ( **उद्द्योते** ) 'व्वृत' इत्यस्यार्थमाह–**ईकारोकारेति** ।

( **भाष्ये** ) सिद्धान्ती समाधत्ते–**वक्ष्यतीति** । **तत्रेति । अनुवृत्तिनिर्देशे**-वृत्तिः-शास्त्रस्य लक्ष्ये या प्रवृत्तिस्तदनुकूलोच्चारणे । यथा 'अस्य च्वा'वित्यादौ । तत्र हि–अकारे शास्त्रं प्रवर्त्य,'सूत्रे तस्यैव चोच्चारणमिति भवति तादृशमुच्चारणं 'अनुवृत्तिनिर्देश'पदाभिधेयमिति भावः ।

**(प्रदीपे) अयमेव**–अइउणिति सूत्रस्थ आक्षरसमाम्नायिक एव । **तस्य**–अकः । ( **उद्द्योते** ) **आद्यप्रयोजनार्थम्**–आकारग्रहणार्थम् । न तु संवृताकारनिवृत्त्यर्थमित्याशयः । **स्थिते**–सिद्धे । **साक्षादिति** । यथा–'अस्य च्वा'वित्यादौ । 'अकः सवर्णे'इत्यादौ तु प्रत्याहारद्वारैव लक्ष्यसंस्कारकता न साक्षादित्याशयः । एकदेशी समाधत्ते–**एकत्वादिति** ।

( **प्रदीपे** ) **प्रतिभासः**–भानम् । **निदर्शनं**–दृष्टान्तः ।

( **उद्द्योते** ) सिद्धान्तरीत्याह–**सर्वेति** ।

( **भाष्ये** ) एकत्वे दोषमाशङ्कते–**अनुबन्धेति** ।

---

❀ शब्दकौस्तुभः ❀

तु 'एरनेकाचो' 'यस्येतिचे'त्यादौ । ननु एक एवाऽकारः, तत्कस्यानण्त्वमाशङ्क्यते ?। न चैवमुदात्तानुदात्तत्वादिविरुद्धधर्मानुपपत्तिः, तेषां व्यञ्जकध्वनिधर्मत्वात् । अनुबन्धव्यवस्थापि

**( प्रदीपः ) अनुबन्धसङ्कर इति ।** एकत्वे कोऽण्टगादीनां भेदाभावाद्गोदादौ ङीबादिः प्राप्नोति ॥

**( उद्द्योतः )** भाष्ये–**अनुबन्धसङ्कर इत्यस्य** अनुबन्धकार्यसङ्कर इत्यर्थः । **ङीबादीति । 'टिड्ढे'त्यादिना ।** आदिना णित्त्वप्रयुक्तयुक् । पर्यायेण कित्त्वणित्त्वप्रयुक्तकार्ययोरप्यविरोध इति भावः ॥

[ द्वितीयाक्षेपवार्तिकम् ]

*॥*॥ एकाजनेकाज्ग्रहणेषु चानुपपत्तिः ॥*॥*

[ व्याख्याभाष्यम् ]

**एकाजनेकाज्ग्रहणेषु चानुपपत्तिर्भवति ॥ तत्र को दोषः ?॥ 'किरिणा' 'गिरिणे'त्येकाज्लक्षणमन्तोदात्तत्वं प्राप्नोति । इह च 'घटेन तरति घटिक' इति द्व्यज्लक्षणष्ठन्न प्राप्नोति ।**

**( प्रदीपः ) किरिणेति । 'न गोश्वन्त्साववर्णे'**ति प्रतिषेधादकारो नोदाहृतः । **घटेनेति ।** एक एवाऽकारो द्विरुच्चार्यत इति द्व्यच्त्वाऽभावः । ठंस्तु-बहुकादिषु कृतार्थः ॥

**( उद्द्योतः )** भाष्ये–**अनुपपत्तिरिति ।** इष्टव्यवस्थाया इति भावः । अव्याप्त्यतिव्याप्त्योः प्रसङ्गादिति तात्पर्यम् । **प्रतिषेधादिति । 'सावेकाच'**इति प्राप्तस्येत्यर्थः । **ठंस्त्विति । 'नौद्व्यचष्ठ'न्निति** विहितः ॥

[ तृतीयाक्षेपवार्तिकम् ]

*॥ * ॥ द्रव्यवच्चोपचाराः ॥ * ॥*

[ व्याख्याभाष्यम् ]

**द्रव्यवच्चोपचाराः प्राप्नुवन्ति । तद्यथा द्रव्येषु नैकेन घटेनाऽनेको युगपत्कार्यं करोति, एवमिममकारं नाऽनेको युगपदुच्चारयेत्॥**

**( प्रदीपः ) द्रव्यवदिति । उपचारो** व्यवहारः । यथैकेन घटेनोदकाहरणादिक्रियां युगपदनेको न करोति, तथैवैकमकारं युगपदनेको नोच्चारयेदित्यर्थः ।

[ प्रथमाक्षेपनिराकरणवार्तिकम् ]

*॥*॥विषयेण तु नानालिङ्गकरणात्सिद्धम्॥*॥*

[ व्याख्याभाष्यम् ]

**यदयं विषये विषये नानालिङ्गमकारं करोति–'कर्मण्यण्' 'आतोऽनुपसर्गे क'इति तेन ज्ञायते–'नानुबन्धसङ्करोऽस्ती'ति । यदि हि स्यान्नानालिङ्गकरणमनर्थकं स्यादेकमेवाऽयं सर्वगुणमुच्चारयेत् ॥**

**(प्रदीपः) विषयेणेति ।** वार्तिककारेण करणत्वेन सामान्यरूपतया चाऽभेदेन विषयो निर्दिष्टः । भाष्यकारस्त्वधिकरणत्वं व्यक्तिभेदाद्वीप्सां च प्रतिपादयति–**विषये विषय इति । सर्वगुणमिति ।** गुणा अनुबन्धाः, कार्यायाऽऽश्रितत्वादुपकारकत्वात् । तत्र 'कर्मणि कण्टि'ति ब्रूयादित्यर्थः ।

**( उद्द्योतः ) करणत्वेनेति ।** अधिकरणस्य करणत्वविवक्षयेत्यर्थः । **सामान्यरूपतयेति ।** विषयत्वरूपेणे-

---

❀ **राजलक्ष्मीः** ❀

**( प्रदीपे ) एकत्वे**–अकारादेरेकत्वे ।

**( उद्द्योते ) युक्**–'आतो युक्चिण्कृतो' रिति युक् । दोषान्तरमाह–**एकाजिति ।** दोषान्तरमाह–**द्रव्यवदिति ।**

**( भाष्ये )** अकारादेरेकत्वाश्रयणे एकदेशिनं प्रति शास्त्रीयकार्यविरोधरूपं दोषमाह वार्त्तिककारः–**अनुबन्धेति ।** दोषान्तरं स एवाह–**एकाजनेकाजिति ।**

**( प्रदीपे ) बाहुकादिषु**–बाहुकशब्दादेः सम्प्रतित्वद्रीत्या द्व्यच्त्वात्तत्र **कृतार्थः**–चरितार्थः । **( उद्द्योते ) अव्याप्त्यतिव्याप्त्योरिति ।** घटिक इत्यत्राव्याप्तेः, किरिणेत्यादावतिव्याप्तेश्च प्रसङ्गादित्यर्थः । **( भाष्ये )** दोषान्तरमाह–**द्रव्येति ।** द्रव्येषु–घटपटादिषु । एकदेशी अनुबन्धसङ्करं परिहरति–**विषयेणेति । ( प्रदीपे ) अभेदेन**–एकत्वेन । **उपकारत्वादिति ।** भेदकत्वादित्यर्थः ।

---

❀ **शब्दकौस्तुभः** ❀

लोकवद्भविष्यति । लोके हीह[2] मुण्डो भव इह जटिलो भवेत्यादिक्रमेण एकस्यानेकधर्मोपदेशेपि तत्तद्देशभेदेन धर्मा व्यवतिष्ठन्ते तथेहापि 'कर्मण्य'णित्यत्रैव णित्त्वं, 'चरेष्ट'इत्यत्र टित्त्वं, 'गापोष्ट'गित्यत्र टित्त्वकित्त्वे, 'अ साम्प्रतिक'इत्यादौ तु नैकमप्यनुबन्धकार्यमिति व्यवस्था । अत एव 'प्राग्दीव्यतोऽण्' 'शिवादिभ्योऽ'णित्यादौ पुनःपुनर्णित्करणं सार्थकम् । कथं तर्हि घटेन तरतीति घटिकः । 'तरती'त्यधिकारे 'नौद्व्यचष्ठ'न्निति ठन् । कथं च धनस्य निमित्तं संयोग उत्पातो वा धन्यः । 'तस्य निमित्तं संयोगोत्पाता'वित्यधिकारे 'गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्य'-दितिचेत्, आवृत्तिकृतात् द्व्यज्व्यपदेशाद्भविष्यति । न च 'बाहुक'इत्यादौ मुख्यद्व्यचि चरितार्थत्वाद्गौणे कार्याऽसम्भव इति वाच्यम्; अश्वादिप्रतिषेधेनेह गौणस्यापि मुख्यसमकक्षताया ज्ञापनात् । अत एव 'किरिणे'त्यादौ 'सावेकाच'इति-

---

1 'काण्टादीनाम्' पा० ।

2 भाष्ये ९०–९१ पृष्ठयोरयं विषयो द्रष्टव्यः ।

त्यर्थः। **भाष्यकारस्त्विति**। एकविषये नानालिङ्गकरणाऽदर्शना[1]द्विषयभेदेन तदित्यत्र तात्पर्यम्। 'गुणा उदात्तादय' इति भ्रमं व्यावर्तयति–**गुणा अनुबन्धा इति**। तेषां गुणत्वमुपपादयति–**कार्यायेति**।

[ ज्ञापकनिरासभाष्यम् ]

**नैतदस्ति ज्ञापकम्। इत्संज्ञाप्रक्लृप्त्यर्थमेतत्स्यात्। न ह्ययमनुबन्धैः शल्यकवच्छक्य उपचेतुम्। इत्संज्ञायां हि[2] दोषः स्यात्। आयस्य हि द्वयोरित्संज्ञा स्यात्॥ कयोः?॥ आद्यन्तयोः॥**

**(प्रदीपः) शल्यकवदिति। शल्यकः**-प्राणिविशेषः। स यथा कण्टकतुल्यैः पक्षैर्व्याप्यते नैवं सर्वानुबन्धयुक्तोऽकारः शक्यो निर्देष्टुम्। आद्यन्तयोरेवेत्संज्ञाविधानान्मध्यपातिनां श्रवणप्रसङ्गात्। इत्संज्ञैव–आयच्छते व्याप्रियत इत्येककर्तृकत्वा**दायस्ये**त्युक्तम्॥

**(उद्द्योतः) व्याप्रियते**। विषयत्वेन गृह्णातीत्यर्थः। **एककर्तृकत्वादिति**। '**स्या**'दित्यनेनेत्संज्ञारूपैककर्तृकत्वादित्यर्थः॥

[ आक्षेपनिरासपर–वार्तिकव्याख्यान्तर–भाष्यम् ]

**एवं तर्हि–"विषयेण पुनर्लिङ्गकरणात्सिद्धम्"॥**

**यदयं विषये विषये पुनर्लिङ्गमकारं करोति–'प्राग्दीव्यतोऽण्' 'शिवादिभ्योऽ'-णिति, तेन ज्ञायते–'नानुबन्धसङ्करोऽस्ती'-ति। यदि हि स्यात्पुनर्लिङ्गकरणमनर्थकं स्यात्॥**

**(प्रदीपः) एवं तर्हीति। 'विषयेणे'**त्येतदन्यथा व्याचष्टे 'नाना'शब्दमपनीय 'पुनः'शब्दं पठित्वा। यद्यनुबन्धसङ्करः स्यादकारमेव शिवादिभ्यो विदध्यात्। अथोच्येत–'णित्कृतमेव यथा स्याञ्ञित्कृतं मा भूदिति नियमार्थमेतत्स्यात्', तन्न, नियमाद्विधेर्बलीयस्त्वात्॥

**(उद्द्योतः)** 'नाने'ति स्थिते कथमन्यथा व्याख्यानमत-आह–**नानाशब्दमिति। नियमादिति**। ज्ञापकत्वे हि विध्यर्थत्वमिति भावः॥

[ पुनर्यथाश्रुतवार्तिकाश्रयणभाष्यम् ]

**अथवा पुनरस्तु–"विषयेण तु नानालिङ्गकरणात्सिद्ध"मित्येव॥**

[ दोषस्मारणभाष्यम् ]

**ननु चोक्तम्–'इत्संज्ञाप्रक्लृप्त्यर्थमेतत्स्या'दिति॥**

[ ज्ञापकस्थापकसमाधानभाष्यम् ]

**नैष दोषः, लोकत एतत्सिद्धम्। तद्यथा लोके कश्चिदेवं देवदत्तमाह,–'इह मुण्डो भव' 'इह जटिलो भव' 'इह शिखी भवे'ति, यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपतिष्ठते। एवमयमकारो यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपस्थास्यते॥**

❀ राजलक्ष्मीः ❀

'संसर्गिभेदकं यद्यत्सव्यापारं प्रतीयते। गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे व्यवस्थितम्।' इत्यभियुक्तोक्त्या च भेदकस्य गुणव्यपदेशः। **(भाष्ये)** पूर्वोक्तं ज्ञापकत्वं विघटयति–**नैतदिति। प्रक्लृप्तिः**–सिद्धिः। **एतत्**–विषयेविषये नानालिङ्गकरणम्। **अयम्**–अकारः। अशक्यत्वे हेतुमाह–**इत्सञ्ज्ञायामिति। आयस्य**–व्यापारं कृत्वा। यत्नविशेषेण। **द्वयोः**–आद्यन्तयोः। 'न तु मध्यस्थाना'मिति शेषः। **एकेति**। भवनव्यापारक्रिययोरित्सञ्ज्ञैव कर्त्रीत्याशयः।

**(उद्द्योते) गृह्णाति**–आद्यन्तौ स्वविषयीकरोति। **एककर्तृकत्वात्**-आयमनस्य 'स्या'दित्यनेन समानकर्तृकत्वात्। **(भाष्ये) पुनर्लिङ्गमिति। पुनः**–द्वितीयवारं लिङ्गं-चिह्नं णकाराद्यनुबन्धो यस्मिन्निति बहुव्रीहिः। **इत्येव**–इत्येवं यथाश्रुतमेव। यथाश्रुतवार्तिकस्यार्थान्तरं कृत्वा दोषं निरस्यति–**नैष दोषइति**।

❀ शब्दकौस्तुभः ❀

विभक्तेरुदात्तत्वं न भवति। आवृत्तिकृतेन द्व्यज्व्यपदेशेन स्वाश्रयस्य एकाज्व्यपदेशस्य निवर्तितत्वात्। नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते। तस्मादुक्तरीत्या बाधकाभावाल्लाघवरूपसाधकबलाच्चाऽकारव्यक्तिरेकैवेति सर्वं सुस्थमितिचेन्न;उदात्तत्वादिविरुद्धधर्माध्यासेन व्यक्त्यैक्यस्य बाधात्। 'ध्वनिधर्मा एवैत'इत्युक्तमितिचेत्तर्हि कत्वगत्वादिकमपि तस्यैवास्त्विति अकारेकारादीनामप्यैक्यप्रसङ्गः। तदेतदुच्यते–'अखण्डं पदं वाक्यं वा वाचक'मिति। किं बहुना मास्त्वेवं व्यङ्ग्यो वर्णः, व्यञ्जकत्वाभिमतैर्ध्वनिभिरेव सर्वनिर्वाहात्। उक्तं च हरिणा-

१ नानालिङ्गकरणदर्शनात्' पा०।

२ 'तु' पा०।

(प्रदीपः) अथवेति । न ब्रूमः–'सर्वगुणमुच्चारये'दिति, किं तु यथा लोके–'इह मुण्डो भव' 'इह नग्नो भवे'ति यद्गुणको यत्रोच्यते तद्गुण एव तत्र भवति, एवमिहाऽपि याभ्यः प्रकृतिभ्यो यदनुबन्धविशिष्टो विधीयते तासु तदनुबन्धनिमित्तमेव कार्यं संपादयति ॥

(उद्द्योतः) यथा लोके इति । 'प्रभ्वाज्ञया गूढचारादि'रिति शेषः । एवञ्च लोकव्यवहारदृष्टान्तेनैवाऽसङ्करः सिद्ध इत्यर्थः । यत्र–देशे काले वा । तद्गुण एवेति । भाष्येऽपि–तल्लिङ्गस्तत्रेति सावधारणं व्याख्येयमिति भावः। [अत्र वाक्यत्रयेऽपि तुशब्दः पूर्वपक्षव्यावृत्तौ ॥]

[ खण्डनाय द्वितीयाक्षेपानुवादभाष्यम् ]

**यदप्युच्यते–'एकाजनेकाज्ग्रहणेषु चाऽनुपपत्तिः'–इति ।**

[ एतदाक्षेपनिराकरणवार्तिकम् ]

*॥*॥ एकाजनेकाज्ग्रहणेषु चावृत्तिसङ्ख्यानात् ॥*॥*

[ व्याख्याभाष्यम् ]

**एकाजनेकाज्ग्रहणेषु चावृत्तेः सङ्ख्यानादनेकाच्त्वं भविष्यति । तद्यथा–'सप्तदश सामिधेन्यो भवन्ती'ति, 'त्रिःप्रथमामन्वाह त्रिरुत्तमा'मित्यावृत्तितः सप्तदशत्वं भवति । एवमिहाप्यावृत्तितोऽनेकाच्त्वं भविष्यति ॥**

(प्रदीपः) आवृत्तिसङ्ख्यानादिति । यथा विकृतियागे त्रयोदश सामिधेन्यः प्रथमोत्तमयोस्त्रिरावृत्त्या सप्तदश संपद्यन्ते तथा घटेन तरतीति घ्यज्लक्षणष्ठन् भवति । ननु मुख्ये विषये कृतार्थत्वाद्वचनस्य गौणं घ्यच्त्वं कथं कार्यनिमित्तम् ?। उच्यते–'**गोद्व्यच**' इत्यत्राऽश्वशब्दप्रतिषेधाल्लिङ्गादावृत्तिभेदेनापि भेदाश्रयकार्यप्रवृत्तिः ॥

(उद्द्योतः) यथाविकृतियागे इति । तत्र हि प्राप्तसामिधेन्यनुवादेन सप्तदशत्वं विहितम् । तच्च '**त्रिः प्रथमा**'मित्यादिवाक्यबोधितया प्रथमोत्तमयोस्त्रिरावृत्त्यैवेति भावः । **त्रिरावृत्त्येति आवृत्तिः**–पुनरुच्चारणम् । तज्जन्यसङ्ख्यया सप्तदशत्ववदत्राऽनेकच्त्वमिति भावः । [ **लिङ्गा**[३]**दिति** । अनेन लिङ्गेन श्रुतिस्मृतिसिद्धत्वादस्य व्यवहारस्य गौणत्वमेव नेति ज्ञाप्यत इति भावः । ]

भाष्ये **आवृत्तेः संख्यानात्** । गणनादित्यर्थः ।

[ आक्षेपभाष्यम् ]

**भवेदावृत्तितः कार्यं परिहृतम् । इह तु खलु 'किरणा' 'गिरिणे'त्येकाज्लक्षणमन्तोदात्तत्वं प्राप्नोत्येव ॥**

(प्रदीपः) भवेदिति । 'गिरिणे'त्यादावावृत्तिभेदेऽपि मुख्यमेकाच्त्वं न निवर्तत इति भावः ।

(उद्द्योतः) भवेदावृत्तितःकार्यं परिहृतमिति । 'आवृत्त्या कार्यं सिद्धमिति कृत्वा दूषणं परिहृतं भवे'दित्यन्वयः । **मुख्यमिति** । आवृत्तिकृतघ्यच्त्वेन स्वगतैकाच्त्वस्य बाधाऽयोग इति भावः ॥

❀ राजलक्ष्मीः ❀

(प्रदीपे) तद्गुण एवेति । एवञ्च न सङ्कर इत्याशयः । 'विधीयते'इत्यस्य 'अकार' इत्यादिः। (उद्द्योते) गूढचारः–गुप्तचरः। वाक्यत्रयइति। 'विषयेणतुनानालिङ्गकरणा'दिति यथाश्रुतवार्तिके, 'विषयेण तु पुनर्लिङ्गकरणा'दितिभाष्योक्तन्यासे, अर्थान्तराभिप्रायकेयथाश्रुतानुपूर्वीके'विषयेणतु नानालिङ्गे'तिवार्तिके चेति वाक्यत्रयेत्यर्थः । द्वितीयं दोषमेकदेशी परिहरति–यदपीति । (उद्द्योते) तत्र–विकृतियागे । प्राप्तेति । 'प्रकृतिवद्विकृतिः कर्तव्ये'त्यतिदेशेनेत्याशयः । तज्जन्येति । आवृत्तिजन्येत्यर्थः । अत्र–'घटेन तरती'त्यादौ । ज्ञाप्यत इति । एवञ्च गौणमुख्यन्यायस्यात्र विषयतैव नेत्याशयः । (भाष्ये) अव्याप्तिनिरासेऽप्यतिव्याप्तिरस्तीत्याह–भवेदिति।

❀ शब्दकौस्तुभः ❀

'अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता । कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ।' इति । तस्माद्यदि ध्वनिभिरेव निर्वाहस्तर्हि जातिस्फोट एव, नोचेत्कखयोरिवोदात्तानुदात्तादीनामपि भेद एवेति न्यायतः परिनिष्ठिते सति–'एवं ध्वनिगतान्भेदानुदात्तस्वरितादिकान् । वर्णा अनुपतन्तः स्युरर्थावगतिहेतवः ॥' इतिमीमांसकमतमर्द्धजरतीयत्वादुपेक्ष्यमिति स्थितम् । एवं च 'अनन्ता वर्णा' इतिनैयायिकाद्यभ्युपगतरीत्या यद्ययं जातिपरो निर्देशस्तर्हि 'अस्य च्वा'वित्यत्रापि तथैवास्त्विति किं ग्रहणकशास्त्रेण?। तदुक्तम्-'**सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणा**'दिति । तपरसूत्रं तु जातिनिर्देशप्रयुक्तस्यैवातिप्रसङ्गस्य

१ अयं पाठः 'यथा लोके' इत्यतः प्रागुपलभ्यते । औचित्यात्त्वत्र स्थापितोऽस्माभिः । २ 'कार्यस्य निमित्तम्' पा० ।

३ अयं ग्रन्थः 'मुख्यमिति' इत्यतः प्राक्सर्वत्रोपलभ्यते । ४ अयं विषयः ९४ पृष्ठे द्रष्टव्यः ।

[ एकत्ववादिसमाधानभाष्यम् ]

**एतदपि सिद्धम् ॥ कथम् ? ॥ लोकतः । तद्यथा–ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा तया सर्वे ते सहस्रदक्षिणाः संपन्नाः । एवमिहाप्यनेकाऽच्त्वं भविष्यति ॥**

( प्रदीपः ) **एतदपीति** । लोके पूर्वा सङ्ख्या-सङ्ख्यान्तरेण मुख्येन गौणेन च बाध्यत इत्यर्थः ।

**ऋषिसहस्रमिति** । वित्तेन क्रीत्वा-क्रीत्वा प्रत्येकं दत्त्वा-दत्त्वा सहस्रदक्षिणा ऋषयः संपन्ना इत्यर्थः । ऋषयः सहस्रमृषिसहस्रमिति कर्मधारये 'संपन्ना'इत्यस्य साक्षदृषिभिः संबन्धः । षष्ठीसमासे तु सामर्थ्यलक्षणः संबन्धो यथा'ब्राह्मणशतं भोज्यता'मिति भुजेर्ब्राह्मणैः ॥

( उद्द्योतः ) ननु स्वस्य प्रतिग्रहीतृत्वासंभवादेकन्यूनता, न च पुनर्दानं, दत्तस्यान्यस्वत्वाक्रान्ततया पुनर्दानाऽसंभवादत आह–**वित्तेनेति** । ननु षष्ठीसमासे सहस्र-सङ्ख्याया विशेष्यत्वात्कथं दानेन संबन्धः ? । कथं वा **'संपन्ना'** इति बहुवचनान्तेन सामानाधिकरण्यमत आह–**सहस्रमृषयः ऋषिसहस्रमिति** । अत एव **'सर्वे ते'** इत्यनेन सामानाधिकरण्यम् । परनिपातो भाष्यप्रामाण्यात् ॥ [ **सामर्थ्यलक्षण इति** । सामर्थ्यकृतो गुणभूतैर्ऋषिभिः संबन्ध इत्यर्थः । **सर्वे ते** इत्यत्र तच्छब्देन गुणभूतस्यापि परामर्शोऽत्र पक्षे बोध्यः । अत एव 'दत्त्वे'ति **समानकर्तृकेति** क्त्वा । [ **भुजेर्ब्राह्मणैरिति** । सङ्ख्यायां भोक्तृत्वानुपपत्तेर्गुणभूतब्राह्मणैरेव भुजेः संबन्ध इति भावः ।]

❀ **राजलक्ष्मीः** ❀

**कार्य–**घटेन तरतीत्यादौ द्यज्लक्षणंठनादिकार्यम् । **एतदपि–**अन्तोदात्तत्वनिरसनम् । अतिव्याप्त्यभावइतियावत् । **एतदपी**त्यस्य पूर्वसङ्ख्याया उत्तरसङ्ख्यया बाधनमित्यर्थन्तु कैयट आह । **ऋषिसहस्रं–**कर्तृभूतम् ।

( **प्रदीपे** ) **वित्तेनेति** । परेतु गोविक्रयस्य धर्मशास्त्रविरुद्धत्वादिदमयुक्तम् । दानप्रतिग्रहमालया तु सर्वेषां सहस्रदक्षिणत्वमिति युक्तः पन्थाइत्याहुः । **सामर्थ्यलक्षणइति**। सामर्थ्यात्सङ्ख्येयैर्ऋषिभिः सम्बन्ध इत्यर्थः । ब्राह्मणैः–सङ्ख्येयभूतैः । सङ्ख्याया भोजनाऽसम्भवादित्याशयः ।

( **उद्द्योते** ) **अतएव–**सामर्थ्याद्गौणैर्ऋषिभिः सम्बन्धादेव । **क्त्वेति** । अन्यथा सङ्ख्यायाः कर्तृत्वासम्भवात्समानकर्तृकयोरिति क्त्वाप्रत्ययोऽनुपपन्न एव स्यादित्याशयः । **उभयोः–**द्वित्वशस्प्रत्ययोः । द्योतकसमुच्चयमुदाहरति–**यथेति** ।

**(भाष्ये)** 'द्रव्यवच्चोपचारा' इति सिद्धान्तिदत्तं तृतीयं दोषमेकदेशी निरस्यति–**यदपीति** । **'भवे'**दित्यस्य 'कुर्या'दित्यनेन सम्बन्धः। 'नानेको युगपत्कुर्या'दिति **भवेत्'**–सम्भवेदपीत्यर्थः।

❀ **शब्दकौस्तुभः** ❀

भङ्गाय । 'त्यदादीनाम' इत्यादौ तु एकमात्रव्यक्तिरपि जातिविशेषणतया विवक्ष्यते विधेयविशेषणत्वात्पश्चेकत्ववत् । 'अस्य च्वा'वित्यादौ तु अनुवाद्यविशेषणत्वान्न व्यक्तिर्विवक्षिता, ग्रहैकत्ववत् । किं तु अण्ग्रहणं कुर्वतः सूत्रकृतो नायं पक्षोभिप्रेतः । 'एका अवर्णव्यक्ति'रिति पक्षस्तु दूषित एव ।

१ 'तद्यथा लोके' पा० । २ 'सहस्रमृषयः' पा० ।
३ 'ब्राह्मणैः सह' पा० । ४ 'ग्रहीतृत्वाऽभावात्' पा० ।

भाष्ये–**एकैकश** इत्यत्र उभयोरपि द्योतकत्वेन द्योतकसमुच्चयस्य च बहुशो दृष्टत्वेन द्विर्वचनशसोर्यौगपद्यम् । यथा-'यथाजातीयको' 'गार्ग्यायणीत्यादौ' । तत्र च यथा ष्फसत्त्वे समुच्चित्य द्योतकता, तदभावे 'गार्गी'ति ङीपैव, तथा प्रकृतेऽपि शसो वैकल्पिकत्वात्पक्षे 'एकैक'मित्यपि । द्व्यादिशब्दविषये तु न समुच्चित्य द्योतकता, अनभिधानात् । एकशब्दे तु समुच्चित्य प्रत्येकं च द्योतकता, अभिधानस्वभावात् । यत्र तद्धितेनाऽनुक्ता वीप्सा तत्र द्विर्वचनं भवत्येव । यथैकैकशो देहीति । भाष्यस्याप्ययमाशयः–'यत्र तद्धितमात्रेण लोके वीप्सानभिधानं तत्र द्विर्वचनमपि । यत्र 'माषश'इत्यादौ तावतैव वीप्साभिधानं तत्र न कदापि तयोः समुच्चय इति दिक् । भाष्ये **सहस्रदक्षिणा इति** । सहस्रं दक्षिणा गोरूपा येषां दातृणां ते इत्यर्थः । तेन गोसहस्रदानफला एव ते न त्वेकगोदानमात्रफला इति व्यवहारो यथा स्मृतौ तथा प्रकृतेऽपीति भावः । भाष्ये–**अनेकाच्त्वमिति** । तन्मात्रमित्यर्थः ॥

[ तृतीयाक्षेपनिराकरणभाष्यम् ]

**यदप्युच्यते,–'द्रव्यवच्चोपचाराः प्राप्नुवन्ती'ति । भवेद्यदसंभवि कार्यं । तन्नानेको युगपत्कुर्यात्–यत्तु खलु संभवि कार्यमनेकोऽपि तद्युगपत्करोति । तद्यथा–घटस्य दर्शनं, स्पर्शनं वा । संभवि चेदं कार्यमकारस्योच्चारणं नाम । अनेकोऽपि तद्युगपत्करिष्यति ॥**

( प्रदीपः ) **संभवि चेति** । एकस्यैवाऽकारस्य युगपत्स्थानकरणनिष्पन्नध्वनिव्यङ्ग्यत्वात्सर्वैरुच्चारणं शक्यमित्यर्थः ॥

५ अयं पाठः क्वचिन्न ।
६ अयं पाठो दिगित्यनन्तरं सर्वत्रोपलभ्यते ।

(उद्द्योतः) एकस्यैवेति । व्यापकस्येत्यपि बोध्यम् । 'अकारस्ये'त्यप्युपलक्षणमित्युक्तम् । भाष्ये–**उच्चारणं नामे**त्युत्तरम्–'अत' इति शेषः ॥

[ पूर्वपक्षिणोऽकारव्यक्तिनानात्वसाधकवार्तिकम् ]

*॥*। आन्यभाव्यं तु कालशब्दव्यवायात्।*॥*

[ व्याख्याभाष्यम् ]

**आन्यभाव्यं त्वकारस्य॥ कुतः ?॥ 'कालशब्दव्यवायात्' । कालव्यवायाच्छब्दव्यवायाच्च । कालव्यवायात्–'दण्ड–अग्रम्'। शब्दव्यवायात्–'दण्डः'। नचैकस्यात्मनो व्यवायेन भवितव्यम्। भवति चेद्भवत्यान्यभाव्यमकारस्य॥**

(प्रदीपः) एवं परिहृतेष्वपि तत्र दोषेषु न्यायेनाऽकारस्य भेदं साधयति-**आन्यभाव्यमिति।** अन्यस्य भावोऽन्यभावः, ततो ब्राह्मणादिषु स्वार्थे विधानार्थात्पाठात्स्वार्थे ष्यञ्। अथवाऽन्यो भावोऽन्यद्वस्तु। 'तस्य भाव' इति भावे ष्यञ्। इह कालशब्दाभ्यां व्यवधानं भिन्नानां दृष्टम्। यथाऽसंहितायाम्–'अ इ उ' इत्यादीनां कालव्यवायः। 'दृति'रित्यादौ शब्दव्यवायः (तत्र–) तकारेण ऋकारेकारयोर्व्यवधानात्। एकत्वे तु व्यवधानं न दृष्टं, यथा 'अ' इतिकेवलोऽकार उच्चार्यते। तस्मादुदात्तादि(गुण)भेदात्कालशब्दव्यवायाच्च नानात्वमकारस्य। प्रत्यभिज्ञानं त्वेकत्वादिसामान्यनिबन्धनम्। यद्यपि शब्दव्यवायेऽपि कालव्यवायोऽस्ति, तथापि कालव्यवाय एव द्विधाऽऽश्रितः शब्दशून्यः, शब्दवांश्च॥

(उद्द्योतः) **आन्यभाव्य**मित्यस्यान्यत्वत्वमित्यर्थो नेत्याह–**अन्यस्येति। अथवेति।** भावशब्दः कर्तृसाधन इति भावः। एवंच प्रतिप्रयोगमकारस्याऽन्यत्वमित्यर्थः। **यथेति।** एवंचाऽग्र इत्याद्यकारो दण्डेत्यकाराद्भिन्नः 'दण्ड अग्र'मित्यादौ कालव्यवधानात्, 'दण्ड इहे'ति प्रयोगे इकारवत्' तथा 'दण्ड' इत्यत्राद्याकारोऽन्त्याकाराद्भिन्नः, शब्दव्यवायात, 'कृति'रित्यादौ तकारव्यवहितेकारव'दित्यनुमानैर्भेदे सिद्धे उदात्तादिविरुद्धधर्मप्रत्ययोऽपि पारमार्थिक एवेत्याशयेन तद्भेदादपि भेदसिद्धिरित्यभिप्रेत्याह–**उदात्तादीति। नानात्वमकारस्येति।** 'युक्त'मिति शेषः। ननु य एवोदात्तोऽकारः स एव देवदत्तेनानुदात्तः कृत इति प्रत्यभिज्ञाविरोधोऽत आह–**प्रत्यभिज्ञानं चेति॥**

[ अकारव्यक्तिनानात्वसाधकवार्तिकम् ]

*॥*॥ युगपच्च देशपृथक्त्वदर्शनात् ॥*॥*

[ व्याख्याभाष्यम् ]

**युगपच्च देशपृथक्त्वदर्शनान्मन्यामहे–'आन्यभाव्यमकारस्ये'ति। यदयं युगपद्देशपृथक्त्वेषूपलभ्यते–अश्वः, अर्कः, अर्थः इति। न ह्येको देवदत्तो युगपत्स्रुघ्ने च भवति मथुरायां च॥**

(उद्द्योतः) विभुत्वं निराचष्टे भाष्ये–**युगपच्च देशेति।** अर्कादिशब्दा एव देशपदेनोच्यन्ते। **देशपृथक्त्वेष्विति।** देशानां पृथक्त्वेषु भेदेषु सत्स्वित्यर्थः॥

(उद्द्योते) **विभुत्वम्**–एकत्वं निरस्य विभुत्वमपि। **देशानामिति।** भिन्नेषु लक्ष्येषु अश्वाऽर्कादिष्वित्यर्थः।

❀ राजलक्ष्मीः ❀

**आन्यभाव्यम्**–अन्यत्वम्। परस्परं भेद इति यावत्।

❀ शब्दकौस्तुभः ❀

'अष्टादश अवर्णव्यक्तय'इति पक्षे तु 'अइउ'णिति यदि जातिपरो निर्देशस्तर्हि पुनरण्ग्रहणवैयर्थ्यम्। व्यक्तिनिर्देशे तूक्तरीत्या 'अस्य च्वा'वित्यादौ सवर्णग्रहणानुपपत्तिरिति महत्सङ्कटम्। तस्मादिह सूत्रकारस्याशयो दुर्वच इति चेत्–उच्यते। त्रिष्वपि पक्षेष्वस्त्येव सूत्रस्योपपत्तिः। तथा हि–'स एवायमकार' इतिप्रत्यभिज्ञाबलादकार एक एवेति पक्षे धर्मव्यवस्थायास्त्वय्यैवोपपादनाद्यथा के अण्कार्यं न भवति यथा चाऽप्रत्ययादिविधिस्थले न दीर्घादिप्रवृत्तिः, तथाऽस्य च्वाविति विधिरपि'मालीभवता'त्यादौ न प्रवर्तेतेति ग्रहणकशास्त्रं क्रियते। तच्च सावर्ण्याधीनमिति ह्रस्वस्य विवृतत्वं प्रतिज्ञायते। तत्तु आक्षरसमाम्नायिकस्यैव चेत्पुनरपि न व्यवतिष्ठेतेति–सार्वत्रिकी प्रतिज्ञा। एवमपि 'अस्य च्वा'वित्यादौ अनण्त्वादेव ग्राहकत्वं न स्यादिति चेत्; विवृतह्रस्वत्वादेरविशेषेण तस्याऽप्यण्त्वात्। नहि मुण्डत्वजटिलत्वादिवद्देशभेदेनानुपात्ताः स्वरूपमात्रानुवादेन विहिता अपि 'श्यामो दीर्घश्चतुर्बाहु'रित्यादयो व्यवतिष्ठन्ते। 'उदात्तानुदात्तस्वरितानुनासिकत्वगुणास्तु शब्देनानुपात्ता न भेदका' इति **वृद्धि**सूत्रे वक्ष्यते। 'अनन्ता एव (अ) व्यक्तय'इति पक्षेऽष्टादशअवर्णव्यक्तय इतिपक्षे च यद्यपि ह्रस्वदीर्घप्लुतसाधारणी एका जातिः कण्ठादिजन्यतावच्छेदिका तज्जन्यध्वनिव्यङ्ग्यतावच्छेदिका वाऽस्त्येव तथापि तद्व्याप्या ह्रस्वमात्रवृत्तिरपि जातिरस्ति। तथा

१ 'दोषेषु तत्र' पा०। 'केवलाकारः' पा०। २ 'नाऽस्त्वादि' पा०। ४ 'द्विधा दर्शितः' पा०

[ एकत्ववादिनो वार्त्तिकशेषपूरणभाष्यम् ]

**यदि पुनरिमे वर्णाः—**

[ वर्णैकत्ववादिन एकत्वसाधकवार्त्तिकम् ]

॥*॥ *शकुनिवत्स्युः* ॥*॥

[ व्याख्याभाष्यम् ]

**तद्यथा–शकुनय आशुगामित्वात्पुरस्तादुत्पतिताः पश्चाद्दृश्यन्ते । एवमयमकारो 'द्' इत्यत्र दृष्टो 'ण्ड' इत्यत्र दृश्यते ॥**

**(प्रदीपः) यदि पुनरिति ।** कालशब्दाभ्यां व्यञ्जकानामेव ध्वनीनां व्यवायो, न व्यङ्ग्यस्येति व्यक्तिस्फोटवादिनो भावः । यथा शकुनिः पङ्क्त्यादौ स्थित आशुसञ्चारात्तदन्ते भवति, एवं व्यञ्जकध्वनिसंनिधानाऽसन्निधानाभ्यामकारस्योपलम्भाऽनुपलम्भावित्यर्थः ॥

**(उद्द्योतः)** एवं वर्णानामनेकत्वे परेण साधिते, वर्णैकत्ववादी एकत्वं स्थापयितुं तद्दूषणोद्धारमाह भाष्ये–**यदि पुनरिति ।** तत्र 'शकुनिव'दिति दृष्टान्तस्य तद्वत्परिच्छिन्नत्वे न तात्पर्यम्, तन्मते तस्य विभुत्वादिति ध्वनयन्नाह–**कालशब्दाभ्यामिति । व्यक्तिस्फोटवादिन इति ।** व्यक्तेर्नित्यत्वैकत्ववादिनः । एकैव शब्दव्यक्तिरिति वादिन इत्यर्थः । अनेनाऽऽद्यं दूपणं परिहृतम् । द्वितीयं परिहरति–**यथेति । एवमिति ।** अस्य–'अनेकदेशेपु युगपदुपलम्भो व्यञ्जकवशा'दिति शेषः । पूर्वदृष्टस्य पश्चाद्दर्शनेऽपि, अव्यवहितस्य व्यवधानेऽपि न भेद इत्येतन्मात्रेण दृष्टान्त इति भावः ।

नन्वेवं विभुत्वे नित्यत्वे च सर्वत्र देशे सर्वदोपलम्भापत्तिरत आह–**व्यञ्जकेत्यादि ।**

[ शब्दव्यक्तिनानात्ववादि (जात्येकत्ववादि) भाष्यम् ]

**नैवं शक्यम् । अनित्यत्वमेवं स्यात् । नित्याश्च शब्दाः । नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । यदि चायं 'द्'इत्यत्र दृष्टो 'ण्ड'इत्यत्र दृश्येत, नायं कूटस्थः स्यात् ॥**

(प्रदीपः) जातिस्फोटवादी व्यक्तिस्फोटवादिनं पर्यनुयुङ्क्ते–**अनित्यत्वमिति ।** भवता जातिस्तावन्नाभ्युपगम्यते, व्यक्तेरेवैकत्वनित्यत्वप्रतिज्ञानात् । तच्चैकत्वं नित्यत्वं च नोपपद्यते, 'दण्ड' इत्युदात्तानुदात्तस्वरभेदेन[1] भिन्नत्वात् । न ह्येकस्यैवोदात्तत्वपरित्यागेनानुदात्तत्वं युक्तम्, रूपान्तरपरिग्रहादनित्यत्वप्रसङ्गात् । तस्माद्भिन्ना एवा[2]ऽनित्या एवाऽकाराः, प्रत्यभिज्ञात्वाकृतिनिबन्धनेति जातिस्फोटपक्षोऽत्र व्यवस्थितः[3] ॥

**(उद्द्योतः) जातिस्फोटेति ।** जातिरेव एका, शब्दव्यक्तयस्त्वनन्ता इति वादीत्यर्थः । भाष्ये–**अनित्यत्वमेवं स्यादिति ।** व्यक्तेरेकत्ववादी तस्या[4] नित्यत्वं मन्यते इति भावः । ननु विभोरेकस्यापि व्यञ्जकवशादनेकत्रोपलब्धौ कथमनित्यतेत्यत आह–**भवतेति ।** भाष्येऽपि **'नित्याश्च शब्दा'** इत्यस्य 'तवे'त्यादिः । भाष्योक्तकूटस्थत्वाऽभावमुपपादयति–**रूपान्तरेति । 'तस्माद्भिन्ना एवाऽनित्या एवाऽकारा** इति पाठः । **नित्या एवेति** पाठस्त्वयुक्तः, अनन्तवर्णवादे तदनित्यत्वस्यैवेष्टत्वादिति बोध्यम् । यद्यप्यनुदात्तत्वादीनां ध्वनिनिष्ठत्वाङ्गीकारान्न दोषस्तथापि स्फटिकस्येवाऽस्यापि इतरसंनिधानेन तद्रूपपरिग्रहे संसर्गाऽनित्यताविरोधिकूटस्थत्वाऽभाव इति भावः ॥

---

❀ राजलक्ष्मीः ❀

**(प्रदीपे) व्यङ्ग्यस्य**–स्फोटस्य । **तदन्ते**–तत्पङ्क्त्यन्ते ।

**(उद्द्योते) तत्र**–'शकुनिवत्स्यु'रिति वार्त्तिके । **तन्मते**–एकत्ववादिमते । **तस्य**–अकारादिवर्णस्य । **अनेन**–'एकैव शब्दव्यक्ति'रित्यनेन । **आद्यम्**–'आन्यभाव्य'न्त्वित्यायुक्तम् । **द्वितीयं**–'युगपच्चे'त्युक्तम् । **अस्य**–'एव'मित्यस्य । **एवम्**–उक्तदोषद्वयनिरासे सति ।

**(प्रदीपे) पर्यनुयुङ्क्ते**–परिपृच्छति । तन्मतं दूषयतीति यावत् । **(उद्द्योते) तस्याः**–शब्दव्यक्तेः । **अस्यापि**–अकारादेः । संसर्गाऽनित्यताविरोधिनः कूटस्थत्वस्य अभाव

❀ शब्दकौस्तुभः ❀

च–'अइउण्सूत्रे व्याप्यजातिपरो निर्देशः, तेन तज्जातीये एकत्र कृतं विवृतत्वं सर्वेष्वपि सिध्यति । अत एव सर्वेपि ह्रस्वा अणो भवन्त्येवेति 'अस्यच्वा'वित्यादौ न कश्चिद्दोपः । 'अवात्ता'मित्यादिष्वपि इयैव गतिः । अन्यथा अवात्तामितिस्थिते सिचः पूर्वपरयोस्तकारयोर्मध्ये अन्यतरस्यैव झल्त्वं स्यान्नतूभयोः । अक्षरसमाम्नाये उभयोरपाठात् । ततश्च 'झलो झली'ति न प्रवर्तेत । सूत्रस्यावकाशस्तु 'अभित्था' इत्यादिः स्यात् । एवं च दीर्घाणामनण्त्वेन सवर्णग्राहकत्वं नास्तीत्यपि सिद्धान्तः सङ्गच्छते । अथ व्यापकजातिपरमेव निर्देशं स्वीकृत्य अण्ग्रहणं त्यज्यतामिति चेत्; एवमपि 'उपसर्गादृती'त्यादौ ऌवर्णग्रहणाय ग्रहणकशास्त्रस्यावश्यकत्वात् । न च

---

१ 'नुदात्तभेदेन'पा०'स्वरादिभेदेन' पा० । २'भिन्ना एव नित्या एव अकाराः' पा० । ३ 'उपस्थितः' । ४ 'तस्य' पा० ।

[ वर्णव्यक्त्येकत्ववादिनो वार्त्तिकशेषपूरणभाष्यम् ]

**यदि पुनरिमे वर्णाः—**

[ वर्णव्यक्त्येकत्ववादिमीमांसकमतसाधकवार्तिकम् ]

*॥*॥ आदित्यवत्स्युः ॥*॥*

[ व्याख्याभाष्यम् ]

**तद्यथा एक आदित्योऽनेकाधिकरणस्थो युगपद्देशपृथक्त्वेषूपलभ्यते ॥**

( उद्द्योतः ) पुनरप्येकत्वनित्यत्वे साधयति—भाष्ये- **यदि पुनरित्या**दिना । एकस्यैवाकारस्याऽनेकदेशेषूपलब्धेरादित्यस्येव संभवतीति न तावद्व्यक्तिभेदः सिध्यति। अन्यथा आदित्यस्याप्यनेकत्वापत्तिरनित्यत्वापत्तिश्च । तत्तद्देशसंसर्गेणाल्पप्रकाशत्वाधिकप्रकाशत्वादिगुणसंसर्गादिति भावः ॥

[ शब्दव्यक्तिनानात्ववादिजातिस्फोटवादिभाष्यम् ]

**विषम उपन्यासः—नैको द्रष्टा आदित्यमनेकाधिकरणस्थं युगपद्देशपृथक्त्वेषूपलभते । अकारं पुनरुपलभते ॥**

( उद्द्योतः ) **विषम इति** । आदित्यदृष्टान्तेनानेकदेशोपलभ्यमानाकारादिपक्षैक्यसाधकः प्रत्यभिज्ञायमानत्वहेतुः—अनेकद्रष्टृकानेकदेशोपलब्धिविषयत्वरूपोपाधियुक्त इति न तेन भेदसाधकशब्दव्यवायहेतोः सत्प्रतिपक्षता युक्तेति भावः । **अकारं पुनरुपलभत** इत्यस्य'एको द्रष्टाऽनेकाधिकरणस्थ'मिति शेषः ॥

[एकत्ववादि (व्यक्तिस्फोटवादि) मीमांसकमतानुयायिभाष्यम् ]

**अकारमपि नोपलभते ॥ किं कारणम् ?॥ 'श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः' । एकं च पुनराकाशम् ॥**

( प्रदीपः ) व्यक्तिस्फोटवाद्याह—**अकारमपीति । श्रोत्रोपलब्धिरिति ।** श्रोत्रोपलब्ध्या आकाशदेशत्वं शब्दस्य प्रतिपादयति । आकाशप्रदेशविशेषस्य श्रोत्रत्वादिन्द्रियाणामसम्बद्धविषयाग्रहणाच्छ्रोत्रस्य च निष्क्रियत्वाद्गमनाभावादाकाशदेशत्वं शब्दस्यावश्यमभ्युपेयम् । **बुद्धिनिर्ग्राह्य इति ।** पूर्वपूर्वध्वन्युत्पादिताभिव्यक्तिजनितसंस्कारपरम्पराप्राप्तपरिपाकान्त्यबुद्धिनिर्ग्राह्य इत्यर्थः । **प्रयोगेणेति ।** प्रयुज्यत इति प्रयोगो ध्वनिस्तेनाऽभिव्यक्तः । देशभेदेन तु प्रतिभासो भिन्नदेशावस्थितपुरुषोदीरिताऽभिव्यञ्जकध्वनिकृतः ॥

( उद्द्योतः ) शब्दस्याकाशरूपैकाधिकरणत्वेनानेकाधिकरणत्वमयुक्तमित्याशयेनाह भाष्ये—**अकारमपि नोपलभत इति** । अकारमप्यनेकाधिकरणस्थं नोपलभत इत्यर्थः। **श्रोत्रोपलब्धिरिति ।** श्रोत्रे एव उपलब्धिर्यस्येत्यर्थः । करणक्तिन्नन्तत्वेन समानाधिकरणबहुव्रीहिर्वा । एतद्विशेषणफलं दर्शयति—**श्रोत्रेति ।** ननु दिश एव श्रोत्रत्वात्कथं तत्रोपलब्ध्याकाशदेशत्वसिद्धिरत आह—**आकाशेति ।** कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रम् । चक्षुरादिवच्छ्रोत्रस्यापि भूतत्वमावश्यकमिति भावः । दिशोऽनतिरिक्तमेव चाकाशमिति तत्त्वम् । ननु तथाप्यतेजोंऽशगतघटादिरूपस्य तैजसचक्षुर्ग्राह्यत्ववदनाकाशदेशगतस्यापि शब्दस्याकाशात्मकश्रोत्रग्राह्यत्वं किं न स्यादित्याशङ्क्य किमसम्बद्धं तद्ग्राहकं, संबद्धं वा, नाद्य इत्याह—**असंबद्धेति** । अन्यथा रामेश्वरादिप्रदेशावच्छिन्नशब्दस्यापि श्रवणप्रसङ्गः। द्वितीयेऽपि किं श्रोत्रस्य

---

❀ **राजलक्ष्मीः** ❀

इति विग्रहः । **साधयति**—शब्दैकत्ववादी व्यक्तिस्फोटवादी मीमांसकः साधयति । **( भाष्ये )** 'आदित्यव'दिति मीमांसकोक्तं दृष्टान्तं विघटयति—**विषम इति । अधिकरणं**—देशः।

**( उद्द्योते ) अनेकेति ।** एकद्रष्टृकानेकदेशोपलब्धिविषयत्वाभाववत्त्वमत्रोपाधिः,'श्यामो मित्रातनयत्वा'दित्यादौ शाकपाकजत्वमिवेत्यर्थः। साध्यव्यापकत्वेसति साधनाऽव्यापकत्वञ्चोपाधित्वम् । व्यक्त्येकत्ववादी मीमांसको दृष्टान्तवैषम्यं निरस्यति—**अकारमपीति । ( प्रदीपे ) असम्बद्धेति ।** असन्निकृष्टेत्यर्थः ।

---

❀ **शब्दकौस्तुभः** ❀

'ऋलृवर्णयो'रिति सावर्ण्यविधानसामर्थ्यात्तद्ग्रहः, 'अकः सवर्ण'इत्यादौ चारितार्थ्यात् । किञ्च—'अस्य च्वा'वित्यादौ व्यापकजातिनिर्देशः, 'त्यदादीनाम' इत्यादौ तु व्याप्यजातिनिर्देश इत्यस्य नियामकाभावे सङ्करोपि स्यात् । न चानुवाद्यविशेषणं विधेयविशेषणं च ग्रहैकत्वपश्वेकत्ववद्विवक्षितमविवक्षितं चेति मीमांसकमर्यादा वैयाकरणैः स्वीकर्त्तुं शक्या, 'उपेयिवानाश्वाननूचानश्चे'त्यत्र 'उपे'त्यविवक्षितं नञ्प्रभृति तु विवक्षितमिति स्वीकारात् । 'आर्द्धधातुकस्येड्वलादे'रित्यादावनुवाद्यविशेषणस्यापि बहुशो विवक्षणाच्च । तस्माद्व्याख्यानतो **विशेषप्रतिपत्ति**रिति परिभाषैव सिद्धान्ते शरणम्। व्याख्यानं तु लक्ष्यानुरोधीति यद्यप्यगत्या तत्रतत्राश्रीयते तथापि नैतद्बलेन ग्रहणकशास्त्रस्य प्रत्याख्यानं चमत्कारमावहति । ग्रहणकशास्त्रबलेन हि अप्रत्ययोऽविधीयमानः सवर्णग्राहक

---

१ 'व्यक्तेरेवैकत्वं नित्यत्व'मिति वादीजात्यनङ्गीकर्त्ता मीमांसक इत्यर्थः ।

विषयदेशगमनात्सम्बन्धः ? उत शब्दस्य श्रोत्रदेशगमनात् ?। नोभयमपीत्याह–**गमनाभावादिति । श्रोत्रस्य चेति ।** चेन शब्दपरिग्रहः । उभयोरपि गमनाभावे हेतुर्निष्क्रियत्वं, दूरदेशस्थशब्दाग्रहणं तु दूरत्वादेर्दोषस्य प्रतिबन्धकत्वाच्छ्रोत्र-देशेऽनभिव्यक्तेः । आकाशदेशत्वे च तद्वदेव तत्रापि व्या-पकत्वेन श्रोत्रदेशेऽभिव्यक्तस्य तेन ग्रह इति भावः। आहङ्का-रिकाणीन्द्रियाणी[2]'ति साङ्ख्यमतेऽपि इन्द्रियाणां स्वाधिष्ठान-भूतवृत्तिगुणग्राहकत्वनियमादाकाशदेशत्वं श्रोत्रोपलब्ध्या शब्दस्य सिध्यतीति बोध्यम् । 'श्रोत्रोपलब्धि'रित्येव बुद्धि-निर्ग्राह्यत्वस्योक्तत्वात्पौनरुक्त्यमाशङ्क्याह–**पूर्वपूर्वेति ।** एवं चाशुतिरोधीयमानानेकवर्णवद्घटकलशादिशब्दग्रहणसम्भव-दर्शनाय तदुक्तमिति न पौनरुक्त्यम् । **प्राप्तपरिपाकेति ।** तत्सहकृतेत्यर्थः । **अन्त्यबुद्धिः**–अन्त्यवर्णबुद्धिः । एवं च तादृशसंस्कारविशिष्टान्तःकरणसंयुक्तेन तादृशसंस्कारविशि-ष्टेन श्रोत्रेणाऽन्त्यवर्णसंबद्धेन वर्णसमुदायप्रतिबिम्बवदखण्ड-स्फोटरूपपदादिप्रत्यक्षमिति भावः । नन्वेवं सर्वदा शब्दोप-लम्भः स्यादतो भाष्ये–**प्रयोगेणाभिज्वलित इति ।** तद्व्याचष्टे–**प्रयुज्यत इति । ध्वनिरिति ।** वर्ण इत्यर्थः । भाष्ये–**एकं च पुनराकाशमिति ।** एवं चैकस्मिन्नाम्रफले एक एव यथा रूपरसगन्धादिस्तथा तदाश्रयस्यैकत्वात्तद्गतः शब्दोऽप्येक एव । तत्रैव च तस्योपलम्भ इति भिन्नदेशो-पलम्भ एवाऽसिद्ध इति भावः । नन्वेकत्वेऽयं पूर्वोऽयं परोऽयं देवगृहेऽयं राजगृह इति भेदप्रतिभासः कथमत आह–**देश-भेदेन त्विति ।** औपाधिको भेदस्तु आकाशस्येव न शब्द-स्याप्येकत्वे बाधकः। एवं संसर्गाऽनित्यतापि तस्येव नास्यापि बाधिका। तस्यापि 'नीलं नभ' इत्यादि संसर्गानित्यताप्रतीतेरि-त्याशयः । अत्र **शब्द** इत्येकवचनेन स्फोटस्यैकत्वमखण्डत्वं च ध्वनितम् ।

[ अकारव्यक्तिनानात्ववादिजातिस्फोटवादिभाष्यम् ]

**आकाशदेशा अपि बहवः । यावता बहवः, तस्मादान्यभाव्यमकारस्य ॥**

**( प्रदीपः ) भेदवाद्याह–आकाशदेशा इति। यथा पृथिव्या एकत्वेऽपि सुघ्नमथुरादिदेशव्यवहार** एवमाकाशस्यापि संयोगिघटादिपदार्थावच्छेदेन भेद-व्यवहार इत्यर्थः ॥

**( उद्योतः )** ननु निरवयवस्य कथं प्रदेशबाहुल्यमत आह–**यथेति ।** एवं चौपाधिकभेदेन[3] भेदो दुर्वारः । सर्वत्र भेद औपाधिक एव, स एव च व्यवहारोपयोगीत्याशयः । श्रोत्रसम्बन्धस्तु प्रदेशान्तरोत्पन्नशब्दस्यापि **वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन** वा तन्त्रान्तरे व्युत्पादित एव ॥

[ व्यक्तिपक्षे पूर्वोक्तदोषनिराकरणपरसिद्धान्तसमाधानवार्तिकम् ]

॥ * ॥ आकृतिग्रहणात्सिद्धम् ॥ * ॥

[ व्याख्याभाष्यम् ]

**अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति। तथेवर्णाकृतिः,तथोवर्णाकृतिः॥**

**( प्रदीपः )** एवं व्यक्तिस्फोटपक्षे निराकृते जातिस्फोटपक्ष एवाश्रीयते–**आकृतिग्रहणादिति।** अकारजातिः सर्वप्रदेशेषु निर्दिश्यते। नान्तरीयकस्तु व्यक्तिनिर्देशस्तत्र । प्रत्याहारेऽकारजातेर्निर्देशात्त-स्याश्च विवृतत्वप्रतिज्ञानाच्छास्त्रान्ते तस्या एव प्रत्या-पत्तिविधानम् । तदेवं जातिनिर्देशादनुवृत्तिनिर्देश-स्थेनाऽकारेण ग्रहणमाकारस्य सिद्धम् । **अग्न आ विभक्ता**वित्यत्र सत्यपि जातिनिर्देशे दीर्घोच्चारण-सामर्थ्याद्ध्रस्वस्य ग्रहणं न भवति। अन्यथा ह्रस्वमेवो-च्चारयेत् । **'प्लुतश्च विषये स्मृत'** इति न्यायात् प्लुतस्याऽग्रहणम् ॥

**( उद्योतः )** तत्रापि[4] पक्षेऽ**स्य च्वा**वित्यादौ दोषो नेत्याह–भाष्ये **आकृतिग्रहणादिति ।** तदाह–**अकार-जातिरिति । सर्वप्रदेशेष्विति ।** प्रत्याहारेऽ**स्य च्वावि**-त्यादौ च । अकारव्यक्तीनामानन्त्यमाश्रित्य वार्तिककृता वर्ण-समाम्नायस्थस्य विवृतत्वेऽपि धात्वादिस्थस्यापि विवृतोपदेशो नोदितः[5] । भाष्यकृता तु प्रयोगस्थानां प्रत्याहारस्थैर्ग्रहणाय तत्र जातिनिर्देशे आवश्यके जातेर्विवृतत्वप्रतिज्ञानेनैव सर्व-

॥ राजलक्ष्मीः ॥

**( भाष्ये ) बहव इति ।** घटाकाश-मठाकाश–तत्त-त्कर्णशष्कुल्यादिभेदभिन्नाकाशादि–देशानामानन्त्यमित्यर्थः ।

**यावता**–यस्मात् । **आन्यभाव्यं**–भेदः ।

**( भाष्ये )** एवं व्यक्त्यैक्यवादे मीमांसकाभिमते (व्यक्तिस्फोटपक्षे) निराकृते सति व्यक्तिभेदे पूर्वोक्ताऽस्यच्वा-वित्यादिदोषनिरासाय जातिस्फोटमाश्रयति–**आकृतीति ।**

॥ शब्दकौस्तुभः ॥

इति स्फुटतरं प्रतीयते । उल्लङ्घिता चेयं मीमांसकमर्यादा धर्मशास्त्रेपि बहुशः–'श्रेयांसं न प्रबोधये'दित्यादिषु । 'एकः पूर्वपरयो'रितिसूत्रे एकग्रहणमपीह ज्ञापकम् । अन्यथा **गुण** इत्येकत्वस्य पश्चेकत्ववद्विवक्षासम्भवात्किं **तेने**ति दिक् । अथ-वार्थवत्त्वस्याविवक्षायामपि **इहो**च्चारितोऽकारादिः स्वसदृशीः

१ 'आकाशत्वे' पा० । २ 'आहङ्कारिकाणीतिसाङ्ख्यमते' पा० । ३ 'चौपाधिकभेदो दुर्वारः' पा० ।

४ **तत्रापि**–व्यक्तिपक्षेऽपि ।
५ नोदितः–चोदितः ।

सिद्धः स दोषो वारितः। अस्य च्वावित्यादौ तु सत्यपि विवृतत्वेऽनण्त्वात्सैर्वावर्णग्रहणं न स्यादित्यपि जातिनिर्देशेनैव परिहृतम्। एवं चाणुदित्सूत्रेऽण्ग्रहणं न कार्यमित्याशयः। तस्याश्चेति। स्वाश्रयव्यक्तिद्वारेत्यर्थः। तत्र प्रत्यापत्तिवाक्ये तपरनिर्देशात्, षण्णामेकशेषनिर्देशाद्वा, ह्रस्वस्यैव संवृतत्वं बोध्यम्। ननु जातिनिर्देशेऽतिप्रसङ्ग इत्याह–अष्टन इति। अन्यथा ह्रस्वमेवेति। न च तन्निर्देशेऽन्तरतमपरिभाषया दीर्घो न स्यादिति दीर्घविधानम्, दीर्घनिर्देशे तु तत्सामर्थ्यात्तस्यापि विधानम्, जातिग्रहणादन्यस्यापीति वाच्यम्, दीर्घनिर्देशसामर्थ्येनान्तरतमपरिभाषाबाधकल्पनापेक्षया ह्रस्वानुपस्थितेरेव कल्पने लाघवमित्याशयात्। ननु दीर्घोच्चारणसामर्थ्यान्माभूद्ध्रस्वः, प्लुतस्तु स्यादत आह–प्लुतश्चेति। विषये–दूराद्धूतादौ। अनेनापि प्लुतविधानेऽशेऽनुवाददोषः स्यादिति भावः॥

[ आकृतिग्रहणज्ञापकवार्त्तिकम् ]

*॥*॥ तद्वच्च तपरकरणम् ॥*॥*

[ व्याख्याभाष्यम् ]

**एवं च कृत्वा तपराः क्रियन्ते–आकृतिग्रहणेनाऽतिप्रसक्तमिति॥**

( प्रदीपः ) **तद्वच्चेति**। स आकृतिपक्षो यत्रास्ति तत्तद्वत्। अथवा वत्यन्तमेतत्। तत्र न्यायेनाकृतिपक्षस्य स्थापितत्वात्तपरेष्वपि स एव पक्षः स्थित इत्यर्थः॥

( उद्द्योतः ) सर्वत्राकृतिर्निर्दिष्टेत्यत्र ज्ञापकमाह भाष्ये–**तद्वच्चेति**। सादृश्ये वतिभ्रमं व्यावर्तयति–**स इति। अथवा वत्यन्तमेतदिति**। तदा 'तद्व'दित्यस्यास्य च्वावित्यादिवदित्यर्थः। तदाह–**तत्र न्यायेनेति। तत्र–अस्य च्वावित्यादौ**। आकृतिग्रहणप्रयुक्तातिप्रसङ्गनिवारणार्थमेव हि तत्र तत्र तपरकरणम्॥ जातिपक्षेऽपि विवृतत्वप्रतिज्ञाऽकः सवर्ण इत्यादेर्दण्डानतिरित्यादौ दीर्घार्थमावश्यिकैव। एवं प्रत्यापत्तिवचोऽप्यावश्यकमेव। तुल्यन्यायाज्जातिग्रहणप्रयुक्तातिप्रसङ्गनिवारणाय तपरत्वविधेये 'त्यदादीनाम'इत्यादौ तद्वारणायाऽप्रत्यय इत्येतदिति बोधितम्। अत्र पक्षेऽण्ग्रहणप्रत्याख्यानेऽपि ऋऌवर्णयोः सावर्ण्येन समानजातित्वातिदेशान्न दोष इति भावः॥

[ ज्ञापकतादूषकभाष्यम् ]

**ननु च सवर्णग्रहणेनाऽतिप्रसक्तमिति कृत्वा तपराः क्रियेरन्॥**

[ सिद्धान्तिनो ज्ञापकतास्थापकभाष्यम् ]

**प्रत्याख्यायते तत् 'सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वाच्चे'ति।**

[ आकृतिवादिनःसिद्धान्तवार्तिकम् ]

*॥*॥ हल्ग्रहणेषु च ॥*॥*

**[ हल्ग्रहणेषु च ]॥ किम्?। 'आकृतिग्रहणात्सिद्ध'मित्येव। 'झलो झलि'। अवात्ताम् अवात्तम् अवात्त। अत्रैतन्नास्ति–'अण्सवर्णान्गृह्णाति'–इति।**[3]

( प्रदीपः ) **हल्ग्रहणेषु चेति**।–अवश्याश्रयणीयतामाकृतिपक्षस्य दर्शयति। व्यक्तिपक्षे ह्येकस्यैव तकारस्याऽनुकरणं 'खफछठथे'त्यत्र तकारइति, द्वयोस्तकारयोर्झल्त्वं न स्यात्, अपि त्वेकस्यैवेत्यवात्तामित्यत्र सिज्लोपो न स्यादमित्था इत्यादावेव स्यात्।

( उद्द्योतः ) **अवात्तामिति**। वसेर्लुङ्। तसस्ताम्। सिच्। 'सः सी'ति तत्वम्। 'वदव्रजे'ति वृद्धिः। 'झलो झली'ति सलोपः। ननु वचनसामर्थ्याज्झल्सदृशेऽपि भविष्यतीत्यत आह–**अभित्था इति**। भिदेर्लुङि सिचि रूपम्॥

❀ राजलक्ष्मीः ❀

( उद्द्योते ) **तवापि**–व्यक्तिभेदवादिनोऽपि। **दोषः**–पूर्वोक्तो दोषः। **नोदितः**–कर्त्तव्यत्वेन चोदितः। **तत्र**–जातिपक्षे स्वीकृते। **प्रत्यापत्तिवाक्ये**–अअ इत्यत्र। **ह्रस्वस्यैवेति**। न त्वत्वजात्याक्रान्तानामष्टादशानामित्यर्थः। **तत्सामर्थ्यात्**–दीर्घविधानसामर्थ्यात्। **तस्यापि**–दीर्घस्यापि। (**भाष्ये**) शङ्कते–**नन्विति**। सिद्धान्ती शङ्कां निरस्यति–**प्रत्याख्यायत इति। तत्**–सवर्णग्राहकेऽणुदित्सूत्रेऽण्ग्रहणम्। **सवर्णे**–सवर्णग्राहके अणुदित्सूत्रे। आकृतिपक्षाङ्गीकारे फलान्तरमाह–**हल्ग्रहेति**। व्यक्तिपक्षेऽपि पूर्वोक्तान्

❀ शब्दकौस्तुभः ❀

षड्व्यक्तीः सादृश्याख्यसम्बन्धेनोपस्थापयति। नचैवमपि वृत्त्याऽनुपस्थितानां शाब्दबोधेऽन्वयप्रतियोगितानुपपत्तिः। अर्थाध्याहारवादे बाधकाभावात्। अतिप्रसङ्गभङ्गस्तु तात्पर्यग्राहकबलेनैव। अन्यथा तवापि लक्षणाध्याहारादेरतिप्रसङ्गस्य तदवस्थत्वात्। 'स्पृहेरीप्सित'इत्यनुशासनबलात्पुष्पेभ्य इत्यादौ पदाध्याहारः क्लृप्त इति चेन्न; 'ल्यब्लोपे कर्मणि' 'क्रियार्थोपपदस्य च कर्मणि स्थानिनि' इत्याद्यनुशासनाद-

१ 'सर्वावर्णग्रहो न स्यात्' पा०। २ 'ह्रस्वाणां' पा०। ३ अयं पाठः कचिदपि नास्ति।

[ व्यक्तिपक्षमभ्युपगम्य समाधानवार्तिकम् ]

॥*॥ रूपसामान्याद्वा ॥*॥

[ व्याख्याभाष्यम् ]

**रूपसामान्याद्वा सिद्धमेतत्। तद्यथा- 'तानेव शाटकानाच्छादयामो ये मथुरायाम्', 'तानेव शालीन्भुञ्ज्महे, ये मगधेषु', 'तदेवेदं भवतः कार्षापणं यन्मथुरायां गृहीतम्'। अन्यस्मिंश्चाऽन्यस्मिन्नूपसामान्यात् 'तदेवेद'मिति भवति एवमिहापि रूपसामान्यात्सिद्धम्॥ [ अइउण् ]॥**

(प्रदीपः) **रूपसामान्याद्वेति।** व्यक्तिनिर्देशेऽपि भेदाऽपरामर्शेन लोकवदभेदव्यवहारोऽप्यस्तीति सिद्धमिष्टम्। व्यक्तिव्यतिरिक्तं तु सामान्यं भवतु मा वा भूत्सर्वथा लोक इव शास्त्रे व्यवहार इत्यर्थः॥

**( उद्द्योतः )** आकृत्यनाश्रयणेऽप्याह भाष्ये-**रूपसामान्याद्वेति। त**द्व्याचष्टे-**व्यक्तीति। अभेदव्यवहार इति।** रूपसादृश्यनिबन्धनप्रत्यभिज्ञाकृताऽभेदव्यवहार इत्यर्थः, अल्पमहत्स्थूलकृशह्रस्वदीर्घगोघटादिषु गौर्घट इत्यादिव्यवहारवदिति भावः। एवं च व्यक्तिव्यतिरिक्तजातिस्वीकारोऽपि व्यर्थ एवेत्याशयेनाह-**व्यक्तिव्यतिरिक्तं त्विति। मा वेति।** अनुगतप्रतीतिव्यवहारयोः सादृश्येनैवोपपत्तेरिति भावः। सादृश्यं चात्र समानध्वनिकृतम्॥ **[ अइउण् ]॥**

ऋलृक् ॥२॥

[ वार्त्तिकावतरणायाऽऽक्षेपभाष्यम् ]

**✗ अथ लृकारोपदेशः किमर्थः ? ॥**

**( उद्द्योतः )** ऋलृक्। भाष्ये अथ-**लृकारेति।** यद्यप्येतच्चतुर्दशसूत्रीविवृतौ नन्दीश्वरकृत**काशिकाया**मनेकेषामृषीणां[1] नानाविधार्थजिज्ञासायां शिवेन सर्वजिज्ञासानिवृत्तये एषा ढक्कानिनादेन प्रकाशितेत्युक्तमितीदमनुपपन्नम्, तथापि पाणिन्युद्देश्यकं फलमस्ति नवेत्येतत्तात्पर्यम्। अन्त्यवर्णचतुर्दशं तु पाणिन्युद्देशेनैवोपदिष्टमित्यपि तत्रैव स्पष्टम्।

[ विशिष्याक्षेपाशयजिज्ञासाभाष्यम् ]

**किं विशेषेण लृकारोपदेशश्चोद्यते, न पुनरन्येषामपि वर्णानामुपदेशश्चोद्यते ?। यदि किंचिदन्येषामपि वर्णानामुपदेशे प्रयोजनमस्ति लृकारोपदेशस्यापि तद्भवितुमर्हति को वा विशेषः ?॥**

[ विशेषप्रदर्शनभाष्यम् ]

**अयमस्ति विशेषः। अस्य हि लृकारस्याल्पीयांश्चैव प्रयोगविषयः। यश्चापि प्रयोगविषयः सोऽपि क्लृपिस्थस्यैव। क्लृपेश्च लत्वमसिद्धम्। तस्याऽसिद्धत्वादृकारस्यैवाऽच्कार्याणि भविष्यन्ति नार्थ लृकारोपदेशेन॥**

**❀ राजलक्ष्मीः ❀**

अस्य च्वावित्यादीन्दोषानुद्धरति-**रूपेति। [ अइउण् ]**

**( उद्द्योते ) इदम्**-'लृकारोपदेशः किमर्थं' इत्यादिशङ्कासमाधानादिकम्। **तत्रैव**-नन्दीश्वरकृतकाशिकायामेव। तत्र हि-**'अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुष्टयम्। धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये।'** इत्यादिना तेषां पाणिन्युद्देश्यकत्वमुक्तम्। तत्र च 'पाणिन्यादी'त्यादिपदोपादानात्-'पाणिन्युद्देशेनैवे'त्येवकाराऽसङ्गतिरिति **तु गौडाः।**

**❀ शब्दकौस्तुभः ❀**

र्थाध्याहारस्यापि स्थलविशेषे क्लृप्तत्वात्। अन्यथा 'गवित्ययमाहे'त्यादावगतेश्चेति वक्ष्यते॥ **[ अइउण् ]॥**

**ऋलृक्।** ननु विधिवाक्येषु ऋकारो ग्रहणकशास्त्रबलेन ऋकारादीनष्टादश यथा गृह्णाति तथा लृवर्णानपि द्वादश ग्रहीष्यति तत्किं पृथग्लृकारोपदेशेन ?। न च भिन्नस्थानतया सावर्ण्यविरहादग्रहणमिति वाच्यम्, 'ऋकारलृकारयोः सवर्णविधि'रिति वार्त्तिकबलेन वाचनिकस्य सावर्ण्यस्याऽवश्यं वाच्यत्वात्। अन्यथा इहोपदिष्टेपि लृकारे 'प्राल्कारीयती'त्यादौ 'उपसर्गादृति धातौ' 'वा सुप्यापिशले'रित्यस्याऽप्रवृत्तिप्रसङ्गात्। ननु क्लृपिस्थस्य लृकारस्येदमनुकरणम्, तस्य च स्वरकार्येष्वसिद्धत्वादृकार[2] एवायमिति 'उपसर्गादृती'त्यादि सेत्स्यतीति चेन्न; 'कृपो रो ल'इति विहितस्याऽसिद्धत्वेपि तदनुकरणस्याऽस्यासिद्धत्वविरहात्। स्यादेतत्-'प्रकृतिवदनुकरण'मित्यतिदेशादयमप्यसिद्ध[3] एव। स चातिदेशोऽवश्याश्रयणीयः। 'द्विःपचन्त्वित्याहे'ति तैत्तिरीयवाक्ये यद्यपि पचन्त्वित्याद्युदात्तं पठ्यते तथापि भाष्योदाहृते शाखान्तरीये पचन्तुशब्दस्य 'तिङ्ङतिङ' इति निघातो यथा स्यात्। नह्येतत्तिङन्तम्। तिङन्तपदार्थकत्वात्। स्वाद्युत्पत्तिस्त्विह विवक्षाभेदेन वैकल्पिकीत्यर्थवत्सूत्रे वक्ष्यते। 'अग्नी इत्याहे'त्यादौ प्रगृह्यत्वमप्यतिदेशादेव। अतिदेशे ज्ञापकं तु 'यत्तदेतेभ्यः परिमाणे'इति सौत्रनिर्देशः। नह्यत्रातिदेशं विना त्यदाद्यत्वं लभ्यते। 'अभिव्यक्तपदार्था ये' इति न्यायेन लोकप्रसिद्धार्थपरतायामेव तत्प्रवृत्तेः। तथा च प्रयुज्यते-'यत्तदोर्नित्यसम्बन्ध'इति।

1 सनकादीनामृषीणाम्। 2 अच्कार्येषु वृद्ध्यादिषु।

3 तदनुकरणमपि।

(प्रदीपः) ऋऌक्। अल्पीयानिति। ऋकाराऽपेक्षः प्रकर्षः। ऋकारस्याऽल्पः प्रयोगस्ततोऽप्यस्याऽल्पतर इत्यर्थः। अल्पप्रयोगस्यापि कार्यार्थ उपदेशः कर्तव्य इत्याशङ्क्याह–**यश्चापीति**। तत्र ऋकारावस्थायामेवोदात्तादिषु कृतेषु **स्थानेऽन्तरतम** इति स्थानिसदृश ऌकारो भविष्यति॥

(उद्द्योतः) भाष्ये–**प्रयोगविषय** इति कर्मधारयः। प्रयोगादन्यत्रानभिव्यज्यमानतया प्रयोगो 'विषय' इत्युक्तः। **अल्पेति**। यथा 'मुद्गाद'णित्यादेः। ननु ऋकारे कार्यप्रवृत्तावपि ऌकारे कथं तत्कार्योदात्तत्वादीनां दर्शनमत आह–**तत्रेति**। **स्थानेऽन्तरतम इतीति**। यद्यपि 'कृपो रो लः' इत्यत्र रेफलकारयोः स्थान्यादेशभावस्तथापि तद्द्वारा ऋकारऌकारयोरपि स इति भावः॥

[ वार्त्तिकावतरणभाष्यम् ]

**अत उत्तरं पठति–**

[ समाधानवार्तिकम् ]

*॥*॥ ऌकारोपदेशो यदृच्छाऽशक्तिजानुकरणप्लुत्याद्यर्थः ॥*॥*

[ व्याख्याभाष्यम् ]

**ऌकारोपदेशः क्रियते यदृच्छाशब्दार्थोऽशक्तिजानुकरणार्थः, प्लुत्याद्यर्थश्च।**

**यदृच्छाशब्दार्थस्तावत्–यदृच्छया कश्चिऌतको नाम, तस्मिन्नच्कार्याणि यथा स्युः–दध्य्लृतकाय देहि, मध्व्लृतकाय देहि, उदङ्ऌतकोऽगमत्, प्रत्यङ्ऌतकोऽगमत्। चतुष्टयी शब्दानां प्रवृत्तिः–जातिशब्दा, गुणशब्दाः, क्रियाशब्दा, यदृच्छाशब्दाश्चतुर्थाः॥**

(प्रदीपः) **यदृच्छेति**। अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्त्रभिप्रायेणैव प्रवर्तते स **यदृच्छा**शब्दो डित्थादिः। **ऋकारऌकारयोः सवर्णविधिरि**त्यस्य वार्तिककारवाक्यत्वात्सूत्रकारेणानाश्रितत्वादत्र ऌकारोपदेशः कृतः। अर्थवत्सूत्रारम्भाच्च व्युत्पन्ना यदृच्छाशब्दाः सन्तीत्यवगम्यते। **गाव्या**दीनां तु गवादिभिर्निवर्तितत्वादसाधुत्वम्। **ऋतक**शब्दस्त्वर्थाश्रयेणैव विनियुक्त इति ऌतकशब्दस्याऽनिवर्तकः।

(उद्द्योतः) **अर्थगतमिति**। शब्दातिरिक्तमर्थरूपमित्यर्थः। यद्वा व्यक्तेरेव वाच्यता। तस्यां च प्रकारताविशेष्यताख्यविषयताद्वयाङ्गीकाराच्छक्तिग्रहोपपत्तिः, सविकल्पकोपपत्तिश्च तत इति भावः। **प्रयोक्त्रभिप्रायेणैवेति**। शक्तिबोधनं प्रयोक्त्रधीनमिति भावः। अन्यथा शब्दार्थसंबन्धस्याऽनित्यतापत्तिः। एवं च 'स्वेच्छयैकस्यां व्यक्तौ सङ्केत्यमानः शब्दो **यदृच्छाशब्दः**' इति बोध्यम्। ननु ऋकारस्याच्त्वे ऋऌवर्णयोः सावर्ण्यादृकारेण ऌकारस्यापि ग्रहणादच्कार्यसिद्धौ किम्ऌकारोपदेशेनेत्यत आह–**ऋकारेति**।

❀ **राजलक्ष्मीः** ❀

(प्रदीपे) **गाव्यादीनां**–गावी-गोता गोपोतलिकेत्येवमादीनाम्।

❀ **शब्दकौस्तुभः** ❀

नन्वनेनैवातिदेशेन अत्वस्यावश्यकत्वादुदाहृतप्रयोगोनुपपन्न एवेति चेत्, न; उदाहृतज्ञापकसूत्रएव 'त्यदादीनि सर्वै'रित्येकशेषस्याऽकरणेन 'एतत्तदोः सुलोप' इत्यादिनिर्देशैश्चातिदेशस्याऽनित्यताज्ञापनात्। अथवा 'प्रावृट्शरत्कालदिवां जे'इति सूत्रे 'ऽप्योयोनियन्मतुपु चे'ति वार्तिकेनेयं परिभाषा, अस्या अनित्यता चेत्युभयमपि ज्ञाप्यते। तथाहि–कारीर्यामप्सुमन्तावाज्यभागाविति श्रुतम्। 'अप्सु मे सोमः' 'अप्स्वग्ने सधिष्टवे'ति हि तत्र मन्त्रौ। तत्राप्सुशब्दादनुकरणभूतान्मतुप्यस्यवामीयमित्यादाविवानुकरणस्य विभक्तित्वाभावादेव लुकोऽप्रसङ्गादलुग्विधानमुक्तपरिभाषां ज्ञापयति। मतुबुत्पत्तेश्च प्रथमान्ततां विना दुर्लभत्वात्प्रातिपदिकताप्यावश्यकी। सा च प्रत्ययान्तत्वे सति दुर्लभेति प्रातिपदिकसंज्ञायामतिदेशप्रवृत्तिविरहाभ्यनुज्ञानादनित्यतापि सिद्धा। एतेन 'युष्मदस्मत्प्रत्ययगोचरयो'रित्यादिप्रयोगा व्याख्याताः॥

प्रकृतमनुसरामः–ऌकारानुकरणस्याप्यतिदेशेनाऽसिद्धत्वात्प्राऌकारीयतीत्यादावुपसर्गादृतीत्यस्य प्रवृत्तिसिद्धौ किं सावर्ण्येनेति चेन्न; तथा सति रेफपरत्वप्राप्तावपि लकारपरत्वासिद्धया प्रकृतेऽनित्यत्वेनातिदेशाप्रवृत्तेरेव त्वयापि वाच्यत्वात्। ननु रेफपरत्वे सिद्धेऽतिदेशाद्रेफस्य लकारो भविष्यतीति चेन्न; एवमपि 'गम्ऌ' 'सृप्ऌ'इत्यादिस्थस्य ऌकारस्यानुकरणे त्वदुक्तातिदेशादेरुक्तिसम्भवाऽभावात्। तस्मात्सवर्णत्वस्यावश्यकत्वे ऌकारोपदेशो व्यर्थ एवेति चेत्; अत्रोच्यते। न तावद्वार्त्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्तिः। आरब्धेऽपि वार्तिके ऋकारऌकारयोः सावर्ण्यस्याऽनित्यतां ज्ञापयितुं कर्त्तव्य एव ऌकारोपदेशः। तेन 'क्लृप्तशिखे'त्यत्र 'गुरोरनृत' इति प्लुतः

१ 'ऌकारोपदेशः क्रियते। किं प्रयोजनं? 'यदृच्छाऽशक्तिजाऽनुकरणप्लुत्याद्यर्थः'। यदृच्छाशब्दार्थोऽशक्तिजानुकरणार्थः प्लुत्याद्यर्थश्च' इत्येवमत्र पाठन्तु गौडा अभ्युपगच्छन्ति।

**उपदेशः कृत इति** । पाणिनये शिवेने'ति शेषः । वस्तुतोऽत्र तस्यानुपदेशेऽप्रामाणिकत्वशङ्कया सवर्णविधिरपि तयोर्वक्तुमशक्य इति तदुपदेशः । सवर्णविधिद्वारकं फलमपि स्थलत्रय एवेति तत्रैव प्रयोजनोपन्यास इति बोध्यम् । ननु सन्तमसन्तं वा क्रियायोगमर्थंगतमङ्गीकृत्य डित्थादीनामपि व्युत्पत्तेरर्थगतार्थरूपप्रवृत्तिनिमित्तानपेक्षशब्दसत्त्वे किं मानमतआह **अर्थवदिति** । चिन्त्यमिदम् । बहुच्पूर्वे तस्य चारितार्थ्यात् । एतदर्थं **तद्धित**पदं तद्विशिष्टपरम् । **'अप्रत्यय'** इत्युक्तेश्च 'पचतकी'त्यादी न दोषः । प्रत्ययश्च तद्धितभिन्न एव, 'बहुपटवस्तिष्ठन्ती'त्यादौ **'यं समुदाय'**मिति न्यायेन न[1] दोष इति कैयटाशयमन्ये । ननु ऌतकस्याऽसाधुत्वात्कथं शास्त्रविषयतेत्यत आह–**गाव्यादीनामिति** । ऋतकेन ऌतकाऽनिवृत्तौ हेतुः-**अर्थाश्रयेणेति** । स्वगतक्रियारूपार्थाश्रयेणेत्यर्थः। अर्थतः सजातीयस्यैव निवृत्तिः । एकप्रवृत्तिनिमित्तकत्वे सति अन्वाख्यातमनन्वाख्यातस्य निवर्तकमिति भावः । तद्बुनयन्नाह–भाष्ये-**चतुष्टयीति** । शब्दानामर्थे या प्रवृत्तिः सा प्रवृत्तिनिमित्तभेदात्प्रकारचतुष्टयवतीत्यर्थः । तत्र **यदृच्छा**शब्दो नाम वक्त्रा स्वेच्छया संनिवेशितः। स चानेकविधः-एकव्यक्तिसंनिवेशितो डित्थादिरेकः । तत्र न किंचिदतिरिक्तं प्रवृत्तिनिमित्तम्, आनन्त्यव्यभिचारयोरभावात् । किन्तु शक्यस्यैवार्थस्य विषयताद्वयेन भानम् । तदुत्तरत्वादेः प्रकारत्वावछिन्नः स एवार्थः। यद्वा शब्दपराद्वाच्येऽर्थे एव त्वादिः । एवं कादिपदानां कादीनामेकत्वमते तेषु शक्तिः । ततो डित्थपदादिव[2] शक्यार्थे एव त्वादिः। कुत्वमिति कुरिति च पर्यायौ । अनेकत्वमते तत्तज्जात्युपलक्षिते सा । टिघुभादीनां तु तच्छक्यानामानन्त्यात्तत्पदमेव प्रवृत्तिनिमित्तम् । तदेव च तदुत्तरत्वाद्यर्थः । भत्वादिपदैर्भादिसंज्ञैवोच्यते । अत एव **वृद्धि**सूत्रे वक्ष्यति–'कुत्वं कस्मान्न भवति–चोः कुः पदस्येति । भत्वात् । कथं भसंज्ञे'ति । अनेन च भाष्येण कुकुत्वपदयोः भत्वभसंज्ञापदयोः पर्यायत्वं स्पष्टमेव उक्तम् । संज्ञा च पदमेव ॥

[ व्याख्याभाष्यम् ]

**अशक्तिजाऽनुकरणार्थः,-अशक्त्या कयाचिद्ब्राह्मण्या, 'ऋतक' इति प्रयोक्तव्ये 'ऌतक' इति प्रयुक्तम् । तस्याऽनुकरणं 'ब्राह्मण्यॢतक इत्याह', 'कुमार्यॢतक इत्याहे'ति ॥**

( प्रदीपः ) **अशक्तिजेति** । अशक्तिजानुकरणस्थ जातिशब्दत्वमिच्छन्ति । यस्मादनुक्रियमाणे शब्दे या जातिः समवेता तत्संबद्धमनुकार्यमनुकरणं प्रत्याययति ॥

( **उद्द्योतः** ) ननु चतुर्विधेष्वनुकरणशब्दः क्वान्तर्भवतीत्यत आह–**अशक्तिजेति । यस्मादिति** । अनुक्रियमाणाः शब्दव्यक्तयो[3] बह्वयः । प्रत्यभिज्ञा तु जातिनिबन्धना रूपसादृश्यनिबन्धना वेति भावः । एतेऽपि यदृच्छाशब्दाः, स्वेच्छयैव वक्त्रा शब्दपरतया प्रयोगा'दित्य**न्ये** ॥

[ व्याख्याभाष्यम् ]

**प्लुत्याद्यर्थश्च ऌकारोपदेशः कर्तव्यः ।**

**के पुनः प्लुत्यादयः ? । प्लुतिद्विर्वचनस्वरिताः । क्लृ३प्तशिख । क्लृप्तः । प्रक्लृप्तः । 'प्लुत्यादिषु कार्येषु कृपेर्लत्वं सिद्धम् । तस्य सिद्धत्वादच्कार्याणि न सिद्ध्यन्ति । तस्माद्ऌकारोपदेशः क्रियते ॥**

( **उद्द्योतः** ) प्लुत्यादिकं च,–**गुरोरनृत** इति प्लुतः, **अनचि** चेति द्वित्वम्, प्रपूर्वात्क्लृपेरन्तर्भावित-

❀ **राजलक्ष्मीः** ❀

( **उद्द्योते** ) **संनिवेशितः**–प्रवर्त्तितः ।

( **भाष्ये** ) 'इत्याहेती'त्यस्य 'तत्राऽच्कार्याणियथा स्यु'रिति शेषः । ( **प्रदीपे** ) **अनुकरणं**–कर्तृभूतम् । ( **उद्द्योते** ) **प्लुत इति** । गुरुसञ्ज्ञासापेक्षो हि प्लुतः, गुरुसंज्ञा चाऽच्त्वमपेक्षत इति स्पष्टमेव । **द्वित्वम्**–अजुत्तरपकारस्य द्वित्वम् ।

❀ **शब्दकौस्तुभः** ❀

सिध्यति । अन्यथा 'ऽनृत' इति निषेधः स्यात् । ऋकारेण ऌकारग्रहणात् । कृप्यमानश्चलीकृप्यमान इत्यादौ 'ऋवर्णान्नस्ये'त्यौपसङ्ख्यानिकणत्वस्याऽप्रवृत्तिस्तु क्षुभ्नादित्वेनापि सुवचा । अन्यथा प्रकृप्यमानादौ 'कृत्यच' इति णत्वस्य दुर्वारत्वात् ।

इदं त्ववधेयम्–वार्त्तिकमते 'सवर्णेऽण्ग्रहणमपरिभाष्य'मितिसिद्धान्तादृकारे ऌकारसाधारणजातिविरहेणाकृतिग्रहणासम्भवाच्च प्राल्कारीयतीत्यत्र कार्याऽनिर्वाहस्तदवस्थः । सावर्ण्यविधिस्तु सवर्णदीर्घे 'होतृ–ऌकार' इत्यत्र 'इकोऽसवर्ण'इत्यस्य प्रवृत्तिप्रतिबन्धेन चरितार्थः । न च 'ऋत्यक' इत्यस्य प्राप्तिः, ग्रहणकशास्त्राऽभावादेव । एवं च दीर्घं सम्पाद्य कृतार्थं ऌकारपाठः सावर्ण्याऽनित्यत्वमपि कथं ज्ञापयेदिति । तस्मादण्ग्रहणं प्रत्याचक्षाणस्य–'तत्स्थाने ऋग्रहणं कर्त्तव्यम्, अप्रत्ययग्रहणं च न कार्य'मित्याशयः कल्प्यः । यद्यप्येवं पत्लृप्रभृतीनां ऌदितां 'नाग्लोपी'त्यृदित्कार्यं प्राप्नोति, पृथगनुबन्धकरणं तु ऌदित्वप्रयुक्तस्य अङादेशस्य ऋदित्स्वप्रवृत्या चरितार्थत्वादसङ्करं ज्ञापयितुमसमर्थं, तथापि सावर्ण्यस्याऽनित्यतयैवेदमपि समाधेयम् । यद्वा–स्वरसन्धिप्रकरणे ऌवर्णस्य ऋवद्भाव एव वाच्यः । सावर्ण्यं च नोपसङ्ख्येयं, प्लुतस्तु प्रकरणान्तरस्थ इति न तत्रातिदेशप्रवृत्तिः । 'उरण्रपर'इतिपरिभाषा तु कार्य-

१ 'नेति कैयटाशयमन्ये'पा० । २ 'ततो डित्थादिपदादिव'पा० ।

३ 'अनुक्रियमाणशब्दव्यक्तयः' पा० ।

ण्यर्थात्कर्मणि क्ते **गतिरनन्तर** इति पूर्वपदप्रकृतिस्वरे, वर्ज्यमानस्वरेण शिष्टस्याऽनुदात्तत्वे **'उदात्तादनुदात्तस्ये'**ति स्वरितत्वम् । **'अनृत'** इति निषेधस्तु न, ऋदित्लृदिदिति पृथगनुबन्धकरणेन क्वचित्परस्पराऽग्रहणज्ञापनात् ॥

[ प्रयोजननिराकरणवार्त्तिकावतरणभाष्यम् ]

**नैतानि सन्ति प्रयोजनानि ।**

[ प्रयोजनप्रत्याख्यानवार्तिकम् ]

*॥*॥ न्याय्यभावात्कल्पनं संज्ञादिषु ॥*॥*

[ व्याख्याभाष्यम् ]

**न्याय्यस्य ऋतकशब्दस्य भावात् कल्पनं संज्ञादिषु–साधु मन्यन्ते,–ऋतक एवासौ, न लृतक इति ॥**

**( प्रदीपः ) न्याय्यभावादिति ।** ऋतकशब्दो न्याय्यः, 'कृदन्तं नाम कुर्या'दिति स्मृतावुक्तत्वात् । ऋतिः सौत्रो धातुः, तत औणादिकः 'कुन्शिल्पिसंज्ञयोरपूर्वस्यापी'ति कुन्प्रत्ययः। **संज्ञादिष्विति ।** आदिशब्देनैतद्दर्शयति–जातिगुणक्रियानिमित्ता अपि शास्त्रान्विता एव प्रयोक्तव्या इति । सर्वशब्दव्युत्पत्तिपक्षे किमर्थवत्सूत्रेणेति चेत् , शिष्टप्रयुक्तानामेवाऽव्युत्पत्तिपक्षोऽप्यस्तीति ज्ञापनाया**ऽर्थवत्सूत्रो**पादानम् , अनुकरणशब्दानामव्युत्पन्नत्वात्तदर्थं च ॥

**( उद्द्योतः ) न्याय्य इति ।** 'संज्ञात्वेन कल्पयितु'मिति शेषः । तत्र हेतुमाह–**कृदन्तमिति ।** प्रकृतिप्रत्ययादिविभागेनाऽन्वाख्यातत्वमेव **न्याय्य**त्वमित्याशयेन शङ्कते–**सर्वशब्देति** । शिष्टप्रयुक्तत्वमपि **न्याय्य**त्वमिति परिहारः । न च तस्यैव प्रयोगे लृतकशब्दो बोधकोऽपि न स्यादिति वाच्यम् ,बोधकत्वेऽप्यसाधुत्वान्न शास्त्रीयकार्यनिमित्तत्वमित्याशयात् । तद्ध्वनितं भाष्ये–**'साधु मन्यन्ते'** इति ग्रन्थेन ।

**ऋतक एवासाविति ।** ऋतकशब्दप्रतिपाद्य एवासौ, न लृतकशब्दप्रतिपाद्य इत्यर्थः ॥

[ पूर्ववार्त्तिकस्य व्याख्यान्तरभाष्यम् ]

**अपर आह–न्याय्य ऋतकशब्दः शास्त्रान्वितोऽस्ति स कल्पयितव्यः साधुः संज्ञादिषु–ऋतक एवासौ न लृतकः ।**

**( प्रदीपः ) अपर आहेति ।** पूर्वमुक्तम्–ऋतक शब्द एव न्याय्यत्वात्प्रयोक्तव्यो[३] ननु लृतकशब्द इति, इदानीं तु ऋतकशब्दस्यैवाऽयमपभ्रंशोऽशक्तिजत्वाद् लृतक शब्द इत्युच्यते[४] ।

॥ राजलक्ष्मीः ॥

**( भाष्ये ) न्याय्यभावात्**––न्याय्यत्वात् । **( प्रदीपे ) दर्शयति**–वार्त्तिककारो बोधयति । **जातीति** । जात्यादिप्रवृत्तिनिमित्तका गवादय इत्यर्थः । **शास्त्रेति** । व्याकरणशास्त्रानुगताः । साधव इति यावत् । **( उद्द्योते ) शेषः**–'न्याय्य' इत्यस्य शेषः । **तस्यैव**–शास्त्रान्वितस्यैव । **असौ**—लृतकः ।

**( भाष्ये ) न्याय्यभावा**दिति वार्त्तिकस्य व्याख्यान्तरमाह–**अपर आहेति** । न्याय्यः–साधुः । **( प्रदीपे ) पूर्वं**––पूर्वव्याख्यायाम् । **इदानीम्**––अपरव्याख्याने ।

॥ राजलक्ष्मीः ॥

कालतया स्वरसन्धिप्रकरणस्थेति 'उ'रित्यनेन लृवर्णग्रहणोपपत्तिः[१] । अस्मिन्नपि पक्षे लृकारोपदेश इह कर्त्तव्य एव । 'क्लृ३प्तशिख' इत्यत्र प्लुतो यथा स्यात् । 'क्लृप्त' इति च द्वित्वम् । 'प्रक्लृप्त' इति च स्वरितः। अत्र ह्यन्तर्भावितण्यर्थात्कर्मणि क्तः। तेन 'गतिरनन्तर' इतिपूर्वपदप्रकृतिस्वरः। कर्मणि यः क्तस्तदन्ते उत्तरपदे तद्विधानात् । ततः शेषनिघाते कृते उदात्तादनुदात्तस्य स्वरितः । न चाऽत्र 'कृपोरोल'इत्यस्यासिद्धत्वाशङ्कापि, पूर्वत्वात्। परं हि पूर्वं प्रत्यसिद्धं न तु परं प्रति पूर्वम् । एवं च गम्लृप्रभृतीनां लृकारस्येत्सञ्ज्ञाप्यनायासेन सिध्यति । अन्यथा तु 'पुषादिद्युताद्य्लृदित'इति लृकारे परतः कृतेन यणादेशेन इत्संज्ञानुवादेन च ज्ञापकेन कथञ्चित्साधनीया स्यात् । एवमिदितो नुमित्याद्यनुवादानाम्, 'ऋत्यक' इत्यादिनिर्देशानां च साम्यादिकारादयोऽपि न निर्दिश्येरन् ।

यथाश्रुतसूत्ररीत्या तु ब्रूमः,–ऋकारमुच्चारयितुं प्रवृत्ता कुमारी करणाऽपाटवाद्यदा लृकारमुच्चारयति तदनुकरणस्याप्यच्कार्यसिद्धिः फलम् । अनुकरणानामनुकार्येणाऽर्थवतां सर्वत्र साधुताभ्युपगमात् । नन्वेवं लृवर्णस्य दीर्घा न सन्तीति व्याहन्येत, अनुकरणस्य तत्रापि सुलभत्वादिति चेन्न; न्यायप्राप्तस्यापि वचनेन बाधात् । इदञ्च **'न्याय्यभावात्कल्पनं संज्ञादिष्वि**तिवार्त्तिकाल्लभ्यते । तथाहि–**'लृकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थ'**इति पूर्ववार्त्तिकेन लृकारोपदेशस्य प्रयोजनत्रयमुक्तम्। 'दध्लृतकाय देहि'ति **यदृच्छाशब्दः**। 'कुमारी लृजुक इत्याहे'त्यशक्तिजानुकरणम्। प्लुतद्विर्वचनस्वरिताश्च प्लुत्यादयः। एतदर्थं लृकारोपदेश इति हि तस्यार्थः । तत्र प्रथमप्रयोजननिराकरणायेदं वार्त्तिकम् **'न्याय्यभावादिति।** अस्यार्थः–ऋतिस्तावद्घृतेरीयङितिनिर्दिष्टः सौत्रो धातुस्तस्मादौणादिकः कुन्। तत्र ह्येवं सूत्रितं' कुन् शिल्पिसंज्ञयोरपूर्वस्या-

१ 'सवर्णग्रहण' पा० । २ 'ऋतकएव' पा० ।

३ 'नियोक्तव्यो' पा० । 'लृतक इत्युच्यते' पा० ।

(उद्द्योतः) इदानींत्विति । भाष्ये **कल्पयितव्य** इत्यस्य विनियुक्तत्वेन ज्ञेय इत्यर्थः । साधुर्ऋतक एव नामत्वेन कृतो न ऌतकः, अशक्त्या तु तथोच्चारणमित्यपभ्रंशत्वान्न शास्त्रविषय इति भावः । **अशक्तिजत्वादिति ।** जिह्वाऽपाटवजत्वादित्यर्थः । एवं चाऽसाधुरेवेति भावः ॥

[ प्रयोजनवादिनः प्रयोजनप्रदर्शनभाष्यम् ]

**अयं तर्हि यदृच्छाशब्दोऽपरिहार्यः— ऌफिडः ऌफिड्डश्चेति ॥**

(प्रदीपः) **अयं तर्हीति ।** ऋतकशब्दोऽन्वाख्यातत्वाद्भवतु वा ऌतकशब्दस्य निवर्तकः । 'ऋफिड' 'ऋफिड्ड' इत्येतौ त्वनन्वाख्यातावितिकथमृफिड ऌफिड्डइत्येतयोर्निवर्तकौ स्यातामिति भावः ।

(उद्द्योतः) ऌतकाल्लृफिडे वैषम्यं दर्शयति— **ऋतकशब्द इति । ऌतकशब्दस्येति ।** 'अनन्वाख्यातस्ये'त्यादिः ।

[ प्रत्याख्यानवादिनः प्रयोजनखण्डनभाष्यम् ]

**एषोऽपि ऋफिडः, ऋफिड्डश्च ॥ कथम्?॥ अर्तिप्रवृत्तिश्चैव हि लोके लक्ष्यते, फिडफिड्डावौणादिकौ प्रत्ययौ ॥ त्रयी च शब्दानां प्रवृत्तिः—जातिशब्दा गुणशब्दाः क्रियाशब्दा इति । न सन्ति यदृच्छाशब्दाः ॥**

(प्रदीपः) **एषोऽपीति ।** 'उणादयो बहुल'मित्येवमन्वाख्याताविति भावः । **अर्तिप्रवृत्तिरिति ।** अर्तेः प्रकृतित्वेन प्रवृत्तिरित्यर्थः । **न सन्तीति ।** अयत्वेऽपि यदा नाम क्रियते, तदा प्रशस्यरूपा क्रिया गुणो वाऽध्यारोप्यत इति भावः ।

※ राजलक्ष्मीः ※

(उद्द्योते) **ज्ञेयः**—बोध्यः । अनुमेय इति वा । **इति**—इत्यनुमानेन ।

(भाष्ये) प्रयोजनं स्थापयति—**अयमिति ।**

※ शब्दकौस्तुभः ※

पी'ति शिल्पिन्यभिधेये संज्ञायां च सोपपदान्निरुपपदाच्च धातोः कुन् स्यादित्यर्थः । रजकः तक्षक इत्यादि **शिल्पिनि** । चरकः भषकः कटकं कनकमित्यादि **संज्ञायामु**दाहरणम् । तथा च ऋतकशब्दः शास्त्रानुगतत्वाच्याय्यः । तत्सद्भावात्स एव संज्ञा । तथा च 'कृतं कुर्यान्न तद्धित'मित्यादि गृह्यस्मृतिरप्यनुकूलिता भवतीति । एवं वदता शास्त्राननुगतं देशभाषया यत्कूचीत्यादि नाम क्रियते तदसाध्विति स्फुटीकृतम् । आदि-

१' इत्येतावनन्वाख्यातौ 'पा० । २ 'इत्येवान्वाख्यातौ' पा० ।

(उद्द्योतः) फिडफिड्डयोरुणादिष्वदर्शनादाह—**उणादय इति ।** बाहुलकसिद्धावेतावित्यर्थः । **अर्तिप्रवृत्तिश्चैवेति ।** तथा च फिडफिड्डयोः स एव प्रकृतिर्न तु ऌ इति धात्वन्तरं कल्प्यम् । **संज्ञासु धातुरूपाणी**ति तु अनादिशिष्टप्रयोगसाधने उपायमात्रं न त्वाधुनिकक्रियमाणसंज्ञानुग्राहकमिति भावः । एवं च देशभाषानुसारेण क्रियमाणं कूचीमञ्चीत्याद्यसाधु, शास्त्राऽविषयश्चेत्युक्तम् । **अर्तेरिति ।** यतस्तस्य लोके प्रवृत्तिर्लक्ष्यतेऽतः फिडादिप्रकृतित्वेनाऽपि तस्यैव प्रवृत्तिरित्यर्थः । एवं यदृच्छाशब्दानङ्गीकृत्य शास्त्रान्वितानां कचिच्छिष्टप्रयुक्तानामेव यत्रकुत्रचित्संज्ञात्वेन विनियोगो नान्येषामित्येवमृतकऌफिडादीनां शास्त्रविषयत्वाऽभावान्न तदर्थं ऌकारोपदेश इत्युक्तम् । इदानीं **'न सन्त्येव यदृच्छाशब्दा'** इति पक्षावष्टम्भेन तदर्थत्वं प्रत्याचष्टे—भाष्ये **त्रयी चेति ।** चेनेदं ध्वनितम् । नन्वेवं डित्थादीनां कान्तर्भावोऽत आह—**अद्यत्वेऽपीति ।** एवं च सर्वेऽपि व्युत्पन्नाः क्रियादिशब्दा एवेति भावः । **प्रशस्यरूपेति ।** अत्यन्तप्रशंसायोग्येत्यर्थः । एवं च येषां क्रियागुणादिप्रवृत्तिनिमित्तकत्वं तेषां क्रियाद्यारोपेणार्थबोधकत्वमिति तात्पर्यम् । यद्वा पूर्वपूर्वडित्थादिगतप्रशस्तगुणक्रियारोपेण तत्प्रवृत्तिनिमित्तक एव डित्थादिभ्यो बोधः । आद्ये डित्थे तु तद्व्यक्तेरेव विषयताद्वयेन भानमिति सैव प्रवृत्तिनिमित्तमर्पाति **तस्य भाव** इति सूत्रे भाष्ये उपपादयिष्यते ।

[ प्रयोजनवादिनः खण्डनवाद्युपालम्भभाष्यम् ]

**अन्यथा कृत्वा प्रयोजनमुक्तम्, अन्यथा कृत्वा परिहारः ! । 'सन्ति यदृच्छाशब्दा' इति कृत्वा प्रयोजनमुक्तम्, 'न सन्ती'ति परिहारः । समाने चाऽर्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तको भवति ।**

**ऋफिड्डश्चेति ।** अस्य 'न्याय्य' इति शेषः । **प्रवृत्तिः**—प्रयोगः । ननु सर्वेषामेवं साधुत्वे यदृच्छाशब्दविलोपापत्तिरत आह—**न सन्तीति ।** (उद्द्योते) **सः**—ऋधातुः । **सर्वेऽपि**—डित्थडवित्थादयः ।

शब्दादनुकरणेऽपि शिष्टानुरोधं दर्शयतां ऌवर्णस्य दीर्घा न सन्तीति शास्त्रमर्यादामुल्लङ्घ्य क्रियमाणस्य दीर्घानुकरणस्याप्यसाधुता दर्शिता । तस्माद्दिवुभादिभ्यः कूचीमञ्च्यादीनामिव गावीगोण्याद्यनुकरणेभ्यो दीर्घऌवर्णानुकरणस्यापि न्यायतो न किं चिद्वैलक्षण्यं किन्तु वाचनिकमिति स्थितम् । मन्त्रशास्त्रे तु मातृकान्यासादौ दीर्घ ऌवर्णो यद्यपि स्वीकृतस्तथापि प्रातिशाख्यन्यायेन अन्यत्रासौ नोपयुज्यत एवेत्यवधेयम् ।

एवं वचन्त्यादीनामपि शिष्टैरनङ्गीकृतानां न्यायसाम्याद-

३ 'फिडफिड्डप्रकृति' । पा० ।

**तद्यथा देवदत्तशब्दो 'देवदिण्ण'शब्दं निवर्तयति; न गाव्यादीन् ।**

( प्रदीपः ) **अन्यथा कृत्वेति ।** अव्युत्पत्तिपक्षाश्रयेणाचार्येणोपदिष्ट लृकारः । वार्तिककारस्तु व्युत्पत्तिपक्षाश्रयणेन प्रत्याचष्टे—**समाने चेति ।** इह च भिन्नार्थत्वम् । लृतकशब्दो हि यदा संज्ञात्वेन विनियुज्यते क्वचित्पिण्डे तदा तच्छब्दरूपाध्यासः, ऋतके तु विपर्ययः । भिन्नस्वरूपौ चैतौ शब्दाविति भावः ॥

( उद्द्योतः ) **अव्युत्पत्तीति ।** संज्ञाशब्दा अव्युत्पन्ना इति पक्षाश्रयणेनेत्यर्थः । **आचार्येणेति ।** शिवो वेदपुरुषो वाऽत्राऽऽचार्यः । एवंच यदृच्छाशब्दसद्भावाश्रयेण प्रयोजने उक्ते तदनाश्रयणेन तत्प्रयोजननिराकरणमयुक्तमिति भावः । ऋतकशब्द लृतकशब्दस्य साधुत्वाऽभावकल्पक इत्याद्यं दूषणमप्ययुक्तमित्याह भाष्ये—**समाने चेति ।** तत्राऽर्थशब्दः प्रवृत्तिनिमित्ताभिप्राय इत्याह—**इह चेति ।** तच्छब्दस्वरूपस्य व्यक्तिस्वरूपस्य वाऽर्थे प्रवृत्तिनिमित्तत्वेनाऽध्यास इत्यर्थः । **विपर्यय इति ।** क्रियाप्रवृत्तिनिमित्तमित्यर्थः । **भिन्नस्वरूपौ**—भिन्नप्रवृत्तिनिमित्तौ । यदि तु ऋतकोऽपि शब्दप्रवृत्तिनिमित्तकस्तदा भिन्नस्वरूपत्वादेव प्रवृत्तिनिमित्तविपर्ययः । 'व्यक्तेरेव प्रवृत्तिनिमित्तत्व'मिति पक्षे ऋतकसङ्केतविषयव्यक्तेर्लृतकसङ्केतविषयव्यक्तिभिन्नैवेति तद्विपर्ययोऽस्त्येवेति बोध्यम् ॥

[ प्रत्याख्यानवादिनः समाधानभाष्यम् ]

**नैष दोषः । पक्षान्तरैरपि परिहारा भवन्ति ॥**

( प्रदीपः ) **पक्षान्तरैरपीति ।** यथा द्रव्यपक्षे **सरूपाणा**मित्यस्यारम्भः, जातिपक्षे तु प्रत्याख्यानमेवमस्यापीत्यर्थः । अव्युत्पन्नसंज्ञाशब्दपक्षेऽपि पारम्पर्यागताः शिष्टप्रयुक्ता एव संज्ञाः कर्तव्याः ॥

( उद्द्योतः ) भाष्ये समाधत्ते—**पक्षान्तरैरपीति । जातिपक्षे त्विति ।** यत्तु—'अक्षादिनानार्थानामेकशेषाय तत्पक्षेऽप्यावश्यकम्'–इति । तत्तु जातिगतजातिस्वीकारेण परिहृतम् । **पक्षान्तरैरपि परिहारा भवन्ती**ति वार्तिककृतैवमुक्तं । वस्तुतश्चतुष्टयीपक्षेऽपि दोषपरिहारः सुकरः । यदुक्तम्–'ऋतको न लृतकनिवर्तक' इति । माभूत्तस्य निवर्तकत्वम्, शिष्टप्रयोगाऽभावात्तु तन्निवृत्तिः । न्याय्यत्वमपि वार्तिके शिष्टप्रयुक्तत्वमेवेत्यभिसन्धाय भगवताऽनुक्तमपि स्वयं मन्दबुद्ध्यनुग्रहाय स्फुटमाह—**अव्युत्पन्नेति । पारम्पर्यायाताः**—अनादयः। एवंच शिष्टाऽप्रयुक्ता यदृच्छाशब्दा असाधुत्वेन शास्त्राऽविषया इति भाष्यतात्पर्यम् । यत्तु–चतुष्टयीति पक्षे लृतकादीनां डित्थादिवच्छास्त्रविषयत्वमेवेत्यस्माद्भाष्याल्लभ्यत–इति, तन्न, पक्षभेदेनैकस्य शास्त्रविषयत्वतदविषयत्वाङ्गीकारे **न वेति** सूत्रस्थभाष्यविरोधात् । डित्थादीनां पाणिन्यादिशिष्टप्रयुक्तत्वेन साधुत्वाच्छास्त्रविषयत्वेऽपि अन्येषां तद्विषयत्वे मानाभावाच । **किं च** साध्वसाधुबहिर्भूतानामपि शास्त्रविषयत्वे **'साध्वनुशासनेऽस्मिञ्शास्त्रे'** इति तत्र तत्र भाष्योक्त्यसङ्गतिः । **किञ्च** शास्त्रविषयत्वमप्येतद्ग्रन्थसाधुत्वाभाव इत्यशक्यमिति दिक् ।

---

॥ राजलक्ष्मीः ॥

( **भाष्ये** ) प्रयोजनवादी खण्डकमुपालभते-**अन्यथेति । परिहारः**-वार्त्तिककृत्कृतं खण्डनम् । ( **प्रदीपे** ) 'प्रत्याचष्टे' इत्यस्य 'तच्चायुक्त'मितिशेषः । **भिन्नार्थत्वं**–भिन्नप्रवृत्तिनिमित्तत्वम् । भिन्नार्थत्वमेव दर्शयति–**लृतकेति ।**

( **भाष्ये** ) अन्यथा कृत्वेति, समाने चाऽर्थे इति च प्रयोजनवादिनो दोषद्वयं समाधत्ते–**नैष दोष इति ।** एतद्दोषद्वयमित्यर्थः ।

( **भाष्ये** ) जातावेकवचनमित्याशयः । 'यत' इति शेषः ( **उद्द्योते** ) **तत्पक्षेऽपि**–जातिपक्षेऽपि । **जातिगतजातीति ।** अक्षत्वादिनानाजातिगताक्षत्वत्वादिजातीत्यर्थः । **इति**–इतिहेतोः । **एवमुक्तम्**–न्याय्यभावादित्येवमुक्तम् । **दोषपरिहारः**–समाने चेत्याद्युक्तदोषपरिहारः । एवमशक्तिजार्थत्वमाद्यं प्रयोजनं निराकृत्यानुकरणार्थत्वरूपं द्वितीयं

---

॥ शब्दकौस्तुभः ॥

साधुतोक्ता । तथा चाहुः–**'नहि वचिरन्तिपरः प्रयुज्यत' इति ।** एवं च **न्याय्यभावा**दिति वार्त्तिकेन पूर्ववार्त्तिकोक्तप्रयोजनत्रयमध्ये प्रथमप्रयोजनं निराकृतम् । लृतकश्चाऽसाधुरेव । इदं च 'त्रयीशब्दानां प्रवृत्तिर्न सन्ति यदृच्छाशब्दा' इति पक्षेणोक्तम् । 'पक्षान्तरैरपि हि परिहारा भवन्ती'ति भाष्यकारः । एतद्ग्रन्थपर्यालोचनया तु–चतुष्टयीति पक्षे लृतकादयोपि डित्थादिवत्साध्वसाधुबहिर्भूताः साधव एव न तु डित्थादिविलक्षणा इति लभ्यते । अन्यथा हि 'पक्षान्तरै'रिति न ब्रूयादिति । न च गृह्यस्मृतिविरोधः, तावतापि 'कृतं कुर्यान्न तद्धित'मिति गृह्यमुल्लङ्घ्याऽकृतस्याप्यौपगवादेरिव शब्दसाधुताभ्युपगमे बाधकाभावात् । पुरुषस्तु साधूनपि प्रयुञ्जानो देवब्राह्मणादिनिन्दकवद्धर्मशास्त्रोल्लङ्घनात्प्रत्यवैतीत्यन्यदेतत् ।

---

१ 'शिष्टाऽप्रयुक्तयदृच्छा' पा० ।

[ द्वितीयप्रयोजनप्रत्याख्यानवार्तिकम् ]

*॥*॥ अनुकरणं शिष्टाऽशिष्टाऽप्रतिषिद्धेषु यथा लौकिकवैदिकेषु ॥*॥*

[ व्याख्याभाष्यम् ]

**अनुकरणं हि शिष्टस्य वा साधु भवति। अशिष्टाप्रतिषिद्धस्य वा, नैव तद्दोषाय भवति नाऽभ्युदयाय। 'यथा लौकिकवैदिकेषु।' यथा लौकिकेषु वैदिकेषु च कृतान्तेषु। लोके तावद्य एवमसौ ददाति य एवमसौ यजते, य एवमसावधीते इति। तस्याऽनुकुर्वन् दद्याच्च यजेत चाऽधीयीत च सोऽप्यभ्युदयेन युज्यते। वेदेऽपि–'य एवं विश्वसृजं सत्राण्यध्यासते' इति, तेषामनुकुर्वन् तद्वत्सत्राण्यध्यासीत। सोऽप्यभ्युदयेन युज्यते। अशिष्टाऽप्रतिषिद्धं यथा–य एवमसौ हिक्कति, य एवमसौ हसति, य एवमसौ कण्डूयतीति तस्यानुकुर्वन्हिक्केच्च हसेच्च कण्डूयेच्च, नैव तद्दोषाय स्यान्नाऽभ्युदयाय। यस्तु खल्वेवमसौ ब्राह्मणं हन्ति एवमसौ सुरां पिबतीति तस्यानुकुर्वन्ब्राह्मणं हन्यात्सुरां वा पिबेत्सोऽपि मन्ये पतितः स्यात् ॥**

(प्रदीपः) प्रयोजनान्तरमपि वार्तिककारः प्रत्याचष्टे–**अनुकरणमिति**। अनुकार्यस्य[१] दुष्टत्वादनुकरणेऽपि दुष्टत्वं मन्यते सुरापानाऽनुकरणवत् ॥

(उद्योतः) अनुकरणं शिष्टस्य वा अशिष्टाऽप्रतिषिद्धस्य वा भवति। तत्राद्यं साधु, अन्त्यं न दोषाय नाभ्युदयायेति भाष्येऽन्वयः। अर्थात्प्रतिषिद्धानुकरणस्य दुष्टत्वं बोध्यम्। ननु शिष्टानुकरणं नाऽसाधु, अशिष्टाप्रतिषिद्धस्य वा नाऽसाधु, आद्यस्याभ्युदयजनकत्वादन्त्यस्याऽभ्युदयाऽजनकत्वेऽपि दोषाऽजनकत्वात्। एवं च प्रकृते किमायातमत आह–**अनुकार्यस्य दुष्टत्वादिति**। अर्थलब्धं तदादाय प्रकृतोपयोग इत्यर्थः। अत एव भाष्ये तद्दृष्टान्तेनोपपादयिष्यति–**यस्तु खल्विति**। एवं चाऽसाध्वनुकरणस्याऽसाधुत्वाच्छास्त्राविषयत्वात्तदर्थता लृकारोपदेशस्य न युज्यत इति भावः। भाष्ये **यजेत वेति**। यागोऽत्र स्मार्तो ग्राह्यः॥

[ अनुकरणार्थत्वरूपप्रयोजनसमर्थनभाष्यम् ]

**विषम उपन्यासः। यश्चैवं हन्ति, यश्चानुहन्ति, उभौ तौ हतः। यश्चापि पिबति, यश्चानुपिबति, उभौ तौ पिबतः। यस्तु खल्वेवमसौ ब्राह्मणं हन्ति एवमसौ सुरां वा पिबतीति तस्यानुकुर्वन्स्नातानुलिप्तो माल्यगुणकण्ठः कदलीस्तम्भं छिन्द्यात्पयो वा पिबेत्, न स मन्ये पतितः स्यात्॥**

(प्रदीपः) भाष्यकारस्त्वनुकरणार्थत्वं सम-

---

❀ राजलक्ष्मीः ❀

प्रयोजनं निराकरोति–**अनुकरणमिति**। **तत्**–तादृशम् अनुकरणम्। **पतित इति**। एवञ्च दुष्टस्यानुकरणमपि दुष्टमेवेति न तादृशाऽनुकरणार्थतोचितेतिभावः। **(उद्योते) तदर्थता**–अनुकरणार्थता। ननु यागस्य वैदिकस्य कथं लौकिकोदाहरणतयोपन्यासोऽत आह–**स्मार्त इति**। **अत्र**–लौकिकोदाहरणे। स्मार्तश्च लौकिक एवेति सर्वं समञ्जसमित्याशयः। सिद्धान्ती दृष्टान्तं विघटयति–**विषम इति**। **अनुहन्ति**–तमनुकृत्य ब्राह्मणं हन्ति। **पिबति**। सुरां पिबति। **अनुपिबति**–अनुकृत्य सुरां पिबति। **तस्या एव**–सुरापानादिक्रियाया एव। **अकार्य**–पापम्। **अस्वेति**। अस्वशब्दो निर्धने साधुरेव, एवं गोणीशब्दोऽपि

❀ शब्दकौस्तुभः ❀

यत्तु द्वितीयप्रयोजननिराकरणार्थं वार्त्तिकम्–**अनुकरणं शिष्टाऽशिष्टाप्रतिषिद्धेष्विति**। तस्यायमर्थः-शिष्टस्य साधोरनुकरणं साध्वेव, अशिष्टं च तदप्रतिषिद्धं च साध्वसाधुबहिर्भूतं टिवुभादि तस्यानुकरणमपि तादृगेवाऽऽर्थादसाधोरनुकरणमप्यसाध्वेवेति। इदं तु भाष्ये दूषितमेव। 'हैलयो हैलय' इत्यादीनां शिष्टपरिगृहीतानामसाधुतायां बीजाभावात्। नह्यपशब्दवाचकत्वमात्रेण तथात्वम्। 'अपशब्द' इत्यस्याप्यसाधुतापत्तेः। न च 'प्रकृतिवदनुकरण'मित्यनेन साधुतातिदेशः, अशास्त्रीयस्यातिदेशाऽयोगादिति दिक्। तस्माद्वार्तिककृता दूषितमपि द्वितीयप्रयोजनं भाष्यरीत्या स्थितम्। यदपि तृतीयप्रयोजननिराकरणपरं वार्त्तिकम्–**एकदेशविकृतस्यानन्यत्वात्प्लुत्यादय इति**। तस्यायमर्थः। 'गुडिघिलादेशविनामेषु प्रतिविधान'मितिवक्ष्यमाणत्वादृकारैकदेशस्य रेफस्य लत्वे कृते एकदेशविकृतन्यायेनाऽच्कार्यसिद्धिरिति। न चैवमनृत इति प्रतिषेधापत्तिः, 'अरवत'इति न्यासात्। नह्येकदेशविकृतन्यायेन रेफवत्ताप्यायाति। लोकेपि हि छिन्नपुच्छस्य पुच्छवत्त्वप्रयुक्तकार्यं नायात्येव। न चैवं होतृकारादेर्दीर्घस्याप्यर-

१ 'अनुकरणस्यापि' पा०।

र्थयते—विषम इति । न ह्यनुकार्यस्य दोषेणाऽनुकरणस्य दुष्टत्वमिति दर्शयति—यश्चेति । विहितकरणाद्धर्मोत्पत्तिः प्रतिषिद्धाचरणाच्चाऽधर्मो भवति । न त्वनुमानेन धर्माऽधर्मयोर्व्यवस्थेति मन्यते । सुरापानादौ तु तस्या एव क्रियाया अनुष्ठानात्सादृश्याऽभावान्नास्त्यनुकरणत्वम् । दानादीनां तु स्मार्तत्वाल्लौकिकत्वमुच्यते । स्नातानुलिप्त इति । स्वस्थचित्तत्वं दर्शयति । अस्वस्थेन हि चित्तेनाऽकार्यं क्रियते । माल्यगुणकण्ठ इति । लोकमध्ये प्रकाशते इत्यर्थः । अकार्यं ह्यप्रकाशं क्रियते । तत्र लृतकशब्दोऽपि यदा ऋतकाऽर्थे प्रयुज्यते तदाऽपशब्दो, यदा त्वनुकार्यं प्रत्याययति तदा साधुरेवाऽर्थभेदादश्वगोण्यादिवत् ॥

( उद्द्योतः ) सादृश्याभावादिति । न चैकजातीयेष्वपि व्यक्तिभेदेनै[1] सादृश्यसंभवः, सुरापानचादेरेव तादृशस्थले सादृश्येन तदतिरिक्तसादृश्याऽभावादित्याशयात् । तदाह–नास्त्येति । दानादीनां कथं लौकिकत्वेनोपन्यासोऽत आह–स्मार्तत्वादिति । अस्वस्थेनेति । आस्तिकत्वे सत्यपीति भावः । माल्यगुणकण्ठ इति । मालायां साधूनि माल्यानि पुष्पाणि । तैर्युक्तो गुणः–सूत्रं कण्ठे यस्येत्यर्थः । गड्वादित्वात्परनिपातः । अकार्यं हीति । इह लोके भीरुणेत्यर्थः । अर्थभेदेन साधुत्वे दृष्टान्तमाह–अस्वेति ।

[ उक्तप्रयोजनप्रत्याख्यानवादिनः शङ्काभाष्यम् ]

**एवमिहापि य एवमसावपशब्दं प्रयुङ्क्ते इति तस्याऽनुकुर्वन्नपशब्दं प्रयुञ्जीत, सोऽप्यपशब्दभाक्स्यात् ॥**

(उद्द्योतः) भाष्ये प्रयोजनप्रत्याख्यानवादी शङ्कते–एवमिहापीति ।

[ प्रयोजनवादिनः समाधानभाष्यम् ]

**अयं त्वन्योऽपशब्दपदार्थकः शब्दो, यदर्थ उपदेशः कर्तव्यः । न चाऽपशब्दपदार्थकः शब्दोऽपशब्दो भवति । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते 'ऽपशब्दपदार्थकः शब्दोऽपशब्दो भवती'ति, 'अपशब्द' इत्येव तस्याऽपशब्दः स्यात् । न चैषोऽपशब्दः ॥**

( प्रदीपः ) अपशब्द इत्येवेति । अस्य हि गाव्यादयोऽपभ्रंशा वाच्याः ।

( उद्द्योतः ) प्रयोजनवादी समाधत्ते—अयं त्वन्य इति । अस्य हीति[2] । एवं च तत्तदर्थे व्याकरणाननुगतत्वमपशब्दत्वमिति भावः ।

[ प्रयोजनवादिनो भूयः प्रयोजनप्रदर्शनभाष्यम् ]

**अयं खल्वपि भूयोऽनुकरणशब्दोऽपरिहार्यो यदर्थ उपदेशः कर्तव्यः–'साध्लृकामधीते' 'मध्लृकारमधीते' इति ॥**

( प्रदीपः ) अयमिति । असाधोरनुकरणमित्येतदप्यत्र नास्तीति भावः ॥

( उद्द्योतः ) भाष्ये तुष्यतु दुर्जनन्यायेन साध्वनुकरणार्थत्वमृकारोपदेशस्याह—अयं खल्वपीति । यद्यप्यर्थशून्यवर्णानां न साधुत्वम्, तथापि वर्णोत्कारविधानेन तेषां साधुत्वमिति भावः ॥

[ उक्तप्रयोजनखण्डनार्थं प्रश्नभाष्यम् ]

**क्वस्थस्य पुनरेतदनुकरणम् ?॥**

[ सिद्धान्तिनः प्रयोजनस्थापनपरसमाधानभाष्यम् ]

**क्लृपिस्थस्य ॥**

[ खण्डनवादिन उक्तप्रयोजनखण्डनभाष्यम् ]

**यदि क्लृपिस्थस्य,—क्लृपेश्च लत्वमसिद्धं तस्याऽसिद्धत्वादृकार एवाऽच्कार्याणि भविष्यन्ति ॥**

[ सिद्धान्तिनः प्रयोजनस्थापनभाष्यम् ]

**भवेत्तदर्थेन नार्थः स्यात् । अयं त्वन्यः क्लृपिस्थपदार्थकः शब्दो यदर्थ उपदेशः कर्तव्यः ॥**

❀ राजलक्ष्मीः ❀

आवपने साधुरेवेत्यर्थविशेषे एव साधुत्वमसाधुत्वञ्च शब्दानां भवतीत्याशयः । सादृश्येन—सादृश्यरूपतया ।

( भाष्ये ) एवमिति । हननाऽनुहननपानानुपानादिवदित्यर्थः। साधुशब्दानुकरणार्थतां दर्शयन्नाह–अयमिति । सिद्धान्ती समाधत्ते—क्लृपिस्थस्येति । खण्डनवादी आह—यदीति । समाधत्ते–भवेदिति ।

❀ शब्दकौस्तुभः ❀

वत इति प्लुतप्रतिषेधापत्तिः, 'ह्रस्वस्य रवतो नेति' न्यासात् । किं त्वेवं सति ऌकारस्य ऌकारस्य प्रत्याख्यानाय सूत्रभङ्गाश्रयणे विपरीतमेव गौरवमिति तदेतदाह भाष्यकारः-

१ 'व्यक्तिभेदेनैव' पा०: २ अयं पाठः–'अस्य ही'त्यतः प्राक् सर्वत्र पुस्तकेषु दृश्यते । औचित्यात्त्वत्र स्थापितः ।

( प्रदीपः ) भवेदिति । प्रयोगस्थस्येदमनुकरणम्। प्रयोगे च 'पूर्वत्रासिद्ध'मिति नास्तीति भावः ।

( उद्द्योतः ) भवेत्तदर्थेनेति । तदर्थेन-कॢपिस्थलृकारार्थेन लृकारस्योपदेशेन प्रयोजनं न भवति—एवं यद्यपि भवेत्तथापि तदनुकरणार्थेनाऽर्थ इत्यर्थः । ननु कॢपिस्थस्यासिद्धत्वात्कथं तदनुकरणमत आह—प्रयोगस्थस्येति । प्रयोगे-अनुकरणप्रयोगे । शास्त्रे तदीयकार्ये वाऽसिद्धत्वं, पौर्वापर्यस्य तत्रैव संभवात् । न चैवं प्रकृते इति भावः ।

[ खण्डनवादिन उक्तप्रयोजनखण्डनभाष्यम् ]

**न कर्तव्यः । इदमवश्यं कर्तव्यम्— 'प्रकृतिवदनुकरणं भवति' इति ॥**

**किं प्रयोजनम् ?॥ 'द्विः पचन्त्वित्याह'। 'तिङ्ङतिङः' इति निघातो यथा स्यात् । 'अग्नी इत्याह'। 'ईदूदेद्द्विवचनं प्रगृह्य'मिति प्रगृह्यसंज्ञा यथा स्यात् ॥**

( प्रदीपः ) प्रकृतिवदिति । तत्र यथा कॄपेर्लत्वस्याऽसिद्धत्वादृकारद्वारेण लृकारस्याऽच्कार्यं तथानुकरणस्यापीत्यर्थः । द्विरिति । 'पचन्तु पचन्त्वि'ति केनचिदुक्ते द्विःपचन्त्वित्यनुकरणम् । एतच्च क्रियासाधनाद्यनभिधानात्तिङन्तं न भवति । एवमग्नी इत्यनुकरणं द्व्यर्थानभिधानान्न द्विवचनान्तम् । ननु गम्लृ सृपॢ इत्यादिस्थस्य यदानुकरणं तदा कथं प्रकृतिवद्भावः ? । द्युताद्यॢदित इति लृकारे परतो यणादेशकरणादित्संज्ञानुवादाच्च धात्वनुबन्धस्य लृकारस्याऽच्कार्याण्यनुमीयन्ते ततस्तदनुकरणस्य सिद्धः प्रकृतिवद्भावः ।

( उद्द्योतः ) ऋकारद्वारेणेति । ऋकारबुद्ध्येत्यर्थः । भाष्ये-द्विःपचन्त्विति । पचन्त्विति द्विराहेत्यन्वयः । अस्त्यतिदेशे तिङन्तत्वाऽभावे हेतुमाह—एतच्चेति । द्व्यर्थेति । एतदर्थमेव 'द्विवचन'मित्यन्वर्थसंज्ञाकरणम् । नन्विति । एवं च पाठान्तेमूलस्यैवाऽचत्वात्कथं तदनुकरणेऽच्कार्यमिति तदर्थ उपदेश आवश्यक इति भावः । अनुमीयन्त इति । इदं चिन्त्यम् । आनुमानिकवचनेन कृतस्य वर्णस्य प्रत्याख्यानाऽयोगात् । तस्माद्गम्लृ इत्यादिस्थ लृकारो धर्मोजनकत्वाच्च साधुरिति वक्तुं युक्तम् । एवं चाऽशक्तिजानुकरणेति वार्तिकेऽशक्तिजपदं व्यर्थमिति कैयटतात्पर्यम् ।

[ पूर्वपक्षिणोऽशक्तिजानुकरणार्थताखण्डनभाष्यम् ]

**यदि-'प्रकृतिवदनुकरणं भवती'त्युच्यते, अपशब्द एवाऽसौ भवति 'कुमार्ॡतक इत्याह' 'ब्राह्मण्ॡतक इत्याह' । अपशब्दो ह्यस्य प्रकृतिः ॥**

( उद्द्योतः ) एवं साध्वनुकरणार्थत्वे लृकारोपदेशस्य प्रकृतिवदित्याश्रयणेन खण्डिते तेनैवाऽशक्तिजानुकरणार्थत्वमपि खण्डयति पूर्वपक्षी भाष्ये—यदि प्रकृतिवदिति ।

[ सिद्धान्तवादिनोऽशक्तिजानुकरणार्थतास्थापनभाष्यम् ]

**न चाऽपशब्दः प्रकृतिः। न ह्यपशब्दा उपदिश्यन्ते, न चाऽनुपदिष्टा प्रकृतिरस्ति ।**

( प्रदीपः ) नचापशब्द इति ।-सिद्धान्तवादी । प्रकरणाद्धि शास्त्रीया प्रकृतिराश्रीयते, शास्त्रनिबन्धनं च कार्यमतिदिश्यते, अपशब्दश्च न शास्त्रीया प्रकृतिरनुपदिष्टत्वात् । नचाऽपशब्दत्वं शास्त्रीयं कार्यं, नापि तदतिदेष्टुं शक्यम् । नहि साधोरसाधुत्वातिदेशो युक्तिमान् । तदेवं भाष्यकारेणाऽशक्तिजानुकरणार्थत्वमॢकारोपदेशस्य स्थापितम् ।

( उद्द्योतः ) ननु मा भूदपशब्दोपदेशः, प्रकृतित्वं तु कथं नेत्यत आह—प्रकरणादिति । अतिदेशस्य शास्त्रीयत्वमनेन दर्श्यते । तत्र च प्रत्यासत्त्या शास्त्रीयप्रकृत्यादेरेव ग्रहणमुचितमिति भावः । उपलक्षणं भाष्यमित्याह—शास्त्रनिबन्धनं चेति । 'नापि तदतिदेष्टु'मित्यादि चिन्त्यम् । अब्राह्मणे ब्राह्मणत्वाद्यतिदेशवत्संभवादिति कश्चित् । तदेवमिति । अशक्तिजस्य शास्त्रीयप्रकृतित्वाभावान्न तदनुकरणेऽतिदेशप्रवृत्तिरित्यपशब्दत्वाभावादच्कार्यसिद्ध्यर्थम् । लृकारोपदेश इत्यर्थः ।

[ प्लुत्यर्थताप्रयोजनप्रत्याख्यानवार्तिकम् ]

*॥*॥ एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः॥*॥*

[ व्याख्याभाष्यम् ]

**'एकदेशविकृतमनन्यवद्भवति' इति प्लुत्यादयोऽपि भविष्यन्ति ।**

( प्रदीपः ) एकदेशविकृतस्येति । ऋकारे रेफभागस्य लत्वे कृते स एव ऋकार इति प्रत्यभिज्ञानादिति भावः ॥

※ राजलक्ष्मीः ※

प्रयोजननिरासवादी आह—न कर्तव्य इति । (उद्द्योते) कृतस्य—स्पष्टमुच्चरितस्य । युक्तमिति । एवश्च तदर्थता नोचितेत्याशयः । तेनैव-'प्रकृतिवदनुकरण'मित्यनेनैव । सिद्धान्तवादी अशक्तिजानुकरणार्थतां स्थापयति—नचेति ।

१ इदं कश्चिन्न । २ 'मूलस्यैवाच्त्वाभावात्' पा० । ३ 'एवं' पा० । ४ 'ले' पा० ।

( उद्द्योतः ) इदानीं प्लुत्याद्यर्थत्वं तस्य परिहरति भाष्ये-**एकादेशेति । रेफभागस्येति ।** वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पक्षे इत्यर्थः । **प्रत्यभिज्ञानादिति ।** एवं च छिन्नपुच्छश्वदृष्टान्तेन लोकन्यायसिद्धमस्य ऋत्वमित्यर्थः । व्याख्यानभाष्ये **अनन्यव**दित्यस्याऽन्यवन्नेत्यर्थः । अन्यसादृश्यस्याऽपि निषेधे तत्त्वं दृढीकृतम् ।

[ प्रयोजनवादिसिद्धान्त्येकदेशिन **आक्षेप**भाष्यम् ]

**यदि 'एकदेशविकृतमन्यवद्भवती'-त्युच्येत, 'राज्ञः क च' । राजकीयम् । 'अल्लोपोऽन' इति लोपः प्राप्नोति ॥**

[ प्रत्याख्यातृसिद्धान्त्येकदेशिनः समाधानभाष्यम् ]

**एकदेशविकृतमनन्यवत्षष्ठीनिर्दिष्टस्य ॥**

( प्रदीपः ) **षष्ठीनिर्दिष्टस्येति । 'राज्ञः क चे'**त्यत्र राजञ्शब्दः षष्ठीनिर्दिष्टो न त्वन्निति लोपाऽभावः ।

( उद्द्योतः ) सिद्धान्त्येकदेशी वर्तिं दृष्ट्वा **स्थानिव**त्सूत्रमनेनोपन्यस्तमित्याशयेनाह-**षष्ठीनिर्दिष्टस्येति।** तत्सम्बन्ध्येकदेशविकृतमादेशरूपमित्यर्थः । नन्व**ल्लोपोऽन** इत्यत्राऽन्नपि षष्ठीनिर्दिष्ट एवेत्यत आह—**राज्ञ इति ।** येन विकारेण यस्य विकृतस्य यद्रूपमेकदेशविकृतन्यायेन प्राप्यते तद्रूपावच्छिन्नस्य तेन रूपेण तद्विकारविधौ षष्ठीनिर्दिष्टस्येति तदर्थ इति भावः ।

[ प्रयोजनवादिभाष्यम् ]

**यदि—'षष्ठीनिर्दिष्टस्ये'त्युच्यते,'क्लृप्तशिख' इति प्लुतो न प्राप्नोति। नह्यत्र ऋकारः षष्ठीनिर्दिष्टः ॥ कस्तर्हि ? ॥ रेफः ॥**

( प्रदीपः ) यद्येवं **कृपो रो ल** इत्यत्रापि ऋकारः षष्ठ्या न निर्दिष्ट इत्यनन्यत्वं न प्राप्नोतीत्याह—**यदीति ।**

( उद्द्योतः ) भाष्ये-**प्लुतो न प्राप्नोतीति,**-द्विर्वचनादेरप्युपलक्षणम् । **कस्तर्हि रेफ इति ।** 'कृप' इति त्ववयवषष्ठीति भावः ।

[ प्रयोजनप्रत्याख्यातृभाष्यम् ]

**ऋकारोऽप्यत्र षष्ठीनिर्दिष्टः ॥ कथम् ?॥ अविभक्तिको निर्देशः—कृप उः रः लः- 'कृपो रो ल' इति ।**

( उद्द्योतः ) **कृप उरिति । कृपे** रेफस्य लस्तदवयवऋकारस्य च लकारघटित आदेश इत्यर्थः । स्थानिनिर्देश एव तादृशादेशकल्पक इति भावः । एतेन तस्यावयवषष्ठ्यन्तत्वेन स्थानषष्ठीनिर्दिष्टत्वाऽभावादिदं चिन्त्यमित्यपास्तम् ।

[ प्रत्याख्यातुरेव प्रथमवार्त्तिकस्थापनभाष्यम् ]

**अथवा पुनरस्त्वविशेषेण ।**

( प्रदीपः ) **अथवेति ।** 'षष्ठीनिर्दिष्टस्ये'ति नापेक्ष्यते ।

( उद्द्योतः ) ननु **स्थानिवत्सूत्रे** हि तथा, प्रकृते च न तेनातिदेश उच्यते, किं तु च्छिन्नपुच्छश्वदृष्टान्तेन प्रत्यभिज्ञयाऽनन्यत्वमुच्यते । तत्र 'षष्ठीनिर्दिष्टस्ये'ति वक्तुमेवाऽशक्यमित्याशयेनाह भाष्ये—**अथवेति ।**

[ आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तं—'राज्ञः क च' राजकीयम् 'अल्लोपोऽनः' इति प्राप्नोतीति ।**

[ आक्षेपबाधकभाष्यम् ]

**नैष दोषः । वक्ष्यत्येतत्—'श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्' इति । तत्प्रकृतमुत्तरत्राऽनुवर्तिष्यते—'अल्लोपोऽनः'। नकारान्तस्येति ।**

( प्रदीपः ) **नकारान्तस्येति ।** न च राजञ्शब्दः कादेशे कृते नकारान्तो भवति, श्वेव पुच्छे छिन्ने नै[2] पुच्छवानिति भावः ।

❀ राजलक्ष्मीः ❀

षष्ठीनिर्दिष्टसम्बन्धीत्यर्थः । **येन**-ककाररूपेणादेशेन । **यस्य**-अकरय। **यद्रूपम्**-अन्त्वम् । **तद्रूपावच्छिन्नस्य**-अन्त्वरूपावच्छिन्नस्य अनः । **तेन रूपेण**-अन्मात्रनिष्ठेनाऽन्त्वेन रूपेण । **तद्विकारविधौ**-ककाररूपविकारविधौ ।

प्रयोजनवादी सिद्धान्त्येकदेशी 'षष्ठीनिर्दिष्टस्ये'त्यस्योपादाने दोषमाह-**यदीति । अत्र**-कृपोरोल इति लत्वविधौ ।

प्रयोजनं खण्डयति-**ऋकार इति । ( उद्द्योते।) स्थानिनिर्देशः** 'उ'रिति स्थानषष्ठ्यन्तनिर्देशः। **तादृशेति।** लकारघटितेत्यर्थः । **एतेन**-'उ'रित्यस्य स्थानषष्ठ्यन्तत्वस्वीकारेण । **तस्य**-'उ'रित्यस्य । **इदम्**-'ऋकारोऽपि षष्ठीनिर्दिष्ट' इति भाष्यम् । स्थानषष्ठीत्वे हि अर्थासङ्गतिरितितदभिमानः । **अपास्तमिति ।** 'ऋकारस्य लकारघटित' इत्यर्थस्वीकारेण स्थानषष्ठीसत्त्वेऽर्थसङ्गतेरितिभावः । **तथा**-षष्ठीनिर्दिष्टस्येत्युक्तिसम्भवः । **तेन**-स्थानिवत्सूत्रेण ।

( **भाष्ये** ) खण्डक एवाह-**अथवेति ।** सिद्धान्त्येक-

१ इदं वार्त्तिकमिति **परे** ।

२ 'ने'ति कचित्र ।

( **उद्द्योतः** ) ननु कादेशेऽन्त्वमिवैकदेशविकृतन्यायेन नकारान्तत्वमपि कुतो नेत्यत आह— **न च राजन्निति** । एकदेशपदेन ससम्बन्धिकतयोपस्थितावयविषयं एव विकारविशिष्टे आरोप्यते, न त्ववयव एव, लोकव्यवहारादिति भावः।

[ प्रयोजनवादिन आक्षेपभाष्यम् ]

**इह तर्हि—क्लृ३प्तशिख । 'अनृत' इति प्रतिषेधः प्राप्नोति ।**

[ प्रत्याख्यातृसमाधानवार्तिकम् ]

*॥*॥ रवत्प्रतिषेधाच्च ॥*॥*

[ व्याख्याभाष्यम् ]

**रवत्प्रतिषेधाच्चैतत्सिध्यति । 'गुरोरवतः' इति वक्ष्यामि ।**

( **प्रदीपः** ) **अरवत इति** । रोऽस्यास्ति नित्यमिति नित्ययोगे मतुप् । तेन ऋकार एव रवान् न तु वर्त्तक इत्यादावकारः । न रवान्—अरवानिति समासः । नित्ययोगप्रतिपादनाय बहुव्रीहिर्न कृतो—**'गुरोररस्ये'ति ।**

( **उद्द्योतः** ) भाष्ये **इह तर्हीति** । एकदेशविकृतन्यायेन ऋत्वादिति भावः । **रोस्यास्तीति** । इदं चिन्त्यम्—अवयवादावेव मत्वर्थो नानन्तरादाविति वर्त्तक इत्यादौ रवत्त्वस्योपपादयितुमशक्यत्वान्नित्ययोगपर्यन्तधावनमफलमिति ।

[ आक्षेपभाष्यम् ]

**यदि 'अरवतः, इत्युच्यते, होतृ-ऋकार 'होतृ३कार' अत्र न प्राप्नोति ॥**

❀ राजलक्ष्मीः ❀

देशी 'प्लुत्यर्थ उपदेश आवश्यक' इति—शङ्कते—**इह तर्हीति** । एकदेशी प्रयोजनं प्रत्याचष्टे—**रवदिति** । ( **उद्द्योते** ) **रवत्त्वस्य**—ऋकारस्थानिकाकारे रेफघटितत्वस्य । **अफलमिति** । एवञ्च क्लृ३प्तशिखेत्यत्र रवत्त्वविरहादेव गुरोरवत

❀ शब्दकौस्तुभः ❀

**सेयंमहतो वंशस्तम्बाल्लटानुकृष्यतइति । लटा** पक्षिविशेषः, फलविशेषो वा । 'लट लौल्ये' इति धातोरशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्नित्यौणादिकः कन् । नेडशिकृतीतीडभावः । 'लटा करञ्जभेदे स्यात्फलेऽवद्ये खगान्तरे'इति विश्वः। ननु 'कृपोरोल'इति सूत्रम् 'अअ'इत्यस्मात्पूर्वमस्तु । एवं च लत्वस्याऽसिद्धत्वादेव प्लुत्यादयः सेत्स्यन्ति, नवाऽनृत इति निषेधापत्तिः । 'प्राचा'मिति योगविभागेन

१ ऋत्वेन लकारस्य प्लुतप्रतिषेधः ।

[ समाधानभाष्यम् ]

**'गुरोररवतो ह्रस्वस्ये'ति वक्ष्यामि ।**

( **प्रदीपः** ) **ह्रस्वस्येति** । तेन ह्रस्वस्यैव रवतः प्लुतनिषेधो न दीर्घस्य ।

[ सिद्धान्तिनो वार्त्तिकमतखण्डनभाष्यम् ]

**स एष सूत्रभेदेन-लृकारोपदेशः प्लुत्याद्यर्थः सन्प्रत्याख्यायते, सैषा महतो वंशस्तम्बाल्लटानुकृष्यते । [ ऋलृक् ] ॥ २ ॥**

( **प्रदीपः** ) वार्तिककारस्य लृकारप्रत्याख्यानं निष्प्रयोजनमित्याह—**सैषेति** ॥ २ ॥

( **उद्द्योतः** ) भाष्ये **स एष इति** । प्लुत्याद्यर्थं विद्यमान लृकारोपदेशोऽरवतो **ह्रस्वस्येति** गुरुन्यासरूपसूत्रभेदेन प्रत्याख्यायत इति यत्तदयुक्तमित्यर्थः । कुत इत्यत आह—**सैषेति** । यतः सैषा प्रत्याख्यानात्मिका उक्तिर्महतो वंशस्तम्बाल्लटानुकर्षाऽभिन्नेत्युक्ते यथा महतो वंशस्तम्बाल्लटानुकर्षणमयुक्तमेवम् लृकारप्रत्याख्यानमिति गम्यते । तदाह—**निष्प्रयोजनमिति** । सूत्रभेदपरिकल्पनं विना क्लृ३प्तशिखे प्लुतसाधनस्याऽशक्यत्वान्निष्प्रयोजनमित्यर्थः । **वंशस्तम्बादिति** । ल्यब्लोपे पञ्चमी । तमवलम्ब्येत्यर्थः । **लटा** पक्षिविशेषः, फलविशेषो वा । तथा बह्वायाससाध्यमल्पफलं न युक्तं तथा लृकारोपदेशप्रत्याख्यानमपीत्यर्थः ॥ २ ॥

*एओङ् ॥ ३ ॥ ऐऔच् ॥४॥*

[ सन्ध्यक्षरेषु अतपरत्वाऽतपरत्वविचारभाष्यम् ]

**इदं विचार्यते—'इमानि सन्ध्यक्षराणि**

प्लुतो भविष्यतीति नेदं प्रयोजनमिति खण्डयितुराशयः ।

( **भाष्ये** ) प्रयोजनवादी निरुक्तन्यासे दोषमाह—**यदीति** । एकदेशी दोषं निरसितुमाह—**गुरोरिति । स एष इति** । क्लृ३प्तशिखादौ प्लुत्याद्यर्थं विद्यमान लृकारोपदेशः सूत्रभेदेन वार्त्तिककृता प्रत्याख्यायते तदेतदतिगुर्वित्यर्थः ।

व्यवस्थितविभाषाश्रयणेन तदप्रवृत्तेः । अगतिकगत्याश्रयणन्तु सर्वेषां सममिति चेन्न, एवं हि सति'ग्रो' यङी'त्यस्याप्युत्कर्षः स्यात्तश्च लत्वस्याऽसिद्धतया 'निजेगिल्यते'इत्यत्र 'हलिचे'ति दीर्घः स्यात् । ननु बह्वृचप्रातिशाख्ये 'ऋकारलृकारावथ षष्ठोष्मा जिह्वामूलीया' इति ऋलृवर्णयोः स्थानसाम्योक्तेस्तद्रीत्या ग्रहणकशास्त्रेणैव निर्वाहाल्लृकारोपदेशो मास्त्विति चेन्न; उक्तरीत्या ऋलृवर्णयोः सावर्ण्योपसङ्ख्यानं परं प्रत्याख्यायताम् लृकारोपदेशस्तूक्तरीत्या क्लृ३प्तशिखे प्लुतसिद्धये सावर्ण्याऽनित्यतां ज्ञापयितुं कर्त्तव्य एवेति दिक् ॥ [ ऋलृक् ]

**तपराणि वोपदिश्येरन् 'एत् ओत् ङ्' 'ऐत् औत् च्' इति, अतपराणि वा यथान्यासम्–'इति ।**

( प्रदीपः ) **एओङ् । ऐऔच् । इदं विचार्यत इति ।** तपराऽतपरसन्ध्यक्षरोपदेशो विचायत इत्यर्थः । तत्रोपदिश्येरन्नित्यत्राऽसत्त्वभूता यद्यपि क्रियाभिधीयते, तथापि बुद्ध्या परामृष्टा सत्त्वरूपतामापादिता विचारक्रियायां कर्मभावमनुभवति यथा 'पश्य मृगो धावती'ति सरणं दर्शने ।

( उद्द्योतः ) **एओङ् । ऐऔच् । विचार्यतइति ।** कृत्वाचिन्तान्यायेनाऽयं विचार इति बोध्यम् । इदंपदार्थमाह–**तपरेति । असत्त्वभूतेति ।** एवंचेदमा परामर्शोऽनुपपन्न इति भावः । **बुद्ध्या परामृष्टेति ।** उपदेशपदार्थभूतेत्यर्थः । **कर्मभावमिति ।** इदंपदवाच्यत्वेनेति भावः । **यथेति ।** इदं चिन्त्यम् । कर्तृकर्मेतरकारकाऽभाववत्त्वस्यैवाऽसत्त्वपदार्थत्वात्[2] ॥

[ तपरातपरोपदेशे विशेषजिज्ञासाभाष्यम् ]

**कश्चात्र विशेषः ? ॥**

( प्रदीपः ) **कश्चात्रेति ।** कार्ये को विशेष इति प्रश्नः ॥

( उद्द्योतः ) पक्षद्वये स्वरूपवैलक्षण्यस्यानुभवसिद्धत्वेन तद्विषयः प्रश्नोऽनुचितोऽत आह–**कार्ये इति ।**

❀ राजलक्ष्मीः ❀

( भाष्ये ) **इदम्**—तपराऽतपरसन्ध्यक्षरोपदेशरूपं वस्तु । **विचरति**–तपराऽतपरसम्बन्धिभेदेन विविधं चरति-अतो हेतोः **विचार्यते**–संशयविषयतो नियम्यते इत्यर्थः । ( भाष्ये ) **सन्ध्यक्षराणि**–'ए ओ ऐ औ' इति चत्वारि । **इति**—इत्येवम् । 'अतपराणि वे'त्यस्य 'उपदिश्येर'न्निति शेषः । ( **प्रदीपे** ) **क्रिया**–उपदेशक्रिया । **विचारक्रियायाम्**–'इदं विचार्यते'इत्यत्र । **सरणं**-धावनम् । 'दर्शने' इत्यस्य 'कर्म भवती'ति शेषः ।

( **उद्द्योते** ) **कृत्वा चिन्तेति ।** स्वयं चिन्तामुत्थाप्य । तपरोपदेशो न्याय्योऽतपरोपदेशो वेति संशय्य ।

( **भाष्ये** ) **अत्र**–तराऽतपरोपदेशे ।

❀ शब्दकौस्तुभः ❀

**एओङ् । ऐऔच ।** यद्यपि छन्दोगानां मध्ये सात्यमुग्रिराणायनीया अर्द्धमेकारमर्द्धमोकारं चाधीयते, 'सुजाते ए(अ)श्वसूनृते' 'अध्वर्यो ओ(अ)द्रिभिः सुत'मिति, अन्तः पादस्थस्याऽन्यपरस्याकारस्यैङः परस्य तदीयप्रातिशाख्येऽर्द्धमेकारमोकारं च विदधति, तथापि प्रातिशाख्यसमाख्यावलादेव सर्वशाखासाधारणेऽस्मिन् शास्त्रे तस्य न ग्रहणम् । ज्ञापकाच्च । यदि हि अकारादिभिरष्टादशानामिव एङ्भिरपि एकमात्राणां ग्रहणं संमतं स्यात्तर्हीह लाघवार्थमेकमात्रावेव 'एङावुपदिशेत्, अकारादिवत् । न चैवमदेङ्गुण इत्यत्र तपरत्वान्मात्रिकयोरेव गुणसंज्ञा स्यादिति वाच्यम्, तत्र एओइतिस्वरूपेणैव दीर्घयोर्निर्देशेऽनण्त्वेन सवर्णाऽग्रहणोपपत्तेः । एवमप्यर्द्धमात्रालाघवात् । तव हि वर्णोपदेशे एओइतिर्दीर्घयोर्मात्राचतुष्टयम् । गुणसंज्ञायां तु एडितिसार्द्धद्वयम् । सङ्कलनया सार्धाः षण्मात्राः । मम तु वर्णोपदेशे मात्राद्वयम् । गुणसंज्ञायां तु चतस्र इति मिलिताः षडेव मात्राः । तस्माद्विमात्रनिर्देशसामर्थ्यादप्येकमात्रयोरनभिमतत्वं निर्णीयते । नन्वेवम् 'एच इग्घ्रस्वादेशे'इति व्यर्थं स्यात् । तद्धि स्थानेन्तरतमपरिभाषया प्राप्नुवतोरर्द्धैकाराद्धौकारयोर्निवृत्त्यर्थं क्रियतइति चेन्न, वैकल्पिकप्राप्तिमतोऽकारस्य व्यावृत्तये तदारम्भात् । एचां हि पूर्वो भागोऽकारसदृश उत्तरस्तु इवर्णोवर्णसदृशः, तत्र उभायान्तरतमस्य ह्रस्वस्याऽभावात्पर्यायेणाऽकारःस्यात्, इकारोकारौ च स्यातां, तस्मान्मा कदाप्यवर्णो भूदिति सूत्रारम्भः । वस्तुतस्तुप्रत्याख्यास्यते सूत्रम् । तथा च तत्र वार्त्तिककारो वक्ष्यति–**सिद्धमेङः सस्थानत्वात् । ऐचोश्चोत्तरभूयस्त्वादिति ।** अस्यार्थः–शब्दपरविप्रतिषेधेन एङ उत्तरभागान्तरतमौ इउवर्णावेवेति सिद्धम् । यद्वा–'एकारः शुद्धतालव्यः औकारस्तु शुद्धौष्ठ्य' इति मते सिद्धमित्यर्थः । तथा च बह्वृचानां प्रातिशाख्यम्,–'तालव्यावेकारचवर्गाविकारैकारौ यकारः शकार' इति । 'शेष ओष्ठ्योपपाद्य' इति च । पूर्वोक्तेभ्यः शेषो वर्णराशिरोष्ठाभ्यामुपपादयितव्यः । उवर्णः पवर्गः ओ औ उपध्मानीयश्च ओष्ठ्य इति सूत्रार्थः । इदं च प्रातिशाख्यवृत्तिकृता व्याख्यातम् । तद्भाष्ये तु 'शेष ओष्ठ्योपवाद्ये'ति पाठः । तत्र 'अपवाद्ये'त्यस्य उत्तरसूत्रे वक्ष्यमाणान्विहायेत्यर्थः । न्यायसिद्धस्यैव बाध्यबाधकभावस्य स्फुटीकरणार्थं चेदं सूत्रम् । तदेवं शब्दपरविप्रतिषेधान्मतभेदेन स्थानसाम्याद्वा सिद्धमिति समाधानद्वयं एङ्क्षु फलितम् । एतच्च यद्यप्यैक्ष्वपि तुल्यं तथापि तत्र समाधानान्तरमप्यस्तीत्याह–**ऐचोश्चेति ।** चकारो भिन्नक्रमः, हेतोरनन्तरं बोध्यः । 'अर्द्धमात्राऽवर्णस्य, अध्यर्द्धमात्रा इवर्णोवर्णयो'रितिपक्षे मल्लग्रामादिवद्भूयसा व्यपदेशादपि इकारोकारौ भविष्यत इत्यर्थः । समप्रविभागपक्षोऽप्यस्तीत्यष्टमे वक्ष्यते । तत्र तु पूर्वोक्तसमाधानद्वयमेव शरणम् । तत्रापि शब्दपरविप्रतिषेधपरं प्रथमव्याख्यानं यद्यपि विवरणे स्थितन्तथापि तदभ्युपगमेऽ**प्रतिपत्तिर्वोभयो**रित्यादि'विप्रतिषेधे पर'मितिसूत्रे वार्त्तिकं भाष्यं च विरुध्येत । नहि 'गोस्त्रियो'रितिसूत्रेण

1 अयं विषयो भाष्ये 112 पृष्ठे द्रष्टव्यः ।

2 एवञ्च'पश्यमृगे'त्यादौ दर्शनादिक्रियाया असत्त्वभूतत्वं निर्बाधमेव, कर्तृकर्मेतरकारकाभाववत्त्वस्य सुस्थत्वात् ।

[ तपरोपदेशपक्षदूषणवार्तिकम् ]

*॥*॥ सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम् ॥*॥*

[ वार्त्तिकव्याख्याभाष्यम् ]

**सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणं कर्तव्यम् ।**

( प्रदीपः ) **तपरोपदेशश्चेदिति ।** यद्यप्युपदेश उच्चारणं तथापि तपरोपदेशे फलं चेदस्ति ततस्तपरोच्चारणं कर्तव्यमित्यर्थः । **सन्ध्यक्षराणी**त्यन्वर्था पूर्वाचार्यसंज्ञा, सन्धीयमानावयवत्वात् ॥

( उद्द्योतः ) भेदाऽभावादुद्देश्यविधेयभावोऽनुपपन्न इत्याशङ्क्य परिहरति-**यद्यपीत्यादि । फलं चेदिति ।** संप्रदाने घञिति भावः । फलस्यैव करणत्वविवक्षया करणे घञित्यन्ये । **सन्धीयमानावयवत्वादिति ।** 'अ इ उ'णिति शिष्यमाणवर्णसदृशावयवसन्धानेनाऽस्य निष्पन्नत्वादित्यर्थः ॥

[ तपरोपदेशपक्षदूषणवार्तिकम् ]

*॥*॥ प्लुत्यादिष्वज्विधिः ॥*॥*

[ व्याख्याभाष्यम् ]

**प्लुत्यादिष्वजाश्रयो विधिर्न सिध्यति । गो३त्रात नौ४त्रात इत्यत्र 'अनचि चे'त्यच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोति । इह च 'प्रत्यङ्ङै४तिकायन' 'उदङ्ङौ४पगव' इति 'अची'ति ङमुडागमो न प्राप्नोति ॥**

( प्रदीपः ) **प्लुत्यादिष्विति ।** प्लुतसंज्ञामभ्युपगम्या'ऽच्कार्याणि न सिध्यन्ती'त्युच्यते ॥

( उद्द्योतः ) भाष्ये प्लुतिग्रहणं त्रिमात्रपरम् । आदिना चतुर्मात्रग्रहणम् ॥

[ तपरोपदेशपक्षदूषणवार्तिकम् ]

*॥*॥ प्लुतसंज्ञा च ॥*॥*

[ व्याख्याभाष्यम् ]

**प्लुतसंज्ञा च न सिध्यति । ऐ३तिकायन । औ३पगव । 'ऊकालोज्झ्रस्वदीर्घप्लुतः' इति प्लुतसंज्ञा न प्राप्नोति ॥**

## ❀ राजलक्ष्मीः ❀

**तपरोपदेशः**-तपरोपदेशः सफलश्चेत् । **(उद्द्योते) भेदाभावात्**—तपरोपदेश-तपरोच्चारणयोर्भेदाऽभावात् । **सम्प्रदानइति ।** तपरस्य उपदेशो यस्मै स तपरोपदेशः । तपरोपदेशफलमिति तदर्थः । **वर्णसदृशेति ।** अइउणित्यत्रोपदिश्यमानाऽकारादिवर्णसदृश**रमेशा**दिलक्ष्यस्थाऽकारेकाराद्यवयव-सन्धानेन **अस्य**-एच एकारादेर्निष्पन्नत्वादित्यर्थः ।

( भाष्ये ) **'गो३त्रात'**रिति तृजन्तस्य सम्बोधने रूपम् । क्वचित्तु 'गोत्राते'तिपाठः । तत्र क्तान्तस्य सम्बोधनं बोध्यम् । 'गोत्रातः' इति क्तान्तस्य प्रथमाया रूपमित्यन्ये । 'गुरोरनृत' इति प्लुतः । स च 'प्लुतावैच इदुता'विति सन्ध्यक्षरपरभागस्थेति अकारस्य एकामात्रा परभागस्थयोरिदुतोः प्लुते तिस्रो मात्रा इति चतुर्मातृकता प्रकृते बोध्या । **(प्रदीपे) प्लुतसंज्ञां**-प्लुतं प्लुतसञ्ज्ञाचेत्यर्थः । प्लुतसंज्ञायां सत्यां हि प्लुतो

## ❀ शब्दकौस्तुभः ❀

गोशब्दे विधीयमानो ह्रस्वोऽन्यत्र चरितार्थो येनाऽप्रतिपत्तिः स्यात् । ननु प्रतिलक्ष्यं लक्षणभेदेन विकल्पे प्राप्ते परमेवेति नियमोऽस्त्विति चेन्न; एवं हि सति 'अचः परस्मि'न्निति-सूत्रे-**'नित्यः परयणादेशः परश्चासौ व्यवस्थया । युगपत्सम्भवो नास्ति बहिरङ्गेण सिध्यती'**त्यादि-भाष्यसन्दर्भो विरुध्येत । तद्बलेन हि लक्षणवाक्ययोः पूर्वापरीभाव एव विप्रतिषेधसूत्रस्य विषयोऽन्यस्तु अन्तरङ्गस्य-लवदित्यस्येति लभ्यते । इदं च तत्रैव स्फुटीकरिष्यामः । द्वितीयव्याख्यानमपि अर्द्धैकारादिवत्प्रातिशाख्योक्तस्य प्रायेणाऽनादराद्दुर्बलम् । अथ छन्दोगाभिमतस्यापि चतुर्मात्रस्य तपरकरणव्यावर्त्यतोक्तेस्तद्वदिहाप्यभ्युपगमस्तर्हि ऋलृक्सूत्रोक्तरीत्या 'ऋकारलृकारयोः सवर्णविधि'रितिवार्तिकमपि प्रत्याख्यातुं शक्यम् । अथ शिक्षान्तरानुसारेण वार्त्तिकारम्भस्तर्हि 'एचइ'गितिसूत्रारम्भोपि तथैवास्त्विति दिक् । तस्मादेच इगिति-सूत्रबलेनार्द्धैकारार्द्धौकारौ न लभ्यते इति स्थितम् ।

ननु प्रातिशाख्योक्तावपि ताविह गृह्येते चेत्तदा किमनिष्टमापद्येत येन तयोरग्रहणं यत्नतः प्रतिपादयसीति चेन्न; एचो ह्रस्वविधौ अन्तरतमत्वेन तयोरेव प्रसङ्गात् । 'एच इ'गिति सूत्रं तु प्रत्याख्यातमेव । एतदर्थमेव सूत्राभ्युपगमे तु गौरवमेव दोषः ।

स्यादेतत् । एत् ओत् ङ् इत्यादिक्रमेण तपरानेव निर्देक्ष्यामः । तथा च ऊकालसूत्रे अच्शब्देन तपराणामेवोपस्थितौ सत्यां तत्कालग्रहणादर्द्ध एकार ओकारो वा ह्रस्वसंज्ञां न लभेत, तेन ह्रस्वविधिविधेयोऽप्यसौ नेति । मैवम् । त्रिमात्राणामप्यनच्त्वापत्तेः । ततश्च'गो३त्रात इत्यत्र'अनचि चे'त्यचः परस्य विधीयमानं द्वित्वं तकारस्य न स्यात् । प्रत्यङ्ङैतिकायन' 'उदङ्ङौपगव' इति ङमुण्न स्यात् । प्लुतसञ्ज्ञाविरहात् प्लुतविधिर्न प्रवर्त्तेत । न च 'ओमभ्यादाने'इत्यादिविधिसामर्थ्यात्तत्सिद्धिः, उवर्णविधानेन चरितार्थत्वापत्तेरिति दिक् । तदेतदाह वार्त्तिक·

१ आस्तां प्लुत्यादिष्वज्विधिः प्लुतसञ्ज्ञैव तावन्न प्राप्नोतीत्यर्थः ।

( प्रदीपः ) प्लुत एव न प्राप्नोतीति दर्शयितुमाह-**प्लुतसंज्ञा चेति** । त्रिमात्रस्याऽचः प्लुतसंज्ञा विधीयते, तपरत्वे च त्रिमात्रस्याऽग्रहणादच्त्वाऽभावः । तत्रैचां प्लुतो विधीयमान इकारोकाराभ्यां गृहीत ईकार उकारश्च स्यात् ॥

( उद्द्योतः ) **नन्वोमभ्यादाने** इत्यादिनान्तरतमपरिभाषासंस्कृतेनैजरूपप्लुतविधानादनच्त्वेपि तेषां प्लुतसंज्ञा भविष्यतीत्यत आह-**तत्रैचामिति** । ताभ्यामपि तेषां यथाकथंचिदान्तरतम्यसत्त्वादिति भावः ॥

[ सिद्धान्तिनोऽतपरपक्षाभ्युपगमभाष्यम् ]

**सन्तु तर्ह्यतपराणि ॥**

[ एकदेशिनोऽतपरपक्षदूषणवार्तिकम् ]

*॥*॥ अतपर एच इग्घ्रस्वादेशे ॥*॥*

[ व्याख्याभाष्यम् ]

**यद्यतपराणि 'एच इग्घ्रस्वादेशे' इति वक्तव्यम् ॥ किं प्रयोजनम् ?॥ एचो ह्रस्वादेशशासनेष्वर्धं एकारोऽर्धं ओकारो वा मा भूदिति ॥**

( प्रदीपः ) **अतपर इति** । असतीह तपरत्वे एकारौकाराभ्यां मात्रिकयोरर्धैकारार्धौकारयोर्ग्रहणादच्त्वाद्ध्रस्वत्वाद्विधानं स्यादिति सूत्रं कर्तव्यम् । तपरत्वे तु तयोरग्रहणात्प्राप्त्यभावः ॥

( उद्द्योतः ) भाष्ये **अर्धं एकार इति** । मात्रिकत्वेनाऽर्धत्वम् । समांशवाचिनोऽपि पुंस्त्वमेतद्भाष्यप्रामाण्यात् ।

[ अतपरवादिनः शङ्काभाष्यम् ]

**ननु च यस्यापि तपराणि, तेनाप्येतद्वक्तव्यम् । इमावैचौ समाहारवर्णौ-मात्राऽवर्णस्य, मात्रेवर्णोवर्णयोः । तयोर्ह्रस्वादेशशासनेषु कदाचिदवर्णः स्यात् कदाचिदिवर्णोवर्णौ, मा कदाचिदवर्णो भूदिति ॥**

( प्रदीपः ) **ननु चेति** । सूत्रारम्भं प्रति न कश्चिद्विशेष इत्यर्थः । अतपरत्वे 'एच'इति वक्तव्यं,

❀ राजलक्ष्मीः ❀

भवति । **(भाष्ये) अतपराणि**-तपररहितान्येव सन्ध्यक्षराणि । **अतपरे**-अतपरत्वपक्षे । **अर्धः**-मात्रिकः । तपरत्वे तु द्विमात्रिकस्यैवैच्पदेन ग्रहणं न त्वेकमात्रिकस्येति नैकमात्रिकस्याऽच्त्वमिति तस्य ह्रस्वत्वाभावादप्राप्त्या इकारोकारावेव भविष्यत इति तत्सूत्रं निष्फलमित्याशयः ।

**( भाष्ये ) यस्यापि**-यस्यापि मते । **एतद्**-'एच

❀ शब्दकौस्तुभः ❀

कारः-**सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणात्प्लुत्यादिष्वज्विधिः । प्लुतसंज्ञा च । अतपर एच इग्घ्रस्वादेशेऽएकादेशे दीर्घग्रहण'**मिति।अस्यार्थः-श्लिष्यमाणवर्णद्वयसदृशावयवत्वात्सन्धीयमानमक्षरं सन्ध्यक्षरमित्यन्वर्था पूर्वाचार्यसिद्धा एचां संज्ञा। तपर उपदिश्यतेऽनेनेति करणव्युत्पत्त्या प्रयोजनमुच्यते । तथा च एचां तपरत्वोच्चारणे फलमस्ति चेत्तर्हि तपरोच्चारणं तावत्कर्त्तव्यम् । प्लुतत्वे सत्यप्यज्विधिद्वित्वङमुडादिर्न सिद्ध्यति । तत्राऽप्लुतस्यैव ङमुडादिः, तस्मात्परस्य द्वित्वमिति सूचयितुमादिशब्दः । प्लुते तदुत्तरवर्णेषु चेष्टं कार्यं न सिध्यतीत्यर्थः । अभ्युपेत्यवादोऽयम् । वस्तुतस्तु अनच्त्वात्प्लुतसंज्ञैव न सिध्यति । तस्माद्दुष्टस्तपरनिर्देश इति वार्त्तिकत्रयेणोक्तम् । यथान्यासपाठे त्वाह-**अतपर इति** । सूत्रं कर्त्तव्यं स्यादर्धैकारादिनिवृत्तये इत्यर्थः । वस्तुतस्तु उभाभ्यामपि सूत्रं कर्त्तव्यम् , उभाभ्यामपि न वा कर्त्तव्यमिति समनन्तरमेवोपपादितम् । तस्मान्नायं दोष उद्भावनार्हः, पक्षद्वयसाधारण्यात् ।

स्यादेतत्-तपरत्वाऽभावपक्षे 'गङ्गोदकं' 'रमेश' इत्यादौ त्रिमात्रचतुर्मात्राणां स्थाने त्रिमात्रचतुर्मात्रा एवादेशाः स्युः, आन्तरतम्यात् । नचाऽकः सवर्ण इति सूत्रे 'दीर्घ' इति योगं विभज्य 'एकः पूर्वपरयो' रित्यधिकारे यो विहितः स दीर्घो भवती'ति व्याख्यानान्न त्रिमात्राद्यादेश इति वाच्यं, 'पशुं विद्धं पचन्ती'त्यत्र दोषप्रसङ्गात् । ननु 'अमी'त्येव सूत्रमस्तु । प्रथमयो'रिति सूत्रात्पूर्वसवर्णोऽनुवर्त्तते, 'एकः पूर्वपरयो'रिति च । एवं सिद्धे पूर्वग्रहणं-यथाजातीयकः पूर्वः स एव यथा स्याद्दीर्घो मा भूदिति । तेन 'पशु'मिति तावत्सिद्धम् । 'सम्प्रसारणाच्चे'त्यत्रापि स एव पूर्वशब्दोऽनुवर्त्तते । 'हल' इति सूत्रारम्भसामर्थ्याद्वा 'संप्रसारणाच्चे'त्यनेन दीर्घो न विधीयते । तेनं 'विद्ध'मित्यपि सिद्धम् । 'अतो गुण' इत्यत्रापि 'पर' इत्येव सिद्धे 'रूपग्र'हणसामर्थ्याद्यादृशः परस्तादृश एवादेशो न तु तद्विलक्षणः । तेन 'पचन्ती'त्यपि सिद्धम् । तस्माद्योगविभागेन एकादेशो दीर्घो भवतीति पक्षो निर्दोष एवेति चेन्न; एवं सति 'कृष्णर्द्धिः' 'तवल्कार' इत्याद्यसिद्धिप्रसङ्गात् । इह हि दीर्घवचनादकारो न, अनान्तर्यादेदोतौ न । तस्माद्दीर्घ इति योगविभागो दुष्ट एव । तेन 'गङ्गोदकं 'रमेश' इत्यत्र त्रिमात्रचतुर्मात्रप्रसक्तिर्दुर्वारैवेति । न च 'प्लुतश्च विषये

१ 'गोस्त्रियोः' 'ह्रस्वो नपुंसके' इत्यादिषु ह्रस्वविधिषु ।

२ अयं विषयः ११३-११४ पृष्ठे भाष्ये द्रष्टव्यः ।

तपरत्वे त्वैच इति । ऐचोर्विश्लिष्टाऽवर्णत्वात्संश्लिष्टावर्णावर्द्धैकाराद्धौंकारौ न भवतः ।

( उद्योतः ) भाष्ये **तेनाप्येतद्वक्तव्यमित्यत्र** एतच्छब्देन नियामकं सूत्रं परामृश्यते । सूत्रन्यासभेदेऽपि गुरुलाघवकृतो विशेषो नास्तीत्याह-**सूत्रारम्भं प्रतीति । विश्लिष्टेति ।** उपलभ्यमानेत्यर्थः । **संश्लिष्टेति ।** स्पष्टमनुपलभ्यमानेत्यर्थः । एवं चैङ्विषये नाऽवर्णप्राप्तिः । अर्द्धैङोस्तु तपरनिर्देशेऽनच्त्वाद्ध्रस्वत्वमेव नेति भावः । एङोः शुद्धतालव्यादित्वमेवेति न तयोः स्थानेऽवर्णप्राप्तिरिति तत्त्वम् । **संश्लिष्टावर्णा**विति कैयटस्याप्यत्रैव तात्पर्यम् ।

[ तपरत्वादिमते सिद्धान्तिनः समाधानभाष्यम् ]

**प्रत्याख्यायत एतत्,-"ऐचोश्चोत्तरभूयस्त्वात्"—इति ॥**

( प्रदीपः ) **ऐचोश्चेति ।** अर्धमात्राऽवर्णस्याऽध्यर्धमात्रेवर्णावर्णयोर्भूयसा च व्यपदेशो मल्लग्रामादिवदितीकारोकारावेव भविष्यतः ॥

( उद्योतः ) भाष्ये **प्रत्याख्यायत एतदिति । एतत्**-ऐज्विषय**मैच इ**गिति सूत्रम् । वर्तमानसामीप्ये लट् । **भूयसा चेति ।** तद्वारकभूयःस्थानसाम्यादित्यर्थः । [इदं च मतमष्टमेऽपि भाष्ये स्पष्टम् ।'शब्दपरविप्रतिषेधेनोत्तरभागसदृश' इति **विवरणो**क्तं तु चिन्त्यम् । अन्तरङ्गत्वेन पूर्वसदृशस्यैवाऽऽपत्तेः । स्पष्टं चेदं **'नित्यः परयणादेशः'** इत्यादिना **'अचः परस्मिन्नि'**त्यत्र भाष्ये ॥]

[ अतपरत्वादिसिद्धान्तिसमाधानभाष्यम् ]

**यदि प्रत्याख्यानपक्षः, इदमपि प्रत्याख्यायते-"सिद्धमेङः सस्थानत्वात्"इति॥**

( प्रदीपः ) **सिद्धमेङ इति ।** अर्धैकाराधौंकारौ न स्तः, तत्र तालव्य एकार ओष्ठ्य ओकार इति तयोः स्थाने इकारोकारावेव भविष्यतः ॥

( उद्योतः ) भाष्ये **इदमपीति ।** एङ्विषयमपीत्यर्थः । **सस्थानत्वादिति ।** इकारोकाराभ्यां समानस्थानत्वादित्यर्थः । तदाह-**तालव्य इति ।** तालव्य एवेत्यर्थः॥

[ सूत्रावश्यकताप्रदर्शनायाक्षेपभाष्यम् ]

**ननु चैङः सस्थानतरावर्ध एकारोऽर्ध ओकारः ॥**

[ समाधानभाष्यम् ]

**न तौ स्तः । यदि हि तौ स्यातां तावेवाऽयमुपदिशेत् ॥**

( प्रदीपः ) **तावेवेति ।** ताभ्यामुपदिष्टाभ्यां दीर्घप्लुतयोरपि ग्रहणं सिध्यतीति भावः । गुणसंज्ञायां तु दीर्घावेवैकारोकारौ निर्देश्यौ ॥

( उद्योतः ) भाष्ये-**तावेवेति ।** लाघवादिति भावः । **ग्रहणमिति ।** प्रदेशेष्विति शेषः । नन्वेवं मात्रिकयोरेव गुणसंज्ञा स्यादत आह-**गुणेति ।** एवमपि अत्र ह्रस्वपाठेऽर्धमात्रालाघवं भवति ॥

[ अर्धैकारौकारसत्त्वे लक्ष्यप्रदर्शनपरमाक्षेपभाष्यम् ]

**ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते-सुजाते एश्वसूनृते'"अध्वर्यो ओद्रिभिः सुतम्' 'शुक्रं ते एन्यद्' 'यजतं ते एन्यत्'-इति ॥**

( प्रदीपः ) **सुजात इति ।** अन्तःपादस्थस्याऽव्यपरस्याऽकारस्यार्धमेकारमर्धमोकारं च विदधति ॥

( उद्योतः ) **अकारस्यार्धमिति ।** 'सुजाते ए अश्वे'ति अकारलेखस्तु प्रामादिकः ॥

❀ राजलक्ष्मीः ❀

इ'गित्यादि नियामकं सूत्रम् । ( **उद्योते** ) **एवं च**-एङोः संश्लष्टावर्णतया च । **शुद्धेति ।** अकारस्यास्पष्टतया शुद्धतालव्यादित्वमेवैङोरित्याशयः। (**उद्योते**) **इदं मतम्**-अर्धमात्राऽवर्णस्य सार्धमात्रेवर्णोवर्णयोरितिमतम् ( **प्रदीपे** ) **ताभ्याम्**-एकमात्रिकाभ्याम् । ( **उद्योते** ) **प्रदेशेषु**-वृद्धिसञ्ज्ञासूत्रादिषु । **अर्धमात्रेति ।** ए ओडित्यत्र सिद्धान्ते दीर्घपाठे ए ओरित्यनयोर्मात्राचतुष्टयम् । 'अदेङ्गुण' इत्यत्र एङित्यस्य २॥ सार्धमात्राद्वयम् । सङ्कलनया ६॥ सार्धषण्मात्राः । ए ओङित्यत्र ह्रस्वपाठेतु ए-ओ इत्यनयोर्मात्राद्वयम् । 'अदेओ गुण' इति न्यासे च 'एओ' इत्यनयोर्दीर्घतया मात्राचतुष्टयमिति ६ षण्मात्रा भवन्तीत्यर्धमात्रा लाघवं स्पष्टमेवेत्याशयः ।

❀ शब्दकौस्तुभः ❀

स्मृत' इति वाच्यम् । प्लुताऽप्लुतप्रसङ्गे सत्येव तदिति वक्ष्यमाणत्वात् । ननु तथापि चतुर्मात्रः कथमापद्यते तस्य लोकवेदयोर प्रसिद्धेरिति चेन्न; छान्दोग्ये प्रसिद्धेरित्याहुः । वस्तुतस्तु लोकेऽप्यस्ति प्रसिद्धिः । तथा च 'प्लुतावैच इदुता'विति सूत्रे भाष्यकारो वक्ष्यति-इष्यत एव चतुर्मात्रः प्लुत' इति ।

१ अयं पाठः 'तालव्य एवेत्यर्थः' इत्यतोऽग्रे एव सर्वत्रोपलभ्यते । २ चः क्वचिन्न ।

[ समाधानभाष्यम् ]

**पारिषदकृतिरेषा तत्रभवताम्। नैव हि लोके नान्यस्मिन्वेदेऽर्ध एकारोऽर्ध ओकारो वाऽस्ति ॥**

( प्रदीपः ) **पारिषदकृतिरिति।** गीतिवशात्तथोच्चारणमित्यर्थः ॥

( उद्द्योतः ) शास्त्रविशेषाध्यायिनां समवायः परिषत्, पर्षद्वा। तत्र भवा कृतिरित्यर्थः ॥

[ अतपरपक्षेऽसाधारणदूषणवार्तिकम् ]

॥*॥ एकादेशे दीर्घग्रहणम् ॥*॥

[ व्याख्याभाष्यम् ]

**एकादेशे दीर्घग्रहणं कर्तव्यम्–'आद्गुणो दीर्घः' 'वृद्धिरेचि दीर्घः' इति ॥**

**किं प्रयोजनम्?॥**

**आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति। खट्वा–इन्द्रः खट्वेन्द्रः। खट्वा–उदकं खट्वोदकं। खट्वा–ईषा खट्वेषा। खट्वा–ऊढा खट्वोढा। खट्वा–एलका खट्वैलका। खट्वा–ओदनः खट्वौदनः। खट्वा ऐतिकायनः खट्वैतिकायनः। खट्वा औपगवः खट्वौपगव इति ॥**

( प्रदीपः ) **आन्तर्यत इति।** अन्यस्याऽसम्भवादिदमत्र नास्ति–'प्लुतश्च विषये स्मृत' इति ॥

( उद्द्योतः ) तदेवमतपरतपरवादिमतसाधारण्येनैच इगितिसूत्रस्य कर्तव्यताऽकर्तव्यते उपपाद्याऽतपरवादिमतेऽसाधारणं दूषणमाह भाष्ये–**एकादेशे इति।** 'एकः पूर्वपरयोर्दीर्घ' इति सूत्रं कार्यमित्यर्थः। **अन्यस्यासंभवादिति।** अयं भावः–यथा **स्थाघ्वोरित्य**त्राऽतपरत्वे स्थाघ्वोर्दीर्घस्य स्थाने **घुमास्थे**त्येव दीर्घेकारे सिद्धे पुनर्वचनमदीर्घार्थमित्यविशेषाद्ध्रस्वप्लुतयोः प्रसङ्गे तदुक्तं **'प्लुतश्च विषये'** इति। एवं च दूराद्धूतादिविषयेऽप्यनेनैव प्लुते पक्षेऽनुवाददोषस्तत्र। इह तु प्लुत एव प्राप्नोतीति खट्वा इन्द्र इत्यादिविषयकशास्त्रवैयर्थ्यमेवेत्यनुवाददोषः सोढव्य एवेति वैषम्यमिति। वस्तुतोऽस्य टित्वाभावादेतद्विषये प्लुताऽप्रवृत्तेश्चिन्त्यमेवेदमिति **स्थाघ्वोरि**तिसूत्रे निरूपयिष्यामः॥

[ तटस्थजिज्ञासाभाष्यम् ]

**तत्तर्हि दीर्घग्रहणं कर्तव्यम्?॥**

[ एकदेशिनः समाधानभाष्यम् ]

**न कर्तव्यम्। उपरिष्टाद्योगविभागः करिष्यते–'अकः सवर्णे'। [ अकः सवर्णे ] एको भवति॥ ततो–'दीर्घः'। दीर्घश्च स भवति यः स 'एकः पूर्वपरयोः' इत्येवं निर्दिष्ट इति ॥**

[ उद्द्योतः ] भाष्ये **यः स इति** प्रसिद्ध्यर्थकम्॥

[ अतिप्रसङ्गाशङ्काभाष्यम् ]

**इहापि तर्हि प्राप्नोति-पशुं, विद्धं, पचन्तीति ॥**

[ अतिप्रसङ्गोद्धारभाष्यम् ]

**नैष दोषः। इह तावत्पशुमिति। 'अम्येकः' इतीयता सिद्धम्। सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम्–'यथाजातीयकः पूर्वस्तथाजातीयक उभयोर्यथा स्या'दिति ॥**

**'विद्ध'मिति। 'पूर्व'इत्येवानुवर्तते ॥ अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति–'नानेन संप्रसारणस्य दीर्घो भवती'ति यदयं हल उत्तरस्य संप्रसारणस्य दीर्घत्वं शास्ति ॥ 'पचन्ती'ति।'अतो गुणे परः'इतीयता सिद्धं। सोऽयमेवं सिद्धे सति यद्रूपग्रहणं करोति तस्यैतत्प्रयोजनम्–'यथाजातीयकं परस्य रूपं तथाजातीयकमुभयोर्यथा स्या'दिति ॥**

❀ राजलक्ष्मीः ❀

( भाष्ये ) **पार्षदेति।** गानादिसौकर्याय स्वेच्छयोच्चारणमित्यर्थः। ( उद्द्योते ) **पक्षे**–दूराद्धूतादिविषये। **तत्र**–स्थाघ्वोरिच्चेत्यत्र। एकदेशी समाधत्ते–**नेति।**

❀ शब्दकौस्तुभः ❀

अत्रोच्यते–गुणसंज्ञायां वृद्धिसंज्ञायां च तपरनिर्देशान्नोक्तदोषः। तदेतदुक्तं वार्त्तिककृता,–**एकादेशे दीर्घग्रहणमिति।** तस्यैव संज्ञित्वादिति भावः। न त्वेतद्वार्त्तिकं दीर्घग्रहणान्तरकर्त्तव्यतापरं नापि योगविभागपरम्।उक्तयुक्तेः॥ स्यादेतत्,–संज्ञासूत्रेऽदातोस्तपरकरणेऽपि एङैचोः कथं तत्कालग्राहकता?।'सहिवहोरो'दिति सूत्रे वर्णग्रहणेन 'तात्पर' इति पञ्चमीसमासस्यापि ज्ञापितत्वादितिचेत्; एवमपि तात्पराभ्यामेङैच्छब्दाभ्यामस्तु दीर्घाणामेवोपस्थितिः, उपस्थितैस्तु दीर्घैः स्वसवर्णानामशेषाणां ग्रहणं दुर्वारमेव। नहि तेऽपि तात्पराः, अनुच्चारितत्वात्। ग्राहकत्वं परमनुच्चारितानामपि प्रत्याहारैरुपस्थितानामस्त्येव, 'दीर्घाञ्जसिचे'ति ज्ञापकात्।

१ अयं पाठः सर्वत्र लुप्तोऽपि योग्यतयाऽस्माभिः स्थापितः। २ दीर्घः प्राप्नोतीत्यर्थः।

(प्रदीपः) **अम्येक इति** 'प्रथमयो'रिति सिद्धे एतदपि किमर्थमुच्यते इति चेद्वा छन्दसीत्यत्रानुवृत्त्यर्थम् ॥ तस्मात् पूर्वश्रुतिः पूर्वरूपार्था । सैवोत्तरत्रानुवर्तते इति'विद्ध'मिति पूर्वरूपं भविष्यति।

**अथवेति।** 'विधिनियमसम्भवे विधिरेव बलीया'निति विधेर्बलीयस्त्वान्नियमो न भवति-'हल एव दीर्घत्वं यथा स्यात्,उत इत्यादौ मा भू'दिति ।

(उद्द्योतः) **वा छन्दसीत्यत्रेति।** 'वा छन्दसी'त्यस्यात्रानुवृत्त्यर्थमित्यर्थः। **पूर्वरूपार्थेति।** पूर्वव्यक्त्यात्मकपूर्वरूपार्थेत्यर्थः। माष्ये-**पर इतीयतेति।** ह्रस्वत्वादिरूपमिति भावः। सिद्धान्ते तु रूपग्रहणं स्पष्टार्थमेव, अस्य भाष्यस्य पूर्वपक्ष्युक्तित्वात्।

[अतिप्रसङ्गान्तराशङ्काभाष्यम्]

**इह तर्हि खट्वर्श्यो मालर्श्य इति दीर्घवचनादकारो न, अनान्तर्यादैकारौकारौ न ॥ तत्र को दोषः ? ॥ विगृहीतस्य श्रवणं प्रसज्येत ॥**

(उद्द्योतः) **अकारो नेति।** रपरत्वेऽपि द्विमात्रत्वरूपदीर्घत्वाऽसम्भव एव। **विगृहीतस्येति।** दीर्घश्रुतिपरिभाषयोर्विरोधेन जातिपक्षे व्यक्तिपक्षे वा तद्विषयकलक्षणानुप्लवादिति भावः।

[वार्तिकसमर्थनाय तदाशयोद्घाटनभाष्यम्]

**न ब्रूमो—'यत्र क्रियमाणे दोषस्तत्र कर्तव्य'मिति॥ किं तर्हि ?॥ यत्र क्रियमाणे न दोषस्तत्र कर्तव्यमिति ।**

**क्व च क्रियमाणे न दोषः ? ॥**

**संज्ञाविधौ । 'वृद्धिरादैज्दीर्घः' 'अदेङ्गुणो दीर्घ' इति ॥**

[आक्षेपभाष्यम्]

**तेत्तर्हि दीर्घग्रहणं कर्तव्यम् ?॥**

[वार्तिकखण्डनपरसिद्धान्तिसमाधानभाष्यम्]

**न कर्तव्यम् ॥**

[मध्यस्थप्रश्नभाष्यम्]

**कस्मादेवान्तर्यतस्त्रिमात्र[2]चतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ? ॥**

[सिद्धान्तिनः समाधानभाष्यम्]

**तपरे गुणवृद्धी ॥**

(प्रदीपः) **तपरे इति।** तपरसंज्ञिसहचरिते गुणवृद्धिसंज्ञे इत्यर्थः।

(उद्द्योतः) ननु गुणवृद्धिसंज्ञयोस्तपरत्वाऽभावात्पूर्वोक्तदोषाऽपरिहृतेश्च भाष्यमयुक्तमित्याशङ्क्याह-**तपरसंज्ञीति।** तपरशब्दनिर्दिष्टे [3]संज्ञिनि गुणवृद्धिसंज्ञे प्रवर्तेते इत्यर्थः। एवं च त्रिमात्रादीनां तत्र संज्ञितयाऽनिर्देशान्नोक्तदोष इति भावः।

❀ राजलक्ष्मीः ❀

[प्रदीपे] नियमाकारमाह-**हल एवेति।** [भाष्ये] **अकारः**-अकाररूपो गुणः । **विगृहीतस्य**-'खट्वाऋश्य' इत्येवं विगृहीतस्य। (उद्द्योते) **परिभाषेति।** स्थानेऽन्तरतमपरिभाषेत्यर्थः। [भाष्ये] **यत्र**-एकादेशे वृद्धिरैज्जीत्यादौ। **कर्त्तव्यं**-दीर्घग्रहणं कर्त्तव्यम्। **इति-इति** वार्त्तिककृदाशयः। **सञ्ज्ञाविधाविति** वार्त्तिके 'एकादेशे' इत्यस्य तु एकादेशमूलभूतवृद्ध्यादिसञ्ज्ञाविधाविःयर्थ इत्याशयः। इत्थं वार्त्तिकोक्तदीर्घग्रहणे स्थापिते मध्यस्थः पृच्छति-**तत्तर्हीति।**

❀ शब्दकौस्तुभः ❀

'त्वादिभ्यः' प्वादीना'मित्यादिनिर्देशाच्च। तेन 'चमू'ष्वित्यादिषु षत्वादिकं सिध्यतीति वक्ष्यते। तस्मात्तात्परस्तत्कालस्येति तु उच्चारितेष्वेव स्यादिति चेत्सत्यम्। 'ङमोह्रस्वा'दिति सूत्रे ङमुडिति प्रत्याहारे कृतं टित्त्वं संज्ञायां व्यर्थं सत्सामर्थ्यात्संज्ञिषु ङादिषु उपकरोतीति यथा स्वीकृतं तथेहापि तात्परत्वं उच्चारितेष्वेव स्यादिति चेत्सत्यम्। 'ङमोह्रस्वा'दिति सूत्रे संज्ञायामनुपयुज्यमानं तदुपस्थाप्येषु संज्ञिषु तत्कालावधारणं सामर्थ्यात्करोतीति न कश्चिद्दोषः। यद्वा-अणुदित्सूत्रेऽशब्दसंज्ञेत्यनुवर्त्तते। 'शब्दस्य संज्ञायां विधेयायामण् सवर्णान्न गृह्णाती'ति 'ऊकालो'ज्जित्यत्र भाष्ये स्फुटम्। उपपादयिष्यामश्चेदं तत्रैव। अतो गुणवृद्धिसंज्ञाविधानपि न सवर्णग्रहणम्। तपरकरणं तु स्पष्टार्थम्, 'ईदूदे'दितिवत्। अन्यथा हि किमैचावेवेह निर्दिष्टौ किं वा आकारोपीत्यादिसन्देहः स्यात्, तत्र च 'मालादीनां चे'त्यादिज्ञापकानुसरणक्लेशः स्यादिति दिक्।

युक्ततरश्चायमेव पक्षः। आद्यपक्षे हि वृद्धिसंज्ञायाम् आ इति दीर्घस्यानण्त्वेन सवर्णाऽग्राहकतया तपरकरणमैजर्थमिति स्थिते ङमुटीव सामर्थ्यमस्तु, गुणसंज्ञायां तु तपरकरणस्योभयार्थताभ्युपगमात्पूर्वत्र चरितार्थं नेदं संज्ञिनोरेदोतोरुपकुर्यादिति तत्र सवर्णग्रहणं स्यादेव। अस्मिन्नपि पक्षे 'एकादेशे दीर्घग्रहण'मिति वार्त्तिकं दीर्घस्यैव संज्ञित्वादिति पूर्ववदेव व्याख्येयम्।

१ वार्तिकोक्तमित्यर्थः। २ 'खट्वेन्द्र' इत्यादौ। ३ अकारादौ।

[ दोषवादिनो दोषानिरासमूचनभाष्यम् ]

**ननु च तः परो यस्मात्सोऽयं तपरः ॥**

( उद्द्योतः ) भाष्ये–**ननु चेति** । एवंचैङैचौ न तपराविति भावः ।

[ दोषनिरासाय सिद्धान्तिनः समाधानभाष्यम् ]

**'ने'त्याह, तादपि परस्तपर इति ॥**

( प्रदीपः ) **तादपीति** । तन्त्रन्यायाश्रयणादेकस्यैव द्विशक्तित्वादेकशेषाश्रयणाद्वाऽनेकार्थाभिधानमिति भावः ॥

( उद्द्योतः ) **नेत्याहेति** । स एव तपर इति नेत्याहेत्यर्थः । अर्थभेदेन शब्दभेदे–**तन्त्रन्यायेति** । तद्भेदेऽपि शब्दैक्यपक्षे आह—**एकस्यैव द्विशक्तित्वादिति** । **एकशेषेति** । समाहारद्वन्द्वविषये एकशेषाऽभावेनैकवचनानुपपत्त्येदं चिन्त्यम् ॥

[ दोषवादिनः शङ्काभाष्यम् ]

**यदि तादपि परस्तपरः 'ऋदोर'-बितीहैव स्यात्– यवः स्तवः । लवः पव इत्यत्र न स्यात् ।**

[ सिद्धान्तिनः परिहारभाष्यम् ]

**नैष तकारः ॥ कस्तर्हि ? ॥ दकारः ।**

[ प्रयोजनप्रश्नभाष्यम् ]

**किं दकारे प्रयोजनम् ? ॥**

( प्रदीपः ) बहुव्रीहिवादी चोदयति–**किं दकार इति** ॥

[ समासद्वयवादिनःसिद्धान्तिनःसमाधानभाष्यम् ]

**अथ किं तकारे ? । यद्यसन्देहार्थस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपीति ॥**

( प्रदीपः ) समासद्वयवादी तं प्रत्याह––**अथ किं तकार इति** । तव केवलबहुव्रीहिवादिनो निष्प्रयोजनं तपरत्वम्, ऋकारस्याऽनण्त्वाद्भिन्नकालानां ग्रहणाऽप्रसङ्गाद्गुणानां चाऽभेदकत्वात्तत्प्रास्यर्थत्वाऽभावात् । अथ तवाऽसन्देहार्थो मुखसुखार्थो वा तकार एवं मम दकार इत्यर्थः । 'तित्स्वरित'मित्यत्रत्यभाष्येणाऽस्य विरोधः । तत्र हि–'तिति प्रत्ययग्रहणं चोदितम्,इह मा भूत्–दिव उत् । द्युभ्यामिति । ततो दित्त्वाश्रयणेन प्रत्याख्यातम्, तपरसूत्रे च दकारश्चर्त्वभूतो निर्दिश्यते । तेन तत्कालस्य ग्राहको दकारः'––इत्युक्तम् । इह च दकाराभ्युपगमेन लवादिषु दोषः परिहृतः । अत्राहुः–थकारस्थानिको

---

❀ **राजलक्ष्मीः** ❀

दोषवादी शङ्कते–**यदीति** । **न स्यादिति** । तात्परतया दीर्घोकारान्तेभ्योऽप्प्रत्ययो न स्यादित्यर्थः । **एषः**–ऋदोरवित्रत्यत्र श्रूयमाणः । ( **प्रदीपे** ) **बहुव्रीहीति** । तः परो यस्मादिति बहुव्रीहिवादीत्यर्थः । तत्र मते तकारे सत्यपि दोषाऽप्रसङ्गादित्याशयः ।

---

❀ **शब्दकौस्तुभः** ❀

स्यादेतत्–प्रथमपक्षे तादपि परस्य तत्कालग्राहकत्वात् 'ऋदोरप्' 'यवः' 'स्तव'इत्यादावेव स्यान्न तु 'लवः' 'पव' इत्यादावपीति चेदत्र भाष्यम्·'**नायं तकारः किं तर्हि असन्देहार्थः, मुखसुखार्थो वा दकारोय'मिति** । नन्वेतद्भाष्यं 'तितिप्रत्ययग्रहण'मित्येतद्वार्त्तिकप्रत्याख्यानपरेण 'तित्स्वरित'मित्यत्रत्यभाष्येण सह विरुध्येत । तथाहि–तत्र 'तिति प्रत्ययग्रहणं कर्तव्यम् इह मा भूत् दिवउत् द्युभिरक्षुभि'रिति पूर्वपक्षयित्वा दित्त्वमाश्रित्य समाहितम् । ततो भाव्यमानस्याऽप्युकारस्याऽदसोसेर्दादित्यत्रेव सवर्णग्राहकता स्यादित्याशङ्क्य तपरसूत्रे दकारस्यापि चर्त्वभूतस्य निर्देशाद्दपरोपि तत्कालग्राहक इति परिहृतम् । एवं च 'उदृ'दित्यादावपि दपरत्वमेव । अन्यथा स्वरितप्रसङ्गात् । अयमेव च दपरनिर्देशो भाव्यमानस्याप्युकारस्य सवर्णग्राहकतां ज्ञापयतीति स्थितम् । इह तु 'ऋदो'रिति दकारनिर्देशाल्लवः पव इत्यादौ दीर्घेऽपीष्टं साध्यते । अत्र **प्राञ्चः**–थकारस्थानिको धकारस्थानिको वा दकारोऽत्र भाष्यकृतो विवक्षितः, अतो न पूर्वोत्तरविरोध इति । **ऋजवस्तु**––वार्त्तिकमते स्थित्वेदं भाष्यमतो न विरोध इत्याहुः । वस्तुतस्तु 'तपरस्तत्कालस्ये'त्यत्र दकारो न निर्दिश्यते, प्रयोजनाऽभावात् । 'दिवउत्' 'ऋत'इदित्यादौ तु तपरत्वादेवेष्टसिद्धिः । नन्वेवं 'तित्स्वरित'मित्यस्य प्रसङ्ग इति चेन्न, 'प्रत्ययाऽप्रत्यययोः प्रत्ययस्य ग्रहण'मिति परिभाषया तत्समाधानात् । यत्तु 'तित्स्वरित'मिति सूत्रे **हरदत्तेनोक्तम्**, 'तस्याऽस्तु परिभाषाया भाष्यवार्तिकयोरिहाऽदर्शनादयं यत्नो महानस्माभिरादृत' इति । तत्रेदं वक्तव्यम्–'थकारस्थानिको धकारस्थानिको वा दकार' इत्येवंरूपो यत्नस्तावदेओङ्सूत्रे स्थित्वा पूर्वाचार्यैरेवोक्त इत्यत्रत्यकैयटग्रन्थ एव स्फुटम् । नन्वत एवास्माभिरादृत इति भ्रमो नतूत्थीत इतोति चेत, सत्यमादृतः । तथापि परिभाषाया अदर्शनादित्यसिद्धो हेतुः, अङ्गस्येति सूत्रप्रत्याख्यानाय भाष्ये कण्ठरवेणैव एतत्परिभाषोपन्यासात् । 'निकुत' 'दुकृत'मित्यादिसिद्धये सूत्रं कर्त्तव्यमिति स्थिते व्यर्थेयं परि-

धकारस्थानिको वा दकारोऽत्र विवक्षितः-**'कस्तर्हि दकार' इति ।**

**( उद्द्योतः ) 'सुखमुखार्थं'** इति पाठे मयूरव्यंसकादित्वात्समासः । ननु **एङ्ऐजिति** संज्ञायास्तात्परत्वेऽपि संज्ञिनामेकारादीनां किमागतमिति चेत्, न, तपरशब्दबोध्योऽपि वर्णस्तत्कालस्यैव संज्ञेत्यर्थान्न दोषः। **गुणानां चेति।** अण्सु गुणानां तत्त्वाभावेऽपि अनण्त्वादेव दीर्घादिविषये तत्त्वमिति भावः । ननु दित्त्वे 'दिव उ'दित्यत्र तत्कालग्रहणं न स्यादत आह--**तपरसूत्रे चेति । इहेति ।** तपरसूत्रे दकारानाश्रयणेन चेत्यपि बोध्यम् । **थकारस्थानिक इति ।** तस्य चैतद्दृष्ट्याऽसिद्धत्वान्न तत्र **तपर**सूत्रप्रवृत्तिरिति भावः ॥

---

[ वर्णैकदेशग्रहणाऽग्रहणविचारभाष्यम् ]

**इदं विचार्यते—'य एते वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतय एतेषामवयवग्रहणेन ग्रहणं स्याद्वा न वे'ति ? ॥**

**कुतः पुनरियं विचारणा ? ॥**

**इह हि समुदाया अप्युपदिश्यन्ते, अवयवा अपि । अभ्यन्तरश्च समुदायेऽवयवः । तद्यथा वृक्षः प्रचलन् सहावयवैः प्रचलति । तत्र समुदायस्थस्यावयवस्यावयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा ॥**

**( प्रदीपः ) वर्णान्तरसमानाकृतय इति ।** आकारादिष्वकारादिसदृशा अवयवाः, ऋकारऌकारयो रेफलकारसदृशावयवौ, सन्ध्यक्षरेष्वकारेकारोकारसदृशाः, तत्र केवलवर्णकार्यमवयवेषु भवति नवेति विचारः **। इह हि समुदाया अपीति ।** ऋऌएओऐऔ इति **। अवयवा अपीति ।** अइउण् ऋऌक्‌लणिति । तत्र समुदायपरे निर्देशे,-सन्निहिता अप्यवयवा नान्तरीयकत्वादेजादिसंज्ञां न लभन्ते, अवयवपरे च निर्देशे समुदायो न संज्ञाभाक्, यथा **हयवे**त्यादावनच्कस्य हलो दुःखेनोच्चार्यत्वान्निर्दिष्टोऽप्यकारोऽन्यत्र प्राधान्येन निर्देशाद्धलादिसंज्ञां न प्रतिपद्यते इति दध्यत्रेत्यादावनच्क एव यणादेशः प्रवर्तते। तत्राऽसत्यामप्येजादिसंज्ञायामयादयः समुदायादेशा अपि,-नान्तरीयकत्वादवयवान्निवर्तयन्ति। एवं स्थिते अग्न इन्द्र इत्यादौ यत्रावयवकार्यं प्राप्नोति समुदायकार्यं च, तत्रान्तरङ्गत्वात्तत्र च साक्षाच्चोदितत्वात्प्रत्यक्षत्वात्परत्वाच्चावयवकार्यप्रसङ्गः। अवयवावगतिपूर्वकत्वाद्धि समुदायावगमस्य समु-

---

**❀ राजलक्ष्मीः ❀**

( भाष्ये ) **वर्णेषु**-एजादिषु । **वर्णैकदेशाः**-एकाराद्येकदेशाः । **वर्णान्तरेति ।** अकारादीत्यर्थः । **एतेषाम्**-अकारादीनाम् । **अवयवेति ।** अवयवसदृशाकारादिग्रहणेनेत्यर्थः । कोटिद्वयानुपस्थितेः कथमियं विचारणेत्याह-**कुत इति ।**

---

**( प्रदीपे ) ऋलिति ।** आकारः समुदायोऽपि अनुपदिष्टत्वान्नाऽत्र गणित इत्याशयः । **समुदायपरे**-'ए' इत्यादिवर्णसमुदायपरे । **'अवयवपरे'** इत्यस्य **'यथे'**त्यादिः । **अन्यत्र**-अइउणित्यत्र । **प्रतिपद्यते**-लभते । **इति**-अतो हेतोः । **तत्र**--अवयवेऽकारे । **नान्तरीयेति ।** अन्यथा समुदायनिवृत्तिरशक्यैवेत्याशयः । **अवयवकार्यं**-सवर्णदीर्घः ।

---

**❀ शब्दकौस्तुभः ❀**

भाषेत्याशय इति चेत् ; तथापि थकारधकारस्थानिको दकार इत्यर्थ इति व्याख्यानक्लेशो निष्फलतया मूलस्वरसविरुद्धतया चादरणानर्ह एव । 'दिव उ'दित्यादौ 'तित्स्वरित'मित्यस्य प्राप्तेरेव विरहेण दकारप्रश्लेषादेर्निर्बाधत्वात् । तथाहि-'उ'दित्येषा उकारस्य संज्ञा, तया प्रत्यायित उकारस्तु विधीयते । तथा च संज्ञायास्तित्त्वेपि संज्ञिनः किमायातम्?। वस्तुतस्तु संज्ञापि तान्ता न तु तित् । 'तपर'इति हि सूत्रितं न तु 'ति'दिति । यदि हि संज्ञावत् संज्ञ्यपि तान्त एव तर्हि 'अतो भिस ऐस्' भवद्भिरित्यादावेव स्यान्न तु 'वृक्षै'रित्यादौ । 'तपरस्तत्कालस्ये'ति सूत्रं च व्यर्थमेव स्यात्त्वं रूपं शब्दस्येत्यनेनैव गतार्थत्वात् । न च ङ्मुडादाविव संज्ञायां कृतं लिङ्गं संज्ञिनि लब्धुं शक्यम् । तद्वदिह सामर्थ्यविरहात् । एवञ्च 'तित्स्वरित'मिति सूत्रे भाष्यवार्तिकग्रन्थः सर्वोऽप्यभ्युपेत्यवाद एव । 'स्थाघ्वोरिच्चे'ति सूत्रे इच्च कस्य तकारेत्त्वमित्यादिग्रन्थोऽप्येवमेव । तस्मान्नायं **तकारः किन्तर्हि दकार** इति इहत्यभाष्यग्रन्थो यथाश्रुत एव साधुरिति सहृदयैराकलनीयम् । अयमेव च ग्रन्थोभ्युपेत्यवादरूपतामुत्तरग्रन्थानां गमयति । एतेन 'औत्' 'इटोऽ'दित्यादिष्वपि विधेयस्य तपरत्वाऽभावो व्याख्यातः । तित्त्वं तु दूरापास्तमिति दिक् ॥

इह आकारादयो वर्णाः सांऽशाः इष्यन्ते । यदाह 'तस्यादित उदात्तमर्द्धह्रस्वं' 'पूर्व्वस्यार्द्धस्यादुत्तरस्येदुता'विति । वार्तिककारोप्याह-'ऐचोश्चोत्तरभूयस्त्वा'दिति । तत्र सन्ति के चिदंशाः स्वतन्त्रवर्णान्तरस्य सदृशाः । यथा-आकारादिष्वकारस्य सदृशौ भागौ । एषु पूर्वभागो-

दार्यकार्यं[1] बहिरङ्गम् । [2]अयादीनां चावकाशः—'अग्न आयाही'ति । नन्वत्रापि यणादेशोऽवयवस्य प्राप्नोति । येन नाप्राप्ते इति वा मध्येऽपवादा इति वा यण एवायाऽदयो बाधकाः स्युः । तत्र यथा दधीन्द्र इत्यत्र,-दधिशब्दस्थ इकारः सवर्णदीर्घत्वं प्रतिपद्यते, एवमेकारस्थोऽपि प्रतिपद्येत । प्रत्याहारे **एओङ्ऐऔ**जित्यत्रावयवानां[3] प्राधान्येनाऽनिर्देशादित्येवं ग्रहणपक्षाशङ्काबीजमुपन्यस्तम् । इदानीमग्रहणपक्षाशङ्काबीजमुपन्यस्यते—**अभ्यन्तरश्चेति ।** तिरोहितत्वादवयवानां, समुदायकार्ये पारतन्त्र्यात्, स्वकार्यस्याऽप्रयोजकत्वान्नरसिंहवज्जात्यन्तरयोगाद्वर्णान्तरसारूप्यमात्रेण तत्कार्याऽप्रवर्तनादित्यर्थः ॥

**( उद्द्योतः ) अवयवग्रहणेन**—अवयवसदृशवर्णग्रहणेन ग्रहणं स्यान्नवेति भाष्यार्थः । तत्फलितमाह—**तत्र केवलेति** । नन्वकारेण एङवयवग्रहणसन्देहवदकारादीनामेङादिसंज्ञा प्राप्नोतीति विचारोऽपि कुतो नेत्यत आह—**तत्र समुदायेति** । अतएव 'प्राटती'त्यादौ न पररूपम् । तत्र दृष्टान्तमाह—**अवयवपरे चेति** । यथाऽवयवपरे निर्देशे समुदायो न संज्ञाभाग्, एवं समुदायपरे निर्देशेऽवयवा न तद्भाज इत्यर्थः । तदुपपादयति—**यथेति । अन्यत्रेति ।** सर्वस्यावयव[4]स्यान्यत्र पृथङ्निर्देशे समुदायनिर्देशः स्वपर[5] एव, सर्वस्यावयवस्यान्यत्राऽनिर्देशे तु समुदायनिर्देशोऽनिर्दिष्टावयव[6]पर इति विवेकः । नन्वेजादिसंज्ञानामवयवाऽवृत्तित्वे कथमेचो निवर्तकेनाऽयादिना तदवयवस्य निवृत्तिरत आह—**तत्राऽस्त्यामपीति** । तन्निवृत्तिं विना समुदायनिवृत्तेः कर्तुमशक्यत्वादिति भावः । **अवयवकार्यं**—दीर्घः । **समुदायकार्यम्**—अय् । **तत्र च साक्षादिति ।** दीर्घे । अयादिकार्ये हि समुदायव्यवधानेनावयवो नोदितो न साक्षादिति भावः । साक्षाच्चोदितत्वं प्रत्यक्षत्वे हेतुः । नन्वयादिरनवकाशोऽत आह—**अयादीनामिति । नन्विति ।** ततश्च विध्यन्तरपूर्वकोऽयादिः सर्वस्य बाधकः स्यादिति भावः । परिहरति—**येनेति । प्राधान्येनानिर्देशादिति ।** अस्य-'एजादिसंज्ञाऽभावेऽपि स्वतन्त्राकारेण ग्रहणं स्या'दिति शेषः। भाष्ये-**अभ्यन्तरश्चेति** । तदुच्चारणं विना समुदायोच्चारणस्याऽशक्यत्वादित्यर्थः । तदाह—**तद्यथा वृक्ष इति** । तदुपपादयति—**तिरोहितत्वादित्यादिना । समुदायकार्ये पारतन्त्र्यादिति** । समुदायसम्पादनरूपे कार्ये पारतन्त्र्यादित्यर्थः । **स्वकार्यस्याप्रयोजकत्वादिति** । स्वकार्यनिरूपितप्रयोजकत्वाऽभावादित्यर्थः। तत्प्रयोजकत्वाभावे हेतुः—**नरसिंहवदिति** । तदवयवे नरत्वाद्यभाववदेतदवयवेऽप्यत्वाद्यभाव इति भावः ॥

[ विशेषजिज्ञासाभाष्यम् ]

**कश्चात्र विशेषः ? ॥**

[ ग्रहणपक्षदूषणवार्तिकम् ]

*॥*॥ वर्णैकदेशा वर्णग्रहणेन चेत्सन्ध्यक्षरे समानाक्षरविधिप्रतिषेधः ॥*॥*

[ व्याख्यानभाष्यम् ]

**वर्णैकदेशा वर्णग्रहणेन चेत्सन्ध्यक्षरे समानाक्षराश्रयो विधिः प्राप्नोति स प्रतिषेध्यः । अग्ने इन्द्र, वायो उदकम् । 'अकः सवर्णे दीर्घः' इति दीर्घत्वं प्राप्नोति ॥**

**( प्रदीपः ) समानाक्षरेति** । समानशब्देन पूर्वाचार्यनिर्देशादकोऽभिधीयन्ते, **'दश समाना'** इति वचनात् । तेन समानकार्यं प्राप्नोतीत्यर्थः ॥

**( उद्द्योतः ) वचनादिति** । 'अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ दश समाना' इति पूर्वव्याकरणवचनादित्यर्थः । **समानकार्यम्** । अग्रूपसमानाऽक्षरकार्यमित्यर्थः । **सवर्णकार्यमिति** पाठे-सवर्णदीर्घरूपकार्यमित्यर्थः ॥

**॥ राजलक्ष्मीः ॥**

१ **समुदायकार्यम्** । एकारादेरयादेशादिकं कार्यम् । **तत्र**—अग्ने इन्द्रेत्यादौ लक्ष्ये । **तत्रच**—दीर्घे च ।
२ **अयादीनां**—समुदायकार्याणामयादीनामित्यर्थः ।
३ **अवयवानाम्**—अन्यत्र अइउणित्यादौ प्राधान्येन निर्दिष्टानाम् ।
४ **अवयवस्य**—अ-इ-उ इत्यादेरेकाराद्यवयवस्य । **समुदायनिर्देशः**—'ए''ऐ' इत्यादि समुदायनिर्देशः।
५ **स्वपरः**—समुदायपरः ।
६ यथा 'हयवरे'त्यादावकारस्यान्यत्र निर्देशेऽपि हकारस्यान्यत्राऽनिर्देशात् ह्-अ इति समुदायनिर्देशोऽनिर्दिष्टावयवहकारपर इत्यर्थः ।

ऽकारस्य उत्तर इवर्णोवर्णयोः । ऋकारे उभयतोऽज्भक्तेरर्द्धमात्रा मध्ये रेफस्य सदृशोऽर्द्धमात्रभागः । ऌकारेप्युभयतोऽज्भक्तिः मध्ये स्वतन्त्रलकारसदृशो भागः । तत्र स्वतन्त्रतत्तद्वर्णग्रहणेन विधीयमानं कार्यं तत्तत्सदृशेष्वंशेषु न प्रवर्त्तते । तत्सदृशा ह्येते न तु त एव, नरसिंहवज्जात्यन्तराक्रान्तत्वात् । गोनौग्रहणं चात्र ज्ञापकम् । यदि हि भागा अपि स्वतन्त्रवर्णप्रयुक्तं कार्यं प्रवर्तयेयुस्तर्हि 'गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्य'दिति 'नौद्व्यचष्ठ'न्निति च सूत्रद्वये द्व्यज्ग्रहणेनैव गतार्थत्वाद्गोशब्दं नौशब्दं च नोपाददीत । तेनाग्ने इन्द्र, वायो उदकमित्यत्र सवर्णदीर्घो न । न चैचोय-

[ ग्रहणपक्षे दूषणान्तरवार्तिकम् ]

॥*॥ दीर्घे ह्रस्वविधिप्रतिषेधः ॥*॥

[ व्याख्याभाष्यम् ]

दीर्घे ह्रस्वाश्रयो विधिः प्राप्नोति, स प्रतिषेध्यः । आलूय, प्रलूय । 'ह्रस्वस्य पिति कृति तु'गिति तुक् प्राप्नोति ॥

[ दोषोद्धारभाष्यम् ]

नैष दोषः, आचार्यप्रवृत्तिर्ज्ञापयति-'न दीर्घे ह्रस्वाश्रयो विधिर्भवती'ति यदयं दीर्घाच्छे तुकं शास्ति ॥

( उद्द्योतः ) दीर्घाच्छे इति । 'दीर्घस्य च्छे तु'गिति हि तदर्थः । ननु ह्रस्वस्येत्यत्राऽच इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यादेव तुङ्क्ति चेन्न; पदलाघवाऽभावादित्याशयात् ॥

[ ज्ञापकविघटनपूर्वकदोषस्थापकभाष्यम् ]

नैतदस्ति ज्ञापकम्, अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ 'किम्?॥ 'पदान्ताद्वा' इति विभाषां वक्ष्यामीति ।

( उद्द्योतः ) अस्ति हीति । तत्र दीर्घादित्यस्याऽभावे 'कुड्यच्छाये'त्यादावपि विकल्पः स्यादिति भावः ।

[ ज्ञापकान्तरेण दोषनिरासभाष्यम् ]

यत्तर्हि योगविभागं करोति । इतरथा हि 'दीर्घात्पदान्ताद्वे'त्येव ब्रूयात् ॥

[ ज्ञापकाऽचरितदोषान्तरप्रदर्शनभाष्यम् ]

इह तर्हि-खट्वाभिः, मालाभिः, 'अतो भिस ऐस्' इत्यैस्भावः प्राप्नोति ॥

[ दोषोद्धारभाष्यम् ]

तपरकरणसामर्थ्यान्न भविष्यति ॥

[ दोषान्तरप्रदर्शनभाष्यम् ]

इह तर्हि—याता, वाता । 'अतो लोप'-'आर्धधातुके' इत्यकारलोपः प्राप्नोति ।

[ दूषणोद्धारभाष्यम् ]

ननु चाऽत्रापि तपरकरणसामर्थ्यादेव न भविष्यति ॥

[ दूषणवादिनस्तपरकरणसामर्थ्यविघटनभाष्यम् ]

अस्ति ह्यन्यत्तपरकरणे प्रयोजनम् ॥

किम् ?॥ सर्वस्य लोपो मा भूदिति ।

[ शङ्काभाष्यम् ]

अथ क्रियमाणेऽपि तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवति? ॥

[ दूषणवादिनः समाधानभाष्यम् ]

परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च ।

( प्रदीपः ) असिद्धत्वाच्चेति । 'असिद्धवदत्राभा'दित्यनेन ।

❀ राजलक्ष्मीः ❀

१ दीर्घे-दीर्घघटको यो ह्रस्वः-ह्रस्वसदृशः, तस्य, तदुत्तरस्य कृदादेश्च यो विधिः-लोपादिस्तुगादिश्च प्राप्तस्तस्य प्रतिषेधो वक्तव्य इत्यर्थः ।

२ ह्रस्वाश्रयः-ह्रस्वस्थानित्वेन निमित्तत्वेन वा आश्रित्य जायमानो विधिः । ३ सूत्रे ह्रस्वपदाकरणमेव लाघवमित्यत्राऽरुचिराशयपदोपादानात्सूचिता ।

४ एतस्य-दीर्घादित्यस्य । तत्रानुवृत्त्यर्थं दीर्घग्रहणमित्याशयः । ५ 'करोती'त्यस्य 'तज्ज्ञापक'मिति शेषः । ६ 'दीर्घे ह्रस्वविधिप्रतिषेध' इति वार्त्तिकस्य ज्ञापकाऽचारितं लक्ष्यान्तरमुदाहरति--इह तर्हीति । ७ ऐस्भावः-अत्र ह्रस्वाश्रयो विधिः । ८ अकारलोपः-अत्रह्रस्वाश्रयो विधिः । ९ सर्वस्य-सवर्णग्रहणात्सम्पूर्णस्य आकारस्य ।

१० माभूदिति । 'किन्त्वाकारघटकाऽकारस्य लोपो यथा स्या'दिति शेषः । ११ परस्य-आकारघटकस्यैकमात्रिकस्य अकारस्य । १२ भवतीति । एवञ्च क्रियमाणेऽपि तयोः सर्वलोपः सुतरां भविष्यतीत्याशयः । १३ परलोपस्य-मात्रिकाऽकारलोपस्य । एवञ्च तपरकरणे एकस्यैवाऽकारस्य लोपस्तदभावे सर्वस्यैव लोपप्रसङ्ग इति तपरकरणं सार्थकमित्याशयः ।

❀ शब्दकौस्तुभः ❀

वायाव इत्यनेन तस्य बाधोऽस्त्विति वाच्यम्, आयादयो हि येननाप्राप्तिन्यायेन मध्येपवादन्यायेन वा यण एव बाधकतया 'अग्नआयाहो'त्यादौ चरितार्था 'अग्ने इन्द्र'मित्यादौ परेण दीर्घेण बाध्येरन् । अन्तरङ्गोऽपि दीर्घोऽवयवमात्रापेक्षत्वात् । तथाऽग्न एतीति एङः पदान्तादित्येतन्न । 'आलूय' 'प्रमाये'त्यत्र तुङ्न, 'मालाभि'रित्यत्र ऐस्न, 'याते'त्यादावतोलोपो न, वाचा तरति वाचो निमित्तमित्यत्र द्वयज्लक्षणो ठन्यती नेति दिक् ।

नुड्विधिलादेशविनामेषु तु प्रतिविधेयम् । तथाहि द्विहल्ग्रहणमपनीय 'तस्मान्नु'डित्येव सूत्रं कर्त्तव्यम् । न चैवमानृधतुरित्यत्रेव आटतुरित्यादावपि नुट्प्रसङ्गः, 'अश्नोतेश्चे'त्यस्य नियमार्थत्वात् । नियमश्च सामान्यापेक्षः-'अकारोपधस्य यदि भवत्यश्नोतेरेव न तु अटत्यादे'रिति । यदि त्वश्नातिमात्रं निवर्त्यं स्यात्तर्हि 'नाऽश्न'इत्येव ब्रूयात् । 'रो ल 'इत्यत्र स्वतन्त्रा-

( उद्द्योतः ) असिद्धवदिति । चिणो लुङ्[१]न्याये नेति भावः ।

[ ग्रहणपक्षे दूषणोद्धारवादिनो ज्ञापनभाष्यम् ]

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति–'नाकारस्थस्याऽकारस्य लोपो भवति' इति, यदयम् 'आतोऽनुपसर्गे कः' इति ककारमनुबन्धं करोति ॥ कथं कृत्वा ज्ञापकम् ? ॥ क्त्करणे एतत्प्रयोजनम्—'कितीत्याकारलोपो यथा स्या'दिति । यद्याकारस्थस्याऽकारस्य लोपः स्यात्, कित्करणमनर्थकं स्यात् ; परस्याऽकारस्य लोपे कृते द्वयोरकारयोः पररूपे हि सिद्धं रूपं स्यात्—गोदः कम्बलद इति । पश्यति त्वाचार्यो—नाऽऽकारस्थस्याऽकारस्य लोपः स्यादिति, अतः ककारमनुबन्धं करोति ।**

[ दूषणवादिनो ज्ञापकताविघटनभाष्यम् ]

**नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात् 'तुन्दशोकयोः परिमृजाऽपनुदोः' इति[३] ॥**

( उद्द्योतः ) भाष्ये–**उत्तरार्थमेतदि**ति । **इह किञ्चित्रपो इतीति** न्यायस्तु नाश्रितः । अत्र केवलाऽकारोच्चारणे उत्तरत्र ककाराऽकारयोरुच्चारणे गौरवादिति भावः[४] ॥

[ दूषणाऽभाववादिनो ज्ञापकान्तरभाष्यम् ]

**यत्तर्हि 'गापोष्ट'गित्यनन्यार्थे[५] ककारमनुबन्धं करोति[६] ॥**

( प्रदीपः ) **यत्तर्हीति** । नन्वसति कित्त्वे आकारस्थस्याऽकारस्य[७] लोपे कृते द्वयोरकारयोः पररूपस्य धातुं प्रत्यन्तवद्भावाच्[८]छन्दोगायेत्यत्रातो धातोरित्याकारलोपप्रसङ्गः । नैष दोषः । सन्निपातपरिभाषायां[९] लोपो न भविष्यति । अकारं ह्याश्रित्य यशब्दः कृतो लोपस्याऽनिमित्तम् । दीर्घत्वं तु 'कष्टाये'ति निपातनाद्भवति ॥

( उद्द्योतः ) **सन्निपातेति** । न च दीर्घेणैव स[१०] निवर्तितः[११]; दीर्घेऽप्यत्वजातिसम्बन्धसत्त्वेन न तथा सन्निपात[१२]क्षतिः । लोपे तु तस्यापि[१३] निवृत्तेस्तद्विरोधस्य स्पष्टत्वादिति भावः । **परे तु** जातिपक्षे **तपरसूत्रं** व्याप्य[१४]जातिनिर्देशस्यैव बोधकमिति यत्वनिमित्त[१५]सन्निपातस्य दीर्घेण निवृत्तिर्जातैव न कस्याप्यनुवृत्ति[१६]स्तस्माद्व्याप्याऽत्वजातियत्वादिसन्निपातनिमित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम्[१७] । **सन्निपात**परिभाषायाश्च–स्वप्रवृत्तेः[१८] प्राङ् निमित्तभूतो यादृशः[१९] संनिपातः, [२०]स्वातिरिक्ततद्विघातकस्य स्वयमनिमित्तमित्यर्थः । मात्राकालिकत्वसमानाधिकरणव्यापक[२१]जातिनिर्देशपक्षेऽप्यङ्गसंज्ञा तद्यंनिमित्तं स्यादिति **कृन्मेजन्त**सूत्रवक्ष्यमाणभाष्यरीत्या यादेशनिमित्तसंनिपातस्य न लेशतोऽपि स[२२]त्त्वेति वदन्ति । '[२३]प्रातर्ऋतं' 'तद्लृकार' इत्यादौ **'रो रि' 'तोर्लि'**ति तु नापादितं, तस्याऽभितोऽभाग सत्त्वेन तेन व्यवधानात्तदप्राप्तेः ॥

[ ग्रहणपक्षे आक्षेपान्तरवार्तिकम् ]

॥*॥ एकवर्णवच्च ॥*॥

---

❀ राजलक्ष्मीः ❀

१ यथा 'अपाचितरा'मित्यत्र तरामित्यस्य चिणो लुगिति प्राप्तो लुक् स्वेन जातस्य तप्रत्ययलुकोऽसिद्धत्वमाश्रित्य तद्व्यवधाना द्व्यावर्त्यते तथाऽत्रापि स्वजातलोपस्य पुनः स्वस्मिन्विधेयेऽसिद्धत्वमित्याशयः । २ एवञ्च दीर्घे ह्रस्वविधेः किमपि फलं नास्तीति सिद्धम् । 'अग्ने इन्द्रे'त्यत्र सवर्णदीर्घापत्तिस्त्वद्य यावदपरिहृतैवास्ते इत्यप्यवधेयम् ।

३ **इति**–इत्यत्र गुणवृद्ध्यभावार्थम् । ४ अत्रैव उत्तरार्थं ककारोच्चारणं लाघवात्कृतमिति न तज्ज्ञापकं भविष्यतीत्याशयः । ५ **अनन्यार्थम्**–आकारलोपातिरिक्तगुणाद्यभावरूपफलशून्यम् । ६ **करोतीत्यस्य**–'तदेवोक्तार्थे ज्ञापकं भविष्यती'ति शेषः । ७ **अकारस्य**–उत्तरभागस्थस्याऽकारस्य । ८ **अन्तवद्भावादिति** । अस्य 'धात्ववयवत्वे, तस्य सुपि चेति दीर्घे च एकदेशविकृतन्यायेन तत्र धात्ववयवत्वे" इति शेषः ।

९ 'परिभाषायाः' इत्यस्य 'सत्त्वा'दिति शेषः । १० **सः**–अकारः । ११ 'निवर्त्तित' इत्यस्य 'वाच्य'मिति शेषः ।

१२ **सन्निपातक्षतिः**–दीर्घे न सन्निपातविघातः । 'इतिचोत्तर'मिति शेषः । १३ **तस्यापि**–अत्वस्यापि । **तद्विरोधस्य**–सन्निपातविरोधस्य ।

१४ **व्याप्येति** । अत्त्वजातीत्यर्थः । १५ **यत्वनिमित्तेति** । अत्त्वरूपव्याप्याऽत्वजातिनिबन्धनस्येत्यर्थः । १६ सम्बन्धः ।

१७ न यत्वमादाय परिभाषा प्रवर्त्त्येत्याशयः । एवञ्च दीर्घविधिरेव स्वसंनिपात–अ–य–विघातकस्य लोपस्याऽनिमित्तं स्यात् । स्वेनतु अ–य इति संनिपातो विहत इत्यन्यदिति तत्त्वम् । १८ **स्वेति** । सुपि चेति दीर्घेत्यर्थः । १९ **यादृशः**–'अ-य' इत्येवं रूपः । २० **स्वातिरिक्तेति** । एवञ्च स्वेन तद्विघाते तु न सा प्रवर्त्तते इत्याशयः । २१ **व्यापकेति** । अत्वेत्यर्थः । २२ **'सत्त्वे'**त्यस्य 'लोपे सती'त्यादिः । २३ ऋकारलृकारयोर्दोषानुद्भावनाद्भाष्ये न्यूनतां परिहरति–**प्रातरिति** ।

[ व्याख्याभाष्यम् ]

**'एकवर्णवच्च दीर्घो भवती'ति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ वाचा तरतीति,–ह्यज्लक्षणष्ठन्मा भूदिति । इह च वाचो निमित्तम्, 'तस्य निमित्तं संयोगोत्पातौ' इत्यनुवर्तमाने 'गोद्व्यचः' इति ह्यज्लक्षणो यन्मा भूदिति ॥**

( प्रदीपः ) **एकवर्णवदिति** । अवयवसङ्ख्याश्रयणेन वाक्शब्दस्य द्व्यच्त्वात्तन्निमित्तं कार्यं प्राप्नोतीत्येकवर्णवदित्यतिदेशः क्रियते ॥

[ समाधानभाष्यम् ]

**अत्रापि गोनौग्रहणं ज्ञापकम्–'दीर्घाद् द्व्यज्लक्षणो विधिर्न भवति' इति ।**

( प्रदीपः ) **गोनौग्रहणं ज्ञापकमिति** । सामान्येन ज्ञापकं,–वर्णावयवाश्रयकार्याऽभावस्येति अग्न एहीत्यादावेङः पदान्तादतीत्याद्यपि न भवति ।

( उद्द्योतः ) 'अग्ने इन्द्रे'त्यादौ सवर्णदीर्घव्यावृत्तये आह–**सामान्येनेति** । 'गोद्व्यचोऽसङ्ख्ये'ति **गो**ग्रहणं, 'नौद्व्यचष्ठ'न्निति नौग्रहणम् । **वर्णावयवाश्रयकार्याभावस्येति** । वर्णावयवेषु भेदेनाऽप्रतिभासमानेषु वर्णाश्रयकार्याऽभावस्येत्यर्थः । तेन 'मातृणा'मित्यादौ णत्वादिसिद्धिः, भेदेन प्रतिभासात् ॥

[ सकलाक्षेपपरिहारवार्त्तिकावतरणभाष्यम् ]

**अयं तु सर्वेषामेव परिहारः—**

[ सर्वपरिहाराय सिद्धान्तसमाधानवार्तिकम् ]

**॥*॥ नाव्यपवृक्तस्यावयवे तद्विधिर्यथा द्रव्येषु ॥*॥**

[ व्याख्याभाष्यम् ]

**नाऽव्यपवृक्तस्यावयवस्यावयवाश्रयो विधिर्भवति । 'यथा द्रव्येषु' । तद्यथा द्रव्येषु,–'सप्तदश सामिधेन्यो भवन्ति' इति न सप्तदशाऽरत्निमात्रं काष्ठमभ्याव-भ्याधीयते ॥**

( प्रदीपः ) **नाव्यपवृक्तस्येति** । व्यपवर्गो व्यपवृक्तं, भेदः । तेनाऽ**व्यपवृक्तस्या**ऽभिन्नबुद्धिविषयस्यैकत्वालम्बनज्ञानग्राह्यस्य **समुदायस्य** योऽवयवस्तस्मिं**स्तद्विधिः**–पृथग्भूतवर्णविधिर्न भवतीत्यर्थः । अव्यपवृक्तस्याऽवयवस्येति व्यधिकरणे षष्ठ्यौ । अव्यपवृक्तस्य समुदायस्य योऽवयवस्तस्येत्यर्थः । न हि संभवमात्रेण कार्याणि क्रियन्ते, अपि तु यत्र तद्बुद्धिरस्ति तत्रैवेत्यर्थः । **'माषा न भोक्तव्या'** इति निषेधस्तु मिश्रेष्वपि प्रवर्तते, तत्र तद्बुद्धिस्तद्रसास्वादनसंभवात् । **सप्तदशेति** । सामिधेनीशब्द ऋचां वाचकः साहचर्यात्काष्ठेषु वर्तते । तत्र सप्तदशहस्ते काष्ठे 'सप्तदश काष्ठानी'ति बुद्धेरभावान्न तस्याऽभ्याधानम् ॥

( उद्द्योतः ) सामान्यापेक्षज्ञापकं विनापि न्यायेन निर्वाहमाह–भाष्ये–**अयन्त्विति** । 'अभिन्नबुद्धिविषयस्ये'त्यस्य व्याख्या–**एकत्वालम्बनज्ञानग्राह्यस्येति । समुदायस्य योऽवयव इति** । वर्णसमुदायस्येत्यर्थः । **व्यधिकरणे इति** । सामानाधिकरण्येनान्वयेऽ**व्यपवृक्तस्येति** व्यर्थं, सर्वस्याप्यवयवस्यावयविनाऽव्यपवृक्तत्वादिति भावः । भाष्ये–**अवयवाश्रयः**–अवयवसदृशस्वतन्त्रवर्णाश्रयः ॥ उक्तेऽर्थे युक्तिमाह–**नहीति** । ननु सामिधेनीशब्दस्य ऋक्षु शक्तत्वेन **काष्ठमभ्याधीयत** इति भाष्यमयुक्तमत आह–**साहचर्यादिति** । तदाधेयत्वेनेति भावः । **तत्र सप्तदशेति** । यद्यपि एकैका समिदरत्निमात्रमिति मिलितानां

---

❀ राजलक्ष्मीः ❀

१ वर्णैकदेशानां वर्णग्रहणेन ग्रहणे दोषान्तरमाह–**एकवर्णवच्चेति** । द्व्यज्लक्षणस्य कार्यस्य प्रतिषेधो वक्तव्य इत्यर्थः। एकवर्णवदेव कार्यं न वर्णद्वयाश्रयं कार्यमित्येवमवधारणपरतया व्याख्येयमिति यावत् । २ एवञ्च ग्रहणपक्षे न कोऽपि दोष इति सिद्धम् । ३ ज्ञापकं विनापि परिहारमाह–**अयमिति** । ४ **अव्यपवृक्तस्य**–वर्णसमुदायस्यैकारादेर्योऽवयवस्तस्येत्यर्थः । ५ आकारादिषु च न तद्बुद्धिः, पृथगबोधात्, ऋकारे तु तद्बुद्धिरस्तीति णत्वं भवत्येवेत्याशयः । ६ **तत्र**–तत्र हि । **तद्बुद्धि**रित्यस्य–'अस्त्येवे'ति शेषः । हेतुमाह–**तद्रसेति** । हेतौ पञ्चमी । ७ **सामानाधीति** । अभेदेनाव्यपवृक्तस्याऽवयवेऽन्वये इत्यर्थः । ८ **व्यर्थम्**–अवयवस्य तद्विशेषणं व्यर्थम् । ९ **अव्यपवृक्तत्वात्**–अभिन्नत्वात् । अतो वैयधिकरण्येनैवाऽन्वयो युक्त इत्याशयः ।

---

❀ शब्दकौस्तुभः ❀

ऽस्वतन्त्रसाधारणी जातिरनुवाद्ये विधेये च विवक्षिता । एकदेशस्य च पृथङ्निष्कर्षाऽयोगात्तद्द्वारा ऋकारस्यैव लृकाकारादेशः फलति । स्वतन्त्रवर्णवृत्तिजातेर्नायं निर्देशः किं तु

सप्तदशानां समिधां सप्तदशारत्निमात्रत्वं[1] भवति, एकस्यापि तावत्त्वमस्ति, तथाऽप्यव्यपवृक्त[2]समुदायावयवत्वान्न व्यपवृक्ताश्रयकार्यप्रसङ्ग इति भावः ॥

[ दृष्टान्तवैषम्यप्रतिपादनभाष्यम् ]

**विषम[3] उपन्यासः, प्रत्यृचं[4] चैव हि तत्कर्म चोद्यते। असंभवश्चा[5]ऽग्नौ वेद्यां च ॥**

**( प्रदीपः ) असंभव इति ।** अर्द्धचतुर्हस्ता हि वेदिः ॥

**( उद्द्योतः )** न ह्यव्यपवृक्तत्वमात्रनिबन्धनं तदनभ्याधानं किं तु असंभवनिबन्धनमित्याह–भाष्ये–**विषम इति ।** आहितपुनर्ग्रहणस्य निषिद्धत्वादेकस्य काष्ठस्य प्रत्यृचमाधानं न संभवतीति भावः । युक्त्यन्तरमाह–**असंभवश्चेति ।** तमुपपादयति–**अर्द्धचतुर्हस्तेति ।** अर्द्धेन चतुर्हस्तेति तृतीयातत्पुरुषः । समिधोऽग्निवेदिवहिर्भावनिषेधाच्चाऽसंभव इति भावः ॥

[ एकदेशिनो दृष्टान्तान्तरप्रदर्शनभाष्यम् ]

**यथा तर्हि ‘सप्तदश प्रादेशमात्रीराश्वत्थीः समिधोऽभ्यादधीते’ति न सप्तदशप्रादेशमात्रं काष्ठमेकमग्नावभ्याधीयते ॥**

**( प्रदीपः ) यथा तर्हीति ।** अल्पप्रमाणत्वात्स्यात्संभव इति भावः ।

[ दृष्टान्तविघटनभाष्यम् ]

**अत्रापि प्रतिप्रणवं चैतत्कर्म चोद्यते[12]। तुल्यश्चासंभवो[13]ऽग्नौ वेद्यां च ॥**

[ सिद्धान्तिदृष्टान्तभाष्यम् ]

**यथा तर्हि ‘तैलं न विक्रेतव्यम्’ ‘मांसं न विक्रेतव्य’मिति । व्यपवृक्तं च न विक्रीयते, अव्यपवृक्तं[14]–गावः सर्षपाश्च विक्रीयन्ते । तथा ‘लोमनखं स्पृष्ट्वा शौचं कर्तव्य’मिति । व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्तव्यम्, अव्यपवृक्ते कामचारः ।**

**( प्रदीपः ) अव्यपवृक्तमिति ।** व्यपवर्गस्याऽभावेनेत्यर्थः ।

**( उद्द्योतः ) अव्यपवृक्तमिति ।** अर्थाभावेऽव्ययीभावः । तदाह–**व्यपवर्गस्येति ।** वस्तुतस्तत्पुरुष एवायं, व्यपवृक्तभिन्नतैलमांसरूपा गावः सर्षपाश्चेत्यर्थः । नञोऽव्ययीभावस्याऽभावादित्यग्रे वक्ष्यते ॥ भाष्ये **कामचार इति ।** स्पर्शे कामचारस्तेन शौचाऽभाव इत्यर्थः ॥

[ आक्षेपभाष्यम् ]

**यत्र[16] तर्हि व्यपवर्गोऽस्ति ॥**

**क्व च व्यपवर्गोऽस्ति ? ॥ सन्ध्यक्षरेषु ॥**

**( प्रदीपः ) यत्र तर्हीति ।** ‘ऐ’ ‘औ’ इत्यत्र हि स्फुटोऽकारप्रतिभासोऽस्ति ॥

**( उद्द्योतः )** एङोः संश्लिष्टावर्णत्वेन व्यपवर्गस्यास्पष्टत्वात्सन्ध्यक्षरग्रहणमैजभिप्रायमित्याह–**ऐऔ इति ॥**

[ समाधानवार्तिकम् ]

*॥*॥ सन्ध्यक्षरेषु विवृतत्वात् ॥*॥*

[ व्याख्यानभाष्यम् ]

**[सन्ध्यक्षरेषु] यदत्रा[17]ऽवर्णं, विवृततरं तदन्यस्मा[18]दवर्णात्, ये अपीवर्णोवर्णे[19], विवृततरे ते अन्याभ्यामिवर्णोवर्णाभ्याम् ॥**

**( प्रदीपः ) विवृतत्वादिति ।** अकारस्य विवृतोपदेशादत्र[20] प्रकर्षो विवक्षितः । तदाह–**विवृततरमिति ।** तत्र प्रयत्नभेदादसावर्ण्यादकारेण[21] सन्ध्यक्षरावयवस्य ग्रहणं नास्तीत्यर्थः । तदेवमाकारादिस्थस्याऽवयवस्य[22] भेदेनाऽग्रहणादग्रहणम् ।

⸙ राजलक्ष्मीः ⸙

१ सप्तदशेति । सप्तदशाऽरत्निप्रमाणत्वमित्यर्थः । **एकस्यापि**–एकस्यापि काष्ठदण्डस्य तावत्त्वमस्त्येव । २ **अव्यपवृक्तेति ।** अखण्डेत्यर्थः ।

३ सिद्धान्ती दृष्टान्तं विघटयति–**विषम इति ।** ४ एकमसम्भवन्तावदाह–**प्रत्यृचमिति ।** ५ असम्भवान्तरमाह–**असम्भव इति ।** ६ अग्न्यादिष्वप्यसम्भवमाहेत्यर्थः । ७ **तम्**–असम्भवम् । ८ सार्धत्रि ३॥ हस्तेत्यर्थः । ९ एकदेशी दृष्टान्तान्तरमाह–**यथेति ।** १० ‘अभ्याधीयते’इत्यस्य ‘इत्युदाहरणं शक्यं वक्तु’मिति शेषः । ११ **सम्भवः**–अग्नौ वेद्याञ्च सम्भवः । १२ **चोद्यत इति ।** एतच्चायमेकोऽसम्भवः । १३ असम्भवान्तरमाह–**तुल्यश्चेति ।** १४ व्यपवर्गाभावेन हेतुनेत्यर्थः । १५ तृतीयाया अभ्भाव इत्याशयः । १६ भवत्वेवं समाधिराकारादिषु अव्यपवृक्तेषु, व्यपवृक्तेषु तु एकारादिषु तथापि दोष इत्याशङ्कते–**यत्रेति ।** १७ **अत्र**–ऐ औ इत्यत्र । १८ **अन्यस्मात्**–प्रयोगस्थात् । लक्ष्यस्थं हि विवृतमिदं तु विवृततरमित्याशयः । १९ **इवर्णेति ।** ऐ औ इत्यत्रेवर्णोवर्णे इत्यर्थः । **अन्याभ्याम्**–लक्ष्यस्थाभ्याम् । २० **अत्र**–‘सन्ध्यक्षरेषु विवृतत्वा’दिति वार्त्तिके । २१ **अकारेण**–स्वतन्त्रेणअकारेण । २२ उपसंहरति–**तदेवमिति ।** ग्रहणपक्षे इति शेषः ।

सन्ध्यक्षरस्थ[1]स्य त्वसा[2]वर्ण्यात् । ऋकारस्थस्तु रेफो भेदेन प्रतिभासाद्गृह्यते इति नुडादिसिद्धिः ॥

**( उद्द्योतः ) अकारस्येति** । यद्यप्यैचो विवृततमास्तथापि विवृततरत्व[3]मस्त्येवेति भावः । प्रयत्नभेदादेव एङैचोः परस्परं सावर्ण्याऽभावः, एङो विवृततरत्वादैचो विवृततमत्वादिति बोध्यम् ॥

**नुडादीति** । 'आनृजे' इत्यत्र नुट् । आदिना 'चकॢपे' इत्यत्र लत्वम्, 'मातॄणा'मित्यादौ णत्वं चेति बोध्यम् ॥

[ अग्रहणपक्षाभ्युपगमभाष्यम् ]

**अथवा पुनर्न गृह्यन्ते ॥**

**( प्रदीपः ) अथवेति । नरसिंहवद्वर्णान्तरत्वात्सादृश्याच्च प्रत्यभिज्ञानात्तत्त्वाऽसिद्ध्या पृथगुपलब्धानां वर्णानां समुदाये नास्ति सत्त्वम् । समुदायवाचोयुक्तिरपि तत्र वर्णान्तरे न तात्त्विकी, भ्रान्तिवशात्त्ववयवसद्भावाश्रयेण प्रवृत्ता ॥**

**( उद्द्योतः ) सादृश्याच्चेति** । चस्त्वर्थे । **समुदाये**–सन्ध्यक्षरादौ । सत्यपि गोसादृश्ये गवये गोत्वस्येव सन्ध्यक्षरावयवेषु अ[4]त्वादिजातेरभावादकारादिग्रहणेन ग्रहणं नेति भावः[5] । ऐका[6]रादीनामेकेच्छाप्रयत्नजन्यत्वेनैकत्वमेव अकारादिवत् । अत[7] एवैषां पदवन्न वर्णसमूहत्वेन प्रतिभास इति । तदेवाह–**समुदायवाच इति** । **भ्रान्तिवशादिति** । भ्रान्तिगृहीतावयवसद्भावाश्रयेणेत्यर्थः । एवं च भ्रान्तिरेव ग्रहणपक्षे बीजमिति भावः । अत एव गोनौग्रहणं चरितार्थम् ।

[ अग्रहणपक्षदूषणवार्तिकम् ]

*॥*॥ अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणम् ॥*॥*

[ व्याख्यानभाष्यम् ]

**अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्तव्यम् । 'तस्मान्नुड् द्विहलः' 'ऋकारे चे'ति वक्तव्यम् । इहापि यथा स्यात्—आनृधतुः आनृधुरिति । यस्य पुनर्गृह्यन्ते 'द्विहलः' इत्येवं तस्य सिद्धम् ।**

**( उद्द्योतः )** वार्तिके **विनामो**–णत्वम् ।

[ वार्तिकोक्तदूषणनिरासभाष्यम् ]

**यस्या[9]पि न गृह्यन्ते तस्याप्येष न दोषः । द्विहल्ग्रहणं न करिष्यते । त[10]स्मान्नुड्भवतीत्येव ॥**

[ आक्षेपभाष्यम् ]

**यदि न क्रि[11]यते, आटतुः, आटुरित्य[12]त्रापि प्राप्नोति ॥**

[ समाधानभाष्यम् ]

**अश्नोतिग्रहणं निय[13]मार्थं भविष्यति–– 'अश्नोतेरेवाऽवर्णोपधस्य नान्यस्याऽवर्णोपधस्ये'ति । [नुड्विधि] ।**

**( प्रदीपः ) अश्नोतेरेवेति** । सामान्येनावर्णोपधो निवर्त्यते न त्वश्नो[14]तिरेव, सामान्यापेक्षत्वान्निय[15]मज्ञापकस्य ।

**( उद्द्योतः )** ननु विकरणविशेषनिर्देशेन श्नाविकरणनिवृत्त्यर्थं सूत्रं स्यादत आह––**न त्वश्नातिरेवेति** । त[16]था हि सति 'नाऽश्न' इत्येव वदेदिति भावः । **नियमज्ञापकस्य**–नियमबोधकस्य ।

---

**❀ राजलक्ष्मीः ❀**

१ **सन्ध्यक्षरस्थस्येति** । तस्य भेदेन ग्रहेऽपीत्यर्थः । २ 'असावर्ण्या'दित्यस्य–'अग्रहण'मिति शेषः । ३ विवृतापेक्षया प्रकर्षे विवक्षायामेव तात्पर्यमित्याशयः ।

४ **अत्वादिजातेरिति** । अकारादिसादृश्येऽपि अत्वजातेरभावादित्यर्थः । ५ **भावः**–सत्यन्तकैयटग्रन्थाशयः । ६ युक्त्यन्तरमाह–**ऐकारादीनामिति** । ७ **अत एव**–अग्रहणपक्षसत्त्वादेव । ८ **इत्येवेत्यस्य**–ऋग्रहणं विनापीत्यर्थः । ९ **यस्यापीत्यस्य** 'मते' इति शेषः । १० तस्मान्नुडित्येतावदेव सूत्रमित्याशयः ।

११ **'क्रियते'** इत्यस्य "तदा यद्यपि ऋदुपधधात्ववयवदीर्घाकारात्परस्य नुट् सिद्ध इति न तत्राव्याप्तिस्तथापि" इति शेषः । १२ **अत्रापि**–अदुपधदीर्घीभूतधातोरपि । 'नुट् प्राप्नोत्यतोऽतिव्याप्तिर्दोष' इति शेषः । १३ **नियमार्थमिति** । यद्यपि–नियामकत्वेऽप्यस्य सूत्रस्य–'अश्धातोश्चेदश्नोतेरेव न भोजनार्थकस्याश्नाते'रिति नियमेऽश्नातिव्यावृत्तेः फलस्य सत्त्वाद्भाष्योक्तनियमस्याऽलाभस्तथापि नियमस्य सामान्यापेक्षत्वस्यावश्यकतयाऽदुपधधातुव्यावृत्तिः सिध्यतीत्याशयः । १४ **अश्नातिः**–भोजनार्थकोऽश्धातुः । १५ **नियमेति** । नियमबोधकस्य शास्त्रस्येत्यर्थः । १६ **तथाहीति** । द्विहल्ग्रहणस्याऽस्मिन्पक्षेऽभावादश्नातेरेवाऽवर्णोपधस्य निवृत्तेरभीष्टतया तदतिरिक्तस्थले सर्वत्र नुडिष्टः, स च 'नाश्न' इति न्यासेन सुलभ इति 'तस्मान्नुण्नाश्न' इत्येव सूत्रयितुमुचितं स्यादिति भावः ।

[ पूर्वोक्ताक्षेपवार्तिकखण्डव्याख्याभाष्यम् ]

**लादेशे च ऋकारग्रहणं कर्तव्यम् । 'कृपो रो लः' 'ऋकारस्य चे'ति वक्तव्यम् । इहापि यथा स्यात्—क्लृप्तः क्लृप्तवानिति । यस्य पुनर्गृह्यन्ते, 'र' इत्येव तस्य सिद्धम् ॥**

[ अग्रहणपक्षे दोषनिरासभाष्यम् ]

**यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । ऋकारोऽप्यत्र निर्दिश्यते ॥ कथम् ? ॥ अविभक्तिको निर्देशः—कृप, उः, रः, लः—"कृपो रो लः" इति । अथवा उभयतः स्फोटमात्रं निर्दिश्यते—'रश्रुतेर्लश्रुतिर्भवती'ति । [ लादेश ] ।**

(**प्रदीपः**) **अविभक्तिक इति ।** तत्र ऋकारनिर्देशसामर्थ्याद्विभागं प्रकल्प्याऽऽदेशो विधीयते ॥ **स्फोटमात्रमिति ।** जातिस्फोट इत्यर्थः । ततश्चान्तर्भूतानन्तर्भूतरेफलकारव्यङ्ग्यं सामान्यं स्थान्यादेशभावेनाश्रीयते ।

(**उद्द्योतः**) नन्वखण्डवर्णपक्षे ऋकारप्रश्लेषेऽपि कथं सिध्यतीत्यत आह—**तत्र ऋकारेति ।** एवं च रेफपदेन तत्सदृश आरोपितरेफवत्त्वानपि गृह्यत इति फलितम् । मात्रशब्दः सामान्याभिप्राय इत्याह—**जातीति ।** जातिश्चावयवाऽनवयवसाधारणीत्याशयेनाह—**ततश्चेति ।** एवंविधा च रत्वलत्वजातिरेवेत्यतिप्रसङ्गो न । स्थान्यादेशभावश्च जातेर्व्यक्तिद्वारको बोध्यः । वस्तुतः[12] स्फोट एव श्रोत्रग्राह्यः । वायुनिष्ठरत्वादिना च तस्याऽभिव्यक्तिः[13] । एवं च साक्षाद्रत्ववतोऽभावेन 'कल्पते' इत्यत्राप्यप्रवृत्तावस्य वैयर्थ्यापत्तिः । एवं च रेफावभासिनः स्फोटस्य प्रसङ्गे लकारावभासः स्फोट इत्यर्थः । एवं च कृपावपि तत्प्रवृत्तिः सम्भवत्येव, तत्रापि रेफावभाससत्त्वात् । आकारादौ तु नैवं ह्रस्वाद्यवभास इति न तत्राकारावभासप्रयुक्तकार्यापत्तिः । तदुक्तम्[15]—**रश्रुतेरि**त्यादि । यत्तु,—स्वतन्त्राऽस्वतन्त्रसाधारणजातिपरतयैतद्भाष्यव्याख्यानम्[16] । तन्न । तादृशजातौ[17] मानाभावात् । नरसिंहदृष्टान्तानुपपत्तेश्च[18] । 'सादृश्यात्तु प्रत्यभिज्ञे'त्यादि स्वोक्तिविरोधापत्तेश्च[19] । किं चैवं सति **रजाते**रित्येव भगवान्वदेत् । किं च तादृशजातिसत्त्वे वर्णैकदेशानामपि तज्जातिमत्त्वेन वर्णग्रहणेन ग्रहणपक्षस्यैव सिद्धया ग्रहणपक्षमुक्त्वाऽथ **वा न गृह्यन्त** इति पक्षतत्समाधानपरभाष्याऽसङ्गतिः । अत एवाष्टमे **रषाभ्या**मिति सूत्रे—'यथा नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाऽभावः, एवं वर्णवर्णैकदेशयोरपी'ति कैयट आहेति वदन्ति[20] ।

[ आक्षेपवार्तिकापरखण्डव्याख्याभाष्यम् ]

**विनामे ऋकारग्रहणं कर्तव्यम् । 'रषाभ्यां नो णः समानपदे' 'ऋकाराच्चे'ति वक्तव्यम् । इहापि यथा स्यात्—मातॄणां पितॄणामिति । यस्य पुनर्गृह्यन्ते 'रषाभ्या'मित्येव तस्य सिद्धम् ॥**

---

❀ **राजलक्ष्मीः** ❀

१ सूत्रन्तु कल्पत इत्यादौ सावकाशमिति ऋकारग्रहणाऽभावे क्लृप्त इत्यादौ लत्वं न स्यादित्याशयः ।

२ तन्त्रं कृत्वा कृपो रेफस्य लत्वं, कृपधात्ववयवऋकारावयवरेफस्य च लत्वमित्यर्थद्वयं कार्यम् । अथवा ऋकारसम्बन्धी यो रेफस्तस्येत्यर्थो वाच्यः, सम्बन्धश्च 'कल्पते' 'क्लृप्त' इत्यादौ यथायथं वाच्यः । तत्र कल्पते इत्यत्र स्वघटकस्थानिकादेशत्वमृकारस्य रेफे सम्बन्धः । क्लृप्त इत्यादौ तु स्वघटकत्वमेव ऋकारस्य रेफे सम्बन्ध इत्यवधेयम् । ३ **उभयतः**—उद्देश्यविधेययोः । ४ **स्फोटमात्रं**—जातिमात्रम् । ५ **रश्रुतेः**—रेफरूपस्फोटस्य । तस्यैव श्रवणादित्याशयः । रश्रवणस्थले इति यावत् । ६ **लश्रुतिरिति ।** बहुव्रीहिः ।

७ नन्वखण्ड ऋकार इति पक्षे—'कृपो य ऋकारस्तदवयवरेफस्य लत्व'मित्यर्थेऽपि कथं लत्वमत आह—**तत्रेति ।** ८ **विभागमिति ।** 'अखण्डत्वेऽप्यृकारस्ये'त्यादिः । ९ व्यक्तिस्फोटपक्षे गुणो चरितार्थोऽत्र न प्रवर्त्तेतेत्यत आह—**जातीति ।** १० **व्यङ्ग्यमिति ।** 'आक्षरसमाम्नायिक'मिति शेषः । **सामान्यं**—जातिस्फोटः । ११ **आश्रीयत इति ।** एवञ्चोभयत्रापि लत्वं भवतीत्याशयः । १२ कैयटोक्तव्याख्यानस्य दुष्टत्वात्स्वमतेनाह—**वस्तुत इति ।** १३ **तस्य**—स्फोटस्य । १४ **रत्ववतः**—रत्ववतो वायोः । १५ **तदुक्त**मित्यस्य—'भाष्ये'इति शेषः । १६ **व्याख्यानं**—कैयटोक्तं व्याख्यानम् । १७ **तादृशेति ।** रत्वजातावित्यर्थः । १८ **नरसिंहेति ।** ऋभागे रत्ववन्नभागे नरत्वजात्यापत्तेर्दृष्टान्तहानिरित्याशयः । **सादृश्यादिति ।** जातौ सादृश्याश्रयणवैफल्यादित्याशयः । १९ **विरोधापत्तेश्चेति ।** न हि सदृशे सा जातिर्गवये नहि गोत्वन्तिष्ठतीत्याशयः । २० एवश्च ऋभागे न रत्वमित्याशयः ।

---

❀ **शब्दकौस्तुभः** ❀

अंशांऽशिसाधारण्या एवेत्यत्र ज्ञापकं तु 'लुटि च कॢपः' "तासि च कॢपः' 'ऋदुपधाच्चाकॢपिचृते'रिति निर्देशाः । यद्वा—कृप उः रः ल इति छेदः । कृप इति लुप्तषष्ठीकं पदम् । तच्च तन्त्रेणावृत्त्या वा योज्यम् । कृपेर्यो रेफस्तस्य लः, कृपेर्ऋकारस्यावयवो यो रेफः—रेफसदृश इति यावत्—तस्य च लकार इति ।

[ अग्रहणवादिभाष्यम् ]

**न सिध्यति । यत्तद्रेफात्परं[1] भक्तेस्तेन व्यवहितत्वान्न प्राप्नोति ॥**

( प्रदीपः ) **यत्तदिति** । रेफाद्भक्तेरिति समानाधिकरणे पञ्चम्यौ ॥

[ ग्रहणवादिभाष्यम् ]

**मा[2]भूदेवम् । अड्व्यवाय इत्येव सिद्धम् ।**

( प्रदीपः ) **अड्व्यवाये इति** । ऋकारेण यथा दीर्घो गृह्यते, एवमृकारभागोऽपीत्यर्थः ॥

( उद्द्योतः ) **ऋकारेणेति** । ऋकारावयवस्य रेफस्येव तदज्भागस्यापि केनचिदकारादिना ग्रहणादट्त्वमिति मन्यते ॥

[ अग्रहणवादिभाष्यम् ]

**न[3] सिध्यति । वर्णैकदेशाः के वर्णग्रहणे गृह्यन्ते, ये व्यपवृ[4]क्ता अपि वर्णा भवन्ति । यच्चापि रेफात्परं भक्तेर्न त[5]त्क्वचिदपि व्यपवृक्तं दृश्यते ॥**

( प्रदीपः ) **न सिद्ध्यतीति** । तस्य[6] भागस्य स्फुटप्रतिभासाऽविषयत्वाज्जात्यभिव्यक्तिहेतुत्वाऽभावाच्चेति भावः ॥

( उद्द्योतः ) **जात्य[7]भिव्यक्तीति** । अत्वादिजातीत्यर्थः । एवं च न केनाऽप्य[8]चा तद्ग्रहणमिति भावः । अत्र जात्यभिव्यक्तिहेतुत्वाऽभावे-स्फुटप्रतिभासा[9]विषयत्वं हेतुः । चो हेतौ । अतो न सिद्ध्यतीत्यर्थः ॥

[ ग्रहणवादिभाष्यम् ]

**एवं तर्हि योगविभागः करिष्यते, 'रषाभ्यां नो णः समानपदे' । ततः—'व्यवाये'। व्यवाये च रषाभ्यां नो णो भवतीति । ततः-अट्कुप्वाङ्नुम्भिः' इति ॥**

**इदमिदानीं किमर्थम् ?॥**

**नियमार्थम्—'एतैरेवाक्षरसमाम्नायि[11]कैर्व्यवाये, नान्यै'रिति ॥**

( प्रदीपः ) **एतैरेवेति** । आकारादयोऽप्यकारादिभिः प्रत्यायितत्वादाक्षरसमाम्नायिकाः । भक्तिस्तु न प्रत्याय्या[12], न च प्रत्यायिकेति नियमेन न निवर्त्यते ॥

( उद्द्योतः ) नन्वाकारादिभिर्व्यवायेऽपि न स्यात्, आक्षरसमाम्नायिकत्वाऽभावादत आह-**आकारादयोऽपीति**। **भक्तिस्त्विति** । असवर्णत्वादनुपदेशाच्चेति भावः ।

[ अग्रहणवादिभाष्यम् ]

**य[13]स्यापि न गृह्यन्ते तस्याप्येष न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—' भवत्यृकारान्नो णत्व'मिति य[14]दयं क्षुभ्नादिषु नृनमन[15]शब्दं पठति ॥**

( उद्द्योतः ) भाष्ये **नृनमनशब्दमिति** । संज्ञाभूतमित्यभिप्रायः । 'गन्धर्वगान'मित्यादौ सुबुत्पत्तेः पूर्वं समासेपि णत्ववार[16]णायाऽखण्डपदे इत्यर्थके 'समानपदे' इत्यत्र पदस्यार्थबोधकस्यैव ग्रहणेन, सखण्डत्वेऽसंज्ञायां णत्वप्राप्त्य-

❀ राजलक्ष्मीः ❀

१ यद्रेफरूपभागात्परं–तत् अज्रूपम्, तेन व्यवधानादित्यर्थः । २ ग्रहणवादी स्वेष्टसिद्धिमन्यथाऽपि दर्शयति **माभूदिति** । ३ अग्रहणवादी सिद्धिं दूषयति–**नेति** । ४ **व्यपवृक्ताः**––पृथक्स्थिताः । **वर्णाः**––वर्णसदृशाः । ५ **न तदिति** । पादमात्रिकं हि तत् । अच्त्वेकादिमात्रिक इत्याशयः । ६ **तस्य**–अज्भागस्य । ७ ननु स्फुटप्रतिभासोऽस्त्येवात आह–**जात्यभीति** । तस्य रेफपरऋकारभागस्य अच्त्वेन त्वया ग्रहणं वक्तव्यं तच्च न, रेफरहिततज्भागेन ऋत्वजातेरनभिव्यञ्जनादच्त्वाऽभावादित्याशयः । घटत्वाद्यभिव्यक्तौ कम्बुग्रीवादिमद्व्यक्तेर्यथाऽभिव्यञ्जकता न तद्वत्तदज्भागस्याभिव्यञ्जकतेत्याकूतम्। ८ **केनापीति** । अकाराकारेकारकारल्कारादिभिः कैरपि वर्णैः सादृश्याभावादित्याशयः। ९ ऋत्वं रेफवताऽज्भागेन भासते न केवलेन तद्भागेनेत्याशयः । १० अनेनैव सूत्रेण प्रकृते णत्वमित्यवध्येयम् ।

११ नियमस्य सजातीयापेक्षतया लब्धमंशमाह–**अक्षरसमाम्नायिकैरिति**। १२ असवर्णत्वान्न प्रत्याय्या, अनुपदेशाच्च न प्रत्यायिकेति योजना बोध्या ।

१३ अग्रहणवादी सिद्धान्ती स्वमते गौरवं निरस्यति–**यस्यापीति**। १४ एकदेशी ज्ञापकमुपन्यस्यति–**यदिति** । १५ नृनमनशब्दः कस्य चित्सञ्ज्ञा।१६ **णत्ववारणायेत्यस्य**

❀ शब्दकौस्तुभः ❀

तेन चलीक्लृप्यतइत्यादि सिद्धम् । ईदृशपदविभागप्रदर्शनपरभाष्यादेव 'कृपे'रिति सूत्रपाठस्य प्रामादिकत्वं निर्णीयते। तदेवं नुड्विधिलादेशयोः समाहितम् । **विनामो**–नतिः । तल्लक्षणं चोक्तं प्रातिशाख्ये,–नतिर्दन्त्यस्य मूर्धन्यभाव'इति । प्रकृते तु नस्य णत्वं नतिः । तत्रेदं प्रतिविधानम्–'छन्दस्यृदव-

भावादिति बोध्यम्। '**छन्दस्यृ**'दित्यस्य तु नात्र प्राप्तिः, ईदृशे विषयेऽवग्रहाऽभावादित्याहुः ॥

[ ग्रहणवादिनो ज्ञापकताविघटनभाष्यम् ]

**नैत[1]दस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात्—नार्नमनिः ॥**

[ अग्रहणवादिभाष्यम् ]

**यत्त[3]र्हि तृम्नोतिशब्दं पठति ॥**

[ वार्त्तिकमतेन पूर्वोक्तज्ञापकस्थापनभाष्यम् ]

**यच्चा[4]पि नृनमनशब्दं पठ[5]ति ॥**

[ तटस्थबाधकस्मारणभाष्यम् ]

**न[6]नु चोक्तम्—'वृद्ध्यर्थमेतत्स्या[6]त्' ॥**

[ समाधानभाष्यम् ]

**ब[7]हिरङ्गा वृद्धिरन्तरङ्गं णत्वम्। 'असिद्धं बहिरङ्गमन्तरङ्गे' । अथ[8]वा उपरिष्टाद्योगविभागः करिष्यते–'ऋतः' । [ऋतो] नो णो भवति । ततः-'छन्दस्यवग्रहात्'। 'ऋत'इत्येव।**

( उद्द्योतः ) **बहिरङ्गा वृद्धिरिति** । त्रिपाद्यामपि बहिरङ्गपरिभाषा प्रवर्त्तत इति वार्त्तिकमतेनैतत् । भाष्यमते तु तृम्नोतिशब्दपाठस्यैव ज्ञापकता बोध्या । **ऋतो नो ण इति**। 'मातृणा'मित्यादौ दीर्घस्य बहिरङ्गाऽसिद्धत्वाण्णत्वम् । यद्वा[9] **प्रशास्तृणा**मिति निर्देशाण्णत्वम् । अत्र[10] तपरत्वं मुखसुखार्थमेव । उत्त[11]रत्राऽप्येवमेव, फलाभा[12]वात् । ध्वनितं चेदं वृत्तौ ॥

[ अग्रहणपक्षे दोषान्तरवार्तिकम् ]

॥*॥ प्लुतावैच इदुतौ ॥*॥

[ व्याख्यानभाष्यम् ]

**[ 'प्लुतावैच इदुतौ' ] ए[13]तच्च वक्तव्यम् । यस्य पुनर्गृह्यन्ते, 'गुरोष्टे'रित्येव प्लुत्या तस्य सिद्धम् ॥**

( प्रदीपः ) **गुरोष्टेरिति** । ऐकारो गुरुस्तस्य टे[14]रिति सिद्धम् । तन्त्रन्यायाश्रयणाच्च गुरोरपि स्थाने प्लुतो भवति—देवद३त्तेति ॥

( उद्द्योतः ) ननु गुर्वव[15]यवटेरित्यर्थाङ्गीकारे गुरुरूपटेः प्लुतो न स्यादत आह–**तन्त्रेति**। स्थानषष्ठ्यन्तावयवषष्ठ्यन्तयोर्गुरुशब्दयोरित्यर्थः । गुर्वंवयवटिश्चैच एव संभवति नान्यस्य आकारादेः, तदवयवस्य व्यपवृक्तत्वाऽभावादिति भावः ॥

[ अग्रहणपक्षे वार्त्तिकोक्तदोषनिरासभाष्यम् ]

**[16]यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । क्रियत[17] एतन्न्यास एव ॥**

( प्रदीपः ) **क्रियते न्यास एवेति**,–अवश्यकर्तव्यतां दर्शयति । व्यपवृक्तत्वेऽपि भा[18]गयो-

❀ राजलक्ष्मीः ❀

ग्रहणेनेत्यनेनान्वयः । १ ग्रहणवादी ज्ञापकतां विघटयति–**नैतदिति**। २ अत्र रेफात्परतया प्राप्तं णत्वं वारयितुं क्षुभ्नादिपाठश्चरितार्थ इत्याशयः । ३ नहि तिङन्ते वृद्धिः शक्याकर्त्तुमित्याशयेनाह सिद्धान्ती–**तृम्नोतीति** ।

४ एकदेशी स्वोक्तं ज्ञापकत्वं समर्थयते–**यच्चापीति** । ५ **पठती**त्यस्य 'तदपि ज्ञापक'मितिशेषः । ६ 'स्या'दित्यस्य 'इती'तिशेषः । ७ वार्त्तिकमतेन समाधत्ते–**बहिरङ्गेति** । ८ अग्रहणवादी एकदेशी–प्रकारान्तरेण समाधानमाह–**अथवेति**। ९ **यद्वेति**। **परे तु**–अयं पक्षोऽयुक्तो गौरवात्, निर्देशस्य सौत्रत्वेनोपपत्तेश्च । एवञ्चाद्यपक्ष एव युक्त इत्याहुः । १० **अत्र**–ऋत इत्यत्र । ११ **उत्तरत्र**-छन्दस्यृदवग्रहादित्यत्र। १२ दीर्घेऽप्युक्तरीत्या णत्वस्य दुर्वारत्वादिष्टत्वाच्च फलाभाव इत्याशयः । १३ **एतच्चेति**। ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लुवेते इत्यर्थकमैचोश्चतुर्मात्रतासाधकं सूत्रमग्रहणवादिना कर्त्तव्यमिति तन्मते गौरवम् । ग्रहणपक्षे तु ऐचोरवयवस्य टेरिकारादेःप्लुतिर्गुरोरनृत इत्येव सिद्धेति लाघवमित्याशयः । **सिद्धम्**–ऐतिकायन औपगवेति सिद्धम् । १४ **टेः**–इकाररूपस्य टेः । **गुरोः**–गुरुरूपटेरपि । १५ सूत्राऽभावेऽतिप्रसङ्गं निरस्यति–**गुर्वंवयवेति** । १६ अग्रहणवादीसिद्धान्ती 'प्लुतावैच' इति सूत्रावश्यकर्त्तव्यतां दर्शयन्स्वमते गौरवं निरस्यति–**यस्यापीति**। **एष** दोषः–सूत्रारम्भरूपो दोषः। १७ **क्रियते**–अवश्यं कर्त्तव्य एव । १८ **भागयोः**–ऐज्भागयोरिकारोकारयोः।

❀ शब्दकौस्तुभः ❀

ग्रहा'दित्यत्र योगविभागः कार्यः। **'ऋतः'** ऋतः परस्यनस्य णः स्यात् । गृणाति वृणोतीत्यादि । ततः **'छन्दस्यवग्रहात्'** । 'ऋत' इत्येव । पितृयाणं द्युमदित्यादि । नन्वेवमपि तपरकरणात् 'पितृणा'मित्यादौ णत्वं न स्यादिति चेत्, एवं तर्हि लत्वविधाविवेहापि 'रषाभ्या'मिति रेफतत्सदृशभागसाधारणी जातिर्निर्दिश्यते, क्षुभ्नादिषु तृम्नोतिशब्दपाठाज्ज्ञापकात् । न च परयाऽज्भक्त्या व्यवधानं, 'व्यवायेपी'ति विभज्य सामान्येन व्यवायेपि णत्वविधानात् । न चैवं 'कृतेने'त्यादावतिप्रसङ्गः, 'अट्कुप्वाङ्नुम्भि'रिति नियमात् । 'आक्षरसमाम्नायिकैस्तत्प्रत्यायितैर्वा व्यवाये यदि भवति तर्ह्येतैरेवे'ति नियमसूत्रस्यार्थः । यद्वा तृम्नोतिशब्दपाठेन 'होतृपोतृप्रशास्तृणा'मित्यादिनिर्देशेन च ऋवर्णान्नस्य णत्वमेव ज्ञाप्यते लाघवात् । एवं हि 'व्यवायेपी'ति योगविभागोपि न कर्त्तव्यो

१ इदं कचिदपि नास्ति, लुप्तं भवेदिति मन्ये ।

विवृततरत्वात् प्रयत्नभेदादिकारोकाराभ्यामग्रहणादच्त्वाऽभावात् ॥

( उद्योतः ) अच्त्वाभावादिति । तन्मूलटित्वाऽभावाच्चेत्यपि बोध्यम् ।

[ अग्रहणपक्षे दोषान्तरवार्तिकम् ]

॥*॥ तुल्यरूपे संयोगे द्विव्यञ्जनविधिः ॥*॥

[ व्याख्याभाष्यम् ]

**तुल्यरूपे संयोगे द्विव्यञ्जनाश्रयो विधिर्न सिध्यति-कुक्कुटः पिप्पली पित्तमिति । यस्य पुनर्गृह्यन्ते तस्य द्वौ ककारौ, द्वौ पकारौ, द्वौ तकारौ ॥**

( प्रदीपः ) तुल्यरूप इति । तुल्यरूपावयवत्वात्संयोगस्तुल्यरूपस्तस्यैकवर्णत्वं पूर्वपक्षे, सिद्धान्ते तु वर्णद्वयरूपता । आशूच्चारणात्तु भ्रान्तमेकत्वज्ञानमिति शिष्टसमाचारः ॥

( उद्योतः ) संयोग इति । संयोगसंज्ञार्ह इत्यर्थः । तस्यैकवर्णत्वमिति । एवं च संयोगसंज्ञा न स्यादिति भावः । संयोगे इति भाष्यं तु-संयोगार्ह इत्यर्थपरमिति तात्पर्यम् । शिष्टसमाचारः-शिष्टव्यवहारः ॥

[ वार्त्तिकोक्तदोषखण्डनभाष्यम् ]

**यस्यापि न गृह्यन्ते तस्यापि द्वौ ककारौ द्वौ पकारौ द्वौ तकारौ ॥ कथम् ? ॥ मात्राकालोऽत्र गम्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुम् ?। असच्च कथं शक्यं प्रतिपत्तुम् ? ॥**

( उद्योतः ) भाष्ये-मात्राकालोऽत्रेति, बहुव्रीहिः, संयोगोऽन्यपदार्थः । मात्रिकव्यञ्जनाभावेऽनुपदिष्टत्वं हेतुः । 'कुक्कुट' इत्याद्युच्चारणं तु न उपदेशः । अनुपदिष्टत्वं नाम अक्षरसमाम्नायेऽपठितत्वं, ग्राहकशास्त्रेणाऽगृहीतत्वं च । अनुपदिष्टं सत् सत्त्वेन कथं शक्यं विज्ञातुमित्यर्थः । एवं चानुपदिष्टस्याऽसत्त्वात्तत्प्रतिपत्तिरशक्येत्याह-असच्चेति । क्वचित्तु 'असच्चे'त्यादिग्रन्थो न दृश्यते । अनेन लृकाराऽपाठे तस्याऽसत्त्वशङ्कया तयोः सावर्ण्यविधिरप्यशक्य इति सूचितम् ॥

[ ग्रहणवादिन आक्षेपस्थापनभाष्यम् ]

**यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रैतन्नास्ति—'अणसवर्णान्गृह्णाति' इति । इह तु कथम् सँय्यन्ता, सँव्वत्सरः, यँल्लोकम्, तँल्लोकमिति यत्रैतदस्त्यन्सवर्णान् गृह्णातीति ? ॥**

(उद्योतः) यत्रैतदस्तीति भाष्ये । यत्र=हलोऽनन्तरा इत्यत्र। यकारादिभिरस्य ग्रहणे हल्द्वयाभाव इति भावः।

[ आक्षेपबाधकभाष्यम् ]

**अत्रापि मात्राकालो गृह्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुम् । असच्च कथं शक्यं प्रतिपत्तुम् ? ॥ ४ ॥**

( प्रदीपः ) अत्रापीति । सानुनासिकनिरनुनासिकौ द्वावत्र वर्णावित्यर्थः ॥ ४ ॥

॥ राजलक्ष्मीः ॥

१ विवृततरत्वादिति । विवृततमत्वादित्युचितम् । २ अच्त्वाभावादिति । अच्त्वस्याऽभावाद्गुरोरिति प्लुताऽप्राप्तेस्तस्यावश्यकत्वादित्याशयः । ३ अग्रहणपक्षे दोषान्तरमाह—तुल्येति । संयोगे-संयोगसंज्ञार्हे 'क्' इत्यादौ । विधिः-संयोगसंज्ञारूपो विधिः । ४ संयोगसंज्ञाश्रये ककारादौ वर्णैकत्वमैक्यदाश्रित्य शङ्का । पृथक्पृथक्त्वजातेः सत्त्वान्नैकत्वमित्युत्तरमित्याशयः । ५ संयोगसंज्ञाया अत्राऽप्राप्तेराह-संयोगार्हे इति । ६ न च=नहि । अनुपदिष्टत्वादिति शेषः । ७ अनुपदिष्टं हि 'स'दिति विज्ञातुं कथं शक्यमित्यन्वयः । ८ अनेन-अनुपदिष्टमित्यादिग्रन्थेन । तस्य-लृकारस्य । तयोः-ऋलृवर्णयोः । ९ यत्र-कुक्कुटादौ । १० अण्त्वाद्दीर्घादिग्रहणवन्मात्रिकग्रहणं प्राप्तमिति भावः । ११ पूर्वोक्तं परिहारमत्रादिशति-अत्रापीति । १२ अत्र-सँय्यन्तेत्यादौ ।

॥ शब्दकौस्तुभः ॥

भवतीति । भाष्ये तु-'वर्णैकदेशा वर्णग्रहणेन न गृह्यन्ते' इति द्वितीयोऽपि पक्षः समर्थितः । स तु बहुप्रतिविधेयत्वेन गौरवभयान्नेह प्रपञ्च्यते ।

ननु यदि वर्णैकदेशा वर्णग्रहणेन न गृह्यन्ते तर्हि 'कुक्कुटः' 'पिप्पली' 'पित्त'मित्यादौ संयोगसंज्ञा न स्यात्, अखण्डस्य मात्राकालस्य 'क्क्' 'प्प्' 'त्त्'इत्यस्य एकहल्त्वात् । तदवयवयोश्च हल्ग्रहणेनाऽग्रहणात् । नन्वखण्डस्यानुपदेशात् कथं हल्त्वमिति चेत्, मा भूत्तर्हि तदपि, अवयवानां हल्त्वं तु कुतः ?। सय्यँन्ता सव्वँत्सरः यँल्लोकमित्यादौ तु एकवर्णानामपि हल्त्वं भविष्यति । अणसूपदिष्टैर्ग्रहणात् । तदवयवयोस्तु हल्त्वं न स्यादेव । ततश्च संयोगसंज्ञाविरहे ततः पूर्वस्य गुरुत्वाऽभावे प्लुतो न स्यादिति । अत्राहुः-व्यञ्जनमर्द्धमात्रमेव । आशूच्चारणात्तु तुल्यरूपयोर्द्वयोरेकत्वभ्रमः । इदं च शिष्टसमाचारात्प्रक्रियादशायामवश्यं स्वीकार्यम् । परमार्थदशायां तु,-'पदे न वर्णा विद्यन्ते वर्णे-

(उद्द्योतः) सानुनासिकेति। अणुंदिच्छास्त्रं हि विद्यमानस्य लोकसिद्धस्य सवर्णस्य ग्राहकमेव, न त्वप्रसिद्धसवर्णकल्पकमिति भावः ॥ [ एओङ् ऐऔच् ]॥

---

## हयवरट् ॥ ५ ॥

[ हकारस्य द्विरुपदेशे आक्षेपभाष्यम् ]

**सर्वे वर्णाः सकृदुपदिष्टा अयं हकारो द्विरुपदिश्यते–पूर्वश्चैव परश्च। यदि पुनः पूर्व एवोपदिश्येत, पर एव वा कश्चात्र विशेषः ? ॥**

( प्रदीपः ) **हयवरट्। पूर्वश्चेति।** पूर्वपरोच्चारणक्रियाभेदादेकस्यैव हकारस्य पूर्वपरव्यपदेशः ॥

( उद्द्योतः ) हयवरट्। **नन्वयं हकार** इत्यनेनैकत्वं हकारस्य सूचितमिति कथं तद्विरुद्धं **पूर्वश्चे**त्यादिना भेदाश्रयणमत आह–**पूर्वपरेति।** एतद्भाष्यादेकत्वं **वर्णानामि**त्येव पक्षो भगवतः संमत इति ज्ञायते। भाष्ये–**यदि पुनरिति।** न चैवं परहकाराऽभावे लकारस्याप्यभावेन तन्त्राद्याश्रयणेन **हलन्त्य**मित्यत्रान्योन्याश्रयपरिहारो वक्ष्यमाणो विरुध्येतेति वाच्यम्, **रन्त्यं हरिति** न्यासेन, **लन्त्यं हलिति** न्यासेन वा तत्परिहारात्। लाघवाऽभावेऽपि एवं कर्तुं शक्यं न वेत्येव विचारतात्पर्यात्। यद्वा **हरन्त्यमि**त्यस्यैवावृत्त्या हबोधकसूत्रसमुदायान्त्यमिदित्यर्थः। **परे तु** परहकाराभावेऽपि '**ल्**' इत्येव सूत्रं कार्यं प्रातिशाख्यादिप्रसिद्धहलादिप्रत्याहारसिद्ध्यर्थम्। तदर्थे रान्त[3]स्यापि शक्तिकल्पने गौरवात्। **हलन्त्य**मित्यस्यावृत्त्या 'हल्प्र[4]त्याहारबोधकसूत्रसमुदायान्त्यमि'दित्यप्यर्थ इत्यदोष इत्याहुः।

[ पूर्वत्रानुपदेशे परत्रैवोपदेशे च दूषणवार्तिकम् ]

*॥*॥ हकारस्य परोपदेशेदेशेऽड्ग्रहणेषु हग्रहणम् ॥*॥*

[ व्याख्याभाष्यम् ]

**हकारस्य परोपदेशेऽड्ग्रहणेषु[5] हग्रहणं कर्तव्यम्–'आतोऽटि नित्यम्' 'शश्छोटि' 'दीर्घादटि समानपादे' 'हकारे चे'ति वक्तव्यम्। इहापि यथा स्यात्–महाँ हि सः ॥**

( प्रदीपः ) **शश्छोटीति।** हकारपरस्य शकारस्याऽसम्भवात् प्रसङ्गोच्चारितमेतत् ॥

( उद्द्योतः ) **अड्ग्रहणेष्विति।** अड्गृह्यते येषु सूत्रेष्वित्यर्थः। **शश्छोटी**त्यस्योदाहरणादाने बीजमाह–**हकारपरस्येति।** न च 'तच् श् हित्यादे'रुदाहरणसंभवः, शास्त्रबोधितं [6]सौत्रं च विहाय हलामुच्चारणार्थोऽचं विनोच्चारणस्याऽसाधुत्वेन तादृशोदाहरणाऽभाव इत्याशयात्। अत्र च,–भाष्ये एतदुदाहरणादानमेव मानम्। **आतोऽटि-दीर्घादटी**त्युभयोरुदाहरणं **महाँ हि स इति। अट्कुप्विति** सूत्रेऽपि ग्रहणफलमर्हेणेति बोध्यम् ॥

[ पूर्वत्रानुपदेशे दूषणान्तरवार्तिकम् ]

*॥ * ॥ उत्वे च ॥ * ॥*

[ व्याख्याभाष्यम् ]

**उत्वे च हकारग्रहणं कर्तव्यम्। 'अतो रोरप्लुतादप्लुते' 'हशि च' 'हकारे चे'ति वक्तव्यम्। इहापि यथा स्यात्–पुरुषो हसति, ब्राह्मणो हसतीति ॥**

---

### ❀ राजलक्ष्मीः ❀

१ ननु ग्रहणकशास्त्रगृहीतत्वरूप उपदेशोऽकारादिवत्तस्याऽप्यस्त्येवात आह–**अणुदिदिति।** २ अनित्ये घटादौ पूर्वपरभेदेन घटादिभेदेऽपि नित्ये विभौ वर्णे कथं पूर्वपरभेदोऽत आह–**पूर्वेति।** ३ **रान्तस्य**–हरित्यस्य। ४ इदानीं हलिति चतुर्दशसूत्रस्याभावादावृत्तस्यार्थमाह -**हलिति।** ५ **अड्ग्रहणेषु**–अट्पदघटितसूत्रेषु। ६ **सौत्रं**–सूत्रस्थम्।

---

### ❀ शब्दकौस्तुभः ❀

**ष्ववयवा न च। वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चने'ति** वाक्यपदीयोक्तरीत्या स्फोटं सिद्धान्तयतां काऽस्य पूर्वपक्षस्यावसरः ?॥ **[ एओङ् ऐऔच् ]॥**

**हयवरट्।** हकारोऽयं द्विरुपदिश्यते। यदि तु परत्रैवोपदिश्येत अडशड्हश्इण्ग्रहणेषु न गृह्येत। ततश्च 'अर्हेणे'त्यत्राड्व्यवायेपीति णत्वं न स्यात्। 'महान् ही'ति स्थिते 'महाँ ही'ति न स्यात्। अत्र हि 'दीर्घादटि समानपादे'इति रुः। 'आतोऽटि नित्य'मित्यनुनासिकः। 'भोभगोअघोअपूर्वस्ये'ति यत्वम्। 'हलि सर्वेषा'मिति यलोपः। तत्राऽप्यशीत्यनुवर्त्तत इति वक्ष्यते। 'ब्राह्मणो हसती'त्यत्र 'हशि चे'त्युत्वं न स्यात्। तथा 'लिलिहिढ्वे' 'लिलिहिध्वे'इत्यत्र 'विभाषेटः' इति मूर्द्धन्यविकल्पो न स्यत्। तत्र हि 'इणः षीध्व'मिति सूत्रादिण इत्यनुवर्त्तते। तदेवमटि अशि हशि इणि चेति चतुर्षु ग्रहणं प्रथमोपदेशस्य फलमिति स्थितम्। यदि तु परत्र नोपदिश्येत वल्रल्झल्शल्ग्रहणेषु न गृह्येत। ततश्च 'रुदिहि' स्वपिही'त्यत्र 'रुदादिभ्यः सार्वधातुके'इति वलादित्वप्रयुक्त इण्न स्यात्। 'ष्णिह प्रीतौ'। स्निहित्वा स्नेहित्वा,

( प्रदीपः ) उत्वे चेति । अत्वमपि न प्राप्नोतीति वक्तव्यं 'भो हसती'ति रोर्यत्वार्थम् ॥

( उद्योतः ) अश्त्वमपीति । इदमिण्त्वस्याप्युपलक्षणम् । तेन लिलिह्ढि इत्यादौ विभाषेट इति ढत्वविकल्पसिद्धिरिति केचित् । भाष्ये हशि चेति सिद्धान्तरीत्या निर्देशः । इदानीं तु यशिचेति सूत्रम् ॥

[ पूर्वोपदेशाङ्गीकारभाष्यम् ]

**अस्तु तर्हि पूर्वोपदेशः ॥**

[ पूर्वोपदेशे परत्रानुपदेशे च दूषणवार्तिकम् ]

*॥*॥ पूर्वोपदेशे कित्वक्सेड्विधयो झल्ग्रहणानि च ॥*॥*

[ व्याख्याभाष्यम् ]

**यदि पूर्वोपदेशः कित्त्वं विधेयम्-स्निहित्वा, स्नेहित्वा, सिस्निहिषति, सिस्नेहिषति । 'रलोऽव्युपधाद्धलादे'रिति कित्त्वं न प्राप्नोति ।**

**क्सविधिः । क्सश्च विधेयः-अधुक्षत् । अलिक्षत् । 'शल इगुपधादनिटः क्सः' इति क्सो न प्राप्नोति ॥**

**इड्विधिः । इड् विधेयः-रुदिहि । वलादिलक्षण इण्न प्राप्नोति ।**

**झल्ग्रहणानि च ॥ किम् ? ॥ अहकाराणि स्युः ॥ तत्र को दोषः ? ॥ 'झलो झलि' इतीह न स्यात्-अदाग्धाम् अदाग्धम् । तस्मात्पूर्वश्चैवोपदेष्टव्यः परश्च ॥**

( उद्योतः ) अहकाराणि स्युरिति । अतस्तत्र हकारग्रहणं[1] कर्तव्यमिति भावः । अदाग्धामिति । घत्वस्याऽसिद्धत्वादिति[2] भावः ॥

[ अन्यत्राप्युपदेशबोधकं कटाक्षभाष्यम् ]

**यदि च किञ्चिदन्यत्राप्युपेदेशे प्रयोजनमस्ति, तत्राप्युदेशः कर्तव्यः ॥**

( प्रदीपः ) यदि च किंचिदिति । प्रयोजनार्थो हि वर्णानामुपदेशो, न स्वरूपप्रतिपत्त्यर्थः ।

( उद्योतः ) स्वरूपप्रतिपत्त्यर्थ एवायमक्षरसमाम्नाय इति भ्रमं वारयति-भाष्ये यदि किंचिदिति । तद्व्याचष्टे-प्रयोजनार्थं इति । शास्त्रीयप्रयोजनार्थं इत्यर्थः । एवं चाऽऽद्यहकारस्याऽशिणोरपि प्रयोजनं सूचितम् । अत एव 'मघा हसन्ती'ति 'पुंयोगा'दिति सूत्रे भाष्यप्रयोगः सङ्गच्छते । एतेन पूर्वहकारोपदेशप्रयोजनवार्तिके न्यूनता परिहृता । कर्त्तव्य इत्यस्य 'स्याँ'[4]दिति शेषः । उपदेशोऽत्रोच्चारणमात्रम् ॥ अन्यत्रापि—प्रत्याहारान्तरे । सर्वथा हकारस्य द्वेधोपदेशः कर्त्तव्य इत्यत्राऽस्यै[5] तात्पर्यम् ॥

[ रेफोपदेशे पूर्वापरपाठविचारभाष्यम् ]

**इदं विचार्यते-अयं रेफो यकारवकाराभ्यां पूर्व एवोपदिश्येत-'हरयव'डिति, पर एव वा यथान्यासमिति ॥**

( प्रदीपः ) इदमिति । उभयत्रापि दोषप्रयोजनसद्भावात्प्रश्नः ।

( उद्योतः ) दोषप्रयोजनेति । अन्यतरपक्षीयदोष एवान्यतरपक्षे प्रयोजनमिति बोध्यम् ॥

[ विशेषजिज्ञासाभाष्यम् ]

**कश्चात्र विशेषः ? ॥**

[ यथावस्थितपरोपदेशपक्षदूषणवार्तिकम् ]

*॥*॥ रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः ॥*॥*

[ व्याख्याभाष्यम् ]

**रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्तव्यः ।**

**अनुनासिकस्य[6]-स्वर्नयति प्रातर्नयति । 'यरोऽनुनासिकेऽनुनासिको वे'त्यनुनासिकः प्राप्नोति ।**

❀ राजलक्ष्मीः ❀

1 अतोऽत्र 'हाचे'ति वाच्यमिति भावः । २ **घत्वस्यासिद्धत्वादिति** । 'हकारस्य च तव झल्त्वाऽभावा' दितिशेषः । ३ एतच्च त्रिश्चतुर्वोपदेशस्य फलमभविष्यत्तर्हि-तदप्यकरिष्यत् का कथा द्विरुपदेशस्येत्याशयः । ४ **स्यादिति** । सम्भावनायां लिङ् । ५ **अस्य**-ग्रन्थस्य । ६ 'प्रतिषेधो-

❀ शब्दकौस्तुभः ❀

सिस्निहिषति सिस्नेहिषतीत्यत्र 'रलोव्युपधा'दिति कित्त्वं न स्यात् । 'अदाग्धाम्' 'अदाग्ध'मित्यत्र घत्वस्यासिद्धत्वाद्धकारादझलः परः सिजिति 'झलो झली'ति न प्रवर्त्तेत । 'अधुक्षत्' अलिक्ष'दित्यत्र 'शल इगुपधादनिट'इति क्सो न स्यात् । तस्मात्प्रत्याहाराणां चतुष्टये प्रथमोपदेशस्य, चतुष्टये च द्वितीयोपदेशस्य फलमस्तीति स्थितम् ॥

स्यादेतत् । रेफस्य यर्कार्याणि प्राप्नुवन्ति । तद्यथा मद्रह्रदो' 'भद्रह्रद' इत्यत्र अचः पराद्धकारात्परस्य यर इति विधीयमानं द्वित्वं 'नह्यस्ती'त्यादौ यकारस्येव प्राप्नोति ।

**द्विर्वचनस्य–मद्रह्रदः भद्रह्रदः । 'यरः' इति द्विर्वचनं प्राप्नोति ॥**

**परसवर्णस्य–कुण्डं रथेन । वनं रथेन । 'अनुस्वारस्य ययी'ति परसवर्णः प्राप्नोति॥**

( प्रदीपः ) **स्वर्नयतीति** । णकारोऽत्रै प्राप्नोति । न ह्यत्रै सवर्णग्रहणमस्ति । **मद्रह्रद इति** । द्विर्वचने कृते तस्याऽसिद्धत्वाद्रोरीति रेफलोपो नास्ति । 'हलो यमा'मिति लोपस्तु पाक्षिक इति पक्षे रेफद्वयश्रवणप्रसङ्गः । **कुण्डं रथेनेति** । अनुनासिकेनैव परसवर्णेन भाव्यमिति नियमाऽभावाद्रेफः प्राप्नोति, तस्य चाऽसिद्धत्वाद्रोरीति लोपो नास्ति ॥

( उद्द्योतः ) **णकारोऽत्रेति** । स्थानेऽन्तरतमत्वादिति भावः । ननु रेफस्य सवर्णाऽभावात्कथमत्रानुनासिकोऽत आह–**मह्यत्रेति** । ननु द्वित्वेऽपि 'रोरी'ति 'हलो यमा'मिति वा लोपान्न दोषोऽत आह–**द्विर्वचन इति** ।

[ यकाराव्यवहितपूर्वोपदेशाभ्युपगमभाष्यम् ]

**अस्तु तर्हि पूर्वोपदेशः ॥**

[ पूर्वोपदेशदूषणवार्तिकम् ]

॥*॥ *पूर्वोपदेशे कित्त्वप्रतिषेधो, व्यलोपवचनं च* ॥*॥

[ व्याख्याभाष्यम् ]

**यदि पूर्वोपदेशः कित्त्वं प्रतिषेध्यम् । देवित्वा, दिदेविषति । 'रलोऽव्युपधा'दिति कित्त्वं प्राप्नोति ।**

**नैष दोषः, नैवं विज्ञायते–'रलः–व्युपधा'दिति ॥ किं तर्हि ? ॥ 'रलः–अव्व्युपधा'दिति ॥**

**किमिदम्—'अव् व्युपधा'दिति ? ॥ अवकारान्ताद्व्युपधादव्व्युपधादिति ॥**

( उद्द्योतः ) अव्व्युपधादिति । 'अव्' इति लुप्तपञ्चमीकम् ॥ ननु पूर्वोपदेशे इग्यण इत्यादौ यथासङ्ख्यनिर्वाहः कथमिति चेन्न, संज्ञाविधानसामर्थ्येन तत्र तद्भावितपक्षाश्रयणान्न दोषः ।

[ वार्त्तिकाऽपरखण्डव्याख्याभाष्यम् ]

**'व्यलोपवचनं च' ॥ व्योश्च लोपो वक्तव्यः । गौधेरः, पचेरन्, यजेरन् । 'जीवे रदानुः'—जीरदानुः । वलीति लोपो न प्राप्नोति ॥**

[ उक्तदूषणनिरासभाष्यम् ]

**नैष दोषः, रेफोऽप्यत्र[6] निर्दिश्यते–'लोपो व्यो र्वलि' इति । रेफे च वलि चेति ।**

---

## ❀ राजलक्ष्मीः ❀

वक्तव्य'इति शेषः । एवमग्रेऽपि । १ अत्र–रेफस्थाने । २ अत्र–अनुनासिकविधौ । ३ एवश्च रेफस्य सवर्णाऽप्रसिद्धावपि रेफस्य णत्वं प्राप्नोत्येवेत्याशयः ।

४ वकारस्य रल्त्वात्किर्त्वं प्राप्नोतीत्याशयः ।

५ एषः–किर्त्वापत्तिरूपो दोषः । इदं तु वकारान्तमेवेति नानेन किर्त्वप्राप्तिरित्याशयः । ६ ओसः सकारस्य रुत्वे रस्य रोरीतिलोपे च 'व्यो–र्वली'ति निर्देश इत्याशयः ।

---

## ❀ शब्दकौस्तुभः ❀

न च 'रोरी'ति लोपः सुकरः, लोपं प्रति द्वित्वस्याऽसिद्धेः । 'हलो यमा'मिति लोपस्तु वैकल्पिक इति वक्ष्यमाणत्वात् पक्षे रेफद्वयं श्रूयेत । न च 'व्यञ्जनपरस्यैकस्यानेकस्य वा उच्चारणे विशेषो नास्ती'त्यसिद्धवत्सूत्रे भाष्यकृता वक्ष्यमाणत्वान्नायं दोष इति वाच्यम्, सूक्ष्मत्वाद्दुर्लक्ष्यो विशेष इति तदर्थात् । नतु सर्वथा विशेषविरहोऽभिप्रेतः,'शरोऽचि' 'हलो यमा'मित्यादिशास्त्रवैयर्थ्यापत्तेः । तथा 'चतुर्मुख' इत्यादौ 'यरोनुनासिकेऽनुनासिको वे'ति पक्षे णकारः प्रवर्त्तेत, स्थानसाम्यात् । 'कुण्डं रथेने'त्यादौ 'वा पदान्तस्ये'ति पक्षे रेफः प्रवर्त्तेत । 'रेफोष्मणां सवर्णा न सन्ती'त्येतद्विजातीयः सवर्णो नास्तीत्येवंपरम् । स्वस्य स्वयं सवर्णो भवत्येव, तुल्यास्यप्रयत्नत्वात् । 'रो री'ति लोपस्तु नास्ति, तं प्रति परसवर्णस्याऽसिद्धत्वात् । अथ द्वित्वानुनासिकपरसवर्णनिवृत्तये यवाभ्यां पूर्वत्र रेफोऽनुकृष्येत–'हरयव'डिति, तर्हि रलो व्युपधादित्येतद्वकारान्तेष्वपि प्रवर्त्तेत । ततश्च 'देवित्वा' 'दिदेविषती'त्यत्र पक्षे गुणो निषिध्येत । नन्वव्व्युपधादिति च्छित्वा अवकारान्ताद्व्युपधादिति व्याख्यास्यत इति चेत्, एवमपि 'गौधेरः' 'पचेर'न्नित्यादौ 'लोपो व्यो'रिति न प्रवर्त्तेत, रेफस्य वल्यनन्तर्भावात् । 'रली'ति वक्ष्यामीति चेत्,'हय गतौ' हय्यादित्यादौ यकारेऽतिप्रसङ्गः । ननु यथाश्रुत एव सूत्रे 'र्वली'ति सरेफं पदं छित्वा रेफे वलि चेति व्याख्यानान्नोक्तदोष इति चेत्, एवमपीको रणचि, संयोगादिरातो धातो रण्वतः, उदात्तरणो हल्पूर्वादिग्रणः सम्प्रसारणमित्यादिक्रमेण यण्ग्रहणानि सर्वाणि रेफेण ग्राह्याणि स्युः । न चैतावतापीष्टनिर्वाहः, इको रणित्यत्र सङ्ख्यातानुदेशेनेकारस्य रेफः, उकारस्य यकार ऋकारस्य वकार इति बहूपप्लवप्रसङ्गात् । ननु यथाश्रुतेपि यथासङ्ख्येन निर्वाहो दुरुपपादः । तथाहि विधीयमानतया यवलाः सवर्णान्न गृह्णन्तीति चत्वारस्तावद्यणः । गुणानामभेदकतयाऽनुनासिकसङ्ग्रहेपि पृथग्गणनाविरहात् । इकस्तु

[ यथाश्रुतन्यासाऽभ्युपगमभाष्यम् ]

**अथ वा पुनरस्तु परोपदेशः ॥**

[ परोपदेशोक्ताक्षेपस्मारणभाष्यम् ]

**ननु चोक्तम्–"रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः" इति ।**

[ समाधानभाष्यम् ]

**अनुनासिकपरसवर्णयोस्तावत्प्रतिषेधो न वक्तव्यः, रेफोष्मणां सवर्णा न सन्ति ॥**

**( प्रदीपः ) रेफोष्मणामिति।** अनुनासिकपरसवर्णविधाने हि **स्थानेन्तरतम**परिभाषोपस्थानाद्दोषाऽभावः । नहि रेफस्य णकारोऽन्तरतमो, नाऽप्यनुस्वारस्य रेफः ।

**( उद्द्योतः )** भाष्ये **रेफोष्मणामिति** । 'विजातीया' इति शेषः । तेन सजातीयेषु सत्स्वपि न दोषः । ननु माभूद्रेफस्य विजातीयः सवर्णस्तथाप्यनुनासिकविधौ सवर्णग्रहणाऽभावादनुनासिकः स्यादेवेत्यत आह–**अनुनासिकपरेति। नहि रेफस्येति।** न च रेफस्य णकारः स्थानेनान्तरतमो भवत्येवेति वाच्यम्, **स्थानेऽन्तरतमे** इति सप्तम्यन्तपाठे स्थानप्रयत्नोभयान्तरतमस्पर्शे 'चिन्मात्र'मित्यादौ चरितार्थोऽनुनासिकविधिः प्रयत्नाऽसदृशे रेफे न प्रवर्त्तते इति भावात् । **नापीति** । यद्यप्यन्तरतमानन्तरतमयोः प्राप्तावन्तरतमो णकार एवेति **स्थानेन्तरतम** इत्यनेन नियमः, 'कुण्डं रथेने'त्यादौ चाऽनन्तरतमस्यैव प्राप्तिरितीदमयुक्तम्, तथापि संभवदनुस्वारान्तरतमकेऽङ्कित इत्यादौ चरितार्थः परसवर्णविधी रेफे न प्रवर्त्तते इति भावः । इदं जातिपक्षे इति केचित् । वस्तुतो व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थोऽस्यां व्यक्तौ न प्रवर्तते इति वक्तुं शक्यम्। तद्वक्ष्यतीको यणचीत्यत्र कैयटः–"द्रव्येऽपि पदार्थे उत्सर्गापवादभावः सन्दिग्धत्वाश्रयोऽस्त्येव" इति। केचित्तु **स्थानेन्तरतमे** इति सप्तम्यन्तपाठप्रत्याख्यानपरभाष्यविरोधेनाऽस्या युक्तेरसंभवदुक्तिकत्वम् । किं चैवं सति ऊष्मग्रहणं भाष्ये व्यर्थं स्यात् । तस्मादनुनासिकविधौ सवर्णपदापकर्षपरं भाष्यं। **रेफोष्मणामि**त्यस्य चानुनासिकोऽनुस्वारान्तरतमश्च सवर्णो नास्तीत्यर्थः। अत एव मह्यिष्मानित्यादौ सूत्ररीत्या स्थानप्रयत्नोभयान्तरतमऋकारसम्भवेऽपि नानुनासिकः, **नाज्झलावि**ति निषेधेन सवर्णत्वाऽभावादिति भाष्याशय इत्याहुः ॥

[ वार्त्तिकाऽपरखण्डव्याख्याभाष्यम् ]

**द्विर्वचनेऽपि । नेमौ रहौ कार्यिणौ**

### ❀ राजलक्ष्मीः ❀

१ न्यासभेदेऽदृष्टहान्यापत्त्या न्यासभेदमनभ्युपयन्नाह–**अथवेति । परोपदेशः**–हयवरडिति यथाश्रुतोपदेशः । २ 'स्थानेऽन्तरतमे'इति सप्तम्यन्तपाठाभिप्रायेणायं ग्रन्थः । ३ दोषाभावमेव विशदयति–**नहीति । ४ भावात्**–'स्थानेन्तरतम'परिभाषया दोषभावप्रदर्शककैयटग्रन्थाशयात् । ५ **अन्तरतमाऽनन्तरतमयोः**–णकारतदतिरिक्त (नकार) योः। **अन्तरतमः**–णकारः। ६ नन्वन्तरतमस्य कस्य चिदित्याशयः । ७ ननु व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणोपप्लवात्तद्विषयकशास्त्रास्याऽचारितार्थ्यात्कथमिदमत आह–**इदमिति** । ८ व्यक्तिपक्षेऽपि अन्तरतमपरिभाषैकवाक्यतयैव लक्षणोपप्लवाङ्गीकारादन्तरतमविषयकलक्षणस्यैवोपप्लवो न तु सकलव्यक्तिविषयक इति न व्यक्तिपक्षेऽपि कश्चिद्दोषइत्याह–**वस्तुतस्त्विति** । ९ 'रेफोष्मणा'मित्यस्य देहलीदीपकन्यायेनोभयत्रान्वयः । १० **अतएव**–सवर्णपदापकर्षणादेव । ऊष्मणाश्च सवर्णाभावादेव। सवर्णपदाऽपकर्षाभावे तु अन्तरतमे स्थानिनीत्यर्थे च सत्यत्र ऋकारापत्तिर्दुर्वारैव । अतो मद्रीत्यैव सवर्णापकर्षपरतया भाष्यं व्याख्येयमित्याशयः । ११ **द्विर्वचनेऽपीत्यस्य**–'प्रतिषेधो न वक्तव्यः यतः' इतिशेषः । **न कार्यिणौ**=न साक्षात्कार्यिणौ ।

### ❀ शब्दकौस्तुभः ❀

सवर्णग्रहणात्षट्षष्टिः । न च षट्षष्टेरुपस्थापकानामिकशब्दवाच्यानामिकारादीनां चतुष्ट्वमस्त्येवेति वाच्यम्, तृतीयचतुर्थाभ्यामृकारऌकाराभ्यां प्रत्येकं तस्या एव त्रिंशत उपस्थितौ सत्याम् ऌकारे रेफादेशस्य ऋकारे च लकारादेशस्य दुर्वारत्वात् । तस्मात्स्थानेन्तरतम इत्यनेनैव प्रकृते निर्वाहः । यथासङ्ख्यसूत्रन्तु नन्दिग्रहिपचादिभ्य इत्यादिषूपयोक्ष्यतइत्येव निष्कर्षः । तथा चेको रणिति न्यासेपि तेनैव निर्वाहोस्त्विति चेन्न, वैषम्यात् । यथाश्रुते ह्यविरोधात्परिभाषाद्वयमपीको यणित्यत्र प्रवर्त्तते,–इको यथासङ्ख्यमन्तरतमो यण्स्यादिति । 'र'णिति न्यासे तु परिभाषयोर्विरोधात् परत्वेन यथासङ्ख्यमेव प्रवर्त्तेत । तस्मादनुचितो रेफस्य स्वस्थानादपकर्षः। यथाश्रुते तु द्वित्वादिदोषत्रयं दुर्वारमिति । अत्रोच्यते–रेफस्य विशेषतः श्रुतेन द्वित्वं प्रति निमित्तत्वेन सामान्यतः श्रुतं कार्यित्वं बाध्यते । यथा 'ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टा'मिति विशेषतः श्रुतेन परिवेषणेन माठरकौण्डिन्ययोः सामान्यतः प्राप्तं भोजनं बाध्यते तद्वत् । यद्यपीह लक्ष्यव्यक्तिभेदेनोभयं सम्भवति तथापि 'सत्यपि सम्भवे सामान्यतः प्राप्तं विशेषप्राप्तेन बाध्यते'इत्यभ्युपगमान्न दोषः। एवं चाऽचो रहाभ्यामिति सूत्रे 'यर' इति रेफभिन्नपरमेवेति स्थिते 'अनचि-

१ 'भाष्यं–**रेफोष्मणामिति** । अस्य च' । इत्येवं तु शिवदत्त शास्त्री पठति ।

द्विर्वचनस्य ॥ किं तर्हि ? ॥ निमित्तमिमौ हरौ द्विर्वचनस्य। तद्यथा–'ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाता'मिति । नेदानीं तौ[१] भुञ्जाते ॥

( प्रदीपः ) नेमौ रहाविति। हकारवद्रेफोऽपि न कार्यीत्यर्थः । तत्रैकवाक्यतायां सामान्यविशेषविध्योर्लौकिकव्यवहारादेव शब्दार्थसम्बन्ध[२]परिज्ञानवत्सामान्यै[३]र्विधेर्विशेषविधिर्बाधकः। प्रत्यक्ष[४]श्च विशेषविधिः, सामान्यविधिस्त्वनुमेय इति रेफस्य कार्यित्वं निमित्तत्वेन बाध्यते । दध्युदकादौ तु स्थानित्वेन निमित्तत्वमिकस्तस्मादित्युत्तरस्येत्यादेशा[५]पकान्नबाध्यते[६] ।

## ❀ राजलक्ष्मीः ❀

१ तौ–माठरकौण्डिन्यौ । २ शक्तिपरिच्छेदवदित्यर्थः । ३ यथा विशेषशास्त्रसन्निधौ सामान्यशास्त्रमपि विशेषपरम्– [ विशेषशास्त्रविषयातिरिक्तविषयपरम् ] लोकात्, तथैव लोकादेव विशेषविधिः सामान्यविधेः सति सम्भवेऽपि बाधकमित्याशयः । ४ प्रत्यक्षः । श्रावणप्रत्यक्षविषयतावच्छेदकरत्वधर्मावच्छिन्नः । अनुमेयः–यकारादिरान्तसमुदायघटकत्वावच्छिन्नः ।

५ परसवर्णविधौ त्वण इत्यतोऽनुनासिक इत्यस्य सम्बन्धात्कुण्डं रथेनेत्यादावदोष इति बृहद्विवरणकाराः।६ न बाध्यत इति। नागेशभट्टास्तु तक्रकौण्डिन्यन्यायस्यानवकाशविषयत्वं वदन्त उत्सर्गाऽविषयेऽपवादस्य चारितार्थ्याऽभावे एव बाधकत्वमिच्छन्ति।तत्रोत्सर्गविषयत्वं च तत्प्राप्तितत्प्रवृत्त्यन्यतररूपम्। प्राप्तिश्च तात्कालिकज्ञानगोचरयावदुद्देश्यतावच्छेदकाक्रान्तिः। प्रवृत्तिश्च विधेयतावच्छेदकसम्बन्धेन विधेयवैशिष्ट्यम्।सर्व आमित्यवस्थायां नुटः प्राप्तेः, सर्वं नामिति स्थितौ प्रवृत्तेश्च सत्त्वेन नुटः पूर्वं तदुत्तरं च तद्विषयत्वमक्षतमेवेति सुटोऽनवकाशत्वं सूपपादमेव । प्रकृतेपि यत्र यत्र रेफे द्वित्वनिमित्तत्वं तत्र तत्रानचिचेति द्वित्वकार्यित्वमस्त्येवेति तन्न्यायविषयत्वमक्षतमेव । परं लक्ष्यानुरोधादत्र बाध्यसामान्यचिन्ताश्रयणेन द्वित्वकार्यित्वमात्रस्य बाध इति मद्रह्रदो धात्रंश इत्यादावचो रहाभ्यां यणो मय इत्यपि न भवतः। इको यणचीत्यत्र तु कार्यित्वं नानवकाशमिति न कथमपि तस्य निमित्तत्वबाधकता शक्योत्प्रेक्षितुमिति 'तस्मादित्युत्तरस्येत्यादेशापकान्न बाध्यत' इति कैयटश्चिन्त्य इत्याहुः। अत्र वयं ब्रूमः– सत्यमेतदिको यणचीत्यादौ न तक्रकौण्डिन्यन्यायस्य विषय इति, परं त्वन्य एवायं माठरपरिवेषणन्यायस्तक्रकौण्डिन्यन्यायाद्येन दध्युदकादौ यणप्रवृत्तिः प्रदीपकारेणोत्प्रेक्ष्यते । तमेव चावलम्ब्य 'नेमौ रहा'वित्यादिभाष्यं प्रवर्तते । यतो मद्रह्रद इत्यादौ द्वित्ववारणं तक्रकौण्डिन्यन्यायेन कथमपि वक्तुमशक्यम्। तन्न्यायेन हि व्याप्यविषयता यैर्यैर्धर्मैरवच्छेद्यते यैर्यैश्च विशेष्यदलप्रविष्टैः पदार्थैः सङ्कोच्यते तत्सकलविशेषितत्वप्रयोजकपदप्रतिपाद्येतरपरत्वं स्वाश्रयेतरपरत्वं वा व्यापकविषयताप्रयोजकपदस्य सिध्यति। न पुनर्व्याप्यविषयतावच्छेदकधर्मावच्छिन्नेतरपरत्वम्। तथा सति प्रथमद्विर्वचनीयैकाच्पदघटकाच्पदप्रयोज्यविषयताया द्वितीयद्विर्वचनीयाऽजादिपदप्रयोज्यविषयत्वापेक्षया व्यापकत्वेन तत्प्रयोजकाऽच्पदस्याद्यज्भिन्नाच्परत्वे आट आटतुरित्यादौ द्वित्वानापत्तेः। इत्थं चानचि चेत्यत्र यर्पदस्याऽचः परो यरः पूर्वश्च यो रेफस्तदितरयर्परत्वेऽप्यर्हेणेत्यादौ रेफस्य द्वित्वं प्राप्नोति। एवं तथार्थकस्यैवाचो रहाभ्यामित्यत्र संबन्धेऽपि मद्रह्रद इत्यादौ द्वित्वं प्राप्नोत्येव। किं च स्ववैयर्थ्यसंपादकत्वं यत्रानेकशास्त्राणां तत्र तेषां सर्वेषां बाधो बाध्यसामान्यचिन्ता। न ह्यचो रहाभ्यामित्यत्रत्ययत्वावच्छिन्नविषयत्वरेफत्वावच्छिन्नविषयत्वयोः सामानाधिकरण्यमपि, येन बाध्यबाधकभावोऽवकाशमासादयेत्!। 'यणो मय' इत्यत्रापि यण्त्वावच्छिन्नोद्देश्यताया रेफत्वावच्छिन्ननिमित्ततया समं सामानाधिकरण्यमसंभव्येवेति लक्ष्यानुरोधादत्र बाध्यसामान्यचिन्तेत्यादि चिन्त्यमेव। तस्मादत्र द्वित्ववारणोपयोगी भिन्न एव तक्रकौण्डिन्यन्यायान्माठरपरिवेषणन्यायो वाच्यः। स च विषयतयोर्व्याप्यव्यापकभावं नापेक्षते किं तूद्देश्यतावच्छेदकधर्मयोरेव। परं तु ययोर्बाध्यबाधकभावस्तयोरेकप्रकरणस्थत्वमपेक्षितम्। तत्त्वं च यत्किंचिदनुगतरूपावच्छिन्नस्य प्रतिपाद्यत्वेन विषयत्वं यस्यामिच्छायां तत्प्रयोज्यकृतिविषयत्वम्। भवति च वर्णद्वित्वप्रतिपादनविषयकमहेच्छापूर्वकावान्तरेच्छाधीनकृतिगोचरत्वमचो रहाभ्यामित्यारभ्य दीर्घादाचार्याणामित्येतदन्त-

## ❀ शब्दकौस्तुभः ❀

चे'त्यत्रापि तथैव, अर्थाधिकाराश्रयणात्। तेन 'हर्यनुभव' इत्यादावपि रेफस्य न द्वित्वम्। नन्वेवं दध्युदकादौ यण्न स्याद्विशेषतः श्रुतेन स्थानित्वेनेकां निमित्तत्वस्य बाधादिति चेन्न, तत्र लक्ष्यानुरोधेन व्यक्तिपक्षाश्रयणात्। व्यक्तिपक्षे हि प्रतिलक्ष्यमसकृल्लक्षणं प्रवर्त्तते। यद्वा प्रतिलक्ष्यं भिन्नानां सर्वेषां लक्षणानां तन्त्रेणोच्चारणमिकोयणचीति । ततश्चेकामपि तात्पर्यतो निमित्तत्वप्रतिपादनाददोषः। नचैवं 'श्रीश्च' इत्यादावपि यण्प्रसङ्गः। व्यक्तिपक्षे 'विप्रतिषेधे परमेवे'ति नियमबलेन तद्व्यक्तिविषयकशास्त्रस्यैव विरहकल्पनात्। एवमपवादविषयेपि सुश्रियावित्यादौ बोध्यम्। 'परिहृत्यापवादविषयं तत उत्सर्गोभिनिविशते'इति न्यायात्। जातिव्यक्तिपक्षौ च लक्ष्यानुरोधाद्व्यवस्थयाऽऽश्रीयेते इति पस्पशायामेवोक्तम्। 'तस्मादित्युत्तरस्य' 'पत्युत्तरपदाण्ण्य' इत्यादिनिर्देशाश्चेह लिङ्गम्। भाष्ये तु **'नेमौ रहौ कार्यिणौ द्विर्वचनस्य' किं तर्हि, निमित्तमिमा'**वित्युक्तम्। तत्र हकारग्रहणं दृष्टान्तार्थं,

लक्ष्ये[1]स्थित्यपेक्षणाद्वा बाध्यबाधकभावो न। क्वचिदपेक्षा ना[2]स्ति,-यथा-चिचीषतीति दीर्घत्व[3]द्विर्वचनयोः॥

( **उद्द्योतः** ) नन्वयत्वादप्रसक्तद्वित्वस्य हस्य ग्रहण[4]मयुक्तमत आह--**हकारवदिति**। ननु एककर्तृकयोर्भोजनपरिवेषणयोर्युगपदसम्भवादस्तु तत्र बाधः;प्रकृते तु लक्ष्यभेदेन भिन्नवाक्यावगतनिमित्तकार्यिभावः किं न स्यात् । यथाऽवगतकार्यित्वस्यापि इको निमित्तत्वं दध्युदकादावत आह-**तत्रेति**। लक्ष्यभेदेन कार्यित्वनिमित्तत्वसम्भवेऽपीत्यर्थः । सामान्यविशेषविध्योरेकवाक्यतायामित्यन्वयः । **शब्दो**-वाक्यात्मा । **अर्थ**स्तदर्थः । **सम्बन्धः**-प्रतिपाद्यप्रतिपादकभावः-तेषां परिज्ञानं । तद्यथा लोकव्यवहारादेव, तथा तयोर्बाध्यबाधकभावः सम्भवेऽपि भवतीत्येतदपि लोकव्यवहारादेव **ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याये**त्यादिरूपादवगतमित्यर्थः । विशेषसन्निधाने सामान्यशब्दस्य तद्व्यतिरिक्तपरत्वं च त[5]द्बीजम् । **परिज्ञानवदिति** पाठः । एवं चाचोरहाभ्यामित्यत्र सामान्यविशेषविधित्वाऽभावेऽपि तत्र बाधे यद्बीजं तत्प्रकृतेऽप्यस्त्येवेत्याह—**प्रत्यक्षश्चेति** । अविलम्बितप्रतीतिकत्वं **प्रत्यक्षत्वम्** । विलम्बिततत्कत्वं **चानुमेयत्वम्** । **लक्ष्येति** । ज्ञापकाल्लक्ष्यानुरोधाद्वा सत्यपि सामान्यविशेषभावे क्वचिद्बाधकत्वं विशेषविधेर्ना[6]श्रीयते जातिव्यक्तिपक्षयोरुभयोरपीति भावः। **क्वचिदपेक्षा नास्तीति** । 'बाध्यबाधकभावस्ये'ति शेषः । **यथेति** । बाध्यबाधकभावाऽभावे दृष्टान्तोऽयम् । न तु कार्यित्वनिमित्तत्वयोः समावेशे इति बोध्यम् । **केचित्तु तक्रकौण्डिन्यन्यायो**ऽपि सामान्यविषयानाक्रान्तविषयाभावरूपानवकाशत्वमूलक एव । अस्ति च प्रकृते तत् । न ह्येत[7]द्बाधनिमित्तत्वं सामान्ययत्वप्रयुक्तकार्यित्वानाक्रान्ते क्वचिदप्यस्ति,सर्वत्राचः परत्वाद**नची**त्यस्य प्राप्तेः;अतोऽयुक्तो लक्ष्यानुरोधात्सामान्येन कार्यित्वबाधः । न[9]चैवमिको यणित्यादौ; मत्वर्थं इत्यादौ[10] सामान्यप्राप्तनिमित्तत्वाभावेन कार्यित्वस्य चारितार्थ्यादिति भाष्याभिप्रायमाहुः ।

[ अयोगवाहोपदेशविचारभाष्यम् ]

**[11]इदं विचार्यते-इमेऽयोगवाहा न क्वचिदुपदिश्यन्ते। श्रू[12]यन्ते च। तेषां कार्यार्थं उपदेशः कर्तव्यः ॥ के पुनरयोगवाहाः ? ॥ विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारनासिक्य[1]यमाः॥ क[13]थं पुनरयोगवाहाः?॥ यदयुक्ता वहन्ति, अनुपदिष्टाश्च श्रूयन्ते ॥**

( प्रदीपः ) **इम इति** । वि[14]धानादेषां साधुत्वं स्यात् । प्रत्याहारप्रतिबद्धं तु कार्यं न प्राप्नोति ।

**के पुनरिति,**-तत्स्वरूपप्रश्नः । **कथमिति,**-प्रवृत्तिनिमित्तप्रश्नः । **अयुक्ताः**-इत्यस्यैव हेतुकथनम्- **अनुपदिष्टाश्चेति** । **अयुक्ताः** प्रत्याहारेषु सम्बन्धो येषां तेऽयोगाः, अनुपदिष्टत्वादुपदिष्टैरगृहीतास्ते अयोगवाहाः ... 

---

## ❀ राजलक्ष्मीः ❀

सूत्रवार्तिककदम्बकस्येति तद्घटकयर्यण्पदयो रेफेतरस्वार्थपरता सूपपादैव । इदं च न एरजिको यणचीत्यादीनां भिन्नभिन्नप्रकरणस्थानामिति न तत्राऽस्य विषयः । इत्थं च तस्माद्दित्युत्तरस्येत्यादेर्ज्ञापकान्न बाध्यत इति कैयटग्रन्थो रमणीय एवेति दिगिति-शारदापुरुषावताराः **श्रीबालशास्त्रिणः** ।

१ **लक्ष्येति**।न्यायस्याऽनित्यत्वादित्याशयः। २**नास्तीति**। क्वचिदपेक्षा नास्तीत्यत्र दृष्टान्तो यथेत्यर्थः। ३तत्र **दीर्घत्वम्**-'अज्झनगमा'मित्यनेन । **द्विर्वचनं**-'सन्यङो'रित्यनेन ।

४ **ग्रहणं**-भाष्ये उपादानम् ।

५ **तद्बीजं**-बाधबीजम् । ६ **नाश्रीयते**-इत्यस्य-'न्यायस्यानित्यत्वबोधनद्वारेति शेषः । ७ **एतदिति** । अचोरहेत्येतदित्यर्थः । **कार्यित्वेति** । द्वित्वकार्यित्वेत्यर्थः । **अनाक्रान्ते** इत्यस्य 'रेफे' इति शेषः । तदेवोपपादयति-सर्वत्रेति । ८ **कार्यित्वबाधः**-निमित्तत्वेन कार्यित्वबाधः। ९ **नचैवं**-नह्येवम् । १० **'इत्यादौ'**-इत्यस्य'मत्वादेरुकारादौ'इतिशेषः । ११ अयोगवाहानामट्सुणत्वमिति वार्त्तिकावताराय विचारमारभते-**इदमिति** । **छाया**कृतस्तु इह 'इदं विचार्यते' इति पाठो भाष्यशैलीविरुद्ध एव, संशयाऽभावात्कोटिद्वयानुपस्थितेः । कोटिद्वयोपस्थितावेव 'इदं विचार्यते' इत्येवं लेखो भाष्यशैलीसिद्ध इत्याहुः । १२ ननु ते न सन्त्येवात आह-**श्रूयन्ते चेति** । 'लक्ष्ये' इत्यादिः । लक्ष्यसाधुत्वप्रयोजकाश्च ते सन्तीत्यर्थः। १३ **कथमिति** । केन प्रवृत्तिनिमित्तेन इमे अयोगवाहा इत्यर्थः । **अयुक्ताः**-आक्षरसमाम्नायिकसम्बन्धाऽभाववन्तः **वहन्ति**-प्रयोगं निर्वहन्ति । **अनुपदिष्टाः**-अनुच्चारिताः । एवञ्च निरुक्तसम्बन्धद्वयशून्यत्वे सति प्रयोगनिर्वाहकत्वमयोगवाहत्वमिति फलितम् । १४तत्तच्छास्त्रैर्विधानात । **स्यात्**-भवेन्नाम।

## ❀ शब्दकौस्तुभः ❀

तस्य यर्बहिर्भूततया यथा न द्वित्वे कार्यिता तथा यरन्तर्भूतस्यापि रेफस्येति । एवमनुनासिकपरसवर्णविधौ अपि स्थानेन्तरतमपरिभाषासंस्कृतौ स्थानप्रयत्नोभयान्तरतमे एतन्मुरारिस्त्वङ्करोषीत्यादौ क्वचिल्लब्धावकाशावनन्तरतमे प्रागुक्ते न प्रवर्त्तेते, जातिपक्षाश्रयणादेवेति सङ्क्षेपः । अत्र वार्त्तिकम् **'अयोगवाहानामट्सु णत्वं शर्षु जश्भावषत्वे। अविशेषेण संयोगोपधासंज्ञालोन्त्यविधिद्विर्वचनं स्थानिवत्त्वनिषेधा'** इति । अस्यार्थः-अविद्यमानो योगः प्रत्याहारेषु सम्बन्धो येषां तेऽयोगाः, अनुपदिष्टत्वादुपदिष्टैरगृही-

१ नासिक्यपदेन 'हुँ' इति ऋक्शाखाप्रसिद्धं ग्राह्यम् । 'हुँ इति नासिक्यः' इति कात्यायनप्रातिशाख्यात् ।

लक्षणेन, पाठाभावादसम्बद्धा इत्यर्थः। उपदेशो द्विविधःपाठो, ग्रहणकशास्त्रेण प्रत्यायनं च। स द्विविधोऽप्येषां नास्तीत्यर्थः। चशब्दो हेतौ। यतोऽनुपदिष्टास्ततोऽयुक्ता इत्यर्थः। क्वचित्तु चशब्दो न पठ्यते।

(उद्द्योतः) ननु **कार्यार्थ** इत्यत्र कार्यं साधुत्वं चेत्, **'खरवसानयो'**रित्यादिना सिद्धमत आह—**विधानादिति। उपदिश्यन्त** इति पाठे—भाष्ये वर्त्तमान सामीप्ये लट्। उपदिष्टा इत्यर्थः। **प्रवृत्तिनिमित्तेति**। प्रकृते भासमानवैशिष्ट्यप्रतियोगिरूपः प्रकारस्थमर्थ इति भावः। केन प्रवृत्तिनिमित्तेनाऽयोगवाहशब्दवाच्यतैषामित्यत्र तात्पर्यम्। **नन्वनुपदिष्टाश्चे**ति चकारश्रवणादनुच्चारितत्वमयोगवाहशब्दस्य प्रवृत्तिनिमित्तान्तरमित्याभाति, तदयुक्तम्, अनुपदेशपदार्थस्यानुच्चारणस्य तत्राऽभावात्, प्रयोगेवूच्चारितत्वात्। न च प्रत्याहारसूत्रानुच्चारितत्वं तथा; **यदयुक्ता** इत्यनेनैव तदर्थलाभेन पौनरुक्त्यापत्तेरत आह—**अयुक्ता इत्यस्यैव हेतुकथनमिति**। प्रत्याहारबोधकलक्षणेनाऽयुक्ता इत्यन्वयः। तद्व्याचष्टे—**पाठाभावादिति**। ग्रहणकशास्त्रेण प्रदेशे प्रवर्त्तमानेन यो वर्णस्तेषां ग्राहकस्तस्य पाठाऽभावादित्यर्थः। **एषां नास्तीति**। अतोऽयुक्ता इत्यर्थः। एवं चाक्षरसमाम्नायेऽयुक्ताः सन्तो वहन्ति प्रयोगं निर्वाहयन्तीत्ययोगवाहपदव्युत्पत्तिर्दर्शिता। **न पठ्यत इति**। तत्र 'यर्त' इत्यध्याहार्यमिति भावः।

[ आक्षेपभाष्यम् ]

**क्व पुनरेषामुपदेशः कर्तव्यः ?॥**

[ सिद्धान्तिनः प्रयोजनवार्तिकम् ]

॥*॥ *अयोगवाहानामट्सु, णत्वम्* ॥*॥

[ व्याख्याभाष्यम् ]

**अयोगवाहानामट्सूपदेशः कर्तव्यः॥ किं प्रयोजनम्?॥ 'णत्वम्'। उरःकेण, उर≍केण, उरःपेण, उर≍पेण। 'अड्व्यवाये' इति णत्वं सिद्धं भवति॥**

(उद्द्योतः) भाष्ये—**उरः केणेति**। उरः कायतीति सुबुत्पत्तेः पूर्वं समासेऽपि **सोपदादा**विति न सत्वम्। **कल्पककाम्येष्वेव** तत्प्रवृत्तेः।

[ सिद्धान्तिनः प्रयोजनान्तरवार्तिकम् ]

॥*॥ *शर्षु, जश्भावषत्वे* ॥*॥

[ व्याख्याभाष्यम् ]

**शर्षूपदेशः कर्तव्यः॥ किं प्रयोजनम्?॥ जश्भावषत्वे। अयमुब्जिरुपध्मानीयोपधः**

---

❁ राजलक्ष्मीः ❁

**प्रत्याहारेति**। अक्षरसमाम्नायेऽपाठाच्च अट्शरादिप्रत्याहारसम्बद्धं णत्वादिकार्यं न प्राप्नोतीत्यर्थः। **हेत्विति**। न तु प्रवृत्तिनिमित्तान्तरमेतदिति भावः। **उपदेशः**—सम्बन्धहेतुरुपदेशः।

१ यतोऽनुपदिष्टाः श्रूयन्तेऽतोऽयुक्ता वहन्तीत्यर्थः। २ अयोगवाहानां साधुत्वमित्यर्थः। **सिद्धं**—तत्सिद्धम्। ३ यथा घटे घटत्वप्रतियोगिकं घटानुयोगिकं वैशिष्ट्यं तद्वदत्र कः खलु प्रतियोगी ( प्रवृत्तिनिमित्तं ) यन्निरूपितं वैशिष्ट्यं स्यादित्यर्थः। ४ **अनुच्चरितत्वम्**—अनुच्चरितत्वमपि। **तत्र**—अयोगवाहेषु। **तथा**—प्रवृत्तिनिमित्तम्। ५ **तदर्थेति**। प्रत्याहारबोधकाऽइउणादिसूत्रैरसम्बद्धा इत्यर्थलाभेनेत्यर्थः। ६ **प्रत्याहारेति**। तद्बोधकलक्षणेन सहाऽसम्बद्धा इत्यर्थः। ७ **दित्यप्यर्थइति**। असम्बद्धस्य द्विविधत्वस्य वक्ष्यमाणत्वादित्याशयः। ८ **यत इतीति**। 'हेतुबोधनाये'त्यादिः। ९ **अट्स्विति**। **अट्सूपदेशः** कार्यो **णत्वं** प्रयोजनमित्यर्थः। १० षण्णामयोगवाहानां हकारवदन्यत्रापि पाठः कार्य इत्याह—**शर्ष्विति। उपध्मानीयोपेति**। उ≍जिरित्येवं रूपेणेत्यर्थः। **तस्य**—तदीयस्य उपध्मानीयस्य। **परेतु**—बपाठेऽप्युब्जितेत्यादिरूपसिद्धेः, दपाठेऽपि च वक्ष्यमाणरीत्या

---

❁ शब्दकौस्तुभः ❁

तत्वाच्च प्रत्याहारसम्बन्धशून्या इत्यर्थः। वाहयन्ति निर्वाहयन्ति प्रयोगमिति **वाहाः**। अयोगाश्च ते वाहाश्चेति कर्मधारयः। **अनुपदिष्टत्वे** उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः। **ते च विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमा** इति भाष्यम्। एतच्च ऋति ॠ वा लृति ॡ वेतिविहितयोरीषत्स्पृष्टयोरप्युपलक्षणम्। तथा च तुल्यास्यसूत्रे भाष्यम्—'तयोरच्त्वं वक्ष्यामी'ति। तत्फलं तु तत्रैव स्पष्टम्। तत्र यमानां लक्षणमनुनासिकसंज्ञासूत्रे प्रपञ्चयिष्यामः। एषामट्सूपदेशः कर्त्तव्यः। णत्वं फलम्। उरःकेण उरःपेण। उर≍केण उर≍पेण। अड्व्यवायइति णत्वं विसर्जनीयजिह्वामूलीयोपध्मानीयैर्व्यवायेपि सिध्यति। नायमज्ञाताद्यर्थे कः। 'सोपदादा'विति सत्वप्रसङ्गात्। किं तु उरः कायति उरः पातीति विग्रहः। कै शब्दे। पा रक्षणे। आभ्यामातोऽनुपसर्गे कः। 'कुप्वो≍क≍पौ चे'ति चकारात्पाक्षिको विसर्गः। न चैवमपि गतिकारकोपपदानां प्राक्सुबुत्पत्तेः समासाभ्युपगमात् 'सोपदादा'विति प्रवर्त्तेतेति वाच्यं, तस्य 'दधिसेचौ' 'धनक्रीते'त्यादिसिद्धयर्थमनित्यताया वक्ष्यमाणत्वात्, 'पाशकल्पे'त्यादिपरिगणनाच्च। प्रोम्भणम्। अट्कुप्वाङितिसूत्रे नुम्ग्रहणं न कर्त्तव्यं भवति। अत्रेदमवधेयम्। अट्सु क्रियमाण उप-

**पठ्यते, तस्य जश्त्वे कृते उब्जिता उब्जितुमित्येतद्रूपं यथा स्यात् ॥**

( प्रदीपः ) **शर्ष्विति ।** शर्षु पाठे झल्त्वमिति **झलां जश्झशीति** जश्त्वं सिध्यति ॥

( उद्द्योतः ) ननु शरां जशो भवन्तीति लक्षणाऽभावाच्छर्षु पाठस्य न जश्भावः प्रयोजनमत आह-- **शर्षु पाठे इति ॥**

[ उपध्मानीयोपधपाठदूषणभाष्यम् ]

**यद्युब्जिरुपध्मानीयोपधः पठ्यते उब्जिजिषतीत्युपध्मानीयादेरेव द्विर्वचनं प्राप्नोति। दकारोपधे पुन'र्न न्द्राः' इति प्रतिषेधः सिद्धो भवति ॥**

( प्रदीपः ) **उपध्मानीयादेरिति ।** यदि-द्विर्वचने पूर्वत्र कर्तव्ये जश्त्वमसिद्धमथापि पूर्वत्रासिद्धीयमद्विर्वचन इति सिद्धं, सर्वथोबिब्जिषतीति प्राप्नोति ॥

( उद्द्योतः ) **यदीति ।** पूर्वत्र द्विर्वचने इत्यन्वयः॥ ननु पूर्वं द्वित्वे जश्त्वात्पूर्वमेव हलादिः शेषे कथमुपध्मानीयस्याऽभ्यासे जश्त्वं, झश्परत्वाऽभावात् । 'अभ्यासे चर्चे'त्यनेन त्वान्तरतम्यात्प्रकृतिचरां चर एवेति उपध्मानीय एव स्यादिति चेच्चिन्त्यमेवैतत् । उपध्मानीयश्रवणापादनेनापि भाष्यसामञ्जस्यात् । अन्त्ये तु द्वित्वे कृतेपि,- द्वित्वाश्रयस्य कार्ये कर्तव्येऽसिद्धत्वं नेत्यपि **पूर्वत्रासिद्धीय**मित्यस्यार्थं इति, परत्वाज्जश्त्वे कृते एव हलादिः शेषः इत्याशयान्न दोषः ॥

[ दकारोपधपाठदूषणभाष्यम् ]

**यदि दकारोपधः पठ्यते, का रूपसिद्धिः—उब्जिता उब्जितुमिति ? ॥**

[ रूपासिद्धिदूषणनिराकरणभाष्य(वार्तिक)म् ]

**'असिद्धे-भ उद्जेः' ।**

**इदमस्ति-'स्तोः श्चुना श्चुरिति, ततो वक्ष्यामि 'भ उद्जेः' । उद्जेः श्चुना सन्निपाते भो भवतीति ॥**

[ आक्षेपभाष्यम् ]

**तर्हि वक्तव्यम् ? ॥**

[ समाधानभाष्यम् ]

**न वक्तव्यम् , निपातनादेव सिद्धम् ॥ किं निपातनम् ? ॥ 'भुजन्युब्जौ प ण्युपतापयो'रिति ।**

( प्रदीपः ) **निपातनादिति ।** द्विर्वचनं कथम् ? । निपातनाद्वाक्यशेषोऽनुमीयते—असिद्धप्रकरणे स्तोः श्चुना श्चुरित्यत्रो**द्जेर्भ** इति । तत्र

## ❀ राजलक्ष्मीः ❀

इष्टसिद्धेश्च किमर्थमुपध्मानीयघटितधातुपाठप्रयास इति चिन्त्यमित्याहुः । १ **पाठे**-पाठे कृते । २ झलां जशोऽन्ते इत्यस्यापत्तिस्तु न, तद्दृष्ट्या विसर्गादीनामसिद्धत्वात् । ३ **शरां**-शरां स्थाने । ४ इदं खण्डयितुमाह- **यदीति । इति** इत्यत्र । **प्राप्नोतीति ।** जश्त्वस्याऽसिद्धत्वादजादेर्द्वितीयस्येत्युपध्मानीयजकारविशिष्टस्य द्वित्वमित्याशयः । **भवतीति ।** 'जिस्' शब्दस्य द्वित्वे दस्य बकारे उब्जिजिषतीति रूपसिद्धेरित्याशयः । ५ **असिद्धमिति ।** पूर्वत्रासिद्धमित्यनेन । 'पूर्वत्रासिद्धीय'मिति न्यायस्तु 'उभौ साभ्यासस्ये'ति लिङ्गादनित्य इत्याशयः । 'तुष्यतु दुर्जन'न्यायेन न्यायप्रवृत्तिमभ्युपेत्याह-**अथापीति । सिद्धं**-जश्त्वं सिद्धम् । **सर्वथा**-सिद्धत्वेऽसिद्धत्वे वा (तथापि)। **प्राप्नोतीति ।** न तूब्जिजिषतीष्टरूपं सिध्यतीत्याशयः । ६ उक्तपरिभाषाया अनित्यत्वाद्प्रवृत्त्या जश्त्वमसिद्धमिति मते शङ्कते-**नन्विति । पूर्वं**-जश्त्वात्पूर्वम् । **सामञ्जस्यादिति ।** दोषदान एव तात्पर्यात् । **अन्त्ये तु**-परिभाषाप्रवृत्तौ तु । **द्वित्वे**-भाष्योक्तरीत्या उपध्मानीयादेर्द्वित्वे कृतेऽपि । **कार्ये**-हलादिः शेषरूपे । **जश्त्वे कृते**-जश्त्वे कृतेसति। **शेषइति ।** हलादिः शेषः प्रवर्त्तेत इत्यर्थः । **न दोष इति ।** तथा च भाष्ये उपध्मानीयपदं तद्रूप स्थानितदादेशबकारोभयसाधारणमिति उपध्मानीयादेर्द्वित्वे इष्टरूपाऽसिद्धौ भाष्यकैयटयोस्तात्पर्यमित्याशयः । ७ **पठ्यते**-इत्यस्य तर्हीतिशेषः । **का**-कीदृशी । ८ **असिद्धे**-पूर्वत्रासिद्धमित्यसिद्धप्रकरणे। **श्चुना**-चवर्गेण । **सन्निपाते**-योगे । इदं कात्यायनवार्त्तिकमिति **परे ।** भाष्यवार्त्तिकमिदमित्यन्ये ।

९ ननु बत्वे कृते तद्रहितस्य कथं द्वित्वं दकाराभावान्न्द्राइत्यस्याऽप्राप्तेरित्याशङ्कते-**द्विर्वचनं कथमिति ।**

## ❀ शब्दकौस्तुभः ❀

देशोऽकारानन्तरमिकारात्प्राक्कर्त्तव्यः । तेनेण्सु अनन्तर्भावात्पयःसु यशःस्वित्यादौ 'इण्को'रित्यधिकृत्य विधीयमानमादेशप्रत्यययोरिति षत्वं न भवति । अक्षु चान्तर्भावात्संस्कर्त्तेत्यत्रानुस्वारादचः परत्वमाश्रित्य सकारस्य द्वित्वं कैयटेनाष्टमे वक्ष्यमाणं सङ्गच्छते । न चैवं 'हरिः करोती'त्यादाविको यणचीति यण्प्रसङ्गः, विसर्गस्याऽसिद्धत्वात् । एवं हरिं पश्यतीत्यादावनुस्वारस्याऽसिद्धत्वं बोध्यम् । शर्षु चोपदेशः कर्त्तव्यः, जश्भावस्तावत्प्रयोजनम् । तथाहि—वार्त्तिकमते 'उब्ज आर्जवे'इति धातुरुपध्मानीयोपधः पठ्यते । तत्र 'झलां ज-

'न न्द्रा'इति दकारस्य द्विर्वचननिषेधः कर्तव्यो न तु द्विर्वचनमिति **पूर्वत्रासिद्धीयमद्विर्वचन** इत्यस्याऽप्रवृत्त्या भत्वस्याऽसिद्धत्वादिष्टैद्विर्वचनसिद्धिः। अथापि न वाक्यशेषानुमानं निपातनमेव प्रतिपादकं तथापि दकारोपदेशसामर्थ्याद्विर्वचने कृते दकारस्य बत्वं प्रवर्तते।

**( उद्द्योतः ) द्विर्वचनं कथमिति।** 'बकाररहितस्ये'ति शेषः। ननु निपातनाल्लक्षणमात्रं स्यान्न तु प्रदेशैविशेषावच्छिन्नमत आह-**अथापीति।** न चाभ्युद्र इत्यादौ दकारोच्चारणं सार्थकं, **नैतदुब्जे** रूपमिति भाष्योक्त्या दोषाऽभावात्। उपतापातिरिक्तविषयेऽस्माद्धञ् नानभिधानादिति तदाशयः। **अकुत्वविषये निपातन**मिति पक्षान्तरे त्वाद्यमेव समाधानम्[3]॥

[ समाधानबाधकभाष्यम् ]

**इहापि तर्हि प्राप्नोति—अभ्युद्रः समुद्र इति ॥**

[ समाधानसाधकभाष्यम् ]

**अकुत्वविषये तन्निपातनम् ॥ अथवा नैतदुब्जे रूपं, गमेरेतत् ड्युपसर्गाड्डो विधीयते,—अभ्युद्गतोऽभ्युद्रः, समुद्गतः समुद्र इति ॥**

**( प्रदीपः ) अकुत्वविषय इति।** विशिष्टे-विषयमनुमानमित्यर्थः।

[ षत्वप्रयोजनांशव्याख्याभाष्यम् ]

**षत्वं च प्रयोजनम्। सर्पिःषु धनुःषु। 'शर्व्यवाये' इति षत्वं सिद्धं भवतीति 'नुम्विसर्जनीयशर्व्यवायेऽपी'ति विसर्जनीयग्रहणं न कर्तव्यं भवति ॥**

[ आक्षेपभाष्यम् ]

**नुमश्चापि तर्हि ग्रहणं शक्यमकर्तुम् ॥ कथं सर्पींषि धनूंषि ? ॥ अनुस्वारे कृते 'शर्व्यवाये' इत्येव सिद्धम् ॥**

[ समाधानभाष्यम् ]

**अवश्यं नुमो ग्रहणं कर्तव्यम्। अनुस्वारविशेषणं नुम्ग्रहणम्,—नुमो योऽनुस्वारस्तत्र यथा स्यादिह मा भूत्पुंस्विति ॥**

**( प्रदीपः ) अवश्यमिति।** अनुस्वारस्य शर्त्वात्तद्व्यवाये षत्वे सिद्धे नुम्ग्रहणं नियमार्थम्—'नुमो योऽनुस्वारस्तत्रैव यथा स्यादन्यत्र मा भूत्'—पुंस्विति ॥

**( उद्द्योतः ) अनुस्वारस्य शर्त्वादिति।** यद्यपि

---

**❀ राजलक्ष्मीः ❀**

समाधत्ते-**निपातनादिति।** १ **इष्टेति।** बकाररहितद्विर्वचनसिद्धेरित्यर्थः। **प्रतिपादकं**-बत्वस्य प्रतिपादकम्। 'नन्द्रा' इत्यत्र बकारोऽपि पाठ्य इति तु चान्द्रिका आहुः। २ **प्रदेशेति।** 'असिद्धप्रकरणे' इति न लभ्येतेति सर्वः प्रयासो व्यर्थः स्यादित्याशयः। **अस्मात्**-उद्जेः। **तदाशय इति।** 'अभ्युद्र' इति नैतस्य रूपमित्यवधेयम्। ३ अभ्युद्र इत्यस्य तन्मते प्रकृतधातोरेव रूपतया तत्र दकारोच्चारणसामर्थ्यस्योपक्षयेणाऽथापीति कैयटोक्तसमाधानाऽप्रसक्तेरित्याशयः। ४ **तदिति।** बत्वनिपातनमित्यर्थः। ५ कुत्वाऽभावरूपविशिष्टविषयं बत्वानुमानमित्यर्थः। एवञ्च अयोगवाहानां शर्षूपदेशस्य जश्त्वरूपं **प्रयोजनम्** उपध्मानीयोपधोब्जिधातुस्वीकर्तृ'शर्पुजश्भाव' इति वार्तिककृन्मतेऽस्ति, दोषधाङ्गीकर्तृभाष्यमते तु नास्तीति सिद्धम्। ६ **पुंस्वितीति।** मस्य चाऽत्रानुस्वारो न नुम इत्याशयः।

---

**❀ शब्दकौस्तुभः ❀**

झशी'ति जश्भावे आन्तरतम्याद्बकारादेशः,-उब्जिता उब्जितुम्। शर्षूपदेशाद्धि नान्तरीयकत्वादेव झल्त्वमप्यायाति। भाष्यकारस्तु नैतन्मेने। तथाहि-उपध्मानीयोपधत्वपक्षे 'उब्जिजिषती'ति न सिध्यति। अभ्यासे बकारमात्रश्रवणप्रसङ्गात्। हलादिःशेषेण जकारस्य निवृत्तेः। यदि तु पूर्वत्राऽसिद्धमद्विर्वचन इत्युक्तेः सबकारस्य द्वित्वं तदा स्पष्ट एव बकारस्य शेषः। अथ 'उभौ साभ्यासस्ये'त्यनेनाऽनित्यताज्ञापनाद्द्विर्वचनेऽप्यसिद्धत्वमाश्रीयते, 'औजिढ'दित्यत्र यथा। तथाऽप्यभ्यासे उपध्मानीयस्य शेषे 'अभ्यासे चर्चे'ति जश्त्वेन बकार एव श्रूयेत। इष्यते त्वभ्यासे जकार इति प्राचः। वस्तुतस्तु द्वितीयपक्षे उपध्मानीयमात्रमभ्यासे श्रूयेत तच्चोच्चारयितुमप्यशक्यम्। जश्त्वं तु दुर्लभम्। 'प्रकृतिचरां प्रकृतिचर' इत्यष्टमे सिद्धान्तयिष्यमाणत्वात्। उपध्मानीयेऽच्त्वस्यापि सत्त्वेन तावन्मात्रद्वित्वापत्त्याऽभ्यासे इकारदौर्लभ्याच्च। किञ्च अत्र पक्षे अस्माद्धञि कृते उपध्मानीयस्य जश्त्वे 'अभ्युब्गा' 'समुब्गा' इति स्यात्। इष्यते त्वभ्युद्रः समुद्र इति। नन्वत एव कुप्वोरित्यधिकारे 'सोपदादा'विति सूत्रे उपध्मानीयस्य चे'ति वार्तिकेन कवर्गे परत उपध्मानीयस्य सकारो विधीयते ततो जश्त्वेन दत्वं भविष्यतीति चेत्सत्यम्। 'उपध्मानीयस्य चे'ति वार्तिकारम्भ एव तु गौरवार्हं इति ब्रूमः। बकारोपधोऽयमिति वृत्तिकारमते तु बकारस्य द्वित्व-

इण्कवर्गाभ्यामुत्तरो नुमा व्यवहितः सकारः 'सुहिन्सु'[१] इत्यादौ संभवति, तथापि तद[२]नभिधानमिति भावः । पुंस्वित्यत्र **संपुङ्कानाम्**मित्येतत्प्रवृत्तिपरविवरणग्रन्थस्तु चिन्त्य एव । तस्य **समस्सुटि, पुमः खय्यम्परे, कानाम्रेडिते** इति सूत्रत्रयमात्रविषयत्वा[३]त् ।

[ अविशेषोपदेशाभ्युपगमभाष्यम् ]

**अथवा[४]ऽविशेषेणोपदेशः कर्तव्यः ॥**

( प्रदीपः ) **अविशेषेणेति** । प्रयोजनविशेषमनपेक्ष्य सकलप्रयोजनोद्देश्येन यत्र यत्र प्रयोजनसिद्धिस्तत्र तत्रोपदेशः कार्य इत्यर्थः ॥

( उद्द्योतः ) ननु सूत्रविशेषानाश्रयणे तत्प्रत्याहाराऽसंनिवेशात्कथं तन्निबन्धनकार्यप्रवृत्तिरत आह–**प्रयोजन विशेषमिति** । **अविशेषेणेति**–भाष्यस्य प्रयोजनविशेषनिर्देशं विनेत्यर्थ इति भावः। **यत्र यत्रेत्यादि**। यद्यत्प्रयोजनसिद्धिरुद्देश्या तत्तद्विषयसकलप्रयोजनोद्देशेनेत्यर्थः।

[ वार्त्तिकावतरणाय प्रयोजनजिज्ञासाभाष्यम् ]

**किं प्रयोजनम् ? ॥**

[ सिद्धान्तवार्तिकम् ]

*॥*॥ अविशेषेण, संयोगोपधासंज्ञाऽलोन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः॥*॥*

[ व्याख्यानभाष्यम् ]

**अविशेषेण संयोगसंज्ञा प्रयोजनम् । उऽऽजकः । 'हलोऽनन्तराः संयोगः' इति संयोगसंज्ञा, 'संयोगे गुर्वि'ति गुरुसंज्ञा, 'गुरो' रिति प्लुतो भवति ।**

( प्रदीपः ) **उऽऽजक इति**। उपध्मानीयस्य जश्त्वे कृते संयोगसंज्ञायां तस्या[६]ऽसिद्धत्वात्संयोगसंज्ञाऽभावाद्गुरुत्वाऽभावात्प्लुतो न स्यात् ॥

( उद्द्योतः ) जश्त्वे कृते संयोगसंज्ञायामिति। कार्यकालपक्षे इदम् ।

[ उपधासंज्ञाप्रयोजनवार्त्तिकखण्डव्याख्याभाष्यम् ]

**उपधासंज्ञा च[७] प्रयोजनम्–दुष्कृतं, निष्कृतं, दुष्पीतं निष्पीतम् । 'इदुदुपधस्य चाऽप्रत्ययस्ये'ति षत्वं सिद्धं भवति ॥**

( उद्द्योतः ) भाष्ये **इदुदुपधस्येति** । विसर्गस्याऽत्वे ह्युपधात्वमिति भावः ।

[ उक्तप्रयोजननिरासभाष्यम ]

**नैतदस्ति प्रयोजनम् । नेह इदुदुपधग्रहणेन विसर्जनीयो विशेष्यते॥ किं तर्हि? ॥ सकारो विशेष्यते–'इदुदुपधस्य सकारस्य यो विसर्जनीय' इति ।**

**अथ वोपधाग्रहणं न करिष्यते, इदुद्भ्यां तु प[८]रं विसर्जनीयं विशेषयिष्यामः–'इदुद्भ्यामुत्तरस्य विसर्जनीयस्ये'ति ॥**

( उद्द्योतः ) **इदुदुपधस्य सकारस्येति**। विसर्गस्था[९]न्युपलक्षणमेतत् । अत एव निरोपि 'निष्कृत'मिति

❀ **राजलक्ष्मीः** ❀

१ अपदान्तत्वाभावाच्च न तस्य नस्य नश्चापदान्तस्येत्यनुस्वारप्राप्तिरिति तदर्थं नुमग्रहणं चरितार्थमित्याशयः । २ **तदिति** । सुहिन्स्वित्येतदित्यर्थः । ३ एवञ्च षत्वप्राप्त्यातद्व्यावृत्तये नियम आवश्यक इत्याशयः । ४ **अविशेषेण** अटिशर्षुचेत्यनादृत्याऽविशेषेण । **उपदेशः**-अयोगवाहोपदेशः। **अविशेषेणे**त्यस्य–तत्तत्सूत्रेषु पाठं विनेत्यर्थभ्रमनिरासायाह–**प्रयोजनेति** । ५ **अविशेषेण**–अविशेषेणोपदेशे । ६ **तस्येति** । जश्त्वस्येत्यर्थः । ७ अत्र वार्त्तिकरीत्या पूर्वापरोभयसमुच्चयार्थश्चकारः । भाष्यरीत्या तु वक्ष्यमाणमात्रसमुच्चायार्थश्चकार इत्यवधेयम् । ८ **परमिति** । परमितीत्यर्थः । परत्वेनेति यावत् । ९ **स्थानीति** । रेफादीत्यर्थः ।

❀ **शब्दकौस्तुभः** ❀

निषेधः, समुद्र इत्यादौ दकारादेशश्चेत्युभयमपि वचनेनैव साधनीयं स्यात् । तस्माद्दकारोपध एवायम् । अभ्युद्रः समुद्र इति यथा स्यात् । कथं तर्हि उब्जिता उब्जितुमित्यादि सिध्यतीति चेत् । शृणु । 'भुजन्युब्जौ पाण्युपतापयो'रित्यस्मिन्कुत्वाऽभावनिपातनार्थे सूत्रे बकारोच्चारणेनानुमीयते–'उब्जेरकुत्वविषये दकारस्य भकारविधायकं बकारविधायकं वा वचनमस्ती'ति तच्चानुमीयमानं वचनं 'भउदुजेरिति वा, 'बउदुजे'रिति वा । उभयथापि 'स्तोःश्चुना श्चु'रित्यस्यानन्तरं कल्पते । उद्रुजेः स्तोर्दकारस्येति यावत्–श्चुना योगे भकारो बकारो वा भवतीति सूत्रार्थः । उदुजेरिति किम् ?। तज्ञः । श्चुनेति किम् ? । अभ्युद्रः । इह हि 'चजोः कुघिण्ण्यतो'रिति कुत्वे कृते श्चुना योगो नास्ति, 'स्तोः श्चुने'ति पदद्वयोपजीवनार्थं चोक्तस्थल एव कल्पनं युक्तम् । अन्यथा बहुतरकल्पने गौरवं स्यात् । एवमुब्जिजिपतीत्यपि सिद्धम् । 'नन्द्रा' इति दकारस्य द्वित्वनिषेधात् । न च परत्वाद्भत्वबत्वे; 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये'ति वक्ष्यमाणत्वात् । अन्तरङ्गत्वाद्भत्वबत्वे इत्यपि न, असिद्धत्वादेव । न च 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यसिद्धत्वप्रतिषेधः शङ्क्यः । द्वित्वे कर्त्तव्ये सति हि स निषेधो न तु द्वित्व

सिध्यति। अत एव वक्ष्यमाणपक्षान्तरेणाऽविरोधः। 'निष्कृत'-मित्यादौ सुबुत्पत्तेः पूर्वं समासेऽपि **इणः ष** इति न, पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः ॥

[ अलोऽन्त्यविधिप्रयोजनभाष्यम् ]

**अलोन्त्यविधिश्च प्रयोजनम्-वृक्षस्तरति। प्लक्षस्तरति। अलोन्त्यस्य विधयो[2] भवन्तीत्यलोन्त्यस्य सत्वं सिद्धं भवति ॥**

[ उक्तप्रयोजनखण्डनभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्-'निर्दिश्यमानस्यादेशा भवन्ती'ति विसर्जनीयस्यैव भविष्यति ॥**

[ द्विर्वचनप्रयोजनभाष्यम् ]

**द्विर्वचनं[3] प्रयोजनम्-उर××कः:। उर××पः:। 'अनचि च' अच उत्तरस्य यरो द्वे**

### ❀ राजलक्ष्मीः ❀

१ **पक्षान्तरेति**। अथवेति पक्षान्तरेत्यर्थः। तन्मते हि निष्कृतेऽपि षत्वं भवतीति अस्मिन्नपि कल्पे उपलक्षणताऽवश्य स्वीकरणीयेत्याशयः। २ **विधयः**-आदेशाः। **सिद्धमिति**। विसर्गस्याऽल्वादित्याशयः। ३ वार्त्तिकक्रुदुक्तप्रयोजनत्रयस्य खण्डितप्रायत्वाच्चतुर्थं प्रयोजनमाह-**द्विर्वचनमिति**। अत एव भगवता चकारोऽत्र न प्रयुक्तः। यद्यपि आद्यम् उ३ञ्जकेति प्रयोजनं भगवता न खण्डितन्तथापि उब्जधातोर्दोपधत्वस्वीकारादुपध्मानीयोपधत्वविरहान्मूले एव कुठाराघातात्तदपि प्रयोजनं खण्डितप्रायमेवेति

### ❀ शब्दकौस्तुभः ❀

निषेधेपि। इह तु 'नन्द्रा' इति सूत्रेण द्वित्वनिषेधे कर्त्तव्ये निर्बाधमेवाऽसिद्धत्वमिति दिक्। अथवा मास्तु वाक्यशेषानुमानं भुजन्युब्जाविति निपातनादेव बकारोस्तु। नचैवमसिद्धताविरहाद्दकारस्यैव द्वित्वं स्यादिति वाच्यम्, दकारोपधनिर्देशसामर्थ्याज्झिशब्दस्य द्वित्वे कृते ततो दकारस्य बकारप्रसङ्गः, अकुत्वविषये एव बकारो निपात्यत इत्यभ्युपगमात्। नन्वेवं कुत्वविषये चरितार्थत्वात्कथं दकारोपदेशस्य सामर्थ्यमुक्तं, येन द्वित्वानन्तरमेव बकारः प्रवर्त्तेतेति चेत्; अनभिधानादतो घञादि मास्तु, निपातनं चैवमविशेषेणास्तु। 'अभ्युद्गः' 'समुद्गः' इत्येतन्नोब्जे रूपम्। किं तु उपसर्गद्वयपूर्वकाद्गमेरन्येष्वपि दृश्यत इति डप्रत्ययः। व्युत्पत्तिमात्रं चेदम्। रूढिशब्दत्वात्। 'समुद्गकः सम्पुटक' इत्यमरः। तदेवमयोगवाहानां शर्षुपदेशस्य जश्त्वाऽभावरूपं प्रयोजनं वार्त्तिकमतेऽस्ति। भाष्यकारमते तु नास्तीति स्थितम्।

तथा **षत्वमपि प्रयोजनं** सर्पिःषु धनुःषु। 'नुम्विसर्जनीयशर्व्यवायेपी'ति सूत्रे विसर्जनीयग्रहणं न कर्त्तव्यं भवति। 'शर्व्यवाय'इत्येव सिद्धत्वात्। नुम्ग्रहणं तूभयथापि कर्त्तव्यमेव, नुम्स्थानिकेनैवानुस्वारेण व्यवधाने यथा स्यात् इह मा भूत् पुंस्विति। नुम्ग्रहणं हि स्वस्थानिकस्यानुस्वारस्य लक्षकम्। अन्यथाऽसम्भवात्। नहि इण्कवर्गाभ्यामुत्तरः सकारो नुमा व्यवहितः षत्वविधौ सम्भवति। अनुस्वारे षत्वस्याऽसिद्धत्वादित्याहुः। अस्तु वा स्थानिवद्भावेन नुम्त्वं तथापि स्वाश्रयस्यानुस्वारत्वस्यापि सत्त्वात् शर्त्वेनैव सिद्धे नियमार्थता युक्ता। नियमश्च सजातीयापेक्ष इत्य'नुस्वारेण व्यवाये चेद्भवति तर्हि नुमैव न त्वन्येने'ति फलितम्। वस्तुतस्त्वतिदेशं प्रति अनुस्वारस्यासिद्धत्वादतिदेश एव दुर्लभः, सुहिन्स्वित्यादौ विधायकत्वसम्भवे नियामकत्वानुपपत्तिश्च, तथापि लक्ष्यानुरोधाल्लक्षणेत्येव शरणम्। यथाऽट्कुप्वाङ्सूत्रे। तत्र प्रेन्वनादौ णत्वं मा भूत्, प्रोम्भणादौ च स्यादित्येवमर्थं लक्षणेति चेत्; इहापि सुहिन्सु पुंस्वित्यादौ मा भूदिति तुल्यम्। णत्वविधावनुस्वारमात्रे लक्षणा, षत्वे तु नुम्स्थानिकएवेत्यन्यदेतत्। अस्मिंश्च पक्षे शर्षुपदेशेपि झल्त्वमिव हल्त्वयत्वे अपि नान्तरीयकत्वादेव सिध्यतस्तत्फलं तूत्तरवार्त्तिकव्याख्यानात्समनन्तरमेव स्फुटीभविष्यति। तथा खर्त्वमपि। तेन कुप्वो××क××पौचेति सूत्रान्तर्गतो विसर्गः सिद्धः। एवञ्च सौत्रनिर्देशेनैवोक्तवार्त्तिकस्यार्थो ज्ञाप्यत इति बोध्यम्। अनेन सौत्रं विसर्गग्रहणमेवोपष्टभ्य शर्षुपदेशं प्रत्याचक्षाणा यथाश्रुतमट्सूपदेशपरं वृत्तिग्रन्थं व्याचक्षाणाः परास्ताः। अट्सूपदेशेनाल्त्वाऽच्त्वयोर्लाभेपि हल्त्वयत्वाऽलाभात्। तत्फलस्य च वक्ष्यमाणत्वात्। न चाट्स्वेव यकारोत्तरमुपदेशात्तल्लाभ इति वाच्यम्, तथा सति पयःस्वित्यादाविणः परत्वेन षत्वापत्तेः। अच्त्वाऽसिद्धया 'समःसुटी'त्यत्रत्यकैयटादिग्रन्थविरोधापत्तेश्चेति दिक्। **अविशेषेणे**त्यादि वार्त्तिकस्यायमर्थः। यत्रयत्र प्रदेशे प्रयोजनं दृश्यते तत्रतत्रोपदेशः कर्त्तव्यः। प्रयोजनानि तु संयोगसंज्ञादीनि पश्चेति। तथाहि वार्त्तिकमते उब्जेरुपध्मानीयोपधतया उपध्मानीयस्य हल्संज्ञां विना संयोगसंज्ञा न सिद्ध्यति, जश्त्वं त्वसिद्धं,ततश्च संयोगे गुर्विति गुरुसंज्ञाया अपि विरहादु३ञ्जकइत्यत्र 'गुरोरनृत'इति प्लुतो न स्यात्। तस्मात्प्लुतगुरुसंज्ञासंयोगसंज्ञाहल्संज्ञानामुत्तरोत्तरसापेक्षतया प्लुतसिद्ध्यर्थं हल्संज्ञा एषितव्या। तदेतदभिप्रेत्योक्तं-'**संयोगसंज्ञा प्रयोजन**'मिति। तथो**पधासंज्ञापि** प्रयोजनम्, 'निष्कृतं' 'दुष्कृत'मिदुदुपधस्य चेति षत्वं यथा स्यात्। भाष्यकारस्त्वाह-'इदुदुपधस्थानिको यो विसर्ग' इति व्याख्यानान्नेदं प्रयोजनम्। उपधाग्रहणप्रत्याख्यानाद्वा। इदुद्भ्यां परस्य विसर्गस्येत्येवेष्टसिद्धिरिति। **अलोन्त्यविधिश्च** प्रयोजनं-वृक्षस्तरति। विसर्जनीयान्तस्य पदस्य स इति पक्षे अन्त्यस्य सत्वं यथा स्यात्।'पदस्य यो विसर्जनीय' इति व्याख्यानान्निर्दिश्यमानस्येति परिभाषया वा सिद्धत्वादिदमपि न प्रयोजनम्। **द्विर्वचनं च** प्रयोजनम्-उरः कः:। उरःपः:। 'अनचि चे'त्यच उत्तरस्य यरो विधीयमानं द्वित्वं सिद्धं

**भवत इति द्विर्वचनं सिद्धं भवति ॥**

( उद्द्योतः ) [भाष्ये–] **द्विर्वचनं प्रयोजनमिति।** विसर्गजिह्वामूलीयादेर्द्विरुच्चारणे विशेषस्याऽग्रहादुच्चारणस्य कर्तुमशक्यत्वाच्च शास्त्रप्राप्तिमात्रेणैतत्प्रयोजनकथनमिति सन्तोष्टव्यम् ।

[ स्थानिवद्भावप्रतिषेधप्रयोजनभाष्यम ]

**स्थानिवद्भावप्रतिषेधश्च प्रयोजनम्— यथेह भवति–उरःकेण, उरःपेणेति–'अड्व्यवाये'' इति णत्वम्; एवमिहापि स्थानिवद्भावात्प्राप्नोति–व्यूढोरस्केन महोरस्केनेति। तत्र अनल्विधाविति प्रतिषेधः- सिद्धो भवति ॥**

( प्रदीपः ) **महोरस्केनेति**। 'पूर्वत्रासिद्धीये न स्थानिव'दिति निषेधो'ऽचः परस्मिन्पूर्वविधा'वित्यस्य, न तु 'स्थानिवदादेश'इत्यस्य ॥

( उद्द्योतः ) ननु **सोपदादा**विति सत्वस्य स्थानिवत्त्वं **पूर्वत्रासिद्धीये** इति निषेधान्नेत्यत आह–**पूर्वत्रेति।**

---

[ वर्णार्थवत्ताविचारभाष्यम् ]

**[ इदं विचार्यते[२] ] किं पुनरिमे वर्णा अर्थवन्त आहोस्विदनर्थकाः ? ॥**

( प्रदीपः ) इदानीमन्यदपि वर्णगतं वस्तु विचार्यते–**किं पुनरिति।** पक्षद्वयेऽपि प्रतिवर्णं विभक्त्यनुत्पत्तिज्ञानं विचारस्य प्रयोजनम् ॥

( उद्द्योतः ) **इमे** इत्यनेन न **हयवरट्**सूत्रस्था एव गृह्यन्ते, किं तु वर्णमात्रमित्याह—**इदानीमिति।** [[३] **अर्थवन्त** इति साध्यम् । **वर्णा** इति पक्षः । पक्षता[४]वच्छेदकमेव हेतुः । 'धातुप्रातिपदिके'त्यादिस्तु दृष्टान्तः । ] **अनुत्पत्तिज्ञानम्**–अनुत्पत्त्युपाय[५]ज्ञानम् ॥

[ अर्थवत्तासाधकं प्रथमवार्तिकम् ]

*॥*॥ अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् ॥*॥*

[ व्याख्यानभाष्यम् ]

**अर्थवन्तो वर्णाः ॥**

**कुतः ? ॥ 'धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्' ॥**

**धातव एकवर्णा अर्थवन्तो दृश्यन्ते— एति, अध्येति, अधीत इति ॥**

**प्रातिपदिकान्येकवर्णान्यर्थवन्ति— आभ्याम्, एभिः, एषु ॥ प्रत्यया एकवर्णा अर्थवन्तः,—औपगवः कापटवः ॥ निपाता एकवर्णा अर्थवन्तः,–अ[६] अपेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, ए अपक्राम । धा[७]तुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनान्मन्यामहे–'अर्थवन्तो वर्णाः'–इति।**

( उद्द्योतः ) भाष्ये **धातव इत्यादि,**–प्रक्रियाश्रयप्रकृतिप्रत्ययानां वा चकत्वमित्येवं रूपवर्णस्फोटाश्रयेण । अ[८]यं च शास्त्रव्यवहारमात्रोपयोगी। एतद्वासनावशादेव लोकव्यवहारेऽपि शास्त्रज्ञास्तथा व्यवहरन्ति, धर्मे चैवंविधज्ञानस्योपयोग इति बोध्य[३]म् ॥

[ अर्थवत्तासाधकद्वितीयवार्तिकम् ]

*॥*॥ वर्णव्यत्यये चार्थान्तरगमनात्*

*[ कूपः सूपो यूप इति ] ॥*॥*

[ व्याख्याभाष्यम् ]

**वर्णव्यत्यये चार्थान्तरगमनान्मन्यामहे'ऽर्थवन्तो वर्णा' इति। 'कूपः सूपो यूप**

---

❀ **राजलक्ष्मीः** ❀

भावः । १ तदेवं वार्त्तिकोक्तेषु पञ्चसु फलेषु भाष्यमते फलद्वयं स्थितम् । तत्रापि स्थानिवद्भावप्रतिषेध एवाऽयोगवाहोपदेशस्य मुख्यं फलमित्यवधेयम् ।

२ **एवञ्च–"इदं विचार्यते किं पुनरिमे वर्णा"** इत्येवमत्र भाष्ये पाठ उचित इति कैयटाशयः । तथा पाठ आसीत्स विलुप्त इति हि तत्त्वम् । **वस्तु**–अर्थवत्त्वानर्थवत्त्वरूपम् । ३ 'अर्थवन्त' इत्यारभ्य **'दृष्टान्त'** इत्यन्तो ग्रन्थः **'बोध्यम्'** इत्युद्द्योतग्रन्थानन्तरमुचित इति **श्रीगुरुचरणाः** । ४ **पक्षतावेति**। वर्णत्वादिति हेतुरित्यर्थः । ५ तस्य प्रत्यक्षसिद्धत्वाद्यथाश्रुताऽसङ्गतेराह–**अनुत्पत्त्युपायेति**। ६ 'अ' इति तिरस्कारे सम्बोधने वा । 'ए' इति सम्बोधने, तिरस्कारे वा । **अपक्राम**–पलायस्व । ७ उपसंहरति–**धात्विति**। ८ **अयं**–वर्णस्फोटः । **एतदिति**। शास्त्रमात्रोपयोगिवर्णस्फोटेत्यर्थः । **तथा**–प्रकृतिप्रत्यय-

---

❀ **शब्दकौस्तुभः** ❀

भवति । तथा **स्थानिवद्भावप्रतिषेधोपि** प्रयोजनम् । यथा उरः केणेत्यादौ अड्व्यवायेति णत्वं सिद्धं भवति–एवं व्यूढोरस्केनेत्यादावपि प्राप्नोति स्थानिवद्भावात्सकारस्य, तत्रानल्वि

इति । 'कूप' इति सककारेण कश्चिदर्थो गम्यते । 'सूप' इति ककारापाये सकारोपजने चार्थान्तरं गम्यते । 'यूप' इति ककारसकाराऽपाये यकारोपजने चार्थान्तरं गम्यते। ते मन्यामहे-'यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्ये'ति ॥

( प्रदीपः ) वर्णव्यत्यय इति । एकस्य वर्णस्याभ्युपगमेऽन्याऽपगमो व्यत्ययः । सककारस्येति । तस्यैवाऽन्वयव्यतिरेकावनुविधत्तेऽर्थावसाय इति भावः ॥

( उद्द्योतः ) हेत्वन्तरमाह—वर्णव्यत्यये चेति । ननु कूपादौ न सिंहादाविव वर्णव्यत्ययोऽत आह—एकस्येति । तस्यैवान्वयेति । 'ऊप'शब्दस्य तु तदीयशक्त्युद्बोधकत्वरूपं द्योतकत्वं, प्रादिवत् । अत एव तेषामिवैषामपि प्रातिपदिकसंज्ञापादनं करिष्यते ॥

[ वर्णार्थवत्तासाधकं तृतीयं वार्तिकम् ]

*||*|| वर्णानुपलब्धौ चानर्थगतेः-[ वृक्ष ऋक्षः काण्डीर आण्डीर इति ] ||*||*

[ व्याख्यानभाष्यम् ]

वर्णानुपलब्धौ चानर्थगतेर्मन्यामहे'ऽर्थवन्तो वर्णा' इति । वृक्ष ऋक्षः, काण्डीर आण्डीरः [इति]। 'वृक्ष' इति सवकारेण कश्चिदर्थो गम्यते, 'ऋक्ष' इति वकारापाये सोऽर्थो न गम्यते।'काण्डीर'इति सककारेण कश्चिदर्थो गम्यते, 'आण्डीर' इति ककारापाये सोऽर्थो न गम्यते ॥

( प्रदीपः ) वर्णानुपलब्धौ चेति । अर्थान्तरावगमात्प्रकृतोऽर्थो न गम्यत इति विवक्षितम् ।

( उद्द्योतः ) तृतीयहेतुमाह—वर्णानुपलब्धौ चेति । 'अनर्थगते'रित्यस्य तद्वर्णसत्तायां योऽर्थस्तदर्थानवगतेरित्यर्थ इत्याह—अर्थान्तरेति ।

[ आक्षेपभाष्यम् ]

किं तर्ह्युच्यते-'अनर्थगते'रिति । न साधीयो ह्यत्राऽर्थस्य गतिर्भवति ! ॥

( प्रदीपः ) इतरस्त्वर्थावगत्यभावमात्रमनेनोक्तमिति मत्वा पृच्छति—किं तर्हीति । न साधीय इति । परमतापेक्षया प्रकर्ष आरोप्यते । यथा 'न किञ्चिदयं तत्र करोती'त्युक्ते कश्चिदाह 'सुतरामयं करोती'ति ॥

( उद्द्योतः ) प्रश्नमुपपादयति—भाष्ये-न साधीय इति । नञि काकुः । परमतापेक्षयेति । परेणानर्थगतेरित्युक्त्वादिहार्थगतिरस्तीत्यभ्युपगमस्य परमते कटाक्षेण, अन्यस्थलीयार्थगत्यपेक्षयाऽत्रातिशयेनाऽर्थगतिरस्तीति विवक्षेति भावः॥

[ समाधानभाष्यम् ]

एवं तर्हीदं पठितव्यं स्यात्—'वर्णानुपलब्धौ चाऽतदर्थगते'रिति ॥

किमिदम्—'अतदर्थगते'रिति ? ॥

तस्यार्थस्तदर्थः, तदर्थस्य गतिस्तदर्थगतिः, न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति । अथवा सोऽर्थस्तदर्थस्तदर्थस्य गति-

❀ राजलक्ष्मीः ❀

विभागेनेत्यर्थः । १ वर्णस्य-सकारादेः । अन्यस्य-ककारादेः । २ तस्यैव-ककारस्यैव । अर्थेन सह अन्वयव्यतिरेकौ कर्मभूतौ अर्थनिश्चयः । कर्त्ता-अनुविधत्ते-करोतीत्यर्थः । ककारसत्त्वे तदर्थदर्शनादसत्त्वे च तददर्शनात्सोऽर्थः ककारस्येति ज्ञायते इत्याशयः । ३ प्रादिवदिति । द्योतकत्वेनार्थवत्त्वादित्याशयः । तेषां-कादीनाम् । एषाम्-ऊपादीनाम् । ४ अनर्थगतेः-तदर्थानवगतेः । ५ विवक्षितमिति । उष्ट्रमुखवदित्याशयः । ६ 'उच्यते' इत्यस्य 'वार्त्तिके' इति शेषः । 'अतदर्थगते'रित्युच्यतामित्याशयः । ७ न भवतीति काकुः । ऋक्षादावर्थावगतिः साधु भवत्येवेति कथमुक्तं वार्त्तिकेऽनर्थगतेरिति-इत्यर्थः । ८ इतरस्त्विति । 'मध्यमपदलोपमजान'न्निति शेषः । ९ परेति । 'अनर्थगते'-रिति वक्तृपरमतापेक्षयेत्यर्थः । १० सुतरामिति । यादृशं कार्यं करणीयन्ततोऽपि सुष्ठु करोतीत्यर्थः । कटाक्षोऽयम् ।

११ तुष्यतु दुर्जनन्यायेन अभ्युपगम्याह-एवमिति । पठितव्यं-वार्त्तिके पठनीयम् । १२ न सः-असः, अतस्यार्थः अतदर्थः, अतदर्थस्य गतिरित्येवं समाससम्भवात्पृच्छति-किमिदमिति । १३ तस्य-वकारादेः । नञा तत्पदस्यादौ समासो नात्रेत्याशयः । १४ वर्णानामनर्थकत्वमते आह-अथ-

❀ शब्दकौस्तुभः ❀

धाविति प्रतिषेधो ऽल्त्वे सति सिध्यति । 'न च पूर्वत्रासिद्धे न स्थानिव'दिति निषेधोस्त्विति वाच्यं, न पदान्तसूत्रशेषभूतस्य तस्याचः परस्मिन्नित्येतद्विषयकत्वात् । स्थानिवद्भावं

१ इदं भाष्यमेव न वार्त्तिकखण्डमिति सर्वे प्राञ्चः । वार्त्तिकखण्डमेवैतदिति नव्याः ।

२ इतिः क्वचिदपि न दृश्यते ।

३ 'किञ्चिदयं तत्र न करोति' पा० ।

**स्तदर्थगतिर्न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति ।**

( प्रदीपः ) **एवं तर्हीति ।** प्रकृतोऽर्थो न गम्यतेऽर्थान्तरं तु गम्यत इत्यर्थः । **तस्यार्थ इति ।** [ **तस्य**[1]-वर्णस्य । ] परं प्रति वर्णानामर्थवत्त्वमसिद्धमिति कथं तस्येति वर्णः परामृश्यत इत्याह-- **सोऽर्थ इति ।** प्रकृतोऽर्थ इत्यर्थः ॥

( उद्द्योतः ) तच्छब्दार्थमाह—**वर्णस्येति ।** परे तु तच्छब्देन तद्वर्णघटितपरामर्शे न कश्चिद्दोषः । अत एव पूर्वं भाष्ये **सककारेण कश्चिदर्थो गम्यत** इत्युक्तमित्याहुः । लाघवेन तु कर्मधारयमाह भाष्ये-**सोऽर्थ इति। प्रकृतोऽर्थः**- तस्मिन्वर्णे सति योऽर्थः प्रतीयते स इत्यर्थः ।

[ आक्षेपभाष्यम् ]

**स तर्हि तथा निर्देशः कर्तव्यः ? ॥**

[ सिद्धान्तिसमाधानभाष्यम् ]

**न कर्तव्यः। उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा—उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः । खरमुखः । एवमतदर्थगतेरनर्थगतेरिति ।**

( प्रदीपः ) **उष्ट्रमुख इति ।** गतार्थत्वादप्रयोग एव द्वितीयस्य मुखशब्दस्य लोपोऽभिधीयते[2] । अत्रहि उष्ट्रो मुखमस्येत्येव विग्रहः । न च प्राणी प्राण्यन्तरस्य मुखं संभवतीति[3] विशिष्टावयववृत्तिरुष्ट्रशब्दः सादृश्यान्मुखं विशिनष्टि । एवमिहाप्यनर्थगतेरित्यत्राऽर्थशब्देन प्रक्रान्तोऽर्थ उच्यते,नार्थमात्रमित्यर्थः ।

( उद्द्योतः ) ननु दृष्टान्ते **सप्तम्युपमानपूर्वेति** वचनेनोत्तरपदलोपेऽपि प्रकृते तच्छब्दलोपः केन ? । चिं क तच्छब्द उत्तरपदमपि न, तच्छब्देन नञः समासाऽभावादत अहा-**गतार्थत्वादिति** । तथा च तद्वदत्रापि लक्षणेति भावः ॥

[ वर्णानामर्थवत्तासाधकं चतुर्थं वार्तिकम् ]

**॥ * ॥ सङ्घातार्थवत्त्वाच्च ॥ * ॥**

[ व्याख्यानभाष्यम् ]

**सङ्घातार्थत्वाच्च मन्यामहे 'ऽर्थवन्तो वर्णा' इति। येषां सङ्घाता अर्थवन्तोऽवयवा अपि तेषामर्थवन्तः । येषां पुनरवयवा अनर्थकाः समुदाया अपि तेषामनर्थकाः । तद्यथा-एकश्चक्षुष्मान्दर्शने समर्थः तत्समुदायश्च शतमपि समर्थम् । एकश्च तिलस्तैलदाने समर्थस्तत्समुदायश्च खार्यपि तैलदाने समर्था । येषां पुनरवयवा अनर्थकाः, समुदाया अपि तेषामनर्थकाः । तद्यथा-एकोऽन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमप्यसमर्थम्। एका च सिकता तैलदानेऽसमर्था, तत्समुदायश्च खारीशतमप्यसमर्थम् ॥**

( उद्द्योतः ) चतुर्थहेतुमाह-भाष्ये—**सङ्घातार्थवत्त्वाच्चेति । एका सिकतेति** भाष्यप्रयोगादेव सिकताशब्दस्यैकवचनान्तत्वमपि ॥

[ वर्णानामर्थवत्तापक्षदूषणायाक्षेपभाष्यम् ]

**यदि तर्हीमे वर्णा अर्थवन्तोऽर्थवत्कृतानि**

---

❀ राजलक्ष्मीः ❀

**थेति । तदर्थः**-वृक्षादिरूपः । वृक्षादि-रूपार्थावगतिर्न भवतीत्यर्थः । १ **तस्येति**-तस्येति पदेन । २ **घटितेति ।** समुदायेत्यर्थः । **लाघवेमेति ।** ननु षष्ठीतत्पुरुषे दोषेणेत्यर्थः । **प्रतीयते**-तद्घटितेन प्रतीयते । ३ न्यासान्तरप्रत्याख्यानं वाचयितुं तटस्थः पृच्छति-**स तर्हीति । तथा**-तत्पदघटितः । समाधत्ते-**नेति । ४ विधीयत इति ।** न तु मुख्योऽत्र लोपः, तथा सूत्राभावात् । **न च**=नहि । भव**तीतीति ।** अन्वयानुपपत्तेरित्याशयः । **इतिर्हेतौ ।** ६ **विशिष्टेति ।** विचित्रमुखरूपावयवेत्यर्थः । लक्षणया च तदर्थवृत्तिता बोध्या । **प्रक्रान्तः**-विशिष्टः। **श्रीगुरुचरणास्तु** विशिष्टावयववृत्तिरित्यस्य विलक्षणाकृतिमुखवृत्तिरित्यर्थमाहुः।

५ **अत्रापि**-अनर्थगतेरित्यत्रापि । एवञ्च वार्तिकं नाऽपूर्वमिति भावः । ७ तथा च 'वृक्ष इति सङ्घातोऽर्थवदवयवकः, सङ्घातार्थवत्त्वात्, चक्षुष्मदादिसङ्घातवत्, यन्नैवं तन्नैवं यथाऽन्धादिसमुदायः' इत्यनुमानप्रयोगोऽत्र बोध्यः ।

---

❀ शब्दकौस्तुभः ❀

प्रति त्रिपादीस्थस्याऽसिद्धतया न्यायसिद्धं तदिति पक्षे तु नेदं प्रयोजनम् । उरःकेणेति णत्वं संस्कर्त्रेत्यत्र सकारस्य द्वित्वं चाधिकं प्रयोजनं बोध्यमिति दिक् । यद्यपि 'सर्वमिदमष्टशरो-

---

१ अयं पाठः क्वाचित्कः ।

२ 'विधीयते' इति तु **शिवदत्त**शोधितः पाठः ।

३ भवतीति **शिवदत्त**शोधितपाठस्तु शोधकस्य पाण्डित्यमेव गमयति ।

**प्राप्नुवन्ति ॥ कानि ? ॥ 'अर्थवत्प्रातिपदिक'मिति प्रातिपदिकसंज्ञा, 'प्रातिपदिका'दिति स्वाद्युत्पत्तिः, 'सुबन्तं पद'मिति पदसंज्ञा ॥ तत्र को दोषः ? ॥ 'पदस्ये'ति नलोपादीनि प्राप्नुवन्ति–धनं वनमिति ॥**

( प्रदीपः ) **नलोपादीनीति** । श्रवणं तु विभक्तेर्न भवति, यतो यदैवावयवानां प्रातिपदिकसंज्ञा प्रवर्तते तदैव समुदायस्यापि । तत्र तदन्तर्गतत्वाद्विभक्तेर्लुका भवितव्यम् । समासग्रहणेन च तुल्यजातीयस्य सुबन्तावयवसमुदायस्य प्रातिपदिकसंज्ञा निवार्यते, न त्वर्थवत्समुदायमात्रस्य । येनैव चाऽर्थेन समुदायस्याऽर्थवत्त्वं तेनैव तदवयवानामपीति विभक्त्युत्पत्तिंश्चोद्यते ॥

( उद्द्योतः ) **तदन्तर्गतत्वादिति** । इदं चिन्त्यम् । **इत्थंभूतलक्षण** इति सूत्रस्थस्वग्रन्थविरोधात् । तत्र हि–संज्ञाप्रवृत्त्युत्तरकालजातविभक्तेस्तन्मध्यपतितत्वेऽपि तदवयवत्वं नेत्युक्तम् । तस्मादन्तरङ्गत्वादवदवप्रातिपदिकत्वे तन्निमित्तसुपि तदनन्तरं कृदन्तत्वनिमित्तकप्रातिपदिकत्वे सुब्लोप इति वक्तुं युक्तम् । 'ध्वनती'त्यादौ तु न तदापत्तिः । धातुप्रत्ययान्तरद्वयोस्तदवयवपरत्वेन तत्र तदप्राप्तेः । धात्वादेस्तदवयवत्वं तु व्यपदेशिवद्भावेन बोध्यम् । वस्तुत **इत्थंभूतेति** सूत्रस्थकैयटोक्तिरयुक्तेति तत्रैव निरूपयिष्याम इति न दोषः॥ धकारे जश्त्वमादिपदार्थः । **सुबन्तावयवसमुदायस्येति** । 'सुबन्तावयवे'ति बहुव्रीहिस्ततः कर्मधारयः । इदमुपलक्षणम्–भेदे सति यदर्थयोः संसर्गस्तद्द्वारकार्थवत्समुदायस्य । तेन तिङन्तसमुदायस्य व्यावृत्तिः । प्रकृते न भेद इत्याह–**येनैवचेति**॥

[ अर्थवत्तापक्षे दोषनिराकरणवार्तिकम् ]

*॥*॥ सङ्घातस्यैकार्थ्यात्सुबभावो वर्णात् ॥*॥*

[ व्याख्यानभाष्यम् ]

**सङ्घातस्यैकत्वमर्थः । तेन वर्णात्सुबुत्पत्तिर्न भविष्यति ।**

( प्रदीपः ) अत्र परिहारमाह–**सङ्घातस्येति** । 'वृक्ष' इत्यत्रैकत्वं विभक्त्या द्योत्यते । तच्चैकमित्येकैव विभक्तिरुत्पद्यते । यथा बहवो द्रष्टारो दृश्यमर्थमेकेनैव प्रदीपेन पश्यन्ति । सा चोत्पद्यमाना समुदायादेव तन्त्रेण सर्वाऽनुग्राहिण्युत्पद्यते, समुदायद्विर्वचनवत् । पदसंज्ञा तु समुदायस्यैव भवति, न प्रत्येकम् । असुबन्तत्वात्, 'यस्मात्प्रत्ययविधि'रित्यनुवर्तनात् ।

( उद्द्योतः ) **तच्चैकमिति । सङ्घातस्यैकत्व**मिति भाष्यस्य सङ्घातस्याप्येकत्वमर्थः । एवंच विभक्तिः समुदायादेवेति भावः । ननु समुदायादुत्पद्यमाना विभक्तिः सर्ववर्णसंबन्धिनी चेत् प्रतिवर्णं पदत्वं प्राप्नोतीत्यत आह–**पदसंज्ञा त्विति** । यतश्चार्थबोधनाय विभक्त्युत्पत्तिस्तस्य संज्ञा प्रवर्त्तते न त्वेषामिति भावः । केचित्तु विभक्तिः प्रकृत्यर्थगतप्रकृतिबोध्यसङ्ख्याद्योतिका । सङ्ख्या च समुदायस्यैवार्थो, न प्रत्येकवर्णानामिति न तेभ्यः स्वाद्युत्पत्तिः । **एकत्वं सङ्घातस्यार्थ** इति भाष्यस्वरसात् । प्रकृत्यंशे वर्णव्यत्ययाऽपाययोः सङ्ख्यान्तरानुपजननात्सा समुदायस्यैवार्थ इति तद्भावः । न चाव्ययेभ्य इवैकवचनं दुर्वारम् । सङ्ख्यारहितार्थप्रतिपादकेषु तथास्वीकारेपि, वस्तुतःसङ्ख्यावत्यर्थे सङ्ख्यानभिधायकस्वाद्युत्पत्तौ मानाऽभावात् । एवंचैषां प्रकृतित्वमेव नेति

❀ **राजलक्ष्मीः** ❀

१ **प्रातिपदिकेति** । प्रत्येकं प्रातिपदिकसञ्ज्ञेत्यर्थः । २ विभक्तेः श्रवणप्रसङ्ग इति दोषस्तु न भवतीत्यर्थः । नचैकाज्द्विर्वचनन्यायेन समुदायस्यैव सञ्ज्ञास्यान्नावयवानामिति वाच्यं, यत्र समुदायकार्येणावयवानामप्युपकारस्तत्रैव तन्न्यायप्रवृत्तेः । प्रकृते विभक्त्यादिरूपोपकारस्यावयवेऽभावात्तद प्रवृत्तेः । न च सङ्ख्याकर्माद्यभावादवयवेभ्यो न विभक्तिरिति वाच्यम्, अर्थवत्त्वे तस्याऽपिसम्भवात् । ३ **तत्र**–तस्यां सञ्ज्ञायां सत्याम् । **तदन्तर्गतत्वात्**–समुदायान्तर्गतत्वात् । **विभक्तेः**–अन्तर्गतविभक्तेः । **निवार्यते इति** । नचेमे अद्य यावत्सुबन्तावयवा इति भावः । **चोद्यते इति** । तस्याः श्रवणं नेत्यन्यदेतत् । प्राप्तिमात्रेणाशङ्कायाः सत्त्वात् । ४ **तदापत्तिः**- सुबापत्तिः । **धात्विति** । 'अर्थवत्सूत्रे' इत्यादिः । **तदप्राप्तेः**–प्रातिपदिकसञ्ज्ञाया अप्राप्तेः । ५ अवयवानामेकत्वं यदार्थस्तदा-समुदायस्याऽप्येकत्वमेवार्थः, अवयवानतिरिक्तत्वात्सङ्घातस्येत्यर्थः । ६ **तच्च**–एकत्वञ्च । **एकम्**–एकमेव । ७ **असुबन्तत्वात्**–अवयवानाञ्चाऽसुबन्तत्वात् । ८ **एकवचनम्**–सम्भव इति भावः ॥ [ **हयवरट्** ] ॥

—

❀ **शब्दकौस्तुभः** ❀

व्यपदेशेन सिद्ध्यत्येव तथापि वार्त्तिकाक्षररचनाया द्वेधापि

---

१ 'धनति' पा० ।
२ 'तत्र' पा० ।
३ 'द्रष्टार एकेनैव प्रदीपेन दृश्यमर्थं पश्यन्ति' पा० ।
४ 'यस्मात्प्रत्ययविधिरित्यनुवर्तनादसुबन्तत्वात्' पा० ।

**न केवला प्रकृति**रित्यस्यापि न विषयः । एतेन 'प्रत्येकं पदसंज्ञानुग्रहाय द्विर्वचनवैषम्यात् स्यादेव प्रत्येकं सुबुत्पत्ति' रित्यपास्तमित्याहुः ॥

[ वर्णानर्थकत्वसाधकप्रथमवार्तिकम् ]

*॥*॥अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः॥*॥*

[ व्याख्याभाष्यम् ]

**अनर्थकास्तु वर्णाः ॥ कुतः ?॥ 'प्रतिवर्णमर्थानुपलब्धेः' । न हि प्रतिवर्णमर्था उपलभ्यन्ते ॥ किमिदं प्रतिवर्णमिति ?॥**

**वर्णं वर्णं प्रति प्रतिवर्णम् ॥**

( प्रदीपः ) **अनर्थकास्त्विति** । धात्वादिव्यतिरिक्ता वर्णाः पक्षीक्रियन्तेऽन्यथा शास्त्र[1]विरोधः प्राप्नोति । **किमिति**। असमासशङ्कया प्रश्नः, समा[2]सेन तूत्तरम्। तेनैव वीप्सा द्योतितेति द्विर्वचनं न भवति ॥

( **उद्द्योतः** ) अनुमानेन साधितामर्थवत्तां प्रत्यक्षविरोधेन दूषयति–**अनर्थकास्त्विति** । सर्ववर्णानां पक्षत्वे हेतोर्भागाऽसिद्धत्वं स्यादत आह–**धात्वादीति** । विपक्षे बाधकमाह–**अन्यथेति**। **वर्णव्यत्यये**त्यादिहेतो**रर्थानुपलब्धे**रिति हेतोश्च धात्वाद्यतिरिक्तवर्णविषयत्वे एव सङ्गतेरित्यपि बोध्यम्। **असमासाशङ्कयेति**। त[3]था च वीप्सा न प्रतीयेतेति भावः। **तेनैवेति**। वीप्सायां तस्य विधानादिति भावः॥

[ अनर्थकत्वसाधकं द्वितीयं वार्तिकम् ]

*॥ * ॥ वर्णव्यत्ययापायोपजनविकारे-ष्व[4]र्थदर्शनात् ॥ * ॥*

[ व्याख्याभाष्यम् ]

**वर्णव्यत्ययाऽपायोपजनविकारेष्वर्थदर्शनान्[5]मन्यामहे–'अनर्थका वर्णा' इति ॥ वर्णव्यत्यये–कृतेस्तर्कः, कसेः सिकताः, हिंसेः सिंहः । वर्णव्यत्ययो ना[6]र्थव्यत्ययः ॥ अपायो लोपः–हतः, घ्नन्तिः, घ्नन्तु, अघ्नन्। वर्णापायो नार्थापायः ॥ उपजनँ[7] आगमः–लविता, लवितुम् । वर्णोपजनो नाऽर्थोपजनः ॥ विकार[8] आदेशः। घातयति घातकः। वर्णविकारो नार्थविकारः ॥ यथैव वर्णव्यत्ययाऽपायोपजनविकारा भवन्ति तद्वदर्थव्यत्ययापायोपजनविकारैर्भवितव्यम् । न चेह तद्वत् । अतो मन्यामहे–'अनर्थका वर्णा' इति ॥**

( प्रदीपः ) **वर्णव्यत्ययेति** । यदुक्तम्–'**वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगते**'रिति, तस्याऽनैका[9]न्तिकत्वमुद्भाव्यते ॥

( **उद्द्योतः** ) ननु वर्णव्यत्ययादिष्वर्थदर्शनं नार्थवत्त्वाऽभावासाधकमत आह–**यदुक्तमिति** । एवं चार्थवत्त्वसाधकहेतौ व्यभिचारप्रदर्शनद्वाराऽनर्थकतासाधकत्वमस्य । भाष्ये–**अर्थदर्शनादि**त्यस्य वर्णव्यत्ययाद्यभावे योऽर्थस्तस्यैव दर्शनादित्यर्थः । **नार्थव्यत्यय** इत्यस्य–नार्थान्तरावगतिः, किं तु तस्यैवाऽवगतिरित्यर्थः ॥

[ तटस्थाक्षेपभाष्यम् ]

**उभयमिदं वर्णेषूक्तम्–'अर्थवन्तोऽनर्थका' इति च ॥ किमत्र न्याय्यम् ?॥**

[ समाधानभाष्यम् ]

**उभयमित्याह ॥ कुतः ?॥**

**॥*॥ स्वभा[10]वतः ॥*॥**

**तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न । न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्, कश्चिद्वाऽनर्थक इति कृत्वा सर्वैरनर्थकैः । तत्र किमस्माभिः शक्यं कर्तुम्–यद्धातुप्रातिपदिकप्रत्ययनिपाता एकवर्णा अर्थवन्तोऽतो-**

---

❀ **राजलक्ष्मीः** ❀

औत्सर्गिकैकवचनम् । १ **शास्त्रेति** । धात्वादेः–शास्त्रेणाऽर्थबोधनादिति भावः । २ **समासेन**—वीप्सार्थकेन समासेन । विग्रहस्य तु न प्रकृते उपयोगः । ३ **तथाचेति**–समासेनेत्यर्थः । ४ **विकारेष्वि**त्यस्य 'सत्स्वपी'ति शेषः । ५ **अर्थदर्शनात्**–तस्यैवार्थस्य दर्शनात्। क्रमेणोदाहरति–**वर्णव्यत्ययेइति** । ६ **नार्थेति** । न तदर्थव्यत्यय इत्यर्थः ।

७ **उप** समीपे जायते इत्युपजनः–आगमः । ८ उपसंहरति–**यथैवेति** । ९ **अनैकान्तिकत्वमिति** । व्यभिचरितत्वमित्यर्थः । वर्णव्यत्ययेऽप्यर्थान्तराऽगतेः, वर्णानुपलब्धौ तदर्थगतेश्चाऽनैकान्तिकता–तस्येत्याशयः ।

१० **स्वभावत इति** । स्वाभाविकशक्ति–तदभाववत्त्वादित्यर्थः । **ईहमानानाम्**–उद्युञ्जानानाम् ।

---

१ वार्तिकमेतदित्यन्ये । भाष्यं, भाष्यवार्त्तिकं वेत्यपरे ।

ऽन्येऽनर्थका इति । स्वाभाविकमेतत् ॥

( प्रदीपः ) उभयमित्याहेति । यत्रान्वयव्यतिरेकाभ्यामर्थवत्ता शक्यते कल्पयितुं तत्रैवासावभ्युपगन्तव्या, न सर्वत्रेत्यर्थः ॥

( उद्द्योतः ) उभयस्य न्याय्यत्वं विषयभेदेनेत्याह–यत्रान्वयेति । यथा 'एति' 'इतः' इत्यादौ । न सर्वत्र–कूपादावित्यर्थः ॥

[ आक्षेपभाष्यम् ]

कथं य एष भवता वर्णानामर्थवत्तायां हेतुरुपदिष्टः–'अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्यये चाऽर्थान्तरगमनाद्वर्णानुपलब्धौ चाऽनर्थगतेः सङ्घातार्थवत्त्वाच्चे'ति ?'॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

सङ्घातान्तराण्येवैतान्येवंजातीयकान्यर्थान्तरेषु वर्तन्ते–कूपः सूपो यूप इति । यदि हि वर्णव्यत्ययकृतमर्थान्तरगमनं स्यात्, भूयिष्ठः कूपार्थः सूपे स्यात्, सूपार्थश्च कूपे, कूपार्थश्च यूपे, यूपार्थश्च कूपे, सूपार्थश्च यूपे, यूपार्थश्च सूपे । यतस्तु खलु न किञ्चित्सूपस्य वा यूपे, यूपस्य वा वा कूपे, कूपस्य वा यूपे, सूपस्य वा कूपे, कूपस्य वा सूपे, यूपस्य वा सूपे । अतो मन्यामहे–'सङ्घातान्तराण्येतान्येवंजातीयकान्यर्थान्तरेषु वर्तन्ते'इति । इदं खल्वपि–भवता वर्णानामर्थवत्तां ब्रुवता साधीयोऽनर्थकत्वं द्योतितम् । यो हि मन्यते–यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति । ऊपशब्दस्त्वस्याऽनर्थकः स्यात् ॥

( प्रदीपः ) सङ्घातान्तराणीति । तदुक्तं–'न कूपसूपयूपानामन्वयोऽर्थस्य विद्यते । अतोऽर्थान्तरवाचित्वं सङ्घातस्यैव गम्यते॥' इति ।

( उद्द्योतः ) न कूपसूपेति । वर्णानामर्थवत्त्वे ऊपशब्दस्य त्रिष्वन्वयादर्थान्वयः स्यान्न चै दृश्यतेऽतः समुदायान्तरत्वप्रयुक्तमेवार्थान्तरत्वं तदर्थानवगतिश्च न तु व्यत्ययादिकृतमित्यर्थः । ननु ककारसकारयकाराणामेवार्थवत्त्वमूपस्तु शक्तबोधक एवेति कस्यार्थस्य सत्ता तत्र तत्रापाद्यत इति चेत्तर्हि भग्नमेव वर्णानामर्थवत्त्वम् । तत्रैव पदे ऊपयोरर्थाऽभावात् । किं च 'सङ्घया समुदायस्यैवार्थ' इत्यपि नियन्तुमशक्यं, कूपगतैकत्वस्य यूपादिभिरप्रतीत्या सङ्घयायाअपि कादिभिरन्वयव्यतिरेकसत्त्वात् । द्विर्वचनेन वैषम्यं तु प्रागुक्तमेव । तस्मात्समुदायस्यैवार्थवत्त्वं । तदेव ध्वनयन्नाह–भाष्ये–इदं खल्वपीत्यादि ॥

[ दोषस्मारणभाष्यम् ]

तत्रेदमपरिहृतम्–'सङ्घातार्थवत्त्वाच्चे'ति॥

[ समाधानभाष्यम् ]

एतस्यापि प्रातिपदिकसंज्ञायां परिहारं वक्ष्यति ॥

( प्रदीपः ) एतस्यापीति । 'दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः सुँराङ्गवद्रथाङ्गवच्चे'ति ।

( उद्द्योतः ) दृष्टो हीति । अतदर्थेन रथाङ्गेन गुणिनो रथस्य यथार्थवत्ता तथा प्रकृतेपीति भावः ।

—****—

[ वार्त्तिकावतारणाय सूत्रचतुष्टयप्रतीकभाष्यम् ]

अइउण् ऋऌक् एओङ् ऐऔच् ॥

---

॥ राजलक्ष्मीः ॥

१ तटस्थः पूर्वपक्षिणं पृच्छति–कथमिति । भवता पूर्वपक्षिणा । २ इतीति । ये एते हेतवस्ते त्वया कथं तत्रोपदिष्टा इत्यर्थः । सिद्धान्तिनं प्रति किमुत्तरमभिसन्धाय त्वयोक्तमित्यर्थः । अत्र सिद्धान्ती दोषमुद्भावितवानिति तद्दोषाणामुद्धारः कस्तवाभिमत इतियावत् । ३ सिद्धान्त्येव तटस्थं समाधत्ते–सङ्घातान्तरेति । न तु परस्परं तेषां कश्चन सम्बन्धो नवा कूपादौ ककारादिस्थाने सकारादयो जायन्ते इत्यर्थः । ४ वर्णव्यत्ययेति । न तु शब्दान्तरकृतमर्थगमनं स्यादित्याशयः । ५ इदं खल्विति । सुनिश्चितं युक्त्यन्तरमपि उच्यते इत्यर्थः । तदेवाह–भवतेति । ६ अनर्थकः स्यादिति । अतः पूर्वपक्षिणो हेत्वाभासा इमे न हेतव इति सिद्धान्तिनस्तटस्थं प्रत्युत्तरमित्याशयः । ७ नच–नहि । अतः समुदायस्यैवाऽर्थान्तरवाचित्वमितिशेषः। ८ नायं हेत्वाभास इति भावः । ९ परिहारमिति । अनर्थकैरप्यवयवैः समुदायोऽर्थवान् भवत्येवेत्येवं रूपमित्यर्थः । १० सुरेति । यथा मद्योपादानेषु गुडादिषु पृथगवस्थितेषु न मदः, समुदितेषु तु मदः, यथा च रथाङ्गेषु न गतिः, समुदाये च गमनन्तथेत्यर्थः ।

---

१ 'वुपगन्तव्या' पा० ।

[ आक्षेपश्लोकवार्तिकखण्डम् ]

॥ * ॥ *प्रत्याहारे[1]ऽनुबन्धानां कथम-ज्ग्रहणेषु न* ॥ * ॥

[ विचारप्रवृत्तिवार्तिकव्याख्याभाष्यम् ]

**य एतेऽक्षु प्रत्याहारार्था अनुबन्धाः क्रियन्ते, एतेषामज्ग्रहणेन ग्रहणं कस्मान्न भवति ?॥ किं च स्यात् ?॥**

**दधि णकारीयति, मधु णकारीयति । 'इको यणची'ति यणादेशः प्रसज्येत ॥**

( **उद्द्योतः** ) भाष्ये–**अज्ग्रहणेष्विति** । **प्रत्याहारे**ऽक्षरसमाम्नायेऽ**ज्ग्रहणेषु**–अच्प्रत्याहारग्राहकेषु,पठितानामनुबन्धानां, प्रत्यासत्त्याऽक्षु ग्रहणं कुतो नेत्यर्थः ।

तत्फलितार्थमाह–**य एते अक्षु इति**। तद्बोधकसूत्रेषु–प्रागुक्तेषु । **प्रत्याहारार्था**स्तदुपकारकाः । **अज्ग्रहणेन**–अच्शब्देन । अणगादिप्रत्याहारेषु तेषां ग्रहणे फलाऽभावं मनसि निधायाऽ**ज्ग्रहणेने**त्युक्तम् । न च हशादौ टग्रहणस्यापत्तिः । हल्सु उच्चारणार्थाकारोच्चोरणेनोच्चारणार्थवर्णहीनहलां हल्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात्[2] ॥

[ समाधानसिद्धान्तश्लोकवार्तिकखण्डम् ]

॥ * ॥ *आचारात्* ॥ * ॥

**किमिदमाचारादिति ? ॥**

**आचार्याणामुपचारात् । नैतेष्वा[3]चार्या अच्कार्याणि कृतवन्तः ॥**

( **प्रदीपः** ) **आचारादिति । आचारो**–व्यवहारः । **'तृषिमृषिकृषे'**रिति यण्ण[4] कृतः ॥

[ सिद्धान्तसमाधानवार्तिकखण्डान्तरम् ]

॥*॥ *अप्रधानत्वात्* ॥*॥

[ व्याख्याभाष्यम् ]

**अप्रधानत्वाच्च । न खल्वप्येतेषामक्षु प्राधान्येनोपदेशः क्रियते ॥**

**कं[5] तर्हि ? ॥ हल्सु ॥**

**कुत एतत्[6] ? ॥ एषा ह्याचार्यस्य शैली लक्ष्यते – यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति–अचोऽक्षु हलो हल्सु ॥**

( **प्रदीपः** ) **अप्रधानत्वादिति** । 'प्रधानाऽप्रधानसंनिधौ प्रधानमेव कार्याणां प्रयोजक'मिति परार्था[7]नामनुबन्धानामच्संज्ञा न प्रवर्तत इत्यर्थः ।

**शैलीति** । शीले भवा **शैली**–समवधानपूर्विका प्रवृत्तिः । यथा लोके ब्राह्मणैः सह ब्राह्मणा भोज्यन्ते क्षत्रियैः सह क्षत्रिया इति एवमिहाऽप्याचार्येण वर्णा[8] निर्दिष्टा इत्यर्थः ॥

( **उद्द्योतः** ) **प्राधान्येन**=प्रत्याहारेषु ग्रहणार्थत्वेन । **परार्थेति** । सजादिस्वरूपबोधनार्थत्वेन **परार्थत्वम्** । यथाऽकारादयः संज्ञिविशेषसमर्पणायोपात्ता, न तथा णादय इत्यर्थः । अप्रधानत्वमप्याचार्याचारेण साधयति–भाष्ये–**आचार्यस्येति** । आचार्यशब्देनाऽनादिः शब्दपुरुषः । एवंचाऽन्यत्र[9] संज्ञिविशेषसमर्पणायोपात्तत्वादितामसञ्ज्ञित्वमेवेति भावः ॥

[ समाधानवार्त्तिकतृतीयखण्डम् ]

॥ * ॥ *लोपश्च[10] बलवत्तरः* ॥ * ॥

**लोपः खल्वपि तावद्भवति ॥**

( **प्रदीपः** ) **लोपश्चेति** । परत्वा[11]न्नित्यत्वाद्वा **आदिरन्त्येने**त्यनेनाच्संज्ञाविधानकालेऽनुबन्धानां लोपादसन्निधानादच्संज्ञा न प्रवर्तते[12] । अनुबन्धा ह्युच्चारण एव सन्ति इत्संज्ञाप्रतिबद्धं च कार्यमसन्त एव प्रतिपादयन्ति, स्वतस्तु न किंचित्कार्यं प्रतिपद्यन्ते[13] ॥

---

❀ **राजलक्ष्मीः** ❀

१ **प्रत्याहारे**-अक्षरसमाम्नाये । **अज्ग्रहणेषु**–अच्प्रत्याहारग्राहक सूत्रचतुष्टये । पठितेष्विति शेषः । २ **शक्यत्वादिति ।** अच्प्रत्याहारे ककारस्य ग्रहे 'पुं कास्ती'त्यादौ रुत्वापत्तिश्चेत्यपि बोध्यमिति **श्रीगुरुचरणाः** । ३ **एतेषु** अनुबन्धेषु परेषु । ४ **यणिति** । मकारादिषु परतो यणकरणादित्यर्थः । **एतेषाम्**–अनुबन्धानाम् । सादित्वादप्रधानानि तानीत्याशयः । ५ **क्वेति** । प्राधान्येन तेषां क्वोपदेश इत्यर्थः । ६ **एतदिति ।** अस्य 'अवगत'मिति शेषः । **हि**–यतः । **शैली**–रचनाकौशलम् । ७ **परार्थानाम्**–प्रत्याहारार्थानाम् । **'भोज्यन्ते'** इत्यस्य 'लोकै'रिति शेषः ।

८ **तथा**–स्वरूपातिरिक्तफलानुसन्धानेनोपात्ताः ।
९ **अन्यत्र**–हल्सु । **सञ्ज्ञिविशेषेति ।** ककारादीत्यर्थः । **उपात्तत्वात्**–कादीनामुपात्तत्वात् । **इताम्**–कादीनाम् । अन्यत्र प्राधान्येन अत्राऽप्राधान्यादित्याशयः । १० **चो** हेतौ । बलवत्तरलोपादित्यर्थः । 'अनुबन्धानां न ग्रहण'मिति शेषः । **तावत्**–प्रथमम् । ११ **परत्वात्**–आदिरन्त्येनेत्येतदपेक्षया 'तस्यलोपस्ये' त्यस्यपरत्वात् । कृताकृतप्रसङ्गित्वेन लोपस्य नित्यत्वमित्यवधेयम् । १२ **न प्रवर्त्तत इति ।** एवञ्चादिरन्त्येनेत्यस्यलोपे कृतेऽप्राप्तेरनित्यता प्रदर्शिता । १३ **प्रतिपद्य**

**( उद्द्योतः )** परत्वादित्याद्यन्तरङ्गत्वोपलक्षणम् । एवं च पूर्वमनुबन्धलोपादादिरन्त्येनेति संज्ञाविधानकालेऽसंनिधानादित्यन्वयः । एवं चाऽनुबन्धसदृशभिन्नानामेव मध्यगसदृशानां ग्राह्यतां बोधयतीति भावः । भाष्ये—**लोपः खल्वपि तावदिति**। सर्वतः प्रथममित्यर्थः । यत्तु एवमपि लणित्यकारस्य हल्षु ग्रहणापत्तेराचारादित्येव समाधिरत्र युक्त इति । तन्न 'अतो ल्रान्तस्ये'ति सूत्रे ल्कारोच्चारणेन लण्सूत्रस्थस्यानुनासिकत्वाऽभावज्ञापनात् । एवं च तस्यानुबन्धत्वमेव न, किन्तूच्चारणार्थत्वमेव । अत एव भाष्येऽइउणित्यादिसूत्रचतुष्टयोपादानेनैवैतद्विचारप्रवृत्तिः कृता । श्लोके चाज्ग्रहणेष्वित्येवोक्तम् । उरण्परसूत्रे च लपरत्वस्योपसङ्ख्यानमेव कार्यमिति तुल्यास्यसूत्रे वक्ष्यते ॥

[ योगविभागबोधकसमाधानवार्तिकान्तरम् ]

*॥*॥ 'ऊकालोजिति वा योगस्तत्कालानां यथा भवेत् । अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ॥*॥*

[ व्याख्याभाष्यम् ]

**अथवा योगविभागः करिष्यते-'ऊकालोऽच्' । उ ऊ उ३ इत्येवंकालोऽज्भवति। ततो 'ह्रस्वदीर्घप्लुतः' । ह्रस्वदीर्घप्लुतसंज्ञश्च भवति—ऊकालोऽच् ॥**

**( प्रदीपः )** **ऊकालोऽजिति** । सिद्धेऽच्त्वे, योगविभागेन कालविशेषावच्छिन्नस्याऽच्त्वं नियम्यते ततोऽनुबन्धानामूकालत्वाऽभावादच्त्वाऽभावः ॥

**( उद्द्योतः )** भाष्ये 'तत्कालानामचां ग्रहणमच्पदेन यथा स्यादिति योगविभागः कार्य' इत्यन्वयः । **सिद्धेऽच्त्वे इति** । अकारादीनामुपदेशात्सवर्णग्रहणाच्चेति भावः ॥

[ उक्ते समाधाने दोषदानभाष्यम् ]

**एवमपि कुक्कुट इत्यत्रापि प्राप्नोति ॥**

**( प्रदीपः )** **एवमपीति** । ककाराकृतेरुपदेशान्मात्रिकस्याऽच्त्वं मन्यते ॥

**( उद्द्योतः )** ननु ककारद्वयस्य मात्रिकवर्णत्वं कथम्, एकस्यैव ऋलृगित्यत्रोपदेशादत आह—**ककाराकृतेरिति** ।

[ समाधानभाष्यम् ]

**तस्मात्पूर्वोक्त एव परिहारः ॥**

**( प्रदीपः )** अत्र च यद्यप्ययं परिहारोऽस्ति,—'द्वावेतौ ककारौ, न च वर्णद्वयेनैका जातिर्व्यज्यते' इति । तथापि पूर्वमेव 'मात्राकालोऽत्र गम्यते, न च मात्रिकं व्यञ्जनमस्ती'त्युक्तत्वात्पुनरिह नोक्तः ॥

**( उद्द्योतः )** **न च वर्णद्वयेनेति** । जातिरपि स्वपर्याप्त्यधिकरणव्यङ्ग्यैव, तद्द्वारैव च कार्यभागिति भावः ॥

[ वार्तिकान्तरावतरणभाष्यम् ]

**एष एवार्थः,—अपर आह—**

*॥*॥ ह्रस्वादीनां वचनात् प्राग्यावत्तावदेव योगोऽस्तु । अच्कार्याणि यथा स्युस्तत्कालेष्वक्षु कार्याणि ॥*॥*

**( उद्द्योतः )** भाष्ये—**एष एवार्थ इति** । **अपर आहे**त्यादिना वार्तिककृतोक्त इत्यर्थः । **ह्रस्वादीनामिति** । **ह्रस्वदीर्घप्लुत** इत्यतः प्राग्यावदूकालोऽजिति तावदेवाऽस्तु पृथक्सूत्रम् । फलं दर्शयति—**अच्कार्याणीति** । अज्निमित्तकार्याणि तत्कालेष्वक्षु कर्तुमर्हाणि यथा स्युरित्यन्वयः ॥

---

**❀ राजलक्ष्मीः ❀**

न्ते—लभन्ते । नदद्देवडित्यादौ टकारस्तिष्ठन् ङीपं न लभतेऽनकारान्तत्वात्, असंस्तु देवीत्यादौ ङीपं लभते इत्याशयः । १ अन्तरङ्गत्वेन बाधकत्वे च । २ **सर्वतः**—सर्वसञ्ज्ञापेक्षया । ३ **एवमपि**—लोपस्य बलवत्त्वेऽपि । ४ **योग इति** । तस्य च ऊ(काल)कालोऽकारादिरच्सञ्ज्ञक इत्यर्थः । एवञ्च णकारककारादेर्हलो नाऽच्सञ्ज्ञा, ऊकालत्वाऽभावादित्याशयः । **योगः**—इति सूत्रं कार्यम् । **तत्कालानाम्**—ऊकालानाम् अकारादीनाम् । **भवेत्**—अचां ग्रहणम्—अच्सञ्ज्ञायां ग्रहणं भवेत् । **अचाम्**—आदिचान्तसमुदायघटकानाम् । **एषाम्**—अनुबन्धानाम् । **अच्**—अच्सञ्ज्ञकः । ५ **सिद्धे**—आदिरन्त्येनेत्यनेन सिद्धे । **अच्त्वम्**—अच्पदबोध्यत्वम् । ६ **सवर्णेति** । दीर्घादिस्तु सवर्णग्रहणाच्चेत्यर्थः । ७एकदेशी दोषमाह—**एवमपीति** । मात्रिकत्वेन 'क्' इत्यस्य ऊकालत्वात्तस्मिन्परे उकारस्य यण्प्राप्नोतीत्यर्थः । ८ सिद्धान्ती परिहरति—**तस्मादिति** । **पूर्वोक्तः**—आचारादित्यादि वार्त्तिकोक्तं समाधानत्रयम । ९ **द्वाविति** । कत्वजातिः प्रत्येकं पर्याप्ता न तु द्वित्ववत्समुदायपर्यवसन्नेति तदाश्रये एकस्मिन्ककारेऽच्त्वं प्राप्नोति न समुदाये इत्याशयः । **एतौ**—कुक्कुटादिस्थौ। **न च**—नहि । **वर्णद्वयेन**—ककारादिवर्णद्वयेन । **जातिः**—कत्वादिजातिः । १० **एष इति** । तमेवार्थमपरो वार्त्तिककार एवमाहेत्यर्थः। ११ **वचनादिति** । ह्रस्वादिबोधकपदात्प्रागेवेत्यर्थः। **योगः**—ऊकालोजिति सूत्रम् । **तत्काले**—ऊकाले । **अक्षु**—अकारादिचान्तेषु । **कार्याणि**—कर्त्तव्यानि ।

१ 'ऊकालो'जिति पूर्वश्लोकवार्त्तिकोक्त एवार्थो 'ह्रस्वादीना' मित्यपरोक्तवार्त्तिकस्येत्यर्थः ।

[ अण्पदप्रयोजनजिज्ञासाभाष्यम् ]

**अथ किमर्थमन्तःस्थानामण्सूपदेशः क्रियते ?॥**

( प्रदीपः ) **अथ किमर्थमिति** । 'अणुदित्सवर्णस्ये'ति कस्मान्न कृतमिति प्रश्नः । इण्ग्रहणेन ग्रहणार्थस्त्वन्तःस्थानामत्रावश्यं कर्तव्य उपदेशो-गीर्ष्वित्यादौ मूर्धन्यो यथा स्यादिति ॥

( उद्द्योतः ) अणः सुष्ठूपदेशः-**अण्सूपदेशः**= अण्शब्दोच्चारणम् । तदन्तःस्थानां बोधकम्-'अणुदि'दित्यत्र किमर्थं क्रियत इत्यर्थो भाष्यस्येत्याह-**अणुदिदिति** । "अण्सु अण्मध्ये । तेनात्र स्थाने किमर्थ उपदेश" इति तु नार्थ इत्याह-**इण्ग्रहणेनेति** ॥

[ समाधानभाष्यम् ]

**इह सँय्यँन्ता सँव्वँत्सरः यँल्लँलोकं तँल्लँलोकमिति परसवर्णस्यासिद्धत्वादनुस्वारस्यैव द्विर्वचनम् । तत्र परस्य परसवर्णे कृते तस्य यय्ग्रहणेन ग्रहणात् पूर्वस्यापि परसवर्णो यथा स्यात् ॥**

( उद्द्योतः ) **इह सँय्यँन्ते**त्यादिभाष्यं **गुणा भेदका** इति पक्षे । भेदकत्वपक्षे चेदमेवाऽण्ग्रहणं मानमिति भावः । यथास्थितसूत्रन्यासे इदम् । जातिपक्षेणाऽण्ग्रहणप्रत्याख्याने तु न कश्चिद्विचारः । एवं **गुणा अभेदका** इति न्याय्यपक्षेऽपि न विचार इति बोध्यम् ॥

[ उक्तप्रयोजनखण्डनभाष्यम् ]

**नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत्, "द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्" इति । यावता सिद्धत्वमुच्यते परसवर्ण एव तावद्भवति ॥**

( उद्द्योतः ) भाष्ये-**वक्ष्यत्येतदिति** । सिद्धत्ववचनं चावश्यकम् । अन्यथा परस्यानुस्वारस्य **वा पदान्तस्येति** परसवर्णे तस्याऽसिद्धत्वात्पूर्वस्यानुस्वारस्य ययी त्यस्याऽनापत्तौ रूपाऽसिद्ध्यापत्तेः ॥

[ उक्तप्रयोजनस्थापनभाष्यम् ]

**परसवर्णे तर्हि कृते तस्य यग्ग्रहणेन ग्रहणाद्द्विर्वचनं यथा स्यात् ॥**

( उद्द्योतः ) तर्हि द्विर्वचनसिद्धिरेव फलमित्याह-**परसवर्णे तर्हीति** ।

[ एकदेशिनः समाधानबाधकभाष्यम् ]

**माभूद्द्विर्वचनम् ॥**

[ सिद्धान्तिनः समाधानसाधकभाष्यम् ]

**ननु च भेदो भवति—सति द्विर्वचने त्रियकारकमसति द्विर्वचने द्वियकारकम् ॥**

( प्रदीपः ) **ननु च भेद इति** । श्रुतिकृतोऽस्त्येव भेदः सूक्ष्मत्वात्तु दुर्लक्ष्यः ॥

( उद्द्योतः ) ननु न भेदोऽनुपलब्धेरत आह-**श्रुतिकृत इति** ।

[ एकदेशिनः समाधानबाधकभाष्यम् ]

**नास्ति भेदः । सत्यपि द्विर्वचने द्वियकारकमेव ॥ कथम् ? ॥ 'हलो यमां यमि लोपः' इत्येवमेकस्य लोपेन भवितव्यम् ।**

[ सिद्धान्तिनः समाधानसाधकभाष्यम् ]

**एवमपि भेदः । सति द्विर्वचने कदाचिद्द्वियकारकम्, कदाचित्त्रियकारकम् । असति द्वियकारकमेव । स एष कथं भेदो न स्याद्यदि नित्यो लोपः स्यात् । विभाषा च स लोपः ॥**

(उद्द्योतः) भाष्ये-**यदि नित्यो लोपः स्यादिति** । तदा भेदो न स्यादित्यर्थः । **विभाषा चेति** । **च**स्त्वर्थे ॥

[ एकदेशिनः समाधानबाधकभाष्यम् ]

**यथाऽभेदस्तथाऽस्तु ॥**

❀ **राजलक्ष्मीः** ❀

१ अन्तःस्थानां यकारादीनां तत्रोपदेशस्य हलादिप्रत्याहारे ग्रहणमेव फलमत इयं शङ्काऽनुपपन्नाऽतः-अन्तःस्थापदस्य—अन्तःस्थाबोधकाऽण्पदबोधकत्वमित्याशयः । २ **परसवर्णस्येति** । 'द्विर्वचनापेक्षये'त्यादिः । **द्विर्वचनम्** अनचिचेति द्वित्वम् । **परस्य**-परस्यानुस्वारस्य । ३ **द्विर्वचने इति** । 'पूर्वत्राऽसिद्धीयमद्विर्वचने' इत्यस्यावयुत्याऽनुवाद एतत् । परसवर्णस्याऽपि तदधिकारस्थत्वात् । ४ **यावता**-यतः । **तावत्**-प्रथमम् । ५ **तस्य**-अनुनासिकस्य । **द्विर्वचनम्**-'अनचि चे'त्यनेन द्वित्वम् । ६ एकदेशी प्रयोजनं खण्डयति-**मा भूदिति** । सिद्धान्ती उत्तरयति-**ननु चेति** । **भेदः**-उच्चारणे रूपे वा भेदः। **श्रुतिकृतः**-श्रवणकृतः। ७ एकदेशी लोपस्य नित्यत्वाभिप्रायेण प्रत्याचष्टे-**नास्तीति** । सिद्धान्ती समाधत्ते-**एवमपीति** । लोपे सत्यपीत्यर्थः । **कदाचिदिति** । लोपस्य वैकल्पिकत्वादित्याशयः । **असति**-असति द्वित्वे । ८ **यथेति** । नित्यो लोपोऽस्त्वित्यर्थः ।

( उद्द्योतः ) एकदेश्याह–**यथाऽभेद इति**। यथा द्विर्वचनप्रवृत्त्यप्रवृत्त्योर्भेदो न भवति तथैवाऽस्तु। मानुवृत्तद्विभाषाग्रहणमिति भावः।

[ सिद्धान्तिनः समाधानसाधकं श्लोकवार्तिकपूर्वार्द्धम् ]

॥ * ॥ *अनुवर्तते विभाषा, शरोऽचि*[१] *यद्वारयत्ययं द्वित्वम्* ॥ * ॥

[ व्याख्याभाष्यम् ]

**यदयं 'शरोऽची'ति द्विर्वचनप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो–'ऽनुवर्तते विभाषे'ति ॥**

[ वार्तिकोत्तरार्द्धावतारणाय जिज्ञासाभाष्यम् ]

**कथं कृत्वा ज्ञापकम् ? ॥**

[ ज्ञापकताबोधकं पूर्ववार्त्तिकोत्तरार्द्धम् ]

॥ * ॥ *नित्ये हि तस्य*[२] *लोपे प्रतिषेधार्थो न कश्चित्स्यात्* ॥ १ ॥ * ॥

[ व्याख्याभाष्यम् ]

**यदि नित्यो लोपः स्यात्, प्रतिषेधवचनमनर्थकं स्यात्। अस्त्वत्र**[३] **द्विर्वचनम्, 'झरो झरि सवर्णे' इति लोपो भविष्यति, पश्यति त्वाचार्यः–'विभाषा स लोप' इति, ततो द्विर्वचनप्रतिषेधं शास्ति ॥**

( उद्द्योतः ) तृतीयो ज्ञापकमुपन्यस्यति–**अनुवर्त्तेत** इत्यादिना। **झरो झरी**ति लोपे इत्यर्थः। मध्यस्थतया **हलो यमा**मित्यस्यापि वैकल्पिकत्वं सिद्धमिति भावः ॥

[ उक्तसमाधाने ज्ञापकताविघटनभाष्यम् ]

**नैतदस्ति**[४] **ज्ञापकम्। नित्येऽपि तस्य लोपे स प्रतिषेधोऽवश्यं वक्तव्यः। यदेतत् 'अचो रहाभ्या'मिति द्विर्वचनम्, लोपापवादः स विज्ञायते ॥ कथम् ? ॥ 'यर' इत्युच्यते**[५]**। एतावन्तश्च यरो यदुत झरो वा यमो वा। यदि चाऽत्र लोपः स्याद्द्विर्वचनमनर्थकं स्यात् ॥**

**किं तर्हि तयोर्योगयोरुदाहरणम् ? ॥**

**यदकृते द्विर्वचने त्रिव्यञ्जनः संयोगः–प्रत्तम्**[६]**, अवत्तम्, आदित्यः ॥**

**इहेदानीं**[७] **कर्त्ता हर्त्तेति द्विर्वचनसामर्थ्याल्लोपो न भवत्येवमिहापि लोपो न स्यात्कर्षति वर्षतीति। तस्मान्नित्येऽपि लोपेऽवश्यं स प्रतिषेधो वक्तव्यः ॥**

( उद्द्योतः ) **लोपापवाद इति**। यद्यपि हर्यंनुभव इत्यादौ तदुदाहरणे लोपेऽप्राप्तेपि द्विर्वचनमारभ्यते, तथापि कृते द्वित्वे पश्चाल्लोपेऽपि द्विर्वचनं व्यर्थमित्याशयेनाऽपवादत्वोक्तिरिति भावः। **तयोर्योगयोः**–लोपविधायकयोः। **प्रत्त**मित्यादयौ दाधातोः क्ते आतस्तकारोऽच **उपसर्गादि**त्यनेन। **आदित्ये** आदित्याद्भवाद्यर्थण्यन्ताण्ण्यः ॥

[ पूर्वविचारोपसंहारभाष्यम् ]

**तदेतदत्यन्तं**[९] **सन्दिग्धं वर्त्तते–आचार्याणां, 'विभाषाऽनुवर्त्तते नवे'ति ॥ ५ ॥**

( प्रदीपः ) **तदेतदिति,**—ज्ञापकत्वमस्य

---

❀ **राजलक्ष्मीः** ❀

१ **शरोचि**–शरोऽचीत्यनेन। **अयम्**–आचार्यः। २ **तस्य**–शरः। **लोपे**–झरो झरीति लोपे। **प्रतिषेधार्थः**–प्रतिषेधप्रयोजनम्। ३ **अत्र**–गीर्ष्वित्यादौ। तव लोपस्य नित्यत्वादित्याशयः। **स लोपः**–झरो झरीति लोपः।

४ एकदेशी खण्डयति–**नैतदिति। तस्य**–शरः। **लोपे**–झरोझरीति लोपे। **सः**–शरोचीति। **लोपापवादः**–उभयविधलोपापवादः। 'नित्यत्वेऽपि लोपस्ये'त्यादिः। अपवादत्वाभावे हि लोपस्य सर्वत्र प्रवृत्त्या द्वित्वं व्यर्थं स्यादिति द्वित्वं लोपापवाद इत्याशयः। एवञ्च 'गीर्षु' इत्यादौ द्विषकारश्रवणापत्तिरिति शरोचीति सूत्रमावश्यकमेवेति तत्त्वम्। ५ **उच्यते**–द्वित्वविधावचो रहाभ्यामित्यत्रोच्यते। अत्र–झरि यमि वा। लोपः–'झरोझरो'ति 'हलोयमां यमी'ति च नित्यो लोपः। **द्विर्वचनम्**–अचो रहेति द्वित्वम्। तयोः–'झरो झरि' 'हलो यमां यमी'ति योगयोः। **संयोगः**–समूहः। त्रीणि व्यञ्जनानि यस्यावयवाः समूहः त्रिव्यञ्जन इति विग्रहः। यथाश्रुतं तु न युक्तं, बहूनां समवाये द्वयोरेव संयोगसञ्ज्ञेति सिद्धान्तात्। ६ प्रत्तमित्यत्र धातुदकारः, आकारस्थानिको दकारः, क्तप्रत्ययस्य तकारश्चेति त्रिव्यञ्जनः समुदाय इत्याशयः। एवमग्रेऽप्यूह्यम्। ७ **इहेदानीं**–सिद्धान्ते यथा। **सामर्थ्यादिति**। नित्यो हीदानीं लोपः, एवञ्च कृते नित्ये लोपे द्वित्वविधानं व्यर्थमित्याशयः।

८ एवञ्च षकारद्वयश्रवणवारणाय 'शरोची'त्यावश्यकमित्याशयः। ९ यतो लोपस्य नित्यत्वेऽपि शरोचीत्यावश्यककम्, **तत्**–तस्मात् कारणात्–**एतत्**–विभाषाऽनुवृत्तिर्नवेति, सन्दिग्धम्–अनिश्चितमित्यर्थः। अत्राहुः–अण्ग्रहणात्तु ज्ञायते 'विभाषा सलोप' इति। त्रिव्यञ्जनसंयोगश्रवणाय हि अण्ग्रहणमित्यवधेयम्।

विघटयति । आचार्योपदेशपारम्पर्यात्तु ज्ञायते–'अनुवर्त्तते विभाषे'ति । तस्मात्रिव्यञ्जनसंयोगश्रवणायाणुदित्ति णकारेण प्रत्याहारः कृतो न चकारेणेति स्थितम् ॥ ५ ॥

( उद्द्योतः ) तद्व्याचष्टे–ज्ञापकत्वमस्य विघटयतीति । सर्वथाऽसंभवीत्युपसंहरतीत्यर्थः । ज्ञापकेन तदनुवृत्तिं साधयतस्तत्खण्डनेऽनुवृत्तिः सन्दिग्धैवेति भावः । लण्सूत्रे **'विभाषा स लोप'** इत्युक्तेराह–**आचार्येति ।** अण्ग्रहणाज्ज्ञापकादित्यपि कश्चित् । तत्तु वार्त्तिककृताऽण्ग्रहणप्रत्याख्यानान्नोक्तम् ॥ **[ हयवरट् ]** ॥ ५ ॥

## लण् ॥ ६ ॥

[ द्विर्णकारानुबन्धे आक्षेपभाष्यम् ]

**अयं णकारो द्विरनुबध्यते-पूर्वश्चैव परश्च । तत्राऽण्ग्रहणेषु इण्ग्रहणेषु च सन्देहो[2] भवति–'पूर्वेण वा स्युः, परेण वे'ति ॥**

( प्रदीपः ) **लण् ॥ सन्देहो भवतीति ।** किं प्रत्यासत्तिराश्रीयतेऽथ व्याप्तिरिति सन्देहः ॥

( उद्द्योतः ) **लण् ॥ किमिति ।** क प्रत्यासत्तिः, क व्याप्तिरिति सन्देह इत्यर्थः ॥

[ सन्देहस्थलप्रश्नभाष्यम् ]

**कतमस्मिंस्तावदण्ग्रहणे सन्देहः ? ॥**

( उद्द्योतः ) भाष्ये–**कतमस्मिन्निति ।** वक्ष्यमाणरीत्या सर्वत्र निर्णायकसत्त्वात्प्रश्नः । **कतरस्मिन्निति** पाठेऽपि डतरादिविधौ उपाधिप्रत्याख्यानान्न दोष इति बोध्यम् ।

[ समाधानभाष्यम् ]

**'ढ्लोपे पूर्वस्य दीर्घोऽणः' इति ।**

[ सिद्धान्तिनः समाधानवार्तिकम् ]

॥ * ॥ *असन्दिग्धम्* ॥ * ॥

[ व्याख्याभाष्यम् ]

**असन्दिग्धम्–पूर्वेण, न परेण ॥**

[ हेतुजिज्ञासाभाष्यम् ]

**कुत एतत् ? ॥**

[ सिद्धान्त्येकदेशिनो हेतुसूचकं वार्तिकम् ]

॥ * ॥ *पराऽभावात्* ॥ * ॥

[ व्याख्याभाष्यम् ]

**नहि ढ्लोपे [ परे ] परेऽणः सन्ति ॥**

( उद्द्योतः ) **नहि ढ्लोप इति ।** 'वढे'त्यादौ गुणोऽसिद्ध इति भावः ॥

[ उक्तहेतुदूषणभाष्यम् ]

**ननु चायमस्ति–'आतृढ आवृढ' इति ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात्, 'ढ्लोपे पूर्वस्य दीर्घोऽचः' इत्येव ब्रूयात् ॥ अथ वैतदपि न ब्रूयात्,–अचो ह्येतद्भवति–'ह्रस्वो दीर्घः प्लुत' इति ॥**

( उद्द्योतः ) **दीर्घोऽच इत्येवेति ।** मात्रालाघवाऽभावेपि स्पष्टाक्षलाघवायाऽसन्देहाय चेति भावः । [ भाष्ये **अचो हीति ।** 'अचश्चे'ति परिभाषणादिति भावः ॥ ]

[ सन्देहान्तरप्रदर्शनभाष्यम् ]

**अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः–'केऽणः' इति ।**

[ समाधानभाष्यम् ]

**"असन्दिग्धं" । पूर्वेण, न परेण ॥**

---

### ❀ राजलक्ष्मीः ❀

१ **त्रिव्यञ्जनेति ।** सँय्यँन्तेत्यादौ तथेत्याशयः । २ सन्देहः–तात्पर्यसन्देहः । पूर्वेण–पूर्वणकारेण । **स्युः**–अण्ग्रहणानि स्युः । ३ **प्रत्यासत्तिरिति ।** प्रत्यासन्ने बुद्धिरन्तरङ्गा भवतीति प्रत्यासत्तिन्यायस्वरूपम् । ४ **व्याप्तीति ।** बुद्धिः सर्वत्र व्यापिका भवतीति व्याप्तिन्यायस्वरूपम् । **सन्देहः**–तात्पर्यसन्देहः । ५ नहि ढरेफलोपनिमित्ते ढ् परतः परेऽणः सन्तीत्यर्थः । ६ ननु वृहू धातोस्तृचि ऊदित्त्वादिडभावे गुणे रपरत्वे ढत्वधत्वष्टुत्वढलोपेषु कृतेषु रेफस्य दीर्घे स्थानसाम्यात् ऋकारे कृते ढलोपस्याऽसिद्धत्वादुपधायाश्चेतीत्त्वे रपरे पूर्वेण सहाद्गुण इति गुणे वेढेति स्यादित्येवमर्थमण्ग्रहणं स्यादत आह–**वढेत्यादाविति । असिद्धः**–'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनेनाऽसिद्धः । 'नाजानन्तर्ये' इति त्वनित्या, नास्त्येवेत्याशयः । एवञ्च 'वढे'त्येव रूपं न वेढेत्यभिप्रायः ।

---

### ❀ शब्दकौस्तुभः ❀

**लण् ।** अत्राऽकारोऽनुनासिकः प्रतिज्ञायते न तु हकारादिष्विवोच्चारणार्थः । तेनोरण् रपर इत्यत्र रप्रत्याहारग्रहणं भवति । प्रत्याहारग्रहणे ज्ञापकस्तु ऋकारऌकारयोः सवर्णविधिरिति वार्तिकनिर्देशः । ननु अइउणित्यत्रानुबद्धो णकारः स एवेहानुबध्यते तेनाण्ग्रहणेषु च पूर्वेण परेण वेति सन्देहः

---

१ अयं पाठः 'केऽण' इत्यत्र सन्देहवारणभाष्ये [ ।४९ पृष्ठे २२ पङ्क्तौ ] एव उपलभ्यते सर्वत्र ।

[ प्रश्नतदुत्तरभाष्यम् ]

**कुत एतत् ? ॥**

**'पराऽभावात्'॥ नहि के परेऽणः सन्ति॥**

**( प्रदीपः ) नहि के पर इति ।** नन्वल्पाउपानदुपानत्केति ह्रस्वे कर्तव्ये **'नहो ध'** इत्यस्याऽसिद्धत्वादस्ति के परतो हकारः,तथा 'गीष्के'त्यादौ रेफः। अत्राहुः-**न मु ने** इत्यत्र 'ने'ति योगविभागेन धत्वादीनामसिद्धत्वाभावः, तेषु च कृतेषु हकारादीनामभावः ॥

**( उद्द्योतः ) तथा गीष्केति ।** विसर्गस्याऽसिद्धत्वादिति भावः । **तेषु च कृतेष्विति ।** परत्वादिति भावः । योगविभागस्य भाष्याऽनारूढत्वान्नोकेत्यादिभाष्यात्**के परे** इति भाष्याच्च तेषामनभिधानं वक्तुं युक्तम् ।

[ उक्तहेतुनिरासभाष्यम् ]

**ननु चायमस्ति-'गोकां' 'नौके'ति ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात् 'केऽचः' इत्येव ब्रूयात् ।**

**अथवैतदपि न ब्रूयात् । अचो ह्येतद्भवति 'ह्रस्वो दीर्घ प्लुत' इति ॥**

**( उद्द्योतः ) अचो हीति ।** 'अचश्चे'ति परिभाषणादिति भावः ।

[ आक्षेपभाष्यम् ]

**अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः-'अणोऽप्रगृह्यस्यानुनासिकः' इति ॥**

[ समाधानभाष्यम् ]

**'असन्दिग्धं' । पूर्वेण, न परेण ॥**

**कुत एतत् ? ॥ 'पराऽभावात्' । न हि पदान्ताः परेऽणः सन्ति ॥**

**( प्रदीपः ) नहि पदान्ता इति ।** ननु च **भोभगो**-इत्यत्राऽण्ग्रहणस्य प्रयोजनं वक्ष्यते,-'वृक्षव्करोतीत्यत्र **हलि सर्वेषा**मिति लोपो मा भू'दिति। तत्कथमुच्यते-**'न हि पदान्ता'** इति ? । उच्यते-'अप्रगृह्यस्ये'ति पर्युदासेनाऽच एवानुनासिकेन भाव्यं न तु हल इत्युक्तं-'न हि पदान्ता' इति । कार्यभाज इत्यर्थः ॥

**( उद्द्योतः ) नहि पदान्ता इति ।** पदानामेवाऽनुनासिकोऽवसाने जायत इत्याश्रित्येदमुक्तम् । न तु तत्र पदान्ताधिकारोऽस्ति । **लोप इति ।** अस्या हलो विशेषणादिति भावः। **पर्युदासेनेति ।** क्रियमाणेऽप्यण्ग्रहणे इत्यर्थः। भाष्येपि न सत्त्वं निषिध्यते किं तु कार्यित्वमेवेत्याह-**कार्यभाज इति ।** एवंचानुनासिकप्राप्तियोग्याः पदान्ता न सन्तीत्यर्थः। वस्तुतोऽस्या अग्रे सिद्धान्त्युक्तित्वेन तदज्ञानेनैव पूर्वपक्षस्यौचित्येनैवं भाष्यव्याख्यानमनुचितं,पूर्वपक्षस्य सन्देहस्य चानुत्थानात्। तस्मादष्टमाध्यायस्थं भाष्यमेकदेश्युक्तिरित्येवोचितम् । व्याख्यातं च तत्रोपाध्यायैरित्थमेव ।

[ उक्तहेतुनिरासभाष्यम् ]

**ननु चायमस्ति-'कर्तृ हर्तृ' इति ॥**

**( उद्द्योतः )** भाष्ये-**कर्तृहर्त्रिति**,-एचाम्[2]प्युपलक्षणम् । अत एवाऽ**चोप्रगृह्यस्ये**त्युक्तम् । अन्यथा 'ऽकोऽप्रगृह्यस्ये'ति वदेत् ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमर्थकं स्यात्, 'अचोऽप्रगृह्यस्यानुनासिकः' इत्येव ब्रूयात् । अथवैतदपि न ब्रूयात्, अच एव हि प्रगृह्या भवन्ति ॥**

**( प्रदीपः ) अचोऽप्रगृह्यस्येति ।** हलो हि न भाव्यमित्यत्राण्ग्रहणसामर्थ्यात्पूर्वणेति स्थितम् ॥

तत्र वृक्षं वृश्चतीति क्विपि कृते वृक्षवृश्च-

---

**❀ राजलक्ष्मीः ❀**

१ निर्दिष्टस्थानिकत्वेनाच्परिभाषानुपस्थित्याऽत्र कण्ठ्यत्वेनाऽकारः स्यादित्याशयः । २ **रेफ इति ।** विसर्गादेरसिद्धत्वादित्याशयः। ३ **गोकेत्यु**पलक्षणं-चैत्रेका रैकेत्यादेः । **न ब्रूयादिति ।** 'के'इत्येव ब्रूयादित्यर्थः। ४ **परेऽण इत्यस्य** अनुनासिककार्यभाज इति शेषः । **तत्र**-भाष्ये । **क्विपीति ।** वृक्षवृडिति च तत्ररूपम्। ५ कैयटोक्तिं दूषयति- **वस्तुतइति ।** **अस्याः**-अप्रगृह्यस्येत्याद्युक्तयुक्तेः । ६ **अच एवेति ।** पर्युदासाचाऽजेवेत्याशयः ।

**❀ शब्दकौस्तुभः ❀**

प्राप्नोति । तस्मादसन्देहायेहानुबन्धान्तरमेव कुतो न कृतमिति चेत् , न । 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति परिभाषां ज्ञापयितुमनुबद्धस्यैव पुनरनुबन्धात्॥

१ **न सन्तीति ।** लोपप्राप्तियोग्यास्तुसन्त्येवेत्यवधेयम् । २ 'अचाम्' पा० ।

माचष्टे इति णिचि टिलोपे च कृते, वृक्षवयतेर्विचि [कृते] 'वृक्ष'विति भवति । क्विपि तु 'क्वौ लुप्तं' 'क्वौ विधिं प्रति च न स्थानिव'दिति निषेधात्संप्रसारण-प्रसङ्गो,'लोपो व्योर्वली'ति वलोपप्रसङ्गश्च । विचि तु स्थानिवद्भावाद्धल्निमित्तो वलोपो न भवति । 'हलि सर्वेषा'मित्यनेन तु लोपे क्रियमाणे 'पूर्वत्रासिद्धे न स्थानिव'दिति स्थानिवत्त्वनिषेधाद्वलोपः प्राप्तोऽश्ग्रहणा-नुवृत्त्या निवर्त्यते ।

(उद्द्योतः)**निषेधात्संप्रसारणप्रसङ्ग इति**। चिन्त्य-मिदम् । णौ परतस्तत्प्रकृतिभूतप्रातिपदिकस्य[2] टिलोपविधानेन वृश्चतेः स्थानित्वे मानाभावेन, वकारे **एकदेशविकृत**न्यायेन वृश्चतित्वस्य दुर्लभत्वात् । अर्धाधिकविकारेण प्रत्यभिज्ञा-ऽभावाच्च । अत एव 'राजकीय'मित्यादौ अल्लोपो न । वृश्च एव टिलोपस्थानित्वे तु प्रकृतिभावापत्तिः[3] । एतेन विचि **एकदेशविकृत**न्यायेन वृश्चतित्वात्षत्वापत्तिः। न च णिलो-पस्य स्थानिवत्त्वान्न षत्वम् , 'पूर्वत्रासिद्धीये तन्निषेधा'दिति परास्तम् । न च **व्रश्चे**ति सूत्रे पदाधिकारेण व्रश्चान्तत्व**मेक-देशविकृत**न्यायेन सुलभमिति वाच्यम् , **स्को**रिति सूत्रा-दन्ते ग्रहणमनुवर्त्य वैयधिकरण्येनैवान्वयाश्रयणेनाऽदोषात् । अत एवाऽन्तग्रहणं चरितार्थम्। अर्धाधिकविकाराच्च । एवं च वृक्षभृज्जो णिजन्तात्क्विपि 'वृक्षभ्' इत्यादौ षत्वं नेत्याहुः । **वलोपप्रसङ्गश्चेति** । इदमुपलक्षणं क्वौ विधौ स्थानिवत्त्व-निषेधादूठ्प्रसङ्गश्चेत्यपि बोध्यम् ।

[ सन्देहस्थलान्तरप्रदर्शनभाष्यम् ]

**अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः-'उरण्रपर'इति ॥**

[ समाधानभाष्यम् ]

**'असन्दिग्धं' । पूर्वेण, न परेण ॥ कुत एतत् ?॥ 'पराभावात्' ॥**

**न ह्युः स्थाने परेऽणः सन्ति ॥**

[ उक्तहेतुनिरासभाष्यम् ]

**ननु चायमस्ति-'कर्त्रर्थं' 'हर्त्रर्थ'मिति।**

[ प्रश्नभाष्यम् ]

**किं च स्याद्यद्यत्र रपरत्वं स्यात् ?॥**

[ अनिष्टापत्तिप्रदर्शनभाष्यम् ]

**द्वयो रेफयोः श्रवणं प्रसज्येत ॥**

[ उक्तश्रवणापत्तिनिरासभाष्यम् ]

**'हलो यमां यमि लोपः' इत्येवमेकस्या-ऽत्र लोपो भविष्यतीति ॥**

[ आपत्तिस्थापनभाष्यम् ]

**विभाषा स लोपः, विभाषा श्रवणं प्रसज्येत ॥**

[ आपत्तिनिरासभाष्यम् ]

**अयं तर्हि नित्यो लोपः 'रो री'ति ॥**

( उद्द्योतः ) भाष्ये-**रोरीति** । त्रिपाद्यां बहिरङ्गाऽ-सिद्धत्वाऽभावादिति भावः ॥

[ आपत्तिस्थापकभाष्यम् ]

**'पदान्तस्ये'त्येवं सः ॥**

[ आपत्तिनिरासभाष्यम् ]

**न शक्यः स 'पदान्तस्ये'त्येवं विज्ञा-तुम् । इह हि लोपो न स्यात्,-जर्गृधेर्लङ् अजर्घाः, पास्पर्द्धेः-अपास्पा इति ॥**

( प्रदीपः ) **अजर्घा इति** । गृधेर्यङ्लुकि रुगागमेऽभ्यासस्य कृते, लङि सिपि शब्लुकि गुण-रपरत्वसिब्लोपभष्भावजश्त्वरुत्वरलोपदीर्घत्वेषु रूपम् ॥

( उद्द्योतः ) भष्भावः,-एकाचो बशो भषि-त्यनेन । तत्र **ह्येकाच** इति, **झषन्तस्येति** च 'धातो'रित्य-पेक्षया व्यधिकरणषष्ठीति भावः । **रुत्वम्—'दश्चे'**त्यनेन॥

[ आपत्तिस्थापकभाष्यम् ]

**इह तर्हि-मातॄणां पितॄणामिति रप-रत्वं प्रसज्येत ॥**

[ आपत्तिनिरसनभाष्यम् ]

**आचार्यप्रवृत्तिर्ज्ञापयति-'नाऽत्र रपरत्वं भवती'ति यदयम्—'ऋत इद्धातो'रिति धातुग्रहणं करोति ॥ कथं कृत्वा ज्ञापकम् ?॥**

**धातुग्रहणस्यैतत्प्रयोजनम्-इह मा**

---

**॥ राजलक्ष्मीः ॥**

१ **निषेधादिति** । णिलोपस्य स्थानिवद्भावनिषेधादि-त्यर्थः । **संप्रसारणेति** । एकदेशविकृतन्यायेन ग्रहिज्येति-सम्प्रसारणेत्यर्थः। **स्थानिवद्भावात्**-णिलोपस्य स्थानिवद्भा-वादित्यर्थः। सम्प्रसारणन्तु कित्त्वाऽभावान्न प्राप्नोतीत्याशयः । २ **प्रातिपदिकस्य**-'वृक्षवृश्च्'इत्यस्य । **वृश्चतेः**-केव-लवृश्चतेः। **दुर्लभत्वादिति** । एवञ्च ग्रहिज्येति सम्प्रसा-रणाऽप्राप्तिरित्याशयः । **अर्द्धेति** । 'ऋश्च्' इत्यस्यापगमा-दित्यर्थः। **प्रत्यभिज्ञेति** । वृश्चतित्वप्रत्यभिज्ञेत्यर्थः। ३ **प्रकृ-तिभावेति** । 'प्रकृत्यैका'जिति प्रकृतिभावापत्तिरित्यर्थः ।

---

१ इदं भाष्यमेव न वार्त्तिकमिति आधुनिकाः। वार्त्तिक-मेवेदमिति तु **गौडाः** ।

**भूत्–मातॄणां पितॄणामिति । यदि चात्र रपरत्वं स्याद्धातुग्रहणमनर्थकं[2] स्यात् । रपरत्वे कृतेऽनन्त्यत्वादित्त्वं न भविष्यति। पश्यति त्वाचार्यो–'नात्र रपरत्वं भवती'ति ततो धातुग्रहणं करोति ॥**

[ आपत्तिस्थापनाय प्रश्नभाष्यम् ]

**इहापि तर्हि न प्राप्नोति[3]–'चिकीर्षति जिहीर्षती'ति ॥**

( प्रदीपः ) **इहापि तर्हीति** । धातुग्रहणेन हि लिङ्गेनाऽधातोरेव रपरत्वं निवर्तितम् । धातोस्तु रपरत्वे सत्यनन्त्यत्वान्न प्राप्नोतीति प्रश्नः ॥

( उद्द्योतः ) भाष्ये **'इहापि तर्हि'** इत्यस्य–'ऋत इत्त्व'मिति शेषः । ननु धातुग्रहणेन ऋकारस्य दीर्घो न रपर इति ज्ञापनादज्झनेति दीर्घस्याप्यरपरत्वात्कथमत्रेत्त्वाऽप्राप्तिरत आह–**धातुग्रहणेनेति** ॥

[ आपत्तिनिरासभाष्यम् ]

**मा भूदेवम् । 'उपधायाश्चे'त्येवं भविष्यति ॥**

[ एकदेशिन आपत्तिस्थापनभाष्यम् ]

**इहापि तर्हि प्राप्नोति–'मातॄणां पितॄणा'-मिति ॥ तस्मात्तत्र[4] धातुग्रहणं कर्त्तव्यम् ॥**

( प्रदीपः ) **इहापीति** । तस्माद्धातुग्रहणस्य सप्रयोजनत्वान्न[1] ज्ञापकत्वमित्यर्थः ॥

( उद्द्योतः ) भाष्ये–**तस्मात्तत्रेति** । न च **इह किंचित्रपो इतीति** न्यायेन ज्ञापकत्वमप्यस्त्विति वाच्यम्, गृइत्यादेरनुकरणे **प्रकृतिवदनुकरण**मित्यस्याभावे**'ग्रोयङी'**त्यादावित्त्वाभावार्थमिहापि तदावश्यकत्वात् । गत्यन्तराभावे एव तन्न्यायेन ज्ञापकत्वाश्रयणाच्च । तदाह–**तस्मादिति** । एवं च रपरत्वेऽपि मातॄणामित्यादौ **उपधायाश्चे**तीत्त्ववारणेन धातुग्रहणस्य चारितार्थ्येन रपरत्वनिवृत्तौ न ज्ञापकतेत्यर्थः॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**एवं तर्हि–सामर्थ्यात्पूर्वेण, न परेण । यदि परेण स्यादण्ग्रहणमनर्थकं स्यात् 'उरन्नपरः'इत्येव ब्रूयात् ॥**

( द्द्योतः ) भाष्ये–**सामर्थ्यात्पूर्वेणेति** । न च 'गम्ले'त्यादौ यणादेशे लपरत्वार्थमेव परेणाऽण्ग्रहणं स्यादिति सामर्थ्यं कथम् ? । ऋकारांशे हल्रूपाऽणि **रो रीति** प्रवृत्त्या फलाऽभावेन तत्साहचर्याल्लृकारांशेऽपि हल्रूपाऽणि अप्रवृत्तिरित्याशयात् । रलयोः समानश्रुतित्वेन तत्रापि **रोरी**त्यस्य प्रवृत्तेरित्य**न्ये** । लृकारे यण्घटितप्रयोगानभिधानमेवैतद्भाष्यप्रामाण्यादित्य**न्ये** ॥

[ सन्देहान्तरप्रदर्शनभाष्यम् ]

**अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः–'अणुदित्सवर्णस्य चाप्रत्ययः' इति ॥**

[ समाधानभाष्यम् ]

**'असन्दिग्धं'। परेण, न पूर्वेण ॥**

**कुत एतत् ? ॥**

[ सिद्धान्तवार्तिकम् ]

*॥ * ॥ सवर्णेऽण्, तपरं[5] ह्युर्ऋत् ॥ * ॥*

[ व्याख्यानभाष्यम् ]

**यदयम् 'उर्ऋत्' इत्यृकारे तपरकरणं करोति, तज्ज्ञापयत्याचार्यः–'परेण, न पूर्वेणे'ति ॥**

( प्रदीपः ) **सवर्णे इति** । 'अचीकृत'दिति ऋकारस्य[6] ऋकार एव यथा स्यात्, ॠकारो मा भूदित्येवमर्थं तपरत्वं क्रियते । यदि च पूर्वेण णकारेणाऽण्ग्रहणं स्यादकारोऽनण्त्वाद्भिन्नकालस्य ग्राहक एव न भवतीति ऋकारो न चै[2] स्थानी, नाप्यादेशः प्रसजतीति, किं तपरत्वेन ?। कृतं च तज्ज्ञापकं परेणाऽण्ग्रहणस्य ॥

( उद्द्योतः ) भाष्ये–**सवर्णेण्तपरमिति। यदुर्ऋत्**सूत्रे तपरं करोति तज्ज्ञापकं सवर्णेण्ग्रहणं परणकारकमिति वार्तिकाक्षरार्थः । **इत्येवमर्थमिति** । ह्रस्वो यथा स्याद्दीर्घो माभूदित्येवमर्थमित्यर्थः । **ऋकार इति** । उद्देश्यसमर्पक इत्यर्थः । न च भाव्यमानत्वेन सवर्णग्रहणाऽप्रसक्तेस्तद्वैयर्थ्यम्, तपरत्वाऽभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थत्वेनाऽपूर्वबोध्यत्वाऽभावेन चाऽविधेयत्वात् । कृते तु तपरत्वे भाव्यमानताऽपीत्यन्यत् ॥

❀ राजलक्ष्मीः ❀

१ दीर्घस्याऽप्यण्त्वात् 'ऋर्'इति रपरत्वं प्रसज्येतेत्याशयः । २ **अनर्थकमिति** । रपरत्वेन ऋदन्तत्वाभावादित्याशयः । **इत्वम्**–ऋकारस्येत्वम् । ३ **न प्राप्नोति** । 'ऋत इद्धातो'रिति न प्राप्नोति । दीर्घस्य रपरत्वेऽनन्त्यत्वादित्याशयः । ४ **तत्र**–'ऋत इद्धातो'रित्यत्र । **धातुग्रहणम्**–उत्तरार्थं धातुग्रहणम् ।

५ सूत्रे सवर्णेण्ग्रहणं परेण, **हि–यतः** उर्ऋदित्यत्र तपरकरणं क्रियते इति वार्त्तिकार्थः । ६ **ऋकारस्य**–उपधाभूतस्य ऋकारस्य । **माभूदिति** । सावर्ण्यादिति भावः । **तपरत्वं**–विधेये सिद्धान्ते तपरत्वं क्रियते इत्यर्थः ।

१ 'प्रयोजनवत्त्वात्' पा० ।

२ 'नैव' पा० ।

[ इण्ग्रहणेषुसन्देहप्रदर्शनभाष्यम् ]

**इणग्रहणेषु तर्हि सन्देहः ॥**

[ समाधानभाष्यम् ]

**'असन्दिग्धम्'। परेण, न पूर्वेण ॥**

**कुत एतत्? ॥**

[ सिद्धान्तिनः श्लोकवार्तिकखण्डम् ]

*॥ * ॥ [1]य्वोरन्यत्र परेणेण्स्यात् ॥ * ॥*

[ व्याख्यानभाष्यम् ]

**यत्रेच्छति पूर्वेण, संमृद्य ग्रहणं तत्र करोति–'य्वो'रिति। तच्च गुरु भवति ॥**

**कथं कृत्वा ज्ञापकम् ?॥**

**तत्र विभक्तिनिर्देशे संमृद्यग्रहणे चार्द्धचतस्रो मात्राः, प्रत्याहारग्रहणे पुनस्तिस्रो मात्राः, सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः 'परेण न पूर्वेणे'ति ॥**

**( प्रदीपः ) अर्धचतस्र इति।** अर्धेन चतस्रः। चतुर्थी हि मात्रा तत्र[2]ऽर्द्धमिति ॥

**( उद्द्योतः )** भाष्ये–**संमृद्येति**। आदेशेन तौ निवर्त्येत्यर्थः। 'अर्धचतुर्था'इति वक्तुमुचितमत आह–**अर्धेनेति। भाष्ये–तिस्रो मात्रा इति।** 'इणः' इति पदच्छेदाभिप्रायेणेदम्। तदुक्तम्–**विभक्तिनिर्देशे इति।** संहितायां तु सार्धमात्राद्वयमेवेति बोध्यम् ॥

[ आक्षेपभाष्यम् ]

**किं [3]पुनर्वर्णोत्सत्ताविवाऽयं णकारो द्विरनुबध्यते ?॥**

**( प्रदीपः ) किं पुनरिति। वर्णोत्सत्तिः**-वर्णोच्छेदः।वर्णान्तरमनुबन्धः किं न क्रियते इत्यर्थः॥

**( उद्द्योतः )** अणादिग्रहणेषूक्तैर्महद्भिर्यत्नैः सन्देहपरिहारे प्रतिपत्तिगौरवमिति लाघवाय वर्णान्तरमेव किं नानुबध्यत इत्याशयेनाह–भाष्ये–**किंपुनरिति** ॥

[ समाधानवार्तिकम् ]

*॥*॥ व्या[4]ख्यानाच्च द्विरुक्तितः ॥*॥*

[ व्याख्यानभाष्यम् ]

**एतज्ज्ञापयत्याचार्यो–भवत्येषा परिभाषा–'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति। 'अणुदित्सवर्णस्ये'त्येतत्परिहाय पूर्वेणाऽण्ग्रहणम्, परेणे'ण्ग्रहण'मिति व्याख्यास्यामः ॥ ६ ॥**

**( प्रदीपः ) व्याख्यानत इति।** न्याया[5]दागमाद्वा शब्दशक्तिरनुसरणीयेत्यर्थः ॥ ६ ॥

**( उद्द्योतः )** एतत्–वक्ष्यमाणम्। **आचार्यः**—शिवः। ननु ज्ञापितेपि प्रवर्तकतया निवर्त्तकतया वा नास्य चरितार्थ्यमत आह–**न्यायादिति**। उक्तो न्यायः। **आगमः**–उपदेश[6]परम्परा। तत्सिद्ध एवायमर्थो णकारानुबन्धनरूपस्वव्यवहारेण बोध्यत इत्यर्थः। एवंच व्याख्यानेनैव–पूर्वणकारेण केचित्, केचित्परणकारेणेति निर्णये ज्ञापकानुसरणक्लेशो वृथेति सूचितम् ॥ [ लण् ] ॥

—***—

**ञमङणनम् ॥७॥ झभञ् ॥८॥**

[ आक्षेपभाष्यम् ]

**किमर्थमिमौ मुखनासिकावचनावु[7]भौवनुबध्येते, न ञकार एवानुबध्येत ?॥**

[ प्रतिप्रश्नतत्समाधानभाष्यम् ]

**कथं–यानि मकारेण ग्रहणानि—'हलो यमां यमि लोपः' इति ? ॥**

---

**॥ राजलक्ष्मीः ॥**

1 **य्वो**रिति पञ्चम्यन्तम्। २ **अर्द्धमितीति।** समांशवाचिनोऽर्द्धशब्दस्य नित्यनपुंसकतयाऽर्द्धमिति क्लीबता। अर्द्धेति पाठस्त्वशुद्ध इति **श्रीगुरुचरणाः**। ३ यद्यपि दोषाः खल्वपि कथञ्चित्समाहिताः परं सन्देहप्रयोजको णकारः–कुतोऽनुबध्यते इत्याशङ्कते–**किं पुनरिति**।

४ **व्याख्यानाच्च**–व्याख्यानाच्च निर्णेयमिति णकारद्विरुक्तितो ज्ञायते इत्यर्थः। ५ **न्यायः**–ज्ञापकसामर्थ्यान्यतररूपो न्यायः। ६ **उपदेशेति। 'परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाऽण्ग्रहा मताः। ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥'** इत्येवं वृद्धोपदेशपरम्परेत्यर्थः।

७ **उभौ**–मकारञकारौ। ८ ञमङणनझभञित्येवमित्यर्थः।

---

**॥ शब्दकौस्तुभः ॥**

**ञमङणनम्। झभञ्।** अत्र मकारानुबन्धो भाष्ये प्रत्याख्यातः। स हि प्रत्याहारत्रये उपयुज्यते। अम् यम् ङमिति। तच्च त्रयं ञकारेणैव निर्वहति। तथाहि–'पुमः खय्यञ्परे' इत्येवास्तु। न च झकारमकारपरः खयस्ति येनातिप्रसङ्गः स्यात्। तथा 'हलो यञां यञि लोप' इत्येव

---

1 अर्द्धेति मुद्रितः पाठस्त्वशुद्ध एव। लिखितपुस्तकाऽननुगुणश्च।

[ आक्षेपसमाधानभाष्यम् ]

**अस्तु ञकारेण—'हलो यमां यमि लोपः' इति ॥**

[ समाधानाऽसङ्गतिप्रदर्शनभाष्यम् ]

**नैवं शक्यम् । झकारभकारपरयोरपि झकारभकारयोर्लोपः प्रसज्येत ॥**

[ समाधानस्थापकभाष्यम् ]

**न झकारभकारौ झकारभकारयोःस्तः॥**

( उद्द्योतः ) ञमङणनम् झभञ् ॥ भाष्ये–**न झकारेत्यादि** । अव्यवहितहल्मात्रानुकरणं तु सूत्रादन्यत्र नास्तीति **हयवरट्**सूत्रे प्रपञ्चितम् ॥

[ आक्षेपभाष्यम् ]

**कथं–'पुमः खय्यम्परे' इति ?॥**

[ समाधानभाष्यम् ]

**एतदप्यस्तु ञकारेण—'पुमः खय्यञ्परे' इति ॥**

[ समाधानबाधकभाष्यम् ]

**नैवं शक्यम् । झकारभकारपरेऽपि हि खयि रुः प्रसज्येत ॥**

[ समाधानसाधकभाष्यम् ]

**न झकारभकारपरः खयस्ति ॥**

[ समाधानदूषणाय आक्षेपभाष्यम् ]

**कथं–'ङमो ह्रस्वादचि ङमुण्नित्य'मिति ?॥**

[ इष्टापत्तिभाष्यम् ]

**एतदप्यस्तु ञकारेण–'ङञो ह्रस्वादचि ङञुण्नित्य'मिति ॥**

---

❀ **शब्दकौस्तुभः** ❀

पाठ्यम् । न च झकारभकारौ झकारभकारपरौ स्तः । हल उत्तरयोस्तयोः सम्भवे तु 'झरो झरी'ति लोपेन भाव्यमेव । तथा 'ङञो ह्रस्वादचि ङञुण्नित्य'मिति पाठ्यम् । न च झकारभकारौ पदान्तौ स्तः । उज्झेर्लभेश्च क्विपि तौ स्त एवेति चेन्न, उज्झेर्दोपधतया संयोगान्तलोपे सत्युदिति रूपाभ्युपगमात् । लभेस्तु जश्त्वविधानात् । नन्वेवमप्यागमिनस्त्रयो ङणनेभ्यः परे अचः, आगमास्तु पञ्चेति सङ्ख्यातानुदेशो न स्यादिति चेन्न, 'यथासङ्ख्य'मित्यत्र हि विध्यर्थप्रमितिवेलायां निर्दिश्यमानगतसङ्ख्यासाम्यमाश्रीयते, न तु लक्ष्यसंस्कारवेलायां प्रयोगगतम् । तस्मान्मास्तु मकारोनुबन्ध इति स्थितम् ।

**धढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ।** इति माहेश्वराण्यक्षरसमाम्नायसूत्राणि । अत्रायं सङ्ग्रहः–**'एकस्मान्ङञणवटा द्वाभ्यां षश्चिभ्य एव कणमाः स्युः । ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः ॥'** इति । अस्यार्थः–ङञणवटा एकस्मात्परे ग्राह्याः स्युः । तथाहि **ङकार** एकारादेव परो ग्राह्यः । 'एङि पररूप'मिति यथा । ननु 'षिद्भिदादिभ्योऽङ्' 'अस्यतिवक्तिख्यातिभ्योऽ'ङित्यकारेण ग्रहणमस्त्विति चेन्न; 'आदिरन्त्येने'त्यत्राणुदित्सवर्णस्य चेत्यतोऽप्रत्यय इत्यनुवृत्तेः । अत एव 'रोः सुपी'ति न प्रत्याहारग्रहणम् । 'सुपि चे'स्यत्र तु 'अप्रत्यय' इति प्रतिषेधो नास्ति, यञादाविति विशेषणात् । उत्तरत्र च 'बहुवचने झली'ति विशेषणात् । 'सुप्तिङन्तं पद'मित्यत्र तिङ्साहचर्यात्, 'शास इदङ्हलो'रित्यत्र तु अङ्ग्रहणसामर्थ्यादपि प्रत्याहारग्रहणं न भवति । अङादौ हलादौ चेति हि व्याख्याने अङ्हलोरिति व्यर्थमेव स्यात् । द्विविधा एव हि क्ङितः प्रत्ययाः –अङादयो हलादयश्च । 'व्यतिशासै' इत्यत्र तु क्ङित्त्वमेव नास्ति । अटा सहैकादेशस्य स्थानिवद्भावेनाऽङादित्वाच्च । 'ऋदृशोऽङी'त्यपि न प्रत्याहारः । ऋकारान्तेषु 'ऋच्छत्यृता'मिति गुणविधानाज्ज्ञापकात् । सनि च 'इङश्चे'ति न प्रत्याहारः, 'इको झ'लिति कित्त्वविधानात् । 'अज्झनगमां सनी'ति दीर्घविधानाच्च । इङन्तानां सनि गम्यादेशे हि सति उदाहृतसूत्रद्वयं निर्विषयं स्यात् । 'परिमाणाख्यायां सर्वेभ्यः' 'इङश्चे'त्यपि न प्रत्याहारः । वैयर्थ्यप्रसङ्गात् । तथाहि–इकारान्तेभ्य एरचा भाव्यम्, उकारान्तेभ्य 'ऋदोर'बित्यपा । ऌकारान्तास्सन्त्येव न । एजन्तानाप्यनैमित्तिकेनाऽऽत्वेन प्रत्ययोत्पत्तेः प्रागेव भाव्यम् । अतः प्रत्ययोत्पत्तिवेलायामेजन्ता न सन्त्येव । ऋदन्ताः परमवशिष्यन्ते । तत्र 'उ'रित्येव लाघवाद्ब्रूयात् । वस्तुतस्तु सामान्यलक्षणेनैव ऋदन्तेषु घञः सिद्धत्वात्सूत्रमेवेदं न कुर्यात् । अथोच्येत–'इङश्चे'त्यारम्भसामर्थ्यादिवर्णोवर्णान्तेष्वेवाजब्भ्यां सह वैकल्पिको घञ् समाविशत्विति । तदपि न । एवं हि सति अजपोर्विधावेव वाग्रहणं कुर्यात् । 'क्रीङ्जीनां णा'विति न प्रत्याहारः, क्रीज्योः पृथग्ग्रहणवैयर्थ्यापत्तेः । न चेकारान्तानां मध्ये एतयोरेवेति नियमार्थं पृथग्ग्रहणमिति वाच्यम्, एवं हीक इत्येव ब्रूयात् । एङन्तानां सामान्यलक्षणेनैवात्वस्य सिद्धत्वात् । 'इङ्धार्यो'रित्यपि न प्रत्याहारः, धारिणा साहचर्यात् । तस्मात्सिद्धं **ङकार एकस्मादेवे**ति ॥ तथा **ञकारो**प्येकस्मादेव–'अतो दीर्घो यञी'ति । तथा अइउणित्येष **णकारो**ऽप्ये**कस्मादेव** । अणिति यथा । अथेणः षीध्वमित्यादाविण्प्रत्याहारोऽनेन कुतो नेति चेन्न, 'अचि श्नुधातुभ्रुवां य्वो'रित्यत्रेकारोकारयोः स्वरूपेण निर्देशात् । अन्यथा हि संहितायां मात्रालाघवात्पदच्छेदेऽप्यर्द्धमात्रालाघवादिण इत्येव ब्रूयात् । व्याख्यानाच्च पूर्वेण न तु परेण ग्रहीष्यते । व्याख्यानं च सिद्धान्तेपि शरणम् । 'य्वो'रित्यपि हि निर्देशे किं ह्रस्वयोर्ग्रहणमुत दीर्घ-

[ इष्टापत्तिबाधकभाष्यम् ]

**नैवं शक्यम् । झकारभकारयोरपि हि पदान्तयोर्झकारभकारावागमौ[1] स्याताम् ॥**

( उद्द्योतः ) **जकारभकारयोरपि हि पदान्तयोरिति ।** पदान्तयोस्तयोः सतोस्ततः परस्याऽजादेः पदस्य झभौ स्यातामित्यर्थः ॥

[ इष्टापत्तिसाधकभाष्यम् ]

**न झकारभकारौ पदान्तौ स्तः ॥**

[ प्रदीपः ] **झभञ् ॥ न झकारेति ।** झकारस्य भकारस्य च पदान्तस्य जश्त्वेन भाव्यमिति तस्याऽभावः[2] । उज्झेर्झकारः **संयोगान्तस्ये**ति लुप्यते इति तस्याऽप्यभावः ॥

[ एकदेशिन इष्टापत्तिबाधकभाष्यम् ]

**एवमपि पञ्चागमास्त्रय[3] आगमिनो, वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति ॥**

( उद्द्योतः ) **एवमपि पञ्चागमा इति ।** लक्ष्यसंस्कारकालिकं सङ्ख्यासाम्यं **यथासङ्ख्य**सूत्रप्रवृत्तौ निमित्तमिति मन्यते ॥

[ इष्टापत्तिसाधकैकदेशिभाष्यम् ]

**सन्तु[4] तावद्येषामागमानामागमिनः सन्ति । झकारभकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यतः ॥**

( प्रदीपः ) **सन्तु तावदिति ।** उद्देशानुदेशाभ्यां सङ्ख्यासाम्याद्यथासङ्ख्ये लब्धे, प्रयोगे यस्यागमस्यागमी विद्यते स प्रवर्तते नान्य इत्यर्थः॥

( उद्द्योतः ) सिद्धान्ती तु प्रतिपत्ति[5]कालिकमेव सङ्ख्यासाम्यं तत्प्रवृत्तौ निमित्तमित्याह-**सन्त्विति ।** येषामागमानामागमिनः सन्ति ते भवन्तु इत्यर्थः । **अनुदेशः**-प्रतिनिर्देशः । भगवता तु स्पष्टप्रतिपत्तयेऽनुबन्धद्वयमदर्शि ॥

[ अक्षरशब्दनिर्वचने आक्षेपभाष्यम् ]

**अथ किमिदम्[6]क्षरमिति ? ॥**

( प्रदीपः ) **किमिदमिति ।** अक्षरसमाम्नाय इति व्यवहाराद्वा इमां स्वरशोऽक्षरश इति चोक्तत्वात्प्रश्नः ॥

( उद्द्योतः ) **इति व्यवहारादिति ।** अइउण्सूत्रे उपस्थितिगतं सङ्ख्यासाम्यमादाय सूत्रं प्रवर्त्तते, उपस्थितौ च पञ्चागमाः पञ्चागमिन इति समसङ्ख्यताऽस्त्येव, लक्ष्ये सङ्ख्यासाम्याऽभाव इति त्वन्यदित्याशयः ।

**※ राजलक्ष्मीः ※**

१ **आगमौ**-झुड्भुडित्यागमौ । २ **तस्याऽभावः**-मकारस्याऽभावः । **तस्य भाव** इति पाठे-प्रत्याख्यातुरित्यर्थः । ३ **त्रय इति ।** झभयोः पदान्तयोरभावादित्याशयः । **सङ्ख्यातानुदेशः**-सङ्ख्याक्रमेण सम्बन्धः । ४ **सन्त्विति ।** ५ **प्रतिपत्तिः**-शाब्दबोधः । ६ **किमिदमिति ।** अक्षरशब्दे प्रवृत्तिनिमित्तभूतं वस्तु किमस्तीत्यर्थः ।

**※ शब्दकौस्तुभः ※**

योरुत यकारवकारयोरिति सन्देहः स्यादेव । एवं चैच इग्घ्रस्वादेशइति सूत्रे इणित्येव प्रतिपत्तिलाघवार्थं वक्तव्ये इग्ग्रहणमपीह लिङ्गम् । इण्ग्रहे हि तत्र यथासङ्ख्यप्राप्तिरेव नेति न तत्परिहाराय यतितव्यमिति दिक् । एवं **वकारो**प्येकस्मादेव-'नश्छव्यप्रशा'निति । 'एचोयवायाव' इति सूत्रे अविति न प्रत्याहारः, अयादिसाहचर्यात् । एवं **टकारो**प्येकस्मात्-'अट्कुप्वा'ङिति । **द्वाभ्यां षः ।** 'एकाचो बशो भष् झषन्तस्य स्ध्वो'रिति यथा । **ककारस्त्रिभ्यः**-'अकः सवर्णे' । 'इको यण्' ! 'इसुसुक्तान्तात्क' इति यथा । 'ल'णि'त्यत्रत्यो **णकारो**पि त्रिभ्यः । 'अणुदित्सवर्णस्ये'त्येक[1]एवाऽण् , 'इणः षीध्व'मित्यादयः सर्वे इणः, 'इको य'णित्यादौ यण् च । तत्र यण् तावत्पूर्वेण न सम्भवत्येव । इण्तु सम्भवन्नपि ज्ञापकात्त्यक्तः । अणस्तु उभाभ्यां ग्रहणे स्थिते क पूर्वेण क वा परेणेति विवक्षायां ग्रहणकशास्त्रे परेणैवेति सिद्धान्तः । उक्तं हि 'व्याख्यानतो विशेषप्रतिपत्ति'रिति । न हि 'परेश्च घाङ्कयो'रित्यादौ व्याख्यानादन्यन्नियामकमस्ति । किं च-अण्ग्रहणानि तावत्षट् । 'उरण् रपरः' 'अणुदित्सवर्णस्य' 'ढ्लोपे पूर्वस्य दीर्घोऽणः' 'केऽणः' 'अणोऽप्रगृह्यस्ये'ति । तत्र 'उरण् रपर' इति तावत्पूर्वेण । 'ऋत इद्धातो'रिति धातुग्रहणाज्ज्ञापकात् । तद्धि 'मातॄणा'मित्यादिव्यावृत्त्यर्थं क्रियते । परेण च ग्रहणे 'नामी'ति दीर्घस्यापि रपरत्वापत्त्या व्यावर्त्याप्रसिद्धिः । ननु चिकीर्षतीत्यत्राज्झनगमामिति दीर्घे रपरत्वे च सति उपधायाश्चेतीत्वमेषितव्यम् । तद्वन्मातॄणामित्यत्रापि प्रसङ्गे तद्व्यावर्त्तकतयोत्तरार्थं धातुग्रहणं भविष्यतीति चेन्न, एवं हि सत्युत्तरत्रैव कुर्यात् । इह करणं ज्ञापकमेव । तथा च वक्ष्यति-'नुड्वाच्य उत्तरार्थं तु इह किञ्चित्त्रपो इती'ति । किञ्चाऽण्ग्रहणसामर्थ्यादपि पूर्वेणैवाऽयम् । यदि हि परेण स्यादुरजित्यज्ग्रहणमेव कुर्यात् । कृतिः कृतं प्रकृतं नॄःपाहि मातॄणामित्यादावाद्युदात्तानुदात्तस्वरितानुनासिकदीर्घाणां रपरतायाः परेणाण्ग्रहेणोपपादयितव्यायास्तावतापि लाभात् । कर्त्ता कारक इत्यादौ गुणवृद्धिप्रसङ्गे एचामवर्णस्य चाऽविशेषा-

१ इकोऽचीति सूत्रस्थं श्लोकवार्त्तिकमेतत् ।

ऽयं व्यवहारो भाष्ये । **प्रश्न इति** तद्धटकीभूताक्षरपदार्थावगमायेति भावः ॥

[ सिद्धान्तसमाधानश्लोकवार्तिकम् ]

॥*॥ *'अक्षरं न क्षरं विद्यात्'* ॥*॥

[ व्याख्याभाष्यम् ]

**न क्षीयते न क्षरतीति वाऽक्षरम् ॥**

**( प्रदीपः ) अक्षरं न क्षरमिति,**–क्रियाशब्दोऽयं नित्यस्यार्थस्य वाचक इति दर्शयति । अत्र क्षियः क्षरतेर्वा विनाशार्थस्य नञ्पूर्वस्य रूपम् । तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम् । व्यवहारनित्यतया तु वर्णपदवाक्यस्फोटानां जातिस्फोटस्य वा ॥

**( उद्द्योतः )** भाष्ये-**अक्षरमित्यस्य**–न क्षरमिति विग्रहप्रदर्शनम् । **तच्चे. .** । अक्षरं चेत्यर्थः । ब्रह्मतत्त्वस्यैव तत्त्वे हेतुगर्भविशेषणमाह-**परमार्थतो नित्यमिति ।** यतस्तत्प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वरूपनित्यत्ववदित्यर्थः । नन्वेवं प्रकृते किमायातमत आह-**व्यवहारनित्यतया चेति ।** सर्वेषां शब्दानामाकाशादिवत् सृष्ट्यादावुत्पत्तिः प्रलये च नाश इत्यर्थः । एवंच व्यवहारनित्यतयाऽक्षरब्रह्मसादृश्यवतां तेषां पदादिरूपाणामयं वर्णसमाम्नायः इति नित्योऽक्षरपदार्थ इत्याशयः । **तच्च**–अक्षरञ्च । 'ब्रह्मतत्त्व'मित्यस्य 'बोध्य'मिति शेषः । २ **जातिस्फोटस्येति ।**

### ❀ राजलक्ष्मीः ❀

१ **रूपमिति ।** डरच्प्रत्यये तद्रूपसिद्धिरित्याशयः । तथा चानश्वरत्वं तत्प्रवृत्तिनिमित्तं दर्शितमित्यविनाशी तदर्थ औपचारिकोऽक्षरशब्दप्रयोगस्तेष्वि'तिशेषः ।

### ❀ शब्दकौस्तुभः ❀

द्रपरत्वस्य विकल्पेन प्रसङ्ग इत्यप्यज्ग्रहणेन सिध्यत्येव । स्यादेतत्–'कर्त्रर्थ'मित्यत्र इको यणि रपरत्वे रेफद्वयश्रवणार्थमण्ग्रहणं स्यात् । नह्येतदज्ग्रहणेन सिध्यति । 'हलो यमा'मिति लोपस्तु वैकल्पिकः । 'झयो होन्यतरस्या' मित्यतोऽन्यतरस्यांग्रहणानुवृत्तेः । अत्र च ज्ञापकं ग्रहणकशास्त्रेऽण्ग्रहणम् । तद्धि सय्यँन्ता सव्वँत्सरः यँल्लोकमित्यादौ परसवर्णस्य सानुनासिकस्य यर्ग्रहणेन ग्रहणादनचिचेति द्वित्वे कृते पक्षे यवलानां त्रिकस्य श्रवणार्थं क्रियते । 'हलो यमा'मित्यस्य नित्यत्वे तु व्यर्थमेव तत्स्यात् । यद्यपि गुणानामभेदकत्वेनैव सानुनासिकयवलानां द्वित्वसिद्धेर्ग्रहणकशास्त्रेऽज्ग्रहणमेवोचितं न त्वण्ग्रहणं, तथापि 'गुणा भेदका' इत्यपि पक्षं ज्ञापयितुमण्ग्रहणम् । भेदकाऽभेदकपक्षयोश्च जातिव्यक्तिपक्षयोरिव लक्ष्यानुरोधाद्व्यवस्था । अत एव चतसर्याद्युदात्तनिपातनमित्यादि सङ्गच्छते । अत एव चाष्टन आ विभक्तावित्यादाविदमस्त्यदाद्यत्वे चानुनासिको नेति वक्ष्यामः । यत्तु विकल्पानुवृत्तौ ज्ञापकान्तरवर्णनम्–**'अनुवर्त्तते विभाषा शरोचि यद्वारयत्ययं द्वित्वं । नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्या'**दिति । तत्तु भाष्ये दूषितम् । तथाहि–लोपस्य नित्यत्वेऽचोरहाभ्यामिति द्वित्वेनारम्भसामर्थ्यात्तद्बाधः । द्विविधा एव हि यरः–यमो झरश्चेति । तत्र हलोयमामिति झरोझरीति च लोपे कृते द्वित्वं वृथा स्यात् । किं तर्हि तयोर्योगयोरुदाहरणमिति चेत्; यत्रान्तरेण द्वित्वं व्यञ्जनत्रयं लभ्यते–यथा आदित्यो देवताऽस्य आदित्यः । प्रत्तम् । अवत्तमिति । एवं स्थिते चतुर्ष्वित्यत्रापि यदि द्वित्वं स्यात्तर्हि लोपो न स्यादेव । ततश्च सार्थकः 'शरोचो'ति निषेधः कथं विभाषानुवृत्तिं ज्ञापयेदित्यास्तां तावत् । सर्वथापि विकल्पानुवृत्तेः स्थितत्वात्पाक्षिकरेफद्वयश्रवणार्थमण्ग्रहणमस्त्विति । अत्रोच्यते–'कर्त्रर्थ'मित्यादौ सत्यपि रपरत्वे रेफद्वयश्रवणं दुर्लभम् । 'रो री'ति लोपात् । न च तत्र 'पदान्तस्ये'ति व्याख्यातुं युक्तं, जर्गृधेर्लङ्–अजर्घाः । पास्पर्द्धेर्लङ्–अपास्पा इत्यादेरसिद्धिप्रसङ्गात् । न चाऽण्ग्रहणसामर्थ्यात्तद्बाधः । पूर्वेणापि ग्रहणेऽबाधेनैवोपपत्तेरिति दिक् । तस्माद्धातुग्रहणसामर्थ्यादण्ग्रहणसामर्थ्याद्वोरण् रपर इति पूर्वेण ग्रहणमिति स्थितम् । वस्तुतस्तु धातुग्रहणमेव ज्ञापकम् । अण्ग्रहणस्य 'लाकृति'रित्यादौ लपरता फलमित्यपि वक्तुं शक्यत्वात् । 'अणुदित्सवर्णस्य चाप्रत्यय' इति तु परेणैव । 'उदॄ'दिति लिङ्गात् । तत्र हि 'कॄत संशब्दने'इत्यस्माच्चुरादिण्यन्ताल्लुङि चङ्यचीकृतदित्यत्र ऋकारस्य दीर्घस्यापि स्थाने ह्रस्व एव यथा स्यादित्येवमर्थं तपरकरणं कृतं, ग्रहणकशास्त्रे पूर्वेण ग्रहणे तु दीर्घस्य ॠकारस्य न स्थानित्वं न वादेशत्वं प्रसक्तमिति व्यर्थं तपरत्वं स्यात् । ननु सत्यपि परेण ग्रहणे 'उदॄ'दित्यत्र तपरत्वं वृथैव, भाव्यमानेन सवर्णग्रहणाऽप्रसक्तेरिति चेन्न; वक्ष्यति हि तत्र वृत्तिकारः–'न चायम्भाव्यमानोऽण् किंतु आदेशान्तरनिवृत्त्यर्थं स्वरूपेणाभ्यनुज्ञायते'इति । कृते तु तपरत्वे तद्बलादेव दीर्घस्थाने भाव्यमानतापि लभ्यत इत्यन्यदेतत् । तस्माद्ग्रहणकशास्त्रेऽण् परेणेति स्थितम् । तत्फलं तूरण् रपर इत्यत्र 'उ'रित्यनेन ॠकारस्य ग्रहणादॄतइद्धातोरुदोष्ठ्यपूर्वस्येत्यादौ रपरत्वसिद्धिः । 'ढ्रलोपे पूर्वस्य दीर्घोण' इत्यत्रापि हलामणामसम्भवादेचान्तु विशेषाभावादनर्थकन्तवाऽण्ग्रहणं स्यात् । ततश्चाऽचश्चेत्येव सिद्धमित्यण्ग्रहणसामर्थ्यात्पूर्वेण । ननु वृहूद्यमने अस्मात्तृचि ऊदित्वादिड्भावे गुणे ढत्वधत्वष्टुत्वढलोपेषु रेफस्य दीर्घे स्थानसाम्यादृकारे ढलोपस्यासिद्धत्वादुपधायाश्चेतीत्वे पूर्ववत्तृणे वर्द्धेति यथा स्यादिति, परेण हि ग्रहणे हल इत्यत्राप्यस्यैवाण्ग्रहणस्यानुवृत्तेरुः संप्रसारणे कृते दीर्घः स्यात् । तथा दृढादिषु वृढशब्दस्य पाठोपि ज्ञापको बोध्यः । 'वृहू उद्यमने' अस्मान्निष्ठायां ढत्वधत्वष्टुत्वढलोपेषु कृतेषु वृढ इति रूपम् । दन्त्योष्ठ्यादिश्चायम् । 'उद्वृह-

शास्त्रप्रवृत्तिद्वारा बोधक इत्यक्षरसमाम्नाय इति चतुर्दशसूत्रीविषयव्यवहारोपपत्तिः । एवं च शब्दे औपचारिकोऽक्षरपदप्रयोग इति भावः । न्यायादिनयेऽप्याह—**जातिस्फोटस्य वेति** ॥

[ सिद्धान्तिसमाधानान्तरवार्तिकखण्डम् ]

॥*॥ *'अश्नोतेर्वा सरोऽक्षरम्'* ॥*॥

[ व्याख्याभाष्यम् ]

**अश्नोतेर्वा पुनरयमौणादिकः 'सरन्'-प्रत्ययः । अश्नुते इत्यक्षरम् ॥**

( **प्रदीपः** ) **अश्नोतेर्वेति** । सरन्प्रत्ययस्यानुबन्धलोपे कृतेऽनुकरणं 'सर' इति । तत्राऽर्थमश्नुते व्याप्नोतीत्यक्षरं,—पदं वाक्यं वा ॥

( **उद्द्योतः** ) भाष्ये—**अश्नोतेर्वेति** । तद्व्याचष्टे—**अर्थमश्नुते इति**। वर्णानामनर्थकत्वेन चिन्त्यमिदम्। नानादेशेषु युगपदेकस्यैव शब्दस्याभिव्यक्तिदर्शनेन स्फोटस्यापि व्यापकत्वमिति भाष्यार्थ **इत्यन्ये** ॥

[ सिद्धान्तसमाधानान्तरश्लोकवार्तिकखण्डम् ]

॥*॥ *'वर्णे वाऽऽहुः पूर्वसूत्रे'* ॥*॥

---

**❀ राजलक्ष्मीः ❀**

१ **पूर्वसूत्रे**। पूर्वव्याकरणशास्त्रे । तथा च अक्षरशब्दस्य नित्यत्वं व्यापकत्वं वर्णत्वं च प्रवृत्तिनिमित्तमित्याशयः ।

---

**❀ शब्दकौस्तुभः ❀**

रक्ष सह मूलमिन्द्रे'ति दर्शनात् । 'मूलमस्याबर्हीं'ति सूत्रे हरदत्तादिग्रन्थे स्पष्टमेतत् । तुदादौ एतद्धातूत्तरत्वेन पठ्यमानयोः 'तृहू स्तृहू हिंसायां'मिति धात्वोरपि निष्ठायां 'तृढः' 'स्तृढ' इति रूपं बोध्यम् । 'दृढः स्थूलबलयो'रिति तु इडभावे नकारहकारयोर्लोपो निष्ठातकारस्य ढत्वं च निपात्यते न त्वसिद्धकाण्डस्थढत्वादेरिह प्रवृत्तिरिति वक्ष्यते । तेन 'परिद्रढय्य' 'पारिद्रढी कन्ये'त्यादौ लघुत्वप्रयुक्तो णेरयादेशः ष्यङभावश्च सिध्यतीति दिक् । तेन ढ्लोपसूत्रे परेणाण्ग्रहणपक्षेपि वृढतृढस्तृढेष्वेवातिप्रसङ्गो न तु दृढेऽपीति विवेकः । 'केऽण' इत्यत्र परेणाऽण्ग्रहणे—गोका नौका गीष्का उपानत्का चतुष्कमिति धत्वविसर्जनीययोरसिद्धत्वाद्ध्रस्वप्रसङ्गः, तथापीह ह्रस्वश्रुत्योपस्थितस्याऽच इत्यस्याऽबाधाय पूर्वेण भविष्यति । अबाधेनोपपत्तौ हि बाधो न न्याय्यः । 'अणोऽप्रगृह्यस्ये'त्यत्र परेण सति,—कर्तृ । अग्ने । वायो । पचै । पपौ । मालामाचक्षाणो माल् । वृक्षवयतेरप्रत्ययः—वृक्षव् । अत्रापि प्राप्नोति । 'रेफवर्जिता अन्तस्थाः सानुनासिकनिरनुनासिकभेदेन द्विधे'त्युक्तत्वात् । तस्मादिहाऽप्रगृह्यस्येति पर्युदासादच एवानुनासिको बोध्यः । न चाऽण्ग्रहणसामर्थ्यान्नभिव्युक्तन्यायस्य बाधः, तस्य पूर्वेणाप्युपपन्नत्वात् । अत्र लण्सूत्रे स्थित्वा वृक्षव्शब्दमित्थं कैयटो व्युदपादयत् । वृक्षं वृश्चतीति क्विपि कृते वृक्षवृश्चमाचष्टे इति णिचि टिलोपे च कृते वृक्षवयतेर्विचि 'वृक्षव्' इति भवति । क्विपि तु 'क्वौ लुप्तं न स्थानिवत्', 'क्वौ विधिं प्रति न स्थानिव'दित्युभयथापि स्थानिवद्भावनिषेधात्सम्प्रसारणप्रसङ्गो, लोपोव्योर्वलीति लोपम्बाधित्वा तदपवादस्योठः प्रसङ्गश्च । विचि तु स्थानिवद्भावाद्वल्निमित्तो वलोपो न भवति । नन्वेवमपि 'वृक्षव् करोती'त्यत्र 'हलि सर्वेषा'मिति प्राप्नोति । न च स्थानिवद्भावः, पूर्वत्रासिद्धे तन्निषेधादितिचेन्न; 'भो भगो' इत्यतोऽशीत्यनुवर्त्याऽशि हलि तद्विधानादिति । न च विचपक्षेऽपि णिचः प्राग्भाविनं क्विपमेवाश्रित्योठ् प्रसञ्जनीयः । अन्तर्भूतक्विबाश्रयतयाऽन्तरङ्गे कर्त्तव्ये बहिर्भूतणिजपेक्षतया बहिरङ्गस्य टिलोपस्याऽसिद्धत्वात् । इदं त्विह वक्तव्यम् ,—विचपक्षेऽप्येकदेशविकृतस्यानन्यत्वेन व्रश्चतिग्रहणेन ग्रहणा'द्व्रश्चे'ति षत्वं दुर्वारम् । न च णिलोपस्य स्थानिवत्त्वम्, 'पदान्तविधौ ने'ति निषेधात् । 'पूर्वत्रासिद्धे ने'ति निषेधाच्च । तस्मान्नायं वृश्चतिरपि तु वेतिर्वातिर्वा । वृक्षं वेतीति वृक्षवीः । वृक्षं वातीति वृक्षवाः । वृक्षव्यं वृक्षवां वाचष्टे वृक्षव् । विच् । न तु क्विप् , ऊठ्प्रसङ्गात्, क्वौ विधिं प्रति स्थानिवत्त्वनिषेधात् । तथा च देवयतेर्देयुरिति सिद्धान्तितम् । न चैवमपि 'लोपो व्यो रित्यस्य प्रसङ्गः, स्थानिवत्त्वात् । न च पदान्तविधित्वं, 'पदान्तश्चेद्विधीयत'इत्यर्थात् । लोपस्य चानवयवत्वात् । विभावितं चेदं भोभगो इति सूत्रे कैयटेनेति दिक् । यत्तु 'हलि सर्वेषा'मिति सूत्रे हरदत्तेनोक्तम्—"वृक्षव् करोतीत्येवंरूपः प्रयोगो नास्त्येव, अनभिधानात् । लण्सूत्रे 'न पदान्ता हलोऽणः सन्ती'ति भाष्यकारोक्तेश्चानभिधानं निश्चीयते"इति, तच्चिन्त्यम् । लण्सूत्रभाष्ये 'न पदान्ताः परेऽणः सन्ती'ति पाठात् । अप्रगृह्यस्येति पर्युदासाश्रयणेनाऽचामेव कार्यभाक्त्वादितरे कार्यभाजो न सन्तीत्येवंपरतया कैयटेन तद्विवरणाच्च । 'ननु न्यायमस्ति कर्तृ'इत्युत्तरभाष्येणाऽस्य दूषितत्वाच्च । त्वदुदाहृतपाठे उत्तरभाष्यस्योक्तिसम्भवाऽलाभाच्च । अतएव 'भोभगो'इतिसूत्रे भाष्यकारवृत्तिकारादिभिः सर्वैरपि 'वृक्ष'वित्युदाहृतम् । स्वयमपीह तथैवोदाहृतमिति पूर्वाऽपरस्वग्रन्थविरोधो, भाष्यवृत्तिकैयटादिसकलमहाग्रन्थविरोधो, मूलयुक्त्यभावश्चेति तिष्ठतु तावत् । प्रकृतमनुसरामः—**मकारोऽपि त्रिभ्यो ग्राह्यः**। 'पुमः खय्यम्परे' । 'हलो यमां यमि लोपः' । 'ङमो ह्रस्वादचि ङमुण्नित्य'मिति । **चकारश्चतुर्भ्यः**—'इकोयणचि'। 'इच एकाचोम्'। 'एचोयवायावः' । 'पूर्वौ तु ताभ्यामै'जिति । यकारोपि चतुर्भ्यः—'अनुस्वारस्य ययि' । 'मय उञः' । 'झयो होन्यतरस्याम्' । 'पुमः खय्य'ति । **रः पञ्चभ्यः**—'यरोनुनासिके'। 'झरो झरि सवर्णे'।

[ व्याख्याभाष्यम् ]

**अथवा पूर्वसूत्रे वर्णस्याक्षरमिति संज्ञा क्रियते ॥**

( प्रदीपः ) **वर्णे वाहुरिति** । रूढिरियं वर्णस्येत्यर्थः । **पूर्वसूत्रे इति** । व्याकरणान्तरे 'वर्णा अक्षराणी'ति वचनात् ॥

( उद्द्योतः ) ननु न्यायादिनयेऽव्याप्यवृत्तिषु विनाशिषु वर्णेषु कथं तद्व्यवहारोऽत आह–**वर्णे वाहुरिति** । 'च'घटितः पाठोऽत्र प्रामादिकः । व्याख्यानभाष्ये **अथवे**त्युक्तेः । नन्वन्तरोक्तयोगाभावात्कथं तेषु प्रयोगोऽत आह–**रूढिरिति** । तदुक्तं भाष्ये-**अक्षरमिति संज्ञेति** । **व्याकरणान्तरे इति** । पूर्वसूत्रशब्दे षष्ठीतत्पुरुष इति भावः । एवं **चाक्षरसमाम्नाय** इत्यस्य श्रुतिरूपो वर्णसङ्घात इत्यत्र तात्पर्यम्[1] ॥

[ अक्षरसमाम्नायोपदेशप्रश्नवार्तिकखण्डम् ]

*॥*॥ 'किमर्थमुपदिश्यते'[2] ? ॥*॥*

**अथ किमर्थमुपदेशः क्रियते ? ॥**

( प्रदीपः ) **किमर्थमिति** । वर्णानां साधुत्वस्याऽप्रतिपाद्यत्वात्पदस्यैव साधुत्वान्वाख्यानात्प्रश्नः ॥

( उद्द्योतः ) भाष्ये–**उपदिश्यत इति** । अक्षरसमाम्नायोपदेशः किमर्थं इत्यर्थः । पूर्वं कृतोऽप्ययं विचारः कंचिद्विशेषं वक्तुं पुनः क्रियते ॥

[ समाधानश्लोकवार्तिकम् ]

*॥ * ॥ 'वर्णज्ञानं[3] वाग्विषयो, यत्र[4] च ब्रह्म वर्तते ॥ तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते' ॥ * ॥*

[ व्याख्याभाष्यम् ]

**सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्ववेदपुण्यफलावाप्तिश्चाऽस्य ज्ञाने भवति, मातापितरौ चाऽस्य स्वर्गे लोके महीयेते ॥**

इति श्रीमद्भगवत्पतञ्जलिविरचिते **व्याकरणमहाभाष्ये प्रथम**स्याध्यायस्य **प्रथमे** पादे **द्वितीय**माह्निकम् ॥ २ ॥

---

॥ राजलक्ष्मीः ॥

१ **तात्पर्यमिति** । तदेवं नित्यत्वं व्यापकत्वं वर्णत्वश्चाऽक्षरशब्दस्य प्रवृत्तिनिमित्तम् । अक्षरसमाम्नाय इत्यस्य नित्यो व्यापको वर्णसमुदाय इत्यर्थ इत्याकूतमिति**गौडाः**।

२ उत्तरवार्त्तिकावतारणाय स्वयं प्रयोजनप्रश्नङ्करोति– **किमर्थमिति** । 'उपदिश्यते' इत्यस्य 'अक्षरसमाम्नाय' इति शेषः । ३ **वर्णज्ञानम्**–अक्षरसमाम्नायः, तन्मूलकं व्याकरणशास्त्रश्च । **वाग्विषयः**–वेदप्रतिपादकः । ४ **यत्र**–यस्यां वाचि । **ब्रह्म**–वेदः । 'प्रतिपाद्यत्वेने'ति शेषः । **तदर्थं**–शास्त्रप्रवृत्त्यर्थम् ।

---

॥ शब्दकौस्तुभः ॥

'खरि च'। 'अभ्यासे चर्च'। 'वा शरि'। **शकारः षड्भ्यः**–'भोभगोअघोअपूर्वस्य योऽशि'। 'हशि च'। 'नेड्वशि कृति'। 'झलां जश् झशि'। 'एकाचो बशो भष्'। **लकारोपि षड्भ्यः**–'अलोन्त्यस्य'। 'हलि सर्वेषाम्'। 'इड्वलादेः'। 'रलो व्युपधात्'। 'झलां जश्'। 'शल इगुपधा'दिति। अयं च चतुर्दशसूत्रीस्थैर्हलिभरिङ्भिः संपन्नानामष्टाध्याय्यां व्यवहृतानां प्रत्याहाराणां सङ्ग्रहः । तेन सुप्तिङादेः, रप्रत्याहारस्य, ञमन्ताड्ड इत्युणादिषु व्यवहृतस्य 'ञम्'प्रत्याहारस्य, 'यमिर्ञमन्तेष्वनिडेक इष्यते'इति व्याघ्रभूतिना व्यवहृतस्य च' 'चयो द्वितीयाः शरि पौष्करसादे'रिति वार्तिककृता व्यवहृतस्य 'चय्'प्रत्याहारस्य चाधिक्येप्यदोषः । सङ्ख्यानियमश्चायमुत्तरत्र एकचत्वारिंशद्भिर्व्यवहारादध्यसीयतइति बोध्यम् ।

---

अत्र श्लोकवार्त्तिकम्—**'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न । आचारादप्रधानत्वाल्लोपश्च बलवत्तरः ।'** प्रत्याहारोऽक्षरसमाम्नायः । तत्र येऽनुबन्धास्तेषामज्ग्रहणेष्वित्युपलक्षणम्,–अजादिप्रत्याहारग्रहणेषु कथं नेति। 'ग्रहण'मिति शेषः । आदिरन्त्येनेति सूत्रेण हि अकारमारभ्याऽऽचकाराद्वर्णानां भवन्त्यच्संज्ञा मध्यस्थत्वाविशेषादिकारादीनामिव णकारककारङकाराणामपि स्यात् । ततश्च 'दधि णकारः' 'दधि ककारः' 'दधि ङकार' इत्यादौ यण् स्यात् । एवमङ्ग्रहणे चकारस्यापि ग्रहणाद्वृचीनामित्यादावड्व्यवायइति णत्वं स्यात् । एवमिण्ग्रहणेन चकारग्रहणाद्वृचिध्वे इत्यादौ 'विभाषेट' इति ढः स्यादिति पूर्वपक्षः पूर्वार्द्धस्यार्थः । उत्तरमाह–**आचारादिति** । **आचारो**ऽत्र सूत्रकृतो निर्देशः । 'उणादयो बहुलम्' 'तृषिमृषिकृषेः,' 'ङसिङसोश्चे'त्यादौ यणोऽकृतत्वान्मध्यस्थानामप्यनुबन्धानां संज्ञित्वं नेति ज्ञाप्यत इत्यर्थः । समाधानान्तरमाह–**अप्रधानत्वादिति** । 'अ'णित्यादिसंज्ञाः प्रणेतुं तद्रूपप्रतिपादनायाऽनुबन्धा उच्चार्यन्ते । ततश्च परार्थमुपादीयमानतया तेषामप्राधान्यम् । इतरेषां तु स्वार्थमुपादीयमानत्वात्**प्राधान्यम्**। तेन तेषामेव संज्ञा न त्वनुबन्धानाम् । 'प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्यय'इति न्यायात् । नन्वेवमकारस्याच्संज्ञा न स्यात् । संज्ञाप्रतिपादने चकारस्येव तस्याप्यङ्गत्वाविशेषा-

( प्रदीपः ) **वर्णज्ञानमिति ।** वर्णा येन शास्त्रेण ज्ञायन्ते तद्वाचो विषयः। शास्त्रेण वाग्विसीयते, शास्त्रेण तस्याः परिज्ञानादित्यर्थः। **यत्र चेति ।** ब्रह्म वेदः-पदे वर्तते। तस्य च शास्त्रं विषय इत्यर्थः। **तदर्थमिति ।** शास्त्रप्रवृत्त्यर्थमित्यर्थः। **इष्टबुद्ध्यर्थमिति ।** कलादिदोषरहितवर्णज्ञानार्थमित्यर्थः। **लघ्वर्थमिति ।** अनुबन्धकरणार्थमित्यर्थः। **वाक्समाम्नाय इति ।** एतावद्भिरेव वर्णैर्वाग्व्यवहार इत्यर्थः। **पुष्पितः फलित इति ।** दृष्टाऽदृष्टफलाभ्यामभ्युदयनिःश्रेयसाभ्यां च। **चन्द्रतारकवदिति ।**-अनादित्वान्नित्यत्वं वाग्व्यवहारस्य सूचयति। **ब्रह्मराशिरिति ।** ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीत्यर्थः। **सर्ववेदेति ।** सर्ववेदाध्ययनकृतस्य पुण्यस्य यत्फलं तत्प्राप्नोतीत्यर्थः। **मातापितरचिति ।** माहात्म्यातिशयः शास्त्रस्य प्रत्याहारमात्रफलाख्यानद्वारेणान्वाख्यायते। **महीयेते इति ।** पूजां प्राप्नुत इत्यर्थः। महीयशब्दः कण्ड्वादियगन्तः ॥

इत्युपाध्यायजैयटपुत्र**कैयट**कृते महाभाष्य**प्रदीपे**
प्रथमाध्यायस्य प्रथमे पादे **द्वितीय**माह्निकम् ॥ २ ॥

( उद्द्योतः ) **येन शास्त्रेणेति ।** चतुर्दशसूत्र्यात्मकेन, तन्मूलकपाणिनिव्याकरणेन चेत्यर्थः। **तत्**-शास्त्रम्। **वाचो विषयः**-बन्धनं, प्रतिपादकमित्यर्थः। भाष्ये-'**यत्रचे**'त्यनेन वाक्परामृश्यते इत्याह-**पदे वर्तत इत्यादिना ।** **शास्त्रं विषय इति ।** प्रतिपादकमित्यर्थः। 'वर्णज्ञानं शास्त्रं-वाचो विषयः। का सा वाग् ?,-**यत्र ब्रह्म च वर्तते ।** चात्पुराणादी'ति भाष्याक्षरार्थः। **तदर्थ**मित्येतद्व्याचष्टे-**शास्त्रप्रवृत्त्यर्थमिति ।** **कलादीति ।** इदं प्रयोजनं पस्पशान्ते दूषितम्। **अनुबन्धकरणार्थमिति ।** '**लघ्वर्थ**'मित्यक्षराणामत्रार्थे स्वारस्यं चिन्त्यम्। अनुबन्धकरणमूलकप्रत्याहारद्वारा लाघवशास्त्रप्रवृत्त्यर्थमित्यर्थो वा। **वाक्समाम्नायः।** वाक्सङ्ग्रहोपाय इत्यर्थः। तदाह-**एतावद्भिरेवेति।** दृष्टफलेनाभ्युदयेन वा **पुष्पितः।** अदृष्टफलेन निःश्रेयसेन वा **फलितः। वाग्व्यवहारस्येति ।** तत्सङ्ग्राहकस्य चतुर्दशसूत्रीरूपस्येत्यर्थः। यथाश्रुते हि भाष्येऽक्षरसमाम्नायोद्देशेन प्रवृत्तविशेषणानामन्यपरतया योजने भाष्यविरोधः। अत एवैतत्प्रतीकमुपादाय **हरिणा**-'**अस्याक्षरसमाम्नायस्य वाग्व्यवहारजनकस्य न कश्चित्कर्त्ताऽस्त्येवमेव वेदे पारंपर्येणस्मार्यमाण**'मिति व्याख्यातम्। **ब्रह्मतत्त्वमेवेति ।** तदुक्तं नन्दिकेश्वरेण-'**अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः**' इत्यादिना सर्ववर्णानां महेश्वररूपता वर्णेभ्य एव च महदादिसृष्टिरित्यर्थपरतया चतुर्दशसूत्रीं योजयता। तदाह-**सर्ववेदेत्यादि ।** अन्ये तु **वर्णज्ञानं**-चतुर्दशसूत्र्यात्मकं शास्त्रं **वाचो**-वेदशास्त्रपुराणरूपायाः सकलवाचो **विषयो**-बन्धनम्। **यत्र च**-वर्णसमाम्नाये, **ब्रह्म**-बोध्यतया-**वर्तते।** व्याख्याता चैषा चतुर्दशसूत्री ब्रह्मपरतया नन्दिकेश्वरेण। **तदर्थं**-सकलवाग्ज्ञानार्थं, ब्रह्मबोधनार्थं च। अनेन सकलवेदाध्ययनेन यत्फलं तदक्षरसमाम्नायज्ञानेन सूचितम्। तद्वक्ष्यति-**सर्ववेदेत्यादि।** 'सोय'मित्यादि भाष्यग्रन्थश्चैतच्छ्लोकपूर्वार्धस्यैव व्याख्यानपरः। तत्र '**वर्णज्ञान**'मित्यस्य व्याख्या-**सोयमक्षरसमाम्नाय इति।** '**वाग्विषय**'इत्यस्य व्याख्या '**वाक्समाम्नाय**'इति, सर्ववाग्रूपत्वात्। तदध्ययनतन्मूलव्याकरणाध्ययनाभ्यां-**पुष्पितः। फलितः**-तदर्थभावनया जनिततत्त्वज्ञानरूपफलः। '**चन्द्रतारकवत्प्रतिमण्डित**'इत्यनेनास्यानादित्वं सूचयति। तादृशोयं ब्रह्मराशिर्वेदितव्यः। बोध्यबोधकयोरभेदात्। **सर्ववेदेति ।** सर्ववेदाध्ययनजन्यपुण्यफलस्य चित्तशुद्धिरूपस्य प्राप्तिरस्य ज्ञानेऽध्ययनमात्रे भवति। इदमेव पूर्वं **पुष्पितत्वम् ।** तादृशपुत्रवत्त्वेन च मातापित्रोः स्वर्गे पूजा भवति, यथा कृतराजसूययुधिष्ठिररूपपुत्रेण पाण्डोः स्वर्गे पूजेति। **इष्टबुद्ध्यर्थ**मित्यादि तु प्राग्व्याख्यातत्वान्न व्याख्यातमित्याहुः ॥

इति **कालो**पनामकश्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते
**भाष्यप्रदीपोद्द्योते प्रथमा**ध्यायस्य **प्रथमे**
पादे **द्वितीय**माह्निकम् ॥

---***---

**❀ राजलक्ष्मीः ❀**

१ **तत्**-व्याकरणं तन्मूलमक्षरसमाम्नायश्च। **पदे**-वाचि। **तस्य**-पदस्य। २ **विषयः**-स्थानम्। ३ **विषयः**-बोधकः।

**❀ शब्दकौस्तुभः ❀**

दिति चेन्न; 'स्वं रूप'मित्यनुवृत्त्याऽऽदेरपि संज्ञित्वात्। स्वं रूपं चादेरेव गृह्यते नान्त्यस्य, सर्वनाम्नां प्रधानपरामर्शकताया औत्सर्गिकत्वात्। इतेति तृतीयया इतोऽप्राधान्यलाभात्। तदेवं संज्ञाप्रवृत्तिकालेऽनुबन्धानां संनिधानमभ्युपेत्य द्वेधा समाहितम्। वस्तुतस्तु तदेव नास्तीत्याह-**लोपश्चेति ।** बलवानेव बलवत्तरः। स्वार्थे तरप्। 'अल्पाच्तर'मिति यथा। हलन्त्यमितीत्संज्ञायां हि कृतायां णकारादीनामच्संज्ञा प्राप्नोति लोपश्च। तत्र परत्वान्नित्यत्वादन्तरङ्गत्वाच्च लोपे कृते संज्ञाप्रवृत्तिकाले णकारादीनामसत्त्वादेव तेषामजादिसंज्ञा नेति भावः। यस्मिंस्तु प्रत्याहारे योऽनुबन्धोपेक्षितस्तस्य वचनसामर्थ्यात्तत्प्रवृत्तेः प्राग्लोपाऽभावः। लुप्तेपि

## अथ तृतीयमाह्निकम् ।

### वृद्धिरादैच् । १।१।१॥

( उद्द्योतः ) **वृद्धिरादैच्** । द्विपदं सूत्रं, '**कृतमनयोः साधुत्व**'मिति भाष्यदर्शनात् । अन्यथोद्देश्यानेकत्वाद्वृद्धिशब्दस्यावृत्तिर्वाक्यार्थबोधाय कार्या स्यात् । द्वन्द्वे तु समाहारस्यैकस्योद्देश्यस्य शब्दतः संभवात्तां विनापि सिद्धयति । न च समाहारे टच्प्रसङ्गः, समासान्तविधेरनित्यत्वात् । '**प्रतेरंश्वादय**' इति सूत्रेऽश्वादिगणे राजन्शब्दपाठाल्लिङ्गात् । अन्यथा '**राजाह**'इति टचा सिद्धे किं तेन ?। यद्वा पदत्रयं, पस्पशायां भाष्ये '**वृद्धिः**' '**आत्**' '**ऐ**'जिति पदविभागदर्शनात् । **वृद्धिशब्द**स्त्वावृत्त्या योज्यः । अत्र[2] पक्षे'**ऽनयो**'रिति भाष्यं–खण्डयोरित्यर्थकम् ॥

[ असाधुत्वनिराकरणाधिकरणे आक्षेपभाष्यम् ]

**कुत्वं कस्मा[3]न्न भवति 'चोः कुः,-पदस्ये'ति ? ॥**

( प्रदीपः ) **वृद्धिरादैच्** ॥ १ ॥ **कुत्वं कस्यान्न भवतीति** । [4]अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगान्नित्यत्वाच्च सर्वसंज्ञानां, लौकिकत्वादादैच्छब्दस्यानुकरणशब्दत्वाज्जातिशब्दत्वाद्वा शास्त्रप्राप्तिरस्तीति प्रश्नः । तत्र कुशब्दः पञ्चसु वर्णेष्वासक्तरूपो वाचकत्वेन नियुक्त इति शब्दस्वरूपे प्रवृत्तिनिमित्ते भावप्रत्ययः ॥

( उद्द्योतः ) असाधुशब्दोच्चारणे पाणिनेरश्रद्धेयतापत्त्या तदुक्तपदानां साधुत्वं विचारयति–भाष्ये–**कुत्वमि**त्यादि । ननु ऐच्छब्दस्यादि**रन्त्येने**त्यनेन कृत्रिमतया लौकिकवैदिकबहिर्भूतत्वेन कथं सुबादिशास्त्रप्राप्तिः ? । लौकिकत्वं च लोकेऽर्थबोधनाय प्रयुक्तशब्दत्वमत आह-**अनेकेति**। **नित्यत्वाच्चेति** । चो हेतौ । यतः शब्दार्थसंबन्धस्य नित्यत्वात्सर्वसंज्ञानां नित्यत्वमतो लौकिकत्वाच्छास्त्रप्राप्तिरित्यन्वयः । लोकेऽर्थान्तरेऽप्रसिद्धानामपि संज्ञानां नित्यत्वमिति बोधयितुं सर्वशब्दः । नन्वेवं **वृद्धिरादैजि**त्यादीनां वैयर्थ्यमत आह–**शक्तीति । शक्त्यवच्छेदः**–तत्सङ्कोचः । **विनियोगो**–विशेषे नियमः । अभिमतातिरिक्तार्थान्तरव्युदासाय च सः । परिसङ्ख्यायां चाऽत्र शास्त्रे प्रायेण नियमव्यवहार इति बोध्यम् । यद्वा–**शक्त्यवच्छेदः**–शक्तिनिश्चयः, '**शब्दार्थस्यानवच्छेदे**' इत्यादाववच्छेदशब्दस्य तदर्थकत्वदर्शनात् । फलरूपे हेतौ तृतीया । **विनियोगः**–उपदेशः । शक्तिनिश्चयफलकोपदेशादित्यर्थः । एवंच तत्सङ्केतकरणरूपप्रकरणादर्थान्तराऽप्रतीतिरिति बोध्यम् । इदमेव युक्तं, सर्वार्थ-

॥ राजलक्ष्मीः ॥

१ वृद्धिरादैजिति सूत्रं व्याख्यातुमादौ तत्पदच्छेदमाह **द्विपदमिति । सूत्रम्**–इदं सूत्रम् । **अन्यथा**–त्रिपदत्वे । **उद्देश्येति** । आदैज्रूपोद्देश्येत्यर्थः । **द्वन्द्वे**–आदैजिति द्वन्द्वे । **ताम्**–आवृत्तिम् । **सिद्धयति**–वाक्यार्थबोधः सिद्धयति । **तेन**–गणे पाठेन । २ **अत्र पक्षे**–पदत्रयपक्षे ।

३ **कस्मात्**–कस्माद्धेतोः । ४ लौकिकत्वं साधयति–**अनेकेति । सर्वसञ्ज्ञानामिति** मध्यमणिन्यायेनोभयत्रान्वेति । **शास्त्रेति** । कुत्वशास्त्रेत्यर्थः । **तत्र**–भाष्ये । ५ **आसक्तरूपः**–आरोपितानुपूर्वीकः । **नियुक्तः**–कुशब्दत्वेन कादिपञ्चकबोधकत्वेन सङ्केतितः । **शब्दस्वरूपे**–'कु' इत्यानुपूर्वीरूपे । **प्रवृत्तिनिमित्ते**–'कु' इति रूपे । ६ एवञ्च पदत्वाभावात्कुत्वस्य न प्राप्तिरित्याशयः । **सञ्ज्ञानां**–टिघ्वादिसञ्ज्ञानाम् । ७ **एवम्**–आदैज्वृद्धिशब्दार्थसम्बन्धस्य नित्यत्वे । **नियमः**–परिसङ्ख्या । **अभिमतेति** । आदैज्रूपेत्यर्थः । **अर्थान्तरेति** । वर्द्धनादिरूपार्थान्तरेत्यर्थः । **सः**–सङ्कोचः । ८ सिद्धान्तमाह–**यद्वेति । तदर्थकत्वेति** । निश्चयार्थकत्वेत्यर्थः । **निश्चयफलेति** । शक्तिनिश्चायकोपदेशादित्यर्थः । ९ **तदिति** । वृद्धिसङ्केतकरणरूपेत्यर्थः । **अर्थान्तराप्रतीतिरिति** । एवञ्च तदर्थं नियमस्यावश्यकतेत्याशयः । अज्ञातशक्तिबोधकतयोपदेशस्य चरितार्थत्वेऽपि आनुषङ्गिकं फलं प्रकरणादित्यवधेयम् ।

॥ शब्दकौस्तुभः ॥

वा तस्मिन् भूतपूर्वेण तेन सहित आदिः संज्ञा भविष्यति । अन्तःपातिनां तु लुप्तानां न संज्ञा । श्रूयमाणेष्विकारादिषु सावकाशत्वादिति । ननु हल्प्रत्याहारेऽकारस्य प्रवेशो दुर्वारः, नहि तत्र लोपो लभ्यते । ततः प्रागच्संज्ञाविरहेणोपदेशेजितीत्संज्ञाया अप्रवृत्तेः । एवं चाद्यसमाधानमपि दुरुपपादम् । उदाहृतस्याचारस्य 'लोपश्च बलवत्तर' इत्यनेनैव गतार्थत्वादिति चेन्न,'सोस्यादि'रितिनिर्देशेन प्रथमस्य, गुणानां भेदकत्वेन चरमस्य च समाधानस्य सूपपादत्वादिति दिक् ॥

इति श्री**भट्टोजिदीक्षित**विरचिते श्री**शब्दकौस्तुभे प्रथमस्या**ध्यायस्य **प्रथमे** पादे **द्वितीयमा**ह्निकम् ॥ २ ॥

**वृद्धिरादैच्** ॥ आकार ऐकार औकारश्च वृद्धिसंज्ञः स्यात् । संज्ञाप्रदेशा 'वृद्धिरेची'त्यादयः । तदुदाहरणमेवास्याप्युदाहरणं बोध्यम् । इहाच्च ऐच्चेतीतरेतरयोगद्वन्द्वः, 'सुपां सुलु'गिति सुलुग्वा । अथवा समाहारे द्वन्द्वः । नचैवं 'द्वन्द्वाच्चुदषहान्ता'दिति टच् स्यादिति वाच्यम् । समासान्तविधेरनित्यत्वात् । अत्र ज्ञापकं तु 'द्वित्रिभ्यां ष मूर्ध्न' इति षविधानम् । तद्धि बहुव्रीहौ सक्थ्यक्ष्णो'रिति षचि प्रकृतेपि क्रियते । षचश्चित्त्वसामर्थ्याज्ज्ञायमानमन्तोदात्तत्वं बहुव्रीहित्वप्रयुक्तं पूर्वपदप्रकृतिस्वरं यथा बाधते तथा 'द्वित्रिभ्यां पाद्न्मूर्धसु बहुव्रीहा'विति विधीयमानमन्तोदात्तत्वविकल्पं मा बाधिष्टेत्येवमर्थम् । तच्च 'द्वित्रिभ्या'मित्यस्य क्वचिल्लब्धाव-

वाचकत्वेपि सङ्केतरूपत्वेनाऽज्ञात[1]शक्तिबोधकतया विधित्वसंभवेनैषां नियमार्थत्वाऽसम्भवात् । नन्वेवं लौकिकार्थबोधो न स्यादत उक्तम्-**अनेकशक्तेरिति** । स्वशास्त्रे एव प्रकरणादन्यार्थाऽत्रोध इति भावः । [2]अनेकस्मिन्ननेका वा शक्तिरस्येति विग्रहः । अन्त्ये **'सर्वनाम्नो वृत्तिमात्रे'**इति पुंवत्त्वम् । कोपधप्रतिषेधे तद्धितवुग्रहणाद्वा **स्त्रिया** इति पुंवत्त्वम् । '[3]आश्रयभेदादेव शक्तिभेद' इति मते आद्यः[4] । निरूपकभेदाद्भेदे द्वितीयः[5] । नित्ये शब्दार्थसंबन्धे पुरुषव्यापारात्प्रागवाचकस्य न पुरुषव्यापारेण वाचकता शक्या कर्तुमतः **'सर्वे सर्वार्थवाचका'** इत्यभ्युपगमादनेकशक्तित्वावसायः । तादात्म्यमेव च शब्दार्थयोः शक्तिः । अत्र पक्षे गौणमुख्यविभागः प्रसिद्ध्यप्रसिद्धिमूलः । 'अन्यायोऽनेकार्थत्व'मिति त्वश्रद्धेयमेवेति निरूपितं मञ्जूषायाम् । अत्र[6] लौकिकशब्दत्वं साध्यम् । शास्त्रीयसंज्ञात्वसमानाधिकरणं नित्यत्वं हेतुः । अतो न वैदिकेषु व्यभिचारः । **सर्वसंज्ञानामिति**[7] वदता सूचितमिदम् । **'अपूर्वाः संज्ञाः क्रियन्ते'** इति पक्षेपि लौकिकत्वं साधयति-**अनुकरणेति** । अयमपि लौकिकत्वे हेतुः, **आदिरन्त्येने**त्यनेन संज्ञात्वेन विनियुक्तस्यैच्छब्दस्यानुकरणं सूत्रे, लक्षणया[8] तेनैवोपस्थापितयोरैकारौकारयोस्तात्पर्यवशाच्छाब्दबोधविषयतेति बोध्यम् । अनुकरणे च सर्वशब्दानां साधुत्वेन शास्त्रविषयतेति भावः । यत्त्वैजित्याद्यन्तावयवद्वारा समुदायानुकरणमिति । तन्न । तथा सत्यादिरन्त्येनेति सूत्रवैयर्थ्यापत्तेः । वृद्धिशब्दादेः शास्त्रविषयताया

एवमप्यनुपपादनाच्च । नन्वनुकरणत्वाऽननुभवः । किं च **'त्रयी शब्दानां प्रवृत्ति'**रिति पक्षे उक्तहेतुद्वयस्याप्यभावोऽत आह-**जातीति** । वैयाकरणव्यवहाराच्च तत्सिद्धिरिति भावः । अत्र पक्षे जातिबोधार्थमेव संज्ञासूत्राणीति बोध्यम् । अत्रापि पक्षे लौकिकत्वं संज्ञापक्षवदेव बोध्यम् । **हरदत्तस्तु** 'वृद्धिशब्दो वृद्धेर्भावे क्तिन्नन्तः । अभेदोपचाराच्च वृद्धियुक्तादैक्षु वृत्तिः । लक्षणयैव सिद्धे सूत्रं नियमार्थं-'वृद्धियुक्तप्लुतदीर्घैकारादीनां बोधो मा भू'दिति त्रयीपक्षे सूत्रार्थमाह । तन्न । **'अदेङ्गुण'** इत्यादावसंभवात् । ननु **कुत्व**मित्यत्र संज्ञात्वपक्षे ककारादिपञ्चकगतप्रवृत्तिनिमित्ताऽभावाद्भावप्रत्ययोऽनुपपन्नः । किं चाऽत्र ककारस्य प्राप्तिर्न तु कुवृत्तिधर्मस्येति 'कुत्व'मित्यसङ्गतमत आह-**तत्रेति**[9] । **आसक्तरूपः**-संबद्धस्वरूपः । एवं च 'कुशब्दः कुशब्दवत्ककारादिषु शक्त' इत्येवं शक्तिग्रहात्कुशब्दस्य प्रवृत्तिनिमित्तत्वम् । संबन्धश्चानादिव्यवहारसिद्धतादात्म्यम् । तादात्म्येन कुशब्दं प्रवृत्तिनिमित्तीकृत्य शक्तित्वेन तस्य ग्रहे बाधकाऽभावात् ॥ केचित्तु शब्दस्य स्वरूपं कुशब्दत्वं सामान्यं तत्कादिष्वारोपितं प्रवृत्तिनिमित्तं, तद्व्यक्तिश्च वाचिकेत्याहुः ॥ तेन च कुत्वशब्देन स्वार्थाश्रयः ककारो लक्ष्यते इति **ककारः कस्मान्नेति** चोद्यपर्यवसानम् । वस्तुतः कुत्वकुपदयोर्भत्वभसंज्ञापदयोश्च पर्यायतेति **ऋलृक्सूत्रे** निरूपितमिति न कश्चिद्दोषः ॥

## ❀ राजलक्ष्मीः ❀

[1] **अज्ञातेति** । वस्तुसच्छक्तेर्नोपयोगः शाब्दे, किन्तु ज्ञातशक्तेरेवेति तत्त्वम् । एषाम्-सञ्ज्ञासूत्राणामित्यर्थः । **एवं**-शास्त्रेणशक्तिनिश्चये सति । लौकिकेति । वृद्ध्यादिरूपेत्यर्थः । २ **अनेकस्मिन्**-अनेकस्मिन्नर्थे । निरूपितत्वं सप्तम्यर्थः । **अन्त्ये**-अनेका शक्तिरिति विग्रहे । ३ प्रकृते चाश्रयः शब्दो न भिन्न इति न शक्तिभेदः । ४ **आद्यः**-आद्यो विग्रहः । आद्यमितिपाठान्तरम् । **निरूपकेति** । शक्तिनिरूपकार्थभेदादित्यर्थः । **भेदः**-शक्तिभेदः । ५ **द्वितीयः**-द्वितीयो विग्रहः । **अत्र पक्षे**-सर्वार्थवाचकत्वपक्षे । ६ **अत्र**-कैयटे । **इदम्**-हेतोः समानाधिकरणान्तत्वम् । ७ नन्वनुकार्यानुपूर्वीबोधकमेव तत्स्यादत आह-**लक्षणयेति** । स्वज्ञाप्यज्ञाप्येऽत्र लक्षणा । **स्वम्**-अनुकरणम् । **तज्ज्ञाप्यम्**-आदैजिति । **तज्ज्ञाप्यम्**-आऐ औ इति । **तेनैव**-अनुकार्येणैव । **वृद्धिशब्दादे**रित्यस्य 'ऐच्छब्दस्य तत्त्वेपी'त्यादिः । ८ **तत्सिद्धिः**-वृद्धित्वादिजातिसिद्धिश्च । ९ कुशब्दवन्तो ये ककारादय इत्यर्थः ।

## ❀ शब्दकौस्तुभः ❀

काशत्वे सत्येव सङ्गच्छते न त्वन्यथा । अवकाशश्च समासान्तानामनित्यतायां सत्यामेव लभ्यते । 'त्रिमूर्द्धानं सप्तरश्मिं गृणीषे' इति यथा । तस्मात्षप्रत्ययविधानं ज्ञापकमिति स्थितम् । तथा 'द्वित्रिभ्यां पाद्'निति सूत्रे बहुव्रीहिग्रहणमपीह ज्ञापकम् । अन्यथा 'पादन्मूर्द्धे'ष्वित्येव निर्दिशेत् । एवं हि सति कृतसमासान्तपादन्प्रक्रमोपि न विरोत्स्यते । बहुव्रीहिभिन्नं च समासान्तविरहादेव वारयिष्यते । ननु षष्ठीतत्पुरुषादिवारणाय बहुव्रीहिग्रहणमस्तु । तथाहि—द्वयोर्दन्ता इति विगृह्य'द्विदतः पश्ये'ति प्रयोगे 'पद्'न्निति दतादेशः, स एवेह निरनुबन्धकत्वाद्वा गृह्येत । न च 'पद्'न्निति सूत्रे तदन्तविधिदौर्लभ्यात्कथमेतदिति वाच्यम्, 'ष्यङः सम्प्रसारण'मिति सूत्रस्थपूर्वपक्षन्यायेन सिद्धं त्ववयवानन्यत्वादित्याष्टमिक भाष्यवार्त्तिकन्यायेन चावयवस्य कार्यलाभात् । अन्यथा 'हास्तिशीर्ष्यां उपैषां'त्यादावगतेरिति वक्ष्यते । तस्मात्कथं बहुव्रीहिग्रहणं ज्ञापकमिति चेन्न; पूर्वोत्तरसाहचर्यबलेनापि बहुव्रीह्यप्रविष्टस्य वारणसम्भवात्, दतृ इति सानुबन्धस्यापि सुपठत्वाच्च । 'स्फिगपूतवीणाञ्जोध्वकुक्षिसीरनामनामचे'ति सूत्रे 'ऽपाच्चे'त्यनुवृत्त्या 'ऽपस्फिग'मित्यादावुत्तरपदान्तोदात्तविधायकेऽध्वशब्दग्रहणमपीह लिङ्गम् । 'उपसर्गादध्वन' इत्यच्प्रत्ययस्य नित्यत्वे हि चित्त्वादेव सिद्धं स्यात् । तथा 'प्रतेरंश्वादयत्पुरुषे'इति सूत्रेऽश्वादिगणे राजन्शब्दस्य पाठोपीह

[ समाधानभाष्यम् ]

**भत्वात् ॥ कथं भसंज्ञा ? ॥**

**'अयस्मयादीनि च्छन्दसी'ति ॥**

[ समाधानदूषणभाष्यम् ]

**'छन्दसी'त्युच्यते, न चेदं छन्दः ॥**

---

❀ राजलक्ष्मीः ❀

१ भत्वात्- भत्वेन पदत्वस्य बाधात्। 'विभाषा गुणे'

---

❀ शब्दकौस्तुभः ❀

लिङ्गम्। अन्यथा 'राजाहःसखिभ्यष्ट'जिति टचैव सिद्धे किन्तेन ?। यत्तु 'ऋक्पूरब्धूःपथा'मित्यत्र टिलोपस्येव 'प्रकृतिवदनुकरण'मित्यतिदेशेन प्रत्ययस्यापि प्राप्तौ तदकरणं ज्ञापकमिति, तन्न; 'अतिदेशोऽयमनित्य'इति ऋलृक्सूत्रे प्रपञ्चितत्वादिति दिक्। 'कृतमनयोः साधुत्व'मित्यादिभाष्यग्रन्थाश्चास्मिन्पक्षेऽनुकूलाः। अनयोः पदयोरिति स्वरसात्। अथ वाऽऽदित्यसमस्तमेव। पस्पशायां 'शब्दाऽप्रतिपत्ति'रिति वार्त्तिके भाष्यकारैरेव 'वृद्धिः आदै'जिति पदविभागप्रदर्शनात्। अस्मिंश्च पक्षे अनयोः सूत्रखण्डयोरिति ज्ञेयम्। पक्षान्तराभिप्रायकमेव वा तत्। वृद्धिशब्दस्तु तन्त्रेणावृत्त्या वा योजनीयः। 'द्विर्वचनेचि' 'इग्यणः सम्प्रसारण' मित्यादाविवोभयथाप्यदोषात्। 'आ'दिति तपरकरणमैजर्थं,तेन त्रिमात्रचतुर्मात्राणामैचां संज्ञा न भवतीत्यादि-एओङ्ऐऔच्सूत्रयोः प्रपञ्चितम्। नचैवं तकारस्योत्तरशेषतैव स्यादिति पदान्तताविरहाज्जश्त्वं न स्यादिति वाच्यम्, असन्देहार्थतयाऽऽकारशेषत्वस्यापि सम्भवात्। अस्तु वादैजिति पदम्। 'ऋत इद्धातो'रित्यादौ दपरत्वमेवाश्रित्य तपरसूत्रे दकारोऽपि प्रश्लिष्यत इति तित्स्वरितमिति सूत्रे भाष्यकारैर्वक्ष्यमाणत्वात्। दात्परस्यापि तत्कालग्राहकत्वात्। वस्तुतस्तु दकारप्रश्लेषपक्षोऽभ्युच्चयमात्रम्। इह तु तपरकरणं स्पष्टार्थमेवेत्यादि प्रागेवोक्तं न विस्मर्त्तव्यम्। ननु 'चोः कु'रिति कुत्वमैच्शब्दे प्राप्नोति, **चतुष्टयी** शब्दानां प्रवृत्तिरिति पक्षेऽस्य संज्ञाशब्दतया लौकिकत्वेनानुशासनविषयत्वात्। **त्रयीपक्षेपि** जातिशब्दत्वसम्भवात्। वैशेषिकपरिभाषया द्रव्यत्वगुणत्वादिजातित्वस्वीकारे वैयाकरणपरिभाषयापि तत्स्वीकारस्य दुर्वारत्वात्। वस्तुतस्तु सिद्धान्ते व्यक्तिविशेषोपहितसत्ताया एव जातित्वस्वीकारादिहापि साऽस्तु। व्यक्तिविशेषाश्च स्वरूपसता अतद्भेदेनाऽनुगतीकृतास्सत्तोपधायकाः। तदुक्तम्- 'तस्यां सर्वे शब्दा व्यवस्थिता' इति। आद्यन्तावयवद्वारा समुदायाऽनुकरणं वा 'ऐच्'शब्दः। अनुकरणशब्दाश्च जातिशब्दा एव। तत्रानुकार्यनिष्ठजातेः प्रवृत्तिनिमित्तत्वात्। न चाद्यपक्षे सूत्रवैयर्थ्यम्। 'मदीयशास्त्रे वृद्धिशब्देनादैच एव ग्राह्या' इति नियमार्थं सूत्रारम्भात्। तदुक्तं कैयटेन,-**'अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगान्नित्य-**

[ समाधानस्थापनेष्टिभाष्यम् ]

*[ ॥*॥ छन्दोवत्सूत्राणि ॥*॥ ]*

**छन्दोवत्सूत्राणि भवन्ति ॥**

( प्रदीपः ) **छन्दोवदिति**। न वैशेषिकादि-

---

इति पञ्चमी। २ अयस्मयादिगणस्याकृतिगणत्वादैच्छब्दस्यायजादावपि भसञ्ज्ञेत्यर्थः।

---

**त्वाच्च सर्वसंज्ञानां लौकिकत्वा**'दिति। अनेकस्मिन्ननेका वा शक्तिरस्येति विग्रहः। 'अवच्छेदकभेदेपि लाघवाच्छक्तिरेकैव, औपाधिको भेद' इति प्रवादस्तु उपाधिभिन्न इत्यत्र पर्यवसन्न इति मतेनाऽऽद्यः **पक्षः**। उपाधिस्थित्यधीनस्थितिको जीवब्रह्मभेदवदुपधेयेपि भेदोस्तीति मतेन **द्वितीयः कल्पः**। 'न कोपधाया' इति पुंवद्भावनिषेधस्तु नास्ति, 'तद्धितबुग्रहणं कर्त्तव्य'मिति वक्ष्यमाणत्वात्। **अवच्छेदः**- सङ्कोचः। स च यद्यपि शक्तेर्निरवयवतया न सम्भवति तथापि तदितरस्मिंस्तात्पर्यविरह एव शक्तिसङ्कोचोऽत्राभिमतः। 'सर्वे सर्वार्थवाचका' इत्यभ्युपगमेपि तात्पर्यं क्वचिदेवेत्यस्य निर्विवादत्वात्। शक्तिः परं कारणताऽपरपर्याया सर्वत्र दुर्वारेत्युक्तम्। न चैव**मन्यायश्चानेकार्थत्व**मित्यस्य निर्विषयता। पौरुषेयसङ्केतनिरपेक्षस्य प्रसिद्धतरसम्बन्धस्य विना प्रमाणं बहुषु न कल्पनमिति तदर्थात्। गौणमुख्यविभागोऽपि प्रसिद्धयप्रसिद्धिनिबन्धन एव। गाव्यादीनामसाधुतापि सङ्केतविरहे सत्येव। अत एव प्रसिद्धेपि पक्षे गोण्यादीनां गोण्यां साधुत्वमस्त्येवेत्यन्यत्र विस्तरः। उक्तं च **'व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित्। नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥ वृद्ध्यादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः। अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यव**'दिति। वस्तुतस्तु साध्वसाधुबहिर्भावपक्षेऽप्येषामनुशासनविषयतास्त्येवेति पस्पशायां साधुत्वनिर्वचनप्रसङ्गेनोपपादितम्। तस्मात्सर्वथापि कुत्वं प्राप्नोत्येवेति चेत्सत्यम्, 'अयस्मयादीनि छन्दसी'ति भत्वप्रवृत्त्या कुत्वोपयोगिनी पदसंज्ञा प्रतिबध्यते। जश्त्वविध्येकवाक्यतापन्ना तु पदसंज्ञाऽस्त्येव। 'सधुष्टुभा सऋकता गणेने'त्यत्र तु विपरीतम्। कुत्वे पदत्वमस्ति जश्त्वे तु नेति विषयभेदेन संज्ञाद्वयमस्तीत्यंशे परं दृष्टान्तता बोद्धया। तेनोपदेशेऽजनुनासिक इदित्यादौ कुत्वाऽभावो जश्त्वं च सिद्ध्यति। छन्दसि विहितस्य सूत्रे कथं प्रवृत्तिरित्याशङ्क्य **'छन्दोवत्सूत्राणि भवन्ती'ति** भाष्यम्। इष्टिरियं भाष्यकृतः। यद्वा-छन्दःशब्दः स्वर्यते। 'स्वरितेनाधिकारः,' अधिकं कार्यं-गौणस्यापि ग्रहणमित्यर्थः। तेन छन्दोऽङ्गेष्वपि तत्तत्कार्यप्रवृत्तिर्बोध्या। संज्ञाद्वयसमावेशस्तूभयसंज्ञान्यपीति वक्तव्यमिति वार्त्तिकवचनात्, 'षष्ठीयुक्त' इति सूत्रे 'छन्दसि

सूत्राणि, अपि त्वङ्गत्वाद्व्याकरणसूत्राण्येव । ई[1]ष्टिश्चेयम्–'**छन्दोव**'दिति ॥

**( उद्द्योतः ) अङ्गत्वात्**–पदपदार्थबोधनद्वारा वेदोपकारकत्वात् । **मुखं व्याकरण**मित्यादिनाऽङ्गत्वनिरूपणाच्च । **प्रधानं च षट्स्वङ्गेषु व्याकरण**मिति पस्पशायां भाष्योक्तेश्च । अस्या[2]मिष्टौ नार्षत्वं प्रयोजकं, '**नैषेष्टिरस्ति छन्दोवत्कवयः कुर्वन्ती**'ति **यूव्याख्याविति** सूत्रे भाष्योक्तेः । तस्मादङ्गत्वमेव प्रयोजकमिति भावः । ननु-छन्दसि विहितस्य[3] सूत्रे कथं प्रवृत्तिरत आह–**इष्टिरिति**। तथा च भाष्यकारीयातिदेशात्सूत्रेषु च्छन्दःकार्यप्रवृत्तिरिति भावः ॥

[ भसञ्ज्ञायां दोषदर्शिभाष्यम् ]

**यदि भसंज्ञा,–'वृद्धिरादैजदेङ्गुणः'–**
**इ[4]ति जश्त्वमपि न प्राप्नोति ॥**

(उद्द्योतः) भाष्ये **जश्त्वमपीति**। संहितया पाठे[5] इत्यर्थः॥

[ समाधानवार्त्तिकम् ]

*[ ॥*॥ उभयसञ्ज्ञान्यपि[6] च्छन्दांसि ॥*॥ ]*

[ व्याख्याभाष्यम् ]

**उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते । तद्यथा 'स सुष्टुभा स ऋक्कता गणेन'। पदत्वात्कुत्वम्, भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वाज्जश्त्वम्, भत्वात्कुत्वं न भविष्यति ॥**

**( उद्द्योतः ) उभयसंज्ञान्यपीति** । उभे संज्ञे येषामिति विग्रहः । संज्ञाद्वयहेतुककार्यदर्शनेन तद्वत्त्वकल्पनेति भावः ।

[ तद्भावितपक्षग्रहणाऽग्रहणोद्भावनभाष्यम् ]

**किं पुनरिदं तद्भावितग्रहणम्[7]—'वृद्धिरित्येवं ये आकारैकारौकारा भाव्यन्ते, तेषां ग्रहणम्, आहोस्विदादैज्मात्रस्य ? ॥**

**किं[8] चातः ? ॥ यदि[9] तद्भावितग्रहणं,–शालीयो मालीय इति वृद्धलक्षणश्छो न प्राप्नोति । आम्रमयम्, शालमयम्, वृद्धिलक्षणो मयण्न प्राप्नोति । आम्रगुप्तायनिः, शालगुप्तायनिः,–वृद्धलक्षणः फिञ् न प्राप्नोति ॥**

( प्रदीपः ) **किं पुनरिति**। उभयथा शास्त्रे दर्शनात्पक्षद्वयेऽपि दोषसंभवात्प्रश्नः ॥

**( उद्द्योतः )** ननु सूत्रादादैज्मात्रग्रहणपक्ष एव प्रतीयत इति प्रश्नानुपपत्तिरत आह—**उभयथेति**। लुगादि-

---

**❀ राजलक्ष्मीः ❀**

१ भाष्यकारस्येष्टिरित्यर्थः । २ **इष्टौ**–इष्टिप्रवृत्तौ । ३ **विहितस्ये**त्यस्य–'कार्यस्ये'तिशेषः । **सूत्रे**–सूत्रेषु । ४ **इति**–इत्येवं संहितापाठे। ५ अस्य 'पारायणादा'वितिशेषः । ६ इदं वार्त्तिकमितिश्रीगुरवः । भाष्यमेवेतितुगतानुगतिकाः । गौडास्तु "* कुत्वं न भत्वात् । छन्दोवत्सूत्राणि । उभयसञ्ज्ञान्यपिच्छन्दांसि *" इत्येवमत्रवार्त्तिकपाठमभिप्रयन्ति । अत्र युक्तायुक्तत्वे सुधीभिर्विभाव्ये। ७ तेन वृद्धिशब्दोच्चारणेन भावितानां–विहितानामादैचां ग्रहणमत्रेत्यर्थः । तदाह–**वृद्धिरितीति। वृद्धिरिति**–वृद्धिरित्युच्चार्य वृद्धिपदप्रयोज्यविधेयताश्रयाः । **भाव्यन्ते**–क्रियन्ते इत्यर्थः । ८ **अतइति**। अस्मात्प्रश्नात्किमभिप्रेतं भवत इत्यर्थः । ९ प्रष्टा स्वाशयमाविष्करोति–**यदीति** ॥

---

**❀ शब्दकौस्तुभः ❀**

वे'ति विभज्य एका संज्ञेति नियमस्य छन्दसि विकल्पनाद्वा । यद्वा–'अयस्मयादीनी'त्यनेनोभयसंज्ञाप्रयुक्तकार्यभाजः समुदाया निपात्यन्ते, न तु प्रकृता भसंज्ञैव विधीयते । अत एव कार्यविशेषपुरस्कारसम्भव इति बोध्यम् । तस्मात्कुत्वं नेति स्थितम् । कुशब्दस्याऽणुदिदित्यनेन संज्ञात्वेन विनियोगात्तत्र च प्रागुक्तरीत्या मतभेदसत्त्वाज्जातिविशेषः प्रवृत्तिनिमित्तम्, व्यक्तिविशेषोपहिता सत्तैव वा, शब्दस्वरूपं वा। तस्यापि ग्राह्यत्वं ग्राहकत्वं चेति पस्पशोक्तरीत्या व्यक्तिविशेषणतया भानाभ्युपगमात्। तथा चोक्तत्रितयान्यतमत्वमिह 'त्व'प्रत्ययार्थः । प्रकृतिजन्यबोधे प्रकारीभूतत्वं प्रयोगोपाधिमाश्रित्य तथाभूतधर्मस्य त्वतलर्थताया वक्ष्यमाणत्वात् । यद्वा-प्रकृतिः शब्दस्वरूपपरा। प्रवृत्तिनिमित्तत्वे तु त्वतलादीनां शक्तिरेवेति मतान्तरमपि वक्ष्यते। उभयथापीह त्वप्रत्ययेन स्वार्थाश्रयः ककारो वक्ष्यते । तेन 'कुत्वं ने'त्यस्य ककारादेशो नेति पर्यवसितोऽर्थः। आह च–'**सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषिता । संज्ञा शब्दस्वरूपं वा प्रत्ययैस्त्वतलादिभि'**रिति। इत्थं पदविभागः पदसाधुत्वं चोक्तम् । वाक्यार्थस्तु संज्ञासंज्ञिभावः । तथाहि–समानविभक्तिकनामार्थयोरभेदान्वयस्य व्युत्पन्नतयाऽऽकारादयो वृद्धि प्रत्यभेदेन संसर्गेण विशेष्याः । विरूपोपस्थितिस्तु विशेषणीभूतं शब्दस्वरूपमादाय बोध्या। एतेनेन्द्रो मरुत्वान्मघवेत्यादि व्याख्यातम् । न तु तत्रापि मरुत्त्वदादिशब्दानां तत्तद्वाच्ये लक्षणेति ग्राह्यम् । उक्तरीत्या लक्षणां विनैवोपपत्तेः । अत एवोद्भिदधिकरणे विशिष्टविधिपक्षं मत्वर्थलक्षणाप्रसङ्गेन दूषयित्वा नामधेयत्वं सिद्धान्तितम् । अन्यथा नामधेयत्वेपि लक्षणायास्तुल्यतयाऽधिकरणस्याऽसम्भवदुक्तिकतापत्तेरिति दिक् ।

संज्ञासु तद्भावितपक्षस्य, लोपसंज्ञायामदर्शनमात्रस्येति भावः ॥ ननु टिघुभादिसंज्ञास्वतद्भावितानामेव ग्रहणं दृश्यते इति सोऽपि पक्षः शङ्कितुमुचित इति चेन्न; तत्र हि तद्भाविताऽसंभवादतद्भावितानामेव ग्रहणम्, न च[1] तथा प्रकृते इति **'उभयथे'**त्युक्तम्। वृद्धिशब्दे तन्त्राद्यङ्गीकारे तद्भावितग्रहणम्। वृद्धिशब्दैकत्वे द्वितीयः पक्ष इति भावः ॥ भाष्ये-**वृद्धिलक्षणो मयडिति। नित्यं वृद्धशरादिभ्य** इत्यस्य वृद्धसंज्ञाद्वारा वृद्धिलक्षणत्वं बोध्यम्। **'वृद्धलक्षण'** इति पाठे एषां वृद्धित्वाऽभावेन समुदायानां वृद्धत्वाभावादि-त्यर्थः ॥ **फिञिति । उदीचां वृद्धादगोत्रा**दिति। न च 'प्राचामवृद्धा'दिति फिनाप्येतत्सिद्धं, पुंवद्भावनिषेधोऽप्या-म्रगुप्तायनीभार्य इत्यादो 'जातेश्चे'तिसिद्ध इति वाच्यम्, आम्र-गुप्तायनेरपत्यं युवेत्यर्थेऽणो **ण्यक्षत्रियार्षञित** इति लुकि 'आम्रगुप्तायनि'रित्येव रूपं पितरि पुत्रे चेष्यते, फिनि तु ञितः परत्वाऽभावान्न सिध्येत्। न चा**ऽब्राह्मणगोत्रमात्रा-द्युवप्रत्ययस्योपसङ्ख्यान**मिति तत्सिद्धिः। ब्राह्मणगोत्रे तदप्रवृत्तेः ॥

[ आदैज्मात्रग्रहणे दूषणभाष्यम् ]

**अथादैज्मात्रस्य ग्रहणं-सर्वो भासः सर्वभास इति, 'उत्तरपदवृद्धौ सर्वं चे'त्येष विधिः प्राप्नोति ॥ इह च तावती भार्या यस्य तावद्भार्यः, यावद्भार्यः। 'वृद्धिनिमित्तस्ये'ति पुंवद्भावप्रतिषेधः प्राप्नोति ॥**

**( उद्द्योतः )** भाष्ये-**एष विधिरिति**। पूर्वपदा-न्तोदा[2]त्तत्वमित्यर्थः ॥ तावद्भार्ये **'आ सर्वनाम्न'**इत्यात्वस्य वतुनिमित्तमिति पुंवत्त्वनिषेधप्राप्तिः ॥

[ आदैज्मात्रग्रहणवादिसिद्धान्तिभाष्यम् ]

**अ[3]स्तु तर्हि—आदैज्मात्रस्य ग्रहणम् ॥**

**( उद्द्योतः )** यदि प्रथमपक्षे दोषो दुरुद्धरोऽस्तु तर्हीत्यन्वयः ॥

[ आदैज्मात्रग्रहणे उक्तदोषस्मारणभाष्यम् ]

**ननु चोक्तम्-'सर्वो भासः सर्वभास**

---

❁ राजलक्ष्मीः ❁

१ न च-नहि । **तथा**-तद्भावितपक्षाऽसम्भवो हि ।

२ समासान्तोदात्तता त्वत्रेष्टेति भावः। ३ तद्भावितपक्षाश्रयणे आवृत्त्यादिस्वीकारगौरवापत्त्या द्वितीयमादैज्मात्रग्रहणपक्षम-भ्युपैति सिद्धान्ती-**अस्त्विति**।

---

❁ शब्दकौस्तुभः ❁

स्यादेतत्-किमादैज्मात्रस्य वृद्धिसंज्ञा आहोस्विद्वृद्धिशब्द-मावर्त्त्य 'वृद्धिरिति ये आदैचस्ते वृद्धिसंज्ञा' इति व्याख्याना-ल्लुक्श्लुलुप्संज्ञावत्तद्भावितानामेवेति ?। नाद्यः-'सर्वभासः' 'सर्वकारक' इत्यादावुत्तरपदवृद्धौ सर्वं चेति सूत्रेण पूर्वपदा-न्तोदात्तत्वप्रसङ्गात्। इष्यते तु 'समासस्ये'त्यन्तोदात्तः। न च 'सर्वस्य सुपी'त्याद्युदात्तता शङ्क्या। सति शिष्टेन समासस्वरेण बाधात्। 'सर्वस्तोम' इत्यादौ तु 'बहुव्रीहौ प्रकृत्या पूर्वपद'-मित्यनेन समासान्तोदात्तत्वे बाधिते 'सर्वस्य सुपी'ति भवत्येव। इह तु कर्मधारयत्वात्समासान्तोदात्तत्वमेवेति बोध्यम्। किं च तावती भार्या यस्येति बहुव्रीहौ तावद्भार्यो न सिद्ध्येत्। 'वृद्धिनिमित्तस्य च तद्धितस्ये'ति पुंवद्भावप्रतिषेधप्रसङ्गात्। न द्वितीयः-'शालीयो' 'मालीय' इत्यादौ वृद्धलक्षणस्य छ प्रत्ययस्याऽसिद्धिप्रसङ्गात्। किं चैवमाम्रमयं शालमयमित्यादौ 'नित्यं वृद्धशरादिभ्य' इति नित्यो मयट् न स्यात्। किं चाम्रगुप्तायनिः शालगुप्तायनिः, 'उदीचां वृद्धादगोत्रा'दिति-वृद्धलक्षणः फिञ्न स्यात्। ननु 'प्राचामवृद्धात्फिन् बहुल'-मिति फिनाऽप्येतत्सिद्धम्। नह्यत्र फिञ्फिनोः स्वरे रूपे वा विशेषोऽस्ति। 'ञ्नित्यादिर्नित्य'मित्याद्युदात्तस्योभयत्राविशिष्ट-त्वात्। न चाम्रगुप्तायनीभार्य इत्यत्र 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे'इति पुंवद्भावप्रतिषेधसिद्धये फिञेव कर्त्तव्य इति वाच्यम्; 'जातेश्चे'त्यनेनापि प्रतिषेधसिद्धेः। न चाम्रगुप्तायनेश्छात्रा इति वृद्धाच्छे विवक्षिते 'फक्फिञोरन्यत-रस्या'मिति लुग्विकल्पेनाम्रगुप्तीयाआम्रगुप्तायनीया इति द्वैरूप्य-मिष्टं, तच्च फिञं विना न सिध्यतीति वाच्यं, 'फक्फिञो'रित्यत्र 'यूनी'त्यनुवृत्त्या त्वदुदाहृतरूपद्वयस्य सिद्धान्तेप्यसम्मतत्वात्। अत एव तत्र यून्येवोदाहृतम्। यस्कस्यापत्यम्। शिवादि-भ्योऽण्। यास्कः। तस्यापत्यं युवा-'अणो द्व्यचः'इति फिञ्-यास्कायनिः। तस्य छात्रा यास्कीया यास्कायनीया इति। तस्मात्फिनाप्येतत्सिद्धौ किमर्थं फिञेवेष्यतइति चेदुच्यते,-उक्तरीत्या रूपसिद्धावपि प्राचामुदीचां वाचार्याणां स्वस्वमत-प्रच्युतिरेव तावद्दोषः। सिद्धान्ते ह्युदीचामाम्रगुप्तायनिरिष्टः, प्राचां त्वनिष्टः। उक्तरीत्या तूदीचां न सिद्ध्येत्। प्राचां तु सिध्येदिति स्पष्ट एवोभयोरपि स्वमतप्रच्यवः। तथा च 'ऋतो भारद्वाजस्ये'ति सूत्रे जहर्थेत्यादौ गुणे रपरत्वे च कृते-ऽनजन्तत्वादचस्तास्वदित्यस्याप्राप्तौ नियमानुपपत्तेर्ऋतो भार-द्वाजस्येतीदं विधायकं स्यात्ततश्च पेचिथेत्यादाविण्न स्यादिति दूषणे प्राप्ते-'अचस्तास्वत्थल्यनिटो नित्यं भारद्वाजस्य'। 'उप-देशेऽत्वतः'। 'भारद्वाजस्ये'त्येव। तत-'ऋतः'। भारद्वाज-स्येति निवृत्तम्। एवं च सकललक्ष्यप्रसिद्धिरिति सूत्रभङ्गेन समाधाय भाष्यकारो वक्ष्यति-'सिध्यत्येवम्। अयं तु भार-द्वाजः स्वस्मान्मतात्प्रच्यावितो भवती'ति। अत एवाचस्ता-स्वदित्यत्रोपदेशेऽत्वत इत्येतदुपदेशग्रहणमपकृष्य सिद्धान्त-यिष्यतीति दिक्। किं च फिनि सत्याम्रगुप्तायनेरपत्यं कुत्सितमित्यर्थे सौवीरगोत्रे 'फेश्छ चे'ति छठकौ न स्याताम्। तत्र हि फिञेव गृह्यते न तु फिन्, वृद्धादित्यधिकारादिति

इति, उत्तरपदवृद्धौ सर्वं चे त्येष विधिः प्राप्नोती'ति ॥

[ दोषनिराकरणभाष्यम् ]

नैष दोषः। नैवं विज्ञायते—'उत्तरपदस्य वृद्धिरुत्तरपदवृद्धिरुत्तरपदवृद्धा'विति॥ कथं तर्हि ?॥ 'उत्तरपदस्येत्येवं प्रकृत्य या वृद्धिस्तद्वत्युत्तरपदे' इत्येवमेतद्विज्ञायते ॥

अवश्यं चैतदेवं विज्ञेयम्। तद्भावितग्रहणे सत्यपीह प्रसज्येत—सर्वः कारकः सर्वकारक इति ॥

(प्रदीपः) उत्तरपदस्येत्येवमिति। तत्र हि 'वृद्धौ सर्वं चे'त्यप्युच्यमाने वृद्धिमात्रस्योत्तरपदस्याऽभावात्सामर्थ्याद्वृद्धिमदुत्तरपदं ग्रहीष्यत इत्यतिरिच्यमानमुत्तरपदग्रहणं सामर्थ्यादुत्तरपदाधिकारं ज्ञमयति ॥

( उद्द्योतः ) तद्वत्युत्तरपदे इति। समासाक्षिप्तोत्तरपदशब्देन सामानाधिकरण्यायोत्तरपदस्येत्येवं वृद्धिर्यस्मिन्निति बहुव्रीहिरिति भावः ॥ तत्राधिकारलक्षणायां बीजमाह—तत्र हीति ॥ न च आ अवतीति औः, सर्वस्य औः सर्वौरित्यादौ वृद्धिरूपोत्तरपदसंभवः। न चैकादेशे व्यपवर्गाऽभावः, नेन्द्रस्येति निषेधेन पूर्वोत्तरपदसंबन्धिकार्यस्यैकादेशात्प्राक् प्रवृत्तिस्वीकारात्। तथा च सर्वशब्दान्तोदात्तत्वे शेषनिघातेन औकारस्यानुदात्तत्वे एकादेशस्य 'स्वरितो वानुदात्ते' इति पाक्षिकः स्वरितः स्यादिति वाक्यम्, तादृशानामभिधाने दृढतरमानाऽभावात्। स्वरितत्वाद्वाऽधिकारलाभ इति बोध्यम् ॥

[ द्वितीयदूषणनिराकरणार्थोक्तिप्रत्युक्तिभाष्यम् ]

यदप्युच्यते—"इह तावती भार्या यस्य तावद्भार्यः, यावद्भार्य इति च 'वृद्धिनिमित्तस्ये'ति पुंवद्भावप्रतिषेधः प्राप्नोती"ति ॥ नैष दोषः। नैवं विज्ञायते—वृद्धेर्निमित्तं वृद्धिनिमित्तं, वृद्धिनिमित्तस्येति ॥

कथं तर्हि ? ॥ वृद्धेर्निमित्तं यस्मिन्सोऽयं वृद्धिनिमित्तः, वृद्धिनिमित्तस्येति ॥

❀ राजलक्ष्मीः ❀

१ 'नैव'मित्यस्य 'यत'इत्यादिः। कथमिति। कथन्तर्हि विज्ञायते इत्यर्थः। प्रकृत्य-अधिकृत्य, प्रस्तुत्य वेत्यर्थः। २ विज्ञेयमिति। तद्भावितपक्षाश्रयणेऽप्येवं विज्ञेयमेवेति न तद्भावितपक्षाश्रयणे लाघवमिति न सिद्धान्तिमते गौरवमुद्भावनीयम्। ३ बहुव्रीहिरिति। 'उत्तरपदवृद्धि'शब्दे बहुव्रीहिसमास इत्यर्थः।

४ मानाभावादिति। एतद्भाष्यप्रामाण्येन तादृशानामनभिधानादित्याशयः। स्वरितत्वादिति-स्वरितत्वप्रतिज्ञयाऽधिकारावगतिरित्यर्थः। ५ द्वितीयं दोषमुद्धरति-यदपीति। ६ अस्य-'तद्धितस्ये'तिशेषः। ७ यस्मिन्-वृद्धि-

❀ शब्दकौस्तुभः ❀

स्थितम्। ततश्चाम्रगुप्तायनीय आम्रगुप्तायनिक इति न स्यात्। न च 'यमुन्दश्च सुषामा च वार्ष्यायणिः फिञः स्मृता' इति वृत्तौ त्रयाणामेव परिगणनादन्येभ्यश्छठकौ न भवत एवेति वाच्यं, भाष्यकृता परिगणनस्यानाश्रयणात्। अन्यथाऽत्रैव सूत्रे सौवीरेष्विति किं, तैकायनिरितिप्रत्युदाहरणं न सङ्गच्छेत। तैकायनिशब्दस्य तत्राऽपाठात्। अत एव 'यूनि लु'गित्यत्रोदाह्रियते–तिकस्यापत्यं—तिकादिभ्यः फिञ्–तैकायनिः। तस्यापत्यं युवा,–'फेश्छच', तैकायनीयस्तस्य छात्राः–, युवप्रत्ययस्य लुकि कृते वृद्धाच्छः–तैकायनीया इति। नहि सति परिगणने तैकायनेश्छः सम्भवति, न वा तल्लोपः। अत एव यूनि लुक्सूत्रे स्थित्वा परिगणनमर्वाचीनमिति हरदत्तादयोऽप्याहुः। अपि च फिञि सत्याम्रगुप्तायनेरपत्यं युवा–प्राग्दीव्यतोण्। तस्य 'ण्यक्षत्रियार्षञितो यूनि लुगणिञो'रिति लुक्याम्रगुप्तायनिरित्येवं रूपं पितरि पुत्रे चेष्यते। फिनि तु सति तन्न स्यात्, ञितः परत्वाऽभावात्। न चाऽब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानमिति तत्सिद्धिः, ब्राह्मणगोत्रे तदप्रवृत्तेः। किं च तद्भावितग्रहणपक्षे 'मालादीनां चे'त्यनारम्भणीयं स्यात्, 'प्रस्थेऽवृद्धमकर्क्यादीना'मित्यनेनैव पूर्वपदाद्युदात्तत्वसिद्धेः। अपि च वृद्धिशब्दे तन्त्रावृत्त्याद्याश्रयणाद्गौरवम्। 'मृजेर्वृद्धि'रित्यादिविधिप्रदेशेष्वितरेतराश्रयणपरिहाराय सूत्रशाटकवद्भाविसंज्ञा विज्ञेया स्यादिति चापरं गौरवमिति। अत्रोच्यते–आदैज्मात्रस्य वृद्धिसंज्ञा। नचैवं सर्वभासादावुक्तदोषः स्यादिति वाच्यम्, 'उत्तरपदवृद्धौ सर्वं चे'त्यत्र ह्युत्तरपदग्रहणं स्वर्यते। स्वरितेनाधिकारो विज्ञायते। तेनोत्तरपदस्येत्यधिकृत्य या वृद्धिर्विहिता सैव गृह्यते। यथा 'सर्वपञ्चालः'। 'सुसर्वार्द्धाज्जनपदस्ये'ति वृद्धिः। इदं च तद्भावितग्रहणेप्यवश्यं वक्तव्यमेव। अन्यथा सर्वः कारकः सर्वकारक इत्यादावतिप्रसक्तेः! एवं 'तावद्भार्ये'प्यदोषः। तन्त्रावृत्त्याद्याश्रयणेन वृद्धिशब्देन विहिताया वृद्धेर्यन्निमित्तं तत्रैव पुंवद्भावप्रतिषेधात्। वृद्धिशब्देन च विधौ कृत्स्ना वृद्धिः प्रतीयत इत्याशयेनैवोक्तं भाष्ये–'यत्कृत्स्नाया वृद्धेर्निमित्त'मिति। न च वैयाकरणभार्ये तथा सौवश्वभार्येऽतिप्रसङ्गः।

'अवगमयति' पा०।

**किं च वृद्धेर्निमित्तम् ? ॥**
**योऽसौ ककारो ञकारो णकारो वा ॥**
**अथवा-यः कृत्स्नाया वृद्धेर्निमित्तम् ॥**
**कश्च कृत्स्नाया वृद्धेर्निमित्तम् ? ॥**
**यस्त्रयाणामाकारैकारौकाराणाम्[2] ॥**

( प्रदीपः ) **वृद्धेर्निमित्तं यस्मिन्निति ।** निमित्तशब्दोपादानसामर्थ्याद्व्यधिकरणपदो बहुव्रीहि-राश्रीयतेऽन्यथा **वृद्धेस्तद्धितस्ये**[3]त्येव ब्रूयात् । वृद्धिनिमित्तत्वात् (च[3]) तद्धितस्य तद्धित एव वृद्धि-शब्देनाभिधायिष्यते । अथवा वृद्धेः संबन्धी[4] यस्त-द्धित इति वैयधिकरण्येन संबन्ध आश्रयिष्यते ॥ **योऽसौ ककार इति ।** कणञेषु सत्सु वृद्धिर्भवतीति तेषामेव निमित्तत्वम् ॥ **अथ वेति ।** निमित्तशब्दोपादानादेवाश्रितबहुत्वसङ्ख्यो वृद्धिशब्दः समस्यते,–वृद्धीनां निमित्तं वृद्धिनिमित्तमिति ।

( उद्द्योतः ) **अन्यथा वृद्धेरिति ।** वृद्ध्यात्मक[5]-तद्धिताभावाद्वृद्धिनिमित्तग्रहणम् [ इति भावः । नन्वर्श:-शब्दादर्शआद्यचि टाप्यर्शसेत्यादौ वृद्धिरूपसंभव इत्यरुचे-राह—**अथवेति** ॥ ] व्यधिकरणबहुव्रीह्याश्रयणसामर्थ्यादिव[6] व्यपदेशिवद्भावाऽप्रवृत्तिरिति भावः ॥ **तेषामेवेति ।** एवशब्दोऽप्यर्थे । विशिष्टस्य निमित्तत्वे विशेषणानामपि तत्त्वमिति भावः ॥ ननु वृत्तावभेदैकत्वसङ्ख्यावगतेर्बहुवचना-न्तेन विग्रहोऽनुपपन्नोऽत आह—**निमित्तेति ।** तत्र[7] कार्त्स्न्यं प्रतिपत्तिकालिकं न प्रयोगसमवायीति न पारिषद्या-भार्ये दोषः । न च वैयाकरणभार्येपि निषेधापत्तिः, इष्टापत्तेः । अत एवादैज्मात्रस्येति पक्षेऽत्र दोषानुद्भावनम् । तद्भावि-तानामेवेति पक्षेपि '**न य्वाभ्या**'मिति सूत्रे ऐजंशेपि वृद्धि-पदसंबन्धेन निषेधप्रवृत्तिरत्र सूपपादा । अत एव **देविका-शिंशपे**ति सूत्रे भाष्यकृता तत्संबन्धो दर्शित इत्याहुः ॥ आदैज्मात्रग्रहणादेव **मालादीनां चे**ति सार्थकम् , अन्यथा-स्याऽवृद्धत्वात्**प्रस्थेऽवृद्ध**मित्येव सिद्धे किं तेन ? ॥

[ संज्ञासूत्रत्वसाधनायाक्षेपवार्तिकप्रथमखण्डम् ]

*॥*॥संज्ञाधिकारः संज्ञासंप्रत्ययार्थः ॥*॥*

[ व्याख्याभाष्यम् ]

**'अथ संज्ञे'त्येवं प्रकृत्य वृद्ध्यादयः शब्दाः पठितव्याः ॥ किं प्रयोजनम् ? ॥ 'संज्ञासंप्रत्ययार्थः' । वृद्ध्यादीनां शब्दानां 'संज्ञे'त्येष संप्रत्ययो यथा स्यात् ॥**

( प्रदीपः ) **संज्ञाधिकार** इति वार्तिकम् । तस्य व्याख्यानम्–'अथ संज्ञेत्येव'मिति । अथ-शब्दः संज्ञायाः प्रस्तावद्योतनार्थः । **वृद्ध्यादीना-मिति ।** संप्रत्यय इत्येतदपेक्षया कर्मणि षष्ठी । वृद्ध्यादयः संज्ञात्वेन यथा प्रतीयेरन्नित्यर्थः ॥

( उद्द्योतः ) **वार्तिकमिति ।** सूत्रेऽनुक्तदुरुक्त-चिन्ताकरत्वं **वार्तिकत्वम्** । एतेन सूत्रव्याख्यानाय प्रवृत्तस्य कात्यायनस्याऽयुक्ता दुरुक्तचिन्तेत्यपास्तम् । **प्रस्तावेति ।** वार्तिकेऽधिकारशब्दोक्तः स इति भावः । वृद्ध्यादीनां संज्ञात्वाद्भेदनिबन्धनषष्ठ्यनुपपन्नेत्यत आह—**संप्रत्यय इति ।** भाष्ये—**संज्ञेत्येष इति ।** शब्दार्थज्ञानानामितरेत-राध्यासादिदं नानुपपन्नम् ॥

॥ राजलक्ष्मीः ॥

निमित्तणकारादिघटिते तद्धिते । १ **ककारः**–इत्सञ्ज्ञकः ककारः । एवमग्रेऽपि । **वृद्धेः**–वृद्धीनाम् । २ अस्य 'निमित्त'-मितिशेषः । ३ वृद्धिप्रयोजकीभूतस्य तद्धितस्येत्येवं सामाना-धिकरण्येनार्थलाभसम्भवात् । **निमित्तत्वात्**–प्रयोजकत्वात् । ४ **सम्बन्धी**–जनकः । ५ **ग्रहणं**–वृद्धिपदेन ग्रहणम् । ६ ननु तावद्भार्य इत्यादौ व्यपदेशिवद्भावेन वतुरेव वृद्धि-निमित्तमिति दोषस्तदवस्थ एवेत्यत आह–**व्यधिकरणेति ।** **तत्त्वम्**–निमित्तत्वम् । ७ **तत्र**–वृद्धिनिमित्ते । ८ **अत्र**–वैयाकरणभार्य इत्यत्र । ९ सूत्रकृत्संमतिमत्र पक्षे दर्शयति–**आदैजिति** । १० **अस्य**–मालादेः । ११ 'सञ्ज्ञाधिकार'इत्यस्य 'कर्त्तव्य'इति शेषः । १२ **प्रकृत्य**–'अथ सञ्ज्ञे'त्यधिकारसूत्रं कृत्वा॥ **वृद्ध्यादीनां**–वृद्ध्यादिपदघटितानां सूत्राणाम् । १३ **सम्प्रत्ययइति ।** सञ्ज्ञात्वप्रकारकं ज्ञानम् । १४ इति न भाष्यव्याख्याया उदक्षरत्वमित्याशयः । १५ विषयत्वं च तदर्थः । सञ्ज्ञात्वेन–सञ्ज्ञात्वप्रकारकत्वेन ॥ १६ सः–प्रस्तावः ।

॥ शब्दकौस्तुभः ॥

फलोपहितस्यैव निमित्तत्वेन विवक्षितत्वात् । ऐचौ प्रति फलोपधानमप्यस्तीति चेन्न, तयोर्वृद्धिशब्देनाऽविधानात् । के चित्तु यावद्वृद्धिजननयोग्यत्वे सति किंचित्फलोपहितस्त-द्धितो निमित्तशब्देनोच्यते । वैयाकरणे तु ऐचं प्रति तद्धितो न निमित्तं, निषेधसन्नियोगशिष्टतामात्रेणातिप्रसङ्गभङ्गात् । तेन वैयाकरणभार्ये नातिप्रसङ्गः । 'परिषदो ण्यः' पारिषद्या भार्येत्यादौ त्वाकारमात्रोपहितत्वेपि स्वरूपयोग्यता सकल-वृद्धिं प्रत्यस्तीत्याहुः । तस्मात्–**'आवृत्तौ गौरवापत्तेः शालीयादेरसिद्धितः । मालादीनां चेति लिङ्ग-**

१ अयं पाठो लिखिते न दृश्यते । २ 'कञणेषु' पा० ।

[ आक्षेपसाधकदृष्टान्तवार्तिकद्वितीयखण्डम् ]

*॥*॥ इतरथा ह्यसंप्रत्ययो यथा लोके ॥*॥*

[ व्याख्याभाष्यम् ]

**अक्रियमाणे हि संज्ञाधिकारे वृद्ध्यादीनां 'संज्ञे'त्येष संप्रत्ययो न स्यात् ॥**

**इदमिदानीं बहुसूत्रमनर्थकं स्यात् ॥**

**'अनर्थक'मित्याह ॥ कथम् ? ॥**

**'यथा लोके' ॥ लोके ह्यर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते । अर्थवन्ति तावत्—'देवदत्त गामभ्याज शुक्लां दण्डेन' 'देवदत्त गामभ्याज कृष्णा'मिति । अनर्थकानि—'दश दाडिमानि, षडपूपाः, कुण्डमजाजिनं, पललपिण्डः, अधरोरुकमेतत्कुमार्याः, स्फैयकृतस्य पिता प्रतिशीनः'–इति ।**

( प्रदीपः ) **यथा लोके इति ।** कात्यायनेनाऽसंप्रत्यये लोको दृष्टान्तत्वेनोपात्तः । भाष्यकारस्तु वाक्याध्याहारेणाऽनर्थकत्वे लोकं दृष्टान्तत्वेन योजयति,—**बहुसूत्रमिति ।**–बहुव्रीहिः । प्रकरणं चान्यपदार्थः, समाहारे द्विगुर्वा ॥ **अर्थवन्ति चेति ।** यथा लोकोऽर्थवन्ति प्रयुङ्क्ते एवमनर्थकान्यपीत्यर्थः । यावदाप्तत्वमाचार्यस्य न साधितं तावदनर्थकत्वशङ्का, झटिति समन्वयाऽनवगमाद्वा ॥ **दश दाडिमानीति ।** पदार्थानां समन्वयाऽभावादत्राऽऽनर्थक्यम् ॥

( उद्द्योतः ) **भाष्यकारस्त्विति ।** अधिकारं विनाऽसंप्रत्यये दृष्टान्तस्य लौकिकस्याऽभावादर्थापरिज्ञाने दृष्टान्तानुपयोगाच्चेति तद्भावः । **वाक्याध्याहारेणेति । इदमिदानी**मितिवाक्याध्याहारेणेत्यर्थः ॥ ननु द्विगावकारान्तोत्तरपदत्वात् स्त्रीत्वे ङीप्स्यादत आह—**बहुव्रीहिरिति ।** अन्यपदार्थस्याऽशाब्दत्वाद्बहुव्रीहिर्दुर्ज्ञेयोऽत आह–**समाहारे इति ।** पात्रादित्वात्स्त्रीत्वाऽभावः । अत एव त्रिसूत्रीत्यादि सङ्गच्छते । बहुसूत्रशब्दस्यैव तत्र पाठादित्यभिमानः ॥ नन्वनर्थकदृष्टान्तेऽ**र्थवन्ती**त्यादि व्यर्थमत आह–**यथेति ।** यद्यप्यन्वितार्थकपदसमूह एव **वाक्यम्**, तथापि भाष्ये पदसमूहे एव वाक्यशब्दः प्रयुक्तोऽतो'ऽनर्थकानि वाक्यानी'ति न विरुद्धम् ॥ **झटिति**–विनाचार्याचारादिज्ञानेन ॥ **पदार्थानाम्**–'कुण्डमजाजिन'मित्यादीनाम् । स्फ्यकृतोऽपत्यं **स्फैयकृतः** ॥

[ दूषणान्तरवार्तिकखण्डम् ]

*॥*॥ संज्ञासंज्ञ्यसन्देहश्च ॥*॥*

[ व्याख्याभाष्यम् ]

**क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसन्देहो वक्तव्यः ॥ कुतो ह्येतत्–'वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन' इति । न पुनरादैचः संज्ञा, वृद्धिशब्दः संज्ञीति ? ॥**

[ प्रथमदूषणनिराकरणवार्त्तिकावतरणभाष्यम् ]

**यत्तावदुच्यते–'संज्ञाधिकारः कर्तव्यः संज्ञासंप्रत्ययार्थः' इति ॥ न कर्तव्यः ॥**

[ सिद्धान्तसमाधानवार्तिकप्रथमखण्डम् ]

*॥*॥ आचार्याचारात्संज्ञासिद्धिः ॥*॥*

[ व्याख्याभाष्यम् ]

**आचार्याचारात्संज्ञासिद्धिर्भविष्यति ॥ किमिदम्—'आचार्याचारा'दिति ? ॥ आचार्याणामुपचारात् ।**

---

❀ **राजलक्ष्मीः** ❀

१ **इतरथा**–सञ्ज्ञाधिकाराभावे । **हि**–यतः । २ असम्प्रत्ययः–सञ्ज्ञात्वप्रकारकज्ञानाऽभावः । अस्य–'इदमिदानीं बहुसूत्रमनर्थकं स्या'दिति शेषो बोध्यः । **यथालोके**–लोकवत् । ३ इष्टापत्तिं निरस्यति–**इदमिति** आप्ततमोक्तम् । ४ 'भवाननर्थकं बहुसूत्र'मित्याह तत्कथमित्यर्थः । केचित्तु–**अनर्थकमित्याहेति ।** अत्रेष्टापत्तिरेवेत्याहेति भावः । **कथमिति ।** कथं प्रामाणिकस्यानर्थकोक्तितेत्यर्थः । समाधत्ते–**यथेति ।** एवञ्च लोके द्विविधवाक्यप्रयोगात्सार्थकवाक्यस्यापि पुंसोऽनर्थकवाक्यत्वं वक्तुंशक्यमित्याशयः' इत्येवं व्याचक्षते । ५ **अभ्याज**–आनय । प्रेरयेति वा । ६ **अर्द्धोरुकं**–चण्डातकम् । ('पैजामा''घाबरा')। ७ प्रतिशीनः–कृशः । ८ असंप्रत्यये–ज्ञानाभावे । 'उपात्त' इत्यस्य 'वार्त्तिके'इति शेषः । ९ बहुसूत्रानर्थकत्वे ।

१० **यावदिति ।** अस्य 'एवञ्च लोके उभयविधवाक्यप्रयोगा'दित्यादिः । ११ तद्वत्सूत्रेष्वपि द्वैविध्यं स्यादित्याशयः । १२ सन्देहनिवर्त्तकः शब्दोऽपि कश्चिद्वक्तव्य इत्यर्थः । 'परा सञ्ज्ञा, पूर्वः सञ्ज्ञी'ति वक्तव्यमिति यावत् ।

---

❀ **शब्दकौस्तुभः** ❀

**द्वयाप्तिन्यायात्तथैव च ॥ भाविसंज्ञात्वविज्ञाने गौरवाच्चेह निश्चितम् । आदैज्मात्रस्याऽविशेषाद्वृद्धिसंज्ञा विधीयते' ॥** अनर्थकं साध्वनुशासनं प्रयोगनियमार्थ-

( प्रदीपः ) **आचार्याचारादिति** । आचार्याणां व्यवहारादित्यर्थः ॥

( उद्द्योतः ) **उपचारो** नाम गौणी वृत्तिरिति भ्रमं व्युदस्यति-**व्यवहारादिति** । अनेन व्यवहाराच्छक्तिग्रह उक्तः । स च शक्तिग्राहकशिरोमणिः ॥

[ सिद्धान्तिसमाधानवार्तिकदृष्टान्तखण्डम् ]

*॥ * ॥ यथा लौकिकवैदिकेषु ॥ * ॥*

[ व्याख्याभाष्यम् ]

**तद्यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ॥ लोके तावन्मातापितरौ पुत्रस्य जातस्य संवृतेऽवकाशे नाम कुर्वाते 'देवदत्तो' 'यज्ञदत्त' इति । तयोरुपचारादन्येपि जानन्ति,-'इयमस्य संज्ञे'ति ॥ वेदे याज्ञिकाः संज्ञां कुर्वन्ति-'स्फ्यो यूपश्चषाल' इति। तत्रभवतामुपचारादन्येऽपि जानन्ति-'इयमस्य संज्ञे'ति ॥**

( उद्द्योतः ) भाष्ये-**वेदे याज्ञिका इति** । यज्ञकाण्डद्रष्टार ऋषय इत्यर्थः । वेदकर्तृत्ववत्संज्ञाकर्तृत्वं तेषां द्रष्टव्यम् ॥

[ दार्ष्टान्तिके सङ्गमनभाष्यम् ]

**एवमिहापि । इहैव तावत्केचिद्व्याचक्षाणा आहुः-'वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन' इति ॥ अपरे पुनः-'सिचि वृद्धि' रित्युक्त्वाऽऽकारैकारौकारानुदाहरन्ति । तेन मन्यामहे-'यया प्रत्याय्यन्ते सा संज्ञा, ये प्रतीयन्ते ते संज्ञिन' इति ॥**

( प्रदीपः ) **वृद्धिशब्दः संज्ञेति** । वृद्धिशब्दस्य प्रत्यायनशक्तिर्व्याख्यानेनैव प्रकाश्यते । यथादैचां वर्णानामिति दर्णितम् ॥ **अपर इति** । प्रदेशाद्वा संज्ञासंज्ञिव्यक्तिः संज्ञासूत्रार्थाद्वा प्रदेशार्थस्य व्यवस्थेत्यर्थः ॥

( उद्द्योतः ) भाष्ये-**इहैवेति** । वृद्धिरादैच्सूत्रे एवेत्यर्थः । असत्याः शक्तेर्व्याख्यानेनोत्पादयितुमशक्यत्वादाह-**वृद्धिशब्दस्येति** । **प्रत्यायनशक्तिः**-प्रत्यायने बोधजनने कारणीभूता शक्तिः । भाष्ये-**उदाहरन्तीति** । **वृद्धिरादैजि**ति सूत्रार्थकथनार्थं तत्प्रदेशत्वेन सिचिवृद्धिरित्युक्त्वा तदुदाहरणत्वेनाकार्षीदक्षैषीदश्रौषीदित्युदाहरन्तीत्यर्थः । एवं च वृद्धिशब्दस्य प्रत्यायकत्वमादैचां प्रत्याय्यत्वं निर्णीय **वृद्धिरादैच्**सूत्रस्य संज्ञाबोधकत्वं, वृद्धिशब्दस्य संज्ञात्वं च निर्णयन्तीति भावः । **तेन**-अपराचार्योक्तोदाहरणेन ॥

[ समाधानवार्तिकावतारणायाक्षेपानुवादभाष्यम् ]

**यदप्युच्यते-'क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसन्देहो वक्तव्य'इति ॥ [ न वक्तव्यः ॥ ]**

[ सिद्धान्तिनः समाधानप्रथमवार्तिकम् ]

*॥*॥ संज्ञासंज्ञ्यसन्देहश्च ॥*॥*

[ व्याख्याभाष्यम् ]

**संज्ञासंज्ञिनोश्चाऽसन्देहः सिद्धः ॥ कुतः ? ॥ 'आचार्याचारादेव' ॥ उक्त आचार्याचारः ॥**

[ सिद्धान्तिनो हेतुसूचकवार्तिकप्रथमखण्डम् ]

*॥*॥ अनाकृतिः ॥*॥*

[ व्याख्याभाष्यम् ]

**अथवाऽनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य 'देवदत्त' इति संज्ञा क्रियते ॥**

---

### ॐ राजलक्ष्मीः ॐ

वृत्तिकृतामाचार्याणामाचारादेव सञ्ज्ञासूत्रत्वनिश्चयसिद्धिरिति न तदर्थं संज्ञाधिकारवार्त्तिकादियत्नापेक्षेत्याशयः । १ **सच**-व्यवहारश्च ॥ २ **कृतान्तेषु**-सिद्धान्तेषु । ३ **संवृते**-प्रच्छन्ने । कुड्यादिपरिवृते गृहकोणे इति यावत् । **उपचारात्**-व्यवहारात् । ४ **तत्र भवतां**-मान्यानामृषीणाम् । ५ **संज्ञेति** । स्फ्यादिसञ्ज्ञेत्यर्थः । ६ **एवं**-लौकिकवैदिकव्यवहारवत् । **इहापि**-व्याकरणे ।

---

### ॐ शब्दकौस्तुभः ॐ

मादेशार्थमागमार्थं विशेषणविशेष्यभावार्थं चेदं सूत्रमिति षट्पक्षी तु भाष्ये एव निराकृतत्वादसम्भवदुक्तिकत्वाच्च नेह तन्यते । संज्ञासंज्ञिभावे सत्यपि का संज्ञा कः सञ्ज्ञीत्यत्र तात्पर्यग्राहकास्तु बहवो न्यायाः । तथाहि-**'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् । तच्छब्द एवकारश्च स्यादुपादेयलक्षण'**मित्यभियुक्तोक्तेस्तथैवाऽनुभवाच्च प्राथम्यन्तावत्संज्ञित्वे लिङ्गं, तच्चादेङ्गुण इत्यादौ स्पष्टमेव। वृद्धिसंज्ञासूत्रे तु मङ्गलार्थं वृद्धिशब्दस्यादौ प्रयोगेपि वक्ष्यमाणैर्न्यायान्तरैरादैचां संज्ञित्वे निर्णीते सत्यादैज्वृद्धिरित्याकारकपदानुपूर्वीज्ञानानन्तरमेव वाक्यार्थबोधाभ्युपगमात्तज्जनकीभूतानुपूर्वीज्ञाने आदैचामेव प्राथम्यान्न व्यभिचारः । पदानुपूर्वीज्ञानमेव चासत्तिज्ञानमित्युच्यते । इदं च शाब्दबोधे हेतुरिति यैर्नेष्यते तेषामासन्नाऽनासन्नकयोच्छेदः स्यात् ।

(प्रदीपः) अनाकृतिरिति। आकृत्या साहचर्याद्भेदो लक्ष्यते। तेनायमर्थः—वृद्धिशब्द एकत्वात्संज्ञा, आदैचां बहुत्वात्संज्ञित्वम्। लाघवार्थं हि संज्ञाकरणम्। यथा—'सर्वादीनि सर्वनामानी'त्यनेकस्यैका संज्ञा क्रियते, न त्वेकस्याऽनेका संज्ञा, प्रयोजनाऽभावात्। **आकृतिमन्त इति**। अवस्थाभेदेष्वपि स एवाऽयमिति प्रत्यभिज्ञानिमित्तं देवदत्तत्वादिकं सामान्यमस्तीत्याकृतिमत इत्युक्तम्॥

(उद्द्योतः) नन्वाकृतिर्जातिस्तद्भेदं आदैक्ष्वपि, तदभावस्तु न वृद्धिशब्देऽपीत्यत आह—**आकृत्येति**। बहुव्रीहिरिति भावः। 'अनाकृति'रित्येतन्न्यायसिद्धमित्याह—**लाघवार्थमिति**॥ नन्वेकस्यापि तव्यादेरनेकाः कृत्कृत्यप्रत्ययसंज्ञाः क्रियन्तेऽत आह—**प्रयोजनेति**। सति हि प्रयोजने तथा, प्रकृते तु न तथा, प्रयोजनाऽभावादिति भावः॥ **प्रत्यभिज्ञानिमित्तकम्**। प्रत्यभिज्ञाप्रमाणकमित्यर्थः। वस्तुतो भाष्ये **'आकृतिमत'** इत्यस्य भेदवत इत्यर्थः। अवस्थाभेदेन च तत्रारोपितः सः। आरोपितभेदेन च जातिसत्त्वे न मानम्। अत एव देवदत्तेत्यादौ न ङीषिति **कश्चित्**॥

[सिद्धान्तिनो हेतुसूचकवार्तिकद्वितीयखण्डम्]

॥*॥ *लिङ्गेन वा* ॥*॥

[व्याख्याभाष्यम्]

**अथ वा—किंचिल्लिङ्गमासज्य वक्ष्यामि—'इत्थंलिङ्गा संज्ञे'ति। वृद्धिशब्दे च तल्लिङ्गं करिष्यते, नादैच्छब्दे॥**

(प्रदीपः) **लिङ्गेन वेति**। कलादिना वर्णदोषेणेत्यर्थः॥

[प्रथमसमाधानखण्डनभाष्यम्]

**इदं तावदयुक्तं-यदुच्यते-'आचार्याचारा'दिति॥**

**किमत्राऽयुक्तम्?॥ तमेवोपालभ्य 'अगमकं ते सूत्र'मिति, तस्यैव पुनः प्रमाणीकरणमित्येतदयुक्तम्। अपरितुष्यन् खल्वपि भवाननेन परिहारेण-'अनाकृतिर्लिङ्गेन वे'त्याह॥**

(प्रदीपः) **तमेवोपालभ्येति**। यो हि सूत्रकारमुपालभते—'अगमकं ते सूत्र'मिति, स कथं वृत्तिकारान्प्रामाण्येनाश्रयतीत्यर्थः। **अपरितुष्यन्निति**। त्वयाऽपि परिहारान्तरं ब्रुवताऽऽचार्याचारो न प्रमाणत्वेनाश्रित इत्यर्थः॥

(उद्द्योतः) **स कथं वृत्तिकारानिति**। तस्यैवेति भाष्यस्य,-तदीयस्यैवेत्यर्थ इति भावः॥

[तृतीयहेतौ गौरवप्रदर्शनभाष्यम्]

**तच्चापि वक्तव्यम्॥**

(प्रदीपः) **तच्चापीति**। 'लिङ्गेन वे' त्येतद्वक्तव्यमित्यर्थः। 'अनाकृतिः संज्ञे'त्येतत्तु न्यायसिद्धत्वान्न वक्तव्यम्॥

(उद्द्योतः) **लिङ्गेन वेत्येतदिति**। लिङ्गासंज्ञः, इत्थंलिङ्गा संज्ञेति च वक्तव्यमित्यर्थः॥

[तृतीयहेतुस्वीकारे लाघवसूचकभाष्यम्]

**यद्यप्येतदुच्यते, अथवैतर्हि इत्संज्ञा न वक्तव्या। लोपश्च न वक्तव्यः। संज्ञालिङ्गमनुबन्धेषु करिष्यते। न च संज्ञाया निवृत्तिरुच्यते। स्वभावतः संज्ञा संज्ञिनं प्रत्याय्य स्वयं निवर्तते। तेनानुबन्धानामपि निवृत्तिर्भविष्यति॥**

(प्रदीपः) **अथवैतर्हीति**। एवं सतीत्यर्थः। ङकारादिष्वनुबन्धेषु कलादिकमासज्यते। ततश्च तेषां संज्ञात्वे सति **ङादात्मनेपद**मिति करिष्यते। संज्ञाश्च संज्ञिनं प्रत्याय्य स्वयं निवर्तन्त इतीत्संज्ञा लोपश्च न वक्तव्यौ भवत इत्यर्थः॥

(उद्द्योतः) **ङकारादिष्विति**। धात्वादिपठितेष्वित्यर्थः। ननु संज्ञालिङ्गे कृतेऽपीत्संज्ञाद्यभावे कथं तेषां निवृत्तिरत आह—भाष्ये—**स्वभावतः संज्ञेति**। तद्व्याचष्टे—**संज्ञाश्च संज्ञिनमिति**॥

❀ राजलक्ष्मीः ❀

१ **अर्थः**—वार्त्तिकार्थो निष्पन्नः। २ **सामान्यं**—देवदत्तत्वादिजातिः। ३ घटे पटभेदस्येव जातिर्नेति भेदस्य आदैक्षु सत्त्वमित्याशयः। **तदभावः**—जातेरत्यन्ताभावः। ४ **तथा**—अनेकाः सञ्ज्ञाः। ५ **तमेव**—सूत्रकारमेव। ६ **त्वयापि**—भाष्यकृतापि। ७**परिहारान्तरम्**—'अनाकृति'रित्यादिपरिहारान्तरम्। ८ सूत्रकारकृतसूत्रीयवृत्तिकाराणामित्यर्थः। ९ कलादिलिङ्गासङ्ग इत्यर्थः। १० **इतीति**। इत्यतस्तन्निवृत्तय इत्यर्थः।

❀ शब्दकौस्तुभः ❀

पदसमूहालम्बने सकलपदानां पदार्थस्मरणे च सकलपदार्थानां विषयत्वाऽविशेषात्। आवृत्तिश्च संज्ञात्वे लिङ्गम्, व्यवहारार्थमेव संज्ञाकरणात्। भेदाऽभेदाभ्यामपि संज्ञित्वसंज्ञात्वे

[ लिङ्गासङ्गपक्षदूषणभाष्यम् ]

**सिद्ध्यत्येवम्। अपाणिनीयं तु भवति॥**

( उद्द्योतः ) भाष्ये–अपाणिनीयं त्विति । अनन्तस्थलेषु दोषविशिष्टपठने, आनुनासिक्यादिवत् प्रतिज्ञाकरणे च दुर्ज्ञेयत्वादिति भावः ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**यथान्यासमेवाऽस्तु ॥**

[ यथान्यासे दोषस्मारणभाष्यम् ]

**ननु चोक्तम्—"संज्ञाधिकारः संज्ञासंप्रत्ययार्थ इतरथा ह्यसंप्रत्ययो यथा लोके" इति ॥**

[ उक्तदोषनिराकरणायोक्तिप्रत्युक्तिभाष्यम् ]

**न च यथा लोके तथा व्याकरणे। प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राऽशक्यं वर्णेनाऽप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण ! ॥**

**किमतो यदशक्यम् ? ॥**

**अतः संज्ञासंज्ञिनावेव ॥**

( प्रदीपः ) **प्रमाणभूत इति** । प्रामाण्यं प्राप्त इत्यर्थः। भू प्राप्तावित्यस्याऽऽधृषाद्वेति णिजभावे रूपम् । वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्तते ॥ **दर्भपवित्रेति** । प्रमादाऽभावं दर्शयति। **प्राङ्मुख इति** । प्राच्या अभ्युदयहेतुत्वात् । **महतेति** । मनःप्रणिधानं दर्शयति। एतच्च सर्वमागमाद्बोद्धव्यम्। एवमानर्थक्ये परिहृते संज्ञासंप्रत्ययाय पक्षान्तराणि प्रश्नमुखेन प्रतिक्षिपति–**किमत इति** ।

( उद्द्योतः ) ननु भवेर्जन्मार्थत्वेनाऽभूततद्भावप्रतीत्या च्वौ सति 'प्रमाणीभूत' इति स्यात्, तद्विवक्षायां तु प्रमाणमाचार्यः प्रकारान्तरेण भूत इत्यर्थः स्यादत आह–**प्रामाण्यमिति** । **वृत्तिविषये** इति प्रकृताभिप्रायम् ॥ **प्रमादः**–पिशाचादिसंबन्धः ॥ **आगमः**–संप्रदायः, प्रकृतभाष्योक्तिर्वा । भाष्ये–**अनर्थकेनेति** । बोध्यार्थरहितेनेत्यर्थः। तेन पारायणे सर्वेषामदृष्टार्थत्वेपि दृष्टप्रयोजनराहित्यरूपमनर्थकत्वं वर्णपदसूत्राणामस्त्येवेति न वक्ष्यमाणसूत्रादिप्रत्याख्यानाऽसङ्गतिः ॥ **संज्ञासंप्रत्ययाय**-संज्ञात्वनिश्चयाय । भाष्ये–**किमत इति**। अतस्तादृशकर्तृकत्वात्किं कथमर्थवत्त्वं, यत्–यतस्तत्–**अशक्यम्**–अशक्यनिरूपणमित्यक्षरार्थः ॥

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**कुतो नु खल्वेतत्–'संज्ञासंज्ञिनावेवे'ति, न पुनः साध्वनुशासनेऽस्मिञ्छास्त्रे साधुत्वमनेन क्रियते ? ॥**

( उद्द्योतः ) साध्वनुशासन इत्यनेन साधुत्वपक्षस्याऽकाण्डता वारिता ।

[ सिद्धान्तिन आक्षेपनिराकरणभाष्यम् ]

**"कृतमनयोः साधुत्वम्" ॥**

**कथम् ?॥ वृधिरस्मायविशेषेणोपदिष्टः प्रकृतिपाठे, तस्मात्क्तिन्प्रत्ययः ।**

**आदैचोऽप्यक्षरसमाम्नाये उपदिष्टाः॥**

(प्रदीपः) **कृतमनयोरिति** । आदैच्छब्दस्य द्वन्द्वत्वादनयोरिति द्विवचननिर्देशः। **आदैच इति** । तेषां च द्वन्द्वनिर्देशोऽयमादैच्छब्द इत्यर्थः॥

( उद्द्योतः ) द्वन्द्वत्वादिति । **'अनयो'**रित्यस्य 'पदयो'रिति विशेष्यम् । पदानामेव साधुत्वान्वाख्यानादिति भावः । भाष्ये–**अविशेषेणेति** । प्रत्ययविशेषमनादायेत्यर्थः । ननु वर्णसमाम्नाये आकाराद्युपदेशेऽप्यादैच्छब्दस्य किमागतमत आह–**तेषांचेति**। 'संज्ञाग्रहणद्वारेणे'ति शेषः॥ **तपरइति आदिरन्त्येनेति** च तेषां कृतयोरादैच्संज्ञयोर्द्वन्द्व-

### ॐ राजलक्ष्मीः ॐ

१ इदं लिङ्गासञ्जनं दूषयति–**सिद्ध्यतीति** । २ यदानर्थक्यं निवारयितुमशक्यं तत्र किं कुर्म इत्यर्थः । 'अनर्थकेन न भवितव्य'मित्युक्त्या प्रकृते किमायात'मिति वाऽर्थः। ३ उत्तरयति–**अत इति**। ४ **एतच्च**–दर्भग्रहणादि। तथाप्रणयनादिकमितियावत् । **आगमात्**–ऐतिह्यात् । ५ **परिहृते इति** । अस्य 'सार्थक्ये निर्णीते'इति शेषः । **सम्प्रत्ययाय**-तत्सिद्धये ।

६ **तत्**–अर्थवत्त्वम् । ७ पूर्वपक्षी प्रकाराऽसम्भवमजानञ्छङ्कते–**कुत इति** । ८ सिद्धान्ती समाधत्ते–**कृतमिति** । सिद्धमित्यर्थः । ९ **अस्मै**–प्रतिपत्त्रे । १० आकृतिपक्षसत्त्वादाह–**आदैचोपीति** ।

### ॐ शब्दकौस्तुभः ॐ

क चिन्निर्णीयेते । बहूनां ह्येका संज्ञोचिता, लाघवात् । नत्वेकस्य बह्वयः संज्ञा, गौरवात् । न्यूनाधिकव्यक्तिकास्तु बह्वयः संज्ञा इष्यन्त एव, तत्तत्प्रयुक्तकार्यवैलक्षण्यात् । कृत्कृत्य

१ 'भवते' पा० ।

२ वार्त्तिकवृद्वार्त्तिकमिदमिति केचित् ।

शास्त्रेण कृतं साधुत्वमित्यर्थः। ऐजित्यपि तन्मूलकादिरन्त्येनेत्यनेन बोधितमित्याशयेन भाष्ये–**अक्षरसमाम्नाये उपदिष्टा** इत्युक्तम् ॥

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**प्रयोगनियमार्थं तर्हीदं स्यात्—'वृद्धिशब्दात्परे आदैचः प्रयोक्तव्या'–इति ॥**

( प्रदीपः ) **प्रयोगनियमार्थमिति** । 'आदैज्वृद्धि'रिति प्रयोगो मा भूदित्यर्थः ॥

[ सिद्धान्तिन उक्ताक्षेपनिराकरणभाष्यम् ]

**नेह[2] प्रयोगनियम आरभ्यते ॥ किं तर्हि ?॥ संस्कृत्य–संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवति। तद्यथा–'आहर पात्रम्', 'पात्रमाहरे'ति ॥**

( प्रदीपः ) **नेहेति**। प्रयुज्यत इति प्रयोगः। तस्यै[3] स्वतन्त्रस्य पदस्य प्रयुज्यमानस्य नियमो नारभ्यते, अपि तु पदावयवस्य प्रकृतिप्रत्ययोपसर्जनागमादिरूपस्य। लोके च केवल एव वृद्धिशब्दः प्रयुज्यत इति न तस्याऽनेन नियमः क्रियते, लोके च प्रयुक्तानामिदमनुशासनम् ॥

( उद्द्योतः ) ननूपसर्जनं पूर्वं, परश्चेत्यादिभिः प्रयोगनियम आरभ्यत एवेत्यत आह—**प्रयुज्यत इति ॥ स्वतन्त्रस्येति**–गत्युपसर्गनिरासः। तौ हि द्योतकत्वात्परतन्त्रौ। **पदावयवस्येति। आदिना**–द्योतकाः। युक्त्यन्तरमाह—**लोके चेति**। शिष्टलोकाभिप्रायम्। प्रयुक्तानां चेदमनुशासनमिति भावः। **केवलः**–आदैच्पदाऽसंबद्धः ॥ भाष्ये–**संस्कृत्येति**। साधुत्वेनान्वाख्यायेत्यर्थः ॥ **अभिसंबन्धः**–पौर्वापर्यलक्षणः ॥

[ सिद्धान्तिन एव आक्षेपोद्भावनभाष्यम् ]

**आदेशास्तर्हीमे स्युः। वृद्धिशब्दस्याऽऽदैच आदेशाः ॥**

[ आक्षेपनिराकरणभाष्यम् ]

**षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते । न चात्र[6] षष्ठीं पश्यामः ॥**

( प्रदीपः ) **षष्ठीनिर्दिष्टस्येति**। स्थानशब्दोऽर्थवाची। तिष्ठन्त्यस्मिञ्शब्दा इति स्थानम्। न च वृद्धिशब्दार्थमादैचो वक्तुं शक्तास्तेनाऽत्र षष्ठ्यर्थाऽभावादिति तात्पर्यम्। तथा हि षष्ठ्यभावेऽपि तदर्थसद्भावाद्भवत्येव स्थान्यादेशभावः, यथा '**नाभि नभं च' 'परस्त्री परशुं चे**'ति ॥

( उद्द्योतः ) षष्ठ्यभावेऽपि **नाभि नभ**चेत्यादावादेशदर्शनादाह—**स्थानेति**। '**षष्ठीस्थाने** इति सूत्रगत' इति शेषः। तत्र हि सूत्रे स्थानशब्दोऽधिकरणव्युत्पत्त्याऽर्थवाची, भावव्युत्पत्त्या प्रसङ्गवाची च तन्त्रेणोपादीयते। अन्यथा केवलाऽर्थशब्दं प्राप्तिशब्दं वोपाददीत। एवंच–याऽनियोगा षष्ठी सा प्रसङ्गनिरूपितसंबन्धार्थिकैवेत्येकोऽर्थः। द्वितीये तु षष्ठीशब्दो लक्षणया स्थानिपरः। '**स्थाने**' इति सप्तमी–वाच्यस्यार्थस्याधिकरणत्वविवक्षया बोध्या। **योग**शब्दश्च युज्यत इति व्युत्पत्त्या आदेशवाची, ततोऽर्शआद्यच्। तेन 'स्थानी स्वार्थाभिधानसमर्थादेशवा'नित्यर्थं इति भावः ॥ भाष्यस्य तु **षष्ठीनिर्दिष्टस्य**–स्थानिनो योऽर्थस्तस्य–वाचकाः उच्यन्ते। न चात्रादेशु **षष्ठीनिर्दिष्ट(स्य)**–स्थानिनोऽर्थानभिधेयत्वेन पश्याम इत्यर्थः ॥ **षष्ठ्यर्थाभावादिति**। षष्ठीबोध्यस्थान्यर्थाभिधानसामर्थ्याऽभावादिति भावः। **तदर्थसद्भावादिति**। आदेशस्य स्थान्यर्थबोधनसामर्थ्यसद्भावादित्यर्थः॥ वस्तुतस्तु स्थानं प्रसङ्ग एव, स चार्थवत एव, अर्थप्रत्यायनाय शब्दप्रयोगात्। एवं चाऽर्थप्रयुक्त एव स्थान्यादेशयोः संबन्ध इति स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति वदन्ति ॥

[ पूर्वपक्षिण आगमत्वशङ्काभाष्यम् ]

**आगमास्तर्हीमे स्युर्वृद्धिशब्दस्यादैच आगमाः ॥**

[ सिद्धान्तिन उक्ताशङ्कानिरासभाष्यम् ]

**आगमा अपि षष्ठीनिर्दिष्टस्यैवोच्यन्ते, लिङ्गेन वा। न चात्र षष्ठीं, न खल्वप्यागमलिङ्गं पश्यामः ॥**

( प्रदीपः ) **आगमा अपीति**। अत्राप्यर्थो-

---

**❀ राजलक्ष्मीः ❀**

१ **इदं**–वृद्धिरादैजिति सूत्रम्। 'ते प्राग्धातो'रितिवदित्याशयः। २ सिद्धान्ती दूषयति–**नेहेति। इह**–व्याकरणे। ३ लोकेऽर्थबोधनाय प्रयुज्यमानस्येत्यर्थः। 'तत्रे'ति शिवदत्तशोधितः पाठस्तु तत्पाण्डित्यमेवावगमयति। ४ नहि नियतं पूर्वत्रैव वृद्धिपदं शिष्टाः प्रयुञ्जते इतिभावः। ५ षष्ठ्यन्तार्थबोधनसमर्थाः। ६ **अत्र**–आदेशु ॥ ७ '**वाचकाः**–आदेशाः'। इति पा०। ८ 'चे'ति पाठा०। ९ ननु 'नव्याभ्या'मित्यत्र षष्ठ्यभावेऽप्यागमत्वं दृश्यतेऽत आह–**अत्रापीति**।

---

**❀ शब्दकौस्तुभः ❀**

प्रत्ययसंज्ञावत्, तद्धिततद्राजप्रत्ययसंज्ञावच। लघ्वक्षरत्वमपि टिघुभादौ संज्ञालिङ्गं यथायथं बोध्यम्। इह त्वावृत्त्याऽभेदेन च वृद्धिशब्दः संज्ञेति स्थिते तद्बलेन श्रुतानुपूर्वीभङ्गादादैचां

ऽपेक्ष्यते । अनागमकानामर्थे सागमका इत्यर्थः ॥ **लिङ्गेन वेति ।** देशविशेषप्रतिपत्तये टकारादिलिङ्गं तत्र क्रियत इत्यर्थः ॥

( **उद्द्योतः** ) **अत्रापीति ।** वस्तुतोऽवयवषष्ठ्यैवागमा उच्यन्ते इत्यर्थो ( भाष्यस्य ) । कलादिलिङ्गभ्रमव्यावृत्तये आह–**देशेति ।** देशविशेषप्रतिपत्त्यर्थयत्नसाध्यागमप्रतीतिर्यत्नाऽभावे नेत्यर्थः ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**इदं खल्वपि भूयः–सामानाधिकरण्यमेकविभक्तित्वं च । द्वयोश्चैतद्भवति ॥ कयोः ?॥ विशेषणविशेष्ययोर्वा संज्ञासंज्ञिनोर्वा ॥ तत्रैतत्स्याद्विशेषणविशेष्ये इति ॥ तच्च न, द्वयोर्हि प्रतीतपदार्थकयोर्लोके विशेषणविशेष्यभावो भवति। न चादैच्छब्दः प्रतीतपदार्थकः। तस्मात्संज्ञासंज्ञिनावेव ॥**

( **प्रदीपः** ) **इदं खल्वपीति ।** विशेषणविशेष्यभावनिराकरणेन संज्ञापक्षं स्थापयति । देवदत्तः पचतीत्यस्ति सामानाधिकरण्यं न त्वेकविभक्तित्वम् । गौरश्व इत्यस्त्येकविभक्तित्वं न तु सामानाधिकरण्यमित्युभयोरुपादानम् । संज्ञासंज्ञिनोरप्यस्ति विशेषणविशेष्यत्वं, प्रसिद्ध्यप्रसिद्धिवशात्तु भेदेनोपादानम् । तत्तु सामानाधिकरण्यं शब्दयोरेवं केचिदिच्छन्ति । द्वाभ्यां शब्दाभ्यां भिन्नप्रवृत्तिनिमित्ताभ्यामेकस्याऽधिकरणस्याभिधेयस्य प्रतिपादनाद्विशेषणविशेष्याऽर्थप्रतिपादनाच्च विशेषणविशेष्यत्वम् । अन्ये तु नीलमुत्पलमिति प्रवृत्तिनिमित्तयोर्जातिगुणयोरेकमधिकरणमाश्रय इति सामानाधिकरण्यं विशेषणविशेष्यभावं चार्थयोरेव मन्यन्ते ॥

**नचादैच्छब्द इति ।** न ह्यस्य कश्चिल्लौकिकोऽर्थः प्रसिद्ध इत्यर्थः ॥

( **उद्द्योतः** ) **इदं खल्वपीति** भाष्यं पूर्वोक्तपक्षाणामसंभवं प्रतिपादयति । [ तद्व्याचष्टे–**विशेषणेति ।** ] **अस्तिसामानाधिकरण्यमिति ।** न च तादृशे संज्ञासंज्ञित्वसंभावनेति भावः । **इत्युभयोरिति ।** विशेषणविशेष्यत्वसंज्ञासंज्ञित्वसंभावनास्थलप्रदर्शनायेत्यर्थः । **संज्ञासंज्ञिनोरपीति ।** उद्भिदादिसंज्ञा हि स्वरूपेणैव संज्ञिनं सजातीयाद्यागान्तरादिजातीयाच्च होमादेर्व्यवच्छिनत्तीति विशेषणम् । संज्ञी च व्यवच्छेद्यः सन्विशेष्यः । विषयताविशेषरूपमपि तत्तयोरस्त्येवेति भावः । **प्रसिद्धीति ।** '**द्वयोर्हि प्रतीते**'त्यादिना भाष्ये उक्तमेतत् । यद्वा सत्यपि व्यवच्छेद्यव्यवच्छेदकभावे संज्ञासंज्ञिनोर्विशेषणभावो लोके न प्रसिद्ध इत्यर्थः । ननु सामानाधिकरण्यं नाम द्वयोः शब्दयोरेकाभिधेयसंबन्धः, तत्तु न युक्तम् । सामानाधिकरण्यस्य शब्दधर्मत्वेन विशेषणत्वादेश्चार्थधर्मत्वेन **विशेषणविशेष्ययोः सामानाधिकरण्य**मिति भाष्याऽसङ्गतेः । संज्ञासंज्ञिनोरेकाभिधेयसंबन्धाऽभावेन 'संज्ञासंज्ञिनोर्वा सामानाधिकरण्य'मित्यस्याप्यसङ्गतेरत आह–**तत्त्विति । भिन्नप्रवृत्ती**'त्यनेन पर्यायनिरासः । वस्तुत इदं चिन्त्यम् । अघ्ने देवि **सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्ये नामानी**'त्यादौ 'नामन्त्रिते समानाधिकरणे'इत्यस्य व्यावृत्तये तत्र सामान्यवचनग्रहणमिति तत्सूत्रस्थभाष्यविरोधापत्तेः । युगपदधिकरणवचनतापक्षे पट्वीमृद्व्यावित्यत्र समाना-

---

**❀ राजलक्ष्मीः ❀**

**अर्थः**–षष्ठ्यर्थः । षष्ठी स्थान इत्यनेन आगम्यर्थाभिधानसमर्थ आदेश इत्यर्थाश्रयणात् ।

१ नन्वागमानामानर्थक्येन तद्बाधितमत आह–**अनागमेति ।** २ **तत्र**–आगमे । ३ **वस्तुत इति ।** लिङ्गशून्यस्थलेऽवयवषष्ठ्याऽऽगमा उच्यन्त इत्यर्थः । ४ नन्वाभ्यामित्यत्र तु पूर्वादिग्रहणयत्नेनागमत्वप्रतीतिरित्याशयः । ५ **भूयः**–संज्ञासंज्ञिभावनिर्णये दृढतरं प्रमाणं । 'गृह्णाणे'तिशेषः । **भूयः**–बहुत्र स्थले इतिवाऽर्थः । ६ तत्र च विशेष्यविशेषणभावशङ्का स्यात्, सा च नोचितेत्यर्थः । **प्रतीतेति ।** प्रसिद्धेत्यर्थः । **न च**–नहि । ७ **प्रतीतेति ।** लोके प्रसिद्धेत्यर्थः । ८ 'एकविभक्तिकयोर्विशेषणविशेष्यभाव' इत्युक्तौ गौरश्वइत्यादावतिव्याप्तिः, 'समानाधिकरणयोर्विशेषणविशेष्यभाव' इत्युक्तौ 'देवदत्तः पचती'त्यादौ तदापत्तिरत उभयोपादानमित्याशयः । ९ लोके प्रसिद्धयोरेव विशेषणविशेष्यभावः, सञ्ज्ञा त्वप्रसिद्धस्यापीत्याशयः । '**तत्तु**' इत्यत्र '**तत्रे**'ति पा० ।

१० **शब्दयोरिति ।** अर्थरूपे एकाधिकरणे वाच्यतासम्बन्धेन शब्दौ तिष्ठत इति युक्त्या शब्दधर्मता तस्येत्याशयः । ११ **भिन्नेति ।** भिन्नभिन्नेत्यर्थः । **अधिकरणस्य**–अर्थस्य । १२ 'प्रतिपादना दित्यस्य 'सामानाधिकरण्य'मित्यनेनान्वयः । **प्रतिपादनाच्चे**त्यस्य अग्रे हेतुता । १३ **प्रवृत्तिनिमित्तयोः**–प्रवृत्तिनिमित्तरूपार्थयोः । **जातीति ।** उत्पलत्वनीलत्वयोरित्यर्थः । **एकम्**–कमलरूपम् । १४ **अर्थयोः**–प्रवृत्तिनिमित्तयोः । १५ त्वन्मते तत्र सामानाधिकरण्यस्यैवाऽभावेन तदसङ्गतिः स्पष्टैवेत्याशयः । नन्वर्थयोर्विशेष्यविशेषण-

---

**❀ शब्दकौस्तुभः ❀**

प्राथम्यमपि योजनीयम् । यद्वा–'स्वेच्छया संज्ञाः क्रियन्ते' इति पक्षं विहाय 'व्यवहाराय नियम' इति पक्षे योज्यम् । आद्येऽपि कार्यकालपक्षाश्रयणेन वा समाधेयमिति दिक् ।

धिकरणलक्षणपुंवद्भावशङ्कापरभाष्यविरोधापत्तेश्च । विशेषण- त्वादिकं चोपपद्यत इत्याह–**विशेषणेति** । भाष्ये–'**संज्ञासंज्ञिनो**'रित्यत्र संज्ञिपदेन संज्ञिसमर्पकः शब्दोऽभिप्रेतः। संज्ञाशब्दे च शब्दः प्रवृत्तिनिमित्तं, संज्ञिनि तत्सम्बन्धात् । संज्ञिबोधकशब्दे च संज्ञिनि तत्सम्बन्धात्। संज्ञिबोधकशब्दे च संज्ञिगततत्तद्धर्मः प्रवृत्तिनिमित्तम् । एवं च 'वृद्धिशब्दवदभिन्ना आदैच' इति बोधः । वृद्धिशब्दवत्त्वं च लोकसिद्धतादात्म्येनेत्याशयः । **अन्ये त्विति**। संज्ञासंज्ञिनोस्तूक्तं प्रवृत्तिनिमित्तमिति सामानाधिकरण्यम् । एकविभक्तिकत्वं त्वत्र पक्षे शब्दद्वारा बोध्यम्। विभक्तिशब्देन शक्तिर्वा । भाष्ये **संज्ञासंज्ञिनोरि**त्यस्य तत्प्रवृत्तिनिमित्तयोरित्यर्थः । **अन्येत्वि**ति मतेऽरुचिबीजं तु'प्रतीतपदार्थकयो'रिति बहुव्रीहिस्वरसभङ्गः । **विशेषणविशेष्यभावो भवती**'त्यस्य तदर्थप्रतिपादकत्वं भवतीत्यर्थः । ननु वैयाकरणानामादैच्छब्दः प्रतीतपदार्थक एवेत्यत आह–**नहीति** । वृद्धिशब्दार्थान्वययोग्य'इति शेषोऽत्र द्रष्टव्यः । केचित्तु[1] वृद्ध्यादिशब्दाः शब्दपरा एव । 'वृद्धिशब्दाऽभिन्ना आदैच' इति बोधः । तदुक्तं **हरिणा**–

**'वृद्ध्यादयो यथा शब्दाः[2] स्वरूपोपनिबन्धनाः ।**
**आदैच्प्रत्यायितैः शब्दैः सम्बन्धं यान्ति संज्ञिभिः॥'**

इति । सामानाधिकरण्यं चैकविशेष्यकप्रतीतिजनकत्वमित्याहुः॥

[ सिद्धान्तिनः सम्भाव्य सन्देहोत्थापनभाष्यम् ]

**तत्र[3] त्वेतावान्सन्देहः–'कः संज्ञी का संज्ञे'ति ॥ स चापि क सन्देहः ?॥**

**यत्रोभे[4] समानाक्षरे ॥**

**यत्र[5] त्वन्यतरल्लघु सा संज्ञा, यद्गुरु स संज्ञी ॥ कुत एतत् ? ॥**

*॥*॥ लघ्वर्थं[1] हि संज्ञाकरणम् ॥*॥*

**तत्राप्ययं[6] नावश्यं गुरुलघुतामेवोपलक्षयितुमर्हति ॥**

**'किं तर्हि ? अनाकृतितामपि ॥**

*।*।अनाकृतिः[1] संज्ञा, आकृतिमन्तः संज्ञिनः।*।*

**लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥**

( **उद्द्योतः** ) भाष्ये **यत्रोभे इति** । प्रत्यये अनीयरित्यादौ । **लघ्वर्थमि**त्यस्य लाघवार्थमित्यर्थः ॥

[ द्वितीयसमाधानवार्त्तिकतद्व्याख्याभाष्यम् ]

*[ ॥*॥ आवार्त्तिन्यः सञ्ज्ञाः ॥*॥ ]*

**अथवाऽऽवर्तिन्यः[7] संज्ञा भवन्ति । वृद्धिशब्दश्चावर्तते, नादैच्छब्दः । तद्यथा–इतरत्रापि देवदत्तशब्द आवर्तते, न मांसपिण्डः ॥**

( **प्रदीपः** ) **आवर्तिन्य इति** । देवदत्तादिशब्दो हि दानादिप्रतिपादनायावर्तते ॥

( **उद्द्योत** ) **न मांसपिण्ड इति** । दूरस्थस्यापि नामोच्चारणमात्रेण दानादिसंभवादिति भावः ॥

[ तृतीयसमाधानवार्तिकतद्व्याख्याभाष्यम् ]

*[ ॥*॥ पूर्वोच्चारितः[8] सञ्ज्ञी परोच्चारिता सञ्ज्ञा ॥*॥ ]*

**अथवा पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा ॥ कुत एतत् ? । सतो हि कार्यिणः कार्येण भवितव्यम् । तद्यथा–इतरत्रापि सतो मांसपिण्डस्य 'देवदत्त' इति संज्ञा क्रियते ॥**

( **प्रदीपः** ) **अथवेति** । सत्यसति वा संज्ञिनि बुद्ध्या विषयीकृते[9], शब्देन[2] पूर्वनिर्दिष्टे संज्ञा प्रवर्तत इत्यर्थः ॥ ततश्च–**अदेङ्गुण** इत्यादावदेङादयः संज्ञिनो, गुणादयः संज्ञाः ॥

( **उद्द्योतः** ) **सतो** हीत्यादिना न भावरूपं विवक्षितमभावस्यापि लोपादिसंज्ञादर्शनात् । नापि विद्यमानत्वं, प्रत्ययविधौ संज्ञाविशिष्टस्यापि विधानादत आह–**बुद्ध्येति**।

---

❀ **राजलक्ष्मीः** ❀

भाव इतिपक्षे नील्लोत्पलरूपार्थस्य विषयताश्रयकमलरूपेणैक्यात्कथं विशेषणविशेषणभाव इति चेदुच्यते, ज्ञानीयविषयतायाः प्रकारताविशेष्यताभेदेन भेदाद्विषयस्यार्थस्यापि भिन्नत्वाद्भिन्नयोरर्थयोरिति मते न काऽप्यनुपपत्तिरिति ।

१ **केचित्तु**–तत्त्वविदः । २ स्वरूपबोधकाः । **शब्दैः**–आदैजादिभिः । ३ **तत्र**–सञ्ज्ञासूत्रत्वे निर्णीते । **सन्देहः**–सन्देहः स्यात् । ४ **उभे**–उद्देश्यविधेये । ५ **यत्र**–वृद्धिरादैजित्यादौ । **यत्**–आदैजिति । ६ **तत्र**–निर्णयेऽपि । **अयं**–प्रतिपत्ता । शिष्यो वा । **गुरुलघुतां**–सञ्ज्ञासञ्ज्ञिबोधिकां गुरुलघुताम् । **अनाकृतिताम्**–'उपलक्षयितुमर्हती'तिशेषः । **अनाकृतिः**–एका । ७ **आवर्तिन्यः**–पुनःपुनः प्रदेशेषूच्चार्यमाणाः । ८ ननु क्वचित्सञ्ज्ञाया अप्यावृत्तिर्न, गुह्यस्यापि नाम्नः श्रुत्यादौ प्रतिपादनादत आह–**अथवेति**। ९ बुद्ध्या विषयीकृते सत्यसति वा सञ्ज्ञिनीत्यन्वयः ।

---

१ नेदं वार्त्तिकं, भाष्यमिदमित्यन्ये ।

२ 'शब्दे च पूर्वं निर्दिष्टे'इति महाशोधितस्तु पाठोऽशुद्धएव ।

अत एव **सावर्णिर्भविता मनु**रित्यादौ न दोषः। एवं च सच्छब्देन पूर्वं बुद्धया विषयीकृतत्वं विवक्षितमित्यर्थः ॥ बुद्धिसत्तासमाविष्ट एव चार्थः शब्देन बोध्यत इति सिद्धान्तात्। तत्त्वं हि पूर्वोच्चारितस्यैव भवतीत्याह—**शब्देन पूर्वमिति** ॥

[ वार्त्तिकावतारणायाक्षेपभाष्यम् ]

**कथं[2] 'वृद्धिरादै'जिति ?॥**

[ समाधानवार्त्तिकतद्व्याख्याभाष्यम् ]

*[ ॥*॥ वृद्धिरादैजिति[3] मङ्गलार्थम् ॥*॥ ]*

**एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्। माङ्गलिक[4] आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते, वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाऽध्येतारश्च वृद्धियुक्ता यथा स्युरिति ॥ सर्वत्रैव हि व्याकरणे पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा—'अदेङ्गुणः' इति यथा ॥**

**( प्रदीपः )** इह तु मङ्गलार्थोऽन्यथा पाठक्रमः, आर्थस्त्वन्यः। अन्ये[5] तु सिद्धिहेतवो भविष्यन्ति। **'अपृक्त एकाल्प्रत्यय'** इतितु परिभाषा, न संज्ञेति नास्ति व्यभिचारः। अपृक्तशब्देन ह्येकाकी कथ्यत इत्यनेनाऽनियमेन ग्रहणे प्राप्ते नियमः क्रियते ॥

**( उद्द्योतः )** भाष्ये—**माङ्गलिको**—मङ्गलप्रयोजनः। **महतः**—अर्थतः। एकैकं सूत्रं शास्त्रमिति **शास्त्रौघस्ये**त्युक्तम्। **मङ्गलादीनी**त्यादिना स्वप्रयोजनं श्रोतृप्रयोजनं चोक्तम्। **प्रथन्ते**—विस्तृतानि भवन्ति। तेन समाप्तिरर्थाक्षिप्ता। **आर्थस्त्वन्यथेति।** आदैज्वृद्धिरित्याकारः। आनुपूर्वीज्ञानस्याऽऽसत्तिविधया हेतुत्वादिति भावः। कथं तर्हि वृद्धिशब्दस्य संज्ञात्वप्रतीतिरत आह—**अन्ये त्विति**। लाघवादयः। आदैचो वृद्धिपदाऽभिन्ना इत्यर्थः। एवंचानुपूर्वीव्यत्यासेन विलम्बेन बोधजनकशब्दोच्चारणं मङ्गलार्थं क्षम्यतामिति बोध्यम्। अत्रैकशब्दः प्रथमार्थकः, प्रथमं तथाकरणं मङ्गलामेव। एवं चान्यत्रा[6]पि तथाकरणमुद्देश्यविधेयभावेनान्वये तादृशस्यैव साधुत्वमिति भ्रमवारणार्थमित्याहुः। **परिभाषेति**। तदा हि 'यत्राऽपृक्तपदं तत्रैकालित्याद्युपतिष्ठते'इत्यर्थात्प्राथम्यं युक्तमेवेत्यर्थः। वस्तुत इदं **वृद्धि**सूत्रेऽपि सुवचम्। किं चैवमपृक्तसंज्ञायामित्यादि भाष्यवार्त्तिकव्यवहारानुपपत्तिः। केचित्तु परिभाषात्वेपि **'एकालप्रत्यय'** इत्येतदुद्देशेनाऽपृक्तपदवद्देशस्थत्वं विधेयम्, एदपरत्वार्थं तत्रापि लक्षणावश्यकत्वेन सामानाधिकरण्यान्वयार्थं तावत्पर्यन्तलक्षणाया उचितत्वात्। पद[7]त्रयाध्याहारे गौरवाच्च। एवं च परिभाषात्वेऽप्युद्देश्यत्वेन तस्यैव पूर्वं पाठो युक्तः। आनुपूर्वीव्यत्यासाद्बोधस्तूभयोः सम इति वदन्ति ॥

[ सिद्धान्तिभाष्यम् ]

**दोषवान्खल्वपि संज्ञाधिकारः। अष्टमेऽपि हि संज्ञा क्रियते[8]—'तस्य परमाम्रेडित'-मिति। तत्रापीदमनुवर्त्यं स्यात् ॥**

**( उद्द्योतः )** भाष्ये—**अनुवर्त्यं स्यादिति**। तच्चाऽसंबद्धबहुव्यवायादशक्यमिति भावः ॥

[ समाधानान्तरभाष्यम् ]

**अथवाऽस्थानेऽयं यत्नः क्रियते। न हीदं लोकाद्भिद्यते। यदीदं लोकाद्भिद्येत ततो यत्नार्हं स्यात्। तद्यथा—अगोज्ञाय कश्चिद्गां सक्थनि कर्णे वा गृहीत्वोपदिशति—'अयं गौ'रिति। न चास्मायाचष्टे 'इयमस्य संज्ञे'ति। भवति चाऽस्य संप्रत्ययः ॥**

**( प्रदीपः ) अस्थान इति।** अन्तरेणापि संज्ञाशब्दप्रयोगं लोकव्यवहारवदत्र[11] संज्ञासंज्ञिसंबन्धः सिध्यतीत्यर्थः ॥

---

॥ राजलक्ष्मीः ॥

१ **तत्त्वं**—पूर्वं बुद्धयाविषयीकृतत्वम्। २ कथमत्र सञ्ज्ञायाः पूर्वं प्रयोग इत्यर्थः। ३ "वृद्धिरादैजिति मङ्गलार्थम्" इति वार्त्तिकमासीत्तदिदानीं लुप्तं तद्व्याख्यैव 'कथ'मित्यादि 'यथे'त्यन्तमिति **गौडाः**। अन्येतु नेदं वार्त्तिकं भाष्यमेवैतदित्यभिप्रयन्ति। ४ **माङ्गलिकः**—छात्राणां मङ्गलं चिकीर्षुः। ५ **अन्ये**—लध्वक्षरत्वादयस्तु। **सिद्धिहेतवः**—प्रकृते सञ्ज्ञात्वसिद्धिहेतवः। ६ **अन्यत्रापि**—'आर्धधातुकं शेषः'। 'कृदतिङ्' 'अपृक्त एकाल्' 'स्वंरूपं' 'येनविधिः' 'तपरस्तत्कालस्य' 'अणुदि'दित्यादौ। ७ 'यत्र' 'तत्र' 'उपतिष्ठते' इति पदत्रयेत्यर्थः। ८ **क्रियते**—'द्वे' पदानुवृत्तयेऽष्टमेऽध्याये क्रियते। **इदं**—सञ्ज्ञेत्यधिकारसूत्रम्। ९ **अयं**—सञ्ज्ञाधिकारः। **इदं**—सञ्ज्ञाकरणम्। **लोकात्**—लोकव्यवहारात्। १० **अस्मै**—जिज्ञासवे। **संप्रत्ययः**—सञ्ज्ञात्वप्रकारकं ज्ञानम्। ११ **अत्र**—वृद्धिसञ्ज्ञासूत्रे।

---

॥ शब्दकौस्तुभः ॥

एतेना'र्द्धधातुकं शेषः''कृदतिङ्', 'अपृक्त एकाल्प्रत्ययः'। 'स्वं रूपं शब्दस्य' 'अणुदित्'। 'तपरः' 'आदिरन्त्येन' 'येनविधस्तदन्तस्ये'त्यादावपि व्यभिचार उद्धृतः। तत्रापि विपरीता-

( उद्द्योतः ) अस्थाने-अनवसरे । भिद्यते-विलक्षणं भवतीत्यर्थः ॥

[ आक्षेपोद्भावनभाष्यम् ]

**तत्रै[1]तत्स्यात्-'कृतस्तत्र पूर्वैरभिसंबन्धः' इति ॥**

( उद्द्योतः ) अभिसंबन्धः-संज्ञासंज्ञिभावः । ततो ज्ञातुं शक्य इति भावः ॥

[ समाधानभाष्यम् ]

**इहा[2]पि-कृतः पूर्वैरभिसंबन्धः ॥**

**कैः ?॥ आचार्यैः[3] ॥**

[ आक्षेपभाष्यम् ]

**तत्रै[4]तत्स्यात्-'यस्मै तर्हि सम्प्रत्युपदिशति तस्याऽकृत' इति ॥**

(उद्द्योतः) तस्याकृतइत्यस्य । तेना[5]ऽज्ञात इत्यर्थः । तथा च तेन कथं प्रतिपत्तुं शक्य इति भावः ॥

[ समाधानभाष्यम् ]

**लोकेऽपि हि यस्मै सम्प्रत्युपदिशति[6] तस्याऽकृतः । अथ तत्र कृतः, इहापि कृतो द्रष्टव्यः ॥**

( उद्द्योतः ) अथ तत्रेति । अनुमानादिना ज्ञात इत्यर्थः ॥

[ वाक्यार्थाऽप्रसिद्धिशङ्कावार्त्तिकम् ]

*॥*॥ सतो[7] वृद्ध्यादिषु संज्ञाभावात्तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः ॥*॥*

[ व्याख्याभाष्यम् ]

**सतः संज्ञिनः संज्ञाभावात् । तदाश्रये[8] संज्ञाश्रये संज्ञिनि वृद्ध्यादिष्वितरेतराश्रयत्वादप्रसिद्धिः ॥ का इतरेतराश्रयता ? ॥ सतामादैचां संज्ञया भवितव्यं, संज्ञया चादैचो भाव्यन्ते । तदे[9]तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । तद्यथा-नौर्नावि बद्धा[10] नेतरत्राणाय भवति ॥**

( प्रदीपः ) सतो वृद्ध्यादिष्विति । विधौ[11]चायं दोषो नानुवादे-'वृद्धिर्यस्ये'त्यादौ । तत्र च संज्ञाविधानस्य चरितार्थत्वान्मृजेर्वृद्धिरित्यादौ वृद्धिशब्द एवादेशः प्राप्नोति ॥

( उद्द्योतः ) सतो वृद्ध्यादिष्विति । सतो-निष्पन्नस्य, संज्ञाभावात्-संज्ञासंबन्धात, तदाश्रये-संज्ञाश्रये, संज्ञया संज्ञिविधायके शास्त्रे मृजेर्वृद्धिरित्यादौ, वृद्ध्यादिषु-वृद्ध्यादिपदेषु, इतरेतराश्रयत्वादप्रसिद्धिः वाक्यार्थाप्रसिद्धिरित्यर्थः । अविद्यमाने संबन्धस्य वक्तुमशक्यत्वादिति भावः ॥

[ व्यभिचाराशङ्काभाष्यम् ]

**ननु च भो इतरेतराश्रयाण्यपि कार्याणि दृश्यन्ते । तद्यथा-'नौः शकटं वहति, शकटं च नावं वहति' ॥**

( प्रदीपः ) ननु च भो इति । नौशकटे[12]स्याभिमतदेशान्तरप्राप्तिरितरेतराश्रयेति चोद्यम् ॥

( उद्द्योतः ) वहनक्रियायामितरेतराश्रयत्वाऽभावेपि तत्फलतीत्याह-नौशकेति ॥

[ उक्तव्यभिचारनिरासभाष्यम् ]

**अ[13]न्यदपि तत्र किञ्चिद्भवति, जलं वा**

---

❀ राजलक्ष्मीः ❀

१ तत्र-भवदुक्ते समाधाने । तत्र इत्यस्य लोके इतिवाऽर्थः । एतत्-एतत्कारणम् । तत्र-गवि । पूर्वैः-आद्यसङ्केतकर्त्रा ईश्वरेण, व्यवहर्त्तृभिः पित्रादिभिश्च । उपदेष्टा हि तत्र सन्तमेवाऽर्थं बोधयति, वृद्ध्यादिशब्दे तु असतोऽर्थस्य बोधनं कथमित्याशयः । २ इहापि-वृद्धिशब्दादावपि । कृत एव सम्बन्ध उत्तरकालमुपदेष्टृभिर्बोध्यते इत्यर्थः । ३ आचार्यैः-शाकटायनादिभिः, पूर्ववृत्तिकृद्भिर्वा । ४ तत्र-आचार्यैः कृते सम्बन्धे । यस्मै-श्रोत्रे । जिज्ञासवे । ५ तेन-श्रोत्रा । ६ उपदिशति-गामुपदिशति । ७ आदैज्मात्रस्य वृद्धिसञ्ज्ञेति पक्षे दोषमाह-सत इति । ८ सञ्ज्ञिविधायके शास्त्रे । ९ तदेतत्-संज्ञासञ्ज्ञिरूपम् । न प्रकल्पन्ते-न सिद्ध्यन्ति । १० कर्णधाररहितं नौकाद्वयं मिथः संबद्धं परस्परं परतीरप्रापणे समर्थं न भवतीत्यर्थः । ११ विधौ-विधेयताप्रयोजके वृद्धिपदे, 'सिचि-वृद्धि'रित्यादौ । १२ अत्र सेनाङ्गत्वादेकवद्भावः । अभीष्टदेशप्राप्तावितरेतराश्रयताऽस्त्येवेत्याशयः ।

१३ उत्तरयति-अन्यदपीति । तृतीयमपि किञ्चिद्वस्तु ।

---

❀ शब्दकौस्तुभः ❀

नुपूर्वीकल्पनात् । कल्पकत्वस्य च प्रागेवोक्तत्वात् । पक्षान्तरैरपि समाधानाच्च । अत एव स्थानिवत्सूत्रे 'वत्करणक्किमर्थ'मित्याशङ्क्य 'स्थान्यादेशस्य संज्ञा मा विज्ञायी'ति भाष्यमप्युपपन्नम् । यत्त्वपृक्त एकालिति परिभाषा' न तु संज्ञेत्युक्तम् । तद्वृद्ध्यादावपि सुवचम् । अपृक्तसंज्ञायां हल्ग्रहणं स्वादिलोपे हलो ग्रहणार्थमिति वार्त्तिकस्य, तद्भाष्यस्य च प्रतिकूलम् । तस्मादुक्तैव गतिः समीचीनेति दिक् ।

**स्थलं वा । स्थले शकटं[1] नावं वहति । जले नौः शकटं वहति ॥**

[ इतरेतराश्रयदृष्टान्तान्तान्तरभाष्यम् ]

**यथा तर्हि–त्रिविष्टब्धकम्[2] ॥**

[ व्यभिचारनिराकरणभाष्यम् ]

**तत्राप्यन्ततः सूत्रकं[3] भवति ॥**

**( प्रदीपः )** सामग्र्यन्तरानुप्रवेशेन चोत्तरम् ॥

**( उद्द्योतः ) सामग्र्यन्तरेति ।** कारणान्तरेत्यर्थः । **सूत्रकं**–कीलकादि । न च सामान्यलक्षणया[4] भूतभाविसकलविषयकशक्तिग्रहः संभवत्येव, अन्यथा तवापि तत्तद्बोद्धृबुद्धावसंनिहितसकलाऽऽकारविषयकशक्तिग्रहाऽसंभवेनाऽनुवादेऽपि दोषः स्यात् । सामान्यलक्षणाऽनङ्गीकारेपि शक्तिग्रहबोधादीनां समानप्रकारकत्वेनैव कार्यकारणभावाभ्युपगमान्न दोष इति वाच्यं, जातिप्रकारकशक्तिग्रहस्य स्वाश्रयीभूतसकलव्यक्तिबोधकत्वेऽप्यनुत्पन्ने जात्याश्रयत्वसंबन्धस्य वक्तुमशक्यतया भाविव्यक्तेर्जात्याश्रयत्वाऽभावात् तद्बोधाऽसंभवेन **मृजेर्वृद्धि**रित्यत्र–तज्जन्योत्पत्तिज्ञप्त्योः परस्पराश्रय इति भावात्[5] । **वृद्धिरादैजित्यस्य**–विद्यमानेषु बुद्धिस्थेषु चारितार्थ्येन भाविनामुद्देश्यत्वाऽसंभवेन तत्र वृद्धिपदस्य शक्तिग्रहासम्भवाच्च ॥

[ प्रकृते आक्षेपोपसंहारभाष्यम् ]

**इदं[6] पुनरितरेतराश्रयमेव ॥**

[ अन्योन्याश्रयपरिहारसिद्धान्तिवार्तिकम् ]

*॥*॥ सिद्धं तु नित्यशब्दत्वात् ॥*॥*

[ व्याख्याभाष्यम् ]

**सिद्धमेतत् ॥ कथम् ?॥ 'नित्यशब्दत्वात्' । नित्याः शब्दाः । नित्येषु शब्देषु सतामादैचां संज्ञा क्रियते, न च संज्ञया आदैचो भाव्यन्ते ॥**

**( प्रदीपः ) सिद्धं त्विति ।** न हि मृजेरपूर्व आकारो भाव्यते, किं तु मृजावुपदिष्टे मार्ष्टीत्यादीनामसाधुत्वबुद्धिः प्राप्नोतीति तेषां साधुत्वान्वाख्यानं क्रियते ॥

**( उद्द्योतः )** यद्यप्य**'स्य सूत्रस्य शाटकं वये'**त्यादाविव भाविसंज्ञाऽनेन सिध्यति, यथा च तत्रोत्पत्त्यनन्तरं गृहीतशक्तिकशाटकसादृश्याच्छाटकपदशक्तिग्रहस्तथा प्रकृतेऽपि । स्पष्टं चेदम**मिग्यण** इति सूत्रे भाष्ये । तथाप्यत्र वास्तवमेव परिहारमाह–भाष्ये–**सिद्धं त्विति** । एतच्च मञ्जूषायां विस्तरेण निरूपितम् ॥

[ नित्येषु शब्देषु शास्त्रवैयर्थ्यशङ्काभाष्यम् ]

**यदि तर्हि नित्याः शब्दाः,—**
**"किमर्थंशास्त्रम्" ? ॥**

[ सिद्धान्तिसमाधानवार्तिकम् ]

*॥*॥ किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् ॥*॥*

[ व्याख्याभाष्यम् ]

**निवर्तकं[7] शास्त्रम् ॥ कथम् ?॥ मृजिरस्मायविशेषेणोपदिष्टः । तस्य सर्वत्र मृजिबुद्धिः प्रसक्ता । तत्रानेन[9] निवृत्तिः क्रियते, 'मृजेरक्ङित्सु प्रत्ययेषु मृजिप्रसङ्गे मार्जिः साधुर्भवती'ति ॥**

---

**❀ राजलक्ष्मीः ❀**

१ शकटं–कर्तृ । २ मिथः सम्बद्धास्त्रयो वेणवः–त्रिविष्टब्धकम् । ( तिकठी ) । तत्र हि वेणवः परस्पराश्रिता अपि घटादीन्वहन्त्येवेति व्यभिचार इत्याशयः । ३ **सूत्रकम्**–कीलकादिकं पृथ्व्यादिकञ्च वस्त्वन्तरं जलस्थलादिवदिति न व्यभिचार इत्याशयः । ४ **नचेत्यस्य**–'मालादावाकारे श्रुते सत्यात्वे' इति शेषः । **सामान्यलक्षणया**–तत्प्रत्यासत्त्या । **शक्तिग्रहः**–वृद्ध्यादिशब्दशक्तिग्रहः । **अन्यथा**–उक्तप्रकारानङ्गीकारे । **तवापि**–शब्दनित्यत्ववादिनोऽपि मते । ५ सतो वृद्ध्यादिष्विति वदतो भाष्यकृदादेर्भावादित्यर्थः । ६ **इदं**–प्रकृतं वृद्धिरादैजिति । ७ **निवर्तकं**–न तु निर्वर्तकमित्याशयः । ८ **अस्मै**–साधुशब्दबुभुत्सवे । **अविशेषेण**–प्रत्ययविशेषानाश्रयेण । **उपदिष्टः**–धातुपाठे उपदिष्टः । **तस्य**–साधुशब्दबुभुत्सोः पुंसः । ९ **अनेन**–मृजेर्वृद्धिरिति शास्त्रेण । **मार्जिः**–कृतवृद्धिर्मृज्धातुः ।

---

**❀ शब्दकौस्तुभः ❀**

ननु मृजेर्वृद्धिरित्यादावन्योन्याश्रयः, संज्ञया हि विधिर्विहितानां च संज्ञेति । न च मालादौ संज्ञाप्रवृत्तिसंभवे सतीह भाविसंज्ञाविज्ञानं सम्भवति । तस्माद्वृद्धिशब्द एवादेशः स्यात् । अन्यत्र वृद्धिसंज्ञाप्रवृत्तावपि मालादिशब्दान्तर्गतस्याकारस्य तत उत्कृष्येह विधातुमशक्यत्वादिति । अत्राहुः–'मार्ष्टीत्यादौ सिद्धस्यैवाकारस्य मृज्युपदेशादसाधुत्वे प्रसक्ते साधुत्वं 'मृजेर्वृद्धि'रित्यादिना बोध्यते न त्वपूर्व आकारो भाव्यते, येनान्योन्याश्रयः स्यात् । उक्तं च वार्तिककृता—'सतो वृद्ध्यादिषु निमित्तभावात्तदाश्रय

[ आक्षेपवार्तिकम् ]

[॥*॥ प्रत्येकं[1] वृद्धिगुणसञ्ज्ञावचनम् ॥*॥]

[ व्याख्याभाष्यम् ]

**[ प्रत्येकं वृद्धिगुणसञ्ज्ञावचनं कर्तव्यम् ]। प्रत्येकं वृद्धिगुणसंज्ञे भवत इति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ समुदाये मा भूतामिति ॥**

( प्रदीपः ) **प्रत्येकमिति** । यद्यपि नित्य[2]शब्दत्वेनैतदपि व्यवतिष्ठते, तथापि न्यायव्युत्पादनायोपन्यासः ॥ **समुदाये मा भूतामिति** । अन्यथा **मृजेर्वृद्धिरि**त्यादौ समुदाय आदेशः प्राप्नोति । समुदायावयवसन्निधौ क्व तात्पर्यं, कस्य च नान्तरीयकत्वमिति विचार्यते[3] ॥

( उद्द्योतः ) **न्यायेति** । वक्ष्यमाणन्या(यद्व)येत्यर्थः । ननु 'वृद्धिर्यस्ये'त्यादौ समुदायाऽसंभवात्प्रत्येकमेव संज्ञेत्यत आह—**अन्यथेति** । एवं च तमादाय तत्रापि संभवः । द्वन्द्वनिर्देशात्समुदायस्यैव स्यादिति भावः । **समुदायेति** । 'मातापित्रोर्मृतेऽहनी'तिवद्बोधे साहित्यं, न तु क्रियानिष्पत्ताविति भावः ॥

[ सिद्धान्तिनः समाधानवार्तिकम् ]

॥*॥ अन्यत्र सहवचनात्समुदाये संज्ञाऽप्रसङ्गः ॥*॥

[ व्याख्याभाष्यम् ]

**अन्यत्र[5] सहवचनात्समुदाये वृद्धिगुणसंज्ञयोरप्रसङ्गः । यत्रेच्छति सहभूतानां कार्यं-करोति तत्र 'सह'ग्रहणम् । तद्यथा 'सह सुपा' 'उभे अभ्यस्तं सहे'ति ॥**

( प्रदीपः ) **अन्यत्रेति** । यत्नसाध्या समुदायप्रतिपत्तिरिति यत्नाऽभावे न भवतीत्यर्थः ॥ ननु सहग्रहणं नियमार्थं स्यात्—'समुदायस्यैव समास[7]संज्ञा यथा स्यान्नावयवाना'मिति ॥ नैतदस्ति, उभयत्र तात्पर्याऽभावाद्युगपदुभयत्र प्रसङ्गा[8]ऽभावाल्लिङ्गत्वमेव सहग्रहणस्य—'अन्यत्र समुदाये तात्पर्यं नास्ती'त्यस्यार्थस्य ॥ उभे अभ्यस्तं सहेति । अत्र सहग्रहणं वार्तिककारस्य कर्तव्यत्वेन स्थितम् । भाष्यकारस्तूभेग्रहणस्य तत्प्रयोजनं स्थापयिष्यति ॥

(उद्द्योतः) **उभयत्रेति** । समुदायेऽवयवे चेत्यर्थः । उभयत्र तात्पर्याऽभावे हेतुः—**युगपदिति** । फलाऽभावादिति भावः । यद्यपि पर्यायः प्राप्नोति, तथापि समासविधिनियमोभयपरत्वे गौरवमित्यतो लिङ्गत्वकल्पनमेवोचितमित्यत्र तात्पर्यम् । **भाष्यकारस्त्विति** । तदेकदेशीत्यर्थः । **'द्वे'** इत्यनुवृत्त्यैव सिद्धे **'उभे'ग्रहणं** सहार्थकमिति भावः ॥

[ सिद्धान्तिनः समाधानान्तरवार्तिकम् ]

॥*॥ प्रत्यवयवं च वाक्यपरिसमाप्तिः ॥*॥

[ व्याख्याभाष्यम् ]

**प्रत्यवयवं च वाक्यपरिसमाप्तिर्दृश्यते। तद्यथा—'देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ता'मिति । न चोच्यते—'प्रत्येक'मिति । प्रत्येकं च भुजिः परिसमाप्यते ॥**

( प्रदीपः ) **प्रत्यवयवं चेति** । अत्र[10] **वाक्य**शब्देन वाक्यार्थः फलमुच्यते । तच्च देवदत्तादीनां भोजनम् । तस्य चैतदेव रूपं यत्प्रत्येकं(परि)स-

※ राजलक्ष्मीः ※

१ इदं वार्तिकं लुप्तं सम्प्रति सर्वेष्वादर्शेष्वित्यनुमायास्माभिरत्र स्थापितम् । २ नित्यस्य लोकसिद्धस्यैवान्वाख्यानाद्वृद्धित्रयघटितलक्ष्याऽभावान्न कश्चिद्दोष इत्यर्थः । **व्यवतिष्ठते**—व्यवस्थितं भवति । सङ्गच्छते । **व्युत्पादनाय**—बोधनाय । **नान्तरीयकत्वम्**—अप्राधान्यम् । ३ **विचार्यते**—अनेन भाष्येण विचार्यते । ४ गर्गदण्डनब्राह्मणभोजनन्यायद्वयेत्यर्थः । एवञ्च सहादिपदे सति नान्तरीयका अवयवाः, तदभावे तु समुदायोऽप्रधानमवयवाः प्रधानानीत्याशयः । ५ **अन्यत्र**—गुणवृद्ध्यादितोऽन्यत्र । **सहवचनात्**—तादृशालिङ्गात् । ६ **यत्नाभावे**—वृद्धिसञ्ज्ञादौ तादृशयत्नाऽभावे । ७ **समाससञ्ज्ञा**—सुप्सुपेतिसमाससञ्ज्ञा । एवञ्च कथमस्य लिङ्गत्वेत्याशयः । ८ **प्रसङ्गेति**। अस्य 'समाससञ्ज्ञाया' इति शेषः । ९ तच्छिष्य इत्यर्थः । १० **अत्र**—भाष्ये ।

※ शब्दकौस्तुभः ※

**इतरेतराश्रयत्वादप्रसिद्धिः । सिद्धं तु नित्यशब्दत्वा'**दिति । अथ लक्षणैकचक्षुष्कः कश्चिद्व्याकरणबलेनैव मार्ष्टीत्यादिप्रयोगेषु व्युत्पित्सेत तथापि न क्षतिः, शालामालादावाकारे श्रुते आत्वसामान्यलक्षणप्रत्यासत्त्या मार्ष्टीत्यादिप्रयोगसमवायिनां सर्वेषामाकाराणां वृद्धिशब्दवाच्यताग्रहात् । सामान्यलक्षणानभ्युपगमपक्षे त्वात्वजातौ शक्तिग्रहात् शक्त्यनुभवपदार्थस्मरणवाक्यार्थबोधानां समानप्रकारकत्वेनैवातिप्रसङ्गभङ्गाभ्युपगमाद्वा । अन्यथा 'गेहे घटोऽस्ती'ति वाक्यादप्यपूर्वव्यक्तिर्न गृह्येतेति दिक् । अत एव 'नवेतिविभाषे'ति सूत्रे भाष्यकारो वक्ष्यति—'साधुत्वस्य विधेयत्वेविभाषाश्चेरित्यादिना तस्यैव विकल्पापत्तिः । तस्मात्सम्प्रसारणा

माप्त्या संपद्यतेऽभ्यादनादिरूपत्वात्तृप्तिफलत्वाच्च भोजनस्य। नाट्यक्रिया तु समुदाये समाप्यते, गीतादिक्रियासमुदायरूपत्वात्तस्याः। संयोगसंज्ञा त्वन्वर्थत्वात्समुदाये प्रवर्तते। वृद्धिसंज्ञा तु लक्ष्ये पृथगादैचां दर्शनात, **मालादीनां चे**ति लिङ्गाच्च प्रत्येकं व्यवतिष्ठते॥

**( उद्द्योतः )** न ज्ञापकादेव, किं तु युक्तितोऽपि प्रत्येकं संज्ञेत्याह--भाष्ये-**प्रत्यवयवमिति**। ननु प्रत्येकं वाक्यपरिसमाप्तिमुपक्रम्य प्रत्येकं भुजिसमाप्त्युक्तिरयुक्ता, न हि भुज्यर्थोऽत्र वाक्यार्थः, किं तु ण्यन्तार्थोत आह-**अत्रेति**। वाक्यार्थस्तु अत्र प्रयोजकव्यापारस्तस्य समुदायविषयत्वसंभवात्फलग्रहणम्। तच्च प्रयोज्यव्यापाररूपमित्याह-**तच्चेति**। ननु विशिष्टपरिमाणस्याऽदनीयस्य भोजनक्रिया समुदाये पर्याप्तेत्यपि वक्तुं शक्यमत आह--**तृप्तिफलत्वाच्चेति**। सर्वापि क्रिया प्रत्येकं समाप्यत इति भ्रमो न कार्य इत्याह-**नाट्येति**। **गीतादीति**। आदिना नृत्तवाद्यादि। **अन्वर्थत्वात्**-संयुज्यन्ते वर्णा अत्रेति। लक्ष्यानुसारात्तत्र समुदाये वाक्यपरिसमाप्तेराश्रयणमिति तत्त्वम्। प्रकृतेऽन्यतरन्यायाश्रयणे हेतुमाह-**वृद्धिसंज्ञेति**। **लिङ्गादिति**। 'प्रस्थेऽवृद्ध'मिति निषेधबाधनार्थं हि तदिति भावः। न च नामधेयरूपमालादीनामाद्युदात्तार्थं तत्, तस्य 'वा नामधेयस्ये'ति पक्षे वृद्धत्वादिति वाच्यम्, **'अभिव्यक्ते'**ति न्यायेन तत्राऽप्रवृत्तेः।

[ समुदायपरिसमाप्तिदृष्टान्तप्रदर्शनभाष्यम् ]

**ननु चायमप्यस्ति दृष्टान्तः—'समुदाये वाक्यपरिसमाप्ति'रिति। तद्यथा-'गर्गाः शतं दण्ड्यन्ता'मिति। अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति।**

( प्रदीपः ) **गर्गाः शतं दण्ड्यन्तामिति**। अत्र शतस्येप्सिततमत्वात् प्राधान्यम्, अपादानस्थानप्राप्ता गर्गा गुणकर्म, नैच गुणभेदेन प्रधानस्य भेद इति शतदण्डनं समूहे परिसमाप्यते। **अर्थिनश्चेति**। शतस्य प्राधान्यं प्रतिपाद्यते। दण्डपरायां हि चोदनायां शतस्य प्राधान्यमतो वाक्यादवगम्यते।

**( उद्द्योतः )** समुदाये समाप्तौ युक्तिमाह-**अत्र शतस्येति**। एवंचाऽ**कथित**सूत्रे दण्डिरपि परिगणनीय इति भाव **इत्येके**। उद्देश्यत्वरूपमार्थं प्राधान्यं शतस्येत्यनुद्देश्यत्वेन गर्गा गुणकर्म। **दण्डेश्च** स्वसंप्रदानकदानानुकूलव्यापारानुकूलव्यापारः शासनरूपोऽर्थः। शासनं-नियन्त्रणम्। तत्र ण्यन्त इव **'कर्त्तु'**रित्युभयोः कर्मत्वम्। कर्तृप्रत्ययसमभिव्याहारे धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वेन गर्गाणां शाब्दं प्राधान्यम्। तत्रैव प्रधाने कर्मणि लकारः। **'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणा'**मित्युक्तेः। दुहादिष्वस्याऽप्रामाणिकः पाठ इति वक्ष्यते। **'अपादानस्थानप्राप्ता'** इत्यनेन चाऽनुद्देश्यत्वमात्रमभिप्रेतमिति

❀ **राजलक्ष्मीः** ❀

**तच्च**-फलश्च। **तस्य**-भोजनस्य। **रूपम्**-आकारः। १ **तस्याः**-नाट्यक्रियायाः।

२ ननु प्रत्येकं वाक्यपरिसमाप्तिरित्युक्त्वा भुजिपरिसमाप्तिकथनमयुक्तम्, इक्प्रत्ययान्तभुजिशब्दस्य धातुवाचकत्वात् वाक्यपदस्य च सुप्तिङन्तसमुदायपरत्वात्। शब्दस्य पर्यवसानाऽसम्भवाच्च, अर्थगतत्वात्पर्यवसानस्येति चेन्न; प्रत्येकं वाक्यसमाप्तिरित्यत्र वाक्यशब्दस्य वाक्यार्थपरत्वेन भुजिपपरिसमाप्तिरित्यत्र भुजेश्च भुज्यर्थपरत्वेनाऽदोषात्। नन्वेवमपि न निस्तारः, भुज्यर्थस्य प्रकृते वाक्यार्थत्वाऽभावात्, ण्यन्तार्थस्यैव वाक्यार्थत्वादित्याशङ्कते-**नन्विति**। **तच्च**-फलश्च। **अदनीयस्य**-भोज्यस्य अन्नादेः। ३ **अन्यतरेति**। प्रकृते ब्राह्मणभोजनन्यायाश्रयणे इत्यर्थः। ४ मालादीनाञ्चेति पाठः॥ ५ **तत्र**-नामधेयवाचिमालादौ। ६ **अर्थिनः**-यद्यपि हिरण्याभिलाषिणः। धनार्थिन इति यावत्। **नच**-ननु। ७ **नच**-नहि। **भेदः**-भेदो भवति। अन्याय्यत्वादित्याशयः। **इति**-अतो हेतोः। **समूहे**-गर्गसमूहे। ८ सिद्धान्तमाह-**उद्देश्यत्वेति**। ९ स्वसम्प्रदानकदानानुकूलव्यापाररूपफलाश्रयत्वेन। १० **तत्रैवेति**। शब्दप्राधान्यवति गर्गरूपे प्रधाने कर्मणीत्यर्थः। ११ **दुहादिष्विति**। 'एवञ्चे'त्यादिः। **अस्य**-

❀ **शब्दकौस्तुभः** ❀

द्येव विकल्प्यते'इति। एषैव लडादिविधौ गतिः। न चैवं साध्वनुशासनत्वभङ्गः, साधुत्वविशिष्टस्यैव सर्वत्र लक्षणया विधानमिति कृन्मेजन्तसूत्रे **विवरणकारा**दिभिरुक्तत्वात्। केवलविधानेपि 'यदिह परिनिष्ठितं तत्साध्वि'ति श्रुतार्थापत्तिं प्रकल्प्य वाक्यात्साधुत्वसिद्धेश्च। इह च प्रत्येकं वाक्यपरिसमाप्तिः, 'मालादीनां चे'त्यादिलिङ्गात्। 'ब्राह्मणा भोज्यन्ता'मित्यादौ तथा दर्शनाच्च। यद्यपि 'गर्गाः शतं दण्ड्यन्ता'मित्यादौ समुदायेपि वाक्यपरिसमाप्तिर्दृश्यते। गुणकर्मभूतानामपादानस्थानापन्नानां गर्गाणामनुरोधेनेप्सिततमकर्मतया प्रधानभूतस्य शतस्यावृत्त्ययोगात्। तथापीह शास्त्रे यत्नं विना समुदाये शास्त्रं न समाप्यते। अत एव 'उभे अभ्यस्तं सहे'ति 'सह'ग्रहणं वार्त्तिककृद्वक्ष्यति। भाष्यकारस्तूभेग्रहणमेवैतदर्थमिति वक्ष्यति। अन्यथैकाचो द्वे इत्यनुवृत्त्या सिद्धेः किमुभेग्रहणेन?। संयोगसंज्ञायां च समाससञ्ज्ञायां महासंज्ञाकरणमेवान्वर्थताविज्ञानार्थमिति यत्नः। अत एव 'सह सुपे'ति

परे । शतस्यं प्राधान्यमिति । शारीराभिहननलक्षण दण्डव्यावर्त्तनेनेति भावः ।

[ समाधानभाष्यम् ]

**सत्येतस्मिन्दृष्टान्ते यदि तत्र सहग्रहणं क्रियते, इहापि प्रत्येकमिति वक्तव्यम्। अथ तत्रान्तरेण सहग्रहणं सहभूतानां कार्यं भवति, इहापि नार्थः प्रत्येकमिति वचनेन ॥**

( प्रदीपः ) **अथ तत्रान्तरेणेति** । न्यायादन्वर्थत्वाच्च समाससंज्ञायाः समुदाये परिसमाप्तौ सिद्धायां योगविभागार्थं तत्र 'सह'ग्रहणं स्थितमिति 'तत्रान्तरेणे'त्युक्तम् ।

( उद्द्योतः ) नन्वन्तरेणापीति वाच्ये सार्वकालिकाऽसत्त्वप्रतिपादकमपिशब्दरहितमयुक्तमत आह—**न्यायादिति** । शतदण्डनन्यायेत्यर्थः । **योगविभागेति** । तिङन्तसमासायेति भावः ।

[ आक्षेपभाष्यम् ]

**अथ किमर्थमाकारस्तपरः क्रियते ? ॥**

( प्रदीपः ) **अथ किमर्थमिति** । किमाकृतिपक्षे भिन्नकालनिवृत्त्यर्थमथवा व्यक्तिपक्षे गुणान्तरयुक्तानां ग्रहणार्थमिति प्रश्नः ।

( उद्द्योतः ) भाष्ये **किमर्थमिति** । चतुर्थीतत्पुरुषः ।

[ सिद्धान्तिनः समाधानवार्तिकम् ]

*॥*॥ आकारस्य तपरकरणं सवर्णार्थम् ॥*॥*

[ व्याख्यानभाष्यम् ]

**आकारस्य तपरकरणं क्रियते ॥ किं प्रयोजनम् ? ॥ 'सवर्णार्थम्' । 'तपरस्तत्कालस्ये'ति तत्कालानां सवर्णानां ग्रहणं यथा स्यात् ॥ केषाम् ? ॥ उदात्तानुदात्तस्वरितानाम् ॥**

( प्रदीपः ) **आकारस्येति** । 'व्यक्तिः पदार्थो, भेदकाश्च गुणा'इति दर्शने यद्गुणस्योच्चारणं तद्गुणस्यैव संज्ञाप्रसङ्गे गुणान्तरयुक्तानामपि संज्ञाप्रतिपत्त्यर्थं तपरत्वमित्यर्थः ।

( उद्द्योतः ) **तपरकरणं क्रियत इति** । 'पाकं पचती'तिवत् सामान्यविशेषभावेन सहप्रयोगः । आत्वजातेर्भिन्नकालाऽवर्णवृत्तित्वाऽभावाद्वितीयमाश्रयति—**व्यक्तिरिति**। **यद्गुणस्ये**त्यादिर्बहुव्रीहिः ।

[ कारणजिज्ञासाभाष्यम् ]

**किं च कारणं न स्यात् ? ॥**

( प्रदीपः ) **किं च कारणमिति** । अभेदका ( हि ) गुणाः, मुण्डेन हि कृते चौर्ये कुन्तलित्वावस्थायामपि'चौरोऽय'मिति व्यपदिश्यत एवेति प्रश्नः।

( उद्द्योतः ) भाष्ये **किं च कारणमिति । निमित्तकारणहेतुष्विति** हेतौ प्रथमा ।

[ कारणप्रदर्शकमेकदेशिनो वार्तिकम् ]

*॥*॥ भेदकत्वात्स्वरस्य ॥*॥*

[ व्याख्याभाष्यम् ]

**भेदका उदात्तादयः ॥**

**कथं पुनर्ज्ञायते-'भेदका उदात्तादय' इति ? ॥ एवं हि दृश्यते लोके,-य उदात्ते कर्तव्येऽनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटां ददाति-'अन्यत्त्वं करोषी'ति ॥**

---

**❀ राजलक्ष्मीः ❀**

दण्डैः । १ **शतस्येति** । दण्डयतेर्ग्रहणमर्थं इति ग्रहणे ईप्सिततमत्वाच्छतं प्रधानमित्याशयः । २ **सत्येतस्मिन्**-सत्यप्येतस्मिन् गर्गदण्डनरूपे। **क्रियते**-ब्राह्मणभोजनन्यायप्रवृत्तिमाशङ्क्य तन्निवृत्तये 'सह'ग्रहणं क्रियते। **इहापि**-तद्वदेव प्रकृतेऽपि। **वक्तव्यं**-गर्गदण्डनन्यायप्रवृत्तिशङ्कया प्रकृते तथा वक्तव्यम्। **न्यायात्**-गर्गदण्डनन्यायात् । ३ **आकारः**-वृद्धिरादैजित्यत्राकारः। ४ 'अथ किमर्थमाकारस्य तपरकरण'मित्येवमत्र पाठो भवेदिति तत्त्वविदः ।

४ व्यक्तिपक्षे आकारस्याऽनण्त्वेन सवर्णग्रहणाऽप्रसक्तेराह—**गुणान्तरेति** । ५ **चतुर्थीति** । कस्मै इदं किमर्थमिति समासः । अर्थेन नित्यसमासविधानादित्याशयः । ६ आकारस्य तपरकरणं सवर्णग्रहणार्थमित्यर्थः । ७ **दर्शने**—मते । **यद्गुणस्य**—यद्गुणकस्याकारस्य । एवमग्रेऽपि । उपात्तविजातीयनिवर्त्तकत्वादित्यर्थः । ८ **खण्डिकोपाध्यायः**—अथर्ववेदाध्यापकः । अथर्ववेदाध्यायिनां हि

**❀ शब्दकौस्तुभः ❀**

'सह'ग्रहणं योगविभागेन तिङन्तादिसमासविधानार्थमिति स्थापयिष्यते । इह तपरकरणमैजर्थमीदूदेदितिवदुच्चारणार्थमसन्देहार्थं चेति प्रपञ्चितमेओङैऔजितिसूत्रयोः । यत्त्विहोक्तं वार्त्तिककृता—**आकारस्य तपरकरणं सवर्णार्थमिति,** तत्तु भेदका गुणास्तपरसूत्रं चाऽनणि विध्यर्थमित्यभिप्रेत्य । भाष्ये त्वभेदका गुणा इति स्थितम् । गुणा उदात्तानुदात्तस्वरितानुनासिका नान्तरीयकतयोच्चार्यमाणा अपि यत्नं विना

अस्ति प्रयोजनमेतत् ?॥ किंतर्हि । इति—।

( उद्द्योतः ) अस्ति प्रयोजनमेतदिति काका सूचितमाशयं पृच्छति–किं तर्हीति । किंतर्हीति प्रश्ने । इति–इदं वक्तव्यमित्यर्थः ।

[ उक्तवार्तिके वक्तव्यन्यासान्तरप्रतिपादकभाष्यम् ]

**भेदकत्वाद्गुणस्येति वक्तव्यम् ॥**

**किं प्रयोजनम् ? ॥**

**आनुनासिक्यं नाम गुणस्तद्भिन्नस्यापि[२] ग्रहणं यथा स्यात्॥ किं च कारणं न स्यात्?॥**

**'भेदकत्वाद्गुणस्य' । भेदका गुणाः ॥**

**कथं पुनर्ज्ञायते–'भेदका गुणा'इति ?॥**

**एवं हि दृश्यते लोके, एकोऽयमात्मा उदकं नाम, तस्य गुणभेदादन्यत्वं भवति–'अन्यदिदं शीतम्', 'अन्यदिदमुष्ण'मिति ।**

( प्रदीपः ) भेदकत्वादिति । सर्वगुणसंग्रहार्थं गुणग्रहणं कर्तव्यमित्यर्थः। एकोऽयमिति । उदकत्वजातियोगादत्रैकत्वं न विवक्षितं, किं तर्हि विशिष्टभाजनस्थमेकमुदकद्रव्यम् । तदेव च गुणान्तरयोगादन्यत्वेन लोके व्यपदिश्यते ।

( उद्द्योतः ) तदाह[३]-भेदकत्वादित्यादि । जात्यात्मनैकत्वे व्यक्तिभेदादेवोपपत्तेर्न गुणभेदकृतभेदे इदमुदाहरणं स्यादत आह–उदकत्वेति। आत्मशब्दो द्रव्यवाची भाष्ये।

[ अभेदकत्वपक्षस्थापकसिद्धान्तिभाष्यम् ]

**ननु च भो अभेदका अपि गुणा दृश्यन्ते । तद्यथा–देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वामाख्यां न जहाति, तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द इति ॥**

( उद्द्योतः ) बालो युवेति-भाष्ये । स्वामाख्यां न जहातीत्यनुकर्षः । एतेनाऽभेदकत्वे प्रत्यभिज्ञा प्रमाणं दर्शितम् ।

[ आक्षेपभाष्यम् ]

**उभयमिदं[६] गुणेषूक्तम्–'भेदकाः', 'अभेदका' इति । किं पुनरत्र न्याय्यम् ?॥**

( प्रदीपः ) उभयमिति । आम्नायैशब्दा नियतस्वरा इति वेदे गुणानां भेदकत्वम् । लोके तूभयथा व्यवहारः । गोपिण्डो हि वत्साद्यवस्थाभेदात्क्रयविक्रयादिषु मूल्यादिभेदाद्भेदेन व्यवह्रियते । 'स एवाय'मिति प्रत्यभिज्ञानादभेदेनापि ॥ इति[९] प्रश्नः–किं पुनरिति । अत्रेति । शास्त्रे ॥

( उद्द्योतः ) ननु गुणेषूभयाङ्गीकारे ; खण्डिकोपाध्यायचपेटादानं विरुध्येतेति चेन्न, यत 'उभय'मिति लोकमात्रविषयमिति न विरोध इत्याह–आम्नायेति । ननूभयोरपि न्याय्यत्वप्रतिपादनेन 'किं पुनरत्र न्याय्य'मिति प्रश्नोऽयुक्तोऽत आह–शास्त्रे इति । अत्रेति । निर्धारणसप्तमी नेति भावः ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**'अभेदका गुणा' इत्येव न्याय्यम् ॥**

**कुत एतत् ? ॥ यदयम्–'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्युदात्तग्रहणं करोति, तज्ज्ञापयत्याचार्योऽभेदका गुणा इति । यदि हि भेदका गुणाः स्युरुदात्त[१०]मेवोच्चारयेत् ॥**

( प्रदीपः ) उदात्तमेवेति । तस्माद्गुणरहितस्योच्चारणाऽभावान्नान्तरीयकत्वादुच्चार्यमाणोऽपि देशस्य वधेः स्थानिवद्भावादनुदात्तत्वादिट्प्रतिषेधे प्राप्ते तद्वारणाय वध्यादेशे उदात्तनिपातनं करिष्यते । तथा चैकाच उपदेश इति सूत्रे एकाज्ग्रहणं न कर्त्तव्य'मिति तदेतद्विरुध्येत, अविवक्षाप्रसङ्गात् । अथोच्येत–तत्रापि स्थानेन्तरतम इति

❀ राजलक्ष्मीः ❀

खण्डिकेति सञ्ज्ञेति केचित्। तन्नामा कश्चिदित्यन्ये। १पृच्छति–प्रश्नपूर्वकं प्रतिपादयति । 'अस्ती'त्यादिः प्रश्नः, 'किंतर्हि' त्युत्तरम् । 'किन्तर्हीतिनिपातोऽवश्यवक्तव्यतामाहे'त्यन्ये । २ तद्भिन्नस्य–तेन भिन्नस्य । तद्वतोप्याकारस्येति यावत् । ग्रहणं—वृद्धिसञ्ज्ञाशास्त्रे तपरसूत्रेण ग्रहणम् । ३ तदाह–यद्वक्तव्यं तदाह । जात्यात्मना–उदकत्वेन रूपेण।

४ व्यक्तिभेदनिबन्धना हि जातिरित्याशयः । नेति । किन्तु जातिकृतभेद एवोदाहरणता स्यादित्याशयः ।

५ बाल्यादौ वत्साद्याख्यां गतोऽपि वृषः 'स एवाय' मिति प्रत्यभिज्ञायते एवेत्याशयः । ६ एकदेशी सिद्धान्तवादिनमाचार्यं पृच्छति–उभयमिति । ७ वैदिकाः शब्दा इत्यर्थः । ८ अतो न खण्डिकोपाध्यायस्य चपेटादानं विरुध्यते इत्याशयः । ९ इति–अत एव हेतोः । १० अनङोऽकारम् ।

❀ शब्दकौस्तुभः ❀

न विवक्ष्यन्त इत्यर्थः। अनङुदात्तोऽङुदात्तइत्यादावुदात्तग्रहणं चेह ज्ञापकम् । अन्यथा ह्युदात्तमेवोच्चारयेल्लाघवात् ।

ननु यद्यभेदका गुणास्तर्हि यद्वक्ष्यति भाष्यकारः–'हन्त्या-

गुणः प्रयत्नमन्तरेण न विवक्षित इत्यर्थः। यद्येवं कथमन्यत्रोक्तम्- **'उदात्तनिपातनं करिष्यते'** इति, यावता तत्राऽप्यविवक्षा प्राप्नोति?। नैष दोषः, तत्रापि स्थानेन्तरतमवचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नुच्चारयितव्ये, उदात्तोच्चारणं प्रयत्नेन विवक्षार्थं विज्ञायते। एवमनुनासिकस्य प्रयत्नाधिक्येनोच्चारणं विवक्षार्थमेव,-**उञः ऊँ** इति यथा।

अन्ये त्वाहुः-एकश्रुत्या सूत्राणि पठ्यन्त इति क्वचिदुदात्तोच्चारणं तद्विवक्षार्थमिति ॥

**( उद्द्योतः ) इत्येव न्याय्यमिति।** 'विधेयाऽभिन्नविषये' इति शेषः। तत्रैतत्कृतस्याऽपि **अप्रत्यय** इति निषेधात्। अतस्तथैव ज्ञापकमुपन्यस्यति-**यद्ययमिति। प्रयत्नं**-स्वशब्देनोपादानरूपम्। **कथमिति।** यथा 'वध्यादेशे उदात्तनिपातनेन **एकाच** इति सूत्रस्थमेकाज्ग्रहणं न कार्य'मिति। **यः स्वरः प्राप्त इति।** हन्तेरनुनुदात्तत्वादनुदात्त इत्यर्थः। न चैवमस्थ्यादीनामाद्युदात्तत्वेनाऽऽदेशाऽनङः स्थान्यनुरूपेऽनुदात्ते उच्चारणीये उदात्तोच्चारणं विवक्षार्थमिति ज्ञापितेऽपि व्यर्थमुदात्तग्रहणमिति वाच्यम्; परमाऽस्थिशब्दादावन्तोदात्ते उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाऽभावादित्याशयात्। नन्वेमपि 'चतसर्याद्युदात्तनिपातनसामर्थ्याच्चतस्र इत्यत्र **'चतुरः शसी'** त्यस्याऽप्रवृत्ति'रिति भाष्योक्तमनुपपन्नम्। चतुःशब्दस्य **'त्रः सङ्ख्यायाः'** इत्याद्युदात्ततया तत्स्थानिकचतसरि स्थानिस्वरेणाद्युदात्तोच्चारणोपपत्त्या **'चतुरः शसी'**त्येतद्बाधकत्वाऽयोगादत आह-**अन्ये त्विति।** एकश्रुतिश्च **'विभाषा छन्दसी'**ति वैकल्पिकी, तत्पाठे क्वचिदुदात्तोच्चारणं विवक्षार्थम्। त्रैस्वर्येण पाठमभिप्रेत्य (तु) प्रकृतसूत्रस्थं ज्ञापकमित्यविरोधः। **अन्ये** त्वित्यरुचिबीजं तु निपातनं नामाऽन्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं, तद्रूपात्वलात्तत्र तत्रोदात्तादिविवक्षा। 'तिसृचतसृ' इत्यत्रापि द्वन्द्वप्रयुक्तेऽन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम्। संपूर्णाऽष्टाध्यायी आचार्येणैकश्रुत्या पठितेत्यत्र न मानम्। क्वचित्कस्य चित्पदस्यैकश्रुत्या पाठो यथा-**दाण्डिनायनादि**सूत्रे-'ऐक्ष्वाके'ति। एतावदेव भाष्याल्लभ्यते। यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्, तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः।

[ एकदेशिनोऽभेदकपक्षे दोषदानभाष्यम् ]

**यदि तर्ह्यभेदका गुणा, अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्स्वरितादेः स्वरितान्ताच्च प्राप्नोति ॥**

**( प्रदीपः ) अनुदात्तादेरिति।** अर्धुपलक्षणार्थाऽनुदात्तश्रुतिः स्यादिति प्रश्नः ॥

**( उद्द्योतः ) स्वरितादेरिति** भाष्ये उपलक्षणम्-उदात्तादेरन्तानुदात्ताच्च प्राप्नोतीत्यपि बोध्यम् ॥

[ अभेदवादिनः सिद्धान्तिनः समाधानभाष्यम् ]

**नैष दोषः। आश्रीयमाणो गुणो भेदको भवति। तद्यथा-'शुक्लमालभेत' 'कृष्णमालभेत'। तत्र यः शुक्ल आलब्धव्ये कृष्णमालभेत, न हि तेन यथोक्तं कृतं भवति ॥**

**( प्रदीपः )** उत्तरे त्वज्ग्रहणमेव कुर्यादित्यभिप्रायः ॥

---

❀ **राजलक्ष्मीः** ❀

**गुणः**-उदात्तादिः। **प्रयत्नेति।** उदात्तादिपदेनोच्चारणरूप प्रयत्नं विना, **न विवक्षितः**-शाब्दबोधे विषयो न भवति। **अन्यत्र**-चतस्रादौ। १ समासान्तोदात्ते पाठ्ये चकाराऽकार उदात्तः पठ्यमानो विवक्षार्थ इति भावः। २ प्रसङ्गादाह-**एवमिति।** ३ **यथेति।** हन्त्यादेशस्य वधेः स्थानिवत्त्वादिण्निषेधे प्राप्ते तद्वारणाय वध्यादेशे उदात्तनिपातनेन एकाज्ग्रहणवैयर्थ्यमुक्तं न सङ्गच्छते इतिशङ्काशयः। ४ **उदात्तगुणकस्यापीति।** 'अन्त्यस्येकारस्ये'ति शेषः। **विवक्षायां**-तदुक्तरीत्या विवक्षायाम्। ५ **भाष्योक्तं**-'त्रिचतुरोः' 'चतुरः शसी'त्यत्रोक्तम्। ६ **अजिति।** 'एवं सती'त्यादिः। **उपलक्षणार्थेति।** 'अजादेरेव यथा स्यान्न हलादे'रिति हलादिव्यावृत्त्यर्था चाऽनुदात्तश्रुतिः स्यादित्याशयः। अनुदात्तगुणकपाठस्य तु न सामर्थ्यं, अशोकवनिकान्यायेन तदुच्चारणमित्यस्य वक्तुं शक्यत्वात्। निर्गुणस्योच्चारयितुमशक्यत्वात्। ७ **आश्रीयमाणः**-उदात्तादिपदैर्बोध्यमानः।

❀ **शब्दकौस्तुभः** ❀

वचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नुच्चारयितव्ये उदात्तोच्चारणं यत्नेन विवक्षार्थं ज्ञायत इति। एवमपि यद्वक्ष्यति षष्ठे 'चतसर्याद्युदात्तनिपातनं करिष्यते स निपातनस्वरश्चतुरः शसीत्यस्य बाधको भविष्यती'ति तद्विरुध्येत। चतुश्शब्दो ह्यव्युत्पत्तिपक्षे 'त्रः सङ्ख्यायाः' इति फिट्सूत्रेणाद्युदात्तः, 'चतेरुर'निति व्युत्पादनेपि त्रित्स्वरेणाद्युदात्त एव। तत्स्थानिकस्य चतसृशब्दस्यापि स्थानिस्वरेणाद्युदात्तस्योच्चारणोपपत्तौ 'चतुरः शसी'त्येतद्बाधकत्वाऽयोगात्। अपि च अस्थ्यादीनामप्याद्युदात्तत्वादन्तादेशस्याऽनङोपि स्थान्यनुरूपेऽनुदात्त एवोच्चारणीये उदात्तोच्चारणं विवक्षार्थं भविष्यतीत्युदात्तग्रहणं निष्फलमेव, प्रत्युत क्रियमाणं तद्यत्नाधिक्येऽप्यविवक्षां ज्ञापयेत्। यदप्येकश्रुत्या सूत्रपाठात्क चिदुदात्तोच्चारणं विवक्षार्थमिति, तदपि चिन्त्यम्। एवं सत्यनङो-

( उद्द्योतः ) आश्रीयमाण इति । शब्देन निपातनेन वाश्रीयमाण इत्यर्थः । नन्वेवमनुदात्तादिग्रहणं व्यर्थं स्यादत आह–**अजिति** ॥

[ एकदेशिनस्तकारफलान्तरप्रदर्शनभाष्यम् ]

**[1]असन्देहार्थस्तर्हि तकारः । 'ऐ'जित्युच्यमाने सन्देहः स्यात्–किमिमावैचावेव, आहोस्विदाकारोऽप्यत्र निर्दिश्यत इति ?॥**

[ सिद्धान्तिनस्तत्खण्डनभाष्यम् ]

**सन्देहमात्रमेतद्भवति[2] ॥ सर्वसन्देहेषु चेदमुपतिष्ठते–'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति । त्रयाणां ग्रहणमिति व्याख्यास्यामः । अन्यत्रापि ह्ययमेवंजातीयकेषु सन्देहेषु न कंचिद्यत्नं करोति । तद्यथा–'औतोम्शसो'रिति ॥**

( प्रदीपः ) **व्याख्यानत इति ।** **प्रस्थेऽवृद्ध**मित्याद्युदात्तत्वे[3] सिद्धे **मालादीनां चे**ति मालाशब्दस्य वृद्धार्थत्वादुपादानस्याऽकारप्रश्लेषनिश्चय इत्यर्थः ॥

[ सिद्धान्तिनस्तत्फलप्रदर्शनभाष्यम् ]

**इदं तर्हि प्रयोजनम्–आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा इन्द्रः खट्वेन्द्रः । खट्वा उदकं खट्वोदकम् । खट्वा ईषा खट्वेषा । खट्वा ऊढा खट्वोढा । खट्वा एलका खट्वैलका । खट्वा ओदनः खट्वौदनः । खट्वा ऐतिकायनः खट्वैतिकायनः । खट्वा औपगवः खट्वौपगव इति ॥**

( प्रदीपः ) **इदं तर्हीति ।** ननु भाव्यमान[4]त्वादैचो(ऽत्र) ग्राहका न भविष्यन्ति । नैतदस्ति । न ह्यत्र संज्ञाविधावैचो भाव्यन्ते, किं त्वैज्भिरप्त्वात्रिमात्रचतुर्मात्राणां ग्रहणात्संज्ञाप्रसङ्गाद्वृद्धिगुणविधौ (च) तेषामपि प्रसङ्गात्तन्निषेधाय तपरत्वम् ॥

( उद्द्योतः ) ऐजर्थं तपरत्वमित्याह–**इदं तर्हीति** भाष्ये । चतुर्मात्रोऽपि प्लुतः **'प्लुतावैच'** इति सूत्रे भाष्ये स्पष्टः । कार्यकालमाश्रित्य नोदयति–**नन्विति ।** अयं भावः–तत्पक्षे **मृजेर्वृद्धि**रित्यादावुपस्थितं **वृद्धिरादैजि**ति पदैकवाक्यतयोऽन्वेति । एकं वृद्धिपदं तु प्रत्यभिज्ञामात्रफलकमनुवाद एव । एवं च भाव्यमानत्वं स्पष्टमेवेति । उत्तरस्य त्वयं भावः–"अनुवादत्वकल्पनापेक्षया तत्रोपस्थितं **'वृद्धिरादैजि'**ति-तत्रैव शक्तिग्रहं संपाद्य [6]वाक्यभेदेन **'मृजेर्वृद्धि'**रित्यस्याऽर्थं बोधयति । **'ज्योतिष्टोमेन यजेते'**त्यादौ तु

❀ **राजलक्ष्मीः** ❀

१ तपरस्य सवर्णग्रहणार्थत्वे सिद्धान्तिना खण्डिते एकदेशी फलान्तरमाह–**असन्देहार्थ इति ।** **तर्हि**–अभेदका यदि गुणास्तर्हि । २ **भवतीति ।** 'न तु तेन कश्चिद्दोषो भवती'तिशेषः । ३ **सिद्धे इति ।** 'आकारस्येदानीमवृद्धत्वा'दित्यादिः । 'निश्चय'इत्यस्य 'प्रयोजन'मिति शेषः । ४ **भाव्यमानेति ।** 'कार्यकालपक्षे प्रदेशेष्वि'त्यादिः । **हि**–यतः । ५ वृद्धिसञ्ज्ञाविशिष्टा आदैचो भवन्तीत्येवंरीत्यान्वय इत्यर्थः । ६ वाक्यभेदेन शक्तिग्रहं सम्पाद्य वृद्धिरादैजिति सूत्रं बोधयतीत्यन्वयः ।

❀ **शब्दकौस्तुभः** ❀

ऽप्युदात्तोच्चारणेनैव सिद्धावुदात्तग्रहणवैयर्थ्यापत्तेः । उक्तज्ञापनाऽसम्भवाच्च । तथाहि–किं ज्ञाप्यम्,–स्वशब्देनानुपात्तो गुणो न विवक्ष्यतइति, अहोस्विदसति यत्नविशेषे न विवक्ष्यत इति ?। आद्ये निपातनस्वरो न विवक्ष्येत । अन्त्ये तूदात्तोच्चारण एव विवक्षाहेतौ यत्नविशेषे स्थिते कथं ज्ञापकोत्थानं, मूलशैथिल्यात् । तस्माद्गुणानामभेदकत्वप्रतिपादकमत्रत्यं भाष्यमुत्तरग्रन्थविरुद्धमेवेति चेत्–उच्यते–'विभाषा छन्दसी'ति वैकल्पिकमैकश्रुत्यमङ्गीकृत्य 'पक्षान्तरैरपि परिहारा भवन्ती'ति न्यायेन तत्रतत्राद्यु**दात्तनिपातनं करिष्यत**इत्युक्तम् । इह तु त्रैस्वर्येण सूत्राणां पाठमाश्रित्य स्वरूपेणोपात्तस्य गुणस्य नान्तरीयकत्वेनाऽविवक्षितत्वसम्भवादुदात्तग्रहणं ज्ञापकमित्युक्तमतो न विरोधः । यद्वा–'अणुदित्सवर्णस्ये'त्यत्राण्ग्रहणेनैव सिद्धे गुणभिन्नानां यवलानां सङ्ग्रहाय क्रियमाणमण्ग्रहणं गुणानां भेदकतामपि ज्ञापयति । भेदकाऽभेदकत्वपक्षयोश्च जातिव्यक्तिपक्षयोरिव लक्ष्यानुरोधाद्व्यवस्थेत्युक्तं हल्सूत्रे । तेन भेदकत्वपक्षाश्रयणेनाद्युदात्तनिपातनं करिष्यतइत्यादि भाष्यं बोध्यम् । अत एव चेदमस्त्यदाद्यत्वे अष्टन आ विभक्तावित्यादौ चानुनासिको न प्रवर्त्तते । नन्वण्ग्रहणं 'हलो यमा'मिति लोपे–'ऽन्यतरस्यां'ग्रहणानुवृत्तिज्ञापनार्थमित्युक्तमिति चेन्न; उभयज्ञापकत्वेऽप्यविधात् । नह्येकेनैकमेव ज्ञाप्यमिति नियमः, यावता विनानुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वात् । अत एवाऽऽत्वविकल्पः कृतात्वस्य पदसंज्ञा चेत्युभयमप्यष्टनो दीर्घादिति दीर्घग्रहणेन ज्ञापयिष्यते । अत एव च संहितायामित्यधिकारेण संहिताया अनित्यत्वं कालव्यवायेऽप्यानडादिप्रवृत्तिश्चेत्युभयं ज्ञाप्यतइति दिक् ।

एवं **चाकारस्य तपरकरणं ससवर्णार्थ**मितीहत्यं वार्तिक

शक्तिग्राहकशास्त्रान्तराऽभावादगत्या विधावेव सामानाधिकरण्यान्नामधेयत्वाऽवगतिः कल्प्यते । न तु विद्यमाने शक्तिग्राहके तथा-कल्पनमुचितं, पदस्यानुवादकत्वकल्पनं चे"ति । यत्तु-कार्यकालपक्षे **'वृद्धिरादै'**जित्यादेर्यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठत इत्यर्थः। यथा च ज्योतिष्टोमादिपदानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिस्तथेहाऽपि **'मृजेर्वृद्धि'**रित्यादौ सामानाधिकरण्यान्नामधेयत्वावगतिः। उपस्थापकेन वृद्ध्यादिपदेन उपस्थाप्यस्य वृत्त्या बोधनात्परं संज्ञासूत्रत्वावगति'रिति। तन्न, 'कार्यकालं संज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति-'यचि भम्' इती'ति 'ष्यङः सम्प्रसारण'मिति सूत्रस्थभाष्येण, 'कार्यकालं संज्ञापरिभाषं प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति-'ईदूदेद्द्विवचनं प्रगृह्य'मिति' **ईदूदे'**दिति सूत्रस्थभाष्येण च विरोधात्। त्वद्रीत्या **ह्युपस्थितमिदं भवति यचीती**त्येव वक्तव्यं स्यात्। **'अथ संज्ञे'**त्यादिप्रकृतसूत्रस्थवार्तिकविरोधश्च, प्रकारान्तरेणाऽत्रत्यतत्प्राख्यानपरभाष्यविरोधश्च। किञ्च **मृजेर्वृद्धि**रित्यादिसूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसंपत्त्या चारितार्थ्येन स्वोपस्थापितपदार्थेऽन्वये मानाऽभवात् तत्रैक्परिभाषानुपस्थित्यापत्तिः, वृद्धिपदेनाऽविधानात्। **मृजेर्वृद्धि**रित्यादावेिक्पदोपस्थापकस्यापि विधेयाकाङ्क्षासत्त्वाद्विधिविषये एव तत्प्रवृत्तेश्च भवत्येवाऽन्वयः। एवं च ज्योतिष्टोमवाक्याद्वैलक्षण्येनाऽत्र नामधेयता दुरुपपादा। **किं चो**पस्थाप्यार्थस्य वृत्त्या बोधनात्संज्ञासूत्रत्वं वा, **'इको गुणे'**त्यादिवदुपस्थापकत्वात्परिभाषात्वं वेत्यत्र विनिगमकाऽभावः। वृद्ध्यादिपदैर्वृत्त्या बोधनं च दुरुपपादम्। अनुवादेऽपि संज्ञासूत्रोपस्थिति'रणोऽप्रगृह्यस्य'वृद्धिर्यस्ये'त्यादिविषये भाष्ये स्पष्टेति दिक्॥

[ एकदेशिनः पञ्चमीसमासमबुद्ध्वा शङ्काभाष्यम् ]

**अथ क्रियमाणेऽपि तकारे कस्मादेव त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ? ॥**

[ पञ्चमीसमासाश्रयणेन सिद्धान्तिनःसमाधानभाष्यम् ]

**'तपरस्तत्कालस्ये'ति नियमात् ॥**

[ पञ्चमीसमासमजानत आशङ्काभाष्यम् ]

**ननु तः परो यस्मात्सोऽयं तपरः ! ॥**

[ सिद्धान्तिनः स्वाशयप्रकाशनभाष्यम् ]

**'ने'त्याह । तादपि परस्तपरः ॥**

[ एकदेशिनः पञ्चमीसमासे दोषप्रदर्शनभाष्यम् ]

**यदि तादपि परस्तपरः 'ऋदोर'बितीहैव स्यात्-यवः स्तवः। लवः पव इत्यत्र न न स्यात् ॥**

[ सिद्धान्तिनोऽनुपपत्तिपरिहारभाष्यम् ]

**नैष तकारः ॥ कस्तर्हि ? ॥ दकारः ॥**

[ एकदेशिनो दकाराङ्गीकारबीजप्रश्नभाष्यम्। ]

**किं दकारे प्रयोजनम् ? ॥**

[ सिद्धान्तिनः प्रतिबन्द्या समाधानभाष्यम् ]

**अथ किं तकारे ?। यद्यसन्देहार्थस्तकारः, दकारोऽपि। अथ मुखसुखार्थस्तकारः, दकारोऽपि ॥ [ वृद्धिरादैच् ॥१॥ ]**

( प्रदीपः ) ऐवं स्थिते चोदयन्ति-यद्यैजर्थस्तकारस्तेनाऽऽकारस्य सम्बन्धाभावात् कथमादित्येतत्पदम् ?। उच्यते-तात्पर्येणैजर्थत्वं तकारस्योच्यते, आनुषङ्गिकं त्वाकारार्थत्वं (तकारस्योच्यते)। ज्ञापकद्वारेण ह्याकारप्रश्लेषे विज्ञायमाने प्रतिपत्तिगौरवं भवति। सति तु तकार आकार(स्य)स्वरूपप्रतिपत्तिः स्पष्टा भवतीति तकारसहितस्याकारस्यासन्दिग्धानु-

## ※ राजलक्ष्मीः ※

१ उपस्थापकस्य-वृद्धिपदस्य। **विधेयेति**। अस्य-'उद्देश्यस्ये'त्यादिः। २ **एषः**-ऋदोरबि यत्र। ३ तकारस्वीकारे पञ्चमीसमासमनभ्युपगच्छत एकदेशिनस्तकारे किं प्रयोजनमितिप्रतिबन्दीभाष्यार्थः। बहुव्रीहिमात्रवादिन एकदेशिन ऋदोरबित्यत्र तपरस्य ऋकारे-एव फलं स्यात्, तदेव न, दीर्घस्य ऋकारस्य वाक्यापरिसमाप्तिन्यायेन अणपदबोध्यत्वाभावेन सवर्णग्रहणाऽप्राप्तेः। एवञ्च असन्देहार्थोवा मुखसुखार्थो वा त्वया तकारो वक्तव्यः, तथैव मम दकारोऽपीत्याशयः। ४ **एवंस्थिते**-वृद्धिरादैजित्यत्र तकारे स्थिते।

## ※ शब्दकौस्तुभः ※

मपि भेदकत्वपक्षेण साध्वेव। भाष्ये तु पक्षान्तराभिप्रायेण ऐजर्थत्वमुक्तम्, तदपि यथोद्देशपक्षे बोध्यम्। आदैचां संज्ञाविधावनुवाद्यत्वेन सवर्णग्राहकत्वप्रसक्तेः। कार्यकालपक्षे तु विधिवाक्येनैव वृद्धिसंज्ञाविशिष्टानामादैचां भाव्यमानतया सवर्णग्रहणं न प्राप्नोत्येव। यथा च ज्योतिष्टोमराजसूयादिशब्दानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिर्न तु वाक्यान्तरेण, तथास्मिन्पक्षे वृद्ध्यादीनामपि। 'वृद्धिरादै'जिति सूत्रं त्विकोगुणवृद्धीइतिवत्पदोपस्थापकम्। उपस्थाप्यस्य संज्ञितया परं संज्ञासूत्रव्यवहारः। आद्यपक्षे तु 'यन्न दुःखेने'त्यादौ स्वर्गशब्दार्थावगमवदिहैव वृद्ध्यादिशब्दार्थावगम इति विशेषः। तदयं निर्गलितः सूत्रार्थः—'कृतानामकृतानां चादैचां प्रत्येकं वृद्धिसंज्ञा स्यात्'। आश्वलायनः। ऐतिकायनः। अश्वलैतिकशब्दाभ्यां नडादित्वा-

कार्यप्रतिपादनाऽर्थवत्त्वाद्विभक्तेरुत्पत्तौ सत्यामादित्येतत्पदं सिद्धम् ॥ [ वृद्धिरादैच् ] ॥ १ ॥

( उद्द्योतः ) भाष्ये **किंतकार** इत्यस्य 'तादपि परस्तपर इत्यनङ्गीकुर्वत' इति शेषः । **सम्बन्धाभावादिति।** शेषशेषिभावा[1]ऽभावादित्यर्थः । तान्तस्य पदत्वाऽभावे जश्त्वं न स्यादिति भावः । आनुषङ्गिकं फलं दर्शयति–**ज्ञापकद्वारेणेति।** [ वृद्धिरादैच् ] ॥ १ ॥

---

# इको गुणवृद्धी ॥ १ । १ । ३ ॥

[ योगविभागप्रयोजनजिज्ञासयाऽऽक्षेपभाष्यम् ]

**इग्ग्रहणं किमर्थम् ? ॥**

( प्रदीपः ) **इको गुणवृद्धी । इग्ग्रहणमिति ।** वक्ष्यमाणज्ञापकवशादाकारादिनिरासादिक एव गुणवृद्धी भविष्यत इति प्रश्नः ॥

( उद्द्योतः ) **इको गुण** । गुणवृद्धिग्रहणस्योत्तरत्र निषेध्यसमर्पणायावश्यकत्वेऽपि, इक्पदस्येकः स्थान इत्यर्थार्थमावश्यकत्वेऽपि योगविभागविषय[2]कोऽयं प्रश्नो भाष्ये–**इग्ग्रहणमिति** ॥

[ योगविभागस्थापकसमाधानवार्त्तिकम् ]

*॥*॥ इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम् ॥*॥*

[ व्याख्याभाष्यम् ]

**इग्ग्रहणं क्रियते ॥ किं प्रयोजनम् ? ॥**
**[ 'आत्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम्' ] । आकारनिवृत्त्यर्थं, सन्ध्यक्षरनिवृत्त्यर्थं, व्यञ्जननिवृत्त्यर्थं च ॥**

( प्रदीपः ) **आत्सन्ध्यक्षरेति ।** आकारादीनां स्थानित्वस्य निवृत्त्यर्थमित्यर्थः ॥

( उद्द्योतः ) ननु इग्ग्रहणेनाऽऽकारादीनां निवृत्तिरशक्या कर्तुमत आह–**स्थानित्वस्येति** ॥[3]

[ आकारनिवृत्त्यर्थतोपपादनभाष्यम् ]

**आकारनिवृत्त्यर्थं तावत् ,—याता, वाता । आकारस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥**

(प्रदीपः) आकारस्याऽङ्गान्त्यस्य वृद्धिविधाव[4]भावाद्विशेषाऽभावाच्चाऽकारस्य चाऽतो लोप इति लोपविधानादाकारस्य गुणप्रसङ्गमुदाहरति- **यातेति॥**

( उद्द्योतः ) ननु आकारस्य वृद्ध्युदाहरणाऽदाने, गुणांशे च अकारोदाहरणाऽदाने किं बीजमत आह–**आकारस्येति । वृद्धिविधौ**–सिचिवृद्धिविधौ । 'अयासी'दित्यादौ अपवादत्वात्सगिड्भ्यां सा बाध्यते इति भावः । इतरवृद्धिऽनिकां व्यावृत्तिसिद्धेः । तथाहि–अकारस्य पचतीत्यादौ शपन्तिपश्चाश्रित्य यथाक्रमं 'पुगन्ते'ति 'सार्वधातुकार्द्धधातुकयो'रिति च सूत्रेण सत्यपि गुणे रूपे विशेषो नास्ति । 'अचिकीर्षी'दित्यादौ स्वतो लोपेन वृद्धिर्बाध्यते, 'ण्यल्लोपा'विति पूर्वविप्रतिषेधस्य वक्ष्यमाणत्वात् । सूत्रारम्भपक्षेपि ह्येपैव चिकीर्षक इत्यादौ गतिः । 'अचो ञ्णिती'त्यत्र निर्दिष्टस्थानिकत्वेनेक्परिभाषाया अप्रवृत्तेः । 'अयासी'दित्यादौ तु सिचि वृद्धौ सत्यामपि न क्षतिः । वस्तुतस्तु सा परत्वात् सगिड्भ्यां बाध्यते । येन नाप्राप्तिन्यायेनापवादत्वाद्बाध्यत इति तु निष्कर्षः । न च 'याता' 'वाते'त्यादावातो गुणप्रसङ्गः, 'गापोष्ट'गिति टकः कित्त्वेनाकारस्य गुणो न भवतीति ज्ञापितत्वात् । तद्धि कित्त्वं 'सामग' इत्यादावल्लोपार्थं क्रियते । यदि त्वाकारस्य गुणः स्यात्तर्हि द्वयोरकारयोः पररूपेण 'सामग' इत्या-

---

❀ राजलक्ष्मीः ❀

१ अव्यवहितोत्तरत्वस्य सत्त्वात्कथं सम्बन्धविरहोऽत आह–**शेषेति ।** एकार्थकवर्णसमूहः पदं, न च आकारार्थस्तकारः किन्त्वैजर्थं इति आकरानुपकारिणो न तच्छेषता । तदुक्तं–'**तादर्थ्येन हि शेषत्वं नाश्रयाश्रयिभावतः । राजार्थौपयिकं नित्यमुष्ट्रोवहति कुङ्कुमम्** ॥ **इतीत्या**शयः। २ योगविभागो व्यर्थः 'न धातुलोप'इत्यनेन सहैव पाठ्यमित्याशयः । ३ आकारादीनामप्राप्तेरन्यथाऽर्थमाह–**स्थानित्वस्येति।** आकारादिनिष्ठस्थानित्वस्येत्यर्थः । ४ **विशेषस्य**–ञ्णित्परत्वस्य–अभावादित्यर्थः । 'युका व्यवायादित्याकूत'मिति

---

❀ शब्दकौस्तुभः ❀

त्फक्र्यादिवृद्धिः । उपगोरपत्यमौपगवः ॥ [ **वृद्धिरादैच्** ]

**अदेङ्गुणः ।** अदेङां गुणसंज्ञा स्यात् । तपरकरणमिहसर्वार्थम् । तेन तरतीत्यत्राकार एव न तु कदा चिदाकारः । न च प्रमाणत आन्तर्येण नियमसिद्धिः, रपरत्वे कृते एकस्याध्यर्द्धमात्रत्वादपरस्यार्द्धतृतीयमात्रत्वात् । पचन्ति चेता स्तोता ॥ [ **अदेङ्गुणः** ]

**इको गुणवृद्धी ।** यत्र ब्रूयाद्गुणो भवति वृद्धिर्भवतीति तत्रेक इति षष्ठ्यन्तमुपस्थितं बोध्यम् । चेता । स्तोता । अहार्षीदित्यादि । इक इत्युक्तेर्नेह–याता ग्लायति उम्भितेति । तथा च वार्त्तिकम्–**इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थमिति।** ननु नैतानि सन्ति प्रयोजनानि, ज्ञापकेना-

विधौ संभवेऽप्याह—**विशेषाभावादिति। अकारस्येति। 'ण्यल्लोपा'**विति पूर्वविप्रतिषेधेनाऽतो लोपस्य वृद्धिगुण-बाधकत्वादिति भावः । 'पुत्रीयती'त्यादौ त्वविशेष इति बोध्यम् । **आकारस्य गुणेति। सार्वधातुकार्ध-धातुकयो**रित्यनेन ॥

[ आरम्भवादिनः सन्ध्यक्षरनिवृत्त्यर्थतोपपादनभाष्यम् ]

**सन्ध्यक्षरनिवृत्त्यर्थम् ,—ग्लायति म्लायति । सन्ध्यक्षरस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥**

( प्रदीपः ) **ग्लायतीति ।** एचां द्विमात्रत्वाऽविशेषात् प्रयत्नाधिक्याऽभावादैकारोपदेशेऽप्येकारो गुणः स्यात् ॥

( उद्द्योतः ) नन्वैकारोच्चारणसामर्थ्याद्गुणो नेत्यत आह—**एचामिति ।** सर्वेषां विवृत एव प्रयत्न इत्यभिमानः॥

[ आरम्भावदिनो व्यञ्जननिवृत्त्यर्थतोपपादनभाष्यम् ]

**व्यञ्जननिवृत्त्यर्थम्—उम्भिता, उम्भितुम्, उम्भितव्यम् । व्यञ्जनस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥**

( प्रदीपः ) **उम्भितेति ।** भकारस्यौष्ठ्यत्वादोकारो गुणः स्यात् ॥

[ सूत्रप्रत्याख्यानवादिनः प्रथमप्रयोजननिरासभाष्यम् ]

**आकारनिवृत्त्यर्थेन तावन्नार्थः । आचार्यप्रवृत्तिर्ज्ञापयति—'नाकारस्य गुणो भवती'ति । यदयम्—'आतोऽनुपसर्गे कः' इति ककारमनुबन्धं करोति ॥**

**कथं कृत्वा ज्ञापकम् ? ॥ कित्करणमेतत्प्रयोजनम्—'किती'त्याकारलोपो यथा स्यात् । यदि चाऽऽकारस्य गुणः स्यात्कित्करणमनर्थकं स्यात् । गुणे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्यात्—'गोदः' 'कम्बलद' इति । पश्यति त्वाचार्यो—'नाकारस्य गुणो भवती'ति, ततः ककारमनुबन्धं करोति ॥**

( प्रदीपः ) **पररूपेणेति ।** अतो लोपस्तु न भवत्यार्धधातुकोपदेशे यदकारान्तं तस्य लोपविधानात् ॥

---

※ शब्दकौस्तुभः ※

**श्रीगुरुचरणाः। १ इतरवृद्धीति।** 'अचो ञ्णिती'तिवृद्धिविधावित्यर्थः । २ तथा च 'चिकीर्षिता' 'अचिकीर्षीत्' 'अवधी'दित्यावङ्गान्त्यस्यातोऽसम्भव इत्याशयः । ३ स्थानत आन्तर्यस्य बलीयस्त्वादित्याशयः । तथा चोनवितेति स्यादित्यवधेयम् ।

---

※ शब्दकौस्तुभः ※

दिरूपसिद्धौ किं कित्त्वेन ?। न चेह 'चिकीर्षक' इत्यादाविव परत्वादाङ्गत्वाच्चातो लोप एवोदाहर्त्तुमुचितो न तु पररूपमिति वाच्यम् , तावतापि ज्ञापकत्वे बाधकाऽभावात् । वस्तुतस्तु नेह लोपेन भवितव्यम् । तत्र ह्यनुदात्तोपदेशेत्यतोऽनुवृत्तेनोपदेशग्रहणेनार्द्धधातुकस्य विशेषणादार्द्धधातुकोपदेशे यदकारान्तं तस्यातो लोपो विधीयते । अन्यथा 'गतो' 'गतवा'नित्यादावतिप्रसङ्गात् । न चाऽसिद्धवत्सूत्रेण निर्वाहः। तस्य भाष्यकृता प्रत्याख्यास्यमानत्वात् । किं च 'अय पय गतौ' आभ्यां क्विपि अत् पदिति रूपं माधवादिभिरुदाहृतं तदपि यथाश्रुते न सिद्ध्येत् । तस्मादुपदेशानुवृत्तिरेव शरणम् । कथं तर्हि धिनुतः कृणुत इत्यादावतो लोप इति चेत्, सन्नियोगशिष्टतया उप्रत्ययोपदेशवेलायामेवाकारस्यापि बुद्ध्यारोहादिति **केचित्**। **अन्ये तु**—'धिन्विकृण्व्योरच्चे'ति सौत्रक्रमानुरोधात्प्रथममकारादेशस्तदनन्तरं चशब्दाकृष्ट उप्रत्यय इति नोक्तदोष इत्याहुः

नन्वेवं सामगायेत्यादावेकादेशस्य पूर्वान्तत्वेन ग्रहणादातोधातोरित्यालोपः स्यादिति चेदत्र **कयटः**—"अकारमाश्रित्य कृतो यशब्दः सन्निपातपरिभाषया लोपं न प्रवर्त्तयति । दीर्घत्वं तु कष्टायेति निपातनाद्भवती"त्येओङ्सूत्रे स्थित्वा समाहितवान् । तस्यायमाशयः—यादेशे हि ह्रस्वत्वविशिष्टमत्वं प्रयोजकं, तद्विधावत इत्यनुवृत्तः । तत्र यद्यपि दीर्घेण ह्रस्वत्वांशो निवर्त्तितस्तथाप्यत्वमात्रमादेशेऽप्यनुवर्त्तते । तदपि चेल्लोपेन निवर्त्येत तर्हि परिभाषाविरोधः । दीर्घांशे परं ज्ञापकात्परिभाषा बाध्यते । न चैवमंशान्तरेपि तद्बाधोऽस्त्विति वाच्यं, तदबाधेप्युपपत्तेः । प्रकृतसूत्रे एओङ्सूत्रे च गापोष्टकः कित्त्वस्याऽनन्यार्थतां वदन् भाष्यकारश्चात्र प्रमाणम् । एतेन 'शुभंया'शब्दस्य नपुंसके ह्रस्वत्वे ङेर्यादेशे दीर्घे च सत्यातोधातोरित्यालोपे च 'शुभंय्य'-त्यादि **माधवो**दाहृतं भाष्यविरोधाच्चिन्त्यम् । अत एव नपुंसके 'श्रीपं ज्ञानव'दिति ग्रन्थं श्रीपायेति रूपपरतया यथाश्रुतमेव समञ्जसं भङ्क्त्वा माधवानुरोधेन 'प्रायेण ज्ञानव'दिति व्याचक्षाणा अपि प्रत्युक्ताः । तथा 'ग्लायती'त्यादौ सन्ध्यक्षराणामप्युपदेशसामर्थ्याद्गुणो न भविष्यति । इतरथाहि एकारमेवोपदिशेत् । मात्रालाघवविरहेऽपि प्रक्रियालाघवसत्त्वात् । न चैवमायादेशोऽपि न स्यादिति वाच्यं, 'यं विधिं

( उद्द्योतः ) आर्धधातुकोपदेश इति । गुणे[1]निष्पन्नश्च तदुत्तरकालिक इति भावः ॥

[ सूत्रखण्डकस्य द्वितीयप्रयोजननिरासभाष्यम् ]

**सन्ध्यक्षरनिवृत्त्यर्थेनापि नाऽर्थः। उपदेशसामर्थ्यात्सन्ध्यक्षरस्य गुणो न भवति ॥**

( प्रदीपः ) उपदेशसामर्थ्यादिति । प्रतिपत्तिलाघवार्थमेकारमेवोपदिशेदित्यर्थः[2] ॥

( उद्द्योतः ) प्रतिपत्तिलाघवम्–प्रक्रियालाघवम् । 'तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ।' इति पाणिनीयशिक्षोक्तेः प्रयत्नलाघवमपि बोध्यम् ॥

[ खण्डकस्य तृतीयप्रयोजननिरासभाष्यम् ]

**व्यञ्जननिवृत्त्यर्थेनाऽपि नार्थः। आचार्यप्रवृत्तिर्ज्ञापयति–'न व्यञ्जनस्य गुणो भवती'-ति, यदयं जनेर्डं शास्ति ॥**

**कथं कृत्वा ज्ञापकम् ? ॥ डित्करण एतत्प्रयोजनम्–'डिती'ति टिलोपो यथा स्यात् । यदि व्यञ्जनस्य गुणः स्याड्डित्करणमनर्थकं स्यात् । गुणे कृते त्रयाणामकाराणां पररूपेण सिद्धं रूपं स्यात्–उपसरजो मन्दुरज इति । पश्यति त्वाचार्यो–'न व्यञ्जनस्य गुणो भवती'ति । ततो जनेर्डं शास्ति[3] ॥**

(प्रदीपः) यदयं जनेरिति । यद्येवं[4] मिदेर्गुणो विधीयमानो ज्ञापकेन व्यञ्जनस्य निरस्तत्वादिग्ग्रहणाऽभावात् [च] सर्वादेशः प्राप्नोति । मिदेः इर्मिदिरित्याश्रयणादिकारस्यैव भविष्यतीत्यदोषः ॥

( उद्द्योतः ) इग्ग्रहणेत्ति। ततश्च[5] मिदेरिति नावयवषष्ठी, किंतु स्थानषष्ठीति सर्वादेशो गुणः स्यादित्यर्थः ॥

[ खण्डकोक्तज्ञापकनिराकरणेन सूत्रस्थापनभाष्यम् ]

**नैतानि सन्ति ज्ञापकानि । यत्तावदुच्यते–'कित्करणं ज्ञापकं नाऽकारस्य गुणो भवती'ति ॥ उत्तरार्थमेतत्स्यात्–'तुन्दशोकयोः परिमृजापनुदो'रिति ॥**

( प्रदीपः ) यत्तावदिति । विशेषप्रतिपादनाय सकलज्ञापकाक्षेपः ॥

( उद्द्योतः ) भाष्ये–नैतानि सन्ति ज्ञापकानीति । छत्रिन्यायेन[6] । ननु 'नैतानि सन्ति ज्ञापकानी'ति प्रतिज्ञायाऽग्रे ज्ञापकसमर्थनमयुक्तमित्यत आह–विशेषेति । 'टकः कित्त्वं ज्ञापकम् । 'यं विधिं प्रती'-त्यादिविशेषप्रतिपादनायेत्यर्थः ॥

[ ज्ञापकान्तरप्रदर्शनेन सूत्रखण्डकभाष्यम् ]

**यत्तर्हि 'गापोष्ट'गित्यनन्यार्थं[7] ककारमनुबन्धं करोति[8] ॥**

[ आरम्भवादिनो द्वितीयप्रयोजनबाधकसामर्थ्यनिरासभाष्यम् ]

**यदप्युच्यते–'उपदेशसामर्थ्यात्सन्ध्यक्षरस्य गुणो न भवती'ति। यदि–यद्यत्सन्ध्यक्षरस्य प्राप्नोति तत्तदुपदेशसामर्थ्याद्बाध्यते आयादयोऽपि तर्हि न[9] प्राप्नुवन्ति[10] ॥**

( प्रदीपः ) केचिदाहुः–टकः कित्त्वेन ज्ञापकेनाऽऽकारनिवृत्त्यर्थत्वेन निराकृते 'यदप्युच्यते' इति ज्ञापकाक्षेपो ग्रन्थच्छायां न पुष्णाति । तस्मादार्थेन क्रमेण सर्वज्ञापकभङ्गोपन्यासं कृत्वा, यथासंभवं ज्ञापकसमर्थनं कर्त्तव्यम् ॥ **आयादयोऽपीति।** ऐकारोच्चारणस्याऽविकृतरूपश्रवणार्थत्वादितिभावः ।

( उद्द्योतः ) शङ्कते–केचिदिति । 'यदप्युच्यते इति समुच्चयार्थोऽपिशब्दे'ने'ति शेषः । आर्थेन–सामर्थ्यप्राप्तेन । भङ्गेति । भङ्गसदृश इति भावः ॥

[ प्रत्याख्यातुः पुनःसामर्थ्यस्थापनभाष्यम् ]

**नैष दोषः । यं विधिं प्रत्युपदेशो-**

❀ राजलक्ष्मीः ❀

१ गुणेति । अकार इत्यर्थः। तदुत्तरेति । उपदेशोत्तरेत्यर्थः। २ द्विमात्रत्वाऽविशेषे प्रयत्नाधिक्यविरहेऽपि च प्रक्रियालाघवेन एकारमेवोपदिशेदित्यर्थः । प्रथमोपस्थितत्यागे मानाभावाच्चेत्यपि बोध्यम् । ३एवञ्च सूत्रं(योगविभागः)निष्फलमिति भावः । ४ ज्ञापकेन सूत्रं प्रत्याचक्षाणं प्रति शङ्कते–यद्येवमिति । 'नन्वि'त्यादिः । व्यञ्जनस्य–अन्त्यस्याऽलोदकारस्य । ५ उत्तरयति–मिद इति । ६ तत इति। व्यञ्जनस्य स्थानित्वासम्भवादलोन्त्यपरिभाषानुपस्थितेरित्यर्थः। ७ इति–इत्यस्य 'तदयुक्तं यत'इति शेषः। ८ एवञ्च सूत्रमावश्यकमित्याशयः । ९ छत्रीति । ( उपदेशसामर्थ्यादिघटिते) ज्ञापकाऽज्ञापकसमुदाये ज्ञापकशब्दप्रयोग इत्याशयः। १० एवञ्च न सूत्रावश्यकतेति स्थापितमेकदेशिना प्रत्याख्यानवादिनेति बोध्यम् । ११ नेति । 'सूत्रप्रत्याख्यातुस्तव मते नासौ बाध्यत'इति न्यायात् । गुणं प्रति ह्यैकारोपदेशोऽनर्थकः, 'ग्लै'इत्यस्यापि सुपठत्वात् । आयादेशस्य तु निमित्त-

❀ शब्दकौस्तुभः ❀

प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव

**ऽनर्थकः स विधिर्बाध्यते । यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । गुणश्च प्रत्युपदेशोऽनर्थकः, आयादीनां पुनर्निमित्तमेव ॥**

( प्रदीपः ) **यं विधिमिति** । आयादेशस्य हि ऐकार एव निमित्तमित्यायादेशो न बाध्यते । न हि 'ग्ला' यित्येवं पाठः शक्यः कर्तुम्, त्वया ग्लायत इत्यादिरूपाऽसिद्धिप्रसङ्गात् । **न ध्याख्येति** च निपातनादात्वं गुणवन्न बाधिष्यते ॥

( उद्द्योतः ) **ग्लायत इ(त्यादी)ति** । **आदिना** 'जग्ला'वित्यादि । नन्वेवमात्वमपि बाध्येत, न हि तस्य ऐकारो निमित्तं, 'ग्ले' इति पाठेऽपि सुकरत्वादत आह– **न ध्याख्येति** । 'ध्या' इति कृतात्वनिर्देशेनैकारोच्चारणस्या-

त्वाऽबाधकत्वज्ञापनादिति भावः । न चाऽस्य सौत्रत्वम्, बाधकत्वमङ्गीकृत्य सौत्रत्वकल्पनापेक्षयाऽबाधकत्वज्ञापनस्य लघुत्वादित्याहुः । न च 'रै'शब्दादिभ्य आचारक्विपि 'रायती'त्यादौ सन्ध्यक्षरस्य गुणः स्यादिति वाच्यम्, एजन्तेभ्य आचारक्विबभाव एतद्भाष्यप्रामाण्यादित्यदोषात् । **गुणवदिति** ।–वैधर्म्ये दृष्टान्तः ॥

[ तृतीयप्रयोजनबाधकज्ञापकनिरासेन सूत्रस्थापनभाष्यम् ]

**यदप्युच्यते[3]–'जनेर्डवचनं ज्ञापकम्– 'न व्यञ्जनस्य गुणो भवती'ति ॥ सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति । न च जनेर्गुणेन सिद्ध्यति । कुतो[4] ह्येतत्– 'जनेर्गुण उच्यमानोऽकारो भवति, न पुनरेकारो वा स्यादोकारो वे'ति ? ॥**

---

॥ राजलक्ष्मीः ॥

इत्यादिः । १ एकारोच्चारणेनैव सिद्धेरित्याशयः । एवञ्च सूत्रं व्यर्थमिति प्रत्याख्यानवादिनः स्वमतस्थापना । २ अनिट्कारिकासु च पाठ्यं स्यादित्यपि बोध्यम् । ३ आरम्भवादी ज्ञापकविघटनेन व्यञ्जननिवृत्त्यर्थतां स्थापयति–**यदपीति** । ४ असिद्धिमेव प्रतिपादयन्ति–**कुतो हीति** ।

---

॥ शब्दकौस्तुभः ॥

मेव । न च 'ग्लाय्'इत्येव पठ्यतामिति वाच्यं,–तथा सति हि 'त्वया ग्लायते'इति रूपं न स्यात् । यकारद्वयश्रवणप्रसङ्गात् । 'जग्ला'वित्याद्यसिद्ध्यापत्तेश्च । यत्तु एकाजजन्तत्वाभावादिट्प्रसङ्गेन 'ग्लाते'त्यादि न स्यादिति । तन्न । अनुदात्तोपदेशेष्वेषां सुपठत्वात् । न चैवमग्लासिष्टामित्याद्यसिद्धिरनादन्तत्वेन सगिटोरसम्भवादिति वाच्यं, 'लोपो व्यो'रिति यलोपे कृते सगिटोः सुलभत्वात् । सन्निपातपरिभाषा त्वनित्येति कृतितुग्ग्रहणेन ज्ञापयिष्यते । तेन वल्सन्निपातेन कृतो यलोपो वल्सन्निपातविघातकमपीटं प्रवर्त्तयिष्यत्येव । अनित्यताश्रयणेनैव हि 'दाक्षिः' 'गोदं' इत्यादावदातोर्लोपः । अन्यथा इञ्कप्रत्ययौ प्रति तयोरुपजीव्यत्वाल्लोपो न स्यात् ।

अस्तु वा सन्निपातपरिभाषाश्रयणादग्लासिष्टामित्यादि न सिध्येदित्यपि यान्तोपदेशे दोषान्तरम्, सर्वथापि सन्ध्यक्षराणामुपदेशसामर्थ्याद्गुणो न, आयादयस्तु भवन्त्येवेति सिद्धम् । स्यादेतत्–'आदेच'इत्यात्त्वमपि तर्हि बाध्यतां, नह्यैजुपदेश आत्त्वस्य निमित्तम् । 'ग्लै'इत्युपदेशेपि तस्य सुकरत्वात् । शिति गुणेनाऽशित्यात्वेनैचोपहारे प्राप्ते ऐजुपदेशसामर्थ्येन गुणाऽऽत्वयोर्मध्ये कतरद्बाध्यं कतरन्नेत्यत्र विनिगमनाविरहेणोभयबाधश्चौव्यात् । न चैवमात्वविधेः कोऽवकाश इति वाच्यं, 'धेट् पाने' 'शो तनूकरणे' इत्यादेरवकाशस्य स्पष्टत्वात् । नन्वेवमदेङ्त्येव ब्रूयात् । तथा चैज्ग्रहणं निरवकाशमेवेति चेत्, न; उत्तरार्थत्वात् । 'मीनातिमिनोती'त्यत्र ह्येच इत्यनुवृत्त्या 'आकारान्तानामेजन्ताः प्रकृतय एजन्तानामपीकारान्ता' इति घुसंज्ञासूत्रे वार्तिककारः स्फुटीकरिष्यति । अत्राहुः–अन्यतरबाधेनैव संभवे उभयबाधकल्पनं तावदन्याय्यम् । तत्र यद्यणुरपि विशेषो नावधार्येत तर्हि विनिगमनाविरहात्स्यादेवोभयबाधः । अस्ति चेह विनिगमकम् । 'न ध्याख्ये'ति सूत्रे ध्यायतेः कृतात्वस्य निर्देशेनात्वाऽबाधज्ञापनात् । किञ्च एज्ग्रहणसामर्थ्यादप्यात्वं भवति । यत्तूक्तमुत्तरार्थं तदिति, तन्न, 'मीनाती'ति सूत्रेण हि नैचः स्थाने आत्वं विधीयते, किन्त्वेज्निमित्ते प्रत्यये विवक्षिते उपदेशावस्थायामेवान्त्यमात्रस्यात्वं विधीयते । अन्यथा 'दाय' इत्यादौ भावे घञं बाधित्वा एरच् स्यात् । 'ईषदवदानः' 'स्ववदान' इत्यातो युच्च न स्यात् । 'अवदाय' इति 'श्याद्व्यधे'ति णो न स्यात् । स्पष्टीकरिष्यते चेदं षष्ठ एव भाष्यकृता । एवं चैज्निमित्ते प्रत्यये इत्युच्यमानेपि 'दापयति' 'मापयती'त्यादि सिध्यत्येव, णिचो गुणं प्रत्यपि स्वरूपयोग्यत्वात् । वृद्धया गुणबाधेपि योग्यताऽनपायात् । न चेह फलोपधानं विवक्षितम्, आत्वस्यैज्विषये प्रागेव प्रवृत्तेरभ्युपगमात् । अन्यथा घञ्युच्णप्रत्यया न स्युरिति समनन्तरमेवोक्तम् । तस्मादात्वं भवत्येव । गुणस्त्वैकारोपदेशसामर्थ्याद्बाध्यत इति स्थितम् ।

'व्यञ्जनानां गुणः स्या'दिति परमवशिष्यते । ततश्च 'ईहिते'त्यत्र हकारस्य कण्ठ्यत्वादकारः स्यात्, 'उम्भिते'त्यत्र भकारस्यौष्ठ्यत्वादोकारः, ततश्च 'येता' 'उनविते'ति स्यात् । ईकारस्य यणि कृतेऽकारस्येटा सहाद्गुणः । न त्वल्लोपः । 'आर्द्धधातुकोपदेशे यदकारान्तं तस्य लोप' इति व्याख्यातत्वात् । उम्भेश्चाऽनुस्वारपरसवर्णयोर्गुणे कर्त्तव्येऽसिद्धत्वादिति । नैष दोषः । 'सप्तम्यां जनेर्ड' इत्यत्र

[ योगविभागखण्डकस्योक्तज्ञापकस्थापनभाष्यम् ]

**आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्य मात्रिकोऽकारो भविष्यति ॥**

[ सूत्रारम्भवादिनो ज्ञापकताविघटनभाष्यम् ]

**एवमप्यनुनासिकः प्राप्नोति ॥**

[ प्रत्याख्यानवादिनो ज्ञापकतासाधकभाष्यम् ]

**पररूपेण शुद्धो भविष्यति ॥**

**( प्रदीपः ) पररूपेणेति ।** रूपग्रहणस्येदमेव प्रयोजनम्—'यादृक्परस्य रूपं तादृगेव यथा स्या'दिति ॥

**( उद्द्योतः )** नतु पररूपेऽपि गुणानाममेदकतया कदाचित्सानुनासिकोऽपि स्यादत आह—**रूपग्रहणस्येति । परे तु** अत्र पररूपशब्देन परशब्देन वा यदुपस्थितं रूपं प्रयोगस्थं तस्य ग्रहणम् । स्थाने जायमानः किंगुणक इत्याकाङ्क्षायाम**न्तरतम**परिभाषयोभयगुणकः । प्रकृते चोभयान्तरतमाऽसंभवात् परशब्देन यद्गुणस्योपस्थितिस्तद्गुणक एव भविष्यतीति भाष्याशयाद्**रूपग्रहणस्ये**त्यादि चिन्त्यम् । गुणानां शब्दत्वादिवत् शब्दस्वरूपत्वाऽभावेन व्यावृत्त्यसंभवश्च रूपग्रहणेनेत्याहुः ॥

[ सिद्धान्तिनो ज्ञापकबाधकभाष्यम् ]

**एवं तर्हि गमेरप्ययं डो वक्तव्यः । गमेश्च गुण उच्यमान आन्तर्यत ओकारः प्राप्नोति, तस्मादिग्ग्रहणं कर्तव्यम् ॥**

**( प्रदीपः ) गमेरप्ययमिति । सप्तम्यां जनेर्ड** इत्यतोऽ**न्येष्वपि दृश्यत** इत्यत्र डोऽनुवर्तमानो गमेरपि विधीयत इत्यज्ञापकं डित्वमिति व्यञ्जननिवृत्त्यर्थं सूत्रं स्थितम् ॥

**( उद्द्योतः )** ननु **'गमेरप्ययं ड'** इति भाष्यमनुपपन्नं, गमो **'गमश्चान्तात्यन्ताध्वदूरपारे'**ति सूत्रे पठितेनाऽ**न्यत्रापि दृश्यते** इति वार्त्तिकेन नगोऽग इत्यादौ डस्य सत्त्वादत आह—**सप्तम्यामिति । 'सप्तम्यां जने'**-रित्युत्तरं पठिते**ऽन्येष्वपि दृश्यते** इति सूत्रे दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वेन तेनैव प्रकृत्यन्तरादपि डे सिद्धेऽ**न्तात्यन्ते**ति प्रकरणस्थं वार्त्तिकं न कार्यमिति भावः । भाष्ये **आन्तर्यत ओकार इति ।** स्थानत आन्तर्यादिति भावः । ननु 'तनोतेर्डउः सन्वच्चे'ति डित्करणान्न व्यञ्जनस्य गुण इति चेन्न; उणादीनामव्युत्पत्तिपक्षाङ्गीकारात् । न चैवमपि स्थानप्रयत्नान्तरतमेषु इकारादिषु चरितार्थानि गुणादिशास्त्राणि

### ॐ राजलक्ष्मीः ॐ

१ प्रमाणकृतेनाऽऽन्तर्येणेत्यर्थः । एवञ्च ज्ञापकेन तृतीयप्रयोजननिरासात्सूत्रं व्यर्थमेवेत्याशयः । २ योगविभागवादी पुनरप्यसिद्धिं सूचयति—**एवपीति** । ३ योगविभागखण्डकः परिहरति—**पररूपेणेति** । एवञ्च सूत्रं ( योगविभागो ) व्यर्थमित्याशयः । ४ योगविभागवादी डित्वस्य ज्ञापकतां विघटयन् सूत्रं ( योगविभागं ) स्थापयति—**एवमिति । आन्तर्यत इति ।** स्थानकृतान्तर्यस्य प्राबल्यादितिभावः । ५ 'तस्माड्डित्त्वमवश्यं वक्तव्यमिति न तज्ज्ञापक'मिति शेषः । ६ उपसंहरति—**तस्मादिति** । एवञ्च व्यञ्जननिवृत्त्यर्थं सूत्रं ( योगविभागः ) कर्त्तव्यमिति स्थितम् । ७ **अनुपन्नमिति** । 'अय'मित्युक्तिरनुपपन्नेत्यर्थः ।

### ॐ शब्दकौस्तुभः ॐ

'ड'प्रत्ययस्य डित्करणं ज्ञापकम्—'न व्यञ्जनस्य गुणो भवती'ति । यदि हि स्यात्तर्हि नकारस्यार्द्धमात्रिकस्य मात्रिकेऽकारे गुणे कृते त्रयाणामकाराणामतो गुण इति पररूपे च सिद्धं रूपमुपसरजो मन्दुरज इति, तत्किं टिलोपाऽर्थेन डित्करणेन ? । स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथममुपसरणमुप**सरः** । 'प्रजने सर्त्ते'रित्यप्प्रत्ययो घञोपवादः । 'प्रजनः स्यादुपसर' इति सङ्कीर्णवर्गेऽमरः । प्रजायतेऽस्मिन्प्रजनः—पशूनां गर्भग्रहणकाल इति **क्षीरस्वामी** । उपसरे जात उपसरजः । मन्दुरजः । 'ङ्यापोः संज्ञाछन्दसोर्बहुल'मिति ह्रस्वः । 'वाजिशाला तु मन्दुरे'त्यमरः । न च डकारः श्रवणार्थोऽस्त्विति वाच्यम् , 'प्रावृट्शरत्कालदिवां 'जे'इति कृतटिलोपनिर्देशाल्लिङ्गात् । ननु नेदं लिङ्गं 'जै क्षये' इत्यस्य कप्रत्ययान्तस्य 'ज'इति निर्देशोपपत्तेः । कथं तर्हि कर्मण्युपपदे विहित आतः कः 'प्रावृषिज'इत्यादौ स्यादिति चेत् , 'द्विपः' 'पादप' इत्यादिसिद्धये 'सुपि स्थ' इत्यत्र 'सुपी'ति योगविभागाभ्युपगमात् । सत्यम् । डकारस्य श्रवणार्थत्वे इत्संज्ञाशास्त्रं बाध्येत । न च प्रयोजनाऽभावः, टिलोपार्थत्वात् । न च गुणेनाऽन्यथासिद्धिः, तदभावस्याऽपि ज्ञाप्यत्वात् । निषादस्थपत्यधिकरणन्यायेन फलमुखगौरवस्याऽदोषत्वात् । डकारस्य श्रवणार्थताभ्युपगमे **'सिद्धं तु नित्यशब्दत्वात्किमर्थं शास्त्रमिति चेन्निवर्त्तकत्वात्सिद्ध'**मिति वृद्धिसूत्रस्थवार्तिकविरोधाच्च । नन्वसति डित्त्वे रूपं न सिध्यति, नकारस्थाने गुणस्यापि सानुनासिकस्य प्रसङ्गात् । न च निरनुनासिकेन प्रत्ययाऽकारेण सह पररूपाच्छुद्धो भविष्यतीति वाच्यं, पररूपविधानेऽपि गुणानामभेदकतया पर्यायेण सानुनासिकप्रसक्तेर्दुर्वारत्वादिति । मैवम् । 'एङि पर' इतीयता सिद्धे 'रूप'ग्रहणादधिकाद्यत्नाद्गुणविवक्षोपपत्तेः । तस्य ह्येतदेव फलं—'यादृशं परस्य रूपं निरनुनासिकत्वाद्युपेतं तादृगेव यथा स्या'दिति । तस्माज्जनेर्डवचनं ज्ञापकं न व्यञ्जनस्य गुणो भवतीति । एवं **चेग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थमिति** वार्त्तिकमसङ्गतमिति प्राप्ते भगवान् भाष्यकार इत्थं सिद्धान्तमाह—

व्यञ्जने न प्रवर्त्तन्त इति वाच्यम्; ईशादौ शकारे तथाप्यतिप्रसङ्गात्, सूत्रमते स्थानप्रयत्नैक्यादिति भाष्याशयः। 'स्थानेन्तरतमे'इति सप्तम्यन्तपाठस्य भाष्ये प्रत्याख्यानेनाऽस्या युक्तेरसंभवदुक्तिकत्वाच्च ॥

[ सूत्रारम्भे खण्डकस्य दूषणप्रदर्शनभाष्यम् ]

**यदीग्ग्रहणं क्रियते–द्यौः, पन्थाः, सः, इममिति, एतेऽपीकः प्राप्नुवन्ति ॥**

( उद्द्योतः ) भाष्ये–एतेपीति । औकारादयः। एषूदाहरणेष्विकः प्राप्नुवन्तीत्यन्वयः। 'स' इत्यत्र तु न स्यादेवेति भावः। '**त्यदादीना**'मित्यत्र 'त्यदादीना'मिति तु '**तदोः सः सा**'वित्युत्तरार्थं स्यात्, संज्ञोपसर्जनव्यावृत्त्यर्थं च स्यादिति बोध्यम्।

[ आरम्भवादिसिद्धान्तिसमाधानवार्तिकम् ]

॥*॥ *संज्ञया[१] विधाने नियमः* ॥*॥

[ व्याख्याभाष्यम् ]

**संज्ञया ये विधीयन्ते तेषु नियमः ।**

( प्रदीपः ) **संज्ञयेति** । गुणवृद्ध्यनुवृत्त्यैव गुणवृद्ध्योरिकः सिद्धत्वाद्[२]द्वितीयं गुणवृद्धिग्रहणमाश्रितगुणवृद्धिशब्दव्यापारा[३](श्रयणा)र्थं विज्ञायते। तेन गुण इत्येवं यो गुणः, वृद्धिरित्येवं या वृद्धिरिति विज्ञायते। अथवा गुणवृद्धिमात्रग्रहणे[४] गुणवृद्ध्यधिकारादेव सिद्धे पुनर्गुणवृद्धिग्रहणं गुणवृद्धिशब्दव्यापाराश्रयणार्थं विज्ञायते।

( उद्द्योतः ) आश्रितेति। आश्रितो गुणवृद्धिशब्दव्यापार उच्चारणं येषु आदैक्षु विधीयमानेषु तदर्थमित्यर्थः। **तेनेति** । 'इत्येव'मित्यध्याहृत्य स्वरूपपदार्थकेनान्यतरेण विशेषणादीदृशार्थलाभ इति भावः। अत एव संबन्धानुवृत्तिप्रदर्शनपरभाष्ये 'गुणवृद्धी' इत्युच्चार्य 'गुणवृद्धिग्रहणमनुवर्त्तते' इत्युक्तम्। उपक्रमस्थ**गुणवृद्धिग्रहणसामर्थ्या**दित्येतद्भाष्यस्वारस्यादाह–**अथ वेति**। पुनरुपादानसामर्थ्यादिदृत्यं गुणवृद्धिग्रहणं गुणवृद्धिशब्दविहितगुणवृद्धिलाक्षिणकमिति भावः ॥

[ आशयानभिज्ञस्याक्षेपभाष्यम् ]

**किं वक्तव्यमेतत्[६] ? ॥**

[ समाधानोक्तिप्रत्युक्तिभाष्यम् ]

**नहि ॥ कथमनुच्यमानं गंस्यते ? ॥**

**गुणवृद्धिग्रहणसामर्थ्यात् ॥**

[ सामर्थ्यनिराकरणभाष्यम् ]

**कथं पुनरन्तरेण गुणवृद्धिग्रहणमिको गुणवृद्धी स्याताम् ?॥**

[ सामर्थ्यस्थापक–समाधानसाधक–भाष्यम् ]

**प्रकृतं गुणवृद्धिग्रहणमनुवर्तते ॥**

**क प्रकृतम् ?॥ 'वृद्धिरादैजदेङ्गुणः' इति॥**

[ खण्डकस्य आक्षेपभाष्यम् ]

**[१०]यदि तदनुवर्तते 'अदेङ्गुणो वृद्धिश्चे'त्यदेङां वृद्धिसंज्ञाऽपि प्राप्नोति ॥**

---

## ❀ राजलक्ष्मीः ❀

१ **सञ्ज्ञया**–गुणवृद्धिशब्दाभ्याम्। २ **सिद्धत्वात्**–उपस्थितेः सिद्धत्वात्। ३ आश्रितगुणवृद्धिशब्दव्यापाराऽदैङ्लाभार्थमित्यर्थः। तल्लाभश्च 'इत्येव'मिति पदाध्याहारेणेत्याशयः। ४ अन्यतरगुणवृद्धिपदस्यार्थपरत्वेऽन्यतरस्य च शब्दपरत्वेऽभेदो बाधितः, गुणवृद्धिशब्दाभ्यामादैजदेङाममेदाऽसम्भवात्। उभयोरर्थपरत्वेऽपि विरूपोपस्थितेरभावात्स बाधितः। अतः–तत्पदस्य–तत्प्रयोज्यविधेयताश्रयेलक्षणयाऽभेदः कार्य इत्याशयः। ५ 'ग्रहणे' इत्यस्य 'विवक्षिते सती'ति शेषः। ६ **एतत्**–सञ्ज्ञयेति विशेषणं। 'सञ्ज्ञये'ति किमपूर्वं कर्त्तव्यमितिप्रश्नाशयः। ७ तद्बोध्ये लक्षणया तदर्थलाभादित्यर्थः। ८ एवञ्च सामर्थ्यं विहतमित्याशयः। ९ 'गुणवृद्धी' इत्यस्य काप्यप्रकृतत्वाच्छङ्कते–**केति। इतीति**। असमस्तमेव सूत्रद्वयादनुवर्त्तते इत्याशयः। १० वृद्धिपदस्याधिकृतस्य मध्ये सम्बन्धाद्दोषमुपन्यस्यति–**यदीति**।

---

## ❀ शब्दकौस्तुभः ❀

उक्तरीत्या ज्ञापकेनैवात्सन्ध्यक्षराणां निरासेपि व्यञ्जननिवृत्त्यर्थं सूत्रं कर्त्तव्यमेव। यत्तूक्तं जनेर्डवचनं ज्ञापकमिति। तन्न। गमेरपि ह्ययं डो वक्तव्यः। गमेश्च गुणे क्रियमाणे अन्तर्यतओकारः स्यात्। ततश्च 'नगः' 'अगः' 'अभ्युद्गः' 'समुद्र' इत्यादि न सिध्येत्। ततश्च तत्र चरितार्थं डित्त्वं कथं व्यञ्जनस्य गुणाभावं ज्ञापयेदिति। ननु 'जनेर्ड' इत्येव डप्रत्ययो गमेर्न विधीयते किन्तु 'गमेश्च' 'अन्तात्यन्ताध्वदूरपारे'ति प्रकरणे पठितेना'न्यत्रापि दृश्यते'इति वार्तिकेन डप्रत्ययान्तरमेव। तथा च कथं भाष्यकृतोक्तं 'गमेरप्ययं ड'इति ?। सत्यम्। 'सप्तम्यां जनेर्ड' इति प्रकरणे तावदन्येष्वपि दृश्यतइति सूत्रेण डो विधीयतइति निर्विवादम्। तत्र चान्येष्वप्युपपदेषु जनेर्डो दृश्यत इत्यक्षरार्थः। तेनाऽजो द्विजोऽनुज इत्यादि सिद्धम्। एवमपि धात्वन्तराड्डविधायकाभावात्परितः खाता परिखेत्यादि न सिद्ध्येदित्याशङ्क्य तत्र वार्त्तिककृतोक्तम्–'**अन्येभ्योपि दृश्यते**'इति। अयं च सौत्रदृश्यपिग्रहणसूचित एवार्थो वार्तिकेन विवृतो न त्वपूर्वः सङ्गृहीतः। तथा च तत्र वृत्तिकार आह–"अपिशब्दः सर्वोपाधिव्यभि-

( प्रदीपः ) **अदेङामिति ।** पूर्वसूत्रे संज्ञासंज्ञिसंबन्धायोपात्तो यादृशो वृद्धिशब्दस्तादृश एवोत्तरत्रानुवर्तते इत्यदेङामित्युक्तम् । तेनैतन्न चोदनीयं–'वृद्धिशब्दोऽनुवर्तमान आदैचः प्रत्याययतीत्यादैचां गुणसंज्ञा प्राप्नोती'ति ॥

( उद्द्योतः ) **यादृश इति ।** स्वरूपपदार्थक इत्यर्थः। नन्वेवं सति उत्तरत्र निषेध्यसमर्पणार्थं गुणवृद्धिग्रहणस्य चारितार्थ्येन सामर्थ्यं दुरुपपादम् , अनुवर्त्तमानस्य स्वरूपपरत्वेन निषेध्यसमर्पकत्वाऽभावादिति चेत् , न ; **आगन्तूनामन्ते निवेश** इति न्यायेनादेङ्सूत्रे गुणपदोत्तरं वृद्धिपदोपस्थित्या तत्साहचर्येण तत्र सूत्रे स्वरूपपरत्वं तस्य, उत्तरत्र तु योग्यतयाऽर्थपरत्वम् । **'इक'** इति सूत्रेऽपि **'न धात्वि'**त्यादिसाहचर्येणाऽर्थपरत्वमिक इति षष्ठीनिर्देशाच्चेति भाष्याशयात् ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

*[ ॥*॥ सम्बन्धमनुवर्तिष्यते ॥*॥ ]*

**संबन्धमनुवर्तिष्यते–'वृद्धिरादैच्' । 'अदेङ्गुणः' इति । वृद्धिरादैच् । ततः–'इको गुणवृद्धी' इति । गुणवृद्धिग्रहणमनुवर्त्तते, आदैजदेङ्ग्रहणं निवृत्तम् ॥**

( प्रदीपः ) **संबन्धमिति ।** संबध्यत इति संबन्धं। कर्मणि घञ् । नपुंसकस्याभिधेयत्वान्नपुंसकनिर्देशः। आदैज्ग्रहणसंबद्धं वृद्धिग्रहणमदेङ्गुण इत्यत्रानुवर्तते, तेनाऽदेङ्गिनं संबध्यते । इह त्वनुवृत्तमादैचो जहाति । कान्तारोत्तरणाय सार्थस्येव त्यागोपादाने ॥

( उद्द्योतः ) **नपुंसकस्येति । 'घञजपः पुंसी'**ति तु प्रायिकमिति भावः । यत्तु भावविषयमेवैतदिति, तन्न । 'मांसं भक्षोऽस्ये'ति कर्मण्यणिति सूत्रस्थभाष्यप्रयोगविरोधात्। **तेनेति ।** अत्रादैजित्यनुवृत्तिर्न स्वकार्याय, किं तु वृद्धिशब्दस्यान्यसंबन्धनिवृत्तये इति भावः। भाष्ये **वृद्धिरादैजदेङ्गुण'** इति सूत्रक्रमनिर्देशः । पुन**र्वृद्धिरादैजि**त्यभिधान**मदेङि**त्यत्र संबन्धानुवृत्तिं दर्शयितुम् । **'इको गुणवृद्धी'**इत्युक्तिस्तु यथान्यासाभिप्रायेण । **आदैजदेङ्ग्रहणमिति ।** स्वरितत्वाऽप्रतिज्ञानेनादेङ्ग्रहणवदादैजित्यपि निवृत्तमित्यर्थः । क्वचित्तु **'आदैज्ग्रहणं निवृत्त'**मित्येव पाठः ॥

[ समाधानान्तरवार्त्तिकव्याख्याभाष्यम् ]

*[॥*॥ मण्डूकगतयोऽधिकाराः ॥*॥]*

**अथवा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः।**

( प्रदीपः ) **अथवेति ।** वृद्धिशब्दस्येहाकाङ्क्षावशादुपस्थानं न त्वदेङ्गुण इत्यत्र ॥

( उद्द्योतः ) ननु मण्डूकस्य चेतनत्वात्तथा गतिसंभवेऽपि शब्दस्य कथं सेयत आह–**वृद्धिशब्दस्येति ।** 'स्वरितत्वासङ्गादनुवर्त्तमानस्यापी'ति शेषः । **इहेति । 'इक'** इति सूत्र इत्यर्थः । 'अदे'ङित्यत्र तु न संबन्धः, गुणसंज्ञासंबन्धेनाऽदेङां निराकाङ्क्षत्वादिति बोध्यम् ॥

[ एकदेशिनः समाधानान्तरभाष्यम् ]

*[ ॥*॥ एकयोगो वा ॥*॥ ]*

**अथवैकयोगः करिष्यते–'वृद्धिरादैजदेङ्गुणः' । ततः 'इको गुणवृद्धी'इति । न चैकयोगेऽनुवृत्तिर्भवति ॥**

---

❀ **राजलक्ष्मीः** ❀

१ ननुशब्दाधिकारे संज्ञासूत्रतोऽन्यत्र सञ्ज्ञाशब्दानां सञ्ज्ञिपरत्वमिति नियमादादैचां गुणसञ्ज्ञा प्राप्नोतीति वक्तुमुचितमत आह–**पूर्वसूत्र इति । यादृशः**–सञ्ज्ञाभूतः । **उत्तरत्र–** 'अदेङ्गुण''इक'इत्यादौ । अर्थाधिकार इत्याशयः । अर्थपरताया असम्भवात्पूर्वत्रसञ्ज्ञापरस्यात्राऽपि तथैवयुक्तत्वादित्याकूतम् । २ **तदिति ।** गुणपदसाहचर्येणेत्यर्थः ।**उत्तरत्र–**न धातुलोप इत्यादौ ॥ ३ **सम्बन्धम्**–आदैज्भ्यां सम्बद्धं वृद्धिपदम्।

४ 'वृद्धिरादैजदेङ्गुण'इति पाठानुपूर्वीप्रदर्शनम् । द्वितीयं 'वृद्धिरादै जित्यनुवर्तितम् , आगन्तूनामन्ते निवेशात् । **'इको** गुणे'त्यत्र तु 'इक' इत्येवोचितं,यथान्यासाभिप्रायेण तु तथोक्तिः। ५ **इति**–इत्यत्र। अदेङ्ग्रहणं निवृत्तं नाम–स्थितं, तस्योत्तरत्रानुवृत्तिरेव नेत्यर्थः।६ **नपुंसकस्य**-गुणवृद्धिग्रहणस्य। ७**सार्थः**-वणिक्समूहः । कान्तारोत्तरणाय सार्थो रक्षापुरुषान्सह नयति, उत्तीर्णे दुर्गममार्गे च तान्परित्यजतीत्येवमत्रापीत्यर्थः। ८ भाष्यवार्त्तिकं कात्यायनवार्त्तिकं वेदमिति केचित्। भाष्यमेवेदमित्यन्ये।

---

❀ **शब्दकौस्तुभः** ❀

चारार्थः । तेन धात्वन्तरादपि भवति परितः खाता परिखेति । दृशिग्रहणात्कारकान्तरे कालान्तरे चेत्यादि तत्रैव स्पष्टम् । एवं स्थिते सौत्रेणैवानेन 'परिखे'त्यादेरिव 'नगो' 'अग'इत्यादेरपि सिद्धावन्तात्यन्तेति प्रकरणे'ऽन्यत्रापि दृश्यते' इति वार्त्तिकं न कर्त्तव्यमेव । क्रियमाणं वा एतत्सूत्रसिद्धार्थविवरणपरतया नेयमित्याशयेन भगवतोक्तं–**'गमेरपि ड्वयं डो वक्तव्य'इति।** नन्वेवमपि डित्त्वं व्यर्थमेव । गमेर्डिचैव सिद्धे गमेर्डोरिति डोप्रत्यविधानेन मकारस्य गुण ओकारो न भवतीति ज्ञापितत्वात् । तस्माड्डुप्रत्ययस्य डित्त्वं

---

१ इदं वार्त्तिकं लुप्तं भवेदिति **गौडाः** ।

( **प्रदीपः** ) **अथवैकयोग इति ।** एको भवतिरध्याह्रियते । 'वृद्धिरादैजदेङ्गुणो भवती'त्येकवाक्यत्वं संपद्यते । यद्यपि प्रतिपत्तिकाले भवतिक्रिया भिद्यते, तथाप्येककाला प्रतिपत्तिरित्यादैच्संबद्धा वृद्धिसञ्ज्ञाऽदेङ्सम्बद्धा गुणसंज्ञेति नास्ति वृद्धिसंज्ञाया अदेङ्भिः संबन्धः ॥

( **उद्द्योतः** ) नन्वेकयोगत्वं नैकार्थत्वं,भिन्नविषयसंज्ञाद्वयविधानात । नापि निरन्तरपाठः, तस्येदा[2]नीमपि सत्त्वेन 'करिष्यत'इत्यस्याऽसङ्गतेः । **णेरणा**वित्यादौ एकयोगेऽप्यनुवृत्तिदर्शनाच्चात आह–**एक इति । प्रतिपत्तिकाले**–लक्ष्यसंस्कारकवाक्योपप्लवकाले । **एककालेति** । 'आदैज्वृद्धिसंज्ञोऽदेङ्गुणसंज्ञो भवती'ति सङ्ग्राहकवाक्यार्थबोध एककाल इति भावः । समूहालम्बनात्मक एको वाक्यार्थबोध इति तात्पर्यम् । य[3]द्वादैज्वृद्धिसंज्ञोऽदेङ्गुणसंज्ञश्च भवत इत्येको वाक्यार्थबोध इति तात्पर्यम् । **प्रतिपत्तिः**–वाक्यार्थबोधः । **णेरणा**वित्यादावन्तरवाक्यार्थभेदान्न दोषः । **केचित्तु**[4] एककाला प्रतिपत्तिर्भवतु, तावतापि स्वरितत्वगुणप्राप्तवृद्धिपदसबन्धाऽभावः कुत इति चिन्त्यम् । न च स्वविषय–वाक्यजबोधाऽनन्तरं निराकाङ्क्षतयाऽन्यत्राऽन्वयाऽप्राप्तौ हि तत्प्राप्तये स्वरितासङ्गो, न ह्येतदेकयोग इति वाच्यम्. व्यवधाननिबन्धनायामनेकसंबन्धाप्राप्तावनेकसंबन्धाय स्वरितत्वासङ्ग इत्यस्यापि वक्तुं शक्यत्वात् । तस्मादयमत्र भाष्यार्थः–'तदधीते तद्वेदे'त्यत्र द्विस्तद्ग्रहणादेकयोगेऽनुवृत्त्यभावः–इति । स्पष्टंचेदं 'तदस्मिन्नस्ती'ति सूत्रे भाष्ये। एकयोगत्वं च द्वयोः संहितापाठ एव । वस्तुत एकयोगेऽप्यनुवृत्तिर्भवति, 'तदस्यास्त्यस्मि'न्निति सूत्रे द्विस्तद्ग्रहणाऽभावात् , 'तदधीत' इति सूत्रे तु बालानां सुखबोधाय द्विस्तद्ग्रहणमित्यप्युक्तं तत्रैव । अतोऽत्र भाष्येऽयं समाधिरेकदेशिन इत्याहुः ॥

**❀ राजलक्ष्मीः ❀**

१ प्रक्रियाकाले इत्यर्थः । २ भिन्नसूत्रसंहितापाठकालेऽपीत्यर्थः । ३ तथाबोधस्य काप्यदृष्टत्वादाह–**यद्वेति ।**

**❀ शब्दकौस्तुभः ❀**

पूर्वोक्तरीत्या ज्ञापकमेव । किञ्च–डोप्रत्ययविधानमेव व्यञ्जनस्य गुण इति ज्ञापयति । अन्यथा विचैव सिद्धौ किं तेनेति चेन्न । विचि हि सति गुणः क्रियमाणः सानुनासिक ओकारः स्यादिति निरनुनासिकसिद्धये डोप्रत्ययविधानादिति दिक् । अत्र वदन्ति–'तनोतेर्डउः सन्वच्चे'ति डित्करणान्न व्यञ्जनस्य गुणो भविष्यति । यत्तु शास्त्रातिदेशोयं कार्यातिदेशो वा ?। आद्ये 'ऊर्णुनविषतो'त्यत्रेव 'द्विर्वचनेऽची'ति स्थानिवद्भावेन तँतँ अ उइति स्थिते सन्यत इतीकारः सानुनासिकः स्यात् । द्वितीये त्वभ्यासकार्यं दुर्लभमिति । तन्न । आद्ये गुणानां भेदकत्वादिमौ इमे इतिवदुपपत्तेः । द्वितीयेपि

[ समाधानान्तरवार्त्तिकं तद्व्याख्याभाष्यञ्च ]

**अथवा—**

**❀ अन्यवचनाच्चकाराऽकरणाच्च प्रकृतापवादो विज्ञायते, यथोत्सर्गेण प्रसक्तस्याऽपवादो बाधको भवति ॥ ❀**

**अन्यस्याः संज्ञाया वचनाच्चकारस्य चानुकर्षणार्थस्याऽकरणात्प्रकृताया वृद्धिसंज्ञाया गुणसंज्ञा बाधिका भविष्यति । यथोत्सर्गेण प्रसक्तस्याऽपवादो बाधको भवति ॥**

**(प्रदीपः) अथवान्यवचनादिति ।** यथाकप्रत्ययेनाऽण्बाध्यतेऽसन्दिग्धत्वादनवकाशत्वात्तात्पर्याच्च कविधेः, अणस्तु विपर्ययात् । एव**मदेङ्गुण** इत्यत्र वृद्धिग्रहणमनुवृत्तं स[6]त्सन्दिह्यते–'किमुत्तरार्थैवेहा(स्या)नुवृत्तिरथेहार्थापी'ति। सावकाशा च वृद्धिसंज्ञा, तात्पर्यं च नास्ति । गुणसंज्ञा तु तात्पर्यादसन्देहान्निरवकाशत्वाच्च वृद्धिसंज्ञासंबन्धमदेङां बाधते । प्रत्ययसंज्ञा तु संज्ञिविशेषेर्णाऽसंयुक्ता अधिकारेणैव विधीयमाना कृत्यादिसंज्ञाविषयेऽपि प्रवर्तते ॥

( **उद्द्योतः**) ननु वृद्धिगुणसंज्ञयोः सामान्यविशेषत्वाऽभावात्कथमुत्सर्गाऽपवादसाम्यमत आह–**यथेति । 'आत'** इत्युपादानादेव तद्विषये कस्याऽसन्दिग्धत्वम् । अत एव तदतिरिक्तावकाशविरहस्तदुद्देशेनैव प्रवृत्तिरूपं तात्पर्यं च । ननु गुणसंज्ञया वृद्धिसंज्ञावत्कृत्यादिसंज्ञयापि प्रत्ययसंज्ञा बाध्येते-

४ कैयटोक्तं खण्डयति–**केचित्त्विति।** ५ गुणसञ्ज्ञाया अदेङ्षु वचनादित्यर्थः । ६ सदपीत्यर्थः। ७ अदेङ्मात्रोद्देश्येन प्रवृत्तेरभावादित्याशयः। ८ सनादिनेत्यर्थः ।

बभ्रुर्जुहूरित्याद्यर्थं धात्वधिकारीयद्वित्वेऽभ्याससंज्ञास्वीकारात् । अत एव 'लिटि धातो'रिति सूत्रे धातुग्रहणानुवृत्तेरापाततो भाष्ये प्रदर्शितत्वेपि ष्यङ्विधिभाष्येऽनुवृत्तेरेव सिद्धान्तिततया भाष्याशयस्येत्थमेव वर्णनीयत्वादिति दिक् ।

किञ्च–यथा स्थानेन्तरतमपरिभाषासंस्कृतावनुनासिकपरसवर्णविधौ स्थानप्रयत्नाभ्यामन्तरतमे एतन्मुरारिस्त्वं करोषीत्यादिकं विषयं लब्ध्वा चरितार्थौ 'चतुर्मुखः' 'कुण्डं रथेने'त्यादौ न प्रवर्त्तेते इति हयवरट्सूत्रे सिद्धान्तितं–तथेहापि सार्वधातुक-जुसिगुणसिचिवृद्ध्यादयो नेता अबिभयुः अनैषीदित्यादौ चरितार्थाः, उभिमता अनेनिजुरभैत्सीदित्यादिषु न भविष्यन्ति । न चैवं 'नेता' 'अनैषी'दित्यादावेव

त्यत आह–**प्रत्ययेति** । न तव्याद्याकाङ्क्षया प्रत्ययसंज्ञायाः संबन्धः, येन संनिहितकृत्यादिसंज्ञया निराकाङ्क्षत्वान्न प्रत्ययसंज्ञया संबन्धः स्यात्, किं तु संज्ञाकाङ्क्षया । सा हि स्वस्य बहुविषयत्वलाभाय कतिपयानन्तरविषयलाभेऽपि पुनः पुनर्विषयान्तरमाकाङ्क्षते । बहुविषयत्वं चास्याः संज्ञिविशेषासंबन्धेनाधिकारकरणादवसीयत इति भावः । प्रकृते तु न तथेति बोध्यम् ॥

[ समाधानान्तरभाष्यम् ]

**अथवा वक्ष्यत्येतत्–'अनुवर्तन्ते च नाम विधयो–न चानुवर्तनादेव भवन्ति । किं तर्हि ? ॥ यत्नाद्भवन्ती'ति ॥**

**( प्रदीपः ) अथवेति । विभाषा तिलमाषोमे**त्यत्र ह्युमाभङ्ग्योरधान्यत्वात्खञोऽप्राप्तौ चोदितायां खञ्ग्रहणस्यानुवृत्तिराश्रिता, अनुवर्तमानश्च खञ् यत्नाऽभावाद्व्रीहिशाल्यादिभिर्न संबध्यते, अपि तु विभाषाश्रुत्या यत्नेन तिलादिभिरेव संबध्यते । तथेहापि वृद्धिग्रहणम**देङ्गुण** इत्यत्रानुवर्तमानमपि यत्नाऽभावाददेङ्भिर्न संबध्यते । इह तु पुनर्गुणवृद्धिग्रहणं यत्नो भवति ॥

**( उद्द्योतः ) खञोऽप्राप्ताविति** । 'यता मुक्ते' इति शेषः । **'मण्डूकगतयोऽधिकारा'** इत्यस्यैव 'स्वरितलिङ्गेनानुवर्तमानं यत्राकाङ्क्षा, तत्रैव संबध्यते' इति विशेषमभिधातुमयं पक्षः । च संबन्धाय तत्र विभाषाग्रहणरूपं यत्नविशेषं कुर्वतः सूत्रकृतोऽप्यभिमतः । अस्य विशेषस्य प्रागकथनं तु एतद्विशेषद्वारा पुनस्तत्परामर्शेन तत्रैव परिहारे मुख्यताबोधनायेति बोध्यम् । **इह त्विति** । अकर्त्तव्यत्वविशिष्टपुनर्गुणवृद्धिग्रहणं यत्न इत्यर्थः । अनुवृत्तौ हि तदकर्तव्यं भवतीत्याहुः ॥

[ समाधानान्तरभाष्यम् ]

**अथवा–उभयं निवृत्तम्, तदपेक्षिष्यामहे ॥**

**(प्रदीपः) अथवेति** । अपेक्षालक्षणं लौकिकमधिकारमाश्रयति । समुदायस्य चापेक्षायां नास्त्येतत्–'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति गुणस्यैवापेक्षा युक्ते'ति । समुदायस्य भेदाऽभावात् ॥

---

**⊛ राजलक्ष्मीः ⊛**

१ **अस्याः**–प्रत्ययसञ्ज्ञायाः । २ **वक्ष्यति**–गोनर्दीयो भाष्यकृद्वक्ष्यति ।

विभाषातिलेतिसूत्रे भाष्यकारो गोनर्दीयो वक्ष्यतीत्यर्थः । वार्त्तिककृत एवेदं वार्त्तिकमित्यन्ये ॥ **च** एवार्थः । **नच** नहि । विधयः–विधीयमानाः । **भवन्ति**–विधयो भवन्ति । **यत्नादिति** । अपेक्षायां सत्यामित्यर्थः । ३ **यत्नेनेति** । समुच्चयार्थकविभाषापदश्रुतिरूपेण यत्नेनेत्यर्थः । विभाषापदं हि समुच्चयार्थकं न विकल्पार्थकं, महाविभाषयैव विकल्पसिद्धेः । ४ पूर्वोक्तद्वितीयपक्षेण पौनरुक्त्यं परिहरति–**मण्डूकेति** । ५ **सच**–विशेषश्च । **अस्य**–यत्नविशेषस्य । ६ ननु पुनर्गुणवृद्धिग्रहणस्य न यत्नत्वं, तथा सति तद्वैयर्थ्यापत्तेरत आह–**अकर्त्तव्यत्वेति। तत्** पुनर्गुणवृद्धिग्रहणम्। एवचानुवृत्तिरावश्यकीत्याशयः । ७ **उभयं**–गुणवृद्धिपदम् । आदैजदेङ्ग्रहणमिति वा। **तत्**–तदर्थम् । ८ **समुदायस्य** -वृद्धिविशिष्टगुणस्य । ९ **भेदाभावादिति** । समुदायस्यानन्तराननन्तररूपभेदाऽभावात् । अनन्तरत्वात्समुदायस्येत्याशयः ।

---

**⊛ शब्दकौस्तुभः ⊛**

स्थानगुणप्रमाणैस्त्रिभिरान्तर्यलाभाच्चेता अचैषीदित्यादौ प्रमाणान्तर्यविरहेण गुणवृद्धी न स्यातामिति वाच्यं, सुघस्यदःक्मरचः क्नोश्च कित्करणेन प्रमाणत आन्तर्यस्याविवक्षाया ज्ञापनात् । न चैवमपि 'ईहिता' 'ईशिते'त्यत्र कण्ठतालव्ययोर्विवृतयोश्च हकारशकारयोस्तादृशावेवादेतौ स्यातामिति वाच्यं, 'नाज्झला'विति सूत्रस्य प्रत्याख्यानावसरे ऊष्मणामीषद्विवृततायाः सिद्धान्तयिष्यमाणत्वात् । न चैवं 'विवृतकरणाः स्वरास्तेभ्य एओ विवृततरा'वित्यादि शिक्षानुरोधाच्चेता नेतेत्यादावपि गुणाप्रवृत्तिः स्याद्विवृतविवृततरत्वकृतवैलक्षण्यसत्त्वादिति वाच्यं, तथासति विधेर्निर्विषयतापत्तेः, 'जयः करण'मित्यादिनिर्देशैः क्नुसन्क्मरच्प्रभृतीनां कित्त्वेन चेकारादिषु गुणप्रवृत्त्यनुमानाच्च । आत्सन्ध्यक्षरव्यञ्जनेषु तु गुणाद्यप्रवृत्तिरेवोचिता । तथा च निर्देशाः 'यातिवातिद्रातिप्साति', 'ध्यायतेः सम्प्रसारणं च, 'वहतिचिनोतिदेग्धिषु चे'त्यादि । अथ क्नोः कित्त्वेनापि गुणवृद्धिविधावन्तरतमपरिभाषानुपस्थितिरेव ज्ञाप्यतामिति चेन्न, सत्यामपीक्परिभाषायामीकारस्याकारादिनिवृत्तयेऽन्तरतमपरिभाषाया आवश्यकत्वादिति । तदेवं ङओर्ङित्त्वादनान्तर्यान्निर्देशाच्च निराकृतं व्यञ्जनं । भाष्य एवैच आकारश्च निराकृतः । तस्माद्व्यर्थं सूत्रमिदम् । अथ यद्युत्तरार्थता, विभज्य योगं किमिति परिभाषात्वमिष्यते ? । अत्रोच्यते–'क्ङिति चे'ति सूत्रे चकारस्य इतिशब्दपर्यायतामाश्रित्येक इति ये गुणवृद्धी तयोर्निषेध इति तावद्वक्ष्यते । अन्यथा 'लैगवायन' इत्यत्र ओर्गुणोऽपि निषिध्येत । औपगवादिस्तु तस्यावकाशः । तथा 'पौरोहित्य'मित्यत्रादिवृद्धिश्च न स्यात् । एवं स्थिते यदीयं परिभाषा प्रत्याख्यायते तदा कथञ्चित्तत्र-तत्र गुणवृद्धिविधाविकामेव स्थानित्वपर्यवसानेपीक इति पदानुच्चारणेनेग्लक्षणत्वविरहान्निषेधो न प्रवर्त्तेत । ततश्च 'कृतः' 'कृतवान्' 'कुरुतः' 'छिन्नं' 'छिन्नवा'नित्यादि न सिध्येत् । निषेधसूत्रं च निर्विषयं यात्।

( उद्द्योतः ) भाष्ये-**उभयं निवृत्तमिति**। स्वरितलिङ्गाऽनासङ्गेनाननुवृत्तिरेव निवृत्तिरित्यर्थः । **अपेक्षेति** । 'इक' इत्येतावन्मात्रस्येतराकाङ्क्षत्वात् । समुदायापेक्षायां च लक्ष्यानुसार एव बीजम् । **अनन्तरस्येति** न्यायेन गुणस्यैवापेक्षा युक्तेत्येतन्नास्तीत्यन्वयः । समुदायत्वं च युगपद्बुद्धौ संनिधानात् क्रमेणाऽसंनिधानाच्चेति बोध्यम् ॥

[ स्वरूपजिज्ञासयाक्षेपभाष्यम् ]

**किं पुनरयमलोऽन्त्यशेष आहोस्विदलोन्त्याऽपवादः ? ॥**

(प्रदीपः) **किं पुनरिति** । उभयथा संभवाद्दोषदर्शनाच्च प्रश्नः । तत्राङ्गस्य गुण इति षष्ठीनिर्देशाल्लिङ्गा**दलोन्त्यस्ये**त्युपतिष्ठते, गुणश्रुत्या **त्विक** इति । तत्र यदि पूर्वमिकाऽङ्गं विशेष्यते-'इगन्ताङ्गस्य गुणो भवती'ति। स च भव**न्नलोन्त्यस्ये**त्यस्य भवति, तदा सोऽस्य शेषो भवति। यदा त्वङ्गस्येति पूर्वमेवाऽन्त्यमलं षष्ठी नीयते-'अङ्गान्त्यस्य गुण' इति, पश्चादिकान्त्योऽल् विशेष्यते, तदा तस्यायं विशेषणत्वात्तच्छेषो भवति । अथ त्वङ्गस्येति-गुणवृद्धिविधौ न स्थानषष्ठी, किं तर्हींगपेक्षयाऽवयवषष्ठी, तदा स्थानषष्ठ्यभावादलोन्त्यस्येत्यस्यानुपस्थानमिति तदपवादपक्षो भवति । अप्राप्त्यनुमानमेव हि बाधो वचनेन, प्राप्तस्य बाधाऽयोगात् । ततश्चाङ्गावयवस्य यत्र तत्र स्थितस्येको गुणवृद्धी इत्यर्थः संपद्यते । समुच्चयस्त्वसंभवान्नोपन्यस्तः, न हि युगपद्द्वौ षष्ठ्यर्थौ संभवतः- स्थानेयोगोऽवयवयोगश्चेति । विकल्पोऽपि न भवत्येकत्वात्षष्ठ्यर्थस्य । तस्मात्तच्छेषतदपवादपक्षावेवाऽत्राशङ्कितौ ॥

(उद्द्योतः) **षष्ठीति** । स्थानषष्ठीत्यर्थः। **षष्ठी स्थान** इति परिभाषया तत्त्वनिर्णयः । अस्य च सूत्रस्य वृद्धिगुणशब्दाभ्यां विधीयमानौ वृद्धिगुणाविकः स्थाने इत्यर्थेऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोरपि समकालप्रवृत्तिकता बोध्या। **गुणश्रुत्येत्यस्य**-गुणशब्देन विधेयत्वबोधिकयेत्यर्थः । **तत्र यदीति**। बुद्धेः क्रमिकत्वाद्विशेषणविशेष्यभावे कामचाराच्चेति भावः । **सोस्येति** । इगन्तस्येति षष्ठ्यास्तेनान्त्येऽल्युपसंहारादेतद्विशेषणत्वमेतत्परिच्छेदकत्वं तस्येति भावः । **तदा तस्यायं विशेषणत्वादिति** । तच्छेषशब्दे तन्त्रेण बहुव्रीहिषष्ठीतत्पुरुषाविति भावः। भाष्ये-इको गुणवृद्धी इति पूर्वपरान्वयि । तेनैतद्रूपलाभ इति भावः । परिच्छेद्यपरिच्छेदकभावकृत एव च शेषशेषित्वव्यवहार इति बोध्यम् । **अथत्विति** । अवान्तरवाक्यार्थबोधकालेऽनिर्णीतार्थकत्वेन स्थानषष्ठीत्वसंभवनया तत्प्रवृत्तावपि पश्चादिक इत्यस्योपस्थितौ मिदेरित्यादौ योग्यत्वेन तत्साहचर्येण चान्यत्राप्यवयवषष्ठीत्वनिर्णये तदसंबन्ध इति भावः । **बाधायोगादिति** । आत्यन्तिकबाधाऽयोगादित्यर्थः । पाक्षिकस्तु बाधः षोडशीग्रहणादौ भवत्येवेति बोध्यम् । **समुच्चय इति** । 'मिदेरन्त्यस्येकश्चे'त्येवमाकारः । **नहीति** । प्रत्यर्थशब्दनिवेशेनैकस्य नानेकाभिधायकत्वम् । तन्त्रे आवृत्तौ च न मानमिति भावः ॥

[ प्रकारजिज्ञासया प्रत्याक्षेपभाष्यम् ]

**कथं वाऽयं तच्छेषः स्यात्, कथं वा तदपवादः ? ॥**

[ प्रत्याक्षेपसमाधानभाष्यम् ]

**यद्येकं वाक्यम्-तच्चेदं च,-'अलोन्त्यस्य विधयो भवन्ति' । 'इको गुणवृद्धी अलोन्त्यस्य'इति । ततोऽयं तच्छेषः ।**

**अथ नानावाक्यम्—तच्चेदं च, अलोन्त्यस्य विधयो भवन्ति । 'इको गुणवृद्धी, अन्त्यस्य च'इति । ततोऽयं तदपवादः॥**

( प्रदीपः ) **यद्येकमिति** । अनेकयोगव्यवगर्थोपस्थिरित्याशयः ।

---

❀ **राजलक्ष्मीः** ❀

१ **गुणेति** । विधेयताप्रयोजकगुणपदश्रुत्येत्यर्थः । २ **सः**-अलोन्त्यस्येतियोगः । **अस्य**-'इको गुणे'त्यस्य । ३ **ततश्च**-'अलोन्त्यस्ये'त्यस्यानुपस्थितौ च । **यत्र**-अन्त्येऽनन्त्ये वा । ४ **समुच्चयः**-'अङ्गावयवस्येकः, अङ्गान्त्यस्य चे'त्येवं समुच्चयः । अस्मिन्पक्षे द्वाभ्यां परिभाषाभ्यां पृथक्पृथ- ५ तटस्थः पूर्वपक्षिणं पृच्छति-**कथमिति** । '**कथं चे**'ति क्वचित्पठ्यते । **चस्त्वर्थे** । ६ पूर्वपक्षी स्वाशयं प्रकाशयति-**यद्येकमिति** । एकम्-एकवावाक्यस्थम् । **तच्च**-अलोऽन्त्यस्येति। **इदञ्च**-इकोगुणेति । इकः-इकः स्थाने, गुणवृद्धी-भवन्तौ,-अलोऽन्त्यस्य भवत-इत्यर्थः । **अयम्**-इको गुणवृद्धी ॥ ७ अस्य-'बोधयती'-

---

❀ **शब्दकौस्तुभः** ❀

परिभाषापरित्यागपक्षे इग्लक्षणयोर्गुणवृद्धयोरप्रसिद्धत्वात् । तदेतत्स्फुटीकृतं भाष्यकृता-'**उत्तरार्थमेव तर्हि सिजर्थं वृद्धिग्रहण'मिति** । तस्य ह्ययमाशयः-यद्यपि 'सिचि वृद्धि'रिति विधौ वक्ष्यमाणरीत्या परिशेषादिकामेव स्थानित्वं लभ्यते, तथापीग्लक्षणत्वं विना निषेधो न प्रवर्त्तेत । तस्मादुत्तरार्थं निषेधप्रवृत्त्यर्थं च वृद्धिग्रहणमिति । एवं च वदता न्यायसाम्याद्गुणग्रहणस्याप्येतदेव प्रयोजनं सूचितम् ।

हितयोरप्येकस्मिन्कार्यप्रदेशे स्वस्वनिमित्तसन्निधापितयोरङ्गाङ्गिभावाद्विशेषणविशेष्यभावादेकवाक्यत्वोपपत्तिः । **अथ नानेति । अङ्गस्येति**गपेक्षयावयवषष्ठ्यामिकः स्थानित्वात्तद्विशेषणत्वादङ्गस्याऽनुपस्थान**मलोन्त्यस्ये**त्यस्य । ततश्चानयोर्भिन्नविषयत्वान्नानावाक्यत्वम् ॥

( उद्द्योतः ) **अनेकयोगेति** । एवं चैकं वाक्यमिति भाष्यमयुक्तमिति भावः । उत्तरम्-**एकस्मिन्नित्यादि । अङ्गाङ्गिभावश्च**--गुणगुणिभाव इत्याह—**विशेषणेति । इकः स्थानित्वादिति** । सा च नाऽलोन्त्यसूत्रप्रवृत्तौ निमित्तम्, अल्समुदायोत्तरस्थानषष्ठीत्वाऽभावात्। **अङ्गस्येति** च न स्थानषष्ठीति भावः । ( तदाह- ) **तद्विशेषणत्वादिति** । अवयवित्वेन विशेषणत्वादित्यर्थः । **नानावाक्यत्वमिति** । अत्र पक्षे **पुगन्ते**त्यादि नियमार्थमिति बोध्यम् ।

[ वार्तिकावतरणभाष्यम् ]

**कश्चात्र विशेषः ? ॥**

[ तच्छेषपक्षदूषणवार्तिकम् ]

*॥*॥ वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम् ॥*॥*

[ व्याख्याभाष्यम् ]

**वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं कर्तव्यम् ।**

**'मिदेर्गुणः' 'इक इति वक्तव्यम्' अनन्त्यत्वाद्धि न प्राप्नोति । 'मृजेर्वृद्धिः', 'इक इति वक्तव्यम्', अनन्त्यत्वाद्धि न प्राप्नोति । पुगन्तलघूपधस्य गुणः, 'इक इति वक्तव्यम्', अनन्त्यत्वाद्धि न प्राप्नोति । ऋच्छेर्लिटि गुणः, 'इक इति वक्तव्यम्', अनन्त्यत्वाद्धि न प्राप्नोति । 'ऋदृशो ङि गुणः', 'इक इति वक्तव्यम्', अनन्त्यत्वाद्धि न प्राप्नोति । क्षिप्रक्षुद्रयोर्गुणः, 'इक इति वक्तव्यम्', अनन्त्यत्वाद्धि न प्राप्नोति ।**

( प्रदीपः ) **वृद्धिगुणाविति** । मिदादीनामनिगन्तत्वाद**लोन्त्यस्ये**त्येतदङ्गमिग्ग्रहणं न सन्निपततीति तेषु प्रदेशेष्विग्ग्रहणं कर्तव्यम् ।

( उद्द्योतः ) **मिदादीनामिति** । गुणादिविधौ परिभाषाद्वयस्य परस्परं संबन्धाऽपरित्यागेनोपस्थानं **तच्छेषत्वम्** । तत्रैकस्या असंभवे द्वितीयापि न प्रवर्तत इति भावः । भाष्ये-**अनन्त्यत्वाद्धीति** । तच्छेषपक्षेऽनन्त्यत्वादिको गुणो न प्राप्नोतीत्यर्थः ।

[ तच्छेषपक्षदूषणान्तरवार्तिकम् ]

*॥*॥ सर्वादेशप्रसङ्गश्चानिगन्तस्य ॥*॥*

[ एकदेशिव्याख्याभाष्यम् ]

**सर्वादेशश्च गुणोऽनिगन्तस्य प्राप्नोति· याता वाता ॥ किं कारणम् ?॥ 'अलोन्त्यस्ये'ति षष्ठी चैव ह्यान्त्यमिकमुपसङ्क्रान्ता । अङ्गस्येति च स्थानेषष्ठी । तद्यदिदानीमनिगन्तमङ्गं तस्य गुणः सर्वादेशः प्राप्नोति॥**

(प्रदीपः) दोषान्तरमप्याह-**सर्वादेशप्रसङ्गश्चेति । अङ्गस्ये**त्येतद्भेदेन सर्वाङ्गेषु व्याप्रियते । तत्रेगन्तेष्वेवालोन्त्य(स्येति) विधिरन्यत्र तु षष्ठ्याऽन्त्येऽल्यनुपसंहाराद्याता वातेति सर्वादेशो गुणः प्राप्नोति ।

(उद्द्योतः) **अङ्गस्येति च स्थानषष्ठीति** । अङ्गस्य स्थाने गुणो भवति। स च यत्राऽन्त्य इक् तत्रान्त्यस्येक इत्यर्थं इत्यभिमानस्तदाह-**भेदेनेति** । शास्त्रस्य बहुविषयत्वायेत्यर्थः। **तत्रेगन्तेष्वेवेति** । तच्छेषत्वादिति भावः ।

अन्यत्र-अनिगन्तविषये गुणशास्त्रे ।

❀ राजलक्ष्मीः ❀

तिशेषः । **इकः**-इकोऽङ्गस्य । अलोऽन्त्यस्ये'त्यस्य-'इक'इति शेषः । **तेषु**-मिदेर्गुण इत्यादिषु । **चैव** हीत्यस्य **'अङ्गस्ये'**ति शेषः ।

१ **तदाह**-चरममाह । २ **अत्र**-तच्छेषतदपवादपक्षयोः । ३ पूर्वपक्षी तच्छेषपक्षदूषणवार्तिकमुपन्यस्यति-**वृद्धीति** । ४ **अलोन्त्यस्येत्यस्य**-'इक'इति शेषः । ५ असम्भवे सत्प्रतिपक्षन्यायेनोभयोर्निवृत्तिः, उभयोरप्येकवाक्यतयैक्यादित्याशयः। ६ यणः परस्य रस्य लोपेऽवशिष्टे क्षिपादौ हलन्तेऽनन्त्यत्वादिकारस्य गुणो न प्राप्नोतीत्यर्थः। ७ **तेषु**-मिदेर्गुणइत्यादिषु । ८ द्वयोरपि परिभाषयोर्निवृत्तत्वात्, सहैव तयोः प्रवृत्तेर्निवृत्तेश्चेत्याशयः । ९ **षष्ठी**-षष्ठीद्वयम् । १० **चैवहीत्यस्य**-'अङ्गस्ये'तिशेषः। 'सार्वधातुकार्धधातुकयो'रित्यत्रेत्याशयः । ११ **स्थानेति** । 'भेदेन व्याप्टता अनिगन्तेषु च अन्येऽलि अनुपसंहृता चे'तिशेषः। १२ **भेदेन**-प्रतिलक्ष्यंलक्षणभेदादावृत्त्या । **सर्वेति** । इगन्तेष्वनिगन्तेषु चाङ्गे-

१ ( ) अयं पाठः काचित्कः।

[ पूर्वोक्ततच्छेषपक्षदूषणोद्धारभाष्यम् ]

**नैष[1] दोषः, यथैव ह्यलोन्त्यस्येति षष्ठी अन्त्यमिकमुपसङ्क्रान्ता, एवमङ्गस्येत्यपि स्थाने[2]षष्ठी। तद्यदिदानीमनिगन्तमङ्गं तत्र षष्ठ्येव नास्ति कुतो गुणः,कुतः सर्वादेशः?॥**

**(प्रदीपः) यथैव हीति।** 'अङ्गस्ये'ति षष्ठ्युच्चारितैवाऽन्त्यमलं नीतेति नाऽस्या अपरं रूपमस्तीति नास्ति सर्वादेशगुणप्रसङ्गः।

**(उद्द्योतः) अन्त्यमलमिति।** इक्परिभाषाशेषभूताऽलोन्त्यपरिभाषयेत्यर्थः।'**अङ्गस्येत्यपि स्थानषष्ठी**'ति भाष्येऽन्त्य**मिकमुपसङ्क्रान्ते**त्यनुकर्षः। एवं च संग्राहकवाक्यस्येगन्तमात्रविषयकत्वादनिगन्तविषयकलक्षणाऽभाव एव आवृत्तौ च न मानमिति भावः। अत[3] एव गापोष्टकः कित्त्वं सार्थकम्।

[ वार्तिकसङ्गमनभाष्यम् ]

**एवं तर्हि नाऽयं दोष[4]समुच्चयः॥ किं तर्हि?॥ पूर्वापेक्षोऽयं दोषः। ह्यर्थे[5] चायं 'चः' पठितः—**

**॥ मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं सर्वादेशप्रसङ्गो ह्यनिगन्तस्य' ॥ इति।**

**मिदेर्गुणः, 'इक' इति वचनादन्त्यस्य न, 'अलोन्त्यस्य' इति वचनादिको न, उच्यते च गुणः। स सर्वादेशः प्राप्नोति॥ एवं सर्वत्र॥**

**(प्रदीपः) पूर्वापेक्षोऽयमिति।** मिदादिष्विग्ग्रहणं कर्तव्यमित्यत्रैवार्थे हेतुत्वेनेदं समुपात्तमित्यर्थः। **उच्यते चेति।** 'मिदे'रिति चोदनया[6]।

**(उद्द्योतः)** हिश्च हेत्वर्थं इत्याह–**मिदादिष्विति।**

[ अथ तदपवादपक्षाभ्युपगमभाष्यम् ]

**अस्तु तर्हि तदपवादः॥**

[ तदपवादपक्षदूषणवार्तिकम् ]

॥*॥ *इङ्मात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः* ॥*॥

[ व्याख्याभाष्यम् ]

**इङ्मात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधो वक्तव्यः।**

**जुसिगुणः[1]–स यथेह भवति–'अजुहवुः अबिभयु'रिति। एवम्–'अनेनिजुः पर्यवेविषुः'–अत्रापि प्राप्नोति॥**

**सार्वधातुकार्धधातुकयोर्गुणः–स यथेह भवति–'कर्ता हर्ता नयति तरति' इति। एवम्–'ईहिता ईहितुम् ईहितव्यम्'–इत्यत्रापि प्राप्नोति॥**

**ह्रस्वस्य गुणः–स यथेह भवति–'हे अग्ने हे वायो'इति। एवं 'हे अग्निचित् हे सोमसु'दित्यत्रापि प्राप्नोति॥**

**जसिगुणः–स यथेह भवति–'अग्नयो वायवः' इति। एवमग्निचितः सोमसुतः इत्यत्रापि प्राप्नोति॥**

**ऋतो ङिसर्वनामस्थानयोर्गुणः–स यथेह भवति–'कर्तरि कर्तारौ कर्तारः' इति, एवं 'सुकृति सुकृतौ सुकृतः' इत्यत्रापि प्राप्नोति।**

**घेर्ङिति गुणः–स यथेह भवति–'अग्नये वायवे' इति, एवम् 'अग्निचिते सोमसुते' इत्यत्रापि प्राप्नोति॥**

**ओर्गुणः–स यथेह भवति 'बाभ्रव्यो**

---

॥ राजलक्ष्मीः ॥

दित्यर्थः। **षष्ठ्याः**–अङ्गस्येतिषठ्याः। १ सिद्धान्त्येकदेशी तच्छेषपक्षदूषणानि परिहरति–**नैष इति।** २ **स्थानेति।** 'अन्त्यमिकमुपसङ्क्रान्ते'तिशेषः। तथा च 'अङ्गावयवान्त्याऽल इक'इत्यर्थो बोध्यः। **तदिति।** अन्त्येऽलि उपसङ्क्रान्ते सतीत्यर्थः। **षष्ठी**–तल्लक्ष्यविषयकतादृशस्थानषष्ठीघटितं लक्षणम्। **षष्ठीत्यस्य**–'स्थानित्व'मित्यर्थ इति श्रीगुरवः।

३ **अतएव**–अनिगन्तविषयकलक्षणाऽभावादेव। अन्यथा गुणेनैव सिद्धे किं कित्त्वेनेत्याशयः। ४ **दोषसमुच्चयः**–दोषान्तरम्। **दोषः**–एक एव दोषः। ५ **ह्यर्थे इति।** न समुच्चये इत्याशयः। **अनिगन्तस्य**–अन्त्येग्भिन्नस्य मिदादेः। **सर्वत्र**–मृज्यादिषु। ६ **चोदनया**–सूत्रेण। **तदपवादः**–अलोऽन्त्यसूत्रापवाद इकोगुणेति योगः। गुणवृद्धिविधावेतदनुरोधादवयवषष्ठीत्यप्राप्तिलक्षणोऽपवाद इत्याशयः। ७ **इङ्मात्रस्य**–अन्त्यस्यानन्त्यस्य च। ८ **प्राप्नोतीति।** इकोऽङ्गावयवत्वात्प्राप्नोतीत्यर्थः।

---

१ **जुसिगुणः**–जुसिचेतिगुणः। एवमग्रेऽपि।

**माण्डव्यः' इति। एवं 'सुश्रुत्—सौश्रुतः' इत्यत्रापि प्राप्नोति ॥**

( प्रदीपः ) **इद्धात्रस्येति**। यद्यङ्गस्येतीगपेक्षयावयवषष्ठी तदाऽ**लोन्त्यस्येत्य**स्य निमित्ताऽभावादनुपस्थानम्। स्थानषष्ठी हि अस्योपस्थाने निमित्तम्। ततश्चाऽङ्गावयवस्यान्त्यस्येवाऽनैन्त्यस्येको गुणः प्राप्नोतीति दोषः। **ह्रस्वस्य गुण इति**। समानन्यायत्वादेतदुक्तम्–'अङ्गस्यावयवो यो ह्रस्वस्तस्य गुण' इति। न त्वत्रेक्परिभाषोपतिष्ठते, निर्दिष्टस्थानिकत्वात्॥ अन्ये त्वाहुः—अत्रापि परिभाषोपस्थाने सति ह्रस्वेनेग्विशेष्यते, 'ह्रस्वस्येको गुणो यथा स्याद्दीर्घस्य मा भू'दिति। **ओर्गुण** इत्यात्राप्यस्या उपस्थानमनैन्त्यस्याप्युकारस्य गुणार्थम्। असति ह्यस्या उपस्थानेऽङ्गस्येति स्थानषष्ठी स्यादङ्गं चोकारेण विशेष्येतेत्युकारान्तस्यैवाङ्गस्य गुणःस्यात्।

( उद्द्योतः ) **अनन्त्यस्य चेक इति**। यद्यपि **जुसि** चेत्यादीनां प्रधानभूतेग्विशेषणत्वे **तस्मिन्निति** परिभाषया व्यवहितस्येको न भविष्यति, तथापि प्रत्ययस्याऽङ्गांशे उत्थिताकाङ्क्षतया **जुसि चे**त्यादिभिरप्यङ्गमेव विशेष्यत इत्यभिप्रायः। **समानन्यायेति**। गुणप्रकरणाऽवैरूप्याय सर्वत्राऽङ्गस्येत्यवयवषष्ठ्येव स्यादिति भावः। **निर्दिष्टेति**। अनियमे नियमकारिणीत्वात्परिभाषाया इति भावः। **अन्ये त्विति**। अयंभावः–न **ह्यनियम** इति श्रुतिः स्मृतिर्वा, किं तु परिभाषा लिङ्गवती फलवती चेति नियमः। फलं चेतरव्यावृत्तिवदितरसंग्रहोपीति **ह्रस्वस्ये**त्यस्याङ्गविशेषणत्वव्यावर्त्तनेनाऽवयवषष्ठीत्वबोधनेनाऽनन्त्यस्यापि गुणसम्पादनमेव फलं स्यात्। अकारे तु गुणाऽगुणयोर्न विशेष इति। तदेतद्वक्ष्यति–**अनन्त्यस्याप्युकारस्येति**। नन्वेवं ह्रस्वग्रहणं व्यर्थमत आह–**दीर्घस्येति**। 'घिसञ्ज्ञा वर्णयोरेवे'ति पक्षे ङिति गुणस्याऽग्निचिते इत्यादौ प्रसङ्गो बोध्यः।

[ वार्तिकावतरणभाष्यम् ]

**नैष दोषः।**

[ सिद्धान्त्येकदेशिवार्त्तिकम् ]

*॥*॥ पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम्॥*॥*

[ व्याख्याभाष्यम् ]

**पुगन्तलघूपधग्रहणमनन्त्यनियमार्थं भविष्यति—'पुगन्तलघूपधस्यैवानन्त्यस्य, नान्यस्याऽनन्त्यस्ये'ति ॥**

( प्रदीपः ) **पुगन्तेति**। 'भेत्ते'त्यादौ गुणे सिद्धे पुनः श्रुतिर्नियमार्थेति गुरूपधस्येहितेत्यादौ न भविष्यति, नापि 'हे अग्निचि'दित्यादौ, उभयनियमाश्रयणादिति भावः। ननु (चै) 'भेत्ते'ति दकारस्य, 'ह्रेपयती'ति पकारस्य च यथा स्यादिति विध्यर्थमेतत्स्यात्। नैतदस्ति, पुकि अन्तः पुगन्तो, लघ्वी उपधा लघूपधा, ततः समाहारद्वन्द्वनिर्देश इत्यन्त्यस्य गुणेन न भवितव्यम् ॥

( उद्द्योतः ) **पुनःश्रुतिः**–पुनर्गुणविधानम्। **ननु चेति**। बहुव्रीहिसमासः। सामर्थ्यादिक्परिभाषानुपस्थितिश्चेति भावः। भिदो दकारोच्चारणं तु 'भिन्नो' 'भित्त'मित्यादौ चरितार्थम्, क्नोः कित्त्वेनाऽनिग्लक्षणत्वेपि निषेधप्रवृत्तेः। पुग्विधानमपि 'क्ष्मापयती'त्यादौ यलोपार्थम्, ओकाररूपगुणार्थं च चरितार्थमित्याशयः। **पुकीति**। लाघवात्तत्पुरुषे निर्णीते [**निषादस्थपतिन्यायेन**][2] नियमार्थत्वं न दोषावहमित्यर्थः। ननु पुगन्तग्रहणं दापयतीत्यादावनन्त्यस्यानिकोऽपि गुणार्थं स्यादिति कथं नियमार्थत्वमिति चेन्न, गुणे उपधावृद्ध्या विशेषाऽभावात्॥

[ वार्त्तिकोक्तनियमदूषणभाष्यम् ]

**प्रकृतस्यैव नियमः स्यात्॥ किं च प्रकृतम्?॥ 'सार्वधातुकार्धधातुकयो'रिति॥ तेन भवेदिह नियमान्न स्यात्–'ईहिता' 'ईहितुम् ईहितव्य'मिति। ह्रस्वाद्योर्गुणस्त्वनियतः, सोऽनन्त्यस्यापि प्राप्नोति ॥**

( प्रदीपः ) **प्रकृतस्येति**। एकेन वाक्येन

---

❀ राजलक्ष्मीः ❀

१ अनुपस्थानमेव चाऽपवादः। २ **समानेति**। तुल्ययुक्त्येत्यर्थः। गुणपदश्रुत्यैतदुक्तमित्याशयः। ३ **अनन्त्यस्येति**। अवयवषष्ठ्येति भावः। ४ ननु अग्निचिदादेर घित्वात्कथ घेङितीत्यस्योपन्यासोऽत आह–**वर्णयोरिति**। ५ एवं तदपवादपक्षेऽपि दत्तान्दोषान्सिद्धान्त्येकदेशी परिहरति-**नैष इति**। नैते इत्यर्थः। जातावेकवचनम्। 'यत' इति शेषः। ६ **सिद्धे इति**। अङ्गावयवस्येक इत्यर्थे 'सार्वधातुकार्द्धधातुकयो'रिति गुणे सिद्धे इत्यर्थः। **श्रुतिः**–पुगन्तेति शास्त्रम्। ७ **भवितव्यमिति**-अनन्त्यस्य च सार्वधातुकेति गुणः सिद्धइति नियमार्थताऽस्य युक्तेत्याशयः। ८ 'सार्वधातुकार्द्धधातुकयोर्यदि गुणस्तर्हि पुगन्तलघूपधस्ये'स्येवं नियमः स्यादित्यर्थः। ९ **इति**–**भवेदि**त्यन्वयः।

---

१ 'अन्त्यस्याऽनन्त्यस्य चेको' पा०।

२ अयं पाठः क्वचिन्न।

नियमद्वयस्याऽलाभात्प्रकृतस्यैव गुणस्य नियमः स्यात्-'पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयो'-रिति, न तु 'सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्ये'ति ॥

(उद्द्योतः) प्रकृतस्यैवेति। अनन्तरस्यैवेत्यर्थः॥

[ संभाव्यनियमान्तरदूषणभाष्यम् ]

**अथाप्येवं नियमः स्यात्-'पुगन्तलघूपधस्य सार्वधातुकार्धधातुकयोरेवे'ति॥ एवमपि सार्वधातुकार्धधातुकयोर्गुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति-'ईहिता ईहितुम् ईहितव्य'मिति।**

(प्रदीपः) अथापीति। अनन्तरस्य विधिर्वेति परिभाषा यदि नाश्रीयते इति भावः ॥

(उद्द्योतः) नन्वनन्तरस्येतिन्यायविरुद्धोऽयं नियम इत्यत आह-अनन्तरस्येति। लक्ष्यानुसारश्चाऽनाश्रयणे बीजं बोध्यम् ॥

[ उभयविधनियमदूषणभाष्यम् ]

**अथाप्युभयतो नियमः स्यात्-'पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयोः'। 'सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्ये'ति, एवमप्ययं जुसिगुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति-'अनेनिजुः पर्यवेषिषु'रिति ॥**

(प्रदीपः) अथापीति। अभ्युपेत्य वादेनोच्यते, आवृत्त्यादिन्यायाश्रयेण वा। एकस्मिंस्तु वाक्ये नियमद्वयं न लभ्यते॥ एवमपीति। अनेनिजुरित्यत्र लघूपधं चाऽङ्गं सार्वधातुकं चास्तीति जुसि चेति गुणः प्राप्नोति। हे बुद्धे बुद्धये बुद्धयः हे पिचव्य इत्यादौ चाऽलघूपधत्वादनन्त्यस्य गुणोऽपरिहृतः ॥

(उद्द्योतः) अभ्युपेत्यवादः क्लेशेनाङ्गीकार इत्याहुः। पिचव्येति। उगवादियत्। उवर्णान्तस्याङ्गस्यैको गुण इति व्याख्यानमभिप्रेत्याऽत्र दोषोपन्यासः। परन्तु 'सौश्रुत इत्यत्रापि प्राप्नोती'ति भाष्याननुगुणा सा व्याख्येति चिन्त्योऽयं कैयट इत्याहुः। क्वचित्तु-कैयटपुस्तके पिचव्य इति न दृश्यत एव ॥

[ दूषणाय क्रोष्ट्रीयमतोपन्यासभाष्यम् ]

**एवं तर्हि-नायं तच्छेषः, नापि तदपवादः। अन्यदेवेदं परिभाषाऽन्तरमसंबद्धमनया परिभाषया ॥**

(प्रदीपः) एवं तर्हीति। परस्परानपेक्षयोः स्वस्वनिमित्तप्रयुक्तसन्निधानयोर्द्वयोः परिभाषयोः प्रदेशेषु स्वस्वकार्यप्रतिपादनम्। तत्र यदि कथंचिदेकविषये सन्निपातो भवति, नैतावता परस्परापेक्षा भवतीत्यर्थः। अन्यदेवेति। अन्तरशब्दो विशेषवाचीत्यन्यान्तरशब्दयोरविरुद्धः प्रयोगोऽपर्यायत्वात्॥

(उद्द्योतः) 'तच्छेष' इति शब्दोऽसंभवदुक्तिकत्वग्रस्तोऽपीत्याह-परस्परेति। विशेषणविशेष्यभावमात्रेण शेषशेषिव्यवहारो न क्वापि दृष्टचर इति भावः। अत एवाग्रे एतत्पक्षोक्तदूषणोद्धारेऽपि 'नायं तच्छेष' इत्युक्तिः सङ्गच्छते। सन्निपात इति। जायमानोऽपि संनिपातः सावकाशत्वेन विप्रतिषेधोपयोग्येव न तच्छेषत्वोपयोगी। अत एव नापवादत्वमपि। उक्तदोषाच्चेति भावः। असंबद्धमनयेति भाष्यस्य शेषशेषिभावानापन्नमुत्सर्गापवादभावानापन्नं चेत्यर्थः॥

[ प्रमाणोपन्यासाय क्रोष्ट्रीयमतवार्त्तिकभाष्यम् ]

**परिभाषान्तरमिति च मत्वा क्रोष्ट्रीयाः पठन्ति-** * नियमादिको गुणवृद्धी भवतो विप्रतिषेधेन * इति ॥

**यदि चायं तच्छेषः स्यात्तेनैव तस्याऽयुक्तो विप्रतिषेधः॥ अथापि तदपवादः, उत्सर्गापवादयोरप्ययुक्तो विप्रतिषेधः ॥ तत्र नियमस्यावकाशः-'राज्ञः क च'। राजकी-**

॥ राजलक्ष्मीः ॥

१ 'प्रकृतस्यैवे'त्येवकारव्यावर्त्यं दर्शयति-नन्विति। २ पुगन्तेति। पुगन्तलघूपधस्य चेत्तदा सार्वधातुकार्धधातुकयोरेव परतः' इत्यर्थः। ३ आहुरित्यरुचिबीजं दर्शयति-क्वचिदिति। ४ एवं तच्छेषतदपवादपक्षद्वयं दूषयित्वा क्रोष्ट्रीयसंमतं स्वतन्त्रपरिभाषाविशेषपक्षं दूषयितुमुपन्यस्यति-एवमिति। अयं-इकोगुणइति। अनया-अलोन्त्यपरिभाषया। ५ एकविषये-एकप्रदेशे। संनिपातः-आगमनम्। ६ मत्वा-मत्वैव। ७ नियमात्-अलोन्त्यसूत्रात्। विप्रतिषेधेन-पूर्वविप्रतिषेधेन। ८ वार्त्तिकमिदमुक्ताशयकमेव न तच्छेषतदपवादपक्षाभिप्रायकमिति साधयति-यदीति। अयम् इकोगुणेति। स्यादिति। 'तर्हि'तिशेषः। अपवादइत्यस्य 'स्यात्तर्हीति शेषः। ९ तत्र-अलोन्त्यसूत्रेकोगुणेतिसूत्रयोर्मध्ये।

१ 'अभ्युपगमवादेन' पा०।

२ 'उगवादित्वाद्यत्' पा०।

यम् । 'इको गुणवृद्धी' इत्यस्यावकाशः 'चयनं, चायको, लवनं लावकः' इति । इहोभयं प्राप्नोति-'मेद्यति मार्ष्टि'—इति । 'इको गुणवृद्धी' इत्येतद्भवति विप्रतिषेधेन॥

( प्रदीपः ) चयनमिति । अलोन्त्यपरिभाषायाः प्रयोजनाऽभावादत्रानुपस्थानमित्याशयः ॥

चायक इति । कथमत्रेक्परिभाषोपतिष्ठते यावताऽचै इति स्थानी निर्दिष्टः । अत्राहुः,'अच'–इत्यस्याङ्गविशेषणतयोपयोगादचः स्थानित्वाऽभावादृद्धिग्रहणेन लिङ्गेनेक्परिभाषात्राप्युपतिष्ठत एव । मेद्यतीति । इक इति वचनादिकारस्य प्राप्नोत्यलोन्त्यस्येति वचनादृकारस्य ॥

( उद्द्योतः ) नियमादिति । अलोन्त्यपरिभाषायाः पूर्वाचार्यसंज्ञा 'नियम' इति । तैनैव तस्यायुक्त इति । स्वाङ्गेन स्वस्येत्यर्थः । शेषशेषिणोरभेदं मत्वा'तैनैवे'त्याद्युक्तम् । नन्वङ्गस्येति स्थानषष्ठीदर्शनात्सार्वधातुकेत्यादावप्यलोन्त्यपरिभाषाप्रवृत्त्या कथमिक्परिभाषायाश्रयनमित्यवकाशोऽत आह–अलोन्त्येति । अङ्गेनेको विशेषणेन, पुगन्तेत्यादिनियमेन च तत्प्रयोजनसिद्धेरिति भावः । अत्राहुरिति । अचा विशेषिताऽङ्गेनेको विशेषणसंभवात्प्रापयति । 'गात्रा'वित्यादि त्वेष न जानातीति भावः ॥

[ सिद्धान्तिनो विप्रतिषेधबाधकभाष्यम् ]

नैष युक्तो विप्रतिषेधः । 'विप्रतिषेधे पर'मित्युच्यते । पूर्वश्चायं योगः, परो नियमः ॥

( प्रदीपः ) नैष युक्त इति । इष्टसिद्धये इत्यर्थः । यथोद्देशपक्षे च परिभाषयोः पौर्वापर्यम्, न तु कार्यकालतायाम् ॥

( उद्द्योतः ) इष्टेति । इष्टसिद्धिफलकत्वमेव हि तस्य युक्तत्वमिति भावः ॥ नतु कार्येति । द्वयोरप्येकदेशस्थत्वेन परत्वाऽसंभवादिति भावः ॥ वस्तुतः कार्यकालपक्षेपि पाणिन्युच्चारणरूपपाठकृतं परत्वमस्त्येव । अन्यथैकत्र प्रयोगरूपदेशे सर्वेषां मेलनेन परत्वस्योच्छेद एव स्यात् । प्रयोगसाधनफलकान्येव शास्त्राणि । न चैवं कार्यकालपक्षमादाय त्रिपाद्यामेषां प्रवृत्तिर्यथोद्देशे तु पूर्वाण्येतानि प्रति त्रिपाद्या असिद्धत्वेनाऽप्रवृत्तिरेव स्यादिति भाष्याद्युक्तं विरुद्धयेतेति वाच्यम्, परिभाषायाः सिद्धत्वेन तत्पक्षेऽसिद्धेनापि कार्येण स्वार्थं तदाकर्षणसंभवादित्यग्रे उपपादयिष्यमाणत्वात् । ध्वनितं चेदं 'तस्मिन्निति निर्दिष्टे' इत्यत्र भाष्यकैयटयोरिति चिन्त्यमेतत् ।

[ विप्रतिषेधवादिनो विप्रतिषेधसाधकभाष्यम् ]

इष्टवाची परशब्दः । 'विप्रतिषेधे परं यदिष्टं तद्भवती'ति ।

[ सिद्धान्तिनो विप्रतिषेधदूषणभाष्यम् ]

एवमप्ययुक्तो विप्रतिषेधः । द्विकार्ययोगो हि विप्रतिषेधः। न चात्रैको द्विकार्ययुक्तः ॥

( प्रदीपः ) द्विकार्ययोग इति । द्वाभ्यां कार्याभ्यां योगो यस्य स्थानिनः स विप्रतिषेधविषयत्वाद्विप्रतिषेधः ॥

( उद्द्योतः ) ननु 'द्विकार्ययोग' इत्यस्य द्वाभ्यां कार्याभ्यामन्यस्य योग इत्यर्थः, उत द्वयोः परस्परेण योग इत्यर्थः ? । उभयथापि त्रिपदतत्पुरुषो दुर्लभः । कर्मधारयपूर्वपदकोऽपि न, दिक्सङ्ख्ये इति नियमेन तस्य दुर्लभत्वादत आह–द्वाभ्यामित्यादि । अत्रापि पक्षे विप्रतिषेधशब्देन सामानाधिकरण्यानुपपत्तेराह–विप्रतिषेधेति ॥

[ विप्रतिषेधवादिनो विप्रतिषेधसाधकभाष्यम् ]

नावश्यं द्विकार्ययोग एव विप्रतिषेधः॥ किंतर्हि ?॥ असंभवोऽपि । स चास्त्यत्रासंभवः ॥ कोऽसावसंभवः ? ॥ इह तावत् 'वृक्षेभ्यः प्लक्षेभ्यः' इति । एकः स्थानी, द्वावादेशौ, न चास्ति संभवो यदेकस्य स्थानिनो द्वावादेशौ स्याताम् । इहेदानीं 'मेद्यति मेद्यतः, मेद्यन्ति' इति । द्वौ स्थानिनौ, एक आदेशः, न चास्ति संभवो द्वयोः स्थानिनोरेक आदेशः स्यादित्येषोऽसंभवः । सत्येतस्मिन्नसंभवे युक्तो विप्रतिषेधः ॥

( प्रदीपः ) नावश्यमिति । द्विकार्ययोगत्वाऽभावे केवलोऽप्यसंभवो विप्रतिषेध इत्यर्थः ॥

❀ राजलक्ष्मीः ❀

१ विप्रतीति । पूर्वविप्रतिषेधेनेत्यर्थः । अङ्गेति । २ अच इति । अचो ञ्णितीतीत्येवमित्यर्थः । ३ अजन्ताङ्गस्येत्यर्थेनेत्यर्थः । हलन्तव्यावृत्त्यर्थं च तदुपयोग इत्याशयः । ४ अवश्यं–नियमतः । ५ असम्भवः–निमित्तानन्तर्याऽसम्भवः । ६ द्वौ–दीर्घत्वात्मकौ ।

**इह तावदिति** । दीर्घत्वं यञ्यनन्तरे विधीयते, एत्त्वं च झल्यनन्तरे, न च सम्भवोऽस्ति यद्द्वयोः स्वेन स्वेन निमित्तेनानन्तर्यं स्यात्। **इहेदानीमिति** । मिदेरित्येका षष्ठी सा यद्यवयवसंबन्धे, तदेकारस्य गुणेन भाव्यम्। अथ स्थानषष्ठी तदा**लोन्त्यस्ये**ति वचनादिकारस्य। न चास्ति संभवो युगपदुभयोर्गुणस्येत्यर्थः ॥

**( उद्द्योतः )** द्विकार्ययोगेऽप्यसंभवसत्त्वादाह–**केवलोपीति** । ननु आ ए इति, ए आ इति वादेशसंभवोस्त्येवेत्यत आह–**न चेति** । **द्वयोरिति** । कार्ययोरित्यर्थः । अनन्तरे यञि दीर्घः साधुरनन्तरे झलि एत्वं साधुरित्यर्थ इति भावः । **आद्गुण** इत्यादौ द्वयोः स्थानिनोरेकादेशस्य संभवादाह–**मिदेरिति । नचास्ति संभवो युगपदिति** । युगपद्वाक्यार्थद्वयबोधाऽभावादिति भावः ॥

[ सिद्धान्तिनो विप्रतिषेधबाधकभाष्यम् ]

**एवमप्ययुक्तो[1] विप्रतिषेधः । द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति । अनवकाशश्चायं[2] योगः ॥**

[ विप्रतिषेधवादिनो विप्रतिषेधसाधकभाष्यम् ]

**ननु च—इदानीमेवास्याऽवकाशः प्रक्लृप्तः–चयनं चायको लवनं लावक इति ? ॥**

[ सिद्धान्तिनो विप्रतिषेधदूषणभाष्यम् ]

**अत्रापि[3] नियमः प्राप्नोति । नाप्राप्ते[4] नियमेऽयं योग आरभ्यते । यावता च नाप्राप्ते नियमेऽयं योग आरभ्यते, ततस्तस्यापवादोऽयं योगो भवति । उत्सर्गापवादयोश्चाऽयुक्तो विप्रतिषेधः । अथापि कथंचित् 'इको गुणवृद्धी' इत्यस्यावकाशः स्यादेवमपि यथेह विप्रतिषेधादिको गुणो भवति मेद्यति मेद्यतः मेद्यन्ति, इति, एवमिहापि स्यात्–अनेनिजुः पर्यवेविषुरिति ॥**

**( प्रदीपः ) एवमपीति** । यदीदं नारभ्येत गुणवृद्धी कस्य स्याताम् ?, **अलोन्त्यस्ये**ति चेत्, **येन नाप्राप्ति**न्यायेन तस्यास्यापवादत्वाद्विप्रतिषेधानुपपत्तिरित्यर्थः । एवं च क्रोष्ट्रीयमतमसंबद्धपरिभाषान्तरपक्षश्च नोपपद्यते ॥

**( उद्द्योतः )** ननूक्तरीत्या प्रयोजनाऽभावादलोन्त्यस्याऽप्रवृत्तौ अत्रापि नियमः प्राप्नोतीत्यसङ्गतमित्यत आह–**यदीदमिति** । एतदभावे,–संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्सर्वत्राङ्गस्येति स्थानषष्ठ्येव । कृते त्वस्मिन्नवयवषष्ठी सेति भावः । **'अथापि कथंचि'**दिति भाष्यस्य उक्त एवाशयः । **क्रोष्ट्रीयमतं**–विप्रतिषेधः । **असंबद्धपरिभाषापक्षश्च**–तदुपजीव्यः । तत्र विप्रतिषेधरहितोऽन्त्यस्त्वयुक्त एव । क्व संनिपातः क्वान्यतरत्यागः,स च कस्येत्यत्र विनिगमकाऽभावेन सर्वेष्टाऽसिद्धेः । तस्माद्द्वयमप्येकपक्षभूतमेव बोध्यम् ॥

[ सिद्धान्तिनः पदोपस्थितिपक्षभाष्यम् ]

**एवं तर्हि–'वृद्धिर्भवति गुणो भवती'ति यत्र ब्रूयादिक इत्येतत्तत्रोपस्थितं द्रष्टव्यम्॥[5] किं कृतं भवति ? ॥ द्वितीया[6] षष्ठी प्रादुर्भाव्यते ॥**

---

❀ राजलक्ष्मीः ❀

१ **एवमपि**–असम्भवमात्रसत्त्वेपि । २ **अयम्**–'इको गुणवृद्धी' इति योगः । ३ **अत्रापि**–चयनमित्यादावपि । **नियमः**–अलोन्त्येति सूत्रं । अत्रापि तस्योद्देश्यतावच्छेदकाक्रान्त्या तस्य विषयताया व्यापकत्वात्पर्जन्यन्यायेन प्राप्तिरित्याशयः । ४ **नाप्राप्ते**–अवश्यप्राप्ते । **अयम्**–इको गुणेति योगः । **यावता**–यतः । ६ अफलत्वादिना कथञ्चिदित्यर्थः । **इदम्**–इको गुणेति । २ **द्वितीयेति** । द्वितीयं षष्ठ्यन्तं पदमिक इतीत्यर्थः । अङ्गस्येति ह्येका षष्ठीति तस्या द्वितीयात्वं युक्तमेवेत्याशयः । **तत्र**–विशेषणविशेष्यभावे ।

---

❀ शब्दकौस्तुभः ❀

कथं पुनर्गुणवृद्धिविधौ सर्वत्र परिभाषाव्यतिरेकेणेकः स्थानित्वपर्यवसानं येन निषेधार्थता वर्ण्यतइति चेच्छृणु। सार्वधातुकार्द्धधातुकयोर्जुसि चेति गुणौ तावदलोन्त्यपरिभाषयाङ्गान्त्येऽलि प्राप्तौ प्रागुक्तज्ञापकादिभिरात्सन्ध्यक्षरव्यञ्जनेभ्यो व्यावर्त्तिताविक्ष्वेव विश्राम्यतः । मिदिपुगन्तलघूपधादिगुणेषु तु स्थानी निर्दिष्ट एव । तथाहि–'मिदेर्गुण' इत्यत्र मिद इर्मिदिरिस्तस्य मिदेरित्यर्थः, पुक्यन्तः पुगन्तः, लघ्वी उपधा लघूपधा। पुगन्तश्च लघूपधा चेति समाहारद्वन्द्वात् षष्ठी । न चैवं 'यापयती'त्यादावतिप्रसङ्गः । सन्निपातलक्षणपरिभाषयादन्तलक्षणस्य पुको गुणाऽप्रवर्त्तकत्वात् । 'ऋच्छत्यृता'मित्यत्रापि द्वयोर्ऋतोर्दीर्घस्य चेति त्रयाणां प्रश्लिष्टनिर्देशः । तद्यथा–'आ च ऋतश्च ऋतः, ऋच्छतेरा ऋच्छत्या, स च ऋतश्च तेषामिति षष्ठीतत्पुरुषद्वन्द्वोभयगर्भो द्वन्द्वः । ऋच्छत्या च आ च ऋतश्चेति त्रिपदद्वन्द्वो वा। तेन ऋच्छत्यृकारस्य स्थानित्वं लभ्यते । वस्तुतस्तु चतुर्णामिह प्रश्लेषो बोध्यः । तेनारिवान्

**तत्र कामचारः-गृह्यमाणेन वेकं विशेषयितुम्, इका वा गृह्यमाणम् । यावता कामचारः, इह तावन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेषु गृह्यमाणेनेकं विशेषयिष्यामः-'एतेषां य इ'गिति । इहेदानीं जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्विका गृह्यमाणं विशेषयिष्यामः-'एतेषां गुणो भवति, 'इकः'-इगन्ताना'मिति॥**

(प्रदीपः) **एवं तर्हीति ।** प्रदेशार्थत्वादनयोः परिभाषयोर्गुणत्वात्परस्परेण सम्बन्धाभावात्प्रदेशवाक्यपर्यालोचनया वाक्यार्थस्यावस्थानमित्यर्थः ॥

( उद्द्योतः ) **प्रदेशार्थत्वादिति । 'परस्परेण सम्बन्धाभावा'**दित्यन्तेन तच्छेषत्वाऽसंभव उक्तः । पदोपस्थितिपक्षे च विधेयसमर्पकत्वेन गृहीतगुणादिपदश्रुतिरस्या लिङ्गमित्येषाऽन्तरङ्गा । त[2]त्त्वेन ग्रहश्च प्रथमाया विधेयविभक्तित्वेन तदन्तत्वेन पदज्ञानकाल एव । तदुक्तं भाष्ये-**गुणो भवतीति । यत्रेत्यादि** नियमस्तु स्थानषष्ठीलिङ्गक इत्यवान्तरवाक्यार्थबोधोत्तरकालिकत्वेन बहिरङ्गः ॥ एवं च मिदादावुपस्थितैकपरिभाषायाः सामानाधिकरण्यासम्भवाद्व्यधिकरण्यान्वये वृत्ते निमित्ताऽभावादेवा**लोन्त्यस्ये**त्यस्यानुपस्थितिः । **सार्वधातुकार्धधातुकयो**रित्यादौ सामानाधिकरण्यान्वयेऽ**लोन्त्यस्ये**त्यनेनान्त्यस्यादेशव्यवस्था। एतेनैकस्या अप्रवृत्तौ अपरापि न प्रवर्तेतेत्यपास्तम् । **पर्यालोचनयेति ।** प्रदेशे सति संभवे परिभाषाद्वयैकवाक्यतया वाक्यार्थः । अन्यथा त्विक्परिभाषागर्भ एव, अस्या अन्तरङ्गत्वादित्यर्थः । भाष्ये-**वृद्धिर्भवतीत्यादि ।** इतिशब्दो यत्रेत्यर्थः ॥ **इक इत्येतदिति ।** सूत्रे 'इक' इति षष्ठ्यन्तानुकरणमित्यर्थः ॥ अनुवृत्तस्य स्वरूपपरत्वेन गुणशब्दो भवतीत्याद्यर्थः स्यादतः पुनरत्र गुणवृद्धिग्रहणम् । अनुवृत्तस्यार्थपरत्वं तु न, शब्दाधिकारापत्तेः । उभाभ्यां च गुणशब्दवान् गुणो यत्रेत्यादिरर्थस्तदुक्तम्-**इति यत्रेत्यादि ।** गुणपदं यत्र वर्तते इत्याद्यर्थस्तु न, **अतोगुण** इत्यादावप्यापत्तेः । भवतिक्रियाया अन्तरङ्गत्वाच्च । अस्मादेव गुणवृद्धिग्रहणादत्र 'विधीयत' इत्यस्य तदर्थकस्य 'भवती'त्यस्य बाध्याहार इति बोध्यम् । एतन्मूलकमेवाऽ**नुवादे परिभाषा नोपतिष्ठते** इति । अत एव तदेतद्विषयमेवाऽ**चश्चे**त्येतद्विषयमेव च । **'अचोञ्णिती'**त्यादौ तु वाक्यार्थबोधकाले श्रौताच्पदेनैवाकाङ्क्षाशान्तौ लिङ्गोपस्थितस्य दुर्बलतयानन्वय इति दिक् ॥

[ तच्छेषपक्षोक्तदूषणनिरासभाष्यम् ]

**अथवा सर्वत्रैवात्र स्थानी निर्दिश्यते । इह तावन्मिदेरित्यविभक्तिको निर्देशः-मिद् एः-मिदेरिति ॥ अथवा षष्ठीसमासो भविष्यति-मिद्-इः मिदिः, मिदेरिति ॥**

**'पुगन्तलघूपधस्ये'ति । नैवं विज्ञायते-'पुगन्ताङ्गस्य लघूपधस्य चे'ति ॥ कथं तर्हि ? ॥ पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधा, पुगन्तश्च लघूपधा च पुगन्तलघूपधम्, पुगन्तलघूपधस्येति । अवश्यं चैतदेवं विज्ञेयम्, अङ्गविशेषणे सतीह प्रसज्येत-भिनत्ति, छिनत्तीति ॥**

**ऋच्छेरपि प्रश्लिष्टनिर्देशोऽयम्-ऋच्छति ऋ ॠ ऋताम्-'ऋच्छत्यॄता'मिति ।**

**दृशोरपि योगविभागः करिष्यते,-'उरङि गुणः' । उः अङि गुणो भवति । ततो । 'दृशेः', दृशेश्चाऽङि गुणो भवति । 'उ'रित्येव ॥**

**क्षिप्रक्षुद्रयोरपि-'यणादि परं गुणः' इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम्-'इको यथा स्यादनिको मा भू'दिति ।**

(प्रदीपः) **अथवेति ।** तच्छेषपक्षोक्तदोष-

१ **गृह्यमाणेन**-मिदादिना । २ **तत्त्वेन**-विधेयसमर्पकत्वेन ।

❀ **राजलक्ष्मीः** ❀

❀ **शब्दकौस्तुभः** ❀

सर्वाभ्रूणान्यारुषीत्यादावर्त्तेः क्सौ गुणः सिद्धः, पुनर्विधानसामर्थ्यात् । अन्यथा क्सोः कित्करणसामर्थ्यात्तितीर्वानित्यत्रेव गुणो निषिध्येत । 'क्सुश्चे'ति सूत्रे स्फुटीकरिष्यामः । तथा 'ऋदृशोऽङी'त्यत्राप्युरङि गुण इति योगो विभज्यते । ततो 'दृशः' । 'उ'रित्याद्यनुवर्त्तते । 'स्थूलदूरे'ति सूत्रेऽपि योगविभागः कर्त्तव्यः-'स्थूलदूरयुवह्रस्वानां यणादिपर'मित्येको योगः,'क्षिप्रक्षुद्रयोः पूर्वस्य च गुणः' इति योगान्तरम् । तत्र'स्थवीया'नित्यादावोर्गुणेन सिद्धम् । आभीयस्यासिद्धत्वस्य 'श्नसोरल्लोप' इति तपरकरणेनानित्यताज्ञापनात्, भाष्यकृता प्रत्याख्यानाच्च । यण आदिर्यणादिः ततः परमिति समासः । तथा च क्षिप्रक्षुद्रयोर्यण आदी पकारदकारौ ततः परस्य रशब्दस्य लोपस्ताभ्यामेव च पूर्वस्यैकारस्योकारस्य च गुण इत्यर्थः । तदित्थं गुणाः सर्वे इकि विश्रान्ताः ।

परिहारः। **क्षिप्रक्षुद्रयोरपीति**। अत्र च योगविभागः क्रियते,—**'स्थूलादीनां यणादिपरं लुप्यते,** ततः-**'पूर्वस्य च गुण'**इति। अत्र च स्वरितत्वात् क्षिप्रक्षुद्रशब्दावेवानुवर्तेते, स्थूलादयो निवृत्ताः। तेषां तु यणादिलोपे सत्योर्गुण इति गुणो भवति। **असिद्धवदत्राभा**दित्यसिद्धत्वमनित्यत्वान्न भवति। तत्र क्षिप्रक्षुद्रयोर्यण आदिः पकारो दकारश्च, तस्माद्यणादेः परं लुप्यते, तस्मादेव च यणादेः पूर्वस्य च गुण इति सिद्धम्—क्षेपिष्ठः क्षोदिष्ठ इति॥ **यणादिपरमिति**-पञ्चमीसमासः। यदि तर्हि 'पुगन्तलघूपधस्ये'ति स्थानी निर्दिश्यते,तच्छेषपक्षाश्रयणाच्चात्रेक्परिभाषा नोपतिष्ठते, तदाऽस्य गुणस्याऽनिग्लक्षणत्वाद्भिन्नं छिन्नमित्यादौ **क्ङिति** चेति गुणनिषेधो न प्राप्नोति-यथा लैगवायन इति॥ नैष दोषः, क्नुसनोः कित्त्वविधानाज्ज्ञापकादनिग्लक्षणत्वेऽपि लघूपधगुणस्य प्रतिषेधो भविष्यति॥

**( उद्द्योतः ) पुकि अन्त इति**-। सुप्सुपेति समासः। 'भिनत्ती'त्यत्र गुणापादनं **क्ङिती**त्यस्य निमित्तसप्तमीत्वात्। इकः सार्वधातुकार्धधातुकयोरिति विशेषणमिति तु न युक्तम्, तस्याऽङ्गांशे उत्थिताकाङ्क्षत्वात्। भाष्ये-**यणादिपरं गुण इति**। यणादिपरं लुप्यतेऽवशिष्टस्य गुण इत्यर्थेन क्षिप्रादेः सर्वादेशो गुणः सिद्धः। स्थूलादौ तु **'ओर्गुण'**इत्येव सिद्धमिति भावः। ननु पूर्वस्येत्युक्तावपि यणपेक्षादेः परमित्यर्थे पूर्वस्य गुण इत्यनेनापि तत एव पूर्वस्य गुणापत्तौ स्थूलादिषु थकारादेर्गुणः स्यात्। 'यणादियँस्य तद्रूपं परं लुप्यते ततः पूर्वस्य च गुण'इत्यर्थे क्षिप्रक्षुद्रयोरन्त्यस्य व्यञ्जनस्य गुणः स्यादत आह-**अत्रचेति**। **अनित्यत्वादिति**। 'आस'न्नित्यत्र लोपनिवृत्त्यर्थात् **'श्नसोरल्लोप'**इति तपरकरणादित्यर्थः। तथा हि। 'अस् अन्ती'ति स्थिते परत्वादल्लोपे तस्याऽसिद्धत्वात्पुनः प्रसङ्गेनाटि विकारान्यानुपूर्व्यैक्याभावेन लक्ष्ये लक्षणस्येति न्यायाऽप्राप्तौ प्राप्तलोपवारणार्थं तपरत्वमाटोऽसिद्धत्वे व्यर्थं सत्तदनित्यत्वे ज्ञापकम्। न चाऽऽटोप्यनापत्तिः। तत्राऽनित्यत्वे मानाभावात्। **तस्मादेव चेति**। पूर्वत्वस्यावध्याकाङ्क्षायां परत्वेऽवधित्वेन क्लृप्तत्वादुपस्थितत्वाच्च।तस्यैवावधित्वमिति भावः। तद्ध्वनयन्व्याचष्टे-**पञ्चमीसमास इति**।**'सुप्सुपे'**त्यनेन। **अवयवभूते यणादी**त्यत्र समुदिते चेत्यर्थः। न चैवं ह्रस्वशब्दे रस्वशब्दस्यापि लोपापत्तिः, स्थूलादिसाहचर्येणोपान्त्ययणादेः परस्यैव लोपादित्याहुः। **पक्षाश्रयणाच्चेति**। परिभाषाणामनियमे नियमकारिणीत्वाच्चेत्यपि बोध्यम्। एवं क्ष्मापयपि इत्यादौ पुगन्तेति गुणे उपधावृद्धिरिति न दोषः॥ **क्नुसनोरिति**। एतत्क्ङिति चेति सूत्रे उपपादयिष्यते॥

[ पूर्वपक्षिणः शङ्काभाष्यम् ]

**अथ वृद्धिग्रहणं किमर्थम्?॥**

**( उद्द्योतः )** भाष्ये शङ्कते-**अथ वृद्धिग्रहणमिति**।

[ तटस्थस्याशयजिज्ञासाभाष्यम् ]

**किं विशेषेण वृद्धिग्रहणं चोद्यते, न पुनर्गुणग्रहणमपि। यदि किंचिद्गुणस्य प्रयोजनमस्ति, वृद्धिग्रहणस्यापि तद्भवितुमर्हति, को वा विशेषः?॥**

[ पूर्वपक्षिणः स्वाशयाविष्कारभाष्यम् ]

**अयमस्ति विशेषः। गुणविधौ न क्वचित्स्थानी निर्दिश्यते। तत्रावश्यं स्थानिनिर्देशार्थं गुणग्रहणं कर्तव्यम्। वृद्धिविधौ पुनः सर्वत्रैव स्थानी निर्दिश्यते—'अचो ञ्णिति' 'अत उपधायाः' 'तद्धितेष्वचामादे'रिति॥**

**( प्रदीपः ) गुणविधाविति**। क्वचिन्न निर्दिश्यत इति नञो व्यवहितेन संबन्धः। क्वचिन्निर्दिश्यत एव,-**ओर्गुण** इत्यादौ।

**( उद्द्योतः ) 'न क्वचित्स्थानी निर्दिश्यते'**इत्युक्त्या-सर्वत्रैव न निर्दिश्यते-इति प्रतीयते, क्वचिदादिपदप्राग्वर्त्तिनञः क्वचिदादिपदबोध्याधिकरणादौ सर्वत्राभावप्रतीतेर्व्युत्पत्तिसिद्धत्वात्तच्चाऽयुक्तमत आह-**क्वचिदिति**॥

[ समाधानवार्त्तिकावतरणभाष्यम् ]

**अत उत्तरं पठति-**

[ सिद्धान्तिसमाधानवार्तिकखण्डम् ]

॥*॥ *वृद्धिग्रहणमुत्तरार्थम्* ॥*॥

**( भाष्यं ) वृद्धिग्रहणं क्रियते। किमर्थम्?॥ 'उत्तरार्थम्'। 'क्ङिति'-इति प्रतिषेधं वक्ष्यति। स वृद्धेरपि यथा स्यात्॥**

**( उद्द्योतः )** भाष्ये सिद्धान्त्याह-**वृद्धिग्रहणमुत्तरार्थमिति**।

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**कश्चेदानीं क्ङित्प्रत्ययेषु वृद्धेः प्रसङ्गः। यावता 'ञ्णिति' इत्युच्यते?॥**

**( उद्द्योतः )** पूर्वपक्ष्याह-**कश्चेत्यादि**॥

[ सिद्धान्तिसमाधानवार्त्तिकाऽपरखण्डम् ]

*॥*॥ तच्च मृज्यर्थम् ॥*॥*

**( भाष्यं ) मृजेर्वृद्धिरविशेषेणोच्यते । सा क्ङिति मा भून्मृष्टः मृष्टवानिति ॥**

( उद्द्योतः ) **अविशेषेणोच्यते सा क्ङितीति ।** प्रत्ययविशेषानाश्रयणमत्राऽविशेषः ।

[ सिद्धान्तिसमाधानान्तरवार्त्तिकम् ]

*॥ * ॥ इहार्थं चापि ॥ * ॥*

**( भाष्यम् ) इहार्थं चापि मृज्यर्थं वृद्धिग्रहणं कर्तव्यम् । मृजेर्वृद्धिरविशेषेणोच्यते, सेको यथा स्यादनिको मा भूदिति ॥**

( प्रदीपः ) **मृजेर्वृद्धिरिति ।** तत्र हि सूत्रेऽभिमतस्थान्यनुपादानाद**लोन्त्य**परिभाषयाऽन्त्यस्यैव स्यादित्यर्थः ॥

( उद्द्योतः ) उत्तरस्याऽ**विषेशे**णेत्यस्य स्थानिविशेषानुच्चारणेनेत्यर्थः । तदाह–**तत्र हि सूत्र इति ।**

[ सिद्धान्त्येकदेशिनो द्वितीयफलखण्डनवार्तिकम् ]

*॥*॥मृज्यर्थमिति चेद्योगविभागात्सिद्धम्॥*॥*

**( भाष्यम् ) मृज्यर्थमिति चेद्योगविभागः करिष्यते–'मृजेर्वृद्धिरचः' । [ मृजेर्वृद्धिरचो भवति ] । ततो–'ञ्णिति'। ञिति णिति च वृद्धिर्भवति । 'अचः' इत्येव ।**

[ पूर्वपक्षिणो दूषणभाष्यम् ]

**यद्यचो वृद्धिरुच्यते–'न्यमार्ट्'। अटोऽपि वृद्धिः प्राप्नोति ।**

( प्रदीपः ) **अटोऽपीति ।** नन्वडागमात्पूर्वमेव परत्वाद्वृद्धिर्भविष्यतीति लक्षणस्य च प्रवृत्तत्वादटि कृते पुनर्लक्षणं न प्रवर्तिष्यते । एवं तर्हि विप्रतिषेधानपेक्षयैवाऽत्र चोद्यपरिहारावुक्तौ ।

( उद्द्योतः ) **अडागमात्पूर्वमिति । लादेशेषु कृतेष्वडिति** पक्षे–इदम् । **अटि कृते इति ।** विकारान्यानुपूर्व्या भेदेन लक्ष्यभेदाच्चिन्त्यमिदम् । **परत्वादित्यपि** चिन्त्यं, द्वयोर्यौगपद्याऽसंभवात् । **एवं तर्हीति । 'लावस्थायाम'**डिति पक्षे इति भावः ।

[ सिद्धान्त्येकदेशिनः परिहारवार्त्तिकम् ]

*॥*॥ अटि चोक्तम् ॥*॥*

**( भाष्यम् ) किमुक्तम् ? 'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवती'ति ॥**

( उद्द्योतः ) भाष्ये–**अनन्त्यविकारे इति ।** तथापि सिध्यतीप्यभिमानः । सिद्धान्ते त्वन्यार्थमिग्ग्रहणे कृते तेनैवाऽटो व्यावृत्तिसिद्धौ सा नैतदर्थेति **व्यक्त** इति सूत्रे वक्ष्यत इति न विरोधः ।

[ सिद्धान्तवार्तिकम ]

*॥*॥वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात्*

*[ तस्मादिग्लक्षणा वृद्धिः ] ॥*॥*

**( भाष्यम् ) वृद्धेस्तु प्रतिषेधो नोपपद्यते ॥ किं कारणम् ? ॥ 'इक्प्रकरणात्' । इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैवं सति मृजेरिग्लक्षणा वृद्धिर्भवति । तस्मान्मृजेरिग्लक्षणा वृद्धिरेषितव्या ।**

( उद्द्योतः ) **तस्मान्मृजेरिति ।** निषेधस्य सिद्धये योगविभागमकृत्वा स्थानिसमर्पणायाऽस्या एवोपस्थितिरङ्गीकार्येति भावः ।

[ आशयानाभिज्ञस्य द्वितीयफलखण्डनभाष्यम् ]

**एवं तर्हि–इहान्ये वैयाकरणा मृजेरजादौ सङ्क्रमे विभाषा वृद्धिमारभन्ते–परिमृजन्ति परिमार्जन्ति परिमृजन्तु परिमार्जन्तु परिममृजतुः परिममार्जतुरित्याद्यर्थम् । तदिहापि साध्यम् । तस्मिन् साध्ये योगविभागः करिष्यते–[ 'मृजेर्वृद्धिरचः' ]।**

---

❀ शब्दकौस्तुभः ❀

मृजेर्वृद्धावप्यच इत्यपकृष्यते । 'मृजेर्वृद्धिरचः'। ततो 'ञ्णिति'। 'अच' इत्येव । न चैवममार्ट् इत्यत्राऽटोपि वृद्धिः स्यादिति वाच्यं; 'लादेशेषु कृतेष्व'डिति पक्षे परत्वाद्वृद्धौ सत्यामट् । तत्र कृते पुनर्वृद्धिर्न भवति, सकृत्प्रवृत्त्या चरितार्थत्वात् । यदा त्वसिद्धवत्सूत्रप्रत्याख्यानाय लुङिति द्विलकारकनिर्देशमाश्रित्योपदेशे आर्द्धधातुकइत्यनयोरन्यतरदनुवर्त्त्यं वा लावस्थायामेवाऽड् क्रियते । 'परनेकाच' इति विभज्येणो यणित्यनुवर्त्यानेकाचश्चेत्तर्हीण एवेति नियममाश्रित्याऽद्ध्यैयातामित्यादौ यण् वार्यते, तदा लावस्थायां यद्यपि वृद्धिर्न भवति, लकाराणां ङित्वेन 'मृष्ट'इत्यादाविव तन्निषेधात् । ततश्चान्तरङ्गत्वादडागम एव । तथाप्यन्त्याऽभावेऽन्त्यसदेशस्येति परिभाषामाश्रित्याऽटो वृद्धिर्निवर्तनीया । परिभाषाप्रत्याख्यानपक्षे त्वङ्गाक्षिप्तेन प्रत्ययेनाऽज्विशेष्यते, येन नाव्यवधानन्यायाच्च

मृजेर्वृद्धिरचो भवति। ततः-'अचि क्ङिति'। अजादौ च क्ङिति मृजेर्वृद्धिर्भवति। परिमार्जन्ति परिमार्जन्तु परिममार्जतुः ॥ किमर्थमिदम्?। नियमार्थम्,-अजादावेव क्ङिति, नान्यत्र' ॥ कान्यत्र मा भूत्?॥ मृष्टः मृष्टवानिति।

ततो 'वा'। वाऽचि क्ङिति मृजेर्वृद्धिर्भवति। परिमृजन्ति परिमार्जन्ति परिममृजतुः परिममार्जतुरिति ॥

( उद्द्योतः ) संक्रम इति गुणवृद्धिप्रतिषेधविषयकितः प्राचां संज्ञा। 'अची'त्येव वचनम्। आदाविति तु तदादिपरिभाषालब्धार्थानुवादः। अत एवाग्रे वक्ष्यति-ततोचिऽक्ङितीति। एवं च ममृजे यूयं ममृजेत्यादौ विकल्पो भवत्येव। एतेनादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिस्तेन पूर्वोदाहृतेषु न वृद्धिरिति हरदत्तोक्तमपास्तम्। 'तुन्दपरिमृज' इत्यत्र यदि वृद्ध्यभाव इष्टस्तर्हि व्यवस्थितविभाषया नेति बोध्यम्। अजादावेवेति। विपरीतनियमस्तु न, इष्टाऽनुरोधात्।

[ मृज्यर्थत्वे खण्डिते इहार्थतास्थापकभाष्यम् ]

इहार्थमेव तर्हि सिजर्थे वृद्धिग्रहणं कर्तव्यम्। 'सिचि वृद्धिरविशेषेणोच्यते सेको यथा स्यादनिको मा भू'दिति ॥

(उद्द्योतः) सिचि वृद्धौ स्थानिविशेषानाश्रयणरूपोऽविशेषः। उत्तरार्थत्वे खण्डिते सिद्धान्त्याह-इहार्थमेवेति।

[ पूर्वपक्षिण आशयजिज्ञासाभाष्यम् ]

कस्य पुनरनिकः प्राप्नोति?॥

(उद्द्योतः) तत्खण्डयति पूर्वपक्षी-कस्य पुनरित्यादि।

[ सिद्धान्त्येकदेशिनःस्वाशयाविष्कारभाष्यम् ]

अकारस्य। अचिकीर्षीत् अजिहीर्षीत् ॥

[ पूर्वपक्षिणस्तत्खण्डनभाष्यम् ]

नैतदस्ति लोपोऽत्र बाधको भविष्यति ॥

( प्रदीपः ) अचिकीर्षीदिति। पूर्वविप्रतिषेधादतो लोपो यथा-'चिकीर्षक' इत्यादौ।

( उद्द्योतः ) पूर्वविप्रतिषेधेति। 'ण्यल्लोपावियङ्'-ङित्यादि। चिकीर्षक इति। अन्यथा अत्र परत्वाद्वृद्धौ युकि 'चिकीर्षायक' इति स्यात्।

[ सिद्धान्त्येकदेशिनोऽन्यत्रातिव्याप्तिप्रदर्शनभाष्यम् ]

आकारस्य तर्हि प्राप्नोति-अयासीत् अवासीत् ॥

[ पूर्वपक्षिणस्तत्खण्डनभाष्यम् ]

नास्त्यत्र विशेषः-सत्यां वृद्धावसत्यां वा।

( प्रदीपः ) अयासीदिति। परत्वादत्र सगिटोः कृतयोरनन्त्यत्वादाकारस्य नास्ति वृद्धिप्रसङ्ग इति यद्यपि परिहारोऽस्ति, तथापि विशेषाऽभावेन परिहृतत्वान्नाऽयमाश्रितः ॥

( उद्द्योतः ) परत्वादत्रेति। अपवादत्वादित्यर्थः। परशब्द उत्कृष्टवाची।

[ सिद्धान्त्येकदेशिनोऽतिप्रसङ्गान्तरदर्शनभाष्यम् ]

सन्ध्यक्षरस्य तर्हि प्राप्नोति ॥

[ पूर्वपक्षिणस्तत्खण्डनभाष्यम् ]

नैव सन्ध्यक्षरमन्त्यमस्ति ॥

( उद्द्योतः ) भाष्ये-नैव सन्ध्यक्षरमिति। 'वृद्धियोग्य'मिति शेषः। उपदेश आत्त्वविधानादिति भावः। अन्त्यमिति। अङ्गस्य वृद्धिरित्यर्थेऽलोन्त्यपरिभाषाप्रवृत्तेरिति भावः ॥

[ सिद्धान्त्येकदेशिनो लक्ष्यप्रदर्शनभाष्यम् ]

ननु चेदमस्ति-ढलोपे कृते-उदवोढाम् उदवोढम् उदवोढेति ॥

[ पूर्वपक्षिणस्तत्खण्डनभाष्यम् ]

[ नैतदस्ति ]। असिद्धो ढलोपः। तस्यासिद्धत्वान्नैतदन्त्यं भवति ॥

( प्रदीपः ) उदवोढामिति। ढलोपादीनामसिद्धत्वात्पूर्वं हलन्तलक्षणा वृद्धिः, ततो ढलोपादिषु कृतेषु ढलोपस्याऽसिद्धत्वादोकारस्य न भविष्यति। गोशब्दादाचारक्विपि कृतेऽगवीदिति सन्ध्य-

१ त्रिपादिस्थत्वादसिद्ध इत्यर्थः। २ 'वाह्' इत्येवंरूपा वृद्धिः।

❀ राजलक्ष्मीः ❀

❀ शब्दकौस्तुभः ❀

सिद्धममार्ट् इत्यादि रूपम्। सिचि वृद्धावपि विधेयायां नास्तीक्परिभाषाया उपयोगः, व्यावर्त्याऽभावात्। न चाऽचिकीर्षीदित्यकारो व्यावर्त्यः, 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्ध'मिति वचनादल्लोपेनैव सिद्धत्वात्। अन्यथा 'चिकीर्षक'इति न स्याच्चिकीर्षायक इति च प्रसज्येत। आकारस्य तु नास्ति विशेषः, सगिड्भ्यां बाधश्चेत्युक्तम्। एजन्तमपि न सम्भवति, आत्वविधानात्। 'उदवोढा'मित्यादौ तु ढलोपस्यासिद्धत्वात्। रैनौग्लौशब्दानामाचारक्विबन्तानां सत्यामसत्यां वा वृद्धौ न कश्चिद्विशेषः। गोशब्दात्क्विप्यगवीदित्यत्रापि नातिप्रसङ्गः। 'ऋत इद्धातो'रित्यतोऽनुवृत्तेन धातुग्रहणेन सिजाक्षिप्तस्य धातोर्विशेषणे सति धातुरेव यो

क्षरमन्त्यमस्ति तस्य कस्माद्वृद्धिर्न भवति। उच्यते-'सिचि वृद्धि'रित्यत्र धातुग्रहणमृत इद्धातोरित्यत औपदेशिकधातुग्रहणार्थमनुवर्तत इत्यदोषः ॥

( उद्द्योतः ) ढलोपस्यासिद्धत्वादिति । पूर्वं हलन्तलक्षणाया वृद्धेर्जातत्वेनेदानीं सिचि वृद्धिरित्यस्य प्राप्त्या '**लक्ष्ये लक्षणस्ये**'त्यस्याऽप्रवृत्तिरिति भावः । **धातुग्रहणमिति** । सिचो तदाक्षेपे सिद्धे इति भावः । एवंच कव्यादिभ्य आचारक्विपि 'अकवायी'दित्यादौ वृद्धिर्नेति लक्ष्यते। **माधवस्तु** वृद्धि मनुते । '**बहुलं छन्दसी**'त्यतो बहुलग्रहणानुवृत्त्या सन्ध्यक्षरान्तनामधातौ वृद्धिर्न, अन्यत्र भवत्येवेति तदाशयः । तेन 'से'शब्दादिभ्य आचारक्विपि न वृद्धिरित्यलम् । वस्तुतस्तु '**नैव सन्ध्यक्षर**'मित्येतद्भाष्यप्रामाण्येन सन्ध्यक्षरान्तेभ्य आचारक्विबेव नेत्याहुः ॥

[ सिद्धान्त्येकदेशिनो लक्ष्यान्तरप्रदर्शनभाष्यम् ]

**व्यञ्जनस्य तर्हि प्राप्नोति–अभैत्सीत्, अच्छैत्सीत् ॥**

[ पूर्वपक्षिणस्तत्खण्डनभाष्यम् ]

**हलन्तलक्षणा वृद्धिर्बाधिका भविष्यति ॥**

( उद्द्योतः ) **हलन्तलक्षणावृद्धिर्बाधिकेति** भाष्ये । इग्ग्रहणाऽभावे **येन नाप्राप्ति**न्यायेनेति भावः ॥

[ सिद्धान्त्येकदेशिन आक्षेपभाष्यम् ]

**यत्र तर्हि सा प्रतिषिध्यते 'नेटी'ति, अकोषीत् अमोषीत् ? ॥**

[ पूर्वपक्षिणस्तत्खण्डनभाष्यम् ]

**सिचि वृद्धेरप्येष प्रतिषेधः॥ कथम् ? ॥ लक्षणं हि नाम ध्वनति, भ्रमति, मुहूर्तमपि नावतिष्ठते ॥**

( प्रदीपः ) **लक्षणं हीति** । '**नेटी**'ति लक्षणमविशेषेण वृद्धिमात्रस्य निषेधं कथयतीति '**ध्वनती**'त्युच्यते । यो ह्यव्यक्तं कथयति स 'ध्वनती'त्युच्यते । एवमिहाऽप्यस्या एव वृद्धेर्निषेध इति नास्ति व्यक्तिः । स्यादेतत्–प्रतिषेधस्यैकनिषेध्ये चरितार्थत्वात्पुनः प्रतिषेध्याऽन्तरे प्रवृत्तिर्न स्यादित्याह–**भ्रमतीति** । सर्वत्र व्याप्रियत इत्यर्थः ।

स्यादेतत्–यावदेकनिषेधेऽस्य व्यापारस्तावदेव द्वितीयो विधिः प्रवृत्तः, प्रवृत्तस्य च निषेधोऽशक्यः कर्तुमित्याह–**मुहूर्तमपीति** । उभयत्रापि व्यापारान्नैकत्र विश्राम्यतीत्यर्थः ॥

( उद्द्योतः ) **इत्याहेति** । इत्याशङ्कायामाहेत्यर्थः । **नैकत्रेति** । बाध्यसामान्यचिन्तेयम्। '**नेटी**'त्यत्र 'हलन्तस्ये'त्यनुवर्त्य हलन्तस्य या वृद्धिः प्राप्ता सा सर्वापि नेत्यर्थः । तेनाऽलावीदित्यादौ न दोष इति बोध्यम् ॥

[ पूर्वपक्षिणो भ्रष्टावसरन्यायेन समाधानभाष्यम् ]

**अथवा 'सिचि वृद्धिः परस्मैपदे'ष्विति सिचि वृद्धिः प्राप्नोति । तस्या हलन्तलक्षणा**

---

❀ राजलक्ष्मीः ❀

१ परस्मैपदपरसिचा । २ अकवायीदित्यादौ । **तदाशयः**–माधवाशयः । ३ **व्यञ्जनस्य**–दकारस्यपर्यायेण वृद्धित्रयं प्राप्नोति कस्या अप्यन्तरतमत्वाऽभावादित्याशयः । ४ **सा**–हलन्तलक्षणा । अत्र षकारस्य वृद्धिप्राप्तिः ।

५ **एष**–नेटीत्येष योगः । ६ **लक्षणं**–नेटीति निषेधशास्त्रम् । ७ **अस्याः**–हलन्तलक्षणायाः ।

८ शब्दबुद्धिकर्मणां विरम्य व्यापाराभावाद्युगपदेव सर्वत्र प्रवृत्तिरित्याशयः ॥ ९ एवञ्चास्मिन्पक्षेऽनन्तरस्येति न्यायाऽप्रवृत्तिरित्याशयः ।

---

❀ शब्दकौस्तुभः ❀

धातुर्न तु कथं चित्प्रातिपदिकमिति व्याख्यानादिति कैयटादयः । नन्वेवं '**कवेः**–अकवायीत्, **विधोः**–अविधावीत्, **पितुः**–अपितारीत् । अन्तरङ्गमपि गुणं सिचि वृद्धिर्बाधते" इति वदन्माधवो विरुध्येत । सत्यम् । यथाविरोधः सम्पादनीय इत्याग्रहस्तर्हीत्थं वर्णनीयं–धातोरितिवत्, ओत इत्यप्यनुवर्त्तते । तच्च वाक्यभेदेन सम्बध्यमानं नियमार्थं सम्पद्यते–'ओदन्तस्य धातोश्चेद्वृद्धिस्तर्हि धातोरेव धातोर्न तु नामधातो'रिति । यद्वा–'नेटी'त्यत्र 'ने'ति योगं विभज्य मण्डूकप्लुत्या सम्बन्धानुवृत्त्या वा 'ओत'इत्यनुवर्त्यौकारान्तस्य धातो वृद्धिर्निषिध्यते । अथवा 'बहुलं छन्दसी'त्यतो 'बहुल'-मित्यनुवर्त्त्य 'सिचि वृद्धिर्नामधाताविगन्तस्य भवति, न त्वोदन्तस्ये'ति कथं चित्समाधेयम् । व्यञ्जनेष्वन्तरतमपरिभाषाबलेनैवानुनासिकपरसवर्णयोरिवातिप्रसङ्ग उद्धृत एव । अभ्युपेत्य तु ब्रूमः–नाप्राप्तायां सिचि वृद्धावारभ्यमाणा हलन्तलक्षणा वृद्धिर्बाधिका भविष्यति । 'नेटी'ति निषेधस्तु हलन्तस्य यावती वृद्धिः प्राप्ता सिचि वृद्धिरिति वा हलन्तस्येति वा तस्याः सर्वस्याः, न तु सूत्रविशेषप्रापितत्वे आग्रहः । तेनाकोषीदमोषीदित्यादौ द्विविधापि वृद्धिर्निषिध्यतइति सर्वं सुस्थम् । तस्मान्निषेधसिद्ध्यर्थमिग्लक्षणतां सम्पादयितुं सूत्रमिति स्थितम् ।

स्यादेतत् । कृतः कृतवान् छिन्नश्छिन्नवानित्यादौ निषेधसिद्धये गुणग्रहणमस्तु–वृद्धिग्रहणं तु व्यर्थम् । न च 'मृष्टो'

**वृद्धिर्बाधिका । तस्या अपि 'नेटी'ति प्रतिषेधः[1] ॥**

( प्रदीपः ) **तस्या अपीति ।** अपिशब्दात्सिचि वृद्धेरपि ॥

( उद्द्योतः ) बाध्यविशेषचिन्तायामाह[2]–भाष्ये–**अथ वेति ।** तद्व्याचष्टे[3]–**अपिशब्दादिति ।**

[ तटस्थस्य पूर्वपक्षिणं प्रत्यनुयोगभाष्यम् ]

**अस्ति पुनः क्वचिदन्यत्रापि, अपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवति ?॥**

( उद्द्योतः ) स्वप्रतिषेध्यहलन्तलक्षणवृद्धिप्रतिषेधद्वारा **भ्रष्टावसर**न्यायेन **सिचि वृद्धे**रप्यभावः प्रतिपाद्यते इत्यर्थस्तद्ध्वनयन्नाह–भाष्ये **अस्ति पुनः क्वचिदित्यादि ॥**

[ पूर्वपक्षिणो भ्रष्टावसरन्यायेन समाधानभाष्यम् ]

**'अस्ती'त्याह । सुजाते अश्वसूनृते । अध्वर्यो अद्रिभिः सुतम् । शुक्रं ते अन्यदिति । पूर्वरूपे प्रतिषिद्धेऽयादयो[4]ऽपि न भवन्ति ॥**

( प्रदीपः ) **अस्तीत्याहेति ।** 'नान्तः पादमव्यपरे'इति पाठमाश्रित्यैतदुक्तम् । यद्येवं वृक्षावित्यत्र 'नादिची'त्यनेन पूर्वसवर्णदीर्घवद्वृद्धेरपि प्रतिषेधप्रसङ्गः । नैष दोषः, **सङ्ख्योढा**वित्यादेर्ज्ञापकादनन्तरस्यैव 'नादिची'ति निषेधात् ॥

( उद्द्योतः ) ननु तत्र प्रकृतिभावेन साक्षादेवोत्सर्गापवादयोर्निवृत्तिर्न त्वपवादेन बाधादुत्सर्गस्येत्यत आह–**नान्त इति ।** भाष्ये–**न भवन्तीति ।** भ्रष्टावसरन्यायेनेति भावः । **पूर्वसवर्णदीर्घवद्वृद्धेरपीति ।** 'अवर्णादिचि यद्यत्प्राप्तं तन्ने'ति बाध्यसामान्यचिन्तारूपाद्यपक्षेणेयं शङ्का । ज्ञापकाद्बाध्यविशेषचिन्तैवाश्रीयते इत्युत्तरम् । **'पूर्वसवर्णदीर्घे निषिद्धे वृद्धेरपी'ति** पाठे भ्रष्टावसरन्यायोऽनित्यत्वेन[6] क्वचिदपवादनिवृत्तावपि तद्विषये उत्सर्गप्रवृत्तिर्ज्ञाप्यते इति भावः ॥

( उद्द्योतः ) परे त्व**थवे**ति भाष्यं पूर्वपक्ष्युक्तित्वात्प्रौढ्या । भ्रष्टावसरन्यायस्तु नास्त्येव,उक्तनिर्देशात् । अत एव **नान्तः पाद**मिति सूत्रे **एङोऽती**त्यनुवर्त्य 'एङोऽति यद्यत्प्राप्नोति तस्य निषेध' इत्यर्थमाश्रित्य सर्वनिषेधकत्वं तस्योक्तमिति वदन्ति ॥

[ सिद्धान्तिन उत्तरार्थताश्रयणभाष्यम् ]

**उत्तरार्थ[5]मेव तर्हि सिजर्थे वृद्धिग्रहणं कर्तव्यम् । सिचि वृद्धिरविशेषेणोच्यते सा क्ङिति मा भूत्–न्यनुवीत् न्यधुवीत् ॥**

( उद्द्योतः ) इहार्थत्वे पूर्वपक्षिणा द्वेधा प्रौढ्यापि खण्डिते सिद्धान्ती तदभ्युपेत्याऽप्याह–**उत्तरार्थमेवेति ।** नु–धू धातू कुटादी ॥

[ पूर्वपक्षिणस्तन्निराकरणभाष्यम् ]

**नैतदस्ति प्रयोजनम् । अन्तरङ्गत्वादत्रोवङादेशे कृतेऽनन्त्यत्वाद्वृद्धिर्न भविष्यति ॥**

( प्रदीपः ) **अन्तरङ्गत्वादिति ।** उवङादेशः सिचमेवापेक्षते, वृद्धिस्तु सिच्परस्मैपदे ॥

( उद्द्योतः ) भाष्ये-**अनन्त्यत्वादिति ।** अचोऽनन्त्यत्वादित्यर्थः । नन्विक्परिभाषाऽभावेऽन्त्याऽल्मात्रस्य सा प्राप्नोतीति **'अनन्त्यत्वा'**दित्यसङ्गतमिति चेन्न, हलन्तेषु हलन्तलक्षणया बाधेनाऽस्या वृद्धेरजन्त एव व्यवस्थितेरित्याशयात् ॥

[ सिद्धान्तिनो दोषदानभाष्यम् ]

**यदि तर्हि सिच्यन्तरङ्गं भवति[7]–'अकार्षीत्, अहार्षीत् । गुणे[8] कृते रपरत्वे चाऽनन्त्यत्वाद्वृद्धिर्न प्राप्नोति ॥**

---

❀ **राजलक्ष्मीः** ❀

१ एवञ्च भ्रष्टावसरत्वान्न सेति भावः । २ एवञ्चानन्तरस्येति न्यायप्रवृत्त्या तस्या एव निषेध इतिभावः । ३ **तद्व्याचष्टे**–विशेषचिन्तनं व्याचष्टे । ४ **अयादयः**–उत्सर्गाः । ५ **उत्तरार्थ**- क्ङिति चेत्यर्थम् । ६ बाध्यसामान्यचिन्तया, भ्रष्टावसरन्यायेन च । ७ यदि सिचि परतोऽन्तरङ्गं पूर्वं भवति तर्हीत्यर्थः । ८ **गुणे**–सार्वधातुकेति गुणे ॥

---

❀ **शब्दकौस्तुभः** ❀

'मृष्टवा'नित्यादौ निषेधसिद्धिस्तत्फलम् । योगविभागेन सिद्धत्वात् । तथाहि–'मृजेर्वृद्धि'रित्यस्यानन्तरमजादौ क्ङिति वेत्येवं रूपं वचनमवश्यं कर्त्तव्यम् । 'मृजन्ति' 'मार्जन्ती'त्यादिसिद्ध्यर्थम् । एवं स्थिते 'अजादौ क्ङिती'ति योगो विभज्यते । नियमार्थं चेदम्–'क्ङिति चेद्भवत्यजादावेवे'ति, तेने 'मृष्टो' 'मृष्टवा'नित्यादि सिद्धम् । ततोऽजादावपि विकल्पेनेत्येतदर्थं 'वेति' द्वितीयो योग इति । तस्माद्वृद्धिग्रहणस्य फलं दुरुपपादमिति ।अत्राहुः–'णु स्तुतौ' 'धू विधूनेन' कुटादिषु पठ्येते । ताभ्यां लुङि अनुवीदधुवीदितीष्यते, तत्र सिचि वृद्धेः क्ङितीति निषेधायेग्लक्षणतां सम्पादयितुमिह वृद्धिग्रहणमिति । नन्विडान्तर्भूतसिज्मात्रापेक्षत्वादन्तरङ्गे उवङि कृते हलन्तत्वा-

---

१ 'वृद्धिरिति' पा० ।

( उद्द्योतः ) सिद्धान्त्याह–यदि तर्हीति । अत्र यदीत्यनेनाऽपवादत्वात्तद्विषयेऽन्तरङ्गप्रवृत्तिरेव वक्तुमशक्येति ध्वनितम् । इत उत्तरग्रन्थस्तु सिद्धान्त्याशयानभिज्ञपूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरिति बोध्यम् ॥

[ पूर्वपक्ष्येकदेशिनः समाधानभाष्यम् ]

**मा भूदेवम् । 'हलन्तस्ये'त्येवं भविष्यति ॥**

[ सिद्धान्त्येकदेशिनस्तत्खण्डनभाष्यम् ]

**इह तर्हि–न्यस्तारीत् न्यदारीत् । गुणे कृते रपरत्वे चाऽनन्त्यत्वाद्वृद्धिर्न प्राप्नोति । हलन्तलक्षणायाश्च 'नेटी'ति प्रतिषेधः ॥**

[ पूर्वपक्ष्येकदेशिनो दूषणनिराकरणभाष्यम् ]

**मा भूदेवम् । 'ऌान्तस्ये'त्येवं भविष्यति ॥**

[ सिद्धान्त्येकदेशिनो दूषणान्तरदानभाष्यम् ]

**इह तर्हि–अलावीत् अयावीत् । गुणे कृतेऽवादेशे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति । हलन्तलक्षणायाश्च 'नेटी'ति प्रतिषेधः ॥**

[ पूर्वपक्ष्येकदेशिनो दूषणनिराकरणभाष्यम् ]

**मा भूदेवम् । 'ऌान्तस्ये'त्येवं भविष्यति ॥**

[ सिद्धान्त्येकदेशिनो दूषणभाष्यम् ]

**'ऌान्तस्ये'इत्युच्यते, न चेदं ऌान्तम् ॥**

[ पूर्वपक्ष्येकदेशिनो दूषणनिराकरणभाष्यम् ]

**'ऌान्तस्ये'त्यत्र वकारोऽपि निर्दिश्यते ॥ किं वकारो न श्रूयते ? ॥ लुप्तनिर्दिष्टो वकारः ॥**

( प्रदीपः ) लुप्तनिर्दिष्ट इति । 'लोपो व्योर्वली'ति भावः । किमत्र प्रमाणमिति चेदभियुक्तस्मरणमेव ।

( उद्द्योतः ) 'लुप्तनिर्दिष्ट' इत्यत्र पूर्वं निर्दिष्टः पश्चाल्लुप्त इत्यर्थे मयूरव्यंसकादित्वात्समासः । न च गुणे 'वार्णादाङ्ग'मिति न्यायेनाऽऽवं बाधित्वा वृद्धावावादेशेऽलावीदित्यादेः सिद्धौ वप्रश्लेषो व्यर्थ इति वाच्यम्, 'सिचि वृद्धि'रित्यस्याऽपवादत्वाऽज्ञानेनेव एतत्परिभाषाऽज्ञानेनैवाऽस्य प्रवृत्तेरदोषात् । न च वकारप्रश्लेषेऽशवीदशावीदिति 'शव' धातोर्नित्यवृद्ध्यापत्तिः । अस्या एकदेश्युक्तित्वेन तदज्ञानेनैवाऽस्य भाष्यस्य प्रवृत्तेः,जिरिचियीयज्ञानवदित्याहुः। एतद्भाष्यप्रामाण्यात्स धातुः पवर्गीयान्तो, वबयोः समानश्रुतित्वाल्लोके दन्त्योष्ठ्यश्रुतिरित्यन्ये ।

[ सिद्धान्त्येकदेशिनो दूषणभाष्यम् ]

**यद्येवम्–मा भवानवीत्, मा भवान्मवीत् । अत्रापि प्राप्नोति ॥**

---

### ※ शब्दकौस्तुभः ※

नेटीति निषेधः सिद्ध इति चेन्न । 'सिच्यन्तरङ्गं नास्ती'ति सिद्धान्तादुवङः प्रागेव वृद्धिप्रसङ्गात् । स्यादेतत्–'अन्तरङ्गं बलीय' इति तावदत्रः परस्मिन्निति सूत्रे स्थापयिष्यते । तद्विशेषात्सिच्यप्यस्तु । न चैवमन्वैषीदहैषीदित्यादौ गुणः स्यादिति वाच्यं, तस्यैव वृद्धिसम्भवेनेष्टापत्तेः । नहीदानीं णिश्विग्रहणमस्ति येनैकारस्य वृद्धिर्न लभ्येत । न चैवमप्यस्तौषीदित्यादावन्तरङ्गत्वाद्गुणे कृते ओतो नेति व्याख्यानपक्षे वृद्ध्यसम्भवः, बहुलग्रहणादनिगन्तानां नेति पक्षे त्वचैषीदित्यादावपि दोष एवेति वाच्यम् । 'ओतो धातोरेव धातोर्न तु नामधातो'रिति तृतीयपक्षाश्रयणेन सर्वसमाधानात् । 'अकार्षी'दित्यादौ तु हलन्तलक्षणा वृद्धिरस्तु । 'अतारी'दित्यादौ त्वन्तरङ्गत्वाद्गुणे हलन्तलक्षणायां वृद्धौ 'नेटी'ति प्रतिषिद्धायामतो हलादेरिति विकल्पं बाधित्वा'ऽतो ऌान्तस्ये'ति नित्या वृद्धिः । 'अलावी'दित्यादावप्यन्तरङ्गत्वाद्गुणावादेशयोः कृतयोरतो ऌान्तस्येत्यत्र लोपो व्योरिति लोपेन वकारस्यापि व्याख्यानान्नित्या वृद्धिर्भविष्यति । 'मा भवानवीत्' । 'अमवी'दित्यत्रापि तर्हि नित्या वृद्धिः स्यादिति चेन्न; णिश्विग्रहणमपनीय तत्स्थाने अविमव्योः प्रश्लेषेण वृद्धिनिषेधात् । न ह्यस्मिन्पक्षे णिश्विग्रहणमुपयुज्यते, औनयीदश्वयीदित्यत्रान्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तानां नेत्येव निषेधसिद्धेः । नन्वेवमवेरिव मवेरपि नित्यं निषेध एव स्यात्, इष्यते तु विकल्पः । नैष दोषः । 'अतो ऌान्तस्ये'त्यत्र वकारप्रश्लेषेण या नित्या वृद्धिः प्राप्ता सैवेहाऽविमव्योर्नेत्यनेन मवेर्निषिध्यते न त्वतो हलादेरित्येषापि, 'मध्येपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरा'निति न्यायात् । न चैवं जागर्त्तेरपि तथाप्रसङ्गः, तत्र बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यतइति स्वीकारात् । यद्वा–'अपवादे निषिद्धे उत्सर्गो न प्रवर्त्तते'इति जागर्त्तावाश्रयणीयं, मवतौ तु प्रवर्त्तन्तइति बाध्यसामान्यविशेषचिन्तयोर्बाधके निषिद्धे बाध्यस्य प्रवृत्त्यप्रवृत्त्योश्च लक्ष्यानुरोधेन व्यवस्थाया अनुपदमेव वक्ष्यमाणत्वात् । न चैवमगवीदित्यत्रापि नित्या वृद्धिः स्याद्वकारप्रश्लेषादिति वाच्यं, सिचि वृद्धेरिवाऽस्या अपि धातुग्रहणेन वारणात् । तस्मात्सिच्यन्तरङ्गाश्रयणेनैवानुवीदधुवीदित्यादेः सिद्धौ क्ङिति चेति प्रतिषेधस्यानपेक्षणाद्वृद्धिग्रहणं व्यर्थमेवेति । अत्रोच्यते–वकारप्रश्लेषे सति शवतिर्गतिकर्मा कम्बोजेषु विकारएवैनमार्या भाषन्तइति पस्पशायां भाष्यकारैरभ्युपगतस्य शव्धातोरपि नित्यवृद्धिप्रसङ्गः, तस्यापि प्रतिषेधे वा

( उद्द्योतः ) अवेराटि वृद्ध्यवृद्ध्योरविशेष इति आण्निवृत्तये भाष्ये माङ् प्रयुक्तः। एकादेशे पुनरप्यविशेषस्तदवस्थ इति भवानित्युक्तम्। मवौ तु प्रयोजनान्तराऽसत्त्वेप्यैकरूप्याय तत्प्रयोगः।

[ पूर्वपक्ष्येकदेशिनः समाधानभाष्यम् ]

'अविमव्योर्ने'ति वक्ष्यामि[1] ॥

[ सिद्धान्त्येकदेशिनो गौरवेणोक्तदूषणभाष्यम् ]

तद्वक्तव्यम्[2] ॥

[ पूर्वपक्ष्येकदेशिनो गौरवपरिहारभाष्यम् ]

न वक्तव्यम्। णिश्विभ्यां तौ निमातव्यौ[3]। यद्यप्येतदुच्यते-अथ[4] वैतर्हि णिश्व्योः प्रतिषेधो न वक्तव्यो भवति। गुणे कृतेऽयादेशे च 'यान्तानां ने'त्येव प्रतिषेधो भविष्यति ॥

(प्रदीपः) णिश्विभ्यामिति। णिश्विग्रहणमकृत्वाऽविमवी प्रतिषेधार्थं कर्त्तव्यौ। एवं सति गौरवाऽभावः। निमातव्याविति। मेङो रूपम्। परिवर्तनीयावित्यर्थः।

( उद्द्योतः ) अविमव्योर्नेति निषेधश्च मध्येऽपवादन्यायेनाऽतोल्लान्तस्येत्यस्यैव। तेनाऽतो हलादेरिति विकल्पो भवत्येवेति बोध्यम्। 'सिचि वृद्धि'रिति सूत्रंतु 'अचैषी'दित्यादौ गुणे कृते चरितार्थमेतन्मते इति बोध्यम्॥

[ सिद्धान्त्येकदेशिनो ज्ञापकतापरभाष्यम् ]

एव तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति-'न सिच्यन्तरङ्गं भवति'-इति। यदयम् 'अतो हलादेर्लघो'रित्यकारग्रहणं करोति ॥

कथं कृत्वा ज्ञापकम्?॥ अकारग्रहणस्यैतत्प्रयोजनम्-इह मा भूत्-अकोषीत् अमोषीत्। यदि सिच्यन्तरङ्गं स्यादकारग्रहणमनर्थकं स्यात्, गुणे कृतेऽलघुत्वाद्वृद्धिर्न भविष्यति। पश्यति त्वाचार्यो-'न सिच्यन्तरङ्गं भवती'ति। ततोऽकारग्रहणं करोति ॥

[ पूर्वपक्ष्येकदेशिनो ज्ञापकताविघटनभाष्यम् ]

नैतदस्ति ज्ञापकम्। अस्त्यन्यदेतस्य वचने प्रयोजनम्॥ किम्?॥ यत्र गुणः प्रतिषिद्ध्यते तदर्थमेतत्स्यात्-न्यकुटीत् न्युपटीत् ॥

( उद्द्योतः ) नैतदस्ति ज्ञापकमिति। 'न्यकुटी'[5]दित्यादावन्तरङ्गतया वृद्धिबाधकगुणस्य निषेधेऽपि भ्रष्टावसरन्यायेन न वृद्ध्यभावः, सिद्धान्ते न्यायाऽभावादितिभावः।

[ सिद्धान्त्येकदेशिनो ज्ञापकान्तरप्रदर्शनभाष्यम् ]

यत्तर्हि णिश्व्योः प्रतिषेधं शास्ति। तेन 'नेहान्तरङ्गमस्ती'ति दर्शयति[6] ॥

( उद्द्योतः ) यत्तर्हि णिश्व्योरिति। ननु णिश्विस्थानेऽविमवी इति वदन्तं प्रति णिश्विप्रतिषेधस्य ज्ञापकत्वाऽभिधानमयुक्तमिति चेन्न, ज्ञापकत्वे संभवति निमानाऽसंभव इत्याशयात्।

[ तस्यैव पूर्वोक्तज्ञापकसमर्थनभाष्यम् ]

यच्च करोत्यकारग्रहणं 'लघो'रिति कृतेऽपि ॥

❀ राजलक्ष्मीः ❀

१ 'ह्म्यन्ते'ति सूत्रे इत्यादिः। २ एवञ्च गौरवं भवतीत्याशयः। ३ तत्स्थाने पाठ्यौ। एवञ्च न गौरवमित्याशयः। ४ अथवैतर्हि-तथापि। ५ ननु भ्रष्टावसरन्यायेन तत्रापि वृद्ध्यभावः सिद्ध इति ज्ञापकता युक्तैवेत्यत आह न्यकुटीति। न्यायेति। भ्रष्टावसरन्यायेत्यर्थः। ६ दर्शयति-बोधयति।

❀ शब्दकौस्तुभः ❀

कथं णिश्विभ्यां निमानम्?। गौरवप्रसङ्गात्। किञ्च-न वयं व्यसनितया 'सिच्यन्तरङ्गं नास्ती'ति ब्रूमः। किन्तु न्यायबलाज्ज्ञापकबलात्फलानुरोधाच्च। तथाहि-येन नाप्राप्तिन्यायेनान्तरङ्गं वृद्ध्या बाध्यते, 'सत्यपि सम्भवे बाधनं भवती'त्यभ्युपगमात्। अन्यथा तक्रेण दधि न बाध्येत। श्नमकजादिभिश्च शप्प्रत्ययकप्रत्ययादयो न बाध्येरन्, देशभेदेनोभयसम्भवात्। न च मध्येपवादन्यायेनोवङेव वृद्ध्या बाध्येत न तु गुणोऽपीति वाच्यं, बाध्यस्य भेदेन विवक्षायां ह्येतदेवं स्यात्, बाध्यस्य सामान्यचिन्तायां तु स्वविषये प्राप्तं स्वानपवादभूतं सर्वं बाध्यते, यथा'ऽचिर'इत्येतेन गुणदीर्घोत्वानि। अन्यथा तत्रापि मध्येपवादन्यायेन रैफो दीर्घोत्वे एव बाध्येत न तु गुणम्। तस्य परत्वात्। बाध्यस्य च क्वचिद्भेदेन चिन्ता, क्वचित्तुसामान्यरूपेणेत्युभयमपि लक्ष्यानुरोधात्तत्रतत्राश्रीयते। णिश्विग्रहणं चात्र लिङ्गम्। अन्यथाऽन्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तानां नेति निषेधादेवौनयीदश्वयीदित्यादेः सिद्धौ किं णिश्विग्रहणेन?। ज्ञापकान्तरमप्युक्तं भाष्ये-'यच्च करोत्यकारग्रहणं लघोरिति कृतेपी'ति। अस्यायमाशयः-'अतो हलादे'रिति सूत्रेऽद्ग्रहणस्य न तावत्सन्ध्यक्षरादिकं व्यावर्त्यम्, लघुग्रहणेनैव व्युदासात्। इदुद्तः परमवशिष्यन्ते-

( प्रदीपः ) न सिचीति । न्यायादप्येतत्सिध्यति,-येन नाप्राप्तिन्यायेनाऽन्तरङ्गस्य वृद्ध्या बाधात् । प्रयोजनं चास्ति चिरिजिर्योर्यङ्लुगन्तानां च नयत्यादीनामचिरायीदजिरायीदनेनायीदचेचायीदित्यादौ (सिचि) वृद्धिसिद्धिः । अन्यथा गुणाऽयादेशयोः कृतयोर्यान्ततत्वाद्वृद्धिप्रतिषेधः स्यात् ॥

( उद्द्योतः ) यश्च करोतीति । इग्ग्रहणाऽभावेऽकोषीदित्यादौ व्यञ्जनस्य वृद्धिवारणाय बाध्यविशेषचिन्तापक्षे त्वया सिचि वृद्ध्यपवादहलन्तलक्षणाया निषेधे तेन न्यायेन सिचि वृद्ध्यप्राप्तेः स्वीकारेण त्वद्रीत्या ज्ञापकमेवेति भावः । एतेन सिच्यन्तरङ्गाभावेऽपि परत्वाद्गुणस्य वृद्धिबाधकताया दुर्वारत्वेनाऽकोषीदित्यादौ लघुत्वाऽभावादेव वृद्ध्यभावेऽस्त इति व्यर्थमेवेत्यन्त्यं ज्ञापकमसङ्गतम् । तथा णिश्व्योर्गुणे वार्णपरिणाषयाऽयादेशं बाधित्वा प्राप्तवृद्धेर्निषेधाय णिश्विग्रहणमप्यावश्यकमित्याद्यमप्यसङ्गतमित्यपास्तम् । एकदेश्युक्तित्वेनाऽदोषात् । एतदेव ध्वनयन्-'यदि तर्हि' इति सिद्धान्त्युक्तौ यैद्यन्तर्भावसूचितं-'कृतेऽस्यै चारितार्थ्येऽपि स्वप्राप्तिकाले प्राप्तस्यै येन नाप्राप्तिन्यायेन बाधः' इत्येतदाह-न्यायादपीत्यादि । बाध्यसामान्यचिन्तया च

## ❀ राजलक्ष्मीः ❀

१ न सिच्यन्तरङ्गं भवतीति । २ न्यायमेव दर्शयति-येननेति ।अन्तरङ्गस्य-गुणस्य । वृद्ध्या-सिचि वृद्ध्या । ३ तेनेति । अप्रत्यवसरन्यायेनेत्यर्थः । ४ त्वद्रीत्येति ।

## ❀ शब्दकौस्तुभः ❀

अचेतीदकोषीदनर्तीदिति । 'तेऽप्यन्तरङ्गेण गुणेनापहृताश्चेत्तर्हि व्यर्थमिद्ग्रहणं स्यात् । न चाऽकुटीदित्यादावुकारव्युदासाय तदिति वाच्यं, तत्राप्यन्तरङ्गेण गुणेन वृद्धिबाधे सति गुणे ङित्वान्निषिद्धेपि वृद्धेरप्रवृत्तेः, 'न हि देवदत्तस्य हन्तरि हते देवदत्तस्य पुनरुन्मज्जनं भवती'ति न्यायात् । अत एव 'नान्तःपाद'मिति पाठे पूर्वरूपनिषेधे सत्ययादयोपि न प्रवर्त्तन्ते । तेन 'सुजाते अश्वसूनृते' इत्यादि च सिध्यतीति स्वीकृतं भाष्ये । न चैवमपवादाऽभावे पुनरुत्सर्गस्य स्थितिरिति निर्विषयं स्यात् , वृक्षावित्यादौ नादिचीतिपूर्वसवर्णे निषिद्धे वृद्धिश्च न प्रवर्तेतेति वाच्यं, 'भिवोद्ध्यौ नदे' 'तौ स'दित्यादि लिंगेनापवादे निषिद्धे उत्सर्गोऽपि न प्रवर्त्ततइत्यस्यासार्वत्रिकत्वाभ्युपगमात् । तदेतत्तत्रतत्रोच्यते-'नोत्सहते प्रतिषिद्धा सती बाधितु'मिति । तथा च पक्षभेदाश्रयेणातो हलादेरित्यद्ग्रहणमपि ज्ञापकमिति स्थितम् ॥

फलमप्यस्ति । यदि हि सिच्यन्तरङ्गं स्यात्तर्हि चिनी-

१ 'सिचिवृद्धिः' पा० २ 'वृत्तये च बाध्यसामान्यचिन्ता ।

सकलाऽन्तरङ्गबाध इति बोध्यम् । एवंच न ज्ञापकोपयोगः, नापि ज्ञापकसंभवो, नापि प्रयोजनं, वार्णपरिभाषयाऽचिरायीदित्यादौ गुणे कृतेऽयादेशात्पूर्वं वृद्धिप्राप्तेः । न वा वकारप्रश्लेषस्य फलं, नाप्यविमव्योः प्रतिषेधस्येति शवधातौ वृद्धिविकल्प एवेति बोध्यम् ।

[ सिद्धान्तिन उपसंहारवार्त्तिकम् ]

॥*॥ तस्मादिग्लक्षणा वृद्धिः ॥*॥

(भाष्यम्) तस्मादिग्लक्षणा वृद्धिरास्थेया॥

( उद्द्योतः ) एवंच 'न्यनुवी'दित्यादावुवङं बाधित्वा प्राप्ताया वृद्धेर्निषेधायेग्लक्षणा सिचि वृद्धिरास्थेयेत्युपसंहरति सिद्धान्ती-तस्मादिति भाष्ये । इग्लक्षणत्वेन निषेधायाऽकोषीदित्यादावनिको गुणव्यावृत्तये चेति भावः । बाध्यसामान्यचिन्ता, अप्रत्यवसरन्यायश्चैकदेश्युक्तिर्न तु सिद्धान्तः । अत एव 'न्यस्तारी'दित्युपक्रम्य 'हलन्तलक्षणायाश्च नेटीति प्रतिषेध'इत्युक्तमित्यलम् ।

—****—

[ पूर्वपक्षिण आक्षेपवार्तिकम् ]

॥*॥ षष्ठ्याः स्थानेयोगत्वादिग्निवृत्तिः ॥*॥

'अकुटीदित्यादावपि तेन न्यायेन तदप्राप्तेरिति भावः । ५ यद्यन्तर्भावसूचितमिति । यद्यन्तर्भावेन सूचितमित्यर्थः । अस्य 'बाध इत्येत'दित्यत्रान्वयः । क्वचित्तु 'सूचित'इति पाठः । ६ कृतेऽस्येति । गुणे कृते वृद्धिशास्त्रस्येत्यर्थः । ७ प्राप्तस्येति । 'गुणादे'रिति शेषः ।

प्रभृतिभ्यो यङ्लुगन्तेभ्यः, चिरिणोतिजिरिणोतिभ्यां च लुङि सिचि अचेचायीदनेनायीदचिरायीदजिरायीदिति न स्यात् । गुणायादेशयोःकृतयोर्यान्तानां नेति प्रतिषेधप्रसंगात् । यदि तु बाध्यविशेषचिन्तायां मध्येपवादन्यायमाश्रित्य उवङेव बाध्यते न तु गुण इत्याश्रीयते तदाप्येतत्र सिद्ध्येदेव । तस्मात्सिचि सर्वमप्यन्तरङ्गं नास्त्येवेति सिद्धान्तं साधयितुं बाध्यसामान्यचिन्तैवाश्रयणीया । एतदर्थमेव हि भाष्ये ज्ञापकोपन्यासः कृतः । अन्यथा न्यायेनैव सिद्धेऽन्तरङ्गस्यापि बाधे किं ज्ञापकवर्णनेन ? । एवं स्थिते 'न्यनुवीत्' 'न्यधुवी'दित्यत्र 'क्ङिति चे'ति निषेध एवाश्रयणीयस्तथा चेग्लक्षणत्वसिद्धये वृद्धिग्रहणमपीह कर्त्तव्यमेवेति स्थितम् । एवं च सत्यसम्भवादपि वृद्ध्या सिच्यन्तरङ्गं सर्वं बाध्यते । यदि हि स्यात्तर्हि क्वापि सिचीगन्तमङ्गं न लभ्येतेत्यवधेयम् । तथा चेग्लक्षणत्वस्य निषेधप्रवृत्त्यर्थमावश्यकत्वे स्थिते तत्रतत्रात्सन्ध्यक्षरव्यञ्जनादिव्यावृत्तिरपीक्परिभाषयैव सिध्यतीति ज्ञापकवर्णनादिक्लेशोपि नाश्रयणीयः । न चैवं द्यौः पन्थाः इममित्या-

अप्रत्यवसर'इति पा० ।

(भाष्यम्) **षष्ठ्याः स्थानेयोगत्वात्सर्वेषामिकां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति–दधि मधु ॥**

(प्रदीपः) **षष्ठ्या इति ।** स्वतन्त्रमिदं गुणवृद्ध्योर्विधायकमिति पूर्वः पक्षः ॥

(उद्द्योतः) **विधायकमिति । 'इको यणची'**-त्यादि तु स्वविषयेऽस्य बाधकमिति न तद्वैयर्थ्यरूपो दोषः । भाष्ये–**इङ्निवृत्तिरित्यस्य 'गुणवृद्धिरूपादेशेने'**त्यादिः॥

[ सिद्धान्तिनो दूषणभाष्यम् ]

**पुनर्वचनमिदानीं किमर्थं स्यात् ? ॥**

(उद्द्योतः) **पुनर्वचनं**–'मिदेर्गुण' इत्यादिरूपम् ॥

[ पूर्वपक्षिणः परिहारवार्त्तिकम् ]

*॥*॥ अन्यतरार्थं पुनर्वचनम् ॥*॥*

(भाष्यम्) **अन्यतरार्थमेतत्स्यात्–'सार्वधातुकार्धधातुकयोर्गुण एवे'ति ॥**

(प्रदीपः) **अन्यतरार्थमिति ।** नन्वनिकोऽपि यथा स्यादिति विध्यर्थं स्यात्, न तु नियमार्थम्, नियमाद्विधेर्बलीयस्त्वात्[3] । एवं मन्यते–द्वितीयं गुणवृद्धिग्रहणमनुवर्तते, तेन गुणवृद्धिप्रदेशेषु 'इक'इत्यस्योपस्थानान्नाऽस्त्यनिकः प्रसङ्गः ॥

(उद्द्योतः) **नियमाद्विधेरिति ।** प्राप्तबाधादिरूपदोषापत्त्या परिसङ्ख्यारूपो नियमो गुरुरिति भावः ।

**द्वितीयमिति ।** केवलविधायकत्वेऽनुवृत्त्यैव सिद्धे इहत्यगुणवृद्धिग्रहणमनर्थकं स्यादिति भावः । **यातीत्यादि**-निर्देशैर्गुरोरपि नियमस्याश्रयणमित्यन्ये ॥

[ पूर्वपक्षिणश्चोद्यान्तरवार्तिकम् ]

*॥*॥ प्रसारणे च ॥*॥*

(भाष्यम्) **प्रसारणे च सर्वेषां यणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति–याता वाता ॥**

(प्रदीपः) **प्रसारणे चेति ।** तुल्यन्यायत्वादुपन्यासः । 'इग्यण' इत्यत्र 'यण' इति स्थानषष्ठी । तेन 'यणः स्थाने इग्भवति, स च संप्रसारणसंज्ञ' इति वाक्यार्थः स्यात् । वाक्यभेदेन च कार्यद्वयं विधीयते ॥

❀ राजलक्ष्मीः ❀

१ षष्ठ्याः–इक इति षष्ठ्याः । २ विधिनियमसंभवे-विधेरेव ज्यायस्त्वादिति भावः । २ **अन्यतरार्थमिति ।** पर्यायेण सर्वत्र प्राप्तयोरनेन गुणवृद्ध्योस्तत्तन्निमित्तेऽन्यतरस्य निवृत्त्यर्थमिदम् । 'तत्र गुण एव न वृद्धिः, मृजेर्वृद्धिरेव न गुण' इत्येवमेक एव यथा स्यादन्यन्माभूदित्येतदर्थमित्यर्थः । ३ इत्येतत्पर्यन्तं शङ्का । ४ समाधत्ते–**एवमिति ।** ५ वाक्यभेदेन स्वतन्त्रविधित्वमुपस्थापकत्वं चेत्याशयः ।

❀ शब्दकौस्तुभः ❀

दावपीकपदोपस्थितिवशादिकामेवौत्वमात्वमत्वं च स्यादिति वाच्यं,–गुणवृद्धिशब्दयोरनुवृत्तौ पुनर्गुणवृद्धिग्रहणसामर्थ्याद्धि शब्दव्यापारोऽप्याश्रीयते–गुणवृद्धी ये गुणवृद्धी न तु शब्दान्तरेण विहिते इति, अनुवृत्ताभ्यां विशेषणाद्वा । नन्वचश्चेति सूत्रे ह्रस्वादिग्रहणानुवृत्त्या संज्ञया विधाने पदोपस्थितिरिति स्थास्यति तत्सामर्थ्याद्दिव औत्पथिमथ्यृभुक्षामात्त्यदादीनाम इत्यत्रैकपदोपस्थानं न भविष्यति । यदि हि स्यात्तर्हि चश्चेत्यत्र 'संज्ञया विधाने'तियत्नाश्रयणं व्यर्थं स्यादिति चेन्न । 'दिव उ'-दित्यादिष्वगुणवृद्धिसंज्ञकेष्वच्परिभाषानिवर्त्तनेन चरितार्थत्वात् । 'अष्टन आ विभक्ता'वित्यादाविकोऽसंभवेन तत्र चरितार्थत्वाच्च । तस्मात् 'द्यौः' 'पन्था' 'इम'मित्यादिसिद्धये इहापि संज्ञाविधाने नियमं संपादयितुं पुनर्गुणवृद्धिग्रहणमिति **प्राञ्चः ।** ननु 'पन्था' इत्यनुदाहरणम्, 'इतो'दिति सिद्धे आद्विधिसामर्थ्यादेवेकपदस्यानुपस्थितेरिति चेन्न,–ऋभुक्षिऋकारोकारयोरर्थे आद्विधिसम्भवात् । न चैवं सौश्चानन्तर्यविवक्षणाद्येन नाव्यवधानाश्रयणाच्च नैवमिति वाच्यं, तथापि सम्बुद्ध्यर्थतया सामर्थ्योपक्षयात् । न चैवमित आदित्येव ब्रूयादिति वाच्यम्; 'ऋभुक्षणमिन्द्र'मित्यस्यासिद्ध्यापत्तेः । आद्विधौ हि 'वा षपूर्वस्ये'ति तत्सिद्धिरिति दिक् । यत्तु भाष्ये 'स' 'इम'मित्युदाहृतं, तत्र 'स इमं मन्त्रमपश्य'दिति ब्राह्मणवाक्यैकदेशानुकरणमात्रम् । उदाहरणं त्विममित्येव न तु स इत्यपि । तच्छब्दे इकोऽसम्भवेनेक इति नियमस्याप्रवृत्तेरित्याहुः । वस्तुतस्तु 'स' इत्यप्युदाहरणं साध्वेव । 'त्यदादीनाम' इति हि विधिवाक्यम् । तत्र चेक इत्यस्योपस्थितौ द्वीदमोरेवाऽत्वं स्यान्न त्वन्येषाम् । गणेन निर्देशस्तु संज्ञोपसर्जनव्यावृत्त्यर्थमुत्तरार्थं च स्यात् । 'तदोः सः सा'विति सत्वं हि त्यदादीनामेव तदोर्विधीयते । अत्रेदमवधेयम्–शब्दव्यापाराश्रयणानुरोधेनापि गुणवृद्धिग्रहणं मास्तु । इकस्तावित्येतावतैव सिद्धेः । वस्तुतस्तु 'ता'वित्यपि व्यर्थम्, 'इक' इत्येव सूत्र्यताम् । सम्पूर्णं पूर्वसूत्रद्वयमनुवर्त्य वृद्धिरित्यादैचौ यत्र विधीयेते, गुण इति चादेङौ तत्रेक इत्युपतिष्ठत इति व्याख्यानात् । नचैवं 'गुणवृद्ध्यधिकारे पुनर्गुणवृद्धिग्रहणसामर्थ्या'-दित्युत्तरग्रन्थाऽसङ्गतिः, तस्य यथाश्रुताऽभिप्रायकत्वात् । ग्रहणपदस्याऽनुवृत्तिपरतया संपूर्णसूत्रद्वयानुवृत्तिसामर्थ्यपरत्वादेति दिक् । व्याख्याने लिङ्गन्त्वितोऽदितीद्ग्रहणम् । अन्यथा

(उद्द्योतः) तुल्यन्यायेति। षष्ठीदर्शनरूपो न्यायः। वाक्यभेदेनेति। 'ष्यङः संप्रसारण'मित्यादिनिर्वाहाय सामान्येन संज्ञाविधानार्थं वाक्यभेद आवश्यक इति भावः॥

[ पूर्वपक्षिणो दूषणभाष्यम् ]

**पुनर्वचनमिदानीं किमर्थं स्यात्॥**

[ सिद्धान्तिनः समाधानवार्त्तिकम् ]

॥*॥ *विषयार्थं पुनर्वचनम्* ॥*॥

(भाष्यम्) **विषयार्थमेतत्स्यात्–'वचिस्वपियजादीनां कित्येवे'ति॥**

(उ०) विषयार्थमित्यस्य–निमित्तनियमार्थमित्यर्थः॥

[ पूर्वपक्षिण आक्षेपान्तरवार्तिकम् ]

॥*॥ *उरण्रपरे च* ॥*॥

(भाष्यम्) **उरण्रपरे च सर्वेषामृकाराणां निवृत्तिः प्राप्नोति। अस्यापि प्राप्नोति–कर्तृ हर्तृ॥**

(प्रदीपः) **कर्तृ हर्तृ इति।** अन्ततरमस्याऽभावात्सर्वेऽप्यणः पर्यायेण प्राप्नुवन्ति॥

[ सिद्धान्तिनःसमाधानवार्तिकम् ]

॥*॥ *सिद्धन्तु षष्ठ्यधिकारे वचनात्* ॥*॥

(भाष्यम्) **सिद्धमेतत्॥ कथम्?॥ ['षष्ठ्यधिकारे वचनात्॥'] षष्ठ्यधिकारे इमे योगाः कर्तव्याः। एकस्तावत्क्रियते तत्रैव। इमावपि योगौ षष्ठ्यधिकारमनुवर्तिष्येते॥**

(प्रदीपः) **सिद्धमिति।** स्वातन्त्र्यमेषां निवर्तयति। तेन यत्र षष्ठी तत्रैषामुपस्थानम्—**अङ्गस्य, वच्यादीनामृत इद्धातोरित्यादौ। इमावपीति।** स्वरितत्वादनयोरन्तरालवर्तिभिश्चाऽयोग्यत्वात्संबन्धाऽभावः॥

(उद्द्योतः) गुणादिविधावपि अधिकारलब्धा षष्ठीत्याह–**अङ्गस्येति।** तत्रो**रण्रपर** इत्यत्र 'षष्ठी'त्यनुवर्त्यं पूर्वोक्तार्थः सुलभः। एतयोरपि तत्राऽनुवृत्त्या षष्ठीति संबन्धेन तदर्थलाभः। तत्राऽनुवर्त्तनं यदि लौकिकोऽधिकारस्तर्हि स आकाङ्क्षानिबन्धनः। न च **षष्ठीस्थान** इत्यस्याकाङ्क्षेत्यत आह–**स्वरितत्वादिति।** लक्ष्यानुरोधाच्चेत्यपि बोध्यम्॥

❀ राजलक्ष्मीः ❀

१ **पुनर्वचनं**–वचिस्वपीत्यादिरूपम्। २ अयं पाठः सम्प्रति लुप्त इति गौडाः। ३ **षष्ठ्यधिकारे**–षष्ठीस्थाने इति सूत्रस्थषष्ठ्यधिकारे। **एकः**–उरण्रपरइति। ४ **तेनेति।**

❀ शब्दकौस्तुभः ❀

तत्रापीक्पदोपस्थितावुक्तरीत्या येन नाव्यवधानन्यायादृकारोकाराव्यावृत्तौ च सत्यां किं तेनेति। तदेतदिग्ग्रहणं **किमर्थमिति** भाष्येण, 'इग्ग्रहणमात्सन्ध्यक्षरे'त्यादिवार्तिकेन च सूच्यते। अन्यथा हि सूत्रं किमर्थमित्यायेव ब्रूयात्। यत्तूत्तरार्थं गुणवृद्धिग्रहणं कर्त्तव्यमेवेत्याशये**नेग्ग्रहण**मित्युक्तमिति भाष्याभिप्रायवर्णनम्। तन्न। पूर्वसूत्रानुवृत्त्यैव सिद्धावुत्तरार्थस्वस्यापि दुरुपपादत्वात्। समुदायापेक्षायां मण्डूकप्लुतेः सम्बन्धानुवृत्तेर्वा त्वयापि वाच्यत्वात्। इग्ग्रहणस्याऽप्युत्तरार्थतया तदंशेपि शङ्कानुत्थानाच्च। 'इक' इति योगः किमर्थं विभज्यत इति प्रश्नबीजमिति चेत्तर्हि गुणवृद्ध्यंशेपि तस्याऽविशिष्टतया सूत्रं किमर्थमित्येव ब्रूयादिति दिक्। यत्तु प्रधानावयवद्वारा समुदायाक्षेपोऽयमिति, तदपि नातिवशब्दस्वरसानुगुणम्। तस्मादुक्त एवाशयः साधुः। न चैवं गुणवृद्ध्यधिकारे पुनर्गुणवृद्धिग्रहणसामर्थ्यादित्युत्तरग्रन्थाऽसङ्गतिः। तस्य यथाश्रुताभिप्रायकत्वात्। ग्रहणपदस्यानुवृत्तिपरतया सम्पूर्णसूत्रद्वयानुवृत्तिपरतया सम्पूर्णसूत्रद्वयावृत्तिसामर्थ्यपरत्वाद्वेति दिक्। एवं चेक इति योगविभाग एव पूर्वपक्षसिद्धान्त.भ्यां समर्थ्यत इतीह पर्यवसितोर्थः। ततश्चानेनैकेन योगविभागेन सकलेष्टसिद्धौ 'मृजेर्वृद्धिरच' 'उरङि गुण' इत्यादिबहुतरयोगविभागाद्याश्रयणेनाऽन्यथासिद्धिवर्णनं नादर्त्तव्यमिति स्थितम्॥

इयं च परिभाषाऽलोन्त्यपरिभाषायाः शेषो वा, शेषिभूता वा, तया सह समुच्चिता वा, वैकल्पिकी वा, तदपवादो वा, पूर्वविप्रतिषेधात्तद्बाधिका वा, पदोपस्थापिका वेति सप्त पक्षाः सम्भाव्यन्ते यद्यपि तथाप्याद्यानां षण्णां दुष्टत्वात्सप्तम एव सिद्धान्तितः। तथाहि–'सार्वधातुकार्द्धधातुकयो'रित्यत्र स्वस्वनिमित्तवशात्परिभाषाद्वयं सन्निहितम्। तत्राऽङ्गस्येति षष्ठी यदि पूर्वमेवाऽन्त्यमलं नीता 'अङ्गान्त्यस्यगुण' इति, पश्चादिकाऽन्त्यो विशेष्यते तदेक्परिभाषा **शेषभूता।** यदि तु पूर्वमिकाऽङ्गस्य विशेषणात्तदन्तविधिरिगन्तस्याङ्गस्येति, ततः–स च भवन्नलोन्त्यस्येति, तदा **द्वितीयः पक्षः।** तदिदं पक्षद्वयमपि षष्ठीतत्पुरुषं बहुव्रीहिं चाश्रित्य तच्छेषपक्ष इति भाष्ये व्यवहृतम्। इह पक्षद्वयेपि 'मिदेर्गुण'इत्यादौ दोषः। यो हि मिदेरन्त्यः नासाविक्, यश्चेक् नासावन्त्यः। तथा चावश्यम्परिभाषायां त्यक्तायां सत्यां विनिगमकाभावादुभयत्यागे सर्वादेशो गुणः स्यात्। तदुक्तं वार्त्तिककृता–**'वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं सर्वादेशप्रसङ्गश्चानिगन्तस्ये'**ति। चकारो हेत्वर्थः। ततश्च सर्वादेशप्रसङ्गो

[ समाधानान्तरभाष्यम् ]

**अथवा-षष्ठ्यधिकारे इमौ योगावपेक्षिष्यामहे ॥**

**( प्रदीपः ) अथवेति ।** 'षष्ठी स्थानेयोगे'त्यत्र योगविभागः करिष्यते-'**षष्ठी**'। यदेतदनुक्रान्तं तद्यत्र षष्ठी तत्रोपतिष्ठत इत्यर्थः । तत्र योग्यत्वादनयोरेवापेक्षा नान्येषाम् । ततः-'**स्थाने योगे**'ति । 'षष्ठी'त्येतदुपतिष्ठते ॥

**( राज० )** तदधिकारस्थत्वेनेत्यर्थः ।

**( उद्द्योतः ) षष्ठीति ।** योगविभागे च **षष्ठीति** सूत्रं साकाङ्क्षमिति लौकिकोऽपेक्षालक्षणोऽधिकार इति भावः । **योग्यत्वादिति ।** व्याख्यानाच्चेत्यपि बोध्यम् । **उपतिष्ठत इति ।** अनुवर्तत इत्यर्थः ॥

[ प्रतिबन्दीमुखेन समाधानान्तरभाष्यम् ]

**अथवेदं तावदयं प्रष्टव्यः-'सार्वधातुकार्धधातुकयोर्गुणो भवती'तीह कस्मान्न भवति-याता वाता ? ॥ इदं[1] तत्रापेक्षिष्यते 'इको गुणवृद्धी'इति ॥ यथैव तर्हीदं तत्रा-**

१ समाधत्ते-**इदमिति ।**

❀ **शब्दकौस्तुभः** ❀

हीति फलितम् । अथ मिद इर्मिदिः, तस्य मिदेरित्यादिपूर्वोक्तरीत्या कथं चिदिह सर्वत्रेक एव स्थानित्वं लभ्येत तथापि 'भिन्न'मित्यादावनिग्लक्षणत्वाद्गुणनिषेधो न स्यात् ।

अथ क्क्ङोः क्त्त्वाज्ज्ञापकादनिग्लक्षणत्वेपि निषेधस्तर्हि 'लैगवायनः' 'पौरोहित्य'मित्यादावतिप्रसङ्गः । अथ लक्ष्यानुरोधाल्लघूपधगुणमात्रविषयकं ज्ञापकं तर्हि पदोपस्थितिपक्षएव लक्ष्यसिद्धये समाश्रीयताम् । एवं हि ज्ञापकाश्रयणक्लेशोऽपि न भवति । क्त्त्वेनाऽपि पदोस्थितिरेव ज्ञाप्यताम् । एवं हि ज्ञापकमूलकं वाक्यान्तरं न कल्प्यमिति लाघवम् । अस्तु तर्हि तृतीयः पक्षः,-'मिदेरन्त्यस्येकश्च द्वयोरपि गुण' इति । मैवम् । स्थानेयोगावयवसम्बन्धरूपस्यार्थद्वयस्य युगपदुच्चारितया षष्ठ्या दुर्लभत्वात् । स्थानेयोगं च विनाऽलोन्त्यविध्यलाभात् । स्थानषष्ठी हि तदुपस्थितौ लिङ्गमिति वक्ष्यते । 'इक'इत्यनेन सहावयवषष्ठीं विनान्वयाऽयोगात् । आवृत्त्यादौ प्रमाणाऽभावाच्च । एतेन 'मिदेरन्त्यस्य वेको वे'ति **चतुर्थ**पक्षोपि प्रत्युक्तः । विकल्पस्याष्टदोषग्रस्तत्वाच्च । अस्तु तर्हि 'तदपवाद'इति **पञ्चमः** पक्षः । तथाहि-गुणविधावङ्गस्येति न स्थानषष्ठी, किन्तु इगपेक्षयावयवषष्ठी । ततश्च लिङ्गाऽभावादलोऽन्त्यपरिभाषाया अनुपस्थितिः । अयमेव च बाधपदार्थः । यदीक्परिभाषा न भवेत्तर्हि स्थानषष्ठीत्वं तन्मूलकाऽलोन्त्यपरिभाषोपस्थितिश्च स्यात् । सत्यान्त्विक्परिभाषायां तदुभयं नेत्येतावतैवापवादत्वव्यवहारः । नहि वस्तुतो वचनेन प्रापितस्य बाधः सम्भवति । शास्त्राऽप्रामाण्यप्रसङ्गात् । अत एव शास्त्रतात्पर्यसङ्कोचो बाध इत्याहुः । एतेन 'द्वन्द्वापवाद एकशेष'इत्यपि व्याख्यातम् । नह्यनुत्पन्नायां विभक्तौ द्वन्द्वस्य प्रसङ्गः । किन्तु यद्येकशेषो न भवेत्तर्हि प्रत्येकं विभक्तिर्द्वन्द्वश्च स्यात्सति त्वेकशेषे तन्नेत्येव तत्त्वम् । अस्मिंश्च पक्षे जुसि गुणोऽजुहवुरित्यत्रेवानेनिजुः पर्यवेविषुरित्यादावपि स्यात् । 'सार्वधातुकार्द्धधातुकयो'रिति गुणो 'भवती'त्यादाविवेहितेत्यत्रापि स्यात् । तथा च वार्तिकम्-'**इग्ग्रहणात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेध**' इति । अत्र ह्रस्वादीति 'ह्रस्वस्य गुणः' 'जसि च' 'ऋतो ङिसर्वनामस्थानयोर्घेर्ङिती'ति गुणचतुष्टयं गृह्यते । ततश्च 'हे अग्ने' 'अग्नयः' 'कर्तरि' 'अग्नये' 'बाभ्रव्य' इत्यत्र यथा ओर्गुणान्तं गुणपञ्चकं भवति । एवं 'हे अग्निचित् अग्निचितः सन्ति' 'सुकृति' 'अग्निचिते' 'सौश्रुत' इत्यत्रापि स्यादिति वार्त्तिकार्थः । यद्यपीह निर्दिष्टस्थानिकत्वात्परिभाषा दुर्लभा । अग्निचिच्छब्दस्य घिसंज्ञाऽभावाच्च 'घेर्ङिती'त्येतन्न प्राप्नोति तथापि वार्त्तिकस्योक्तिसम्भवमित्थं वर्णयन्ति,--'ह्रस्वस्य गुणो' 'जसि चे'ति सूत्रयोस्तावद्ध्रस्वेनेग्विशेष्यते । दीर्घव्यावृत्तिश्च फलम् । अथाऽनियमे नियमकारिणी परिभाषा कथमिहोपतिष्ठतां, नहि ह्रस्वस्य स्थानित्वेऽतिप्रसङ्गोऽस्ति । अकारस्य ह्यकारस्य एव गुणो भविष्यतीति ब्रूयात् । तत्रेदं वक्तव्यं-'ह्रस्वान्तस्याङ्गस्येको गुण' इति सूत्रार्थः स्यात् । ततश्च 'हे इन्द्र' 'हे उपगो' इत्यादावनन्त्यस्यापि स्यात् । 'अग्निचि'दित्यादिकं तु विशेषणव्यवच्छेद्यं स्यात् । तथा च ह्रस्वस्येक इत्यनयोर्न परस्परं विशेषणविशेष्यभावः । किन्त्वनयोरेकमङ्गस्य विशेषणमपरमङ्गस्य विशेष्यमिति । यद्वा-ह्रस्वस्येत्येतदङ्गस्य विशेषणं मा भूदित्यङ्गस्य स्थानषष्ठीत्वं बाधितुमनन्त्यस्यापि गुणं सम्पादयितुमिक्परिभाषोपतिष्ठते । एवमृत ओरित्युभयत्राप्यनन्त्यस्य गुणविधानार्थं परिभाषा स्यादेव । घिसंज्ञा तु वर्णयोरेव न तु तदन्तस्येति पक्षं गृहीत्वा 'घेर्ङिती'त्यस्य 'अग्निचित' इत्यादावतिप्रसङ्गो योज्यः । नह्यस्मिन्पक्षे 'ऋत' 'ओ'रित्याभ्यां 'घेः' किञ्चिद्वैलक्षण्यमस्तीति दिक् । नन्वस्मिन्पक्षे 'पुगन्ते'ति सूत्रस्य नियमार्थत्वादीहितेत्यादौ न दोष इति चेन्न, यदि हि 'सार्वधातुकार्द्धधातुकयोर्लघूपधस्यैवे'ति नियमस्तर्हि ह्रस्वाद्योर्गुणे दोषस्तदवस्थः । यदि तु लघूपधस्य सार्वधातुकार्द्धधातुकयोरेवेति नियमस्तथापीहितेत्यादौ दोष एव । अथावृत्त्या द्विविधोपि नियमस्तर्ह्यनेनिजुरित्यत्र दोषः । नह्येतन्नियमद्वयेनापि वारयितुं

पेक्षिष्यते, एवमिहापि तदपेक्षिष्यामहे 'सार्वधातुकार्धधातुकयो'रिति ॥ [इकोगुण]॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥ ३ ॥

(प्रदीपः) **अथवेति।** अन्यतरार्थं पुनरिति वदताऽवश्यमेवं संबन्धः कर्तव्यो-'यत्र गुणवृद्धिशब्दोच्चारणेन गुणवृद्धी विधीयेते तत्रेक इति उपतिष्ठते' इति। अन्यथा याता वातेत्यादिषु विध्यर्थत्वे संभवति कथमन्यतरार्थं पुनर्वचनं स्यादित्युच्यते। अवश्यकर्तव्यायां चापेक्षायामेकवाक्यतयैवाऽपेक्षास्तु। तेनैकरूप एवास्याऽर्थो, न तु वाक्यभेदेन स्वातन्त्र्यं पारतन्त्र्यं च। **तदपेक्षिष्यामह इति।** अस्य स्वातन्त्र्यं निरसितुमित्यर्थः।

(उद्द्योतः) **अन्यतरार्थमिति।** केवले विधित्वे पुनर्गुणवृद्धिग्रहणवैयर्थ्यमुक्तमेव। **न तु वाक्यभेदेनेति।** एकवाक्यत्वे संभवति तस्याऽयुक्तत्वमिति भावः। एतेने-**ग्यण** इत्यपि व्याख्यातम्। तत्रापि संज्ञाविधाने **इगनु**-वाद्यः। अनुवाद्यत्वं च **ष्यङः संप्रसारण**मित्यादीनां सार्थक्यायावश्यकम्। एवं चैकरूप्यायानुवाद्यत्वमेवाऽस्तु, न तु विधेयत्वं **'वचिस्वपी'**त्यादीनां नियामकत्वापादकमिति बोध्यम्। **तदपेक्षिष्यामह इति।** एवं च यथा विधेः स्थान्याकाङ्क्षा, तथाऽस्यापि स्वसंबन्धिविधेयबोधकशास्त्रापेक्षेति एकवाक्यतैवेति भावः। एवं च स्वातन्त्र्यं दूरापास्तमेव। तदाह-**अस्येति।** आवृत्तौ तु न मानमिति शिवम् ॥ ३ ॥

इति श्री**शिवभट्टसुतसतीगर्भजनागोजीभट्ट**कृते **भाष्यप्रदीपोद्द्योते** प्रथमाध्यायस्य प्रथमे पादे **तृतीयमाह्निकम्**॥

---

इत्युपाध्याय**जैयटपुत्रकैयट**कृते महाभाष्य**प्रदीपे** प्रथमाध्यायस्य प्रथमे पादे **तृतीयमाह्निकम्**॥३॥

## ❀ राजलक्ष्मीः ❀

१ इकोगुणेति सामान्यविधेरनिक्यप्राप्तेरस्य विध्यर्थता सम्भवति॥

## ❀ शब्दकौस्तुभः ❀

शक्यम्, लघूपधत्वात्सार्वधातुकपरत्वाच्च। 'हे बुद्धे''बुद्धयः' पित्र्ये हितः 'पिचव्य' उगवादिभ्यो यत्। "बुद्धये" "बुद्धय" इत्यादावनुपधाभूतेष्वतिप्रसङ्गस्तु दुर्वार एवेति तावद्वार्त्तिकहृदयम्। वस्तुतस्त्वङ्गाक्षिप्तेन प्रत्ययेन श्रूयमाणेन च जुसादिना इको विशेषणात्सकलदोषनिरासे सति तदपवादपक्षोऽपि समर्थयितुं शक्यत एव। 'अङ्गमेव प्रत्ययेन विशेष्यते'इति गृहीत्वा परं भाष्यवार्त्तिकग्रन्थप्रवृत्तिरित्यवधेयम्। अस्तु तर्हि 'पूर्वविप्रतिषेध' इति क्रोष्ट्रीयसम्मतः **षष्ठः** पक्ष इति चेन्न, इक्परिभाषाया निरवकाशत्वात्। नहि परस्परपरिहारेणाऽवकाशलाभेऽसति विप्रतिषेधः। तस्माद्यदि सत्यपि सम्भवे बाधनं भवतीत्याश्रीयते तर्हि येन नाप्राप्तिन्यायादपवादत्वमस्त्येव। यदि त्वसम्भवे बाध्यबाधकभावो,ऽस्ति चेह सम्भवो यदुभयं स्यादित्याश्रीयते तर्हि तच्छेषादिष्वन्यतमपर्यवसानं न तु क्रोष्ट्रीयमतस्यावकाश इति स्थितम्। तस्मात्पदोपस्थापनमिति **सप्तमः** पक्षः सिद्धान्तसम्मतः। तथाहि-'इक' इति षष्ठ्यन्तानुकरणम्, न तु संज्ञिपरम्। 'स्वं रूप'मिति वचनात्। न चाऽशब्दसंज्ञेति निषेधः, षष्ठ्यन्तस्याऽसंज्ञात्वात्। तदयमर्थः-'यत्र ब्रूयाद्गुणो भवति वृद्धिर्भवतीति तत्रेक इति षष्ठ्यन्तमुपतिष्ठते'इति। तस्य च पदैकवाक्यतयाऽन्वयोऽन्तरङ्गोऽलोन्त्यपरिभाषा तु विधिवाक्येष्ववान्तरवाक्यार्थं बुध्वा तदेकवाक्यतया सम्बध्यत इति तदन्वयो बहिरङ्गः। ततश्च 'जुसि चे'त्यादाविकोऽङ्गस्येति सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वादिकाऽङ्गे विशेषिते स्थानषष्ठी न विहितेति भवत्येवालोन्त्यपरिभाषोपस्थितिः। मिदेर्गुण इत्यादौ तु सामानाधिकरण्यान्वयस्याऽसम्भवान्मिदेरिक इति वैयधिकरण्येनाऽन्वये सति स्थानषष्ठीविरहादलोन्त्यपरिभाषा नोपतिष्ठते। न च मिदेरङ्गस्येत्यनयोरवयवषष्ठीत्वेऽपीक इति स्थानषष्ठ्यस्त्येवेति वाच्यं, न ह्येषाऽलोन्त्यपरिभाषोपस्थितावुपयुज्यते। अल्समुदायात्मकस्थानिनः परभूताया एव षष्ठ्यास्तदुपस्थापकत्वात्। इकश्चाऽल्रूपत्वात्। तथा चाऽलोन्त्यपरिभाषा इक्परिभाषानन्तरोपस्थितिका न तु तया सह युगपदुपतिष्ठते, येनाऽविशेषादुभयोर्निवृत्तिः स्यादिति सकलेष्टसिद्धिः। तच्छेषतदपवादपक्षयोरपि दूषणमुद्धर्त्तुं शक्यमित्युक्तमेव। तदिह सप्तपक्षीमध्ये पक्षत्रयं दुष्टमेव। पक्षचतुष्टयन्तु साध्विति स्थितम्।

नन्वेतत्सूत्रमङ्गस्येत्यादिवदधिकारार्थमेव किं न स्यादिति चेन्न, एवं हि सतीको गुणवृद्धी नेति नञा संयुज्यैव पठेत्। 'सर्वस्य द्वे' 'पूर्वत्रासिद्ध'मित्यादिवत्। न ह्युत्तरसूत्रोपस्थितिकत्वाऽविशेषे किं चित्संयुज्य किं चित्तु विभज्य पठितुमुचितम्। वैरूप्ये हेत्वभावात्। 'प्रत्ययः' 'परश्चे'त्यादौ तु पारार्थ्याऽविशेषेऽप्यसंयुज्य निर्देशो विधेयभेदान्न विरुध्यते। नापीदं विधिसूत्रम्। पुनर्गुणवृद्धिग्रहणसामर्थ्यात्। तत्प्रत्याख्यानपक्षेपि विशिष्टानुवृत्तिसामर्थ्यादिति दिक्॥ [इको]

इति **श्रीभट्टोजिदीक्षित**विरचिते **श्रीशब्दकौस्तुभे** प्रथमस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम्॥

## अथ चतुर्थमाह्निकम्।

*न धातुलोप आर्धधातुके ॥१।१।४॥*

**( प्रदीपः ) न धातुलोप आर्धधातुके।** गुणवृद्ध्योः प्राधान्यादयं निषेधो, न तु तद्गुणभावादिक्परिभाषायाः। **दीधीवेवीटा**मिति चाऽसंबद्धं परिभाषाया निषेधे स्यात्। कृत्स्नस्य धातोर्लोपे गुणवृद्धिप्रसङ्गाऽभावादनर्थको निषेधः स्यादिति सामर्थ्याद्धात्वेकदेशलोपोऽत्र धातुलोपोऽभिमतः। अवयवक्रिययाऽपि समुदायस्य व्यपदेशदर्शनात्। यथा'पटो दग्ध' इति। अथवा समुदायशब्दोऽवयवे तद्रूपारोपाद्वर्तते ॥

**(उद्द्योतः) न धातु ॥ प्राधान्यादिति।** प्राधान्यं च संस्कार्यत्वरूपम्। **असंबद्धमिति। अलोन्त्यस्येत्य**नेनापि इक एव प्रसत्त्या परिभाषानिषेधे वैयर्थ्यम्। **कृत्स्नस्येति। दुरीणो लोपश्चे**ति रक्संनियोगेन कृत्स्नधातुलोपोऽस्तीति तदसंभवो नोक्तः। **अथवेति।** आद्यपक्षे अव[1]यवधर्मस्य समुदाये आरोपोऽन्त्ये समुदायधर्मस्य प्रवृत्तिनिमित्तस्य अवयवे आरोपितत्वमिति भेदः ॥

[ धातुग्रहणप्रयोजनजिज्ञासयाक्षेपभाष्यम् ]

**धातुग्रहणं किमर्थम् ? ?**

**(प्रदीपः) धातुग्रहणमिति।** उपसर्जनस्यापि यथा परामर्शस्तथा **'केषां शब्दाना'**मित्यत्र प्रतिपादितम्। विना[2]पि धातुग्रहणेन लोपविशेषणमार्धधातुकग्रहणं विज्ञास्यते। अनुबन्धलोपस्य चाऽनैमित्तिकत्वाल्लवितेति गुणनिषेधो न भविष्यतीति प्रश्नः ॥

**( उद्द्योतः ) परामर्शः**-शब्देन पृथगुपादानम्। **प्रतिपादितमिति।** बुद्ध्या पृथङ्निष्कर्षादिति भावः। **लोपविशेषणमिति।** सूत्रे श्रुतत्वादिति भावः ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**इह मा भूत्-'लूञ्' लविता लवितुम्। 'पूञ्'-पविता पवितुम् ॥**

**( प्रदीपः )** सिद्धान्ते तु गुणवृद्धिविशेषणमार्धधातुकग्रहणमित्यभिप्रायः। अनुबन्धो न धात्वेकदेशः। यस्मादुपदेश एवेत्संज्ञा। प्रयोगे तु 'लू'शब्द एव धातुसंज्ञः। केवलमसौ ञित्कार्यं लभते। लूशब्दस्यैव हि क्रियावाचित्वमिति तस्यैव धातुसंज्ञा युक्ता॥

**( उद्द्योतः ) सिद्धान्ते त्विति।** निषेध्यत्वेन गुणवृद्ध्योः शाब्दप्राधान्याल्लोपस्य तद्विशेष[3]णत्वादिति भावः। न च[4] लोपशब्दोऽधिकरणघञन्तः, 'अदर्शनं लोप' इत्यादौ भावसाधनस्यैव प्रसिद्धत्वात्। गणे सानुबन्धस्य पाठाद्विशिष्टस्यैव धातुत्वं स्यादत आह-**अनुबन्धवित। यस्मादिति।** उपदेशपदाऽभावेऽपि अन्तरङ्गत्वात्सर्वतः पूर्वं सा। धातुसंज्ञा तु प्रत्ययविशेषे विधित्सिते इति भावः। धातुसंज्ञेत्संज्ञयोः समकालत्वेऽपि न क्षतिरित्याह-**लूशब्दस्यैवेति।** अन्वयव्यतिरेकाभ्यां तस्यैव क्रियावाचित्वावगमाद्गणपठितक्रियावाचिनां च धातुत्वविधानादिति भावः।

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**आर्धधातुक इति किमर्थम् ?॥**

[ समाधानभाष्यम् ]

**त्रिधा बद्धो वृषभो रोरवीति ॥**

**( प्रदीपः ) रोरवीतीति।** सत्यार्धधातुग्रहणे शब्दवत्त्वादन्यपदार्थस्य बहुव्रीहिरसन्दिग्धो भवति

---

**❀ राजलक्ष्मीः ❀**

1 **अवयवधर्मस्येति।** क्रियारूपस्येत्यर्थः। २ प्रश्नबीजमाह-**विनापीति।** ३ निषेधविशेषणतयोपक्षीणत्वेन विशेषणान्तरसम्बन्धयोग्यत्वाऽभावादित्यर्थः। ४ **न च**—नहि। अन्वयव्यतिरेकाभ्यां तस्यैव क्रियावाचित्वाऽवगमात्। गणपठितक्रियावाचिनां च धातुत्वविधानादिति भावः।

---

**❀ शब्दकौस्तुभः ❀**

**न धातुलोप आर्द्धधातुके।** धात्वंशलोपनिमित्ते आर्द्धधातुके परे तन्निमित्तिके गुणवृद्धी इको न स्तः। लोलुवः पोपुवः मरीमृजः। लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि कृते 'यङोऽचि चे'ति यङ्लुकि लुङ्निमित्तभूतमचमेवाश्रित्य प्राप्त गुणवृद्धो निषिध्येते। यद्यपि कृत्स्नस्य धातोरपि क चिल्लोपोस्ति। यथा,-'दुरीणो लोपश्च'। दुःशब्दे उपपद इणो धातो रक्प्रत्ययो भवति धातोश्च लोपः। दुःखेन ईयते प्राप्यते 'दूर'मिति, तथाप्येवंविधे विषये गुणवृद्ध्योः प्राप्तिविरहान्निषेधवैयर्थ्यम। अतोऽत्र धातुशब्देन तदेकदेशो लक्ष्यते। धातुलोप इति च यदि षष्ठीतत्पुरुषः स्यात्तदार्द्धधातुकग्रहणं लोपविशेषणं वा गुणवृद्ध्योर्विशेषणं वा तन्त्रावृत्त्यादिभिरुभयविशेषणं वेति त्रयः कल्पाः। तत्राद्ये पक्षे आर्द्धधातुकनिमित्तके धातुलोपे सति यत्किंचिन्निमित्तिके गुणवृद्धी न भवत इति सूत्रार्थः स्यात्। ततश्च प्रपूर्वादिन्धेः क्तप्रत्यये तन्निमित्तके नलोपे च सति 'प्रेद्ध' इत्यत्र प्राप्नुवन्नाद्गुणोपि निषिध्येत। यो हि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने भवति लभतेऽसावन्यतरती व्यपदेशमितीकस्थानिकत्वस्यापि सत्त्वात्। न चैवमपीग्लक्षणत्वविरहान्न निषेधो लैगवायने ओर्गुणस्येवेति वाच्यं, नह्यस्मिन्सूत्रे 'इक' इत्यस्य स्वरूपपरतायां प्रमाणमस्ति। उत्तर-

नान्यथा । क्रमेण सूत्रप्रत्याख्यानायार्धधातुकस्य च लोपविशेषणत्वे धातुग्रहणाऽऽनर्थक्यप्रतिपादनाय प्रत्युदाहरणोपन्यासः ॥

( उ० ) **रोरवीतीति।** यङ्लुगन्तस्य रूपम्। **शब्दवत्वात्**–शब्दोनोपादानात्। **नान्यथेति।** अन्यथाऽन्तरङ्गत्वात्तत्पुरुष एव स्यादित्यर्थः। [ननु पदप्रयोजनचिन्ता वृत्तिकारस्योचिता, न भाष्यकारस्येत्यत आह–**क्रमेणेति।** तत्तत्पदप्रयोजनखण्डनक्रमेणेत्यर्थः। क्रममेवाह–**आर्धधातुकस्य चेति।**]

[ आक्षेपभाष्यम् ]

**किं पुनरिदमार्धधातुकग्रहणं लोपविशेषणम्–'आर्धधातुकनिमित्ते लोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति। आहो स्वित्–गुणवृद्धिविशेषणमार्धधातुकग्रहणम्–'धातुलोपे सत्यार्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत' इति ? ॥**

( प्रदीपः ) **किं पुनरिति।** आर्धधातुकग्रहणं लोपविशेषणं वा, गुणवृद्धिविशेषणं वा, बहुव्रीहिपक्षे तूभयविशेषणं वेति पक्षत्रयसंभवात्प्रश्नः ॥

( उद्योतः ) **लोपविशेषणम्।** श्रुतत्वात्। **गुणादिविशेषणम्।** प्राधान्यात्। तत्र लोपविशेषणत्वे 'आर्धधातुके परे पूर्वस्य धात्वंशस्य लोपे' इति वाच्योऽर्थस्तत्फलितमुक्तम्–भाष्ये **आर्धधातुकनिमित्ते लोप इति।** एवं गुणवृद्धिविशेषणत्वे 'आर्धधातुके परे प्रत्यासत्त्या पूर्वस्य धातोर्ये गुणवृद्धी' इति वाच्योऽर्थः। अनुवादेऽपि **'इको गुणवृद्धी' 'अचश्च'**ेति परिभाषातिरिक्तपरिभाषाणां प्रवृत्तिस्वीकारात्। तत्फलितमुक्तम्–**आर्धधातुकनिमित्ते ये इति। 'प्राप्नुत'**इत्यनेन प्रसक्तस्यैव निषेध इति सूचयति। **बहुव्रीहीति।** उभयानुग्रहायेति भावः। यद्यपि 'धातुलोप' इति समस्तमार्धधातुकविशेषणं तथापि विशेषणशब्दः परिच्छेदकपर इति न दोषः ॥

[ विशेषप्रश्नतत्समाधानभाष्यम् ]

**किं चातः ? ॥ यदि लोपविशेषणम्,–'उपेद्धः, प्रेद्धः' अत्रापि प्राप्नोति[3] ॥ अथ गुणवृद्धिविशेषणं,–'क्नोपयती'त्यत्रापि प्राप्नोति[4] ॥**

[ सिद्धान्तिन उभयत्रेष्टापत्तिसूचनभाष्यम् ]

**यथेच्छसि तथास्तु ॥**

[ तस्यैव प्रथमपक्षाङ्गीकारभाष्यम् ]

**अस्तु लोपविशेषणम् ॥**

[ आद्यपक्षे पूर्वपक्षिणो दोषदर्शनभाष्यम् ]

**कथम्–'उपेद्धः प्रेद्धः' इति ?॥**

( प्रदीपः ) **प्रेद्ध इति।** नन्वाद्गुणोऽनिग्लक्षण इति तन्निषेधो न भविष्यति। परिहारान्तराऽभिधानादेतन्नाऽऽश्रितमित्यदोषः ॥

( उद्योतः ) **नन्वाद्गुण इति।** नन्विक्स्थानिकत्वादयमपीग्लक्षणः। न चाऽत्राप्यनुवृत्तमिक इति स्वरूपपरम्, उत्तरसूत्रे इव स्वरूपपदार्थकत्वव्यवस्थापक'च'शब्दाऽभावादिति चेन्न, **इको गुणवृद्धी इति** संपूर्णमनुवर्त्य 'यत्रेदं तत्र **न धात्वि**त्युपतिष्ठते' इत्यर्थेनाऽस्यापि परिभाषात्वाऽङ्गीकार इति भावात्। यद्वा यत्रेदं तद्विहिते गुणवृद्धी नेत्यर्थः। तद्वक्ष्यति **'यत्रेक्परिभाषा व्याप्रियते तत्रायं निषेधः'** इति 'इक्प्रकरणा'दिति भाष्यप्रतीके। अर्थाऽधिकारेण स्वरूपपरस्यैवेक इत्यस्याऽनुवर्तनाद्वा ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः। 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥**

( प्रदीपः ) **बहिरङ्ग इति।** यदा पूर्वं प्रत्ययः[5], पश्चादुपसर्गयोगस्तदा प्रतिषेधोऽन्तरङ्गो, यदा तु पूर्वमुपसर्गयोगस्तदा[6] गुणोऽन्तरङ्गः। पश्चा-

॥ राजलक्ष्मीः ॥

1 अत्र सार्वधातुकगुणनिषेधापत्तिरित्याशयः। २ अयं पाठः क्वचिन्न। ३ नलोपस्य 'क्त'रूपार्धधातुकनिमित्तत्वेन 'आद्गुण'इति न स्यादित्यर्थः। **प्राप्नोति**–अयं निषेधः प्राप्नोति। ४ णिज्रूपार्धधातुकनिमित्तकस्य पुगन्तेतिगुणस्य प्रतिषेधः प्राप्नोतीत्यर्थः।

५ **प्रत्ययः**–क्तादिप्रत्ययः। ६ 'पश्चात्प्रत्यय'इतिशेषः।

॥ शब्दकौस्तुभः ॥

सूत्रे तु चकार'इति'शब्दार्थकः प्रमाणमित्याहुः। अस्तु वाऽर्थाधिकाराश्रयणबलेनेहापीक इति स्वरूपपरं, तथापि 'भेद्यते'इत्यादौ गुणो न स्यादिति तृतीयपक्षे वक्ष्यमाणो दोष आद्यपक्षद्वयेऽप्यस्त्येवेति बोध्यम्। ननु 'उपेद्धः' 'प्रेद्ध' इत्युदाहरणस्येहोक्तिसम्भव एव नास्ति। तथाहि–'पूर्वं धातुः साधनेन युज्यते' इति मते 'इद्ध'मित्यत्र नलोपोऽन्तरङ्गः, प्रथमोपनतक्तप्रत्ययापेक्षत्वात्। 'पूर्वं धातुरुपसर्गेण'ति दर्शने तु गुणोऽन्तरङ्गः। उभयथापि गुणो भविष्यति। बहिरङ्गस्य गुणस्याऽसिद्धतया निषेधाऽयोगात्। बहिरङ्गस्य निषेधस्याऽसिद्धौ गुणप्रवृत्तेर्निर्बाधत्वाच्च। सत्यम्। 'असिद्धं बहिरङ्गमन्तरङ्गे'इति परिभाषा नेह प्रवर्त्तते, 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्ति'रिति

त्प्रत्ययोत्पत्तौ निषधो बहिरङ्गः। सर्वथा बहिरङ्गस्याऽसिद्धत्वादिष्टसिद्धिः । ननु **नाजानन्तर्य** इति निषेधात् कथं परिभाषा[२]प्रवृत्तिः, य[३]त्र कार्यविधावानन्तर्येणाऽचोराश्रयणं तत्र निषेधादनुपस्थानं परिभाषायाः। यथाऽक्षद्यूरिति । तत्र **हीको यणचीति** वचनादिगचोराश्र[४]यणम् । अस्मिंस्तु प्रतिषेधसूत्रे नास्त्यचोराश्रयणमित्यदोषः॥

**( उद्द्योतः )** यदेति। **'पूर्वं धातुः साधनेने'ति** सिद्धान्तपक्षे इत्यर्थः । **यदात्विति । पूर्वं धातुरुपसर्गेणेति** पक्षे पूर्वमेव जातस्य निषेधाऽयोगादिति भावः । **बहिरङ्गस्यासिद्धत्वादिति**। द्वितीये बहिरङ्गनिमित्त[५]स्यासिद्धत्वाद्विधिप्रवृत्तिकालेऽनिष्पन्नत्वान्निषेधाऽप्राप्त्येष्टसिद्धिरित्यर्थः । एतेन जातस्य बहिरङ्गस्यान्तरङ्गे कर्तव्येऽनेनासिद्धत्वप्रतिपादनेऽपि जातेऽन्तरङ्गे पश्चात्प्राप्तबहिरङ्गस्याऽनेनाऽसिद्धत्वप्रतिपादने मानाऽभावः, फलाऽभात्रो, ज्ञापकविरोधश्चे'त्यपास्तम् । परं त्व[६]यं पक्षः **सुट्कात्पूर्वं** इत्यादिसूत्रेषु भाष्ये दूषित इति भाष्योक्तमेव सम्यक् । **नन्विति** । इयं च **षत्वतुकोरिति** सूत्रेण[७] ज्ञापिता । अन्यथा बहिरङ्गाऽसिद्धत्वेनैव सिद्धे तद्वै[८]यर्थ्यं स्पष्टमेव । **अचोरिति** द्वित्वमविवक्षितम् , धर्मिग्राहकमानस्य तथैव सत्त्वात् । **अनुपस्थानमिति**। अस्यात्रेत्यादिः। **तत्रहीति** । ततश्च यण्यूडसिद्धो नेत्यर्थः । तेना[९]ऽसिद्धपरिभाषाया अनित्यत्वं ज्ञाप्यते, अत एव भाष्ये—विप्रतिषेधसूत्रभिन्नस्थले न क्वाप्येत[१०]दुल्लेखो, यथाऽसिद्धपरिभाषाज्ञापकं विप्रतिषेधसूत्रे उक्तमपि पुनर्वाहऊठ्सूत्रे उक्त'मिति **विवरणकृतः** । **अस्मिन्निति**। निषेधस्य प्राप्तिपूर्वकत्वात्पश्चात्प्रवर्तमाने इत्यर्थः ॥

[ लोपविशेषणे लाघवप्रदर्शनभाष्यम् ]

**यद्येवं, नार्थो धातुग्रहणेन ॥**

[ लोपविशेषणे दोषदर्शिभाष्यम् ]

**इह कस्मान्न भवति-'लूञ्' लविता लवितुम् ? ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**आर्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष[१०] आर्धधातुकनिमित्तो लोपः ॥**

[ सिद्धान्तिन एव द्वितीयपक्षस्वीकारभाष्यम् ]

**अथवा-पुनरस्तुगुणवृद्धिविशेषणम् ॥**

[ दोषतत्प्रतिविधानभाष्यम् ]

**ननु चोक्तम्-क्नोपयतीत्यत्रापि प्राप्नोतीति॥**

**नैष दोषः । निपातनात्सिद्धम् ॥**

**किं निपातनम् ?॥ 'चेले क्नोपे'रिति ॥**

(उ०) क्नूयधातोर्णिचि पुकि लोपो व्योरिति यलोपः।

## ❀ राजलक्ष्मीः ❀

इदमेकदेशिमतम् । १ **प्रत्ययोत्पत्तौ**—तन्निमित्ते नलोपे सति प्रवर्त्तमानो **निषेध** इत्यर्थः । २ अन्तरङ्गपरिभाषेत्यर्थः । ३ समाधत्ते—**यत्रेति**। ४ निमित्तभूताऽच्प्रतियोगिकानन्तर्यानुयोगिनोऽज्रूपस्येक आश्रयणमित्यर्थः । ५ **बहिरङ्गनिमित्तस्येति** । बहिरङ्गनिषेधनिमित्तनलोपनिमित्तकस्येत्यर्थः । ६ **अयंपक्षः**—पूर्वंधातुरुपसर्गेणेतिपक्षः । ७ **सूत्रेणेति** । सूत्रस्थ तुग्ग्रहणेनेत्यर्थः । ८ **तेनेति** । तुग्ग्रहणेनेत्यर्थः । ९ **एतदुल्लेखः**—नाजानन्तर्यपरिभाषोल्लेखः । १० **एषः**—हलन्त्यमिति लोपः ।

## ❀ शब्दकौस्तुभः ❀

निषेधात् । यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्यमाश्रीयते तत्रैषा परिभाषा नेति व्याख्यानादिति **हरदत्तानु**यायिनः । किं त्वस्मिन्पक्ष 'एत ऐ' इति सूत्रे 'पचावेद' 'पचामेद'मित्यादौ एत ऐत्वं कुतो नेत्याशङ्क्य बहिरङ्गत्वेन गुणस्याऽसिद्धत्वादिति हरदत्तेन वक्ष्यमाणं विरुध्येत । तथा च बहिरङ्गस्याऽसिद्धताबलेन 'प्रेद्ध'मित्यादिसिद्धिरिति प्रतिपादनपरमिहत्यं भाष्यमपि विरुध्येत । तस्माद्यत्रोत्तरकालप्रवृत्तिके अच आनन्तर्यं तत्र बहिरङ्गपरिभाषा न स्यादिति कैयटसम्मत एव नाजानन्तर्यं इत्यस्यार्थः साधुः । 'पचावेद'मित्यादौ हि पूर्वं गुणप्रवृत्तिः । तत्र चाऽजानन्तर्याश्रयणेपि गुणोत्तरप्रवृत्तिके 'एत ऐ' इत्यत्र तदनाश्रयणाद्युक्त एव बहिरङ्गतयोद्धारः । 'उपेद्धः' 'प्रेद्ध इ'त्यादौ तु गुणं प्रापय्य निषेधः कार्य इत्युत्तरकालप्रवृत्तिको निषेधः । तत्राऽजानन्तर्याश्रयणाभावाद्बहिरङ्गपरिभाषया सिद्धमेवैतत् । अतोऽत्रत्यं भाष्यमपि सङ्गच्छते । ननु 'षत्वतुकोरसिद्ध' इति सूत्र एषा परिभाषा ज्ञापयिष्यते । तत्र च कोऽसिचत्कोऽस्यादित्यादौ प्रथमप्रवृत्तिके एङः पदान्तादित्यस्मिन्नजानन्तर्यं, न तूत्तरकालप्रवृत्ते षत्वेपीति कथं कैयटमतं समर्थनीयम् । तस्माद्यत्राऽन्तरङ्गे बहिरङ्गे वा अचोरानन्तर्यमिति हरदत्तोक्तरीतिरेव शरणीकर्त्तव्येति चेन्न, कैयटमते 'अचो'रिति द्वित्वस्याऽविवक्षया सर्वसामञ्जस्यात् । अस्ति ह्युत्तरकालप्रवृत्तिके षत्वे अच आनन्तर्याश्रयणम्—'इणः परस्य सस्ये'त्युक्तेः । एवं च प्रथमपक्षे 'प्रेद्ध' इत्यादौ दोषाऽभावेपि 'भेद्यत'इत्याद्यसिद्धिरेव दूषणमिति दिक् । द्वितीयपक्षे तु यत्किञ्चिन्निमित्तके धातुलोपे सत्यार्द्धधातुकनिमित्ते गुणवृद्धी न स्त इति सूत्रार्थः स्यात् । ततश्च 'क्नूयी शब्दे'इत्यस्माण्णिचि पुकि यलोपे कृते पुगन्तलक्षणो गुणो निषिध्येत । तथा च 'क्नोपयती'ति न सिध्येत् । यदि तु 'चेले क्नोपे'रिति निर्देशाद्गुणस्तर्हीहाऽपि भेद्यतइत्यस्याऽसिद्धिरेव दोषः । तृतीयपक्षे त्वार्द्धधातुकनिमित्तके धातु-

( भाष्यम् ) परिगणनं कर्तव्यम्—

[-परिगणने दोषदर्शिपूर्वपक्षिवार्तिकम् ]

॥ * ॥ यङ्यक्क्यवलोपे प्रतिषेधः ॥ * ॥

( भाष्यम् ) यङ्यक्क्यवलोपे प्रतिषेधो वक्तव्यः ॥ यङ्-बेभिदिता मरीमृजः ॥ यक्-कुसुभिता मगधकः ॥ क्य-समिधिता दृषदकः ॥ वलोपे-जीरदानुः ॥

( प्रदीपः ) यङ्यक्क्यवलोप इति । 'व' इत्यत्राऽकारोऽपि विवक्षितः । तेन धातुपाठे योऽकारान्तः पठितस्तस्य ग्रहणम् । अन्यथा स्रिविः कथं निर्वार्येत । बेभिदितेति । बेभिद्यशब्दात्तृच्, इट् । 'यस्य हल'इति यलोपः । मरीमृज इति । 'यङोऽचि चे'ति यङो लुक् । कुसुभमगधशब्दौ कण्ड्वादिगणपठितौ धातू, ताभ्यां यक् । ण्वुल्तृचौ । 'यस्य हल' इति यलोपः । समिद्दृषच्छब्दाभ्यां क्यजन्ताभ्यां प्रत्ययौ ण्वुल्तृचौ । 'क्यस्य विभाषे'ति यलोपः ॥

( उद्द्योतः ) वाक्यकारः सूत्रेऽव्याप्त्यतिव्याप्तिपरिहाराय परिगणनमाह । भाष्ये-परिगणनमिति । अत्र 'यस्य हल' इति लोपः समुदायलोप इति मत्वा यक्क्ययोः परिगणनं, 'बेभिदिते'त्युदाहरणं च बोध्यम् ।

( भाष्यम् ) किं प्रयोजनम् ? ॥

[ परिगणनप्रयोजनवार्तिकम् ]

॥*॥नुम्लोपस्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम् ।*॥

( भाष्यम् ) नुम्लोपे स्रिव्यनुबन्धलोपे च प्रतिषेधो मा भूदिति ॥ नुम्लोपे-अभाजि, रागः, उपबर्हणम् ॥ स्रिवेः-आस्रेमाणम् । अनुबन्धलोपे-लूञ् लविता लवितुम् ॥

( प्रदीपः ) नुम्लोप इति । 'नु'मिति नकारस्य पूर्वाचार्यसंज्ञा । उपबर्हणमिति । 'बृंहि वृद्धौ' इदित्त्वान्नुम् । 'बृंहेरच्यनिटी'ति वार्तिकेन नलोपः । आस्रेमाणमिति । अस्रेमाणमित्यपि वेदे पठ्यते । तत्र नञ्पूर्वात् स्रिवेर्मनिन्-प्रत्ययो वकारलोपः । ऊडादेशश्छान्दसत्वाद्वकारस्य न भवति । परिगणने सति धातुग्रहणं न कर्तव्यं भवतीत्यनुबन्धलोपः प्रयोजनत्वेन पठितः ।

( उद्द्योतः ) ननु भञ्जिरञ्ज्योरौपदेशिकनस्यैव 'भञ्जेश्च चिणि' 'रञ्जेश्च घञि चे'त्यादिना लोप इति 'नुम्लोप' सूत्रं कार्यमित्याशयः । २ जीवे रदानुः । 'लोपोव्यो'रिति वलोपः । ३ जोवधातुः । ४ 'निवार्यते'इति पाठान्तरम् । ५ 'ये'ति समुदायलोपः ।

❀ राजलक्ष्मीः ❀

१ परिगणनं-लोपप्रतियोगिनां परिगणनम् । तथा च धातुग्रहणमपनीय 'न यङ्यक्क्यवलोप आर्धधातुके' इति

❀ शब्दकौस्तुभः ❀

लोपे सत्यार्द्धधातुकनिमित्ते गुणवृद्धी न स्त इति सूत्रार्थः स्यात् । तत्र तन्त्रावृत्त्याद्याश्रयणप्रयुक्तं गौरवं तावत्स्पष्टमेव । लोपेन सह गुणवृद्ध्योरेकनिमित्तकत्वं च न लभ्येत । ततश्च भेद्यतइत्यत्र भिदेर्ण्यन्तात्कर्मणि यकि भिद् इ य इति स्थिते नित्यत्वाण्णिलोपे कृते प्रत्ययलक्षणेन णिचमाश्रित्य क्रियमाणोऽपि गुणो निषिध्येत । न च णिलोपात्प्रागेवान्तरङ्गत्वाद्गुणोऽस्त्विति वाच्यम्, विभज्यान्वाख्यानपक्षे तदसम्भवात् । 'उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते'इति न्यायाच्च । अन्यथा 'दधती'त्यादावन्तरङ्गत्वात् 'झोऽन्त' इत्यन्तादेशः प्रवर्त्तेत । न च श्लौ द्वित्वे च कृतेऽन्तादेशस्य स्थानिवद्भावेनाऽदभ्यस्तादित्यस्य प्रवृत्तिरस्त्विति वाच्यम्, अल्विधौ स्थानिवद्भावाऽसंभवात् । किञ्च-'समर्थानां प्रथमाद्वे'ति सूत्रे'ऽकृतव्यूहाः पाणिनीयाः' कृतमपि शास्त्रं निवर्त्तयन्तीति ज्ञापयितुं समर्थग्रहणमिति वक्ष्यते । द्वे एते परिभाषे समानफले इति च तत्रैव स्फुटीकरिष्यते । तथा चेहापि पूर्वं गुणो न क्रियते कृतोऽपि वा निवर्त्तते, जग्मुष इत्यादाविडादिवत् । तस्माद्धातोर्लोपो यस्मिन्निति बहुव्रीहिरेव साधुः । एवं हि सति लोपस्य गुणवृद्ध्योश्चैकनिमित्तकत्वं लभ्यतइति न कश्चित्पूर्वोक्तदोषः । स्यादेतत्-आरभ्यमाणेऽप्यस्मिन्सूत्रे 'लोलुव'इत्यादौ गुणो दुर्वारः । तथाहि-इह सूत्रे 'क्ङिति चे'ति सूत्रे च निषेध्यं किमित्याकाङ्क्षायां पूर्वत्र निर्णीता इक्पदोपस्थितिरेव सम्बध्येत । धात्वंशलोपनिमित्ते आर्द्धधातुके इक्पदं नोपतिष्ठते । ततश्च बेभिदः मरीमृजो भिन्नो मृष्ट इत्यादौ व्यञ्जनस्य गुणवृद्धिप्राप्तिः परमेतस्य प्रघट्टकस्य फलं स्यात् । लोलुवादौ तु स्यादेव गुणः । न च परिभाषां प्रति शेषिभूततयाऽर्थतः प्रधानयोर्गुणवृद्ध्योरेव निषेधोऽस्त्विति वाच्यम् । शाब्दबोधे शाब्दप्राधान्यस्यैवान्वयनियामकताया उचितत्वात् । नहि राजपुरुषमानयेत्यादावर्थतः प्रधानभूतोपि राजा आनयनेनाऽन्वेति अपि तु पुरुष एव । प्रकृते च शाब्दं प्राधान्यं वाक्यार्थभूतायाः पदोपस्थितेरेव । कारकविशिष्टा क्रिया वाक्यार्थं इति सिद्धान्तात् । आह

इत्यसङ्गतमत आह–नुमिति। नन्वनिदिद्गृहिणाइदं सिद्धमत आह–**बृहि वृद्धाविति** । स नास्त्येवेति पूर्वपक्ष्याशयः । **ऊडादेश इति** । 'ज्वरत्वरस्रिवी'त्यनेन ।

[ तटस्थाक्षेपभाष्यम् ]

**यदि परिगणनं क्रियते,'स्यदः''प्रश्रथः' 'हिमश्रथः' इत्यत्रापि प्राप्नोति ॥**

( उद्द्योतः ) भाष्ये इत्यत्रापि **प्राप्नोतीति** । 'वृद्धि'रिति शेषः । **न प्राप्नोतीति** पाठे–निषेध इति शेषः ।

[ पूर्वपक्षिणस्तत्समाधानभाष्यम् ]

**वक्ष्यत्येतत्–'निपातनात्स्यदादिषु' इति॥**

( उद्द्योतः ) **निपातनादिति** । 'स्यदो जवे' 'अवोदैधौद्मप्रश्रथहिमश्रथाः' इति निपातनम् । अस्य नलोपमात्रफलकत्वे नलोपविधानेनैव सिद्धे निपातनवैयर्थ्यापत्तिरिति भावः ॥

[ तटस्थाक्षेपतत्समाधानादिभाष्यम् ]

**तत्तर्हि परिगणनं कर्तव्यम् ? ॥**

**न कर्तव्यम् ॥ नुंम्लोपे[2] कस्मान्न भवति ?॥**

[ सिद्धान्तिनः समाधानवार्तिकम् ]

*॥*॥ इक्प्रकरणान्नुम्लोपे वृद्धिः ॥*॥*

( भाष्यम् ) **इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैषेग्लक्षणा वृद्धिः ।**

( प्रदीपः ) **इक्प्रकरणादिति** । तेन यत्रेक्परिभाषास्थान्यन्तरनिवृत्तये व्याप्रियते तत्राऽयं निषेधः ॥

( उद्द्योतः ) **तेनेति** । अन्यथा 'ओर्गुण' इत्यादावपि परिभाषाप्रवृत्तौ तस्यापीग्लक्षणत्वे 'लैगवायन' इत्यादौ निषेधः स्यादिति भावः ॥ **यत्रेक्परिभाषेति** । न चेक इत्यनुवर्त्य 'इको न ते' इत्येव व्याख्यानमुचितमिति वाच्यम्, 'मरीमृजः' 'सरीसृप'इत्यादाविकः प्रत्ययाऽव्यवहितपूर्वत्वाऽभावान्निषेधाऽनापत्तेः । तदाह भाष्ये–**इग्लक्षणयोरिति** । यथैतदर्थलाभस्तथोक्तम् । इक्परिभाषालक्षणयोरिति तदर्थः ॥

[ पूर्वपक्षिणो दोषदर्शनभाष्यम् ]

**यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः–'स्यदः', 'प्रश्रथः' 'हिमश्रथः' इत्यत्र न[3] प्राप्नोति। इह च प्राप्नोति[4]–'अवोदः','एधः', 'ओद्मः' इति ॥**

[ सिद्धान्तिनः समाधानवार्तिकम् ]

*॥*॥ निपातनात्स्यदादिषु ॥*॥*

( भाष्यम् ) **निपातनात्स्यदादिषु प्रतिषेधो[5] भविष्यति, न च[6] भविष्यति ॥**

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, त्रिव्यनुबन्धलोपे कथम् ? ॥**

[ सिद्धान्तिनः समाधानवार्तिकम् ]

*॥*॥ प्रत्ययाश्रयत्वादन्यत्र सिद्धम् ॥*॥*

( भाष्यम् ) **आर्धधातुकनिमित्ते लोपे प्रतिषेधः। न चैष[7] आर्धधातुकनिमित्तोलोपः॥**

---

( **राज०** ) १ परिगणनानन्तर्भूतत्वादित्याशयः । **२ नुम्लोपे**–नलोपे । **नेति**। प्रतिषेधःकस्मान्नेत्यर्थः । **३ न प्राप्नोति**–प्रतिषेधो न प्राप्नोति । ४ **प्राप्नोति**–प्रतिषेधः प्राप्नोति । ५ **प्रतिषेधः**–वृद्धिप्रतिषेधः । ६ **अवोदा**दिषु प्रतिषेधो नैव भविष्यतीत्यर्थः । ७ **एषः**–लोपो व्योरिति । 'किन्तु वल्मात्रनिमित्तकः' इतिशेषः ।

---

❀ शब्दकौस्तुभः ❀

च–'**साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् । कर्मप्रधानं गुणवदेकार्थं वाक्यमुच्यते**' इति। किं च सिद्धान्ते प्रसज्यप्रतिषेधे सर्वत्र क्रिययैव सह नञोऽन्वयो न तु नामार्थेन । तदुक्तम्–'प्रसज्यप्रतिषेधोयं क्रियया सह यत्र नञ्' इति । अत एव पुरुषवचनयोरसङ्करः। अन्यथा हि घटो नास्ति त्वं नासि अहं नास्मीति पुरुषव्यवस्था न स्यात् । घटाभावस्त्वदभावो मदभावश्चास्तीतिवत्सर्वत्र प्रथमपुरुषापत्तेः । न हि परमते 'त्वं नासि' 'त्वदभावोऽस्ती'त्यनयोरर्थे कश्चिद्विशेषः । नञर्थं प्रति प्रथमान्तपदोपस्थापितस्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वेन संसर्गेण प्रकारताभ्युपगमेऽपि युष्मत्सामानाधिकरण्यविरहस्याऽविशिष्टत्वात् । एवं 'वायौ रूपाणामभावोऽस्ती'तिवद्रूपाणि न सन्तीत्यत्राप्यस्तीत्येकवचनं स्यादित्यन्यत्र विस्तरः। एवं 'कारकविभक्तेरपि क्रियायोगे सत्येव साधुत्वं न त्वन्यथापो'ति कारक इति सूत्रे वक्ष्यमाणत्वाद्भूतले घटो नास्तीत्यादावधिकरणत्वं क्रियान्वय्येव न तु नञर्थान्वयि । तथा च सकलकारकविशिष्टक्रियायां नञर्थान्वयः । 'नञो द्योतकते'ति निष्कृष्टपक्षे तु क्रियापदस्यैव तद्विरहपरतेति सिद्धान्तः । उभयथापीह गुणवृद्ध्योः प्रतिषेधो दुर्लभ एवेति । अत्राहुः–क्रिययैव सह विधेरिव निषेधस्याऽन्वयः शाब्द इति सत्यमेव, किन्तु क्रियैव केति संशये त्वदुक्तरीत्या सन्निहितापीक्पदोपस्थितिरिह न सम्बध्यते । तथाहि सति 'दीधीवेवीटा'मिति सूत्रस्य व्यर्थतापत्तेः। न हि तत्रेक्परिभाषालोन्त्यपरिभाषयोः फले विशेषोऽस्ति । एवं स्थितेऽस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति प्रातिपदिकार्थसूत्रे वक्ष्यमाणरीत्या 'भवत' इत्यस्योपस्थितस्य 'गुण-

( प्रदीपः ) प्रत्ययाश्रयत्वादिति । लोपविशेषणमार्धधातुकग्रहणमित्यर्थः ॥

( उद्द्योतः ) लोपेति । 'प्रत्ययाश्रयत्वा'दिति भाष्यस्य लोपे आर्धधातुकप्रत्ययनिमित्तकत्वाश्रयणादित्यर्थ इति भावः ॥

[ पूर्वपक्षिणः शङ्काभाष्यम् ]

यद्यार्धधातुकनिमित्ते लोपे प्रतिषेधः- 'जीरऽदानुः'-अत्र[1] न प्राप्नोति ॥

( प्रदीपः ) जीरदानुरिति । वर्णनिमित्तोऽत्र वकारलोपो, न प्रत्ययनिमित्तः ॥

( उद्द्योतः ) न प्रत्ययेति । प्रत्ययस्याऽश्रुतत्वादनाक्षिप्तत्वाच्चेति भावः ॥

[ सिद्धान्तिनः समाधानवार्तिकम् ]

*॥*॥ रकि ज्यः संप्रसारणम् ॥*॥*

( भाष्यम् ) नैतज्जीवे रूपम्, रक्येतज्ज्यः संप्रसारणं भवति ॥

( प्रदीपः ) रकि ज्य इति । एवं च 'जीरे'त्यवग्रहः सिध्यति । बहुव्रीहित्वाच्च जीरदानुशब्दे रेफाऽकार उदात्तः ॥

( उद्द्योतः ) अवश्यं जीरदानुशब्दस्यैवमेव व्युत्पत्तिः कार्येत्याह-एवं चेति । अवान्तरपदत्वे सत्येवाऽवग्रह इत्युत्सर्गादिति भावः । ननु रदानुप्रत्यये रेफाऽकार उदात्तः, समासे त्वन्तोदात्तः स्यादत आह-बह्विति । जीरस्य प्रत्ययस्वरेणाऽन्तोदात्तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणेत्यर्थः । जीवेर्विचि तु गुणनिषेधो भवत्येव । एतेनार्धधातुकत्वेन यत्र लोपे निमित्तता तत्रैव लोपे निषेध इत्यपास्तम् । वार्तिकविरोधात्[2] । 'यँङोऽचि चे'त्यत्रापि[3] तत्त्वेनाऽनिमित्तत्वाल्लोलुव इत्याद्यसिद्ध्यापत्तेश्च । धिव्यादिभ्यस्तु विजभाव एव ॥

[ एकदेशिभाष्यम् ]

यावता[4] चेदानीं रकि, जीवेरपि सिद्धं भवति ॥

( उद्द्योतः ) भाष्ये-यावता चेदानीमिति । क्त्विन गुणनिषेधादिति भावः । अत्र वलोपो 'लोपो व्यो'-रित्यनेन । इदं च यथाश्रुतसूत्रमते । वलोपप्रत्याख्याने तु 'रकि ज्य' इत्येव शरणम् ॥

[ तटस्थप्रश्नभाष्यम् ]

कथमुपबर्हणम् ?॥

[ सिद्धान्तिसमाधानभाष्यम् ]

बृहिः प्रकृत्यन्तरम् ॥

( प्रदीपः ) बृहिरिति । 'बृह बृहि वृद्धा'-विति पाठात् ॥

[ तथाधातुपाठमजानतःशङ्काभाष्यम् ]

कथं ज्ञायते-'बृहिः प्रकृत्यन्तर'मिति?॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

'अची'ति हि लोपँ उच्यते, अनजादावपि दृश्यते-निवृह्यते । अनिटीति चोच्यते, इडादावपि दृश्यते-निबर्हिता निबर्हितुमिति । अजादावपि न दृश्यते-बृंहयति बृंहकः ॥ तस्मान्नार्थः परिगणनेन॥

[ पूर्वपक्षिण आशङ्काभाष्यम् ]

यदि परिगणनं न क्रियते 'भेद्यते, छेद्यते'-अत्राऽपि प्राप्नोति ॥

( प्रदीपः ) भेद्यत इति । गुणो णिलोपश्चार्धधातुकनिमित्त इति पक्षद्वयेऽपि दोषः । अपवादविषयपरिहाराच्चान्तरङ्गोऽपि गुणोऽत्र न प्रवर्तेत इत्युपन्यासः ॥

( उद्द्योतः ) पक्षद्वयेऽपीति । तत्रोणोभयविशेषणत्वपक्षेऽपीत्यपि बोध्यम् । गुणो-ण्याश्रयः । णिलोपो-यगाश्रयः । अपवादेति । 'प्रकल्प्य वाऽपवादविषय'मिति परिभाषयेति भावः । एतेन गुणप्रतिषेधौ यत्र समानकालौ तत्र चरितार्थौ निषेधो नाऽन्तरङ्गं गुणं बाधितुं क्षमत इत्यपास्तम् । न च भेद्यते इत्यत्राऽचः परस्मिन्निति णिलोपस्य स्थानिवत्त्वेन तत्राऽभावातिदेशस्य च सत्त्वेन स्थानिनि णिचि

❀ राजलक्ष्मीः ❀

१ गुणप्रतिषेधो न प्राप्नोतीत्यर्थः । २ 'वलोपे प्रतिषेध' इति वार्तिकविरोधादित्यर्थः। ३ ननु वार्तिकं खण्डितमेवेत्यत आह-यङ इति । ४ यावता-यतः । इदानीं-परिगणनप्रत्याख्यानसमये । ५ रकि-ज्याधातो रकि । 'जीर'इति सिद्ध्यति, तर्हि जीवेरपि रकि जीर इति सिद्धं भवतीत्यर्थः। ६ अतोऽस्या एकदेश्युक्तितेत्याशयः। ७ 'बृंहेरच्यनिटी'त्यनेन वार्तिकेनेत्यर्थः । ८ गुणनिषेधः प्राप्नोतीत्यर्थः ॥

❀ शब्दकौस्तुभः ❀

वृद्धो'इत्यादिभिरन्वितस्य निषेधान्वये सति गुणवृद्ध्योरभावः फलितो भवतीत्येतावता गुणवृद्ध्योर्निषेध इत्युच्यते । यथा ऽऽधाराग्निहोत्राधिकरणे प्रतीतितः सर्वोपि विशिष्टविधि-

सति अभवतो निषेधस्य लोपेऽप्यभावातिदेशान्न दोष इति वाच्यम्; स्थानिवद्भावाश्रयणे सूत्रप्रत्याख्यानमेवेति, तदनाश्रयणेन सूत्रवत्तदनाश्रयणेनैवाऽयं दोष इत्याशयात ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**नैष दोषः । 'धातुलोप' इति नैवं विज्ञायते-'धातोर्लोपो धातुलोपो, धातुलोपे' इति ॥ कथं तर्हि ? ॥ धातोर्लोपो यस्मिंस्तदिदं धातुलोपं, धातुलोपे' इति । तस्मादिग्लक्षणा वृत्ति॒ः ॥**

( प्रदीपः ) **कथं तर्हीति ।** बहुव्रीहौ सत्येकार्धधातुकनिमित्तत्वं लोपस्य गुणवृद्ध्योश्चाश्रितमिति 'भेद्यते' इत्यादौ भिन्ननिमित्तत्वाद्गुणो न निषिध्यते ।

(उद्द्योतः) भाष्ये **तस्मादिग्लक्षणा वृद्धिरिति ।** 'प्रतिषेध्ये'ति शेषः । अत एवाऽभाजीत्यादिसिद्धिरिति भावः ॥

—***—

[ अथात्र पूर्वपक्षिणोऽव्याप्तिदानभाष्यम् ]

**यदि तर्हीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः,-पापचकः' 'पापठकः' 'मगधकः' 'दृषदकः'-अत्र न[२] प्राप्नोति ॥ [नैष दोषः] ॥**

[ सिद्धान्तिनः समाधानवार्तिकम् ]

||*|| *अल्लोपस्य स्थानिवत्त्वात्* ||*||

( भाष्यम् ) **अकारलोपे कृते तस्य स्थानिवत्त्वाद्गुणवृद्धी न भविष्यतः ॥**

( उद्द्योतः ) **अकारलोप इति ।** 'अतो लोप' इत्यनेन । यङ्लुगन्ताण्ण्वुलि तु सूत्रमतेऽपि निषेधो न, आर्धधातुकनिमित्तलोपाऽभावात् ॥

—***—

[ सूत्रप्रत्याख्यानपरसिद्धान्तिवार्तिकम् ]

||*|| *अनारम्भो वा* ||*||

**अनारम्भो वा पुनरस्य योगस्य न्याय्यः ॥**

[ आरम्भवादिन आक्षेपभाष्यम् ]

**कथं 'बेभिदिता' 'मरीमृजकः' 'कुषुमिता' 'समिधिते'ति ? ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**अत्राऽप्यकारलोपे कृते तस्य स्थानिवद्भावाद्गुणवृद्धी न भविष्यतः ॥**

( उद्द्योतः ) **मरीमृजक इति ।** अत्राऽल्लोपस्य

---

**❀ राजलक्ष्मीः ❀**

१ अतएव-इग्लक्षणवृद्धेरेव प्रतिषेधाऽङ्गीकारादेव । अथवा नलोपोपधावृद्ध्योरेकनिमित्तत्वात्प्रतिषेधो दुर्वार इत्याशयः। २ 'अत उपधाया' इति वृद्धेरिग्लक्षणत्वाऽभावान्निषेधो

---

**❀ शब्दकौस्तुभः ❀**

रेव, तात्पर्यतस्तु कश्चिद्गुणविधिरिति सिद्धान्तितं, तद्वन्निषेधेऽपि बोध्यम् । न्यायसाम्यात् । अत एव हि विधिनिषेधयोर्वाक्यार्थगोचरतेत्यभियुक्ताः । तस्माल्लोलुवः पोपुवो मरीमृज इत्युदाहरणं सिद्धम् । प्रत्युदाहरणं तूच्यते-धातुलोप इति किम् ? । आर्द्धधातुके विधिनिषेधाभ्यां षोडशिग्रहणाग्रहणयोरिव गुणवृद्ध्योर्विकल्पो मा भूत् । आर्द्धधातुक इति किम्?, 'तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः' 'मुर्छा मोहसमुच्छ्राययोः' एभ्यो यङ्लुगन्तेभ्यस्तिबादौ सार्वधातुके पिति परे तोतोर्ति मोमोर्त्तीत्यादौ निषेधो मा भूत् । राल्लोप इति च्छ्वोर्लोपस्य गुणस्य चैकनिमित्तकत्वात् । इदं च राल्लोपे क्ङिद्ग्रहणाननुवृत्तिपक्षमाश्रित्योक्तम् । तदनुवृत्तिपक्षे तु तोतोर्मीत्याद्युत्तमपुरुषैकवचन उदाहरणं बोध्यम् । अनुनासिकादिप्रत्ययत्वेन तत्र राल्लोपप्रवृत्तेः । ननु 'तोतोर्ती'त्यादि प्रागुक्तमप्युदाहरणमस्तु, राल्लोपस्याऽप्रवृत्तावपि लोपो व्योरिति लोपादिति चेन्न, तस्य वर्णमात्रनिमित्तकतया गुणेन सहैकनिमित्तकत्वाऽभावात् । न हि तत्र प्रत्ययग्रहणन्तदाक्षेपकं वा किञ्चिदस्ति । अत एव गौधेरादिषु प्रत्ययपरतां विनापि यलोप इति दिक् ।

इक इति किम् ? । अभाजि रागः । 'भञ्जेश्च चिणि' 'घञि च भावकरणयो'रित्युपधालोपे कृते वृद्धिर्यथा स्यात् । कथं तर्हि 'पापचक' इत्यत्र वृद्धिप्रतिषेध इति चेत् । शृणु । पापच्यतेर्ण्वुलि 'यस्य हल' इत्यत्राह्यर्यादमव्यीदित्यादिवारणाय यस्येति सङ्घातग्रहणेप्यादेः परस्येति हल्मात्रलोपे कृतेऽतो लोप इति पृथगल्लोपे तस्य स्थानिवद्भावेन पापचकादौ न वृद्धिः । न त्विह नधातुलोप इति सूत्रस्य कश्चिदपि व्यापारः । यङ्लुगन्ताण्ण्वुलि 'पापाचक'इति भवत्येव, वृद्धिर्नोनावेतिवत् । एतेन 'न धातुलोप इत्यत्रेक इत्यनुवृत्तेः पापाचक इतिवन्नधातुसूत्रे बेभिदिता मरीमृजिते'त्युदाहरंश्च **कौमुदीकारः** परास्तः । पृथगल्लोपस्य न्याय्यत्वे भाष्यादिसम्मतत्वे च सति वृद्धेरसम्भवात् । अत एव वृत्तिकारादयोप्यत्र सूत्रेऽच्प्रत्ययान्तान्येव लोलुवादीन्युदाजहुः । भिदिमृज्योस्तु यदि यङ्लुक् तर्हि तस्याऽनैमित्तिकत्वात् गुणवृद्धी स्त एव बेभेदिता मरीमार्जितेति यथा । यदि तु 'यस्य हल' इत्यवयवलोपस्तर्हि स्थानिवद्भावादेव गुणाद्यप्रसङ्ग इत्युभयथापि नैतत्सूत्रोदाहरणत्वमित्यवधेयम् । भाष्यकारस्तु-यस्येति लोप इवाचि लुक्यपि पृथगल्लोपमाश्रित्यैतत्सूत्रं प्रत्याचख्यौ । न च येन

स्थानिवत्त्वे 'विङत्यजादौ वेष्यत' इति विकल्पो न, व्यवस्थितविभाषाश्रयणात् ॥

[ आरम्भवादितटस्थयोरुक्तिप्रत्युक्तिभाष्यम् ]

**यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः ॥ क्व च स्थानिवद्भावो नास्ति ? ॥ यत्र हलचोरादेशः–'लोलुवः' 'पोपुवः' 'मरीमृजः' 'सरीसृप' इति ॥**

**( प्रदीपः ) यत्र हलचोरादेश इति ।** लुका कृत्स्नो यङ् लुप्यत इत्याशयः ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद्गुणवृद्धी न भविष्यतः ॥**

**( प्रदीपः ) अत्रापीति ।** कृतेऽप्यकारलोपे 'एकदेशविकृतमनन्यवद्भवती'ति यकारः प्रत्ययसंज्ञो भवत्येवेति भावः ॥

**( उद्द्योतः )** नन्वेवं लुक्शास्त्रं व्यर्थं स्यादत आह–**कृतेपीति** । अवशिष्टे तच्चरितार्थमिति भावः ।

[ आरम्भवादिनो निराकरणभाष्यम् ]

**लुकि कृते न प्राप्नोति ॥**

**( उद्द्योतः )** भाष्ये **लुकि कृते इति** । अनवकाशत्वादन्तरङ्गानपीति न्यायाच्च लुकि कृतेऽतो लोपो न प्राप्नोतीत्यर्थः ।

[ प्रत्याख्यातुः समाधानभाष्यम् ]

**इदमिह संप्रधार्यम्–'लुक् क्रियतामल्लोप' इति, किमत्र कर्तव्यम् ? ॥ परत्वादल्लोपः ॥**

**(उद्द्योतः)** इतर आशयानभिज्ञ आह–**परत्वादिति** ।

[ आरम्भवादिनः समाधानबाधकभाष्यम् ]

**नित्यो लुक् । कृतेऽप्यल्लोपे प्राप्नोति, अकृतेऽपि प्राप्नोति ॥**

**( प्रदीपः ) नित्यो लुगिति ।** लुक्शास्त्रप्रवृत्तिर्नित्या ।

**( उद्द्योतः )** ननु यस्य लोपः कृतस्तस्य लुगप्राप्तेराह–**लुक्शास्त्रेति** ॥

[ सिद्धान्तिनः समाधानसाधकभाष्यम् ]

**लुगप्यनित्यः ॥ कथम् ?॥ अन्यस्य कृतेऽल्लोपे प्राप्नोति, अन्यस्याऽकृते । 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति' ।**

[ आरम्भवादिनः समाधानबाधकभाष्यम् ]

**अनवकाशस्तर्हि लुक् ।**

**( प्रदीपः ) अनवकाश इति ।** नाऽप्राप्तेऽल्लोपे लुगारम्भात् ॥

---

**❀ राजलक्ष्मीः ❀**

न प्राप्नोतीत्याशयः । **१ इत्याशय इति ।** लोलुयादिभ्यो यङन्तेभ्यः पचाद्यचि **'यङोऽचि चे'**त्यनेन सस्वरस्य यङः समुदायस्य लुको विवक्षितत्वादिति भावः ॥

---

**❀ शब्दकौस्तुभः ❀**

नाप्राप्तिन्यायेनाऽचि यङो लुगतो लोपं बाधेतेति वाच्यम् । 'यस्य हल' इत्यत्र 'यस्ये'ति योगं विभज्यातो लोप इति चानुवर्त्य यशब्दस्याऽतो लोपविधानेन लुग्बाधनात् । अवशिष्टं व्यञ्जनमात्रं लुकोऽवकाशः । ततश्चाऽल्लोपस्य स्थानिवत्त्वादेव 'बेभिदिता' 'मरीमृजिता' 'पापचक' इत्यादिवल्लोलुवादयोपि सिध्यन्तीति किं सूत्रेण ? । न चैवं 'नोनावे'त्यादावपि पृथगल्लोपापत्तिः । चकारानुकृष्टबहुलग्रहणाज्ज्ञायमानस्यानैमित्तिकस्य लुकोऽन्तरङ्गतया लकारोत्पत्तेः प्रागेव समुदाये प्रवृत्तेः । नन्वेवं 'चेक्रियः' 'लोलुवः' 'तोष्टुव' इत्यादावल्लोपस्य स्थानिवत्त्वाद्यथा गुणो न, एवमियङुवङावपि न स्यातामिति चेत्सत्यम्, अचमाश्रित्य न भवत एव, उक्तयुक्तेः । किन्तु स्थानिवद्भावलब्धमकारमाश्रित्य भविष्यतः । स हि यकारे लुप्ते प्रत्ययसंज्ञकः । स्यादेतत्–लोलुवादिष्वकारे लुप्ते यलुगिति क्रमः । यत्र यकारावस्थानकाले अकारेण प्रत्ययत्वं न लब्धमेव । लुप्तेऽपि तस्मिन्नकारो नास्त्येव । ततः प्रागेव लोपात् । सोयमसत्कथं प्रत्ययतां लभेत ? । तल्लोपस्य स्थानिवद्भावेन प्रत्ययत्वमिति चेत् । स्थानिनि दृष्टं हि कार्यं तद्वदतिदेशेन लभ्यते न तु तत्राऽदृष्टमपि । अत्राहुः– तत्र सम्भावितमात्रमतिदिश्यते । यदि हि लोपस्य स्थानिभूतोऽकार इह लुप्तेपि यकारे तिष्ठेत्तर्हि प्रत्ययतां लभेतोवङादिकं च प्रवर्त्तयेदिति कथं नातिदेशः । वरेनिषेधश्चेह लिङ्गम् । स हि यातेर्यङन्ताद्वरच्यल्लोपयलोपयोः कृतयोः स्थानिवद्भावेनातो लोप इटि चेत्यालोपो मा भूदित्येतदर्थं क्रियते । स्थानिनि दृष्टस्यैवातिदेशे तु किन्तेन ? । न हि 'या या य'इत्यस्यामवस्थायामातो लोपस्य प्राप्तिः, अनजादित्वादिति दिक् । नन्वेवं चेक्षियस्तोष्टुव इत्यत्रान्तरङ्गानपीति न्यायेनाऽकृत एवाकृत्सार्वधातुकयोरिति दीर्घे यङो लुक् । ततोऽल्लोपस्य स्थानिवद्भावे सत्यपि 'चेक्षि अ अ' तोष्टु अ अ' इति स्थान्यकारेण सह लघूपधमङ्गमच्प्रत्ययपरं जातमिति लघूपधगुणः स्यादेव । सत्यम् । अन्तरङ्गावियङुवङौ भविष्यतः । यथाह वार्त्तिककारः–**श्नुधातुभ्रुवां य्वोरियङुवङौ**…

[ प्रत्याख्यानवादिनः परिहारस्थापनभाष्यम् ]

**सावकाशो लुक् ॥**

**कोऽवकाशः ? ॥ अवशिष्टः[1] ॥**

**( प्रदीपः ) सावकाश इति ।** भिन्नविषयौ लुग्लोपौ । अकारस्य लोपो, यकारस्य लुक् । ततश्च नास्ति 'येन नाऽप्राप्ति'न्यायः ॥

[ अभ्युपेत्य समाधानभाष्यम् ]

**अथापि[2] कथंचिदनवकाशो लुक्स्यादेवमपि न दोषः । अल्लोपे[3] योगविभागः करिष्यते—'अतो लोपः' । [ अतोलोपो भवति ] । ततो 'यस्य' । यस्य च लोपो भवति । 'अत' इत्येव ॥ किमर्थमिदम् ? ॥ लुकं वक्ष्यति तद्बाधनार्थम् । ततो 'हलः'। 'हल उत्तरस्य यस्य च लोपो भवती'ति ॥**

**( प्रदीपः ) अथापीति ।** 'यङोचि चे'त्यत्र यकाराऽकारसमुदायस्य 'यङ'इति निर्दिष्टस्य विवक्षितत्वादवयवे च यङ्व्यपदेशस्य गौणत्वादिति भावः ॥

**( उद्द्योतः ) गौणत्वादिति ।** अतिदेशविषये गौणत्वाङ्गीकारेऽतिदेशवैयर्थ्यापत्तेरिदं चिन्त्यम् । **किंच** भिन्नविषयेऽपि बाध्यबाधकभावो दृष्टः, यथा **व्यथो लिटीति** संप्रसारणस्य वकारे चारितार्थ्येऽपि **हलादिः शेष**बाधकता । भाष्यकारोऽपि **मिदचोऽन्त्या**दित्यस्य विषयभेदेऽपि प्रत्ययपरत्वबाधकतां वक्ष्यति । तस्मात्कृते चारितार्थ्येऽपि तत्प्राप्तिकालेऽवश्यं प्राप्त्याऽपवादत्वं भवत्येवेत्याशयः[4] । **असंभव एव बाधकत्व**मिति वार्तिकानुयायिना **सावकाशो लुगि**त्युक्ते स एव **अथापी**त्याहेति तदुक्तिः—**कथंचिदिति ।** भाष्ये—**अत इत्येवेति ।** अलोन्त्यपरिभाषया, 'अत' इत्यनुवृत्तेर्वेति भावः । अयं च लुकोऽपवादः । एवं चार्थादवशिष्टस्य लुगिति बोध्यम् । अत्र च 'भ्रस्जो रोपधे'ति सूत्रादन्यतरस्यांग्रहणस्य मण्डूकप्लुत्याऽनुवर्तनेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च क्वचिदेव पृथगल्लोपो न सर्वत्रेति बोध्यम् । **'मरीमृज'** इत्यत्र विकल्पस्तु न । व्यवस्थितविभाषाश्रयणात् । यद्वा[5] तत्र विकल्प इष्ट एव । तदर्थं[6] सूत्रकृतोऽप्येतत्कल्पनावश्यकत्वं मनसि निधायैव तामाश्रित्य सूत्रप्रत्याख्यानमेव वरमिति भाष्याशयः । लोलुवादावुवङि अनादिष्टादचः पूर्वस्य विधेरभावेन स्थानिवत्त्वाभावेऽपि नोपधागुणः, अचः पूर्वत्वेन दृष्टलोल्शब्दात्परस्य गुणे कर्तव्ये पञ्चमीसमासेनाऽल्लोपस्य स्थानिवद्भावसौलभ्यात् । निमित्तत्वेनाऽऽश्रितात्पूर्वस्मादित्यर्थे तु न मानम् । अतिप्रसङ्गस्य तदनित्यत्वेनैव परिहारात् । भाष्यानुक्तत्वात्तदनित्यत्वाऽभावेऽपि पूर्वस्मात्परस्याऽव्यवहितस्यैव ग्रहणेन 'द्वे गौ'रित्यत्राऽदोषः । 'अचः पूर्वे'त्यंशे स्वरग्रहणाद्भाष्यप्रामाण्याच्चाऽव्यवधानांशबाधेऽप्यत्र तद्बाधे मानाऽभावात् । अतिदेशप्रवृत्तिप्राक्कालिकं च तदंशेऽव्यवधानं निविष्टम् । किं चाऽशास्त्रीयस्यापि तस्य **तत्स्थानापन्ने तद्धर्मलाभ** इति लोकन्यायेनातिदेश इति **स्थानिवत्सूत्रे** वक्ष्यते। 'लोलू' इत्यस्य लोलुवादेशस्तस्य च गुणघटितो लोलोवित्यादेश इत्याहुः । **दरीदश** इत्यत्राऽङ्निमित्तगुणस्तु न । अस्याऽङ्स्तर्कैकगोचरत्वेन लाक्षणिकतया अङ्ग्रहणेनाऽग्रहणात् । अत एव **'दरीदशक'**इत्यादौ यङन्ताण्ण्वुलि अङ्निमित्तगुणाऽभावः । **जंग्मक** इत्यादौ यङन्ताण्ण्वुलि उपधालोपश्च अनङीति निषेधाऽप्रवृत्तेः । **जङ्गम** इत्यादौ तूक्तयुक्त्या समुदायलुगेवेति न दोषः । **निजेगिल** इत्यादौ **'ग्रो यङी'ति** नित्यलत्वमिष्टमेव ।

**॥ राजलक्ष्मीः ॥**

१ **अवशिष्टः**—यकारः । २ एवं सति 'सर्वेषा'मित्यत्र नुट्यपि यदागमन्यायात्सुण्निर्बाध इति नुटो बाधानापत्तिरतस्तद्विषयातिरिक्तत्वेन सङ्कोच आवश्यक इति लुग्विषये कथं लोप इत्यरुचेराह—**अथापीति ।** ३ **अल्लोप इति ।** तत्समीपे **'यस्य हल'** इत्यत्रेत्यर्थः । 'वटे गाव' इतिवत्सप्तमी । ४ **इत्याशय इति ।** 'अनवकाशस्तर्हीति भाष्यस्ये'ति शेषः । 'सत्यपि संभवे बाधनं भवति अस्ति च संभवो यदुभयं स्या'दिति न्यायेनेति भावः । ५ व्यवस्थितविभाषाणां परिगणितत्वादाह—**यद्वेति । तदर्थं**—विकल्पार्थम् ।

**॥ शब्दकौस्तुभः ॥**

**रङ्लक्षणत्वादिति ।** तथा च 'रि पि गतौ' 'धि धारणे' इत्येषान्तुदादित्वाच्छे कृते रियति पियति धियतीति भवति । अशिश्रियत् प्रादुद्रुवत्प्रालुस्रवदिति च णिश्रीति चङीयङुवङौ भवतः । तस्मात्पृथगल्लोपेनैव सकलनिर्वाहान्न धातुलोप इति सूत्रन्नारम्भणीयम् । न चैवं 'मरीमृज'इत्यत्र मृजेरजादौ सङ्क्रम इति पाक्षिकवृद्धिप्रसङ्गः । हरदत्तादिमते मुख्याऽजादावेव तत्प्रवृत्तेः, निष्कर्षे तु यथोत्तरं मुनीनाम्प्रामाण्यादिष्टाव्यवस्थितविभाषा वाऽस्तु । अत्र वदन्ति—गुणोपधालोपयुटां नलोपाऽल्लोपयोरपि प्रसङ्गात्पृथगल्लोपो लुकि वक्तुं न शक्यते । तथाहि—सर्वत्र दीर्घान्तेषु ह्रस्वान्तेषु चेयङुवङोः कृतयोर्लघूपधलक्षणो गुणः प्राप्नोति । न चेह स्थानिवद्भावः, आदिष्टादचः पूर्वत्वात् । किञ्च 'जङ्गम'इत्यत्र 'गमहने'त्युपधालोपः स्यात् । अथात्राऽनङीति प्रतिषेधस्तर्हि 'दरीदृश' इत्यत्र 'ऋदृशोऽङी'ति गुणः स्यात् । अपि च 'देध' इत्यत्र 'दीङो युडची'ति युट् स्यात् । किञ्च 'सनीस्रंसो' 'दनीध्वंसः,'

१ अयं विषयः २२४ पृष्ठे भाष्ये द्रष्टव्यः ।

सूत्रमतेऽपि **न लुमतेति** निषेधस्याऽनित्यत्वाद्यङ्परत्वमस्ति। **न वेति विभाषेति** सूत्रे भाष्ये चेदं ध्वनितमिति तत्रैव निरूपयिष्यामः। यदि जरीगृह्यादेः सास्मर्यतेश्चाऽचि संप्रसारणयङ्चेति गुणाविष्टौ तर्हि सूत्रमतेऽपि 'न लुमते'ति **न लुमतेति** निषेधाऽनित्यत्वेन साधनीयौ। भाष्यप्रामाण्यादिष्टाविति गम्यते। अत एव पृथग्यल्लोपे यङो विषयापहाराभावेन अजेर्व्यादेशे यणि 'वेव्य' इति स्यादित्यपास्तम्। योगविभागस्य काचित्कत्वेन तत्र लुक एव प्रवृत्त्याऽक्षतेः। पुर्वादिभ्यो वान्तेभ्यो विज्नास्त्येव,-अनभिधानात्। इदं च **लोपोव्योरिति** सूत्रे भाष्येऽपि ध्वनितम्। एतद्भाष्यविरुद्धप्रयोगाणां भाष्यानुक्तानामनभिधानमित्य**न्ये**। न चैवं **'न धातुलुक्यची'**त्येव सिद्धे आर्धधातुकग्रहणं व्यर्थमिति वाच्यम्, **'लोपार्धधातुके'** इत्येव षष्ठीतत्पुरुषेण लोपनिमित्तार्धधातुक इत्यर्थेन लूञादेर्व्यावृत्तिसिद्धौ धातुग्रहणवत्तस्यापि सत्त्वात्। भाष्ये-**लुकं वक्ष्यतीति**। लुगतो लोपापवादः। अपवादश्च प्रायेण पश्चाद्भावीति भविष्यन्निर्देशः॥

[ सूत्रारम्भवादिनः शङ्काभाष्यम् ]

**इहापि तर्हि परत्वाद्योगविभागाद्वा लोपो लुकं बाधेत-"कृष्णो नोनाव वृषभो यदीदम्" ॥ नोनूयतेर्नोनाव ॥ एवञ्चाचो णितीति वृद्धिर्नस्याद्ल्लोपस्यस्थानिवत्त्वात्।**

[ प्रत्याख्यानवादिनः समाधानभाष्यम् ]

**समानाश्रयो लुग्लोपेन बाध्यते ॥ कश्च[3] समानाश्रयः ? ॥ यः[4] प्रत्ययाश्रयः । अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति ॥**

( प्रदीपः ) **समानाश्रय इति**। तुल्यकालत्वादिति भावः। नोनावेत्यत्र तु बहुलग्रहणानुवृत्त्याऽनैमित्तिकोऽन्तरङ्गो लुक् प्रागेव प्रत्ययोत्पत्तेर्भवति ॥

( **उद्द्योतः** ) ननु भिन्नाश्रययोरपि दीर्घवृद्धयोरियायेत्यादौ बाध्यबाधकभावो दृष्ट इत्यत आह-**तुल्यकालेति**। **बहुलेति**। **यङोऽचि चेति** चकारेण। **अन्तरङ्ग इति**। प्राक्प्रवृत्तिकत्वमन्तरङ्गत्वम्। न हि तदाऽपवादप्रवृत्तिरिति भावः ॥

[ आरम्भवादिन आक्षेपभाष्यम् ]

**कथम्--'स्यदः' 'हिमश्रथः' 'प्रश्रथः' 'जीरदानुः' 'निकुचित' इति ? ॥**

[ समाधानवार्तिकम् ]

॥*॥ उक्तं शेषे ॥*॥

**[ शेषे उक्तं । ] किमुक्तम् ? ॥ "निपातनात्स्यदादिषु" 'प्रत्ययाश्रयत्वादन्यत्र सिद्धम्', 'रकि ज्यः सम्प्रसारणम्'-इति ॥**

❀ राजलक्ष्मीः ❀

1 नन्वेवमपि 'पुर्व पूरणे' इत्यादिवान्तधातोर्विचि **लोपो व्योरिति** वलोपे सूत्रमते गुणनिषेधेन पूः पुरौ पुर इत्यादि रूपाणि भवन्ति भाष्यमतेतु न स्युरत आह-**पुर्वादिभ्य इति॥** २ एवञ्चाऽचोञ्णितीतिवृद्धिर्नस्याद्ल्लोपस्य स्थानिवत्त्वादित्याशयः। ३ तटस्थः शङ्कते-**कश्चेति**। ४ सिद्धान्ती समाधत्ते-**य इति**।

❀ शब्दकौस्तुभः ❀

'अनिदिता'मित्युपधालोपः स्यात्। अपि च 'यायाः' 'वावाः' इत्यादिष्वाकारलोपः स्यात्। तस्मात्समुदायलुगेवेष्टव्यो लोलुवादिसिद्धये च सूत्रमारम्भणीयमिति।

अत्रोच्यते-लोलुवादिषु गुणस्तावन्न भवति। स्थानिद्वारकस्यानादिष्टादचः पूर्वत्वस्य सत्त्वेन स्थानिवद्भावात्। अत एव हि 'न पदान्ते'ति सूत्रे सवर्णग्रहणं कृतम्। 'शिण्ढी'त्यादावनुस्वारस्य स्थानिद्वारकमनादिष्टादचः पूर्वत्वमाश्रित्य तस्य सवर्णे कर्तव्ये श्नसोरल्लोपस्य स्थानिवद्भावो मा भूदिति। नन्वनादिष्टादचः पूर्वत्वस्य शास्त्रीयकार्यत्वाऽभावात्कथमतिदेश इति चेत्, अनादिष्टादचः पूर्वत्वापेक्षेऽचः परस्मिन्नित्यतिदेशे कर्तव्ये स्थानिवदादेश इत्यस्य प्रवृत्तिसम्भवात्। सवर्णग्रहणव्याख्यावसरे सर्वैरित्थमेवोपपादितत्वाच्च। ननु योऽत्रादेश उवङ्, सोऽनादिष्टादचः पूर्वतां स्थानिद्वारा कथञ्चिल्लभतां, न तु तस्येह किञ्चित्कार्यं विधीयते येनाऽल्लोपः स्थानिवत्स्यात्। यस्य च कार्यं विधीयते उकारस्य नासावादेशः, येन स्थानिद्वारापि पूर्वतां लभेत। सत्यम्-'सर्वे सर्वपदादेशा' इत्याश्रयणात्स्थान्यादेशिभावस्तावदर्थवति विश्राम्यति। अत एव 'एरु'रित्यस्य 'तेस्तु'रिति पर्यवसितार्थमाश्रित्य स्थानिवत्सूत्रेणैव सिद्धत्वादेकदेशविकृतस्योपसङ्ख्यानं नारब्धव्यमिति वक्ष्यते। अत एव च 'स्थानिव'दित्युक्तौ सम्बन्धिशब्दत्वादेवादेश इत्यस्य लाभे सिद्धे पुनरादेशग्रहणमानुमानिकस्यादेशस्य परिग्रहार्थमिति वक्ष्यते। एवञ्चेहाऽपि 'लोलु' इत्यस्य 'लोलुव्'इत्यादेशः, स चाऽनादिष्टादचः पूर्वः, स्थानिवद्भावात्। तस्य च 'लोलाव' इत्यादेशे कार्येऽल्लोपः स्थानिवदिति युक्तमेव। किञ्च-'श्राजनोर्जे'ति 'रीङृत' इति च सूत्रे दीर्घोच्चारणेनाऽङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति परिभाषा ज्ञापयिष्यते। तेनोवङि कृते गुणो न भविष्यति। 'दरीदृश' इत्यत्र गुणो न भवति, प्रतिपदोक्तस्याऽङो ग्रहणात्। अदर्शदिति यथा। यङस्त्वकार उपदेशवेलायां न प्रत्ययः, किन्तु तदवयवः। यकारे लुप्ते तु नासौ ङकारविशिष्टो नवा श्रूयते तर्कैकगोच-

**निकुचितेऽप्युक्तम् ॥ किम् ? ॥ 'सन्निपात-लक्षणो विधिरनिमित्तं तद्विघातस्येति' ॥** [ न धातुलोप ] ॥४॥

**( प्रदीपः ) निकुचित इति ।** कित्त्वे[1]संयोगेन सम्बन्धेन नलोपे सत्युदुपधत्वमिति निमित्तमकित्त्वस्य न भवति ॥ यदि तर्ह्य[2]कारलोपः क्रियते, तदा 'जङ्गम' इत्यत्र त[3]स्य स्थानिवद्भावादुपधालोपः प्राप्नोति ॥ नैष दोषः, 'अनङी'ति प्रतिषेधात् । अनर्थकोऽयमङिति चेत् । लोपस्याऽपि तर्ह्यप्राप्तिः, अजादौ प्रत्यये तस्य विधानात् । ननु लोलुवादिषु वङादयः स्थानिवद्भावेन न सिद्ध्यन्ति तेषां स्थानिन्यदर्शनात् । संभवमात्रेणाप्यतिदेशो भवतीत्यदोषः ॥

**( उद्द्योतः ) अकित्त्वस्येति ।** 'उदुपधाद्भावादिकर्मणो'रिति विहितस्येत्यर्थः ॥ एवंचाऽकित्त्वाऽभावे **क्ङिति** चेत्येव निषेधः सिद्धो निकुचिते इति भावः । **सन्निपातः**–संबन्धः । **तद्विघात इति ।** कर्मण्यण ॥ **अजादौ प्रत्यये** इति । यायायतेः क्तिचि यातिरित्यादौ आलोपानापत्तेर्वरेग्रहणस्य वैयर्थ्याच्च चिन्त्यमेतत् । अस्य समाधानं त्वस्माभिरुक्तमेव । **संभवेति ।** अत एव **न पदान्त**सूत्रे वरेग्रहणं चरितार्थम् । सत्यकारे यदि स्याद्यकारलोपस्तदा संभव उवङादेरिति भावः ॥

## ❀ राजलक्ष्मीः ❀

१ **संयोगेन**–सम्बन्धेन । **निमित्तम्**–उदुपधत्वं हि निमित्तम् । २ **अकारेति ।** यङ्लोपेऽकारलोप इत्यर्थः । ३ **तस्य**–अलोपस्य । ४ 'क्ङिति चे'ति प्रतिषेधे ।

## ❀ शब्दकौस्तुभः ❀

रत्वाल्लाक्षणिकवद्विलम्बितोपस्थितिकः । नन्वेवमनङीति पर्युदासेऽप्यस्याग्रहणाज्जङ्गम इत्यत्राल्लोपः स्यादिति चेन्न । 'अनङी'ति पर्युदासेनाऽङ्सदृशे औपदेशिके अजादौ श्रूयमाणाजादौ वोपधालोपविधानात् । अर्थवानेवाऽङ्गुणविधौ गृह्यत इति तु न सम्यक् । विकरणानामनर्थकत्वात् । यत्तु 'देद्य' इत्यत्र युट् स्यादिति । तन्न । अनुबन्धनिर्देशात् । तदुक्तम्–'श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकीति । 'दीङो युडची'ति सूत्रे 'दीङ' इत्यनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थ इति त्वयैवोक्तत्वाच्च । अत्र च ज्ञापकमेकाच उपदेशइति सूत्रे यङ्लुङ्निवृत्तिमुद्दिश्य क्रियमाणमेकाज्ग्रहणम् । नहि तस्मिन्कृतेप्युक्तपरिभाषां विना बेभेदितेत्यादि सिद्धयति । 'बिभेत्सती'त्यादिसिद्धये तन्त्रावृत्त्याद्याश्रयणेनोपदेशग्रहणस्योभयविशेषणतायाः सिद्धान्तयिष्यमाणत्वात् । न चैवमपि श्तिपाशपेत्याद्यंशान्तरे कथं ज्ञापकमिति वाच्यम् । एकदेशानुमतिद्वारा पूर्वाचार्यपठितपरिभाषाज्ञापनस्य गतिकारकोपपदानामित्यादौ बहुशो दृष्टत्वात् । न चैवमेकाच इति विधीयमानं द्वित्वमपि यङ्लुकि न स्यादिति वाच्यम्, । 'गुणो यङ्लुको'रिति ज्ञापकेन तत्प्रवृत्तेः । यङ्लुकि 'बेभेदिते'त्यादाविडागमे तूदाहृतपरिभाषैव शरणम् । 'द्विःप्रयोगो द्विर्वचनं षाष्ठ'मिति वक्ष्यमाणतया धात्वन्तरत्वस्य वक्तुमशक्यत्वात् । बेभेदितेति यङन्ते तु पृथग्लोपाभ्युपगमात्तस्य च स्थानिवद्भावान्नेण्निषेधः । पूर्वस्मादपि विधौ स्थानिवद्भावस्य वक्ष्यमाणत्वात् । किञ्च–यस्येति लोपस्य त्वयाऽप्यवयवलोपत्वं स्वीकृतम् । तत्र यद्यपि देद्यक इत्यत्र युट् स्यादिति नापादनार्हम्, हलः परत्वाभावेनेह यलोपाप्रवृत्त्या 'देदीयक' इति रूपाभ्युपगमात् । 'सनीस्रंसक' इत्यादौ नलोपोपि सर्वसम्मतत्वादेव नापाद्यः । 'यायायको' 'वावायक' इत्यादावाल्लोपोऽप्यनापाद्यः । यलोपविरहेणाजादिक्ङिदार्द्धधातुकपरत्वाभावात् । तथापि गमेर्यङन्ताण्ण्वुलि जङ्गमक इत्यत्राल्लोपस्य स्थानिवद्भावाद्वृद्ध्यभाव इवोपधालोपः स्यात् । अथात्राऽनङीति प्रतिषेधस्तर्हि 'दरीदृशक' इत्यत्र 'ऋदृशोऽङी'ति गुणः स्यात् । अथ यदीहाऽङ्गवृत्तपरिभाषया 'संज्ञापूर्वको विधिरनित्य'इति वा समाधीयते तर्हि यङ्लुक्यपि 'सनीस्रस' इत्यत्र नलोपो 'याया' 'वावा' इत्याल्लोपश्च न शङ्क्यः । समाधानस्य तुल्यत्वादिति दिक् ॥

**क्ङिति च ॥** 'इक' इतिशब्दमुच्चार्य विहिते गुणवृद्धी गितं कितं ङितञ्च निमित्ततयाश्रित्य ये प्राप्नुतस्ते न स्तः । गित्,–जिष्णुः । 'ग्लाजिस्थश्च ग्स्नुः' । न चायं किदेवाऽस्त्विति वाच्यं, 'स्थास्नु'रित्यत्र घुमास्थेतीत्त्वप्रसङ्गात् । न चैवं 'भूष्णु'रित्यत्रेट्प्रसङ्गः । 'श्र्युकः किती'त्यत्रापि चर्त्वेन गकारप्रश्लेषमाश्रित्य तन्निषेधात् । न चैवं चर्त्वस्याऽसिद्धतया विसर्जनीयो न स्याद्रोरुत्वञ्च प्रवर्त्तेतेति वाच्यम् । 'न मुन'इत्यत्र 'ने'ति योगविभागात्सौत्रत्वाद्वा । तथा च

---

# क्ङिति च ।१।१।५।

[ आक्षेपवार्तिकम् ]

*॥*॥ क्ङिति प्रतिषेधे तन्निमित्तग्रहणमुपधारोरवीत्यर्थम् ॥*॥*

**( भाष्यम् ) क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्तव्यम् । 'क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत' इति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥**

**( प्रदीपः ) क्ङिति च ॥ क्ङिति प्रतिषेध**

इति[1] । इके[2] इत्यनुवर्तते, 'गुणवृद्धी' इति च । तत्र यदीक् 'क्ङिती'त्यनेन विशेष्यते 'क्ङिति परतो य इ'गिति तदा तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानान्निर्दिष्टग्रहणस्य चानन्तर्यार्थत्वाच्चितं हुतमित्यादावेव[3] निषेधः स्यान्न तु भिन्नो भिन्नवानित्यादाविति तन्निमित्तग्रहणं कर्तव्यम् । यदा तु क्ङिद्ग्रहणं गुणवृद्धिविशेषणम्[4], तदा परसप्तम्या अप्रसङ्ग[5] एव । न हि विहितयोर्निषेधः, अपि त्वनभिनिर्वृत्तयोरेवेति परिभाषानुपस्थानान्निमित्तसप्तम्येव क्ङितीति भवति क्ङिन्निमित्ता हि तयोः प्राप्तिः[1] ॥

( उद्द्योतः ) ति च । तत्र क्ङियदीति । तस्मिन्निति परिभाषानुग्रहायेत्यर्थः । यदा त्विति । निषेध्यत्वेन तयोः प्राधान्यादिति भावः । नहीति । अनभिनिर्वृत्ते पूर्वपरव्यवहारस्य कर्तुमशक्यत्वात्तदनुपस्थानम् । निर्वृत्तनिषेधे तु 'देवदत्तहन्तृहत'न्यायेन चितमित्यादाविकः श्रवणं न स्यादिति भावः । निमित्तेति । अत्र 'यस्य च भावेने'ति सप्तमी । सा च ज्ञापकत्वार्थिका । ज्ञापकत्वं च संबन्धं विनानुपपन्नं सद्विधिशास्त्रक्लृप्तनिमित्तत्वमादाय पर्यवस्यति । एवं च निमित्ततया क्ङिज्ज्ञाप्ये गुणवृद्धी नेत्यर्थः । तदाह–क्ङिन्निमित्ता हि तयोः प्रवृत्तिरिति । केचित्तु–सिद्धसाध्यसमभिव्याहार'न्यायेन निमित्तत्वं फलतीत्याहुः ॥ परे तु–क्ङितीत्येतद्गुणवृद्धिविशेषणमेव । भवनक्रियातदभावयोरमूर्तत्वेन क्ङित्परत्वाऽसंभवात् । इक इत्यस्याप्यनुवृत्त्यनुक्तेः । अनुवृत्तावपि तस्य शब्दपरत्वात् । तस्मान्निमित्तग्रहणाऽभावे क्ङितीति सप्तम्या निर्दिष्टे पूर्वस्येत्युपस्थित्या क्ङिति अव्यवहिते पूर्वस्य ये गुणवृद्धी प्राप्नुतस्ते नेत्यर्थः । अनुवादे परिभाषा नोपतिष्ठते' इति त्विको गुणवृद्धी अचश्चेति सूत्रद्वयविषयमेवेत्युक्तम् । भाष्ये तस्य निषेधस्यानुपलम्भाच्च । तद्वक्ष्यति भाष्ये–क्ङित्यनन्तरो गुणभाव्यस्तीति । निमित्तग्रहणे तु तत्सामर्थ्यात्परिभाषानुपस्थानम् । तत्प्रत्याख्याने तु लिङ्गादिना तदनुपस्थानम् । संभवन्त्यां परसप्तम्यां'यस्य चे'ति सप्तम्या असंभवाच्च । 'उपपदविभक्ते'रिति न्यायात् । सिद्धसाध्यसमभिव्याहारन्यायस्यापि तस्मिन्निति शास्त्रेण बाध एव । अत एव निमित्तग्रहणप्रयोजनावसरे–'हत' इत्युदाहरिष्यति । कैयटोक्तरीत्या इक्पदानवृत्तावेव निमित्तग्रहणमिति वार्तिकस्योक्तिसंभवेन तत्प्रयोजनदानानुक्तिसंभवः स्पष्ट एवेत्याहुः ॥

( भाष्यम् ) **'उपधारोरवीत्यर्थम्'। उपधार्थं रोरवीत्यर्थं च ॥**

( प्रदीपः ) **उपधारोरवीत्यर्थमिति** । उपधाया अपीकः प्रतिषेधार्थम्, रोरवीतेर्यङ्निमित्तप्रतिषेधनिवृत्त्यर्थम् । अत्र[6] हि तिब्निमित्तो गुणो, न यङ्निमित्तः ॥

( उद्द्योतः ) उपधाया अपीति । उपधायां रोरवीतौ चाऽर्थः प्रयोजनं प्रवृत्तिनिवृत्तिभ्यां प्रतिषेधो यस्य तत्तन्निमित्तग्रहणमिति भाष्यार्थ इति भावः । उपधारोरवीतिभ्यामिति–उपधारोरवीत्यर्थमित्यर्थेन नित्यसमास इत्यन्ये ॥

[ उक्तप्रयोजनप्रदर्शनभाष्यम् ]

**उपधार्थं तावत्–भिन्नः भिन्नवानिति ॥ किं पुनः कारणं न सिध्यति ? ॥ 'क्ङिती'त्युच्यते । यत्र क्ङित्यनन्तरो गुणभाव्यस्ति तत्रैव स्यात्—चितम्, स्तुतम् । इह तु न स्यात्–भिन्नः, भिन्नवानिति ? ॥**

[ उक्तप्रयोजनखण्डनभाष्यम् ]

**ननु च–यस्य गुण उच्यते, तं क्ङित्परत्वेन विशेषयिष्यामः । पुगन्तलघूपधस्य चाऽङ्गस्य गुण उच्यते । तस्मा[7]त्र क्ङित्परम् ॥**

( प्रदीपः ) **ननु चेति** । आकाङ्क्षया पुगन्त-

३ 'अव्यवहिते इकि' इति शेषः । ४ क्ङिति परतो ये गुणवृद्धी ते न स्याता' मित्येवंरीत्या गुणवृद्धिविशेषणतेत्याशयः । ५ गुणादीनामप्रसङ्ग एव प्राप्नोति स एव नेत्यर्थः । ६ अत्र हीति । रोरवीतौ हीत्यर्थः । ७ तस्य–अङ्गस्य ।

❀ राजलक्ष्मीः ❀

१ क्ङिति प्रतिषेध इति । क्ङिति यः प्रतिषेधः क्ङितिचेति तत्रेत्यर्थः । क्ङितीति स्वरूपपरं वा । २ अत्रेत्यादिः ।

❀ शब्दकौस्तुभः ❀

'ग्लाजिस्थे'ति सूत्रे श्लोकवार्त्तिकम्–स्थोर्गित्त्वाच्च स्थ ईकारः किन्ङितोरीत्त्वशासनात् । गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिटत्वं कगोरितोरिति । जयादित्योप्येवम् । वामनस्तु-ग्लाजिस्थश्चेत्यत्र स्था–आ इत्याकारं प्रश्लिष्य क्स्नुप्रत्ययान्तस्य तिष्ठतेराकार एव न त्वीत्वमिति व्याख्यानादेव स्थास्नोः सिद्धौ न कापि गकारप्रश्लेषः कार्य इत्याह । नन्वेतेन तन्मते 'दंशेश्छन्दस्युपसङ्ख्यान'मिति क्स्नौ दंक्ष्णवः पशव इत्यत्रानिदितामिति नलोपः स्यात् । सत्यम् । छान्दसत्वात्समाधेयः । क्ङित्–चितं स्तुतं मृष्टम् ।

१ 'प्रवृत्तिः । पा० ।

लघूपधस्येति सन्निधानं मन्यते। तथाहि 'क्ङिति गुणवृद्धी न भवतः' इत्युक्ते'कस्ये'त्याकाङ्क्षायां 'यस्य प्राप्ते' इत्यस्ति पुगन्तलघूपधस्यापेक्षा। अथवा क्ङिती-ति प्रत्ययग्रहणात्प्रत्ययेनाऽङ्गं सन्निधाप्यते। ततश्च क्ङिति भिन्नमित्यादौ लघूपधस्यानन्तर्यात्सिद्धो निषेधः॥

( उद्योतः ) नन्वसंनिहितं पुगन्ताङ्गादि कथं तत्पर-त्वेन विशेष्यमत आह—आकाङ्क्ष्येति। ननु निषेध्ये गुण-वृद्धी प्रति क्ङित्परेऽग्रूपं निषेधविषयं प्रति चाकाङ्क्षा, नाङ्गं प्रती-त्यत आह—अथवेति। निषेध्यगुणादेरप्रत्यये क्ङित्यप्रसङ्गेन प्रत्ययग्रहणमिति भावः। एवं च प्रत्ययस्याऽङ्गांशे उत्थिता-काङ्क्षत्वात्तस्यैव तद्विशेषणमिति भावः॥

[ उक्तप्रयोजनस्थापनभाष्यम् ]

**पुगन्तलघूपधस्येति नैवं विज्ञायते- 'पुगन्तस्याऽङ्गस्य लघूपधस्य चे'ति॥ कथं तर्हि?॥ पुकि अन्तः पुगन्तः। लघ्वी उपधा लघूपधा। पुगन्तश्च लघूपधा च पुगन्तलघूपधं, पुगन्तलघूपधस्येति॥ अवश्यं चैतदेवं विज्ञेयम्। अङ्गविशेषणे हि सतीहापि प्रसज्येत–भिनत्ति,छिनत्तीति॥**

( प्रदीपः ) लघूपधेति। ततश्च समुदाय-स्याऽनिर्देशादवयवस्य चेको व्यवधानात्तदवस्थैवा-प्राप्तिरित्यर्थः॥

(उद्योतः) आद्यव्याख्यायां परिहारभाष्यं योजयति–ततश्च समुदायस्येति। द्वितीये त्विदं बोध्यम्–'नाक्षिप्त-विशेषणत्वं न्याय्य'मिति। भाष्ये–अङ्गविशेषणेहीति। पुगन्तलघपधस्येत्यस्य बहुव्रीहिणाऽङ्गविशेषणत्वे इत्यर्थः॥

[ द्वितीयप्रयोजनप्रदर्शनभाष्यम् ]

**रोरवीत्यर्थं[३] च। त्रिधा बद्धो वृषभो रोरवीति।**

[ तन्निमित्तग्रहणदूषणभाष्यम् ]

**यदि तन्निमित्तग्रहणं क्रियते, शचङन्ते दोषः,–रियति पियति धियति प्रादुद्रुवत् प्रासुस्रुवत्।–अत्र न प्राप्नोति।**

( प्रदीपः ) तन्निमित्तपक्षस्यापि दुष्टतामाह–शचङन्ते दोष इति। सार्वधातुकनिमित्तस्य तु गुणस्य निषेधेऽपि लघूपधलक्षणस्य निषेधाऽप्रसङ्ग इत्यर्थः। रियतिपियतिधियतीति। रि पि गतौ। धि धारणे इति तुदादौ पाठः।

(उद्योतः) यदीत्यनेन न स्वपक्षस्योपादेयतोच्यते[३]। किंतु[४] भयोः साम्यमुच्यत इत्याह–तन्निमित्तपक्षस्यापीति॥ सार्वधातुकनिमित्तस्य–शनिमित्तस्य। लघूपधलक्ष-णस्य–तिब्निमित्तस्य।

[ सिद्धान्तिनस्तत्समाधानवार्तिकम् ]

॥*॥ *शचङन्तस्यान्तरङ्गलक्षणत्वात्*

*[ सिद्धम् ]* ॥*॥

---

❀ राजलक्ष्मीः ❀

१ विशेष्यं–विशेषणीयम्। परि–अ इत्यस्याङ्गतया उपधे-कोऽङिन्निमित्तक उपधागुणः प्राप्नोतीत्यर्थः। २ अत्र सार्व-धातुकगुणनिषेधाऽभावार्थश्चेत्यर्थः। अत्र हि ङिन्निमित्तत्वा-ऽभावः। ३ स्वपक्षस्य–तन्निमित्तग्रहणाऽभावपक्षस्य। ४ उभयोः–तन्निमित्तग्रहणाऽग्रहणपक्षयोः।

---

❀ शब्दकौस्तुभः ❀

ङित्–चिनुतः सुनुतः मृष्टात्। निमित्तसप्तम्याश्रयणं किम्?। कामयते। शब्दव्यापाराश्रयणं किम्?। लैगवा-यनः। ओर्गुणो हीक एव प्रवर्त्तते न तत्रेक्पदोपस्थितिः, 'ओ'रितिनिर्दिष्टस्थानिकत्वात्। तदुक्तम्–'तद्धितकाम्यो-रिक्प्रकरणा'दिति। ननु क्ङितीति सप्तमीनिर्देशात्तस्मिन्निति-निर्दिष्टे पूर्वस्येति परिभाषोपतिष्ठेत, तत्र निः शब्दस्य नैरन्त-र्यपरत्वाद्विश्लेषोच्चारणक्रियत्वादव्यवहितोच्चारितस्य निषेधः स्यान्न तु छिन्नं भिन्नमित्यादेरपीति चेत्, भवेदेवं यदि क्ङितीत्येतन्निषेध्यया क्रियया साक्षात्संबध्येत। इह तु गुणवृद्धिभ्यां सम्बध्यते। 'यस्य च भावेने'ति सप्तमी। क्रियान्तराश्रवणादौत्सर्गिकसत्ताक्षेपः। ततश्च क्ङिति सति प्राप्ते ये गुणवृद्धी इति सम्बन्धे कृते सिद्धसाध्यसम-भिव्याहारन्यायेनोपलक्षणीभूतसत्ताश्रयणस्य निमित्तत्वमु-त्सर्गतः फलति नत्विह विशिष्य निमित्ततायां सप्तमीवि-धानमस्ति। न चाऽत्र निर्दिष्टपरिभाषा सम्भवति, विध्यङ्ग-भूतानां परिभाषाणां साक्षाद्विधेयनिषेध्यक्रियान्वयिन्येव प्रवृत्तेः। इदन्तु क्रियान्वयिनो विशेषणं न तु क्रियायाः। अतोऽत्र न परिभाषाप्रवृत्तिः। अन्यथा 'वृद्धिर्यस्याचामादि'-रित्यत्रेक्परिभाषोपस्थाने शालीयादिर्न सिध्येत्। न ह्यत्रेकः स्थाने वृद्धिः। अत एवोदीचामातः स्थानइति सूत्रे स्थाने-ग्रहणं कृतम्। आतः स्थाने योऽकार इत्यनूद्यमानस्य विशेषणे 'आत' इत्यस्मिन्षष्ठी स्थानेयोगेति परिभाषाया अप्रवृत्तेः। **गुणानाञ्च परार्थत्वदसम्बन्धः समत्वा-त्स्यादिति** न्यायोऽप्यत्रानुसन्धेयः। ननु तर्ह्यनेनैव न्यायेन 'क्ङितो'त्येतत्प्रधानभूतक्रियया सम्बध्यतां न तु तच्छेषभूताभ्यां गुणवृद्धिभ्यां, प्रधानान्वयस्य सम्भवत-स्त्यागायोगादिति चेन्न, यत्र हि गुणः कृतात्मसंस्कारः

**अन्तरङ्गलक्षणत्वादत्रेयङुवङोः कृतयोरनुपधात्वाद्गुणो न भविष्यति । एवं क्रियते चेदं तन्निमित्तग्रहणं, न च कश्चिद्दोषो भवति॥**

( उद्द्योतः ) भाष्ये-अन्तरङ्गलक्षणत्वादिति । प्राधान्येनाऽच एव यत्रानन्तर्याश्रयणं तत्रैव 'नाजानन्तर्य' इति निषेधप्रवृत्तेस्तस्या अभावाच्चेति भावः । नन्वदुद्रुवदित्यत्र **सार्वधातुके**ति गुणात्पूर्वं नित्यत्वाच्चङि **द्विर्वचनेऽचीति** निषेधादुवङभावे द्वित्वात्परत्वाल्लघूपधगुणो दुर्वार इति चेन्न ; अन्तरङ्गत्वाद्द्वित्वस्यैव प्रवृत्तेः । ओणेर्ऋदित्करणेनोपधाकार्यस्य द्वित्वात्प्राबल्यबोधनेऽपि न क्षतिः, ज्ञापकस्य सजातीयापेक्षत्वेनोपधाकार्यस्य यत्र द्वित्वसमाननिमित्तता द्वित्वनिमित्तचङ्निमित्तता वा तत्रैव तत्प्राबल्यबोधनादित्याहुः ॥

[ भूयःप्रयोजनान्तरप्रदर्शनभाष्यम् ]

**इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि-'हतो' 'हथः' 'उपोयते' 'औयत' 'लौयमानिः' 'पौयमानिः' 'नेनिक्त' इति ॥**

( प्रदीपः ) **हतो हथ इति** । यथैवाऽदिप्रभृतिभ्यः शप इत्यनेन शब्निवर्त्यते एवमकारोऽपि निषेधेन निवर्त्येतेत्याशयः । नन्विग्लक्षणोऽयङ्गुणो न भवतीति निषेधाऽप्रसङ्गः । सत्यम् । परिहारान्तरसंभवान्नैतदाश्रितम् ॥

( उद्द्योतः ) **भूयः**-पुनरर्थे । **एवमकारोऽपीति** । 'क्ङित्परे गुणवृद्धी न प्रयोक्तव्ये' इति सूत्रार्थः । तत्र यथा 'चित'मित्यादावसतो गुणादेः प्रागभावः पाल्यते एवं सतोऽपि निवृत्तिः साध्येत,-सतोऽपि निवृत्तेरदिप्रभृतिभ्य इत्यादौ दृष्टत्वादिति भावः । **नन्विति** । तथा चेक इत्यनुवृत्तिसामर्थ्यादसत एवाऽप्रयोगः प्रतिपाद्यत इति भावः । **'नेनिक्ते'** इत्यत्र 'निजां त्रयाणां गुणः श्लौ'वित्यभ्यासस्य गुणः ।

[ उक्तप्रयोजनप्रत्याख्यानभाष्यम् ]

**नैतानि सन्ति प्रयोजनानि । इह तावत्-'हतो' 'हथ' इति । प्रसक्तस्याऽनभिनिर्वृत्तस्य**

❀ राजलक्ष्मीः ❀

१ अत्र आण्निमित्ता वृद्धिर्न यङ्निमित्तेति परिहारः । २ लूयमानस्यापत्यं-लौयमानिः। पूयमानस्यापत्यं पौयमानिः। नात्र यन्निमित्ता वृद्धिरिति परिहारः । ३ **शप्**-जातः शप् ।

❀ शब्दकौस्तुभः ❀

प्रधानोपकाराय महते प्रभवति तत्रात्मनोपि संस्कारमनुभूय

१ ताऽर्वाङ्निमित्तता वा' पा० ।

२९

**प्रतिषेधेन निवृत्तिः शक्या कर्तुम् । अत्र च धातूपदेशावस्थायामेवाऽकारः ॥**

**इह चोपोयते औयत लौयमानिः पौयमानिरिति । बहिरङ्गे गुणवृद्धी, अन्तरङ्गः प्रतिषेधः। 'असिद्धं बहिरङ्गमन्तरङ्गे'। नेनिक्त इति । परेण रूपेण व्यवहितत्वान्न भविष्यति॥**

( प्रदीपः ) **प्रसक्तस्येति** । सामान्यलक्षणेन विशेषलक्षणाऽपरामर्शेन यत्प्राप्तं पुनर्विशेषलक्षणपरामर्शनाद्यत्स्वरूपेणानभिनिर्वृत्तं तस्य निवृत्तिः क्रियते । परमार्थतस्तूत्सर्गापवादयोरेकवाक्यतायामप्राप्त्यनुमानं **बाध** इति सिद्धान्तः । 'चित'मित्यादौ च प्रसक्तानभिनिर्वृत्तगुणनिषेधे वचनस्य चरितार्थत्वाद्धतो हथ इति भूताऽकारनिवृत्तावव्यापारः । **अदिप्रभृतिभ्य** इत्यनेन तु गत्यन्तराऽभावात्सन्नेव प्रक्रिया(दशा)यां शब्निवर्त्यते । नन्वेवं भवत इत्यादौ प्रसक्तोऽनभिनिर्वृत्त एव शबकारः कस्मादनेन न निवर्त्यते ?। नैष दोषः, शब्भवतीत्यस्यां चोदनायां गुणरूपेणाऽचोदनान्नायं गुणनिषेधविषयः॥ **उपोयत इति** । वेञो यकि संप्रसारणे कृते उभयपदाश्रितत्वाद्बहिरङ्गो गुणः । 'औयते'त्यादौ बहिरङ्गाश्रयत्वाद्वृद्धिर्बहिरङ्गा। **नेनिक्ते इति**। क्ङित्परत्वेनाऽङ्गस्य विशेषणादङ्गस्य च कार्यित्वात्पूर्वः पक्षः । उत्तरन्त्वभ्यासस्य कार्यित्वात्तस्य च परेण रूपेण व्यवधानादिति॥

(उद्द्योतः) प्रसक्तत्वानभिनिर्वृत्तयोर्विरोधमाशङ्क्याह-**सामान्येति** । **निवृत्तिः**-अनभिनिर्वृत्तिः । विहितप्रतिषिद्धयोर्विकल्पस्तर्हि स्यादत आह-**परमार्थेति** । गुणविध्येकवाक्यतया क्ङिद्भिन्नसार्वधातुकादौ गुण इत्यर्थात् क्ङिति तयोरप्राप्तिरेवेति भावः । सा च पर्युदासविधया । यद्वा प्रसज्यप्रतिषेधेन वाक्यार्थबोधे तदंशे सामान्यशास्त्रजज्ञानस्याप्रामाण्यं कल्प्यते । एकवाक्यताफलसंपत्तेस्त्वे**कवाक्यताया**मित्युक्त-

४ **अकारः**-'ह'न्नित्यकारः । 'निमित्तग्रहणाऽभावे' इति शेषः । ५ ननु **बहूनीत्य**र्थे भूयांसीत्युचितमत आह-**पुनरिति** । तथाचाऽव्ययं पुनरर्थे तदिति भावः । ६ नासौ तन्निमित्त इति परिहारः । ७ निजितिरूपेणेत्यर्थः । ८ बहिर्भूतलङपेक्षत्वादित्यर्थः ।

प्रधानेन सम्बध्यते । यथा पानीयमेम्-एलादिसंस्कृतं पुरुषेण । उक्तञ्च-**'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।**

२ अयं पाठः क्वचिन्न । ३ 'यथेवम्' पा० ।

मिति द्रष्टव्यम्। **भूताकारेति** । सिद्धाऽभावपरिपालनेनैव सिद्धावसिद्धाऽभावविधाने गौरवादिति भावः। **प्रक्रियाया-मिति** । वस्तुतस्तत्रापि लुग्द्वाराऽनुत्पत्तिरेवान्वाख्यायते इति बोध्यम्। **नैष इति**। एकान्ता अनुबन्धा इति भावः। **अयमेव न्याय्य** इति तस्यलोप इति सूत्रे वक्ष्यति। **कार्यित्वादिति** । अङ्गस्य गुणो भवति, स च तत्संबन्ध्य-भ्यासेक इत्यर्थ इत्यभिमानः। **उत्तरस्त्विति** । पक्ष इति शेषः। क्ङित्परस्य यस्य गुणः प्राप्तस्तस्य नेति सूत्रार्थ इति भावः।

[ तन्निमित्तग्रहणप्रत्याख्यानभाष्यम् ]

**उपधार्थेन तावन्नाऽर्थः। धातोरिति वर्तते। धातुं क्ङित्परत्वेन विशेषयिष्यामः।**

**( प्रदीपः ) धातुं क्ङित्परत्वेनेति ।** नधातुलोप इत्यत्रोपसर्जनेऽपि धातौ धातुशब्द-मात्रस्य स्वरितत्वादिहाऽनुवृत्तिरित्यर्थः॥

**( उद्द्योतः )** भाष्ये-धातुं क्ङिदिति । परत्वेन निर्दिष्टं यत् क्ङिदिति तद्धातुं प्रति विहितमिति विशेषयि-ष्यामः। तथा च धातुविहितं किद्यतः कुतश्चित्परं तदवयवस्य गुणो नेति सूत्रार्थ इत्यर्थः। तद्ध्वनयन्नाह-**मत्वा प्रश्न इति** ।

[ आक्षेपभाष्यम् ]

**यदि धातुर्विशेष्यते, विकरणस्य न प्राप्नोति-चिनुतः सुनुतः लुनीतःपुनीत इति॥**

**( प्रदीपः ) यदीति ।** क्ङित्यनन्तरस्य धातो-र्गुणवृद्धी न भवत इति वाक्यार्थं मत्वा प्रश्नः॥

[ परिहारोक्तिप्रत्युक्तिभाष्यम् ]

**नैष दोषः। विहितविशेषणं धातुग्रह-णम्—'धातोर्यो विहित' इति॥**

[ आशङ्काभाष्यम् ]

**धातोरेव[2] तर्हि न प्राप्नोति॥**

**( प्रदीपः ) धातोरेवेति ।** 'धातोर्विहितस्य क्ङित्यनन्तरे ने'ति मत्वा प्रश्नः।

[ समाधानभाष्यम् ]

**नैवं विज्ञायते—'धातोर्विहितस्य क्ङिती'ति॥कथं तर्हि?॥ धातोर्विहिते क्ङितीति।**

**धातोर्विहित इति।** 'धातोर्विहिते क्ङित्यन्तरो यो धातुर्विकरणो वा तस्य प्रतिषेध' इत्यर्थः॥

**( उद्द्योतः ) धातुर्विकरणो वेति।** धातुना विहितविशेषणबललब्धमेतदुभयम्।

[ समाधानान्तरभाष्यम् ]

**अथवा—कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यं। "पुगन्तलघूपधस्य गुणो भवती'त्युपस्थितमिदं भवति'क्ङितिने'ति।**

**( प्रदीपः ) अथवेति।** यत्र गुणवृद्धी विधी-येते, तत्र 'क्ङिति ने' त्युपतिष्ठते इत्येवमिवं परि-भाषा भवति। तत्र 'पुगन्तलघूपधस्ये'त्यत्राऽस्या उपस्थाने सति 'येन नाव्यवधान'मिति'भिन्न'मित्यादौ निषेधो भविष्यति।

**( उद्द्योतः ) येन नेति।** 'पुगन्तलघूपधे'[3]ति तत्पु-रुष इति भावः। श्रुतत्वात्सार्वधातुकादिकं, क्ङितीति च पुगन्तादीनामेव विशेषणमित्यभिमानः।

[ समाधानान्तरभाष्यम् ]

**अथवा यदेतस्मिन्योगे क्ङिद्ग्रहणं क्रियते तदनवकाशम्। तस्यानवकाशत्वाद्गुणवृद्धी न भविष्यतः।**

**( प्रदीपः ) अथवेति ।** मा भूत्परिभाषा, तथापि प्रतिषेधस्य प्रतिषेध्याऽपेक्षायां यावन्तो यादृशाः प्रतिषेद्धव्यास्तावन्ति प्रतिषेधसूत्राणीति पुगन्तलघू-पधगुणे प्रतिषेध्येऽनवकाशः प्रतिषेधो व्यवहितेऽपि प्रवर्तते। अथवा यथोद्देशपक्षाश्रयेण भाष्यम्। तथाहि—प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते इति 'यदेतस्मि'न्नित्युक्तम्।

❀ राजलक्ष्मीः ❀

❀ राजलक्ष्मीः ❀

१ तन्निमित्तो निषेधो न प्राप्नोतीत्यर्थः। श्नादीनामधातुत्वा-दित्याशयः। २ नह्ययमपूर्वं विधत्ते, किन्तर्हि लघूपधगुणस्य यत्र लघौ प्राप्तिः सा क्ङिति निषिध्यते। एवञ्च न क्ङिद्व्य-वहितस्य इको गुणवृद्धी निषिध्येते किन्तु यस्य प्राप्तिः (लघ्विकारस्य) तस्य न भवतीत्याशयः।

३ बहुव्रीहिपक्षे दोषतादवस्थ्यादाह-पुगन्तेति ।

❀ शब्दकौस्तुभः ❀

इह गुणवृद्ध्योःक्ङिद्ग्रहणेन विशेषितयोः प्रधानस्य महानुप-कारो भवति। व्यवहितस्यापि प्रतिषेधे सिद्धे क्ङोः कित्क-प्रधानस्योपकारे हि तथा भूयसि वर्तते॥' इति॥

१ 'धातुर्वा विकरणो वे'ति पा०।

( **उद्द्योतः** ) **प्रतिषेध्यापेक्षायामिति ।** गुणवृद्धिश्रुत्या तद्रूपप्रतिषेध्याकाङ्क्षायां यावद्गुणवृद्धिविधायकशास्त्रविषयकनिषेधवाक्यानां व्यक्तिपक्षे विनिगमनाविरहादुपप्लव इत्यर्थः । **प्रधानानीति ।** अनेन तद्विषयकनिषेधोपप्लवे बीजं दर्शितमित्याहुः ।

[ समाधानान्तरभाष्यम् ]

**अथ वाचार्यप्रवृत्तिर्ज्ञापयति--भवत्युपधालक्षणस्य गुणस्य प्रतिषेधः' इति, यदयं 'त्रसिगृधिधृषिक्षिपेः क्नुः' 'इको झल्' 'हलन्ताच्चे'ति क्नुसनौ कितौ करोति ॥**

**कथं कृत्वा ज्ञापकम् ?॥ कित्करण एतत्प्रयोजनम्-गुणः कथं न स्यादिति । यदि चाऽत्र गुणप्रतिषेधो न स्यात्, कित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यो--'भवत्युपधालक्षणस्यापि गुणस्य प्रतिषेध'-इति, ततः क्नुसनौ कितौ करोति ॥**

( **प्रदीपः** ) **अथवेति ।** लिङ्गान्निर्दिष्टाऽङ्गविकला 'तस्मि'न्निति परिभाषोपतिष्ठत इत्यर्थः । अनेकपरिहारोपन्यासो न्यायव्युत्पादनार्थः ।

( **उद्द्योतः** ) **अङ्गविकलेति ।** पूर्वस्य परस्य वेति सन्देहेन तदुपस्थितेरिति भावः । न चैवं 'नेनिक्ते' इत्यत्रापि निषेधः स्यात्, 'येनने'ति न्यायेनैकवर्णव्यवधाने एव निषेधप्रवृत्तेर्बोधनात् । **न्यायव्युत्पादनेति । न्यायव्युत्पत्तिः** तत्प्रतिपत्तिः । श्रोतृणां तदुत्पादनायेत्यर्थः । भाष्ये **हलन्ताच्चेति ।** नन्वेतद्विहितकित्त्वस्य न ज्ञापकत्वम्, 'दिदृक्षते' त्यादावमागमनिषेधेन, 'धिप्सती'त्यादौ नलोपेन च चारि-

॥ राजलक्ष्मीः ॥

१ **कथमिति ।** कथमपीत्यर्थः । २ द्वितीयमपि तत्फलं खण्डयति-**रोरवीत्येति । क्ङितीति ।** 'यत'इत्यादिः । ३ वार्तिकमतेनाह-**न लुमतेति ।** लुमता लुप्ते तन्निमित्तकं पूर्वस्य

॥ शब्दकौस्तुभः ॥

रणश्चाऽत्र ज्ञापकम् । अन्यथा प्रधानेनैवान्वये निर्दिष्टपरिभाषायाश्चोपस्थितौ सत्यां व्यवहिते निषेधस्याऽप्रवृत्तौ व्यर्थमेव क्नोः कित्त्वं स्यात्तस्माद्यथाव्याख्यानमेव साधु । ननु न यदीयं परसप्तमी तर्हि शचङन्ते दोषः, लघूपधलक्षणगुणप्राप्तेरिति चेन्न, अन्तरङ्गत्वादियङुवङ्प्रवृत्तेः । धि धारणे, रि पि गतौ तुदादयः । धियति रियति पियति । णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् । अशिश्रियत्, अदुद्रुवत् । इह तिपमाश्रित्य प्राप्तो गुणो बहिरङ्गः, शचङाश्रयावियङुवङावन्तरङ्गौ । तदु-

तार्थ्यात् । 'इको झ'लित्यपि न, तद्विषये इकः क्ङित्परत्वस्यैव संभवादिति चेन्न; 'सृजिदृशोर्झल्यमकिति' 'इको झल्' 'दम्भे'रिति लघुन्यासेन सिद्धे सामान्यतोऽतिदेशस्य गुणप्रतिषेधार्थत्वेन ज्ञापकसाम्राज्यात् । रुदविदमुषां क्त्वासनोर्मृडमृदगुधकुषक्लिशां क्त्वः कित्त्वविधानं च ज्ञापकं बोध्यम् ।

[ द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् ]

**रोरवीत्यर्थेनापि नार्थः । 'क्ङिती'त्युच्यते, न चाऽत्र क्ङितं पश्यामः ॥ प्रत्ययलक्षणेन प्राप्नोति ॥ 'न लुमता तस्मि'न्निति प्रत्ययलक्षणप्रतिषेधः । अथापि 'न लुमताऽङ्गस्ये'त्युच्यते, एवमपि न दोषः ॥ कथम् ?॥**

**न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते ॥ किं तर्हि ? ॥ योऽसौ लुमता लुप्यते तस्मिन्यदङ्गं तस्य यत्कार्यं तन्न भवती'ति ॥ अथाऽप्यङ्गाधिकारः प्रतिनिर्दिश्यते एवमपि न दोषः ॥ कथम् ? ॥ 'कार्यकालं संज्ञापरिभाषम्' यत्र कार्यं तत्र द्रष्टव्यम् । 'सार्वधातुकार्धधातुकयोर्गुणो भवती'त्युपस्थितमिदं भवति 'क्ङिति ने'ति ॥**

( **उद्द्योतः** ) **अङ्गाधिकार इति ।** स्वरितलिङ्गासङ्गेनेति भावः । **कार्यकालमिति ।** तथा च तत्रोपस्थितत्वादिदमप्याङ्गम्, अङ्गाधिकारस्थैकवाक्यतापन्नत्वादिति भावः । स्वरितत्वासङ्गवशात्तदधिकारपठितमिव तदधिकारस्थैकवाक्यतापन्नमपि गृह्यते इति तात्पर्यम् । निषेधेऽपि परिभाषासादृश्यात्परिभाषात्वमुक्तम् । सादृश्यं च निषेध्याकाङ्क्षया तदेकवाक्यतामात्रेणेति बोध्यम् ।

कार्यं नेति तदर्थः । ४ तस्य खण्डितत्वात्सूत्रमतेनाह-**अथापीति ।** ५ **न**-नहि । ६ तदधिकारीयं नेति नार्थ इत्याशयः । ७ **यदङ्गं**-लब्धाङ्गसंज्ञकम् । प्रकृतिरित्यर्थः । **यत्कार्यं**-तन्निमित्तकमाङ्गमनाङ्गं वा । ८ नन्वयं निषेधो न परिभाषेत्यत आह-**निषेधेपीति ।**

त्तम्-**शचङन्तस्यान्तरङ्गलक्षणत्वादिति ।** 'मृजेरजादौ सङ्क्रमे वृद्धिरिष्यत' इति काशिकायाम् । इद्यको गुणवृद्धी इति सूत्रप्रसङ्गाद्वैयाकरणान्तरमतत्वेनोक्तं भाष्ये । अस्यार्थः-संक्रामतोऽपक्रामतो गुणवृद्धी अस्मादिति व्युत्पत्त्या गुणवृद्धिप्रतिषेधनिमित्तभूतः क्ङित्प्रत्ययोऽत्र **संक्रम**शब्देनोच्यते, योगरूढेः । तेन 'मरीमृज' इत्यत्र धात्वंशलोपनिमित्ततया वृद्धिप्रतिषेधहेतावप्यच्प्रत्यये नाऽसौ विकल्पः प्रवर्त्तत इत्यवधेयम् । अत एव क्ङित्यचि वेति वचनं तत्र भाष्ये कृतम् । मृजन्ति । मार्जन्ति । अत्र **हरदत्तः**-अचीत्युच्यमानेपि

[ समाधानान्तरभाष्यम् ]

**अथवा छान्दसमेतत् । दृष्टानुविधिश्छन्दसि भवति ।**

( उद्द्योतः ) छान्दसमिति । 'यङोऽचि चे'ति चेन बहुलं छन्दसीत्यनुकृष्य यङो लुग्विधानादित्यर्थः । न च 'हुश्नु'वोरिति सूत्रस्थेन'हुश्नुवो'रित्यस्य भाषायां यङ्लुक्सत्ताज्ञापकपरभाष्येणोवर्णान्तेभ्यो यङ्लुग्भाषायामप्यस्तीति लभ्यते । अन्यथा ज्ञापितेऽप्यचारितार्थ्यं स्पष्टमेवेति वाच्यम्, तत्प्रामाण्येनाऽजादौ क्ङिति कचित्तत्सत्ताङ्गीकारेऽपि सर्वत्र भाषायां तत्सत्त्वे मानाऽभावात् । तत्रत्यभाष्यस्यैकदेश्युक्तित्वाच्च ।

[ समाधानान्तरभाष्यम् ]

**अथवा-बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः । 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥**

( प्रदीपः ) **बहिरङ्ग इति ।** ततश्चाऽसिद्धत्वादसत्त्वान्निषेधानुपपत्तिरित्यर्थः ॥

( उद्द्योतः ) **गुणो बहिरङ्ग इति ।** गुणस्य बहिरङ्गता-बहिर्भूतसार्वधातुकाश्रयत्वात् । नन्वसिद्धस्याऽनिष्पन्नस्यैव निषेधः क्रियते, तत्राह—**असत्त्वादिति ।** शास्त्राऽसिद्धत्वात्त्राऽसत्त्वबुद्ध्या प्रतियोगिज्ञानाऽभावान्निषेधाऽनुपपत्तिरिति भावः ।

[ समाधानान्तरभाष्यम् ]

**अथवा पूर्वस्मिन्योगे यदार्धधातुकग्रहणं, तदनवकाशम् । तस्याऽनवकाशत्वाद्गुणो भविष्यति ॥**

( प्रदीपः ) **अथवेति ।** ननु बहुव्रीह्यर्थमुभयविशेषणायार्धधातुकग्रहणं स्यादिति कथमनवकाशत्वम् ? । उच्यते—विनाप्यार्धधातुकग्रहणेन बहुव्रीहिर्लभ्यते । यथैकाचो द्वे इत्यत्र । 'रोरवीती'-त्यत्रानैमित्तिकत्वाल्लोपस्य गुणनिषेधः पूर्वेण न प्राप्नोतीत्यार्धधातुकग्रहणसामर्थ्यात्सूत्रान्तरप्राप्तोऽपि निषेधो बाध्यत इत्यर्थः । यङ्निमित्तश्च निषेधोऽन्तरङ्गत्वाद्बाध्यते, न सार्वधातुकनिमित्त इति 'रोरुत' इत्यादौ निषेधो भवत्येव । एतच्च छान्दसत्वमभ्युपेत्य यङ्लुको भाष्यकारेणोक्तम् । भाषाविषयत्वे तु यङ्लुको बहूनि प्रयोजनान्यार्धधातुकग्रहणस्य सम्भवन्ति—तोतोर्ति, तोथोर्ति, दोदोर्ति, दोधोर्ति, जोहोर्ति, मोमोर्त्तीत्यादिषु तुर्वी थुर्वी दुर्वी धुर्वीत्यादिभ्यो यङ्लुकि तिपि वकारच्छकारयो 'राल्लोप' इति लोपे कृतेऽसत्यार्धधातुकग्रहणे बहुव्रीहावप्याश्रिते 'न धातुलोप' इति गुणनिषेधः प्राप्नोति, स मा भूदित्येवमर्थमार्धधातुकग्रहणं स्यात् । अनेन चाऽत्र व्यवधानान्नास्ति निषेध इति सति प्रयोजने कथमनवकाशः स्यात् ॥

( उद्द्योतः ) 'उभयविशेषणाय बहुव्रीह्यर्थ' मित्यन्वयः । **यथेति ।** प्रथमस्येत्येतत्कर्मधारयेऽपि विशेष्यं शक्यं कर्तुमिति न तद्बहुव्रीहित्वगमकमिति भावः । ननु सूत्रान्तरप्राप्तनिवृत्तिः कथं तत्राह—**सामर्थ्यादिति ।** अयमाशयः—**आर्धधातुके** इति योगो विभज्यते । 'धातुलोप'इति वर्त्तते, षष्ठीतत्पुरुषश्च । एवं च 'धात्वेकदेशलोपे सति प्रत्यासत्त्याऽन्तरङ्गतया च लुप्तधात्वेकदेशनिमित्तो गुणवृद्धिनिषेधश्चेदार्धधातुक एवे'ति नियमस्तत्सामर्थ्यादिति । तद्ध्वनयन्नाह—

❀ राजलक्ष्मीः ❀

१ अस्य परिभाषात्वेनाऽप्र[सि]द्ध्या नलुमतेत्यस्याऽनित्यत्वाच्चाह—**अथवेति ।** एत[त्]—रोरवीतीति । २ ननु च्छान्दसत्वमगतिकगतिरत आह—[अ]**थवेति ।** ३ यङ्निमित्तत्वात्प्रतिषेधोऽन्तरङ्ग इत्याशयः । गुणस्तु प्रतिषेधनिमित्तभूतयङपेक्षया बहिर्भूतसार्वधातुकाश्रयत्वाद्बहिरङ्ग इत्याशः । ४ **रोरवीतीति ।** अस्य 'तथाचे'त्यादिः । आर्धधातुकग्रहणं विना तल्लाभे चेति तदर्थः । ५ **आर्धधेति ।** तत्र तद्व्यावृत्त्यर्थं क्रियमाणार्धधातुकग्रहणेत्यर्थः । ६ **निषेध इति ।** सार्वधातुकनिमित्त इति भावः । ७ **यङ्लुकि—**अनैमित्तिके यङ्लुकि । ८ **अनेन—क्ङितिचेति** सूत्रेण । ९ **प्राप्तेति ।** सूत्रान्तरप्राप्तस्य निषेधस्य निवृत्तिरित्यर्थः । १० **धात्विति ।** 'तत्रे'त्यादिः । **तत्पुरुषश्चेति ।** 'आश्रीयते' इति शेषः । शब्दाधिकाररीत्येति भावः ।

❀ शब्दकौस्तुभः ❀

'यस्मिन्विधिस्तदादावल्ग्रहण'इ[ति] सिद्धे आदिग्रहणं मुख्याऽजादिपरिग्रहार्थम् । तेन व्यपदे[शिव]द्भावेनाऽजादौ यूयं ममृज, त्वया ममृजइत्यादौ न भवती[ति । त]च्चिन्त्यम् । मुख्याजादिपरिग्रहे प्रमाणाऽभावात् । [न] हि भाष्ये आदिग्रहणं कृतं, येन त्वदुक्तार्थो लभ्येत, [कि]न्तु 'क्ङित्यचि वे'ति वचनं पठितम् । यत्तु ततः प्रागुक्तं भाष्ये—'इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्त' इति । तत्तु तदादिपरिभाषाबललभ्यवाक्यार्थानुवादमात्रं न तु परकीयविधिवाक्यशरीरमिदं येन त्वदुक्तमर्थं ज्ञापयेत् । अत एवाऽत्रेयो 'मृजेति भिदादिपाठादङ्, गणपाठादेव वृद्ध्यभाव' इत्याह । अत एव रक्षितेनापि धातुप्रदीपे—तुन्दपरिमृजस्तुन्दपरि-

यङ्निमित्तश्चेति । भाषेति । 'दुक्षुवोः सार्वधातुक' इत्यत्र हुश्नुग्रहणादिति भावः । **इत्यादिभ्य** इति । आदिना दुर्छामुर्छे । **राल्लोपइति** । तत्र हि क्ङितीति नानुवर्त्तते । तदनुवृत्तिपक्षे तोतोर्मीत्याद्युदाहरणम् । नन्वेवमपि क्ङिति चेति निषेधोऽत्र दुर्वार[1] इति तद्वारणं विनाऽस्य चारितार्थ्यं कथमत आह–**अनेनेति** । बहिरङ्ग**राल्लोप**स्यान्तरङ्गे यङाश्रये प्रतिषेधे कार्येऽसिद्धत्वाद्वाभ्यां व्यवधानात्तद[3]प्राप्तिः । सनः कित्त्वेन तु एकव्यवधानमेवाश्रितमिति भावः । वस्तुतस्तु भाष्यप्रामाण्यादेषां प्रयोगाणां लोकेऽभाव इत्येवाश्रयणीयम् ॥

[ आक्षेपभाष्यम् ]

**इह कस्मान्न भवति—लैगवायनः' 'कामयते ? ॥**

[ सिद्धान्तिसमाधानवार्तिकम् ]

*॥*॥ तद्धितकाम्योरिक्प्रकरणात् ॥*॥*

( भाष्यम् ) **इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैते इग्लक्षणे ॥**

**(प्रदीपः ) इग्लक्षणयोरिति** । 'इक'इत्येवं ये गुणवृद्धी तयोर्निषेध इत्यर्थः ॥

**( उद्द्योतः )** नन्विग्लक्षणयोरित्युक्तावपि लैगवायने इक्स्थानिकत्वेनेग्लक्षणत्वात्स्यादेव गुणनिषेधोऽत आह–**इक इतीति** । अर्थाधिकारानुरोधेन पदपरमेवेक इति सम्बध्यते इति भावः ॥

[ आशङ्कावार्तिकम् ]

*॥*॥ लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्गः ॥*॥*

**लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावः प्राप्नोति–अचिनवम् असुनवम् अकरवम् ॥**

**( प्रदीपः ) लकारस्येति** । अनुबन्ध इत्संज्ञकत्वाल्लोपात्स्थानिनि न सन्निधीयत इत्यनल्विधाविति निषेधो न प्रवर्तते । 'पिन्ङिन्न भवति' 'ङिच्च पिन्न भवती'ति भाष्यकारस्य कल्पना, न वार्तिककारस्येति दोषोपन्यासः ॥

**( उद्द्योतः ) लोपादिति** । पदार्थोपस्थितिकाल एवान्तरङ्गत्वाल्लोपप्रवृत्तिरिति भावः । **पिन्ङिन्नेति** । 'सार्वधातुक'मित्यत्राऽपिदिति योगविभागेन प्रसज्यप्रतिषेधेनाऽयमर्थो[4] लभ्यते । तत्र योगविभागसामर्थ्यात्स्थानिवत्त्वप्राप्ता अन्या वा ङित्त्वप्राप्तिः सर्वा प्रतिषिध्यत इत्याशयः । भाष्ये–**स्थानिवद्भावः प्राप्नोतीति** । तथा चाऽचिनवमित्यादौ गुणनिषेधप्रसङ्ग इति भावः ॥

---

❀ राजलक्ष्मीः ❀

१ **दुर्वार इति** । 'तेन तद्वारणं वृथैव स्यादिति' इति शेषः ।

२ **बहिरङ्गेति** । तिबाश्रयत्वादिति भावः ।

३ **तदिति** । **क्ङिती**तिनिषेधेत्यर्थः ।

४ **अयमर्थः**–ङिच्च पिन्न पिच्च ङिन्नेत्ययमर्थः ।

---

❀ शब्दकौस्तुभः ❀

मार्ज इत्युभयं दर्शितम् । **दुर्घटवृत्तौ** तु 'तुन्दपरिमृज'इत्यत्र व्यवस्थितविभाषया वृद्धिर्नेत्युक्तम् । अत एव **धातुवृत्तिषु** यूयं ममृज ममार्जेति रूपद्वयमुदाहृतम् । यत्तु मुख्याजादिग्रहणवादिनोऽपि मतेऽत्र वृद्धिविकल्पो दुर्वार एव । तथाहि–मध्यमपुरुषबहुवचनस्य थस्य परस्मैपदानामिति सूत्रेण विधीयमानोऽकारादेशोऽलोन्त्यस्य प्राप्नोति । न चैवं विधिवैयर्थ्यम्, णलादीनां यथासंख्यसम्पादनेन चरितार्थत्वादित्याशङ्क्य भाष्यएव द्वेधा समाधास्यति–अकारद्वयात्मकोऽयमनेकाल्त्वात्सर्वादेशः, यद्वा धातोरित्यधिकारादादेः परस्येति थकारमात्रस्याऽकार इति । तत्र पक्षद्वयेऽप्यतो गुणे इति पररूपस्याऽचः परस्मिन्निति स्थानिवद्भावान्मुख्याजादित्वमप्यस्त्येवेति कैश्चि**द्धरदत्तमिश्र**मते दूषणमुक्तम् । तन्न । 'आद्यन्तव'दित्यतिदेश इव स्थानिवद्भावेऽपि मुख्यत्वाभावस्य सुवचत्वादिति दिक् ।

स्यादेतत्–अचिनोदमार्ट् इत्यादौ स्थानिवद्भावेन तिपो ङित्त्वात् क्ङितिचेति गुणवृद्धिनिषेधः स्यात् । न चाऽल्विधित्वात्स्थानिवद्भावाऽसम्भवः । अनुबन्धकार्येष्वनल्विधाविति निषेधस्याऽप्रवृत्तेः । अन्यथाऽचिनवममार्जमित्यादावपित्त्वेन सार्वधातुकमपिदिति ङित्त्वापत्तेः । इह च ज्ञापकं 'नल्यपी'ति सूत्रम् । अन्यथा ल्यपः कित्त्वाऽभावादेवेत्त्वाप्राप्तौ किन्तन्निषेधार्थेन सूत्रेण?। यत्तु 'सेर्ह्यपिच्चे'त्यपिद्वचनं ज्ञापकमिति, तन्न, 'शृणोहि विश्वतः प्रती'त्यादौ स्थानेन्तरमपरिभाषया पित्त्वादनुदात्तस्य सिपः स्थानेऽनुदात्तस्यैव हेः प्राप्तावुदात्तसम्पादनेन चरितार्थत्वात् । अपित्त्वसामर्थ्याद्धि तत्रान्तरतमपरिभाषा बाध्यते । प्रतिपत्तिलाघवार्थ**मुदात्त** इति वक्तव्येऽपिद्वचनं ज्ञापकमिति वाऽस्तु । न्यायसिद्धोऽप्ययमर्थः- अनुबन्धानामनेकान्तत्वेन स्थानिकोटावप्रविष्टतया स्थान्यलाश्रयविधिविषयकस्यानल्विधाविति निषेधस्याऽप्रवृत्तेः । 'अनुबन्धा एकान्ता'इति मतेऽपि स्थानित्वप्रतीतेः प्रागेवान्तरङ्गेण लोपेन तेषामपहारात् । तस्माल्लादेशानां तिबादीनां स्थानिवद्भावेन ङित्त्वं दुर्वारमिति । अत्राहुः–'यासुट् परस्मैपदे'ष्विति, सूत्रे ङिद्वचनं ज्ञापकं–'लादेशानां स्थानिवद्भावेन ङित्वन्न भवती'ति । तथाच वार्तिकम्–**लकारस्य ङित्त्वा-**

[ एकदेशिनः परिहारवार्तिकम् ]

*॥*॥ लकारस्य ङित्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात्सिद्धम् ॥*॥*

**यदयं यासुटो ङिद्वचनं शास्तितज्ज्ञापयत्याचार्यो-'न ङिदादेशा ङितो भवन्ती'ति ॥**

[ आक्षेपभाष्यम् ]

**यद्येतज्ज्ञाप्यते, 'कथं-'नित्यं ङितः'-'इतश्चे'ति ? ॥**

( प्रदीपः ) **कथं नित्यं ङित इति**। ननु ङितो लकारस्येति तत्रार्थः स्थितो न तु ङित आदेशस्येति। अन्यथा 'पचावः' 'पचन्ती'ति लोपः स्यात्[1]। एवं मन्यते-यासुटो ङित्त्वेन ज्ञापकेन स्थानिन एव लकारस्य ङिद्व्यपदेश उच्छिद्यते। ङका[2]रोच्चारणं तु **लुङ्लङ्लृङ्ङित्यादौ** विशेषणार्थं स्यात् ॥

( उद्द्योतः ) **ननु ङित इति**। तथा च न स्थानिवत्त्वेन ङित्त्वं प्राप्यमिति भावः। **ङिद्व्यपदेश इति**। स्थानिलसंबन्धिङस्येत्संज्ञाऽभाव एव ज्ञाप्यते। **लस्येत्यस्य** लघटितस्येति व्याख्या कार्येत्यर्थः ॥

[ समाधानभाष्यम् ]

**'ङितो यत्कार्यं तद्भवति, ङिति यत्कार्यं तन्न भवती'ति ॥**

( प्रदीपः ) **ङितो यदिति**। स्थानिवद्भावेन लादेशे ङिति यत्कार्यं पूर्वस्य तन्न भवतीति ज्ञाप्यते, न तु स्थानिन एव ङिद्व्यपदेश उच्छिद्यते। अन्यथा 'नित्यं ङित' इत्येतन्निर्विषयं स्यात् ॥

( उद्द्योतः ) **यत्कार्यं पूर्वस्येति**। 'प्राप्त'मिति शेषः। **नन्विति**। प्रथमोपस्थितेत्संज्ञाशास्त्रबाधापेक्षया स्थानिवत्त्वबाध एव युक्त इति भावः। युक्त्यन्तरमप्याह-**अन्यथेति**। लङ्लिङादेर्ङिद्व्यपदेशस्योच्छिन्नत्वादित्यर्थः। ङित आदेशस्येत्यर्थस्तु नेत्युक्तमेव ॥

[ उक्तिप्रत्युक्तिभाष्यम् ]

**किं वक्तव्यमेतत् ? ॥ न हि कथमनुच्यमानं गंस्यते ? ॥ यासुट एव ङिद्वचनात्। अपर्याप्तश्चैव हि यासुट्समुदायस्य ङित्त्वे। ङितं चैनं करोति। तस्यैतत्प्रयोजनं-'ङितो यत्कार्यं तद्यथा स्यान्ङिति यत्कार्यं तन्[3]माभू'दिति ॥ [ क्ङिति च ] ॥५॥**

( प्रदीपः ) **यासुट एवेति**। ङितो यत्कार्यं तद्यासुटो न किंचिदतिदेष्टव्यमस्ति, किंतु ङिति यत्कार्यं विधीयते संप्रसारणादिकं तदतिदिश्यते। तच्चेत्स्थानिवद्भावेन स्याददतिदेशोऽनर्थकः स्यादित्यतिदेशः क्रियमाणो ङिति यत्कार्यं तदभावस्यैव ज्ञापकः। **अपर्याप्तश्चेति**। समुदायस्य ङिद्व्यपदेशे कर्तव्ये यासुडसमर्थः। यासुट एव ह्यनेन ङित्त्वं क्रियते, न समुदायस्य। क्ङिति चेत्यत्र तन्निमित्तग्रहणस्य प्रत्याख्यातत्वादगुणनिमित्तेऽपि यासुटि ङिति गुणनिषेधः सिध्यति। यदि समुदाये स्थानिवद्भावेन ङित्कार्यमभविष्यद्यासुटो ङित्त्वं न व्यधास्यत्। विहितं तज्ज्ञापयति-'ङिति यत्कार्यं तल्लादेशे न भवती'ति। केषांचित्पाठः-**'सुपर्याप्तश्चैव ही'ति**। तत्रावयवङित्त्वद्वारेण समुदाये ङित्त्वं विधीयत इति व्याख्येयम्। एवं (हि) क्ङितीति निमित्तसप्तमीपक्षेऽपि गुणनिषेधः सिद्ध्यति। अस्मिन्पक्षे 'ङितं चैनं करोती'ति समुदायः परामृश्यते ॥ **[ क्ङिति च ]** ॥५॥

❀ राजलक्ष्मीः ❀

१ सकारस्येकारस्य च लोपः स्यादित्यर्थः। २ नन्वेवं ङकारोच्चारणं व्यर्थं स्यादत आह—**ङकार इति**। ३ **माभूदिति**। अस्य 'स्थानिवत्त्वेने'त्यादिः।

❀ शब्दकौस्तुभः ❀

**दादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात्सिद्धमिति**। ननु 'स्तुया'दित्यादावनिग्लक्षणवृद्धिप्रतिषेधार्थं, 'चिनुयु'रित्यादौ 'जुसिचे'त्यस्य प्रतिषेधार्थंच यासुटो ङित्त्वमस्तु। 'उतो वृद्धिर्लुकि हली'त्यत्र लुत इति निर्दिष्टस्थानिकतयेक्परिभाषा नोपतिष्ठते। 'जुसि चे'ति तु क्ङितिचेत्यस्याऽपवाद एव। तथा च स्थानिवद्भावलब्धं ङित्त्वं स्तुयाच्चिनुयुरित्यत्र वृद्धिगुणौ निषेद्धं नाऽलम्। पुनर्ङित्त्वसामर्थ्यात्तु तदुभयनिषेधो भविष्यति, तथा च वृद्धिगुणनिषेधे चरितार्थं यासुटो ङित्त्वङ्कथं लादेशेषु लाश्रयङित्त्वस्य विरहं ज्ञापयेदिति चेत्। उच्यते। 'उत औ'दिति वक्तव्ये वृद्धिग्रहणं संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येवमर्थम्। तेन 'स्तुया'दित्यत्र न वृद्धिः। तथा 'चिनुयु'रित्यत्र न गुणः' 'क्सस्याची'त्यतोऽचीत्यनुवर्त्याऽजादौ जुसि गुणविधानात्। 'मिदेर्गुणोऽजुसि चे'त्यकारं प्रश्लिष्याऽच्चासावुस् चेति कर्मधारयाश्रयणेनाऽजादावुसि गुणविधानाश्रयणे तु चक्रुर्जहुरित्यादावतिप्रसङ्गः। 'गुणे'ति लुप्तविभक्तिकमु जुसीति च च्छेदः। उकारादौ जुसीति वार्थः।

**( उद्द्योतः ) तदभावस्यैवेति ।** ज्ञापकस्य सजातीयापेक्षत्वादिति भावः। भाष्ये-**यासुट एवे**त्यस्य 'न समुदायस्ये'त्यर्थः, एवस्यावधारणार्थत्वात्। यदि समुदायस्य ङित्त्वं स्यात्तदा ङितो यत्कार्यं तदपि तत्रै प्राप्तियोग्यमिति तदभावमपि ज्ञापयेत्। तथा हि 'नित्यं ङित' इत्यादेर्ङित आदेशस्येत्येवार्थः। 'पचावः' 'पचन्ती'त्यादौ तु न दोषः। 'सार्वधातुकमपि'दित्यत्रानुवृत्तङिदित्यस्य लुप्तसप्तमीकतया ङितीव कार्यस्यैवातिदेशादिति भावः। न च यासुटि ङिति किंचित्कार्यं प्राप्नोति, तन्निमित्तग्रहणेन निषेधाऽप्राप्तेरिति वाच्यम्, संप्रसारणप्राप्तेः। न हि तत्र प्रत्यय इत्यस्तीत्याहुः। नन्ववयवे कृतस्य लिङ्गस्य समुदायविशेषकत्वाद्यासुड् ङिदित्युक्तावपि समुदायस्य ङित्त्वं भवत्येव। अत एव तन्निमित्तग्रहणेऽपि निषेधः सिध्यति। तच्च स्थानिवत्त्वेन सिद्धमिति व्यर्थं ङित्त्वं स्थानिनो ङिद्व्यपदेशोच्छेदेऽपि ज्ञापकं स्यात्, ङितो यत्कार्यं तदभावस्यापि वा ज्ञापकं स्यादत आह-भाष्ये **अपर्याप्तश्चैवेति ।** अस्य ङित्त्वस्य केवले आगमे संप्रसारणविधानेन चरितार्थत्वात्। अवयवेऽचरितार्थस्यैव च समुदायविशेषकत्वम्। अत एव 'पठिता विद्ये'त्यादौ ङीम्नेति भावः। **ङितं चैनमिति ।** अवयवमित्यर्थः। **यासुट एव हीति ।** यासुड्-ङिदिति सामानाधिकरण्यात्। यासुट्पदस्य स्वविधानाय स्वरूपपरस्य ङित्त्वसंबन्धे तदादौ लक्षणायां मानाऽभावः। **प्रत्याख्यातत्वादिति।** स्वरितत्वप्रतिज्ञानात्समुदायगतनिमित्तत्वस्याऽवयवे आरोपादपि निषेधप्रवृत्तिरित्यन्ये। **यदि समुदाये इति ।** ननु स्थानिवत्त्वे समुदायस्य ङित्त्वे यासुटः कथं ङित्त्वमिति चेत्। न। तन्ङित्त्वसाध्यफलस्य तावतापि सिद्धेरिति भावः। **केषांचिदिति ।** अत्र पाठे-'यासुट एवे'त्येवकारः प्रसिद्ध्यर्थकः। केवलयासुटो ङित्त्वं व्यर्थं, गुणनिषेधे तन्निमित्तग्रहणात्। संप्रसारणमपि धात्वाक्षिप्ते प्रत्यये एव। एवं च सामर्थ्यात्समुदायविशेषकं तदिति भावः। **ङितं चैनमिति।** 'स्थानिवत्त्वेन ङित्त्वे सिद्धेऽपी'ति शेषः। **ङितो यत्कार्यमित्यादि ।** ज्ञापकस्य सजातीयापेक्षत्वादिति भावः। नहि यासुड्विशिष्टस्य ङित्त्वप्रयुक्तं किंचिदनेन ङित्त्वेन प्राप्नोति। 'नित्यं ङित' इत्यस्य च ङितो लस्येत्येवार्थात्। आदेशस्य ङित इत्यर्थे तु दोष उक्त एव। 'सार्वधातुक'मित्यादौ ङिदित्यस्य उपमेये प्रथमादर्शनेन सप्तम्यन्तताया अन्याय्यत्वादिति भावः। नन्विदं ङित्त्वं 'स्तुया'दित्यादावनिग्लक्षणवृद्धिबाधनार्थं, 'चिनुयु'रित्यादौ जुसिचेति निषेधार्थं च चरितार्थमिति चेन्न, **'ङिच्च पिन्न'**ति भाष्योक्तकल्पनयैव सिद्धेः। एतदर्थमेव हि भाष्ये तत्स्वीकारः। यत्तु--संज्ञापूर्वकविधेरनित्यत्वेन वृद्धिवारणम्, अतएवोत **औदिति** नासूत्रीति। तन्न। अस्यार्थस्य भाष्याऽस्पृष्टत्वात्। 'ज्ञाजनोर्जे'त्यस्याऽङ्गवृत्तपरिभाषाज्ञापकत्वपरभाष्यासङ्गतेश्च। अनयैवाऽन्यथासिद्धेः। जुसिचेत्यत्र चसस्या चीत्यतोऽचीत्यनुवर्त्याऽजादौ जुसि गुणविधानान्न 'चिनुयु'रित्यत्र दोषः। एवं च अत्रत्यपूर्वपक्षसिद्धान्तावेकदेशिन एवेति बोध्यम्।
**[ ङिति च ] ॥ ५ ॥**

---

## दीधीवेवीटाम् ॥१।१।६॥

[ आचार्यैकदेशिनः सूत्राक्षेपभाष्यम् ]

**किमर्थमिदमुच्यते ?॥**

[ एकदेशिनःसमाधानभाष्यम् ]

**'गुणवृद्धी मा भूता'मिति । आदीध्यनम् आदीध्यकः । आवेव्यनम्-आवेव्यकः ॥**

[ सिद्धान्तिनो दीधीवेवीप्रत्याख्यानभाष्यम् ]

**अयं योगः शक्योऽकर्तुम् ॥ कथम् ?॥**

---

**ॐ रत्नलक्ष्मीः ॐ**

१ **तत्र**-यासुड्विशिष्टे। २ **अस्य**-यासुटः। ३ **अत एव**-तत्राऽचरितार्थस्यैव तद्विशेषकत्वादेव। अन्यथेटिष्टत्वस्याऽवयवत्वसम्पादकस्याऽपि समुदायविशेषकत्वाट्टिड्ढेतिङीप्यादित्याशयः। ४ यासुड्ङित्त्वेत्यर्थः। ५ गुणनिषेधादेः। **तावतापि**-समुदायङित्त्वेनापि। ६ उपमानोपमेययोः समानविभक्तिकत्वनियमाल्लुप्तसप्तम्यन्तत्वकल्पनाऽन्याय्येत्याशयः। ७ 'उतोवृद्धि'रितीत्यर्थः॥

---

**ॐ शब्दकौस्तुभः ॐ**

**'जुसि गुणे यासुट्प्रतिषेध'** इति वार्त्तिकमप्युक्तरीत्या सिद्धार्थकथनपरमिति तावद्वार्तिककारस्य हृदयम्। भाष्यकारमते तु 'सार्वधातुकमपि'दितिसूत्रे 'ऽपि'दिति योगं विभज्य 'ङि'दिति चानुवर्त्याऽऽवृत्तिंचाश्रित्य 'ङिच पिन्न भवती'ति 'पिच ङिन्न भवती'ति वाक्यार्थद्वयं वर्ण्यते। इदञ्च 'हलः श्न'इति सूत्रे भाष्ये स्पष्टम्। तेन 'ॠता'दित्यत्र ॠव ईण्न, तातङ औपदेशिकङित्त्वेनान्तरङ्गेणातिदेशिकस्य बहिरङ्गस्य पित्त्वस्य बाधात्। 'अतिदिष्टादुपदिष्टं बलीय'इति न्यायात्। 'अचिनो'दित्यादौ त्वौपदेशिकेन तिवादीनां पित्त्वेन लाश्रयमातिदेशिकं ङित्वम्बाध्यते। तेन गुणादिसिद्धिः। अस्मिंश्च पक्षे यासुटो ङित्त्ववचनं न ज्ञापकं, किन्तु मृज्यादित्यादावप्राप्तङित्त्वविधायकम्। तेन च पित्त्वस्य 'चिनोती'त्यादौ सावकाशस्य बाधोऽतः 'स्तुया'दित्यादौ 'पिति हली'ति विधीयमाना वृद्धिर्न प्रवर्त्तते। 'चिनुयु'रिति तु प्राग्वदेव समर्थनीयम्। पूर्वोदाहृतवार्त्तिकमते तु 'ॠता'दित्यत्रेट् प्राप्नोति 'आगमशासनमनित्य'मिति तु कथं चित्समाधेयः। वस्तुतस्तु 'हलः श्नः शानज्झा'विति शानचः शित्करणेन 'क चिदनुबन्धकार्येऽप्यनल्विधाविति निषेधः प्रवर्त्तते'इति ज्ञाप्यते। तेन 'ॠता'दित्यादौ न कश्चिद्दोष

[ सिद्धान्तवार्तिकम् ]

*॥*॥ दीधीवेव्योश्छन्दोविषयत्वाद् दृष्टानुविधित्वाच्च छन्दसश्छन्दस्यदीधेददीधयुरिति च गुणदर्शनादप्रतिषेधः ॥*॥*

'दीधीवेव्योश्छन्दोविषयत्वात्'। दीधीवेव्यौ छन्दोविषयौ। दृष्टानुविधित्वाच्चच्छन्दसः। दृष्टानुविधिश्च छन्दसि भवति। अदीधेद्-दीधयुरिति च गुणस्य दर्शनादप्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः। 'प्रजापतिर्वै यत्किंचन मनसादीधेत्'। 'होत्राय वृतः कृपयन्नदीधेत्'। 'अदीधयुर्दाशराज्ञे वृतासः॥

( प्रदीपः ) दीधीवेवी ॥ छन्दोविषयत्वादिति। भाषायामेतयोः प्रयोगाऽभावात्। दृष्टानुविधिश्चेति। यद्यपि भाषायामपि दृष्टमेवानुविधीयते 'सिद्धे शब्दार्थसंबन्धे' इति न्यायात्तथाप्यादीध्यनमित्यादिप्रयोगश्छन्दसि नास्ति। दृष्टस्यैव छन्दस्यनुविधानमित्यर्थो, न तु च्छन्दस्येव दृष्टानुविधानमिति। अथवा दृष्टानुविधिरित्यस्याऽयमर्थः–'गुणश्छन्दसि दृश्यते न तु सर्वत्र गुणनिषेध'इति। अदीधेदिति। लङ्। व्यत्ययेन तिप्। अदीधयुरिति। 'जक्षित्यादयः ष'डित्यभ्यस्तत्वाज्जुसादेशः (झेः[2]) ॥

( उद्द्योतः ) दीधी। भाषायामिति। अनन्य भावो हि विषयशब्दार्थ इति भावः। दृष्टस्यैवेति। भाषायां तु संप्रति प्रयोगेऽदृष्टस्यापि व्याकरणान्तराऽनुसारेण, शिष्टप्रयोगादिना वाऽवगतसाधुत्वस्याप्यनुविधानमित्यर्थः। एवं च वेदे 'आदीध्यन'मित्यादिलक्ष्याऽभावादसंभवदुक्तिकं सूत्र[3]मिति भावः। अथवेति। एवं च लक्षणस्याऽव्याप्तिप्रतिपादकं भाष्यमिति भावः। व्यत्ययेनेति। दीधीङो ङित्त्वात्। परस्मैपदोपलक्षणं–तिबिति ॥

[ तटस्थस्योदाहरणे आक्षेपभाष्यम् ]

भवेदिदं युक्तमुदाहरणम्–'अदीधे'दिति। इदं त्वयुक्तम्–'अदीधयु'रिति। अयं जुसि गुणः प्रतिषेधविषय आरभ्यते, स यथैव 'क्ङिति चे'त्येतं प्रतिषेधं बाधते, एवमिममपि बाधेत ॥

[ समाधानभाष्यम् ]

नैष दोषः, जुसि गुणः प्रतिषेधविषय आरभ्यमाणस्तुल्यजातीयं प्रतिषेधं बाधते॥

कश्च तुल्यजातीयः प्रतिषेधः ? ॥

यः प्रत्ययाश्रयः। प्रकृत्याश्रयश्चायम् ॥

( प्रदीपः ) प्रकृत्याश्रयश्चायमिति। ततश्चाऽन्तरङ्गत्वादनेनैव भाव्यमित्यर्थः ॥

( उद्द्योतः ) अन्तरङ्गत्वादिति। नन्वेवं बहिरङ्गस्य जुसि गुणस्य कथमनेन निषेधः[4] इति चेन्न, सर्वस्यापि गुणस्य प्रत्ययाश्रयत्वेन बहिरङ्गतयाऽन्तरङ्ग[5]निषेध्याभावादिति भावः ॥

---

❀ राजलक्ष्मीः ❀

१ उक्तभाष्यस्य तथाऽर्थकत्वे च। २ दीधीवेवीत्यंश इत्यर्थः। ३ दीधीवेवीतिप्रतिषेधः। ४ निषेधप्रसङ्ग इत्यर्थः। ५ अन्तरङ्गस्य निषेध्यस्याऽभावादित्यर्थः।

---

* शब्दकौस्तुभः *

इति। अत एव भाष्यमते-मविषोष्टेत्यत्र ङित्वन्न, करिष्यमाणेत्यत्रोगिल्लक्षणष्टिल्लक्षणश्च ङीब्नेति दिक् ॥ [ क्ङिति च ]

दीधीवेवीटाम् ॥ दीधीवेव्योरिटश्च गुणवृद्धी न स्तः। आदीध्यनम् आदीध्यकः। आवेव्यनम् आवेव्यकः। अकणिषम् अरणिषम्। 'कणिता श्वो' 'रणिता श्वः'। इहाऽमं प्रति सिजन्तमङ्गम्। तिपो डादेशं प्रति तु कणिद्रणिदिति तान्तमङ्गं, तस्यामं डादेशं च सार्वधातुकं निमित्तीकृत्य लघूपधगुणः प्राप्तोऽनेन निषिध्यते। वृद्धिस्त्विटो न सम्भवत्येव। लुडन्ततां स्फोरयितुं 'श्व'इत्यस्य प्रयोगः। न हि तृजन्ते तृन्नन्ते वेटो गुणप्राप्तिः, प्रत्ययावयवत्वात्तस्य। अथ 'दीङ् क्षये' 'धोङ् अनादरे' 'वेञ् तन्तुसन्ताने' 'वी गत्यादिपु' एषामपीह ग्रहणं कुतो नेति चेन्न। अवयवप्रसिद्ध्यपेक्षया समुदायप्रसिद्धेर्बलवत्त्वात्। किंच चतुर्णां ग्रहणेऽभिप्रेतेऽसन्देहार्थं 'वेदीधीवीटा'मित्येव ब्रूयात्। इट् चात्रागम एव गृह्यते, न 'इट् गता'विति धातुः। ननु धातुसाहचर्याद्धातुरेव गृह्यताम्। मैवम्। साहचर्यस्य सर्वत्राऽनियामकत्वात्। अन्यथा 'द्विस्त्रिश्चतुरिति कृत्वोर्थे'इति सूत्रे 'कृत्वोर्थे'ग्रहणं न कुर्यात्। 'द्विस्त्रि'रिति सुजन्ताभ्यां साहचर्येण 'चतु'रित्यस्यापि सुजन्तस्य ग्रहणसम्भवात्। अत एवागमापेक्षया प्रकृतेरभ्यर्हितत्वाद्दीधीङः पूर्वनिपातः सूत्रे कृतः, इटोऽपि धातुत्वे तु प्रकृतित्वाऽविशेषेऽप्यल्पाच्तरत्वात्तस्यैव पूर्वनिपातः स्यात्।

अत्रेदमवधेयम्–दीध्यको वेव्यक इति यदुदाहृतं तदी-

---

१ 'दृष्टानुविधानमिति' पा०।

२ अयं पाठः कल्पितः।

[ समाधानान्तरभाष्यम् ]

**अथवा-येन नाऽप्राप्ते तस्य बाधनं भवति । न चाऽप्राप्ते 'क्ङिति चे'त्येतस्मिन्प्रतिषेधे जुसि गुण आरभ्यते । अस्मिन्पुनः प्राप्ते चाऽप्राप्ते च**

( प्रदीपः ) येन नाप्राप्त इति । कार्यविशेषचिन्तापेक्षायाञ्चायं न्यायो,न तु कार्यसामान्यं बाध्यमित्यस्यापेक्षायामेतन्न्यायाऽवतारः ॥

( उद्द्योतः ) सर्वत्रैतन्न्यायानाश्रयणे हेतुमाह-कार्यविशेषेति । यच्छब्देन तत्तद्रूपेण कार्याणां परामर्शादिति भावः । केचित्तु-सामान्यचिन्ताविषयेऽप्येतं न्यायं योजयन्ति तदा येनेत्यस्यर- वेतरेणेत्यर्थः ॥

[ आरम्भवादिन आक्षेपभाष्यम् ]

**यदि तर्ह्ययं योगो नारभ्यते कथं-'दीध्ये'दिति ?**

( प्रदीपः ) कथं दीध्यदिति । लेट् तिप् ।

( राजलक्ष्मीः ) १ अवश्यप्राप्ते ।

२ अत्र गुणापत्तिरित्याशयः ।

❀ शब्दकौस्तुभः ❀

धीवेवीभ्यां शुद्धाभ्यामेव ण्वुलि रूपं न तु ण्यन्ताभ्यामपि । यत्तु 'यीवर्णयो'रिति सूत्रे हरदत्तेनोक्तम् ,-वर्णशब्दो वर्णविस्तारे इति धातोः पचाद्यजन्तः श्रूयमाण एव वर्णे यथा स्याल्लुप्ते मा भूदित्येवमर्थः, तेन ण्यन्ताभ्यां ण्वुलि णिलोपस्य पूर्वविधौ स्थानिवत्त्वेपि श्रूयमाणत्वाऽभावाल्लोपाऽभावे यणि कृते 'दीध्यको' 'वेव्यक' इत्येव शुद्धेन समानाकारं रूपं भवती'ति । तदेतन्नाग्लोपिशास्वृदितामित्येतस्मिन्सूत्रे भाष्यकारैरेव ण्यन्तस्य दीधक इति रूपं, शुद्धस्य तु दीध्यक इति व्युत्पादितत्वात्सिद्धान्तविरोधादुपेक्ष्यम् । तत्र हि वर्णग्रहणं लुप्तेऽपि वर्णे यथा स्यादित्येवमर्थमित्याशङ्क्य स्थानिवद्भावेन सिद्धेरन्तरङ्गत्वाण्णिलोपात्प्रागीवर्णयोरिति लोपसिद्धेश्च वर्णग्रहणं प्रत्याख्यातम् । ननु वर्णग्रहणं कुर्वतः सूत्रकारस्याशयं भाष्यकारोक्तादन्यमेवानुसृत्य ब्रूम इति चेत्, सत्यम् । तथापि यथोत्तरं मुनीनां प्रामाण्याद्रूपाऽशुद्धिस्तदवस्थैवेति दिक् । स्यादेतत्-दीधीवेव्योर्ङित्त्वात्क्ङिति चेति सूत्रेणैव निषेधोऽस्तु किमिह दीधीवेवीग्रहणेन ? । मैवम् । 'इग्लक्षणयोर्हि स निषेध' इत्युक्तम् , न चाऽचो ञ्णितीति वृद्धिरिग्लक्षणा । किञ्च कार्यिणो निमित्तत्वे पूर्वेण सिद्धिः सम्भवेदपि । नच कार्यी निमित्ततयाश्रीयते, च्यवते प्लवते इत्यादावपि गुणनिषेधापत्तेः । अत्र च लिङ्गं-कुटादिमध्ये 'कूङ् शब्दे' इत्यस्य पाठः, 'स्थण्डिलाच्छयितरी'ति निर्देशश्च । यत्तु प्रकृतसूत्रे दीधीवेव्योर्ग्रहणमेवैतत्परिभाषाज्ञापकमिति । तन्न । अनिग्लक्षणवृद्धिनिषेधेन चरितार्थत्वात् । भाष्यमत एतत्सूत्रस्य प्रत्याख्यास्यमानतयोक्तपरिभाषायां लिङ्गान्तरस्यैवानुसर्त्तव्यत्वाच्च ।

स्यादेतत्-यदि कार्यी निमित्तत्वेन नाश्रीयते कथं तर्हि 'ऊर्णुनविषती'त्यत्र 'द्विर्वचनेची'ति नुशब्दस्य द्वित्वम्, 'इष'इत्यस्य अजादित्वेपि द्वित्वं प्रति कार्यिमध्ये प्रविष्टतया निमित्तत्वाऽसम्भवात् । 'सन्यङो'रिति षष्ठीमाश्रित्य सन्नन्तस्य द्वित्वविधानात् । अन्यथा 'प्रतीषिषती'ति सनो द्वित्वं न स्यात् । यत्तु 'सन्यङो'रिति सप्तम्याश्रयणेऽपि सन्यङोरकारोच्चारणसामर्थ्याद्वित्वं भविष्यतीति, तन्न, 'दित्स'भित्सादिभ्यो यङुत्पत्तिप्रतिबन्धेनाऽचो यदिति यत्प्रत्ययोत्पादनेन चाऽकारोच्चारणस्य चरितार्थत्वात् । अन्यथा 'अरिरिषती'त्याद्यसिद्धेश्च । यदि हि तत्रापि स्थानिवत्त्वादिसो द्विर्वचने कृते 'ऽरीषती'ति स्यात् । अत्रोच्यते-'कार्यमनुभवन्नेव कार्यी निमित्ततया नाश्रीयत'इति परिभाषार्थः । 'अरिरिषती'त्यत्र अजादेर्द्वितीयस्येति 'रिस्'शब्दे द्वित्वप्रवृत्तिः । तदन्तर्गतश्चेस्शब्द इति नाऽसौ द्वित्वं प्रति निमित्तं । कार्यभाक्त्वात् । 'ऊर्णुनविषती'त्यत्र तु 'नव'शब्दस्य द्वित्वं प्राप्तन्तदनन्तर्गतश्चेसुशब्द इति भवत्येव निमित्तं । तद्भावभावितामात्रेणेह निमित्ततेति 'सन्यङो'रिति सूत्रे भाष्यकारैरेव स्फुटीकृतत्वात् । तथा च 'द्विर्वचनेची'ति स्थानिवद्भावान्नुशब्दस्य द्वित्वमुचितमेव । यत्तु 'द्विर्वचनेची'ति सूत्रे 'अचि किं ? जेघ्रीयते देध्मीयत इति प्राचां प्रत्युदाहरणन्तदापाततः । 'घ्रीय्' 'ध्मीय्' इत्यस्य द्वित्वमात्रत्या 'ईघ्राध्मो'रितीत्वं प्रति निमित्तभूतस्य यङो द्वित्वमप्रत्यनिमित्तत्वात् । तस्मात्त्वत्राऽचीत्यस्याऽधिजगइत्येतदेव व्यावर्त्यं बोध्यम् । 'गाङ् लिटी'ति द्वित्वकरकनिर्देशमाश्रित्य लावस्थायामेव गाङादेशविधानात् । अज्ग्रहणन्तु ज्ञापकं रूपस्थानिवद्भावस्येतित्रत्वत्वार्तिकमप्यधिजगइत्येतस्मिन्नुदाहरणे कार्यातिदेशाश्रयणेऽज्ग्रहणवैयर्थ्यं स्यादित्येवं योज्यमिति दिक् । यत्त्वसिद्धवत्सूत्रे वक्ष्यते 'ऽत्रग्रहणं समानाश्रयप्रतिपत्त्यर्थ'मिति । तन्न । आश्रयत्वं स्थानितया निमित्ततया वा कथञ्चिदाश्रयणमात्रेण न तु निमित्ततयैवेत्याग्रहः । तेन 'शाढि'ति शाभावो हेर्धित्वे कर्त्तव्येऽसिद्धो भवति । अन्यथा धित्वे हेः कार्यितया निमित्तत्वाऽभावादसिद्धत्वं न स्यात् । अत एव समानाश्रयमाभीयमार्भायेऽसिद्धमित्येवाहुर्न तु समाननिमित्तमिति ।

इदञ्च सूत्रं भाष्यवार्तिकयोः प्रत्याख्यातम् । तथाहि-दीधीवेव्यौ छान्दसौ धातू न तु लोके प्रयोगार्हौ । छन्दसि चानयोर्गुणो दृश्यते । 'होत्राय वृतः कृपयन्नदीधेत्'। 'अदीधयुर्दाशराज्ञे वृतास' इत्यादौ । न चायम्बाहुलकेन समाधेयः, तथा सति निषेधसूत्रानारम्भस्यैव लाघवेनोचितत्वात् । तथे-

'इतश्च लोपः परस्मैपदे'ष्वितीकारलोपः।'लेटोऽडाटा'-वित्यडागमः॥

[ सिद्धान्तिनःसमाधानवार्तिकम् ]

*॥*॥ दीध्यदिति च श्यन्व्यत्ययेन ॥*॥*

**दीध्यदिति च श्यन्व्यत्ययेन भविष्यति ॥**

( प्रदीपः ) **श्यन्व्यत्ययेनेति** । श्यनो ङित्त्वाद्गुणाऽभावः। 'यीवर्णयोर्दीधीवेव्यो'रितीकारलोपः। क्वचित्तु 'शव्यत्ययेने'ति पाठः। तत्र शस्य ङित्त्वाद्गुणाऽभावः। 'एरनेकाच' इति यणादेशः॥

( उद्द्योतः ) क्वचित्तु 'शो व्यत्ययेने'ति पाठः॥

[ एकदेशिन इड्ग्रहणप्रत्याख्यानभाष्यम् ]

**इटश्चापि ग्रहणं शक्यमकर्तुम् ॥**

[ सिद्धान्तिनो दोषभाष्यम् ]

**कथम्–अकणिषम्, अरणिषम्, कणिता श्वो, रणिता श्व इति ? ॥**

( उद्द्योतः ) भाष्ये–**अकणिषमिति**। सिजन्तस्याऽङ्गस्य मिपोऽमि लघूपधगुणः प्राप्नोति। श्वःप्रयोगो लुडर्थः। तत्र हि तिपो डाऽऽदेशे टिलोपे च तास्प्रत्ययान्तमङ्गं भवति। तृचि त्वनङ्गत्वान्न[1] गुणप्राप्तिरिति भावः॥

[ एकदेशिनः परिहारभाष्यम् ]

**'आर्धधातुकस्येड्वलादे'रित्यत्र 'इ'डित्यनुवर्तमाने पुनरिड्ग्रहणस्य प्रयोजनम्–'इड् इडेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भू'दिति ॥ किं चान्यत्प्राप्नोति ? ॥ गुणः ॥**

( प्रदीपः ) **इडित्यनुवर्तमाने इति** । 'नेड्वशि कृती'त्यतः॥

( उद्द्योतः ) भाष्ये–**पुनरिड्ग्रहणस्येति**। न च[2] 'ने'त्यस्य निवृत्त्यर्थं तत्, स्पष्टं चेदं 'नेड्वशी'त्यत्र भाष्ये इति वाच्यम्, 'क्वचिदेकदेशोऽप्यनुवर्तते' इति न्यायेन नेड्वशीत्यत्रत्यनञो निवृत्तिसिद्धेरिति भावः[3]। वस्तुतस्त्वत्रत्य[4]मिदं भाष्यमेकदेश्युक्तिः। आर्धधातुकस्येति सूत्रस्थेड्ग्रहणस्य नेड्वशीतिसूत्रे भाष्ये प्रत्याख्यानात्। तत्करणेन नियमरूपगुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्याऽयुक्तत्वात्। **अङ्गस्ये**त्यनुवृत्तावपि अङ्गाधिकारविहितविकारस्यैव व्यावृत्तेः शब्दमर्यादयाऽलाभाच्च। अन्त्ये[5]ऽपि सिद्धत्ववचनस्य ज्ञापकत्वाश्रयणे गौरवमिति बोध्यम्॥

[ सिद्धान्तिनो दोषदानभाष्यम् ]

**यदि नियमः क्रियते, 'पिपठिषतेरप्रत्ययः–पिपठीः'—दीर्घत्वं न प्राप्नोति ॥**

( प्रदीपः ) **पिपठीरिति** । पिपठिषतेः क्विप्। 'अतो लोप' इत्यकारलोपः। षत्वस्याऽसिद्धत्वात्ससजुषो रुरिति रुत्वम्। 'पूर्वत्रासिद्धे न स्थानिव'दित्यल्लोपस्य रुत्वे स्थानिवद्भावाऽभावः॥

( उद्द्योतः ) **क्विबिति**। 'अप्रत्यय' इत्यस्याऽश्रूयमाणः प्रत्यय इत्यर्थः। कृदन्तत्वात्प्रातिपदिकत्वे स्वादयः॥

[ एकदेशिनः परिहारभाष्यम् ]

**नैष दोषः। आङ्गं यत्कार्यं तन्नियस्यते, न चैतदाङ्गम् ॥**

( प्रदीपः ) **आङ्गमिति**। 'अङ्गस्ये'त्यनुवर्तनादङ्गाधिकारविहितं यद्रूपान्तरमिटस्तदेव निवार्यते–'इडेव यथा स्या'दिति नियमेनेत्यर्थः। 'र्वोरुपधाया'इति च दीर्घत्वं नाऽङ्गम्[6]। यत्तु 'ग्रहो लिटि (दीर्घ' इति) दीर्घत्वं तद्वचनाद्भवति। 'पिपठिषि ब्राह्मणकुलानी'त्यत्र त्वकारलोपस्य स्थानिवद्भावा-

---

### ❀ राजलक्ष्मीः ❀

१ तान्तस्यानङ्गत्वादित्यर्थः। २ भाष्यान्तरविरोधमुद्धर्तुं शङ्कते–**नचेति**। ३ **भाव इति**। तथाच तत्रत्यपूर्वपक्षभाष्यमेकदेश्युक्तिरिति भावः। ४ **इदम्**–'इटश्चापी'त्यादिभाष्यम्। ५ अन्त्येति पक्षेपीत्यर्थः। ६ **नाङ्गम्**–नाङ्गाधिकारविहितम्।

### ❀ शब्दकौस्तुभः ❀

टोऽपि ग्रहणं व्यर्थम्। आर्द्धधातुकस्येडित्यत्र हि 'नेड्वशि कृती'ति सूत्रादिड्ग्रहणमनुवर्त्तते। तच्चेटो विकाराऽभावार्थम्। इट्-इडेव न तु विकृत इति व्याख्यानात्। ततो लघूपधगुणाऽभावात्सिद्धं कणिता श्वो रणिता श्व इत्यादि। न चैवं 'पिपठी'रित्यत्र दीर्घो न स्यादिति वाच्यं, तस्य नियमं प्रत्यसिद्धत्वात्। 'अपाठी'दित्यत्र सवर्णदीर्घस्तु न वार्यते। 'सिज्लोप एकादेशे सिद्धो वक्तव्य'इति ज्ञापकात्। यद्वाऽङ्गाधिकारे क्रियमाणो नियम आङ्गमेव विकारं व्यावर्त्तयति। तेन 'र्वो'रित्यकः सवर्णइति च दीर्घो भवत्येव। 'ग्रहीते'त्यत्र तु 'ग्रहो लिटी'त्यारम्भसामर्थ्याद्दीर्घो भवत्येव। इदन्त्ववशिष्यते–'पिपठीषि ब्राह्मणकुलानी'त्यत्र 'सान्तमहतः संयोगस्ये'ति दीर्घत्वं न स्यात्। सिद्धत्वादाङ्गत्वात्तेजांसीत्यादौ चरितार्थत्वाच्च पिपठीरपाठीत् ग्रहीतेत्यादिपूर्वोदाहृतेभ्योऽस्य वैलक्षण्यादिति। अत्राहुः–'पिपठींषी'ति प्रयोगोऽसाधुरेव। न ह्यत्र नुमागमो लभ्यते, अल्लोपस्य स्थानि-

ज्झलन्तत्वाऽभावान्नुमभावः । 'तेनं पिपठीषींति कथं सान्तमहतः संयोगस्येति दीर्घत्व'मिति न चोदनीयम् । 'क्कौ विधिं प्रति न स्थानिव'दित्यर्थो व्यवस्थापयिष्यते, न तु 'क्कौ लुप्तं न स्थानिव'दिति ॥

( उद्द्योतः ) झलन्तत्वाऽभावादिति । स्वविधौ स्थानिवत्त्वाऽभावादजन्तलक्षणोऽपि नेति द्रष्टव्यम् । ननु क्कौ लुप्तस्य स्थानिवत्त्वनिषेधादल्लोपस्यं स्थानिवत्त्वं दुर्लभमत आह-क्काविति ॥

[ समाधानान्तरभाष्यम् ]

**अथवा-असिद्धं दीर्घत्वं, तस्याऽसिद्धत्वान्नियमो न भविष्यति ॥** [ दीधीवेवीटाम् ] ।

( प्रदीपः ) **अथवेति** । 'इडेवे'त्यस्मिन्नियमे दीर्घत्वस्याऽसिद्धत्वान्नाऽस्ति नियमेन व्यावृत्तिः । ततश्च शास्त्रदृष्ट्याऽविकृतरूपं एवेट्प्रयोग एव तु विकृतः । 'अलावी'दित्यत्र (तु) 'सिज्लोप एकादेशे सिद्ध' इत्यसिद्धत्वनिषेधवचनात्सवर्णदीर्घत्वं भवति ॥

( उद्द्योतः ) **अलावीदित्यत्रेति** । नच 'समार्त्तें'त्यत्र 'ह्रस्वादङ्गा'दिति सिज्लोपाय सिद्धत्ववचनं चरितार्थं, सिद्धत्वे हि परत्वात्सिज्लोपे ततो वृद्धिः । अन्यथा पूर्वं वृद्धौ स न स्यादिति वाच्यम्, **'लावस्थायाम'**विति पक्षे सर्वतो

( राजलक्ष्मीः ) १ **तेन**-नुमोऽभावेन । २ क्किलुगुपधेतिनिषेधादित्यर्थः । ३ **अन्यथा**-तस्याऽसिद्धत्वे । **स नेति** । ह्रस्वात्परत्वस्याऽभावादित्यर्थः ।

॥ शब्दकौस्तुभः ॥

यद्भावेनाऽझलन्तत्वात् । न चैवमजन्तत्वप्रयुक्तो नुम् स्यादेवेति वाच्यम् । तस्य सकारादुत्तरत्र प्रसक्तया दीर्घस्य तथाप्यप्रवृत्तेः । सान्तसंयोगाऽभावात् । वस्तुतस्त्वजन्तत्वप्रयुक्तो नुमत्र न भवत्येव, स्थानिवद्भावाऽसंभवात् । अनादिष्टादचः पूर्वस्य विधौ हि सः, न चाजन्तमनादिष्टादचः पूर्वं, येन तस्य नुमि कर्त्तव्येऽल्लोपः स्थानिवत्स्यात् । ननु झलन्तत्वप्रयुक्तो नुम् दुर्वारः । न च तस्मिन्कर्त्तव्ये स्थानिवद्भावः शक्यः । 'क्वौ लुप्तं न स्थानिव'दिति निषेधात् । अन्यथा सखीयतेः क्विपि सखीः, सुतीयतेः सुतीरित्यादि न स्यात् । अल्लोपस्य स्थानिवद्भावेन यणादेशप्रसङ्गात् । अत्रोच्यते-'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यान'मिति तावद्वार्त्तिकशरीरम् । तत्र 'क्वौ'त्यंशो यद्यपि द्वेधा व्याख्यास्यते-क्वौ लुप्तं न स्थानिवदिति, क्वौ विधिम्प्रति न स्थानिवदिति च । देवयतेः क्विपि द्यूरित्यादेरन्यतरव्याख्यानाश्रयणेन सिद्धावपि सखीयतेः सखीरित्यस्याऽऽद्यव्याख्यानं विना असिद्धेः, लवमाचक्षाणो लौरित्यस्य द्वितीयव्याख्यानं विना ऽसिद्धेश्च । तथापि-'क्वौ विधिं प्रती'ति द्वितीयव्याख्यानमेव सार्वत्रिकम् । 'क्वौ लुप्त'मिति तु काचित्कम्, 'स्यत्या'दित्यत्र 'मपर्यन्तस्ये'त्यत्र च भाष्यादावाश्रितं न तु सार्वत्रिकम् । अत्र चेड्ग्रहणप्रत्याख्यानपरमत्रत्यभाष्यमेव प्रमाणं, कथमन्यथा 'पिपठीषी'त्यादौ दीर्घस्येष्टत्वे सूत्ररीत्या च तल्लाभे इड्ग्रहणं प्रत्याचक्षीत । तस्मात्पिपठिषि ब्राह्मणकुलानीत्येव रूपं भवतीति स्थितम् ॥ [ **दीधीवेवीटाम्** ] ॥

**हलोनन्तराः संयोगः** । अज्भिरव्यवहिता हलः संयोगसंज्ञा स्युः । संज्ञाप्रदेशाः-संयोगान्तस्येत्येवमादयः । इहान्तरशब्देन छिद्रवाचिना बहुव्रीहौ निश्छिद्रा इत्यर्थलाभादवग्रहे संज्ञया न भाव्यम् । आधेयप्रधानेनान्तरेत्यव्ययेन सह बहुव्रीहौ त्वाधेयनिषेधप्रतीतेरवग्रहेपि भाव्यमेव संज्ञया । न हि तत्राऽन्तरा मध्ये किञ्चिदस्ति, किं तु मध्यमात्रं वर्त्तते । 'मात्रा ह्रस्वस्तावदवग्रहान्तर'मिति प्रातिशाख्यबलेन तत्र मात्रा कालावसानाभ्युपगमात् । यत्तु प्रातिशाख्यान्तरम्-'अर्द्धमा-

वृद्धेरन्तरङ्गत्वेन तत्पक्षे सिज्लोपाऽप्राप्त्या तदेकवाक्यत्वेन पक्षान्तरेऽपि सिज्लोपाऽभावस्यैवौचित्येन 'समार्ष्टे'त्येव रूपस्यौचित्यात्सत्यभिधाने । **'सिज्लोप एकादेशे'** इति तु सिज्लोपोत्तरप्राप्तसवर्णदीर्घरूपैकादेशविषयमेवेति बोध्यम् । वस्तुतो नियमस्यैकदेशयुक्तित्वाद्विफलोऽयं विचार इति तत्त्वम् ।

---

## हलोऽनन्तराः संयोगः ॥१।१।७॥

[ पूर्वपक्षिणोऽनन्तरपदार्थजिज्ञासाभाष्यम् ]

**अनन्तरा इति । कथमिदं विज्ञायते—अविद्यमानमन्तरं येषामिति, आहोस्विद्विद्यमाना अन्तरैषामिति ? ॥**

( प्रदीपः ) **हलोऽनन्तराः** । **कथमिति** । किमन्तरशब्दस्य नञा बहुव्रीहिः, अथ 'अन्तरा'-शब्दस्येति प्रश्नः । **अन्तरं**-विवरं । वर्णशून्यःकालः (इत्यर्थः ।) **अविद्यमाना इति** । मध्ये येषामन्ये वर्णा अविद्यमाना इत्याधेयस्य निषेधो नत्वाधारस्य ।

( उद्द्योतः ) **हलोऽनन्तराः** । **अन्तराशब्दो** मध्ये इत्यर्थे । **नत्वाधारस्येति** । कालमात्रस्येत्यर्थः ।

[ तटस्थप्रश्नः, पूर्वपक्षिणः स्वाशयाविष्कारभाष्यञ्च ]

**किं चातः ?॥ यदि विज्ञायते-'अविद्य-**

४ **अन्तरं**-व्यवधायककालः । ५ **अन्तरा**-मध्ये । 'वर्णा'इति शेषः । ६ **आधेयस्य**-वर्णस्य । मात्रपदेन वर्णव्यावृत्तिः ।

मानमन्तरं येषा'मिति, अवग्रहे संयोगसंज्ञा न प्राप्नोति—'अप्स्वित्यप्ऽसु' इति। विद्यते ह्यत्रान्तरम्। अथ विज्ञायते-'अविद्यमाना अन्तरैषा'मिति न दोषो भवति।

( प्रदीपः ) अवग्रह इति। अर्धमात्राकालोऽवग्रह इष्यते। अर्धमात्राकालं स्थित्वा वर्णान्तरं समुच्चार्यते तत्र 'गुरोरनृत' इति प्लुतो न भवेत्।

( उद्द्योतः ) अर्धेति। वर्णाद्वर्णोच्चारणेऽर्धमात्राकालस्य नियतत्वात्तदधिकोऽर्धमात्राकाल इत्यर्थः। अत एव 'मात्राकालोऽवग्रह' इति प्रातिशाख्यान्तरैरविरोधः।

[ सिद्धान्तिनो द्वितीयपक्षाभ्युपगमभाष्यम् ]

**यथा न दोषस्तथास्तु ॥**

[ तस्यैव प्रथमपक्षनिर्दुष्टत्वसाधकभाष्यम् ]

**अथवा पुनरस्तु-'अविद्यमानमन्तरं येषा'मिति ॥**

[ पूर्वपक्षिण आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तम्-'अवग्रहे संयोगासंज्ञा न प्राप्नोति—'अप्स्वित्यप्ऽसु' इति। विद्यते ह्यत्रान्तर''मिति।**

[ सिद्धान्तिनः परिहारभाष्यम्]

**नैव दोषो न प्रयोजनम् ॥**

( प्रदीपः ) नैव दोष इति। दोषनिवृत्तये संज्ञा क्रियते, प्रयोजनाभिनिर्वृत्तये वा। इह चोभयाऽभावः। अधिकरणवृत्तेर्दूराद्धूते संबन्धाऽभावात्। 'विचार्यमाणाना'मित्यादौ तु 'वाक्यस्य टे'रित्यनुवर्तते, न तु 'गुरोरनृत'इति। 'अप्सव्य'शब्दे दोष इति चेत्, नैवंविधे विषये प्रकृत्यवयवस्याऽवग्रहं पदकाराः कुर्वन्ति। 'अप्सुयोनि'रित्यादावपि समासघटक[1]पदानामन्तोऽवगृह्यते इति सुशब्दात्पूर्वस्य नास्त्यवग्रहः।

( उद्द्योतः ) 'नैव दोष' इत्यादेः संज्ञाऽभावे न दोषः संज्ञायां च न प्रयोजनमित्यर्थ, इत्याह–**दोषनिवृत्तये**[2] **इत्यादि। अप्सव्यशब्दे इति।** अप्सुशब्दाद्दिगादियति 'अपो योनियन्मतुष्वि'त्यलुक्। **प्रकृत्यवयवस्य**–तद्धितप्रकृत्यवयवस्य[3]। अत्र च वैदिकसंप्रदाय एव शरणम्। **अन्त**[2] **इति।** समासे समस्यमानपदान्ते एवाऽवग्रहः। अयमपि वैदिकसंप्रदाय एव।

[ 'सह'ग्रहणवादिनो वार्त्तिकम्। ]

*॥*॥ संयोगसंज्ञायां सहवचनं यथाऽन्यत्र॥*॥*

( भाष्यम् ) **संयोगसंज्ञायां सहग्रहणं कर्तव्यम्। 'हलोनन्तराः संयोगः सहे'ति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ सहभूतानां संयोगसंज्ञा यथा स्यादेकैकस्य मा भूदिति॥**

(**राज.**) १ संयोगसञ्ज्ञा भवतीति प्लुतः सिध्यतीत्यर्थः। आधेयवर्णस्यैव निषेधात्कालव्यवधानेऽपि संयोगसंज्ञेत्याशयः।

२. भवार्थेऽयं यदित्यवधेयम्। ३ तद्धितयत्प्रत्ययप्रकृतिभूताप्सुशब्दावयवाऽप्शब्दस्येत्यर्थः।

**॥ शब्दकौस्तुभः ॥**

त्रोऽवग्रह'इति, तत्तु सर्वत्र संहितायामर्द्धमात्राकालस्य सत्त्वात्ततोऽतिरिक्तोर्द्धमात्राकालोऽवग्रहेऽस्तीत्येवंपरमतः प्रातिशाख्ययोरविरोधः। तदिह कतरः पक्षो ग्राह्य इति चेत्,–**उभयथाप्यदोष इति** भाष्यकाराः। नन्वप्स्वित्यादौ सत्यां संयोगसंज्ञायां संयोगे गुर्विति गुरुत्वाद्गुरोरनृत इति प्लुतेन भाव्यं, नत्वन्यथेति महान्फले विशेषः। तत्कथं पक्षद्वयाभ्युपगम इति। 'अप्स्वि'त्यस्याधिकरणवृत्तेर्दूराद्धूतसम्बन्धाऽभावात्। 'विचार्यमाणाना'मित्यादौ तु वाक्यस्य टेरित्यनुवर्त्तते न तु गुरोरनृत इति। नन्वप्सु भवोप्सव्यः, दिगादिषु पाठाद्यत्। 'अपो योनियन्मतुषु चे'ति सप्तम्या अलुक्। ततः गुः सम्बुद्धौ हे अप्सव्येत्यत्र स्यादेव फलभेद इति चेत् अत्राहुः,—नैवंविधे विषयेऽवग्रहं पदकाराः कुर्वन्तीति। अत्र च सम्प्रदाय एव शरणमिति बोध्यम्। युक्तश्चैतत्–गोभ्यो गातुं गोभिर्मदाय' 'चित्रइद्राजा राजका इदन्यके' इत्यादौ गोभ्यो गोभिः राजका इत्यादिनां सत्यपि पदत्वेऽवग्रहाऽकरणात्। 'ईयिवांसमतिस्रिध' इत्यादावीयिवांसमिति विनापि पदसंज्ञां कसोः पूर्वमिडागमान्तेऽवग्रहकरणाच्च। एतेन 'सिसासन् उक्थशसः रिरिष'इत्यादौ पदकाले सत्त्वह्रस्वत्वादयोपि व्याख्याताः। यत्तु 'मानो महान्त'मिति मन्त्रे वेदभाष्यकारैः 'छान्दसः पदकालीनो ह्रस्व'इति, तदपि सम्प्रदायमात्रपरतया कथं चित्रेयम्। 'न लक्षणेन पदकारा' इति भाष्ये पदविभागः पौरुषेय इति कैयटादिभिरुक्तत्वादिति दिक्। कथं तर्हि तत्रतत्राऽवग्रहे विशेष इत्युच्यतइति चेत्। अवान्तरपदत्वे सत्यवग्रहः क्रियतइत्युत्सर्गमभिप्रेत्येति गृहाण। 'अप्सुयोनिर्वा अश्व'इत्यादावपि सुशब्दात्पूर्वं नास्त्यवग्रहः। 'अवान्तरपदसंज्ञाऽनेकत्वे उत्तरकालप्रवृत्तिकयावग्रह' इति वैदिकसम्प्रदायात्। अत एव 'मयूररोमभि'रित्यत्र भिसः पूर्वमवग्रहः।

१ 'घटक्के' ति क्वचिन्न।

२ 'अन्तोऽवेति' इति पा०।

'यथान्यत्र' । तद्यथा अन्यत्रापि यत्रेच्छति[1] सहभूतानां कार्यं, करोति तत्र 'सह'ग्रहणम् । तद्यथा-'सह सुपा' 'उभे अभ्यस्तं सहे'ति ॥

( प्रदीपः ) **संयोगसंज्ञायामिति ।** वृद्धिसंज्ञावदानन्तर्यव्यवस्थितानां हलां प्रत्येकं संयोगसंज्ञा प्राप्नोति ॥

( उद्द्योतः ) नन्वनन्तरग्रहणादेकैकस्य संज्ञा दुर्लभेत्यत आह-**आनन्तर्येति ।** एवंच तदुपलक्षणमिति भावः॥

[ तटस्थस्य दोषप्रश्नभाष्यम् ]

**किं च स्याद्यद्येकस्य संयोगसंज्ञा स्यात् ?।**

( प्रदीपः ) **किं च स्यादिति ।** द्वयोरानन्तर्ये एकैकस्यापि संयोगसंज्ञायां गुरुसंज्ञाप्रतिबद्धकार्यसिद्धिरिति प्रश्नः ॥

( उद्द्योतः ) **'संज्ञाप्रतिबन्धे'ति** पाठे कर्मणि घञ् बोध्यः । **'संज्ञाप्रतिबद्धे'**ति पाठः सुगम एव ॥

[ दोषप्रदर्शनभाष्यम् ]

**इह-निर्यायात्, निर्वायात् ॥ 'वान्यस्य संयोगादे'रित्येत्वं प्रसज्येत ॥ इह च संहृषीष्टेति, 'ऋतश्च संयोगादे'रितीट्प्रसज्येत । इह च संह्रियेत इति,-'गुणोऽर्तिसंयोगाद्यो'रिति गुणः प्रसज्येत । इह च दृषत्करोति, समित्करोतीति,-'संयोगान्तस्ये'ति लोपः प्रसज्येत ॥ इह च शक्ता वस्तेति,-'स्कोः संयोगाद्योरन्ते चे'ति लोपः प्रसज्येत ॥ इह च निर्यातो निर्वातः,-'संयोगादेरतो धातोर्यण्वतः' इति निष्ठानत्वं प्रसज्येत ॥**

( प्रदीपः ) **निर्यायादिति ।** सति रेफे यकारः संयोग इत्येत्वप्राप्तिः । ननु समुदायस्यापि संज्ञित्वेऽचो रहाभ्यां द्वे इति यकारस्य द्विर्वचने कृते कस्मादेत्वं न भवति, यथा (नि)र्ग्लेयादिति । एत्वे कर्तव्ये 'पूर्वत्रासिद्ध'मिति द्विर्वचनस्याऽसिद्धत्वान्नाऽयं दोषः । **शक्तेति ।** तृच्चितकारे झलि परतः ककारः संयोगो भवत्यादिश्चेति लोपप्रसङ्गः ॥

( उद्द्योतः ) **कस्मादिति ।** बहूनां सन्निधानेऽविशेषेण द्वयोर्बहूनां च संज्ञायाः सिद्धान्तयिष्यमाणत्वादिति भावः । परिहरति-**एत्वे इति । पूर्वत्रासिद्धीयमद्विर्वचने** इति तु द्विर्वचने कार्येऽन्यस्याऽसिद्धत्वं नेत्यर्थकम्, न तु द्विर्वचनस्य तदभावप्रतिपादकमिति भावः । **संयोगो भवत्यादिश्चेति ।** प्रत्येकं संज्ञापक्षे स्कोः संयोगावयवत्वाऽसंभवेन षष्ठीसमासाऽसंभवाल्लाघवाच्च कर्मधारय एवेति भावः । आदिशब्दश्च पूर्वभूतसमीपवाची । आदित्वं च प्रत्यासत्त्या संयोगत्वाक्रान्तवर्णान्तरापेक्षयैवेति पदान्तांशे संयोगादिग्रहणचारितार्थ्यं बोध्यम् । अन्यथा ह्यर्कयतेरप्रत्ययेऽगित्यादावन्तकस्यापि लोपः स्यात् ॥

[ प्रत्येकं सञ्ज्ञापक्षेपूर्वोक्तदोषपरिहारभाष्यम् ]

**नैष दोषः । यत्तावदुच्यते-'इह तावन्निर्यायात् निर्वायात् 'वान्यस्य संयोगादे'-रित्येत्वं प्रसज्येते'ति । नैवं विज्ञायते-संयोग आदिर्यस्य सोऽयं संयोगादिः, संयोगादेरिति ॥ कथं तर्हि ? ॥ संयोगावादी यस्य सोऽयं संयोगादिः, संयोगादेरिति । एवं तावत्सर्वमाङ्ग परिहृतम् ॥**

( प्रदीपः ) **संयोगाविति ।** कथं वृत्तावुपसर्जनार्थस्य द्वित्वावगतिरिति चेत्, आदिग्रहणसामर्थ्यात् । अन्यथा 'संयोगा'दिति वक्तव्यं स्यात् । संयोगात्परो य आकारस्तदन्तस्याऽङ्गस्यैत्वमित्यर्थलाभात् ॥

❀ राजलक्ष्मीः ❀

१ **इच्छति ।** 'आचार्य' इति शेषः । २ 'गुरोश्च हल' इत्यप्रत्ययस्य शिक्षेत्यादौ सिद्धेरनिष्टापत्त्यभाव इत्यर्थः । ३ रेफसमभिव्याहारे यकारस्य संयोगत्वादित्याशयः । ४ **संहृषीष्टेति ।** संपूर्वाद्धरतेराशीर्लिङि तङि रूपम् । **लिङ्सिचाविति** कित्वाद्गुणो न ॥ ५ **प्रसज्येतेति ।** [illegible]नाऽकित्त्वाद्गुणे संहरिषीष्टेति स्यादिति भावः ॥ ६ **संह्रि**यत इति । अत्र सामान्यशिष्टरिङः संयोगादित्वेन विशेषविहितो गुणो बाधकः स्यादिति 'संहर्यत'ति स्यादिति भावः। ७ **दृषत्केति ।** कसंनिधौ दस्य संयोगत्वात् । अत्र **संयोगान्तस्ये**ति बहुव्रीहिः । पदं चाऽन्यपदार्थः। तथाच **'अलोन्त्यस्ये'**ति अन्त्यदकारस्य लोपः स्यादिति भावः। ८ **नैते दोषा** इत्यर्थः । अन्यथासिद्ध'रिति शेषः। तामेवदर्शयति-**यदिति ।** ९ [illegible]निनपुंसकप्रयोगो युक्त इति श्रीगुरवः। १० 'ऋतश्च संयोगादेः' 'गुणोर्तिसंयोगाद्यो'रित्यादिकम् ।

❀ शब्दकौस्तुभः ❀

'नामउक्तिभि'रित्यत्राप्येवम् । 'इन्द्रप्राणः पुर एतेत्रे'त्यत्र चेत्र- शब्दात्प्राणिति दिक् । महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम्-संयुज्यन्तेऽस्मिन्समुदाये वर्णा इति । तेनाऽत्र समुदाये

( उद्योतः ) **कथं वृत्ताविति।** अयं पूर्वपक्षोऽयुक्तः, संयोगस्य द्वित्ववत्त्वेन प्रतीतेरेवाऽभावात्। संयोगत्वेनैवाऽनेकसंयोगप्रतीतेः। न हि वृत्तावनेकबोध उपसर्जनान्नेति भाष्यसम्मतम्। संख्याविशेषानवगमस्यैव भाष्यकृतोक्तत्वात्, नत्वनेकानवगम इति तेनोक्तमिति विभाव्यताम्। **संयोगात्पर इति।** न चाङ्गावयवसंयोगग्रहणायाऽऽदिग्रहणम्। तत्र यद्यपि दरिद्रातौ न फलम्। आर्धधातुकविवक्षायां तस्याऽऽलोपविधानात्, तथापि खट्वादिभ्य आचारक्विबन्तेभ्यो लिङि खट्वायादित्यादावेत्ववारणं फलमिति वाच्यम्, **स्यसिच्**सूत्रादुपदेशपदानुवृत्त्या घुमास्थाद्यन्यस्यौपदेशिकस्यैव ग्रहणेन नामधातुष्वेत्वाऽप्रवृत्तेरिति भावः। खट्वादिभ्य **आतो धातो**रिति सूत्रस्थभाष्यप्रामाण्येनाचारक्विपोऽभावाच्च। सिद्धान्ते तु निर्यायादित्यादिवारणायाङ्गावयवसंयोगग्रहणाय तदिति बोध्यम्॥

[ द्वितीयदूषणोद्धारभाष्यम् ]

**यदप्युच्यते—"इह च दृषत्करोति समित्करोति 'संयोगान्तस्य'-इति लोपः प्रसज्येते"ति। नैवं विज्ञायते-संयोगोऽन्तो यस्य तदिदं संयोगान्तं संयोगान्तस्येति। कथं तर्हि ?॥ संयोगावन्तौ यस्य तदिदं संयोगान्तं संयोगान्तस्येति॥**

( प्रदीपः ) **संयोगावन्ताविति।** अत्रापि संयोगस्य लोप इत्येव संयोगेन पदस्य विशेषणात्तदन्तविधौ लब्धेऽन्तग्रहणमाश्रितसङ्ख्याभेदः संयोगो यथा गृह्यतेत्येवमर्थं विज्ञायते॥

[ तृतीयदूषणोद्धारभाष्यम् ]

**यदप्युच्यते-"इह च शक्ता वस्तेति स्कोः संयोगाद्योः'-इति लोपः प्रसज्येते"ति नैवं विज्ञायते—संयोगावादी संयोगादी, संयोगाद्योरिति॥ कथं तर्हि?॥ संयोग योरादी' संयोगादी संयोगाद्योरिति॥**

( प्रदीपः ) **संयोगयोरिति।** षष्ठीसमास आश्रीयत इत्यर्थः। 'संयोगयो'रिति द्विवचननिर्देशः स्कोर्द्वित्वात्तत्समीपयोरपि हलोर्द्वित्वात्कृतः। तेनाऽयमर्थः-'झलि परतो यः संयोगः, पदान्ते च यः संयोगस्तस्यादिः समीपो यः ककारः, सकारश्च तयोर्लोपः' इति। न चैवं सति 'शक्ता' 'वस्ते'त्यत्र लोपः प्राप्नोति॥

( उद्योतः ) भाष्ये **आदी इति।** यद्यपि मुख्यादित्वमुभयोर्व्याहतं, तथाप्येक आदिशब्दो गौण इति भावः। पूर्ववद्द्विवचनान्तसमासेन दोषपरिहार इति न भाष्यार्थः, उभयत्रापि द्विवचनोपादानात्। अत आह-**षष्ठीति।** एवं च झलंशेऽपि संयोगादिविशेषणमर्थवद्भवतीति भावः। आदिशब्दश्च ना(य)वयववाची, असंभवादित्याह-**समीप इति।** झलादिविशेष्यस्य संयोगस्योपसर्जनत्वेऽपि सौत्रत्वाद्वृत्तिः। न च शक्तेत्यत्र व्यपदेशिवद्भावेन स्वस्यापि स्वसमीपत्वेन दोषस्तदवस्थः, आदिग्रहणसामर्थ्याद्व्यपदेशिवद्भावाऽप्रवृत्तेः॥

[ चतुर्थदूषणोद्धारभाष्यम् ]

**यदप्युच्यते-"इह च निर्यायात् निर्वात इति 'संयोगादेरातो धातोर्यण्वतः इति निष्ठानत्वं प्रसज्येते"ति। नैवं विज्ञायते—संयोग आदिर्यस्य सोऽयं संयोगादिः संयोगादेरिति॥ कथं तर्हि ?॥ संयोगावादी यस्य सोऽयं संयोगादिः संयोगादेरिति।**

( प्रदीपः ) **संयोगादेरात इति।** अत्रापि 'संयोगादात' इत्येव संयोगात्परो य आकारस्तदन्ताद्धातोर्नत्वमिति सिद्ध'रादि'ग्रहणं द्वित्वसंख्याश्रयणार्थम्॥

[ सिद्धान्तिन आक्षेपभाष्यम् ]

**कथं कृत्वा एकैकस्य संयोगसंज्ञा प्राप्नोति ?॥**

( प्रदीपः ) **कथं कृत्वेति।** संयोगसंज्ञाया अन्वर्थत्वात्संयुज्यन्तेऽस्मिन्वर्णा इति समुदायः संयोग इत्यर्थस्याश्रयणात्सहग्रहणं न कर्तव्यमित्यर्थः।

( उद्योतः ) वस्तुतस्तु 'प्रत्येकं संज्ञे'ति पक्षो वाच्यवृत्त्या सूत्रान्न लभ्यत एवेति व्युत्पादयितुं गूढाशयः पृच्छति—

२ इत्यादावेत्वादिवारणायेत्यर्थः।
३ 'थाश्रयणात्' पा०। ४ 'वचनं' पा०।

❀ राजलक्ष्मीः ❀

१ [illegible] संयोगसंज्ञायान्तु।

❀ शब्दकौस्तुभः ❀

[illegible] तु [illegible]दिसंज्ञावत्प्रत्येकम्। तथा हि [illegible] इति [illegible]

देरित्येवं स्यात्। सिद्धान्ते त्वचो रहाभ्यामिति द्वित्वे सत्यसिद्धत्वा[illegible] निर्यायादित्यादावेत्वं न भवति। किञ्च प्रत्येकं संज्ञेति पक्षे [illegible] 'ऋतश्च संयोगादे'रितीट्

भाष्ये-**कथं कृत्वेति** । तमेवाऽलाभं व्याचष्टे-**संयोगेति** । एवं चान्वर्थसंज्ञाविरोधात्प्रत्येकं वाक्यपरिसमाप्तिन्यायो नात्राश्रयितुं शक्यत इति व्यर्थं सहेतीति भावः । **किं च** श्रुतमानन्तर्यं प्रत्येकसंज्ञावादिनोपलक्षणमाश्रयितव्यम् । विशेषणत्वमेवोचितं, तत्त्वे सम्भवति उपलक्षणत्वस्याऽन्याय्यत्वात् । **किं चा**चन्तग्रहणसामर्थ्याद् द्विवचनान्तेनैव विग्रह इत्यर्थस्य नियमेनाऽलाभः, बहुवचनान्तेनापि सम्भवादित्याहुः । वस्तुतोऽन्वर्थसंज्ञा चिन्त्या, तदाश्रयणे 'घटपटौ संयुज्येते' यत्रेत्यादौ संयोगानुयोगिप्रतियोग्यतिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन तद्व्यतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य संज्ञापत्तावनिष्टापत्तेः । तस्मान्महासंज्ञाकरणं प्राचामनुरोधेनेत्येव ज्यायः । अत एव भगवता गर्गदण्डनन्यायमाश्रित्य सहग्रहणं प्रत्याख्यातं, न तु महासंज्ञेत्यलम् ॥

[ पूर्वपक्षिणः समाधानभाष्यम् ]

**प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टे'ति । तद्यथा वृद्धिगुणसंज्ञे प्रत्येकं भवतः ॥**

[ सिद्धान्तिनः प्रतिबन्दीभाष्यम् ]

**ननु चायमप्यस्ति दृष्टान्तः—'समुदाये वाक्यपरिसमाप्ति'रिति । तद्यथा—गर्गाः शतं दण्ड्यन्ताम्, अर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति ॥**

[ सहग्रहणप्रत्याख्यानभाष्यम् ]

**सत्ये तस्मिन् दृष्टान्ते यदि तत्र 'प्रत्येक'-मित्युच्यते, इहापि 'सह'ग्रहणं कर्त्तव्यम् । अथ तत्रान्तरेण प्रत्येकमितिवचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः, इहापि नार्थः सहग्रहणेन ॥**

[ आक्षेपभाष्यम् ]

**अथ यत्र बहूनामानन्तर्यं, किं तत्र द्वयोर्द्वयोः संयोगसंज्ञा भवति, आहोस्विदविशेषेण ? ॥**

( **प्रदीपः** ) **आहोस्विदिति** । 'द्वयो'रित्यस्य विशेषस्याऽनाश्रयणाद्बहूनामेवेत्यर्थः। यथा 'पपाचे'-त्यत्र समुदायस्यैकाचो द्विर्वचनं नावयवस्यैकाचः । यदा तु द्वयोरेव हलोरानन्तर्यं तदा द्वयोर्भवत्येव, 'हल' इति जातौ बहुवचननिर्देशात् ॥

( **उद्द्योतः** ) नन्वविशेषेणेत्यस्य द्वयोर्बहूनां चेति नार्थः, अस्याऽविशेषस्याग्रे वक्ष्यमाणत्वात् । मञ्जौ दोषदानासङ्गतेश्चात आह-**द्वयोरित्यस्येति** । अत एव भाष्ये-**समुदाये संयोगादिलोप** इति वक्ष्यति । तत्र युक्तिमाह-**यथेति** । **हल इति जाताविति** । वस्तुतो हलौ च हलश्चेत्येकशेषः । 'स्वरिता'दिति सूत्रेऽनुदात्तानामित्यत्र भाष्ये तथैव वक्ष्यमाणत्वात् ॥

[ विशेषजिज्ञासाभाष्यम् ]

**कश्चात्र विशेषः ? ॥**

[ आक्षेपवार्तिकम् ]

*॥*॥ समुदाये संयोगादिलोपो मस्जेः ॥*॥*

( भाष्यम् ) **समुदाये संयोगादिलोपो मस्जेर्न सिद्ध्यति । मङ्क्ता मङ्क्तुम् ॥**

**इह च निर्ग्लेयात् निर्ग्लायात् निर्म्लेयात् निर्म्लायादिति, 'वान्यस्य संयोगादे'-रित्येत्वं न प्राप्नोति ॥ इह च 'संस्वरिषीष्टेति,-'ऋतश्च संयोगादे'रितीट् न प्राप्नोति ॥ इह च 'संस्वर्यते' इति, 'गुणोऽर्तिसंयोगाद्यो'रिति गुणो न प्राप्नोति ॥ इह च गोमान्करोति यवमान्करो-**

॥ **राजलक्ष्मीः** ॥

१ सत्येऽपि तस्मिन्-ब्राह्मणभोजनदृष्टान्तेस्पष्टार्थं वार्त्तिककृता यदि 'प्रत्येक'मित्युच्यते तर्हि इहापि सत्येपि गर्गदण्डनन्याये स्पष्टार्थं सहग्रहणमत्र संयोगसंज्ञायां कर्त्तव्यमित्यर्थः । **तत्र**—गुणवृद्धिसंज्ञादौ ।

२ **अथेति** । यथा ब्राह्मणभोजनन्यायस्य प्रसिद्धतरत्वमाश्रित्य 'प्रत्येक'मिति गुणवृद्धिसंज्ञायां सूत्रकृता तथैव गर्गदण्डनन्यायस्यापि प्रसिद्धतरत्वात्सहग्रहणेनापि सूत्रकृन्मते नार्थ इति भावः । ३ **तत्र**-द्वितीयपक्षे । ४ शेषपूरणेन वार्तिकं व्याचष्टे **समुदाय इति** । तत्रैव संज्ञाङ्गीकारइत्यर्थः॥

॥ **शब्दकौस्तुभः** ॥

स्यात् । 'संक्षियत'इत्यत्र गुणोर्तिसंयोगाद्योरिति गुणः स्यात् । दृषत्करोतीत्यत्र ककारसन्निधौ दकारस्य संयोगत्वात्संयोगान्तलोपः स्यात् । शक्तावस्तेत्यत्र झलि तकारे परतः 'स्को' रिति लोपः स्यात् । 'निर्यात' इत्यादौ 'संयोगादेरातो धातोर्यण्वत' इति निष्ठानत्वं स्यात् । जातौ चेदं बहुवचनं-'हल' इति, 'जात्याख्यायामेकस्मिन्नि'ति वचनात् । तेन द्वयोरपि संयोगसंज्ञा भवति । अतः 'शिक्षे'त्यादौ 'गुरोश्च हल' इत्यप्रत्ययः सिध्यति । यत्र तु बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाऽविशेषेण संज्ञा । न चैकाज्द्विर्वचनन्यायेन समुदायस्यैव स्यादिति वाच्यं, वैषम्यात् । तथाहि-द्विर्वचनं समुदायाऽवयवैकाचोर्युगपत्कर्त्तुमशक्यम् । संज्ञा तु शक्या । तथा

तीति,–'संयोगान्तस्य लोपः' इति लोपो[1] न प्राप्नोति ॥

इह च निर्ग्लानो निर्म्लान इति, 'संयोगादे रातो धातोर्यण्वतः' इति निष्ठानत्वं, न प्राप्नोति ॥

(प्रदीपः) मङ्क्तेति। 'मस्जिनशोर्झली'ति नुमि कृते नसजानां संयोगसंज्ञा, न तु सजयोरिति सलोपाऽप्रसङ्गः। निर्ग्लैयादिति। य[2]ः संयोगो नासावङ्गादिः यश्चाऽङ्गादिर्गकारलकारसमुदायो नाऽसौ संयोगः(इति)॥

( उद्द्योतः ) भाष्ये 'पूर्वं धातुरुपसर्गेणे'त्याश्रित्य क्वचित्, क्वचिच्च वाक्यसंस्कारपक्षाश्रयेण दोषोपन्यासः ॥

[ प्रथमपक्षाभ्युपगमभाष्यम् ]

अस्तु तर्हि–द्वयोर्द्वयोः संयोगः[3] ॥

॥*॥ *द्वयोर्हलोः संयोग इति चेद्द्विर्वचनम्*॥*॥

द्वयोर्हलोः संयोग इति चेद्द्विर्वचनं न सिद्ध्यति। इन्द्रमिच्छति इन्द्रीयति। इन्द्रीयतेः सन्–इन्दिद्रीयिषति । 'नन्द्राः 'संयोगादयः' इति द्विर्वचनं न[4] प्राप्नोति ॥

( प्रदीपः ) इन्दिद्रीयिषतीति। अत्र द्वौ संयोगौ नदौ दरौ च, ततश्च दकारस्य संयोगादित्वाद्द्विर्वचननिषेधप्रसङ्गः ॥

[ समाधानवार्तिकम् ]

॥*॥ *न वाऽज्विधेः* ॥*॥

( भाष्यम् ) नवैष दोषः ॥

किं कारणम् ? ॥ 'अज्विधेः'। न्द्राः संयोगादयो न द्विरुच्यन्ते ॥ 'अजादे'रिति वर्तते ॥

( प्रदीपः ) न वाज्विधेरिति। अजाश्रयः प्रतिषेधविधिः (इति)। 'अजादे'रिति कर्मधारयः।

तेनाऽच आदेः परेऽनन्तरा न्द्रा न द्विरुच्यन्ते। इन्द्रशब्दे तु दकारो नकारेण व्यवहितत्वाद्द्विरुच्यत एव॥

( उद्द्योतः ) परेऽनन्तरा इति। 'तस्मादित्युत्तरस्ये'त्यस्योपस्थितेरिति भावः। चन्द्रीयतेः सनोऽभिधाने 'यथेष्टं नामधातु'ष्विति द्वितीयैकाचो द्वित्वं नकारसहितस्यैव। आद्यवयवाऽचः परत्वाऽभावेनैतन्निषेधाप्रवृत्तेरिति बोध्यम् ॥

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

अथ यद्येवं बहूनां संयोगसंज्ञा, अथापि द्वयोर्द्वयोः 'किं[5] गतमेतदियता सूत्रेण, आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम् ?॥

[ सिद्धान्तिनःसमाधानभाष्यम् ]

गतमित्याह ॥ कथम् ? ॥ यदा तावद्बहूनां संयोगसंज्ञा[6] तदैवं विग्रहः करिष्यते–'अविद्यमानमन्तरमेषा'मिति ॥

( प्रदीपः ) अविद्यमानमिति । बहूनां चाऽविवरत्वे समुदायद्विर्वचनवद्बहूनामेव संयोगसंज्ञा, न द्वयोर्द्वयोः ॥

( उद्द्योतः ) बहूनां चाविवरत्वे इति। 'बहूनां चानन्तरत्वे' इति क्वचित्पाठः। नन्वत्र विग्रहे 'क'मित्यादौ कमयोः संयोगसंज्ञा स्यात्तयोर्मध्ये वर्णशून्य(कालरुप)च्छिद्राभावादिति चेन्न। वर्णशून्यकालव्यवायमात्रवारणे फलाऽभावाऽसामर्थ्येन वर्णकालव्यवायोऽपि व्यावर्त्यत इत्यदोषः। द्विर्वचनवदिति। एषामिति बहुवचनादिति न भ्रमितव्यम्। तस्य सूत्रे हल इतिवत्सत्त्वात्। 'अन्तरा'शब्देन विग्रहेऽपि तत्सत्त्वाच्च। अन्यथा द्वयोर्न स्यात्। किन्तु अन्तरशब्देन विग्रहाद्बहूनां समवधाने तेषामप्यनन्तरत्वादिति भावः ॥

[ समाधानशेषभाष्यम् ]

यदा द्वयोर्द्वयोः संयोगसंज्ञा, तदैवं विग्रहः करिष्यते—'अविद्यमाना अन्तरैषाम्' इति द्वयो[7]श्चैवान्तरा[8] कश्चिद्विद्यते वा, न वा।

---

❀ राजलक्ष्मीः ❀

१ लोपः–यकारलोपः। २ रलगसमुदाय इत्यर्थः। ३ संयोगः–संयोगसञ्ज्ञा। ४ न प्राप्नोतीति। दकारसहितस्येतिभावः। ५ गतं–उभयत्र सिद्धं भवेदित्यर्थः। किञ्चिदधिकमपिसूत्रम्। ६ संज्ञेत्यस्य—इष्टेतिशेषः। ७ मध्यत्वनिरूपकौ द्वावेव भवतो न बहवः। ८ मध्ये।

❀ शब्दकौस्तुभः ❀

समुदाये द्विरुक्तेऽवयवा अपि द्विरुक्ता भवन्ति, 'वृक्षः प्रचलन्सहावयवैः प्रचलती'ति न्यायात्। इह तु समुदाये प्रवृत्तया संयोगसंज्ञया नावयवानां तत्कार्यसिद्धिः। अतोऽविशेषेण द्वयोर्बहूनां च संज्ञेति स्थितम्। यदि तु बहूनामेव स्यात्तर्हि 'संस्वर्यंत'इत्यत्र 'गुणोर्त्ती'ति गुणो न स्यात्। 'गोमान्करोती'त्यत्र संयोगान्तलोपो न स्यात्। 'निर्ग्लान' इत्यादौ निष्ठानत्वं न स्यादिति दिक्। ननु यदि द्वयोरपि संज्ञा तर्हीन्द्री-

( प्रदीपः ) **अविद्यमाना इति ।** मध्ये य आधेयः स द्वयोरेव मध्ये भवतीति संसर्गवद्विप्रयोगस्यापि विशेषाऽवगतिहेतुत्वाद्बहुषु द्वयोर्द्वयोः संयोगसंज्ञा भवतीति पक्षः । **द्वयोश्चैवान्तरेति ।** 'अन्तरान्तरेण युक्ते' इति द्वितीया कस्मादत्र न भवति । उच्यते–यदा मध्यापेक्षया नियतावधिरूपत्वं विवक्ष्यते 'त्वां च मां चान्तरा कमण्डलुः' 'अग्नी अन्तरा' 'धवखदिरावन्तरे'ति, तदा द्वितीया; यदा तु नियतावधित्वं न विवक्ष्यतेऽपि तु संबन्धमात्रं तदा षष्ठ्येव भवति । तदा हि न ज्ञायते–किं तयोरेवावधित्वमुताऽन्यसहितयोरित्यवधिनियमाभावाद्द्वितीयाया युक्तग्रहणान्नियतावधिविवक्षाविषयाया अभावः ॥

( उद्द्योतः ) संसर्गविप्रयोगावेव भाष्ये दर्शयति–**द्वयोश्चैवेति ।** 'विद्यते' इत्यन्तं दृष्टान्तार्थम् । 'अवत्सा धेनु'रित्यादौ विप्रयोगोऽपि विशेषावगतिहेतुर्दृष्टः । अन्तरा विद्यत इति, न विद्यत इति वा यत्तद्द्वयोरेवेत्यर्थः । **नियतावधिरूपतेति ।** अवधित्वं हि अन्याऽसहितत्वे एव तयोर्नियमेन भवति । अन्यसाहित्ये तु न तत्राऽवधित्वस्य नियमेन प्रतीतिः, अवधित्वविवक्षायामेव च द्वितीयेति भावः । यस्य च नियमेनावधित्वं तस्यैवावधित्वविवक्षा शब्देनेति तात्पर्यम् । नियतत्वमन्याऽसहितत्वम् । तद्वैशिष्ट्येन याऽवधिरूपता सा विवक्षिता यदा भवतीत्यक्षरार्थः । अन्यथा अवधित्वविवक्षायां द्वितीया, तत्त्वाऽविवक्षायां षष्ठीत्यर्थस्यैव शब्दतो लाभेन 'नियते'ति कथनमधिकं स्यादिति बोध्यम् । **युक्तग्रहणादिति ।** न च तदभावेऽन्तरान्तरेणशब्दाभ्यां द्वितीयापत्तिः, तयोरव्ययत्वेन विशेषाऽभावात् । न च प्रथमाबाधनेन **'सपूर्वायाः प्रथमाया'** इत्यस्याऽप्रवृत्त्यर्थम् , व्यवस्थितविभाषया तस्य सुपरिहरत्वात् । तस्माद्युक्तग्रहणं सम्बन्धविशेषस्य प्रतिपादनाय, अवधित्वस्य प्रतियोगित्वस्य वा । तेन प्रयोगमन्तरेणेत्यपि सिद्धम् । एवं च सम्बन्धमात्रविवक्षायां षष्ठ्येवेति भावः ॥

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**एवमपि बहूनामेव प्राप्नोति । यान् हि भवानत्र षष्ठ्या प्रतिनिर्दिशति, एतेषामन्येन व्यवाये न भवितव्यम् ॥**

(प्रदीपः) **यान्हीति ।** 'एषा'मिति बहुवचननिर्देशादिति न बोद्धव्यम्, बहुत्वस्याऽविवक्षणात् । अन्यथा 'शिक्षे'त्यादौ द्वयोर्न स्यात् । तस्मा**द्योऽसावन्तरा स द्वयोर्भवति न वे**ति यदुक्तं, तत्रोच्यते,–यदा द्वयोर्द्वयोरन्तरा न भवति तदा बहवोऽनन्तरा,–इति तेषामेव प्राप्नोति । यदा हि बहूनां मध्ये भिन्नजातीयोऽज् भवति तदा मा भूत् । तदभावे तु प्रवर्तितव्यमेव बहूनां संज्ञया, समुदायद्विर्वचनवदित्यर्थः ॥

( उद्द्योतः ) ननु भाष्ये **द्वयोरि**ति **षष्ठी**द्विवचननिर्दिष्टस्य द्वित्वात्–**'यान्हि'**–इति बहुवचननिर्देशोऽनुपपन्न इति चेन्न । प्रकृते 'द्वयो'रित्यनेन न केवलौ वर्णौ निर्दिष्टौ । तथा सति तयोरेवावधित्वाद्द्वितीयापत्तिः । किं त्वन्यसहितावपि । अत एव षष्ठी । एवं च त्रयाणां समवधाने द्वयोः समुदाययोरवधित्वविवक्षणेन द्वयोः समुदाययोरनन्तरत्वे तत्समुदायवर्तिहलां बहुत्वात्तदुपपत्तिः । **'अनन्तरा'** इत्यनेन च न विद्यतेऽन्तरा यौ वर्णौ तौ, यौ च समुदायावन्तरा न विद्यते तौ च गृह्यन्ते, एकशेषादिति न दोषः । तत्सर्वमभिप्रेत्याह—**यदा द्वयोर्द्वयोरिति ।** द्व्यवयवकसमुदाययोरित्यर्थः । **यान्**-वर्णान्–'द्वयोः समुदाययो'रित्यर्थक**षष्ठ्या प्रतिनिर्दिशती**ति भाष्यार्थ इति भावः । 'अनन्तरा' इत्यस्याऽत्र पक्षे व्यावर्त्यं दर्शयन् पूर्वोक्तमेवाऽर्थं दृष्टान्तेनोपपादयितुमाह—**यदा हि बहूनामिति ।** न च 'स्रष्टे'त्यादौ रेफषकारयोर्वर्णयोरन्तरा कस्यचित्सत्त्वेऽपि सरौ रषौ चेति समुदायौ, तयोश्चान्तरा न कश्चिदिति तेषां संयोगत्वं स्यादिति वाच्यम् । वर्णयोरन्तरा विद्यमानत्वेनाऽनन्तरत्वाऽभावात् । सर्वविधाऽनन्तरत्वस्यैव निमित्तत्वादित्याहुः ॥

[ सिद्धान्तिनःसमुदायसंज्ञाभ्युपगमभाष्यम् ]

**अस्तु तर्हि समुदाये संज्ञा ॥**

[ तटस्थस्य दूषणस्मारणभाष्यम् ]

**ननु चोक्तं-'समुदाये संयोगादिलोपो मस्जेः' इति ॥**

[ दूषणनिराकरणपरसिद्धान्तिभाष्यम् ]

**नैष दोषः । वक्ष्यत्येतत्–"अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थ"मिति ।**

(प्रदीपः) **अन्त्यात्पूर्व इति ।** तत्रानुषङ्ग-

---

❀ राजलक्ष्मीः ❀

१ 'कस्मान्न भवति' पा० । २ 'अनियतावधिविवक्षायामभावः' पा०। ३एतेषां–मध्यत्वनिरूपकाणाम् । ४ भवितव्यमिति । तदेव तु न, यथा द्वौ क-खौ मध्यत्वनिरूपकौ तथा ग-घावपि मध्यत्वनिरूपकाविति क-ख-ग-घानां चतुर्णामपि सा प्राप्नोति । नहि ते तन्निरूपकेभ्यो व्यतिरिक्ता इत्याशयः ।

लोपार्थमवश्यं वक्तव्यम्। अन्त्यादचः परे नुमि सत्यनुपधात्वान्मग्न इत्यत्र नलोपो न स्यात्। कृतेऽपि संयोगादिलोपे तस्याऽसिद्धत्वादनुपधात्वमेव नकारस्य।

( उ० ) **अनुषङ्गो**—नकारः। तल्लोपोऽनिदितामित्यनेन।

[ एकदेशिनःसमुदायसंज्ञादूषणनिराकरणभाष्यम् ]

**अथवाऽविशेषेण संयोगसंज्ञा विज्ञास्यते—द्वयोरपि, बहूनामपि। तत्र[1] द्वयोर्या संयोगसंज्ञा तदाश्रयो लोपो भविष्यति ॥**

( **प्रदीपः** ) **अविशेषेणेति**। बहुष्वनन्तरेषु द्वयोर्द्वयोरपि भवति बहूनामपीत्ययमिदानीमविशेषः। कार्यार्थत्वात्संयोगसंज्ञाया विरोधाऽभावादेकया संज्ञया सर्वेषामनुग्रहाऽसिद्ध्या द्विर्वचनेन वैषम्याद**विशेषेणे**त्युक्तम् ॥

( **उद्द्योतः** ) **बहूनामपीति**। न्यायतः सूत्रात्सम्भवमात्रेणेदमुक्तम्, न तु फलोदाहरणमस्य न्याय्यमस्ति। ध्वनितं चेदम**ङ्गेन संयोगादि**मिति ग्रन्थेन भाष्ये। ननु द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यादिति कथमेतत्पक्षोत्थानमत आह—**कार्येति**। द्विर्वचनं हि श्रवणार्थमेव, न शास्त्रीयकार्यार्थम्। एकस्याऽचो बह्ववयवत्वं युगपद्विरुद्धं च। एकेन द्वित्वेन सर्वानुग्रहश्चेति वैषम्यम् ॥

[ बहूनामपि कामचारात्सञ्ज्ञेतिपक्षेदोषनिरासभाष्यम ]

**यदप्युच्यते—"इह च निर्ग्लेयात् निर्ग्लायात् निर्म्लेयात् निर्म्लायादिति, 'वान्यस्य संयोगादेः' इत्येत्वं न प्राप्नोति" इति[2] ॥ अङ्गेन संयोगादिं विशेषयिष्यामः-'अङ्गस्य संयोगादे[3]'रिति। एवं तावत्सर्वमाङ्गं परिहृतम् ॥**

**यदप्युच्यते—"इह च गोमान्करोति यवमान्करोतीति, 'संयोगान्तस्य लोपः' इति लोपो न प्राप्नोति" इति। पदेन संयोगान्तं विशेषयिष्यामः—'पदस्य संयोगान्तस्ये'ति ॥ यदप्युच्यते—'इह च निर्ग्लानो निर्म्लान इति, 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वं न प्राप्नोति' इति। धातुना संयोगादिं विशेषयिष्यामः-'धातोः संयोगादे'-रिति ॥**

( **प्रदीपः** ) 'बहूनां सन्निधौ बहूनामेव संयोगसंज्ञे'त्यस्मिन्पक्षे आश्रीयमाणे मस्जेर्दोषोऽन्त्यात्पूर्व इति परिहृतः। शेषान्दोषान्परिहर्तुमाह—**यदप्युच्यत इति**। पाठक्रमादार्थक्रमो बलीयानिति—मस्जेरन्त्यात्पूर्व इत्यस्यानन्तरमिदं द्रष्टव्यम्। 'निर्ग्लेया'दित्यादिषु यद्यपि त्रयो हलः सन्निहितास्तथापि कार्यार्थत्वात्संज्ञायास्त्रिषु कार्याभावादङ्गपदधात्ववयवस्य संयोगस्य तेषु तेषु लक्षणेष्वाश्रितत्वात्समुदाये कार्याऽभावे चाऽवयवानां स्वकार्यारम्भाद्द्वयोरेव संज्ञा प्रवर्तेत इति भाष्यार्थः। व्याख्यानान्तरमत्र क्लिष्टत्वान्नोक्तम्।

( **उद्द्योतः** ) ननु पक्षान्तरेण व्यवधानादासत्त्यभाव इत्यत आह—**पाठेति**। शब्दस्यार्थप्रत्यायनाङ्गत्वेन गुणत्वात्तदीयः क्रम आर्थक्रमविरोधे दुर्बल इति भावः। (**अङ्ग**) **पदधात्ववयवेति**। **संयोगादे**रित्यादावाद्यन्तशब्दयोरवयववाचितयेति भावः। अयमाशयः—अङ्गादेरादावन्ते वा व्यञ्जनत्रयाऽभावात् त्रयाणां फलाऽभावात्संज्ञाऽप्राप्तौ कथं द्वयोर्न स्यादिति। यद्यपि सामानाधिकरण्यान्वयेऽपि अङ्गाद्यवयवस्यैव संयोगस्याश्रयणं नान्यस्येति '**अङ्गेन संयोगादिं विशेषयिष्याम' इ**त्यनुपपन्नं, तथापि संयोगरूपमादिमङ्गेन परिच्छेत्स्यामोऽङ्गाद्यवयवसंयोगस्यैव बहुव्रीहिणाश्रयणमित्यर्थ इति न दोषः। एवंच **बहूनामपी**त्याश्रयणे फलाऽभाव इति स्पष्टमेवोक्तम्। क्लिष्टकल्पनया नादृशसंयोगानयनं तु नाऽनभिधानादित्याशयः। अदादिषु 'षस स्वप्ने' इत्येव पाठो न तु 'षस सस्ति स्वप्ने' इति, एतद्भाष्यप्रामाण्या**ज्जक्षित्या**दिसूत्रस्थभाष्यप्रामाण्याच्चेति बोध्यम्। **व्याख्यानान्तरमिति**। पाठक्रमाऽबाधायैवं व्याचक्षते—**न प्राप्नोती**तीत्यत्रेतिशब्दो यस्मादर्थ उत्तरान्वयी, यस्मादङ्गेन संयोगादिर्विशेष्यतेऽङ्गावयवः संयोगो गृह्यते इत्यर्थः। एवंच बहूनामेव संयोगत्वे यः संयोगो नासावङ्गावयवो यश्चाङ्गावयवो नासौ संयोगस्तस्मादेत्वं न प्राप्नोतीति यदपि[4]—तदप्यसत्। यतो-

## ❀ राजलक्ष्मीः ❀

१ तत्र–तयोर्मध्ये। **लोपः**–सकारस्य संयोगादिलोपः। २ अस्य 'नैतदस्ति यतः' इति शेषः। ३ ननु रेफसन्निधौ बहूनामेव तत्त्वेऽङ्गस्य संयोगादित्वं कथम् ?। उच्यते, फलवत्त्येव संयोगसंज्ञेत्येत्वरूपफलस्य तथाऽन्वयेऽभावेन त्रयाणां सा न भविष्यतीत्यतो द्वयोरेव प्रवृत्ते सेत्याशयः। ४ 'उच्यते' इति शेषः।

## ❀ शब्दकौस्तुभः ❀

यतेः सनीन्दिद्रियिषतीति न स्यात्। इह हि संयोगौ द्वौ नदौ दरौ च,–तत्र नकारस्येव दकारस्यापि 'नन्द्रा'इति द्वित्वनिषेधः प्राप्नोति। नैष दोषः। तत्र ह्यजादेरित्यनुवर्त्तते। सा च कर्म्मधारयात्पञ्चमी। तेनादेरचः परे नदराः संयोगादयो न द्विरुच्यन्तइति सूत्रार्थः। एवं च पूर्वसूत्रे द्वितीयस्येति

'ऽविशेषेण संज्ञोच्यते इति शेष' इति । तत् क्लिष्टम् । शेषपूरणात् । इतेः स्वरसतो वाक्यसमाप्त्यर्थतायाः प्रतीयमानत्वाच्च । 'एवं तावत्सर्वमाङ्गं परिहृत'मित्यस्याऽस्वारस्याच्च ॥

[ पूर्वपक्षिण आक्षेपवार्तिकम् ]

*॥*॥ स्वरानन्तर्हितवचनम् ॥*॥*

**स्वरैरनन्तर्हिता हलः संयोगसंज्ञा भवन्तीति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ व्यवहितानां मा भूत् । पचति पनसम् ॥**

( प्रदीपः ) **पचति पनसमिति** । 'हल' इति वचनादचा सह सकारमकारयोर्मा भूत्संज्ञा, तयोरेव तु प्राप्नोति, ततश्च सलोपप्रसङ्गः ॥

( उद्द्योतः ) **हल इतीति** । तद्धि 'असावित्यादौ स्कोरिति सलोपवारणायावश्यकमिति भावः ॥

[ शङ्कितुराक्षेपबाधकभाष्यम् ]

**ननु चानन्तरा इत्युच्यते । तेन व्यवहितानां न भविष्यति ॥**

[ पूर्वपक्षिण आक्षेपस्थापकवार्तिकम् ]

*॥*॥ दृष्टमानन्तर्यं व्यवहितेऽपि ॥*॥*

( भाष्यम् ) **व्यवहितेऽप्यनन्तरशब्दो दृश्यते । तद्यथा–'अनन्तराविमौ ग्रामौ' इत्युच्यते,तयोश्चैवाऽन्तरा नद्यश्च पर्वताश्च भवन्तीति ॥**

[ शङ्कस्याक्षेपबाधकभाष्यम् ]

**यदि तर्हि व्यवहितेऽप्यनन्तरशब्दो भवति, आनन्तर्यवचनमिदानीं किमर्थं स्यात् ? ॥**

[ पूर्वपक्षिण आक्षेपसाधकवार्तिकम् ]

*॥*॥ आनन्तर्यवचनं किमर्थमिति चेदेकप्रतिषेधार्थम् ॥*॥*

( भाष्यम् ) **एकस्य हलः संयोगसंज्ञा मा भूदिति । किं च स्याद्यद्येकस्य हलः संयोगसंज्ञा स्यात् ?॥ इयेष उवोष । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् प्रसज्येत ॥**

( प्रदीपः ) **एकप्रतिषेधार्थमिति** । अनन्तरा इत्यनेन संज्ञाया विषयो निर्दिश्यते । यत्रानन्तरव्यवहारस्तत्र संज्ञा । नचैकाकिन्यनन्तरव्यवहार इति भावः । एकप्रतिषेधस्य च प्रयोजनम् इयेषेत्यादा**विजादे**रित्यामो निवृत्तिः । **गुरुमच्चन**मियायेत्यादिनिवृत्त्यर्थं स्यात् ॥

( उद्द्योतः ) **नचेति** । आनन्तर्यस्य सप्रतियोगिकत्वादिति भावः । प्रकृते चान्यस्य प्रतियोगिनोऽनुपादानादुपस्थितहलेव प्रतियोगित्वेनाश्रीयत इति बोध्यम् । भाष्ये **उवोषेति** प्रसङ्गोच्चारितम् । तस्य विकल्पिताऽऽम्कत्वात् । उवोखेति कवर्गद्वितीयान्तो वा पाठः । **इयायेति** । इ णल् इत्यस्यामवस्थायां व्यपदेशिवद्भावादिजादित्वमस्ति, गुरुमत्त्वं तु न। न चेयङि कृते गुरुमदिजादित्वादाम् स्यादितिवाच्यम्, लिड्धातुसंनियोगेन सम्पन्नस्य गुरुमदिजादित्वस्य तद्विघातकत्वाऽभावादिति भावः ॥

[ सिद्धान्तिनःसमाधानवार्तिकम् ]

*॥*॥ न वाऽतज्जातीयव्यवायात् ॥*॥*

( भाष्यम् ) **न वैष दोषः ॥ किं कारणम् ?॥ 'अतज्जातीयस्य व्यवायात्'। अतज्जातीयकं हि लोके व्यवधायकं भवति ॥**

[ प्रश्नभाष्यम् ]

**कथं पुनर्ज्ञायते—'अतज्जातीयकं लोके व्यवधायकं भवती'ति ? ॥**

[ व्यवहारदर्शनेन समाधानभाष्यम् ]

**एवं हि कंचित् कश्चित्पृच्छति—'अनन्तरे एते ब्राह्मणकुले' ? इति ॥ स आह—'नाऽनन्तरे, वृषलकुलमनयोरन्तरे'ति ॥**

( प्रदीपः ) **वृषलकुलमिति** । यद्यपि ब्राह्मणकुलमपि तयोर्व्यवधायकं तथापि भिन्नजातीयकमव्यवधायकमिति यदुक्तं तदनेन निवर्त्यते ॥

---

॥ राजलक्ष्मीः ॥

१ **हलः**–अनन्तरा हलः । २ तयोस्तु प्राप्नोत्येवेत्यर्थः । ३ सावित्यस्य संयोगत्वादिति शेषः । ४ 'हलां संयोग इत्यर्थे' इत्यादिः । ५ यस्य संयोगत्वं तस्मिन् गुरुत्वादित्याशयः । ६ **उपविदे**त्यस्य । ७ **कथं**–केन व्यवहारेण ।

॥ शब्दकौस्तुभः ॥

न कर्त्तव्यमेवेति वक्ष्यते । हलः किम् । तितउभ्याम् । अत्र 'तनोतर्डउः सन्वच्चे'ति डउप्रत्ययः, सन्वद्भावाद्वित्वं सन्यत इतीत्वं च । व्यस्तोच्चारणसामर्थ्याद्गुणाऽभावः ।

( उद्द्योतः ) कुलमत्र गृहम् । ब्राह्मणकुलमपीति । तत्तद्रूपेण ग्रहणे तस्यापि विजातीयत्वादिति भावः । भाष्ये अनयोरन्तरेति षष्ठ्युपादानादन्यसहितयोरवधित्वसूचनात्तत्तद्रूपेणाऽग्रहणबोधनाद्ब्राह्मणकुलस्याव्यवधायकत्वमेवेत्यन्ये । भिन्नजातीयेति । 'तयोश्चान्तरा नद्यश्च पर्वताश्च भवन्ती'ति भाष्येणेत्यर्थः ॥

[ पूर्वपक्षिणः शङ्काभाष्यम् ]

**किं पुनः कारणं-क्वचिदतज्जातीयकं व्यवधायकं भवति, क्वचिन्न ? ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति ॥**

[ तमजानतः पूर्वपक्षिणआक्षेपभाष्यम् ]

**कथम्—'अनन्तराविमौ ग्रामा'विति ?॥**

[ सिद्धान्तिनः परिहारभाष्यम् ]

**ग्रामशब्दोऽयं बह्वर्थः । अस्त्येव शालासमुदाये वर्तते । तद्यथा-ग्रामो दग्ध' इति । अस्ति वाटपरिक्षेपे वर्तते । तद्यथा 'ग्रामं प्रविष्ट' इति । अस्ति मनुष्येषु वर्तते तद्यथा—'ग्रामो गतः' 'ग्राम आगत' इति । अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते । तद्यथा-'ग्रामो लब्ध' इति ॥ तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत्प्रयुज्यते-'अनन्तराविमौ ग्रामा'विति । सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति ॥** ( हलोऽनन्तराः । )

( प्रदीपः ) ग्रामशब्दोऽयमिति । केचिदर्थभेदेन शब्दभेदमिच्छन्ति । प्रत्यभिज्ञानं तु सामान्यनिबन्धनम् । अन्ये तु एकशब्दत्वं । तत्र चाऽनेकशक्तियोग एकशक्तित्वं वेति दर्शनविकल्पः । तत्र यदा एकशब्दत्वपक्षस्तदा 'तद्यः सारण्यके' इतिभाष्यं शक्तिभेदादुपचरितभेदाश्रयम् । भेदपक्षे तु 'ग्रामशब्दोयं बह्वर्थ' इति भाष्यम् अभिन्नसामान्यनिमित्तैकत्वाध्यवसायाश्रयम्। तद्यः सारण्यक इति । ततश्च ग्रामशब्दार्थे नदीनां पर्वतानां चाऽन्तर्भावाद्व्यवधायकत्वाभावादानन्तर्यं ग्रामयोरुच्यते । 'ग्रामे नाऽध्येय'मित्यत्र तु ग्रामशब्दो वाटपरिक्षेपे वर्त्तते, शुचौ देशेऽध्ययनप्रतिपादनतात्पर्यात् । ततश्च सीमन्यधीयत एव ।

( उद्द्योतः ) ग्रामशब्दोऽयमित्यस्य तद्यः सारण्यक इत्यस्य चाऽविरोधायाह—केचिदिति । 'अन्याय्यश्चानेकार्थत्व'मिति तदाशयः । सामान्यं च—ग्रामशब्दत्वादि । अन्ये त्विति । व्यक्तिभेदकल्पनायां गौरवमिति तदाशयः । तत्रेति । निरूपकभेदाच्छक्तिभेद इति भावः । एकेति । समवायैकत्वनये रसो रूपवानित्यादिप्रयोगवदन्यार्थबोधकालेऽन्यार्थबोधो वारणीयः । तदर्थसबन्धेन शक्त्यग्रहात् । तत्तदर्थविशिष्टशक्तिभेदेन च नानार्थत्वव्यवहार इति भावः । तत्र यदेति । एकशक्तित्वपक्षे त्वर्थभेदादुपचरितभेदाश्रयमिति बोध्यम् । 'ग्रामशब्दोऽयं बह्वर्थ' इति तु मुख्यार्थमेव । अत्र सर्वार्थनिरूपितवृत्तीनां 'वर्तते' इत्येकशब्दबोध्यत्वेनाऽभेदबोधनादेकशक्तित्वपक्षो भाष्यबोधितः । तत्र वर्त्तनक्रियाऽस्तिक्रियायाः कर्त्री । शालासमुदायादौ ग्रामशब्दस्य वृत्तिरस्तीत्यर्थः । वाटपरिक्षेपो नाम शालासमुदायरक्षणाय सर्वतो मार्गप्रतिरोधकं यत्परितः क्षिप्यते तदुच्यते । सारण्यकससीमकवृत्तिस्त्वत्र न गृह्यते इत्याह—शुचाविति । सीमनीतिच ॥ [ हलोऽनन्तराः ]॥

---

## मुखनासिकावचनोऽनुनासिकः ॥ १ । १ । ८ ॥

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**किमिदं 'मुखनासिकावचन' इति ? ॥**

(प्रदीपः) मुखनासिकावचनोनुनासिकः ।

---

❀ राजलक्ष्मीः ❀

१ यः शालासमुदाये वर्त्तते सोऽस्त्येवेत्यन्वयः ।
२ वाटपरिक्षेपः—वृतिपरिक्षेपः ('वाड'इति प्रसिद्धः) ।
३ ग्रामशब्दत्वाद्यभिन्नसामान्यनिमित्तकैकत्वाभिप्रायकमित्यर्थः । ४ अस्य—'अर्थभेदेऽपि वाञ्छन्ती'ति शेषः । ५ तत्रेति । तयोर्मध्ये इत्यर्थः । ६ प्रयोगवारणवत् ।

❀ शब्दकौस्तुभः ❀

यदि ह्यचोरप्यनन्तरयोः संयोगसंज्ञा स्यात्तर्हीह संयोगान्तस्येत्युकारलोपः स्यात् । अनन्तराइति किम् ?। पनसम् । यदीह सकारमकारयोः संयोगसंज्ञा स्यात्तर्हि स्कोरिति सूत्रेण सकारलोपः स्यादिति दिक् । [ हलोऽनन्तराः ] ॥

---

मुखनासिकावचनोनुनासिकः ॥ मुखसहिता नासिका मुखनासिका तयोच्चार्यमाणोनुनासिकसंज्ञः स्यात् ।

प्राप्यङ्गत्वात्समाहारद्वन्द्वे ह्रस्वत्वेन भाव्यम्, अवचनमिति नञ्समासाश्रयणेऽर्थो न सङ्गच्छते इति प्रश्नः-**किमिदमिति ।**

**(उद्द्योतः) मुखना। प्राण्यङ्गत्वादिति ।** एतेनेतरेतरयोगद्वन्द्वे रूपसिद्धिरित्यपास्तम् । **अर्थ इति ।** अभिमतोऽर्थ इत्यर्थः ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**मुखं च नासिका च मुखनासिकम् । मुखनासिकं वचनमस्य सोऽयं मुखनासिकावचनः ॥**

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**यद्येवं 'मुखनासिकवचन' इति प्राप्नोति ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**निपातनाद्दीर्घत्वं भविष्यति ॥**

**( प्रदीपः ) निपातनादिति ।** प्रसङ्गेनाऽस्य लौकिकशब्दस्य साधुत्वं ज्ञाप्यते । निपातनानां च बाधकत्वान्मुखनासिकवचन इति न भाव्यम् । अबाधकत्वपक्षे तु भाव्यमेव ॥

**( उद्द्योतः )** सौत्रत्वादिति कुतो नोक्तमित्यत आह–**प्रसङ्गेनेति । अबाधकत्वेति । पक्षे त्वित्यनेनाबाधकत्व-**स्वीकर्तृवृत्तिमतमसङ्गतमित्युक्तम् । भाष्यकृदसंमतरूपापत्तेः । **'बाधकान्येव निपातनानी'**ति **सर्वादिसूत्रे** भाष्ये उक्तेः ॥

[ समाधानान्तरभाष्यम् ]

**अथ वा—मुखनासिकमावचनमस्य सोऽयं मुखनासिकावचनः ॥**

[ आक्षेपतत्समाधानभाष्यम् ]

**अथ किमिदमावचनमिति ? ॥**

**ईषद्वचनमावचनमिति । किंचिन्मुखवचनं किंचिन्नासिकावचनम् ॥**

**( प्रदीपः ) ईषद्वचनमिति ।** भागस्य मुखेनोच्चारणाद्भागस्य नासिकया । अस्मिन्पक्षे 'मुखनासिकवचन' इत्यपि भवति । यो हीषदुच्यते स उच्यते एव । यथा ईषच्छुक्लोऽपि शुक्ल एव ॥

**(उद्द्योतः) अस्मिन् पक्ष इति ।** 'आङ्रहितस्ये'ति शेषः । वस्तुत आद्यपक्षैकवाक्यतया आङ्रहितैतत्पदवचनपदाभ्यां समासस्याऽनभिधानमेवेत्याहुः। ननु भागस्य मुखाद्युच्चार्यत्वेन मुखनासिकं वचनमुच्चारणकरणं यस्य वर्णस्येत्यर्थको 'मुखनासिकावचन' इति प्रयोगस्तत्राऽसङ्गतोऽत आह—**यो हीति ॥**

[ समासान्तरभाष्यम् ]

**मुखद्वितीया वा नासिका वचनमस्य सोऽयं-मुखनासिकावचनः ॥**

**( प्रदीपः ) मुखद्वितीयेति ।** मुखसहायेत्यर्थः । तत्र नासिका मुखसाहचर्यान्**मुख**शब्देनोच्यते । मुखं च तन्नासिका च मुखनासिका, सा वचनमस्येति ॥

**( उद्द्योतः ) सहायेति ।** अव्युत्पन्नो 'द्वितीय'-शब्दः सहायवाचीत्यर्थः । शाकपार्थिवादित्वादुत्तरपदलोपे शब्दाऽनित्यत्वापत्तिरत आह—**तत्रेति ।** परंत्विदं चिन्त्यं, भाष्यकृतैवंरीत्या तदप्रत्याख्यानात् ॥

[ समाधानान्तरभाष्यम् ]

**मुखोपसंहिता वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः ॥**

**( प्रदीपः ) मुखोपसंहितेति ।** मुखस्य (च)[1]

---

**( राजलक्ष्मीः )** १ एवं ह्रस्वघटितप्रयोगो न प्राप्नोतीत्यस्वरसादाह-**अथवेति ।** २ चः क्वाचित्कः ।

---

**॥ शब्दकौस्तुभः ॥**

संज्ञाप्रदेशाः–'आङोनुनासिकच्छन्दसी'त्यादयः । अभ्रआँ । अपो वृणाना । गभीरआँ उग्रपुत्रे । इह-उच्यते इति वचनः। 'कृत्यल्युटो बहुल'मिति बाहुलकात्कर्मणि ल्युट् राजभोजनाः शालय इतिवदिति **वृत्त्यनुसारिणः । भाष्यकैयटयोस्तु–**उच्यतेनेनेति वचनम् । करणे ल्युट् । सामान्ये नपुंसकम् । 'शक्यं च श्वुपहन्तु'मितिवत्, 'तेन तुल्यं क्रिया चेत्' 'संस्कृतं भक्षा' इतिवच्च । इदञ्च 'विशेषणानाञ्चाऽजाते'रित्यत्र वक्ष्यमाणेन 'पदसंस्कारपक्षे गुणवचनानामित्यादिवाचनिक'-मित्यनेन सह यथा न विरुध्यते तथा तत्रैव वक्ष्यामः । ततो मुखनासिका वचनं यस्येति बहुव्रीहिः ।

मुखेति किम् ? । यमानुस्वाराणामेव मा भूदिति **भाष्यम्** । तत्र वर्गेष्वादितश्चतुर्णां पञ्चमे परे तन्मध्ये पूर्ववर्णसमानाकारं वर्णान्तरं प्रातिशाख्येष्वागमत्वेन विहितं-**तद्यम**संज्ञम् । यम इव यमः । यमौ हि लोके प्रायेण समानाकारौ भवतः । यथा–पलिक्क्नीः चख्ख्नतुः अग्ग्निः अघ्घ्नन्नित्यत्र कखगघ इत्येभ्यः परभागे तत्तत्सदृशो यमागमः । यत्तु **विवरणे**–'वर्गपञ्चमयुक्ताः प्रथमादयो यमा' इति । तच्चिन्त्यम् । अयोगवाहत्वप्रतिपादकेन इयवरट्सूत्रस्थभाष्येण सह विरोधात् । केवलनासिक्यत्वपरेण 'यमानु-

नासिकायाश्च यदन्तरालं स्थानान्तरमेवानुनासिकस्येति दर्शयति। तत्र सामीप्यान्मुखं च तन्नासिका चेत्युभाभ्यामन्तरालं व्यपदिश्यते। पदसंस्कारपक्षे तु मुखनासिकापदनिरपेक्षं वचनमित्येतत्पदं लिङ्गसर्वनामनपुंसकाश्रयेण संस्क्रियते। पश्चात्स्त्रीत्वस्य पदान्तरसंबन्धेन प्रतीयमानत्वाद्बहिरङ्गत्वान्ङीप्प्रत्ययो न भवति। यदा तु स्त्रीत्वाश्रयेण वचनीतिपदं व्युत्पाद्यते तदा 'मुखनासिकावचनीक' इति भवत्येव॥ अत्र चानेकदर्शनम्। अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चार्यते, भागो नासिकया, तत्र नासिकावचनभागानुरागवशान्मुखवचनोऽपि भागो नासिकावचन इव लक्ष्यते। यथा सँय्यन्तेत्यत्रानुनासिकयकारानुरागादकारोऽनुनासिक इव प्रतिभाति। अत्र च प्रासादवासिन्यायो नास्ति, भागस्यैव मुखेन नासिकया चोच्चारणान्न तु समग्रस्य। अन्येषां तु दर्शनं,-मुखनासिकान्तरालं स्थानान्तरमेवाऽनुनासिकस्येति। अत्रापि नास्ति प्रासादवासिन्यायः। यदा सर्व एव वर्णो मुखेनोच्चार्यते नासिकया च तदा प्रासादवासिन्यायेन भाष्यकारो मुखग्रहणं प्रत्याचष्टे। यथा भ्राष्ट्रेणोखया च पक्वः सूप उभाभ्यां व्यपदिश्यते।

(**उद्द्योतः**) **मुखस्य चेति**। उपशब्दसामर्थ्यादिति

(**राजलक्ष्मीः**) १ 'इत्येव भवति' पा०।

*** शब्दकौस्तुभः ***

स्वराणामेवे'ति भाष्येण सह विरोधाच्च। अथेदं भाष्यन्न केवलनासिक्यत्वपरं किन्तु 'आँ' इत्यादीनां भागमात्रं नासिक्यं, यमानुस्वाराणां तु मुखनासिक्यत्वेपि प्रासादवासिन्यायेन नासिक्यत्वमप्यस्ति, न तु तदीयं भागमात्रं तथेत्येवंपरं, तथाप्यादितश्चतुर्णान्तदसम्भव एव। किञ्चैवं **नैव दोषो नैव प्रयोजनमिति** तदुत्तरभाष्यग्रन्थविरोधः। 'यद्दु ध्नन्ती'त्यादौ 'यरोनुनासिक'इत्यस्य प्रवृत्त्यापत्त्या स्वपक्षे दोषस्योद्भटत्वात्। अत एव प्रातिशाख्ये "स्पर्शा यमाननुनासिकाः स्वान्परेषु स्पर्शेष्वनुनासिके"ष्विप्युपक्रम्य प्रदोधुवच्छ्रुष्वित्यत्र यमं निषेद्धुमारब्धेन 'स्पर्शस्योष्मप्रकृतेः परस्ताथमापत्ति'मिति सूत्रे परस्ताच्छब्दः प्रयुक्तः। यमः प्रकृत्यैव-'सदृक्श्रुतिर्वा यमेन मुख्यास्ति। समानकाले'त्यादिसूत्रान्तरेष्वपि स्पष्टमेव यमस्य वर्णान्तरत्वम्। तथा नारदीयशिक्षायामपि-'अनन्त्यश्च भवेत्पूर्वो ह्यन्तश्च परतो यदि। तत्र मध्ये यमस्ति-

भावः। यद्यपि वचनशब्दे कर्मणि ल्युटि मुखनासिकेनावचनो मुखनासिकया वचन इति वा तत्पुरुषोऽपि वक्तुं शक्यः, तथापि कर्मणि तस्य बाहुलकलभ्यत्वात्करणे ल्युटा बहुव्रीहिरेवाश्रितो भाष्ये। तत्राऽन्ययोर्नासिकशब्दसामानाधिकरण्यात्स्त्रीत्वविशिष्टस्यैव करणत्वेन ल्युटि ङीपि **नद्युतश्चेति** कबापत्तिरत आह-**पदसंस्कारेति**। भागस्य मुखेनोच्चारणाननुभवादाह-**तत्रेति**। **तस्यादित** इति सूत्रस्वरसाद्वर्णानां सखण्डत्वमित्याशयः। ये तु तत्तद्देशावच्छिन्नवाय्वभिघातस्य तत्तद्वर्णजनकत्वात्स्थानानां करणत्वमेव। स्थानव्यवहारस्तु वर्णजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वमारोप्य। अत एवोत्तरसूत्रे भाष्ये **अस्यन्त्यनेन वर्णानित्यास्य**मिति करणे व्युत्पत्तिर्दर्शितेति वदन्ति, तन्मते प्रासादवासिदृष्टान्ताऽसङ्गतेराह-**भ्राष्ट्रेण चेति**। एतेन कण्ठादिकं तु स्थानं, नासिका तु करणमिति मन्दोक्तमपास्तम्। अत एवात्र सूत्रे हरिणा--**"स[3] हि वर्णो न मुखेनैव, नापि नासिकयैव चात्मवृत्तिं लभते किं तु वायुनाऽनुपरतशक्तिनाऽन्यतरकरणमभिहत्यान्यतरकरणेऽभिहन्यमाने आत्मव्यक्तिं लभते"** इत्युक्तम्॥

[ मुखग्रहणप्रयोजनप्रश्नभाष्यम् ]

**अथ मुखग्रहणं किमर्थम्?॥**

[ समाधानभाष्यम् ]

**'नासिकावचनोऽनुनासिकः' इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत। मुखग्रहणे पुनः क्रियमाणे न दोषो भवति॥**

२ दर्शनं मतम्। ३ स हीति। ङादिरित्यर्थः।

द्वेत्सवर्णः पूर्ववर्णयो'रिति। **सवर्णः**-सदृशः। तत्र **पूर्ववर्णयोरिति** द्वित्वमविवक्षितम्। 'यज्ञ'इत्यादौ जकारद्वयसत्त्वेपि'ज्मया अत्रवसवोरन्तदेवा'इत्यादौ जकारद्वयाऽभावादिति तद्व्याख्यातारः। यथा **ऋक्तन्त्रव्याकरणाख्यस्य छान्दोग्यलक्षणस्य** प्रणेता **औदव्रजिर**प्यसूत्रयत्-'अनन्त्यान्त्यसंयोगे मध्ये यमः पूर्वस्य गुण'इति। **पूर्वस्य गुण**-इत्यस्य पूर्वभक्त इत्यर्थः। एतेनागमत्वं स्फुटीकरोति। तथा **संयोगश्टङ्खलाख्यायां गौतमशिक्षा**यामपि-अथ च तुरक्षराणामुदाहरणं सयमायमाभ्यां। सयमास्तावद्यथा अग्निरिति द्वौ गकारौ यमनकारौ, यज्ञ इति द्वौ जकारौ यमञकारावित्यादि। तथात्रैव ग्रन्थारम्भे,-अयस्पिण्डो दारुपिण्ड ऊर्णापिण्डश्चेति त्रेधा संयोगं विभज्य-यमसहितमयस्पिण्डमित्युक्त्वा,-**अन्तस्थयमसंयोगे विशेषो नोपलभ्यते। अशरीरं यमं प्राहुरन्तस्थः पिण्डनायकः॥"** इत्युक्तम्। **अन्तस्थोऽत्र** वर्णपञ्चमः। **अशरीर**मिति स्वरभ-

**( प्रदीपः ) यमानुस्वाराणामेवेति ।** प्रासादवासिन्यायानवतारपक्षे इति भावः । तत्र विधिप्रदेशेषु यमानुस्वारा एवादेशाः स्युः । 'विड्वनोरनुनासिकस्या'दित्यादिषु त्वनुवादप्रदेशेषु यमानुस्वाराणामसंभवादप्रतिपत्तिः स्यात् ।

**( उद्द्योतः ) यमो**–नाम वर्गपञ्चमे परे वर्गाद्यचतुष्टयान्यतमसदृशो वर्णः । **'आदितश्चत्वारो वर्णा'** इति **विवरणे**ऽपि **चतुः**–शब्दस्य चतुःसदृशे लक्षणा बोध्या । अत एवाऽयोगवाहत्वप्रतिपादक**हयवरट्**सूत्रस्थभाष्याऽविरोधः । **न्यायानवतारेति । कचटपतानामेवे**त्येवकारो ऽप्यत्रैव[1] पक्षे नासिकाया आस्यबाह्यत्वपक्षे च बोध्यः । **अप्रतिपत्तिरिति ।** अत्र 'विड्वनोर्ञम' इति वक्तुं शक्यम् । 'यरोऽनुनासिक' इत्यत्र त्वप्रतिपत्तिः । तत्र ञमि ञम्वे'त्युक्ते सकलेष्टाऽसिद्धेः[2] ।

[ पूर्वपक्षिणो नासिकाग्रहणे आक्षेपभाष्यम् ]

**अथ नासिकाग्रहणं किमर्थम् ? ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**'मुखवचनोऽनुनासिकः' इतीयत्युच्यमाने कचटतपानामेव प्रसज्येत । नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति ।**

**( प्रदीपः ) कचटतपानामिति ।** 'पक्'मिति चकारलोपप्रसङ्गः, 'ओदनप'गित्यत्राऽनुनासिकस्य क्विझलोः क्ङितीति दीर्घप्रसङ्गः ।

**( उद्द्योतः ) चकारलोपेति ।** निष्ठावत्वकुत्वयोरसिद्धत्वात् पचेरनुदात्तोपदेशवनतीत्यनेनेति भावः ।

[ मुखग्रहणप्रत्याख्यानभाष्यम् ]

**मुखग्रहणं[3] शक्यमकर्तुम् ॥**

[ शङ्काभाष्यम् ]

**केनेदानीमुभयवचनानां[4] भविष्यति ?॥**

[ प्रत्याख्यातृसमाधानभाष्यम् ]

**प्रासादवासिन्यायेन[5] । तद्यथा–केचि-**

---

**❀ राजलक्ष्मीः ❀**

१ **अत्रैव**–तदनवतारपक्ष एवेत्यर्थः ।

२ **इष्टासिद्धेरिति ।** यदेतनूं इत्यब्रवीदित्यादावनुनासिकाऽनुपपत्तेरिति भावः । ३ **मुखेति ।** 'तद्विनापि सर्वेष्टसिद्धे'रिति शेषः। ४ **इदानीं**–मुखग्रहणाऽभावे । ५ "मुखग्रहणं शक्यमकर्त्तुं प्रासादवासिन्यायेने"तिवार्त्तिकमित्यन्ये ।

---

**❀ शब्दकौस्तुभः ❀**

क्तयादिवद्व्यञ्जकलिपिविशेषशून्यमित्यर्थः । लक्षणवशेनैव तदीयस्थलविशेषनिश्चयसंभवाल्लिपिसंप्रदायप्रवर्त्तकाचार्य्यैःस्वरभक्तेरिव यमस्यापि व्यञ्जकीभूता लिपिर्न कल्पितेत्यर्थः । रलयोरुष्मणि परे मध्ये स्वरभक्तिरिति हि प्रसिद्धं शिक्षादौ । यत्र तु नैवंविधेन लक्षणेन स्थलावधारणं कर्तुं शक्यते तत्राऽगत्या लिप्यन्तरं प्रवर्तितम् । यथा विसर्गादौ । पाणिनीयशिक्षायामपि–**त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः । प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा ॥ स्वरा विंशतिरेकश्च स्पर्शानां पंचविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ अनुस्वारो विसर्गश्च ✕क✕पौ चापि पराश्रयौ । दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव चेति ।** अत्र हि यमानां पृथग्गणनात्स्पष्टमेव वर्णान्तरत्वम् । गणना त्वित्थम्–अइउऋ इति ह्रस्वदीर्घप्लुतभेदात्त्रैविध्ये द्वादश । लृकारे एकः । एचां दीर्घप्लुतभेदादष्टौ । इत्थं स्वरा एकविंशतिः । स्पर्शाः–पंचविंशतिः । यरलवशषसहैर्य्यष्टौ । यमाश्चत्वारः, प्रथमयमद्वितीययमादिभेदेन विभजनात् । अत एव 'कुं' 'खुं' 'गुं' 'घुं' इति यमचतुष्टयं न्यासादावुदाहृतम् । कचटतपाः 'कुः', खछठथफाः 'खु'रित्यादि परिभाषामाश्रित्य तत्तदुत्तरस्याऽशरीरस्यापि कथञ्चित्प्रदर्शनतात्पर्यकं चेदमिति ध्येयम् । अनुस्वारविसर्ग✕क✕पाश्चत्वारः, दुःस्पृष्टश्च बह्वृचानां प्रसिद्धः–ईळे वोळ्हेति, । इत्थं त्रिषष्टिः (६३) । लृकारस्य प्लुतसम्भवात्तेन सह चतुःषष्टिः (६४) । तदेतदुक्तं–'सम्भवत'इति। हयवरट्सूत्रे **क्षीरोद**कारोऽप्याह–"वर्गान्त्येऽनन्त्यात्परे तयोर्मध्यवर्त्ती नासिकास्थानो यम"इति । यत्तु कश्चिदाह– "यमा आदेशाः; न च तेषामानुनासिक्यपक्षे तज्ज्ञस्तद्घ्नन्तीत्यादौ 'यरोऽनुनासिक' इत्यनुनासिकादेशापत्त्या **नैव दोषो नैव प्रयोजन**'मिति भाष्यं विरुध्येतेति वाच्यम्। व्यवस्थितविभाषाश्रयणा"दिति । तत्तुच्छम् । प्रागुक्तप्रातिशाख्यनारदीयशिक्षादिसकलग्रन्थविरोधेन आदेशपक्षस्य गर्भस्रावेणैव गतत्वात् । व्यवस्थितविभाषाकल्पनस्य निर्मूलत्वाच्च । एतेन तदीयलेखनप्रामाण्यभ्रमेण अनुपसर्गाद्दुश इत्यादौ चवर्गाऽभावं दृढीकृत्य श्चुत्वाऽभावं साधयन्तस्तदनुगामिनोऽपि परास्ताः । नारदेन 'यज्ज्ञ'इत्यत्र जकारद्वयस्य स्फुटमभिधानात् । तस्यैतस्य त्रयस्याऽस्थ्नामज्ज्ञां पर्वणामित्यारण्यकप्रयोग इव सजातीयसमभिव्याहारान्न स्पष्टो भेद इति तु प्रसिद्धं शास्त्रे । अत एव 'न व्यञ्जनपरस्यैकस्यानेकस्य वा विशेषोस्ती'ति भाष्यम् । व्यञ्जनात्परस्य व्यञ्जनं परं यस्येत्येवंभूतस्य च दुर्लक्ष्यो भेदाऽभेदविभाग इत्येवंपरतया तत्र तत्र कैयटेन व्याख्यातम् । अत एव च बहुषु पुस्तकेषु तज्ज्ञापयत्याचार्य इति भाष्यग्रन्थः । 'अनुपसर्गा'दितिसूत्रेऽपि केषाञ्चित् श्चुत्वपाठः सम्मत एव । पाठान्तरं तु 'अल्पाच्तरं', 'आलुच् तदसहने'इति वत्सौत्रत्वादसंहिताया वा समाधेय-

त्प्रासादवासिनः, केचिद्भूमिवासिनः, केचिदुभयवासिनः । तत्र ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन । ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन। ये तूभयवासिनो गृह्यन्त एव ते प्रासादवासिग्रहणेन, भूमिवासिग्रहणेन च । एवमिहापि केचिन्मुखवचनाः, केचिन्नासिकावचनाः, केचिदुभयवचनाः । तत्र ये मुखवचना गृह्यन्ते ते मुखग्रहणेन। ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन । ये उभयवचना गृह्यन्त एव ते मुखग्रहणेन, नासिकाग्रहणेन च ।

( प्रदीपः ) **प्रासादवासिन्यायेनेति** । अयं न्यायः क्रियाशब्देष्वेव, न रूढिशब्देषु ।

( **उद्द्योतः** ) ननु प्रासादवासिन्यायेन मुखग्रहणप्रत्याख्यानवत्सूत्रमेव कुतो न प्रत्याख्यायते इत्यत आह– **अयमिति** । योगेन ह्युभयग्रहणं, स रूढिषु नास्तीत्यर्थः । अनुनासिकशब्दस्य च रूढिशब्दत्वम् । तस्य क्रियाशब्दत्वं तु वक्तुमशक्यम् , अनु पश्चान्नासिका व्याप्रियते यस्मिन्निति योगस्य ञमङणनेषु निरूपयितुमशक्यत्वात् । विनिगमनाविरहेण युगपदुभयोर्व्यावृत्तेः । एतेनाऽनु पश्चान्नासिकां गत इत्यर्थको नासिकामनुगत इति योगोऽपि परास्तः। यथाकथंचिद्योगोपपादने तु रूढिरेव फलितेति दिक् । **[मुखनासि]**॥

[ शङ्काभाष्यम् ]

**भवेदुभयवचनानां सिद्धम् । यमानुस्वाराणामपि प्राप्नोति ॥**

[ इष्टापत्त्या परिहारभाष्यम् ]

**नैव दोषो न प्रयोजनम् ॥**

( प्रदीपः ) **नैव दोष इति** । अनुवादे तावद्यमानुस्वाराणामसंभव एव । विधावप्यान्तरतम्यान्मुखवचनस्योभयवचनो भविष्यति न (तु केवलो) नासिकावचनः ।

[ अन्योन्याश्रयवार्तिकम् ]

*[ ॥*॥ इतरेतराश्रयं तु ॥*॥ ]*

( भाष्यम् ) **इतरेतराश्रयं तु भवति ॥ का इतरेतराश्रयता?॥ सतोऽनुनासिकस्य संज्ञया भवितव्यम् । संज्ञया च नामाऽनुनासिको भाव्यते। तदितरेतराश्रयं भवति। इतरेतराश्रयाणि चकार्याणि न प्रकल्प्यन्ते।**

[ सिद्धान्तिनः समाधानवार्त्तिकम् ]

*।*। अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् ।*।*

**[ अनुनासिकसञ्ज्ञायामितरेतराश्रये उक्तम् ] । किमुक्तम् ? ॥ "सिद्धं तु नित्यशब्दत्वा"दिति ।**

[ प्रकृतोपयुक्तव्याख्याभाष्यम् ]

**नित्याः शब्दाः । नित्येषु सतोऽनुनासिकस्य संज्ञा क्रियते । न संज्ञयाऽनुनासिको भाव्यते ।**

[ वार्त्तिकावतरणाय आक्षेपभाष्यम् ]

**यदि तर्हि नित्याः शब्दाः किमर्थं शास्त्रम् ?॥**

[ सिद्धान्तवार्तिकम् ]

*।*। किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् ।*।*

**निवर्तकं शास्त्रम् ॥ कथम् ? ॥ आङ्स्मायविशेषेणोपदिष्टोऽननुनासिकः । तस्य सर्वत्राननुनासिकबुद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते–'छन्दस्यचि परत आङोऽननुनासिकस्य प्रसङ्गेऽनुनासिकः साधुर्भवती'ति । [ मुखनासिकावचनोऽनुनासिकः ] ।**

---

( **राजलक्ष्मीः** ) १ इदं क्वचिन्न दृश्यते । भाष्यकृच्छैलीमनुरुध्य तु प्रकल्प्य स्थापितमस्माभिः ।

---

❀ **शब्दकौस्तुभः** ❀

मिति दिक् । तदेतत्सकलमभिधाय **प्रक्रियाप्रकाशे** गुरुचरणैरुक्तं–'तज्ज्ञान'–मित्यादौ तु श्चुत्वं भवत्येव। यमश्च मुखनासिक्यः केवलनासिकास्थानो वेति मतद्वयम् । 'नासिक्या नासिकास्थानाः मुखनासिक्या वे'ति तैत्तिरीयप्रातिशाख्यात् । अनुनासिकविषये तु दर्शनत्रयं–(१) कृत्स्नो वर्णो मुखेन नासिकया चोच्चार्यतइत्येकम् , (२) पूर्वो भागो मुखेन परो नासिकयेति द्वितीयं, (३) तद्वैपरीत्यात्तृतीयं । द्वितीयतृतीययोर्भागमात्रस्य नासिक्यत्वेऽपि तदुपरागाद्भागान्तरमपि तद्वदवभासते । तथा च नासिकान्वयस्य भागमात्रविषयतया नासिकावचनग्रहणेन मुखनासिक्यो वर्णो न गृह्येत । किं तु मतविशेषे केवलनासिकास्थानतया यमादाय एव गृह्येरन् । ततश्च विधिप्रदेशे 'आङोनुनासिक'इत्यादौ यमानुस्वारा एव विधीयेरन् । 'विड्वनोरनुनासिकस्या'दित्यादौ त्वनुवादे अप्रति-

## तुल्यास्यप्रयत्नं सवर्णम् ॥१।१।९॥

[ आक्षेपभाष्यम् ]

**[ किमिदं तुल्यास्यप्रयत्नमिति ? । ]**

[ समाधानभाष्यम् ]

**तुलया संमितं तुल्यम् । आस्यं च प्रयत्नश्च आस्यप्रयत्नम् । तुल्यास्यं च तुल्यप्रयत्नं च [ तुल्यास्यप्रयत्नं ] सवर्णसंज्ञं भवति ॥**

( प्रदीपः ) **तुल्यास्यप्रयत्नम्** ॥ चत्वारोऽत्र पक्षाः संभवन्ति–द्वन्द्वगर्भो बहुव्रीहिः, त्रिपदो बहुव्रीहिः, तुल्यास्यशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः, आस्यप्रयत्नशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिरिति । तत्र द्वन्द्वगर्भो बहुव्रीहिरिति पक्षे वार्तिकस्यावतार इति तमेव पक्षं भाष्यकारः पूर्वं दर्शयति–**तुलया संमितमिति** । व्युत्पत्त्यर्थमेव तुलोपादीयते । रूढिशब्दस्त्वयं सदृशपर्यायः । यथा प्रवीणः कुशलः प्रतिलोमोऽनुलोम इत्यवयवार्थोऽभावः, एवं तुल्यशब्देऽपि ॥

( उद्द्योतः ) **तुल्यास्य । तत्पुरुष इति** । तुल्यास्यशब्दयो र्मयूरव्यंसकादित्वात्पूर्वपदार्थप्रधानस्तत्पुरुषः । आस्यप्रयत्नशब्दयोश्च **'साधनं कृते'**त्यनेन समासः । ननु स्थानादिकं न तुलया संमीयतेऽत आह–**व्युत्पत्त्यर्थमेवेति** ।

[ आस्यपदार्थजिज्ञासाभाष्यम् ]

**किं पुनरास्यम् ? ॥**

( प्रदीपः ) **किं पुनरास्यमिति** । किं मुखम्, अथ तत्र भवं ताल्वादिकं स्थानमिति प्रश्नः॥

( उद्द्योतः ) **किं मुखमिति** । तद्धितान्ताऽतद्धितान्ताऽऽस्यशब्दविषयकसन्देह इत्याशयः ॥

[ समाधानभाष्यम् ]

**लौकिकमास्यम् । ओष्ठात्प्रभृति प्राकाकलकात् ॥**

( प्रदीपः ) **लौकिकमिति** । पशुरपत्यं देवतेत्यादिवत्प्रसिद्धमित्यर्थः । यद्यपि ताल्वादिकमपि लौकिकमास्यन्तथापि तत्र योगवशादास्यशब्दो वर्तत इति झटिति न तत्प्रसिद्धमिति मुखमेव प्रसिद्धत्वाल्लौकिकमित्युक्तम् । तस्यैव (च) प्राथम्याद्ग्रहणं युक्तमित्यर्थः । **ओष्ठादिति** । **काकलकं** हि नाम ग्रीवायामुन्नतप्रदेशः ॥

( उ० ) तद्धितान्तमपि लौकिकमेव न वैदिकमित्यत आह–**पशुरिति** । **झटिति** । पदश्रवणमात्रेणेत्यर्थः ॥

[ आस्यपदप्रवृत्तिनिमित्तप्रश्नभाष्यम् ]

**कथं पुनरास्यम् ? ॥**

(प्रदीपः) **कथं पुनरिति** । यदि निमित्तवशात्प्रवर्तते ततस्ताल्वादिष्वपि प्रवर्तिष्यत इति प्रश्नः॥

( उद्द्योतः ) **निमित्तवशात्**–अवयवार्थवशात् ॥

[ समाधानभाष्यम् ]

**अस्यन्त्यनेन वर्णानिति आस्यम् ॥ अन्नमेतदास्यन्दत इति वाऽऽस्यम् ॥**

( प्रदीपः ) **अस्यन्त्यनेनेति** । 'सत्यपि निमित्ते रूढिवशान्मुखे एव[तत्-]प्रवर्तते न ताल्वादिष्वित्यर्थः । **'कृत्यल्युट'** इति करणे ण्यत् । असन-

---

### ❀ राजलक्ष्मीः ❀

१ **आस्यप्रयत्नमिति** । **'जातिरप्राणिनाम्'** इत्येकवद्भावः । २ **त्रिपद इति** । तुल्य आस्ये प्रयत्नो यस्येति व्यधिकरणत्रिपद इत्यर्थः । ३ **वार्तिकेति** । **'सवर्णसंज्ञया भिन्ने'**ति वार्तिकेत्यर्थः । ४ इदंवार्तिकमिति**गौडाः** । ५ **अन्नमेतदिति** । अन्नं प्राप्यैतदास्यन्दते–द्रवीभवतीत्यर्थः । तथा च कर्तरि डः । परे तु अन्नं कर्तृ, एतत्–कर्मभूतमास्यन्दते प्राप्नोतीत्यर्थमाहुः ।

---

### ❀ शब्दकौस्तुभः ❀

पत्तिरेव स्यादित्युदाहृतभाष्याशयः । तस्माद्दर्शनद्वये मुखपदोपादानं सार्थकमिति स्थितम् । प्रथमदर्शने तु प्रासादवासिन्यायाश्रयणेनोभयवचनानामपि सिद्धा संज्ञा । आन्तरतम्याच्च विधिप्रदेशेषु यमानुस्वाराणामप्रवृत्तिः । तथा च मुखशब्दोपादानं न कर्त्तव्यमिति भाष्ये स्थितम् । मुखवचनमित्येवोक्ते तु कचटतपादीनामपि स्यात् । ततश्च 'शक'इत्यत्र कलोपः स्यात् । 'पक'इत्यत्र चकारलोपः स्यात् । 'तप्त'मित्यत्र पलोपः स्यात् । 'ओदनप'गित्यादावनुनासिकस्य किझलोरिति दीर्घश्च स्यात् । अनु पश्चान्नासिका व्याप्रियते यस्मिन्नासिकायाः पश्चान्मुखं व्याप्रियते यस्मिन्निति वाऽन्वर्थसंज्ञेयम् । तेन नासिकाव्यापारस्य भागविषयकत्वसूचनात्प्रासादवासिन्यायस्याविषयोऽयमिति ध्वनितम् । एतच्च सूत्रं प्रत्याख्यातुं शक्यम् । प्रदेशवाक्येष्वेव प्रागुक्तस्य नासिकामनुगत इत्यस्य वा योगस्याश्रयणेन सकलेष्टसिद्धिरिति दिक् ॥

**तुल्यास्यप्रयत्नं सवर्णम्** । ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्युभयं यस्य वर्णस्य येन वर्णेन सह समानं स तस्य सवर्णो बोध्यः । संज्ञाप्रदेशाः,–'अकः सवर्णे दीर्घ' इत्यादयः ।

मत्र जातिस्फोटपक्षेऽभिव्यक्तिः, व्यक्तिस्फोटपक्षे तूत्पत्तिः । **अन्नमेतदिति** । आङ्पूर्वात्स्यन्दते- **'रन्येष्वपि दृश्यते'**इति डः । एतदास्यं कर्माऽन्नं कर्तृ । आस्यन्दते द्रवीकरोति । अन्नप्रक्षेपणेन मुखस्य द्रवत्वोत्पादनात् ।

( उद्योतः ) **जातिस्फोटेति । वर्णानिति** वर्णपदं बोधकपरम् । तत्र जातेर्बोधकत्वे तस्याऽनित्यत्वादभिव्यक्तिरसनं, तदाश्रयव्यक्तीनां वाचकत्वे तूत्पत्तिरिति भावः । अतएव **'वर्णा'**निति बहुवचनं सङ्गच्छते । 'एकैव व्यक्तिस्तत्तद्रूपेणाभिव्यक्ता वाचिके'ति पक्षे तदसङ्गतिः स्पष्टैव । कश्चित्तु-**'व्यक्तिस्फोटपक्षेऽभिव्यक्तिः । जातिस्फोटपक्षे तूत्पत्ति'**रिति पाठः । अयमेव सांप्रदायिकः पाठः । 'एकैव व्यक्तिर्वाचिका, कत्वादिकं तु ध्वनिनिष्ठं, ध्वनिविशेषव्यङ्ग्यं वा । सा च नित्ये'ति व्यक्तिस्फोटवादः । तदाभिव्यक्तिः स्पष्टैव । बहुवचनं त्वेकस्यैव बहुरूपत्वादारोपितबहुत्वमादाय नेयम् । 'व्यक्तयोऽनन्ता जन्याश्च । तत्र जातिरेव शक्ते'ति जातिस्फोटवादस्तदोत्पत्तिरित्यर्थः । **अन्येष्विति** । दृशिग्रहणाद्धात्वन्तरादपि स इति भावः ॥

[ आक्षेपभाष्यम् ]

**अथ[1] कः प्रयत्नः ? ॥**

( प्रदीपः ) **अथ कः प्रयत्न इति ।** किं प्रयतनं प्रयत्नः, अथ प्रारम्भो यत्नस्येति प्रश्नः ॥

[ समाधानभाष्यम् ]

**प्रयतनं[2] प्रयत्नः । प्रपूर्वाद्यततेर्भाव-साधनो नङ् प्रत्ययः ।**

( प्रदीपः ) **भावसाधन इति ।** भावेऽभिधेये नङ्प्रत्ययः क्रियते, तेन[3] नङ्शब्दस्य भावः साधनं भवति ॥

( उद्योतः ) ननु साधनशब्देन कारकशक्तिरभिधीयते इति भावस्य साधनत्वमनुपपन्नमत आह-**भावे इति । नङ्**-'यजयाचे'त्यनेन ॥

[ सिंहावलोकनन्यायेन प्रश्नभाष्यम् ]

**यदि लौकिकमास्यं, किमास्योपादाने प्रयोजनम् ? । सर्वेषां[4] हि तत्तुल्यम् ॥**

( प्रदीपः ) **किमास्योपादान इति ।** आस्य एव सर्ववर्णानां निष्पादनादिति भावः ॥ नासिकाऽपि न बाह्या वर्णोत्पत्तिनिमित्तम्, किं तर्ह्यास्यान्तश्चर्म विततमस्ति पणवचर्मवत्, तत्संबद्धा रेखा नासिका, तस्यां वाय्वभिघाताद्वर्णोत्पत्तिः । विसर्जनीयस्यैकीयमतेनोरस्यत्वात्सावर्ण्याऽभावेऽपि न दोषः ॥

( उद्योतः ) ननु तुल्यावास्यप्रयत्नमात्रौ येषां जनकावित्यर्थे नासिकास्थानञ्ञादिनिवृत्त्यर्थमास्योपादानं स्यादत आह-**नासिकापीति ।** एवं चाऽऽस्यग्रहणे'कृतेऽपि तद्व्यावृत्तिर्दुरुपपादेति भावः । वस्तुतस्तु अवधारणगर्भसमासे ह्रस्वाकारादिभिर्हस्वाकारादीनां सावर्ण्यांऽनापत्तिः । तज्जनकवायुसंयोगानामपि तुल्यत्वात् । अवधारणाऽगर्भसमासे त्वनुनासिकव्यावृत्तिरपि दुरुपपादैवेति भाष्याशयः । एवं चनासिकाया बाह्यत्वेऽपि न क्षतिः । अतएव **मुखनासिकेति** सूत्रे मुखं च नासिका चेति, मुखद्वितीया नासिकेति च विग्रहप्रदर्शनं भाष्ये । नह्यवयवाऽवयविविषये एवं प्रयोगः सचेतसाम् । 'सहस्तो देवदत्त'इत्यादौ विद्यमानवाची 'सह'-शब्दः । अत एव 'मुखवचनोऽनुनासिक इतीयत्युच्यमाने कचटतपानामेव प्रसज्येते'ति भाष्ये 'एव'शब्दः सङ्गच्छते । अन्यथा यमादीनां ञादीनां च मुखवचनत्वात्तदसङ्गतिः स्पष्टैव । आस्यानन्तर्गतत्वे तु न दोषः । मुखमात्रवचनत्वाऽभावात् । प्रासादवासिन्यायप्रदर्शकभाष्येणाऽपि ध्वनितमेतत् । कैयटोक्तास्याऽन्तर्गतत्वपक्षे तु सूत्रे **मुखपदं** मुखावयवपरम् । ब्राह्मणवसिष्ठन्यायेन च नासिकातिरिक्तावयवग्रहणम् । एवकारश्चाऽप्यर्थः । दृष्टान्तोऽप्येकांशेन बोध्य इति । नन्वेवमपि विसर्जनीयव्यावृत्तये तत्स्यादत आह-**विसर्जनीयस्येति** । ततश्चाऽन्येषां कण्ठादिस्थान एवेति भावः । उरस्यमतेऽप्याह-**सावर्ण्याभावेऽपीति ॥**

[ समाधानभाष्यम् ]

**वक्ष्यत्येतत्—'प्रयत्नविशेषणमास्योपादान'मिति ।**

( प्रदीपः ) **वक्ष्यतीति ।** नास्य परीक्षावसर इत्यर्थः ॥

( उद्योतः ) नन्विदानीमेव किं नोच्यतेऽत आह-**नास्येति ।**

---

❀ राजलक्ष्मीः ❀

१ **अथ**-अथवा । २ यत्नमात्रं प्रयत्न इत्यर्थः । ३ तत्र तस्य प्रयोजकत्वेन । ४**सर्वेषां**-सर्ववर्णानाम् । **तत्**-आस्यम् । द्[?] आस्येनैवोच्चार्यन्ते न हस्तादिभिरिति स्वत एव तल्लाभः ।

❀ शब्दकौस्तुभः ❀

यद्यपि तुलया सम्मितं तुल्यमित्यवयवार्थः । नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेष्विति सूत्रेण तुलाशब्दात्सम्मिते यद्विधानात् तथाप्ययं-

[ आक्षेपवार्तिकम् ]

॥*॥ *सवर्णसंज्ञायां भिन्नदेशेष्वातिप्रसङ्गः प्रयत्नसामान्यात्* ॥*॥

**सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गो भवति जबगडदशाम्[1] ॥ किं कारणम् ? ॥ 'प्रयत्न[2]सामान्यात् ।' एतेषां हि समानः प्रयत्नः ।**

( प्रदीपः ) **सवर्णसंज्ञायामिति** । द्वन्द्वे प्रयत्नस्यास्येनाऽविशेषणान्मुखप्रयत्नयोस्तुल्यत्वाद्भिन्नस्थानानामपि प्रसङ्गः । भाष्ये शकारः[3] प्रत्याहारपाठवशात्पठितः । अत्र प्रत्याहारे जबगडदानां प्राप्नोतीत्यर्थः । शकारस्य तु विवृतत्वात्स्पर्शानां स्पृष्टत्वादप्रसङ्ग एव । ततश्च 'ऊर्ज्ज' इत्यादौ **झरो झरीति** लोपप्रसङ्गः ॥

( उद्द्योतः ) **द्वन्द्वे प्रयत्नस्यास्येनाविशेषणादित्यस्यो**पयोगश्चिन्त्यः । **अत्रेति** । एतद्वर्णसमूहसाध्यप्रत्याहारे इत्यर्थः । **ऊर्क्** अन्नं, तस्माज्जात **ऊर्ज्जः** ॥

[ समाधानवार्तिकम् ]

॥ * ॥ *सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णम्[4]* ॥ * ॥

**सिद्धमेतत् ॥ कथम् ?॥ ['आस्ये तुल्यदेशप्रयत्नं सवर्णम्']॥ आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति वक्तव्यम् ॥**

[ देशविशेषणवैयर्थ्याशङ्काभाष्यम् ]

**एवमपि[6] किमास्योपादाने प्रयोजनम् ?। सर्वेषां हि तत्तुल्यम्[7] ? ॥**

( प्रदीपः ) **एवमपीति** । आस्ये येषां तुल्यो देश इत्यास्येन देशो विशेष्यते । तत्र व्यभिचाराऽभावादास्येन देशस्य विशेषणमयुक्तमित्यर्थः ॥

( उद्द्योतः ) **आस्ये इति** । देशविशेषणवैयर्थ्याभिप्रायेण प्रश्न इति भावः । न च नासिकाया आस्यानन्तर्गतत्वपक्षे तद्व्यावृत्तये देशविशेषणमावश्यकमिति वाच्यम्, अनुनासिकाऽकारादौ–कण्ठादिषु वाय्वभिघाताद्भिव्यक्तेषु वर्णेषु नासिकाभिघातेनानुनासिक्यं धर्मउत्पद्यते–इत्यनुभवेन वृद्धिरादैच्सूत्रस्थात् "भेदकत्वाद्गुणस्येति वाच्यम्, आनुनासिक्यसङ्ग्रहार्थं **तद्यथैकोऽयमात्मे**"त्यादिभाष्यकैयटात् तथैव लाभेन च तेषु[8] नासिकाया देशत्वाऽभावस्य क्लृप्तत्वाञ्ञादिष्वपि तथैवेत्यभिमानात् । देशपदेन ताल्वादिस्थ[9]निमित्तैवोच्यते इति जबगडादिषु न दोषः ॥

[ परिहारभाष्यम् ]

**प्रयत्नविशेषणमास्योपादानम् । सन्ति ह्यास्याद्बाह्याः प्रयत्नास्ते हापिता[10][11] भवन्ति । तेषु सत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति ॥ के पुनस्ते ? ॥ विवारसंवारौ, श्वासनादौ, घोषवद्[12]घोषता, अल्पप्राणता महाप्राण[13]तेति ॥**

**तत्र वर्गाणां प्रथमद्वितीया विवृतकण्ठाः, श्वासानुप्रदाना अघोषाश्च । एकेऽल्पप्राणाः[14], अपरे महाप्राणाः । तृतीयचतुर्थाः संवृतकण्ठा नादानुप्रदाना घोषवन्तः । एकेऽल्पप्राणाः[15], अपरे महाप्राणाः । यथा तृतीयास्तथा पञ्चमा आनुनासिक्यवर्जम् । आनुनासिक्यमेषामधिको गुणः ॥**

( प्रदीपः ) **प्रयत्नविशेषणमिति** । तस्य[16] संभवव्यभिचारसद्भावादित्यर्थः । बाह्यप्रयत्नव्युदासाच्चत्वार आभ्यन्तरा गृह्यन्ते स्पृष्टेषत्स्पृष्टताविवृततासंवृतताख्याः ॥

( उद्द्योतः ) भाष्ये **प्रयत्नविशेषणमिति** ।

---

❀ **राजलक्ष्मीः** ❀

१ **जबगडदेति** । मिथः सावर्ण्यं प्राप्नोतीति शेषः । २ **प्रयत्नेति** । आभ्यन्तरेत्यर्थः । ३ नन्वेवमुपक्रमभाष्ययोजनेऽपि 'जशा'मित्युचितम् । अथ सर्वेषां तदापत्तिसूचनाय तथोक्तिरिति चेदेवमपि शकाराधिक्यमस्त्येवात आह–**भाष्ये इति**॥ ४ न्यासान्तरेण समाधत्ते–**सिद्धमिति** । ५ स्थानभेदान्न दोष इत्याशयः । ६ **एवं**–देशविशेषणे । ७ एवञ्च स्थानसाम्यादापत्तिरनुद्धृतैव न्यासभेदेऽपीत्याशयः । ८ तद्विषये । ९ **तेषु**–अनुनासिकाऽकारादिषु । १० एवेन–प्रदेशग्रहण व्यावृत्तिः । ११ तथा विशेषणे फलमाह–**हापिताइति** । १२ घोषवत्ता, अघोषत्तेत्यर्थः। १३ इतिनाऽन्येऽपि संग्राह्याः। १४ **एके**–प्रथमाक्षराणि । **अपरे**–द्वितीया वर्णाः । १५ एके–तृतीयाः । अपरे–वर्गचतुर्था घादयो वर्णाः । १६ **तस्य**–तत्र ।

❀ **शब्दकौस्तुभः** ❀

सदृशमात्रे रूढः शब्दः । अस्यन्ति उच्चारयन्ति अनेन वर्णानित्यास्यम् । असु क्षेपणे, बाहुलकात्करणे ण्यत् । यद्वा आस्यन्दते अन्नं प्राप्य द्रवीभवतीत्यास्यम् । अन्येष्वपीति डप्र

देशप्रयत्नमिति द्वन्द्वस्तु सौत्रत्वात्साधुरिति भावः। **स्पृष्टेत्यादि।** आस्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां वर्णाभिव्यक्तिजनकस्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारिप्रयत्नविशेषा एतैः पदैरुच्यन्ते। तेषां चास्यवृत्तित्वमास्यान्तर्गततत्तत्स्थानेषु वायुसंयोगजनकत्वेनेति बोध्यम्। **आस्ये** इत्यस्य—'यत्कार्यं, तज्जनक'इति शेषो वा। भाष्ये—**ते हापिता इति।** सवर्णसंज्ञास्वनिमित्तत्वेन बाह्यप्रयत्नाञ्जहातीति तया ते स्वनिमित्तत्वं हापिता इत्यर्थः। **विवारसंवारौ**—कण्ठबिलस्य विकाससङ्कोचौ। विवृतः कण्ठो यैः श्वासोऽनु प्रदीयते यैरित्यर्थः। **नादो**—वर्णोत्पत्त्यनन्तरभावी अनुरणन[1]रूपः शब्दः। **एके**—उक्तवाक्ययोः [2]प्रथमोपात्ताः। **यथा तृतीया**—इत्यनेन तेषा[3]मल्पप्राणत्वं बोधितम्। देशविशेषणमप्य[4]स्यग्रहणमावश्यकमिति गूढाशयेनाह-भाष्ये **आनुनासिक्यमेषामधिको गुण इति।** अयं भावः—[5]अत्र देशपदेन तात्वादिस्थानमुच्यते। **स्थान**शब्देन च योगरूढ्या वर्णाभिव्यक्तिजनकवायुसंयोगानुयोगि ताल्वाद्युच्यते। तत्र[6] यद्यपि अकारादीनां गुणमात्रजनिका नासिका, स्वरूपस्य कण्ठादिभिरेवाऽभिव्यक्तिसिद्धेस्तथापि ञादीनां स्वरूपस्य न केवलताल्वादिना नापि केवलनासिकयाऽभिव्यक्तिरिति विनिगमनाविरहादुभयावच्छिन्नवायुसंयोगस्यैव तज्जनकत्वात्तेषां नासिकाऽपि स्थानम्। न चैवं 'त्वङ्करोषी'-त्यादौ चरितार्थं परसवर्णशास्त्रं 'संयन्ते'त्यादौ न प्रवर्त्तेत। उक्तरीत्या यादीनां नासिकास्थानत्वाऽभावेन स्थानत आन्तर्योऽभावादिति वाच्यम्, 'स्थानेऽन्तरतमे'इति सप्तम्यन्तपाठस्य दूषितत्वेनाऽस्या युक्तेर्गर्भस्रावात्। अ[7]नुनासिकाऽकारादीनामपि सा स्थानमिति त्वयुक्तमेव। एवं हि उत्पादकसामग्रीभेदात्[8]कङ्योरिव स्वरूपभेदस्यैवापत्तावभेदकगुणपक्षेऽपि निरनुासिकैः सानुनासिकग्रहणाऽनापत्तिः। एवं च[9] 'यावत्स्थानसाम्ये सवर्णसंज्ञे'ति सिद्धान्ते नासिकारूपदेशभेदात्कञादीनामप्राप्तसावर्ण्यसिद्धये आस्येन देशविशेषणमावश्यकम्। नासिकाया आस्यान्तर्गतत्वेऽपि मुखनासिकेतिसूत्रे नासिकातिरिक्तावयवकमुखस्यैव ग्रहणेन तत्साहचर्यादत्राप्यास्यपदेन तादृशस्यैव ग्रहणं बोध्यम्। अ[10]न्यथाऽत्र स्थाने एतत्कथनवैयर्थ्यापत्तिः। आस्यग्रहणव्यावर्त्यानां सावर्ण्यानुपयुक्तानां प्रदर्शनमेव ह्यत्र प्रक्रान्तम्। न चेदं प्रयत्नविशेषणास्यग्रहणव्यावर्त्यमेवास्तु। अनुनासिकयकारादीनां ञादिभिः सावर्ण्यंच व्यावर्त्यम्, तत्फलं च तञ्जुडुवे तन्नमतीत्यादावनु**स्वारस्य ययी**त्यनेन यकारलकारयोरनुनासिकयोरभाव इति वाच्यम्। अनुस्वारस्य नासिकास्थानत्वेन स्थानतोऽन्तरतमयोर्ञनयोरेव प्रवृत्तेः। अनुनासिकयादीनां तूक्तरीत्या न नासिका स्थानमित्यदोषात्। इदमेव ध्वनयितुं **'गुण'** इत्युक्तम्। **गुण**पदेन च सावर्ण्यानुपयोगिन आन्तरतम्यपरीक्षोपयोगिनो विवारादय उच्यन्ते। ए[11]वंच तत्साहृश्यादत्रापि 'गुण'शब्दप्रयोगः। अत एव बाह्यप्रयत्नानुपक्रम्याऽ**मोऽनुनासिका न ह्रा**विति शिक्षायामुक्तम्। अत एवोदात्तादिभिः सहैकादश बाह्यप्रयत्ना इति कैयटो वक्ष्यति। उदात्तादीनामपि वृद्धिसंज्ञासूत्रशेषे गुणत्वेन व्यवहारात्। अत एव 'एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति। बाह्यं ह्यास्यात्स्थानमवर्णस्य, 'एवमपि व्यपदेशो न प्रकल्पते आस्ये येषां तुल्यो देशः' इति भाष्यं स्वरसतः सङ्गच्छते। अन्यथा प्रयत्नविशेषणमात्रस्योक्तेर्देशविशेषणत्वाऽभावेन तदसङ्गतिः स्पष्टैव। 'आस्येन देशविशेषणाऽभावान्न दोष' इत्येव वक्तव्ये 'सर्वमुखे'त्यादिसमाधानस्यापि निर्दलत्वापत्तिश्च। **एके**-इत्यनेन सर्वमतं तु कण्ठस्थानमिति ध्वनयति॥

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

## एवम[12]प्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति, बाह्यं ह्यास्यात्स्थानमवर्णस्य॥

**( प्रदीपः ) बाह्यं ह्यास्यादिति।** काकलकस्याऽधस्तादुपजत्रु स्थानमवर्णस्यैक इच्छन्ति। सति च बाह्यदेशसंभवे तद्व्यवच्छेदायाऽऽस्येन देशो विशेष्यत इति प्रश्नः॥

[ सिद्धान्तिनः परिहारभाष्यम् ]

## [13]सर्वमुखस्थानमवर्णमेक इच्छन्ति॥

**( प्रदीपः ) सर्वमुखेति।** अवर्णनिष्पत्तौ सर्वमेव मुखं व्याप्रियत इति नाऽस्य बाह्यस्थानता॥

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

## एवमपि व्यपदेशो न प्रकल्पते—'आस्ये येषां तुल्यो देशः' इति॥

❀ राजलक्ष्मीः ❀

१ 'गूंज' इति प्रसिद्धः। २ प्रथमास्तृतीयाश्चेत्यर्थः। ३ पञ्चमानामित्यर्थः। ४ अपिना प्रयत्नविशेषणताऽपि। ५ **अत्र**—वार्तिकोक्तन्यासे। ६ **तत्र**—अनुनासिकवर्णेषु। ७ केषांचिन्मतं खण्डयति—**अनुनेति। सा**—नासिका। ८ अनुनासिकनिरनुनासिकयोः कङ्योरिव। ९ **एवञ्च** ञादीनामुभयस्थानकत्वे च। १० **अन्यथा**—तद्विशेषणत्वानावश्यकत्वे। **अत्र स्थाने**—बाह्यप्रयत्नप्रसङ्गे। ११ भाष्यकैयटस्थेन। १२ **एवम्**—आस्यग्रहणस्य प्रयत्नविशेषणत्वे। १३ सर्वं मुखमेवेत्यर्थः।

❀ शब्दकौस्तुभः ❀

त्ययः। अथ वा अन्नेन द्रवीक्रियतइत्यास्यम्। अन्तर्भावितण्यर्थात्कर्मणि डः। परितः खाता परिखेतिवत्। तत्र भवमास्यम्, ताल्वादिस्थानम्। 'शरीरावयवाद्यत्'। 'यस्ये'तिलोपे

(प्रदीपः) **एवमपीति।** अवर्णस्याऽऽस्यमेव देशो न त्वास्ये देशः ॥

[ सिद्धान्तिनः परिहारभाष्यम् ]

**व्यपदेशिवद्भावेन व्यपदेशो[1] भविष्यति ॥**

(प्रदीपः) **व्यपदेशिवद्भावेनेति** । सर्वावस्थायुक्तमास्यमास्यशब्देनोच्यते, देशशब्देन तु विशिष्टैवाऽवस्था वर्णोत्पादनहेतुः । तत्र[2] बुद्धिकृतभेदाश्रयो व्यपदेशः ॥

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**सिध्यति । सूत्रं तर्हि भिद्यते ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**यथान्यासमेवास्तु ॥**

[ दोषस्मारणभाष्यम् ]

**ननु चोक्तम्–'सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात्' इति ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**नैष दोषः । न हि लौकिकमास्यम् ॥ किं तर्हि ? ॥ "तद्धितान्तमास्यम्" । आस्ये भवमास्यम् । 'शरीरावयवाद्यत्' ॥ किं पुनरास्ये भवम् ?॥ स्थानं करणं च**

(प्रदीपः) **नहीति** । प्राथमकल्पिकमित्यर्थः । यौगिकस्य तु व्यवहितस्य ग्रहणम् । **स्थानमिति** । ताल्वादि । **करणमिति** । स्पृष्टतादि । जिह्वाया अग्रोपाग्रमध्यमूलानि वा । यद्येवं प्रयत्नग्रहणं न कर्तव्यं, तस्याप्यास्ये भवत्वादास्यग्रहणेन ग्रहणात् । सत्यमेतत्, प्रत्येकं तु व्यापारनिरासार्थमुभयोरुपादानम् । तेन द्वयोस्तुल्यत्वे सवर्णसंज्ञा भवति ।

(उद्द्योतः) **व्यवहितस्येति** । यद्यपि रूढिर्योगापहारिणी, तथाप्यास्यपदोपादानसामर्थ्याद्व्यवहितस्यापि ग्रहणमिति भावः । **ताल्वादीति** । शिक्षायां तेन रूपेणैव वर्णस्थानत्वकथनादिति भावः । एतेन ताल्वादिषूर्ध्वाधरभागभेदादुदात्तादीनां सवर्णसंज्ञा न प्राप्नोतीत्यपास्तम् । आस्यभवशब्देन तद्रूपावच्छिन्नस्यैव ग्रहणेनाऽदोषात् । ननु 'प्रयत्न'पदेनैव तद्ग्रहणसिद्धिरत आह–**जिह्वाया अग्रेत्यादि । प्रत्येकं त्विति** । प्रत्येकनिरूपितसादृश्यग्रहणनिरार्थमित्यर्थः । यद्यपि ज्ञापकेनापि प्रत्येकव्यापारनिरासः सुकरः तथापि यावदास्यभवैक्यविवक्षायां ह्रस्वदीर्घयोः सावर्ण्यानापत्तिः, तत्तज्जनकवायुसंयोगानामतुल्यत्वात् । अतः प्रयत्नपदमास्यपदेन स्थानमात्रग्रहणार्थम् । **'स्थानं करणंचे'**ति भाष्ये **करण**पदेन वायुसंयोगोऽपि । प्रयत्नग्रहणाच्च नातिप्रसङ्ग इति तात्पर्यम् । अत एव यावत्स्थानैक्यपरेण 'नैतौ तुल्यस्थाना'विति भाष्येण न विरोध इति दिक् ॥

[ प्रश्नभाष्यम् ]

**एवमपि[6] प्रयत्नोऽविशेषितो भवति ॥**

(प्रदीपः) **अविशेषित इति** । आस्येनेत्यर्थः । द्वन्द्वपक्ष एवाऽत्र स्थित इति प्रश्नः । ततश्च बाह्याः प्रयत्ना न त्यक्ताः स्युः ॥

[ समाधानभाष्यम् ]

**प्रयत्नश्च विशेषितः ॥ कथम् ? ॥ न हि प्रयतनं प्रयत्नः ॥ किं तर्हि ? ॥ प्रारम्भो[7] यत्नस्य प्रयत्नः ॥**

(प्रदीपः) **प्रारम्भो यत्नस्येति** । तत्र[8] पूर्वं स्पृष्टतादयश्चत्वारः, पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ विवारादयो बाह्या एकादश प्रयत्ना उत्पद्यन्ते ॥

(उद्द्योतः) भाष्ये-**प्रारम्भो यत्नस्येति** । अत्र यत्नस्येति निर्धारणे षष्ठी । जातौ चैकवचनम् । **आरम्भ इति** कर्मणि घञ् । यत्नानां मध्ये **प्रथमं**–वर्णोत्पत्तेः पूर्वमारभ्यमाण इत्यर्थः । अत्रापि[9] नासिकाया अग्रहणमुपपादितरीत्यैवेति बोध्यम् । अत्रेदं बोध्यम्–शब्दप्रयोगेच्छयोत्पन्नयत्नान्नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तं गत्वा ततः प्रतिनिवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति । ततो यत्नविशेषसहायेन परावृत्तिसमये गलविवरादीनां विकासादीन्करोति । तत्र[10]

---

## ॐ राजलक्ष्मीः ॐ

१ **व्यपदेशः**–वक्ष्यमाणो व्यवहारः । २ 'उच्यते' इतिशेषः । ३ प्रथमोपस्थिते इत्यर्थः । ४ **तदिति** । स्पृष्टत्वादीत्यर्थः । ५ कैयटोक्तं खण्डयति–**यद्यपीति** । ६ **एवमपीति** । तद्धितान्तास्यशब्दाश्रयणेपीत्यर्थः । ७ आद्यः प्रयत्न इत्यर्थः । स च न बाह्यइत्याशयः । ८ **तत्र**–वर्णाभिव्यक्तिविषये । ९ तद्धितान्ताऽऽस्यग्रहणेऽपि । १० **तत्र**–तयोर्मध्ये ।

---

## ॐ शब्दकौस्तुभः ॐ

'हलोयमा'मिति यलोपः । न चाऽल्लोपस्य स्थानिवद्भावः शङ्क्यः, यलोपे कर्त्तव्ये तन्निषेधात् । **प्रकृष्टो यत्नः प्रयत्नः ।** प्रकर्षश्चाभ्यन्तरत्वम् । प्रारम्भे यत्नो वा प्रयत्नः । आभ्यन्तर-

१ इदं वार्त्तिकमित्यन्ये ।

ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वात् 'आस्ये प्रयत्नाः' इत्युच्यन्ते, 'आभ्यन्तरा' इति,'प्रारम्भ' इति च । गलविवरादिविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद्बाह्या इति । एवं मात्राकालिकत्वादिकमपि वाय्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेरयति कश्चिदधिकमिति तस्य यत्नस्य वायुप्रेरणारूपं कार्यमास्यबाह्यदेशे[1]मिति तस्यापि व्यावृत्तिरास्यपदेनोक्ताऽइउण्सूत्रे भाष्ये । 'मूर्ध्नि प्रतिहते वर्णोत्पत्तेः पूर्वं स्पृष्टतादयः, पश्चान्निवृत्ते प्राणाख्ये' इत्यन्वयः कैयटे । अत एव **'सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते'** इति शिक्षया न विरोध इति दिक् ॥

[ आक्षेपभाष्यम् ]

**यदि प्रारम्भो यत्नस्य प्रयत्नः, एवमप्य[3]वर्णस्य एङोश्च[4] सवर्णसंज्ञा प्राप्नोति ॥**

( प्रदीपः ) **एवमपीति।** सन्ध्यक्षरेषु प्रथमभागस्याऽकारेण सादृश्यात्सवर्णसंज्ञाप्राप्तिरिति प्रश्नः॥

( उद्द्योतः ) भाष्ये 'यदि प्रारम्भ' इत्यत्र **यदीत्यस्य**–यद्यपीत्यर्थः । **अकारेणेति ।** ततश्च स्वसवर्णाकारस्य तत्र सत्त्वेन तद्द्वारा तुल्यस्थानत्वेनाऽवर्णैङोः सावर्ण्ये 'गव्य'मित्यत्र **'यस्ये'**ति लोपप्रसङ्ग इत्यभिमानः ॥

[ परिहारभाष्यम् ]

**प्रश्लिष्टाऽवर्णावेतौ ॥**

( प्रदीपः ) **प्रश्लिष्टावर्णाविति ।** नाऽत्र भागविवेकोऽस्ति पांसूदकवदित्यर्थः ॥

(उद्द्योतः) **पांसूदकेति । प्रश्लिष्टा**वित्यस्य प्रकर्षेण श्लिष्टौ मिलितावित्यर्थः । ततश्च तदननुभवेन केवलताल्वादिस्थानकत्वेन च नाऽनयोः सावर्ण्यप्राप्तिरिति भावः ॥

[ आक्षेपभाष्यम् ]

**अवर्णस्य तर्ह्यैचोश्च सवर्णसंज्ञा प्राप्नोति॥**

(प्रदीपः) **अवर्णस्येति ।** विभागोऽत्र सुखलक्ष्य इति प्रश्नः । ततश्च 'नाव्य'मित्यत्र यस्येतिलोपप्रसङ्गः ॥

( उद्द्योतः ) **विभागोऽत्रेति ।** एवं च पूर्ववत्तयोः सावर्ण्यं प्राप्नोत्येवेत्यर्थः ॥

[ समाधानभाष्यम् ]

**विवृततरा[5]ऽवर्णावेतौ ॥**

(उद्द्योतः) भाष्ये एतदुत्तरं **विवृततरावर्णाविति ।** एवं च तद्द्वारा तयोरपि विवृततरत्वेन प्रयत्नभेदाद्धस्वेन न सावर्ण्यम् । आकारस्य ततोऽपि विवृततरत्वात्तेनाऽप्यनयोर्न सावर्ण्यं, फलाऽभावश्चेति भावः ॥

[ आक्षेपभाष्यम् ]

**एतयो[6]रेव तर्हि मिथः सवर्णसंज्ञा प्राप्नोति[7] ॥**

❀ **राजलक्ष्मीः** ❀

१ अस्य 'तेऽपि बाह्या' इति शेषः । २ एवमन्वयादेव । ३ **एवमपि**–तथापि । ४ 'परस्पर'मिति शेषः ।

५ **विवृततमा**विति तूचितम् । ६ **एतयोः**–एडैचोः । ७ कण्ठस्थानसाम्यादित्याशयः ।

❀ **शब्दकौस्तुभः** ❀

प्रयत्ना हि वर्णप्रारम्भकालएव व्याप्रियन्ते । तथा च तुल्यौ स्थानप्रयत्नौ यस्येति द्वन्द्वगर्भो बहुव्रीहिः, यद्वा तुल्यः आस्ये प्रयत्नो येषामिति त्रिपदो बहुव्रीहिः, आस्ये इति विशेषणाद्बाह्यप्रयत्नव्युदासः । 'आस्य'इत्येकत्वं विवक्षितम्, तद्धितान्तास्यशब्दोपादानसामर्थ्यात् । तेन भिन्नस्थानानामर्थाद्व्युदासः । यद्वा तुल्यः आस्ये–तुल्यास्यः, मयूरव्यंसकादित्वात्साधुः । तुल्यास्यः प्रयत्नो यस्येति विग्रहः । यद्वा आस्ये प्रयत्न आस्यप्रयत्नः, स तुल्यो यस्येति । एकत्वविवक्षादिकं प्राग्वत् । तदेवं समासचतुष्टयमपि भाष्ये स्थितम् । द्वन्द्वगर्भो बहुव्रीहिः, त्रिपदो वा, पूर्वभागे तत्पुरुषगर्भः, उत्तरभागे वेति । तुल्यशब्दस्य सम्बन्धिशब्दत्वाच्च येन सह तुल्यस्थानप्रयत्नं तेन सह सवर्णमिति लभ्यते । नहि 'माता पूज्ये'त्युक्ते स्वस्नुतमाता–भार्या पूज्यते किं तु पूजकस्यैव मातेति दिक् । तुल्यमा[illegible]मिति किम् ? । तुल्यप्रयत्नानामपि कचटतपानां मा भूत् । तेन 'तर्प्से'त्यत्र 'झरोझरी'ति पकारलोपो न भवति । यत्नग्रहणं किं ?, चकारशकारयोर्मा भूत् । सति हि सावर्ण्ये वाक्श्च्योततीत्यत्र शकारलोपः स्यात् । आभ्यन्तरत्वविशेषणमप्येतदर्थमेव । अस्ति हि श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्यं चशयोरपि । ननु अल्पप्राणत्वमहाप्राणत्वकृतो भेदोऽस्तीति चेत् । किं ततः ? । नहि सर्वप्रयत्नसाम्यं विवक्षितुं शक्यम्, 'अङ्क्ति' इत्याद्यसिद्धिप्रसङ्गात् । कङ्योरपि बाह्यप्रयत्नभेदात् । सर्वप्रयत्नसाम्यं हि स्वस्य स्वेनैवायाति न तु परेण । तथा च सवर्णसंज्ञाप्रणयनमपि व्यर्थं स्यात् । अणुदित्तुल्यास्यप्रयत्नस्येत्युक्तौ सर्वसामञ्जस्यात् । 'झरो झरी'त्युक्ते 'हलोयमांयमी'त्यत्रेव यथासङ्ख्यप्रवृत्त्या 'माहात्म्य'मित्यादौ मकारस्येव 'शिण्ढी'त्यादौ डकारस्यापि लोपो न स्यादिति हि सिद्धान्ते सवर्णग्रहणं कृतम् । स चाऽव्याप्तिदोषो यावत्प्रयत्नसाम्यविवक्षायां तदवस्थ एव स्यात् । अथ यावद्बाह्यसाम्यं यावदाभ्यन्तरसाम्यं वा विव-

( प्रदीपः ) **एतयोरिति** । ततश्च '**एत ऐ**' इत्यौकारोपि स्याद्बाध्यमानेनापि क्वचित्सवर्णग्रहण-दर्शनात् ॥

( उद्द्योत ) **एतयोरेवेति** । यत्किंचित्स्थानसाम्ये सवर्णसंज्ञेत्यभिमानः। **क्वचित्**–'अदसोऽसेर्दादु दो म'इत्यादौ॥

[ परिहारभाष्यम् ]

**नैतौ तुल्यस्थानौ ॥**

( उद्द्योतः ) भाष्ये–**नैतौ तुल्यस्थानाविति** । 'तोर्लि'ति परसवर्णरहिततद्वानासामितिनिर्देशाद्यावत्स्थान-साम्यमत्र विवक्षितमिति भावः। यत्त्वेषां समुदितं स्थानमिति। तन्न । '**दन्त्योष्ठ्यो वः स्मृतो बुधैः । ए ऐ तु कण्ठ्य-ताल्व्यौ**' इति शिक्षायां प्रत्येकं 'तत्र भव' इत्यधिकारस्थ-यदनापत्तेः । '**दन्तोष्ठस्य**'ति पाठस्त्वसङ्गतः । शरीरावयव त्वाऽभावात् । स्वाङ्गसमुदायस्य स्वाङ्गत्वाऽभाववत् । स्वजन-कवायुसंयोगावच्छेदके कण्ठादौ स्वाधारत्वमारोप्य कण्ठे भव इत्याद्युपपत्तिः । 'शरीरे मे वेदने'त्यप्येवमेवेति दिक् ।

[ आक्षेपभाष्यम् ]

**उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति ॥**

( उद्द्योतः ) भाष्ये **उदात्तादीनां तर्हीति** । याव-त्स्थानैक्यवद्यावत्प्रयत्नैक्यंविवक्षणादिति भावः ।

[ समाधानभाष्यम् ]

( प्रदीपः ) **अभेदका इति** । लिङ्गेनैतत्प्र-तिपादितम्–'न शास्त्रे एते स्वशब्दोपादानमन्तरेण कार्येषु भिद्यन्ते' इति, तेन प्रारम्भभेदेऽप्युदात्ता-दीनां मिथः सवर्णसंज्ञा भविष्यति ॥

( उद्द्योतः ) **स्वशब्दाः**–उदात्तादिशब्दाः । एवं चाऽत्र प्रयत्नशब्देनोदात्तादीनां न ग्रहणमिति–भावः ॥

[ एकदेशिनःसमाधानभाष्यम् ]

**अथवा किं न एतेन–प्रारम्भो यत्नस्य प्रयत्न इति ॥ प्रयतनमेव प्रयत्नः । तदेव च तद्धितान्तमास्यम् । यत्समानं तदाश्र-यिष्यामः ॥ किं सति ?॥ भेदे सती'त्याह । सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम् ॥ कुत एतत् ?॥ भेदाधिष्ठाना हि सवर्णसंज्ञा, यदि हि यत्र सर्वं समानं तत्र स्यात्सवर्ण-संज्ञावचनमनर्थकं स्यात् ॥**

( प्रदीपः ) **यत्समानमिति** । स्पृष्टत्वस्य समानत्वाद्वर्ग्याणां बाह्यप्रयत्नभेदेऽपि सवर्णसंज्ञा भविष्यति । **किं सतीति** । स्पृष्टताद्यभेदाद्विवारा-दिभेदेऽपि यथा भवति तथा स्पृष्टतादिभेदेऽपि विवाराद्यभेदात्प्राप्नोतीति प्रश्नः । **सत्येवेति** । झरो झरीत्येवाऽन्यथा ब्रूयात् । यथासङ्ख्यनिरासार्थं हि तत्र सवर्णग्रहणं कृतं, शिण्ढीत्यत्र डकारस्य ढकारे परतो लोपार्थम् । यदि च यत्र सर्वं समानं तत्रैव सवर्णसंज्ञा स्याड्डकारढकारयोर्भेदात्सवर्णत्वं नास्तीति सवर्णग्रहणमनर्थकं स्यात् ॥

(**उद्द्योतः**) भाष्ये-'उदात्तादीनां सवर्णसंज्ञा न प्राप्नोती'-त्यस्य 'आस्येन प्रयत्नोऽविशेषित' इत्यस्य च समाध्यन्तरमा हैकदेशी–**अथवा किं न एतेनेति** । **नोऽस्माकमेतेन** प्रारम्भो यत्नस्येत्यर्थकप्रयत्नशब्दाश्रयणेन **किमित्यर्थः** । क्लिष्ट-त्वादिति भावः । **बाह्यप्रयत्नभेदेऽपीति** । एवमुदात्तादि-भेदेऽपि भविष्यतीत्यपि बोध्यम् । यद्यपि सवर्णसंज्ञाया न प्रयत्नभेदगर्भत्वं, तथापि ज्ञापकादेतदर्थसिद्धिरित्याह–**झरो-झरीति** । भाष्ये **सत्येव हि भेदे इति** । यत्किंचित्प्रयत्न-भेदे सत्येवेत्यर्थः । **कुत एतदिति** । सूत्राक्षरैस्तदलाभ इति प्रश्नः । समाधत्ते–**भेदाधिष्ठाना हीति** । यत्किंचित्प्रयत्न भेदेत्यर्थः । तत्र ज्ञापकमाह–**यदि हीति** । **सवर्णसंज्ञाव-चनमि**त्यस्य सवर्णपदोच्चारणमित्यर्थः। संज्ञा तु–**अणुदित्स-वर्णस्ये**त्याद्यर्थमावश्यिकेति बोध्यम् । **भेदादिति** । बाह्यप्र-यत्नभेदादित्यर्थः। नन्वेवं यत्किंचित्स्थानैक्यादेकारौकारयोः सा-वर्ण्यापत्तिरिति चेन्न; ज्ञापकात्प्रयत्नांशे यावत्प्रयत्नसमानत्व-

❀ राजलक्ष्मीः ❀

१ आभ्यन्तरप्रयत्नैक्य इत्यर्थः। २ नैवाऽत्रास्माकमाग्रह इत्यर्थः।

३ उभयविधयत्नमध्ये एकसाम्येऽपि तत्कार्यं भवत्वित्याशयः । ४ किं सति भेदे उत असतीति प्रश्ने **सतीति**समाधानम् ।

❀ शब्दकौस्तुभः ❀

क्ष्यते, एवमपि 'मधुलिट्स्थान'मित्यत्र 'झरोझरी'ति सलोपः स्यात्, सकारथकारयोः श्वासाऽघोषविवारमहाप्राणत्वरूप-बाह्यप्रयत्नचतुष्टयेनापि साम्यात् ॥

अथ **स्थानप्रयत्नविवेकः**–अकुहविसर्जनीयाः **कण्ठ्याः** । इचुयशास्**तालव्याः** । ऋटुरषा **मूर्द्धन्याः** । ऌतु लसा **दन्त्याः** । उपूपध्मानीया **ओष्ठ्याः** । एऐ **कण्ठ्यता-लव्यौ** । ओऔ **कण्ठोष्ठ्यौ** । वकारो **दन्त्योष्ठ्यः** । जिह्वामूलीयो जिह्वामूलस्थानः । अनुस्वारो **नासिक्यः** । **यत्नो** द्विधा-आभ्यन्तरो बाह्यश्च । तत्राभ्यन्तरश्चतुर्द्धा–स्पृष्टता ईषत्स्पृष्टता विवृतता संवृतता चेति । तत्र **स्पृष्टता**-स्पर्शानाम् । **ईषत्स्पृष्टता**–अन्तस्थानाम् । ह्रस्वस्यावर्णस्य प्रयोगे–**संवृतता** । शास्त्रीये कार्ये तु **विवृतता** प्रतिज्ञाय इति अइउण्सूत्रे प्रतिपादितम् । 'ह्रस्वः संवृता' इति तु प्राति-

त्यागेऽपि स्थानांशे तत्यागे मानाभाव इत्याशयात्। 'यजुष्येकेषा'मित्यादिनिर्देशैः स्थानांशे यावत्स्थानतुल्यत्वविवक्षणाच्च। यत्तु तुल्यत्वस्य भेदघटितत्वात्सवर्णसंज्ञा भेदाधिष्ठानेत्यर्थ इति तन्न। तेन सावर्ण्यनियामकप्रयत्नयोः स्थानयोश्च परस्परभेदलाभेऽपि वर्णानां यत्किञ्चत्प्रयत्नभेदस्य ततोऽलाभात् स्थानानामन्ततस्तत्तत्कालरूपोपाधिभेदेन भेदो बोध्यः ॥

[ सिद्धान्तिन आक्षेपभाष्यम् ]

**यदि तर्हि-'सति भेदे किंचित्समान'मिति कृत्वा सवर्णसंज्ञा भविष्यति शकारच्छकारयोः षकारठकारयोः सकारथकारयोः सवर्णसंज्ञा प्राप्नोति। एतेषां हि सर्वमन्यत्समानं करणवर्जम् ॥**

( प्रदीपः ) **सर्वमिति**। 'वर्गाणां प्रथमद्वितीया' इत्यस्यां शिक्षायां पठितमघोषत्वादि। करणं तु भिन्नं,वर्ग्याणां स्पृष्टत्वात्, ऊष्मणां च विवृतत्वात्। सति च सवर्णत्वे निश्छद्म निष्ठुरं निस्स्थानं मधुलिट्स्थानमित्यत्र 'झरोझरी'ति लोपः प्राप्नोतीति। छद्मनो निष्क्रान्तमिति प्रादिसमासः। 'अनचि चे'ति शकारस्य द्विर्वचनम् ॥

( उद्द्योतः ) भाष्ये **'यदि तर्हि सतिभेदे'** इत्यादि सिद्धान्तिवचः। **शकारच्छकारयोरिति**। तस्मात्प्रारम्भो यत्नस्येत्यावश्यकमिति भावः। ननु 'निश्छद्मे'त्यत्र हलः परत्वाऽभावात्कथं लोपप्राप्तिरत आह-**अनचिचेति**।

[ एकदेशिनःसमाधानभाष्यम् ]

**एवं तर्हि-प्रयतनमेव प्रयत्नः। तदेव हि तद्धितान्तमास्यम्। न त्वयं द्वन्द्वः—'आस्यं च प्रयत्नश्च आस्यप्रयत्न'मिति ॥ किं तर्हि ? ॥ त्रिपदोऽयं बहुव्रीहिः-'तुल्य आस्ये[2] प्रयत्न एषा'मिति ॥**

( प्रदीपः )**तुल्य आस्य इति**। तद्धितान्त आस्यशब्दो न स्वाङ्गवाच्येवेत्यमूर्द्धमस्तकादित्यलुङ्न भवति। तद्धितान्तांऽऽस्यशब्दाश्रयणसामर्थ्यादेवास्ये इत्येकत्वं विवक्ष्यते। तेनैकस्मिन्नेव स्थाने ययोस्तुल्यः प्रयत्न इत्याश्रीयते ॥

( उद्द्योतः ) तत्रैकदेशी प्रौढ्या समाधानमाह-**एवंतर्हीत्यादि**। **स्वाङ्गवाच्येवेति**। **'अमूर्धे'**त्यादिपर्युदासादेव स्वाङ्गे लब्धे स्वाङ्गादिति पुनः श्रुतिरवधारणार्थेति भावः। 'संज्ञाया'मित्यनुवृत्तेर्न दोष इत्यन्ये। नन्वेवं भिन्न-

१ अभ्यन्तरप्रयत्नभिन्नमित्यर्थः। २ आस्ये-स्थाने।

---

॥ राजलक्ष्मीः ॥

॥ शब्दकौस्तुभः ॥

शाख्योक्तत्वान्न सर्वसाधारणम्। ऊष्मणां स्वराणाञ्च **विवृता**। एषां चतुर्णामप्याभ्यन्तरत्वं वर्णोत्पत्तिप्राग्भावित्वात्। तथा हि—नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम उर्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वा उत्पत्तिः, तत्रोत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानन्ताल्वादि सम्यक् स्पृशन्ति तदा **स्पृष्टता**। ईषद्यदा स्पृशन्ति तदा **ईषत्स्पृष्टता**। समीपावस्थानमात्रे **संवृतता**। दूरत्वे **विवृतता**। अत एव इचुयशानां तालव्यत्वाऽविशेषेपि तालुस्थानेन सह जिह्वाग्रादीनांचवर्गोच्चारणे कर्त्तव्ये सम्यक्स्पर्शः, यकारे ईषत्स्पर्शः, शकरेकारयोस्तु दूरेवस्थितिरित्याद्यनुभवं शिक्षाकारोक्तिंचानुसृत्य विवेचनीयम्। **भाष्यकारास्तु** नाज्झलावित्यस्य प्रत्याख्यानावसरे ऊष्मणां स्वराणां च ईषद्विवृतत्वं विवृतत्वं चेति वैलक्षण्यं वक्ष्यन्ति। तदप्यनुभवानुसार्येवेति सहृदयैराकलनीयम् ॥ **बाह्याः** प्रयत्नाः पुनरेकादश—विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। एते च वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायावुत्पद्यन्ते। अत एव **बाह्या** इत्युच्यन्ते। गलबिलस्य सङ्कोचात्**संवारः**। तस्यैव विकासाद्विवारः। एतौ च संवृतविवृतत्वरूपाभ्यामाभ्यन्तराभ्यां भिन्नावेव। तयोः समीपदूरावस्थानात्मकत्वादित्यवधेयम्। तत्र वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ-**विवृत**कण्ठाः **श्वासानु**प्रदाना **अघोषाः**। वर्गयमानां प्रथमे **अल्पप्राणाः**, इतरे सर्वे **महाप्राणाः**। वर्गाणां तृतीयचतुर्था अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ **संवृत**कण्ठा **नादानु**प्रदाना **घोषवन्तः**। वर्गाणां तृतीया अन्तस्थाश्चा**ल्पप्राणाः**। 'यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामपरो गुण'इति शिक्षासु स्थितम्। सङ्ग्रहश्च-

**खयां यमाः खय≍क≍पौ विसर्गः शर एव च।**
**एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥**
**कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः।**
**अयुग्मा वर्गयमगा यणश्चाऽल्पासवः स्मृताः ॥**

यद्यप्येते बाह्याः प्रयत्नाः सवर्णसंज्ञायामनुपयुक्तास्तथाप्यन्तरतमत्वपरीक्षायामुपयोक्ष्यन्त इतीह आभ्यान्तरत्वविशेषणव्यावर्त्यतया व्युत्पादिताः।

नन्विह सूत्रे प्रयत्नग्रहणं व्यर्थं, तद्धितान्ताऽऽस्यशब्दबलादेव ताल्वादिस्थानस्य प्रयत्नस्य च लाभादिति चेन्न। प्रत्येकं व्यापारनिरासार्थमुभयोरुपादानात्। तेन स्थानप्र-

स्थानानामपि स्यादत आह-**तद्धितान्तास्येति** ! आस्यपदोपादानसामर्थ्याच्च तद्ग्रह इति भावः । **एकत्वं विवक्ष्यत इति** । तद्विवक्षां विनापि प्रत्यासत्त्या प्रयत्नयोरेकास्यभववृत्तित्वलाभ इत्यन्ये ॥

[ तस्यैव समाधानान्तरभाष्यम् ]

**अथवा-पूर्वस्तत्पुरुषस्ततो बहुव्रीहिः-तुल्य आस्ये तुल्यास्यः, तुल्यास्यः प्रयत्न एषामिति ॥**

( प्रदीपः ) **अथवेति** । मयूरव्यंसकादित्वात्सप्तम्यन्तोत्तरपदस्तत्पुरुषः ॥

[ तृतीयसमाधानभाष्यम् ]

**अथवा परस्तत्पुरुषस्ततो बहुव्रीहिः—'आस्ये प्रयत्न आस्यप्रयत्नः, तुल्य आस्यप्रयत्न एषा'मिति ॥**

( उद्द्योतः ) त्रिपदबहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपातापत्तेः, पूर्वपदार्थप्रधानतत्पुरुषस्याप्यगतिकगतित्वाद्भाष्ये तृतीय आश्रितः ॥

[ आक्षेपवार्तिकम् ]

*॥ * ॥ तस्य ॥ * ॥*

**'तस्ये'ति तु वक्तव्यम् । किं प्रयोजनम् ? ॥ यो यस्य तुल्यास्यप्रयत्नः स तस्य सवर्णसंज्ञो यथा स्यादन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञो मा भूत् ॥**

( प्रदीपः ) **तस्येति** । यत्तदोर्नित्यसंबन्धादाह—**यो यस्येति** । अन्यथा वर्णान्तरापेक्षया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे लब्धे तदाश्रयमन्यस्यापि कार्यं प्राप्नोति । सूत्रारम्भस्तु रेफोष्मणां व्यावृत्त्यर्थः स्यात् ॥

( उद्द्योतः ) **रेफोष्मेति** । '**रेफोष्मणां सवर्णा न सन्ती**'त्युक्तेरिति भावः ॥

[ समाधानवार्तिकम् ]

*॥*॥ तस्याऽवचनं वचनप्राभाण्यात् ॥*॥*

**'तस्ये'ति न वक्तव्यम् ॥ अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः कस्मान्न भवति ? ॥ 'वचनप्रामाण्यात्' । सवर्णसंज्ञावचनसामर्थ्यात् । यदि हि अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः स्यात् सवर्णसंज्ञावचनमनर्थकं स्यात् ॥**

( प्रदीपः ) **तस्यावचनमिति** । तस्येत्ययमनुकरणशब्दस्तस्येत्यस्याऽवचनमित्यर्थः । **सवर्णसंज्ञावचनमिति** । न च रेफोष्मणां व्यावृत्त्यर्थं वचनं, रेफस्यापि रेफः सवर्णो भवत्येव । एवमूष्मसु द्रष्टव्यम् ॥

( उद्द्योतः ) **तस्यावचन**मिति वार्तिके तच्छब्देन कस्य परामर्शोऽत आह—**तस्येत्ययमिति** । **तस्यावचन**मित्यत्र षष्ठीतत्पुरुष[3] इति भावः । एवंच '[4]स्यो' न विभक्तिरिति लुगभावः । वस्तुतस्तच्छब्देन पूर्वोक्तस्य तस्यशब्दस्य परामर्श इति वक्तुं युक्तम् । **रेफस्यापीति** । रेफोष्मणामित्येतद्विजातीयसवर्णाऽभावप्रतिपादनपरमित्यर्थः ! तत्र रेफांशे तुल्यास्यप्रयत्नाऽसंभव एव, ऊष्मसु तु नाऽज्झलाविति निषेधादिति बोध्यम् । एवंच व्यावर्त्याऽभावेन सवर्णसंज्ञावचनसामर्थ्याद्यस्य तस्येति लप्स्यत इति भावः ।

[ समाधानन्तरवार्तिकम् ]

*॥ * ॥ संबन्धिशब्दैर्वा तुल्यम् ॥ * ॥*

**संबन्धिशब्दैर्वा पुनस्तुल्यमेतत् । तद्यथा—संबन्धिशब्दाः 'मातरि वर्तितव्यम्' 'पितरि शुश्रूषितव्यम्' इति । न**

✿ राजलक्ष्मीः ✿

१ आद्ये समाधानेऽरुचिरनेन दर्शिता । २ अतो द्वितीये समाधानेऽरुचिरुपदर्शिता । ३ तस्यस्य अवचनं तस्याऽवचनमिति विग्रहः । ४ **स्यः**—तस्येति वार्तिकघटकः स्यः ।

✿ शब्दकौस्तुभः ✿

यत्नोभयसाम्ये सत्येव संज्ञा न त्वन्यतरसाम्येपि । एवं स्थिते यत्फलितं तत्स्पष्टत्वार्थमुपन्यस्यते—अष्टादश अवर्णाः परस्परं सवर्णाः । एवमिवर्णोवर्णौ, ऋकारा अष्टादश । लृवर्णास्तु द्वादशेति त्रिंशन्मिथः सवर्णाः । लृवर्णस्य दीर्घा न सन्तीत्युक्तत्वात् । ऋलृवर्णयोर्मिथः सावर्ण्यस्योपसङ्ख्यानाच्च । एचस्तु द्वादश मिथः सवर्णाः, न तु एकारैकारौ ओकारौकारौ वा मिथःसवर्णौ । यथा चैतत्तथा अइउणित्यत्रैव प्रतिपादितम् । अकारेणाऽप्येचां न सावर्ण्यम्, प्रयत्नभेदादिति इहैव सूत्रे भाष्ये स्पष्टम् । अत एव एदैतोरपि शकारेण न सावर्ण्यमिति तेषां नाज्झलाविति सूत्रे उदाहरणत्वं नास्ति । न चाऽत्र स्थानभेदेन निर्वाहः, एचामकारेण सह कण्ठस्थानसाम्यात् । एदैतोः शकारेण सह तालुस्थानसाम्याच्च । नहि यावत्स्थानसाम्यं विवक्षितम् । नमङणनानां

**चोच्यते–'स्वस्यां मातरि' 'स्वस्मिन्पितरी'ति । संबन्धाच्चैतद्गम्यते–'या यस्य माता, यश्च यस्य पिते'ति । एवमिहापि 'तुल्यास्यप्रयत्नं सवर्ण'मित्यत्र संबन्धिशब्दावेतौ तत्र संबन्धादेतद्गन्तव्यम्–'यत्प्रति यत्तुल्यास्यप्रयत्नं तत्प्रति तत्सवर्णसंज्ञं भवती'ति ॥**

( प्रदीपः ) एवं वचनसामर्थ्याद्दोषं परिहृत्य शाब्दन्यायेन परिहर्तुमाह–**संबन्धिशब्दैरिति । संबन्धिशब्दाविति** । तुल्यास्यप्रयत्नशब्दस्य संबन्धिशब्दत्वात्तत्समानार्थोऽपि प्रदेशवाक्येषूपात्तः सवर्णशब्दः संबन्धिशब्दः । यथा 'तुल्याय कन्या दातव्ये'त्युक्ते न शूद्रेण तुल्याय ब्राह्मणः कन्यां ददात्यपि त्वात्मना, तथेहापीत्यर्थः ॥

( उद्द्योतः ) ननु 'सवर्ण'इति संज्ञाशब्दस्य कथं संबन्धिशब्दत्वमत आह –**तुल्यास्येत्यादि** । स्वार्थभिन्नप्रतियोगिकसंबन्धनिमित्तशब्दः **संबन्धिशब्द** इति भावः । परे त्वत्र सूत्रे द्वन्द्वनिर्देशलभ्यौ तुल्यास्य–तुल्यप्रयत्नशब्दावित्यर्थो भाष्यस्य । सवर्णशब्दो हि प्रदेशेऽपि सवर्णपदवत्परो, नतु तुल्यास्यप्रयत्नत्वप्रवृत्तिनिमित्तक इति तस्य संबन्धिशब्दत्वं दुरुपपादम् । उपक्रमोपसंहाराभ्यां चैवमेवोचितम् । उपक्रमे हि 'तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवती'त्युक्तमित्याहुः ॥

[ सवर्णसञ्ज्ञावार्तिकम् ]

**॥*॥ ऋकारऌवर्णयोः सवर्णविधिः ॥*॥**

**ऋकारऌकारयोः सवर्णसंज्ञा विधेया । होतृऌकारः होतॄकार इति ॥ किं प्रयोजनम् ?॥ 'अकः सवर्णे दीर्घ' इति दीर्घत्वं यथा स्यात् ॥**

(प्रदीपः) **ऋकारऌकारयोरिति** । स्थानभेदान्न प्राप्नोतीत्यारम्भः । अत्र चानयोरेव श्रुतत्वान्मिथः सवर्णसंज्ञा विज्ञायते, न त्वेतयोरन्येन सहेति बोद्धव्यम् ॥

( उद्द्योतः ) **'ऋकारऌकारयो'**रित्यत्र **'ऋत्यक'** इति प्रकृतिभावः । वार्तिकेऽप्येवमेव पाठ इति प्रामाणिकाः । सावर्ण्यप्रतियोग्यनिर्देशादाह–**अत्र चेति** । भाष्ये **'होतृऌकारः होतॄकार इति** । 'ऌकार'शब्दो देवतावाचीत्येके । विवृतस्य ऌकारस्य दीर्घस्याऽभावादॄकारो दीर्घ उदाहृत इति बोध्यम् ॥

[ वार्तिकखण्डनभाष्यम् ]

**नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत्–सवर्णदीर्घत्वे–"ऋति ऋ वा वचनम्" "ऌति ऌ वा वचनम्"इति ॥**

( प्रदीपः ) **वक्ष्यत्येतदिति** । तत्र[1] 'ऌवावचन'मित्यत्र 'दीर्घ' इत्यनुवर्तते। तत्र ऌति ऌशब्दे विकल्पितेऽप्राप्त एव पक्षे दीर्घो भविष्यति । स च भवन् ऌवर्णस्य दीर्घाऽभावाद्दवर्णस्यान्तरतमो[2] दीर्घ ॠकारो भविष्यति ॥

( उद्द्योतः ) **नैतदस्तीति** । 'सवर्णसंज्ञाया'इति शेषः । नन्वीषत्स्पृष्टेन मुक्तेऽपि विवृतदीर्घः सवर्णसंज्ञां विना दुर्लभोऽत आह–**तत्रेति** ॥

१ **तत्र**–तयोर्मध्ये । २ 'आन्तरतम्या'दिति पाठा० ।

❀ राजलक्ष्मीः ❀

❀ शब्दकौस्तुभः ❀

स्ववर्ग्यैः सह असावर्ण्यापत्तेः, यवलानां सानुनासिकनिरनुनासिकानामसावर्ण्यापत्तेश्च । नहि निरनुनासिकानामपि नासिका स्थानं, येन सर्वसाम्यं स्यात् । ननु तद्धितान्ताऽऽस्यशब्दबलात्ताल्वादिसाम्यमात्रं लभ्यते । ओष्ठात्प्रभृति प्राकाकलकाद्धि **आस्यम्** । **काकलकं** च ग्रीवाया उन्नतप्रदेशः, यं 'कण्ठमणि'रित्याचक्षते । तत्कथंनासिकास्थानभेदेनासवर्णत्वमापाद्यतइति चेत् । नासिका हि न बाह्या वर्णोत्पत्तौ निमित्तम् । तत्र जिह्वाग्रादिव्यापारविरहात्, किं तु अन्तरास्ये विततं चर्माऽस्ति पणवचर्मवत् । तत्संबद्धो रेखाविशेषो नासिका । सैव वर्णोत्पत्तौ निमित्तमिति सिद्धान्तात् । तस्याश्च ओष्ठादिभ्योऽविशेषाद्वर्ग्यो वर्ग्येण सवर्णः तुल्यास्यप्रयत्नत्वात्, रेफस्य रेफ एव सवर्णः । एवमूष्मणामपि ऊष्माण एव सवर्णा नत्वन्ये । तुल्यास्यप्रयत्नत्वाऽभावात् । शषसहानां यथाक्रमम् इकारऋकाराकाराः सूत्रकारमते यद्यपि तुल्यास्यप्रयत्नास्तथापि न सवर्णा, 'नाज्झला'विति निषेधात् । भाष्यकारमते तु प्रयत्नभेद एवेति वक्ष्यते । इह स्थानभेदादप्राप्तां सवर्णसंज्ञां विधातुं वार्त्तिकमारभ्यते–**ऋकारऌकारयोः सवर्णविधिरिति** । होतृऌकारः होतॄकारः । उभयान्तरतमऌकारान्तरतमश्च दीर्घो न सम्भवतीति परिशेषादॄकारः । स्यादेतत्–अकः सवर्णे दीर्घ इत्यत्र ऋति ऋवा वचनं ऌतिऌवावचनमिति वक्ष्यति । तस्यायमर्थः–अकः सवर्णे ऋतिपरे पूर्वपरयोः स्थाने वा 'ॠ' अयमादेशो भवति । द्विमात्रोऽयम् । मध्ये द्वौ रेफौ । तयोरेका मात्रा । अभितोऽज्भक्तेरपरा । ईषत्स्पृष्टश्चायम् । तत्र प्रयत्नभेदादृकारेणाऽग्रहणादनच्त्वाद्दीर्घसंज्ञाया अभावादप्राप्तोऽयं विधी-

[ वार्त्तिकस्थापनभाष्यम् ]

**तत्सवर्णे यथा स्यात् । इह मा भूत्-दध्ऌकारः मध्ऌकार इति ॥**

( प्रदीपः ) **तत्सवर्ण इति ।** यद्यविधाय सवर्णसंज्ञां तदुच्येताऽण्मात्रस्य ऌति तत्कार्यं स्यात्-यथा दध्ऌकारइति । तस्मात्सवर्णसञ्ज्ञाविधेया ।

( उद्द्योतः ) भाष्ये तद्वचनद्वयारम्भेऽपि सवर्णसंज्ञावश्यकीत्याह--**तत्सवर्णे इति । अण्मात्रस्येति ।** अनण्व्यावृत्त्यर्थमक इति वर्त्तते, सवर्णसंज्ञाऽभावात्सवर्ण इति नानुवर्त्तेत इति भावः ॥

[ सवर्णविधिवार्तिकखण्डनभाष्यम् ]

**यदेतत्सवर्णदीर्घत्वे 'ऋती'ति, एतदृत इति वक्ष्यामि । ततः—'ऌति' । ऌकारे परत ऌकारो वा भवतीति । 'ऋत'इत्येव ॥**

( प्रदीपः ) **ऋत इति वक्ष्यामीति ।** ऋकारस्य ऋकार एव सवर्ण इति ऋत्येव भविष्यति । ततः 'ॡति' । 'ऋत' इत्येव । इदं चाऽसवर्णार्थम् । तेन ऌति रूपद्वयं सिद्धम् । तत्राऽसंहितायामृकारे होतृ-ऋकार इति रूपम् । संहितायामपि 'ऋत्यक'इति शाकलप्रकृतिभाव एतदेव रूपम् । शाकलाऽभावे होतॄकारः होतॄकार इति रूपद्वयम् । ऌकारेऽसंहितायां संहितायां च शाकले होतृऌकार इति । शाकलाऽभावे होतॄकारो होत्ऌकार इति रूपद्वयम् ॥

( उद्द्योतः ) खण्डयति—**यदेतदिति** भाष्ये । **सवर्णइतीति ।** आद्यवार्तिके सवर्णग्रहणमनुवर्तते इति भावः । **तेनऌतीति ।** सिद्धान्तेऽपि व्यवस्थितविभाषया अनभिधानेन वा होतृऌकारे पूर्ववार्तिकं गम्ऌकारे चोत्तरवार्त्तिकं न प्रवर्तते । एवं 'ॠ'इति दीर्घस्य ऋकारे परे पूर्वस्य तस्यैव ऌकारे उत्तरस्य चाऽप्रवृत्तिस्तत एवेति भावः । **रूपद्वयमिति ।** ईषत्स्पृष्टघटितं विवृतदीर्घघटितं चेति भावः । **तत्रासंहितायामिति ।** समासे संहिता नित्या, असमासे त्वीदृशं रूपं दुर्लभं, होतृशब्दे विभक्तिश्रवणापत्तेः । होतृशब्दस्य नपुंसके संबुद्धौ रूपमित्यप्यतिक्लिष्टमिति चिन्त्यम् । भाष्ये तु होतृऌकार इति दीर्घप्रवृत्तियोग्यदशोच्चारणम् । 'इति स्थिते' इति शेषः । एवं शाकले होतृऌकार इत्यपि चिन्त्यं, सवर्णत्वविधायकवचनाऽभावे एतद्विचारसत्त्वेन तत्र **ऋत्यक** इत्यस्याऽप्राप्तेः । 'इकोऽसवर्णे' इत्यपि 'न समास' इति निषिद्धम् । नित्यग्रहणं तु तत्र भाष्ये प्रत्याख्यातमित्याहुः ॥

[ सावर्ण्यविधिस्थापनभाष्यम् ]

**तन्न वक्तव्यं भवति ॥**

( प्रदीपः ) **तन्न वक्तव्यमिति ।** द्वावप्येतौ दीर्घौ ॠ ॡ इति । तत्र ऋकारे कदाचिदृ इति दीर्घः, कदाचिदॢ इति । ऌकारेपि ॠ ॡ इत्येतौ भविष्यतः सत्यां सवर्णसंज्ञायामिति भावः ॥

( उद्द्योतः ) सवर्णसंज्ञावचनेनैकेनैव सिद्धे तद्द्वयं न कार्यमित्याह—भाष्ये-**तन्न वक्तव्यमिति** ॥

[ सावर्ण्यविधिखण्डनभाष्यम् ]

**अवश्यं तद्वक्तव्यम् । 'ऊकालोज्झ्रस्वदीर्घप्लुतसंज्ञो भवती'त्युच्यते, न च ॠकार ॡकारो वाऽजस्ति ॥**

( प्रदीपः ) **न चेति ।** अर्धतृतीयमात्रत्वादिति केचिदाहुः । अन्ये तु ईषत्स्पृष्टकरणत्वादनयोर्ॠकारॡकारयोश्च विवृतत्वात्ताभ्यां तयोरग्रहणादनच्त्वमाहुः ॥

( उद्द्योतः ) इतर आह--**अवश्यमिति ।** अर्ध-

---

⊛ राजलक्ष्मीः ⊛

१ एतदर्थं सावर्ण्यमिति समाधानग्रन्थाशयः । २ यथाश्रुतवार्त्तिकपाठेऽपि । ३ **तस्यैवेति ।** 'ॠ'इतिदीर्घस्यैवेत्यर्थः । ४ इति मन्मते लाघवमित्यर्थः । ५ **तत्**-ऋतिऌवेति ।

---

※ शब्दकौस्तुभः ※

यते । **ऌतिऌवेति ।** अयमपि द्विमात्रः, ईषत्स्पृष्टश्च । मध्ये द्वौ लकारौ तयोरेका मात्रा । अभितोऽज्भक्तेरपरा । पूर्ववदप्राप्तो विधीयते । तत्र 'वावचन'मिति वाशब्दो दीर्घसमुच्चयार्थो भविष्यति । 'वा स्याद्विकल्पोपमयोरेवार्थेपि समुच्चये'इत्यभिधानात् । तेनाऽप्राप्तएव दीर्घो भविष्यति,तत्किं सवर्णसंज्ञया? ननु ॡतिॡवेत्यत्र सवर्णइत्यनुवर्त्तते न वा । आद्ये होतृऌकार इत्यत्र ऋऌवर्णयोः सवर्णसंज्ञाविधानं विना नेष्टसिद्धिः । अन्त्ये दध्यकारो मध्ऌकार इत्यादावतिप्रसङ्ग इति चेन्न । प्रथमवार्त्तिके 'ऋती'त्यपनीय 'ऋत' इति पञ्चम्यन्तपाठेनैव सर्वसामञ्जस्यात् । सवर्णइति च पूर्ववार्तिकेऽनुवर्त्तते । तेन धात्रंश इत्यादौ नातिप्रसङ्गः । द्वितीयवार्त्तिके तु 'सवर्ण'इति निवृत्तम् । 'ऋत' इत्यनुवर्त्तते । तस्मादकः सवर्णे इत्यत्रावश्यकर्त्तव्येन वचनद्वयेनैव सकलनिर्वाहादृकारऌकारयोः सवर्णविधिरितीहत्यं वार्त्तिकं व्यर्थमिति । मैवम् । इहत्यमेकवार्त्तिकमाश्रित्य पाश्चवचनद्वयप्रत्याख्या-

तृतीयेति । तावताऽपि स्थानप्रयत्नसाम्येन ताभ्यां ग्रहणं स्यादित्यरुचेराह–**ईषत्स्पृष्टेति**। विवृतत्वाऽभावे उपस्थित-रेफीयप्रयत्नत्यागे मानाऽभावादिति भावः। **ताभ्यामिति**। असावर्ण्यादिति भावः ॥

[ सावर्ण्यविधिस्थापनभाष्यम् ]

**ऋकारस्य ऌकारस्य चाऽच्त्वं वक्ष्यामि। तच्चावश्यं वक्तव्यम्। प्लुतो यथा स्यात्। होतृ-ऋकारः होतॄकारः। होतॄ३कार इति। होतृ-ऌकारः होत्ऌकारः होत्ऌ३कार इति ॥**

**( प्रदीपः ) अच्त्वं वक्ष्यामीति**। सत्यच्त्वे दीर्घसंज्ञाऽनयोर्भविष्यति। येषां तु मतमर्धतृतीयमात्रावेताविति, तेषां मते सत्यप्यच्त्वे द्विमात्रत्वाऽभावादेतयोर्दीर्घसंज्ञा न प्राप्नोति। तस्माद्द्विमात्रावेतावभ्युपगन्तव्यौ। **तच्चावश्यमिति**। त्वयाऽपि 'ऋ वा वचनं'ऌवावचनम्'मिति ब्रुवताऽच्त्वमनयोर्वक्तव्यम्, अन्यथा विधानमात्रमेव तयोः स्यान्नाऽच्कार्यं प्लुतः। सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्याद्ग्रहणे सति प्लुतसंज्ञा भविष्यतीति प्लुतसिद्धिः॥

**( उद्द्योतः )** भाष्ये वचनद्वयप्रत्याख्यानवादाह–**ऋकारस्येत्यादि। सत्यच्त्वे सति**। अयोगवाहेषु पाठादिति भावः। **नाच्कार्यमिति**। तस्यं प्लुतसंज्ञा, तत्स्थाने प्लुतश्चेति भावः ॥

[ तटस्थजिज्ञासाभाष्यम् ]

**किं पुनरत्र ज्यायः ? ॥**

**( प्रदीपः ) किं पुनरिति**। एकैकस्मिन्सं-हितायां शाकलाऽभावपक्षे रूपद्वयं साध्य, तच्चोभंयथापि सिध्यति। तत्र सवर्णसंज्ञायामसत्यां यथा सिध्यति तथा पूर्वमेवोक्तम्। सैत्यां तु यथा सिध्यति तथोच्यते–'अकः सवर्णे दीर्घ' इत्यत्रान्तरतमत्वदीर्घत्वयोरुपादेयविशेषणयोर्विवक्षितत्वादुभयविशिष्टकाऽसम्भवाद्विकल्पः। यश्चाऽन्तरतमो नासौ दीर्घो, यश्च दीर्घो, नासावन्तरतम इति द्वयोर्ॠकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदाचिद्रेफद्वययुक्त ॠकारो भवति, कदाचिद्विवृत ॠकारः। ऌकारेऽपि कदाचिदृकारान्तरतम ॠकारः कदाचिदॢकारान्तरतम ॡकार इति साम्यमुभयोः पक्षयोः॥

**( उद्द्योतः )** अत्र पक्षेऽपि उक्तयुक्त्या ह्रस्वऋकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये आद्यस्य, ह्रस्वऋकारऌकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये द्वितीयस्य न साधुत्वमिति नाऽतिप्रसङ्गः, पक्षयोस्तुल्यफलता चेति बोध्यम्। तदेव ध्वनयन् पृच्छति–भाष्ये **किं पुनरत्रेति। ऋकार इति**। विवृत इत्यर्थः। **ऌकार इति**। ईषत्स्पृष्ट इत्यर्थः॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**सवर्णसंज्ञावचनमेव ज्यायः। दीर्घत्वं चैव हि सिद्धं भवति। अपि च ऋकारग्रहणेन ऌकारग्रहणं संनिहितं भवति। 'ऋत्यकः'–खट्वऋष्यः मालऋष्यः। इदमपि सिद्धं भवति–खट्वॢकारो मालॢकार इति। 'वा सुप्यापिशलेः'। उपकारीयति उपार्कारीयति। इदमपि सिद्धं भवति—उपल्कारीयति उपाल्कारीयति ॥**

**(राजलक्ष्मी)** १ अर्धतृतीयमात्रत्वेऽपि। **ताभ्यां**–ताभ्यां तयोर्ग्रहणमित्यर्थः। २ अयोगवाहेषुपाठात्त्वमित्याशयः। ३तस्यतयोः। ४ सवर्णसञ्ज्ञापक्षे तु। ५ व्यवस्थितविषयाऽनभिधानेन वा। ६ 'ङ्यापोः सञ्ज्ञाछन्दसो'रितिह्रस्वः।

❀ शब्दकौस्तुभः ❀

नरयैव न्याय्यत्वात्। तथाहि–तद्वचनद्वयं कुर्वतापि रेफद्वयलकारद्वयगर्भयोस्तद्विधेययोरच्त्वं तावदेष्टव्यम्। तन्निर्वाहार्थं वर्णसमाम्नाये तौ पठनीयौ। अन्यथा हि विधानमात्रमनयोः स्यान्न त्वच्कार्यं प्लुतः। तद्विधाने ह्यचश्चेति परिभाषयाऽच इत्युपतिष्ठते। ननु ईषत्स्पृष्टस्यानच्त्वान्मा भूत्प्लुतः, विवृतस्य तु ऋकारस्याऽच्त्वेन प्लुतः सिद्ध एवेति चेत्सत्यम्। विवृतः प्लुतः सिद्धः, ईषत्स्पृष्टौ तु प्लुतौ रेफद्वयलकारद्वयगर्भौ न सिध्यतः। अत एवाऽच्संज्ञामात्रेणापि न निस्तारः। ग्रहणकशास्त्रप्रवृत्तेस्तावन्मात्रेणानिर्वाहात्, किं त्वण्सु पाठ एव कर्त्तव्य इत्युक्तम्। मति त्वण्सु पाठे ताभ्यां त्रिमात्रयोरपि ग्रहणात्प्लुतसंज्ञायां सत्यां पक्षे ईषत्स्पृष्टौ प्लुतौ भवतः। एवंस्थिते पाठं वचनद्वयं मास्तु। तद्विधेययोरपि दीर्घतयाऽकः सवर्णे इत्यनेनैव सिद्धेः। ननु स्थानेन्तरतमपरिभाषया विवृतस्य स्थानिनो विवृतावेव दीर्घौ स्यातां न त्वीषत्स्पृष्टाविति चेन्न। रेफद्वययुक्तस्य स्थानिनो रेफद्वययुक्त एवादेशः सुसदृश इत्यपि हि सम्भवति, तथा च किं रेफद्वययुक्तत्वमादर्त्तव्यं, किं वा विवृतत्वमित्यत्र विनिगमकाऽभावेन पर्यायेणोभयप्रवृत्तौ सिषाधयिषितस्य रूपद्वयस्य निर्वाहात्। ऌकारेपि कदा चिदृकारान्तरतमो विवृतदीर्घः कदाचिदॢकारान्तरतमो लकारद्वयगर्भ ईषत्स्पृष्ट इति सकलेष्टसिद्धेः। तदेवं पाठं वचनद्वयं न कर्त्तव्यमिति स्थितम्।

( उद्द्योतः ) भाष्ये दीर्घत्वं चैवहीति । ईषत्स्पृष्टविवृतरूपो दीर्घो वर्ण इत्यर्थः । चं व्याचष्टे—अपि चेत्यादिना । खट्वल्लकारइति । 'होतॄऌकार'इत्यस्याप्युपलक्षणम् ।

[ एकदेशिन आक्षेपभाष्यम् ]

**यदि तर्हि ऋकारग्रहणेन ऌकारग्रहणं संनिहितं भवति,—'उरण्रपरः'—ऌकारस्यापि रपरत्वं प्राप्नोति ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**ऌकारस्य लपरत्वं वक्ष्यामि । तच्चाऽवश्यं वक्तव्यमसत्यां सवर्णसंज्ञायां विध्यर्थम् । तदेव सत्यां रेफबाधनार्थं भविष्यति ॥**

( प्रदीपः ) लपरत्वमिति । व्याख्यास्यामीत्यर्थः । रपर इत्यत्र 'र' इति लणिति लकाराऽकारेण प्रत्याहार आश्रीयते । तत्रान्तरतम्यादकारस्याऽण् रपरः, ऌकारस्य लपरः—इति । असत्यामिति । असत्यां सवर्णसंज्ञायामुरण् रपर इत्यत्र ऌकारग्रहणं कर्तव्यं भवति ॥

( उद्द्योतः ) वचनस्य क्वाप्यदर्शनादाह—व्याख्यास्यामीति । अन्ये तु लण्सूत्रस्थाऽकारस्यानुनासिकत्वेऽतो लान्तस्येत्यत्र भगवान्पाणिनिर्लकारं नोच्चारयेत्, प्रत्याहारेणैव निर्वाहात् । तस्मादपूर्वं वचनं कार्यमित्येव भाष्याशय उचित इत्याहुः । आन्तरेति । रश्रुते रपरो लश्रुतेर्लपर इत्यर्थः । सवर्णसंज्ञावादी तदभाववादिनं प्रति 'तवाप्यावश्यकं त'दित्याह—तच्चावश्यमिति । 'ऌकारस्याऽण् लपर' इत्येतत् ॥

[ सवर्णसञ्ज्ञाऽभाववादिन आक्षेपभाष्यम् ]

**इह तर्हि—'रषाभ्यां नो णः समानपदे' इत्यृकारग्रहणं चोदितं मातॄणां पितॄणामित्येतदर्थम् । तदिहापि प्राप्नोति—'कॢप्यमानं पश्ये'ति ।**

[ सवर्णसञ्ज्ञावादिनः प्रतिबन्दीभाष्यम् ]

**अथाऽसत्यामपि सवर्णसंज्ञायामिह कस्मान्न भवति—'प्रकॢप्यमानं पश्ये'ति ? ॥**

( प्रदीपः ) प्रकॢप्यमानमिति । 'कृत्यच' इति णत्वप्रसङ्गः ॥

[ सवर्णसञ्ज्ञाऽभावेसमाधानभाष्यम् ]

**'चुटुतुलशर्व्यवायेने'ति वक्ष्यामि । अपर आह'—त्रिभिश्च मध्यमैर्वर्गैर्लशसैश्च व्यवाये नेति वक्ष्यामी'ति । वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ ऌकारे लकारस्तदाश्रयः प्रतिषेधो भविष्यति ॥**

(प्रदीपः) त्रिभिश्चेति । पूर्वस्मादयं विशेषः—पूर्वत्र शरन्तर्भूतोऽपि षकारः साक्षाण्णत्वनिमित्तत्वाद्व्यवधायकत्वेन नाश्रीयते। इह तु तस्याऽनुपादानमेवैं । वर्णैकदेशा इति । अवयवस्य स्वव्यापाराऽनिवर्तनात् । अग्रहणपक्षे तु क्षुभ्नादेराकृतिगणत्वाऽभावः ।

( उद्द्योतः ) साक्षादिति । रषाभ्यामिति वचनादित्यर्थः । नन्वत्र लकाराऽभाव इत्यत आह—भाष्ये वर्णैकदेशा इत्यादि । अग्रहणपक्षे त्विति। 'प्रकॢप्यमान'मित्यत्र 'कॢप्यमान'मित्यत्र चेति भावः । आद्ये 'कृत्यच' इति, द्वितीये 'ऋवर्णान्नस्ये'ति प्राप्तिः ॥

[ सिद्धान्तिन उपसंहारभाष्यम् ]

**यद्येवं, नार्थो रषाभ्यां णत्वे ऋकारग्रहणेन । वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ ऋकारे रेफस्तदाश्रयं णत्वं भविष्यति ॥ [ तुल्यास्यप्रयत्नं ] । ९ ॥**

( प्रदीपः ) ऋदिताम् ऌदितां च भेदेनाऽनुबन्धनिर्देशाद्भेदेन चोपादानादनुबन्धकार्येषु परस्परग्रहणाऽभावात्सङ्कराऽभावः ।

( उद्द्योतः ) भेदेनेति । 'ओणृ' 'गम्ऌ' इति भेदेनानुबन्धनिर्देशः । 'नाग्लोपिशास्वृदितां' 'पुषादिद्युताद्यॢदित' इति च भेदेनोपादानमित्यर्थः ॥ [ तुल्यास्य ] । ९ ॥

---

❀ राजलक्ष्मीः ❀

१ 'तव मते'इत्यादिः । २ 'मम मते' इत्यादिः ।

३ अस्य'इति' इतिशेषः । ४ चः क्वचिन्न ।

५ 'व्यतिकराऽभावः' पा० ।

❀ शब्दकौस्तुभः ❀

ननु तदेवास्तु, संज्ञाविधानं तु मास्त्विति चेन्न । वचनद्वयारम्भे गौरवस्य स्पष्टत्वात् । किञ्च संज्ञाऽभावे ऋल्वक उपसर्गादृति उरण्रपरइत्यादिषु ऋकारेण ऌकारग्रहणं न स्यात् । न चैवं सिद्धान्तेपि 'तवल्कार' इत्यादौ रपरत्वप्रसङ्गः । रप्रत्याहारपरत्वस्य वक्ष्यमाणतया लपरत्वसिद्धेः । ऋदिताम्ऌदितां च धातूनामनुबन्धकार्येषु संकरस्तु न भवति । धातूपदेशे पृथगनुबन्धकरणसामर्थ्यात् । विधि-

## नाज्झलौ १।१।१०॥

[ आक्षेपवार्तिकम् ]

*॥*॥ अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात्[1] ॥*॥*

**अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति ॥ किं कारणम् ? ॥ 'अज्झल्त्वात्' । अच्चैव हि शकारो हल्च ॥ कथं तावदच्त्वम् ? ॥ इकारः सवर्णग्रहणेन शकारमपि गृह्णाती'-त्येवमच्त्वम् । हल्षु चोपदेशाद्धल्त्वम् ॥**

( प्रदीपः ) **नाज्झलौ** । अकारहकारयोरिकारशकारयोश्च तुल्यस्थानप्रयत्नत्वात्सवर्णसंज्ञा प्राप्ता निषिध्यते । अतएव निर्देशादचामज्भिर्हलां हल्भिः सवर्णत्वाऽनिषेधः। **अज्झलोरिति**। प्रकृतत्वात्सवर्णसंज्ञाया इति बोध्यम् । **शकारप्रतिषेध इति** । द्विवचनान्तस्य समासो, भेदाधिष्ठानत्वात्सवर्णसंज्ञायाः। **इकार इति**। अत्र हि सूत्रे अजितीकारो गृह्यमाणः सवर्णं गृह्णातीति शकारस्यापि ग्रहणमस्ति, स्वात्मनि क्रियाविरोधादत्रैव सूत्र इदं न व्याप्रियत इति सवर्णत्वनिषेध इकारशकारयोर्नास्ति । 'यस्येति चे'त्यादौ तु शकार इकारेण न गृह्यतेऽनेन सवर्णत्वनिषेधात् । इह तु स्वात्मनि व्यापारो नास्ति, अस्ति च पूर्वेण सवर्णत्वमिकारशकारयोरिति भावः । 'प्रकल्प्य चापवादविषय'मिति न्यायोऽत्र नास्त्यपवादस्यैवाऽसंपत्त्या ॥

( उद्द्योतः ) **नाज्झलौ । अकारेत्यादि ।** एवंच 'हरि'रित्यादौ दीर्घः, 'शयन'मित्यादौ यणापत्तिरिति भावः । **अत एवेति ।** पूर्वसवर्णदीर्घनिर्देशादित्यर्थः[2] । किं चैवं सति अकः सवर्णे इति झरो झरि सवर्णे इत्यस्याऽसङ्गतिरित्यपि बोध्यम् । **भेदाधिष्ठानत्वादिति ।** व्यक्त्यैक्ये हि तुल्यास्यप्रयत्नत्वाऽसंभव इति भावः । **सवर्णग्रहणेनेति** भाष्ये । सवर्णग्राहकेणाऽ**णुदित्**सूत्रेणेत्यर्थः । **अत्रहि सूत्रे इति** । उच्चारितस्यैव प्रत्यायकतामत्रत्यपूर्वपक्षी न जानाति । प्रत्याहारेषु जातिग्रहणमिति च न जानाति । ननु सति सवर्णत्वे इकारः शकारं गृह्णीयात्, तदेव च न, नाज्झलाविति निषेधादत आह-**स्वात्मनीति ।** यद्यपि 'स्वाध्यायोऽध्येतव्य' इत्यात्मानमपि विषयीकरोतीति एकस्य विषयत्वविषयित्वयोर्न विरोधस्तथाप्येतद्वाक्यार्थबोधोत्तरमन्यत्र निषेधेऽपि'स्ववाक्यार्थबोधात्प्राक्[3] स्वघटकपदार्थोपस्थितिवेलायां स्ववाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावान्नात्रेकारशकारयोस्तदभावबोधनमिति भावः । **अपवादस्यैवासंपत्त्येति । अपवादस्य**-नाज्झलावित्यस्या**ऽसंपत्त्या**-प्राग्बोधाऽभावेन स्वविषयेऽप्राप्त्या-एतद्घटकपदोपस्थितयोरिकारशकारयोर्नापवादविषयत्वमित्यर्थः ॥

[ आक्षेपवार्त्तिकावतरणभाष्यम् ]

**तत्र को दोषः ? ॥**

[ आक्षेपसाधकवार्त्तिकम् ]

*॥*॥ तत्र सवर्णलोपे दोषः ॥*॥*

**तत्र सवर्णलोपे दोषो भवति— 'परश्शतानि कार्याणि' । 'झरो झरि सवर्णे' इति लोपो न प्राप्नोति ॥**

( प्रदीपः ) **परश्शतानीति** । शतात्पराणि । शताधिकानीत्यर्थः । कर्तृकरणे कृता बहुलमिति

#### ❀ राजलक्ष्मी ❀

१ अत्र 'तत्र सवर्णलोपे दोष'इत्यधिकं केचित्पठन्ति ।

२ 'सवर्णदीर्घपूर्वसवर्णे'तिपाठान्तरम् ।

३ **प्राक्**-परार्थोपरिस्थितिसमये ।

#### ❀ शब्दकौस्तुभः ❀

वाक्येष्वपि पृथगनुवादसामर्थ्यात् । अन्यथा हि सर्वान् ऋदित एव लृदित एव एव वा पठित्वा विधावपि तेनैव रूपेणानुवदेत । सम्भवत्यैकरूप्ये वैरूप्याश्रयणायोगात् [**तुल्यास्य**]।

**नाज्झलौ** । अज्झलौ मिथः सवर्णौ न स्तः । अकारहकारयोरिकारशकारयो ऋकारषकारयोर्लृकारसकारयोश्चेति स्थलचतुष्टये पूर्वसूत्रेण प्राप्तं सावर्ण्यमनेन निषिध्यते । तेना'ऽऽनडुहं चर्म' 'वैपाशो मत्स्य' इत्यत्र यस्येति चेति हकारशकारयोर्लोपो न । अन्यथा हि यस्येत्यनेन दीर्घाणामिव हकारशकारयोरपि ग्रहणं स्यात् । तथा 'दण्डहस्तः' 'दधिशीतं' 'कर्तृषट्क'मित्यादौ सवर्णदीर्घः स्यात् । 'दधिसान्द्र'मित्यादौ यणादेशश्च स्यात् । इहाऽज्झलौ कस्यापि न सवर्णौ स्त इति वाक्यार्थो न ग्राह्यः, संज्ञारम्भवैयर्थ्यापत्तेः । विहितप्रतिषिद्धत्वेन विकल्पे तु लाघवात्तुल्यास्यप्रयत्नं वेत्येव सूत्रयेत् । नाप्यचामज्भिर्हलां हल्भिः सावर्ण्यं निषिध्यते । नाज्झलावित्यत्रैव सूत्रे सवर्णदीर्घस्य झयो ह इति पूर्वसवर्णादेशस्य च निर्देशात् । ननु झलेवात्र निर्दिष्टो न तु हल् । तावतैवेष्टसिद्धेरिति चेत्तर्हि दीर्घनिर्देश एव ज्ञापकोऽस्तु । तेन ह्यचामज्भिः सावर्ण्यमनिषिद्धमिति ज्ञापिते परिशेषादज्झलोर्मिथो निषेध एव पर्यवस्यति । 'झरो झरि सवर्णे'इति ज्ञापकाच्च । 'यत्तु नाण्झला'वित्येव कुतो न सूत्रितमिति । तन्न । 'कर्तृपट्कं' 'दधिसान्द्र'मित्याद्यसिद्ध्यापत्तेः,

बहुलवचनात्समासः । पारस्करादित्वात्सुडागमः । सकारस्य श्चुत्वम् । 'अनचि चे'ति द्विर्वचनम् । 'झरो झरी'ति लोपाऽप्रज्ञात्रिशकारश्रवणप्रसङ्गः । शरोच्यनचिचेत्यत्र (तु)इकारेण शकारो न गृह्यतेऽनेन सवर्णत्वस्य निषेधादित्यस्ति शकारस्य द्विर्वचनम् ॥

( उद्द्योतः ) **बहुलेति** । मयूरव्यंसकादित्वात्सुप्सुपेति वा समास इत्युचितम् । ननु कथं शस्य द्वित्वम्, 'अचि ने'ति 'शरोची'ति वा निषेधापत्तेरत आह–**शरोचीति** ॥

[ समाधानवार्तिकम् ]

*॥*॥ सिद्धमनच्त्वात् ॥*॥*

**सिद्धमेतत् ?॥ कथम् ?। 'अनच्त्वात् ॥ कथमनच्त्वम् ?॥ स्पृष्टं करणं स्पर्शानाम्' । 'ईषत्स्पृष्टमन्तस्थानाम्' 'विवृतमूष्मणाम्' ॥ 'ईष'दित्येवानुवर्तते। 'स्वराणाञ्च विवृतम्'। 'ईष'दिति निवृत्तम् ॥**

( प्रदीपः ) **सिद्धमनच्त्वादिति** । सूत्रप्रत्याख्यानसाधारणमुक्तम् । प्रयत्नभेदादज्झलोः सवर्णसंज्ञायाः प्राप्तिरेव नास्तीत्यर्थः ॥

( उद्द्योतः ) ननु प्रयत्नभेदेनाऽनच्त्वे सूत्रमेव व्यर्थं स्यादत आह–**सूत्रेति** । भाष्ये--**ईषदित्येवेति** । एङैचोः परस्परसावर्ण्याऽभावाय विवृतत्वव्याख्यानामपि सवर्णसंज्ञानियामकत्वस्य सूत्रमतेऽप्यावश्यकत्वेन तदाश्रित्य सूत्रानारम्भ एव ज्यायान् । किंच दीर्घप्लुताऽकारहकारयोः सावर्ण्यव्यावृत्तये इदमपि तस्यावश्यकमिति भावः ।

[ समाधानान्तरवार्तिकम् ]

*॥*॥ वाक्याऽपरिसमाप्तेर्वा ॥*॥*

**वाक्याऽपरिसमाप्तेर्वा पुनः सिद्धमेतत् ॥ किमिदं वाक्यापरिसमाप्तेरिति ?॥ वर्णानामुपदेशस्तावत् । उपदेशोत्तरकालेत्संज्ञा । इत्संज्ञोत्तरकाल 'आदिरन्त्येन सहेते'तिप्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसञ्ज्ञा । सवर्णसंज्ञोत्तरकालमणुदित्सवर्णस्य चाप्रत्यय इति सवर्णग्रहणम् । एतेन सर्वेण समुदितेन वाक्येनाऽन्यत्र सवर्णानां ग्रहणं भवति । न चाऽत्रेकारः शकारं गृह्णाति ॥**

(प्रदीपः) **वाक्यापरिसमाप्तेरिति** । भवतु वा तुल्यास्यप्रयत्नत्वं तथापीहेकारेण शकारो न गृह्यते, सवर्णसंज्ञाया अस्मिन्सूत्रेऽनिष्पादात् । अस्मिन् हि सूत्रे निष्पन्ने सत्यपवादविषयपरिहारेणेष्टे विषये सवर्णसंज्ञा प्रवर्तते, न त्वेतत्सूत्रनिष्पत्त्यवस्थायाम् । ततश्चाऽक्षसूपदेशेत्संज्ञाप्रत्याहारसवर्णत्वेषु निष्पन्नेष्वणुदित्सवर्णस्येत्येतदस्य च्वावित्यादौ प्रवर्तते न त्वक्षसूपदेशादिषु, नापि स्वात्मनि । ततश्चाऽत्र सूत्रेऽज्ञानिष्पत्त्याऽणुदिदित्यस्याप्रवर्तनादिकारेण शकारस्याऽग्रहणात्सवर्णत्वं शकारयोः सिद्धम् । एवमीकारोऽप्यत्रेकारेण न गृह्यत इतीकारशकारयोः सवर्णत्वमस्तीति 'कुमारी शेते'इत्यत्र सवर्णदीर्घत्वं प्राप्तमचीत्यनुवृत्त्या निवार्यते ।

( उद्द्योतः ) **वाक्यापरिसमाप्तेर्वेति** । अन्यथा नाज्झलावित्यस्य निषेधस्य स्वस्मिन्नपि प्रवृत्तौ तव पूर्वपक्षस्यैवानुत्थानं स्यादिति भावः । अनिष्पादमुपपादयति–– **अस्मिन्हीति** । **सूत्रे निष्पन्ने इति** । जनितवाक्यार्थबोधे इत्यर्थः । **प्रवर्तते इति** । एते परस्परं सवर्णसंज्ञा इति प्रमारूपं निश्चयज्ञानं निष्पद्यत इत्यर्थः । तदेव च लक्ष्यसंस्कारकमिति भावः । **निष्पत्त्यवस्थायाम्**–वाक्यार्थबोधावस्थायाम् । **सवर्णत्वेषु**–निष्पन्नेषु । तत्र **सवर्णत्वनिष्पत्तिः**––इष्टविषये सवर्णपदवाच्यत्वग्रहः । **नापि स्वात्मनीति** । अनिष्पत्तेरितिभावः । **अज्ञानिष्पत्त्या**–अङ्गस्येष्टविषयसवर्णपदवाच्यत्वज्ञानस्याऽनिष्पत्त्या । भाष्ये **तावत्**-प्रथमम् । **उपदेशोत्तरकालेति** । ज्ञातस्य संज्ञाविधानादिति भावः । **प्रत्याहारोत्तरकाला सवर्णसंज्ञे**-त्यादेरिष्टविषये सवर्णसंज्ञासंज्ञित्वग्रहणम्, तदुत्तरकालमणुदिदित्येतदकारादिभिः स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयति

१ एवञ्च प्रयत्नभेदान्न दोष इत्याशयः ।

❀ राजलक्ष्मीः ❀

❀ शब्दकौस्तुभः ❀

ऋलृकारयोरनण्त्वात् । ग्रहणकसूत्रातिरिक्ते पूर्व एवाऽणित्युक्तत्वात् । अस्तु वा परोऽण्, तथाप्यजपेक्षया व्यक्तिगौरवमेव स्यादित्यज्ग्रहणमपनीयाऽण्ग्रहणं क्रियतामिति शङ्काया गर्भस्रावेणैव गतत्वात् । शलंशे तु व्यक्तिलाघवे सत्यपि वर्णोच्चारणे विशेषो नास्तीत्येवोत्तरम् । वस्तुतस्तु 'नाचशला' वित्येव सूत्रयितुमुचितम् । स्यादेतत्–शरां शभिरपि सावर्ण्यं निषिद्ध्येत । ते हीकारादिभिर्गृहीतत्वादच्संज्ञकाः हल्सूपदेशाद्धलश्च । न चाऽस्मादेव निषेधादिकारादयो न सवर्णा इति वाच्यम् । एतद्वाक्यार्थबोधात्प्राक् पदार्थोपस्थितेरावश्य

इत्यर्थः। **अपरिसमाप्तिश्च** –सवर्णनिर्णयं विना तद्ग्रहणबोधनाऽसामर्थ्यमित्यर्थः। तज्ज्ञन्ये शक्तिग्रहे बाधकसंभावनोहिताऽप्रामाण्यसंभावनासत्त्वादिति तात्पर्यम्। यत्तु नाज्झलावित्यतः प्राक्तुल्यास्येत्यस्य बोधाऽभावेन सवर्णपदार्थज्ञानाऽभावादणुदिदित्यस्य वाक्यार्थाऽबोध इत्यर्थ इति, तन्न, अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया तुल्यास्येत्यतः प्राङ् निषेधवाक्यार्थाऽभावो, न तु विपरीतमित्यदोषादिति दिक्। **सिद्धमिति।** अत्रत्याऽच्पदार्थोपस्थितिकाले वाक्यार्थबोधरूपसावर्ण्याभावज्ञानाऽभावादिकारशकारयोः सवर्णत्वज्ञानेऽ**प्यणुदि**त्सूत्रजस्येष्टविषये वाक्यार्थबोधरूपशक्तिग्रहणस्याऽभावान्नेकारेणाऽत्र शकारग्रहणमिति भावः। ननु वाक्याऽपरिसमाप्तिन्यायस्याऽस्मदादीन्प्रति प्रवृत्तत्वेऽपि पाणिनेस्तत्तच्छास्त्रप्रणयनाऽन्यथानुपपत्त्या तत्तद्विषयज्ञानस्य प्रागपि सत्त्वावश्यकत्वेन तज्ज्ञानस्यैतच्छास्त्राऽसाध्यत्वेन च **नाज्झला**वित्यादौ सवर्णाभिप्रायेण प्रयोगः स्यात्। अस्मदादीनां बोधस्तु तत्तात्पर्यज्ञव्याख्यातृपरंपरया लक्षणया भविष्यतीति शकारयोः प्रतिषेधः प्राप्नोति। एवमकारयोरपीति चेन्न। ज्ञानसत्त्वेऽपि तदभिप्रायेण प्रयोगे तात्पर्यग्राहकाऽभावात्। करिष्यमाणसंज्ञाद्यभिप्रायेण पाणिनिव्यवहाराऽभावस्यैव प्रतिपादनाच्च। अत एव **हलन्त्य**सूत्रे इतरेतराश्रयमाशङ्क्य एकशेषेण समाहितं भाष्ये। अन्यथा पाणिनिना हल्पदार्थस्य ज्ञातत्वेन तस्याऽन्योन्याश्रयाऽभावात्तेन तदभिप्रायेण प्रयोगे बोद्धृबोधस्य लक्षणयैवोपपत्तौ तत्पर्यन्तानुधावनमनर्थकं स्यात्। मम तु पाणिनेस्तथा व्यवहाराऽभावान्न दोषः॥

उक्तार्थे ज्ञापकमप्युन्यस्यति—**एवमीकारोपीति।** अत्र पक्षे दीर्घप्लुताऽकाराभ्यां हकारे सावर्ण्यवारणं तु प्रश्लेषाद्बोध्यम्। तत्र तात्पर्यग्राहका **वेलास्वि**त्यादिनिर्देशाः, प्रागुक्तं भाष्यं चेति बोध्यम्॥

[ आक्षेपभाष्यम् ]

**यथैव तर्हीकारः शकारं न गृह्णात्येवमोकारमपि न गृह्णीयात्॥ तत्र को दोषः?॥ कुमारी–ईहते कुमारीहते। 'अकः सवर्णे' [ इति ] दीर्घत्वं न प्राप्नोति॥**

(**प्रदीपः**) तत्र क्व ग्रहणकशास्त्रं प्रवर्तते क्व नेति विषयविभागदर्शनाय चोद्यं करोति—**यथैव तर्हीति।** इकारस्य (हि) अत्राऽग्राहकत्वं दृष्टमित्यकः सवर्णे दीर्घ इत्यत्रापि प्राप्तमिति प्रश्नः।

(**उद्द्योतः**) **प्रदर्शनाय**–बोधनाय॥

[ परिहारभाष्यम् ]

**नैष दोषः। यदेतदकः सवर्णे दीर्घइत्यत्र प्रत्याहारग्रहणं, तत्रेकार ईकारं गृह्णाति, शकारं न गृह्णाति॥**

(**उद्द्योतः**) भाष्ये **यदेतदिति।** तद्बोधवेलायां वाक्याऽपरिसमाप्तेरिति भावः॥

[ पूर्ववार्तिकस्य व्याख्यान्तरभाष्यम् ]

**अपर आह–॥***॥ "अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात्॥*॥ **अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति॥ किं कारणम्?॥ 'अज्झल्त्वात्'। अज्चैव हि शकारो हल्च॥ कथं तावदच्त्वम्?। इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम्, हल्षु चोपदेशाद्धल्त्वम्॥**

**तत्र को दोषः?** ॥*॥ तत्र सवर्णलोपे दोषः ॥*॥ **तत्र सवर्णलोपे दोषो भवति। 'परश्शतानि कार्याणि'। 'झरो झरि सवर्णे' इति लोपो न प्राप्नोति** ॥*॥ सिद्धमनच्त्वात् ॥*॥ **सिद्धमेतत्॥ कथम्? 'अनच्त्वात्'॥ कथमनच्त्वम्?** ॥*॥ वाक्यापरिसमाप्तेर्वा ॥*॥ **उक्ता वाक्याऽपरिसमाप्तिः"॥**

❀ **शब्दकौस्तुभः** ❀

कतया तस्यामवस्थायामिकारादिभिः शरामुपस्थापनस्य दुर्वारत्वात्। ततश्च 'परश्शताः' 'रामष्षष्ठः' 'यशस्सार'मित्यादौ 'झरो झरी'त्यस्य प्रवृत्तिर्न स्यात्। ततश्चैकैकत्र शर्द्वयं श्रूयेत। इष्यते तु द्वयम्। तथा च पूर्वपक्षवार्त्तिकम्–**अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वादिति।** अत्र शकारग्रहणं शरामुपलक्षणम्। किञ्चाऽवर्णस्याष्टादशधा भिन्नस्य परस्परं सावर्ण्यं न स्यात्। ततश्च 'दण्डाग्र'–मित्यादौ दीर्घो न स्यात्। तथाहि-इकारेण ग्रहणादकारो हल्, अक्षु पाठाच्चाऽच्। न चास्मिन्नेव सूत्रे एतस्य प्रवृत्तिः, येन ग्रहणकशास्त्रमसावर्ण्यान्न प्रवर्त्तेतेति। अत्र सिद्धान्तं वार्त्तिककार एवाह-**सिद्धमनच्त्वाद्वाक्यापरिसमाप्तेर्वेति।** तत्र सूत्रप्रत्याख्यानेनोत्तरं प्रथमवार्त्तिकेऽभिप्रेतम्। तथाहि–शिक्षावाक्ये विवृतमूष्मणामिति योगो विभज्यते। तत्र चेषदित्यनुवर्त्तते। स्वराणाञ्चेति। 'विवृत'मित्यनुवर्त्तते। 'ईष'दिति निवृत्तम्; तथा च प्रयत्नभेदादूष्मस्वरयोः सावर्ण्याऽप्राप्तौ किं सूत्रेण?। तथा च शरामनच्त्वादेव सिद्धमित्यर्थः। उपलक्षणञ्चेदमकारस्याऽहल्त्वादित्यपि बोध्यम्।

( प्रदीपः ) अनच्त्वमेव वाक्याऽपरिसमाप्त्या साध्यते न तु प्रयत्नभेदेनेत्याह—**अपर आहेति** ॥

[ आक्षेपभाष्यम् ]

**अस्मिन्पक्षे–'वे'त्येतदसमर्थितं भवति ॥**

( प्रदीपः ) **अस्मिन्पक्ष इति** । एकत्र हि साध्ये हेतुविकल्पो भवति, इह तु साध्यभेदः । सिद्धेरनच्त्वं हेतुः, अनच्त्वस्य वाक्याऽपरिसमाप्तिः ॥

( उद्योतः ) **एकत्रेति** । 'तुल्यार्थानां विकल्प'इति न्यायादित्यर्थः ॥

[ समाधानभाष्यम् ]

**एतच्च समर्थितम् ॥ कथम् ? ॥ अस्तु वा सकारस्य शकारेण सवर्णसंज्ञा, मा वा भूत् ॥**

( प्रदीपः ) **एतच्चेति** । 'अस्तु वा ग्रहणसिकारेण शकारस्ये'ति वाक्यशेषाध्याहारात् प्रतिज्ञाविकल्पार्थो वाशब्द इत्यर्थः ।

( उद्योतः ) **मा वा भूदित्येतत्सूचितप्रतिज्ञाया आशयमाह–अस्तु वेति** ।

[ आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तम्"–'परश्शतानि कार्याणि'। 'झरो झरिसवर्णे'इति लोपो न प्राप्नोती"ति ? ॥**

[ इष्टापत्तिभाष्यम् ]

**मा भूल्लोपः ॥**

[ अनिष्टप्रदर्शनभाष्यम् ]

**ननु च भेदो भवति—सति लोपे द्विशकारकम्, असति लोपे त्रिशकारकम् ॥**

( प्रदीपः ) **ननुचेति** । श्रुतिकृतं भेदमुपगम्यो यते ॥

( उद्योतः ) ननु 'व्यञ्जनपरस्यैकस्याऽनेकस्य वा नोच्चारणे विशेषः' इति न्यायात् कथं भेद इत्यत आह—**श्रुतिकृतमिति** ॥

[ परिहारभाष्यम् ]

**नास्ति भेदः,–असत्यपि लोपे द्विशकार-**

---

❀ **शब्दकौस्तुभः** ❀

सूत्रारम्भमभ्युपेत्येदम् । वस्तुतस्तूक्तरीत्या सूत्रमेव नारम्भणीयमित्यर्थः । ईषदित्यस्याननुवृत्तिं समानप्रयत्नताञ्च स्वीकृत्य सूत्रारम्भपक्षेप्याह–**वाक्यापरिसमाप्तेर्वेति** । अयमाशयः–इह पूर्वं वर्णानामुपदेशः । तत इत्संज्ञा । तत आदिरन्त्येन सहेतेति प्रत्याहारसिद्धिः । ततो नाज्झलावित्येतद्वाक्यार्थबोधः । ततोऽपवादविषये परिहारेण सवर्णसंज्ञानिश्चये सति ग्रहणकशास्त्रप्रवृत्तिः, न त्वेतत्सूत्रनिष्पत्तिसमये । अन्यथैतत्सूत्रेणैवेकारशकारादीनां सावर्ण्यनिषेधादिकारेण शकाराऽग्रहणे सत्यज्झल्त्वादिति हेतोरसिद्धया त्वदीयः पूर्वपक्षोऽसम्भवदुक्तिक एव स्यात् । अथ पदार्थज्ञानस्य वाक्यार्थबोधहेतुतयैतद्वाक्यस्थपदार्थबोधकाले एतद्वाक्यार्थग्रहाऽभावादिह सूत्रे इकारेण शकारग्रहः स्यादेव । इतः पूर्वं सावर्ण्यनिषेधाऽग्रहादिति ब्रूषे तर्हीतः पूर्वं ग्रहणकशास्त्रमेव न निष्पन्नमिति कथं न पर्यालोचयेः। नन्वेवं तुल्यास्यप्रयत्नं नाज्झलावित्यादावकःसवर्णे दीर्घ इति दीर्घोपि न प्रवर्त्तेतेति चेन्न । सवर्णसंज्ञाद्युत्तरकाले प्रवर्त्तमानस्य दीर्घशास्त्रस्य दण्डाढकादाविवेहाप्यप्रतिबद्धप्रवृत्तिकत्वात् । उद्देश्यतावच्छेदकरूपाक्रान्तत्वाऽविशेषात् । न च सवर्णदीर्घविधानात्प्रागेतत्सूत्रार्थबोधानुपपत्तिरिति वाच्यम्, पदार्थोपस्थितिप्रभृतिसामग्रीसम्पत्तौ सत्यां साधुत्वबोधकवाक्यार्थज्ञानविलम्बेन शाब्दबोधे विलम्बाऽदर्शनात् । अन्यथा व्याकरणशास्त्रपरिशीलनविकलानां क्वापि शाब्दबोधो न स्यात् । तथा वैयाकरणानामपि व्याकरणसूत्रघटकशब्देषु व्याकरणादेव साधुत्वबोधे तदुत्तरकाले च वाक्यार्थावगतावात्माश्रयान्योन्याश्रयचक्रकाणां दुर्वारत्वादिति दिक् । साधुत्वज्ञानं तु न शब्दबोधे हेतुः । अस्तु वाऽभियुक्तवाक्यत्वेन साधुत्वानुमितिः, ततः शाब्दबोधे जाते लक्ष्यान्तरेष्विव लक्षणवाक्यान्तर्गतेष्वपि लक्षणप्रवृत्तिरिति दिक् । वस्तुतस्तु शरां परस्परं सावर्ण्यनिषेधे सत्यपि न क्षतिः । परःशतादिषु हि रूपद्वयं सिद्धान्तेपीष्यते । शतात्पराणीति विग्रहे 'कर्तृकरणे कृता बहुल'मिति बहुलवचनाद्वा सुप्सुपेति वा समासे कृते पारस्करादित्वात्सुटि सकारस्य श्चुत्वम् । ततो'ऽनचिचे'ति द्विर्वचनम् । ननु 'शरोची'त्यनचीति वा द्वित्वनिषेधोस्त्विति चेन्न । तत्र 'नाज्झला'विति निषेधादिकारेण शकाराऽग्रहणात् । ततो झरोझरीति लोपविकल्पादिशकारं त्रिशकारं वा रूपमिति सावर्ण्यनिषेधेपि सिद्धयत्येवेदं रूपद्वयम् । 'अनचि चे'ति द्वित्वस्यापि वैकल्पिकत्वात् । तत्र द्वित्वस्य वैकल्पिकत्वं 'यरोनुनासिकेऽनुनासिको वे'त्यतो वेत्यनुवर्तनात्सर्वत्र शाकल्यस्येति पाक्षिकनिषेधाद्वा । लोपस्य वैकल्पिकत्वे तु 'झयो होऽन्यतरस्या'मित्यतोन्यतरस्यांग्रहणानुवृत्तेरित्यवधेयम् । तस्मात्सावर्ण्ये सत्यसति वा 'परश्शता'इति द्विशकारकत्रिशकारकरूपयोरविशेषः । 'परश्शताद्यास्ते ये येषां परा सख्या शतादिका'दित्यमरः । एवं रामष्षष्ठो यशस्सारमित्यादावपि । अत एव भाष्ये,–अपर आहेत्युपक्रम्य वार्त्तिकद्वयमप्येकहेतुतया व्याख्याय, अस्तु वा ग्रहणमिकारादिभिः शकारादीनामिति वाक्यशेषाध्याहारेण प्रतिज्ञाविकल्पार्थो वाशब्द इति व्याख्यातम् । तत्र **अपर आहे**त्यपरितोषोद्भावनम् । तद्बीजन्तूक्तरीत्या शर्षु सावर्ण्यनिषेधाऽनिषेधयोः फलाऽविशेषेपि प्रागुक्तरीत्या दण्डा-

कमेव ॥ कथम् ? ॥ विभाषा द्विर्वचनम् ॥

( उद्द्योतः ) भाष्ये 'असति लोपे त्रिशकारक'-मिति वदन्प्रष्टव्यः-किं द्विशकारं न स्यादिति तवाशयः, उत त्रिशकारं स्यादिति ?। आद्ये आह--असत्यपीति। द्विशकारं भवत्येवेत्यर्थः ॥

[ दोषस्थापनभाष्यम् ]

**एवमपि भेदः। असति लोपे-कदाचिद्द्विशकारकं, कदाचित्त्रिशकारकम् । सति लोपे--द्विशकारकमेव ॥**

( उद्द्योतः ) द्वितीये आह-- **एवमपीति**। विभाषा द्विर्वचनेऽपीत्यर्थः ॥

[ आक्षेपभाष्यम् ]

**स एष कथं भेदो न ? ॥**

( प्रदीपः ) **स एष कथं भेदो नेति।** अत्रैव च्छेदः[1] । भेद एवेत्यर्थः ॥

( उद्द्योतः ) 'एवमपी'त्यनेन भेद एवेत्युक्त्वा, तदुपपादनावसरे 'यदि लोपो न स्या'दिति वाच्यं, किमुच्यते— **नित्यो लोपः स्या**दिति ?। अतश्छित्त्वा भिन्नकर्तृकत्वेन योजयति--**स एष इति** । त्रिशकारमिष्टमेवेति तात्पर्यम् ॥

[ आक्षेपनिरासभाष्यम् ]

**स्याद्भेदो[2] यदि नित्यो लोपः स्यात् । विभाषा तु स लोपः ॥**

( प्रदीपः ) अपरे[3] आह—**'स्याद्भेदो यदि नित्योलोपः स्याद्विभाषा तु स लोप'** इति । ततो नास्ति भेद इत्यर्थः ॥

[ समाधानभाष्यम् ]

**यथाऽभेदस्तथास्तु॥ [नाज्झलौ]॥ १०॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमाध्यायस्य प्रथमपादे चतुर्थमाह्निकम् ॥४॥**

---

( प्रदीपः ) द्विर्वचनमपि विभाषा, 'यरोनुनासिकेऽनुनासिको वे'त्यतो 'वे'त्यनुवर्तनात् । लोपोऽपि विभाषा, 'झयो होन्यतरस्या'मित्यतोऽन्यतरस्यामित्यनुवर्तनादित्यर्थः । **( नाज्झलौ )** ॥१०॥

इति श्रीजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमपादे चतुर्थमाह्निकम् ॥४॥

---

( उद्द्योतः ) **झयो ह इति** । इदं वृत्तिरीत्या । भाष्यरीत्या तु '**वाऽवसाने**'इत्यत इति बोध्यम् ।**[नाज्झलौ]**॥

इति श्रीशिवभट्टसुतसतीगर्भज**नागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे** पादे चतुर्थमाह्निकम् ॥ ४ ॥

---

(राजलक्ष्मीः) १ छेदः-पाठच्छेदः। एतावत्पर्यन्तमेवाक्षेपग्रन्थ इत्यर्थः। २स्यात्-भेदः स्यात्। ३ 'इतरआहे'ति पाठान्तरम्।

* इतिश्री**गुरुप्रसादशास्त्रिकृता**

त्रिवलि**महाभाष्यटीकाऽभिनवराजलक्ष्मीः** *

---

❀ **शब्दकौस्तुभः** ❀

ग्रमित्यादि न सिद्ध्येत् । तदर्थं च सूत्रप्रत्याख्यानस्य वाक्यापरिसमाप्तिन्यायस्य चाश्रयणे आवश्यके शरां शभिः सावर्ण्याऽभावाभ्युपगमो निर्मूल एवेति । स्यादेतत्- अगृहीतसवर्णानामेव नाज्झलाविति निषेध इति तावत्स्थितम्। तथा चेकारादीनां शकारादिभिः सावर्ण्यानिषेधात्कुमारी शेतइत्यादौ सवर्णदीर्घः स्यादित्याशङ्क्याचीत्यनुवृत्त्या समाहितम् । एवं स्थिते मालास्वित्यादौ षत्वं स्यात् । हकारेणाऽकारग्रहणे सति गौरीष्वित्यादिवदिणः परत्वानपायात् । किञ्च-'विश्वपाभि'रित्यत्र 'होढ' इति ढत्वं स्यात् । 'वागाशी'रित्यत्र 'झयो होन्यतरस्या'मित्याकारस्य घकारः स्यात् । 'गासीध्व'मित्यत्र इणः षीध्व'मिति मूर्द्धन्यादेशः स्यात् । 'दासीष्टे'त्यादौ 'दादेर्धातोर्घ' इतिघत्वं स्यात् । 'राम आयाता'त्यादौ 'हशि चे'त्युत्वं स्यात् । 'देवा आयान्ता'त्यादौ 'हलि सर्वेषा'मिति नित्यो यलोपः स्यात । 'चाखायिते'त्यादौ 'यस्य हल' इति यलोपः स्यात् । 'श्येनायिते'त्यादौ 'क्यस्य विभाषे'ति लोपः स्यात् । 'निचाय्ये'त्यादौ 'हलो यमा'मिति यलोपश्च स्यादिति बहूपप्लवप्रसङ्गः। अत्रोच्यते-आकारो न हकारस्य सवर्णः, प्लुतोऽप्याकार इति अइउण्सूत्रोदाहृतशिक्षारीत्या भिन्नप्रयत्नत्वात्। **सवर्णग्रहणमपरिभाष्यमाकृतिग्रहणा**दिति वार्त्तिकमते तु हकाराकारयोर्विवृतत्वेनाक्रान्तत्वादेव नातिप्रसङ्गः । यद्वाऽऽकारसहितोऽच् आच्, स च हल् च आज्झलाविति सूत्रे आकारप्रश्लेषो व्याख्येयः । तेनाकारस्याचां च हल्भिः सह सावर्ण्यं निषिध्यते । आकारप्रश्लेषे लिङ्गन्तु-'कालसमयवेलासु तुमु'नित्यादिनिर्देशाः । अत्र पक्षे 'आश्च आश्चे'ति द्वन्द्वेन सवर्णदीर्घेण च नाज्झलाविति सूत्रे दीर्घात्परः प्लुतोपि निर्दिष्ट इति व्याख्येयम् । तेन 'यिया३सो'इत्यादौ 'गुरोरनृत'इति प्लुतादाकारात्परस्य सनः सस्य षत्वं नेत्यवधेयम् । भाष्यमते तूष्मणामीषद्विवृतताभ्युपगमेन सावर्ण्यप्रसक्तिरेव नास्तीति सूत्रप्रत्याख्यानात्सकलमनाविलम् ॥ **[नाज्झलौ]**

इति श्री**भट्टोजिदीक्षितविरचिते** श्रीशब्द**कौस्तुभे प्रथम**स्याध्यायस्य प्रथमे पादे **चतुर्थ**माह्निकम्॥४॥

---

॥ श्रीः ॥

# व्याकरण-महाभाष्यम्

## तद्व्याख्यानभूतः कैयटविरचितः प्रदीपः

### तद्व्याख्यानभूतो नागेशभट्टविरचित उद्द्योतः

### भाष्यादित्रिवलिव्याख्यानभूता श्रीगुरुप्रसादशास्त्रिविरचिताऽभिनवराजलक्ष्मीश्च ।

### * तत्र प्रथमाध्यायस्य प्रथमे पादे पञ्चममाह्निकम् *

*ईदूदेद्द्विवचनं प्रगृह्यम् ॥१।१।११॥*

[ आक्षेपभाष्यम् ]

**किमर्थमीदादीनां तपराणां प्रगृह्यसंज्ञोच्यते?॥**

(प्रदीपः) **ईदूदेद्द्विवचनं प्रगृह्यम्। किमर्थमिति ।** ईदूतोरनण्त्वाद्भिन्नकालनिवृत्त्यर्थं नोपपद्यते तपरत्वम्, उदात्तादीनामभेदकत्वाद्गुणान्तरयुक्तानां सवर्णानां ग्रहणार्थमपि नोपपद्यते । जातिपक्षेऽपि दीर्घोच्चारणात्प्रयत्नाधिक्याद्ध्रस्वानां न भविष्यति, प्लुतानां चेष्यत एवेति,-इष्टव्याघातं प्रत्युत तपरत्वं करोतीति प्रश्नः ॥

( उद्द्योतः ) **ईदूदेत्** । व्यक्तिपक्षे ईदूतोस्तपरयोरुपादानं भिन्नकालनिवृत्तये वा, गुणान्तरयुक्तग्रहणाय वा स्यात् । तत्र नाद्य इत्याह —**ईदूतोरिति** । एवं **चाणुदि**दित्यस्य प्राप्त्यभावान्न तद्बाधकतपरसूत्रप्रवृत्तये तपरत्वमित्यर्थः । **तपरसूत्रे**ऽण्ग्रहणाननुवृत्त्या तस्य प्राप्तावपि फलाऽभावान्न द्वितीय इत्याह—**उदात्तादीनामिति** । ननु जातिपक्षे भिन्नकालनिवृत्त्यर्थं स्यात्, तत्पक्षे हि **तपरसूत्रं** नियमार्थमेवेत्यत आह—**जातीति । प्लुतानां चेष्यत एवेति** । एतच्च (अग्रे) भाष्ये एव स्फुटम् ॥ **इष्टव्याघातमिति।** जातिपक्षे ईदूदेशेऽपि तपरत्वेनैव प्लुतव्यावृत्तिरित्यभिमानः ॥

[ समाधानभाष्यम् ]

**'तपरस्तत्कालस्ये'ति तत्कालानां सव-**

---

*श्रीगुरुप्रसादशास्त्रिकृता अभिनवराजलक्ष्मीः*

१ **अनण्त्वात्**—दीर्घेकारोकारयोरक्षरसमाम्नायेऽपाठादण्प्रत्याहारबहिर्भूतत्वात् । **भिन्नेति** । ह्रस्वप्लुतनिवृत्त्यर्थमित्यर्थः । **नोपपद्यते इति** । भिन्नकालग्रहणे प्राप्ते सति तन्निरासार्थं हि तपरसूत्रप्रवृत्तये तपरत्वं सफलं स्यात्, तदेव तु न, अनण्त्वेनाऽणुदित्सूत्रप्राप्तेरभावादित्याशयः। २ **सवर्णानां**—दीर्घोदात्तदीर्घानुदात्तदीर्घस्वरितानामीकारादीनाम् । **नोपपद्यत इति** । गुणानामभेदकतया गुणान्तरयुक्तसवर्णग्रहणस्य स्वत एव सिद्धतया तदर्थं तपरोच्चारणस्य निष्फलत्वान्नोपपद्यत इत्यर्थः। ३ **प्लुतानाञ्च**—प्लुतेकारादीनान्तु । एवञ्च जातिपक्षेऽपि भिन्नकालप्लुतव्यावृत्त्यर्थं न तपरत्वमिति तन्निष्फलमेवेति स्थितम्। ४ तपरकरणेऽनिष्टापत्तिरपीत्याह—**इष्टव्याघातमिति । प्रत्युत**—विपरीतम् । **इति प्रश्नः**—भाष्ये—**किमर्थ**मिति प्रश्नः । **तपरसूत्रे इति** । तपरसूत्रस्य विध्यर्थतया वार्त्तिककृदुक्तया तत्राऽण्ग्रहणाननुवृत्तेरित्याशयः। ५ **तस्य**=तपरसूत्रस्य । **फलाऽभावात्**—उदात्तादीनामभेदकत्वात्स्वत एव तद्ग्रहणे सिद्धे तपरसूत्रप्रवृत्तये तपर करणस्य निष्फलत्वात्तपरकरणं नोचितमित्यर्थः । **तत्पक्षे**—जातिपक्षे। जातिपक्षेहि भिन्नकालानां ग्रहणस्य प्रसक्ततया तन्निरासार्थं तपरसूत्रप्रवृत्तये तपरकरणं सफलमित्याशयः। **नियमार्थमेवेति**। नियमार्थमेव न विध्यर्थमित्यर्थः।

६ ननु तपरसूत्रस्य नियमार्थत्वेनाण्येव तत्प्रवृत्त्या एकारस्याक्षरसमाम्नायिकत्वेनाऽण्त्वात्तत्प्रवृत्तौ प्लुतव्यावृत्तिप्रसक्तिरिति दोषस्य सत्त्वेऽपि ईदूतोरनण्त्वात्तत्र तपरसत्त्वेपि तपरसूत्राऽप्रवृत्त्या कथमन्तत्रेष्टव्याघातोक्तिः सङ्गच्छतेऽत आह—**जातिपक्षे इति। तपरत्वेन**—तपरसूत्रप्रवृत्त्या । अभिमानपदसूचिताऽरुचिस्तु जातिपक्षे तपरसूत्रस्य नियमार्थतयाऽतत्पक्षे अनणि तपरसूत्राऽप्रवृत्तिरित्येवेत्यवधेयम् ।

र्णानां ग्रहणं यथा स्यात् ॥ केषाम् ? ॥ उदात्तानुदात्तस्वरितानाम् ॥

( प्रदीपः ) **तपर इति** । व्यक्तिपक्षो भेदकाश्च गुणा इति भावः । **केषामिति** । प्लुतानामग्रहणप्रसङ्गात्प्रश्नः । **उदात्तेति** । क्वचिदनुनासिकग्रहणमप्यस्ति तद्गुणप्रसङ्गेनोच्चारितम् , न हि प्रगृह्योऽनुनासिकः सम्भवति, 'अणोऽप्रगृह्यस्यानुनासिक' निषेधात् ॥

(उद्द्योतः) **भेदकाश्च गुणा इति** । 'भेदकत्वात्स्वरस्ये'ति वार्तिकोक्तेरण्विषये भेदकपक्षोऽप्यस्तीत्यभिमानः । ईदं प्रयोजनमीदूतोरेव, नत्वेदंशे, अणुदित्सूत्रेणैव सिद्धेः ॥

[ तटस्थाक्षेपतत्समाधानभाष्यम् ]

**अस्ति प्रयोजनमेतत् ? ॥**

**'किं तर्ही'ति ॥**

[ पूर्वपक्षिण आक्षेपवार्तिकम् ]

*[ ॥*॥ प्लुतानां तु प्रगृह्यत्वाऽप्रसङ्गोऽतत्कालत्वात् ॥*॥ ]*

**प्लुतानां तु प्रगृह्यसंज्ञा न प्राप्नोति ॥ किं कारणम् ? ॥ 'अतत्कालत्वात्' । न हि प्लुतास्तत्कालाः ॥**

( प्रदीपः ) **प्लुतानां त्विति** । व्यक्तिपक्षाश्रयणादयं दोषो, न तु तपरत्वात् ।

( उद्द्योतः ) ननु तत्कालसवर्णसंग्रहार्थं तपरत्वमुक्तं नातत्कालव्यावृत्त्यर्थं, तत्कुतः प्लुतानां न प्राप्नोतीत्यत आह-**व्यक्तिपक्षेति** । ईदूदंशे इदम् , एदंशे तु तपरत्वादेव दोष इति बोध्यम् ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**असिद्धः प्लुतः । तस्याऽसिद्धत्वात्तत्काला एव भवन्ति ॥**

( प्रदीपः ) **असिद्ध इति** । शास्त्राऽसिद्धत्वाश्रयणाच्च प्लुतबुद्धावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्रविषया बुद्धिः प्रवर्तते । तथा हि वक्ष्यति-'असिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं चे'ति ॥

( उद्द्योतः ) ननु इतिशब्दादिसमभिव्याहारे कार्यार्थं प्रगृह्यसंज्ञाप्रवृत्तेरन्तरङ्गत्वात्पूर्वं प्लुते तेन स्थानिनो निवृत्तत्वेन प्लुतासिद्धत्वेऽपि कथं स्थान्याश्रया प्रगृह्यसंज्ञेत्यत आह-**शास्त्रेति** । प्रवृत्तेऽपि शास्त्रेऽसिद्धवत्त्वेन तत्प्रवृत्तिबुद्ध्यभावेन प्लुतबुद्ध्यभावाद्विमात्रविषयाया बुद्धेस्त्रिमात्रे सत्त्वाद्विमात्रबुद्ध्या त्रिमात्रस्य संज्ञेत्यर्थः । एतेन शास्त्रासिद्धत्वाच्छास्त्राप्रवृत्तौ स्थानिनः प्रगृह्यत्वेऽपि पुनः प्लुते तस्य तन्न स्यात् । न च स्थानिवत्त्वम्, **अनल्विधाविति** निषेधात् । प्लुतस्थान्यल्वृत्तिधर्मत्वात् । एवं चागच्छतमग्नी३ इत्यादावणोऽप्रगृह्यस्येत्यनुनासिकः स्यादित्यपास्तम् ॥ ननु प्राधान्यात्कार्याऽसिद्धत्वमेव स्यादत आह-**तथाहीति**॥ उत्सर्गः-स्थानी ॥

[ पूर्वपक्षिण आक्षेपस्थापनभाष्यम् ]

**सिद्धः प्लुतः स्वरसन्धिषु ॥**

**कथं ज्ञायते-'सिद्धः प्लुतः स्वरसन्धिषु' इति ? ॥**

**यदयं 'प्लुतः प्रकृत्ये'ति प्लुतस्य प्रकृतिभावं शास्ति ॥ कथं कृत्वा ज्ञापकम् ? ॥ सतो हि कार्यिणः कार्येण भवितव्यम् ॥**

॥ राजलक्ष्मीः ॥

१ **व्यक्तीति** । एवञ्च व्यक्तिपक्षे गुणानां भेदकत्वेन ईदूतोस्तपरकरणं तत्कालसवर्णग्रहणार्थमावश्यकमिति समाधानाशयः । एदंशे तु तपरकरणं मुखसुखार्थमेव, अणुदित्सूत्रेणैव भिन्नकालग्रहणसिद्धेरिति तत्त्वम् । २ **प्रसङ्गादिति** । प्लुतानामग्रहणरूपं दोषं सर्वथा लक्ष्यीकृत्येत्यर्थः । नहि तपरत्वे प्लुतसङ्ग्रहसम्भव इति केषां ग्रहणार्थं तपरकरणमित्याशयः प्रश्नस्येति भावः । ३ 'अणोऽप्रगृह्यस्येत्यनुनासिकनिषेधात्' इति पाठान्तरम् । **निषेधादिति** । पूर्वं प्रगृह्यसञ्ज्ञायामनुनासिकसम्भव एव नास्ति, अणोऽप्रगृह्यस्येति तन्निषेधात्, पूर्वमनुनासिकत्वे तु ईदूदेदित्यादेःप्राप्तिरेव न, विषयाऽभावादित्याशयः । **भेदकत्वादिति** । अणुदित्सूत्रेऽण्ग्रहणाच्चाऽण्विषये भेदकत्वपक्ष इत्यपि बोध्यम् ।

४ **इदं**-तत्कालसवर्णग्रहणार्थत्वरूपम् । **सिद्धेरिति** । एकारस्याक्षरसमाम्नायिकत्वादण्त्वेनाणुदित्सूत्रप्रवृत्तेरित्याशयः । ५ **व्यक्तिपक्षेतीति** । जातिपक्षे तु नायं दोषः, दीर्घप्लुतसाधारणेत्वोत्वादिजातेरङ्गीकारात्तस्याश्च प्लुतेऽपि सत्त्वादित्याशयः । **दोषः**-प्लुताऽसंग्रहरूपो दोषः । एत्रश्च एदंशे तपरसत्त्वे तपरसूत्रप्रवृत्त्या प्लुतस्याऽसंग्रहापत्तिरित्याशयः । ६ **अन्तरङ्गत्वात्**-इत्यादिपदानपेक्षत्वेनाऽन्तरङ्गत्वात् । **स्थानिनः**-द्विमात्रस्य ईकारादेः । **पुनः**-तदनन्तरम् । **तस्य**-प्लुतस्य । **तत्**-प्रगृह्यत्वम् । प्लुतशास्त्रस्याऽसिद्धत्वेऽपि पुनः प्लुतप्रवृत्तौ प्लुतस्येदानीमसिद्धत्वाभावेन त्रिमात्रतया तस्येदूदेदित्यत्र ग्रहणाऽभावेन प्रगृह्यसञ्ज्ञा न स्यादित्याशयः । ७ तटस्थः पृच्छति-**कथमिति** । ८ पूर्वपक्षी समाधत्ते-**यदयमिति** । ९ 'प्लुतप्रगृह्या अचीति'। पा०।

(प्रदीपः) **यदयमिति** । असिद्धत्वे हि 'प्लुतः प्रकृत्ये'त्येवमाश्रयणाऽयोगात्कार्यित्वेनाश्रयणादसिद्धत्वाऽभावोऽनुमीयते । सामान्येन च स्वरसन्धिप्रकरणविषयं सिद्धत्वं ज्ञाप्यते, न तु प्रकृतिभाव एव। यथा रोरुत्व एव। 'सोत्सर्गं सापवादं च प्रकरण'मिति प्रकृतिभावेऽपि प्रगृह्यत्वहेतुके सिद्धत्वमुच्यते ॥

[ ज्ञापनप्रयोजनजिज्ञासाभाष्यम् ]

**किमेतस्य ज्ञापने प्रयोजनम् ? ॥**

( प्रदीपः ) **किमेतस्येति** । प्रकृतिभाव एवाऽऽश्रयात्सिद्धत्वमस्त्विति प्रश्नः ॥

( उद्द्योतः ) **सामान्येनेति** । तदुत्सर्गेऽपीत्यर्थः । ननु प्रकृतिभावो न स्वरसन्धिप्रकरणस्थस्तत्राह-**सोत्सर्गमिति** । तदुत्सर्गनिरूपिताऽपवादत्वस्याऽत्रापि सत्त्वेनेदमपि तत्प्रकरणस्थमेवेति भावः । 'प्रगृह्यत्वहेतुके प्रकृतिभावेऽपी'त्यन्वयः ।

[ लाघवमूलकतत्समाधानभाष्यम् ]

**'अप्लुतादप्लुत' इत्येतन्न वक्तव्यं भवति ॥**

(प्रदीपः) इतरो लाघवं दर्शयति-**अप्लुतादिति**। सिद्धे (हि) प्लुतेऽतोऽतीति तपरत्वादेवोत्वाऽप्रसङ्गः ॥

(उद्द्योतः) **प्रकृतिभाव एवेति** । प्लुतप्रकृतिभाव इत्यर्थः । भाष्ये '**एतस्ये**'त्यस्य स्वरसन्धिप्रकरणविषयत्वेन ज्ञापनस्येत्यर्थः ।

[ प्रश्नभाष्यम् ]

**किमतो,—यत्सिद्धः प्लुतः स्वरसन्धिषु, संज्ञाविधावसिद्धस्तस्याऽसिद्धत्वात्तत्काला एव भवन्ति ? ॥**

( प्रदीपः ) **किमत इति** । यथोद्देशे संज्ञापरिभाषे, प्रगृह्यसंज्ञा च स्वरसन्धिप्रकरणमध्यपतिता न भवतीति प्रश्नः ।

[ पूर्वपक्षिणः समाधानभाष्यम् ]

**संज्ञाविधौ च सिद्धः ॥ कथम् ?॥ कार्यकालं (हि) संज्ञापरिभाषं' यत्र कार्यं तत्रोपस्थितं द्रष्टव्यं 'प्रगृह्यः प्रकृत्ये'त्युपस्थितमिदं भवति—'ईदूदेद्द्विवचनं प्रगृह्य'मिति ॥**

(प्रदीपः) **कार्यकालमिति** । कार्यार्थत्वाद्गुणानां कार्यस्य प्राधान्यत् प्रधानदेशत्वस्य न्याय्यत्वादिति भावः ।

( उद्द्योतः ) **कार्यार्थत्वादिति** । तदेकवाक्यतापन्नं संज्ञासूत्रं तत्प्रकरणस्थमिति भावः ।

[ तटस्थप्रश्नभाष्यम् ]

**किं पुनः प्लुतस्य प्रगृह्यसंज्ञावचने प्रयोजनम् ? ॥**

[ पूर्वपक्षिणः समाधानभाष्यम् ]

**प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् ॥**

[ तटस्थाक्षेपभाष्यम् ]

**मा भूदेवम् । 'प्लुतः प्रकृत्ये'त्येवं भविष्यति ॥**

[ पूर्वपक्षिणः समाधानभाष्यम् ]

**नैवं शक्यम् । उपस्थिते हि दोषः स्यात्-'अप्लुतवदुपस्थिते' इति । अत्र पठिष्यति ह्याचार्यः— 'वद्वचनं प्लुतकार्यप्रतिषेधार्थम्। प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वात्' इति ।**

---

❀ राजलक्ष्मीः ❀

१ नन्वेवं प्लुतस्य प्रकृतिभावे सिद्धत्वेऽपि स्वरसन्धिषु सिद्धत्वे न मानमत आह-**सामान्येनेति** । असति बाधके प्रमाणानां सामान्ये पक्षपातस्यौचित्यादित्याशयः । एवं च भाष्ये स्वरसन्धिपदं तत्प्रकरणोपलक्षणमित्यवधेयम् । **२ यथेति**। यथा रोरुत्त्वं प्रति नासिद्धत्वमाश्रयणसामर्थ्यात्, एवं प्रकृते प्लुतस्य प्रकृतिभाव एवाऽसिद्धत्वमिति न किन्तु सामान्येन प्रकरणमात्रं प्रति नाऽसिद्धत्वमित्यर्थः । **रोरुत्व** इति च वैधर्म्येण दृष्टान्तः, यथा तत्र तथा नाऽत्रेत्याशयः । ३ **तदुत्सर्गेऽपि**–प्लुतप्रकृतिभावोत्सर्गे यणादिसन्धिकार्येऽपि। ४ **तदुत्सर्गेति** । प्लुतप्रकृतिभावोत्सर्गसन्धिरूपकार्यनिरूपितापवादत्वस्य प्रगृह्यप्रकृतिभावेऽपि सत्त्वेन प्लुतः प्रकृत्येत्येतदपि स्वरसन्धिप्रकरणस्थमित्यर्थः । ५ **किमत इति** । स्वरसन्धिषु प्लुतः सिद्धोऽतः **किम्**=न किमपि फलं, **यत्**=यतः स प्रगृह्यसञ्ज्ञाविधावसिद्ध इत्यन्वयः। **तस्याऽसिद्धत्वात्**=प्लुतस्याऽसिद्धत्वात् । ६ ननु प्रगृह्यसञ्ज्ञाऽपि कार्यकालपक्षे स्वरसन्धिप्रकरणस्थैवेत्यत आह-**यथोद्देश** इति । ७ **प्रकृत्येतीति** । 'प्लुतप्रगृह्या अचि'त्यत्र 'ईदूदेद्विवचन'मिति प्रगृह्यसञ्ज्ञासूत्रमुपतिष्ठते इत्यर्थः । **गुणानाम्**=अङ्गानाम् । ८ 'प्रधानत्वात्' । ९ 'दित्यर्थः' पा० । १० **उपस्थिते**=इतिशब्दे परतः । ११ ननु प्लुतप्रगृह्ययोरेकः स्थानीत्यप्लुवद्भावेन यणि कथं प्रगृह्याश्रयः प्रकृतिभावोऽत आह-**अत्रेति । प्लुतकार्येति** । प्लुताश्रयप्रकृतिभावेत्यर्थः । न तु त्रिमात्रत्वव्यावृत्त्यर्थमिति शेषः । **प्लुतप्रतिषेधे हि**=तत्स्थानेऽप्लुतस्य विधानेन त्रिमात्रत्वप्रतिषेधे हि । प्लुतनिवृत्ताविति यावत् । एवञ्च त्रिमात्रस्य श्रवणं न स्यादिति भावः ।

**तस्मात्प्लुतस्य प्रगृह्यसंज्ञैषितव्या, प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् ॥**

(प्रदीपः) **उपस्थिते हीति** । उपस्थितमनार्ष इतिकरणः । 'अग्नी ३ इती'त्यत्र प्लुताश्रये प्रकृतिभावे प्रतिषिद्धे प्रगृह्याश्रयः प्रकृतिभाव इष्यते । तदाह–**पठिष्यतीति** । यत्र प्रगृह्यसंज्ञा नास्ति, स प्लुताश्रयप्रकृतिभावः प्रतिषेधविषयः–'देवदत्ता ३ इति', 'देवदत्तेति' ॥

**( उद्द्योतः ) प्रतिषिद्धे इति** । अप्लुतवद्भावेन बाधिते इत्यर्थः । भाष्ये–**प्रगृह्यप्लुतप्रतिषेधेति** । प्रगृह्याश्रये प्रकृतिभावे प्लुतप्रतिषेधप्रसङ्ग इत्यर्थः । प्रगृह्याश्रस्यापि कुतो न निवृत्तिरित्यत आह–**अन्येनेति** । **'प्रगृह्यः प्रकृत्ये'**त्यनेनेत्यर्थः । नन्वीदृशेऽपि विषये प्रगृह्याश्रयप्रकृतिभावे सति प्लुताश्रयप्रकृतिभावप्रतिषेधोऽप्लुतवदिति बोधितो व्यर्थ इत्यत आह–**यत्रेति** ।

[ पूर्वपक्षिणः शङ्कासमाधानान्तरभाष्यम् ]

**यदि पुनर्दीर्घाणामतपराणां प्रगृह्यसंज्ञोच्येत, एवमप्येकार एव एकः सवर्णान्गृह्णीयादीकारोकारौ न गृह्णीयाताम् ॥ किं कारणम् ? ॥ अनण्त्वात् ॥**

**( प्रदीपः ) यदि पुनरिति** । ननु व्यक्तिपक्षाश्रयणात् प्लुतानां न सिध्यति, न पुनस्तपरत्वात् । अयमत्राशयः–आकृतिपक्ष आश्रयिष्यते, दीर्घोच्चारणाच्च प्रयत्नाधिक्याद्ध्रस्वानां न भविष्यति, प्लुतानां तु प्रवर्तिष्यते इति । **एवमपीति** । अयं भावः–आकृतिपक्षे यथा ह्रस्वानां यत्नाधिक्यान्न भवति, तथा दीर्घोच्चारणसामर्थ्याद्विशिष्टव्यक्तिस्थैवाकृतिर्गृह्यत इति प्लुतानां न स्यात् । यथा 'स्थूलं गामानये'त्युक्ते न कृशस्यानयनं भवतीत्याकृतिपक्षेऽपि विशिष्टैव- (आकृति)र्दीर्घा व्यक्तिर्गृह्यते इति । तथा चानण्त्वादीदूतौ ग्राहकौ न स्याताम् ॥

**( उद्द्योतः ) न पुनस्तपरत्वादिति** । तद्वक्ष्यति भाष्ये–'दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोती'ति । **प्लुतानां त्विति** । तपरत्वाऽभावे इत्यर्थः । तपरत्वे[4] तु तपरसूत्रस्य जातिपक्षेऽनण्यपि नियमार्थत्वान्न स्यादिति भावः । ईत्वादि[5] इत्वाद्यनतिरिक्तं मन्यते । **आकृतिरिति** । विना व्यक्त्युच्चारणं जातिनिर्देशाऽभावादवश्यं व्यक्तावुच्चारणीयायां लाघवाय ह्रस्व एव प्रयोक्तव्ये गुरुदीर्घोच्चारणेन तद्व्यक्तेरुपलक्षणत्वं विहाय विशेषणत्वस्यैवाश्रयणाद्विशिष्टव्यक्तिस्थैव जातिर्गृह्यत इति न्यूनकालव्यक्तिगताया इवाऽधिककालव्यक्तिगताया अपि न ग्रहणमिति भावः । भिन्नभिन्नै[6]व्याप्यजातिस्वीकारे तु निर्दिष्टव्याप्यजातेः प्लुतेऽभाव एवेत्यपि बोध्यम् । एत्वजातेस्तु प्लुते सत्त्वात्तेन प्लुतग्रहणं भवत्येव । ततो लघुव्यक्तेरभावाच्च । नन्वेवं भाष्ये**ऽनण्त्वादिति** हेतुरसङ्गतोऽत आह–**आकृतिपक्षेऽपीति** । ईदृशे[7] विषये तत्तदित्वादिजातिविशिष्टा व्यक्तिरेव गृह्यत इत्यर्थः । जातिप्राधान्ये फलाऽभावाद्व्यक्तिद्वारा कार्यसंबन्धाश्रयणे गौरवाच्च तस्याऽयुक्तत्वाच्च तद्विशिष्टव्यक्तिग्रहणेऽप्यण्त्वाऽभावान्न तौ ग्राहकाविति भावः ॥

[ तस्यैव शङ्कान्तरत समाधानभाष्यम् ]

**यदि पुनर्ह्रस्वानामतपराणां प्रगृह्यसंज्ञोच्यते ? ॥ नैवं शक्यम् । इहापि प्रसज्येत–अकुर्वहि अत्र, अकुर्वह्यत्रेति ॥**

**(प्रदीपः) यदि पुनरिति** । ह्रस्वसाहचर्यादेकारोऽपि 'ह्रस्व'शब्देनाभिधीयत इति 'ह्रस्वाना'मिति बहुवचनम् । तत्र ह्रस्वनिर्देशेऽण्त्वादाकृतिपक्षे वा यत्नाधिक्याऽभावाद्भिन्नकालानां ग्रहणं सिध्यतीत्यर्थः ॥

[ पूर्वपक्षिणः स्वाक्षेपोसंहारभाष्यम् ]

**तस्माद्दीर्घाणामेव तपराणां प्रगृह्यसंज्ञा वक्तव्या । दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोति ॥**

**( उद्द्योतः ]** भाष्ये–**तस्माद्दीर्घाणामेव तपराणामिति** । गुणान्तरयुक्तसङ्ग्रहायाऽसन्देहाय चेत्यर्थः ॥

❀ राजलक्ष्मीः ❀

१ **प्रतिषिद्धे**='अप्लुतवदुपस्थिते' इत्यनेन बाधिते । २ **'इष्यते'**इत्यस्य 'स च–प्लुतस्य प्रगृह्यसञ्ज्ञाया अभावे न स्या'दिति शेषः । अतः प्लुतस्य प्रगृह्यसञ्ज्ञा वक्तव्येत्याशयः । ३ **प्लुतानाम्**=प्लुतेकारादीनाम् । ४ तपरत्वाऽभावे इष्टसिद्धिं प्रदर्श्य तपरपाठे तदसिद्धिं दर्शयति–**तपरत्वे त्विति** । ५ ननु जातिपक्षेऽपि ईत्वजातेरित्वजात्यपेक्षया भिन्नत्वात्कथं प्लुतसंग्रहस्तत्रेत्यत आह-**ईत्वादीति** । दीर्घमात्रसमवेतेत्वजाति ह्रस्वसमवेतेत्वजात्यतिरिक्तां मन्यतेइत्यर्थः । ६ **भिन्नभिन्नेति** । ईत्वजातिरित्वजातिश्च परस्परं भिन्नेति भिन्नभिन्नव्याप्यजातिस्वीकारे ईत्वजातिर्न प्लुते इत्यस्मिन्पक्षे प्लुताऽसंग्रह एवेत्याशयः । **तेन**=एकारेण । ७ आकृतिपक्षाश्रयेण समाधाने बीजमाह–**ईदृशइति 'भाव'**इत्यन्तेन । ८ दीर्घफलस्योक्तत्वात्तपरत्वफलमाह–**गुणान्तरेति** ॥ अभेदकत्वेनाकृतिपक्षेण बारय सिद्धत्वादाह—**असंदेहाय चेति** ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**एवं तर्हि किं न एतेन यत्नेन यत् 'सिद्धः प्लुतः स्वरसन्धिषु' इति । असिद्धः प्लुतस्तस्याऽसिद्धत्वात्तत्काला एव भवन्तीति ॥**

[ तटस्थस्य पूर्वपक्ष्युक्तज्ञापकासङ्गतिसूचकभाष्यम् ]

**कथं यत्तज्ज्ञापकमुक्तम्—'प्लुतप्रगृह्या अची'ति ? ॥**

[ सिद्धान्तिनस्तत्सङ्गमनभाष्यम् ]

**'प्लुतभावी प्रकृत्ये'त्येवमेतद्विज्ञायते ॥**

( प्रदीपः ) प्लुतभावीति । प्लुतो भावी यस्य स प्लुतभावी स्थानी प्रकृतस्तस्यैव प्रकृतिभावः । ननु प्लुतस्याऽसिद्धत्वात्स्थान्यपि प्लुतभावित्वात्प्लुतव्यपदेशं कथं लभते ? । नैष दोषः, 'प्लुतो ह्यस्य भावी'ति बुद्धया प्रकल्पनमेतत् । नै च तत्र प्लुतस्याऽसिद्धत्वम्, अन्यथा 'प्लुतोऽसिद्ध' इत्ययमपि व्यवहारो न स्यात् ॥

( उद्द्योतः ) कर्मधारयभ्रमं व्युदस्यति—प्लुतो भावीति । यद्यप्याश्रयात्सिद्धत्वेनापि सिध्यति तथापि शास्त्रबाधापेक्षया लक्षणाश्रयणमुचितमिति भाष्याभिप्रायः । प्रकृत इति । प्लुतशब्देन बोधित इत्यर्थः । बुद्धेति । शास्त्रीये कार्येऽसिद्धत्वं, नचायं व्यवहारः शास्त्रीयं कार्यमिति भावः ॥

[ तटस्थस्याक्षेपभाष्यम् ]

**कथं यत्तत्प्रयोजनमुक्तम् ? ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**क्रियते तन्न्यास एव—'अप्लुतादप्लुते' इति ॥**

[ तटस्थाक्षेपभाष्यम् ]

**एवमपि यत्सिद्धे प्रगृह्यकार्यं तत्प्लुतस्य न प्राप्नोति—'अणोऽप्रगृह्यस्यानुनासिकः' इति ॥**

( प्रदीपः ) कार्यकालपक्षमाश्रित्याह—एवमपीति । ततश्चाग्नी ३ इत्यत्राऽप्रगृह्यस्येत्यनुनासिकप्रतिषेधे क्रियमाणे प्लुतस्य सिद्धत्वात्प्रगृह्यत्वाऽभावादनुनासिकः स्यात् ॥

( उद्द्योतः ) कार्यकालपक्षमाश्रित्येति । अयं भावः-तत्र पक्षे संज्ञाशास्त्राणां न पृथग्बोधकत्वम् । पूर्वत्रासिद्धमिति चातिदेशः कार्यार्थः । कार्यज्ञानं च वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य । किं च पूर्वत्रासिद्धमित्यस्याधिकारत्वेन पूर्वत्रेदमसिद्धमिति तदर्थः । तत्र कार्यकालपक्षे तत्तद्देशोपस्थितसंज्ञापरिभाषाणामप्यसिद्धत्वबोधनम् । एवं च प्लुतदृष्ट्याऽनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नस्याऽस्यापि तद्दृष्ट्याऽसिद्धत्वेन प्लुतशास्त्रेऽनुवृत्तपूर्वत्रासिद्धमित्यत्र पूर्वग्रहणेन 'ईदूदेत्', 'अदसोमा'दित्यादेर्ग्रहीतुमशक्यत्वमिति ॥ यथोद्देशे तु स्वातन्त्र्येण संज्ञादीनां कार्यबोधकत्वात्तत्प्रति प्लुतासिद्धत्वबोधनं शक्यमेव । एतेन कार्यकालपक्षेऽपि पाठकृतपूर्वत्वाक्षतिरित्यपास्तम् । भाष्ये-यत्सिद्धे प्रगृह्येति । प्लुते सिद्धकाण्डस्थे यत्प्रगृह्यकार्यमित्यर्थः । यत्प्रगृह्यकार्यदृष्ट्या प्लुतः सिद्धस्तदिति यावत् ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**एवं तर्हि किं न एतेन यत्नेन—'कार्यकालं संज्ञापरिभाष'मिति । यथोद्देशमेव संज्ञापरिभाषम् । अत्र चाऽसावसिद्धः । तस्याऽसिद्धत्वात्तत्काला एव भवन्ति ॥**

(प्रदीपः) यथोद्देशपक्षाश्रयेण तु परिहारः । कथं पुनरयं पक्षो यावता कार्यार्थत्वात्संज्ञापरिभाषस्य कार्यकालतैव न्याय्या ?॥ नैष दोषः । यदाऽनुद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमभिसन्धाय 'भविष्यति किंचिदनेन प्रयोजन'मिति संज्ञापरिभाषं प्रणीयते, तदा संभवत्येवाऽयं पक्षो यथाश्रुतग्राहिप्रतिपत्त्रपेक्षः । महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्त्रपेक्षस्तु कार्यकालपक्षः ॥

( उद्द्योतः ) यथोद्देशेति । नन्वत्र पक्षेऽग्नी इत्यादौ प्लुतस्याऽसिद्धत्वेन ततः प्रागेव प्लुताऽभावपक्षेऽ-

---

❀ राजलक्ष्मीः ❀

१ कथं यत्तज्ज्ञापकमिति । यज्ज्ञापकमुक्तं प्लुतप्रगृह्या अचीति तत्कथमित्यर्थः । नैष दोष इति । 'यत' इति शेषः । २ हिः क्वचिन्न । ३ न चेति । नहीत्यर्थः । तत्र-बौद्धे प्रकल्पने । ४ अयं व्यवहार इति । अयं शास्त्रीयव्यवहार इत्यर्थः । ५ एवमपीति । पूर्वपक्ष्युक्तज्ञापकप्रयोजननिराकरणेऽपीत्यर्थः । ६ तत्र- कार्यकालपक्षे । तदेवोपपादयति पूर्वत्रेति । तत्र-तथासति । अस्यापि-प्रगृह्यसंज्ञाशास्त्रस्य । ७ इदं क्वचिन्न । ८ अत्र-संज्ञायाम् । असौ-प्लुतः। तत्रेति पाठा०। तस्य-प्लुतस्य । ९ परिहारः-एवं तर्हीत्यादिः। १० अनुद्दिश्येत्यस्य व्याख्या-प्रयोजनमात्रमिति । अनभिसंधाने च हेतुमाह-भविष्यतीति । तथाच प्रतिपत्तृशिष्यभेदेन पक्षद्वयोपपत्तिरिति भावः ॥ एवं च कार्यकालस्य मुख्यत्वं यथोद्देशस्य गौणत्वम् ।

नुनासिकप्रतिबन्धेन फलवत्यां संज्ञायां ततः प्लुते तं द्विमात्रत्वेन पश्यन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाऽभावादविधित्वेन स्थानिवत्त्वाऽभावाच्चाऽप्रगृह्यत्वेनाऽनुनासिकः स्यादिति चेन्न । संज्ञायाः कार्यार्थतया पुनः प्रवृत्तौ कार्यसिद्धिरूपबीजस्य सत्त्वेन पुनस्तस्याः सुलभत्वात् । एतदेव ध्वनयता 'प्लुतस्यासिद्धत्वात्तत्काला एव भवन्ती'त्येवकारः प्रयुक्तः । प्लुतात्प्राक् संज्ञायां च तत्काला एवेति तदर्थ इत्यलम् ॥ **प्रणीयते**–बोध्यते ॥

[ अर्थनिर्णयार्थविचारभाष्यम् ]

**कथं पुनरिदं विज्ञायते—'ईदादयो यद् द्विवचनमिति, आहो स्विदीदाद्यन्तं यद्द्विवचन'मिति ? ॥**

**( प्रदीपः ) कथं पुनरिति ।** ईदादयो यदि संज्ञिनस्तद्विशेषणं (तु) द्विवचनं तदा द्विवचनान्तत्वमीदादीनां न संभवतीति द्विवचनानामेवेदादीनां संज्ञया भाव्यम् । अथ द्विवचनं संज्ञि तद्विशेषणमीदादयस्तदा तदन्तविधिरप्रधानेन प्रधानस्येतीदाद्यन्तं द्विवचनमिति पक्षः, तत्रोभयोरपि पक्षयोर्दोषदर्शनात्प्रश्नः ।

**( उद्द्योतः ) ईदादय इति ।** प्राथम्याददसोमादित्यनेनैकरूप्याच्चेतिभावः । **तदेति ।** अन्तशब्दोऽवयववचनः,तदन्तस्येति बहुव्रीहिश्चेत्यर्थः । **अथेति ।** संज्ञाया आनन्तर्यात्येन विधिरित्यस्यानुग्रहाच्चेति भावः ।

[ तटस्थस्य विशेषजिज्ञासाभाष्यम् ]

**कश्चात्र विशेषः ? ॥**

[ पूर्वपक्षिणः प्रथमपक्षे दोषदर्शकं वार्तिकम् ]

*॥*॥ ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य विधिः ॥*॥*

**ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य प्रगृह्यसंज्ञा विधेया—पचेते इति, पचेथे इति ॥**

**( प्रदीपः ) पचेते इति ।** एकारोऽत्र द्विवचनं न भवति, अपि तु तस्याऽन्तः ॥

**( उद्द्योतः )** भाष्ये–**अन्त्यस्येति** । द्विवचनान्त्यस्य वर्णस्येत्यर्थः ।

[ तटस्थस्य दूषणोद्धारभाष्यम् ]

**वचनाद्भविष्यति ॥**

**( प्रदीपः ) वचनादिति ।** द्विवचनावयवे द्विवचनशब्दो वर्तिष्यत इत्यर्थः ॥

[ पूर्वपक्षिणः दूषणस्थापनपरभाष्यम् ]

**अस्ति वचने प्रयोजनम् ॥ किम् ? ॥ खट्वे इति, माले इति ॥**

**(प्रदीपः) अस्तीति ।** मुख्ये संभवति गौणस्य ग्रहणमन्याय्यमित्यर्थः । **खट्वे इतीति ।** अन्तादिवच्चेत्यादिवद्भावादेकारो द्विवचनम् ॥

**( उद्द्योतः ) गौणस्येति ।** जघन्यत्वसामान्याल्लाक्षणिकमपि गौणपदेन गृह्यत इति भावः ॥

[ द्वितीयपक्षाभ्युपगमभाष्यम् ]

**अस्तु तर्हि—'ईदाद्यन्तं यद्द्विवचन'मिति ।**

[ द्वितीयपक्षे दूषणवार्तिकम् ]

*॥*॥ ईदाद्यन्तमिति चेदेकस्य विधिः ॥*॥*

**'ईदाद्यन्तं द्विवचन'मिति चेदेकस्य प्रगृह्यसंज्ञा विधेया–खट्वे इति, माले इति ॥**

**( प्रदीपः ) एकस्येति ।** असहायस्येत्यर्थः । ईदूतोः केवलयोरेव संभव इति वचनसामर्थ्यात्तयोरेव सिध्यति, एकारान्तस्य तु द्विवचनस्य 'पचेते' इत्यत्रै संभवात्खट्वे इत्यत्र न सिध्यतीति दोषः । 'येन विधिस्तदन्तस्ये'त्यत्र 'स्वस्य च रूपस्ये'ति नाश्रितमिति दोषोपन्यासः ॥

**( उद्द्योतः )** प्रथमोपस्थितेदूत्परित्यागेन एकारान्तोदाहरणदाने बीजमाह–**ईदूतोरिति । नाश्रितमिति ।** वार्तिककृतेति[2] शेषः ॥

[ द्वितीयपक्षे समाधानवार्तिकम् ]

*॥*॥ न वाऽऽद्यन्तवत्त्वात् ॥*॥*

**न वैष दोषः ॥ किं कारणम् ? ॥ 'आद्यन्तवत्त्वात्' । 'आद्यन्तवदेकस्मिन्कार्यं भवती'त्येवमेकस्यापि[3] भविष्यति ॥**

[ तृतीयपक्षाभ्युपगमभाष्यम् ]

**अथवा एवं वक्ष्यामि–'ईदाद्यन्तं यद्द्विवचनान्त'मिति ॥**

**( प्रदीपः ) अथवेति ।** 'प्रत्ययग्रहणे यस्मा'दिति द्विवचनेन तदन्तविधिः, पश्चाद्द्विवचनान्त-

---

१ इदं क्वचिन्न ।

२ तदेकदेशिनेत्यर्थः । ३ 'भवतीत्येकस्य' ।

मीदादिभिर्विशेष्यत इत्ययं तृतीयः पक्षो भवति–'ईदाद्यन्तं यद्द्विवचनान्त'मिति । ननु संज्ञाविधौ प्रत्ययग्रहणे तदन्तविध्यभावः 'सुप्तिङन्तं पद'मित्यत्राऽन्तग्रहणेन ज्ञापित इति कथमेतत्पक्षोपपत्तिः । चतुर्थपक्षप्रतिक्षेपाय[1] वक्ष्यत्येवैतद्भाष्यकार इति नैतदपूर्वं चोद्यम् ॥

( उद्द्योतः ) तदन्तविधिरिति । अस्मादेव[2] वचनाच्छब्द[3]स्वरूपं विशेष्यमादायेति भावः। **इत्ययं तृतीयः पक्ष इति** । व्यपदेशिवद्भावानाश्रयणमस्य[4] बीजम् ॥

[ तृतीयपक्षनिरासवार्तिकम् ]

*॥*॥ ईदाद्यन्तं द्विवचनान्तामिति चेल्लुकि प्रतिषेधः ॥*॥*

**'ईदाद्यन्तं द्विवचनान्त'मिति चेल्लुकि प्रतिषेधो वक्तव्यः। कुमार्योरगारं कुमार्यगारम् । वध्वोरगारं वध्वगारम् । एतद्धीदाद्यन्तं च[5] श्रूयते, द्विवचनान्तं च भवति प्रत्ययलक्षणेन ॥**

( प्रदीपः ) दोषान्तरेणेमं पक्षं निराकर्तुमाह–लुकि प्रतिषेध इति । दोषसद्भावेनैवास्य पक्षस्य निराकरणात्तदन्तविध्यभावोऽत्र नोक्तः । **कुमार्यगारमिति** । कथं पुनरस्य द्विवचनान्तस्य समासो, यावता वृत्तौ सङ्ख्याविशेषो न गम्यते । नैष दोषः, यथा 'तावकीन'इत्यादावादेशेन सङ्ख्याविशेषो व्यज्यते, तथेहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वं व्यज्येतेति दोषोपन्यासः ॥

( उद्द्योतः ) **तदन्तविध्यभावोऽत्र नोक्त इति।** ईदादिभिः श्रूयमाणत्वेन द्विर्वचनविशेषणमेव न्याय्यमित्येतत्पक्षाऽसंभवरूपो दोषो नोक्त इत्यपि बोध्यम्। **आदेशेनेति** । एकार्थयुष्मदादेर्विहितेन तवकाद्यादेशेनेत्यर्थः । **प्रकृतिभावेनेति** । अन्यथाऽनुपपद्यमानेनेत्यर्थः । एवं हि सिद्धान्ते प्रगृह्यत्वाऽभावेन द्वित्वव्यञ्जकाऽभावादस्य प्रयोगस्याऽसाधुत्वापत्तिः । असाधुप्रयोगे च भगवतोऽश्रद्धेयतापत्तिः । अतः पूर्वपदार्थतावच्छेदकरूपेणैव बोधो न तु सङ्ख्यावत्त्वेनेत्येव भाष्यसंमतम् । अतो वृत्तौ सङ्ख्यानवगमेऽप्यनेकार्थप्रतीत्या तथाविग्रहे बाधकाऽभाव इति बोध्यम् ॥

[ तृतीयपक्षदूषणोद्धारवार्तिकम् ]

*॥*॥ सप्तम्यां[9]मर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य ॥*॥*

**यदयम् 'ईदूतौ च सप्तम्यर्थे' इत्यर्थग्रहणं करोति, तज्ज्ञापयत्याचार्यो 'न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवती'ति ॥**

( प्रदीपः ) सप्तम्यामिति । 'ईदूतौ सप्तमी'त्येव तदन्तविधौ सति प्रत्ययलक्षणेन 'सोमो गौरी अधिश्रित'इत्यादौ सिद्धायां प्रगृह्यसंज्ञायामर्थग्रहणं ज्ञापयति–'प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं न भवती'ति ॥

[ तृतीयपक्षे गौरवप्रदर्शकभाष्यम् ]

**तर्हि ज्ञापकार्थमर्थग्रहणं कर्तव्यम् ॥**

( प्रदीपः ) तर्हीति । आद्यन्तवद्भावानाश्रयणाय तृतीयः पक्षः परिगृहीतः । तत्र च दोषप्रतिविधानार्थमधिकमर्थग्रहणं ज्ञापकार्थं[10] कर्तव्यं भवतीति–सुतरां गौरवं भवतीत्यर्थः ॥

( उद्द्योतः ) सुतरामिति । अकरणात्करणं गुरु, तस्य च ज्ञापकत्वेनाश्रयणमिति सुतरां गौरवमित्यर्थः ।

[ चतुर्थपक्षोपन्यासभाष्यम् ]

**न कर्तव्यम्। ईदादिभिर्द्विवचनं विशेषयिष्यामः, ईदादिविशिष्टेन च द्विवचनेन तदन्तविधिर्भविष्यति-'ईदाद्यन्तं यद्द्विवचनं तदन्तमीदाद्यन्त'मिति ॥**

( प्रदीपः ) ईदादिभिरिति । अत्र पक्षे कुमार्यगारमित्यत्राऽप्रसङ्गः । न ह्यत्रेदूदेदन्तं द्विवचनम्, किं तर्हि ?, ओसिति सकारान्तम् । **तदन्तमिति** । द्विवचनान्तम् । **ईदाद्यन्तमिति** । ईदादिभिः साक्षात्समुदायस्य संबन्धाऽभावादीदादिशब्देनेदाद्यन्तमुच्यते, तेनेदाद्यन्ताऽन्तमित्यर्थः ॥

( उद्द्योतः ) **ईदादिभिरिति**–भाष्ये । श्रुतस्य श्रुतेन संबन्धो न्याय्य इति भावः। **साक्षात्**–द्विवचनमनपेक्ष्य । **समुदायस्य**–प्रत्ययान्तस्य ॥

⁂ राजलक्ष्मीः ⁂

१ निरासायेत्यर्थः । २ अन्तरङ्गत्वादित्याशयः । ३ शब्दानुशासनप्रस्तावादाह–**शब्दस्वरूपमिति।** ४ **अस्य**–तृतीयपक्षस्य । द्वितीयपक्षे च तदाश्रयणमिति निर्दुष्टत्वेऽपि तस्य परित्याग इति भावः । ५ 'च:' क्वचिन्न । ६ लक्ष्याऽसिद्धिरूपेणदोषेणेत्यर्थः । ७ एकत्वादिसङ्ख्याविशेष इत्यर्थः । ८ द्विवचनस्य विशेष्यत्वमित्यर्थः। ९ **सप्तम्यां**–सप्तमीपदघटिते 'ईदूतौ च सप्तम्यर्थे' इति सूत्रे । १० 'ज्ञापकं' पा० ।

[ सिद्धान्तिनस्तत्पक्षदोषदर्शनभाष्यम् ]

**एवमप्यशुक्ले वस्त्रे शुक्ले समपद्येतां शुक्ल्यास्तां वस्त्रे इत्यत्र प्राप्नोति। अत्र ईदादि च द्विवचनं, तदन्तं च भवति प्रत्ययलक्षणेन ॥**

( प्रदीपः ) शुक्ल्यास्तामिति । शुक्लशब्दाद्विवचनम्-'औ', तस्य नपुंसकाच्चेति शीभावः, ततश्च्विप्रत्ययः । 'शी'शब्दस्य 'सुप'इति लुक् । 'अस्य च्वा'वितीत्वं । तद्धितान्तत्वात्सुप् । तस्या'ऽव्यया'दिति लुक् । अत्र हि 'शी'शब्द ईकारान्तं द्विवचनम्, तदन्तश्च समुदायः प्रत्ययलक्षणेनेति प्रगृह्यसंज्ञा प्राप्नोति । अत्र ईदादि च द्विवचनमिति । ईदादिशब्देनेदाद्यन्तमुच्यते ॥ क्वचित्तु पाठः-'ईदाद्यन्तं च श्रूयत' इति । तत्रैवं व्याख्येयम्-ईदाद्यन्तं च श्रूयते सूत्रे तदन्तविधिरीदादिभिर्द्विवचनस्याश्रीयत इत्यर्थः । यस्त्वयमस्य च्वावितीकारः, स द्विवचनस्य न कश्चिदिति न तदभिप्रायेण भाष्यं व्याख्येयम् ॥

( उद्योतः ) नन्वत्र पक्षे न द्विवचनेनेदादि विशेष्यत इति कथमीदादि च द्विवचनमितीत्यत आह-ईदादीति । तदन्तत्वं चास्य व्यपदेशिवद्भावेन बोध्यम् । श्रूयते सूत्रे इति । 'यच्छ्रूयते सूत्रे द्विवचनं तदीदाद्यन्त'मिति भाष्ये योजनेत्याशयः ॥

[ चतुर्थपक्षवादिनः समाधानभाष्यम् ]

**अत्राप्यकृते शीभावे लुग्भविष्यति ॥**

[ सिद्धान्तिनो दोषस्थापनभाष्यम् ]

**इदमिह संप्रधार्यं लुक् क्रियतां,शीभाव इति । किमत्र कर्तव्यम् ?॥ परत्वाच्छीभावः॥**

[ चतुर्थपक्षवादिनः समाधानभाष्यम् ]

**नित्यो लुक् । कृतेऽपि शीभावे प्राप्नोत्यकृतेऽपि प्राप्नोति ॥**

[ सिद्धान्तिनस्तन्निरासभाष्यम् ]

**अनित्यो लुग् । अन्यस्य कृते शीभावे प्राप्नोत्यन्यस्याऽकृते । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । शीभावोऽप्यनित्यः, न हि कृते लुकि प्राप्नोति । उभयोरनित्ययोः परत्वाच्छीभावः । शीभावे कृते लुक् ॥**

( उद्योतः ) अनित्यत्वेऽपि लुकः शीभावो नित्यश्चेदतुल्यबलत्वात्परत्वादिति पूर्वोक्तमनुपपन्नमतो भाष्ये 'शीभावोऽप्यनित्य' इत्युक्तम् । कृते लुकि तदप्राप्तिस्तु प्रसङ्गरूपषष्ठ्यर्थस्याऽभावादिति भावः ॥

[ सिद्धान्तिन आक्षेपदार्ढ्यदर्शिभाष्यम् ]

**अथापि कथंचिन्नित्यो लुक्स्यादेवमपि दोषः । वक्ष्यत्येतत्-'पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थ'मिति । इदं चापि प्रत्ययग्रहणम् । अयं चापि संज्ञाविधिः ॥ अवश्यं खल्वस्मिन्नपि पक्षे आद्यन्तवद्भाव एषितव्यः ॥ तस्मादस्तु स एव मध्यमः पक्षः ॥ [ ईदूदेद्विवचनं ] ।**

( प्रदीपः ) अथापि कथंचिदिति । स्थानिविशेषानपेक्षायां कृताऽकृतप्रसङ्गित्वेन लुक्शास्त्रस्य प्रवर्तनादित्यर्थः । अथवा नित्यत्वेन बाधकत्वं लक्ष्यते, तेनान्तरङ्गानपीति न्यायेन शीभावस्य लुग् बाधक इत्यर्थः[1]। एवमपि दोष इति । पक्षस्योत्थानमेव नास्तीति तत्पक्षाऽसंभव एव दोषः । अवश्यमिति । यदाश्रयणभयादयं पक्षोऽङ्गीकृतस्तस्याद्यन्तवद्भावस्यास्मिन्नपि पक्षेऽवश्यमाश्रयणमङ्गीकृतम् । 'अग्नी' इत्यत्र हीकार एव द्विवचनं न स्वीकारान्तम् । तस्मादिति । द्वितीय एव पक्षोऽस्त्वित्यर्थः ॥ 'मणीवादीनां प्रतिषेधो वक्तव्य' इति भाष्यकारैर्वार्तिककाराभ्यामपठितत्वादप्रमाणमेतत् ॥ मणीवोष्ट्रस्येति तु प्रयोगो वाशब्दस्योपमानार्थस्य । रोदसीवेत्यादिस्तु च्छान्दसः प्रयोगः । छन्दसि सर्वे विधयो विकल्प्यन्ते इति ॥

( उद्योतः ) अग्नी इतीति । खट्वे इत्यस्याप्युपलक्षणमेतत् ॥ द्वितीय इति । प्रत्ययांशे तदन्तविधिसत्त्वेन पक्षद्वयस्यैकत्वबुद्ध्या तस्य मध्यमत्वोक्तिरिति बोध्यम् । एतदिति । वृत्तिकारोक्तमित्यर्थः ॥

---

❀ राजलक्ष्मीः ❀

१ 'ईदादि च' पा० । २ अपिः क्वचिन्न । ३ 'अन्यस्याकृते' शीभावे प्राप्नोत्यन्यस्यकृते' पा० । ४ 'ईदूदेदन्तं यद्द्विवचन'मिति पक्षः । ५ 'कारे'ति क्वचिन्न । ६ 'छन्दसितु' । ७ 'विकल्पन्ते' ।

## अदसो मात् ॥ १ । १ । १२ ॥

— [ आक्षेपवार्तिकम् ]

॥ * ॥ *मात्प्रगृह्यसंज्ञायां तस्यासिद्धत्वादयावेकादेशप्रतिषेधः* ॥ * ॥

**मात्प्रगृह्यसंज्ञायां तस्य-ईत्वस्य ऊत्वस्य चाऽसिद्धत्वादयावेकादेशाः प्राप्नुवन्ति, तेषां प्रतिषेधो वक्तव्यः । अमी अत्र, अमी आसते, अमू अत्र, अमू आसाते ॥**

( प्रदीपः ) अदसो मात् । मात्प्रगृह्येति ॥ अस्मिन्सूत्रन्यास इत्यर्थः। ऊत्वस्यचेति । चशब्दान्मत्वस्य च । शास्त्रस्याऽसिद्धत्वाच्च स्थानिलक्षणमेव कार्यं प्राप्नोति, नादेशलक्षणमित्ययादिप्रसङ्गः । 'अमी आसते' इत्ययादेशः प्राप्नोति । 'अमू आसाते' इत्यावादेशः । 'अमी अत्रे'त्यत्र एकादेशः॥ ननु च द्विपदाश्रयत्वाद्बहिरङ्गा अयादयोऽन्तरङ्गेष्वीत्वादिष्वसिद्धा इति पूर्वाऽभावे कथं पूर्वत्रासिद्धमितीत्वादीनामसिद्धत्वं स्यात् ? । नैष दोषः,'नाजानन्तर्ये'इति बहिरङ्गपरिभाषानिषेधात् ॥

( उद्द्योतः ) अदसो मात् । अस्मिन्निति । दात्पदघटिते इत्यर्थः ॥ यदि तु अदसो दादित्युच्यते, तात्परश्च पूर्वोत्तरसाहचर्यादवर्णभिन्नोऽज् औकारैकाररूप एव, तदा न स्याद्दोष इति भावः । इदमेव ध्वनयितुम् 'अदसः प्रगृह्यसंज्ञायाम्' इति नोक्तम् । नन्वीत्वोत्त्वयोरसिद्धत्वेऽपि अदसोमादित्यत्रेदूदिति निवर्त्त्य मात्परौकारैकारयोरपि प्रगृह्यत्वान्नायादिप्रसङ्गोऽत आह–चशब्दान्मत्वस्येति । एवं चैदौतोर्मात्परत्वाभावादेवमपि न प्रगृह्यत्वप्राप्तिरिति भावः ॥ नन्वीत्वादीनामसिद्धत्वेऽपि तन्निवर्तितौकाराद्यभावेन कथमयादिप्राप्तिः । किं चायादीन्प्रत्यसिद्धत्वेऽपि प्रगृह्यसंज्ञायामाश्रयात्सिद्धत्वेन तत्संज्ञायां तत्सामर्थ्यान्नायादयोऽत आह– शास्त्रेति ॥ नादेशलक्षणमिति । प्रकृतिभाव इत्यर्थः । प्रगृह्यत्वं त्वनुनासिकपर्युदासेन चरितार्थमिति भावः ॥ एकादेशः–'एङः पदान्तादती'ति । नाजानन्तर्ये इति । [ उत्तरकालप्रवृत्तिके ] अयादावजानन्तर्यादिति भावः ॥ त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेर्विसर्जनीय सूत्रे भाष्ये वक्ष्यमाणत्वान्न दोष इति परे ॥

[ वार्तिकावतारणायाक्षेपबाधकभाष्यम् ]

**ननु च प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति ॥**

( प्रदीपः ) ननु चेति । यथोद्देशपक्षे आश्रयात्सिद्धत्वं भविष्यतीत्यर्थः ।

( उद्द्योतः ) यथोद्देशेति । नन्वाश्रयात्सिद्धत्वेन प्रगृह्यत्वेऽपि मूत्वादेरसिद्धत्वादयादिकं स्यादेवेति चेन्न । एवमपि संज्ञाशास्त्रवैयर्थ्यादनत्याश्रयणेनाऽयादिकं प्रत्यपि सिद्धत्वं ज्ञाप्यत इत्याशयात् ॥

[ आक्षेपसाधकवार्तिकखण्डम् ]

॥ * ॥ *वचनार्थौ हि सिद्धे* ॥ * ॥

**नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ? ॥ यत्सिद्धे प्रगृह्यसंज्ञाकार्यं तदर्थमेतत्स्यात्–'अणोऽगृह्यस्यानुनासिकः' इति ॥**

(प्रदीपः) कार्यकालपक्षमाश्रित्याह–वचनार्थौ हीति । वचनस्य प्रयोजनमित्यर्थः ॥

( उद्द्योतः ) भाष्ये यत्सिद्धे इति । न च तत्र पूर्वसूत्रेणैव सिद्धिः । अद्विचने तदप्रवृत्तेः । पूर्वसूत्रविषये यथोद्देशस्यैव भाष्यकृताऽङ्गीकाराच्च ॥

[ आक्षेपबाधकभाष्यम् ]

**नैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्–'अणोऽप्रगृह्यस्यानुनासिकोऽदसो ने'ति ॥**

( प्रदीपः ) नैकमिति । अनेककार्यसिद्ध्यर्थं संज्ञासूत्रं नैकेन प्रयुज्यत इत्यर्थः । अन्यत्तु सूत्रमेकेनापि प्रयुज्यते मुद्रादणित्यादि ॥ तत्रैवायमिति । न च तत्रेदूदेद्ग्रहणं कर्तव्यं मादिति वा । यस्मादणोऽनुनासिकोऽवसाने विधीयते पूर्वेण णकारेणाण्ग्रहणमिति असौ अमुके अमुकाभ्यामित्यादावनुनासिकस्याप्रसङ्ग एव । तदेवं कार्यकालेऽपि संज्ञापरिभाषे प्रकरणोत्कर्षेण विधीयमाना प्रगृह्यसंज्ञा सर्वप्रगृह्यकार्यार्था सत्यसिद्धत्वं बाधिष्यत इत्यर्थः ॥

---

❀ राजलक्ष्मीः ❀

१ 'अमी अत्र अमू अत्र । अमी आसते अमू आसते'पा०। २एवमपि–प्रगृह्यत्वेऽपि । फलाभावादिति भावः। ३यत्सिद्धे प्रगृह्येति । सिद्धे–सिद्धकाण्डस्थे ईत्वादौ यत्प्रगृह्यसंज्ञा कार्यं–यत्कार्यदृष्ट्या ईत्वादिकं सिद्धं तदर्थमित्यर्थः । ४ 'अणोऽप्रगृह्यादसोरनुनासिकः 'इति सूत्रं कुर्यादित्यर्थः ।

( उद्द्योतः ) नन्वीदाद्युपजीवनायाऽत्र करणमित्यत आह-नचेति। हेऽसुक असुका इत्यादौ तु 'अदस' इत्यावर्त्यं न विद्यते दस्य स्थाने सो यस्य तादृशाऽदस इत्यर्थेऽनाऽनुनासिकः स्वमतेऽपि भवत्येवेति भाष्याशयमाहुः। तादृशानामनभिधानमेवेत्यन्ये ॥ प्रकरणोत्कर्षेणेति। संज्ञाप्रकरणे उत्कर्षेण-गुरुभूतन्यासेनेत्यर्थः॥ सर्वेति। प्रकृतिभावानुनासिकप्रतिषेधेत्यर्थः॥

[ समाधानवार्तिकम् ]

*॥*॥ विप्रतिषेधाद्वा [ प्रगृह्यसंज्ञा ] ॥*॥*

अथवा प्रगृह्यसंज्ञा क्रियतामयादयो घेति, प्रगृह्यसंज्ञा भविष्यति विप्रतिषेधेनेति ॥

( प्रदीपः ) विप्रतिषेधाद्वेति। 'अयावेकादेशप्रतिषेधो वा वक्तव्यः' 'विप्रतिषेधाद्वा प्रगृह्यसंज्ञे'ति विकल्पार्थो वाशब्दः॥ 'नैकं प्रयोजन'मित्यादिस्तु परिहारो भाष्यकारेणोक्तो न वार्तिककारेणेति न तदपेक्षो विकल्पः॥

( उद्द्योतः ) भाष्ये-विप्रतिषेधाद्वेति। अन्तरङ्गत्वात्वान्मूत्वादौ कृते पदान्तरसमभिव्याहारेऽयादिभ्यः परत्वात्संज्ञासिद्धौ तत्सामर्थ्यान्मूत्वादिकं प्रकृतिभावं प्रत्यपि नाऽसिद्धम्। आश्रयाच्च संज्ञां प्रत्यपि नासिद्धमिति भावः॥

[ विप्रतिषेधदूषणभाष्यम् ]

नैष युक्तो विप्रतिषेधः। 'विप्रतिषेधे पर'मित्युच्यते, पूर्वा च प्रगृह्यसंज्ञा, परेऽयादयः ॥

( प्रदीपः ) नैष युक्त इति। इष्टसिद्धये इति भावः॥

( उद्द्योतः ) ननु 'प्रगृह्यसंज्ञाभिनिर्वर्तमाने'त्यादि वक्ष्यमाणप्रकारेण घटत एव विरोध इत्ययुक्तमेतदित्यत आह-इष्टेति।

[ विप्रतिषेधसमर्थनभाष्यम् ]

परा प्रगृह्यसंज्ञा करिष्यते ॥

(प्रदीपः) करिष्यत इति। आश्रयिष्यत इत्यर्थः॥

[ विप्रतिषेधदूषणभाष्यम् ]

सूत्रविपर्यासः कृतो भवति ॥

( प्रदीपः ) इतरस्त्वगृहीताभिप्राय आह—सूत्रविपर्यास इति।

[ विप्रतिषेधस्थापनभाष्यम् ]

[3]एवं तर्हि परैव प्रगृह्यसंज्ञा ॥

कथम्?॥ 'कार्यकालं हि[4] संज्ञापरिभाषम्'। यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। 'प्रगृह्यः प्रकृत्ये'ति। उपस्थितमिदं भवति 'अदसो' मा'दिति।

( प्रदीपः ) अभिप्रायं प्रकाशयितुमाह-एवं तर्हीति॥

( उद्द्योतः ) भाष्ये परैवेति। पूर्वपाठेऽपि तत्र[5] वाक्यार्थबोधाऽभावेनेति भावः। कथमिति। पाठकृतं स्वगतं पूर्वत्वमनपगतमिति प्रश्नः। उत्तरयति-कार्यकालमिति। तत्पक्षे संज्ञाशास्त्रस्य प्रदेशदेश एवार्थबोधः। तदुत्तरं च विरोधोपस्थितिस्तत्कार्यज्ञानं चेति तत्रत्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजमिति भावः। 'परैवे'त्येवकारेण पाठकृतं पूर्वत्वं विद्यमानमपि विप्रतिषेधसूत्रप्रवृत्तौ न नियामकमिति सूचितम्। परिभाषाणां तु तत्पक्षेऽपि तत्तद्देशेऽर्थबोधोऽस्त्येवेति तद्विषये विप्रतिषेधसूत्रप्रवृत्तौ पाठकृतमेव तन्नियामकमिति[6] तात्पर्यम्। आकडारस्थभपदसंज्ञादिविषये[7] तु यथोद्देशपक्ष एवेति तत्र परया पूर्वबाधसिद्धिः। 'ष्यङः सम्प्रसारण'मिति सूत्रस्थं भसंज्ञायाः कार्यकालत्वपरं भाष्यं त्वेकदेश्युक्तिरिति तत्रैव निरूपयिष्यामः। परेतु[8] परैवेत्यस्य, संज्ञापदेन तत्कार्यं प्रकृतिभाव उच्यते,-इति भावः। आशयानभिज्ञस्य प्रश्नः-कथमिति। एकदेशिन उत्तरम्-कार्यकालमित्यादीत्याहुः। एतेन 'कार्यकालपक्षेऽपि पाठकृतपरत्वमयादीनामेव। अन्यथा 'ङमो ह्रस्वादची'त्यादौ त्रिपादीस्थे कार्यकालपक्षे एव परिभाषाप्रवृत्त्या परत्वात्तत्र तस्मादित्युक्तस्येत्येवेति सिद्धान्ताऽसङ्गतिः, उभयोरप्येकदेशस्थत्वेन परत्वाऽसंभवा'दित्यपास्तम्॥

[ विप्रतिषेधदूषणभाष्यम् ]

एवमप्ययुक्तो विप्रतिषेधः ॥

॥ राजलक्ष्मीः ॥

१ क्वचिन्नेदम्। २ विप्रतिषेधेनेतीति। इतिर्हेतौ। यतो विप्रतिषेधेन प्रगृह्यसंज्ञा भविष्यति, अतोऽयादीनां प्रतिषेधो न वक्तव्य इत्यर्थः। तथाच न पाणिनेर्न्यूनतेति भावः। इतिः क्वचिन्न। ३ तर्हिरप्यर्थे। एवं तर्हि-सूत्रविपर्यासाऽभावेऽपि। ४ तत्र-स्वदेशे। वाक्यार्थेति। लक्ष्यसंस्कारकवाक्यार्थेत्यर्थः। ५ उत्तरत्रोपस्थितावपि पाठकृतं पूर्वत्वमस्त्येवेत्याशयः। ६ तदिति। कार्यकालपक्षेत्यर्थः। ७ नन्वेवमपि भपदसंज्ञादौ दोष एवात आह-आकडारेति। ८ नन्वेवं ष्यङ इति सूत्रस्थभाष्यविरोधोऽत आह-ष्यङ इति॥ ९ संज्ञापरिभाषयोर्वैरूप्याय सिद्धान्तमाह-परेत्विति। तत्कार्यं-संज्ञाकार्यम्।

**कथम् ?॥**

**द्विकार्ययोगो हि विप्रतिषेधः । नचात्रैको द्विकार्ययुक्तः । एचामयादयः, ईदूतोः प्रगृह्यसंज्ञा ॥**

( **प्रदीपः** ) **द्विकार्ययोगो हीति** । द्वाभ्यां कार्याभ्यां यो युज्यते स विप्रतिषेधविषयत्वाद्विप्रतिषेधः[1] ॥

( **उद्द्योतः** ) **द्वाभ्यामिति** । **योग** इति कर्मणि घञ् । द्विकार्यशब्दस्य पात्राद्यन्तत्वादस्त्रीलिङ्गस्य 'योग'शब्देन 'कर्तृकरणे कृते'ति समासः ॥ भाष्ये-'ईदूतोः[2] प्रगृह्यसंज्ञे'-त्यस्य-तत्कार्यं प्रकृतिभाव इत्यर्थः ॥

[ विप्रतिषेधसमर्थनभाष्यम् ]

**नावश्यं द्विकार्ययोग एव विप्रतिषेधः॥ किं तर्हि ?॥ असंभवोऽपि । स चास्त्यत्राऽसंभवः[3] ॥**

**कोऽसावत्राऽसंभवः ?॥**

**प्रगृह्यसंज्ञाऽभिनिर्वर्त्तमानाऽयादीन् बाधते, अयादयोऽभिनिर्वर्त्तमानाः प्रगृह्यसंज्ञाया निमित्तं विघ्नन्तीत्येषोऽसंभवः । सत्यसंभवे युक्तो विप्रतिषेधः ॥**

( **प्रदीपः** ) **असंभवोऽपीति** । असंभव एव विप्रतिषेधः। स च कदाचिद्द्विकार्ययोगो भवति, कदाचित्केवलोऽपि । तथाहि-सति संभवे द्विकार्ययोगो न विप्रतिषेधः, यथैकस्य दधातेरडागमद्विर्वचने भवतः-'अदधा'दिति । क्वचिदेकस्य द्विकार्ययोगाऽभावेऽप्यसंभवोऽस्ति-यथा 'त्रपूणा'मित्यत्र नुम्नुटोः प्रकृतिप्रत्ययभक्तयोः परस्परनिमित्तव्याघातात् । **अयादीन्बाधत इति** । प्रकृतिभावविधानात् । **निमित्तमिति** । ईत्वमूत्वं च ॥

( **उद्द्योतः** ) **कदाचिदिति** । एवंच प्रकृते केवलाऽसंभवरूपः स इत्यर्थः । केवलद्विकार्ययोगो न सर्वथा विप्रतिषेध इत्याह-**तथाहीति** । **ईत्वमूत्वं चेति** । तद्विघातेन संज्ञाऽभावे तत्कार्यप्रकृतिभावविघातः स्पष्ट एवेति भावः ॥

[ विप्रतिषेधदूषणभाष्यम् ]

**एवमप्ययुक्तो[6] विप्रतिषेधः । सतोर्हि[7] विप्रतिषेधो भवति । न चात्रेत्वोत्त्वे स्तो, नापि मकारः । उभयमप्यसिद्धम् ॥**

( **उद्द्योतः** ) केचित्तु संज्ञाकार्यस्य अयादिभिर्विप्रतिषेधोऽयुक्तः । वाक्यसंस्कारपक्षे मूत्वादितः पूर्वमेवाऽयादिप्राप्त्या मूत्वाद्युत्तरं च संज्ञायां तत्प्राप्त्या युगपत्प्राप्त्यभावात् । तस्मात् **प्रगृह्यसंज्ञा**शब्देन तज्जनकमूत्वादिकं लक्षयित्वा तस्याऽयादिभिर्विप्रतिषेध इति वार्त्तिकार्थः । तमपि दूषयति भाष्ये-**एवमपीति** ॥

[ उक्तदूषणोद्धारवार्तिकम् ]

॥*॥ *आश्रयात्सिद्धत्वं च, यथा रोरुत्वे* ॥*॥

**आश्रयात्सिद्धत्वं भविष्यति । [ 'यथा[8] रोरुत्वे' । ] तद्यथा रुत्वे आश्रयात्सिद्धो भवति ॥**

( **प्रदीपः** ) **आश्रयात्सिद्धत्वमिति** । प्रगृह्यसंज्ञायां कार्यित्वेनाश्रयणादसिद्धत्वाऽभावादीत्वादीनां तेषामयादीनां च विप्रतिषेधो निरूप्यते । तथाहि-सतोर्हि विप्रतिषेधो भवतीति पूर्वपक्षे ईदादीनामेव विप्रतिषेध आक्षिप्तः । तत्राऽयादीनां-चयनं चायकः, लवनं लावकः, अग्नेऽत्रेत्यत्राऽवकाशः। ईदादीनां तु यत्राऽयादीनामप्रसङ्गः सोऽवकाशः,- अमी स्थिताः, अमू स्थितौ, अमीभ्य इति । अमी अत्रेत्यादावुभयप्रसङ्गे परत्वादीदादय एव भवन्ति । अत्र व्याख्यानान्तरं क्लिष्टत्वान्नोपन्यस्तम् ॥

( **उद्द्योतः** ) **कार्यित्वेनाश्रयणादिति** । तत्सामर्थ्यादयादीन्प्रत्यपि सिद्धत्वमित्यर्थः । यथोद्देशे इदम् । **'कथं, कार्यकाल'**मिति तु प्रकृतिभावाऽयादिविप्रतिषेधविषयम् । इदानीं तु स नेति स्पष्टमेव । **असिद्धत्वाभावादिति** । ईत्वादीनामसिद्धत्वाऽभावादित्यन्वयः । सामान्यत एवाऽसिद्धत्वाभावबोधनादित्यर्थः । **तेषाम्**-ईत्वादीनाम् । **परत्वादिति** । ईत्वादिषु जातेषु तेषामसिद्धत्वाऽभावादयादीनामप्रसङ्ग एवेति भावः । **व्याख्यानान्तरमिति** । प्रगृह्यत्वकार्यप्रकृतिभावेनाऽयादीनां विप्रतिषेधपरमेव भाष्यम्। 'सतो'रित्यस्य युगपत्प्राप्तयोरित्यर्थः। वाक्यसंस्कारपक्षे ईत्वा-

१ **विप्रतिषेधः** । विप्रतिषेध इत्युच्यते । २ परेतु सिद्धान्तरीत्या व्याचष्टे-**ईदूतोरिति** । ३ **असम्भवः**= यौगपद्यासम्भवः । ४ परेतुमतेनापिवैयर्थ्यं योजयति-**तदिति** । ईत्वोत्वयोर्विघातेन प्रगृह्यसंज्ञाऽभावेसति प्रगृह्यसञ्ज्ञाकार्यप्रकृतिभावविघात इत्यर्थः । ५ **प्रकृतिभावेति** । प्रकृतिभावविधानद्वारेत्यर्थः । ६ प्रतिषेधवादी दूषयति-**एवमप्येति** । **नच** नहि । ७ **सतोः**-विद्यमानयोः शास्त्रयोः । हि-यतः । ८ अस्य'इत्याद्यु'रितिशेषः । ९ क्वचिन्न । १० लुप्तं स्यात् ।

दीनामसिद्धत्वेन ततः प्रागेव तत्प्राप्तिः, कृते त्वीत्वादावस्येति न तयोर्युगपत्प्राप्तिरिति भावः। तदाह–न चात्रेत्यादि। अत्र–अयादिप्राप्तिकाले। असत्त्वे हेतुः–उभयमसिद्धमिति। 'पूर्वत्रासिद्धे'नेतिशेषः। परिहरति–आश्रयादिति। पदसंस्कारपक्ष एवात्राश्रीयत इति भावः। एवंचोभयोर्युगपत् प्राप्तिः, प्रगृह्यसंज्ञायां तत्कार्ये च तयोः सिद्धत्वादयादीन्प्रति चाऽसिद्धत्वादित्युपपन्नो विप्रतिषेध इति। वाक्यसंस्कारपक्षे कृतस्य पूर्वपक्षस्य पदसंस्कारपक्षाश्रयेण परिहार इति क्लेशः। परेस्त्वनुक्तेदादिविप्रतिषेधखण्डनतत्समर्थनपरत्वेन व्याख्यापेक्षयेदमेव युक्तं, पक्षान्तरैरपि परिहारकरणादित्याहुः॥

[ आक्षेपभाष्यम् ]

**किं पुनः कारणं रुत्वे आश्रयात्सिद्धो भवति, न पुनर्यत्रैवं रुः सिद्धः, तत्रैवोत्त्वमप्युच्यते?॥**

( प्रदीपः ) न पुनर्यत्रैवेति। 'रोः सुपी'त्यस्यानन्तर'मत उरती'ति वक्तव्यम्। एवं चाऽसिद्धत्वं न बाधितं भवति। अत्र पाठक्रमेऽसिद्धत्वस्य प्राप्त्यभावात् प्लुतस्य चोत्वे सिद्धत्वात्तत्कालत्वाऽभावादप्लुतादप्लुते इति न वक्तव्यं भवति॥

( उद्द्योतः ) रोः सुपीत्यस्यानन्तरमिति। न चैवं 'हशि चे'त्यस्यैतदुत्तरत्वाद्रोरिति दृष्टयाऽसिद्धत्वापत्तौ मनोरथाऽसिद्धिः। 'ढोढे लोपः,' 'रोरी'त्यननोर्यरीऽनुनासिक इत्यतः पूर्वं पाठः कार्य इत्याशयात्॥

[ समाधानवार्तिकावतारणभाष्यम् ]

**नैवं शक्यम्॥**

[ समाधानवार्तिकम् ]

*॥*॥असिद्धे ह्युत्वे आद्गुणाऽप्रसिद्धिः॥*॥*

**असिद्धे ह्युत्वे आद्गुणस्याऽप्रसिद्धिः स्यात्–वृक्षोऽत्र प्लक्षोऽत्र॥ तस्मात्तत्राश्रयात्सिद्धत्वमेषितव्यम्। तत्र यथाश्रयात्सिद्धत्वं भवति। एवमिहाप्याश्रयात्सिद्धत्वं भविष्यति॥**

[ समाधानान्तरवार्तिकम् ]

*[ ॥ * ॥ वचनसामर्थ्याद्वा ॥ * ॥ ]*

**अथवा प्रगृह्यसंज्ञावचनसामर्थ्याद्यादयो न भविष्यन्ति॥**

( प्रदीपः ) अथ वेति। यथोद्देशपक्षाश्रयेणैतदुच्यते॥

( उद्द्योतः ) अनुनासिकार्युदासेन चारितार्थ्यमाशङ्क्याह–यथोद्देशेति। एतत्–'वचनसामर्थ्याद्वे'ति वार्तिकं, तद्व्याख्यानभाष्यं चेत्यर्थः। पूर्वभाष्यस्य व्याख्यान्तरवादिनस्तु वाक्यसंस्कारपक्षेऽप्याह–अथवेति। वस्तुतस्तु प्रकृतिभावोपस्थितसंज्ञायां तयोर्निमित्तत्वेनाश्रयणरूपवचनसामर्थ्यादयादीन्प्रत्यपि सिद्धत्वं ज्ञाप्यते इत्यर्थे कार्यकालेऽपि न दोषः॥ किं च यथोद्देशेऽपि संज्ञां प्रति निमित्तत्वेनाश्रयणात्तद्दृष्ट्या मीत्वस्य सिद्धत्वेन संज्ञया अनुनासिकप्रतिबन्धेन चारितार्थ्यमस्त्येव। प्रकृतिभावविषयकसंज्ञोपप्लवसामर्थ्याश्रयणे तु किं विशिष्य यथोद्देशाश्रयणेन। एवमुपक्रमस्थभाष्येऽपि बोध्यमित्याहुः॥

[ समाधानान्तरवार्तिकम् ]

*[ ॥ * ॥ योगविभागाद्वा ॥ * ॥ ]*

**अथ वा योगविभागः करिष्यते। 'अदसः'। अदस ईदादयः प्रगृह्यसंज्ञा भवन्तीति। ततो 'मात्'। माच्च परे ईदादयः प्रगृह्यसंज्ञा भवन्तीति। 'अदस' इत्येव॥**

**किमर्थो योगविभागः?॥**

**एको यत्तत्सिद्धे प्रगृह्यकार्यं तदर्थः। अपरो यदसिद्धे॥**

( प्रदीपः ) कार्यकालतायामप्याह–अथ वेति। 'अदस' इति संबन्धसामान्ये षष्ठी। अदसः संबन्धिन ईदूदेत इति॥

( उद्द्योतः ) भाष्ये–योगविभागाद्वे'ति वार्तिकं व्याचष्टे–अथवेति॥ 'अदस'इत्यस्य पञ्चम्यन्तत्वे उत्तरत्र मादित्यस्य विशेषणानापत्तिरत आह––संबन्धेति॥ यत्तत्सिद्धे इति। 'मूत्वे'इति शेषः। यत्र कार्ये मूत्वं सिद्धं तत्प्रगृह्यकार्यमित्यर्थः॥ अपरो यदसिद्ध इति। यत्र मूत्वमसिद्धं तदित्यर्थः॥

[ योगविभागदूषणभाष्यम् ]

**इहापि तर्हि प्राप्नोति—अमुया अमुयोगिति॥**

१ व्याख्यानं दूषयति–परेस्त्विति। २ यत्रैव–त्रिपाद्यां परत्र। ३ यत्र रुःसिद्धस्तत्र त्रिपाद्यां परत्र पाठे उत्वस्य गुणापेक्षयाऽसिद्धया रूपासिद्धिरित्यर्थः। ४ तत्र–उत्वे। 'रो'रिति शेषः। ५ तत्र–रोरुत्वे। ६ 'मिहापि भविष्यति' पा०। ७ लुप्तं स्यात्। ८ इतः कचिन्न। ९ एकः–'मा'दित्यपरः। १० यत्तदिति। मूत्वे सिद्धे यत्तत्प्रगृह्यकार्यं तदर्थं इत्यर्थः। अपरः–'अदस'इति। ११ तत्फलितमाह–यत्रेति। एवमग्रेऽपि। १२ इहापीति। योगविभागाङ्गीकारे इत्यर्थः।

**किंच स्याद्यदि प्रगृह्यसंज्ञा स्यात्? ॥ प्रगृह्याश्रयः प्रकृतिभावः प्रसज्येत ॥**

( प्रदीपः ) इहापीति । अदस् टा, अदस् ओस् । अत्वम् । टाप् । सवर्णदीर्घत्वम् । 'आङि चाप' इत्येत्वम् । अदे–आ, अदे–ओस् इति स्थिते 'अदस' इत्यत्र 'मा'दिति विशेषणाऽभावात्प्रगृह्यसंज्ञायां सत्यामयादेशाऽप्रसङ्गः ॥

[ योगविभागदूषणनिरासभाष्यम् ]

**नैष दोषः । पदान्तप्रकरणे[2] प्रकृतिभावो, न चैष पदान्तः ॥**

[ योगविभागदूषणस्थापनभाष्यम् ]

**एवमप्यमुकेऽत्र,– अत्रापि प्राप्नोति ॥**

( प्रदीपः ) अमुकेत्रेति । 'अदस' इत्यनेन प्राप्नोति ॥

[ उक्तदोषनिरासभाष्यम् ]

**'द्विवचन'मिति वर्त्तते ॥**

[ योगविभागदूषणभाष्यम् ]

**यदि द्विवचनमिति वर्त्तते–अमी अत्र-अत्र[3] न प्राप्नोति ॥**

[ उक्तदोषनिरासभाष्यम् ]

**एवं तर्हि 'एदन्त'[4]मिति निवृत्तम् ॥**

( प्रदीपः ) एदन्तमिति । ईदूतोरेव स्वरितत्वप्रतिज्ञानादिति भावः । अनुवृत्तिरेव[5] च निवृत्तिः । यद्येवं माद्ग्रहणं न कर्तव्यम् , एद्ग्रहणनिवृत्त्यैवाऽमुकेत्रेत्यत्राऽप्रसङ्गात् । नैतदस्ति । सति माद्ग्रहणे योगविभागो भवति नान्यथा ॥

( उद्द्योतः ) ननु समस्तत्वात्समुदायानुवृत्तिः स्यात्तत्कथमेतो निवृत्तिरत आह–**ईदूतोरेवेति । नान्यथेति ।** सिद्धान्ते तु व्यर्थमेव माद्ग्रहणमिति भावः ॥

[ एकयोगेऽपि समाधानान्तरवार्तिकम् ]

*[ ॥*॥ मार्थादीदाद्यर्थानां[6] वा ॥*॥ ]*

**अथवाऽऽहायम् 'अदसो मा'दिति । न च ईत्वोत्वे स्तः स्तः । नाऽपि[7] मकारः । त एवं विज्ञास्यामः––'मार्थादीदाद्यर्थाना'मिति ॥**

( प्रदीपः ) एकयोगे परिहारान्तरमाह–अथ वेति ॥ मार्थादिति । मार्थ एव स्थानी 'म'[8], शब्देनोक्तः, ईदूदेदर्थश्चेदूदेदिति[9] । न चाऽस्यां कल्पनायामसिद्धत्वं भवति, बुद्धिपरिकल्पनायामसिद्धत्वाऽभावस्योक्तत्वात् ॥

( उद्द्योतः ) भाष्ये–'**मार्थादीदाद्यर्थानां** वे'ति वार्तिकं व्याचष्टे–**अथवाऽऽहेति** । ननु एवं सति अदेऽदौ इत्यस्यामवस्थायां प्रगृह्यत्वेऽपि मीत्वमूत्वयोः कृतयोरीकारादीनामप्रगृह्यत्वादेतद्वैयर्थ्यमल्विधित्वेन प्रगृह्यत्वाभावादिति चेन्न । प्रदेशे प्रगृह्यस्थानिकस्यापि लक्षणया ग्रहणेनाऽदोषात् ॥

[ समाधानान्तरवार्तिकम् ]

॥ * ॥ उक्तं वा[10] ॥ * ॥

**[ उक्तं वा ] ॥ किमुक्तम् ? ॥**

**'अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे प्रगृह्यसंज्ञायां[11] सिद्धे वक्तव्ये'[12] इति ॥**

( प्रदीपः ) उक्तं वेति । असिद्धत्वमेवाऽत्र प्रतिषिद्धमित्यर्थः । स्वरे इति । अचीत्यर्थः । **बहिष्पदलक्षणेइति** । द्वितीयपदव्यवस्थित इत्यर्थः । तेनैकपदव्यवस्थितेऽच्यसिद्धे ईत्वोत्वे । तेनाऽमुयाऽमुयोरित्यत्राऽयादेशो भवत्येव । **प्रगृह्यसंज्ञायां चेति** । प्रगृह्यसंज्ञायामेव सिद्धत्वेन सिद्धे लक्ष्ये प्रपञ्चार्थः पूर्ववाक्योपन्यासः ॥

**(उद्द्योतः) द्वितीयेति** । द्वितीयपदस्थेऽचि यत्कार्यं तत्राऽसिद्धत्वं नेत्यर्थः । अन्ये तु '**अथवा वचनसामर्थ्या**'दित्यादि भाष्ये भाष्यकृत एवोक्तिः । अतएव सांप्रतपुस्तकेषु वार्तिकाऽपाठ इत्याहुः । अन्ये तु अन्त्ये '**उक्तं वे**'त्यत्र वार्तिकत्वं मत्वा कोशे वार्तिकपाठो भ्रष्ट इत्याहुः॥ **सिद्धे इति** । प्रगृह्यत्वे सिद्धत्वमयादीन् प्रति सिद्धत्वं विना सप्रयोजनं नेति सामर्थ्यात्तान्प्रत्यपि तौ सिद्धाविति भावः ॥

१ 'यद्यत्र' । २ **पदान्तेति** । 'एङः पदान्तादती'त्यतः पदान्तग्रहणमनुवर्तते, तच्च प्रथमया विपरिणम्यते, तेन पदान्ते वर्त्तमाना ईदादय इत्यर्थान्नदोष इत्याशयः । ३ 'अमीअत्रेतिन' पा० । ४ **एदन्तम्**–एद्ग्रहणम् । ५ स्वरितत्वाभावादनुवृत्त्यभावान्न निवृत्तिरित्यर्थः । ६ लुप्तं स्यात् । ७ **नापीति** । तस्याऽसिद्धत्वादित्याशयः । **ते**=ते वयम् । ८ 'मप्याह' । ९ 'ईदूदर्थश्चेदूदिति' । १० **उक्तं**–'स्वरितोवानुदात्ते'इत्यत्रोक्तम् । ११ वैपरीत्यंक्वचित् । १२ '**सिद्धे वक्तव्ये**'इत्यंशस्तु भाष्यकृतो वार्तिकार्थपूर्तयेऽध्याहारग्रन्थ इत्यन्ये ।

[ आक्षेपवार्तिकम् ]

॥*॥ तत्र सकि दोषः ॥*॥

तत्र सककारे दोषो भवति–अमुकेऽत्र॥

( प्रदीपः ) तत्र सकि दोष इति । मात्परं यदीदाद्यन्तमिति दोषोपन्यासः । पूर्वसूत्रे हि तदन्तं गृहीतमितीहापि तदन्तस्यैवानुवृत्तिरिति भावः ॥

( उद्द्योतः ) विशेष्याऽसंनिधाने कथं तदन्तविधिरत आह–पूर्वसूत्रे इति। अर्थाऽधिकारादिति भावः ॥

[ समाधानवार्तिकम् ]

॥*॥ न वा ग्रहणविशेषणत्वात् ॥*॥

न वैष दोषः ॥ किं कारणम् ?॥ 'ग्रहणविशेषणत्वात्' । न माद्ग्रहणेन ईदाद्यन्तं विशेष्यते ॥ किं तर्हि ?॥ ईदादयो विशेष्यन्ते–'मात्परे ये ईदादय'–इति॥

( प्रदीपः ) स्वरितत्वेन शब्दमात्रमनुमीयत इति उत्तराऽभिप्रायः। तत्र माद्ग्रहणेन गृह्यमाणमीदूदेद्विशेष्यते तेनामुकेत्रेत्यत्र व्यवधानाद्दोषाऽभाव एव । योगविभागे दोषप्रसङ्गादेदन्तमिति निवृत्तमित्युक्तम् । एकयोगे तु तन्निवृत्त्या न प्रयोजनमिति 'न वा ग्रहणविशेषणत्वा'दित्युत्तरमुक्तम् ।

( उद्द्योतः ) शब्दमात्रमिति । एवंच विशेष्याऽभावान्न तदन्तविधिरिति भावः ॥ [ अदसो मात् ]

शे ॥ १ । १ । १३ ॥

( आक्षेपभाष्यम् )

इह कस्मान्न भवति–काशे कुशे वंशे इति?॥

( प्रदीपः ) शे । इह कस्मादिति । अत्र हि प्रत्यक्षमेव 'शे' इति रूपम् । 'युष्मे' 'अस्मे'इत्यत्र तु शकारस्याऽनुबन्धस्य स्मरणादनुमेयमिति प्रश्नः ॥

( उद्द्योतः ) शे । प्रत्यक्षमेवेति । एवंच इहेतिभाष्यस्य–इहैवेत्यर्थः । युष्मे इति । 'सुपां सुलु'मिति विभक्त्यादेशः शेशब्द इत्यर्थः ॥

[ समाधानवार्तिकम् ]

॥ * ॥ शेऽर्थवद्ग्रहणात् ॥ * ॥

अर्थवतः शेशब्दस्य ग्रहणम् । न चैषोऽर्थवान् ॥

( प्रदीपः ) शेऽर्थवद्ग्रहणादिति । 'स्वशब्दस्ये'त्येवाऽन्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपपरिग्रहे सिद्धे रूपवदर्थस्याप्यङ्गीकरणार्थं 'रूप'ग्रहणं कृतम्, अत्र च 'श' शब्दोऽनर्थकः, सप्तम्येकवचनं स्वर्थवत्, समुदायोऽर्थान्तराऽप्रादुर्भावादनर्थकः॥

( उद्द्योतः ) शेश्चासावर्थवांश्च तस्य ग्रहणादित्यर्थः। शक्तिग्रहनिरपेक्षप्रतीतिकत्वेनाऽन्तरङ्गत्वम् । अर्थप्रतीतावपि प्रतीयमानत्वमहेयत्वम् । शब्दान्तरैरप्रत्यायनादसाधारणत्वात् । अप्रादुर्भावोऽप्रतीतिः ॥

( आक्षेपभाष्यम् )

एवमपि 'हरिशे' 'बभ्रुशे' इत्यत्रापि प्राप्नोति ॥

( प्रदीपः ) एवमपीति । अत्र हि मत्वर्थीयसप्तम्येकवचनयोरर्थवतोः समुदायोऽर्थवानेव,अवयवधर्मानुविधानात्समुदायस्येति प्रश्नः ॥

( उद्द्योतः ) मत्वर्थीयो–लोमादिशः ॥

( एकदेशिनःसमाधानभाष्यम् )

एवं तर्हि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'त्येवं न भविष्यति ॥

( प्रदीपः ) लक्षणेति । प्रतिपदोक्ते हि झटिति प्रतिपत्तिर्भवति, लाक्षणिके तु लक्षणानुसन्धानद्वारेण बहिरङ्गेति न तस्य ग्रहणम् ॥

( सिद्धान्तिनःपूर्वोक्तसमाधानाभ्युपगमभाष्यम् )

अथ वा पुनरस्तु–'अर्थवद्ग्रहणे नानर्थकस्ये'ति ॥ कथं हरिशे बभ्रुशे इति ? ॥ एकोऽत्र विभक्त्यर्थेनार्थवान् , अपरस्तद्धितार्थेन । समुदायोऽनर्थकः ॥ [शे]॥

(प्रदीपः) अथ वेति । अर्थवत्समुदायस्यापि

---

❀ राजलक्ष्मीः ❀

१ अमुकेऽत्रेत्यत्र 'अम्'–इति मान्तं, तत्परं यदीदाद्यन्तम्–'उके'इति दोषोपन्यास इत्यवधेयम् । २ शब्दमात्रमिति । शब्दाधिकार एवेत्यर्थः । ३ तत्र–तथाऽनुवृत्तौ । ४ ननु पूर्वमेदन्तमितिनिवृत्तमित्युक्तेरमुकेत्रेत्यत्र न दोष इति 'नवाग्रहणे'ति समाधानं व्यर्थमत आह–योगेति । ५ एदन्तनिवृत्त्या । ६ 'कुशे' पा० । ७ अत्र हीति । काशे इत्यादौ हि । हिः क्वचिन्न । ८ 'न चायं पा० । ९ लोमादिश इति । उभयत्रेति भावः ॥ १० अत्र अन्तरङ्गबहिरङ्गशब्दाभ्यां शीघ्रोपस्थितिकत्व–विलम्बोपस्थितिकत्वे उच्येते । तयोरेव तद्बीजत्वात् । न तु अत्र तत्परिभाषाविषयत्वम् ॥ ११ 'कथं तर्हि' । १२ एकोऽन्यो द्वितीयः । अपरः–आद्यः ।

कस्य चिदानर्थक्यं, यथा दशदाडिमादिवाक्यस्य, पदार्थानां परस्परसमन्वयाऽभावात्। इहापि 'हरिश'-शब्दवाच्यार्थगतसङ्ख्याधिकरणशक्तिप्रतिपादनार्थं प्रवृत्ता सप्तमी न 'श'प्रत्ययमात्रप्रतिपाद्येनाऽर्थेनाऽन्वेतीति' 'शे'शब्दस्याऽऽनर्थक्यम् ॥ [ शे ] ॥

( उ० ) आनर्थक्यमिति। प्रत्यक्षानुमानिकन्यायापेक्षया रूपग्रहणा³नुगताऽर्थवत्परिभाषा प्रबलेति भावः॥[शे]॥

[ आक्षेपभाष्यम् ]

**निपात इति किमर्थम् ? ॥**

( प्रदीपः ) निपात एकाजनाङ् ॥ निपात इति किमर्थमिति । निपातस्यैवैकाचोऽर्थवत्त्वात् प्रत्ययस्य केवलस्य प्रयोगाऽभावादानर्थक्यात्कल्पितरूपत्वात्, कल्पनायाश्च नियमाऽभावात्प्रश्नः ॥

(उ०) निपात । आनर्थक्यादिति । अर्थवत्त्वाऽनिश्चयादित्यर्थः। तत्र हेतुः-कल्पितरूपत्वादिति ॥ ततः किं, तत्राह-कल्पनाया इति । अत एव केचिच्छतिपमन्ये शप्तिपौ वदन्ति । तत्रेयतो⁴ऽर्थवत्त्वमिति न निश्चेतुं शक्यत इत्यर्थः। ननु निपातग्रहणाऽभावे एकाजिति वर्णग्रहणादर्थवत्परिभाषाया अप्रवृत्तावर्थवद्ग्रहणे मानाऽभाव इति चेन्न। बहुव्रीहिरित्याशयात्। गौणमुख्यन्यायस्य तु नेह प्रवृत्तिः, पर्युदासेनैवाऽऽरूपत्वे लब्धे एकाज्ग्रहणस्य गौणमुख्यसंग्रहार्थत्वात्, न्यायाऽनित्यत्वाच्च। एतेन सत्यभिधाने-ऽनिरिरभवत्-ई अभवदित्यादौ प्रगृह्यत्वं न स्यात्, गौणमुख्यन्यायादिति परास्तम् । अत एवौदित्यत्रैव च्व्यन्तप्रतिषेध आरब्धः ॥

[ समाधानभाष्यम् ]

**चकाराऽत्र, जहाराऽत्र ॥**

(प्र०)चकारात्रेति। अन्वयव्यतिरेकाभ्यां प्रत्ययस्याप्यर्थवत्त्वमिति भावः। निपातो⁵ऽपि केवलो न प्रयुज्यते, द्योतकत्वादिति साम्यमेव निपातप्रत्यययोः। अततेर्डः अः। अ आगच्छ आ⁶गच्छेत्यपि प्रत्युदाहरणम् ॥

(उ०) अन्वयेति। व्याकरणानुसन्धानाऽनुगृहीताभ्यामित्यर्थः। तस्यैव चाऽस्मच्छास्त्रप्रवृत्त्युपयोगित्वादिति भावः। वस्तुतोऽनर्थकनिपातेऽपि अस्य प्रवृत्तेरोत्सूत्रे भाष्ये वक्ष्यमाणत्वादत्राऽर्थवत एव ग्रहणमिति न नियमः। प्रश्नाशयस्तु-अनाङिति पर्युदासादप्रत्यस्य ग्रहणमिति। उत्तराशयस्तु-पर्युदासेन तथाऽऽश्र⁶यणे न मानं, निपातग्रहणादेव। तेन प्रत्ययानुकरणे एतत्प्रवृत्तिरिति। अ आँगच्छेत्यत्रापि प्लुते प्रकृतिभावो दुर्वार इति परास्तम् प्लुताऽभावे कथंचिदुदाहरणत्वं यदि तर्हि सवर्णदीर्घे तथा बोधः॥

[ प्रश्नतत्समाधानभाष्यम् ]

**एकाजिति किमर्थं ? ॥ प्रेदं ब्रह्म । प्रेदं क्षत्रम् ॥**

( प्र० ) एकाजिति किमर्थमिति। एकग्रहणसामर्थ्याद्बहुव्रीहिं मन्यते, ततश्च 'प्रेदं ब्रह्मे'त्यनिष्टनिवृत्तिर्न कृतेति प्रश्नः ॥

( उ० ) एकग्रहणेति । स्वाङ्गसमुदाये स्वाङ्गत्वाऽभाववदच्समुदायेऽच्त्वाऽभावेनैकग्रहणं विनापि कर्मधारयाऽर्थलाभादिति भावः ॥

[ समाधानासङ्गतिप्रदर्शनभाष्यं ]

**एकाजित्यप्युच्यमानेऽत्रापि प्राप्नोति । एषोऽपि ह्येकाच् ॥**

[ समाधानोपपादभाष्यं ]

**एकाजिति नायं बहुव्रीहिः-एकोऽज्यस्मिन्सोऽयमेकाच्, एकाजिति ॥ किं तर्हि ? ॥ तत्पुरुषोऽयं समानाधिकरणः-एकः अच् एकाच्, एकाजिति ॥**

( प्र० ) तत्पुरुषोऽयमिति । अन्तरङ्गत्वाद्वृत्तिपदार्थप्राधान्याच्चेति भावः ॥

( उ० ) अन्तरङ्गत्वे हेतुमाह-वर्तीति ॥

[ आक्षेपभाष्यम् ]

**यदि तत्पुरुषोऽयं समानाधिकरणो, नार्थ एकग्रहणेन ॥**

[ प्रत्याक्षेपभाष्यम् ]

**इह कस्मान्न भवति-प्रेदं ब्रह्म, प्रेदं क्षत्रम् ? ॥**

❀ राजलक्ष्मीः ❀

१ 'वाक्ये'। २ 'पादनप्रवृत्ता'। ३-अनुगता-सूचिता । ४ कश्चिन्न । ५ कैयटोक्तिं दूषयति-वस्तुत इति। अत्र-निपातएकाजित्यत्र। ६ तथाश्रयणे=अप्रत्ययस्य ग्रहणे। निपातेति। अन्यथा तद्वैयर्थ्यं स्पष्टमेव। ७ अततेरित्यत्रापि दूषयन्नाह-अ-आगच्छेतीति। प्लुते-दूराद्धूते चेत्यनेन विहिते प्लुते। ८ इत्युच्यमाने=इत्युच्यमानेऽपि। एषः-'प्र' शब्दः। ९ एकोऽजस्मिन्' पा०। १० 'सोऽयमेकाजिति'। ११ समानाधिकरणः-कर्मधारयः समासः। १२ 'एकोऽजेकाजिति' पा०। १३ 'तत्पुरुषः समाना' पा०।

( उ० ) भाष्ये–इह कस्मादिति । अजन्तो निपात इत्यर्थ इति प्रश्नः ॥

[ प्रत्याक्षेपनिरासभाष्यम् ]

**'अजेव यो निपात' इत्येवं विज्ञास्यते ॥**

(उ०) **अजेव य इति** । निपातेनाऽज्विशेषणादित्यर्थः ॥

[ प्रश्नतत्समाधानभाष्यम् ]

**किं वक्तव्यमेतत् ? ॥ न हि ? ॥ कथमनुच्यमानं गंस्यते? ॥ 'अज्ग्रहणसामर्थ्यात्' । यदि हि अचाऽन्यच्च तत्र स्यादज्ग्रहणमनर्थकं स्यात् ॥**

( उ० ) **किं वक्तव्यमिति** । निपातस्य न्यायप्राप्तविशेष्यत्वाऽभावायेत्यर्थः ॥ **यदि हीति** । अजन्तग्रहणेऽज्ग्रहणवैफल्यमिति भावः ॥

[ सामर्थ्यानुपपत्तिभाष्यम् ]

**अस्ति[2] ह्यन्यद्[3]ज्ग्रहणस्य प्रयोजनम् ॥ किम् ? ॥ अजन्तस्य यथा स्यात् । हलन्तस्य माभूत् ॥**

[ सामर्थ्योपपत्तिभाष्यम् ]

**नैव दोषो न प्रयोजनम् ॥**

( प्र० ) **नैव दोष इति** । ननु पुरोऽह्निरिति हलन्तस्य प्रकृतिभावाद्रोरुत्वं न स्यात् ! नैष दोषः, प्रगृह्यसंज्ञायां रुत्वस्याऽसिद्धत्वात्, सकारस्य च कार्यान्तराऽप्रसङ्गात् । उत्वे तु रुत्वमाश्रयात्सिद्धम् ।

( उ० ) **प्रगृह्यसंज्ञायामिति** । ननु सान्तस्य प्रगृह्यत्वे एकदेशविकृतन्यायेन रान्तस्यापि तत्त्वात्प्रकृतिभावः स्यादिति चेन्न, प्रकृतिभावेऽप्यसिद्धत्वात् ॥

[ सामर्थ्योपक्षयप्रदर्शनभाष्यम् ]

**एवमपि कुर्तएतत्–द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः 'आद्यन्तवदेकस्मिन्'इति च 'येन विधिस्तदन्तस्ये'ति च,—इयमिह परिभाषा भविष्यति–'आद्यन्तवदेकस्मि'न्निति, इयं च न भविष्यति 'येन विधिस्तदन्तस्ये'ति ? ॥**

( प्र० ) **एवमपीति** । अन्यतरनिवृत्त्याऽज्ग्रहणस्यार्थवत्त्वादज्मात्रं गृह्यते, तदन्तं निरस्यते । विपर्ययस्तु न भवतीति विशेषाऽभावात्प्रश्नः ॥ पारार्थ्यसामान्यात्संज्ञातिदेशौ परिभाषाशब्देनोक्तौ ॥ **सावकाशयोरिति** । निरवकाशस्य बाधकत्वादेवमुक्तम् । तत्र तदन्तविधेरवकाशः–'ओरावश्यके' पाव्यं लाव्यं । आद्यन्तवद्भावस्यावकाशः 'मिदचोऽन्त्यात्परः'–तानि यानीति । अत्र हि साक्षादन्त्यग्रहणमस्तीति तदन्तविध्यभावः । **समवस्थितयोरिति** । इह प्राप्तयोः ॥

( उ० ) अथ निपातस्य विशेष्यतया 'अजन्त' इति व्याख्यानेऽपि अज्ग्रहणसामर्थ्यान्मुख्याऽजन्तपरिग्रहेण केवलाऽज्रूपव्यावृत्तिरज्ग्रहणस्य फलं स्यादिति मनसि निधाय पृच्छति–**एवमपीति** भाष्ये । **अन्यतरनिवृत्त्येति** । निपातस्य विशेषणत्वे तदन्तपरिभाषाऽप्रसक्तिरेव निवृत्तिः । विशेष्यत्वे स्वजिति विशेषणसामर्थ्यात्तदन्तस्यैव ग्रहेण मुख्याऽजन्तपरिग्रहादाद्यन्तवदित्यस्य निवृत्तिरिति भावः ॥ विपर्ययः–निपातस्य विशेष्यत्वेनाऽजन्तपरिग्रहः, केवलाऽचो निवृत्तिरिति । **इतिविशेषाभावादिति** । अत्र (चँ) कारणाऽभावादित्यर्थः। **संज्ञा**–'येनविधि'रिति। **अतिदेशः**–'आद्यन्तव'दिति । **लाव्यमिति** । 'उङ् शब्दे' इत्यत आवश्यके ण्यदनभिधानान्नेति भावः ॥

[ सामर्थ्योपपादनभाष्यम् ]

**आचार्यप्रवृत्तिर्ज्ञापयति–इयमिह परिभाषा भवति—'आद्यन्तवदेकस्मिन्नि'ति, इयं चँ न भवति 'येन विधिस्तदन्तस्ये'ति, यदयम्—'अना'ङिति प्रतिषेधं शास्ति ॥**

( प्र० ) **आचार्यप्रवृत्तिरिति** । यदि तर्हि लिङ्गेन तदन्तविधिर्निराक्रियते तदा तन्मूलाद्यन्तवत्परिभाषा कथं प्रवर्तेत । नैष दोषः, आद्यन्तवदित्यस्योपस्थानाय तदन्तविधिः प्रथमं सन्निधीयते; पश्चात्तु लिङ्गात्परित्यज्यते । अथ वा लिङ्गादज्ग्रहणं निपातेन विशेष्यत इति विशेष्येण तदन्तविधेरभावादतिदेशस्यापि मा भूत्प्रवृत्तिः। तत्फलसंपत्त्या तूक्तं–**'परिभाषा भविष्यती'ति ॥**

( उ० ) **यदि तर्हीति** । एवंच **इयमिह भवतीति**

---

**॥ राजलक्ष्मीः ॥**

१ 'विज्ञायते' पा० । २ अस्य 'नानर्थक' मित्यादिः । ३ 'अस्त्यन्यद' पा० । सामर्थ्यात्तदन्तविधिर्वार्यते इत्यत्र विनिगमकाऽभावाद्व्यपदेशिवद्भावस्यैव सामर्थ्यादप्रवृत्त्या अनतिदिष्टाऽजन्तस्यैव 'प्रेद'मित्यादौ भवति नातिदिष्टाजन्तस्य 'अ' इत्यादेरित्यस्यस्यापि वक्तुं शक्यत्वमित्याशयः । ५ चः कचिन्न ।

भाष्यमनुपपन्नमिति भावः ॥ ननु पूर्वं प्रवर्त्त्य पश्चात्परित्यागाऽपेक्षयाऽप्रवृत्तौ लाघवमित्यभिप्रेत्याह—**अथवेति** ॥

[ समाधानभाष्यम् ]

**एवं तर्हि—सिद्धे सति यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति, तज्ज्ञापयत्याचार्यो 'ऽन्यत्र वर्णग्रहणे जातिग्रहणं भवती'ति ॥**

**किमेतस्य ज्ञापने प्रयोजनम्? ॥ 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्ध'मिति यदुक्तं[1], तदुपपन्नं भवति ॥**

(प्र०) एवं तर्हीति । संज्ञया विधीयमानत्वात् प्राधान्यात् संज्ञिनो गुणत्वात् 'पशुना यजेते'तिवत् सङ्ख्याविवक्षायां सिद्धायामेकग्रहणं[2]मन्यत्र जातिसंप्रत्ययार्थम् । अच्समुदायग्रहणशङ्काया निरासार्थं ह्येकग्रहणं ज्ञापनफलं संपद्यते । किं पुनः[3] स्याद्यदत्राऽच्समुदायस्य ग्रहणं स्यात् ? । उच्यते । इह 'अइउ अपेही'ति समुदायस्यैका संज्ञा स्यान्नावयवानां,समुदायैकाज्द्विर्वचनवदित्यन्त्यस्यैव[4] प्रकृतिभावाद्यणादेशो न स्यात् । पूर्वयोस्तु स्वरसन्धिः स्यात् । अच्समुदाय[5]परिग्रहानुरोधित्वा[6]च्च निपातसमुदायो गृह्येत,एकनिपातस्याऽच्समुदायस्याऽभावात्।

(उ०) ननु एकग्रहणाऽभावेऽच्समुदायस्य स्यादिति तन्निवृत्त्यर्थमेकग्रहणं, तत्राह—**संज्ञाया इति । गुणत्वादिति** । संज्ञोपकारकत्वा[7]दित्यर्थः । पशोरपि यागोपकारकत्वाद्गुणत्वम् । नहि यागः पश्वर्थः, अपि तु यागार्थः पशुः । 'ग्रहं संमार्ष्टी'त्यादौ तु ग्रहार्थत्वात्संमार्गस्य ग्रहस्य प्राधान्यमिति न तद्गतसङ्ख्या विवक्षितेति भावः । परे[8] तु संज्ञा स्वकार्यद्वारा संज्ञ्युपकारिका, न तु संज्ञी संज्ञोपकारकः । अन्यथा ग्रहोऽपि कर्मत्वेन संमार्गार्थः स्यादिति 'विधेयविशेषणं विवक्षितमनुवाद्यविशेषणमविवक्षित'मिति मीमांसकमर्यादैव ज्यायसी, भाष्यसम्मता चेतीदं चिन्त्यम् । तस्मात् स्वाङ्गसमुदाये स्वाङ्गत्वाऽभाववदच्समुदायेऽच्त्वाऽभावान्न तद्ग्रहणप्रसक्तिरित्येकग्रहणं विनापि सिद्धिरिति तज्ज्ञापकमिति भाष्याशय इत्याहुः । **'जातिग्रहण'**मित्यस्य तज्ज्ञात्या[9]श्रयानेकव्यक्तिग्रहणमित्यर्थः । अन्यथा जातिग्रहणेऽपि जातेरेकैकव्यक्तिव्यङ्ग्यतयाऽसंगतिरेव । प्रवृत्तिनिमित्ततया जातिग्रहणस्य सर्वत्र सत्त्वेन तस्याऽवक्तव्यत्वाच्च । **इहेत्यादि** । अत्रेदं चिन्त्यं—'समुदा[10]यसंज्ञयाऽवयवानामननुग्रहान्नाऽत्र द्विर्वचनन्यायः । नापि निपातसमुदायस्य निपातग्रहणेन ग्रहणम् , स्वाङ्गसमुदायस्य स्वाङ्गग्रहणेनेवैकैकत्र सूत्रचारितार्थ्या'दिति । तस्मात्तितउशब्दैकदेश 'अउ'शब्दानुकरणे उक्तसमुदायानुकरणे वाऽनितिपरे निपातसंज्ञके 'अउ अकरो'दित्यादौ प्रगृह्यत्वं स्यात्तद्वारणायैकग्रहणमिति तत्त्वम् । भाष्ये—**दम्भेरिति** । दम्भेः सनि **दम्भ** इच्चेतीत्त्वे सनोऽन्तेति इडभावपक्षे इक्समीपो नकारो न ततो झलादिः सन् परः, यतश्च भात्परः सन्न स इक्समीप इति 'हलन्ताच्चे'ति कित्त्वाऽभावे 'अनिदिता'मिति नलोपो न स्यादिति चोद्ये जात्याश्रयानेकस्येक्समीपत्वं, सनश्च तस्मात्परत्वमिति कित्त्वे धिप्सतीति सिद्धिरित्यर्थः । अनेन[11] सामीप्यमव्यवहिते एवेति सूचितम् ॥

[ प्रश्नभाष्यम् ]

**अनाङिति किमर्थम् ? ॥**

(प्र०) अनाङिति किमर्थमिति । ङिदङितोराकारयोर्विषयविभागप्रदर्शनाय प्रश्नः ॥

(उ०) **प्रदर्शनाय**—प्रदर्शनं कारयितुमित्यर्थः ।

[ समाधानभाष्यम् ]

**आ उदकान्तात्-ओदकान्तात्[12] ॥**

[ प्रश्नभाष्यम् ]

**इह कस्मान्न भवति—आ एवं नु मन्यसे, आ एवं किल तदिति ? ॥**

(प्र०) **इह कस्मादिति** । अनुबन्ध[13]निवृत्तौ विशेषाऽपरिज्ञानात्प्रश्नः ॥

---

१ **यदुक्तमिति** । 'हलन्ताच्चे'त्यत्र वार्तिककृतोक्तम् । २ **एकग्रहणं**—'निपातएका'जित्यत्रैकग्रहणम् । **अन्यत्र**—इतोऽन्यत्र । ३ तदेतत्स्पष्टयति—**अजिति** । **हि**—यतः । **एकग्रहणम्** । 'प्रकृतसूत्रे' इति शेषः । **ज्ञापनफलं**—ज्ञापनरूपफलवत् । ३ शङ्कते—**किं पुनरिति** । ४ 'दित्यन्तस्यैव' । ५ ननु प्रत्येकं निपातत्वेन समुदायस्याऽतत्वात्कथमियमापत्तिरत आह—**अजिति** । चस्त्वर्थे । **निपातसमुदायः**—अ-इ उ इति । ६ 'नुरोधाच्च' । ७ संस्कारकत्वरूपगुणत्वस्य प्रकृतेऽभावादाह—**संज्ञोपकारेति** । ८ कैयटोक्तं दूषयति—**परेत्विति** । **स्वकार्येति** । तत्तच्छास्त्राव्यवहितस्वकार्येत्यर्थः । **कर्मत्वेन**—संमार्गकर्मत्वेन । **मीमांसकेति** । 'गुणगता सङ्ख्याऽविवक्षिते'ति मीमांसकैः कुत्राप्यनुक्तेः । अतएव ग्रहोद्देशेन संमार्गविधानेपि तस्य न प्राधान्यम् । ९ 'तज्ज्ञात्याश्रयैकानेकव्यक्तिग्रहणं'पा० । **तदिति** । उपात्तेत्यर्थः । यथासम्भवमिति भावः । यथाश्रुतार्थत्यागे बीजमाह—**अन्यथेति** । मदुक्तार्थानङ्गीकार इत्यर्थः । १० कैयटोक्तं द्विर्वचनवदिति दृष्टान्तं विघटयति—**समुदायेति** । भाष्यं स्वयं योजयति—**तस्मादिति** । ११ **अनेन**—भाष्येण । १२ आङ्योगे पञ्चमीयम् । १३ **निवृत्तौ**—निवृत्तौ सत्याम् ।

[ समाधानभाष्यम् ]

**सानुबन्धकस्येदमाकारस्य ग्रहणम्, अननुबन्धकश्चात्राऽऽकारः ॥**

[ शङ्काभाष्यम् ]

**क्व पुनरयं सानुबन्धकः, क्व निरनुबन्धकः ? ॥**

[ समाधानभाष्यम् ]

**'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' ॥**

( प्र० ) अर्थवशाद्विशेषाऽवसाय इत्युत्तरम्। **ईषदर्थे**—'आ उष्णमोष्ण'मिति। 'आङीषदर्थ' इति चोक्तम्। **क्रियायोगे**—आ इतः–एतः। प्रादिषु हि ङित्पठ्यते। 'आङ्मर्यादाभिविध्यो'-रिति समासविधौ ङिन्निर्दिष्टः। आ उदकान्तात् ओदकान्तात्। आ अहिच्छत्रात् आऽहिच्छत्रादिति। विना तेनेति मर्यादा। सह तेनेत्यभिविधिः। पूर्वप्रक्रान्तस्य वाक्यार्थस्याऽन्यथात्वद्योतनायाऽऽकारः प्रयुज्यते। 'आ एवं नु मन्यसे'। नैवं पूर्वमंस्थाः, संप्रति मन्यस इति। वाक्यारम्भसूचनायाऽऽकार इत्यपरे। तथा स्मृतेः सूचक आकारः प्रयुज्यते, ततः स्मृतोऽर्थो निर्दिश्यते—'आ एवं किल त'दिति ॥

( उ० ) किञ्चिद्विधानायोपात्तस्याऽन्यविधानाय पुनरुपादान**मन्वादेशः**। प्रकृते च विधानद्वयाऽभावा**देत**मित्येनादेशो न कृत इत्याहुः। **विना तेनेत्यादि**। यथा 'आ काशीं वृष्टो देव' इत्यादौ काशीमभिव्याप्य, काशीं वर्जयित्वेति वाऽर्थः ॥

## ओत् ॥ १ । १ ॥ १५ ॥

[ पूर्वपक्षिणः प्रश्नभाष्यम् ]

**किमुदाहरणम् ? ॥**

[ सिद्धान्तिनःसमाधानभाष्यम् ]

**आहो इति, उताहो इति ॥**

[ पूर्वपक्षिणःप्रयोजननिरासभाष्यम् ]

**नैतदस्ति प्रयोजनम्। निपातसमाहारोऽयम्। आह-उ-'आहो' इति। उत-आह-उ-'उताहो' इति। तत्र 'निपात एकाजना'ङित्येव सिद्धम् ॥**

( प्र० ) **ओत्**। **निपातसमाहारोऽयमिति**। अनर्थकानामपि निपातानां कमीमिदु इत्यादीनां दर्शनादर्थभेदाऽभावेऽपि निपातसमाहारत्वमुक्तम् ॥

( उ० ) **ओत्**। **दर्शनादिति**। 'वेदे चादीनां पादपूरणार्थानां च लोकेपी'त्यादिः। **अर्थभेदाभावेऽपि**। तन्नानात्वाऽभावेऽपि, अवयवा अनर्थकाः, निपातसमुदाय एवाऽर्थवानिति भावः। 'उ'शब्दोऽत्र निरनुबन्धकः। तेन 'उञ' इत्यनेन सिद्धिरिति न भ्रमितव्यम् ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**एवं तर्ह्येकनिपाता इमे ॥**

( प्र० ) **एवं तर्हीति**। चादिषु तथा पाठादिति भावः ॥

[ निपातसमुदायत्वपक्षे समाधानभाष्यम् ]

**अथवा प्रतिषिद्धार्थोऽयमारम्भः। ओ षु यातं मरुतः। ओ षु यातं बृहती शक्करी च। ओ चित्सखायं सख्या ववृत्याम् ॥**

(प्र०) **ओ षु यातमिति**। 'आ उ ओ' इत्यत्राऽन्तवद्भावाद्भवत्ययमाङ्ित्यनाङिति प्रतिषेधः प्राप्नोति, पर्युदासे तु सति न दोषः, तत्र ह्याङ्सदृशस्योकारस्याऽऽङा सहैकादेश आदिवद्भावादुकारग्रहणेन गृह्यत इति सिध्यत्येव प्रगृह्यसंज्ञा। तस्याश्च प्रयोजनं क्वचिच्छाखायाम्—**'ओ आयात'**मिति पाठे प्रकृतिभावः ॥

(उ०) **पर्युदासे त्विति**। वस्तुतः पर्युदासेऽपि दोषः, आङ्भिन्नत्वस्याऽशास्त्रीयत्वात्। न च स्वाश्रयमाङ्भिन्नत्वम्, आङ्त्वस्य पूर्वान्त(वं)त्त्वेनातिदेशेऽतिदिश्यमानविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यस्य निवृत्तेरतिदेशस्वभावसिद्धत्वात्। न चाऽन्तवत्त्वमेवं दुर्लभं, शास्त्रीयकार्याऽभावादिति वाच्यम्। तत्रापि प्रतिषेधस्य गम्यतया शास्त्रतात्पर्यविषयत्वेन प्रगृह्यत्वाऽभावस्य शास्त्रीयतयाऽन्तवत्त्वप्रवृत्तेरिति बोध्यम् ॥ **तस्याश्चेति**। प्रगृह्येषु पदपाठे 'इति'शब्दप्रयोगनियमादपि फले विशेषो बोध्यः ॥

---

❀ राजलक्ष्मीः ❀

१ **इदम्**–अनाङिति। २ **अत्र**–आ एवमित्यादौ। ३ **उक्तं**–कुगतीति सूत्रे वार्त्तिककृतोक्तम्। ४ 'पूर्वोपक्रान्तवाक्यार्थं'। ५ **अन्यथात्वम्**–अनभिमतत्वम्। ६ **ननूञ**इत्यनेन सिद्धमिति वक्तव्ये **निपातेति** कथमुक्तमत आह–**उशब्दोत्रेति**। ७ निपातसमुदायस्वीकारे लाघवात्तत्पक्षेऽपि समाधत्ते–**अथवेति**। ८ क्वचिन्न। ९ कैयटोक्तं दूषयति–**वस्तुत इति**। १० **तत्रापि**–पर्युदासेऽपि।

[ आक्षेपवार्तिकं तद्भाष्यञ्च ]

॥ * ॥ ओतश्च्विप्रतिषेधः ॥ * ॥

**'ओदन्तो निपात'इत्यत्र च्व्यन्तस्य-प्रतिषेधो वक्तव्यः। अनदः अदः अभवत् अदोऽभवत्, [ अतिरः तिरः अभवत् ]—तिरोऽभवत् ॥**

(प्र०) **अदोऽभवदिति**। च्व्यन्तत्वेनाऽत्र निपातत्वम्, 'ऊर्यादिच्वी'त्यत्र निपाताधिकारात्। प्रतिषिद्धार्थत्वादस्य कथमत्र प्राप्तिरिति चेत्, उभयाऽर्थत्वाददोषः। तथा ह्योदन्तस्य निपातस्य प्रगृह्यसंज्ञा विधीयमाना प्रतिबन्धाऽभावाददोऽभवदित्यत्रापि भवति, 'ओ षु यात'मित्यत्रापि परत्वादनाङिति प्रतिषेधं बाधत इति प्रतिषिद्धार्थमपि स्यादिति को विरोधः ॥

(उ०) भाष्ये—**ओतश्च्वीति**। पूर्वसूत्रवदत्राप्यर्थाधिकाराद्गौणमुख्यन्यायस्याऽप्रवृत्तिरित्याशयः ॥ **प्रतिषिद्धार्थत्वादिति**। प्रतिषिद्धसंज्ञकं पदं 'प्रतिषिद्ध'पदेनोच्यते। **परत्वादिति**। 'निषेधाश्च बलीयांस'इत्यस्य तु नायं विषयः। तस्य पूर्वेण सह पाठात्तन्निषेधकत्वादिति भावः ॥

[ आक्षेपनिरासभाष्यम् ]

**न वक्तव्यः। 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्ये'त्येवं न भविष्यति ॥**

(प्र०) ओकारस्य प्रतिपदोक्तस्यग्रहणमित्युत्तरम्॥

(उ०) **प्रतिपदोक्तस्ये**ति। न च 'प्रतिषिद्धार्थोऽयमारम्भ'इति पूर्वभाष्याऽसङ्गत्याऽत्रैतत्परिभाषाया अप्रवृत्तिरेवाऽनित्यत्वादुचितेति वाच्यम्। अस्यैकदेश्युक्तत्वात् ॥

[ आक्षेपसाधकभाष्यम् ]

**एवमपि-अगौगौः समपद्यत—गोऽभवत्-अत्र प्राप्नोति ॥**

(प्र०) **एवमपीति**। ओकारस्यात्र प्रतिपदोक्तत्वमस्ति 'गमेर्डोः' इति साक्षादुच्चारणात्। यस्य हि साक्षादुच्चारणं नास्ति, 'आद्गुण'इत्यादिसामान्यलक्षणेन यद्रूपं निष्पाद्यते—तल्लाक्षणिकमुच्यते ॥

(उ०) तद्धनयन्भाष्ये आह-**एवमपीति**। ननुलक्षणेन प्रतिपादितत्वादिदमपि लाक्षणिकमत आह—**यस्य हीति** ॥

[ समाधानभाष्यम् ]

**एवं तर्हि 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय'इति। तद्यथा—'गौरनुबन्ध्योऽग्नीषोमीय'इति न वाहीकोऽनुबध्यते ॥**

(प्र०) **एवं तर्हीति**। गुणादागतो—**गौणः**। यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः मुखमिव प्रधानत्वान्मुख्यः। तत्र 'स्वं रूप'मित्यत्र रूपग्रहणेनाऽर्थपरिग्रहणस्य ज्ञापितत्वादर्थवतः कार्येण भवितव्यम्। स चाऽर्थः प्राथम्यान्मुख्य एव गृह्यते। गौणे ह्यर्थे शब्दः प्रवर्त्तमानो मुख्यार्थारोपेणैव प्रवर्तते। अनियतश्च गौणोऽर्थः। तस्माल्लौकिकोऽयं न्यायो—'गौणमुख्ययो'रिति। 'गोऽभव'दित्यत्र च जाड्यादिना धर्मेण गोत्वमारोपितमिति गौणत्वमर्थस्य। 'गोऽभव'दित्यत्र च वृत्तौ प्रकृतेः कर्तृत्वं, 'सद्भीभवन्ति ब्राह्मणा'इति बहुवचनदर्शनात्। प्रकृतौ च गोत्वमारोपितं, न तु मुख्यमिति प्रगृह्यत्वाऽभावः॥

( उ० ) **प्रधानत्वात्**-अर्थान्तरप्रतीतिनिरपेक्षतया प्रतीयमानत्वात्। तादृशोऽर्थबोधकत्वाच्छब्दस्यापि गौणत्वं, मुख्यत्वं च बोध्यम्। गौणमुख्यन्यायबीजं दर्शयितुमाह—**तत्र स्वरूपमिति**। प्राथम्यमेवोपपादयति—**गौणेहीति**। आरोपाय हि पूर्वं तदुपस्थितिरावश्यकीति भावः। **मुख्यार्थारोपेणेति**। आरोपितसिंहत्ववान् माणवकादिसमभिव्याहारे सिंहशब्दार्थ इति भावः। मुख्यस्यैव ग्रहणे युक्त्यन्तरमाह—**अनियतश्चेति**। सिंहशब्दस्य माणवकबलीवर्दादिषु प्रयोगादिति भावः। एतेन—,वर्णग्रहणे 'लक्षणप्रतिपदोक्त'-परिभाषाऽप्रवृत्तेरोकारस्य लाक्षणिकत्वमित्यादि चिन्त्यमित्यपास्तम्। अनयैव तस्याऽपि वारणात्। द्वावामश्चेत्यादेस्तज्ज्ञापकस्य लक्षणप्रतिपदोक्तपरिभाषाऽनित्यत्वमात्रज्ञापकतया

---

१ कचिन्न। २ **तस्य**—अनाङिति प्रतिषेधस्य। **पूर्वेण**—निपातएकाजित्यंशेनेत्यर्थः। **तन्निषेधेति**। **अनन्तरस्येति** न्यायात्। एतेन 'प्रतिषिद्धार्थोऽयमारम्भः' इति प्रतिज्ञाहानिर्दर्शिता। तथाचानेन प्रतिषिद्धार्थव्यवस्था व्यर्थमेव क्रियत इति भावः। एकनिपातपक्षे तु न काचिदनुपपत्तिरिति बोध्यम्। ३ **पूर्वेति**। तत्पक्षे सर्वेषां लाक्षणिकत्वात्। **अस्यैकेति**। एतेनैकनिपातपक्ष एव स्थापितोऽनेन, पक्षान्तरे सर्वेषा तत्त्वादेतत्समाध्यनुपपत्तिरिति निरस्तम्। ४ **इतीति**। इत्यनया परिभाषया गोऽभवदित्यत्र न भविष्यतीत्यर्थः। ५ तादृशतादृशेत्यर्थः। ६ **दर्शयितुं**—'स चार्थ' इत्यादिना प्रदर्शयितुम्। 'उपोद्घातमारचयती'ति शेषः।

७ **ओकारस्य**—भाष्योक्तगोऽभवदित्यत्रत्यौकारस्य। ८ **अनयैव**—गौणमुख्यपरिभाषयैव। ९ **उक्तसिद्धान्तमाह—द्वावामेति**।

वर्णग्रहणे सर्वत्र तदप्रवृत्तौ मानाऽभावाच्च। न चेयमपि अर्थवत्परिभाषामूलकत्वात्तद्वदेव विशिष्टरूपोपादानविषयेति कथमत्र वर्णग्रहणे प्रवर्ततां, तत्रैवाऽर्थोपस्थितेः सत्त्वादिति वाच्यं, 'निपात'इति विशिष्टरूपोपादानसत्त्वात्। निपातसंज्ञा हि चादिपदोपस्थितचादीनां सति संभवेऽर्थवतामेवेति ये सार्थकास्तेषां निपातपदेनाऽपि तत्तदर्थविशिष्टानामेवोपस्थितिरिति प्रकृतसूत्रस्थ**निपात**पदेन मुख्याऽर्थकनिपातानामेव ग्रहणं, न तु गौणाऽर्थकानामिति भावः। एवं च कार्यकालपक्षेऽपि 'च्व्यन्ता निपाता' इत्यस्याऽत्राऽनुपस्थितिः, एतत्परिभाषावशात्। विशिष्टरूपपदेन चाऽर्थवद्रूपमेवोच्यते ॥ प्रकृते गौणत्वमुपपादयति–**जाड्यादिनेति**। आरोपे बीजमाह–**प्रकृतेः कर्तृत्वमिति**। एवंच 'गोऽभव'दित्यस्य गोभिन्नकर्तृकं गोसदृशरूपेण भवनमर्थः। यत्र च योगीश्वरशापादिना मुख्यगोरूपप्राप्तिस्तत्र च्विर्नेष्यते इति गोसदृशरूपेण भवनप्रतीतेस्तस्य गौणत्वमिति भावः। ननु 'सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत'इति भाष्ये विकृतेरपि कर्तृत्वदर्शनादुक्तं–**वृत्ताविति**। एवं च च्व्यन्ते प्रकृतेरेव कर्तृत्वमिति भावः। प्रकृतेरेव कर्तृत्वे हेतुमाह–**सङ्घीभवन्तीति** ॥

[ वार्तिकवादिनः समाधानबाधकभाष्यम् ]

**कथं तर्हि वाहीके वृद्ध्यात्वे भवतः,–'गौस्तिष्ठति' गामानये'ति ? ॥**

[ न्यायाश्रयेण समाधानसाधकभाष्यम् ]

**अर्थाश्रय एतदेवं भवति। यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति। शब्दाश्रये च वृद्ध्यात्वे ॥**

(प्र०) **शब्दाश्रये चेति**। स्वार्थे वृत्तात्प्रातिपदिकाद्विभक्त्युत्पन्नायां कार्येषु कृतेषु शब्दान्तरसन्निधानाद्गौणत्वं प्रतीयते। तस्य च स्वार्थस्य मुख्यव्यपदेशो नास्ति, गौणापेक्षया सम्बन्धिशब्दत्वान्मुख्यव्यपदेशस्य गौणाऽभावेऽभावाच्छब्दाश्रये चेत्युक्तं न त्वत्रार्थो नापेक्षते। तत्र यथा 'श्वेतं छागमालभेते'ति गुणद्रव्ययोः श्रौतः क्रियासंबन्धो, वाक्यीयात्तु न्यायात् पश्चात्परस्परेण। एवं 'गां वाहीकमानये'ति पूर्वं क्रियाभिसंबन्धापेक्षया विभक्त्युत्पन्नायां वाक्यीयान्न्यायात्सामानाधिकरण्याद्गौणार्थप्रादुर्भावो भवतीति 'पदकार्येष्वेवायं न्यायो न प्रातिपदिककार्येष्वि'त्युक्तं **शब्दाश्रये चेति** ॥

(उ०) ननु **शब्दाश्रये** चेतिभाष्यस्याऽर्थरहितवर्णमात्राश्रये इत्यर्थः प्रतीयते, स चाऽयुक्तः, सर्वनामस्थानाऽम्शसाक्षिप्तप्रातिपदिकस्यौत इत्यनेन विशेषणादनयोरपि विशिष्टशब्दाश्रयत्वादत आह–**स्वार्थे इति**। स्वार्थादिप्रयुक्तकार्येण पूर्णस्य पदस्याऽर्थप्रतिपादनाय प्रयोगार्हस्य पदार्थान्तरान्वये बाधप्रतिसन्धाने गौणाऽर्थप्रतीतेरिति भावः। आक्षेपे[2], आक्षिप्तस्य वा शब्देऽन्वये मानाऽभावाच्च। **गौणापेक्षयेति**। मुख्यशब्दस्य गौणापेक्षया संबन्धिशब्दत्वात्। **गौणाऽभावे**––गौणस्य बुद्ध्यसंनिधाने, **मुख्यव्यपदेशस्य**–मुख्यपदस्याऽ**भावा**दित्यन्वयः। एवं च 'शब्दाश्रये चे'ति भाष्यस्य मुख्यव्यपदेशरहितस्वार्थबोधकप्रातिपदिकरूपशब्दाश्रये इत्यर्थः। पदव्यपदेशरहितस्य कार्यित्वेनाश्रयणमिति फलितमिति तात्पर्यम्। ननु द्वितीयादेः कर्मत्वा[3]द्यर्थकस्य कारकत्वज्ञानसापेक्षतया गां वाहीकमानये' त्यादौ विशिष्टस्य क्रियासंबन्धेन कर्मत्वेऽपि तदभिधानाय जायमाना द्वितीया समुदायस्याऽप्रातिपदिकत्वात्प्रत्येकं प्रवर्त्तते, ततश्च पूर्वमेव गौणत्वादात्वं न स्यादत आह–**तत्रेति। श्रौतः क्रियासंबन्ध इति**। द्वितीयाश्रुत्यनुपपत्त्या कल्पित इत्यर्थः। विभक्त्यन्तेन हि उपस्थिताऽर्थस्य क्रियान्वय इति ततः प्राग्गुणे साक्षात्परंपरासाधारण्येन द्रव्ये च साक्षात् सामान्य[4]तः क्रियाजन्यफलाश्रयत्वादिविवक्षयोभयत्र विभक्तिरिति भावः। **वाक्यीयान्न्यायात्**–आकाङ्क्षादिमूलकशास्त्रया। **पश्चात्**–विभक्त्युत्पत्त्यनन्तरम्। **एवमिति**। द्वितीयादेः सामान्यतः क्रियासंबन्धज्ञानापेक्षत्वात्तज्ज्ञानमूलकद्वितीयाद्युत्पत्तौ गोदार्थस्य वाहीकेऽन्वयः प[5]श्चादेव। एवंच कर्मणोरेव विशेष्यविशेषणभावो, न तु विशिष्टस्य कर्मत्वमिति भावः ॥ यत्तु–विभक्त्यर्थस्य क्रियाकारकसंबन्धरूपत्वेन तयोः संबन्धबोधः श्रुतिकृत इति श्रुतेर्वाक्यापेक्षया शीघ्रं प्रवृत्त्या प्रथमं तयोरन्वयबोधः, पश्चाद्गुणद्रव्ययोः परस्परान्वयबोधः। एवं 'गां वाहीकमानये'त्यादावपी'ति कैयटार्थं व्याख्याय[6] दूषयन्ति–'गां वाहीकं पाठये'त्यादौ यत्र गौणार्थप्रादुर्भावं विना क्रियासंबन्ध एवाऽसंभवी, तत्र पूर्वमेव गौणत्वावगतेरात्वाद्यनापत्तिरिति ॥ तदेतेन परास्तम्। विभक्त्यन्तस्यैव प्रयोगेण तत उपस्थितानामर्थानामितराऽन्वयेन प्रातिपदिकमात्रार्थेन पूर्वमन्वय इत्यस्य वक्तुमप्यशक्यत्वाच्च, तादृशबोधद्वयकल्पने गौरवाच्च, अनुभवाऽभावाच्च। किं च[7] अपदस्याऽप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थत्वग्रहेण 'अस्वं स्वं संपद्यते' 'अमहान्महान्भूतस्तद्भवती' त्यादौ भाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चाऽस्य न्यायस्य पदकार्यमात्रविषयत्वमुपात्तविशिष्टरूपके

❀ राजलक्ष्मीः ❀

१ व्यपदेशः–व्यवहारः। २ सिद्धान्तमतेनाह–**आक्षेप इति**। ३ धर्मपक्षे इदम्। धर्मिपक्षे तु कर्मत्वाद्यवच्छिन्नेत्यर्थः। ४ **सामान्यतः**–क्रियात्वेन रूपेण। ५ विभक्त्युत्पत्त्यनन्तरमेव। ६ **व्याख्यायेति**। शब्दकौस्तुभकृतो भाष्यव्याख्याकाराश्चेत्यादिः। ७ क्वचिन्न।

त्यपि बोध्यम् । अत एवात इञित्यादेः श्वशुरसदृशस्यापत्यमित्यर्थेऽपि प्रवृत्तिः। किं च गामित्युक्ते सर्वा क्रिया प्रसक्तेत्याद्यर्थवत्सूत्रस्थभाष्यबलात्संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवतीति वृद्धिसूत्रस्थभाष्याच्च सामान्यतः क्रियाजन्यफलाश्रयत्वादेरेव द्वितीयादिनियामकत्वेन मदुक्तव्याख्यैव तस्योचिता। प्रयोक्ताऽपि पदान्येवार्थे मुख्ये गौणे वा प्रयुयुक्षति, न तु प्रातिपदिकादिक्रमेणेति सुष्ठूच्यते–पदकार्येष्विति। सामानाधिकरण्यादिति। इदमुपलक्षणं, पठनादिक्रियान्वयादित्यपि बोध्यम् ॥

## उञ ऊँ ॥ १ । १ । १७ ॥

[ पूर्वपक्षिणः प्रश्नभाष्यम् ]

**इह कस्मान्न भवति—आहो इति. उताहो इति ? ॥**

(प्र०) उञ ऊँ । इह कस्मादिति । निपातसमाहारं मत्वा प्रश्नः ॥

(उ०) उञ ऊँ । प्रश्न इति । एवंचाऽत्र 'ऊँ'-आदेशः प्राप्नोतीति भावः ॥

[ तटस्थस्य समाधानभाष्यम् ]

**'उञ' इत्युच्यते । न चाऽत्रोञं पश्यामः ॥**

[ आक्षेपस्थापनभाष्यम् ]

**उञोऽयमन्येन सहैकादेश उञ्ग्रहणेन गृह्यते ॥**

[ तटस्थस्य तन्निरासभाष्यम् ]

**आचार्यप्रवृत्तिर्ज्ञापयति–'नोञेकादेश उञ्ग्रहणेन गृह्यते' इति यदयमोदित्योदन्तस्य निपातस्य प्रगृह्यसंज्ञां शास्ति ॥**

(प्र०) यदयमिति। एकादेशे कृते आदिवद्भावात्संज्ञासिद्धिः ॥

(उ०) **संज्ञासिद्धिरिति।** निपातएकाजित्यनेनेत्यर्थः। स्थानिवद्भावेन तु नैतल्लभ्यम्। एकादेशस्यान्यल्वृत्तिधर्मत्वात्। एकादेशस्थान्यल्मात्रवृत्तिधर्मस्तु नायम्, उञिति समुदायेऽपि सत्त्वात्। तेनाऽन्तादिवद्भावेन तद्रूप्यातिदेशेऽपि न दोषः ॥

[ पूर्वपक्षिणो ज्ञापकनिरासभाष्यम् ]

**नैतदस्ति ज्ञापकम् । उक्तमेतत्–'प्रतिषिद्धार्थोऽयमारम्भः' इति ॥ दोषः[3] खल्वपि स्याद्यद्युञेकादेश उञ्ग्रहणेन गृह्येत। जानु अस्य रुजति, जानू अस्य रुजति, जान्वस्य रुजति। 'मय उञो वो वे'ति वत्वं न स्यात् ॥**

(उ०) भाष्ये–यद्युञिति। सामान्येन ज्ञापकमिति भावः। वत्वाऽभावपक्षे 'ऊँ'आदेशो न स्यादित्यपि दोषो बोध्यः ॥

[ सिद्धान्तिनःसमाधानभाष्यम् ]

**एवं तर्ह्यकनिपाता इमे ॥**

**अथ वा द्वावुकाराविमौ । एकोऽननुबन्धकोऽपरः सानुबन्धकः । तयोऽननुबन्धकस्तस्यैष एकादेशः ॥**

[ योगविभागवार्त्तिकम् ]

*॥ * ॥ उञ इति योगविभागः ॥ * ॥*

**'उञ' इति योगविभागः कर्तव्यः । 'उञः'। [उञः] शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञा भवति । उइति । विति । ततः 'ऊँ' । उञ 'ऊँ' इत्ययमादेशो भवति शाकल्यस्याचार्यस्य मतेन दीर्घोऽनुनासिकः प्रगृह्यसंज्ञश्च । ऊँ इति ॥**

(प्र०) इह रूपत्रयं साध्यम्–'उ इति' 'विति' 'ऊँ इति' । तच्चैकयोगे न सिध्यति । एकयोगे ह्युञ इति श्रुतिरादेशेन श्रुतत्वात्संबध्यते न प्रगृह्यसंज्ञया। सा तु 'निपात एकाजना'ऽिति नित्यैवाऽस्य भवति । शाकल्यश्रुत्यनुवृत्त्या ऊँ आदेशे विकल्पिते रूपद्वयं स्यात्–'उ इति', 'ऊँ इति' न तु 'विती'ति, तदर्थमाह–उञ इति योगविभाग इति । 'उञ' इत्यत्र 'शाकल्यस्येतौ प्रगृह्य'मिति चानुवर्त्तते । तत्र प्रगृह्यसंज्ञैव शाकल्यस्य मतेन विधीयते, नाऽन्येषामिति स्मृत्यन्तरानुसन्धानद्वारेण विभाषा संपद्यते–उ इति' वि[ती]ति । 'ऊँ' इत्यत्र च यदि शाकल्यस्येति नाऽपेक्ष्यते, तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्। ततश्च 'विति' 'ऊँ इति'–एते [द्वे] एव रूपे स्याताम्। तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सति त्रीणि सिध्यन्ति ॥

(उ०) **नित्यैवेति।** आदेशाऽभावपक्षे इत्यर्थः। **नतु वितीति**। न च 'उ इती'त्यस्य निरनुबन्धकोकारमादाय

१ 'प्रयुयुक्षते' पाठा०। २ 'नचोञेका'। 'नचोञैका' 'नोञएकादेशः'। ३ दोषान्तरमाह–दोष इति। ४ लुप्तं स्यात्। ५ तच्च–तत्त। ६ हि–यतः। ७ 'वृत्त्याचादेशे'पा०। ८ तदर्थं–वितीति सिद्ध्यर्थम्। ९ तत्र–'उञ'इत्यत्र।

सिद्धत्वेन शाकल्याऽनुवृत्तिसामर्थ्यात्पक्षे वितीति भविष्यतीति वाच्यं, मयः परत्वे किम्वितीत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपाऽसिद्धिप्रसङ्गात्। शाकल्यानुवृत्तिसामर्थ्यान्निपातेति प्रगृह्यत्वाऽभावे 'मय' इति वत्वस्याऽसिद्धत्वेनेकोयणचीति वत्वेऽनुस्वारापत्तेः। उँ इतीत्यतः सानुबन्धकबोधस्याऽपीष्टत्वेन तदनापत्तेश्चेति भावः। **अन्ये तु** अनेन प्रकरणात् प्रगृह्यत्वस्य ऊँ आदेशस्य च विधानेन तस्य निपात इति प्रगृह्यसंज्ञापवादत्वादेतदादेशविकल्पे 'ऊँ इति' वितीति सिद्ध्यति, न तु 'उ इति' अतो योगविभागः। न चाऽपवादे विशिष्टे ऊँआदेशे असति निपातेति प्रगृह्यत्वं स्यात्, अप्रवर्तमानाऽपवादस्योत्सर्गबाधकत्वाऽभावात्, अत एव 'पारेमध्ये'इत्यव्ययीभावाऽभावे उत्सर्गः षष्ठीसमासो भवतीति वाच्यम्। प्रगृह्यपदस्य सर्वत्र साक्षादुद्देश्यसंबन्धस्य क्लृप्तत्वेनाऽत्र विधेयविशेषणत्वे मानाऽभावात्। सह विधानेन वाक्यभेदस्याऽप्यभावात् स्थानिवद्भावेन च 'ऊँ' इत्यस्य प्रगृह्यकार्यं बोध्यम्। एवंच पक्षे प्रगृह्यत्वाऽभावेऽप्यस्य तात्पर्यान्नैतदभावे 'निपात'इत्यस्य प्रवृत्तिरित्याहुः। **प्रगृह्यस्येति।** अनुवर्तमानप्रगृह्यपदस्यादेशेन संबन्धे उञमात्रस्य नित्यं प्रगृह्यसंज्ञकस्य 'ऊँ'भावस्य विधानापत्तौ योगविभागेन प्रगृह्यसंज्ञाविधानस्य वैयर्थ्यापत्तेरनुवर्त्तमानप्रगृह्यपदं षष्ठ्यन्ततया विपरिणमय्य स्थानिना संबध्यत इति भावः। **द्वे एवेति।** न च 'उ इती'ति रूपमपि निरनुबन्धकोकारमादाय सिद्धं, सानुबन्धकप्रतीत्यनापत्तेः। मयः परत्वे 'किम्विती'त्यादौ मकारसहितनिरनुनासिकवकारघटितरूपाऽसिद्धिप्रसङ्गाच्च। वस्तुतस्तु उञ इत्यस्याऽत्रानुवृत्तस्याऽर्थाधिकाराद्प्रगृह्यपरतैव, प्रगृह्यमिति चादेशविशेषणमेव। तथैव भाष्यस्वरसादिति ऊँ इति' उ इति'च रूपे स्यातां, न तु 'विती'ति तदर्थं विकल्पानुवृत्तिः। ऊँ इति दीर्घोच्चारणात्प्रगृह्यपदस्याऽत्र संबन्ध इति सर्वमवदातम्॥

[ योगविभागप्रयोजनप्रश्नभाष्यम् ]

**किमर्थो योगविभागः ?॥**

(उ०) **किमर्थो योगविभाग इति।** प्रगृह्यत्वाऽऽदेशयोः शाकल्यमते एव प्राप्त्या एकप्रयोग एव प्रवृत्तिः स्यात्। एवंच 'ऊँ इति' विती'ति च रूपे। ते चैकयोगेऽपि सिध्यत इति प्रश्नः। एवंचैकयोगे वितीति न सिध्यतीति प्रागुक्तकैयटश्चिन्त्य एवेति बोध्यम्॥

[ प्रयोजनप्रदर्शनवार्त्तिकभाष्यम् ]

*॥ * ॥ ऊँ वा शाकल्यस्य ॥ * ॥*

**शाकल्यस्याऽऽचार्यस्य मतेन 'ऊँ' विभाषा यथा स्यात्। ऊँ इति 'उ इति'। अन्येषामाचार्याणां मतेन–'विति'॥**

(प्र०) **ऊँ वा शाकल्यस्येति।** शाकल्यस्य श्रुतेरेव फलं वाग्रहणेन प्रतिपादयति। एतदेव व्याचष्टे-**शाकल्यस्य विभाषा यथा स्यादिति।** प्रगृह्यसंज्ञाऽऽदेशश्च। तत्र यद्यपि पूर्वसूत्रे फलरूपतया निर्देशात्प्रदेशेष्विव प्रगृह्यशब्दो द्विवचनाद्यभिधेयस्तथापीहोञ इति षष्ठीनिर्देशात्स्वरूपपदार्थकः संपद्यते॥

(उ०) **शाकल्येति।** एवंच योगविभागसामर्थ्याच्छाकल्याऽनुवृत्तिसामर्थ्याच्च तन्त्रं यथाश्रुतम्। किं तु विकल्पमात्रतात्पर्यकमिति विकल्पद्वयेन सकलेष्टसिद्धिरिति भावः। एवंच शाकल्यमत एव विकल्पः फलितः। तदाह भाष्ये-**शाकल्यस्य विभाषेति।** शाकल्यमते 'ऊँ'आदेशविकल्पे यत्फलति तद्दर्शयति-**प्रगृह्यसंज्ञादेशश्चेति।** तन्मते पर्यायेणोभयं सिध्यतीत्यर्थः। ननु 'प्रगृह्य'मित्यस्य प्रथमान्तस्य कथमुञ इत्यनेन षष्ठ्यन्तेनाऽन्वय इत्यत आह-**यद्यपीति। फलरूपतयेति। फलं**-संज्ञाया बाध्यतया संज्ञिनः, तद्बोधकं पदं लक्ष्यते। **तद्रूपतया।** तेन च तत्समानविभक्तिकतयेत्यर्थः। 'द्विवचनाद्यभिधेय'इति बहुव्रीहिः। प्रगृह्यशब्दवदभिन्नं द्विवचनादीति बोधः। प्रगृह्यशब्दवत्त्वेन च द्विवचनादि प्रगृह्यपदाभिधेयमिति बोध्यम्। **स्वरूपपदार्थक इति।** उञो वाचकं प्रगृह्यपदमित्यर्थादिति भावः। वस्तुतः पूर्वत्रापि शब्दपर एव, शब्दार्थयोरभेदात्सामानाधिकरण्यं, 'पटः शुक्ल' इतिवत्। प्रकृते तु 'पटस्य शुक्ल'इत्यत्रेवोक्तरीत्या वैयधिकरण्येनाऽन्वय इति न कश्चिद्दोषः। केचित्तु प्रदेशे वृद्धिपदाऽभिन्ना आदैच इति उपस्थितिः। संज्ञावाक्ये तु तथा शाब्दबोधः। 'द्विवचनाद्यभिधेय'इत्यस्य द्विवचनादिविशेष्यकबोधजनक इत्यर्थः। षष्ठीसमभिव्याहारे तु विशेष्यतया स्वरूपपदार्थक इति कैयटं योजयन्ति॥ [ उञ ऊँ ]॥

# ईदूतौ च सप्तम्यर्थे ॥१।१।१८॥

[ आक्षेपवार्तिकभाष्यम् ]

*॥ * ॥ 'ईदूतौ सप्तमीत्येव' ॥ * ॥* [6]

**'ईदूतौ सप्तमी'त्येव सिद्धं, नार्थोऽर्थग्रहणेन॥**

(प्र०) **ईदूतौ च सप्तम्यर्थे। ईदूतौ सप्तमीत्येवेति।** सप्तमीसहचरितं यदीदूदन्तं, सप्तम्यां वा परतस्तत्प्रगृह्यसंज्ञं भवतीत्येवं प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां 'सोमो गौरी अधिश्रित'इत्यादौ भविष्यति प्रगृह्यसंज्ञेति प्रश्नः॥

१ दोषान्तरं तत्राह-**उइतीति।** २ **अनेन**-'उञ ऊँ'इत्यनेन। 'उञःस्थाने' इतिशेषः। ३ 'स्याऽभावात्' पा०।

४ **तत्**-शाकल्यपदम्। ५ 'सञ्ज्ञिनश्च तद्बोधकम्'। ६ श्लोकवार्तिकमेतत्।

(उ०) **ईदूतौ च** । ईकारोकारात्मकसप्तम्या असंभवं मत्वाह—**सप्तमीसहेत्यादि** । तात्पर्यानुपपत्त्या च लक्षणेति भावः । **सप्तम्यां वेति** । सप्तमीति पदं लुप्तसप्तमीकं व्याख्यास्यत इति भावः । जघन्यवृत्तिकल्पनापेक्षयेदं न्याय्यमिति तात्पर्यम् । **लुप्तायामपीति** । 'न लुमते' ति निषेधस्तु अनित्यत्वान्न सप्तम्यां परत इत्यर्थेऽपीति भावः ॥

[ समाधानवार्तिकखण्डम् ]

*॥ * ॥ लुप्तेऽर्थग्रहणाद्भवेत् ॥ * ॥*

**लुप्तायां सप्तम्यां प्रगृह्यसंज्ञा न प्राप्नोति । क ? ॥ 'सोमो गौरी अधिश्रितः । इष्यते चात्रापि स्यादिति । तच्चाऽन्तरेण यत्नं न सिध्यतीत्येवमर्थमर्थग्रहणम् ॥**

(प्र०) **लुप्त इति** । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधादसत्यर्थग्रहणे सप्तम्या एव संज्ञिनीत्वादसत्याश्च कार्याऽभावात्प्रत्ययनिमित्तं यत्राऽन्यस्य कार्यं विधीयते तत्रैव प्रत्ययलक्षणस्य सद्भावाद्गौरीत्यत्राऽप्रसङ्गादर्थग्रहणं कृतम् । अर्थग्रहणे सत्यर्थनिमित्ता संज्ञेयं भवति, न प्रत्ययश्रवणनिमित्तेति लोपेऽपि सिध्यति ॥

(उ०) ननु प्रत्ययग्रहणेन तदन्तविधौ ईकाराद्यन्तं यत्सप्तम्यन्तमित्यर्थे प्रत्ययलक्षणेन सिद्धं 'सोमो गौरी'इति, तत्राह-**संज्ञेति** । **सप्तम्या एवेति** । सप्तमीदस्य लुप्तसप्तम्यन्तत्वे, सप्तमीसहचरितलाक्षणिकत्वे च न मानमिति भावः । यद्यपीकारोकारसप्तम्योरसंभव एव तत्र मानं, तथापि 'वचना'दित्यादिना तद्वक्ष्यतीत्यत्र तात्पर्यम् ॥ **असत्याश्च कार्याभावादिति** । प्रगृह्यसंज्ञाकार्यं हि सन्धिकार्याऽभावफलकप्रकृतिभावः । लुप्ते षष्ठ्यर्थप्रसङ्गस्य निरूपयितुमशक्यत्वेन सन्धिकार्याऽप्राप्त्या प्रकृतिभावानुपयोगात्तत्कार्याऽभाव इत्यर्थः । तदेवाह-**प्रत्ययनिमित्तमित्यादिना** ॥

[ समाधानबाधकभाष्यम् ]

**नाऽत्र सप्तमी लुप्यते ॥ किं तर्हि ? ॥ पूर्वसवर्णोऽत्र भवति ॥**

(प्र०) **पूर्वसवर्ण इति** । सति च पूर्वसवर्णेएकादेशे चादिवद्भावाद्भवतीकारः सप्तमीति सिद्धा संज्ञा ॥

(उ०) **पूर्वसवर्ण इति** । स च 'सुपां सुलुगि'त्यनेन ।

[ समाधानसाधकवार्तिकम् ]

*॥ * ॥ पूर्वस्य चेत्सवर्णोऽसावाडाऽऽम्भावः प्रसज्यते ॥ * ॥*

**यदि पूर्वसवर्णः, आडाम्भावश्च प्राप्नोति ॥**

(प्र०) **आडाम्भाव इति** । एकादेशं बाधित्वाऽऽडामौ स्याताम् ॥

(उ०) **एकादेशमिति** । परत्वाद्वार्णादाङ्गस्य बलीयस्त्वाच्चेति भावः । एवंच ङ्यन्ते 'गौरी'त्यादौ लुक आवश्यकत्वेन तदर्थमर्थग्रहणमिति तात्पर्यम् ॥

[ समाधानबाधकभाष्यम् ]

**एवं तर्ह्याहाऽयमीदूतौ सप्तमीति । न चास्ति सप्तमीदूतौ, तत्र वचनाद्भविष्यति ॥**

(प्र०) **वचनादिति** । सर्वत्रैव सप्तमी लुप्यत इति वचनसामर्थ्या'त्सप्तमी'शब्देन सप्तमीसहचरितस्य ग्रहणान्मुख्यकल्पनाऽसंभवे गौणी कल्पना गृह्यते इत्याश्रयणात्सिध्यतीति भावः ।

(उ०) **सर्वत्रैवेति** । ननु 'यवी'त्यादिभ्यो ङौ दीर्घे 'तनू'इत्यादौ ओस्सुपोः पूर्वसवर्णादेशे च ईदूदन्तसप्तमीसंभवात्कथमेतदिति चेन्न, 'ईदूत्सप्तमी प्रगृह्यम्,' 'अदसः,' 'एच्च द्विवचनम्' इत्येव सिद्धे स्थलान्तरे 'ईदूतौ सप्तमी'ति गुरुवचनसामर्थ्येन सप्तमीसहचरितग्रहणमिति भाष्याशयान्न दोष इति **केचित्** । तन्न । 'न चास्ति सप्तमी ईदूता'विति भाष्याऽसङ्गतेः । तस्मादेतद्भाष्यप्रामाण्यात्तेषामनभिधानमिति तत्त्वम् ॥

[ समाधानवार्तिकखण्डम् ]

*॥ * ॥ वचनाद्यत्र दीर्घत्वम् ॥ * ॥*

**नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ किम् ? ॥ यत्र सप्तम्या दीर्घत्वमुच्यते-'दृति न शुष्कं सरसी शयान'मिति । सति प्रयोजने इह न प्राप्नोति—'सोमो गौरी अधिश्रितः' इति ॥**

( प्र० ) मुख्यकल्पना सम्भवत्येवेत्याह—**यत्रेति** । **'सरसी'ति** । अत्र सरःशब्दात्परस्य ङिशब्दस्य

१ श्लोकवार्तिकमिदं । २ लुप्ते इति सामान्ये नपुंसकमित्याशयेन भाष्ये-**लुप्तायामिति** । ३ **लुप्तसप्तम्यन्तत्वे**-तत्परकत्वे । ४ 'संहिता कार्या' । ५ 'तनू' इत्यादौ । गौर्यादौ तु न विशेष इति बोध्यं । ६ 'सिध्यति' । ७ 'तत्प्रयोजन'मिति शेषः ।

'इयाडियाजीकाराणामुपसङ्ख्यान'मितीकारे कृते भवतीकारः सप्तमीति तत्रैव स्यान्न तु गौरीत्यत्रेति भावः ॥

( उ० ) सरःशब्दादिति। सरस्शब्दस्याऽसुनन्तत्वेनाद्युदात्तत्वेऽपि स्वरव्यत्ययात् 'दृतिं न शुष्कं सरसी शयान'मित्यत्र सरसीत्यस्याऽन्तोदात्तत्वं बोध्यम् ॥

[ समाधानबाधकवार्तिकखण्डम् ]

||*|| 'तत्रापि सरसी यदि' ||*||

**तत्रापि सिद्धम् ॥ कथम् ? ॥ [ 'सरसी यदि' ] । ।यदि सरसीशब्दस्य प्रवृत्तिरस्ति । अस्ति च लोके सरसीशब्दस्य प्रवृत्तिः ॥ कथम् ? ॥ दक्षिणापथे हि महान्ति सरांसि 'सरस्य' इत्युच्यते ॥**

( प्र० ) सरसी यदीति। 'यदी'ति सम्भावनायाम्। तस्मात्स्थितमेतत्-वचनात्सर्वत्र लुप्तायामपि सप्तम्यां भविष्यतीति नार्थोऽर्थग्रहणेन ॥

( उ० ) निराकर्त्तुः संशयार्थो 'यदि'शब्दोऽनुपपन्न इत्यत आह-सम्भावनायामिति । 'शास्त्राणि चेत्प्रमाणं स्यु'रितिवदसन्दिग्धे सन्दिग्धवचनमिदमिति भावः। 'सरसी'-शब्दो यदि ङीषन्तस्तदाऽन्तोदात्तत्वं न्यायसिद्धम् । असुन उगन्तत्वान्ङीबन्तत्वे तु स्वरव्यत्ययादेव तत्त्वम् । एवं च ततो लुकैवोक्तप्रयोगे सिद्धे 'इया'डिति वार्तिके ईकारादेशो न विधेय इति भाष्याशयः। तस्मात्पूर्वोक्तरीत्या वचनसामर्थ्याल्लुप्तेऽपि सिद्धिः ॥

[ समाधानवार्तिकखण्डम् ]

||*|| ज्ञापकं स्यात्तदन्तत्वे ||*||

**एवं तर्हि ज्ञापयत्याचार्यो 'न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ कुमार्योरगारं कुमार्यगारम् । वध्वोरगारं वध्वगारम् । प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति ॥**

(प्र०) ज्ञापकमिति । 'ईदूदे'दित्यत्र तृतीयचतुर्थपक्षयोरित्यर्थः । इह प्रगृह्यसंज्ञाप्रकरणे यदि प्रत्ययलक्षणं स्यात्तदेदूतौ च सप्तमीत्येव सप्तमीसहचरितं सप्तम्यां वा परतो यदीदूदन्तं तत्प्रगृह्यसंज्ञमिति प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां संज्ञा भविष्यतीति किमर्थग्रहणेन ? । तत्क्रियमाणं प्रत्ययलक्षणाऽभावं सूचयति ॥

(उ०) सप्तमीसहचरितत्वं च प्रत्ययलक्षणेन बोध्यम्॥

[ अर्थग्रहप्रयोजनान्तरवार्तिकम् ]

||*|| मा वा पूर्वपदस्य भूत् ||*||

**अथ वा 'पूर्वपदस्य मा भू'दित्येवमर्थमर्थग्रहणम् । वाप्यामश्वो वाप्यश्वः, नद्यामातिर्नद्यातिः ॥**

( प्र० ) संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावात्तदन्तपक्षस्तत्र नैव स्थित इति ज्ञापनफलाऽभावादाह-मा वेति । वाप्यश्वो नद्यातिरिति । 'संज्ञाया'मिति समासे कृते सप्तमीसहचरितमीकारान्तं पूर्वपदमिति स्यात्प्रगृह्यसंज्ञेति तदर्थमर्थग्रहणम्॥

( उ० ) संज्ञायामितीति । अत एवाऽग्रे भाष्ये-'जहत्स्वार्था वृत्ति'रिति सङ्गच्छते। न च वाक्येन संज्ञाऽनवगमादस्य नित्यसमासत्वे 'वाप्यामश्व' इति विग्रहो नोचित इति वाच्यं, वाक्यात्संज्ञिनोऽनवगमेन नित्यसमाससदृशत्वेऽपि न तद्विषयके वाग्रहणाऽसम्बन्ध इति समासघटकीभूतानां तद्विषये विग्रहाऽभावे मानाऽभावात् । ध्वनितं चेदं द्वितीयतृतीयेति सूत्रे भाष्ये इति तत्रैव निरूपयिष्यते । सप्तमीसहचरितमिति । प्रत्ययलक्षणेनेति भावः ॥

[ वादिनोः प्रश्नतत्समाधानभाष्यम् ]

**अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवाऽत्र न भवति ?॥'जहत्स्वार्था वृत्ति'रिति॥**

(प्र०) अथेति । अस्त्येवाऽत्र सप्तम्यर्थ इति प्रश्नः। जहत्स्वार्थेति। समासस्यैवाऽर्थवत्त्वात्पूर्वोत्तरपदयोर्वर्णवदानर्थक्यात्सप्तम्यर्थो(ऽत्र)नास्तीत्यर्थः ।

(उ०) वर्णवदानर्थक्यमिति। संज्ञायामिति समासेऽस्य रूढिशब्दत्वादवयवार्थाऽप्रतीतेरिति भावः। 'वाप्यामश्व' इति विग्रहप्रदर्शनं तु रथन्तरादिपदानां रथेन तरतीत्यादिविग्रहप्रदर्शनवद्बोध्यम्। अत एव-'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी'ति वृद्धैरुक्तम् ॥

[ आक्षेपभाष्यम् ]

**अथाऽजहत्स्वार्थायां वृत्तौ दोष एव ॥**

१ लुप्तस्यात्। २ यदीत्यस्य 'मन्त्रे' इति शेषः । ३ प्रवृत्तिः-प्रयोगः । ४ संशयार्थः-संशयार्थकः । ५ ङीषन्तः-पिप्पल्यादित्वान्ङीषन्तः ।

६ ज्ञापकं-तदभावस्य ज्ञापकम् । ७ 'तदन्तत्वे'त्यस्यार्थमाह-ईदूदेदित्यत्रेति । ८ भाष्ये प्रगृह्यसंज्ञापदं तत्प्रकरणपरमित्याह-इहेति । ९ क्वचिन्न ।

( उ० ) भाष्ये—अथाऽजहत्स्वार्थायामिति । 'सुप्सुपे'ति समासेन केवलयौगिके इत्यर्थः ॥

[ समाधानभाष्यम् ]

**अजहत्स्वार्थायां च न दोषः । समुदायार्थोऽभिधीयते ॥**

॥*॥ 'ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत् ।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते ॥
वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि ।
ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत्' ॥*॥

---

( प्र० ) **समुदायार्थ इति ।** वृत्तौ हि पूर्वपदं स्वार्थमप्यभिधत्ते प्रधानार्थमपीति स्वार्थसंसृष्टस्य प्रधानार्थस्याऽभिधानात्पांसूदकवत्स्वार्थस्य विवेकाऽनवगमात्समुदायाऽर्थो वृत्तौ संसृष्टरूपेणैवाऽभिधीयते । सप्तम्यर्थग्रहणेन—यावानर्थो वाक्ये सप्तम्यन्तेनाऽभिधीयते केवलोऽसंसृष्ट उद्भूतस्तस्यैवेह ग्रहणमिति समासे न भवति प्रगृह्यसंज्ञा ॥ [ईदूतौ च]

( उ० ) **प्रधानाथमपीति ।** अश्वपदशक्तिसमुदायशक्तिसहकारेण गृहीतशक्तिकाद्वापीपदात्स्वार्थविशिष्टप्रधानार्थस्यैवोपस्थितेरित्यर्थः। तत्र समुदायशक्तिः संसर्गांऽश एव । तदाह-**स्वार्थसंसृष्टस्येत्यादि । विवेकानवगमात् ।** पृथगनुपस्थितेरित्यर्थः। **पांसूदकमिति।** पांसूदकं मिलितं यथा संसृष्टमेव ज्ञानविषयो, न तु पृथक्, तथा समासात्संसृष्ट एवोपस्थितिविषयो न तु पृथगित्यर्थः । **यावा**नित्यस्य विवरणं **केवल** इति । कैवल्यं विवृणोति-**असंसृष्ट उद्भूत इति । असंसृष्टत्वं**-विशेषणाऽविशिष्टत्वम् । **उद्भूत**त्वमितराऽविशेषणत्वमिति बोध्यम् । **समुदायरूपोऽर्थः**-पूर्वपदार्थविशिष्ट उत्तरपदार्थो**ऽभिधीयते**ऽभिधाभिः परस्परसहकारेणोपस्थाप्यत इति भाष्यार्थः । **अर्थग्रहणसामर्थ्या**त्सप्तम्यर्थमात्रपर्यवसन्नार्थकमर्थग्रहणमिति भावः । 'गौरी'त्यादौ त्वस्त्येव गौर्यादिपदानां सप्तम्यर्थपर्यवसन्नत्वम् । समभिव्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्वस्यैव **सप्तम्यर्थपर्यवसन्नत्वरूप**त्वात् । न चार्थग्रहणेऽपि गौरीत्याद्यसिद्धिः । सप्तम्यर्थे ईकाराद्यभावात् । ईदाद्यन्तमित्यर्थस्तु दुर्लभो, विशेष्याऽभावादिति वाच्यम् । सामर्थ्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावात् ॥ **[ ईदूतौ च सप्तम्यर्थे ]** ॥

# दा धा घ्वदाप् ॥ १ । १ । १९ ॥

[ आक्षेपवार्तिकम् ]

॥*॥ *घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम्* ॥*॥

**घुसंज्ञायां प्रकृतिग्रहणं कर्तव्यम् । 'दाधाप्रकृतयो घुसंज्ञा भवन्ती'ति वक्तव्यम्॥ किं प्रयोजनम् ? ॥ आत्वभूतानामियं संज्ञा क्रियते, साऽऽत्वभूतानामेव स्यादनात्वभूतानां न स्यात् ॥ ननु च भूयिष्ठानि घुसंज्ञाकार्याण्यार्द्धधातुके, तत्र चैत आत्वभूता दृश्यन्ते ॥**

**'शिदर्थम्' । शिदर्थं प्रकृतिग्रहणं कर्तव्यम् । शित्यात्वं प्रतिषिध्यते तदर्थम् । प्रणिदयते प्रणिधँति प्रणिधयतीति ॥**

(प्र०) दाधा घ्व । दाधाशब्दयोर्घुसंज्ञा विधीयमाना रूपान्तरयुक्तानां दोदेङ्धेटां न प्राप्नोतीत्याह—**घुसंज्ञायामिति । किं प्रयोजनमिति ।** दोदेङ्धेटामेजान्तानामनुकरणानि व्यवस्थाप्यात्वे कृते ददातिदधातियच्छत्यनुकरणानां चैकशेषे कृते द्वन्द्वनिर्देशात्सिद्धा दोदेङ्धेटामपि घुसंज्ञा, कृतात्वानां चैषां स्थानिवद्भावेन सिद्धेति प्रश्नः ॥ **आत्वभूतानामिति।** भवतेः प्राप्त्यर्थादाधृषाद्वेति विभाषितणिचः कर्तरि, कर्मणि वा क्तप्रत्ययः । तत्र आत्वं भूता आत्वेन वा भूताः । आकारान्ता इत्यर्थः । ननु लक्षणेन कृतात्वा इति विज्ञेयम् । अस्याप्ययमभिप्रायः—एजन्तानुकरणत्वे प्रमाणाऽभावात्, प्रक्रियागौरवाच्च प्रयोग एव ये आकारान्ताः प्रयुज्यन्ते तदनुकरणानामयमेकशेषनिर्देशः, सामान्यानुकरणं वा 'दा'इति 'धा इ'तिपृथक् पदं निर्दिष्टमिति । **प्रणिदयत इति ।** घुसंज्ञायां सत्यां 'नेर्गदे'ति णत्वं भवति ॥

(उ०) **दाधा घ्व । दाधाशब्दयोरिति ।** प्रयोगस्थदाधारूपाणामेव सूत्रेऽनुकरणादिति भावः । **दोदेङ्धेटा-**

---

❀ राजलक्ष्मीः ❀

१ **अजहत्स्वार्थायाञ्च**-अजहत्स्वार्थायामपि । २ अस्य च यत्र सप्तम्यर्थ एव तत्रैव प्रवृत्तिर्न तु समुदायार्थो यत्राभिधीयते तत्रेति न दोष इत्याशयः । ३ **शक्तीति ।** एतदुभयशक्तिसहकारेणेत्यर्थः । उपस्थितावस्यान्वयः । ४ **तत्र**-तयोर्मध्ये । ५ 'तद्यथा संसृष्टमेव'पा० । ६ उभयोः साफल्यमाह-**असंसृष्टत्वमिति ॥** ७ क्वचिन्न । ८ **इत्याह**-इत्यत आह । ९ 'ददातियच्छतिदधा' ।

**मेजन्तानामिति ।** एषां चाऽत्र 'प्रकृतिवदनुकरणं भवती'तिन्यायादशितीति प्रसज्यप्रतिषेधाश्रयणाच्चात्वमिति भावः। अत्र च पक्षे 'लक्षणप्रतिपदोक्त'परिभाषा'निरनुबन्धक'परिभाषादीनां न प्रवृत्तिः, सर्वेषां स्वरूपेणैवाऽनुकृतत्वात्। दारयतिधारयत्योश्च नाऽतिप्रसङ्गः। तयोरनुकरणे आत्वाऽसंभवेनेह दृ–धृ इत्यनयोरनुपात्तत्वात्। दीङोऽपि नेह ग्रहणम्, एज्विषयाऽभावेन तदनुकरणे आत्वाऽसंभवादिति बोध्यम्। नन्वात्व**भूताना**मित्यस्य जातात्वानामित्यर्थे दाणादीनां संज्ञा न स्यान्निष्ठायाः पूर्वनिपातश्च स्यादत आह–**भवतेरिति ।** प्राप्तात्वानामित्यर्थः। **प्रमाणाऽभावादिति ।** प्रयोगार्थत्वाच्छास्त्रस्योपस्थितप्रयोगस्थाऽनुकरणे संभवति अनुपस्थितैजन्तानुकरणे प्रमाणाऽभाव इत्यर्थः। **गौरवाच्चेति।** दोङस्तृजादावात्वे कृते प्रणिदातेत्यत्र 'नेर्गदे'ति णत्वानाऽपत्तेश्चेत्यपि बोध्यम्। एकशेषस्य सर्वदाधारूपाणामानन्त्येन ज्ञानाऽसंभवाद्दुर्ज्ञेयत्वेऽप्याह–**सामान्येति।** ननु समाहारद्वन्द्वे 'दाध'मिति स्यात्, अन्यत्र 'दाधा'विति स्यादत आह–**पृथक्पदमिति।** अत्र सो रुत्वे यत्वे लोपे च निर्विसर्गं साधु॥

[ भारद्वाजीयवार्त्तिकावतारणभाष्यम् ]

**भारद्वाजीयाः पठन्ति—**

[ भारद्वाजीयोक्तमाक्षेपवार्तिकम् ]

*X॥*॥ घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम् ॥*॥*

**घुसंज्ञायां प्रकृतिग्रहणं क्रियते । किं प्रयोजनम् ? ॥ ['शिद्विकृतार्थम्'][1]! शिदर्थं विकृतार्थं च । शित्युदाहृतम् ॥ विकृतार्थं खल्वपि–प्रणिदाता प्रणिधाता । किं पुनः कारणं न सिध्यति ?॥ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति, प्रतिपदं ये आत्वभूतास्तेषामेव स्याल्लक्षणेन ये आत्वभूतास्तेषां न स्यात् ॥**

( प्र० ) **प्रणिदातेति ।** द्यतेर्देङो वा रूपम्। **प्रणिधातेति ।** धेटः। **लक्षणेति ।** लाक्षणिके च लक्षणाऽनुसन्धानद्वारेण प्रतिपत्तिर्बहिरङ्गा, प्रतिपदोक्ते त्वन्तरङ्गा ॥

( उ० ) विकृतानां **दोदद्घोरिति** सूत्रे घेण्निवृत्त्यर्थं दाग्रहणपर्यालोचनया घुत्वं सुलभमिति मत्वा वार्तिके 'शिदर्थ'मित्युक्तम्। भारद्वाजीयैस्तु तावद्विवेकाऽसमर्थान्प्रति 'विकृतार्थ'मित्यप्युक्तम्। 'प्रणिदाते'त्यादौ लाक्षणिकत्वं स्फुटयति–**द्यतेर्देङो वेति ॥**

[ तटस्थस्य प्रश्नभाष्यम् ]

**अथ क्रियमाणेऽपि प्रकृतिग्रहणे कथमिदं विज्ञायते–दाधाः प्रकृतय इति, आहोस्विद्दाधां प्रकृतय इति ?॥ किं चातः ? ॥ यदि विज्ञायते–'दाधाः' प्रकृतय इति, स एव दोषः–आत्वभूतानामेव स्यादनात्वभूतानां न स्यात् ॥ अथ विज्ञायते–'दाधां प्रकृतय' इति, अनात्वभूतानामेव[2] स्यादात्वभूतानां न स्यात् ॥**

( प्र० ) **कथमिति ।** 'दाधाप्रकृतय'इति षष्ठीसमासः कर्मधारयो वोभयथाप्यव्याप्तिरिति प्रश्नः ॥ **दाधाः प्रकृतय इति ।** दीयत इत्यादावीत्वादेः। **आत्वभूतानामिति ।** दाण्दाञ्धाञाम् ॥

( उ० ) **'प्रकृतय'**इत्यस्य सापेक्षत्वादाह–**ईत्वादेरिति । दाणिति ।** 'आत्वभूता' इत्यनेन उपदेशे आकारान्ता एवोच्यन्ते, तद्विलक्षणास्त्वनात्वभूता इति भावः॥

[ पूर्वपक्षिणःसमाधानभाष्यम् ]

**एवं तर्हि, नैवं विज्ञायते–'दाधाः प्रकृतय' इति, नापि 'दाधां प्रकृतय' इति ॥ कथं तर्हि ? ॥ 'दाधा घुसंज्ञा भवन्ति, प्रकृतयश्चैषा'मिति ॥**

( प्र० ) **प्रकृतयश्चैषामिति ।** प्रत्यासत्त्यैषामिति लभ्यते ॥

(उ०) **प्रत्यासत्त्येति ।** एवं चैषामिति नाऽपूर्वमिति भावः। एतत्सामर्थ्यादेव लाक्षणिकानामप्यनुकरणमनुमास्यत इति तात्पर्यम्॥

[ तटस्थस्य प्रश्नभाष्यम् ]

**तत्तर्हि प्रकृतिग्रहणं कर्तव्यम् ?॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**न कर्तव्यम्। इदं प्रकृतमर्थग्रहणमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'ईदूतौ च सप्तम्यर्थे' इति। ततो वक्ष्यामि[3]—'दाधा घ्वदाप्'। 'अर्थ' इति ॥**

(प्र०) **अर्थ इ[ती]ति[4] ।** एतद्द्वितीयं वाक्यम्। सन्निधानाच्च 'दाधामर्थे यो वर्तते स घुसंज्ञ' इति प्रकृतीनामपि सिध्यति ॥

---

1 अयं पाठो लुप्तः स्यात्। २ **अनात्वभूतानाम्**–एजन्तानाम्। ३ **वक्ष्यामि**–अनुवर्त्स्यामि। ४ लुप्तंस्यात्।

( उ० ) नन्वेकवाक्यत्वे दारयत्याद्येकदेशानर्थकव्यावृत्त्यर्थमेव तत्स्यान्न त्वन्यरूपप्रापकमत आह–**एतद्द्वितीयमिति**। अर्थवत्परिभाषयैवाऽनर्थकव्यावृत्तौ सिद्धायामर्थग्रहणाऽनुवृत्तिर्वाक्यभेदार्थैवेति भावः ॥

[ पूर्वपक्षिणः समाधानखण्डनभाष्यम् ]

**नैवं शक्यं। ददातिना समानार्थान् रातिरासतिदासतिमंहतिप्रीणातिप्रभृतीनाहुः। एतेषामपि घुसंज्ञा प्राप्नोति। तस्मान्नैवं शक्यं। न चेदेवं, प्रकृतिग्रहणं कर्तव्यमेव ॥**

( उ० ) भाष्ये–**प्रीणातीति**। यथा 'पितृभ्यः प्रीणाती'त्यादौ ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**न कर्तव्यम्। शिदर्थेन तावन्नाऽर्थः प्रकृतिग्रहणेन। अवश्यं तत्र माऽर्थं प्रकृतिग्रहणं कर्तव्यम्, प्रणिमयते प्रण्यमयतेत्येवमर्थम्। तत्पुरस्तादपक्ष्यते,–घुप्रकृतौ माप्रकृतौ चेति ॥**

( प्र० ) तत्पुरस्तादिति। 'नेर्गदे'ति सूत्रे घुमाशब्दयोर्मध्ये प्रकृतिग्रहणं कर्तव्यं, तदुभाभ्याममभिसम्भन्त्स्यते ॥

(उ०) ननु तत्रोभयाऽन्वयाय प्रकृतिग्रहणद्वये कर्त्तव्ये[2]ऽत्रैव करणं युक्तमत आह–**तदुभाभ्यामिति**। घुप्रकृतिमाशब्दानां द्वन्द्वे सन्निधानाऽविशेषादुभयप्रकृतिर्गृह्यते इति प्रणिदयते प्रणिमयत इत्युभयत्रापि णत्वं सिध्यतीत्यर्थः ॥

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**यदि प्रकृतिग्रहणं क्रियते–प्रनिमिनोति प्रनिमीनाति—अत्रापि प्राप्नोति ॥**

(प्र०) प्रनिमिनोतीति। 'मीनातिमिनोतिदीङां ल्यपि चे'त्यात्त्वविधानाद्भवति माप्रकृतित्वमनयोः ॥

( उ० ) आत्वविधानादिति। एज्विषये[3] ईकारान्तानामात्त्वविधानादिति भावः ॥

[ सिद्धान्तिनः प्रतिबन्दीभाष्यम् ]

**अथा[4]ऽक्रियमाणेऽपि प्रकृतिग्रहणे इह कस्मान्न भवति,–प्रनिमाता प्रनिमातुं प्रनिमातव्यमिति ? ॥**

[ पूर्वपक्षिणः प्रतिबन्दीसमाधानभाष्यम् ]

**आकारान्तस्य ङितो ग्रहणं विज्ञास्यते[1] ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**यथैव तर्ह्यक्रियमाणे प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञायते एवं क्रियमाणेऽपि प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञास्यते[5] ॥**

( उ० ) भाष्ये **एवं क्रियमाणेऽपीति**। णत्वविधौ माङ्स्यतीति निर्देष्टव्यमिति भावः। लक्षणप्रतिपदोक्तपरिभाषया मीनातिमिनोत्यादेशानां ग्रहणाऽभावो वक्तुं शक्यस्तथापि मेङो[6]ऽग्रहणवारणाय 'गामादाग्रहणेष्वविशेष' इत्युक्तेर्माग्रहणे तदप्रवृत्तिः। 'मा माने' इत्यस्य योगे णत्ववारणाय च ङित्पाठ आवश्यक इति तात्पर्यम् ॥

[ भारद्वाजीयप्रयोजनान्तरनिरासभाष्यम् ]

**विकृतार्थेन चाऽपि नार्थः। दोष एवैतस्याः परिभाषाया 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति—'गामादाग्रहणेष्वविशेषः' इति ॥**

( प्र० ) **गामादाग्रहणेष्विति**। अस्य चाऽर्थस्य 'देपः पित्वमदा'विति पित्प्रतिषेधे सामान्यग्रहणार्थं[7] लिङ्गम्। अन्यथाऽस्य लाक्षणिकत्वादत्र ग्रहणं न भविष्यतीति किं प्रतिषेधाऽर्थेन पित्त्वेन ?। सामान्यापेक्षया च 'निरनुबन्धकग्रहण' इति, 'लक्षणप्रतिपदोक्तयो'रिति च परिभाषाद्वयाऽनुपस्थानमिह ज्ञापयतीति धेटोऽपि सिद्ध्यति। 'दो दद्घो'रित्यत्र 'वा द' इत्येतद्धेट्निवृत्त्यर्थं सद्धेटो घुसंज्ञां ज्ञापयति। न हि दधातिनिवृत्त्यर्थं 'द' इत्येतत्, अस्य 'दधातेर्हि'रिति ह्यादेशविधानाद्द्धावाऽप्रसङ्गात् ॥

( उ० ) **सामान्येति**। एतत्सूत्रगृहीतदाधापेक्षया परिभाषागृहीतगाद्यपेक्षया, परिभाषाद्वयापेक्षया चेत्यर्थः। **निरनुबन्धकेति**। स च 'दोऽवखण्डने' इत्ययम्। **धेटोपीति**। अन्यथाऽस्य लाक्षणिकत्वाद्ग्रहणाऽप्रसक्तिः यत्तु

---

❀ राजलक्ष्मीः ❀

१ क्वचिन्न। २ **कर्त्तव्ये**–कर्त्तव्ये सति। ३ भाष्यरीत्येदं, न वार्तिकरीत्येत्याह–**एज्विषये** इति। ४ तत्र सिद्धान्ती पूर्वपक्षिमुखेनैव समाधातुं शङ्कते–**अथेति**। नेर्गदेतिसूत्र इति भावः। ५ 'विज्ञायते'। ६ 'मेङग्रहण' पा०। ७ **सामान्यग्रहणार्थमिति**। 'क्रियमाण'मितिशेषः।

'सानुबन्धक[1]त्वा'दिति । तन्न । निरनुबन्धकस्य 'धा' इत्यस्याऽप्रसिद्धत्वात् । ये तु[2] दाविषयमेव तज्ज्ञापकं मन्यन्ते तन्मते धेडंशे ज्ञापकान्तरमाह–**दो ददिति** ॥

[ आक्षेपवार्तिकन्तद्भाष्यञ्च ]

॥ * ॥ *समानशब्दप्रतिषेधः* ॥ * ॥

**समानशब्दानां प्रतिषेधो वक्तव्यः । प्रनिदारयति प्रनिधारयति । दाधा घुसंज्ञा भवन्तीति घुसंज्ञा प्राप्नोति ॥**

( प्र० ) **समानशब्दानामिति ।** समानश्रुतीनामित्यर्थः । **प्रनिदारयति प्रनिधारयतीति ।** दृङ्धृङोर्णिचि वृद्धावाकारे कृते दाधाशब्दौ संपद्येते । तौ चाऽर्थवन्तौ । पश्चात्तु रपरत्वं क्रियमाणमागमभूतत्वादन्यत्वं न करोतीति प्राप्तिः ॥

( उ० ) समानत्वं नाऽर्थत इत्याह–**श्रुतीनामिति । तौचेति ।** एतेनाऽनर्थकत्वात्तयोर्घुत्वं नेत्यपास्तम् ॥ **पश्चादिति ।** प्रणिदापयतीत्यत्र पुगिवेति भावः । **आगमभूतत्वात्**–आगमस्वरूपत्वात् ।

[ समाधानवार्तिकम् ]

॥ * ॥ *समानशब्दाऽप्रतिषेधोऽर्थवद्ग्रहणात्* ॥ * ॥

**समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥ घुसंज्ञा कस्मान्न भवति ? ॥ 'अर्थवद्ग्रहणात्' । अर्थवतोर्दाधोर्ग्रहणं, न चैतावर्थवन्तौ ।**

( प्र० ) **अर्थवद्ग्रहणादिति ।** अर्थवद्ग्रहणे नानर्थकस्ये'त्यस्य 'स्वं रूप'मित्यनेन ज्ञापितत्वात् । 'उरण् रपर' इति चाऽण्विधीयमान एव रपरो भवतीति वृद्धिः क्रियमाणा 'आर्[3]' भवतीति दाधारोरेवार्थवत्त्वं न तु तदवयवयोरिति नास्ति घुसंज्ञा ॥

[ अभ्युपगम्य समाधानान्तरवार्तिकम् ]

॥ * ॥ *अनुपसर्गाद्वा* ॥ * ॥

**अथवा यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञे भ[4]वतः । न चैतौ दाधौ प्रति क्रियायोगः ॥**

( प्र० ) **अनुपसर्गाद्वेति ।** अभ्युपगम्य घुसंज्ञां दोषं परिहरति । घुसंज्ञापेक्षया यस्योपसर्गत्वं तस्मात् परस्य नेघौ परतो णत्वं विधीयते । अत्र दाधाऽपेक्षया नास्ति प्रशब्दस्योपसर्गत्वं, किंतु दाधारोरपेक्षयेत्यदोषः ॥

( उ० ) **अभ्युपगम्येति । अदाबिति** प्रतिषेधार्थेन दैपः पित्त्वेन दो ददित्यनेन च परिभाषामात्राऽनुपस्थानज्ञापनसंभवादिति भावः । **किंत्विति ।** तयोरेव क्रियावाचित्वादिति भावः ॥

[ आक्षेपभाष्यम् ]

**[ यद्ये[5]वम् ] इहापि तर्हि न प्राप्नोति–प्रणिदापयति प्रणिधापयतीति । अत्रापि नैतौ दाधावर्थवन्तौ, नाप्येतौ दाधौ प्रति क्रियायोगः ॥**

( प्र० ) **इहापि तर्हीति ।** अ[6]त्रापि पुकि कृते पकारान्तोऽर्थवान् न केवलो दाशब्दः, पुगन्तमेव च प्रत्युपसर्गत्वम्, न दाशब्दं प्रतीति प्रश्नः[7] ॥

[ समाधानवार्तिकम् ]

॥ * ॥ *न वाऽर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते यथाऽन्यत्र* ॥ * ॥

**न वैष दोषः ॥ किं कारणम् ? ॥ अर्थवत आगमस्तद्गुणीभूतोऽर्थवद्ग्रहणेन गृह्यते । 'यथान्यत्र' । तद्यथा–अन्यत्राप्यर्थवत आगमोऽर्थवद्ग्रहणेन गृह्यते ॥ क्वान्यत्र ? ॥ लविता चिकीर्षितेति ।**

( प्र० ) **न वाऽर्थवत इति ।** लब्धात्मकस्य भावस्य निमित्तवशादुपचयाऽपचयौ व्यपदेशहानिं न कुरुतः, यथा[3] देवदत्तस्याङ्गाधिक्याऽङ्गच्छेदौ । इहाप्यन्तरङ्गत्वात् कृतायां दाधोर्घुसंज्ञायां पश्चादुत्पन्नः पुगागमो घुव्यपदेशं न निवर्त्तयति नाप्यर्थवत्त्वमित्यदोषः । अनर्थकस्याप्यागमो व्यपदेहानिं न करोति, यथा सत्यपि रेफेऽकाराकारयोर्गुणवृद्धिव्यपदेशाऽहानिः । इह त्वर्थवतो ग्रहणादर्थवत इत्युक्तम् । यदा च प्रकृत्यर्थः प्रेण विशेष्यते तदाऽयं परिहारः,

---

१ शेषनारायणायुक्तिं खण्डयति–**यत्त्विति** । २ वैयर्थ्यं परिहरति–**येत्त्वेति** । ३ 'रपरा भवतीति' । ४ 'संज्ञा भवति' पा० । ५ क्वचिन्न । ६ **अत्रापि**–प्रणिदापयतीत्यादौ । ७ एतच्च पूर्वोक्तं समाधानद्वयं युक्तमित्याशयः ।

ण्यर्थविशेषणत्वे तु प्रस्य दाधौ प्रत्यनुपसर्गत्वाण्णत्वं न भवत्येव । तद्गुणीभूत इति । प्रयोगसंपादन उपकारक इत्यर्थः ॥

( उ० ) भाष्ये-तद्गुणीभूत इति । यमुद्दिश्यागमो विहितः स तद्गुणीभूतः-शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन-तद्ग्राहकेण तद्बोधकेन गृह्यते-बोध्यते आगमविशिष्ट इति परिभाषार्थः । तदाह-लब्धात्मकस्येति ॥ तेन दाधीरीर्व्याप्तिः सूचिता । अपचय इति,-दृष्टान्तार्थम् । अन्तरङ्गत्वादिति । इदं यथोद्देशे, कार्यकाले तु णत्वदेशा संज्ञाऽसिद्धा स्यादिति बोध्यम् । वस्तुतः कार्यकालपक्षे पूर्वं पुकः प्रवृत्तावपि दापो दाशब्देन ग्रहणाद्घुत्वं सुलभमेवेति चिन्त्यम् । घुव्यपदेशं न निवर्तयति नाप्यर्थवत्त्वमितीति । स्वविशिष्टे तयोरानयनादिति भावः । अकाराकारयोरिति । रेफविशिष्टयोरित्यर्थः । इहत्विति । घुसंज्ञासूत्रे इत्यर्थः । अत्रेदं बोध्यम्-अङ्गावयवाऽकारस्य मुग्विधायकाने मुगिति सूत्रारम्भसामर्थ्येन क्वचिद्वर्णग्रहणे नाऽस्याः प्रवृत्तिः । तेन 'दिदीये' इत्यादौ यणादिकं न । अयमेवाऽर्थो भाष्येऽर्थवद्ग्रहणेन ध्वन्यत इत्याहुः ॥ प्रयोगेति । इदं चिन्त्यम् । आगमवत्प्रत्ययादेरपि प्रयोगसंपादने उपकारकत्वेन तेषामपि प्रकृतिग्रहणेन ग्रहणापत्तिः, मूलयुक्तेस्तुल्यत्वात् । अस्य मूलयुक्तित्वाऽभावे तु तत्कथनवैयर्थ्यापत्तिः । तस्मान्मदुक्तव्याख्यैव ज्यायसी ॥

[ आदेशवादिन आगमवादिनं प्रत्याक्षेपभाष्यम् ]

**युक्तं पुनर्यन्नित्येषु नाम शब्देष्वागमशासनं स्यात् ?॥ न। नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । आगमश्च नामाऽपूर्वः शब्दोपजनः ? ॥**

( प्र० ) युक्तं पुनरिति । ततश्च नित्येष्वागमविरोधात्तद्वारेणादेशविधानाद्दाप्शब्द एवार्थवान्न दाशब्द इति तदवस्थो दोष इति भावः ॥

( उ० ) भाष्ये-यन्नित्येष्विति । वियदादिवद्वर्णाः-प्रकृतिप्रत्ययपदवाक्यादिरूपाः सर्गाद्यकालिकोत्पत्तिमन्तः प्रलयकालिकनाशवन्तश्चेति पक्षे इति भावः । दाप्शब्द एवार्थवान्न दाशब्द इति । स तु न दाशब्द इत्यर्थः । एवं च घुत्वाऽभावात्तदवस्थो दोष इति भावः । श्रौतस्थानषष्ठ्याभावात्स्थानिवत्त्वस्य नैतद्विषये प्रवृत्तिरिति तात्पर्यम् ।

कूटस्थत्वं व्याचष्टे भाष्ये-अविचालिभिरिति । तद्विवरणम्-अनपायेत्यादि । द्वन्द्वान्मत्वर्थीये पश्चान्नञ्समासः ॥

[ आगमवादिन आदेशवादिनं प्रत्याक्षेपभाष्यम् ]

**अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः ?॥**

( प्र० ) अथ युक्तमिति । तत्रापि स्थानिनिमपनीयादेशः क्रियत इत्यनित्यत्वप्रसङ्गः । यथोभयोर्दोषो न तमेकश्चोद्यः ॥

( उ० ) नन्वेतावतापि स्वपक्षस्थापनाद्वैतण्डिकत्वमस्य स्यादत आह-यश्चेति ॥

[ आदेशवादिनः समाधानभाष्यम् ]

**बाढं युक्तं । शब्दान्तरैरिह भवितव्यं । तत्र शब्दान्तरे शब्दान्तरस्य प्रतिपत्तिर्युक्ता ॥**

( प्र० ) बाढमिति । प्रसङ्गवाची 'स्थान'शब्दो न निवृत्तिवाची, ततश्च सन्त एव प्रयोगे नित्याः शब्दा बुद्ध्युन्मज्जननिमज्जनद्वारेण प्रतिपाद्यन्ते । आगमस्त्ववस्थितस्याऽपूर्वः क्रियमाणो नित्यत्वं विरुणद्धि ॥

( उ० ) प्रसङ्गवाचीति । 'षष्ठी स्थान'इत्यत्रत्यः । प्रसङ्गश्च बुद्धेरिति भावः । सन्त एव प्रयोगे नित्या इति । आदेशरूपा इत्यर्थः । बुद्ध्युन्मज्जननिमज्जने-यथाक्रममादेशस्य, स्थानिनश्च । भाष्ये-शब्दान्तरे इति । तद्बुद्धौ प्राप्तायामित्यर्थः ॥

[ सिद्धान्तोपसंहारभाष्यम् ]

**आदेशास्तर्हीमे भविष्यन्त्यनागमकानां सागमकाः ॥ तत्कथम् ? ॥**

**'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।**
**एकदेशविकारे हि नित्यत्वं नोपपद्यते'॥**

( प्र० ) आदेशास्तर्हीमे इति । इङ्गवतीत्येतद्द्वारेण तव्यस्येतव्यादेशः क्रियते ॥

सर्वे इति । आगमा अपीत्यर्थः । सर्वपदादेशाइति । पदशब्देन न सुप्तिङन्तं गृह्यतेऽपि तु कार्यं प्रतिपद्यमानं प्रतीयमानं प्रकृतिप्रत्ययादि तत्सर्वं पदम् । एकदेशविकारे हीति । यद्यपि सर्वविकारेऽप्यनित्यत्वं यथा पिठरस्थस्य पयसः पाकादिषु, तथापि विकाराऽभावप्रतिपादनपरमेतत् । बुद्धि-

१ यमुद्दिश्येति । 'य' इति शेषः । तद्गुणीभूत इत्यस्य व्याख्या-शास्त्रेणेति । २ तेन-लब्धात्मकस्येत्यनेन । दृष्टान्तेति । ३ प्रकृतानुपयोगादित्याशयः । ४ मदुक्तेति । शास्त्रेणेत्यनेनेति भावः । ५ पुनरिति प्रश्ने । किमेतद्युक्तमिति प्रश्नः । ६ स्वयमेव समाधत्ते-न नित्येष्विति । नेत्यस्य युक्तमितिशेषः । ७'शब्दान्तराच्छ' । ८ 'तथनेन द्वारेण' पा०।

विपरिणाममात्रं स्थान्यादेशागमागमिभावद्वारेण क्रियत इत्यर्थः । यद्येवं दाशब्दस्य दाप्शब्द आदेशः क्रियत इति दाशब्दस्यानर्थक्यप्रसङ्गः । नैष दोषः । नित्यतासमर्थनायाऽऽदेशपक्ष आश्रितः । प्रक्रियायां तु कल्पितायामागमागमिभाव एव । अन्यथाऽऽगमादेशयोर्भेदेन व्यवहारो न स्यात् ॥

**( उ० ) आदेशास्तर्हीम इति । इमे**–आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि, **आदेशास्तत्स**दृशा भविष्यन्तीत्यर्थः । आद्यन्तावित्याद्येकवाक्यतया आर्द्धधातुकस्याद्यावयव इडित्यर्थे वृत्ते नित्यत्वानुपपत्तिमूलकवाक्यान्तरकल्पनेन केवलतव्यबुद्धौ प्रसक्तायामिकारादिः साधुरिति बोधः । तेनाऽत्रापि बुद्धिविपरिणाममात्रस्यैव सत्त्वेन न नित्यत्वहानिरिति भावः । **यदागमा** इति न्यायस्य चाऽत्रापि पक्षे सत्त्वात्प्रणिदापयतीत्यादौ न दोषः । ये त्वत्र पक्षे आगमत्वं नास्त्येवेति वदन्ति, तेऽमान्याः । 'अनागमकाना'मित्यादिव्यवहाराऽसङ्गतेः । निरवयवकबुद्धिनिमज्जनसावयवकबुद्ध्युन्मज्जनेनागमत्वव्यवहारस्याऽपि निर्बाधत्वात् । **तत्कथ**मिति प्रश्ने तुल्यन्यायत्वादाह–**सर्वे सर्वपदेति ।** यथा **एरुरि**त्यादाववयवयोः श्रौतस्थान्यादेशभावेऽपि नित्यत्वानुपपत्तिमूलकः समुदाययोरपि स कल्प्यते, एवमवयवत्वेन विधानेऽपि अर्थापत्तिमूलकवाक्यान्तरकल्पनेन निरवयवसावयविबुद्ध्योर्विपरिणाममात्रेणादेशत्वव्यवहारो गौणो नित्यत्व रक्षणाय कल्प्यत इति । यथा च तत्र कल्प्यमानस्थान्यादेश भावेन श्रौतावयवस्थान्यादेभावस्य न त्यागः, अत एवाचः परस्मिन्नित्यादीनामुक्तिसम्भवः, तथाऽत्रापि श्रौतावयवावयविभावस्य न त्याग इति 'यदागमा' इत्येतत्प्रवृत्तिरव्याहतैवेति ईदृशस्थान्यादेशभावे स्थानिवत्त्वस्य न प्रवृत्तिः, स्थानिवदितिश्रुतेः श्रौतस्थान्यादेशभावानुपपत्तिमूलकतया कल्प्यमानस्थान्यादेशभावके एरुरित्यादावेव तत्प्रवृत्तेः । नत्वत्र केवलानुमानिके । अत एव 'लावस्थायाम'डिति पक्षेऽडादिविशिष्टस्याऽपिबदित्यादौ न पिबाद्यादेशा इति दिक् । तदेतदाह–**इड्भवतीत्येतद्द्वारेणेति** ॥ 'आगमा अपीत्यर्थ'इत्यस्य 'तथे'त्यादिः । अत एवाग्रे वक्ष्यति'बुद्धिविपरिणाममात्रं स्थान्यादेशागमागमिभावद्वारेण क्रियते' इति । एतेनागमा अपीत्येवं सर्वपदव्याख्यायामेकदेशविकारे हीति वाक्यशेषविरोधः । आदेशत्वोपपादिकाया विकारव्यापकीभूताऽभावप्रतियोगित्वरूपनित्यत्वानुपत्तेः सकलपक्षाऽवृत्तित्वादिपास्तम् । **पद्यमानमिति ।** कार्यवत्तया प्रतीयमानं प्रकृत्यादीत्यर्थः । 'सर्वपदे'त्यत्र घञर्थे कः । सर्वशब्दश्चाऽत्रावयवकात्स्न्र्यवाची । **यद्येवमिति ।** एवं चैतदवयवस्यानर्थक्यान्न संज्ञा, पुकः पूर्वं 'दा'इत्यस्य तु न संज्ञा, कार्यकालपक्षे संज्ञाया णत्वदेशस्थत्वेन पुग्दृष्ट्याऽसिद्धत्वात पूर्वमप्रवृत्तेः । न च पुंग्विशिष्टस्य दाग्रहणेन ग्रहणम्, 'यदागमा'इत्यस्याऽभावा । पूर्वोक्तरीत्या स्थानिवत्त्वाऽप्रवृत्तेश्चेति भावः । **आदेशपक्ष इति ।** बुद्धिविपरिणामपक्ष इत्यर्थः । कल्पितप्रक्रियादशायां तु न कल्पितागमत्वादिव्यवहारत्याग इति 'यदागमा'इत्यादेः सत्त्वेनाऽत्रापि पक्षे न दोष इति भावः ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ दीङः प्रतिषेधः स्थाघ्वोरित्वे ॥*॥*

**दीङः प्रतिषेधः स्थाघ्वोरित्वे वक्तव्यः । उपादास्ताऽस्य स्वरः शिक्षकस्येति । 'मीनातिमिनोती'त्यात्त्वे कृते 'स्थाघ्वोरिच्चे'तीत्त्वं प्राप्नोति ॥**

**( प्र० ) दीङ इति ।** उपादी स त इति स्थिते 'मीनातिमिनोती'त्यात्त्वे कृते दारूपत्वादर्थवत्त्वाच्च घुसञ्ज्ञाप्रसङ्गः ।

[ आशयजिज्ञासाभाष्यम् ]

**कुतः पुनरयं दोषो जायते–किं प्रकृतिग्रहणादाहोस्विद्रूपग्रहणात् ? ॥**

**( उ० )** सन्निपातपरिभाषया दीङ आत्वे दारूपाश्रय घुत्वं न । प्रकृतिग्रहणस्य प्रत्याख्यातत्वान्न तन्निबन्धनमपीति गूढाशयः पृच्छति भाष्ये–**कुत पुनरिति ॥**

[ आशयानभिज्ञस्य समाधानभाष्यम् ]

**रूपग्रहणादित्याह ॥**

**( उ० )** आशयमविदुष उत्तर–**रूपग्रहणादिति ।**

[ प्रकृतिग्रहणे दोषसूचकभाष्यम् ]

**इह खलु प्रकृतिग्रहणाद्दोषो जायते–उपदिदीषते । 'सनि मीमाघुरभलभे'ति ॥**

**(प्र०) इह खल्विति ।** एचो विषये आत्वविधानाद्दीशब्द एव दाप्रकृतिरिति दोषः ॥

**(उ०) इह खलु प्रकृतिग्रहणादिति ।** घुसंज्ञासूत्रे प्रकृतिग्रहणेऽयं दोषो जायतेऽतस्तत्र प्रकृतिग्रहणं दुष्टमिति भावः ।

[ एकदेशिनो दोषनिराकरणभाष्यम् ]

**नैष दोषः । 'दाप्रकृति'रित्युच्यते । न चेयं दाप्रकृतिः । आकारान्तानामेजन्ताः प्रकृतयः, एजन्तानामपीकारान्ताः, न च प्रकृतेः प्रकृतिः प्रकृतिग्रहणेन गृह्यते ॥**

**(प्र०) न चेयमिमि ।** एच एव स्थाने आत्वविधानादित्यर्थः ॥

१ क्वचिन्नेदम् ।

(उ०) अथैकदेशी एनं दोषं परिहर्तुमाह-नचैयमिति । तद्व्याचष्टे-एच एवेति । 'मीनाती'त्यस्योपदेशकाले प्रवृत्तिमसौ न जानाति । एवं च साक्षाद्दाप्रकृतिसंभवे व्यवहितप्रकृतेर्न ग्रहणमिति भावः । अतिफल्गुत्वात्त्वेतन्मत दूषणाऽनभिनिवेशो भाष्यकृत इति द्रष्टव्यम् । यत्त्विदं वार्तिकपतम्-न चैतत्पक्षेऽवदान इत्यादावादन्तत्वनिबन्धन युजाद्यसिद्धिः । तत्राकारान्तलक्षणप्रत्ययविधिरिति वचनेनैव तत्सिद्धेः । भाष्ये त्वेतद्वचनप्रत्याख्यानायैज्विषये आत्वं सिद्धान्तितमित्यन्यदिति । तन्न । तादृशवार्त्तिकस्याऽनुपलम्भात् । विपरीतं 'मिनाती'ति सूत्रे 'उपदेशवचनं कर्तव्यं कथञ्युच्सिद्धयर्थ'मिति वार्तिकम् । तत्रोपदेशे एच इति विरुद्धमित्याशङ्क्य एज्विषय इति भाष्यकृता व्याख्यातम् । न तु भवदुक्तवार्तिकं तत्प्रत्याख्यानं वा भाष्ये दृश्यते । एवंच प्रकृतिग्रहणं घुसंज्ञायां वार्त्तिककारोक्तं दुष्टमेव । ननु तदनुरोधेन गुरुभूतवचनानन्तरकल्पनाभिनिवेशः कार्यः । नह्येकदेश्युक्तमतपरिष्कारे गुरुप्रकारेण क्रियमाणे किंचित्फलमित्याहुः ।

[ तटस्थस्य प्रश्ने सिद्धान्तिनः समाधानं ]

**स तर्हि प्रतिषेधो वक्तव्यः ?॥ न वक्तव्यः ॥ घुसंज्ञा कस्मान्न भवति ? ॥ 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'त्येवं न भविष्यति ॥**

(प्र०) सन्निपातेति । अकित्त्वसन्निपातेनाऽऽत्त्वं क्रियते । यदि चाऽत्र घुसंज्ञा स्यात् स्थाघ्वोरिच्चेति कित्त्वं स्यादित्यकित्त्वस्य व्याघातः स्यादिति घुसंज्ञां प्रति नैवाऽऽकार आत्मानं दर्शयतीति घुसंज्ञा न प्रवर्तते । अत्र केचिदाहुः-दीङस्तृजादावात्त्वे घुसंज्ञा भवत्येवेति प्रणिदातेति णत्वं भवति । अत एव वार्तिककारेण 'स्थाघ्वोरित्त्वे'इतिविशेषो निर्दिष्टः ॥ अन्ये त्वाहुः—निर्देश एवैजन्तानामनुकरणानामात्त्वे कृते दाण्दाञ्धाञां चैकशेषे द्वन्द्वे च 'दाधा' इति निर्देशाद्दीङो नास्ति प्राप्तिः । नहि तदनुकरणस्याऽऽत्त्वमस्ति, अगुणविषयत्वात् ॥

(उ०) अकित्त्वेति । एचो विषयस्याऽन्यथाऽसंभवादिति भावः । कित्त्वमिति । तदभावे[3] संनियोगशिष्टत्वादित्वमपि नेति कार्याऽभावाद्धुत्वस्याऽप्रवृत्तिरिति भावः ॥ प्रणिदातेतीति । ननु 'प्रणिदीयते' इत्यत्र नित्यणत्वप्रसङ्गो णत्वविधौ प्रकृतिग्रहणादिति चेन्न, इष्टापत्तेः । अन्ये त्वाहुरिति । अत्राऽरुचिबीजं तु वार्तिकभाष्यविरोधान्न तथा सूत्रतात्पर्यमिति । अगुणेति । गुणनिमित्तप्रत्ययप्रसङ्गाऽभावादित्यर्थः ॥

[ आक्षेपवार्तिकम् ]

*||*|| दाप्प्रतिषेधे न दैप्यनेजन्तत्वात् ||*||*

**दाप्प्रतिषेधे[4] दैपि प्रतिषेधो न प्राप्नोति-'अवदातं मुखम्' ॥ ननु चाऽऽत्त्वे कृते भविष्यति ॥ तद्व्यात्त्वं न प्राप्नोति ॥ किं कारणम् ? ॥ 'अनेजन्तत्वात्' ॥**

(प्र०) दाप्प्रतिषेध इति । 'दाप्लवने'इत्यस्यैव निषेधः स्यादित्यर्थः । अवदातमिति । तत्त्वमत्र प्राप्नोति ॥

(उ०) इत्यस्यैवेति । न तु दैप इत्यर्थः । तस्य पकारे श्रूयमाणे आत्वाऽयोगादिति भावः ॥ ननु पकारे लुप्तेऽपि कथमात्वमुपदेशकाले एजन्तत्वाभावात्, नानुबन्धकृतमित्याद्याश्रयणे तु प्रकृतेऽपि न दोष इति चेन्न । उपदेश इति षष्ठ्यर्थे सप्तम्याः सत्त्वेनोपदिश्यमानस्यैजन्तस्येत्यर्थेन लुप्ते आत्वप्रवृत्तेः ! सति तु तस्मिन्नात्वम्, एजन्तत्वाऽभावात् । यस्मात्परो नास्ति तत्रैवाऽन्तशब्दप्रवृत्तेरिति दिक् ॥ तत्वमिति । 'अच उपसर्गात्त'इत्यनेनेत्यर्थः ॥

[ समाधानवार्तिकम् ]

*||*|| सिद्धमनुबन्धस्याऽनेकान्तत्वात् ||*||*

**सिद्धमेतत् ॥ कथम् ?॥ 'अनुबन्धस्यानेकान्तत्वात्' । अनेकान्ता अनुबन्धाः ॥**

(उ०) भाष्ये-अनेकान्ता इति । एवं च पकारसत्त्वेपि एजन्तत्वाऽनपायादात्त्वप्रवृत्तिरिति भावः ॥

[ समाधानान्तरवार्तिकम् ]

*||*|| पित्प्रतिषेधाद्वा ||*||*

**अथ वा 'दाधा घ्वपि'दिति वक्ष्यामि । तच्चाऽवश्यं वक्तव्यम् । 'अदा'बिति ह्युच्यमाने इहापि प्रसज्येत-'प्रणिदापयती'ति ॥**

[ अवश्यवक्तव्यताविघटनभाष्यम् ]

**शक्यं तावनेनाऽदाबिति ब्रुवता बान्तस्य प्रतिषेधो विज्ञातुम् ॥**

(प्र०) शक्यं तावदिति । दाब्दैपौ[5] चैं धातुषु बान्तौ पठितव्यौ ।

1 स्यादिति । 'तर्ही'तिशेषः । 2 कृतइति । 'कृतात्वानां तेषां'मितिशेषः । 3 तदभावे-कित्त्वाऽभावे ।

4 दाबिति । दापः प्रतिषेधे स्वीक्रियमाणे सति दैब्धातोरपि प्रतिषेधो न प्राप्नोतीत्यर्थः । 5 कचिन्न ।

( उ० ) 'तच्चावश्य'मित्यादि विघटयितुं[1] भाष्ये– शक्यं तावदिति। लक्षणप्रतिपदोक्तपरिभाषया तु पुगन्तेऽदाबिति निषेधो न शक्यो वारयितुं, गामादाग्रहणेऽविशेषात्। 'दा'बित्यपि पकारोपलक्षितदाग्रहणमेवेति भावः। बान्तपक्षेऽपि चर्त्त्वेन पस्य सिद्धत्वान्नाऽस्ति सूत्रभेदः॥

[ वादिप्रतिवादिनोरुक्तिपत्युक्तिभाष्यं ]

**सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्तं 'दाप्प्रतिषेधे न दैपी'ति ॥ परिहृतमेतत्– 'सिद्धमनुबन्धस्यानेकान्तत्वा'दिति ॥ अथैकान्तेषु दोष एव ॥ एकान्तेष्वपि न दोषः। आत्त्वे कृते भविष्यति ॥ ननु चोक्तं–'तद्व्यात्वं न प्राप्नोति ॥ किं कारणम् ?॥ अनेजन्तत्वात्–'इति॥ पकारलोपे कृते भविष्यति ॥ नह्ययं तदा दाब्भवति ॥**

( उ० ) शङ्कते—**नह्ययमिति** ॥

[ उत्तरभाष्यम् ]

**भूतपूर्वगत्या भविष्यति ॥**

(उ०) उत्तरयति–**भूतपूर्वेति**। दात्वं श्रुत्या, पकारवैशिष्ट्यं तु अनयेति भावः॥

[ समाधानोपपादकभाष्यम् ]

**एतच्चात्र युक्तं—यत्सर्वेष्वेव सानुबन्धकग्रहणेषु भूतपूर्वगतिर्विज्ञायते ॥ अनैमित्तिको ह्यनुबन्धलोपस्तावत्येव भवति ॥**

( प्र० ) **तावत्येवेति**। इत्संज्ञायां सत्यामेव। प्रयोगे दाशब्द एवायं पित्कार्यं तु लभत इत्यर्थः॥

( उ० ) **इत्संज्ञायामिति**। उपदेशोत्तरकालं जातायामेवेत्यर्थः॥

[ ज्ञापकोपन्यासेन समाधानान्तरम् ]

**अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति–'नानुबन्धकृतमनेजन्तत्व'मिति, यदयमुदीचां माङो व्यतीहारे इति मेङः सानुबन्धकस्याऽऽत्त्वभूतस्य ग्रहणं करोति ॥**

( प्र० ) **अथवेति**। अनुबन्धानामेकान्तत्वपक्षे उपदेश एवैजन्तानामात्त्वमुच्यमानं दैपो न प्राप्नोतीति ज्ञापकोपन्यासः। **माङ इति**। मेङो ग्रहणं न माङः, मेङो व्यतिहारेण नित्ययोगात्। माङस्तु विवक्षावशाद्व्यतिमिमीत इति कादाचित्कत्वाद्व्यतिहारयोगस्य। प्रणिदानं व्यतिहार इत्येकोऽर्थः। 'उदीचां मेङ' इति तु न कृतम्, एवं हि 'नानुबन्धकृतमनेजन्तत्व'मिति न ज्ञापितं स्यात्॥

( उ० ) **मेङ इति**। अन्तरङ्गत्वाद्[2]व्यतीहारो नित्यसंबद्ध एव गृह्यते; न तु पदान्तरसन्निधानेन बहिरङ्गव्यतीहारवृत्तिरिति भावः। **केचित्तु** माङोऽनभिधानात् क्त्वाप्रत्ययानुत्पत्तिरिति न तस्य ग्रहणमित्याहुः॥ **उदीचां मेङ इति**। 'उदीचां म' इत्यस्याप्युपलक्षणमिदम्। न चाऽनुबन्धसत्त्वे 'मे' इत्यस्य धातुत्वाऽभावात्कथमात्वम्, अनुबन्धलोपे एवं धातुत्वमित्यर्थस्य 'न धातुलोप' सूत्रे भाष्यकैयटयोः स्पष्टत्वादिति वाच्यम्, आत्वविधायके धातोरित्यस्याऽसंबन्धात्। गवादिशब्दानामुपदेशाऽभावान्नात्वम्। इरेप्रभृतीनामुपदेशेपि तेषामशित्परत्वाऽभावान्नात्वम्। प्रसज्यप्रतिषेधेपि प्रत्यासत्त्या शित्प्रत्ययपरत्वयोग्यानामेजन्तानामेव ग्रहणान्न दोष इति दिक्॥

**अथ वा दाबेवायं न दैबस्ति ॥ कथं–'अवदायती'ति ? ॥ श्यन्विकरणो भविष्यति ॥ [ दाधाघ्वदाप् ]।**

(प्र०) **अथवेति**। दिवादिषु 'दाप् शोधने' इति पठिष्यत इत्यर्थः।

(उ०) **दिवादिष्विति**। ननु ताच्छीलिके चानशि[3] 'दायमान' इत्यत्र स्वरे भेदः। श्यनि धातोरुदात्तत्वं, शपि चानशोन्तोदात्तत्वमिति चेन्न। सतिशिष्टादपि विकरणस्वरात् सार्वधातुकस्वरस्य बलीयस्त्वोक्तेरुभयथाऽप्यन्तोदात्तत्वाऽनपायादिति दिक्[4]॥ [ दाधाघ्वदाप् ]॥

## आद्यन्तवदेकस्मिन् ॥१।१।२०॥

( प्र० ) आद्यन्तवदेक ॥ एकशब्दोऽसहायवाची, न संख्यावाची, बहुष्वपि व्यवस्थितस्यैकत्वसंख्याऽस्तीति किमेकस्मिन्नित्यनेन कृतं स्यात्। 'एकस्मि'न्नित्युपमेये सप्तमीनिर्देशादाद्यन्तवदित्युपमानत्वसम्बन्धाद्वतिर्विज्ञायते। यथा 'मथुरावत्पाटलिपुत्रे प्राकार' इति। द्वयोर्ह्युपमानोपमेययोराधाराधेयसंबन्धप्रतिपादनाय वाक्यं प्रयुज्यते। यदि च तयोर्भिन्नविभक्तिकत्वं स्यादुपमानोपमेयभाव एव न गम्येत। सर्वातिदेशानां कार्यातिदेशस्य प्राधान्यात्तस्यैवेहाश्रयणम्॥

( उ० ) **आद्यन्तव**। **बहुष्वपीति**। यद्यप्युत्तरा

1 **'विघटयितु'** मित्यस्य 'आहे'तिशेषः।

२ प्रथमोपस्थित्याऽन्तरङ्गत्वम्।

३ 'ञ्नित्यादिर्नित्यमित्यनेन प्राप्नोती'तिशेषः।

४ **उभयथा**–शपि श्यनि वा।

सङ्ख्या पूर्वसङ्ख्याबाधिका, तथापीतरेषां बुद्धिविषयत्वाऽभावे बहुमध्यस्थेऽप्येकत्वाङ्गीकारान्न दोषः । यथा 'शते पञ्चाश'दितीति भावः । **किमेकस्मिन्नित्यनेनेति** । तद्धि समासंनयने भव इत्यर्थे भाऽऽकारस्यादित्वे तस्य वृद्धत्वेन प्राप्तच्छाऽभावार्थं, दरिद्रातेरिवर्णान्तलक्षणाऽचोऽभावार्थं च । अत्र[1] च स्वरे विशेषः । उपमेये सप्तमीसत्त्वे सप्तम्यन्ताद्वतौ मानमाह–**द्वयोरिति । उपमानोपमेययोरिति** । 'प्राकारपदे[2] वाच्येने'ति शेषः ॥ **आधाराधेयसंबन्धेति** । आधारत्वाधेयत्वरूपसंबन्धप्रतिपादनायेत्यर्थः । **न गम्येतेति** । उपमानत्वे[3]प्रकारकोपमेयविशेष्यकबोधे समानविभक्तिकत्वस्य तन्त्रत्वादिति भावः ॥ **सर्वातिदेशानामिति** । रूप–निमित्त तादात्म्य–शास्त्र–व्यपदेश-कार्याऽतिदेशानां मध्ये इत्यर्थः ॥ **प्राधान्यादिति** । सर्वेषां कार्यार्थत्वादिति भावः ॥

[ प्रश्नभाष्यम् ]

**किमर्थमिदमुच्यते ? ॥**

(प्र०) **किमर्थमिति** । व्यपदेशिवद्भावेनैव सिद्धत्वान्न कर्तव्यमित्यर्थः ॥

[ समाधानवार्तिकम् ]

*॥ * ॥ सत्यन्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्वचनम् ॥ * ॥*

**सत्यन्यस्मिन् यस्मात् पूर्वं नास्ति परमस्ति स आदिरित्युच्यते । सत्यन्यस्मिन् यस्मात्परं नास्ति पूर्वमस्ति सोऽन्त इत्युच्यते 'सत्यन्यस्मिन्नाद्यन्तवद्भावात्',–एतस्मात् कारणादेकस्मिन्नाद्यन्तापदिष्टानि कार्याणि न सिध्यन्ति । इष्यन्ते च स्युरिति । तान्यन्तरेण यत्नं न सिध्यन्तीत्येकस्मिन्नाद्यन्तवद्वचनम् । एवमर्थमिदमुच्यते ॥**

(प्र०) इतरो मुख्ये संभवति गौणे न स्यादित्याह–**सत्यन्यस्मिन्निति** । आद्यन्तौ विद्येते यस्मिन् शास्त्रे तदाद्यन्तवत्, तस्य भावात्–प्रवर्तनादित्यर्थः । क्वचिदाद्यन्तभावादिति पाठः ।

( उ० ) **मुख्ये**–व्यपदेशिनि । **गौणे**–व्यपदेशिसदृशे ॥ नन्वाद्यन्तवद्भावादिति न वतिः, सत्यन्यस्मिन्मुख्याद्यन्तत्वात् । नापि मतुप्, आद्यन्तशब्दवच्छास्त्रसद्भावस्य परपूर्वसत्त्वानपेक्षत्वेन 'सत्यन्यस्मिन्नि'त्यस्याऽयोगादत आह–**आद्यन्ताविति** । आद्यन्तशब्दावित्यर्थः । एवं चाद्यन्तवद्भावादित्यस्याऽऽद्यन्तपदवच्छास्त्रप्रवृत्तेरित्यर्थः । **क्वचिदिति** । आद्यन्तव्यवहारादिति तदर्थः ।

[ आक्षेपतत्समाधानभाष्यम् ]

**अस्ति प्रयोजनमेतत् ? ॥ किं तर्हीति ॥**

[ आक्षेपवार्तिकखण्डम् ]

*॥*॥ तत्र व्यपदेशिवद्वचनम् ॥*॥*

**तत्र[4] व्यपदेशिवद्भावो वक्तव्यः । 'व्यपदेशिवदेकस्मिन् कार्यं भवती'ति वक्तव्यम् । किं प्रयोजनम् ? ॥**

( प्र० ) **तत्र व्यपदेशिवद्वचनमिति** । सर्वकार्यसिद्ध्यर्थं व्यापकं कर्त्तव्यमित्यर्थः । तत्र[5] निमित्तसद्भावान्मुख्यो व्यपदेशो यस्याऽस्ति स व्यपदेशी, यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशः स तेन तुल्यं वर्तते कार्यं प्रतीति 'व्यपदेशिवद्भवती'त्युच्यते ॥

( उ० ) **सर्वकार्येति** । आद्यन्ताऽपदिष्टाद्यन्ताऽनपदिष्टसर्वकार्यसिद्ध्यर्थं गुर्वपि[6] 'व्यपदेशिव'दिति 'आद्यन्तव'दित्यस्य स्थाने कार्यमिति भावः । **स तेनेति** । 'तेन तुल्य'मिति तृतीयायां सर्वविभक्त्यर्थान्तर्भावात्तृतीयान्ताद्वतिरुक्त इति बोध्यम् ॥

[ प्रयोजनवार्तिकखण्डम् ]

*॥*॥ एकाचो द्वे प्रथमार्थम् ॥*॥*

**वक्ष्यति–'एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देश'–इति । तस्मिन् क्रियमाणे इहैव स्यात्–पपाच पपाठ; इयाय आर इत्यत्र न स्यात् । 'व्यपदेशिवदेकस्मिन् कार्यं भवती'त्यत्रापि सिद्धं भवति ॥**

( उ० ) भाष्ये–**तस्मिन्क्रियमाण इति** । तस्मिन्नाश्रीयमाण इत्यर्थः । **पपाचेति** । नन्वत्र धातुरेव प्रथम एकाज्, न तु धातोः प्रथम एकाजिति कथमत्र व्यपदेशिवद्भावं विना प्राप्तिरिति चेन्न, आदित्वपर्यायप्रथमत्वस्य सूत्रे णैवाऽतिदेशसिद्धया तत्र व्यपदेशिवद्भावारम्भस्य मुख्यं प्रयोजनमित्याशयात् । 'इयाये'त्यादौ तु '**द्विर्वचनेऽचि**'ति रूपस्थानिवत्त्वादज्व्यतिरिक्ताऽभावेन नैकाच्त्वमिति बोध्यम् ।

[ प्रयोजनवार्तिकखण्डम् ]

*॥*॥ षत्वे चाऽऽदेशसम्प्रत्ययार्थम् ॥*॥*

**वक्ष्यति–'आदेशप्रत्यययोरित्यवयव-**

---

१ अत्रच दरिद्रातौ च । २ वाच्येनेति । तेन सहेत्यर्थः । ३ 'उपमानप्रकारक' । पा० ।

४ तत्र–वार्त्तिकोक्तप्रयोजनसत्त्वे । ५ तत्र–वचने । ६ गुर्वपि–मात्रागौरवपदगौरववदपि ।

षष्ठ्[1]येषे'ति । एतस्मिन् क्रियमाणे इहैव स्यात्-करिष्यति हरिष्यति । इह न स्यात् 'इन्द्रो मा वक्षत्' 'स देवान्यक्ष[2]'दिति । 'व्यपदेशिवदेकस्मिन्कार्यं भवती'त्यत्रापि सिद्धं भवति ।

( प्र० ) वक्षदिति । वच् लेट् तिप् । 'इतश्च लोप' इतीकारलोपः ।' 'लेटोऽडाटा'वित्यडागमः, सिप् कुत्वम् । अत्र सकारमात्रं प्रत्ययो न तु प्रत्ययस्याऽवयवः सकार इति षत्वं न स्यात् ।

( उ० ) भाष्ये-अवयवषष्ठ्[2]येषेति । प्रत्ययांऽशे इति भावः ॥ [ए]तस्मिन्क्रियमाणे इति । अवयवषष्ठीत्वे आश्रीयमाणे इत्यर्थः ॥

[ आक्षेपोपसंहारभाष्यम् ]

स तर्हि व्यपदेशिवद्भावो वक्तव्यः ? ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

न वक्तव्यः ॥

[ तस्यैव समाधानवार्तिकम् ]

॥*॥ *अवचनाल्लोकविज्ञानात्सिद्धम्* ॥*॥

अन्तरेणैव वचनं लोकविज्ञानात् सिद्धमेतत् ॥

(प्र०) अवचनादिति । अवचनं-वचनरहितं यल्लोकविज्ञानं तस्माल्लोकव्यवहारादित्यर्थः । इह तावदियायेति इण्धातुः प्रयोगभेदाद्बहुरूपः—एति, इतः, यन्ति, अयनम्, आयकः, अगात्, गमयतीति । तस्याऽयमेकोऽजवयव इव लक्ष्यते । अथवा-अर्थवतो धातोरयं वर्णरूप एकोऽजित्यर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजिति । एवं 'शिलापुत्रकस्य शरीर'मित्यनेकक्रियाविषयस्याऽवस्थातुरिदमेकावस्थायुक्तं शरीरमित्यस्ति व्यपदेशः । एवं सिप्प्रत्यय इट्सहितोऽपि दृष्टो 'जोषिष'-दित्यादौ, 'वक्ष'दित्यादौ केवलोऽपीति, तस्यायं सकार इति व्यपदिश्यते । लोकनिरूढश्चायं व्यवहार इति लोकवच्छास्त्रेऽपि व्यवहाराद्गौणमुख्यन्यायोऽत्र नावतरति ॥

(उ०) 'विज्ञान'शब्दो व्यवहारवाचीत्याह—व्यवहारादिति । तत्फलितव्याख्यानं भाष्ये-अन्तरेणैवेति । यथा लोके व्यवहारो वचनं विनैव सिध्यति तथा शास्त्रेपि वचनं विना सिध्यतीत्यर्थः । अगादित्यादि । 'इणो गा लुङि' 'णौ गमिरबोधने' इत्यादेशौ । एकोऽच् । असहायोऽजित्यर्थः । नन्वेकाचोऽवयविनो द्विर्वचनमिति यस्याऽयमवयवस्तस्य बहुरूपस्य भवितव्यं द्वित्वेनेत्यत आह—अथवेति । काल्पनिकभेदेन व्यवहारे दृष्टान्तमाह-एवमिति । व्यपदेशो-भेदनिबन्धनसंबन्धव्यवहारः । शास्त्रेपीति । लोकाऽप्रसिद्धत्वमेव तत्त्यागे बीजं तच्च न प्रकृते इति भावः ॥

[ एकदेशिनो दृष्टान्तभाष्यम् ]

तद्यथा लोके-'शालासमुदायो ग्रामः' इत्युच्यते । भवति चैतदेकस्मिन्नपि-'एकशालो ग्रामः'-इति ॥

[ दृष्टान्तविघटनभाष्यम् ]

विषम उपन्यासः । ग्रामशब्दोऽयं बह्वर्थः । अस्त्येव शालासमुदाये वर्तते । तद्यथा-'ग्रामो दग्धः' इति । अस्ति वाटपरिक्षेपे वर्तते । यद्यथा-ग्रामं प्रविष्ट' इति । अस्ति च[3] मनुष्येषु वर्तते । तद्यथा-'ग्रामो गतो' 'ग्राम आगतः' इति । अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते । तद्यथा-'ग्रामो लब्धः' इति ॥

तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते, तमभिसमीक्ष्यैतत्प्रयुज्यते-'एकशालो ग्रामः' इति ॥

[एकदेशिनो दृष्टान्तान्तरभाष्यम् ]

यथा तर्हि-'वर्णसमुदायः पदं' 'पदसमुदाय ऋक्' 'ऋक्समुदायः सूक्त'मित्युच्यते । भवति चैतदेकस्मिन्नपि-'एकवर्णं पदम्,' 'एकपदा ऋक्' 'एकर्चं सूक्त'मिति ॥

(प्र०) पदसमुदाय इति । पादप[4]र्यायः पदशब्दः । तथा चैकपदा ऋ[5]गिति पाद एव विवक्षितो न तु ऋचः कस्याश्चिदप्येकमेव पदं भवति ॥

(उ०) पादपर्याय इति । 'वर्णसमुदायः पद'मित्यत्र तु पदशब्दो यथाश्रुत एव ॥

[ उक्तदृष्टान्तान्तरविघटनभाष्यम् ]

अत्राऽप्यर्थेन युक्तो व्यपदेशः । पदं नामाऽर्थः, ऋङ् नामार्थः सूक्तं नामार्थ इति ।

---

१ षष्ठ्येवेति' पा० । २ इतिः क्वचिन्न । ३ चः क्वचिन्न ।

४ पादपर्यायः-पादपर्यायवाची । ५ इति-इत्यत्र ।

(प्र०) **अत्राप्यर्थेनेति** । पदादीनां योऽर्थः सोऽन्यपदार्थ इत्यर्थः । अभेदोपचाराच्चाऽर्थ एव पदादिभिरभिधीयते ॥

(उ०) **पदादीनामिति** । 'एकवर्णं पद'मित्यादौ । नन्वर्थस्य पदत्वं कथमत आह–**अभेदेति** । तदुपचारश्च शब्दार्थयोरनादिरिति बोध्यम् । **पदादिभिः**–पदशब्दादिभिः ॥

[ सिद्धान्तिनो दृष्टान्तभाष्यम् ]

**यथा तर्हि-बहुषु पुत्रेष्वेतदुपपन्नं भवति–'अयं मे ज्येष्ठोऽयं मे मध्यमोऽयं मे कनीया'निति । भवति चैतदेकस्मिन्नपि–'अयमेव मे ज्येष्ठोऽयमेव मे मध्यमोऽयमेव मे कनीया'निति ॥**

(प्र०) **अयमेव मे ज्येष्ठ इति** । प्रथमरूपतयाऽध्यवसायात् । मध्यमकार्यकरणाच्च 'मध्यम' इति व्यपदिश्यते । 'अन्यो न जनिते'ति बुद्धया 'कनीया'निति व्यपदिश्यते ॥

(उ०) **प्रथमेति** । तस्मात्पूर्वस्याऽभावादिति भावः । **मध्यमकार्यं**–तत्सम्बन्धजसुखादिकम् ॥

[ सिद्धान्तिनो दृष्टान्तान्तरभाष्यम् ]

**तथाऽसूतायामसोष्यमाणायां च भवति–'प्रथमगर्भेण हते'ति ॥**

(प्र०) **असूतायामिति** । बहुकृत्वोऽपि प्रसूता प्रथमपुत्रेण काचिद्धन्यते । तथा [च[1]] या प्रसोष्यते साऽपि कदाचित्पूर्वोत्पन्नेन पुत्रेण हन्यत इत्युभयोरुपादानम् । नापि प्रसूता नापि प्रसोष्यते, कुक्षिस्थितेनैव गर्भेण हता 'प्रथमगर्भेण हते'त्युच्यते । अपत्यपर्यायो गर्भशब्दः। तत्र तस्या एव योग्यताध्यवसानेन भाविगर्भविवक्षया 'प्रथमगर्भेण हते'त्युच्यते । स्त्र्यन्तरेषु वा बहुपुत्रत्वे सत्याद्यगर्भस्य प्रथमव्यपदेशदर्शनात्तथाविधस्य प्रथमगर्भव्यवहारः ॥

(उ०) **बहुकृत्वोऽपीति** । यथा परशुरामेण रेणुका । **तथा येति** । संप्रति गर्भिणीत्यर्थः । गर्भस्थमादाय त[3]त्रापि प्रथमव्यवहार इत्यर्थः । ननु या सूता सा न गर्भेण हता भवति किं त्वपत्येनेति गर्भेण हतायां तद्व्यतिरेकप्रदर्शनमयुक्तमत आह–**अपत्यपर्याय इति** । तच्चोदरस्थं बहिर्भूतं वेत्यन्यत् । तत्र प्रथमव्यवहारे बीजमाह–**तस्या एवेति** । **स्त्र्यन्तरेषु**–बहुप्रसववतीषु । **तथाविधस्येति** । अविद्यमानपूर्वगर्भस्येत्यर्थः ।

[ सिद्धान्तिनस्तृतीयदृष्टान्तभाष्यम् ]

**तथाऽनेत्याऽनाजिगमिषुराह–'इदं मे प्रथममागमन'मिति ॥**

(प्र०) **अनेत्येति** । बहुकृत्वो ह्यागतः पूर्वमागमनं स्मृत्वा प्रथमव्यपदेशं तत्र मुख्यं करोत्येव, आजिगमिषुश्च भावीन्यागमनानि बुद्ध्या व्यवस्थाप्य कुर्यादेव प्रथमव्यवहारम् । यस्तु सकृदेवाऽऽगतः सोऽपि करोति प्रथमव्यवहारमिति प्रतिपादनार्थमनेत्याऽनाजिगमिषुरित्युपात्तम् । तत्राऽन्यसंबन्धिषु बहुष्वप्यागमनेष्वाद्यस्य प्रथमव्यवहारदर्शनात्तथाविधत्वात्स्वादेकस्मिन्नप्यागमने प्रथमव्यवहारः ॥

(उ०) न[4]ह्यागमनं विनेदं मे प्रथममागमनमिति व्यवहाराऽसंभवादनेत्येदं मे प्रथममागमनमित्यसङ्गतमत आह–**बहुकृत्व इति** । अ[5]नेत्येत्यस्य 'इतः पूर्व'मिति शेष इति भावः । **तथाविधत्वादिति** । अविद्यमानपूर्वागमनत्वादित्यर्थः ॥

[ सूत्रप्रत्याख्यानभाष्यम् ]

**आद्यन्तवद्भावश्च शक्योऽवक्तुं । कथम् ?।**

(उ०) परे तु पदऋगादिपदानि अर्थशब्दसमुदायवृत्तीनि, तस्य शब्दमात्ररूपवर्णपादऋगाद्यवयव इत्येव भाष्यार्थः । न तु शुद्धोऽर्थोऽन्यपदार्थं इति, तथाऽप्रतीतेः, 'एकर्चं सूक्तं पठे'त्यादिव्यवहारानापत्तेश्च । एवं चाऽर्थवतो धातोरयमेकोऽज् वर्णरूप इति अर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजितीति कैयटोक्तं चिन्त्यम् । एतद्भाष्यरीत्या तस्य मुख्यव्यवहारत्वेन व्यपदेशिवद्भावाऽविषयत्वात् । कैयटरीत्या शुद्धार्थस्याऽन्यपदार्थत्वेऽत्रापि तथैवाऽस्तु, शब्दार्थयोरभेदाच्च शब्देपि तत्त्वमिति अत्रापि न व्यपदेशिवद्भावप्रयोजनम् । किं चैकाजिति बहुव्रीहिणा प्रथमस्येत्युपस्थितावयवस्य विशेषणम् । तस्य चाऽनर्थकत्वमिति अर्थस्योपादानत्यागावत्यसंबद्धौ । एतदेव ध्वनयता 'पदं नामार्थ' इति भाष्ये उक्तम् । धात्ववयवत्वं तु कैयटोक्तरीत्या वक्तुं शक्यम् । अत ए[5]व बहुव्रीहिनिर्देशाऽनुपपत्तिरेव व्यपदेशिवदित्याश्रयणे बीजमुक्तम् । **'अत्राप्यर्थेने'ति** भाष्यस्य पदादिशब्दार्थस्याऽर्थेन युक्तत्वादित्यर्थः । अर्थशब्दोभयवृत्तिपदत्वऋक्त्वादित्याशयः । 'पदं नामार्थ' इत्यादेरर्थोऽपीत्यर्थः । **यथा तर्हीति** । यथैकस्मिंस्तत्तद्धर्मारोपेण युगपज्ज्येष्ठत्वादिव्यवहारस्तथैकस्मिन्नारोपिताऽनेकावस्थाभिः समुदायरूपत्वस्या-

---

1 क्वचिन्न । २ 'सायेन' । ३ **तत्रापि**–कुक्षिस्थगर्भेपि । ४'तथाचेत्यादिः। ५ **अतएव**–धात्ववयवत्वस्य सिद्धत्वादेव ।

प्यारोपेणैकाच्त्वादिव्यवहारोपपत्तिर्द्वितीये तृतीये च दृष्टान्ते प्रथमेत्युपलक्षणं चरमस्यापि। तृतीये कदाचिच्चरममागमनमित्यपि व्यवहारात्। 'आद्यन्तवद्भावश्च शक्योऽवक्तु'मित्यस्य 'प्रकारान्तरेणापी'ति शेष इत्याहुः। वस्तुतस्त्वीदृशेषु पातञ्जलोक्तं विकल्पात्मकं वस्तुशून्यमेव ज्ञानमित्यारोपानुपयोग एव। लोकव्यवहारवत्तेनापि शास्त्रीयो व्यवहार इति तत्त्वम्।

[सूत्रप्रत्याख्यानसाधकवार्तिकम्]

*॥ * ॥ अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकास्मिन् ॥ * ॥*

**अपूर्वलक्षण आदिः, अनुत्तरलक्षणोऽन्तः। एतच्चैकस्मिन्नपि भवति। 'अपूर्वानुत्तरलक्षणत्वात्'। एतस्मात्कारणादेकस्मिन्नप्याद्यन्तापदिष्टानि कार्याणि भविष्यन्तीति नार्थ आद्यन्तवद्भावेन॥**

(प्र०) इदानीं योगं प्रत्याख्यातुमाह–**अपूर्वेति**। यद्यपि बहुष्ववस्थितेष्वाद्यन्तशब्दौ प्रयुज्येते तथाप्यपूर्वानुत्तरत्वमात्रमेतयोः प्रवृत्तिनिमित्तम्। तच्चैकस्मिन्नप्यस्तीति नार्थः सूत्रेण॥

[सूत्रस्थापनभाष्यम्]

**गोनर्दीयस्त्वाह[1]—सत्यमेतत्[2] 'सति त्वन्यस्मि'न्निति।**

(प्र०)भाष्यकारस्त्वाह–सति त्वन्यस्मिन्निति। न ह्यनपेक्षितप्रतियोगिनोराद्यन्तयोः प्रवृत्तिरित्यर्थः। तस्मादेकस्मिन्मुख्य आद्यन्तव्यपदेशो नास्तीति कर्तव्यो[ऽयं] योगः। यद्यपि लौकिकेन व्यपदेशिवद्भावेनाद्यन्तव्यपदेश एकस्मिन्नपि सिध्यति तथापि गौणत्वात्कार्येण न भवितव्यमिति यस्य भ्रान्तिस्यात्तं प्रति योगोऽयमारब्धः॥

(उ०) 'गोनर्दीय'पदं व्याचष्टे–**भाष्यकार इति**॥ **अनपेक्षितप्रतियोगिनोः**–अनपेक्षितपरपूर्वयोः। **आद्यन्तयोः**–आद्यन्तरूपार्थयोः। **प्रवृत्तिः**। आद्यन्तशब्दप्रवृत्तिरित्यर्थः। **तथापीति**। वस्तुतो लोकनिरूढत्वाद् गौणत्वमेवाऽत्र नास्तीत्यर्थः।

[सूत्रप्रयोजनजिज्ञासाभाष्यम्]

**कानि पुनरस्य योगस्य प्रयोजनानि?।**

[प्रयोजनवार्तिकम्]

*॥ * ॥ आदिवत्त्वे प्रयोजनं प्रत्ययञ्निदाद्युदात्तत्वे ॥ * ॥*

**['आदिवत्त्वे प्रयोजनं प्रत्ययञ्निदाद्युदात्तत्वे']। प्रत्ययस्यादिरुदात्तो भवतीतीहैव स्यात्—कर्तव्यं तैत्तिरीयः। औपगवः कापटव इत्यत्र न स्यात्॥ 'ञ्नित्यादिर्नित्य' मितीहैव स्यात्–अहिंचुम्बकायनिः आग्निवेश्यः। गार्ग्यः कृतिरित्यत्र न स्यात्।**

(प्र०) प्रत्ययञ्निदाद्युदात्तत्व इति। प्रत्ययस्याद्युदात्तत्वं, ञ्निति चाद्युदात्तत्वमित्यर्थः। कथं पुनर्भिन्नविभक्त्योर्द्वन्द्वः?। उच्यते–प्रत्ययस्य यदाद्युदात्तत्वं तस्य प्रत्ययोऽपि विषय इति प्रत्ययेऽपि तदुच्यते। यद्वा ञ्निति यदाद्युदात्तत्वं तत् ञ्नितोऽपि संबन्धि भवतीति नास्ति भिन्नविभक्तित्वम्। ऋदोरबित्याद्युदात्तत्वनिवृत्त्यर्थात्पित्त्वाल्लिङ्गादेकाचोऽपि प्रत्ययस्याद्युदात्तत्वं भविष्यतीति चेदकारविषयमेव लिङ्गं स्यादितीकारोकारयोः प्रत्यययोराद्युदात्तत्वं न स्यात्, विशेषणार्थं वा तित्करणं स्यात् थाथादिसूत्रे,–इत्यज्ञापकं स्यात्। गार्ग्य इति। अत्र परत्वाद्यस्येति लोपे कृते आदित्वाऽभावात्प्रकृतेराद्युदात्तत्वं न प्राप्नोति। स्वरविधौ स्थानिवद्भावप्रतिषेधाच्च नास्ति द्व्यच्त्वम्। स्वरविधौ व्यञ्जनस्याऽविद्यमानत्वान्नास्ति हलपेक्षमप्यादित्वम्। कृतिरिति। क्तिनो नित्त्वं 'तादौ च निति कृत्यता'-वित्येवमर्थं स्यात्। 'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इत्येतदनाश्रित्यैतदुक्तम्॥

(उ०) **कथमिति**। भिन्नविभक्त्यन्तयोरसमप्रधानत्वेन साहित्याऽप्रतीतेरित्यर्थः। **इकारोकारयोरिति**। उपाधिः, चिकीर्षुरित्यादौ॥ सामान्यापेक्षज्ञापकत्वेप्याह–**विशेषणार्थं वेति**। अहिचुम्बकात्प्राचामवृद्धादिति फिन्। अग्निवेशाद्गर्गादियञ्। **स्वरविधाविति**। नन्वस्य स्वरोद्देश्यके विधावित्यर्थो वा, हलः स्वरप्राप्तावित्यर्थो वा?, उभयथापि नेह प्राप्तिरिति चेत्, सत्यम्, अत्र सूत्रेऽजन्तरापेक्षमेवादित्वं गृह्यते। अन्त्यस्याऽच एव तद्व्यावर्त्यत्वेनोपस्थित-

---

१ **गोनर्दीयो** वार्तिककार इति तु **बृहच्छब्दरत्ने श्रीहरिदीक्षिताः**। २ **सत्यमिति**। एतत् त्वदुक्तं सत्यं, तु-परन्तु सत्यस्मिन्नित्यपि बोध्यम्। तथा च त्वदुक्तं तद्घटकं, नतु तावन्मात्रम्। किं तु विशिष्टं प्रवृत्तिनिमित्तमिति भावः। तदाह–**नह्येति**। ३ लुप्तं स्यात्।

त्वादिति भाष्याशयात्। किं च 'स्त्रैण'मित्यादावाद्युदात्तत्वं न स्यादिति न दोषः। ञित्त्वं तु वृद्ध्यर्थतया सावकाशं बोध्यम्। क्निन इति। अनेकाज्भ्यस्तु चिरिजिर्यादिभ्योऽनभिधानात्क्तिनभाव इति भावः। ननु तदन्तसप्तमीत्वे गार्ग्यादौ समुदाये मुख्य एवादिः संभवतीति न दोष इत्यत आह–सौवर्यं इति।

[ प्रयोजनवार्तिकम् ]

॥ * ॥ *वलादेरार्द्धधातुकस्येट्* ॥ * ॥

**वलादेरार्द्धधातुकस्येट् प्रयोजनम्॥ 'आर्द्धधातुकस्येड्वलादे'रितीहैव स्यात्–करिष्यति हरिष्यति।' जोषिषत्' 'मन्दिष'-दित्यत्र न स्यात्॥**

(प्र०) जोषिषदिति। लिङर्थे लेट्। 'इट इटी'ति च ज्ञापकं सिज्विषयमेव स्यादिति सिपइण्न स्यात्।

(उ०) लेडिति। 'सिब्बहुलं लेटी'ति सिप्। इटईटीति। न च 'यमरमनमाता'मित्यत्र वलादेरित्यस्य संबन्धे फलाऽभावात्कथमेतज्ज्ञापकम्। 'रुदादिभ्य' इति सूत्रे वलादेरित्यस्य संबन्धसत्त्वेन मध्येपि सम्बन्धस्यैव न्याय्यत्वात्। अत एव सप्तमे सूत्रे भाष्ये–'एकाजस्तौ वलीति वे'त्युक्तम्।

[ प्रयोजनान्तरवार्तिकम् ]

॥*॥ *यस्मिन्विधिस्तदादित्वे* ॥*॥

**यस्मिन्विधिस्तदादित्वे प्रयोजनम्। वक्ष्यति — 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति। तस्मिन् क्रियमाणे[1] 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इहैव स्यात्–श्रियः भ्रुवः। श्रियौ भ्रुवौ इत्यत्र न स्यात्।**

( प्र० ) यस्मिन्विधिरिति। 'स्वस्य च रूपस्ये'ति नानुवर्तते इति प्रयोजनत्वेनोपन्यासः॥

[ प्रयोजनान्तरवार्तिकम् ]

॥ * ॥ *अजाद्याट्त्वे* ॥ * ॥

**अजाद्याट्त्वे प्रयोजनम्। 'आडजादीनाम्'। इहैव स्यात्—ऐहिष्ट। ऐक्षिष्ट। ऐष्टे[2] अध्यैष्टेत्यत्र न स्यात्॥**

(प्र०) अजाद्याट्त्वे इति। सूत्रपाठापेक्षया प्रयोजनोपन्यासः। वार्तिककारस्तु 'अजादीनामटा सिद्ध'मित्याह।

[ आक्षेपभाष्यम् ]

**अथान्तवत्त्वे कानि प्रयोजनानि ?॥**

[ अन्तवत्त्वप्रयोजनवार्तिकम् ]

॥ * ॥ *अन्तवद् द्विवचनान्तप्रगृह्यत्वे* ॥ * ॥

**अन्तवद्विवचनान्तप्रगृह्यत्वे प्रयोजनम्। 'ईदूदेद्विवचनं प्रगृह्यम्'–इहैव स्यात्–'पचेते इति' 'पचेथे इति'। 'खट्वे इति' 'माले इती'त्यत्र न स्यात्।**

( प्र० ) अन्तवदिति। 'येन विधिस्तदन्तत्वे' इत्यनेनैव गतार्थे प्रपञ्चाऽर्थोयमुपन्यासः।

( उ० ) येनविधिरिति। तेनैव ईदूदेद्विवचनमित्यत्र तदन्तविधिरिति भावः।

[ प्रयोजनान्तरवार्तिकम् ]

॥ * ॥ *मिदचोऽन्त्यात्परः* ॥ * ॥

**मिदचोऽन्त्यात्परः प्रयोजनम्। [ 'नपुंसकस्य झलचः'[3] ] इहैव स्यात्–कुण्डानि वनानि। तानि यानीत्यत्र न स्यात्।**

[ प्रयोजनान्तरवार्तिकम् ]

॥*॥ *अचोऽन्त्यादि टि* ॥*॥

**'अचोन्त्यादि टि' प्रयोजनम्। 'टित आत्मनेपदानां टेरे', इहैव स्यात् कुर्वाते कुर्वाथे। कुरुते कुर्वे इत्यत्र न स्यात्।**

(प्र०) कुरुत इति। अर्थवता व्यपदेशिवद्भावात्तशब्दाऽकारस्याऽनर्थकत्वादिह प्रयोजनत्वेनोपन्यासः।

( उ० ) अर्थवतेति। तत्र ह्यर्थस्य त्यागोपादानाभ्यां भेदः सुकर इति भावः। इदं चिन्त्यम्। 'यद्यपि व्यपदेशिवद्भावेन सिध्यति, तथापि गौणत्वान्नेत यस्य भ्रान्तिस्तं प्रति सूत्रारम्भः' इति पूर्वग्रन्थविरोधात्सूत्रकारेण तदज्ञानात् तदुदाहरणसंभवाच्च। अर्थवतेति चाऽसहायत्वस्यैवोपलक्षणं, ससहायस्य प्रायेणाऽनर्थकत्वात्। तशब्दाऽकारश्चाऽसहाय एव। येन सहायेनाऽचामन्तत्वस्य बहुव्रीह्यर्थस्य चोपपत्तिस्तादृशसहायाऽभावात्। अन्यथाऽऽद्यन्तवद्भावोपि न स्यात्, विजातीयकन्यादिसहायसत्त्वेप्येकपुत्रस्याऽयमेव ज्येष्ठ इत्यादिव्यवहारात्। ईदृशस्थलेपि लोकसिद्धत्वमित्याहुः॥

[ प्रयोजनान्तरवार्तिकम् ]

॥*॥ *अलोऽन्त्यस्य* ॥*॥

---

1 क्रियमाणे–आश्रीयमाणे। २ 'एत्' पा०।

३ लुप्तोऽयं पाठः स्यात्।

'अलोऽन्त्यस्य' प्रयोजनम्। 'अतो दीर्घो यञि' 'सुपि च'-इहैव स्यात्-पटाभ्यां घटाभ्यामिति। 'आभ्या'मित्यत्र न स्यात्॥

(प्र०) आभ्यामिति। अत्र द्वे अन्तवत्त्वे उपयुज्येते अकारान्तस्याङ्गस्य अलोऽन्त्यस्यै दीर्घो भवतीति पृथक् प्रयोजनत्वेनोपन्यासः।

[ प्रयोजनान्तरवार्तिकम् ]

॥ * ॥ *येन विधिस्तदन्तत्वे* ॥ * ॥

येन विधिस्तदन्तत्वे प्रयोजनम्। 'अचो यत्', इहैव स्यात्-चेयम् जेयम्। पयमध्येयमित्यत्र न स्यात्। 'आद्यन्तवदेकस्मिन् कार्यं भवती'त्यत्रापि सिद्धं भवति॥ [ आद्यन्तवदेकस्मिन् ]॥

(प्र०) एयमिति इङो रूपम्। इणस्तु इत्यमिति॥

## तरप्तमपौ घः ॥ १ । १ । २२ ॥

(प्र०) तरप्तमपौ॥ आतिशायनिकप्रत्ययप्रकरण एव 'तादी घः' 'पितौ घः' इति वा कर्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणं-'स्वार्थेऽपि तरबस्ती'ति सूचनार्थम्। तेनाऽल्पाच्तरमिति सिद्धं भवतीत्याहुः॥

(उ०) तरप्। प्रकरणोत्कर्षेणेति। प्रकरणे संज्ञाप्रकरणे उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः। स्वार्थ इति। अनातिशार्यनिकस्यापि संज्ञाविधानार्थमत्र सूत्रम्। स चानिर्दिष्टार्थत्वात्स्वार्थे। तस्य संज्ञाफलं चोच्चैस्तरामित्यादौ किमेत्तिङव्ययघादित्याम्सिद्धिरिति भावः। इत्याहुरिति। अत्राऽरुचिबीजं तु भाष्यानुक्तिः॥

[ आक्षेपवार्तिकम् ]

॥ * ॥ *घसंज्ञायां नदीतरे प्रतिषेधः* ॥ * ॥

घसंज्ञायां नदीतरे प्रतिषेधो वक्तव्यः। नद्यास्तरो नदीतरः।

(प्र०) नदीतर इति। तरतेर्ऋदोरबित्यप्। सर्वत्र चाऽनुबन्धाः स्मर्यमाणा एव कार्यं प्रति हेतुत्वं लभन्त इति घसंज्ञाप्राप्तिः। साहचर्यं चेह व्यवस्थाहेतुः सर्वत्र नाश्रीयते। तथाहि द्विस्त्रिश्चतुरिति कृत्वोर्थे इति कृत्वोर्थग्रहणं चतुरशब्दविशेषणार्थं कृतम्। अन्यथा द्वित्रिशब्दसाहचर्याच्चतुरशब्दोऽपि कृत्वोऽर्थ एव ग्रहीष्यत इति किं कृत्वोर्थग्रहणेन ?॥

(उ०) ननु नाऽयं तरबित्यत आह-सर्वत्र चेति॥ ननु तमप्साहचर्यात्तद्धित एव तरो ग्रहीष्यते इति नास्त्य बन्ते तरे प्रसक्तिरत आह—साहचर्यमिति। 'प्रत्ययाऽप्रत्यययो'रिति परिभाषाऽपि नाश्रितेति बोध्यम्॥ इह-शास्त्रे।

[ समाधानवार्तिकखण्डम् ]

॥ * ॥ *घसंज्ञायां नदीतरेऽप्रतिषेधः* ॥ * ॥

घसंज्ञायां नदीतरेऽप्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः॥ घसंज्ञा कस्मान्न भवति ?॥

(प्र०) अप्रतिषेध इति। 'न प्रतिषेध' इति प्रतिषेधनक्रिया नञा निषिध्यते। भाष्यकारस्तु वस्त्वर्थं व्याचष्टे-अनर्थकः प्रतिषेध इति॥

(उ०) वस्त्वर्थमिति। तात्पर्यार्थमित्यर्थः। 'असंदेह' इतिवत् प्रतिषेधस्याऽभाव इत्यर्थको नञ्समासः॥ एवं चाऽनर्थक इति भाष्योक्तेर्मध्यमपदलोपी समास इति न भ्रमितव्यमिति भावः॥

[ समाधानहेतुवार्तिकखण्डम् ]

॥ * ॥ *तरब्ग्रहणं ह्यौपदेशिकम्* ॥ * ॥

औपदेशिकस्य तरपो ग्रहणं, न चैष उपदेशे तरप्शब्दः॥

(प्र०) औपदेशिकमिति। उपदेशः प्रयोजनमस्य, तत्र वा भवमौपदेशिकम्॥

(उ०) तरब्ग्रहणं—तरप्शब्दः, औपदेशिकम्—उपदेशप्रयोजनक इत्यर्थो भाष्यस्य। तदाह-उपदेशः प्रयोजनमिति। प्रयोजक इत्यर्थः। 'न चैष उपदेशे तरप्शब्द' इति भाष्यस्वरसादाह-तत्र वा भवमिति॥ उपदेशे इति भाष्ये-'भव' इति शेषः॥

[ आक्षेपभाष्यम् ]

किं वक्तव्यमेतत् ?॥ न हि॥

कथमनुच्यमानं गंस्यते ?॥

[ सिद्धान्तिनःसमाधानभाष्यम् ]

इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते—यत्रास्यैतद्रूपमिति। रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्। तस्मिंश्च लौकिके

१ इतिः क्वचिन्न। २ 'दीर्घत्वं भव' पा०।

३ 'प्रयोजनोपन्यासः'। ४ 'अनातिशयि'। ५ क्वचिन्न।

**प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते ॥**

**कोऽसौ ? ॥ उपदेशो नाम । न चैष उपदेशे तरप्छब्दः ॥**

(प्र०) **यत्रास्येति** । अनुबन्धयुक्तमित्यर्थः । **न चैष इति** । काल्पनिकमस्य तरप्त्वं, न तु साक्षान्निर्दिष्टम् ॥

(उ०) **'सर्वेष्वेव सानुबन्धकग्रहणेष्विति** भाष्यं प्रकृताभिप्रायं, शब्दमात्रग्रहणेऽपि 'स्वं रूप'मित्यनेन रूपाश्रयणादिति बोध्यम् । **यत्रास्येति** । यत्रास्यैतद्रूपं तत्र घसंज्ञेत्यर्थः॥ एवं चोपदेश एव घसंज्ञा । प्रयोगे तु स्थानिवद्भावेन सेति बोध्यम् ॥ **काल्पनिकमिति** । 'ऋदोर'बिति सूत्रपर्यालोचनावगतत्वेनानुमानिकमित्यर्थः ॥

[ अभ्युपगम्य दोषाऽभावप्रदर्शकभाष्यम् ]

**अथ वाऽस्त्वस्य घसंज्ञा को दोषः ?॥**

[ घसंज्ञाया दोषदर्शनभाष्यम् ]

**'घादिषु नद्या ह्रस्वो भवती'ति ह्रस्वत्वं प्रसज्येत ॥**

[ दोषनिरासभाष्यम् ]

**'समानाधिकरणेषु घादिष्वि'त्येवं तत्॥**

(प्र०) **समानाधिकरणेष्विति**। आतिशायनिकश्च स्वार्थिकत्वात्समानाधिकरणः ॥

(उ०) **स्वार्थिकत्वात्**–प्रकृत्यभिहितद्योतकत्वात् ॥ **समानाधिकरणः**–प्रकृत्या समानविषय इत्यर्थः । सामानाधिकरण्यं चैकविशेष्यकबोधजनकत्वमिति बोध्यम् ॥

[ आक्षेपभाष्यम् ]

**यदा तर्हि सैव नदी, स एव तरस्तदा प्राप्नोति ॥**

(प्र०) **यदा तर्हीति** । ननु तीर्णिरिति भवितव्यम् , एवं तर्हि तीर्यत इति तर इति सामान्येन पदं संस्क्रियते, पश्चान्नद्या विशेष्यते इति न दोषः॥

(उ०) **ननु तीर्णिरिति** । ऋतः परस्य क्तिनो निष्ठावद्वचनान्नत्वम् । **सामान्येनेति** । अनिर्धारितकर्मविशेषेणेत्यर्थः । अत एव पुंस्त्वम् । 'घञजपः पुंसी'त्युक्तेः ॥

[ समाधानभाष्यम् ]

**'स्त्रीलिङ्गेषु घादिष्वि'त्येवं तत् ॥ अवश्यं चैतदेवं विज्ञेयम् । 'समानाधिकरणेषु घादिष्वि'त्युच्यमाने[1] इह प्रसज्येत— महिषी रूपमिव, ब्राह्मणी रूपमिवेति ॥**

(प्र०) **स्त्रीलिङ्गेष्विति** । स्वार्थिकश्च प्रकृतिलिङ्गानुविधानात्स्त्रीलिङ्गः। **महिषी रूपमिवेति** । इवशब्दो भिन्नक्रमः । तेनाऽयमर्थः-महिषी इवेयमाकृतिरिति । तत्र सुप्सुपेति समासे कृते ह्रस्वत्वं स्यात् ॥

(उ०) **महिषी रूपमिवेति**। नन्विदमसमस्तं समस्तं वा। नाद्यः । उत्तरपदाधिकाराद्रूपशब्दस्य चाऽतथात्वादप्राप्तेः। किं च रूपशब्देनाकृत्यभिधानात्कस्याकृतिरिव महीषीति साकाङ्क्षं स्यात् । नान्त्यः । षष्ठीतत्पुरुषे वैयधिकरण्याद्ध्रस्वाऽप्राप्तेः। विशेषणसमासे तु पूर्वनिपातवैपरीत्यापत्तिः, तस्मादुपमागर्भसमासस्य विग्रहवाक्यमिदम् । स च समासो नोपमानानि सामान्यवचनैरित्यनेन,रूपशब्दस्योपमेयवाचकत्वेऽपि साधारणधर्माऽवाचकत्वात् । साधारणधर्मो ह्यत्र विसंष्ठुलत्वादिः । नाप्युपमितं व्याघ्रादिभिरिति,रूपशब्दस्योपमेयवाचित्वेन पूर्वनिपातवैपरीत्यापत्तेः । तस्योपमानवाचित्वे तु कस्य रूपमिति विशेषणस्य सापेक्षत्वाद्वृत्तिर्न स्यादत आह–**इवशब्द इति। सुप्सुपेति च ॥ ह्रस्वत्वं स्यादिति।** अप्रत्यययोरपि घत्वे तत्साहचर्याद्रूपादेरप्रत्ययस्याऽपि ग्रहणं स्यादिति भावः ॥ यद्यपि 'रूप'मित्युक्ते कस्य रूपमित्यस्त्याकाङ्क्षा तथापि प्रधानस्य साकाङ्क्षत्वान्न दोषः ॥

# बहुगणवतुडति सङ्ख्या॥१।१।२२॥

[ आक्षेपवार्तिकम् ]

||*|| *सङ्ख्यासंज्ञायां सङ्ख्याग्रहणं सङ्ख्यासम्प्रत्ययार्थम्*[2] ||*||

**सङ्ख्यासंज्ञायां सङ्ख्याग्रहणं कर्तव्यम् । 'बहुगणवतुडतयः सङ्ख्यासंज्ञा भवन्ति, सङ्ख्या च सङ्ख्यासंज्ञा भवती'ति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ 'सङ्ख्यासंप्रत्ययार्थम्'[2] । एकादिकायाः सङ्ख्यायाः सङ्ख्याप्रदेशेषु सङ्ख्येत्येष संप्रत्ययो यथा स्यात् ॥**

(प्र०) **बहुगणवतुडति** । **सङ्ख्यासंप्रत्ययार्थमिति** । सङ्ख्यायाः एकादिकायाः सङ्ख्याप्रदेशेषु संप्रत्ययार्थमित्यर्थः ॥

(उ०) **बहुगण** । सङ्ख्यात्वेन संप्रत्ययस्य लोकत एव सिद्धेराह–**एकादिकाया इति** । **'सङ्ख्यासंप्रत्यये'ति** वार्तिके सङ्ख्येति संप्रत्यय इत्यर्थः । एकादिकायाः सङ्ख्यायाः सङ्ख्याप्रदेशेष्विति शेषपूरणं बोध्यम् । **'सङ्ख्येत्येष' इति** भाष्यस्य सङ्ख्येत्येतच्छब्दाऽभिन्न इत्यर्थः ।' 'शब्दार्थप्रत्य-

---

१ इत्युच्यमान इति । एतावन्मात्र उच्यमान इत्यर्थः । २ अयमंशः पृथग्वार्त्तिकतया पठ्यते कचित् ।

**यानामितरेतराध्यासात्सङ्कर'** इति पातञ्जलसूत्रात् । एतच्च पातञ्जलसूत्रवृत्तावुपपादितमस्माभिः । 'नारद इत्यबोधि'इत्यादावप्येवमेव । एवं च कर्मत्वाऽप्रसक्तिरेव । 'सङ्ख्याशब्दजन्य' इत्यर्थे, सङ्ख्येत्याकारक इत्यर्थे च एवशब्दान्वयाऽनुपपत्तिस्तदुपादानवैयर्थ्यं चेति बोध्यम् ॥

[ आक्षेपबाधकभाष्यम् ]

**ननु चैकादिका सङ्ख्या लोके सङ्ख्येति प्रतीता । तेनास्याः सङ्ख्याप्रदेशेषु सङ्ख्यासंप्रत्ययो भविष्यति ॥**

**(प्र०) ननु चेति ।** यथा पशुरपत्यं देवतेति लौकिकोऽर्थो गृह्यते, तथैकादिकापि सङ्ख्या ग्रहीष्यत इत्यर्थः ।

**(उ०) सङ्ख्या ग्रहीष्यत इति ।** सूत्रं त्वधिकसंग्रहार्थमिति भावः ॥

[ आक्षेपसाधकभाष्यम् )

**एवमपि कर्तव्यम् ॥ किं प्रयोजनम् ?**[1] **॥**

[ आक्षेपसाधकवार्तिकम् ]

*॥ * ॥ इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद्यथा लोके ॥ * ॥*

**अक्रियमाणे हि सङ्ख्याग्रहणे एकादिकायाः सङ्ख्यायाः सङ्ख्येत्येष संप्रत्ययो न स्यात् ॥ किं कारणम् ? ॥ 'अकृत्रिमत्वात्' ॥ बह्वादीनां कृत्रिमा संज्ञा । कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति । 'यथा लोके' । तद्यथा लोके-'गोपालकमानय' 'कटजकमानये'ति यस्यैषा संज्ञा भवति स आनीयते, न यो गाः पालयति, यो वा कटे जातः ॥**

**(प्र०) कृत्रिमाकृत्रिमयोरिति ।** न्यायोऽयम् । तथाहि सर्वार्थाऽभिधानशक्तियुक्तः शब्दो यदा विशिष्टेऽर्थे संव्यवहाराय नियम्यते, तदा तत्रैव प्रतीतिं जनयति नाऽन्यत्र ॥

**(उ०) न्यायोऽयमिति ।** अभ्यासाम्रेडितादिसंज्ञाविषये चैतन्न्यायोपयोगो द्रष्टव्यः । **नियम्यते इति ।** सर्वार्थ[2]बोधकत्वेऽपि लोके तत्रैव गृहीतशक्तिकतयाऽन्यत्र शक्त्यग्रहेण च अधिकसङ्ग्रहार्थत्वादगृहीतशक्तिग्राहकत्वाच्चाऽस्य नियमत्वं चिन्त्यम् । न्यायबीजं तु प्रकरणमिति भाष्ये एव स्फुटीभविष्यति ॥

[ आक्षेपभाष्यम् ]

**यदि तर्हि कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति, 'नदीपौर्णमास्याग्रहायणीभ्यः' इत्यत्रापि प्रसज्येत ॥**

**(प्र०) नदीपौर्णमासीति ।** 'यू स्त्र्याख्यौ नदी'ति संज्ञाविधानात् संज्ञिनो ग्रहणं प्राप्तं न तु स्वरूपस्या'ऽशब्दसंज्ञे'ति निषेधात् ॥

[ समाधानभाष्यम् ]

**पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति ॥**

**(प्र०) पौर्णमासीति ।** नियमार्थं पौर्णमास्याग्रहायणीग्रहणमीकारान्तानां स्यादिति चेत् । एवमपि— **'ऊपौर्णमास्याग्रहायणीभ्यः'** इति वक्तव्यं स्यात् । ऊकारग्रहणेन च नदीसंज्ञकमेवोकारान्तं पौर्णमास्याग्रहायणीशब्दसाहचर्याद्ग्रहीष्यते ॥

**(उ०) नियमार्थमिति ।** नियमश्च सामान्यविषय एव, न कालवाचिविषयो, व्याख्यानादतो गौर्याद्यन्तेऽपि न दोषः । नन्वनदीसंज्ञकेभ्योऽपि खलप्वादिभ्य ऊकारान्तेभ्यः स्यादत आह-**ऊकारग्रहणेनेति ।** वस्तु[3]तस्तु दोषग्रस्तनियमापेक्षया नदीशब्देन कृत्रिमाकृत्रिमन्यायबाधज्ञापनमेव ज्यायः ।

[ प्रसङ्गाच्छङ्कान्तरभाष्यम् ]

**तद्विशेषेभ्यस्तर्हि प्राप्नोति ॥**

**(प्र०) तद्विशेषेभ्य इति ।** गङ्गादिभ्यः ॥

**(उ०)** भाष्ये **तद्विशेषेभ्यस्तर्हीति** प्रासङ्गिकी शङ्का । तां व्याचष्टे-**गङ्गादिभ्य इति ।** 'अपगङ्ग' 'परियमुन'मित्युदाहरणे । अत्र हि टच्यन्तोदात्तत्वम् । तदभावे 'परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेष्वि'ति पूर्वपदप्रकृतिस्वरत्वमित्याहुः ।

[ समाधानभाष्यम् ]

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति -'न तद्विशेषेभ्यो भवती'ति, यदयं विपाट्छब्दं शरत्प्रभृतिषु पठति ॥**

**(प्र०) यदयमिति ।** नित्याऽर्थः पाठः स्यादिति चेद्व्यवस्थितविभाषया विपाट्शब्दस्य नित्यष्टज्भविष्यतीत्यदोषः ॥

**(उ०) नित्यार्थ इति ।** 'नदीपौर्णमासी'त्यत्राऽन्यतरस्यांग्रहणाऽनुवृत्तेरिति भावः । **व्यवस्थितेति ।** अत्र च ज्ञापकपरमिदमेव भाष्यं मानम् । केचिदस्माद्भाष्यान्नदीति सूत्रेऽन्यतरस्याङ्ग्रहणं निवर्तयन्ति ॥

---

१ क्वचिन्न । २ प्रदीपं दूषयति—**सर्वार्थेति ।** ३ कैयटोक्तिं दूषयति-**वस्तुतस्त्विति ।** विधिनियमसंभवे विधिरेव ज्यायानितिन्यायोऽप्यनुगृहीतो भवतीत्याह-**ज्याय इति ॥**

[ शङ्कातत्समाधानभाष्यम् ]

**इह तर्हि प्राप्नोति-'नदीभिश्चे'ति ॥ बहुवचननिर्देशान्न भविष्यति ॥**

(प्र०) **बहुवचनेति।** अन्यथाऽऽण्नद्या इत्यादौ यथैकवचनेन निर्देशस्तथेहापि कर्तव्यः स्यात् ॥

[ शङ्कातत्समाधानभाष्यम् ]

**स्वरूपविधिस्तर्हि प्राप्नोति ॥ बहुवचननिर्देशादेव न भविष्यति ॥**

(उ०) **बहुवचननिर्देशादेवेति।** तस्मादपीत्यर्थः। 'अशब्दसंज्ञे'ति निषेधादित्यपि बोध्यम्। तत्प्रत्याख्याने त्वयमेव हेतुः। अतोऽस्मान्निषेधान्नदीपौर्णमासीत्यादौ स्वरूपग्रहणमपि दुर्लभमित्यपास्तम्। लक्ष्यानुसारेण तत्प्रत्याख्यानसामर्थ्येन तस्याऽत्राऽप्रवृत्तेः। 'नदीभिश्चे'त्यादौ तु लक्ष्यानुसारादेवाऽर्थग्रहणेन तद्वाचकानां ग्रहणमिति दिक् ॥

[ उपसंहारभाष्यम् ]

**एवं (च[1]) न चेदमकृतं भवति-'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इति। न च कश्चिद्दोषो भवति ॥**

(प्र०) **न चेदमकृतमिति।** अनाश्रितमित्यर्थः।

(उ०) अस्य न्यायत्वादकृतमित्ययुक्तमत आह-**अनाश्रितमिति।**

[ आक्षेपसाधकवार्तिकम् ]

**॥ * ॥ उत्तरार्थं च ॥ * ॥**

**उत्तरार्थं च सङ्ख्याग्रहणं कर्तव्यम्। 'ष्णान्ता षट्'। षकारनकारान्तायाः सङ्ख्यायाः षट्संज्ञा यथा स्यात्। इह मा भूत्-पामानो विप्रुष इति ॥**

(प्र०) **उत्तरार्थं चेति।** अयं हि सूत्रोपात्तः सङ्ख्याशब्दः स्वरूपपदार्थकः[2]। उत्तरत्र संज्ञिनिर्देशेन प्रयोजनम् ॥

(उ०) **स्वरूपेति।** न चैवं बह्वादिसामानाधिकरण्यानुपपत्तिः। शब्दार्थयोरभेदारोपेण तदुपपत्तेरिति भावः। **संज्ञिनिर्देशेनेति।** सङ्ख्याशब्द[3]बोध्यपश्वादिशब्दपरेण सङ्ख्याशब्दनिर्देशेनेत्यर्थः ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**इहार्थेन तावन्नार्थः सङ्ख्याग्रहणेन ॥**

(प्र०) **इहार्थेनेति।** इहार्थो यस्येति सामान्यविशेषभावान्न पौनरुक्त्यम्।

(उ०) **सामान्येति।** अर्थशब्दोक्तसामान्यं प्रति इहाऽर्थो यस्येत्यस्य विशेषत्वादित्यर्थः।

[ वादिन आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तम्-'इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद्यथा लोके' इति ? ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**नैष दोषः। अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे [कार्य]संप्रत्ययो भवति। अर्थो वाऽस्यैवंसंज्ञकेन भवति, प्रकृतं वा तत्र भवति-'इदमेवंसंज्ञकेन कर्तव्य'-मिति। आतश्चाऽर्थात्प्रकरणाद्वा। अङ्ग! हि भवान् ग्राम्यं पांशुलपादमप्रकरणज्ञमागतं ब्रवीतु-'गोपालकमानय' 'कटजकमानये'ति, उभयगतिस्तस्य भवति। साधीयो वा यष्टिहस्तं गमिष्यति।**

(प्र०) **आतश्चेति।** इतश्चेत्यर्थः। **अर्थः-**सामर्थ्यम्। यथा 'गोपालकमानय' 'माणवकमध्यापयिष्यती'ति यष्टिहस्तस्याध्यापनाऽसंभवात्संज्ञिनो ग्रहणम्। **प्रकरणं-**प्रस्तावः। यथा भोजनप्रकरणे 'सैन्धवमानये'ति लवणे प्रतीतिर्गमनप्रकरणे त्वश्वे। **ग्राम्यमिति।** ऊहितुमसमर्थम्। **पांशुलपादमिति।** अचिरोषितम्। अत एवाऽ**प्रकरणज्ञम्। उभयगतिरिति।** किं संज्ञेयं यस्य कस्यचिन्निर्दिष्टा स्यादुत यष्टिहस्तोऽस्य विवक्षितः स्यादिति सन्देहवान् भवतीत्यर्थः। **साधीयो वेति।** यो मम प्रसिद्धः सोऽमेन चोदितो, न[4] च ममैवंसंज्ञकः प्रसिद्ध इत्येवं मन्यते। लोके च गोपालकशब्दः संज्ञिनि नियम्यमानः संज्ञ्यन्तरं निवर्तयति, क्रियानिमित्तं त्वर्थं न निरस्यति, तुल्यजातीयविषय एव हि नियमो भवति ॥

(उ०) भाष्ये-**अर्थादित्यादि।** लोके कृत्रिमग्रहणे न कृत्रिमत्वं कारणं किं त्वन्यदेवेति भावः। **अर्थः-**सामर्थ्यम्। तदेव दर्शयति-**अर्थोऽवास्येति।** अस्य वाक्यस्याऽर्थोऽध्यापनादिरूपं प्रयोजनमेवंसंज्ञकेन भवति तत्राऽस्यैव सामर्थ्यमित्यर्थः। **प्रकृतं वेति।** 'इदमेवंसंज्ञकेन कर्त्तव्य'मिति तत्र प्रयोजनं प्रकृतं बुद्धिस्थं भवति। संज्ञाया बुद्धिस्थत्वादित्यर्थः। इदमन्येषामपि[5] पदार्थनियामकानामुपलक्षणम्। यद्यपि

---

१ **एवं च-**एवं च सति। २ **स्वरूपेति।** यत उत्तरत्र सञ्ज्ञिनिर्देशेन प्रयोजनमतः स्वरूपपदार्थकः सङ्ख्या शब्दो नानुवर्त्तते इत्याशयः। ३ यथाश्रुताऽसङ्गतेराह-**संख्याशब्देति।** ४ नच=नैवहि। ५ **अन्येषां-**संयोगविप्रयोगादीनाम्।

'रूढिर्योगापहारिणी'त्यप्यत्र संभवति, तथापि 'प्रकरणादिसह-कृतो योगोऽपि बलवा'नित्यभिप्रेत्येदमेवोक्तम् । अन्वयमुक्त्वा व्यतिरेकेणाप्यर्थादेर्हेतुत्वं प्रतिपादयितुं भाष्ये-**आतश्चे**ति । **उभयगतिः**-उभयविषयकं ज्ञानं तात्पर्यसन्देहरूपमित्याशये-नाह-**किंसंज्ञेयमिति**। वक्तृतात्पर्यविषयसन्देहवानित्यर्थः। ननु रूढेर्योगार्थापहारकत्वेन कथं सन्देह इति चेन्न । तत्तत्पुरुषं प्रति प्रसिद्धरूढ्यर्थस्यैव योगाऽपहारत्वं नान्यस्येति भावात् । तदेव ध्वनयन्नाह-**साधीय इति**। क्रियाविशेषणमव्ययं वा सम्यगर्थकम्। **यष्टिहस्तं गमिष्यति**। तद्विषयमेव तात्पर्यं ग्रहीष्यतीत्यर्थः। ननु संज्ञाकरणस्य नियमार्थत्वाद्योगार्थप्रतीतिः श्रोतुर्भ्रम इत्यत आह-**एवंमन्यते लोके इति**। इदमपि स्वरीत्या ।

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**यथैव तर्ह्यर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे [ कार्य[2] ]संप्रत्ययो भवति, एवमिहापि प्राप्नोति। जानाति ह्यसौ बह्वादीनामियं संज्ञा कृतेति ।**

(प्र०) **एवमिहापीति** । बह्वादय एवाऽत्र संख्यात्वेन प्रकृता इति भावः ।

(उ०) अत्र-शास्त्रे । **प्रकृताः**-बुद्धौ संनिहिताः। अनेनाऽत्रापि प्रकरणमस्तीत्युक्तं भवति । बुद्धिसंनिधिरेव-**प्रकरणम्**।

[ सिद्धान्तिनः समाधानभाष्यम् ]

**न यथा लोके तथा व्याकरणे। उभयगतिः पुनरिह भवति।**

(प्र०) **न यथा लोक इति**। संख्याशब्दो हि बह्वादिप्रतिपादनाय संज्ञात्वेन विनियुक्तो, न त्वेकादिसंख्यानिरासाय, अधिकार्थप्रतिपत्त्यर्थत्वादिह संज्ञाकरणस्य ।

(उ०) **संज्ञात्वेन विनियुक्त इति**। ज्ञापिताऽज्ञातशक्तिक इत्यर्थः। अत एव न नियमार्थतेत्याह-**नत्विति**। तुल्यन्यायेन संज्ञासूत्रमात्रस्य नियमार्थत्वाऽभावः सूचितः। **इह**-संख्याप्रदेशे। '**अधिकार्थे**'त्यादिनाऽन्वेति। भाष्ये-**न यथेत्यादि**। व्याख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या प्रकरणाद्यनादरेणोभयगतिरिति भाष्यार्थ इत्यन्ये ।

[ उभयगत्युदाहरणभाष्यम् ]

**अन्यत्रापि, नावश्यमिहैव । तद्यथा 'कर्तुरीप्सिततमं कर्मे'ति कृत्रिमा कर्मसंज्ञा । कर्मप्रदेशेषु चोभयगतिर्भवति। 'कर्मणि द्वितीये'ति कृत्रिमस्य ग्रहणं, 'कर्तरि कर्मव्यतिहारे' इत्यत्राऽकृत्रिमस्य ।**

(प्र०) **कर्मणि द्वितीयेति** । ङ्याप्प्रातिपदिकादनभिहिते कर्मणि संख्यायां द्वितीया विधीयते। न च क्रियायाः संख्या संभवतीति सामर्थ्यात्कारकस्य ग्रहणम् । 'कर्तरि कर्मव्यतिहारे' इत्यत्र तु धातोः साक्षात्क्रियायां वृत्त्या क्रियाया एव ग्रहणम् ॥

(उ०) **कर्मणि संख्यायामिति**। 'कर्मगतसंख्याया'मित्यर्थः। **नचेति**। तस्या अद्रव्यत्वेन द्रव्यधर्मलिङ्गाद्ययोगादिति भावः। यद्यपि **रूपबादि**सूत्रस्थभाष्यादेकत्वं क्रियायामस्ति तथापि द्वित्वाद्यभाव इति तात्पर्यम् । **कारकम्**-शक्तिमद्द्रव्यम् । 'साक्षात्क्रियाया'मित्यस्य क्रियायामेव न तु कर्मकारके इत्यर्थः। अन्यथा साक्षात्पदप्रयोजनं चिन्त्यं स्यात् । न हि धातोः परंपरयापि कारके वृत्तिरस्ति येन तद्व्यावृत्त्या चारितार्थ्यं स्यादित्याहुः ॥

[ उभयगत्युदाहरणान्तरभाष्यम् ]

**तथा 'साधकतमं करण'मिति कृत्रिमा करणसंज्ञा। करणप्रदेशेषु चोभयगतिर्भवति-'कर्तृकरणयोस्तृतीये'ति कृत्रिमस्य ग्रहणं, 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इत्यत्राऽकृत्रिमस्य ॥**

**तथा-'आधारोऽधिकरणमिति कृत्रिमाऽधिकरणसंज्ञा । अधिकरणप्रदेशेषु चोभयगतिर्भवति-'सप्तम्यधिकरणे चे'ति कृत्रिमस्य ग्रहणं, 'विप्रतिषिद्धं चानधिकरणवाची'त्य[त्रा[1]]ऽकृत्रिमस्य ।**

(प्र०) **कण्वमेघेभ्यः करण इति**। तव्यादिप्रत्ययोत्पत्त्यर्थं धातुसंज्ञा क्रियते । क्रियावाचिनश्च तव्यादयः साधने उत्पद्यन्त इति सामर्थ्यात्क्रियाग्रहणम् । **विप्रतिषिद्धमिति**। द्वन्द्वावयवानां शक्त्यनभिधायित्वादधिकरणं द्रव्यं गृह्यते ॥

(उ०) **धातुसंज्ञा**-क्यङन्तस्य 'सनाद्यन्ता' इत्यनेन । **साधने**-कारके । **तव्यादयोऽतः**[3] कारकापेक्षितक्रियावाचिन एवोत्पद्यन्त इत्यन्वयः ।

[ समाधानान्तरभाष्यम् ]

**अथ वा-नेदं संज्ञाकरणम् । तद्वदतिदेशोऽयम्-'बहुगणवतुडतयः सङ्ख्यावद्वन्ती'ति ।**

१ वक्रिति । 'इती'त्यादिः ।

२ कचिन्न । ३ 'अन्तः' ।

(प्र०) तद्वदतिदेशोऽयमिति । संख्याकार्यातिदेशोऽयमित्यर्थः। यदि हि संज्ञा स्याद्घिघुभादिसंज्ञावदेकाक्षरा क्रियेत[1]। तस्माल्लौकिकार्थाभिधायी संख्याशब्द उपादीयमानोऽतिदेशार्थत्वमस्य बोधयति ॥

(उ०) एवं सर्वसंज्ञाविषये समाधानान्तराण्याह--अथवेति ॥

[ आक्षेपतत्समाधानभाष्यम् ]

**स तर्हि वतिनिर्देशः कर्तव्यः ? ॥**

**न कर्तव्यः। न ह्यन्तरेण वतिमतिदेशो गम्यते॥ अन्तरेणापि वतिमतिदेशो गम्यते। तद्यथा-'एष ब्रह्मदत्तः'। अब्रह्मदत्तं ब्रह्मदत्त इत्याह। ते मन्यामहे ब्रह्मदत्तवदयं भवतीति। एवमिहाप्यसङ्ख्यां सङ्ख्येत्याह, सङ्ख्यावदिति गम्यते ॥**

(उ०) 'ब्रह्मदत्त' इत्युक्तिविषयस्याऽब्रह्मदत्तत्वं स्फोरयितुं ब्रह्मदत्तव्यक्तिं निर्दिशति-एष ब्रह्मदत्त इति ॥ असङ्ख्यां सङ्ख्येत्याहेति। नियतविषयपरिच्छेदहेतुर्हि सङ्ख्या। एवंच बहुत्वादेरसङ्ख्यात्वमिति भावः ॥ बहुत्वं हि त्र्यादिसङ्ख्याव्यापकमखण्डोपाधिरूपम् ॥

[ समाधानान्तरभाष्यम् ]

**अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति-भवत्येकादिकायाः सङ्ख्यायाः सङ्ख्याप्रदेशेषु सङ्ख्यासंप्रत्यय इति, यदयं 'सङ्ख्याया अतिशदन्तायाः कन्'इति तिशदन्तायाः प्रतिषेधं शास्ति ॥ कथं कृत्वा ज्ञापकम् ? ॥ न हि कृत्रिमा त्यन्ता शदन्ता वा सङ्ख्याऽस्ति ॥**

(प्र०) अथवेति। गुरुसंज्ञाकरणादेकादयः सङ्ख्याशब्देन प्रदेशेषु न त्यज्यन्त इति लिङ्गनाऽप्यनुमीयत इत्यर्थः ॥

(उ०) गुर्विति। नन्वतिशदन्ताया इति लिङ्गात्कन्विधौ कृत्रिमा न गृह्यतेति चेन्न। शास्त्रबाधापेक्षया उभयग्रहणज्ञापकत्वस्यैवौचित्यादिति भावः ॥

[ समाधानविघटनभाष्यम् ]

**ननु चेयमस्ति डतिः ॥**

[ समाधानस्थापनभाष्यम् ]

**यत्तर्हि शदन्तायाः प्रतिषेधं शास्ति ॥**

[ सपूर्णसूत्रज्ञापकताभ्युपगमनभाष्यम् ]

**यच्चापि त्यन्तायाः प्रतिषेधं शास्ति ॥**

[ आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तं-'डत्यर्थमेतत्स्या'दिति ॥**

[ समाधानभाष्यम् ]

**'अर्थवद्ग्रहणे नानर्थकस्ये'त्यर्थवतस्तिशब्दस्य ग्रहणं। न च डतेस्तिशब्दोऽर्थवान् ।**

(प्र०) अर्थवत इति। ननूभयसंभवे इयं परिभाषोपतिष्ठते। डत्यन्ता च कृत्रिमाऽस्ति, डतेश्च तिशब्दोऽनर्थक एवेति तस्यैव निषेधः स्यादित्यज्ञापकस्त्यन्तायाः प्रतिषेधः। नैष दोषः, 'अतिशदन्ताया' इत्युच्चारणकाल एवाऽर्थवतस्तिशब्दस्य ग्रहणमिति प्रतीतिरिति ज्ञापकत्वमेव प्रतिषेधस्य ॥

(उ०) नैष इति। 'अतिशदन्ताया' इत्यस्य बहुव्रीहिगर्भतत्पुरुषत्वेन सङ्ख्याविशेषणतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाच्च[3] तत्पदजन्योपस्थितिकालेऽर्थवदनर्थकयोः संभवेन पूर्वमर्थवत एव ग्रहणे निर्णीते पश्चात्संज्ञापदार्थान्वयवेलायां जायमानानुपपत्तिज्ञानेन ज्ञापकत्वमेव कल्प्यत इति भावः। एतत्पक्षद्वये[3] महासंज्ञाया अनुग्राहकत्वं वक्तुमयुक्तं, तन्मूलकपक्षान्तरस्याग्रे वक्ष्यमाणत्वादित्यन्ये ॥

[ समाधानान्तरभाष्यम् ]

**अथ वा महतीयं संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः ॥ कुत एतत् ? ॥ लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्-'अन्वर्थसंज्ञा यथा विज्ञायेत-संख्यायतेऽनया संख्येति। एकादिकया चापि संख्यायते ॥**

(प्र०) अथवेति। ननु महत्याः संज्ञायाः करणात्तदर्थानुगतानामुपात्तानामेव संज्ञिनां भवतु संज्ञा, यथा सर्वादीनामेव सर्वनामसंज्ञा, न त्वधिकानाम्। तेन बहुगणशब्दयोः सङ्घवैपुल्यवचनयोः संज्ञा मा भूत्, एकादीनां तु कथं स्यात् ?। नैष दोषः, इहान्वर्थसंज्ञाकरणेन तावदनुरूपः संज्ञी सर्व आक्षिप्यते। तेनैकादीनां तावद्ग्रहणं भवति, पश्चाद्बहुगणवतुडतीति भूर्यादिनिवृत्त्यर्थं नियमार्थं व्याख्यायते। अतएवसङ्घवैपुल्यवृत्त्योर्बहुगणशब्दयोः संज्ञा न भवति तद्वदतिदेशपक्षेऽपि परस्परसाहचर्यात्संख्यावाचिनो-

1 'क्रियेतेति लौकि'। २ क्वचिन्न। ३ प्रदीपं दूषयति-

एतदिति। व्याख्यानादुक्तहेतोश्चोक्तार्थसिद्धेरिति भावः।

'रूढिर्योगापहारिणी'त्यप्यत्र संभवति, तथापि 'प्रकरणादिसह·कृतो योगोऽपि बलवा'नित्यभिप्रेत्येदमेवोक्तम् । अन्वयमुक्त्वा व्यतिरेकेणाप्यर्थादेर्हेतुत्वं प्रतिपादयितुं भाष्ये–**आतश्चेति** । **उभयगतिः**–उभयविषयकं ज्ञानं तात्पर्यसन्देहरूपमित्याशये·नाह–**किंसंज्ञेयमिति**। वे[1]क्तृतात्पर्यविषयसन्देहवानित्यर्थः । ननु रूढेर्योगार्थापहारकत्वेन कथं सन्देह इति चेन्न । तत्तत्पु·रुषं प्रति प्रसिद्धरूढ्यर्थस्यैव योगाऽपहारत्वं नान्यरयेति भावात् । तदेव ध्वनयन्नाह–**साधीय इति** । क्रियाविशे·षणमव्ययं वा सम्यगर्थकम् । **यष्टिहस्तं गमिष्यति** । तद्वि·षयमेव तात्पर्यं ग्रहीष्यतीत्यर्थः । ननु संज्ञाकरणस्य नियमा·र्थत्वाद्योगार्थप्रतीतिः श्रोतुर्भ्रम इत्यत आह–**एवंमन्यते लोके इति** । इदमपि स्वरीत्या ।

[ पूर्वपक्षिण आक्षेपभाष्यम् ]

**यथैव तर्ह्यर्थात्प्रकरणाद्वा लोके कृत्रि·माकृत्रिमयोः कृत्रिमे [ कार्य[2] ]संप्रत्ययो भवति, एवमिहापि प्राप्नोति । जानाति ह्यसौ बह्वादीनामियं संज्ञा कृतेति ।**

(प्र०) **एवमिहापीति** । बह्वादय एवाऽत्र संख्यात्वेन प्रकृता इति भावः ।

(उ०) **अत्र**–शास्त्रे । **प्रकृताः**–बुद्धौ संनिहिताः । अनेनाऽत्रापि प्रकरणमस्तीत्युक्तं भवति । बुद्धिसंनिधिरेव–**प्रकरणम्** ।

[ सिद्धान्तिनः समाधानभाष्यम् ]

**न यथा लोके तथा व्याकरणे । उभय·गतिः पुनरिह भवति ।**

(प्र०) **न यथा लोक इति** । संख्याशब्दो हि बह्वादिप्रतिपादनाय संज्ञात्वेन विनियुक्तो, न त्वेकादि·संख्यानिरासाय, अधिकार्थप्रतिपत्त्यर्थत्वादिह संज्ञा·करणस्य ।

(उ०) **संज्ञात्वेन विनियुक्त इति** । ज्ञापिताऽज्ञात·शक्तिक इत्यर्थः । अत एव न नियमार्थतेत्याह–**नत्विति** । तुल्यन्यायेन संज्ञासूत्रमात्रस्य नियमार्थत्वाऽभावः सूचितः । **इह**–संख्याप्रदेशे । '**अधिकार्थे**'त्यादिनाऽन्वेति । भाष्ये–**न यथेत्यादि** । व्याख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या प्रकरणाद्यनादरेणोभयगतिरिति भाष्यार्थ इत्यन्ये ।

[ उभयगत्युदाहरणभाष्यम् ]

**अन्यत्रापि, नावश्यमिहैव । तद्यथा 'कर्तुरीप्सिततमं कर्मे'ति कृत्रिमा कर्म·संज्ञा । कर्मप्रदेशेषु चोभयगतिर्भवति । 'कर्मणि द्वितीये'ति कृत्रिमस्य ग्रहणं, 'कर्तरि कर्मव्यतिहारे' इत्यत्राऽकृत्रिमस्य ।**

(प्र०) **कर्मणि द्वितीयेति** । ङ्याप्प्रातिपदिका·दनभिहिते कर्मणि संख्यायां द्वितीया विधीयते । न च क्रियायाः संख्या संभवतीति सामर्थ्यात्कार·कस्य ग्रहणम् । 'कर्तरि कर्मव्यतिहारे' इत्यत्र तु धातोः साक्षात्क्रियायां वृत्त्या क्रियाया एव ग्रहणम् ॥

(उ०) **कर्मणि संख्यायामिति** । 'कर्मगतसंख्या·या'मित्यर्थः । **नचेति** । तस्या अद्रव्यत्वेन द्रव्यधर्मलिङ्गाद्य·योगादिति भावः । यद्यपि **रूपबादि**सूत्रस्थभाष्यादेकत्वं क्रिया·यामस्ति तथापि द्वित्वाद्यभाव इति तात्पर्यम् । **कारकम्**–शक्तिमद्द्रव्यम् । 'साक्षात्क्रियाया'मित्यस्य क्रियायामेव न तु कर्मकारके इत्यर्थः । अन्यथा साक्षात्पदप्रयोजनं चिन्त्यं स्यात् । न हि धातोः परंपरयापि कारके वृत्तिरस्ति येन तद्व्यावृत्त्या चारितार्थ्यं स्यादित्याहुः ॥

[ उभयगत्युदाहरणान्तरभाष्यम् ]

**तथा 'साधकतमं करण'मिति कृत्रिमा करणसंज्ञा । करणप्रदेशेषु चोभयगतिर्भ·वति–'कर्तृकरणयोस्तृतीये'ति कृत्रिमस्य ग्रहणं, 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इत्यत्राऽकृत्रिमस्य ॥**

**तथा–'आधारोऽधिकरणमिति कृत्रि·माऽधिकरणसंज्ञा । अधिकरणप्रदेशेषु चोभयगतिर्भवति–'सप्तम्यधिकरणे चे'ति कृत्रिमस्य ग्रहणं, 'विप्रतिषिद्धं चानधि·करणवाची'त्य[त्रा]ऽकृत्रिमस्य ।**

(प्र०) **कण्वमेघेभ्यः करण इति** । तव्यादि·प्रत्ययोत्पत्त्यर्थं धातुसंज्ञा क्रियते । क्रियावाचिनश्च तव्यादयः साधने उत्पद्यन्त इति सामर्थ्यात्क्रिया·ग्रहणम् । विप्रतिषिद्धमिति । द्वन्द्वावयवानां शक्त्यनभिधायित्वादधिकरणं द्रव्यं गृह्यते ॥

(उ०) **धातुसंज्ञा**–क्यङन्तस्य 'सनाद्यन्ता' इत्यनेन । **साधने**–कारके । **तव्यादयोऽतः**[3] कारकापेक्षितक्रिया·वाचिन एवोत्पद्यन्त इत्यन्वयः ।

[ समाधानान्तरभाष्यम् ]

**अथ वा–नेदं संज्ञाकरणम् । तद्वदति·देशोऽयम्–'बहुगणवतुडतयः सङ्ख्यावद्भ·वन्ती'ति ।**

१ वक्तीति । 'इती'त्यादिः ।

२ कचिन्न । ३ 'अन्तः' ।

(प्र० ) तद्वदतिदेशोऽयमिति । संख्याकार्यातिदेशोऽयमित्यर्थः। यदि हि संज्ञा स्याट्टिघुभादिसंज्ञावदेकाक्षरा क्रियेत । तस्माल्लौकिकार्थाभिधायी संख्याशब्द उपादीयमानोऽतिदेशार्थत्वमस्य बोधयति ॥

(उ०) एवं सर्वसंज्ञाविषये समाधानान्तराण्याह—अथवेति ॥

[ आक्षेपतत्समाधानभाष्यम् ]

**स तर्हि वतिनिर्देशः कर्तव्यः ? ॥**

**न कर्तव्यः। न ह्यन्तरेण वतिमतिदेशो गम्यते॥ अन्तरेणापि वतिमतिदेशो गम्यते। तद्यथा–'एष ब्रह्मदत्तः'। अब्रह्मदत्तं ब्रह्मदत्त इत्याह। तें मन्यामहे ब्रह्मदत्तवदयं भवतीति। एवमिहाप्यसङ्ख्यां सङ्ख्येत्याह, सङ्ख्यावदिति गम्यते ॥**

(उ०) 'ब्रह्मदत्त' इत्युक्तिविषयस्याऽब्रह्मदत्तत्वं स्फोरयितुं ब्रह्मदत्तव्यक्तिं निर्दिशति–एष ब्रह्मदत्त इति ॥ असङ्ख्यां सङ्ख्येत्याहेति। नियतविषयपरिच्छेदहेतुर्हि सङ्ख्या। एवंच बहुत्वादेरसङ्ख्यात्वमिति भावः ॥ बहुत्वं हि द्व्यादिसङ्ख्याव्यापकमखण्डोपाधिरूपम् ॥

[ समाधानान्तरभाष्यम् ]

**अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति— भवत्येकादिकायाः सङ्ख्यायाः सङ्ख्याप्रदेशेषु सङ्ख्यासंप्रत्यय इति, यदयं 'सङ्ख्याया अतिशदन्तायाः क'न्निति तिशदन्तायाः प्रतिषेधं शास्ति ॥ कथं कृत्वा ज्ञापकम् ? ॥ न हि कृत्रिमा त्यन्ता शदन्ता वा सङ्ख्याऽस्ति ॥**

( प्र० ) अथवेति । गुरुसंज्ञाकरणादेकादयः सङ्ख्याशब्देन प्रदेशेषु न लभ्यन्त इति लिङ्गेनाऽप्यनुमीयत इत्यर्थः ॥

(उ०) गुर्विति । नन्वतिशदन्ताया इति लिङ्गात्कन्विधौ कृत्रिमा न गृह्येतेति चेन्न । शास्त्रबाधापेक्षया उभयग्रहणज्ञापकत्वस्यैवौचित्यादिति भावः ॥

[ समाधानविघटनभाष्यम् ]

**ननु चेयमस्ति डतिः ॥**

[ समाधानस्थापनभाष्यम् ]

**यत्तर्हि शदन्तायाः प्रतिषेधं शास्ति ॥**

[ सपूर्णसूत्रज्ञापकताभ्युपगमनभाष्यम् ]

**यच्चापि त्यन्तायाः प्रतिषेधं शास्ति ॥**

[ आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तं–'डत्यर्थमेतत्स्या'दिति ॥**

[ समाधानभाष्यम् ]

**'अर्थवद्ग्रहणे नानर्थकस्ये'त्यर्थवतस्तिशब्दस्य ग्रहणं। न च डतेस्तिशब्दोऽर्थवान् ।**

(प्र०) अर्थवत इति। ननूभयसंभवे इयं परिभाषोपतिष्ठते । डत्यन्ता च कृत्रिमाऽस्ति, डतेश्च तिशब्दोऽनर्थक एवेति तस्यैव निषेधः स्यादित्यज्ञापकस्त्यन्तायाः प्रतिषेधः । नैष दोषः, 'अतिशदन्ताया' इत्युच्चारणकाल एवाऽर्थवतस्तिशब्दस्य ग्रहणमिति प्रतीतिरिति ज्ञापकत्वमेव प्रतिषेधस्य ॥

(उ०) नैष इति । 'अतिशदन्ताया' इत्यस्य बहुव्रीहिगर्भतत्पुरुषत्वेन सङ्ख्याविशेषणतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाच्चे[3] तत्पदजन्योपस्थितिकालेऽर्थवदनर्थकयोः संभवेन पूर्वमर्थवत एव ग्रहणे निर्णीते पश्चात्संज्ञापदार्थान्वयवेलायां जायमानानुपपत्तिज्ञानेन ज्ञापकत्वमेव कल्प्यत इति भावः। एतत्पक्षद्वये महासंज्ञाया अनुग्राहकत्वं वक्तुमयुक्तं, तन्मूलकपक्षान्तरस्याग्रे वक्ष्यमाणत्वादित्यन्ये ॥

[ समाधानान्तरभाष्यम् ]

**अथ वा महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥ कुत एतत् ? ॥ लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्–'अन्वर्थसंज्ञा यथा विज्ञायेत–संख्यायतेऽनया संख्येति । एकादिकया चापि संख्यायते ॥**

(प्र०) अथवेति। ननु महत्याः संज्ञायाः करणात्तदर्थानुगतानामुपात्तानामेव संज्ञिनां भवतु संज्ञा, यथा सर्वादीनामेव सर्वनामसंज्ञा, न त्वधिकानाम्। तेन बहुगणशब्दयोः सङ्घवैपुल्यवचनयोः संज्ञा मा भूत्, एकादीनां तु कथं स्यात् ?। नैष दोषः, इहान्वर्थसंज्ञाकरणेन तावदनुरूपः संज्ञी सर्व आक्षिप्यते । तेनैकादीनां तावद्ग्रहणं भवति, पश्चाद्बहुगणवतुडतीति भूर्यादिनिवृत्त्यर्थं नियमार्थं व्याख्यायते। अतएवसङ्घवैपुल्यवृत्त्योर्बहुगणशब्दयोः संज्ञा न भवति तद्वदतिदेशपक्षेऽपि परस्परसाहचर्यात्संख्यावाचिनो-एतदिति । व्याख्यानादुक्तहेतोश्चोक्तार्थसिद्धेरिति भावः ।

१ 'क्रियेतेति लौकि'। २ क्वचिन्न । ३ प्रदीपं दूषयति-

रेव भूर्यादिनिवृत्तये नियमायाऽतिदेशः क्रियत इत्यतिप्रसङ्गो न भवति ॥

(उ०) भाष्ये-**संज्ञा च नामेति । नाम**-प्रसिद्धमेतत्, **यतोऽन्यल्लघीयो न भवति** सा संज्ञेति । **तदर्थानुगतानामिति** । सङ्ख्यानकरणत्वसमानाधिकरणसङ्ख्याशब्दवदभिन्ना बह्वादय इत्यर्थादिति भावः। **कथं स्यादिति** । महासंज्ञाकरणस्य चरितार्थतया कृत्रिमन्यायबाधे मानाऽभावादिति भावः । **सर्वं इति** । नियताऽनियतसङ्ख्यावाचीत्यर्थः। **आक्षिप्यत इति** । 'सङ्ख्येति विभक्तसूत्रे' इति शेषः। एवं च सङ्ख्यानकरणीभूताः सङ्ख्यासंज्ञका इत्यर्थः। संज्ञायाः संज्ञ्याकांक्षतया तद्वाचकं पदमुपस्थितान्वर्थवाचकमेव कल्प्यत इत्ययमेवात्राक्षेप इति भावः । **नियमार्थमिति । बहुगणेति** द्वितीयसूत्रे सङ्ख्येति वर्त्तते[1] । अनियतसङ्ख्यावाचिनां चेद्बह्वादीनामेवेति भावः । **अतएवेति** । अन्वर्थत्वाश्रयणादेवेत्यर्थः । **संज्ञा न भवतीति** । प्राप्तेरेवाऽभावादिति भावः। **सङ्ख्यावाचिनोरेवेति** । बहुगणयोरित्यर्थः। **नियमायेति** । नियमफलक[2] इत्यर्थः। **परे तु**[3] परस्परसाहचर्यात्सङ्ख्याव्यापकार्थवाचिनोरेव बहुगणयोर्ग्रहणं न तु सङ्ख्यावैपुल्यवचनयोरिति व्यर्थाऽन्वर्थसंज्ञा । तस्मात्प्रदेशेषु लोकप्रसिद्धकेवलयोगार्थस्यापि ग्रहणार्थं महती संज्ञेति भाष्याशयः । 'असङ्ख्यां सङ्ख्येत्यादे'तिभाष्येण बह्वादिषु सङ्ख्यायत इति योगाऽर्थाऽभावबोधनाच्चेति योगविभागो व्यर्थः। 'एकादिकया चापि सङ्ख्यायते' इत्यस्य एकादिकया सङ्ख्यायते साऽपि सङ्ख्याप्रदेशेषु यथा गृह्येतेति महासंज्ञाकरणमित्यर्थः । **च**स्तु वाक्यालङ्कारे । उभावपि[4] वा वाक्यालङ्कार एव। यद्वा[5] बह्वादिकयाऽपि सङ्ख्यायते स्वव्याप्यत्रित्वादिद्वारेत्यर्थः । वत्वन्तड[6]त्यन्तयोर्यावदादिशब्दकतिशब्दयोर्यद्यपि साक्षात्सङ्ख्यानकरणीभूताऽर्थप्रतिपादकत्वमुपादयितुमशक्यं तथापि कतीत्यत्र सङ्ख्यानकरणीभूतार्थविषयप्रश्नार्थकत्वेन तत्त्वम् । एवं वत्वन्तेऽप्यूह्यमित्याहुः ॥

[ सिद्धान्तिनो द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् ]

**उत्तरार्थेन चापि नाऽर्थः संख्याग्रहणेन । इदं प्रकृतमुत्तरत्रानुवर्तिष्यते ॥**

[ वादिनः शङ्काभाष्यम् ]

**इदं वै संज्ञार्थम् । उत्तरत्र च संज्ञिविशेषणेनार्थः । न[7] चाऽन्यार्थं प्रकृतमन्यार्थं भवति । न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति । न हि गोधा[8] सर्पन्ती सर्पणादहिर्भवति ॥**

(प्र०) **संज्ञिविशेषणेनार्थ इति** । 'ष्णान्ते'त्यनेन विशिष्टं संज्ञिनं प्रतिपादयितुमुपयोग इत्यर्थः । **नचान्यार्थमिति** । एकशब्दत्वदर्शन इति भावः । भवतु तर्हि प्रतियोगं शब्दभेद इत्याह-**न खल्वपीति** । यथा गोधा देशान्तरगमनमात्रेण गोधात्वं न जहात्येवं शब्दोऽपि रूपान्तरं न गृह्णात्येवेत्यर्थः ॥

(उ०) भाष्ये **संज्ञार्थमिति । ष्णान्तेति** । संज्ञाशब्दस्वरूपं तदर्थकमित्यर्थः । संज्ञिनिरूपितसङ्ख्याशब्दनिष्ठशक्त्यवगमार्थं स्वरूपपरमिति भावः । ननु 'ष्णान्ते'त्यनेन सङ्ख्या विशेष्यत इति संज्ञिविशेषणं सङ्ख्याग्रहणमित्ययुक्तमत आह-**ष्णान्तेति** । भाष्ये-**संज्ञी**-षट्संज्ञासंज्ञी **विशेष्यते**-स्वेतरव्यावृत्ततया प्रतिपाद्यते येनेत्यर्थः । ननु स्वरितत्वबलेनाऽनुमीयमानस्य शब्दान्तरत्वाच्छब्दभेदेनाऽर्थभेदस्य सत्त्वेन 'न चान्यार्थ'मित्ययुक्तमत आह-**एकेति** । यस्य स्वरितत्वं प्रतिज्ञातं तदेवाऽनुवर्तते न तु तज्जातीयं शब्दान्तरमिति भावः । अर्थाधिकार एव चाभ्यर्हितस्तदर्थस्य चाऽयोग्यत्वादिहाऽसंबन्ध इति भावः । **इत्याहेति** । इत्याशङ्क्याहेत्यर्थः । भाष्ये-**न खल्वपीति** । 'प्रकृतमनुवर्तनाद्देशान्तरगमनादन्यद्भवतीति न खलु' इत्यन्वयः । **यथेति** । सर्पणस्योभयत्र तुल्यत्वेन प्रसक्तमहित्वं गोधाया वार्यत इति भाष्यार्थः, सर्पणस्याऽहिशब्दप्रवृत्तिनिमित्तत्वाऽभावात्, किंतु देशान्तरगमनं नान्यत्वापादकमित्यर्थ इति भावः । **रूपान्तरम्**-अर्थभेदम् ॥

[ समाधानभाष्यम् ]

**यत्तावदुच्यते-'न चान्यार्थं प्रकृतमन्यार्थे[9] भवती'ति । अन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा-शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उप[10]स्पृश्यते च, शालयश्च भाव्यन्ते ॥**

(प्र०) अन्यार्थमपीति । पदार्थानां शक्तिवैचित्र्यात् ॥

(उ०) **पदार्थानामिति** द्वन्द्वः । **शक्तिवैचित्र्यात्** । अनेकशक्तित्वादित्यर्थः । एवं पूर्वत्र तया शक्त्या स्वरूपपरस्यापि उत्तरत्रान्यया शक्त्या योग्यतावशादर्थपरत्वे बाधकाऽ-

---

१ **वर्त्तते**-अनुवर्त्तते । २ तादर्थ्ये चतुर्थीत्याशयेनाह-**नियमेति** । ३ प्रदीपं दूषयति-**परेस्त्विति** । ४ **उभौ**=चाऽपीति । ५ अपिं सफलयति-**यद्वेति** । ६ शङ्कते-**वत्वन्तेति** । साक्षादित्यस्य प्रतिपादकत्वेऽन्वयः ॥

७ **न च**-नहि । ८ **गोधा**-'गोह' इति प्रसिद्धा । ९ एवं कैयटतात्पर्यमुक्त्वा भाष्याशयान्तरमाह-**अर्थेति** । **भाव इति** । भाष्यस्येति भावः ।

१० **उपस्पृश्यते**-आचम्यते ।

भावः। शब्दोऽधिकारोऽत्र लक्ष्यानुरोधादाश्रीयत इति भावः॥

[ समाधानभाष्यम् ]

**यदप्युच्यते–'न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति, नहि गोधा सर्पन्ती सर्पणादहिर्भवती'ति । भवेद्-द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येन येन विशेषेणाभिसंबध्यते, तस्य तस्य विशेषको भवति॥**

(प्र०) **शब्दस्त्विति** । स्वरितत्वेन वाक्यान्तरे शब्दान्तरं वाक्यार्थानुग्राहिवस्तुप्रतिपादनयोग्यमनुमीयते । सादृश्यात्तु तत्त्वाध्यवसाय इत्यर्थः ॥

(उ०) भाष्ये **भवेद्द्रव्येष्वेतदेवं स्यादिति** । '**स्या**'दिति संभवानायां लिङ् । **भवे**दिति प्रार्थनायाम् । द्रव्ये विषये पूर्वोक्तार्थकर्तृका[2] संभाविता सत्ता भवत्वित्यर्थः । शब्दभेदनयेऽपि न क्षतिरित्याह–**शब्दस्त्विति** । **येनयेन विशेषेणेति** । विशेष्यत इति **विशेषः**–परिच्छेद्यम् । **विशेषकः**–परिच्छेदकः । तत्परिच्छेदकाऽर्थवानन्य एव शब्दो भवतीत्यर्थः । तदुपपादयति–**स्वरितत्वेनेति** ॥

[ समाधानान्तरभाष्यम् ]

**अथ वा–सापेक्षोऽयं ['ष्णान्ते'[3]ति] निर्देशः क्रियते । न चाऽन्यत्किञ्चिदपेक्ष्यमस्ति । ते[4] संख्यामेवापेक्षिष्यामहे ॥**

(प्र०) **सापेक्षोऽयमिति** । स्त्रीलिङ्गेन निर्देशः कृतः । तत्र प्रकृतत्वादन्यपदार्थत्वेन संख्या स्वरितत्वेन विनाऽप्यपेक्ष्यत इत्यर्थः ॥

[ आक्षेपवार्तिकम् ]

*॥ * ॥ अध्यर्द्धग्रहणं च समासकन्विध्यर्थम् ॥ * ॥*

**अध्यर्द्धग्रहणं च कर्तव्यम् ॥ किं प्रयोजनम्?॥ 'समासकन्विध्यर्थम् । समासविध्यर्थं कन्विध्यर्थं च । समासविध्यर्थं तावत्–अध्यर्द्धशूर्पम् । कन्विध्यर्थम्–अध्यर्द्धकम् ।**

(प्र०) **अध्यर्द्धग्रहणं चेति** । वार्तिके संख्याग्रहणं कर्तव्यमिति स्थितन्तदपेक्षया समुच्चयार्थश्चशब्दः विध्यर्थं चेदंग्रहणम्, अध्यर्द्धशब्दस्य त्रिभागचतुर्भागादिशब्दवदसंख्यावाचित्वात् । अर्द्धशब्दश्चैकदेशवाची, न सङ्ख्यावाची, एकदेशादिशब्दवत् । तस्याऽधिशब्देन समासे कृते यौगिकोऽर्थः प्रतीयते, न सङ्ख्या । **अध्यर्द्धशूर्पमिति** । अध्यर्द्धेन शूर्पेण क्रीतमिति 'दिक्सङ्ख्ये' इत्यनुवर्तमाने तद्धितार्थेति समासः । ततः 'शूर्पादञन्यतरस्या'मिति अञष्ठञो वाऽध्यर्धपूर्वेति लुक् । **अध्यर्द्धकमिति** । 'सङ्ख्याया अतिशदन्तायाः क'न्निति कन् ॥

(उ०) अध्यर्द्धस्याऽसङ्ख्यावाचित्वमुक्तमुपपादयति–**अर्द्धशब्दश्चेति** ॥

[ सञ्ज्ञाप्रयोजनवार्तिकम् ]

*॥ * ॥ लुकि चाऽग्रहणम् ॥ * ॥*

**लुकि चाध्यर्द्धग्रहणं न कर्तव्यं भवति–'अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञाया'[5]मिति । 'द्विगो'रित्येव सिद्धम् ॥**

(प्र०) **द्विगोरित्येव सिद्धमिति** । समासविध्यर्थमिति च[3] संबन्धसामान्ये षष्ठी । तेन समासे विधीयमाने समासनिमित्ते वाऽन्यस्मिन्[6] कार्ये विधीयमान इत्यर्थः । तेन द्विगुनिमित्तो लुगपि लभ्यते । अन्ये त्वाहुः–अध्यर्द्धशब्दः सङ्ख्यावाच्येव । तथाहि गण्यते–एकोऽध्यर्द्धो द्वावर्द्धत्रय[7] इति । तन्मते नियमार्थमध्यर्द्धशब्दस्यैव सङ्ख्यात्वेन ग्रहणं यथा स्यात्सार्द्धादीनां मा भूदिति । वाक्यभेदेन च द्वितीयो नियमस्तस्य च समासकन्विध्यर्थं सङ्ख्यात्वं न कार्यान्तरार्थमित्यर्थः ॥

(उ०) ननु समासकन्सिद्धये विधीयमाना संज्ञा कथं लुको निमित्तमत आह–**समासेति** । 'समास'पदेन द्विगुसमास एव, तस्यैव सङ्ख्यानिमित्तकत्वात् । तन्निमित्तकमपि द्विगुनिमित्तकमेवेत्याह–**तेन द्विग्विति** ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ अर्द्धपूर्वपदश्च पूरणप्रत्ययान्तः ॥*॥*

**'अर्द्धपूर्वपदश्च[8] पूरणप्रत्ययान्तः सङ्ख्यासंज्ञो भवती'ति वक्तव्यम् ॥ किं प्रयोजनम्?॥ 'समासकन्विध्यर्थमेव' समासविध्यर्थं कन्विध्यर्थं च । समासविध्यर्थं तावत्–**

१ स्वोक्तयुक्तेः समाधिमाह–**शब्दाधीति** । २ एतदेवमित्यस्यार्थमाह–**पूर्वोक्तेति** । ३ कचिन्न। ४ **ते**–ते वयं भाष्यकृतः॥ 'तेन' पा०। ५ 'अध्यर्द्धपूर्वात्'पा०। ६ 'चान्य'। ७'तृतीय' । ८ **पूरणप्रत्ययान्तः**–पूरणप्रत्ययान्तपञ्चमाद्युत्तरपदकः ।

अर्धपञ्चमशूर्पम् । कन्विध्यर्थम्—अर्धपञ्चमकम् ॥

[ आक्षेपवार्तिकम् ]

॥ * ॥ *अधिकग्रहणं चाऽलुकि, समासोत्तरपदवृद्ध्यर्थम्* ॥ * ॥

अधिकग्रहणं चाऽलुकि कर्तव्यम् ॥ किं प्रयोजनम् ? ॥ 'समासोत्तरपदवृद्ध्यर्थम्' । समासविध्यर्थमुत्तरपदवृद्ध्यर्थं च । समासविध्यर्थं तावत्—अधिकषाष्टिकः । अधिकसाप्ततिकः ॥ उत्तरपदवृद्ध्यर्थम्—अधिकषाष्टिकः । अधिकसाप्ततिकः ॥ अलुकीति किमर्थम् ? ॥ अधिकषाष्टिकः । अधिकसाप्ततिकः

(प्र०) अधिकषाष्टिक इति । अधिकया षष्ट्या क्रीत इति सङ्ख्याविशेषणमधिकशब्दो, न सङ्ख्येति वचनम् । 'तद्धितार्थे'ति समासः । प्राग्वतेष्ठञ् । अलुकीति वचनाल्लुकि कर्तव्ये सङ्ख्यासंज्ञा नास्तीत्यध्यर्धपूर्वेति लुङ् न भवति । ततः 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य चे'त्युत्तरपदवृद्धिः । ननूत्तरपदवृद्ध्यर्थमिति वचनाल्लुङ् न भविष्यति, किमलुकीत्यनेन ? ॥ नैतदस्ति, अर्हत्यर्थात्परेष्वर्थेषु यः प्रत्ययस्तस्य लुगभावात्तत्रैवोत्तरपदवृद्धिः स्यात् ॥

(उ०) भाष्ये—**अधिकग्रहणं चेति** । लुग्भिन्नसङ्ख्याकार्यसिद्ध्यर्थमधिकग्रहणं सङ्ख्यासंज्ञायां कर्त्तव्यमित्यर्थः ॥ **नन्विति** । ञ्णिदादिषु तद्विधानादिति भावः । **परेष्वर्थेष्विति** । 'तमधीष्ट' इत्यादिष्वित्यर्थः ॥

[ प्रयोजनवार्तिकम् ]

॥ * ॥ *बहुव्रीहौ चाऽग्रहणम्* ॥ * ॥

बहुव्रीहौ चाऽधिकशब्दस्य ग्रहणं न कर्तव्यं भवति । 'सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये' इति । 'सङ्ख्ये'त्येव सिद्धम् ॥

[ प्रत्याख्यानवार्तिकम् ]

॥ * ॥ *बह्वादीनामग्रहणम्* ॥ * ॥

बह्वादीनां ग्रहणं शक्यमकर्तुम् ॥

[ वार्तिकावतरणाय प्रश्नभाष्यम् ]

केनेदानीं सङ्ख्याप्रदेशेषु सङ्ख्यासंप्रत्ययो भविष्यति ? ॥

[ प्रत्याख्यानवार्तिकखण्डम् ]

॥ * ॥ *ज्ञापकात्सिद्धम्*[1] ॥ * ॥

[ज्ञापकात्सिद्धमेतत्][2]॥ किं ज्ञापकं ? ॥ यदयं—'वतोरिड्वे'ति सङ्ख्याया विहितस्य कनो वत्वन्तादिटं शास्ति ॥

[ आक्षेपतत्समाधानभाष्यम् ]

वतोरेव तज्ज्ञापकं स्यात् ॥ नेत्याह । योगापेक्षं ज्ञापकम् । [ बहुगण ] ॥

(प्र०) ज्ञापकात्सिद्धमिति । एकादिवन्नियतसङ्ख्यावाचित्वं बह्वादीनां नास्तीति ज्ञापकाश्रयः ॥ **योगापेक्षमिति** । अस्य योगस्य प्रत्याख्यानादेतद्योगापेक्षमिति न बोद्धव्यं, किंतु योगानपेक्षत इति योगापेक्षम् । यदयं 'बहुपूगगणसङ्घस्य तिथुक्', 'वतोरिथुक्' 'षट्कती'ति डटि परत आगमं शास्ति, तज्ज्ञापयति—'भवति सङ्ख्याकार्य'मिति ॥

(उ०) **नियतसङ्ख्यावाचित्वमिति** । नियतविषय[3]परिच्छेदहेतुत्वरूपसङ्ख्यावाचित्वमित्यर्थः । भाष्ये—**यदयमिति** । न च वैपुल्यादिवाचिनामपि सङ्ख्याकार्यापत्तिः, सङ्ख्यापदार्थसंबन्धिबह्वादिग्रहणज्ञापनेन चरितार्थस्य सर्वथा तदसंबन्धिवैपुल्यादिवाचकग्रहणज्ञापने सामर्थ्याऽभावात् । पूगादिभ्यो[4] डडर्थं बहुगणेति सूत्रे कृतेऽपि ज्ञापकावश्यकत्वमिति भावः । केचित्तु 'वतोरिड्वे' त्यनेन सङ्ख्यानकरणत्वाऽभाववतामप्यन्येषां प्रयोगेषु दृश्यमानसङ्ख्याकार्याणां सङ्ख्याकार्यं ज्ञाप्यते । तेनाऽधिकादीनामपि सिद्धं, तदाह—**योगापेक्षेति** । प्रयोगापेक्षमित्यर्थः । एतेन पूगादिभ्यः शसादिप्रसङ्गोऽपि वारित इत्याहुः ॥ [ **बहुगणवतु** ] ॥

## ष्णान्ता षट् ॥ १ । १ । २३ ॥

[ आक्षेपवार्तिकम् ]

॥ * ॥ *षट्संज्ञायामुपदेशवचनम्* ॥ * ॥

षट्संज्ञायामुपदेशग्रहणं कर्तव्यम् । 'उपदेशे षकारनकारान्ता सङ्ख्या षट्संज्ञा भवती'ति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥

---

१ इदं भाष्यमित्यन्ये । २ अयं पाठः क्वचिन्न । ३ यथाश्रुताऽसङ्गतेराह—नियतविषयेति ।

४ ननुज्ञापकेन सूत्रस्य प्रत्याख्यानं न युक्तमत आह—पूगादिभ्य इति ।

*॥ * ॥ शताद्यष्टैनोर्नुम्नुडर्थम् ॥ * ॥*

**शतानि सहस्राणि । नुमि कृते 'ष्णान्ता ष'डिति षट्संज्ञा प्राप्नोति । उपदेशग्रहणान्न भवति ॥ अष्टानामित्यत्राऽऽत्वे कृते षट्संज्ञा न प्राप्नोति । उपदेशग्रहणाद्भवति ॥**

(प्र०) **ष्णान्ता । षट्संज्ञायामिति ।** प्रकृतिप्रत्ययैादिविभागेन प्रतिपादनं गुणैः प्रापणमुपदेशः । तेन प्रकृतिप्रत्ययाद्युपदेशे षकारनकारान्ताया सङ्ख्यायाः षट्संज्ञेत्यर्थः । **नुम्नुडर्थमिति ।** अर्थशब्दः प्रयोजनवाची । तैत्र नुमि 'शतानी'त्यादौ षट्संज्ञानिवृत्तिः प्रयोजनं, नुटि तु विधीयमाने षट्संज्ञाप्रवृत्तिः प्रयोजनम् । **अष्टानामिति ।** परत्वान्नित्यत्वाच्चात्वे कृते नुटोऽप्राप्तिः । कार्यकालत्वात्संज्ञायाः प्रवृत्तेर्नास्त्यन्तरङ्गत्वम् ॥

(उ०) **ष्णान्ता षट् ।** स्वरूपप्रतिपत्त्यर्थाद्योच्चारणस्यान्यत्रोपदेशत्वप्रसिद्धेरुपदेशग्रहणे पश्चादिषु न स्यादत आह–**प्रकृतीति ।** प्रकृतिप्रत्ययविभागेन प्रतिपादनरूपं यद्गुणैः प्रापणं तदुपदेशपदेनाऽत्र गृह्यत इत्यर्थः । एतदभिप्रायेणैवोपदेशेऽजिति सूत्रे वक्ष्यति–**'संकीर्णावुद्देशोपदेशाविति' । प्रत्ययाद्युपदेश इति ।** आदिनाऽऽगमः । यथा सप्तनादौ **सप्यशूभ्यां तुट्चेति** प्रकृत्यादिभिरुपदेशे प्रातिपदिकस्वरूपबोधने या ष्णान्ता सङ्ख्या निष्पन्ना भवति सेत्यर्थः । यद्यपि शतानीत्यादावपि नुमागमोपदेशेन नान्तसङ्ख्यानिष्पत्तिरस्ति, तथापि विभक्त्युत्पत्त्यवधिभूतप्रातिपदिकस्वरूपनिष्पादकानामेव तेषां ग्रहणम् , न तु विभक्तिनिमित्तकानामपि, बहिरङ्गत्वादिति भावः । **तत्रेति ।** नुम्नुटोरर्थः प्रयोजनं यस्येति बहुव्रीहिरिति भावः । नन्वन्तरङ्गत्वात्पूर्वमेव षट्त्वं प्रवृत्तमात्वेऽपि बहिरङ्गतया आत्वस्याऽसिद्धत्वान्न निवर्त्स्यतीत्यत आह–**कार्यकालेति ।**

[ प्रत्याख्यानवार्त्तिकम् ]

*॥ * ॥ उक्तं वा ॥ * ॥*

**[ उँक्तं वा ] ॥ किमुक्तम् ? ॥ इह तावच्छतानि सहस्राणीति,–'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति ॥ अष्टनोप्युक्तम् ॥ किमुक्तम् ? ॥ 'अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थ'मिति ॥**

(प्र०) **अष्टनो दीर्घेति ।** अत्र हि दीर्घग्रहणमष्टस्विति सुप उदात्तत्वनिवृत्त्यर्थं क्रियते । यदि च कृतात्वस्य षट्संज्ञा न स्यात्तदाऽष्टस्विति परत्वात् षट्स्वरो 'झल्युपोत्तम'मिति भविष्यतीति किं दीर्घग्रहणेन ?। कृतं च तत् कृतात्वस्यापि षट्संज्ञां ज्ञापयैति । ततश्चाऽपवादत्वात्षट्स्वरोऽनेन बाध्यत इति दीर्घपक्ष इवाऽदीर्घपक्षेऽपि विभक्तेः स्वरः स्यादिति कर्तव्यं दीर्घग्रहणम् ॥

(उ०) **सुप उदात्तत्वेति ।** 'अष्टन' इति प्राप्तेत्यर्थः । 'आद्युदात्तत्वे'ति क्वाचित्कोऽपपाठः । यैद्वा–दीर्घग्रहणं षट्त्वे यथोद्देशपक्षाश्रयणस्यैव ज्ञापकम् । तद्द्वारैव च षट्संज्ञाज्ञापकत्वम् । तत्पक्षे आत्वस्य बहिरङ्गतयाऽसिद्धत्वेन नान्तत्वबुद्ध्या षट्त्वमस्त्येव । स्पष्टं चेदमष्टनो दीर्घादित्यत्र **कैयटे ।** किं च यथोद्देशपक्षे षट्त्वं स्थानिवद्भावेनाऽपि सुलभं, नकारान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य समुदायधर्मत्वेन तन्निमित्तकनुडादेरल्विधित्वाऽभावादिति बोध्यम् । न चाऽऽत्वस्य नित्यत्वादष्टस्विति प्रयोग एवाऽसङ्गत इति वाच्यम् । तद्वैकल्पिकत्वस्याऽपि ज्ञापनात् । 'यावता विनाऽनुपपन्नं तत्सर्वं ज्ञाप्यत' इति सिद्धान्तात् । **परत्वादिति ।** अष्टन्स्वर आत्वपक्षे चरितार्थः । न च तत्प्रवृत्त्युत्तरमष्टस्वित्यादावष्टन्स्वरः स्यादेवेति वाच्यम् । सकृद्गतिन्यायाश्रयणात् । **अपवादत्वादिति ।** न च स्वरप्रवृत्तेः पूर्वमन्तरङ्ग-

१ 'षष्टनोनु' पा० । २ त्ययवि' । ३ तत्र–तयोर्मध्ये । ४ लुप्तं स्यात् । ५ तथाहि–'त्रः संख्यायाः' इत्याद्युदात्तत्वं बाधित्वा घृतादिपाठादन्तोदात्तोऽष्टन्शब्दः साधितः । तस्माद्भिसि अष्टभिरष्टाभिरिति च रूपद्वयमुक्तं । तत्र आत्वाऽभावे मध्योदात्तम्, आत्वपक्षे त्वन्तोदात्तमिति **सिद्धान्तः ।** तत्र 'षट्त्रिचतुर्भ्यो हलादिः' इति सूत्रेणाऽष्टस्वित्यत्र षण्णां षड्भिरित्यादाविव विभक्तेरुदात्तत्वं प्राप्तम् । तद्बाधित्वा 'झल्युपोत्तमम्' इति प्राप्तम् । षट्त्रिचतुर्भ्यो वा झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवतीति हि तस्यार्थः । तद्बाधनाय च 'अष्टनोदीर्घात्' इत्यारभ्यते । दीर्घादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवतीति सूत्राऽर्थः । तत्र यद्यात्वपक्षे षट्संज्ञा न स्यात्तर्हि तत्र सावकाशोऽष्टनः स्वरः परत्वादात्वाभावपक्षे 'झल्युपोत्तमम्' इति षट्स्वरेण बाधिष्यते इति किं तत्र दीर्घग्रहणेन । कृतात्वस्यापि षट्संज्ञायां तु षट्स्वरस्याष्टनः स्वरोपवादः संपद्यते । नचाऽष्टनः स्वरः शसि सावकाश इति वाच्यम् । तत्रैकादेश उदात्तेनोदात्त इति सूत्रेणैव गतार्थत्वात् । अष्टन्शब्दोऽन्तोदात्त इति समनन्तरमेवोक्तत्वात् । तेन दीर्घपक्ष इव तदभावपक्षेऽपि विभक्तेरुदात्तता स्यादिति तद्बाधनार्थं क्रियमाणं दीर्घग्रहणं सार्थकमेव । तस्माद्दीर्घग्रहणेनात्वपक्षेऽपि षट्संज्ञा ज्ञाप्यते इति स्थितमिति **शब्दकौस्तुभे श्रीभट्टोजिदीक्षिताः ।**

६ लाघवादाह–यद्वेति ॥

स्याप्येकादेशस्याप्रवृत्तेर्यद्वितुपरमित्यादिसूत्रस्थभाष्यसंमतत्वेनाऽष्टावित्यादावष्टन्स्वरश्चरितार्थ इति वाच्यम् । अष्टनो घृतादित्वादन्तोदात्तत्वेनैकादेश उदात्तेनेत्येव तत्राऽन्तोदात्तत्वसिद्धेः । घृतादावस्य पाठे चेदमेव भाष्यं मानम । गौणे 'प्रियाष्टाभि'रित्यादौ षट्स्वराऽष्टन्स्वरयोः प्रवृत्तिरस्त्येव । तेषामनभिधानाच्च । एतेन 'कदष्टन्शब्दोऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्त इति कदष्टावित्यस्यैकादेशस्वरेणासिद्धेस्तत्राष्टन्स्वरः सावकाश' इति परास्तम् । तस्याऽप्यनभिधानात् ।

[ एकदेशिनःसमाधानवार्त्तिकभाष्यम् ]

*॥*॥ [ आकारा[1]निर्देशाद्वा ] ॥*॥*

**अथवाऽऽकारोऽप्यत्र निर्दिश्यते-षकारान्ता नकारान्ता आकारान्ता च सङ्ख्या षट्संज्ञा भवतीति ॥**

[ पूर्वपक्षिणस्तन्निरासभाष्यम् ]

**इहापि तर्हि प्राप्नोति,—'सधमादो द्युम्न[2] एकास्ताः' । एका इति ॥**

(प्र०) एकास्ता इति । सङ्ख्यावाचित्वाभ्युपगमवादी व्यत्ययेन बहुवचनं मन्यते ।

(उ०) ननु सङ्ख्यावाचित्वे 'एका' इति बहुवचनमनुपपन्नमन्यत्र तु षट्संज्ञायाः प्राप्तिरेव नेत्यत आह— सङ्ख्येति ॥

[ एकदेशिनः समाधानभाष्यम् ]

**नैष दोषः । एकशब्दोऽयं बह्वर्थः । अस्त्येव सङ्ख्यापदम् । तद्यथा,-एको द्वौ बहव इति । अस्त्यसहायवाची । तद्यथा,-एकाग्नयः, एकहलानि, एकाकिभिः क्षुद्रकैर्जितमिति । असहायैरित्यर्थः । अस्त्यन्यार्थे वर्त्तते । तद्यथा-'प्रजामेका रक्षत्यूर्जमेके'ति । अन्येत्यर्थः । सधमादो द्युम्न एकास्ताः । अन्या इत्यर्थः। तद्योऽन्यार्थे वर्त्तते तस्यैष प्रयोगः।**

(प्र०) अन्यवाचित्वाश्रयं तूत्तरम् ॥

[ पूर्वपक्षिणो दोषदर्शनभाष्यम् ]

**इह तर्हि प्राप्नोति-'द्वाभ्यामिष्टये विंशत्या चे'ति ॥**

(प्र०) इह तर्हीति । द्वाभ्यामिति । षट्स्वरः स्यात् ।

(उ०) षट्स्वर इति । 'षट्त्रिचतुर्भ्यो हलादि'रित्यनेन । न च षान्तनान्तसाहचर्यादाकारान्तो बहुवचनान्त एव गृह्यते इति नाऽयं दोषः । साहचर्यस्य सर्वत्राऽव्यवस्थापकत्वमित्याशयात् ॥

[ सिद्धान्तिनः समाधानवार्त्तिकभाष्यम् ]

*॥*॥ [ योग[1]विभागाद्वा ] ॥*॥*

**एवं तर्हि सप्तमे योगविभागः करिष्यते 'अ ाभ्य औश्' । ततः 'षड्भ्यः' । षड्भ्यश्च यदुक्तमष्टाभ्योऽपि तद्भवति ॥ ततो 'लुक्' । लुक् च भवति षड्भ्य इति॥**

(प्र०) सप्तम इति । 'अष्टाभ्य' इति कृताऽऽत्वानुकरणादौश्त्वविधानसामर्थ्याच्च लुङ् विधीयते ॥

(उ०) कृतात्वेति । ततश्च कृतात्वस्य कार्यकालपक्षेऽसत्यपि षट्त्वेऽतिदेशान्नुट्सिद्धिरित्यर्थः । औश्त्वेति । अत एव विभक्ते जश्शसोरनुवृत्तिर्न । तथा हि सति लुगेवातिदिश्येतेति तद्वैयर्थ्यं स्पष्टमेव । विरीतं तु न, व्याख्यानात् ।

[ वार्त्तिकव्याख्याभेदेन समाधानभाष्यम् ]

**अथ वा-उपरिष्टाद्योगविभागः करिष्यते,-'अष्टन आ विभक्तौ' । ततो 'रायः' । रायश्च विभक्तावाकारादेशो भवति। 'हली'त्युभयोः शेषः ॥**

(प्र०) हलीति । ततश्चाऽष्टानामिति नुटि कृते आत्वं भवति । जश्शसोस्त्वष्टाभ्य इति कृतात्वनिर्देशाज्ज्ञापकादात्वं भवति । कृतात्वस्य हि निर्देशस्य प्रयोजनं,-'यत्रात्वं तत्रौश्त्वं यथा स्या'दिति । यदि ह्येतत्कृतात्वनिर्देशस्य प्रयोजनं न स्याल्लाघवार्थमष्टभ्य औशिति ब्रूयात् ।

(उ०) ततश्चेति। न च संनिपातपरिभाषयाऽऽत्वं न स्यात् । अष्टानामिति रूपं तु नुटि 'नोपधाया' इति दीर्घे न लोपे च सिद्धमिति वाच्यम् । असिद्धस्यापि तद्विघा[3]तकविधेरनयाऽप्रवृत्तिबोधनेन नलोपस्याऽप्यनापत्तेः । अत[4] एव 'पुग्घ्रस्वत्वस्याऽनिमित्तं स्याददीदप'दित्यत्रेति भाष्ये 'कृन्मेजन्त' सूत्रे उक्तम् । 'जानातेर्मित्त्वेन ज्ञापकेन ह्रस्वविषये तदप्रवृत्ति'रिति कैयटो वक्ष्यति। अन्यथा पुगपेक्षया ह्रस्वस्य बहिरङ्गासिद्धतया तस्यौ[5] अप्राप्तौ भाष्याद्यसङ्गतिः स्पष्टैव । किं चातिदेशिकनिमित्तवि[6]घाताऽभावमादाय नाऽस्या अप्रवृत्तिः । एवं[7]

१ लुप्तं स्यात । २ 'द्युम्यः' । ३ तद्विघातकविधेः-नलोपविधेः । अनया-संनिपातपरिभाषया । ४ अतएव-असिद्धस्थले प्रवृत्तेरेव ।

५ तस्याः-संनिपातपरिभाषायाः । 'त्वस्याः' पा० ।
६ निमित्तेति । संनिपातविघाताऽभावेत्यर्थः ।
७ एवंहि-तदप्रवृत्तौ हीत्यर्थः ।

हि 'लक्ष्मी'त्यादौ संबुद्धिह्रस्वे कृते संबुद्धिलोपे कृतेऽपि प्रत्ययलक्षणेन निमित्तविघाताऽभावात्तत्राऽस्या अतिव्याप्तिपरतत्[1]सूत्रस्थभाष्यविरोधः । किं च 'गव्यिते'त्यादौ संनिपातपरिभाषया लोपो नेति[2] सिद्धान्तभङ्गः । यलोपस्य बहिर्भूततुग्निमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वात् । वस्तुतस्तु षट्त्वसंनिपातनिमित्तको नुट् । न च तस्य सन्निपातस्याऽऽत्वं विघातकं, नापि नलोपः, स्थानिवद्भावेन तयोः कृतयोरपि षट्त्वसत्त्वात् । अत्र पक्षे दीर्घग्रहणं, पुनःप्रसङ्गपक्षे अष्टभिरित्यत्र षट्स्वरे कृतेऽष्टन्स्वरव्यावृत्त्यर्थं सदात्वविकल्पज्ञा[3]पनार्थमिति बोध्यम् । अतिदेशविषयेऽपि तत्प्रवृत्तौ तु सिद्धं न इष्टम् । अजाद्योर्जश्शसोस्तर्[4]ह्यात्वं न स्यादत आह–**जश्शसोरिति** ।

[ आक्षेपभाष्यम् ]

**यद्येवं 'प्रियाष्टौ' 'प्रियाष्टा' इति न सिध्यति, 'प्रियाष्टानौ' 'प्रियाष्टान' इति च प्राप्नोति ॥**

(प्र०) **यद्येवमिति** । हलादावुच्यमानमात्वमौजसोर्न प्राप्नोतीति यत्राऽष्टार्थस्य प्राधान्यं तत्रौश्त्वेन भवितव्यं, तत्रैव चौश्त्वेनात्वमनुमीयत इति जस्यप्यात्वमत्र ज्ञापकान्न प्राप्नोति । विभक्तिमात्रे त्वात्वं विधीयमानमौजसोः सिध्यति । अष्टन आ विभक्तावित्यत्र 'पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चे'ति तदन्तविधिसद्भावाद्बहुवचननिर्देशाऽभावाद्गुणभूतेऽप्यष्टार्थ आत्वेन भाव्यमित्यत्रापि सिध्यतीति प्रश्नः ॥

(उ०) भाष्ये–**प्रियाष्टान इति प्राप्नोतीति** । इत्येव प्राप्नोतीत्यर्थः । अन्यथा[5]ऽपकर्षाभावेऽपि आत्वस्य वैकल्पिकतया तस्य दुर्वारत्वेन भाष्याऽसङ्गतेः । ननु जसि ज्ञापकसिद्धाऽऽत्वप्राप्तेरौशश्च प्राप्तेराह–**यत्रेति** । बहुवचननिर्देशादिति भावः । 'षड्भ्य' इत्येतत्साहचर्यादस्य प्राधान्ये एव प्रवृत्तिरिति भावः । तस्य[6] च यथाप्रकारान्तरेण गौणेऽप्रवृत्तिस्तथा सर्वादिसूत्रे उपपादयिष्यते । शुद्धलक्षणैकचक्षुष्कस्याऽत्र पूर्वपक्षित्वमिति तात्पर्यम् । **औश्त्वेनेति** । औशेत्यर्थः । 'त्व'प्रत्ययप्रयोगस्तु अनुकरणादनुकार्यरूपे भावे इति बोध्यम्, 'आत्वे'[7] इत्यादिभाष्यप्रयोगात् । **औश्त्वेनेति** । तद्विधायकसूत्रस्थाऽऽत्वनिर्देशेनेत्यर्थः । अत्र–गौणे । **ज्ञापकादिति** । अस्य[8] 'प्राप्तियोग्यमपी'ति शेषः । कश्चित्तु ज्ञापकादिति न दृश्यते । नन्वनपकर्षपक्षेऽपि अष्टनो विहितमात्वं कथं तदन्ते स्यादत आह–**पदाङ्गेति** । **बहुवचननिर्देशाभावादिति** । साहचर्याऽभावादित्यपि बोध्यम् ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**'यथालक्षणमप्रयुक्ते'॥ [ ष्णान्ता षट् ]॥**

(प्र०) **यथालक्षणमिति** । यस्य विशिष्टः प्रयोगो न स्मर्यते नापि प्रयोगनिषेधस्मृतिस्तद्यथालक्षणमनुगन्तव्यम् । तदत्र मा भूदात्त्वमित्यर्थः। नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते, प्रयुक्तानामेव लक्षणेनान्वाख्यानात् । [ ष्णान्ता षट् ] ।

(उ०) लक्षणैकचक्षुष्कस्यैवोत्तरमिति मत्वा व्याचष्टे–**तत्र माभूदात्वमिति** । पक्षान्तरे[9]ऽपि अनभिधानादात्वाऽभाव एव बोध्यः । यत्तु भवत्येवाऽत्राऽऽत्वमित्यर्थ इति । तन्न । अपकर्षपक्षे आत्वसाधकोपायाऽभावेन फलभेदापत्तेः । नन्वयं भाष्यार्थो न युक्तः, तथा हि **सतीष्यत एवैत**दित्येव ब्रूयात् । किं चाऽप्रयुक्ते' इति वाक्यशेषोऽसङ्गतः, प्रयुक्तेऽपि लक्षणाऽनतिक्रमसत्त्वात् । 'प्रयुक्तानां हीदमन्वाख्यान'मिति भाष्योक्तेश्चेत्यरुचेराह–**नैव वेति** । लक्षणस्याभावोऽलक्षणं, तस्य योग्यता 'यथाऽलक्षण'मित्यव्ययीभावः । अप्रयुक्ते लक्षणाभावस्यैव योग्यता न तु लक्षणस्येत्यर्थः । एवं च तादृशी[10]प्रयोगोऽसाधुरिति भावः । किं च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्या ज्यायसी । एवं च हरदत्तादीनां प्रियाष्टन्शब्दादिषु आत्वादिप्रवृत्तिविचारोऽन्यश्च तत्प्रयोगविचारः प्रामादिक एवेत्यवधेयम् । एतेन 'पूर्वव्याख्यानेऽस्य साधुत्वमुत्तरव्याख्यानेऽसाधुत्व'मिति विरुद्धार्थकव्याख्यानद्वयमयुक्तं, किं च 'अष्टाभ्य' इति निर्देशात्कृताकारादेवाऽष्टनो जश्शसोरौशिति तद्विषयेऽप्यात्वम् । अन्यथाऽष्टन इत्येव ब्रूयादिति साप्तमिकभाष्ये एकवचननिर्देशात् प्रधान एवौश्त्वे इति प्रश्नाशयोऽपि चिन्त्य' इत्यपास्तम् । गौणे प्रियाष्टादीनामनभिधानमित्यत्रत्यसिद्धान्तानुसारेण तद्भाष्यस्य सत्त्वात् । अरुच्यैव व्याख्यानाऽन्तरप्रवृत्तेश्च ॥

## डति च ॥ १ । १ । २४ ॥

[ प्रत्याख्यानभाष्यम् ]

**इदं डतिग्रहणं द्विः क्रियते–संख्यासंज्ञायां, षट्संज्ञायां च । एकं शक्यमकर्तुम् । कथम्?॥ यदि तावत्संख्यासंज्ञायां क्रियते**

---

१ **तदिति** । कर्मेनजन्तसूत्रस्थे इत्यर्थः । २ **लोप इति** । 'यस्य हल' इत्यनेनेति भावः । ३ **विकल्पेति** । तन्मात्रेत्यर्थः । ४ **तर्हि–**इक्लोत्यस्योभयशेषत्वे ॥ ५ **अन्यथा**–सावधारणाऽव्याख्याने । **तस्य**–प्रयोगस्य । ६ **तस्यचेति** । 'षड्भ्य' इत्यस्येत्यर्थः । ७ **आत्वेत्यादीति** । कृतात्वेत्यर्थः । ८ **अस्येति** । ज्ञापकादित्यस्येत्यर्थः । ९ **पक्षान्तरेऽपि**–अपपकर्षान्यपक्षेऽपि । १० **तादृशेति** । आत्वघटितेत्यर्थः ।

**षट्संज्ञायां न करिष्यते ॥ कथम् ?॥ 'ष्णान्ता षडित्यत्र 'डती'त्यनुवर्तिष्यते ।**

(प्र०) **डति च । यदि तावदिति ।** तत्र वतुसाहचर्यात्तद्धित एव डतिर्गृह्यते न तु[1] पातेर्डतिः कृत्[2] ।

(उ०) **डति च ।** भाष्ये–**यदि तावदिति ।** ष्णान्ता च षडिति सूत्रं पाठ्यं, तत्र चकाराद्बलात्स्वरितलिङ्गसङ्गादनुवर्तमानं डतिग्रहणं संभत्स्यत इति भावः । **नतु पातेरिति ।** एवं चाऽर्थाधिकारादिहापि तद्धितस्यैव ग्रहणमितिभावः । सङ्ख्येति महासंज्ञासामर्थ्यात्तत्र सङ्ख्याप्रश्नविषयडतेरेव ग्रहणमित्यपि बोध्यम् ॥

**अथ षट्संज्ञायां क्रियते संख्यासंज्ञायां न करिष्यते ॥ [ कथम् ] ॥ 'डतिचे'त्यत्र संख्यासंज्ञाऽप्यनुवर्तिष्यते । [ डति च ]॥**

(प्र०) **अथेति ।** तत्र संख्यासंज्ञाया अनुवर्तनादन्वर्थत्वाच्च तस्याः संख्याप्रश्नविषय एव डतिर्गृह्यते, न त्वौणादिकः ॥ [ डति च ]

(उ०) भाष्ये–**डतिचेत्यत्रेति ।** चकारात्षट्संज्ञाऽनन्तरं करणाच्चाऽनेन संज्ञाद्वयस्यापि विधानमित्यर्थः। **अन्वर्थत्वाच्चेति ।** सङ्ख्यायतेऽनयेति हि सः । न च तस्याऽर्थस्य डत्यन्ते संभवः । सङ्ख्याप्रश्नविषयत्वं तु न तदर्थ इति चिन्त्यमेतत् । तस्मादुणादीनामव्युत्पन्नत्वान्न तत्र डतिरिति तस्याऽग्रहणमित्युचितम् । व्युत्पत्तावपि पातेः क्तिनाऽपि सिध्यतीति न तत्र डतिनियम इति बोध्यम् । **सङ्ख्याप्रश्नेति ।** संनियोगशिष्टन्यायाच्च षट्संज्ञापि तस्यैवेति भावः॥

## क्तक्तवतू निष्ठा ॥ १ । १ । २५ ॥

(प्र०) **क्तक्तवतू ।** इहाऽनुबन्धाः कार्यार्थमुपादीयन्ते । प्रयोगश्चैषां लुप्तत्वान्नास्ति । यत्र च[1] सारूप्यं तत्र[2] सन्देहः–कथमस्याऽनुबन्धकार्यं कृतमस्य तु न कृतमिति पूर्वपक्षाभिप्रायः । सिद्धान्तवादी तु मन्यते–अध्रुवेणाऽनुबन्धेन नियतसन्निधाना अर्थाः कारककालादयो लक्ष्यन्ते, तद्दर्शनादनुबन्धस्मृतौ च तल्लक्षितानां कार्याणां साधुत्वं विज्ञायते । तत्र यदा 'देवदत्तेन लूनः शालि'रिति कश्चित्प्रयुङ्क्ते तदा लक्षणज्ञः कर्मभूतकालावगमात्क्तप्रत्ययं मन्यते । यदा तु 'लोतमालभेते'ति प्रयोगस्तदा मेषवाची 'लोत'शब्दस्तन्प्रत्ययान्तः प्रयुक्त इति मन्यते ॥

(उ०) **क्तक्तवतू ।** अनुबन्धानां नित्यलुप्ततया विशेषणत्वासंभवादुपलक्षणत्वे च तच्छब्दमात्रस्योपलक्ष्यत्वं मन्यमानो वार्तिकमारभत इत्याह–**इहेति । सारूप्यं ।** 'प्रयोगे' इति शेषः । **मन्यत इति ।** निश्चिनोतीत्यर्थः । नियतं संनिधानं येषामिति विग्रहः । **कारकेति ।** न 'त'शब्दमात्रं लक्ष्यं, किं त्वर्थविशेषाद्यवच्छिन्नमिति भावः । **तद्दर्शनादिति ।** कालादि[3]ज्ञानादित्यर्थः । **तन्प्रत्ययान्त इति ।** ककारानुपलक्षितः प्रयुक्त इति निश्चिनोतीत्यर्थः ॥

[ आक्षेपवार्तिकम् ]

॥ * ॥ *निष्ठासंज्ञायां समानशब्दप्रतिषेधः* ॥ * ॥

**निष्ठासंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । लोतो गर्त इति ॥**

[ समाधानवार्तिकम् ]

॥ * ॥ *निष्ठासंज्ञायां समानशब्दाऽप्रतिषेधः* ॥ * ॥

**निष्ठासंज्ञायां समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधेऽप्रतिषेधः ॥ निष्ठासंज्ञा कस्मान्न भवति ? ॥**

[ समाधानहेतुवार्तिकम् ]

॥ * ॥ *अनुबन्धोऽन्यत्वकरः* ॥ * ॥

**अनुबन्धः क्रियते सोऽन्यत्वं करिष्यति ॥**

[ समाधानहेतुनिराकरणवार्तिकम् ]

॥ * ॥ *अनुबन्धोऽन्यत्वकर इति चेन्न लोपात्* ॥ *

**अनुबन्धोऽन्यत्वकर इति चेत् । तन्न ॥ किं कारणम् ?॥ 'लोपात्' । लुप्यतेऽत्रानुबन्धः । लुप्ते चानुबन्धे नान्यत्वं भवति[6] । तद्यथा–'कतरद्देवदत्तस्य गृहम्' ?। 'अदो यत्रासौ काकः' इति । [काकः उत्पतति] । उत्पतिते काके नष्टं तद्गृहं भवति । एवमिहापि लुप्तेऽनुबन्धे नष्टः[8] प्रत्ययो भवति ॥**

(उ०) भाष्ये–**नष्टं गृहमिति ।** अज्ञातमित्यर्थः । **नष्टः प्रत्यय इति ।** अज्ञातोऽनुबन्धः प्रत्ययो भवतीत्यर्थः ॥

---

१ क्वचिन्न । २ 'तत्र च' । ३ चाक्षुषाऽसंभवादाह–कालादीति ॥ ४ इदं भाष्यमित्यन्ये । ५ 'लुप्तेऽत्रानु' ।

६ 'भविष्यति' । ७ क्वचिन्न । ८ प्रत्ययस्य नाशाऽभावादाह–अज्ञातेति ।

[ समाधानसाधकभाष्यम् ]

यद्यपि लुप्यते, जानाति त्वसौ-'सानुबन्धकस्येयं संज्ञा कृते'ति । तद्यथा-'इतरत्रापि कतरद्देवदत्तस्य गृहम् ?' । 'अदो यत्रासौ काकः' इति । उत्पतिते काके यद्यपि नष्टं तद्गृहं भवति, अन्ततस्तमुद्देशं जानातीति ॥

( उ० ) सानुबन्धकस्येति । पूर्वं यः ककारवां-स्तस्येत्यर्थः । उद्देशम् । ऊर्ध्वदेशम् ॥

[ आक्षेपवार्तिकम् ]

॥*॥ *सिद्धविपर्यासश्च [ यथाऽन्यत्र ]* ॥*॥

सिद्धश्च विपर्यासः । यद्यपि जानाति सन्देहस्तु तस्य भवति-'अयं स तशब्दो लोतो गर्त' इति, अयं स तशब्दो लूनो गीर्ण इति' ? । [ 'यथाऽन्यत्र' ] तद्यथा इतरत्रापि 'कतरद्देवदत्तस्य गृहम् ?,' 'अदो यत्रासौ काकः' इति । उत्पतिते काके यद्यपि तमुद्देशं जानाति सन्देहस्तु तस्य भवति-'इदं तद् गृहमिदं तद् गृह'मिति ।

( प्र० ) सिद्धविपर्यास इति । सिद्धो विपर्यासः संशय इत्यर्थः । इदं तद्गृह[ मिदं तद्गृह ]मिति । बुद्धेरनवस्थितत्वमनेन प्रतिपाद्यते, न त्वेतद्विर्वचनं, वीप्साद्यर्थाऽभावात् ॥

( उ० ) सिद्धविपर्यासश्चेति । चस्त्वर्थे । सिद्धस्तु विपर्यास इत्यर्थः । यद्यपि विपर्यासो भ्रमात्मकनिश्चयस्तथाप्यथार्थत्वसाम्यादिह संशयोऽभिप्रेत इत्याह-संशयइति । बुद्धेरनवस्थितत्वमिति । सन्देहाऽभिनय इत्यर्थः । वीप्सादीति । पदार्थविषयव्याप्तीच्छाप्रयोक्तृधर्मा हि वीप्सेति भावः ॥

[ समाधानवार्त्तिकावतरणभाष्यम् ]

एवं तर्हि—

[ समाधानवार्तिकम् ॥ ]

॥*॥ *कारककालविशेषात् सिद्धं यथान्यत्र* ॥*॥

[ कारककालविशेषात्सिद्धम् ]। कारककालविशेषावुपादेयौ । भूते यस्तशब्दः कर्तरि कर्मणि भावे चेति । तद्यथा-इतरत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भवति सोऽध्रुवेण निमित्तेन ध्रुवं निमित्तमुपादत्ते-वेदिकां पुण्डरीकं वा ॥

(उ०) भाष्ये-कारकेति कालातिरिक्तप्रत्ययार्थपरम् । वेदिकां पुण्डरीकं चेति भाष्ये । एवं च साक्षादितरव्यावर्तकं विशेषणम् । स्वोपस्थाप्याऽर्थद्वारा इतरव्यावर्तकम्-उपलक्षणमिति भावः ॥

[ शङ्काभाष्यम् ]

एवमपि 'प्राकीर्ष्टे'त्यत्रापि प्राप्नोति ॥

( प्र० ) प्राकीर्ष्टेति । अत्र भूतकालोऽस्तीति भावः ।

( उ० ) प्राकीर्ष्टेत । यद्यप्यत्र निघातप्रवृत्तेर्न निष्ठात्वकृतो विशेषस्तथापि 'यन्मा प्राकीर्ष्टे'त्यस्योपलक्षणमिदम् । अत्र हि 'निपातैर्यद्यदी'ति निघाते निषिद्धे 'निष्ठा च द्व्यजना'दिति नित्यमाद्युदात्तत्वं स्यात् । असंज्ञायामपि तत्प्रवृत्तिं मन्यते । 'आदिः सिच' इति विकल्पस्त्विष्यत इति भावः ॥

[ समाधानवार्तिकम् ]

॥*॥ *लुङि सिजादिदर्शनात्* ॥*॥

लुङि सिजादिदर्शनान्न भविष्यति ॥

[ आक्षेपभाष्यम् ]

तत्र तर्हि सिजादयो न दृश्यन्ते-प्राभित्तेति ?।

[ समाधानभाष्यम् ]

दृश्यन्तेऽत्रापि सिजादयः ॥ किं वक्तव्यमेतत् ? ॥ न हि ॥ कथमनुच्यमानं गंस्यते ? ॥ यथैवायममुपदिशन् कारककालविशेषानवगच्छति एवमेतदप्यवगन्तुमर्हति-'यत्र सिजादयो ने'ति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायप्रथमपादे पञ्चममाह्निकम् ॥

---

( प्र० ) दृश्यन्तेऽत्रेति । सिजादी'त्यादिशब्दः प्रकारे । तत्र 'प्राभित्त घटं देवदत्त' इति प्रयोगे कर्त्रैकत्वाद्यवगमाल्लुङन्तस्यायं प्रयोगो, न निष्ठान्तस्येति प्रतिपद्यते । 'अञ्जिघृषिभ्यः क्त' इत्यस्य निष्ठासंज्ञा न भवति, उणादीनामव्युत्पन्नत्वाद्बाहुलकाद्वा ।

---

१ अन्ततः-तथापि । २ इतिः क्वचिन्न । ३ 'ऊर्ध्वं' । ४ क्वचिन्न । ५ इदं लुप्तं स्यात् । ६ 'सन्देहस्तस्य' । ६ अपिः क्वचिन्न । 'प्राकार्ष्ट' पा० ।

अन्यथा 'निष्ठा च द्व्यजना'दित्याद्युदात्तत्वं स्यात् ॥

इति भाष्यप्रदीपे प्रथमाध्याये प्रथमपादे पञ्चममाह्निकम् ॥

**(उ०)** सिचोऽत्र लुप्तत्वेनाऽदर्शनादाह-**आदिशब्द इति। अजिघृक्षतीति।** यद्यप्यत्रोपलक्ष्यकालकारकाद्यभावस्तथापि गुणाऽभावदर्शनात् कोऽयमित्यवगतिः। एवं च सनादिविधावित्संज्ञकनकारोपलक्षितः प्रकृत्यर्थानुवादी इच्छार्थो वा सकारो भवतीत्यर्थः। अनुवादे 'सन्यत'इत्यादौ तादृशनकारोपलक्षिते सकारे इत्यर्थः। अत एवाटश्चेत्यादेः सार्थक्यम्, अन्यथा यत्र सूत्रे आट्, न तत्र वृद्धिरिष्यते, यत्र चेष्यते प्रयोगे, न तत्राऽऽडिति तद्वैयर्थ्यं स्पष्टमेवेति सर्वमवदातम्॥ इति **श्रीनागोजीभट्टविरचिते** भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे पञ्चममाह्निकम्॥

---

## सर्वादीनि सर्वनामानि।१।१।२६॥

[ प्रश्नभाष्यम् ]

### सर्वादीनीति कोऽयं समासः ?॥

**( प्र० ) सर्वादीनि सर्व। कोयमिति। ननु** नपुंसकबहुवचननिर्देशादेव बहुव्रीहिनिश्चयात्समासान्तराशङ्कैव नास्तीति प्रश्नानुपपत्तिः। एवं तर्हि किमयं बहुव्रीहिरेवाऽहोस्विद्बहुव्रीहितत्पुरुषयोरेकशेषः, यथा 'कन्तन्तेभ्यः' 'कण्वादिभ्य' इतिचेति प्रश्नः। तत्र सारूप्यार्थं–सर्वश्चासावादिश्च सर्वादिरित्यत्रादिशब्द उपादीयते, न त्वस्य प्रयोजनान्तरमस्तीति तत्र नपुंसकमनपुंसकेनेति वा, 'स्वरभिन्नानां यस्योत्तरस्वरविधिः' इति वा बहुव्रीहेः शेषः।

**(उ०) सर्वादी। नन्विति।** आदिशब्दस्य नित्यपुंस्त्वेन, एकवचनान्तत्वेन च समासान्तरे नपुंसकत्वबहुत्वाऽनुपपत्तेरिति भावः। प्रकृते **तत्पुरुषः** कर्मधारयः। दृष्टान्ते षष्ठीतत्पुरुषः। **न त्वस्येति**। कर्मधारयघटकस्येत्यर्थः। बहुव्रीहेरेव शेषे युक्तिमाह–**तत्र नपुंसकमिति**। तत्पुरुषस्तु पुँल्लिङ्ग इति भावः। **स्वरभिन्नानामिति**। स्वरेण विलक्षणानां सरूपाणां मध्ये उत्तरसूत्रेण यस्य स्वरविधिरित्यर्थः। कर्मधारयः समासस्येत्यन्तोदात्तः। परस्तु–बहुव्रीहौ प्रकृत्येति परशास्त्रेणाऽन्तोदात्तपूर्वपद इति बोध्यम्। तत्राद्ये सर्वशब्दस्य संज्ञा न प्राप्नोति, अन्त्ये तु सिध्यतीति विशेषः॥

[ समाधानभाष्यम् ]

### 'बहुव्रीहि'रित्याह॥

**( प्र० )** वक्ष्यमाणेन न्यायेन विनाप्येकशेषेण सर्वशब्दस्य संज्ञा सिध्यतीति मत्वाह–**बहुव्रीहिरिति॥**

**( उ० ) वक्ष्यमाणेन**–तद्गुणसंविज्ञानेन॥

[ प्रश्नभाष्यम् ]

### कोऽस्य विग्रहः ?॥

**( प्र० )** एवमपि सन्देहः; किं प्राथमकल्पिको बहुव्रीहिरथ बहुव्रीहितत्पुरुषयोरेकशेषेण बहुव्रीहिरिति पृच्छति—**कोऽस्य विग्रह इति॥**

**(उ०) प्राथमकल्पिकः**–एकशेषनिरपेक्षत्वेन प्रथमप्रतीतः। वक्ष्यमाणन्यायानभिज्ञस्य प्रश्न इति भावः॥

[ समाधानभाष्यम् ]

### सर्वशब्द आदिर्येषां तानीमानीति॥

**(प्रदीपः) तानीमानीति**–अन्यपदार्थस्य प्राधान्यं प्रदर्श्यते। अन्यथा यथा चित्रा गावोऽस्येति गवां विशेष्यत्वं तद्वतश्च विशेषणत्वमवगम्यते, तथेहाऽप्यवगम्येत। अत्र चाऽर्थे बहुव्रीहिर्नेष्यते। यदा तु स्वामिनः प्राधान्यं, गवां विशेषणभावस्तदा (तु) बहुव्रीहिः। अत एव चित्रा गावो यस्य स चित्रगुरिति स्वामिनः प्राधान्यं प्रदर्श्यते। **तानीमानी**'ति सर्वनामद्वयोपादानेन प्रत्यक्षविषयत्वादिदंशब्दस्य गणपठितेषु सर्वशब्दस्याऽन्तर्भावात्तद्गुणसंविज्ञानं सूचयति। **तस्य**-अन्यपदार्थस्य **गुणाः** उपलक्षणानि तेषामपि कार्ये **संविज्ञानं**–तद्गुणसंविज्ञानम्। तत्र 'चित्रगुरानीयता'मिति स्वस्वामिभावसंबन्धः षष्ठ्यर्थ इति स्वविशेषोपलक्षितस्य स्वामिन एवानयनं न गवाम्। 'दण्डी विषाणी चानीयता'मित्यत्र तु संयोगसमवायलक्षणेन संबन्धेन संबन्धि-

---

१ **कोयमिति**। 'सर्वादीनीत्ययं कः समास' इत्यन्वयः। २ **एवं तर्हीति**। भाष्यस्थसमासपदमन्यथानुपपत्त्या समासविशेषपरमिति भावः। एवकारव्यवच्छेद्यस्तत्पुरुषः। **एकशेष इति**। एकस्य बहुव्रीहेः शेषः इत्यर्थः। ३ **तत्र**–तयोर्मध्ये। ४ सूत्रप्रत्याख्यान आह–**स्वरेति**। ५ **समासान्तरेति**। 'सर्वशब्देन सहे'ति शेषः। ६ **इत्यर्थः**–इत्याद्यर्थः। ७ **तत्रेति**। **आद्ये**–तयोर्मध्ये। शुद्धबहुव्रीहावित्यर्थः। **अन्त्ये**–बहुव्रीहितत्पुरुषयोरेकशेषे। ८ **अन्यथा**–तानीत्यस्यानुपादाने। ९ **अत्र चार्थे**–अस्मिंस्त्वर्थे। **यदा तु**–यदाहि। **गवां**–गवाच। १० **अत एव**—तत्रैव बहुव्रीहेरिष्टत्वादेव। ११ **तत्र**—तयोर्मध्ये।

नि कार्ये विज्ञायमान उपलक्षणस्याऽप्यन्तर्भावो भवति। इहाप्यादिशब्दस्याऽवयववाचित्वादुद्भूतावयवभेदसमुदायः समासाऽर्थः। तस्य च समुदायस्य युगपल्लक्ष्ये प्रयोगोऽभावात्तदन्तर्भूतानामेव पृथक्प्रयोगत्वात्कार्यार्थया संज्ञया प्रवर्तितव्यमिति सर्वशब्दस्याऽपि सा सिध्यति। यथा 'देवदत्तशालायां ब्राह्मणा आनीयन्ता'मित्युक्ते देवदत्तोऽपि यदि ब्राह्मणो भवति स्वशालास्थश्च तदा सोऽप्यानीयत एव।

( **उद्द्योतः**) विग्रह[1]प्रश्नोत्तरे 'तानी'त्याद्यधिककथनमयुक्तमत आह—**अन्यपदार्थस्येति** । **नेष्यत इति**। प्रथमान्तानामन्यपदार्थप्राधान्ये बहुव्रीहिविधानादिति भावः। नन्वेवमपि तानीत्येव सिद्धे इमानीति व्यर्थ[2]मत आह—**सर्वनामद्वयेति** । 'सर्वनामद्वयोपदानेन तद्गुणसंविज्ञानं सूचयती'त्यन्वयः। **प्रत्यक्षेति**। उद्भूतावयवभेदस्य गणपठितस्य समुदायस्येदमा परामर्शात्। तत्र च सर्वशब्दस्याऽन्तर्भावादिति भावः॥ गुणत्वं दर्शयति—**उपलक्षणानीति**। प्रकारतयाऽन्वयिनीत्यर्थः। **कार्ये संविज्ञानमिति**। तच्च[3] द्वेधा; क्वचिद्विशिष्टस्य क्रियायां संनिधानमात्रेण, यथा—क्रियायोगाभावेऽपि 'शुक्लवाससं भोजये'ति। क्वचित्तु विशेषणस्यापि क्रियायोगेन, यथा—'शुक्लवाससं पश्ये'ति। कार्यं यत्र तद्भावभावि तत्र तद्गुणत्व[4]मित्यर्थः फलितः। एवं[5] तद्गुणसंविज्ञाने तद्विशिष्टस्येतरान्वयः, अन्यत्र तदुपलक्षितस्येत्यपि भेदः। अयं शब्दशक्तिस्वभावगम्योऽन्तर्भावः—कार्यित्वं कार्यसंनिहितत्वं वा। एवंच[6] यत्र संयोगसमवायाऽन्यतरसम्बन्धेन संबध्यन्यपदार्थस्तत्र तद्गुणः। अन्यत्राऽतद्गुण इत्युत्सर्ग इति गोलार्थः। ननु प्रकृते न संयोगो नापि समवाय इत्यत आह—**इहापीति**। एवं च समवायेन संबन्धिनोऽन्यपदार्थत्वेन तद्गुणत्वमेवोचितमित्यर्थः॥ बहुवचनोपपत्तय आह—**उद्भूतावयवभेद इति**। अवयवगतसंख्यारोपेण बहुवचनमिति भावः। नन्वेवं समुदायस्यैव संज्ञा स्यादत आह—**तस्यचेति** । 'युगत्प्रयोगाऽभावात् पृथक्प्रयोगसत्त्वाच्च कार्यार्थया संज्ञया तदन्तर्भूतानामेव प्रवर्तितव्य'मित्यन्वयः। 'पृथक्प्रयोगत्वा'दिति पाठे बहुव्रीहेस्त्वो बोध्यः। **सिध्यतीति** । विनिगमनाविरहादिति भावः। नन्वेवं सर्वशब्दस्य संबन्धविशेष्यत्वाऽभावात्कथं तस्य सर्वनामत्वमत आह—**यथेति**। स्वरूपेणोपलक्षणमपि सर्वशब्दः समुदायान्तर्भूततया संबन्धविशेष्योऽपि। यथा देवदत्तत्वेन विशेषणमपि देवदत्तो ब्राह्मणत्वेन विशेष्य इति भावः। **अन्यपदार्थत्वादिति** भाष्यस्य—अन्य[7]ः पदार्थो यस्य तत्त्वादित्यर्थः॥

[ आक्षेपभाष्यम् ]

**यद्येवं सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति॥ किं कारण[8]म्?॥ अन्यपदार्थत्वाद्बहुव्रीहेः॥ बहुव्रीहिरयमन्यपदार्थे वर्तते, तेन यदन्यत्सर्वशब्दात्तस्य सर्वनामसंज्ञा प्राप्नोति। तद्यथा 'चित्रगुरानीयता'मित्युक्ते यस्य ता गावो भवन्ति स आनीयते, न[9] गावः॥**

[ समाधानभाष्यम् ]

**नैष[10] दोषः, भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि। तद्यथा—'चित्रवाससमानय' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'ति तद्गुण[11] आनीयते' तद्गुणा[12]श्च प्रचरन्ति।**

[ आक्षेपभाष्यम् ]

**इह[13] सर्वनामानीति 'पूर्वपदात्संज्ञायामगः' इति णत्वं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः॥**

(**प्रदीपः**) **णत्वं प्राप्नोतीति** । राजपुरुषादिवत्संज्ञाशब्दा अपि शास्त्रप्रक्रियायां सन्तमसन्तं वाऽवयवार्थमाश्रित्य व्युत्पाद्यन्त इति णत्वप्रसङ्गः। प्रयोगे च सणत्वा अणत्वाश्च नित्या एव शब्दाः। तत्र संज्ञायां सणत्वा एव साधवोऽसंज्ञायां त्वणत्वा एवेति शास्त्रव्यापाराण्णत्वं प्राप्नोत्येव। सर्वार्थाभिधानयोग्यस्य च शब्दस्य शक्तिनियममात्रं संज्ञाकरणमितिशब्दार्थसंबन्धनित्यत्वस्याऽपि न विरोधः॥

( **उ०** ) ननु 'सर्वनाम'शब्दो यदि व्युत्पन्न[14]स्तदा संज्ञोपसर्जनप्रतिषेधवार्त्तिकारम्भानुपपत्तिः। नो चेत्पू[15]र्वोत्तरपदविभागाऽभावात् पूर्वपदादिति णत्वाऽप्राप्तिरत आह—

---

१ **विग्रहेति**। अस्य नन्वित्यादिः। २ **व्यर्थ**—व्यर्थमेव। ३ **तच्चेति**। कार्ये संविज्ञानं चेत्यर्थः। ४ **तद्गुणत्वं**—तद्गुणसंविज्ञानत्वम्। ५ **एवमिति** । अवन्तरभेदवदित्यर्थः। **अन्यत्र**—अतद्गुणसंविज्ञाने। ६ **एवंचेति**। उक्तरीत्या तयोर्विविक्तविषयत्वे चेत्यर्थः। 'दण्डी भोज्यता' मित्यत्र व्यभिचारादाह—**उत्सर्ग इति**। **गोलार्थः**—प्रघट्टकार्थः। ७ अन्यत्पदम्—अन्यपदं, तस्यार्थोऽन्यपदार्थ इत्यर्थभ्रमं निराकरोति—**अन्यइति**। **पदार्थः**—विशेष्यभूतः। ८ **किङ्कारणमिति**। कस्मात्कारणादित्यर्थः। ९ **न गाव इति**। न ता गाव इत्यर्थः। १० **एषः**—सर्वशब्दस्य सर्वनामसञ्ज्ञानुपपत्तिरूपो दोषः। **हि**—यतः। **अपिना**—अतद्गुणसंविज्ञानमपि। ११ **तद्गुणः**—चित्रवस्त्रसहितो देवदत्तः। १२ लोहितशिरोवेष्टनवस्त्रधारिणः। १३ **इह** शङ्कायाम्। **सर्वेति**। सर्वनामानीत्यत्रेत्यर्थः। **इति**। इत्यनेन। **तस्य**—णत्वस्य। १४ यौगिकः। १५ रूढश्चेदित्यर्थः

राजेति । सन्तम्—अन्वर्थसंज्ञायाम् ॥ असन्तं—शुद्ध-रूढे रथन्तरादौ । आश्रित्येति द्वितीयविषये आरोप्येत्यर्थकम् । सामविशेषे रथकरणकतरणकर्तृत्वमारोप्य साधुत्वान्वाख्यानं यथा तथा सर्वार्थवाचकत्वरूपार्थमारोप्य तत्प्रकृतेऽपीति न वार्त्तिकानुपपत्तिः, नापि णत्वाऽप्राप्तिरिति भावः । ननु शब्दनित्यताविरोधात्कथमसतो णत्वस्याऽऽपादनमत आह–प्रयोगे चेति । ननु संज्ञा चेत्कृत्रिमा तदा शब्दार्थसंबन्धनित्यताहानिरसंज्ञा चेन्न णत्वप्राप्तिरत आह–सर्वार्थेति । शक्तिनियमनं–शक्तिसंबन्धबोधनमेवेत्याहुः । ननु 'भृञोऽसंज्ञाया'मिति सूत्रे भाष्ये 'यदेतत्संज्ञायां विधीयते तत्र न संज्ञायामभिधेयायामित्यर्थः, किं तर्हि, तत्तत्कार्यविशिष्टेन चेत्संज्ञा गम्यत इत्यर्थः' इति वक्ष्यते । ततश्चाऽत्र कथं णत्वप्राप्तिः ? । न हि कृतणत्वेन संज्ञाऽवगतिः । अत एव रघुनाथादिशब्दे न णत्वमिति वाच्यम् । आधुनिकविनियोगस्थले शास्त्रानुगतस्यैव विनियोग उचित इत्याशयात् । अत एव महत्याः संज्ञायाः करणे एतत्प्रयोजन'मिति वक्ष्यमाणं सङ्गच्छते ॥ अनादिविनियुक्तसंज्ञास्थले तु यथाविनियुक्तानामेव साधुत्वमिति रघुनाथादौ णत्वाभावः। अध्वपरिमाणसंज्ञाभूतगव्यूतिशब्दे च न वलोपः । संज्ञात्वभङ्गापत्तेरिति दिक् ॥

[ समाधानवार्तिकम् ]

*॥*।सर्वनामसंज्ञायां निपातनाण्णत्वाऽभावः।*॥*

सर्वनामसंज्ञायां[2] निपातनाण्णत्वं न भविष्यति ।

(प्रदीपः) निपातनादिति । लोकेऽप्ययं णत्वरहित एव प्रयुज्यते, तस्याऽत्र प्रसङ्गेन साधुत्वं प्रतिपाद्यते ॥

(उद्द्योतः) 'सौत्रत्वा'दित्येव कुतो नोक्तमत आह–लोक इति ॥

[ आक्षेपभाष्यम् ]

किमेतन्निपातं नाम ? ॥

(प्रदीपः) किमेतदिति । भवत्वस्य साधुत्वं, णत्वप्रतिषेधे त्वस्य तात्पर्याऽभावाद्विकल्पः प्राप्नोतीति भावः ॥

[ प्रतिबन्दीभाष्यम् ]

अथ कः प्रतिषेधो नाम ? ॥

(प्रदीपः) इतरः प्रतिषेधेन साम्यं प्रतिपादयितुं पर्यनुयुङ्क्ते—अथ क इति ॥

१ 'भाष्ये'इत्यस्य 'वक्ष्यते'इत्यनेनान्वयः । २ सर्वेति । सर्वनामेतिसञ्ज्ञायामित्यर्थः ।

[ प्रतिबन्द्युत्तरभाष्यम् ]

अविशेषेण किंचिदुक्त्वा विशेषेण 'ने'–त्युच्यते, तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते[3]–'इदं न भवती'ति ॥

[ समाधानभाष्यम् ]

निपातनमप्येवंजातीयकमेव । अविशेषेण णत्वमुक्त्वा विशेषेण निपातं क्रियते, तत्र व्यक्तमाचार्यस्याऽभिप्रायो[4] गम्यते—'इदं न भवती'ति ॥

(प्र०) सर्वत्रैव ह्यप्राप्त्यनुमानं बाधः । निपातनं चापि णत्वाऽप्राप्त्यनुमानमिति भावः ॥

(उ०) साम्यं दर्शयति—सर्वत्रैवेति ॥ निपातनं चेति । भावाऽभावयोरेकत्र विरोधादिति भावः ॥

[ आक्षेपभाष्यम् ]

ननु च—निपातनाच्चाऽणत्वं स्यात्, यथाप्राप्तं च णत्वम् ॥

(प्र०) ननु चेति । प्रतिषेधस्य हि निवृत्तावेव तात्पर्यं निपातनस्य तु तद्रूपसाधुत्वप्रतिपादने, न तु रूपान्तरनिवृत्ताविति भावः ॥

(उ०) नन्विति । प्रयोगभेदेन च भावाऽभावविरोधपरिहार इति भावः ॥

[ प्रतिबन्दीभाष्यम् ]

किमन्येऽप्येवं विधयो भवन्ति ? ॥

(उ०) भाष्ये–किमन्येऽपीति। अन्येऽपि विधयः किमेवम्–एवंजातीया इति वक्ष्यमाणाभिप्रायेण प्रश्नः ॥

[ प्रतिबन्द्युत्तरभाष्यम् ]

[ भवन्ति[5] ] ॥

(उ०) आशयानभिज्ञ उत्तरयति–भवन्तीति । यथा 'स्थानिवदादेश' इत्येतद्विषये स्थानिप्रयुक्तं भवति, यथाप्राप्तस्यादेशप्रत्युक्तस्य न निवृत्तिरिति भावः ।

[ शङ्काभाष्यम् ]

इह—'इको यणची'ति वचनाद्यण् स्यात् । यथाप्राप्तश्चेक् श्रूयेत[6] ॥

(प्र०) इकोयणचीति । यणो हि साधुत्वं प्रतिपाद्यते, न त्विग्निवृत्तिरित्यर्थः ॥

३ शब्दतः प्रतीयते इत्यर्थः । ४ गम्यते–अनुमीयते । ५ अयं पाठो लुप्तः स्यात् । ६ 'श्रयते' ।

(उ०) शङ्कते-इको यणिति । अस्य 'यदि भवन्ती' त्यादिः ॥

[ समाधानभाष्यम् ]

**नैष दोषः । अस्त्यत्र विशेषः । षष्ठ्याऽत्र निर्देशः क्रियते, षष्ठी च पुनः स्थानिनं निवर्तयति ॥**

(प्र०) षष्ठ्याऽत्रेति । ततश्च संहिताविषये स्वाभाविकोऽपयोग इकः षष्ठीनिर्देशेन प्रतिपाद्यते । यथा 'दर्भाणां स्थाने शरैः प्रस्तरितव्य'मिति, न तत्र दर्भाः प्रस्तीर्यन्ते ॥

(उ०) ततश्च संहितेति । स्थानिनो निवृत्तिर्नाम तत्साधुत्वबुद्धेर्निवृत्तिः । सा च संहितायां शाकलाऽभावे इति भावः । प्रस्तीर्यन्त इति । 'किंतु तत्प्रसङ्गे शराः प्रस्तीर्यन्ते' इति शेषः । तथा च स्थानषष्ठीनिर्देशे उभयत्रापि तात्पर्यमिति भावः ॥

[ शङ्काभाष्यम् ]

**इह तर्हि 'कर्तरि शप्' 'दिवादिभ्यः श्यन्नि'ति । वचनाच्च श्यन् स्यात् । यथाप्राप्तश्च शप् श्रूयेत ॥**

(प्र०) इह तर्हीति । विकल्पः प्राप्नोतीति भावः । समुच्चयस्तु न भवति, एकेन परदेशस्याऽवष्टब्धत्वाद्धातुसार्वधातुकयोश्चाऽर्थाभिधाने एकेनैव साहायकस्य संपादनात् ॥

(उ०) विकल्प इति । स्थानषष्ठ्यभावेनोभयत्र तात्पर्याऽभावादिति भावः । परदेशस्येति । विकरणविधौ 'धातोः' 'परश्चे'त्यधिकारेण धातोः परो विकरणः प्रयोक्तव्य इत्यर्थादिति भावः । ननु धातोः परो विधातव्य इत्यर्थे पूर्वं श्यनि विहिते पश्चाच्छबपि स्यात्, तिङ्विकरणवत् ,-'सार्वधातुके' इति च विषयसप्तमी स्यादत आह-धात्विति । साहायकं-सहायकार्यम् ॥

[ समाधानभाष्यम् ]

**नैष दोषः । शबादेशाः श्यन्नादयः करिष्यन्ते ॥**

(प्र०) शबादेशा इति । श्यनश्च शित्करणं ज्ञापकं-स्थानिवद्भावाऽभावस्य । तेन करोतीत्युप्रत्ययस्याऽपित्त्वादनुदात्तत्वं न भवति, 'कुर्वती'त्यत्र 'शप्श्यनोर्नित्य'मिति नुमागमोऽपि न भवति, आदित्यधिकाराद्वा । 'रुधादिभ्यः श्न' मित्यत्र रुधादीनां श्रुतत्वात्तेषामेवाऽन्त्यादचः परः श्नम्भवति न तु शपः परः । यथा च 'भ्रस्जो रोपधयोरमन्यतरस्या'मितिरमागमो रोपधयोर्निवर्तकः, एवं शपः श्नम् ॥

(उ०) ननु श्यन्नादीनामादेशत्वे स्थानिवद्भावात्पित्त्वे करोतीत्यादौ विकरणस्याऽनुदात्तत्वं स्यात् । न च सतिशिष्टस्वरबलीयस्त्वस्य विकरणाऽन्यविषयत्वेनोप्रत्ययस्य कथमुदात्तत्वं सिद्धान्तेऽपीति वाच्यं, सार्वधातुकस्वरापेक्षयैव विकरणस्वरस्य तेन दुर्बलत्वकथनादत आह-श्यनश्च शित्करणमिति । न च शित्त्वं नियमार्थं स्यात्-'शिदेव न पि'-दिति । शित्त्वस्य नियमार्थत्वकल्पनापेक्षयाऽतिदेशबाधस्यैवौचित्यात् । अतिदेशबाधश्च तवाऽप्यावश्यक एव । क्वचित्तु 'नित्करण'मिति पाठः । तद्धि प्रत्ययाद्युदात्तत्वबाधेन ञ्नितीत्यनेन निदन्तस्याद्युदात्तत्वाय । स्थानिवत्त्वात्पित्त्वेनाऽनुदात्तत्वे तु लसार्वधातुकस्यापि अदुपदेशादित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति तदर्थं सत्तज्ज्ञापकमिति भावः । परंत्वयं पाठः स्थानिवत्सूत्रस्थकैयटविरुद्धः । आदित्यधिकाराद्वेति । 'तुदती'त्यादौ ि त्यनुम्व्यावृत्तये पूर्वोक्तसमाधिरेवावश्यकः । 'शप्श्यनो' रिति सूत्रस्थं श्यन्ग्रहणमप्युक्तार्थे ज्ञापकमिति बोध्यम् । नन्वेवं शपः परः श्नम् स्यादत आह-रुधादिभ्य इति । 'सार्वधातुके' इति सप्तम्या' रुधादिभ्य' इति पञ्चम्याः षष्ठीकल्पनात्तेषामेवाऽन्त्यादचः परः श्नमिति भावः । 'तृणह' इति निर्देशश्च रुधादीनामागमित्वे लिङ्गम् । नन्वेवं शपः श्रवणं स्यादत आह-यथाचेति । 'शप' इत्यस्य षष्ठीकल्पनसामर्थ्यादिति भावः ॥

[ प्रश्नभाष्यम् ]

**तत्तर्हि शपो ग्रहणं कर्तव्यम् ? ॥**

[ उत्तरभाष्यम् ]

**न कर्तव्यम् । प्रकृतमनुवर्तते ॥**

---

१ अस्तीति । 'यत' इत्यादिः । २ षष्ठी च पुनः-षष्ठी तु । ३ चो वाक्यालङ्कारे । ४ 'निवर्त्तयति' । ५ 'प्राप्तं च' पा० । ६ धातोरित्यस्य परश्चेत्यस्य चाधिकारेणेत्यर्थः । ७'शबादेशा'इत्यस्य 'यत'इत्यादिः । ८ श्यनश्च-श्यनोर्हि । ९ 'नित्करण' पा० । १० अपिः कचिन्न । ११ सार्वेति । न तु धात्वादिस्वरापेक्षयेत्याशयः । १२ शित्त्वेनातिदेशबाधस्यैवौचित्यादित्यर्थः । १३ अत्र चः किमेत्यर्थकः । तव-शित्त्वं नियमार्थमिति वादिनस्तव । अन्यथा श्यनः शित्त्वं व्यर्थमेव । कश्चिदनुबन्धकार्येऽप्यनल्विधावितिनिषेधप्रवृत्त्यैवाऽपित्त्वस्य सिद्धत्वात् ।

१४ विरुद्ध इति । तत्रहि-'ताच्छील्यादिविषये चानश्चि श्नयो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यात्'। इति कैयटे नोक्तम् । १५ समाधिः । अतिदेशबाधरूपः समाधिः । १६ सूत्रस्थश्यन् । १७ उक्तार्थे-अतिदेशबाधे

क्व प्रकृतम् ?॥ कर्तरि शबिति ॥

[ शङ्काभाष्यम् ]

तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहाऽर्थः॥

[ उत्तरभाष्यम् ]

'दिवादिभ्य' इत्येषा पञ्चमी 'श'बिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्ये'ति ॥

[ शङ्काभाष्यम ]

प्रत्ययविधिरयं, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ॥

[ उत्तरभाष्यम् ]

नाऽयं प्रत्ययविधिः, विहितः प्रत्ययः। प्रकृतश्चानुवर्तते ॥

(उ०) भाष्ये-विहितः प्रत्यय इति। शब्रूपः प्रत्यय इत्यर्थः ॥

[ दोषदर्शिभाष्यम् ]

इह तर्हि-'अव्ययसर्वनाम्नामकच् प्राक् टे'रितिवचनाच्चाऽकच्स्याद्यथाप्राप्तश्च कः श्रूयेत ॥

(प्र०) इह तर्हीति। देशभेदाद्विरोधाऽभावेऽपि काऽकचोरेकार्थत्वाद्विकल्प एव चोद्यते, न तु समुच्चयः ॥

(उ०) एकार्थत्वादिति। अज्ञातादेरकेन[2] द्योतितत्वान्न द्वयोः समुच्चय इति भावः ॥

[ दोषनिरासभाष्यम् ]

नैष दोषः, नाऽप्राप्ते हि केऽकजारभ्यते स बाधको भविष्यति ॥

[ सिद्धान्तिनस्तेनैव न्यायेन समाधानभाष्यम् ]

निपातनमप्येवंजातीयकमेव। नाप्राप्ते[3] णत्वे निपातनमारभ्यते तद्बाधकं भविष्यति ॥

(उ०) येन नाप्राप्तिन्यायेनाऽकजादीनां बाधकत्वे परेणोक्ते सिद्धान्ती तेनैव न्यायेन निपातनानामपि बाधकत्वमेवेत्याह-निपातनमपीति ॥

[ आक्षेपभाष्यम् ]

यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति, समस्तते दोषो भवति। इहा[3]न्ये वैयाकरणाः समस्तते[4] विभाषा[म] लोपमारभन्ते-'समो हिततततयोर्वे'ति। सततं, संततं, सहितं, संहितमिति॥ इह[5] पुनर्भवान्निपातनाच्च म्लोपमिच्छति[6]-'अपरस्पराः क्रियासातत्ये'इति, यथाप्राप्तं चाऽलोपं-संततमिति। एतन्न सिध्यति ॥

(उ०) भाष्ये-एतदिति। सततं सन्ततमित्युभयमित्यर्थः ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

कर्तव्योऽत्र यत्नः। बाधकान्येव हि निपातनानि भवन्ति ॥

(प्र०) कर्तव्योऽत्र यत्न इति। लुम्पेदवश्यमः इत्ययं श्लोकोऽन्यार्थमवश्यं पठितव्यः। तेनैव सततं सन्ततमिति च सिध्यति, न तु निपातनेनेत्यर्थः। सान्तत्यमिति चाऽनभिधानात् ष्यञन्तस्य प्रयोगाऽभावः। 'पुराण'शब्देन पुरातनशब्दस्य बाधः प्राप्तः पृषोदरादित्वान्न भवति ॥

(उ०) श्लोकोऽन्यार्थमवश्यमिति। एकदेशानुमतिद्वारा 'सातत्य' इति निर्देशेन स एव श्लोको ज्ञाप्यते इत्यर्थः। नन्विति। निपातनेन 'सतत'मिति न साध्यत इत्यर्थः। नन्वेवं सन्ततात्ष्यञि सान्तत्यमित्यपि स्यादत इति चानभिधानादिति। अत[9] एव भगवता 'सन्ततमिति न सिध्यति' इत्येवोक्तं न तु सूत्रोच्चारितसजातीयं सान्तत्यमिति न सिध्यतीत्युक्तम्। पुराणशब्देनेति। 'पुराणप्रोक्तेष्वि'त्यत्र निपातितेनेत्यर्थः। पृषोदरादित्वादिति। [10]एवं च तेनैवोभयोरपि साधुत्वं, न तु निपातनेनेति भावः।

[ आक्षेपवार्तिकम् ]

॥*॥ संज्ञोपसर्जनप्रतिषेधः ॥*॥

संज्ञोपसर्जनीभूतानां सर्वादीनां प्रतिषेधो वक्तव्यः। सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिसर्वाय देहि ॥

---

१ 'निर्देशेन'पा। २ अकेन-अकचा। 'रेकेन' पा० ३ इह-शङ्कायाम्। ४ तते-ततशब्दे परतः। ५ इह पुनः-पाणिनीयेतु। ६ 'नाल्लोप'। 'नाच्च लोप'। ७ लुम्पेदवश्यमः कृत्ये तुम् काममनसोरपि। समो वा हिततततयोर्मांसस्य पचि युड्घञोः ॥" इति श्लोकः। ८ इति च-इतितु। ९ अतएव-तदनभिधानादेव। १० एवञ्च-पृषोदरादित्वस्यावश्यकत्वे च। उभयोः-पुराणपुरातनशब्दयोः। ११ 'पुराणशब्दस्ये'ति शेषः।

(प्र॰) **संज्ञोपसर्जनीभूतानामिति** । ये विषया[1]न्तरे दृष्टास्त एवेमामवस्थां प्राप्ता इति विवक्षया च्विप्रत्ययनिर्देशः । **सर्वाय देहीति** । पदकार्येषु गौणमुख्यन्यायो न तु प्रातिपदिककार्येष्विति 'शब्दाश्रये च वृद्धयात्वे'इत्यत्रोक्तमिति प्रसिद्ध्यप्रसिद्धिवशात्संभवन्नपीह स नोक्तः। समासकृत्तद्धिताव्ययसर्वनामाऽसर्वलिङ्गा जातिरेकद्रव्योपनिवेशिनी संज्ञेत्येतदनपेक्ष्य संज्ञाप्रतिषेधः । तत्र ह्यपेक्षिते परया पूर्वा संज्ञा बाध्यत इति संज्ञासंज्ञया सर्वनामसंज्ञाया बाधनात्प्रसङ्गाऽभावः । **अतिसर्वायेति** । प्रादिसमासोऽयं, बहुव्रीहौ संज्ञाप्रतिषेधात् । 'प्रयोजनं सर्वनामाव्ययसंज्ञाया'मिति तदन्तविधिः 'परमसर्वस्मै' इत्याद्यर्थ आश्रितः ॥

(उ॰) **च्विप्रत्ययेति** । गणपठितेभ्यः संज्ञोपसर्जनानां भेदात्संज्ञाया अप्राप्तौ प्रतिषेधानर्थक्यमिति शङ्काव्युदासाय भाष्ये च्विरूपात्त इति भावः । तत्तत्पदत्वारोपवत्[2] तदर्थे[3] उपसर्जनत्वमप्यारोपितमिति च्वेरुपपत्तिरिति तात्पर्यम् । **पदकार्येष्विति** । न च संज्ञा[4] तथेति भावः । इदमेव वार्तिकं तस्य न्यायस्य पदकार्यविषयत्वे लिङ्गमिति तात्पर्यम् । अत एवाऽभिव्यक्तपदार्था ये इति न्यायस्याऽप्यत्राऽप्रवृत्तिरिति बोध्यम् । अत्र न गुणयोगेन लाक्षणिकत्वरूपं गौणत्वमत आह—**प्रसिद्धीति**[5] । तन्मूलं प्रसिद्धत्वादिकमत्रापि तुल्यमित्यर्थः । **समासेति** । अनेन क्रमेणैताः संज्ञा एकसंज्ञाधिकारे कार्या इति वक्ष्यत्याकडारसूत्रे, तदनपेक्ष्याऽयं संज्ञाप्रतिषेध इत्यर्थः । **एकद्रव्योपनिवेशिनीति** लौकिकसंज्ञालक्षणम् । एतेन सर्वनामादिसंज्ञास्वनेकविषयास्विदमव्याप्तमिति परास्तम् । नन्वतिसर्वस्य गणे पाठाऽभावात्संज्ञासूत्रे विशेष्याऽसन्निधानेन तदन्तविधेरभावाच्च कथमत्र प्राप्तिरत आह-**प्रयोजनमिति** । शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः । एतत्तदन्तविधिफलत्वेन 'परमस' इत्यस्योपन्यासः क्वचिद्दृश्यते स चिन्त्यः, 'त्यदादीनाम' इत्यादावङ्गविशेषणत्वमूलकतदन्तविधिना सिद्धत्वात् । स्मैभावे तु 'विहितविशेषण'[6]मिति बोध्यम् ॥

[ आक्षेपभाष्यम् ]

**स[7] कथं कर्तव्यः ?** ॥

[ समाधानवार्तिकम् ]

*॥*॥ पाठात्[9]पर्युदासः, पठितानां संज्ञाकरणम् ॥*॥*

**पाठादेव पर्युदासः कर्तव्यः । शुद्धानां पठितानां संज्ञा कर्तव्या 'सर्वादीनि सर्वनामसंज्ञानि भवन्ति, संज्ञोपसर्जनीभूतानि न सर्वादीनि'** ॥

(प्र॰) **पाठादिति** । यथा 'तिङो गोत्रादीनी'त्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादिपाठविशेषणं तथेहापि सर्वादिसन्निवेशो विशेष्यते—'असंज्ञोपसर्जनीभूतानि गणसन्निविष्टानि, नान्यानी'त्यर्थः ॥

(उ॰) **यथेति** । यथा तत्सूत्रं निघातविधायकं वाक्यभेदेन पाठविशेषणं च, तथेहापीत्यर्थः ॥

[ आक्षेपभाष्यम् ]

**किमविशेषेण ?** ॥

(प्र॰) **किमविशेषेणेति** । किं यत् सर्वेषां सर्वादीनां सर्वनामकार्यं तदर्थमेवेति प्रश्नः ॥

(उ॰) यदि–**'अविशेषेणे'**त्यस्य सर्वकार्यार्थमित्यर्थस्तर्हि**'नेत्याह विशेषेण चे'**त्युत्तरग्रन्थाऽसङ्गतिरत आह–**किं यत्सर्वेषामिति** । यद्यपि स्मायाद्यपि न सर्वेषां कार्यम्, उभभवदादावसंभवात्, तथाप्यन्तर्गणानाश्रयणेन विधीयमानं कार्यमिति तदर्थो बोध्यः ॥

[ समाधानभाष्यम् ]

**'ने'त्याह । विशेषेण च ॥**

(प्र॰) **विशेषेण चेति** । 'च'शब्दादविशेषेणेत्यर्थः । यद्गणपाठोपलक्षितं विशिष्टं कार्यं 'त्यदादीनामः' 'अद्ड्डतरादिभ्य' इत्यादि, तदर्थमपि पाठविशेषणमित्यर्थः । यत्तु कार्यं 'युष्मदस्मद्भ्यां ङसोऽ'शित्यादि स्वरूपमात्राश्रयं न सन्निवेशापेक्षं, तदविशेषेण भवति । तत्र हि न गणपठितयोर्युष्मदस्मदोर्निर्देशोऽपि त्वौणादिकयोः ॥

(उ॰) **न संनिवेशेति**। न सामान्यविशेषसंनिवेशा-

॥ राजलक्ष्मीः ॥

१ 'येतु विषया'। २ गणस्थेषु संज्ञाशब्दत्वोपसर्जनशब्दत्वारोपवदित्यर्थः । ३ **तदर्थे**–गणपठितार्थे । ४ **सञ्ज्ञा**–सर्वनामसञ्ज्ञा । सा पदकार्यं नेत्याशयः। ५ 'प्रसिद्धयेति पा॰। ६ 'सर्वनाम्न' इति विहितविशेषणमित्यर्थः । ७ **सः**–प्रतिषेधः। ८ 'वक्तव्य' इति पाठान्तरम्। ९ पठ्यतेऽस्मिन्नसौ **पाठः**–सर्वादिगणः । **'पठितानां'**मित्यस्य **'यत'** इत्यादिः। १२ **तदर्थः**–कैयटार्थः। ११ **विशेषेति**। एतदुभयसंनिवेशेत्यर्थः । **न गणेति**। सामान्यविशेषगणेत्यर्थः ॥

पेक्षमित्यर्थः । **अविशेषेणेति** । संज्ञोपसर्जनयोरपीत्यर्थः । **न गणेति** । न गणपठितत्वाकारेणेत्यर्थः ॥

[ वार्त्तिकावतरणभाष्यम् ]

**किं प्रयोजनम् ? ॥**

[ प्रयोजनवार्तिकम् ]

*॥*॥ सर्वाद्यानन्तर्यकार्यार्थम् ॥*॥*

**सर्वादीनामानन्तर्येण यदुच्यते कार्यं तदपि संज्ञोपसर्जनीभूतानां मा भूदिति ॥**

(उ०) भाष्ये–**सर्वादीनाम्**–तदन्तर्भूतानां त्यदादिप्रभृतीनाम् । **आनन्तर्येण** । आनन्तर्योपलक्षिततत्यदादीनामित्यादिरूपेणेत्यर्थः ॥

[ प्रश्नभाष्यम् ]

**किं प्रयोजनम् ? ॥**

(उ०) **किं प्रयोजनमिति** । क्व प्रयोजनमित्यर्थः ॥

[ प्रयोजनवार्तिकम् ]

*॥*॥ प्रयोजनं डतरादीनामद्ड्भावे[२] ॥*॥*

**डतरादीनामद्ड्भावे प्रयोजनम् । अतिक्रान्तमिदं ब्राह्मणकुलं कतरत्–अतिकतरं ब्राह्मणकुलमिति ॥**

[ प्रयोजनवार्तिकम् ]

*॥ * ॥ त्यदादिविधौ च ॥ * ॥*

**त्यदादिविधौ च प्रयोजनम् । अतिक्रान्तोऽयं ब्राह्मणस्तम्–अतितद्ब्राह्मण इति ॥**

[ संज्ञाप्रतिषेधप्रत्याख्यानभाष्यम् ]

**संज्ञाप्रतिषेधस्तावन्न वक्तव्यः । उपरिष्टाद्योगविभागः करिष्यते–'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम्' । ततः–'असंज्ञायाम्' इति । 'सर्वादीनीत्येवं यान्यनुक्रान्तान्यसंज्ञायां तानि द्रष्टव्यानि ।'**

( उ० ) 'असंज्ञाया'मिति योगविभागो गणसूत्रे, नाऽष्टाध्यायीस्थे, तस्य जसि विभाषाविधायकत्वादिति बोध्यम् । 'स्वमज्ञाता' त्यादावपीदमनुवर्त्तत इति न दोषः । **सर्वादीनीत्येवं यानीति** । **सर्वादीनि**–शब्दरूपाणि **इत्येवं** सर्वविश्वेत्यादिक्रमेण **यानि** पञ्चत्रिंशदनुक्रान्तानि तानीत्यर्थः ॥

[ उपसर्जनप्रतिषेधप्रत्याख्यानभाष्यम् ]

**उपसर्जनप्रतिषेधश्च[४] न कर्तव्यः । अनुपसर्जना'दित्येष योगः प्रत्याख्यायते तमेवमभिसंभंन्त्स्यामः[५]–'अनुपसर्जन-अ-अदिति । किमिदम्–अ अदिति ?॥ अकाराऽत्कारौशिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ ॥**

(प्र०) **अनुपसर्जनादिति** । ननु प्रधानेन तदन्तविध्यर्थो योग आरब्धव्यः[६], कौम्भकारेय इति यथा स्यादिति, न चाऽणिति कृद्ग्रहणम्, तद्धितोऽप्यणस्तीति । नैतदस्ति, 'स्त्रीप्रत्यये चानुपसर्जनेने'ति तदादिनियमाऽभावात्कारशब्दादपि ङीपि कुम्भकारीशब्दात्स्त्रीभ्यो ढगिति ढग्भविष्यति । **अनुपसर्जन अ अदिति** । सुपां सुलुगिति षष्ठ्या लुक् ॥

(उ०) **प्रत्याख्यायते इति** । स्त्रीप्रत्ययप्रकरणस्थमपि सूत्रं तत्रानुपयुज्यमानं कार्यान्तरार्थं परिभाषारूपं ज्ञातव्यमिति भावः । **नन्विति** । अन्यथा[७] समासप्रत्ययविधौ तदन्तविधिप्रतिषेधाद् गृह्यमाणादेव प्रातिपदिकात्स्यात् । प्रत्ययग्रहणे च प्रत्ययग्रहणपरिभाषया प्रत्ययान्तादेव स्यान्न तु तदन्तादिति भावः । अनेन चोत्तरत्र तदन्तविधौ ज्ञापिते उपसर्जने निषेधात् प्रधान एव स फलवानिति 'प्रधानेने' त्युक्तम् । **कौम्भकारेय इति** । अणन्तत्वेन कारशब्दादेव ङीपि कारीशब्दस्यैव स्त्रीप्रत्ययान्ततया तत एव स्त्रीभ्यो ढकि[८] तस्यैव ढक्यङ्गत्वाद्वृद्धिः स्यान्न कुम्भस्येति भावः । तदन्तविधौ तु समुदायान्ङीपि तत एव ढकि समुदायस्याऽऽङ्गत्वात्कुम्भशब्दे वृद्धिः सिध्यति । ननु कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्तदन्तविध्यभावेऽपि कौम्भकारेयः सिद्धोऽत आह–**नचेति** । कृत एव ग्रहणे सा[९], न तु कृदकृद्ग्रहण इति भावः । **नैतदस्तीति** । न च कदाचित्कारीशब्दादपि स्यात् । कुम्भेनैकार्थीभूतस्य निष्कृष्याऽपत्येनाऽन्वयाऽभावात् । नन्वेवं 'कुम्भकारी'त्यत्र ङीबेव न स्यात् कुम्भेनैकार्थीभूताऽणन्तस्य केवलस्य स्त्रीत्वेनाऽयोगात् । अत एव सूत्रारम्भे न कदाचिदपि कारशब्दान्ङीप् । यस्य च विशिष्टस्य स्त्रीत्वेन योगो, न तदणन्तमिति चेन्न, अमहत्पूर्वग्रहणेन तदन्तग्रहणज्ञापनात् । नचैवं 'बहुकुरुचरे' स्यादावतिप्रसङ्गवारणायाऽयं निषेधोऽपि सार्थक इति वाच्यं, टिड्ढाणञित्यादौ उपात्तस्य टिदादेरेव स्त्रीत्वेन विशेषणेनाऽदोषात् । पूर्वत्रोपात्तं तदन्तं च स्त्रीत्वेन विशेष्यते, उत्तरत्र चोपात्तमेवेत्यत्र व्याख्यानमेव शरणमिति वदन्ति । परे तु–'प्रत्याख्यायते' इत्यस्य 'वार्तिककृते'ति शेषः । '**अनुपसर्जनग्रहणम**-

१'णेति शेषः'। २'मद्भावे'। ३'क्रान्तानीत्यर्थः'। ४'चोप्यर्थे'। ५तमेवमिति। तं योगमेवं वक्ष्यमाणप्रकारेण संभत्स्यामः–व्याख्यास्याम इत्यर्थः। ६ 'प्रारब्धव्यः'। ७ **अन्यथा** तत्सूत्राऽभावे। ८ स्त्रीभ्योढगितिढकीत्यर्थः। ९ **सा**–कृद्ग्रहणपरिभाषा।

**नर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधा'**दिति हि तत्र वार्तिकम्। तद्रीत्याऽस्य[१]ैवचनस्य तेन सिद्धिरित्याशयः। 'अनुपसर्जनादिति किमर्थम्। बहुकुरुचरा। तदन्तविधिना प्राप्नोति। अत उत्तरं पठति–अनुपसर्जनग्रहणमनर्थक'मिति तत्र भाष्यकृदवतारणेनाऽत्रत्यभाष्येण च तस्य वार्तिककृत्सिद्धान्तत्वप्रतीतेः। यत्तु तदुत्तरं[२] वचनद्वयं–'ज्ञापकं तु पूर्वत्र तदन्ताऽप्रतिषेधस्य,अतिधीवरी। 'पूर्वसूत्रनिर्देशोवा आपिशला ब्राह्मणीति, तत्त्वाचार्यदेशीयस्य। त[३]त्राद्यस्य पूर्वत्र तदन्ताऽप्रतिषेधेऽपि उत्तरत्र तदन्तविध्यभावेन बहुकुरुचरादावप्राप्त्याऽस्य सार्थक्यानुपपादनात्तदुक्तित्व[४]म्। अन्त्यं तु स्त्रियामित्यस्याऽण्विशेषणत्वात् 'स्त्रियां योऽण्विहित' इत्यादिना भाष्य एव दूषितम्। तेनाऽऽद्यस्यै[५]व वार्तिककृत्सिद्धान्तत्वं बोधितम्॥ 'इदं तर्हि प्रयोजनम्। प्रधानेन तदन्तविध्यर्थ'मिति तु तत्र भाष्यकृता स्वयं सूत्रप्रयोजनमुक्तमिति न विरोधः। अयं हि तत्र भाष्याशयः––अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावेऽपि कदाचित् कारीशब्दादपि स्या[६]दिति पक्षे 'कुम्भकारेय' इत्यस्यापत्तिः। यदुक्तं 'कु[७]म्भेने'त्यादि, तत्तुच्छम्। निष्कृष्याऽपत्येनैकार्थीभावाऽभावेऽपि समुदायेनैकार्थीभावेऽवयवेनाऽपि तस्यैव सत्त्वात्सामर्थ्याऽक्षतेः। विशिष्टसंबन्ध्यपत्ये विशेष्यसंबन्धस्याऽव्याहतेश्च। अनभिधानेन प्रत्याख्यानं तु न चमत्का[८]रि। अ[९]त एव परमगार्ग्यस्यापत्यमित्यर्थे तदेकदेशगार्ग्यशब्दात्प्रत्यये परमगार्ग्या[१०]यण इति येनविधिरिति सूत्रे भाष्ये उदाहृतमिति तत्रैव निरूपयिष्यामः। न च तदन्तविधावपि व्यपदेशिवद्भावेन केवलादपि ङीब्दुर्वारः। अनुपसर्जनादित्येतत्सामर्थ्येन व्यपदेशिवद्भावाऽप्रवृत्तेः, मुख्यव्यपदेशिनोऽभावे एव तदतिदेशप्रवृत्तेश्च। न च स्त्रीप्रत्ययेषु तदादिनियमाऽभावेन कारीशब्दस्यापि स्त्रीप्रत्ययान्तत्वाऽनपायात्तस्मादपि कदादिढ्[१२]क् स्यादेवेति वाच्यं, यतः प्रत्ययग्रहण इति नियमेनाऽधिकस्यैव व्यावृत्तिर्न न्यूनस्य। अस्या[१०]पत्यमिः एरपत्यमित्यर्थे यञिञोश्चेति फकोऽनापत्तेः। ए[११]वं च तन्निषेधेनाऽनेन तस्यैव संग्रहो नत्वतद्व्यावर्त्यस्य न्यूनस्य। अयमधिकारोऽप्यत्रार्थे ज्ञापक इत्याहुः। एकपदत्वे तूद्देश्यविधेय[१३]भावाऽनुपपत्तेराह––**सुपामिति॥**

[ आक्षेपभाष्यम् ]

**यद्येवम्-अतियुष्मदत्यस्मदिति न सिध्यति।**

[ समाधानभाष्यम् ]

**प्रश्लिष्टनिर्देशोऽयम्–'अनुपसर्जन अअ'-दिति। अकारान्ता[१३]दकाराऽत्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ॥**

**(प्र०) अ अ अदिति।** अकारेणाऽकारात्कारौ विशेष्येते। अकारात्परौ यावकाराऽत्कारौ तावनुपसर्जनस्येत्यर्थः। 'पञ्चम्या अ'दित्ययं तु युष्मदस्मद्भ्यामनकारान्ताभ्यां विधीयत इति परिभाषाऽनुपस्थानादुपसर्जनाभ्यामपि भवति। 'त्यदादीनाम' इत्ययमकारात्परस्य हलः स्थाने विधीयत इति अकारान्तात्परोऽकारो भवतीति परिभाषोपस्थानादतितदित्यत्र न भवति। एवं तु प्रियौ द्वावस्येति बहुव्रीहौ कृतेऽकारान्तादविधानात्परिभाषानुपस्थानादत्वं प्राप्नोति। 'तदोः सः सा'विति च सत्वमविशेषितमित्युपसर्जनस्यापि प्राप्नोति। तत्रायं स[१४]माधिः·'त्यदादीनाम इत्यत्र त्यदादिषु परिभाषोपस्थानादनुपसर्जनानां तेषां ग्रहणं तत्साहचर्याद्द्विशब्दोऽपि तथाविध एव गृह्यते। सत्वविधौ च तथाविधानामेवाऽनुवृत्तिरित्यत्रापि न दोषः। अतिसर्वायेत्यादौ त्वविशेषकार्यमपरिहृतमेव॥

(उ०) अ–अदित्यत्र 'अ' इति लुप्तपञ्चम्यन्तं तदाह–**अकारादिति।** 'अकार[१]न्ता[५]'दिति भाष्येऽन्तग्रहणं तु फलितार्थपरं यथाकथंचिन्न त्वत्र तदन्तविधिरिति भ्रमितव्यम्। विशेष्याऽसंनिधानात्। प्रायेण भाष्येऽपि 'अकारादकारात्कारा'वित्येव पाठः। शेषे ऊोपस्याऽन्त्यलोपत्वपक्षे विधानोत्तरमकारात्परत्वसंभवादाह––**विधीयत इति।** तदुक्तं भाष्ये–**शिष्यमाणाविति। अपरिहृतमेवेति।** एवं चैते[१६]दपरितोषाद्भाष्ये पक्षान्तरमिति भाव इति केचित्।

परे तु [१७]इदं समाधानं सर्वाद्यानन्तर्यकार्यार्थं प्रतिषेधो

---

१ **अस्य**–प्रकृतार्थस्य। **तेन**–सूत्रेण। २ **तदुत्तरम्**–'अनुपसर्जनग्रहणमनर्थक'मिति। ३ **तत्र**–तयोर्मध्ये। **तदन्ताऽप्रतिषेधेऽपि**–तदन्ताऽप्रतिषेधे ज्ञापितेऽपि। ४ **तदुक्तित्वम्**–आचार्यदेशीयोक्तित्वम्। **दूषितमिति।** तत एव तस्य तत्त्वमिति भावः। **तेन**–तेनापि। ५ **आद्यस्य**–'अनुपसर्जनग्रहणमनर्थक'मिति वार्तिकस्य। **तदन्तविध्यर्थ**मिति। **'विधिर्यथा स्या**दिति तु भाष्ये पाठः॥ ६ **स्यादिति।** ढगिति शेषः। ७ 'कुम्भेनैकार्थीभूतस्याणन्तस्ये त्यादि पूर्वत्रोक्तम्। ८ 'चमत्कारकारि'। ९ **अतएव** उक्तार्थद्वयसत्त्वादेव। १० 'अस्य युवापत्यमिः'। ११ **एवञ्च** अधिकस्यैव नियमेन व्यावृत्तेश्च। **तन्निषेधेन**–तदन्तविधिनिषेधेन। **अनेन**–अनुपसर्जनप्रत्यये तदादिनियमोनेत्यनेन। १२ तुः क्वचिन्न। १३ 'अकारादका'। १४ **तत्रायमिति** तयोर्मध्ये आद्ये वक्ष्यमाणः समाधिरित्यर्थः। द्वितीये आह–**सत्त्वेति।** १५ क्वचिन्न। १६ **एवं चेति।** सर्वथा तदपरिहारे चेत्यर्थः॥ १७ **इदं**–तस्य परिभाषात्वमिति समाधानम्। एवञ्च

वक्तव्य' इत्यस्यैवाऽर्थस्य। डतरादिविषये तस्यै प्रधानेपि तदन्तेऽप्रवृत्तिरिति विशेषं बोधयन् तद्वारकयुक्त्यैवोपसर्जनेपि व्यावृत्तिरित्येवं रीत्या तत्फलकत्वाऽभावमुपसर्जनप्रतिषेधस्य बोधयितुमेकदेशी पक्षान्तरमाह—अथवेति। अन्त्यं समाधानद्वयं तु साधारणमित्याहुः॥

[ एकदेशिनःसमाधानान्तरभाष्यम् ]

**अथवा-अङ्गाधिकारे यदुच्यते, गृह्यमाणविभक्तेस्तद्भवति॥**

( प्र० ) **गृह्यमाणविभक्तेरिति।** गृह्यमाणानां त्यदादीनां डतरादीनां च स्वार्थद्वारेण संबन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी तस्या इत्यर्थः।

( उ० ) 'स्वार्थद्वारेणे'त्यादेर्विवरणं–'तदर्थगते'त्यादि। **'गृह्यमाणविभक्ते'**रिति संबन्धसामान्ये षष्ठी। तेन विभक्तौ विधीयमानत्यदाद्यत्वस्याऽपि संग्रह इति भावः॥

[ शङ्काभाष्यम् ]

**यद्येवं-परमपञ्च परमसप्त-'षड्भ्यो लु'गिति लुङ् प्राप्नोति॥**

( प्र० ) **यद्येवमिति।** 'गृह्यमाणाद्विहिता या विभक्ति'रित्येवं संबन्धं मन्वानस्य प्रश्नः॥

( उ० ) 'षड्भ्य'इति षष्ठ्यर्थे पञ्चमीति मन्वानः शङ्कते–**यद्येवमिति।**

[ समाधानभाष्यम् ]

**नैष दोषः। षट्प्रधान एष समासः॥**

( प्र० ) आर्थः संबन्धोऽत्र गृहीत इत्युत्तरेऽभिप्रायः। यद्येवं 'पञ्चकाः शकुनय' इति कनः स्वार्थिकत्वाज्जसो लुक् प्राप्नोति। उच्यते–कनि कृते शब्दान्तत्वान्नान्तत्वाऽभावाच्चाऽयं षट्संज्ञक इत्यदोषः। 'युष्मदस्मद्भ्यां ङसोऽ'शित्यत्र त्वङ्गेन विभक्तिर्विशेष्यत इत्युपसर्जनाभ्यामपि सिध्यति॥

( उ० ) कनः। 'संख्यायाः संज्ञासंघे'त्यनेन विहितस्य। **कनीति।** कनि कृते कन्नन्त एव सङ्ख्यावाची, न प्रकृतिः। स[2] च न नान्त इति षट्त्वाऽभावात्ततः परस्य जसो न लुगित्यर्थः॥ **षड्भ्य इति** पञ्चम्येव। षड्भ्यः परयोः प्रत्यासत्त्या षडर्थगतसङ्ख्याभिधायिनोर्लुगित्यर्थं इति भावः। **युष्मदित्यादि सिध्यती**त्यन्तग्रन्थोऽत्र पुनरुक्तः। अनुपदमग्रे वक्ष्यमाणत्वात्। परे तु 'गृह्यमाणविभक्ते'रित्यस्य गृह्यमाणाद्विहितविभक्तेरित्येवार्थः। अदड्विषयमेतत्। कतरान्तस्याऽनभिधानमभिप्रेत्य यत्राऽद्डभाव एवेष्ट इत्यभिप्रेत्य वा॥ तुल्यन्यायात्–'षड्भ्य' इत्यत्रापि विहितविशेषणमेवेति तत्राऽतिप्रसङ्गं शङ्कते–**यद्येवमिति।** 'परमपञ्चे'त्यादेर्लोके गणनायां[3] व्यवहाराऽभावेन षट्त्वाऽभाव इति लुगप्राप्तिरिति प्रश्नः। संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन विशिष्टस्यापि षट्त्वमस्त्येव। गणनायां[3] प्रसिद्धानामेवेह संख्यावाचिनां ग्रहणमित्यत्र[4] न मानमित्युत्तरम्। पञ्चम्यन्तस्य त्वदुक्तसंबन्धेन विभक्त्याऽन्वयो दुरुपपादः। आवृत्तौ मानाऽभावश्च। 'षट्प्रधान' इत्यस्य त्वदभिमतषष्ठ्यर्थप्रधानोऽतः समुदायोपि षट्संज्ञ इत्यर्थः। षष्ठ्यन्तस्थलेपि विहितत्वसंबन्धेनाऽन्वय इत्याशयेन शङ्कते–**इह तर्हीति।** वैपम्यमुपपादस्वाशयमाह–**इह तावदि**त्यादिनेति भाष्यार्थमाहुः॥

[ शङ्काभाष्यम् ]

**इह तर्हि–'प्रियसक्थ्ना ब्राह्मणेन'[5]–अनङ् न प्राप्नोति॥**

(प्र०) **प्रियसक्थ्नेति।** सक्थिशब्दः शकटावयववचनोऽत्रेति 'बहुव्रीहौ सक्थ्यक्ष्णो'रिति समासान्तो न कृतः॥

( उ० ) **शकटेति।** स च न स्वाङ्गमिति भावः।

[ समाधानभाष्यम् ]

**सप्तमीनिर्दिष्टे यदुच्यते प्रकृतविभक्तौ तद्भवति॥**

( प्र० ) **प्रकृतविभक्ताविति।** अङ्गार्थसंबन्धिन्यां विभक्तावित्यर्थः॥

( उ० ) **अङ्गार्थेति।** प्रकृतशब्देनाऽङ्गम्॥

[ समाधानदूषणभाष्यम् ]

**यद्येवम्–अतितत् अतितदौ अतितद इति,–अत्वं प्राप्नोति॥ [ सप्तमीनिर्दिष्टे[6] यदुच्यते प्रकृतविभक्तौ तद्भवति ]॥ तत्रापि[7] वक्तव्यम्॥**

( प्र० ) **तत्रापीति।** 'गृह्यमाणविभक्ते'रिति 'सप्तमीनिर्दिष्टे यदुच्यते' इति च।

( उ० ) एतच्चाऽपीति वक्तव्ये तच्छब्दनिर्देशा-

---

सर्वाऽनिर्वाहकतया इयमेकदेश्युक्तिरेवेति भावः।

१ तस्य–अड्डादेः। तद्वारकेति। प्रधानद्वारकेत्यर्थः। तत्फलकत्वाऽभावं-गणकायफलकत्वाऽभावम्।

२ सच–सतु।

३ गणनायां-सङ्ख्यागणनायाम्।

४ ग्रहणं-षट्संज्ञासूत्रे ग्रहणम्। ५ 'ब्राह्मणकुलेन' पा०। ६ अयं पाठः क्वचिन्न। ७ अत्र पक्षे दोषान्तरमाह–तत्रापीति। चो वाक्यालंकारे।

व्यवहितपरामर्शः, अपिनाऽव्यवहितस्य चेत्याह-गृह्यमाणेत्यादि।

[ समाधानभाष्यम् ]

**न वक्तव्यम्। इह तावत्—'अड्डुतरादिभ्यः पञ्चभ्यः' इति पञ्चमी, 'अङ्गस्ये'ति [ स्थाने ] षष्ठी, तत्राऽशक्यं विविभक्तित्वाड्डतरादिभ्य इति पञ्चम्याऽङ्गं विशेषयितुम्। तत्र किमन्यच्छक्यं विशेषयितुमन्यदतो विहितात्प्रत्ययात्—'डतरादिभ्यो यो विहित' इति॥**

**( प्र० ) डतरादिभ्यो यो विहित इति।** अर्थद्वारकं विधानमाश्रयितव्यम्। तेन परमकतरदित्यत्रापि भवति। 'युष्मदस्मद्भ्यां ङसोऽ'शित्यत्र तु प्रकारणेऽङ्गेन विभक्तिर्विशेष्यतेऽर्थद्वारेण, युष्मदस्मद्भ्यां तु परत्वमात्रेणेत्यतियुष्मदित्यादावपि कार्यं भवति॥

**( उ० ) अर्थद्वारकमिति।** 'डतरादिभ्यो विहितो योऽर्थस्तत्प्रतिपादकस्वमो'रित्यर्थः। तदर्थकप्रत्ययविधानेऽर्थस्यापि विधानमस्तीत्यभिमानः। 'डतरादिभ्य' इत्यस्य षष्ठ्यर्थत्वे तु 'विविभक्तित्वा'दिति भाष्यविरोधः। परे तु विधानस्य सर्वथाऽनाश्रयणेन अर्थद्वारकं विधानमाश्रयितव्यमिति स्वग्रन्थविरोधः, तस्माद्विहितविशेषणमिति-यथाश्रुतमेव भाष्यम्। 'परमकतर'दित्यत्राऽड्डादेशे न भाष्यान्तरं मानमस्ति। प्रकृतभाष्यं तु विपरीतं तदभावबोधकमेवेति प्रामाणिकाः। त्यदादिप्रकृतिकविभक्तावित्यर्थं मत्वा शङ्कते-**यद्येवमिति।** उक्ताशयेनाह-**त्यदादिप्रधान इति।** अङ्गस्येति सूत्रेऽतो भिस ऐसित्यादौ विविभक्तित्वादसंबन्धमाशङ्क्याऽङ्गनिमित्तं यो भिसिति संबन्धं वक्ष्यति। तेन न्यायेनाऽत्रापि संबन्धसंभवादियमेकदेश्युक्तिः। तस्माल्लक्ष्यानुसारात् 'षड्भ्यो' 'डतरादिभ्य' इति सूत्रद्वये विहितविशेषणं भाष्यसंमतम्, तस्यार्थस्य लक्ष्यविरोधेन भाष्यकृता दूषणाऽकरणादित्याहुः॥

[ समाधानभाष्यम् ]

**इहेदानीम्—'अस्थिदधिसक्थ्यक्ष्णामनङ्ङुदात्तः' इति,'त्यदादीनामो भवती'ति। अस्थ्यादीनामित्येषा षष्ठी, अङ्गस्येत्यपि। त्यदादीनामित्यपि षष्ठी, अङ्गस्येत्यपि। तत्र कामचारो गृह्यमाणेन वा विभक्तिं विशेषयितुमङ्गेन वा। यावता कामचारः, इह तावत्-'अस्थिदधिसक्थ्यक्ष्णामनङ्ङुदात्तः' इत्यङ्गेन विभक्तिं विशेषयिष्यामोऽस्थ्यादिभिरनङ्म्-'अङ्गस्य विभक्तावनङ् भवति, अस्थ्यादीनामि'ति॥ इहेदानीं त्यदादीनामो भवतीति, गृह्यमाणेन विभक्तिं विशेषयिष्यामः, अङ्गेनाकारं-'त्यदादीनां विभक्तावो भवति अङ्गस्ये'ति॥**

**( उ० )** भाष्ये अकार[2]विषयेपि समाधानं वक्तु[3]माह-**इहेति। इह तावदिति।** लक्ष्यानुसारश्च तत्र तत्र तथा तथा व्याख्याने बीजम्। 'अङ्गस्य विभक्ता'वित्यादेशाङ्गार्थगतार्थप्रतिपादकविभक्तावित्याद्यर्थः। षष्ठ्यन्तत्वेन तथान्वयस्य सूपपादत्वादिति भावः॥

[ शङ्काभाष्यम् ]

**यद्येवम्-'अतिसः'-अत्वं न प्राप्नोति।**

[ समाधानभाष्यम् ]

**नैष दोषः, त्यदादिप्रधान एष समासः।**

**( प्र० ) अतिस इति।** शोभनः स इति प्रादिसमासः। नञ्समासेऽप्यसः अषट् अकतरादिति भवति॥

**( उ० ) नञ्समासेपीति।** उत्तरपदार्थप्रधानत्वादिति भावः। अतिकतरदित्युक्तरीत्या चिन्त्यमेव। अत्रापि पक्षेऽतिसर्वायेत्यादौ दोष एव। 'परमसर्वत' इत्यादिसिद्धये तदन्तस्यापि सर्वनामत्वावश्यकत्वेन 'सर्वनाम्नो विहितस्य ङेः स्मै' इत्यर्थेपि स्मैभावस्य दुर्वारत्वात्। अतोप्येकदेश्युक्तिरिदं पक्षद्वयम्।

[ सिद्धान्तिनः सर्वसाधारणं समाधानम् ]

**अथवा-नेदं संज्ञाकरणं, पाठविशेषणमिदम्-'सर्वेषां यानि नामानि तानि सर्वादीनि'। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते॥**

**( प्र० ) सर्वेषां यानीति।** स्वविषयापेक्षया सर्वनामत्वं बोद्धव्यम्। यथा गोत्वादेः स्वविषयापेक्षं सर्वगतत्वं, न त्वे[4]तानि सर्वादीनि परस्परं पर्यायतां यान्ति, भिन्नार्थत्वात्॥

**( उ० )** अतः[6] सर्वसाधारणं समाधिमाह भाष्ये-**अथव नेदमिति।** द्वन्द्वे चेत्यादिभिश्च सर्वादित्वस्यैव निषेधस्तत्प्रयुक्तकार्याऽभावे पर्यवस्यति। एवं विकल्पोऽ-

१ कश्चित्र। २ अपिनाऽस्थ्यादिसमुच्चयः। ३ वक्तुम्-अग्रे 'इहतावदस्थिदधी'त्यादिना वक्तुम्।

४ न तु-न हि। 'परस्परपर्याय'। ५ 'न तु सर्वा'। ६ अतः-पूर्वयोः पक्षयोरेकदेश्युक्तितया।

पीत्यभिमानः। ननु सर्वार्थवाचकत्वं न पूर्वादिशब्दानामित्यसङ्गतमेतदत आह–**स्वविषयेति**। लोकनिरूढप्रवृत्तिनिमित्तेन या अभिधेया व्यक्तयस्ताः स्वविषयः॥ ननु सर्वादिगणपठितानां शब्दानां सर्वेषां सर्वार्थकत्वेन पर्यायत्वाद् यथाऽयं व्याख्यानक्लेशोऽत आह–**नन्विति**॥ नन्वेवं घटादिशब्दानामपि स्वविषयापेक्षसर्वनामत्वाद्घटायेत्यादौ स्मैभावाद्यापत्तिरिति चेन्न। तद्विधायकेषु सर्वनामग्रहणसामर्थ्येन सकृद्गृहीतशक्त्यैव स्वप्रवृत्तिनिमित्ताश्रयविरुद्धाऽनेकजातीयाऽर्थबोधकानामेव 'सर्वनाम'पदेन ग्रहणात्। एतदेव ध्वनयितुं–'सर्वेषां नामानी'ति बहुवचनान्तपूर्वपदको विग्रहो दर्शितो भाष्ये। भाष्ये–**संज्ञोपसर्जने चेति**। संज्ञा त्वेकद्रव्यनिष्ठत्वान्न सर्वेषां नाम। उपसर्जनमपि पदान्तरार्थसंसृष्टार्थवृत्तित्वान्न प्राधान्येन सर्वेषामुपस्थापकम्, नामपदस्वारस्येन तथैव लाभादित्यर्थः। उपसर्जनांशे **विशेषे** इत्यस्य विशेषणे इत्यर्थः॥

[ शङ्काभाष्यम् ]

**यद्येवं संज्ञाश्रयं यत्कार्यं तन्न सिध्यति 'सर्वनाम्नः स्मै' 'आमि सर्वनाम्न सु'डिति।**

[ समाधानभाष्यम् ]

**अन्वर्थग्रहणं तत्र विज्ञास्यते। सर्वेषां यन्नाम तत्सर्वनाम। सर्वनाम्न उत्तरस्य ङेः स्मै भवति। सर्वनाम्न उत्तरस्याऽऽमः सुड् भवति।**

[ शङ्काभाष्यम् ]

**यद्येवं, सकलं कृत्स्नं जगदित्यत्रापि प्राप्नोति। एतेषां चापि शब्दानामेकैकस्य स स विषयस्तस्मिंस्तस्मिन्विषये यो यः शब्दो वर्तते, तस्य तस्य तस्मिंस्तस्मिन्वर्तमानस्य सर्वनामकार्यं प्राप्नोति॥**

(प्र०) **एतेषां चापीति**। ततश्च सर्वस्मिन्नोदन इत्योदनशब्दस्यापि सर्वनामकार्यं प्राप्नोति, सामानाधिकरण्यादनयोः। ननु प्रतिनियतवस्तुभागाऽभिनिवेशित्वाच्छब्दानां सर्वत्वमोदनशब्देन नाभिहितम्, ओदनत्वमपि सर्वशब्देनेति कुतोऽयं प्रसङ्गः?॥ तत्रेदं दर्शनं—सर्वशब्दोऽपि ओदनार्थावग्रहेण प्रवृत्तः, ओदनशब्दोऽपि सर्वार्थावग्रहेण। प्रतिपत्ता तु केवलात्सर्वशब्दाद्विशेषं न प्रतिपद्यते, रूपसादृश्यात्। नाप्योदनशब्दादिति तत्प्रतिपत्त्यर्थमुभयोरुपादानम्। तस्यैकस्य सर्वनामकार्यं भवति नाऽपरस्येति प्रमाणाऽभावादतिप्रसङ्ग उद्भावितः॥

(उ०) भाष्ये–**एतेषां चापीति** दूषणान्तरम्। **एतेषां चापि**–घटादिशब्दानामपि। **एकैकस्य**–तस्य तस्यापि। **स स विषयः**–सर्वाद्यर्थो विषयः॥ **तस्मिंस्तस्मिन्विषये** सर्वाद्यर्थरूपे विषये। **यो यः शब्दो**–घटादिशब्दो **वर्तते तस्य तस्य**–घटादिशब्दस्य सर्वाद्यर्थे वर्तमानस्येत्यक्षरार्थः। तद्व्याचष्टे–**ततश्चेति**। पदैः पदार्थानभिधायाकाङ्क्षादिमूलकशक्तिवशात्संसृष्टवाक्यार्थप्रतीतिर्जन्यत'इत्यभिहितान्वयवादे शङ्कते–**नन्विति**। गुणद्रव्यादिसमुदायात्मके वस्तुनि प्रतिनियता ये भागाः प्रवृत्तिनिमित्ताख्यास्तदभिनिवेशित्वाच्छब्दानामित्यर्थः॥ 'योग्येतरान्विते पदानां शक्तेः स्वार्थवत्पदान्तरार्थोऽपि स्ववाच्य'इत्यन्विताभिधानमाश्रित्य परिहरति–**तत्रेति**॥ **अवग्रहः**–क्रोडीकारः॥ **न प्रतिपद्यते**। 'निश्चितये'ति शेषः॥ **रूपसादृश्यादिति**। ओदनव्यतिरिक्तार्थान्वययोग्यसर्वशब्दरूपस्य तुल्यत्वादित्यर्थः। **तत्प्रतिपत्त्यर्थम्**–निर्धारितविशेषप्रतिपत्त्यर्थम्। **अपरे तु**–पदे पदैकदेशप्रयोगवद्यदा सर्वस्मिन्नोदने इति वाक्ये प्रयोक्तव्ये 'ओदने' इति वाक्यैकदेशः प्रयुज्यते, प्रकरणाच्च[3] तत एव पदात्तादृशवाक्यार्थबोधस्तत्र दोष इति भाष्याशयः। यथा च पदशक्तिग्रहकाले पदैकदेशस्यापि तत्र[4] शक्तिग्रह इति पस्पशायां कैयटेनोक्तम्, तथा वैयाकरणमते विशेषणविशेष्यभावे वाक्यस्य शक्त्यङ्गीकारेण तत्र तत्तत्पदार्थालिङ्गिते समुदितस्य शक्तिग्रहकालेऽवयवभूतैकैकपदस्यापि तत्र शक्तिग्रहणेनैकपदादपि तादृशविशिष्टार्थबोध इति 'इग्यण' इतिसूत्रे भाष्ये ध्वनितम्। आकाङ्क्षावादान्ते च मञ्जूषायां निरूपितमित्याहुः। **अतिप्रसङ्ग उद्भावित इति**। न च 'सर्वनाम्नः स्मै' इत्यादौ 'सर्वादेः स्मै' इत्याद्येव सूत्राणि सन्त्विति न कृत्स्नादिषु दोषः। अपाणिनीयत्वापत्तेः॥

[ समाधानभाष्यम् ]

**एवं तर्ह्युभयमनेन क्रियते–पाठश्चैव विशेष्यते, संज्ञा च॥ कथं पुनरेकेन यत्नेनोभयं लभ्यम्?॥ लभ्यमित्याह॥ कथम्?॥**[6]

(उ०)–भाष्ये–**एवं तर्ह्युभयमिति**॥

॥*॥ *एकशेषनिर्देशात्* ॥*॥

**एकशेषनिर्देशोऽयम्। सर्वादीनि च सर्वादीनि च सर्वादीनि। सर्वनामानि च सर्वनामानि च सर्वनामानि। सर्वादीनि सर्वनामसंज्ञानि भवँन्ति[7]। सर्वेषां यानि**

---

१ **एवं**–तथा तत्त्वाऽङ्गीकारे। २ **तदिति** स्मैभावादिविधायकेष्वित्यर्थः। ३ **प्रकरणाच्च**–प्रकरणात्तु। ४ **तत्र**–पदार्थे। ५ **तत्र**–विशेषणविशेष्यभावे। ६ इदं कचिन्न। ७ 'भवन्तीति' पा०।

**च नामानि तानि सर्वादीनि । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते ॥**

**(प्र०) एकशेषनिर्देश इति ।** सहविवक्षाया अभावात् कथमेकशेषः ?। एकशेषफलत्वात्तन्त्रन्याय आवृत्तिर्वैकशेषशब्देनोच्यते । अथवा-आकृत्यभिधानपक्षे एकस्यैव प्रयोगे सिद्धे प्रत्याख्यातमेकशेषशास्त्रं संज्ञापरिभाषावच्छास्त्रप्रक्रियासंपादनार्थं भवतीति सहविवक्षामन्तरेणाऽपि भवत्येकशेषः ।

**संज्ञोपसर्जने चेति ।** यदा सर्वशब्दः संज्ञात्वेन विनियुज्यते, तदा प्रसिद्धप्रवृत्तिनिमित्तपरित्यागेन स्वरूपमात्रोपकारी प्रवर्तते इति विशेष एवाऽवतिष्ठते । उपसर्जनमपि जहत्स्वार्थमजहद्वाऽतिक्रान्तार्थविशेषणतामापन्नमतिक्रान्तार्थवृत्ति भवत्यतिसर्वायेत्यत्र । वाक्ये त्वसंसृष्टार्थत्वात्स्वार्थमात्रं प्रतिपादयतो न विशेषेऽवस्थानम् ॥

**(उ०) सहेति ।** एकैकस्योद्देश्यत्वविधेयत्वसत्त्वात्सहविवक्षाऽभावे इत्यर्थः । अर्थद्वयबोधेच्छया एकस्य सकृदुच्चारणमिह **तन्त्रम्** । अत्रोच्चारणं तन्त्रेण, बोद्धबोधस्तु पुनरनुसन्धानेनेत्याशयेनाह-**आवृत्तिर्वेति** । आवृत्तिश्चेत्यर्थः ॥ **प्रत्याख्यातमिति** । लौकिकप्रयोगाङ्गत्वेन निराकृतमित्यर्थः। **प्रसिद्धप्रवृत्तिनिमित्तेति** । तच्च सर्वशब्दस्य यावत्त्वम् । इदमुपलक्षणम्, अनेकार्थसाधारणशक्तिग्रहसहकारेण स्वविषयाणां सर्वेषामर्थानां प्राधान्येन बोधकत्वं सर्वनामत्वमित्यस्याऽर्थस्य । **स्वरूपमात्रोपकारीति** । स्वरूपमात्रप्रवृत्तिनिमित्तक इत्यर्थः । **अतिक्रान्तार्थविशेषणतामिति** । [२]एवं च प्राधान्येन न सर्वार्थोपस्थापकत्वमिति भावः । जहत्स्वार्थत्वे तु सर्वोपस्थापकत्वमेव नेति बोध्यम् ॥

[ समाधानान्तरभाष्यम् ]

**अथवा-महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥ कुत एतत् ? ॥ लघ्वर्थं हि संज्ञाकरणम् ॥ तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्-अन्वर्थसंज्ञा यथा विज्ञायेत-'सर्वादीनि सर्वनामसंज्ञानि भवन्ति, सर्वेषां नामानीति चाऽतः सर्वनामानि । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते' ॥**

**(प्र०) यतो न लघीय इति ।** शब्दव्यवहारो लघुस्ततोऽपि लघीयो-नाम । तत्र गुरुसंज्ञाकरणात्सर्वादीनां विशिष्टो धर्मोऽनुमीयते—'नूनमेतानि[३] संज्ञाप्रवृत्तिनिमित्तेन सर्वनामत्वेन युक्तानि, यतस्तदनुरूपा तेषां संज्ञा कृते'ति । सर्वनामकार्यमन्तर्गणकार्यं च सर्वनामत्वयुक्तानामेव भवति, न संज्ञोपसर्जनानाम् ॥

**(उ०) अथवा महतीति ।** अयं भावः-अनेकार्थसाधारणशक्तिग्रहसहकारतः प्राधान्येन स्वविषयसर्वार्थोपस्थितिजनकत्वसमानाधिकरणसर्वनामपदवत्त्वेन बोधकमहासंज्ञया तादृशसर्वादीनामेव गणेऽनुकरणम् । तत्र[४] संज्ञायास्तत्त्वाऽभावे[५]: स्पष्ट एव । उपसर्जनस्याऽपि न प्राधान्येन तदुपस्थापकत्वं, नामपदस्वारस्येन तथैव लाभात् । उपसर्जनं हि इतरविशेषणतयैव स्वार्थोपस्थापकम् । 'सर्वादीनि तदन्तानि च सर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवन्ती[६]'त्यर्थः सूत्रस्य । तदन्ते च तत्प्रधानसमासेऽवयवीयतादृशशक्तिसहकारेण स्वविषयसर्वबोधकत्वं विशेष्यतयाऽस्त्येवेति दिक् ॥ **ततोपि लघीयो नामेति** । संज्ञेत्यर्थः[७] । 'तन्नाम संज्ञा यतोऽन्यल्लघुतरं नास्ती'त्यन्वयो भाष्ये । यद्वा 'संज्ञा च नामे'ति पर्यायप्रदर्शनम् । तच्च[८] यतो नान्यल्लघीयस्तत् । एवं च संज्ञायां सर्वतः शब्दव्यवहाराल्लघीयस्त्वं सिद्धम् । '**लघ्वर्थ**'मित्यस्य लाघवेन शास्त्रप्रवृत्त्यर्थमित्यर्थः । नन्वन्वर्थसंज्ञात्वं नाम योगरूढत्वम् । तत्र[९] योगार्थस्य रूढ्यर्थेनैवाऽन्वयनियमात् पृथगुद्देश्येनाऽनन्वयात् कथं सर्वार्थवाचकानामेव संज्ञेत्यत आह-**अनुमीयत इति । नूनमेतानीति ।** गणपठितानीत्यर्थः ॥

[ प्रश्नभाष्यम् ]

**अथोभस्य सर्वनामत्वे कोऽर्थः ? ॥**

(उ०) भाष्ये-**अथोभस्येति** । 'उभयत' इत्यादेरुभयशब्दपाठेनैव सिद्धेरिति भावः ॥

[ समाधानवार्तिकम् ]

*॥ * ॥ उभस्य सर्वनामत्वेऽकजर्थः ॥ * ॥*

**उभस्य सर्वनामत्वेऽकजर्थः पाठः क्रियते । उभकौ ॥**

---

१ उभयोरेकत्राऽन्वयाऽभावेनाऽतुल्यकक्षत्वादिति भावः। २ **एवं चेति** । तस्य विशेषणत्वे चेत्यर्थः । ३ **एतानीति** पक्षः । **युक्तानीत्यन्तेन** साध्यम् । **यत**-इत्यादिना हेतुः । व्यतिरेक्यनुमानेचाऽत्र घटादिर्दृष्टान्तः । तथाच नायं शाब्दोऽपि त्वनुमानगम्यः । स तूक्त एव । अत्र व्यञ्जना वक्तुमुचितेति **परे** । ४ **तत्र**-तयोर्मध्ये । ५ **तत्त्वाभावः**-तेन बोधकत्वाऽभावः । ६ नामपदार्थमाह-**सञ्ज्ञेति । तन्नामेति** । सुबन्तमित्यर्थः । ७ **तच्च**-नाम च । **एवञ्च**-एवं व्याख्याने च । ८ **तत्र**-तयोर्मध्ये । **नियमादिति** । पङ्कजादौ तथैव दर्शनादित्याशयः ।

[ वार्त्तिकावतारणभाष्यम् ]

**किमुच्यते'ऽकजर्थे' इति' न पुनरन्यान्यपि सर्वनामकार्याणि ? ॥**

*॥ * ॥ अन्याऽभावो द्विवचनटाब्विषयत्वात् ॥ * ॥*

**अन्येषां सर्वनामकार्याणामभावः ॥ किं कारणम् ?॥ 'द्विवचनटाब्विषयत्वात्'। उभशब्दोऽयं द्विवचनटाब्विषयः । अन्यानि च सर्वनामकार्याण्येकवचनबहुवचने[2]षूच्यन्ते ॥**

(प्र०) **अन्याभाव इति** । टाब्विषयत्वमपि न द्विवचनादन्यत्र बोध्यम् । तत्रोभादुदात्तो नित्यमित्यत्र नित्यग्रहणस्येदं प्रयोजनं–'वृत्तिविषये उभशब्दप्रयोगो माभूदुभयशब्दस्यैव यथा स्या'दित्युभयपुत्र इत्यादि भवति । 'द्विदण्ड्यादिभ्यश्चे'त्यत्र तु निपातनादुभाबाह्वित्यादयः साधवः ॥

(उ०) ननु टाबन्ते 'सर्वनाम्नः स्या'डित्याद्यन्यसर्वनामकार्यसंभवोऽस्त्येवेत्यत आह–**टाब्विषयस्त्वमपीति** । 'अन्याभाव' इत्यत्र हेतुत्वेनोपा[3]दानादिति भावः। एवं चोभ[1]शब्दः केव[4]लद्विवचनविषयष्टाप्सहितद्विवचनविषयो वेत्यर्थ इति टाब्ग्रहणमनुवादमात्रं नाऽपूर्वमिति तात्पर्यम् । द्विवचनटाब्विषयत्वे उपपत्तिमाह–**तत्रेति** । 'द्वित्रिभ्या'मिति सूत्रस्थ'वे'त्यस्याऽस्वरितत्वादेवाऽननुवृत्तौ तयप्स्थानिकत्वेनाऽयचः तद्विकल्पेनैव वाक्यसिद्धौ फलाऽभावेन महाविभाषाया अप्यसंबन्धसिद्धौ प्रत्ययान्तरत्वपक्षे तन्निवृत्तौ दोषाच्च नित्यग्रहणं योगविभागेन स्वार्थिकाऽनादेशभूताऽयच्प्रत्ययान्तरविधायकमिति भावः । अत्र च 'नित्य'शब्दस्य वाच्यार्थविरोधाद्विकल्पाननुवृत्तिः । अयमप्याद्युदात्त एव, प्रत्ययसम्बद्धाद्युदात्त[5]ग्रहणानुवृत्तेः। **वृत्तिविषये इति**। अत एवोभौ साभ्यासस्येति निर्देशः सङ्गच्छते । इदं च सूत्रं योगविभागस्येष्टसिद्ध्यर्थत्वादुभाविति निर्देशाच्च, 'उभयोऽन्यत्रे'ति वार्तिकाच्च द्विवचनाऽश्रवणं यत्र तत्रैव प्रवर्तते, नान्यत्र, तेन नाऽतिप्रसङ्गः । '**द्विवचनविषयत्वा**'दिति भाष्यस्य द्विवचनसत्त्वे एवोभशब्दः साधुरित्यर्थः । द्विवचनाऽसत्ता च वृत्तिविषय एवेत्याशयेन कैयटे-'वृत्तिविषये' इत्युक्तम् ।

[ प्रश्नभाष्यम् ]

**यदा पुनरयमुभशब्दो द्विवचनटाब्विषयः, क इदानीमस्यान्यत्र भवति ? ॥**

(उ०) **क इदानीमिति** । अस्योभशब्दस्याऽर्थप्रतिपादकः कः शब्दोऽन्यत्र तसिलादिविषये द्विवचनाऽभावे भवतीत्यर्थः ॥

[ समाधानवार्तिकम् ]

*॥ * ॥ उभयोऽन्य[6]त्र ॥ * ॥*

**उभयशब्दोऽस्याऽन्यत्र भवति । उभये देवमनुष्याः, उभयो मणिरिति ।**

( उ० ) **उभयोन्यत्रेति** । द्विवचनविषयत्वाऽभावसंभावनायाँ[7]मित्यर्थः । लुग्विषये लुका विषयस्यैवाऽपहारान्न दोषः। संभावनानिवेशाच्चोभशब्दस्य[8] पाठाऽभावेप्युभयत इत्यादिसिद्धिः। अ[9]न्यथोभात्तसिलादेः कर्त्तुमशक्यतया द्विवचनस्य लुगभावेन तद्विषयस्यैव सत्त्वेनाऽयजनापत्तौ 'उभयत' इत्याद्यसिद्धिः। ममतु' यद्यत्र तसिलादि स्यात्तर्हि लुगपि स्या'दिति संभावनया विषयाऽभावसंभावनाऽस्त्येवेति न दोषः । इदमेव ध्वनयितुं 'विषय'पदमु[10]पात्तम्। '**उभय**'इति । वार्तिके 'उभय'शब्देन स्वार्थिकाऽयजन्तस्याऽवयव्यर्थकाऽयजन्तस्य च ग्रहणमिति भावः ॥

[ प्रश्नोत्तरभाष्यम् ]

**किंच स्याद्यद्यत्राऽकज्न स्यात् ?॥ कः प्रसज्येत ॥**

[ चोदनाभाष्यम् ]

**कश्चेदानीं काकचोर्विशेषः ? ॥**

(प्र०) **कश्चेदानीमिति**। रूपे स्वरे च नास्ति विशेषः । अवग्रहे च नास्त्यादरो, न हि लक्षणेन पदकारा अनुवर्त्त्याः । [ उभकाभ्यां हेतुभ्याम् उभकयोर्हेत्वोरिति षष्ठीतृतीये सिद्ध, 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'मिति वचनात ] ।

(उ०) **रूपे इति** । नन्वकचि उभशब्देन तद्विशिष्टस्य ग्रहणादुभकावयवौ यस्येत्यर्थे 'उभकयो मणि'रिति प्रयोगः सिध्यति, के तु नेति फले विशेषः स्पष्टः। एवमज्ञातोभयोर्घट इत्यर्थेऽकचि 'उभकघट' इति रूपम्। केऽयचि 'उभयकघट' इति स्यादिति रूपे विशेषः स्पष्ट एवेति चेन्न;

१'उभयशब्दो'।२'द्विवचनविषयेषू'पा०।३**हेतुत्वेति**। 'द्विवचनटाब्विषयत्वा'दित्यस्यान्याभावे हेतुत्वेनोपादानादयमर्थो लभ्यते इत्यर्थः । ४ **केवलेति** । 'पुंनपुंसकयो'रित्यादिः । स्त्रियां विशेषमाह–**टाबिति** । ५'सम्बन्धोदात्ते'ति 'सम्बद्धोदात्ते'तिवा पाठान्तरम् । ६ 'उभशब्दोऽन्यत्र' इति पाठान्तरम् । ७'मितिभावः' पाठा० । ८ 'उभस्य पाठाभावे' पा० । ९ **अन्यथा**–संभवानाया अनिवेशे । **कर्त्तुमिति** । अपाठादित्याशयः । १० **उपात्तं**–पूर्वत्र भाष्य उक्तम् ।

भाष्यप्रामाण्येनाऽनभिधानात् । अत एव हरिणा 'उभयोऽन्यत्रे'ति वार्तिकमूलभूतम् 'उभयस्य द्विवचनं टापृच लोपश्च यस्ये'ति व्याकरणाऽन्तरसूत्रमुदाहृतम् । तन्मते ह्येषां प्रयोगाणामभावः स्पष्ट एवेति बोध्यम् । **स्वरेचेति** । चित्स्वरप्रत्ययस्वराभ्यामुभयत्रापि अन्तोदात्तत्वस्यैव सिद्धेरिति भावः। **उभकाभ्यामित्यादिर्वचनादित्यन्तो** ग्रन्थः प्रक्षिप्तः, पुनरग्रे दर्शनात् ॥

[ समाधानभाष्यम् ]

**'उभशब्दोऽयं द्विवचनटाब्विषयः' इत्युक्तम् । तत्राऽकचि सत्यकचस्तन्मध्यपतितत्वाच्छक्यते एतद्वक्तुं-'द्विवचनपरोऽय'मिति' । के पुनः सति नाऽयं द्विवचनपरः स्यात् । तत्र द्विवचनपरता वक्तव्या ।**

**(प्र०) उभयशब्दोऽयमिति** । द्विवचनेऽनन्तरे श्रूयमाणे उभशब्देन साधुना भाव्यं, न लुप्ते, न व्यवहिते । **के पुनः सतीति** । पूर्वस्य द्विवचनस्य लुप्तत्वादपरस्य केन व्यवधानात् । तत्र कविषये व्यवहितद्विवचनविषय उभशब्दः साधुर्भवतीति वक्तव्यम् ।

**(उ०) श्रूयमाण इति** । विषयशब्दलभ्योऽयमर्थः। श्रूयमाणत्वं च साक्षाद्भावरूपादेशद्वारा वेत्यन्यत् । **व्यवधानादिति** । द्विवचनविषयत्वस्याऽव्यवहितस्यैव निवेशादित्यर्थः । 'उभयघटा'वित्यादौ व्यवहितद्विवचनपरस्य साधुत्ववारणाय-**कविषये इति** । एवं चैतद्वचनाऽकरणलाघवार्थमुभशब्दपाठ इति भावः ॥

[ प्रश्नभाष्यम् ]

**यथैव तर्हि के सति नायं द्विवचनपर एवमाप्यपि सति नायं द्विवचनपरः स्यात् । तत्रापि द्विवचनपरता वक्तव्या ॥**

**(प्र०) यथैव तर्हीति** । ननु 'द्विवचनटाब्विषयत्वा'दित्यत्र टाप उपात्तत्वाच्चोद्याऽनुपपत्तिः । एवं तर्हि टाब्विषयत्वमेकवचनबहुवचनयोर्मा भूदित्येतदर्थमाप्यपि द्विवचनपरता वक्तव्येत्युक्तम् ॥

**(उ०)** भाष्ये-**एवमाप्यपीति** । टापा व्यवधानादिति भावः ॥

[ समाधानवार्तिकम् ]

*॥*॥ अवचनादापि तत्परविज्ञानम् ॥*॥*

**अन्तरेणाऽपि वचनमापि द्विवचनपरोऽयं भविष्यति ॥**

**(प्र०) अवचनादिति** । स्वार्थिकत्वाट्टापि उभार्थस्याऽहानाट्टापि सिद्धा द्विवचनपरतेत्यर्थः ॥

**(उ०)** भाष्ये-**अन्तरेणापीति** । दीर्घे तद्विशिष्टस्याऽन्तवद्भावेनोभशब्दत्वमिति भावः । आबन्तादेकवचनाद्यापत्तिस्तु नेत्याह-**स्वार्थिकत्वादिति** । एवं च तत एकवचनादौ द्विवचनविषयत्वं कथमिति न वक्तव्यमिति भावः ॥

[ प्रश्नतत्समाधानभाष्यम् ]

**किं वक्तव्यमेतत् ? ॥ नहि ॥ कथमनुच्यमानं गंस्यते ?॥ एकादेशे कृते द्विवचनपरोऽयमन्तादिवद्भावेन ॥**

**(उ०) 'किं वक्तव्यमेत'**दित्यादिर**'न्तावद्भावेने'**-त्यन्तोऽपाठः । 'अवचनादापी'त्यस्य वक्तव्यत्वाऽभावेन 'किं वक्तव्य'मिति प्रश्नाऽसङ्गतेः । तथा भ्रममूलको वा प्रश्न इति बोध्यम् ॥

[ प्रत्याख्यानवार्तिकम् ]

*अवचनादापि तत्परविज्ञानमिति चेत्केऽपितुल्यम्*

**अवचनादापि तत्परविज्ञानमिति चेत्केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति ॥ कथम् ? ॥ 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ती'ति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति ॥**

**(प्र०) केऽपितुल्यमिति** । 'द्विवचनविषयत्वा'-दित्यत्र 'द्विवचन' शब्देन प्रत्ययो न गृह्यते । किं तर्हि ?। द्व्यर्थाभिधानसमर्थ इत्यर्थः। 'उभयत' 'उभयत्रे'ति त्रतसोरव्ययत्वाद्धित्वाऽभिधानसामर्थ्यं नास्तीत्यभेदविषय उभयशब्द एव प्रयुज्यते न तूभशब्दः । एवं प्रत्याख्यातोऽकजर्थ उभशब्दस्य पाठः । **'सर्वनाम्नस्तृतीया चे'**ति षष्ठीतृतीयार्थः पाठ इति केचित् । **निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'**मिति वचनात्तदर्थोऽपि पाठो न कर्तव्य इत्यन्ये ।

**( उ० ) द्व्यर्थेति** । 'कृत्रिमाकृत्रिम'न्यायस्य तु नेह प्रवृत्तिः, तस्येहे शास्त्रेऽनाश्रयणस्य संख्यासंज्ञासूत्रे भाष्ये उक्तेः । अस्य लोकसिद्धव्यवस्थाबोधकत्वेन तत्र न्यायाऽ-

१ 'उभयशब्दो' । २ **अयमर्थः**-श्रूयमाणे' इत्यर्थः । ३ 'दित्येवमर्थ' । ४ इदं भाष्यमित्यन्ये । ५ 'दापि' । ६ 'मूलको वा' । ७ **तस्य-**कृत्रिमाकृत्रिमन्यायस्य । **तस्या** इति पाठे-कृत्रिमेत्यादिपरिभाषाया इत्यर्थः । ८ **अस्य-**उक्तवार्तिकस्य । **तत्र-**द्विवचनांशे । **न्यायेति** । कृत्रिमेतिन्यायेत्यर्थः ।

प्रवृत्तेश्चेति भावः । ननूभकाविविवदुभत इत्याद्यपि प्रसज्येतेत्यत आह— **उभयत इत्यादि** । तयोरव्ययत्वेन विभक्त्यन्तीयस्वार्थिकत्वेन चाऽधिकरणाऽपादानशक्तिविशेष्यकबोधजनकत्वात् । द्विवचनत्वं च संख्ये[1]प्रकारकसंख्येयविशेष्यकबोधजनकत्वम् ॥ **अभेदविषयः**–वृत्तिविषयः । उक्तमर्थं प्रश्नपूर्वं व्युत्पादयति—भाष्ये–**कथं, स्वार्थिका इति** । यतः **स्वार्थिकाः प्रकृतितोऽविशिष्टाः**–अन्यार्थविशेष्यकबोधाऽजनकाः–अ[2]तः **[प्रकृतिग्रहणेन]**–प्रकृतिर्गृह्यते अनेनेति प्रकृतिग्रहणं, तेन प्रकृतिभूतोभशब्दग्राहकेण 'द्विवचन'शब्देन–तत्प्रकृतिकानां स्वार्थिकानां कादीनामपि ग्रहणमित्यर्थः । तेनोभयत इत्यादेर्व्यावृत्तिः '**प्रकृतिग्रहणे**ने'त्यनेन कृत्रिमाकृत्रिमन्यायाऽप्रवृत्तिर्ध्वनिता । द्विवचनं च टाप्साहचर्यात्प्रत्यय एव गृह्यते । एतदर्थमेव टाब्ग्रहणम् । तेनोभयोरुभावुभयोभावित्यत्र समासे भवत्येवाऽयजित्याहुः । **एवं प्रत्याख्यात इति** । कि चाऽकज्मात्रार्थत्वे 'उभाव्ययसर्वनाम्नामक'जित्येव पाठेन सिद्धे संज्ञाप्रयोजके गणे पाठो व्यर्थः । साहचर्याच्च संज्ञादिव्यावृत्तिरिति बोध्यम् ॥

[ प्रश्नभाष्यम् ]

**अथ भवतः सर्वनामत्वे कानि प्रयोजनानि ? ॥**

( प्र० ) अथ भवत इति । अनकारान्तत्वात् स्मायाद्यभावात्प्रश्नः ॥

[ समाधानवार्तिकम् ]

*॥ * ॥ भवतोऽकच्छेषाऽऽत्वानि ॥ * ॥*

**भवतोऽकच्छेषाऽऽत्वानि प्रयोजनानि॥ अकच्–भवकान् ॥ शेषः–स च भवांश्च भवन्तौ ॥** आत्वं–**भवादृगिति** ।

( प्र० ) शेष इति । पाठे सति त्यदादित्वाच्छेषो भवति ॥

[ प्रश्नभाष्यम् ]

**किं पुनरिदं परिगणनमाहो स्विदुदाहरणमात्रम् ? ॥**

[ समाधानभाष्यम् ]

**'उदाहरणमात्र'मित्याह । तृतीयादयो[3]ऽपि हीष्यन्ते सर्वनाम्नस्तृतीया च। भवता हेतुना, भवतो हेतोरिति ॥ [उभस्या[4]प्येषा। उभाभ्यां हेतुभ्यां उभयोर्हेत्वोरिति ] ॥**

( प्र० ) **तृतीयादयोपीति** । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'मित्येनपेक्ष्यैतदुक्तम् । इदं तु प्रयोजनं–भावतायनिः, भवद्यङ्, भवन्मयः । पूर्वनिपातश्च–भवन्मित्रः । 'भवतष्ठक्छसा'विति वृद्धत्वाट्ठक्छसौ । गुणवचनसंज्ञाबाधनं च, भवतो भावो भावत्यमिति मा भूत् ॥ **[सर्वादीनि]**

**(उ०) इदं त्विति** ॥ भाष्ये आदिपदसंग्राह्यमित्यर्थः । **भावतायनिरि**ति । सति पाठे 'त्यदादीनि चे'ति वृद्धत्वे 'उदीचां वृद्धा'दिति फिञ् ॥ **भवद्यङिति** । 'विश्वग्देवयोश्च टे'रिति चेन सर्वनाम्नोऽनुकर्षणादद्र्यादेशः ॥ **भवन्मये**· 'नित्यं वृद्धे'ति मयट् ॥ **भवन्मित्रे**–'बहुव्रीहौ सर्वनामसंख्ययो'रिति पूर्वनिपातः ॥ **भवतष्ठगिति**। शत्रन्तनिवृत्तये वृद्धग्रहणं तत्रानुवर्तत इत्यर्थः ॥ **गुणवचनेति** । एकसंज्ञाधिकारे सकलप्रातिपदिकविषयगुणवचनसंज्ञातः परा सर्वनामसंज्ञेति भावः ॥ [ सर्वादीनि ]॥

## विभाषादिक्समासेबहुव्रीहौ१।१।२७

[ प्रश्नभाष्यम् ]

**दिग्ग्रहणं किमर्थम् ? ॥**

( प्र० ) विभाषा दिक्समासे ॥ दिग्ग्रहणमिति । एकस्मिन्विषये विकल्प[6]प्रतिषेधयोरसंभवात्सामर्थ्याद्विषयभेद आश्रयितव्य इति प्रश्नः ॥

( उ० ) विभाषा दि ॥ एकस्मिन्निति । सर्वत्र परत्वात्प्रतिषेधे विकल्पवैयर्थ्यम् । सर्वत्र वा विक[7]ल्पे भावाऽभावयोस्तेनैव सिद्धत्वात्प्रतिषेधानर्थक्यमिति तयोरेकविषयत्वाऽसंभव इति भावः ॥

[ समाधानभाष्यम् ]

**'न बहुव्रीहा'विति प्रतिषेधं वक्ष्यति, त[8]त्र न ज्ञायते–'क्व विभाषा, क्व प्रतिषेध' इति । दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति– 'दिगुपदिष्टे विभाषाऽन्यत्र प्रतिषेधः' ॥**

(प्र०) [9]वचनमन्तरेणाऽभिमतो विषयभेदो न लभ्यत इत्युत्तरम् ॥

(उ०) भाष्ये दिगुपदिष्टे इति । दिक्शब्दोच्चारणेन विहित इत्यर्थः । 'बहुव्रीहा'विति शेषः ॥

---

१ द्वित्वसङ्ख्याप्रकारकेत्यर्थः । 'द्विसङ्ख्ये'तिपाठान्तरम् । २ **अतः**–अस्मात्कारणात् । ३ 'तृतोयाऽपीहेष्यते' । 'दयोऽपि दृश्यन्ते' 'याऽपिही' पा० । ४ क्वचिन्न । ५ 'सर्वनाम्नस्तृतीया चे'ति सूत्रमात्रमपेक्ष्येति यावत् । ६ एकस्मिन्विषये बहुव्रीहौ न बहुव्रीहाविति निषेधस्यानेन विकल्पस्य चाऽसम्भवादित्यर्थः । ७ **विकल्पे**–पूर्वविप्रतिषेधेनाऽनेन संज्ञाविकल्पे । **तेन**–विकल्पेनैव । ८ **तत्र**–प्रतिषेधे सति । ८ **वचनं**–दिग्ग्रहणम् ।

[ प्रश्नभाष्यम् ]

**अथ समासग्रहणं किमर्थम् ? ॥**

[ समाधानभाष्यम् ]

**'समास एव यो बहुव्रीहिस्तत्र यथा स्याद्बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भू'दिति । दक्षिणदक्षिणस्यै देहीति ॥**

(प्र०) **समासएवेति**। मुख्य इत्यर्थः । अन्यस्तु तत्कार्यलाभाय तद्व्यपदेशं लभत इत्यमुख्यः ॥

( उ० ) व्याप्यधर्मातिदेशे व्यापकधर्मस्याप्यतिदेशात्समासोऽप्ययमत आह-**मुख्य इति**। **दक्षिणदक्षिणस्यै इति**। 'आबाधेचे'ति द्विर्वचनबहुव्रीहिवद्भावौ ।

[ प्रश्नभाष्यम् ]

**अथ बहुव्रीहिग्रहणं किमर्थम् ? ॥**

[ समाधानभाष्यम् ]

**द्वन्द्वे मा भूत्-दक्षिणोत्तरपूर्वाणामिति।**

(प्र०) दक्षिणोत्तरपूर्वाणामिति । 'द्वन्द्वे चे'-त्यनेन सर्वाद्यन्तस्य द्वन्द्वस्य सर्वनामसंज्ञाप्रतिषेधो नाऽवयवानामिति'सर्वनाम्नो वृत्तिमात्र'इति पुंवद्भावः।

(उ०) **नावयवानामिति** । 'न बहुव्रीहा'वितिवद् 'द्वन्द्वे चिकीर्षिते ने'त्यर्थो न । यद्यपि द्वन्द्वेपि उद्भूतावयवभेदसमुदायस्य प्राधान्येन तं प्रति बहुव्रीहेरिव द्वन्द्वस्य गुणत्वेन तदप्राप्तेरयमेवोचितस्तथापि त्यदादीनां द्वन्द्वाऽभावेनाऽदन्ते काऽकचोरविशेषेण फलाऽभावात् । अन्यपर्याय-'त्व'च्छब्दस्य सर्वनामत्वे न मानम्, बहुसंमतत्वाद्गणे तत्पाठस्य । 'विभाषा जसी'त्यस्याऽसङ्गतेश्चेति भावः । एवं चेदं सूत्रमुपसर्जनप्रतिषेधानुवादकमेव । सूत्रकृता तदनभ्युपगमाद्वा कृतं तत् । अत एव कुक्कुटमयूर्यावित्यादावुपसर्जनह्रस्ववारणाय 'द्वन्द्वे ने'ति वचनमारब्धं 'गोस्त्रियो'रिति सूत्रे भाष्ये इति बोध्यम् । पुंवद्भाव इति । इदं चिन्त्यं, मात्रग्रहणेन सिद्धेः ॥

[ प्रयोजननिराकरणभाष्यम् ]

**नैतदस्ति प्रयोजनम् । 'द्वन्द्वे चे'ति प्रतिषेधे भविष्यति ॥**

[ प्रयोजनस्थापनभाष्यम् ]

**नाऽप्राप्ते प्रतिषेधे इयं विभाषाऽऽरभ्यते, सा यथैव 'न बहुव्रीहा'वित्येतं प्रतिषेधं बाधते एवं 'द्वन्द्वे चे'त्येतमपि बाधेत ॥**

[ प्रयोजननिराकरणभाष्यम् ]

**न बाधते ॥ किं कारणम् ? ॥ येन नाप्राप्ते तस्य बाधनं भवति । न चाऽप्राप्ते 'न बहुव्रीहा'त्येतस्मिन्प्रतिषेधे इयं विभाषाऽऽरभ्यते । 'द्वन्द्वे चे'त्येतस्मिन् पुनः प्राप्ते चाऽप्राप्ते च ।**

(प्र०) येन नाप्राप्त इति । अयमत्रार्थः-'न बहुव्रीहा'वित्यनेन सर्वः स्वविषयो व्याप्तः । 'द्वन्द्वे चे'त्यनेन तु न व्याप्तः, 'विभाषा जसी'ति जसि विकल्पविधानात् । यदि चाऽनेन द्वन्द्वे विभाषा स्याज्जस्यनुवाददोषः प्रसज्येत । बहुव्रीहौ त्वनुवाद-दोषमलभमाना कृतार्था सती परत्वादियं विभाषा 'द्वन्द्वे चे'त्यनेन बाध्यते ॥

( उ० ) ननु यथा बहुव्रीहौ 'द्वन्द्वे चे'त्यप्राप्तावपीयं प्रवर्तते, तथा द्वन्द्वे 'न बहुव्रीहा'वित्यप्राप्तेऽपीति, किमुच्यते 'नचाप्राप्ते' इतीत्यत आह-**अयमत्रार्थ इति** । एवं च' न चाप्राप्ते'इत्यस्य भाष्ये 'बहुव्रीहा'वित्यादिः । 'द्वन्द्वेचे'त्यस्य तु 'द्वन्द्वे'इत्यादिः । एवं च बहुव्रीहौ सर्वत्र निषेधप्राप्तिर्द्वन्द्वे तु तु 'द्वन्द्वे चे'त्यस्य न सर्वत्र प्राप्तिर्जसि विभाषया बाधादिति भावः । **सर्वः स्वविषय इति** । सर्वो दिग्बहुव्रीहिरित्यर्थः। **न व्याप्त इति** । 'सर्वो दिग्द्वन्द्व' इति शेषः । युक्त्यन्तरमप्याह-**यदि चेति** ॥

[ अभ्युपेत्य प्रयोजननिरासभाष्यम् ]

**अथ वा 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते, नोत्तरा'नित्येवमियं विभाषा 'न बहुव्रीहा'वित्येतं प्रतिषेधं बाधिष्यते 'द्वन्द्वे चे'त्येतं प्रतिषेधं न बाधिष्यते ॥**

[ प्रयोजननिरासान्तरभाष्यम् ]

**अथ वेदं तावदयं प्रष्टव्यः, 'इह कस्मान्न**

---

१ शङ्कतेव्याप्येति । नन्वित्यादिः। २ **गुणत्वेनेति** । उपसर्जनत्वेन सर्वनामसञ्ज्ञाया अप्राप्तेरित्यर्थः। ३ **अयमेव**-'द्वन्द्वे चिकीर्षिते ने'त्यर्थ एव । ४ ननु त्वच्छब्दे तान्ते काकचोर्विशेषोऽस्त्येवात आह-**अन्येति** । ५ **सिद्धेरिति** । मात्रग्रहणं हि कचित्सर्वनामत्वेन दृष्टानां संप्रत्यसर्वनामत्वेपि पुंवद्भावार्थम् । अतएव दक्षिणपूर्वायै इत्यत्र संज्ञाऽभावेपि पुंवद्भावः ॥

६ **इयं**-विभाषा । ७ **एवं च**-तदर्थस्येष्टत्वे च ।

भवति–या पूर्वा सोत्तराऽस्योन्मुग्धस्य सोऽयं पूर्वोत्तर उन्मुग्धस्तस्मै–पूर्वोत्तराय देही'ति ? ॥

'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥

(प्र०) लक्षणप्रतिपदोक्तयोरिति । 'दिक्समास' इति व्यपदेशो 'दिङ्नामानी'ति विहितस्य न्याय्यः, तत्र हि दिक्शब्दोऽस्ति ॥

(उ०) भाष्ये–या पूर्वा सोत्तरेति । यद्यपि वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं[1] प्रतीयते, 'या पूर्वात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धोत्तरा यस्ये'त्यर्थात् । एवं चोत्तराशब्दस्य पूर्वनिपातः प्राप्नोति, तथापि समासे तदप्रतीतावपि पूर्वापदस्य ज्ञानविशेष्यपर्यन्तलक्षकत्वेन गुणवाचकत्वाद्विशेषणत्वेन पूर्वनिपात इति बोध्यम् । तत्र हि दिक्शब्दोस्तीति । न च 'शेष'ग्रहणेनाऽनेकग्रहणेन वा सिद्धे उभयोपादानेन पुनर्विधानद्वारा सर्वत्र विशेषविहितत्वात्सोऽपि प्रतिपदोक्तः, स्पष्टं चेदमान्मदत इत्यत्र भाष्ये इति वाच्यम् । 'पूर्वशब्द उत्तरशब्दः समस्यते' इत्येवं विधानकल्पनेऽपि 'दिक्शब्दः समस्यते' इत्येवं विधानकल्पने मानाऽभावेन तत्र[2] दिक्शब्दाऽभावादिति भावः ॥

[ बहुव्रीहिग्रहणप्रत्याख्यानभाष्यम् ]

यद्येवं, नार्थो बहुव्रीहिग्रहणेन ॥

द्वन्द्वे कस्मान्न भवति ? ॥ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥

[ प्रयोजनान्तरभाष्यम् ]

उत्तरार्थं तर्हि बहुव्रीहिग्रहणं कर्तव्यम् ॥

[ प्रयोजननिरासभाष्यम् ]

न कर्तव्यम् । क्रियते तत्रैव–'न बहुव्रीहा'विति ॥

[ तत्स्थापनभाष्यम् ]

द्वितीयं कर्तव्यं । बहुव्रीहिरेव यो बहुव्रीहिस्तत्रैव यथा स्याद्बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत्–एकैकस्मै देहि ।

[ उक्तप्रयोजननिरासभाष्यम् ]

एतदपि नास्ति प्रयोजनम् । समास इति वर्त्तते । तेन बहुव्रीहिं विशेषयिष्यामः–'समासो यो बहुव्रीहि'रिति ॥

[ सूत्रमतेन एकदेशिनः प्रयोजनभाष्यम् ]

इदं तर्हि प्रयोजनम्–अवयवभूयतस्याऽपि बहुव्रीहेः प्रतिषेधो यथा स्यात्, इह[3] मा भूत्–वस्त्रमन्तरमेषां त इमे वस्त्रान्तराः, वसनमन्तरमेषां त इमे वसनान्तराः, वस्त्रान्तराश्च वसनान्तराश्च वस्त्रान्तरवसनान्तराः ॥ [ विभाषा दिक्समासे ] ॥

(प्र०) वस्त्रान्तरेति । उपसर्जनप्रतिषेधो वार्तिककारस्य, न सूत्रकारस्य, न बहुव्रीहावित्यारम्भादिति तन्मतेनेदं प्रयोजनमुक्तम ॥ [ विभाषादिक्स ] ॥

(उ०) भाष्ये अवयवभूतस्यापीति । प्रधानेन्याये[4]नाऽस्य म स्यात्, अस्य समूहं प्रति गुणत्वादिति भावः । तदेतदवयवपदेन सूचितम् । समूहावयवत्वाद्वृत्तिपदार्थस्येति बोध्यम् । 'वसन'शब्दो गृहवाचीति नैकशेषः । अन्तरशब्दस्य सर्वनामत्वेऽपि परनिपातो राजन्तादित्वाद्बोध्यः । तन्मतेनेति । किं चाऽवयवयोः सर्वनामत्वेऽपि द्वन्द्वस्यै[5]तस्वाऽभावेन सर्वनाम्नोऽविहितत्वाज्जुसो न दोष इत्येकदेश्युक्तिरिदं भाष्यम ॥ [ विभाषा दिक्स ] ॥

## न बहुव्रीहौ ॥१।१।२८॥

[ प्रश्नभाष्यम् ]

किमुदाहरणम् ? ॥

[ समाधानभाष्यम् ]

प्रियविश्वाय[6] ॥

(प्र०) न बहुव्रीहौ । प्रियविश्वायेति । प्रियशब्दस्य विश्वविशेषणत्वात्पूर्वनिपातं मन्यते ॥

[ समाधानबाधकभाष्यम् ]

नैतदस्ति प्रयोजनम् । सर्वाद्यन्तस्य बहुव्रीहेः प्रतिषेधेन भवितव्यम् । वक्ष्यति चैतत्–बहुव्रीहौ सर्वनामसङ्ख्ययोरुपसङ्ख्यानमिति । तत्र विश्वप्रियायेति भवितव्यम् ।

[ प्रयोजनान्तरभाष्यम् ]

इदं तर्हि-द्व्यन्याय त्र्यन्याय ॥

(प्र०) द्व्यन्यायेति । सङ्ख्यायाः सङ्ख्येयपरतन्त्रत्वाद्विशेषणत्वम्[7] ॥

---

१ उद्देश्यत्वं विधेयत्वञ्चेत्यर्थः । २ तत्र कल्पिते वाक्ये । ३ इह–'वस्त्रान्तरवसनान्तरा'इत्यत्र । माभूत्–सर्वनामसञ्ज्ञा माभूत् । ४ प्रधानेति । 'अन्यथे'त्यादिः । अस्य–तादृशबहुव्रीहेः । ५ द्वन्द्वस्येति । 'द्वन्द्वे चेति निषेधेने'ति शेषः । न दोषः–शीभावरूपो दोषः । ६ 'प्रियसर्वाय' पा० । ७ विशेषणत्वम्–अन्यार्थविशेषणत्वमपि ।

[ समाधानबाधकभाष्यम् ]

**ननु चात्रापि सर्वनाम्न एव पूर्वनिपातेन भवितव्यम् ॥**

(प्र०) सर्वनाम्न एवेति । नियमः कथमिति चेत् । उच्यते । विशेषणत्वात्सङ्ख्यायाः पूर्वनिपाते प्राप्ते एवमर्थमुपसङ्ख्यानं स्यात्-'सर्वनामसङ्ख्ययोः संनिपाते सर्वनाम्न एव पूर्वनिपातः स्या'दिति ॥

(उ०) न बहुव्रीहौ । नियमः कथमिति । सङ्ख्याया अपि तेन पूर्वनिपातविधानादिति भावः । प्राप्ते इति । 'सप्तमीविशेषणे' इत्यनेन ॥

[ समाधानसाधकभाष्यम् ]

**नैष दोषः । वक्ष्यत्येतत्,-'सङ्ख्यासर्वनाम्नोर्या बहुव्रीहिः पर[1]त्वात्तत्र संख्यायाः पूर्वनिपातो भवती'ति ॥**

(प्र०) वक्ष्यत्येतदिति । नैष वाक्यार्थो यस्त्वया कल्पित इत्यर्थः ॥

(उ०) नैष इति । लक्ष्यानुरोधादिति[1] भावः । न[2] चैवं वार्तिके सङ्ख्याग्रहणं व्यर्थं, विशेषणत्वादेव तस्य पूर्वनिपातप्राप्तेरिति वाच्यम् । परिच्छेदकत्वरूपविशेषणताया अन्यत्राऽपि संभवात् ॥

[ प्रथमप्रयोजनाभ्युपगमभाष्यम् ]

**इदं चाप्युदाहरणम्-प्रियविश्वाय ॥**

[ बाधकस्मारणम् ]

**ननु चोक्तं-'विश्वप्रियायेति भवितव्य'मिति ॥**

[ बाधकनिरासभाष्यम् ]

**वक्ष्यत्येतत्-'वा प्रियस्ये'ति ॥**

[ वृत्तिकृदुक्तसूत्रार्थप्रदर्शनाभाष्यम् ]

**न खल्वप्यवश्यं सर्वाद्यन्तस्यैव बहुव्रीहेः प्रतिषेधेन भवितव्यम् ॥ किं तर्हि ? । असर्वाद्यन्तस्यापि भवितव्यम् ॥ किं प्रयोजनम् ? ॥ अकज् मा भूदिति ॥ किंच स्याद्यद्यत्राऽकच्स्यात् ? ॥ को न स्यात् ॥ कश्चेदानीं काकचोर्विशेषः ? ॥ व्यञ्जनान्तेषु विशेषः-अहकं पिता यस्य मकत्पितृकः, त्वकं पिता अस्य त्वकत्पितृक इति प्राप्नोति । मत्कपितृकः त्वत्कपितृक इति चेष्यते ॥**

(उ०) भाष्ये वृत्तिकारोक्तं सूत्रार्थमाह--न खल्वपीति । अस्यार्थस्य यथा लाभस्तथा वक्ष्यते ॥

(प्र०) व्यञ्जनान्तेष्विति । उपलक्षणमेतत् । 'द्विकपुत्रो' 'द्वकिपुत्र'इत्यत्रापि विशेषदर्शनात् ॥

[ प्रश्नभाष्यम् ]

**कथं पुनरिच्छताऽपि भवता बहिरङ्गेण प्रतिषेधेनाऽन्तरङ्गो विधिः शक्यो बाधितुम् ? ॥**

(प्र०) कथं पुनरिति । अन्तरङ्गत्वात्संज्ञानिमित्तेनाऽकचा तावद्भाव्यं, पश्चात्पदान्तरसंनिधाने वर्तिपदार्थविशेषणाऽन्यपदार्थविवक्षायां बहिरङ्गेण बहुव्रीहिणेत्यर्थः ।

(उ०) बहिरङ्गत्वव्युत्पादनाय[3]-पदान्तरेत्यादि । 'वर्तिपदार्थविशेषणे'ति बहुव्रीहिः ॥ बहुव्रीहिणेति । 'ततो बहिरङ्गबहुव्रीहिनिमित्तकेन निषेधेने'ति शेषः ॥

[ समाधानभाष्यम् ]

**'अन्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते' गोमत्प्रिय इति यथा ॥**

(प्र०) अन्तरङ्गानपीति । 'प्रत्ययोत्तरपदयोश्चे'ति सामान्येन ज्ञापकं 'बहिरङ्गोऽपि समासाश्रयो विधिरन्तरङ्गं बाधते' इत्यस्यार्थस्येति भावः ॥

(उ०) सामान्येनेति । न लुग्विषयमेवेति भावः ॥

[ समाधानबाधकभाष्यम् ]

**क्रियते तत्र यत्नः--'प्रत्ययोत्तरपदयोश्चे'ति ॥**

(प्र०) क्रियते तत्रेति । लुग्विषयमेव तज्ज्ञापकमित्यर्थः ॥

(उ०) उत्तरपदग्रहणं चाऽत्र ज्ञापकम्-'अन्तर्वर्तिंसुपा प्रत्ययपरत्वेनैव सिद्धेरित्यादि सप्तमे निरूपयिष्यामः ॥ 'गोमत्प्रिय' इत्यत्र लुका हल्ङ्यादिलोपो बाध्यते, तेन नुम्दीर्घौ नेति भावः ॥

[ समाधानसाधकभाष्यम् ]

**ननु चेहाऽपि क्रियते—'न बहुव्रीहा'विति ॥**

---

१ परत्वात् । शब्दपरविप्रतिषेधात् । तत्र-तयोर्मध्ये ।
२ एवम्-उभयत्रापि सङ्ख्याया एव पूर्वनिपाते ।

३ बहुव्रीहेर्बहिरङ्गत्वव्युत्पादनायेत्यर्थः ।

**(उ०)** भाष्ये—**ननुचेहापीति** । वैयधिकरण्येन[1] संबन्धाश्रयणसामर्थ्यादन्तरङ्गस्या[2]पि निवृत्तिरित्यर्थः ॥

[ समाधानबाधकभाष्यम् ]

**अस्त्यन्यदेतस्य वचने प्रयोजनम् ॥ किम् ? ॥ प्रियविश्वाय ॥**

**(प्र०) अस्त्यन्यदिति** । अत्र हि विधिप्रतिषेधौ समानकालौ, कार्यकालत्वात्संज्ञाया इति मन्यते ॥

**(उ०)** प्रथमार्थे सप्तम्याश्रयणेन सामानाधिकरण्येनैव संबन्धो न तु विद्यत्यध्याहारेणेत्याशयेनाह–**अस्त्यन्यदिति** । **अत्र हीति** । बहुव्रीहेर्विभक्त्युत्पत्तौ सर्वनामकार्यस्मायादिप्राप्तेरिति भावः । तत्राऽवयवनिषेधसामर्थ्यादन्तरङ्गस्याऽपि बाध इति तात्पर्यम् ॥

[ समाधानसाधकभाष्यम् ]

**उपसर्जनप्रतिषेधेनाप्येतत्सिद्धम् ॥**

[ एतदर्थस्य सूत्रारूढताप्रदर्शनमतान्तरभाष्यम् ]

**अयं खल्वपि बहुव्रीहिरस्त्येव प्राथम[3]कल्पिको यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं च अस्ति तादर्थ्यात्ताच्छब्द्यम् । बहुव्रीह्यर्थानि पदानि बहुव्रीहिरिति । तद्यत्तादर्थ्यात्ताच्छब्द्यं, तस्येदं ग्रहणम् ॥**

**(प्र०) अयं खल्वपीति** । सूत्रोपारूढ एवायमर्थ इति प्रतिपादयति । अप्रयोगसमवायि यत्प्रक्रिया[4]वाक्यं तत्राऽयं प्रतिषेधो, न लौकिके वाक्ये प्रयोगार्हे, तस्य **पृथगेव** प्रयोगात्तादर्थ्याऽभावात् ।

**(उ०)** ननु एतत्प्रकरणस्थसप्तमीनिर्देशाः प्रथमार्थाः, अत एव 'द्वन्द्वे चे'ति निषेधः समुदायस्यैव, एवं च वाच्यवृत्त्याऽसर्वाद्यन्तस्य निषेधो न लभ्यत इत्यत आह भाष्ये–**अयं खल्वपीति** । एतेन[5] 'बहुव्रीहावित्यत्र 'चिकीर्षित' इत्याध्याहारेण सिद्धे बहुव्रीहिपदस्य लक्षणा व्यर्थे'ति परास्तम् । तद्व्याचष्टे–**सूत्रेति** । भाष्ये **ऐकपद्यम्**–एकार्थीभावः । एककार[6]कशक्तियोगो वा एकविभक्तित्वं बोध्यम् । **तादर्थ्यात्ताच्छब्द्यं यत्**–यो लभते **तस्येदं ग्रहण'**मित्यन्वयः । **'तद्यत्र तादर्थ्या'**दिति'पाठः क्वचित् । तत्र बहुव्रीह्यर्थवाक्ये संज्ञाया अप्राप्त्या तत्स्थपदपर्यन्तं लक्षणा बोध्या । तदेद्बहुव्रीह्यर्थानि पदानीत्यनेन सूचितम् । ननु वाक्ये निषेधश्चेदहकं पितेति प्रयोगो न स्यात्, किं च सुपरत्वाऽभावात्त्वाद्यौ न स्यातामह आह– **अप्रयोगेति** ॥

[ प्रत्याख्यानभाष्यम् ]

**गोनर्दीय[7] आह[8]–'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ' । त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिति ॥**

**(प्र०) गोनर्दीय आहेति** । सूत्रप्रत्याख्यानमेतत् । यथोत्तरं हि मुनित्रयस्य प्रामाण्यम् । **स्वरः**– 'स्वाङ्गशिटामदन्ताना'मित्याद्युदात्तत्वम् ॥

**(उ०)** तदेतद्वृत्तिकारोक्तं दूषयति–**अकच्स्वरौ त्विति** । एषा स्मृतिरविशेषात्सर्वप्रकरणविषया । **सूत्रप्रत्याख्यानेति** । समुदाये निषेधस्य महासंज्ञया उपसर्जनप्रतिषेधेन वा सिद्धत्वादिति भावः । एवंच महासंज्ञासिद्धार्थाऽनुवादकं प्रपञ्चार्थं सूत्रम् । एवं 'द्वन्द्वे चे'त्यपि सूत्रमिति सूत्रकृतो हृदयम् । **यथोत्तरमिति** । उत्तरोत्तरस्य बहुलक्ष्यदर्शित्वात् । स्पष्टं चेदं 'धिन्विकृण्व्यो'रिति सूत्रे भाष्ये । एतेन सूत्रसार्थक्याय वृत्तिकारोक्तं व्याख्यानमेव प्रबलमित्यपास्तम् । **शिडिति** सर्वनाम स्वरोदाहरणं विश्वप्रियायेति ॥

[ आक्षेपवार्तिकम् ]

*॥ *॥ प्रतिषेधे भूतपूर्वस्योपसंख्यानम् ॥ * ॥*

**प्रतिषेधे भूतपूर्वस्योपसङ्ख्यानं कर्तव्याम् । आढ्यो भूतपूर्व आढ्यपूर्वः, आढ्यपूर्वाय देहीति ॥**

**(प्र०) आढ्यपूर्वायेति** । अबहुव्रीह्यर्थं वचनम् ॥

**(उ०)** भाष्ये–**भूतपूर्वस्येति** । भूतपूर्वार्थकपूर्वाद्यन्तस्य समासस्येत्यर्थः ॥

---

१ **वयधिकरण्येनेति** । बहुव्रीहौ यानि सर्वादीनीत्येवं वैयधिकरण्येनेत्यर्थः । २ **अन्तरङ्गस्यापि**–अन्तरङ्गस्याप्यकचः । ३प्रथमकल्पे भवः–**प्राथमकल्पिकः**-सर्वप्रसिद्धः । मुख्य इति यावत् । भवार्थेऽध्यात्मादित्वाट्ठञ् । ४ अलौकिकं प्रक्रियावाक्यमित्यर्थः । **तस्य**–लौकिकप्रक्रियावाक्यस्य । **पृथगेव**–समाप्तिं विनैव । ५ **एतेनेति** । उक्तार्थसाधनस्य भाष्ये एवं प्रकारेण करणेनेत्यर्थः । अन्यथा तथैव सिद्धे लक्षणाप्रयासो व्यर्थः स्यादिति भावः । ६ विनिगमनाविरहादाह–**एककेति** । **यदि**त्यस्य व्याख्या–**य** इति । तावताऽप्यनिर्वाहादाह–**तत्रेति** । उभयत्रेत्यर्थः । भाष्यस्थस्य प्रथम**तत**दित्यस्य तु तस्मादित्यर्थः । तयोर्मध्य इत्यर्थो वा । **सूचितमिति** । अन्यथा पदानीति **न** वदेत् । ७ **गोनर्दीय इति** । 'स्त्वाहे'ति पा० । 'संशय'मिति पा० । गावो नर्दन्ति यस्मिन्पर्वतविशेषे तत्र भवो भाष्यकृत् । वार्तिककृदिति तु बृहच्छब्दरत्नकृतो हरिदीक्षिताः । गहादित्वाच्छः । ८ ननु प्रत्यवयवं निःसंशयाऽकजादिकरणेन बहुव्रीहाविति सूत्रस्य निर्विषयता स्यादत आह–**सूत्रप्रत्येति** । तत्परमेतदित्यर्थः । **एतेन**–तद्भाष्यविरोधेन ॥

[ समाधानवार्त्तिकम् ]

*॥*॥ प्रतिषेधे भूतपूर्वस्योपसंख्यानानर्थक्यं पूर्वादीनां व्यवस्थायामिति वचनात् ॥*॥*

**प्रतिषेधे भूतपूर्वस्योपसङ्ख्यानमनर्थकम् ॥ किं कारणम् ?॥ 'पूर्वादीनां व्यवस्थायामिति वचनात्' । पूर्वादीनां व्यवस्थायां सर्वनामसंज्ञोच्यते । न चात्र व्यवस्था गम्यते ॥ [ न बहुव्रीहौ ] ॥**

**(प्र०) न चात्रेति ।** प्राधान्येनेति भावः । अत्र हि पूर्वत्वमाढ्यत्वस्य विशेषणम् । यथाऽतिपूर्वायेति पूर्वार्थोऽतिक्रान्तस्येत्युपसर्जनत्वात्पूर्वार्थस्य न भवति संज्ञा । मयूरव्यंसकादित्वात्[1]समासः ॥

**(उ०) प्राधान्येनेति ।** प्रयोगकालरूपस्याऽवधेर्झटिति बोधेन व्यवस्थासत्त्वेऽपि पूर्वार्थस्योपसर्जनत्वान्न भवतीति भावः ॥ **[ न बहुव्रीहौ ] ॥**

## तृतीयासमासे ।१।१।२९।

[ प्रश्नभाष्यम् ]

**समास इति वर्तमाने पुनः समासग्रहणं किमर्थम् ? ॥**

[ समाधानभाष्यम् ]

**अयं तृतीयासमासोऽस्त्येव प्राथमकल्पिको यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं चेति । अस्ति च तादर्थ्यात्ताच्छब्द्यं—तृतीयासमासार्थानि पदानि तृतीयासमास इति । त[2]द्यत्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम् ॥**

**(प्र०) तृतीयासमासे ।** अत्र तादर्थ्यात्ताच्छब्द्यलाभे सति प्रयोगार्हस्य लौकिकस्य वाक्यस्य ग्रहणे सति **'मासेन पूर्वाये'**ति प्रयोगः साधुः। वाक्यभेदेन च मुख्ये समासे निषेधः ॥

**(उ०) तृतीया ।** अयमपि समुदायनिषेध एव, 'सर्वाद्यन्ततृतीयासमासः सर्वनाम ने'त्यर्थः । **प्रयोगार्हस्येति ।** 'मासेन पूर्वाय देही'ति भाष्योदाहरणादिति भावः । भाष्ये—**तादर्थ्या**दिति च लोकदृष्टयोक्तम् । लोको हि तस्मादेव वाक्यात्तां वृत्तिं निष्पन्नां मन्यते । नन्वेवं सति समुदायस्य निषेधो न लभ्यतेऽत आह—**वाक्यभेदेन चेति ।** आवृत्त्येति भावः ॥

[ समाधानान्तरभाष्यम् ]

**अथवा समास इति वर्त्तमाने पुनः समासग्रहणस्यैतत्प्रयोजनं—'योगाङ्गं यथोपजा[3]येत । सति च योगाङ्गे योगविभागः करिष्यते—'तृतीया' । तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न[4] भवन्ति । मासपूर्वाय देहि । संवत्सरपूर्वाय देहि । ततः—'असमासे' । असमासे च तृतीयायाः सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासेन पूर्वाय देहि, संवत्सरेण पूर्वाय देहीति ॥ [ तृतीयासमासे ]**

**(प्र०) अथवेति ।** पर्युदासाश्रयणात्समाससदृशस्य वाक्यस्य ग्रहणम् । 'पूर्वसदृशे'ति च प्रतिपदोक्तस्तृतीयासमासो गृह्यते ॥ **[तृतीयासमासे] ॥**

**(उ०)** भाष्ये—**अथवेति । योगाङ्गमिति ।** योगरूपमङ्गमष्टाध्याय्या इत्यर्थः । **तृतीयासमासे सर्वादीनीति ।** तृतीयासमासरूपाणि सर्वाद्यन्तानीत्यर्थः । अन्[5]यथा पूर्वशब्दस्य निषेधेऽपि समासस्य तदनिषेधादुदाहरणे स्मै स्यात् । अवयवस्य तत्त्वेऽपि ततो विभक्तेरविहितत्वान्न दोषः। सप्तम्युच्चारणं तु सूत्रानुरोधादिति बोध्यम् । **तृतीयायाः सर्वादीनीति ।** तृतीयान्तात्पराणीत्यर्थः । त[6]द्बीजं दर्शयति—**पर्युदासेति ।** भाष्ये पञ्चम्युपादानात्पूर्वपदभूते नाऽस्य प्रवृत्तिः। **सदृशस्येति ।** प्रयोगार्हत्वेन समाससमानप[7]दार्थकत्वेन च सादृश्यम् । **प्रतिपदोक्त इति ।** तेन 'मासेन कृताय पूर्वस्मै'इत्यत्र, तदर्थके 'मासपूर्वस्मै' इत्यत्र च न दोषः । अत[8] एव भाष्ये प्रथमोपस्थितानन्यान्सर्वादीन्विहाय पूर्व एवोदाहृत इति बोध्यम् ॥ **[ तृतीयासमासे ]**

## विभाषा जसि ॥१।१।३१॥

**जसः कार्यं प्रति विभाषा । अकज्झि न भवति । ['द्वन्द्वे चे'ति प्रतिषेधात् ]॥**

**(प्र०) विभाष जसः कार्यं प्रतीति ।** जस इ जसीति निर्देशादिकारेण ईकारस्य ग्रहणादित्याहुः ।

१ 'त्वाचात्र समासः' । २ 'तद्यत्र ताद' पा० । ३ 'विज्ञायेत' पा० । ४ क्वचिन्न । ५ **अन्यथेति ।** तदनङ्गीकार इत्यर्थः । ६ **तद्बीजम्**—असमासग्रहणेन तादृशवाक्यग्रहणे बीजम् । ७ **पदार्थकत्वेन**—पदार्थकत्वोभयत्वेन । ८ **अत एव**—प्रतिपदोक्तग्रहणस्येष्टत्वादेव । ९ इदं वार्त्तिकमित्यन्ये १० अयं पाठः क्वाचित्कः ।

अन्येतु कार्यकालत्वात्संज्ञाया 'जसः शी'त्यत्रैवोपस्थानं मन्यन्ते ॥

(उ०) विभाषा ज। इकारेणेति। तद्रूपस्य सर्वनामकार्यस्याऽभावादिति भावः। सूत्रे जसीति चे[1] लुप्तसप्तमीकं, लुप्तद्वितीयान्तं वा। अन्येत्विति। 'जसी'त्यस्य च-'त्प्रघटिते[2] सर्वनामकार्यविधायकसूत्रे 'द्वन्द्वे विभाषे'ति संज्ञा[3] विकल्पायोपतिष्ठते' इत्यर्थ इत्यभिमानः। भाष्ये-'अकज्विज्ञ न भवती'त्यस्य समुदायनिष्ठकुत्साबोधकोऽकज्ञ भवतीत्यर्थः। कृताऽकचा समासस्तु भवत्येव, तत्रे[4] सर्वाद्यन्तत्वादनेन विकल्पो भवत्येव, समुदायकुत्साविवक्षायां केनाऽयं विकल्पः, द्वन्द्वस्य सर्वाद्यन्तत्वाऽभावादिति बोध्यम् ॥

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥१।१।३३॥

[ आक्षेपवार्तिकम् ]

*॥*॥ अवरादीनां च पुनः सूत्रपाठे ग्रहणानर्थक्यं, गणे पठितत्वात् ॥ * ॥*

**अवरादीनां च पुनः सूत्रपाठे ग्रहणमनर्थकम् ॥ किं कारणम् ? ॥ 'गणे पठितत्वात्'॥ गणे ह्येतानि पठ्यन्ते ॥**

( प्र० ) पूर्वपरा। अवरादीनां चेति। किमर्थं प्रतिपदं पूर्वादीनि जसि विभाषार्थं पठितानि, यावता गण एवाऽर्थविशेषेण विशिष्टानि नित्यसर्वनामसंज्ञार्थं पठ्यन्ते। तत्र 'पूर्वादीनि नवे'त्येवं सूत्रं पठितव्यम्। प्राप्तविभाषा चेयं भविष्यति। तेषामेवाऽत्र प्रत्यभिज्ञानाद्गण एवाऽर्थनिर्देशः पाठविशेषणं भविष्यति। यथा 'तिङो गोत्रादीनी'त्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादिपाठविशेषणमिति वार्तिककाराभिप्रायः। 'अवरादीना'मित्यत्र प्रकारार्थ आदिशब्दस्तेन पूर्वपरशब्दावपि गृह्येते ॥

( उ० ) पूर्वपरा। भाष्ये-पुनः सूत्रपाठे इति। गणपाठोत्तरकालिके सूत्रपाठे इत्यर्थः। ननु 'पूर्वादीनि नवे' त्येतावत्युक्ते गणस्थग्रहणेन प्राप्तविभाषात्वेऽभावतात्पर्यकत्वेन गौरवादर्थान्तरे एवाऽप्राप्तविभाषा स्यादत आह-तेषामेवात्रेति। नन्वेवमर्थविशेषलाभो न स्यादत आह-गणे एवेति। प्रकारार्थ इति। वस्तुतो लघ्वक्षरत्वाद जाद्यन्तत्वाच्च सूत्रेऽवरशब्दस्यैव पूर्वनिपात उचित इत्याशयेनाऽवरादीनामित्युक्तिर्वार्तिककृत इति बोध्यम् ॥

[ आक्षेपबाधकभाष्यम् ]

**कथं पुनर्ज्ञायते – स[6] पूर्वः पाठोऽयं पुनः पाठ इति ? ॥**

(प्र०) कथं पुनरिति। पूर्वं गणपाठो नियतसन्निवेशो व्यवस्थितः। पश्चात्तु सूत्रपाठ इत्यत्र प्रमाणाऽभावात्। आदिशब्दः प्रकारवाची दृष्टो, व्यवस्थावाची च। तत्र 'सर्वादीनी'त्यत्रादिशब्दस्य प्रकारार्थताऽपि सम्भवति। प्रकारार्थतां[7] प्रदर्शनाय पश्चादभियुक्ता गणान् पठन्ति। यदुक्तं—'श्रेण्यादयः पठ्यन्ते कृतादिराकृतिगण' इति। कृतादयश्च वृत्तिकारैर्निदर्शनार्थं पठिताः। तत्र वेदे 'मध्यमस्याम्' 'अवमस्या'मिति प्रयोगदर्शनात्प्रकारार्थताऽऽदिशब्दस्य 'सर्वादीनी'त्यत्र सम्भाव्यत इति प्रश्नः ॥

(उ०) ननु 'सर्वादीनी'ति व्यवहाराद्गणपाठस्य पूर्वता निश्चीयतेऽत आह-आदिशब्द इति। ननु गणपाठस्य निदर्शनार्थत्वे आदिपदस्य प्रकारार्थता स्यात्, तदेव कुत इत्यत आह—तत्र वेद इति। प्रकारेति। सर्वनामकार्यवत्त्वमेव सादृश्यमिति भावः ॥

[ आक्षेपस्थापकभाष्यम् ]

**तानि हि पूर्वादीनि, इमान्यवरादीनि।**

(प्र०) तानि हि पूर्वादीनीति। पूर्वकालपठितत्वात्पूर्वशब्देन सर्वशब्दोऽभिधीयते। तेनायमर्थः—'सर्वादीनी'त्यत्र व्यवस्थावाच्यादिशब्दः। प्रकारवाचित्वे हि कृत्स्नादीनामपि संज्ञा स्यात्। 'मध्यमस्या'मिति तु व्यत्ययेन च्छान्दसः प्रयोगः। इमान्यवरादीनीति। अवरकालपाठात्पूर्वशब्दोऽवरशब्देनोच्यते। तेन पूर्वं गणपाठः, पश्चात्सूत्रपाठः इत्यर्थः।

(उ०) छान्दसः प्रयोग इति। एवं च 'सर्वादीनी' ति व्यवहारादेव गणपाठस्य पूर्वत्वनिश्चय इति भावः। अत्र[8] वदन्ति-'तानि पूर्वादीनी'त्यनेनैव गणपाठस्य पूर्वत्वे सिद्धे 'इमान्यवरादीनी'ति व्यर्थम्। अस्य हि पूर्वादीनीत्यर्थः कैयटलभ्यते। नचाऽयं सूत्रपाठस्य पुनः पाठत्वे साधकः। किं चेमान्यपि पूर्वादीनीति शङ्काऽप्यनुपपन्ना, त्वदुक्तरीत्या

१ चस्त्वर्थे। लुप्तसप्तमीपक्षे जस ईकारे कर्त्तव्ये इत्यर्थः। लुप्तद्वितीयान्तमितिपक्षे–जसम्बन्धिनमीकारं प्रतीत्यर्थो बोध्यः। २ विभाषा जसीत्यस्येत्यर्थः। ३ सर्वनामसञ्ज्ञाविकल्पायेत्यर्थः। ४ तत्र–कृताऽकचा समासे। ५ 'गोत्रादी'ति क्वचित्। ६ 'पूर्वपाठः'। ७ 'प्रकारार्थप्रद'। ८ कैयटोक्तं खण्डयति–अत्रेत्यादिना।

हेतोरभिधानात्[1]। एवं च 'हेत्वभिधानमन्तरेणे'त्याद्यपि चिन्त्यमेव। तस्मादत्राऽऽदिशब्द[2] आश्रयवाची, 'भीष्मादिश्च सुयोधन' इतिवत्। **तानि**-गणपठितानि[3] पूर्वकालाश्रयाणि, **इमानि**- अष्टाध्यायीपठितानि अवरकालाश्रयाणीत्यर्थः। एवं च तत्तत्कालकृतत्वात्पूर्वादिव्यवहार इति भावः॥

[ आक्षेपबाधकभाष्यम् ]

**इमान्यपि पूर्वादीनि ॥**

( प्र० ) हेत्वभिधानमन्तरेणाऽशक्योऽयमर्थः प्रतिपत्तुमित्याह-**इमान्यपीति**।

(उ०) तत्र मानाऽभावमूलकं शङ्कते-**इमान्यपि**। अष्टाध्यायीपठितान्यपि पूर्वादीनि पूर्वकालाश्रयणीत्यर्थः। अत्राऽपिरेवार्थे। अन्यथोभयोः परस्परापेक्षया पूर्वकालत्वाऽसंभवेनाऽपिरनर्थक एव स्यात्। 'सर्वादीनी'त्यादौ सर्वत्रा दिशब्दः प्रकार एव। तत्तत्कार्यवत्त्वेन च सादृश्यम्। अतिप्रसङ्गस्त्वनभिधानान्नेत्याशयः। ध्वनितं चेदं कस्येदिति सूत्रे भाष्ये इति।

[ आक्षेपसाधकभाष्यम् ]

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'स पूर्वः पाठोऽयं पुनः पाठः' इति, यदयं 'पूर्वादिभ्यो नवभ्यो वे'ति नवग्रहणं करोति। नवैव हि पूर्वादीनि ॥**[6]

(प्र०) **नवग्रहणमिति**। तत्र हि नवग्रहणं त्यदादिनिरासार्थं क्रियते। यदि च नियतसंनिवेशो गणपाठः पूर्वस्ततोऽधिकव्यवच्छेदाय नवग्रहणं कर्तव्यम्।

(उ०) **नवैवेति** भाष्ये। अष्टाध्याय्यां पूर्वेत्यादिसूत्रपठितानीत्यर्थः। अष्टाध्यायाः पूर्वकालत्वे पूर्वादीनीतिसूत्रेऽष्टाध्यायीसूत्रपठितानामेव तेषां ग्रहणं स्यादिति भावः॥

[ समाधानभाष्यम् ]

**इदं तर्हि प्रयोजनम्—'व्यवस्थायामसंज्ञायामिति वक्ष्यामी'ति ॥**

(प्र०) **इदं तर्हीति**॥ प्रतिनियतविशेषणाऽभिधानाय प्रतिपदपाठ इत्यर्थः।

(उ०) **प्रतिनियतेति**। पूर्वादिसप्तकस्यैव 'व्यवस्थाया'मित्यादि, स्वशब्दस्यैवा'ऽज्ञातो'त्यादि, अन्तरशब्दस्यैव 'बहिर्योगे'त्यादि विशेषणाभिधानायेत्यर्थः॥

[ आक्षेपभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्। एवंविशिष्टान्येवैतानि गणे पठ्यन्ते ॥**

(प्र०) **एवं विशिष्टान्येवेति**। पाठविशेषणाय गणेऽर्थनिर्देश इत्यर्थः।

[ समाधानभाष्यम् ]

**इदं तर्हि प्रयोजनं—'द्व्यादिपर्युदासेन पर्युदासो मा भू'दिति ॥**

(प्र०) **द्व्यादिपर्युदासेनेति**। त्यदादीनि पठित्वा गणे कैश्चित् पूर्वादीनि पठितानि। तत्राऽद्व्यादिभ्य इति तसिलादीनां प्रतिषेधः प्राप्नोति। तत्र पुनः सर्वनामसंज्ञा तसिलादिविधानार्थं विधीयते। येन द्व्यादिपर्युदासो बाध्यते। यथा 'अनुर्लक्षणे' इति पुनर्विधानेन हेतुतृतीया बाध्यते। वाक्यभेदेन च विभाषा जसि विधीयते। यथा'ऽमि पूर्वः' 'संप्रसारणाच्चे'त्यत्र वाक्यभेदेन 'वा छन्दसी'ति संबन्धाच्छन्दसि विकल्पः क्रियते इति भावः।

(उ०) अष्टाध्यायीपाठेन यथा द्व्यादिपर्युदासाऽभावस्तथा दर्शयति-**तत्र पुनरिति**। पुनः संज्ञाविधानेन पुनः—कार्यविधानद्वारा द्व्यादिपर्युदासो बाध्यत इत्यर्थः। **इति पुनर्विधानेनेति**। एतत्संज्ञाकल्पितेन द्वितीयापुनर्विधानेनेत्यर्थः। नन्वेवं जसि विकल्पो न स्यादत आह-**वाक्यभेदेन चेति**। 'विभाषा जसी'त्यनुवृत्त्येत्यर्थः॥

[ समाधानबाधकभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति-'नैषां द्व्यादिपर्युदासेन पर्युदासो भवती'ति यदयं 'पूर्वत्रासिद्ध'मिति निपातनं[9] करोति। वार्तिककारश्च पठति-'जश्भावादिति चेदुत्तरत्राऽभावादपवादप्रसङ्गः'-इति ॥**

(उ०) **जश्भावादिति चेदुत्तरत्रेति**। '**ढो ढे लोप**' इति सूत्रे वार्तिकमिदम्। एतैश्च सूत्रवार्तिकप्रयोगैस्त्यदादितः पूर्वमेव गणे पूर्वादिपाठ इति बोध्यत इति भावः॥

[ समाधानभाष्यम् ]

**इदं तर्हि प्रयोजनं-'जसि विभाषां**

१ **हेतोः**-पूर्वकालपठितत्वमूलकस्य सर्वादिनीति व्यवहारस्य। २ भाष्यं योजयति—**तस्मादिति**। ३ 'पूर्वादीनी'ति शेषः। ४ भाष्ये पूर्वशब्दः कालवाचीत्याशयेन **पूर्वकालेति**। ५ 'पूर्वपाठः' पा०। ६ 'यत्पूर्वादिभ्यो नव ग्रहणं' पा०। ७ 'सूत्री'। ८ **पाठेन**-अष्टाध्यायां प्रतिपदपाठेन। ९ **निपातनमिति**। निर्देशमित्यर्थः।

वक्ष्यामी[1]'ति ॥ [ पूर्वपरावर ]

(प्र०) इदंतर्हीति । यदि 'पूर्वादीनि नवे'त्युच्येत, तदा गणपाठेऽर्थनिर्देशस्य नित्यसंज्ञाविधान एवोपयुक्तत्वात् पाठविशेषणे प्रमाणाऽभावादप्राप्तविभाषेयमर्थान्तरे पूर्वादीनां जसि विज्ञतये, प्राप्तविभाषायामुक्तानुवाददोष[2]प्रसङ्गादप्राप्तविभाषायामपूर्वविधानात् ॥ विभाषामिति । प्राप्तविभाषामित्यर्थः । प्रतिपदपाठं चाऽन्तरेणाऽसंकरेणार्थनिर्देशोऽशक्यः कर्तुमिति भाष्यकारेण प्रतिपदपाठः समर्थितः ॥

(उ०) पाठविशेषणे प्रमाणाऽभावादिति । व्याख्यानाऽतिरिक्तप्रमाणाऽभावा[3]दिति भावः । त[4]था-व्याख्याने बाधकमाह—उक्तानुवादेति । भावांशे इत्यर्थः । अभावतात्पर्यकत्वेन गौरवं दोष इत्यपि बोध्यम् । नन्व प्राप्तविभाषात्ववारणायाऽर्थमात्रनिर्देशः क्रियतां, किं प्रतिपदपाठेनेत्यत आह—प्रतिपदेति । असंकरेणेति । सप्तस्वेव व्यवस्थासंबन्धः, स्वेऽज्ञातिधनयोरन्तरे बहिर्योगादेरित्येवंरूप इत्यर्थः । एवमप्याद्यसूत्रे 'पूर्वादीनि व्यवस्थायामसंज्ञाया'मित्येव कुतो न सूत्रितम्, सप्तानामेव व्यवस्थायां वृत्तेरिति चिन्त्यम् ॥ [ पूर्वपरावर ]

## स्वमज्ञातिधनाख्यायाम् १।१।३४।

[ प्रश्नभाष्यम् ]

**आख्याग्रहणं किमर्थम् ? ।**

(प्र०) स्वमज्ञा । आत्मात्मीयज्ञातिधनवचनः स्वशब्दः । आमिनिज्विषयस्त्वैश्वर्यवाची । आख्याग्रहणमिति । 'स्वे पुत्राः' 'स्वे गाव' इत्यत्र स्वशब्द आत्मीयत्व[5]मेवाह । पुत्रादिशब्दस्तु ज्ञातिधनयोर्वर्त्तते, न स्वशब्द इति प्रतिषेधो न भविष्यतीति प्रश्नः ॥

(उ०) स्वमज्ञाति । आत्मीयत्वमेवाहेति । आत्मीयत्वेनैव ततः प्रतीतिर्नतु धनत्वादिनेत्यर्थः ॥

[ समाधानभाष्यम् ]

**ज्ञातिधनपर्यायवाची यः स्वशब्दस्तस्य यथा स्यादिह मा भूत्—स्वे पुत्राः, स्वाः पुत्राः, स्वे गावः, स्वा गावः ॥**

(प्र०) तस्य यथा स्यादिति । 'प्रतिषेध' इति शेषः । इह मा भूदिति । असत्याख्याग्रहणे 'स्वे पुत्रा' इत्यादौ स्यादेव प्रतिषेधः, अत्राप्यात्मीयत्वं प्रवृत्तिनिमित्तमुपादाय स्वशब्दो ज्ञातिधनयोर्वर्तते, पुत्रादिभिः सामानाधिकरण्यात् । आख्याग्रहणे तु सति न दोषः । स्वशब्दो ह्यत्रात्मीयस्याऽऽख्या न तु ज्ञातिधनयोरिति विधिः सिद्धः ।

(उ०) ईदृशविशेषलाभार्थमेवाऽऽख्याग्रहणम्, तदभावे आत्मीयत्वादिना ज्ञातिधनवाचकेऽपि निषेधः स्यादित्युत्तरम् । प्रतिषेध इति शेष इति । 'अज्ञाती'त्यादिप्रतिषेध इत्यर्थः । न तु ज्ञातिधनयोरिति । ज्ञातित्वधनत्वयोरित्यर्थः ॥

## अन्तरं बहिर्योगोपसंव्यानयोः ॥ १ । १ । ३५ ॥

[ प्रत्याख्यातृभाष्यम् ॥ १ ॥ ]

*॥*॥ उपसंव्यानग्रह[6]णानर्थक्यं बहिर्योगेण कृतत्वात् ॥*॥*

**उपसंव्यानग्रहणमनर्थकम् ॥ किं कारणम् ? ॥ 'बहिर्योगेण कृतत्वात्' । बहिर्योग इत्येव सिद्धम् ॥**

(प्र०) अन्तरम् । बहिरित्यनावृतो देश उच्यते, तेन योगो बहिर्योगः । स च बाह्यस्य भवति । 'अन्तरे गृहा' इति नगरबाह्याश्चाण्डाला[7]दिगृहा उच्यन्ते । यदा तु बहिश्शब्देन बाह्य उच्यते, बाह्येन योगो बहिर्योग इति, तदा नगराभ्यन्तरे ये गृहास्त उच्यन्ते । उभयथाऽपि स्मर्यते । उपसंव्यानशब्दोऽपि कर्मकरणार्थभेदाद्भिन्नार्थः । ततः सर्वथा बहिर्योगात्सिद्धिं मत्वाह—उपसंव्यानेति ।

(उ०) अन्तरं । भिन्नार्थ इति । नानार्थ इत्यर्थः । ततः सर्वथेति । कर्मणि द्वितीयव्याख्यानेन, करणे आद्यव्याख्यानेनेति बोध्यम् ॥

[ स्थापनवार्तिकम् ]

*॥*॥ न वा शाटकयुगाद्यर्थम् ॥*॥*

**न वाऽनर्थकम् ॥ किं कारणम् ? । 'शाटकयुगाद्यर्थम्' । शाटकयुगाद्यर्थं**

१ वक्ष्यामि—ब्रवामि । छान्दसत्वाद्वर्त्तमाने लृट् । २ 'दोषादप्राप्त' पा० । ३ व्याख्यानथाऽगतिकगतिरिति न तत्साधकमित्याशयः । ४ तथेति । प्राप्तविभाषेत्यर्थः ।

५ आत्मीयत्वमिति । प्रकारतयाऽऽत्मीयत्वमेवाहेत्यर्थः ।
६ 'ग्रहणमनर्थकं' पा० ।
७ 'चण्डाला' पा० ।

**तर्हीदं वक्तव्यम्, यत्रैतन्न ज्ञायते-किमन्तरीयं किमुत्तरीयमिति ॥**

( प्र० ) **न वेति** । समानप्रमाणे शाटकयुगे परिहिते इदं न ज्ञायते किमुत्तरीयं किमन्तरीयमेतदित्यर्थः ॥

( उ० ) नन्वल्पमहत्परिमाणाभ्यामन्तरीयोत्तरीयत्वनिर्णयो भविष्यतीत्यत आह-**समाने इति** । पदत्रयमपि सप्तम्यन्तम्[1] । भाष्ये 'किमुत्तरीयं किमन्तरीयमित्येतन्न ज्ञायत' इत्यन्वयः ॥

[ प्रत्याख्यानसाधकभाष्यम् ]

**अत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी[2] भवति निर्ज्ञातं तस्य भवति-'इदमन्तरीयमिदमुत्तरीय'मिति ॥**

( प्र० ) **अत्रापीति** । यथोपसंव्यानत्वं भाविबुद्ध्या व्यवस्थाप्यते तथा बहिर्योगोऽपीत्यर्थः । अन्ये त्वाहुः-आदिशब्दो वार्तिके **शाटकयुगाद्यर्थ**मित्यत्रोपात्तः । तत्र शाटकानां त्रये वा[3] चतुष्टये वा तृतीयचतुर्थयोर्बहिर्योगाऽभावादुपसंव्यानग्रहणं कर्तव्यम् ।

( उ० ) **तृतीयचतुर्थयोरिति** । शरीरसंयुक्तयोरित्यर्थः । भाष्यस्य त्वयं भावः-'बहिर्योग इति स्मर्यते । तेन परम्परया बाह्यसंबद्धस्यापि सिद्धि'रिति ॥

[ आक्षेपवार्तिकम् ]

*[ ॥*॥ अपुरि[4] ॥*॥ ]*

**अपुरीति वक्तव्यम् । इह मा भूत्-अन्तरायां पुरि वसतीति ॥**

(प्र०) **अपुरीति** । गणसूत्र एतत्कर्तव्यम् । लिङ्गविशिष्टपरिभाषया ग्रहणप्रसङ्गात्[5] । इह त्वनेन नार्थः, 'अत' इति जसः शीविधानाट्टाबन्तात्[6]प्राप्त्यभावात् । पूः कस्मिंश्चिद्देशे प्राकाराभ्यन्तरे क्रियते, कचित्प्राकाराद्बहिरित्यस्ति[7] पुरो बहिर्योगः ॥ ३५ ॥

( उ० ) ननु जसि विकल्पविधायकसूत्रस्थवार्त्तिकोदाहरणं सप्तम्यन्तमयुक्तमत आह-**गणेति** । पूःशब्दस्य विशेष्यत्वे इत्यर्थः । स च स्त्रियामेव । तदाह-**इहत्विति** ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ वाप्रकरणे[8] तीयस्य ङित्सूपसङ्ख्यानम् ॥*॥*

**वाप्रकरणे तीयस्य ङित्सूपसङ्ख्यानं कर्तव्यम् । द्वितीयायै, द्वितीयस्यै । तृतीयायै, तृतीयस्यै । "विभाषा द्वितीयातृतीयाभ्या"त्येतन्न वक्तव्यं भवति ॥**

[ आक्षेपसमाधानभाष्यम् ]

**किं पुनरत्र ज्यायः ? ॥**

**उपसंख्यानमेवाऽत्र ज्यायः । इदमपि सिद्धं भवति-द्वितीयाय द्वितीयस्मै । तृतीयाय तृतीयस्मै ।**

## स्वरादिनिपातमव्ययम् ॥१।१।३६॥

[ आक्षेपभाष्यम् ]

**किमर्थं पृथग् ग्रहणं स्वरादीनां क्रियते न चादिष्वेव पठ्येरन् ? ॥**

(प्र०) **स्वरादिनि** । **किमर्थमिति** । स्वरादिषु किंचित्क्रियाप्रधानं, किञ्चित्साधनप्रधानमिति, असत्त्ववचनत्वाच्चादिष्वेव स्वरादीनि पठितव्यानीति मत्वा प्रश्नः ।

( उ० ) **स्वरादि** । **क्रियाप्रधानमिति** । क्रियायामेव विशेषणमित्यर्थः । यथा-हिरुगादि । एतच्चोत्तरसूत्रे कैयटे स्पष्टम् । **किञ्चिदिति** । यथोच्चैरादि ॥

[ समाधानभाष्यम् ]

**चादीनां वा[9] असत्त्ववचनानां निपातसंज्ञा, स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां च ॥**

(प्र०) **स्वरादीनां पुनरिति** । 'स्वस्ति वाचयति', 'स्वः पश्ये'ति क्रियासम्बन्धेऽनेकशक्त्यदर्शनात्सत्त्ववाचित्वनिश्चयः, 'लोहितगङ्ग'मित्यादीनामव्ययानां सत्त्वधर्मनपुंसकत्वदर्शनाद्व्यक्तमेव सत्त्ववाचित्वम् ।

( उ० ) **अनेकशक्तीति** । 'स्वस्तिष्ठ' 'स्वरागत' इत्यादावित्यर्थः । अनेककारकशक्तियोग एव च सत्त्व[10]मिति भावः । भाष्ये 'सत्त्ववचनानां चे'त्यस्याऽव्ययसंज्ञेष्यत' इति शेषः । **लोहितेति** । अव्ययीभावश्चे'ति स्वरादिषु पठ्यत इति मते इदम् ॥

---

१ **सप्तम्यन्तम्**-सत्सप्तम्यन्तम् । 'हस्तेन धृत' इति शेषः । २ 'प्रेक्ष्यपूर्व' पा० । ३ क्वचिन्न । ४ लुप्तस्यात् । ५'प्रसङ्गः' । ६'दावन्ता' पा० । ७ **अस्तीति**। तथा चान्तरायामित्यस्य प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां चेत्यर्थः। ८ क्वचिन्न। ९ **वै** एवार्थे, व्युत्क्रमेणाऽन्वयः। असत्त्ववचनानामेवेत्यर्थः । पुनश्शब्दस्त्वर्थे । १० **'सत्त्वत्व'**मित्यन्ये पठन्ति ।

[ आक्षेपभाष्यम् ]

**अथ किमर्थमुभे संज्ञे क्रियेते, न निपातसंज्ञैव स्यात् ? ॥**

(प्र०) न निपातसंज्ञैवेति । 'प्राग्रीश्वरान्निपाताः' 'स्वरादीनि' 'चादयोऽसत्त्वे' इति सूत्रन्यासः कार्य इत्यर्थः ।

(उ०) नन्वसत्त्ववाचित्वाऽभावाच्चादिषु पाठाऽभावाच्च कथं निपातत्वमत आह–**प्राग्रीति** ॥

[ समाधानभाष्यम् ]

**नैवं शक्यम्। 'निपात एकाजना'ङिति प्रगृह्यसंज्ञोक्ता, सा स्वरादीनामप्येकाचां प्रसज्येत [—क्[2] इव केव ] ॥**

(प्र०) **स्वरादीनामिति**। 'किमोऽ'दित्यत्प्रत्ययो 'दक्षिणादा'जित्याच् । केन्प्रभृतयस्तु कृत एकाचः सन्तीति भावः ॥

(उ०) **किमोदिति** । तद्धितश्चेति सूत्रमपि तत्संज्ञाविधायकमेव । एतत्प्रयोजनसत्त्वादेव केवलानामपि तेषां संज्ञा स्यादिति भावः ॥

[ आक्षेपभाष्यम् ]

**एवं तर्ह्यव्ययसंज्ञैवाऽस्तु ॥**

(उ०) भाष्ये–**एवंतर्ह्यव्ययेति** । 'प्राग्रीश्वरादव्ययम्' 'स्वरादीनि' 'चादयोऽसत्त्वे' इति पाठ्यमित्यर्थः ॥

[ समाधानभाष्यम् ]

**तच्चा[3]ऽशक्यम्। वक्ष्यत्येतत्–'अव्यये नञ्कुनिपातानाम्'मिति, तद्गरीयसा न्यासेन परिगणनं कर्तव्यं स्यात्। तस्मात्पृथग्ग्रहणं कर्तव्यम्। उभे च संज्ञे कर्तव्ये ॥**

(प्र०) **तच्चाशक्यमिति** । अव्ययसंज्ञायामेव च सत्या'मव्ययमेकाजना'ङिति सूत्रं कर्तव्यम् । ततश्चात्प्रभृतीनामपि प्रगृह्यसंज्ञाप्रसङ्गः प्राप्नोति । अथ 'चादय एकाजनाङि'ति क्रियते तदा चादीनामसत्त्ववचनत्वविशेषणमलभ्यम् ॥

(उ०) **तदा चादीनामिति**। यदि तु 'चादयः' 'असत्त्वे' इति योगविभागेनाऽसत्त्वे इति पाठविशेषणं क्रियते तदा नाऽयं दोषः। तस्माद्भाष्योक्त एव दोषः । न च तत्र प्रादीनामिति वाच्यम् , ऊर्यादीनामसंग्रहापत्तेः । एवं 'निपाता आद्युदात्ता' इत्यादावपि दोषो बोध्यः ॥

# तद्धितश्चासर्वविभक्तिः ॥१।१।३७॥

[ आक्षेपवार्तिकप्रथमखण्डम् ]

॥*॥ *असर्वविभक्तावविभक्तिनिमित्तस्योपसङ्ख्यानम्* ॥*॥

**असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यम्। विना नाना[4] ॥**

(प्र०) **तद्धितश्चासर्व** । इह[5] संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधाद्यद्यपि केवलस्य प्रत्ययस्य ग्रहणं, तथापि 'प्रयोजनं सर्वनामाव्ययसंज्ञाया'मिति वाचनिकस्तदन्तविधिरस्तीति तदन्तस्याऽव्ययसंज्ञा विज्ञायते। तत्र वृत्तिकारेण व्याख्यातम्—'असर्वा विभक्तिर्यस्य सोऽसर्वविभक्ति'रिति । तत्र यदाऽयमर्थः–'यस्य तद्धितान्तस्या[6]ऽसर्वा विभक्तिः कार्या=यस्माच्च सर्वा विभक्तिरुत्पद्यते इत्यर्थस्तदा[7] न दोषः । यदा तु यस्य तद्धितस्योत्पत्तौ निमित्तत्वेनाऽसर्वा विभक्तिराश्रिता सोऽसर्वविभक्तिः, यथा 'सर्वैकान्येति' दाप्रत्ययस्य सप्तम्येवोत्पत्तिनिमित्तमिति । अस्मिन् सूत्रार्थे विना नानेत्यस्याऽव्ययसंज्ञा न सिद्ध्यति । नहि विनञ्भ्यामित्यत्र प्रतिनियता काचिद्विभक्तिराश्रितेत्याह—**असर्वविभक्ताविति** । अतिव्याप्तिश्चाऽस्मिन् सूत्रार्थे, दाक्षिरितीञः षष्ठ्येव निमित्तमिति संज्ञाप्रसङ्गात्। **अविभक्तिनिमित्तस्येति**। अश्रूयमा[8]णविभक्तिकमव्ययमविभक्तीत्युच्यते, तन्निमित्तस्य यस्येष्यते न च प्राप्नोति तस्योपसंख्यानं कर्तव्यं, न तु सामान्येनाऽविभक्तिनिमित्तस्य संज्ञा विधेया, विशालविशङ्कटादीनामपि प्रसङ्गात् ॥

(उ०) **तद्धितश्चा**। **यद्यपि केवलस्येति** । एवं च केवलतद्धितात्कस्या अपि विभक्तेरभावेनाऽसर्वविभक्तिरिति विशेषणमव्यावर्तकमिति भावः । **वाचनिक इति**। शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः । किञ्च केवलानां संज्ञायां प्रयोजनाऽभावः,प्रयोजकाऽभावश्च। अन्वर्थसंज्ञालब्धोऽर्थो हि तत्प्रयोजक इति बोध्यम्। वार्तिकोत्थानाय सूत्रार्थं दर्शयति–**तत्र वृत्तिकारेणेति**। **सर्वाविभक्तिरिति**। सर्वावयविकेत्यर्थः । **प्रतिनियतेति** । एवं च विशेषतः कस्या अपि निमित्तत्वेनानाश्रयणात्सर्वविभक्तिनिमित्तकोऽयमिति भावः। ननु सुबन्तात्तद्धितोत्पत्तेरविभक्ति-

१ कच्चित्र । २ 'अ इव एव' पा० । ३ 'एतच्चा'पा० । ४ 'नाना विना' । ५ इह–प्रकृतसूत्रे । ६ 'तद्धितस्या' ।

७ 'इतितदा' पा० । ८ **अश्रूयेति**। श्रूयमाणविभक्तित्वात्यन्ताऽभाववदित्यर्थः। **अव्ययं** व्यादिः। **यस्य**-नादेः। **नच**–नहि।

निमित्तस्तद्धितोऽप्रसिद्धोऽत आह–**अश्रूयमाणेति** । 'तन्निमित्तस्ये'ति बहुव्रीहिः ॥

[ आक्षेपभाष्यम् ]

**किं पुनः कारणं न सिध्यति ? ॥**

**( प्र० ) किं पुनरिति** । 'एकवचनमुत्सर्गत' इति वचनात्क्रमव्यतिक्रमे कारणाऽभावाद्विनानानेत्यत्राप्यसर्वा विभक्तिरुत्पत्तौ निमित्तमिति प्रश्नः ॥

**(उ०)** ननूत्सर्गत एकवचनमपि सर्वासां स्यादिति बहुवचनान्तविग्रहे सर्वविभक्तेर्निमित्तत्वमव्याहतमत आह–**क्रमव्यतिक्रम इति** । प्रथमातिक्रमे कारणाऽभावेन प्रथमाया एवैकवचनमिति न दोष इत्यर्थः ॥

[ आक्षेपहेतुवार्तिकखण्डम् ]

*॥*॥ सर्वाविभाक्तिर्ह्यविशेषात् ॥*॥*

**सर्वविभक्तिर्ह्येष[1] भवति ॥ किं कारणम् ?॥ ['अविशेषात्'[2]]। अविशेषेण विहितत्वात् ॥**

**(प्र०) सर्वविभक्तिरिति** । अविशेषेणोत्पद्यन्ते, उत्पन्नानां नियमः क्रियत इत्यव्ययात् सर्वा विभक्तय उत्पद्यन्त इत्यर्थः । **अविशेषादिति** । विशेषस्याऽनाश्रयणादित्यर्थः ॥

**(उ०) अवशेषेणेति** । द्व्येकयोरित्याद्येकवाक्यतामनपेक्ष्येत्यर्थः । **उत्पन्नानां नियम इति** । उत्पन्नानां शास्त्रबलान्नियमेन लोपेनेव निवृत्तिः क्रियत इत्यर्थः । इदमप्यर्थनियमे सजातीयातेक्षप्रत्ययनियमे च बोध्यम् । **विशेषस्येति । 'द्व्येकयो'**रित्याद्येकवाक्यतारूपस्येत्यर्थः । **ज्ञापकाद्विभक्ति**रिति पक्षे–ईयमेवेति[3] विशेषस्येत्यर्थः ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ त्रलादीनां चोपसङ्ख्यानम् ॥*॥*

**त्रलादीनां चोपसङ्ख्यानं कर्तव्यम् । तत्र यत्र । ततः यतः ॥**

**( प्र० ) त्रलादीनां चेति** । आदिशब्दस्य प्रकारवाचित्वात्तसिलपि गृह्यते ॥

**(उ०)** ननु त्रलादीनामित्युक्त्वा त्रलः प्राक् पठितस्य तसिलः कथमुदाहरणदानमत आह–**आदिशब्दस्येति** ॥

[ आक्षेपबाधकभाष्यम् ]

**ननु च[4] विशेषेणैते विधीयन्ते 'पञ्चम्यास्तसिल्' 'सप्तम्यास्त्र'लिति ॥ वक्ष्यत्येतत्–'इतराभ्योऽपि दृश्यन्त'इति ।**

**(प्र०) वक्ष्यत्येतदिति** । भवदादिप्रयोग एव प्राप्तिश्चोद्यत इत्यर्थः ॥

[ न्यासान्तरभाष्यम् ]

**यदि पुनरविभक्तिश्शब्दो[5]ऽव्ययसंज्ञो भवतीत्युच्यते ॥**

**(प्र०) यदि पुनरिति** । प्रयोगे योऽश्रूयमाणविभक्तिः सोऽव्ययमित्यर्थः। न च दधि मध्वित्यत्रातिप्रसङ्गो, दध्नीत्यादौ विभक्तिश्रवणात् ॥

**(उ०)** ननु विनेत्यादावपि पदत्वाय विभक्त्युत्पत्तिरावश्यिकेत्यत आह–**प्रयोगे इति** । **दध्नीत्यादाविति** । प्रयोगमात्रे विभक्त्यभावो विवक्षित इति भावः ॥

[ आक्षेपवार्त्तिकम् ]

*॥*॥ अविभक्तावितरेतराऽऽश्रयत्वादप्रसिद्धिः ॥*॥*

**अविभक्तावितरेतराश्रयत्वादप्रसिद्धिः संज्ञायाः॥ केतरेतराश्रयता ?॥ सत्यविभक्तित्वे संज्ञया भवितव्यं, संज्ञया चाऽविभक्तित्वं भाव्यते, तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च[6] कार्याणि[7] न प्रकल्पन्ते ॥**

**(प्र०) अविभक्ताविति** । अव्ययत्वादविभक्तित्वमविभक्तित्वादव्ययत्वमिति दोषः ॥

**(उ०) अव्ययत्वादिति** । अविभक्तिकत्वस्य स्वाभाविकत्वेऽ**व्ययादाप्सुप** इत्यस्य वैयर्थ्यप्रसङ्गादिति भावः ॥

[ न्यासान्तरदूषणवार्तिकम् ]

*॥*॥ अलिङ्गमसङ्ख्यमिति वा ॥*॥*

**अथवाऽलिङ्गमसंख्यमव्ययसंज्ञं भवतीति वक्तव्यम् ॥ एवमपीतरेतराश्रयमेव भवति ॥**

**केतरेतराश्रयता ? ॥ सत्यलिङ्गाऽसंख्यत्वे संज्ञया भवितव्यं, सञ्ज्ञया चालिङ्गाऽसंख्यत्वं भाव्यते, तदेतदितरेत-**

---

१ 'सर्वाविभक्तिर्ह्येषां भव' पा० ।

२ लुप्तं स्यात् । ३ इयमेवेति । या काचिद्विभक्तिरित्यर्थः । ४ 'विशेष एते' । ५ 'रविभक्तिशब्दो' ।

६ चः क्वचिन्न । ७ क्वचिन्न ।

**राश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥**

(प्र०) **अलिङ्गमसङ्ख्यमिति ।** 'अविभक्तिरव्यय'मित्यस्य लक्षणस्य दूषितत्वादत्रापि तदेव दूषणमिति प्रदर्शनार्थो वाशब्दः। अलिङ्गाऽसङ्ख्यत्वस्य लौकिकत्वान्नेतरेतराश्रयत्वमिति पूर्वपक्षः । **एवमपीति ।** अर्थमपि कश्चित्कचिच्छास्त्रादेव प्रतिपद्यत इति भावः ॥

(उ०) ननु पूर्वलक्षणस्य दूषितत्वाद्वाशब्दोऽसङ्गतोऽत आह-**अविभक्तिरिति । वाशब्द इति ।** 'प्रयुक्त'इति शेषः । एवंचाप्यर्थो वाशब्द इत्यर्थः । 'अलिङ्ग'मित्यपि यद्युच्यते एवमपि अन्योन्याश्रय इत्यर्थः । **शास्त्रादेवेति ।** तद्द्योतकविभक्तिलुक्शास्त्रादेवेति भावः ॥

[ दूषणपरिहारभाष्यम् ]

**नेदं वाचनिकम्-अलिङ्गताऽसंख्यता च[1]॥ किं तर्हि ? ॥ स्वाभाविकमेतत् । तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्तेऽपरे न । तत्र[2] किमस्माभिः कर्तुं शक्यं !।स्वाभाविकमेतत्[3] ॥**

[ प्रश्नतत्समाधानभाष्यम् ]

**तत्तर्हि वक्तव्यम्-'अलिङ्गमसंख्य'मिति ? ॥ न वक्तव्यम् ॥**

[ समाधानहेतुवार्तिकम् ]

***॥*॥ सिद्धं तु पाठात् ॥*॥***

**[3]पाठाद्वा सिद्धमेतत् ॥ कथं पाठः कर्तव्यः ?॥**

***॥*॥ तसिलादयः प्राक् पाशपः । अस्प्रभृतयः प्राक्समासान्तेभ्यः । मान्तः[4] । तसिवती । कृत्वोऽर्थः। नानाञाविति ॥*॥***

(प्र०) **सिद्धं त्विति ।** वार्तिककारस्येतरेतराश्रयदोषः स्थित एवेति 'तु'शब्दो विशेषप्रदर्शनार्थः। भाष्यकारेण त्वितरेतराश्रयदोषः परिहृत इति 'वा'-शब्दार्थस्तुशब्दो व्याख्यातः य एव 'प्रकारवचने थाल्' स एव प्रत्नादिभ्यो विधीयते इति नाऽव्याप्तिः । **मान्त इति ।** अम् आम् । तसिः-'प्रतियोगे पञ्चम्यास्तसिः' 'तेनैकदिक्'। 'तसिश्चे'ति ॥ कृत्वोऽर्थः-कृत्वसुच् , सुच् , धा ॥

(उ०) **वाशब्दार्थ इति ।** वाशब्दस्यार्थ इवार्थो यस्येति बहुव्रीहिः । अयं च पाठः स्वरादिषु कार्य इति बोध्यम् । स च पचतिकल्पादिव्यावृत्तये तद्धितश्चेति सूत्रारम्भेऽप्यावश्यक इति भावः । प्रत्नेत्यादि[5] थाल् न परिगणितमध्यवर्त्तीत्यत आह-**स एवेति ।** 'प्रकारवचन' इत्यत्र प्रकारः सादृश्यं, विशेषश्च । तत्र शब्दशक्तिमाहात्म्यात् प्रत्नादिभ्य उत्पन्नेन सादृश्यमुच्यते, किमादिभ्यस्थाला तु विशेषः, एवं च 'प्रत्नपूर्वे'ति सूत्रं व्यर्थमेव । लोकेऽप्रयोगस्त्वनभिधानादिति भावः। 'अमु च छन्दसी'त्यम्। 'किमेत्ति'-ङित्याम् ॥ 'प्रतियोगे' इति तसिः शरप्रभृतिष्वस्तीति तद्ग्रहणं चिन्त्यम् । दृष्टान्तार्थमित्यन्ये । भाष्ये वतिस्तेन तुल्यमिति विहितो न तूपसर्गाच्छन्दसीति विहितः, उद्वतो निवत इत्यादौ तस्य लिङ्गसंख्याद्यन्वयदर्शनादित्याहुः ॥

[ प्रथमन्यासाभ्युपगमभाष्यम् ]

**अथवा पुनरस्तु—'अविभक्तिश्शब्दोऽव्ययसंज्ञो भवती'त्येव ॥**

(प्र०) **अथवेति ।** वृद्धव्यवहारादेव शब्दार्थसम्बन्धावगमादेकत्वादिव्यवहारवदलिङ्गाऽसङ्ख्यत्वमप्यव्ययार्थस्य प्रसिद्धमित्यर्थः ॥

(उ०) **एकत्वादिव्यवहारवदिति ।** 'पटादिपदाना'-मिति शेषः । **अलिङ्गाऽसङ्ख्यत्वमपीति ।** तथा च संख्याऽभावादेव विभक्त्यनुत्पत्तिरिति अविभक्तिरिति न्यासोऽप्यदुष्ट इति भावः ॥ 'अव्ययादाप्सुप' इति सूत्रं तु न्यायसिद्धाया अनुत्पत्तेरेवान्वाख्यायकं प्रत्ययलक्षणप्रवृत्तिद्वारा पदत्वादिसंपादनार्थमिति तात्पर्यम् ॥

[ आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तम्—'अविभक्तावितरेतराश्रयत्वादप्रसिद्धि'रिति ॥**

[ आक्षेपनिरासभाष्यम् ]

**नैष दोषः। इदं तावदयं प्रष्टव्यः—'यद्यपि तावद्वैयाकरणा विभक्तिलोपमारभमाणा अविभक्तिकाञ्छब्दान्प्रयुञ्जते । ये[6] त्वेते वैयाकरणेभ्योऽन्ये मनुष्याः कथं तेऽविभक्तिकाञ्छब्दानान्प्रयुञ्जते' इति[7] ? ॥ अभिज्ञाश्च पुनर्लौकिका एकत्वादीनामर्था-**

[1] 'वा' । [2] क्वचिन्नेदं वाक्यम् । [3] "सिद्धमेतत् । कथं । पाठात् । पाठः कर्तव्यः । कथं पाठः" । [4] 'कृत्वोऽर्थः तसिवती नानाञाविति' पा० । इदं भाष्यमित्यन्ये । वार्त्तिकानीमानीतिदीक्षिताः, ।

[5] प्रत्नेत्येति । अस्य नन्वित्यादिः ॥

[6] 'त्वेतेभ्यो' । [7] क्वचिन्न ।

**नाम् ॥ आँतश्चाभिज्ञाः । अन्येन हि वस्नेनैकं गां क्रीणन्ति, अन्येन द्वावन्येन त्रीन् । अभिज्ञाश्च, न च प्रयुञ्जते । तदेतदेवं संदृश्यताम्— 'अर्थरूपमेवैतदेवंजातीयकं येनात्र विभक्तिर्न भवती'ति ।**

(उ०) नन्ववैयाकरणैः सङ्ख्याया अज्ञानादेव तद्वाचकविभक्तिर्न प्रयुज्यत इत्यत आह भाष्ये-**अभिज्ञाश्चेति ।** 'घट' इत्यादौ तैरपि एकवचनादिप्रयोगकरणादिति भावः । युक्त्यन्तरमप्याह-**आँतश्चाभिज्ञा इति । वस्नो**-मूल्यम् ॥

[ उपपत्तिभाष्यम् ]

**तच्चाप्येतदेवमनुगम्यमानं दृश्यताम् । किंचिदव्ययं विभक्त्यर्थप्रधानं, किंचित् क्रियाप्रधानम् । उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम्, हिरुक् पृथगिति क्रियाप्रधानम् । तद्धितश्चापि कश्चिद्विभक्त्यर्थप्रधानः, कश्चित् क्रियाप्रधानः । तत्र 'यत्रे'ति विभक्त्यर्थप्रधानो, नानाँ विनेति क्रियाप्रधानः । न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति॥**

(प्र०) अत्रैवोपपत्तिमाह-**तच्चापीति । किंचिदिति ।** अव्ययानां द्वैविध्यमेवेति प्रतिपाद्यतेऽलिङ्गाऽसङ्ख्यत्वप्रतिपादनाय । **अन्ये** त्वाहुः—किंचिदव्ययं क्रियाप्रधानं, किंचित्साधनप्रधानम् । अन्यत्तु नापि क्रियाप्रधानं, नापि साधनप्रधानम्, यथा 'स्वः पश्य' 'लोहितगङ्गम्' 'उन्मत्तगङ्गं देश'इति । तथा चाऽत्र नपुंसकत्वमव्ययीभावश्चेत्यन्वाख्यायते । पूर्वं च भाष्यकारेणोक्तं 'स्वरादिनां पुनः सत्त्ववचनानामसत्त्ववचनानां चे'ति । तस्माद्बाहुल्याभिप्रायेणाऽलिङ्गमसङ्ख्यमव्ययमित्युच्यते । **उच्चैर्नीचैरिति ।** सप्तम्यर्थे वर्तते इति साधनप्रधानता । **हिरुक् पृथगिति ।** क्रियाविशेषणत्वादेषां क्रियाप्राधान्यम् । क्रियापदप्रयोगमन्तरेणा[पि] 'पृथग् देवदत्त' इत्यादिप्रयोगः क्रियाक्षेपादुपपद्यते । शब्दशक्तिस्वाभाव्याच्चैकस्मिन्नर्थे विधीयमानयोस्तेनैकदिक् तसिश्चेत्यण्तसोर्भिन्नधर्मत्वम् । तत्र 'पैलुमूल'मिति द्रव्यं प्राधान्येनाऽभिधीयते ।'पीलुमूलत' इति तु द्रव्योपसर्जनस्तृतीयार्थ इति तस्य साधनप्रधानता ।

(उ०) **अत्रैवेति ।** अलिङ्गाऽसंख्यत्व एवेत्यर्थः । **उपपत्तिर्युक्तिः**-क्रियाप्रधानत्वादिरूपा । **एवमनुगम्यमान**मित्यस्योपपद्यमानमित्यर्थः । **नापि साधनप्रधानमिति ।** 'किं तु द्रव्यप्रधान'मिति शेषः । **तस्माद्बाहुल्येति ।** एवंच तादृशबहुमध्यपाठेन स्वरादीनामप्यलिङ्गाऽसंख्यत्वमनुमीयते । अनेककारकशक्तियोगमात्रेण तु सत्त्ववचनत्वमिति **भावः** । उन्मत्तगङ्गादीनां तु वाचनिकमव्ययत्वमव्ययीभाव इति **महा**संज्ञया सूच्यते । सत्त्वप्रधानता तु 'इदं स्व'रिति सर्वनाम्ना परामर्शात् । ग्लान्याद्यर्थक'प्रता'मित्याद्यपि सत्त्ववचनमित्यन्ये । ननु तदर्थे कारकान्वयाऽभावान्न तस्य क्रियात्वमत आह **क्रियाविशेषणत्वादिति ।** क्रियायामेव विशेषणत्वादित्यर्थः । क्त्वान्ततुमुनन्तादिवदिति भावः । स्वरादीनां घटादीनां च स्वःपतिर्घटोदकमित्यादौ नामार्थेऽप्यन्वयः । एतेन तेषामपि क्रियाविशेषणत्वात्क्रियाप्राधान्यं दुर्वारमित्यपास्तम् । अत एवैतदर्थे न कारकाणामन्वयः । तदन्वययोग्यस्य साध्यत्वरूपक्रियात्वस्य तत्राऽभावात् । **क्रियाक्षेपादिति ।** स्थित्यादिक्रियाक्षेपादित्यर्थः । **द्रव्यं प्राधान्येनेति ।** पीलुमूलसमानदिक्स्थमिति हि तत्र बोधः । **द्रव्योपसर्जन इति ।** तस्प्रत्ययाभिधेयद्रव्योपसर्जनः प्रकृत्यभिधेयस्तृतीयार्थ इत्यर्थः । तृतीयार्थश्च तत्र साहित्यम् । पीलुमूलेनैकदिक् **पीलुमूलतः ।** एकदिक्स्थपीलुमूलसाहित्यमित्यर्थः। **अन्ये** तु—पीलुमूलेन समानदिशीत्यर्थकमधिकरणशक्तिप्रधानं 'पीलुमूलत' इतीत्याहुः । भाष्ये-**नचैतयोरर्थयोरिति ।** यद्यपि क्रियायामेकत्वसंख्या रूपप्सूत्रे भाष्ये उक्ता, 'पचतिरूप'मित्यादिवाच्यायाश्च नपुंसकत्वयोग उक्तस्तथापि अव्ययवाच्ययोरेतयोर्लिङ्गसंख्याभ्यामयोग इत्यर्थान्न दोष इति दिक् ।

[ सूत्रसमर्थनभाष्यम् ]

**अथाऽप्यसर्वविभक्तिरित्युच्यते एवमपि न दोषः ॥ कथम् ? ॥**

**इदं चाऽप्यद्यत्वेऽतिबहु क्रियते— एकस्मिन्नेकवचनं, द्वयोर्द्विवचनं, बहुषु बहुवचनमिति ॥ कथं तर्हि ?॥ एकवचनमुत्सर्गः करिष्यते । तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने बाधके भविष्यतः ॥**

(प्र०) **अद्यत्व इति ।** सूत्रारम्भकाल इत्यर्थः। पूर्वं हि न्यासान्तराश्रयेण सूत्रं प्रत्याख्यातम् । **अति**

---

१ 'अतश्चा' । २ एकमित्याद्युक्तमुपसंहरति-**अभिज्ञाश्चेति । तदिति ।** त्रतस्यादेरविभक्तिकप्रयोगकरणम् । **एवं**-वक्ष्यमाणप्रकारेण, **संदृश्यतां**-ज्ञायतामित्यर्थः । तं प्रकारमेवाह-**अर्थेति । एतत्**-अर्थस्वरूपम् । **एवंजातीयकम्**-एवंस्वभावकं । येनात्रार्थे विभक्तिर्न भवतीत्यर्थः ।

३ **आतश्चेति ।** इतोऽपि वक्ष्यमाणाद्धेतोरित्यर्थः । अत एव 'च'कारसंगतिः ॥ **अन्यत्वं**-परस्परसाधनापेक्षया । क्रयविषयतया वस्नस्यैवेति बोध्यम् । ४ 'विनानानेति' । ५ तादृशैकदिक्स्थरूपद्रव्योपसर्जनः, तसिप्रकृतिः-पीलुमूलेनेति, तदभिधेय इत्यर्थः ।

**बह्विति ।** एकस्मिन्नित्यपनीयैकवचनमिति सूत्रं कर्तव्यम् , ततो 'द्विबह्वोर्द्विवचनबहुवचने' इत्येवं कर्तव्यम्। तेन द्वित्वबहुत्वयोर्द्विवचनबहुचने भविष्यतः। एकवचनं त्वेकस्मिन्नपि भविष्यत्यलिङ्गाऽसङ्ख्येभ्योऽव्ययेभ्यश्च । ननु 'कर्मणि द्वितीये'त्यादिना कर्मादिषु द्वितीयादीनां नियतत्वात्कथमेकवचनमव्ययेभ्यः स्यात् ?। नैष दोषः। एतदर्थमेवैकवचनमित्येतत्क्रियतेऽप्राप्तप्रापणार्थम् । तेन कर्माद्यभावेऽपि भवति । द्वित्वबहुत्वयोस्तु प्राप्तं द्विवचनबहुवचनाभ्यां बाध्यते।

(उ०) **सूत्रारम्भकाले इति ।** यद्यपि न्यासान्तरेऽपि एकस्मिन्निति बह्वेव, तथापि एकग्रहणे सति ज्ञापकादितः सर्वविभक्त्युत्पत्तावस्य सूत्रस्याप्यानर्थक्यमिति एतत्सूत्रपाठकाले एतत्सूत्रसहितं एकस्मिन्नित्यतिबहु व्यर्थं क्रियत इति एकग्रहणं त्यक्त्वाऽस्य सार्थक्यं वक्तुं योग्यमित्यर्थ इति भावः । **न्यासान्तरेति ।** पाठाश्रयेणाऽलिङ्गासंख्यमित्यनेन वेत्यर्थः । भाष्ये-**अतिबह्विति** । बहुशब्दो वैपुल्यवाची । अतिबहुशास्त्रं व्यर्थं क्रियत इत्यर्थः। **अलिङ्गाऽसंख्येभ्य इति।** द्विवचनबहुवचनविधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासंज्ञाबोध्यैकत्वाऽभावेऽपि एकवचनप्रवृत्तिरिति भावः । **कथमेकवचनमिति ।** प्रथमाऽपि मात्रग्रहणाद्यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसम्भावना तत्रैवेति भावः । **अप्राप्तेति ।** द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधाने एकवचनस्याऽर्थात्तदभावे कर्मादौ सिद्धत्वेन सामर्थ्यादिति भावः । अप्राप्तिश्च कर्मत्वाद्यभावप्रयुक्तैव, न तु प्रातिपदिकत्वाऽभावप्रयुक्तापि, सुब्विध्येकवाक्यत्वात् । तेन तिङन्तादिभ्यो नापत्तिरिति बोध्यम् । किं च सर्वथाऽप्राप्तावेवाऽस्य विधायकत्वमिति 'पचतिकल्प'मित्यादौ न सर्वैकवचनापत्तिरिति बोध्यम् । यद्यप्यनिर्दिष्टार्थत्वात्स्वार्थे विधीयमानस्याऽस्य न द्वित्वादौ प्राप्तिस्तथापि पञ्चकप्रातिपदिकाऽर्थपक्षे एकत्व इव द्वित्वादावपि प्राप्तिरित्याशयेनाह— **बाध्यत इति ।** अत्र[1] पक्षे **द्व्येकयो**रिति सूत्रमपि विध्यर्थमेवेति भावः । यद्यपि अन्ययात्सर्वविभक्त्युत्पत्त्याऽयं न्यासो दूषितस्तथापि सामान्यापेक्षप्रत्ययनियमे एकवाक्यतया विधाने वा कस्या अप्यप्राप्त्येदं विधायकमिति तत्पक्षे सूत्रसार्थक्योपपादनमिदम् । एवंचैतदेव तयोरन्यतरपक्षाश्रयणस्यैकपदे वाक्यार्थानन्वयित्वस्य च ज्ञापकमिति बोध्यम् । एतत्सर्वमुत्सर्गपदेन भाष्ये सूचितम् ॥

[ मतान्तरभाष्यम् ]

**न चाप्येवं विग्रहः करिष्यते-न सर्वा असर्वाः, असर्वा विभक्तयो यस्मादिति ॥ कथं तर्हि ?॥ न सर्वा असर्वा असर्वा विभक्तिरस्मादिति। त्रिकं पुनर्विभक्तिसंज्ञम् ।**

( प्र० ) 'न सर्वा विभक्तय उत्पत्तौ निमित्तमस्ये'ति येन वृत्तिकारेण व्याख्यातं तन्मतं दूषितम् । इदानीं वृत्तिकारान्तरमतं विशेषदर्शनेन संस्क्रियते— **न चाप्येवमिति ।** एवं विग्रहे सर्वशब्दस्य प्रकारकार्त्स्न्येऽपि वर्तनादेकवचनमात्रोत्पत्तावपि सर्वा विभक्तयः सप्ताऽव्ययेभ्य उत्पद्यन्ते इति न स्यादसर्वविभक्तित्वम् । **कथं तर्हीति ।** द्रव्यकार्त्स्न्यवृत्तिः सर्वशब्दः । एकवचनमात्रोत्पत्तौ निरवशेषा विभक्तिर्नोत्पन्ना भवतीति भवत्येवाऽसर्वविभक्तित्वम् । यदा त्वयं न्यायः-'प्रथमातिक्रमे कारणाऽभावात्प्रथमाया एवैकवचनमव्ययेभ्य उत्पद्यत' इति, तदाऽसर्वा विभक्तयो यस्मादित्यपि विग्रहे आश्रिते न दोषः । यदा तु खलेकपोतिकान्यायेन सर्वैकवचनोत्पत्तिपक्षस्तदैतदुक्तम् । अव्ययीभावादप्येकवचनमात्रमेवोत्पद्यते, तावतैव तृतीयासप्तम्योर्बहुलमित्यस्योपपादनात् ।

(उ०) **तन्मतमिति ।** दाक्षिरित्यादावतिव्याप्तेरि**तराभ्योऽपि दृश्यन्त** इत्येतद्विहितत्रलादिविषयेऽव्याप्तेश्चेति भावः । **वृत्तिकारान्तरेति ।** तद्विग्रहे **यस्ये**ति अपादानस्यैव संबन्धत्वविवक्षया षष्ठीति ध्वनयितुं भाष्ये-**यस्मादित्युक्तम्** । **विशेषेति ।** एकवचनान्तविग्रहकरणरूपो विशेषः । नन्वेवं सर्वविभक्त्येकवचनोत्पत्तौ बहुवचनान्तविग्रहाऽसङ्गतिरतो भाष्ये-**नचापीति** । तद्व्याचष्टे-**प्रकारेति।** 'सर्वा विभक्तय' इत्यस्य सर्वप्रकारा इत्यर्थः। अवयवकार्त्स्न्ये तु बहुवचनं व्यर्थमिति भावः । एकवचनान्तविग्रहे तु अवयवकार्त्स्न्ये एव सर्वशब्द इति नानेत्यादौ नाऽव्याप्तिर्नाऽपि दाक्षिरित्यादावतिव्याप्तिरिति भावः । भावे[2], 'पचतिकल्प'मित्यादौ च क्रियायाः स्वत एवैकत्वादेकवचनमेव । तच्च भावे प्रथमपुरुषस्यैव, लान्तसमानाधिकरणयुष्मदाद्यभावादिति रूपप्सूत्रे भाष्ये स्पष्टम् । अव्ययेभ्योऽपि प्रथमैकवचनमेवास्तु इत्याह-**यदात्विति । प्रथमेति ।** अनेकनियमबाधे गौरवाच्चेत्यपि बोध्यम् । ननु भाष्योक्तपक्षेऽव्ययेभ्यो युगपत्सर्वविभक्त्येकवचनानां कर्तुमशक्यत्वम् , 'परश्चे'त्युक्तेः । किंतु यत्किंचिदेव, तस्य लुकि तावतैव पदत्वसंपादनात् । विभक्त्यन्तरोत्पत्तौ मानाऽभावेन बहुवचनान्तविग्रहेऽपि न दोषोऽत आह-**खलेकपोतेति ।** वाचः क्रमवृत्तित्वाद्युगपदुच्चारणाऽसम्भवेऽपि बुद्ध्या युगपत्सर्वोत्पत्तिर्वक्तुं शक्येति भावः । विनिगमनाविरहोऽत्र बीजम् । प्रक्रियादशायां च बुद्धिरेव मुख्या, असाधूच्चारणाऽयोगात् । यद्वा

१ **अत्रेति ।** 'पञ्चकं प्रातिपदिकार्थ' इति पक्षे इत्यर्थः ।

२ **भावे इति ।** भूयत इत्यादावित्यर्थः ।

प्रधानानुरोधेन गुणावृत्तेस्तावत्यः प्रकृतयः स्युरिति भावः । परे तु प्राथम्यं स्वादिसूत्रे प्रथमाया, नियमशास्त्रपर्यालोचनया द्वितीयाया इति न तन्नियामकमिति 'प्रथमातिक्रम' इत्याद्यसङ्गतम् । तन्न्यायाश्रयणे 'निजां त्रयाणा'मित्यत्र 'त्रयाणा'-मित्यस्य 'आद्युदात्तश्चे'त्यादावादिग्रहणस्य वैयर्थ्यं चेत्याहुः । **तावतैवेति** । 'टाङ्ग्यो'रिति वक्तव्ये तृतीयादिग्रहणं तु वैचित्र्यार्थमिति भावः ॥

[ पञ्चसूत्रीप्रत्याख्यानश्लोकवार्त्तिकम् ]

**'एवं गते कृत्यपि तुल्यमेत-**
**न्मान्तस्य कार्यं ग्रहणं न तत्र ।**
**ततः परे चाऽभिमता न कार्या-**
**स्त्रयः कृदर्था ग्रहणेन योगाः' ॥ १ ॥**

**(प्र०) एवंगत इति** । यदा असर्वा विभक्तिरस्मादिति विग्रह आश्रीयते, तदैवं विज्ञाते सत्येतावल्लक्षणमस्तु 'असर्वविभक्त्यव्यय'मिति, पञ्चसूत्री न कर्तव्या । **एतत्**-असर्वविभक्तित्वं, **कृत्यपि तुल्यम्,** यस्य कृन्मेजन्त इत्येनाव्ययसंज्ञेष्यते । **मान्तस्येति** सूत्रोपलक्षणम् । **ततः पर इति** । **'कृन्मेजन्त'** इत्यस्मात् सूत्रात्परे कृदर्थाः कृत्संज्ञाविषयाः 'क्त्वातोसुन्कसुन' इत्यर्थः । ग्रहणेनोच्चारणेन प्रतिपदमित्यर्थः । **योगाश्च न** कर्तव्याः 'स्वरादिनिपातमव्यय'मित्येवमादयः पञ्चेत्युपसंहारः ॥

**(उ०)** इदमेव ध्वनयितुं पञ्चयोगान्प्रत्याचष्टे-**एवंगते** इति भाष्ये । **प्रतिपदमितीति** । 'असर्वविभक्ती'ति न्यासे नैव सिद्धत्वादित्यर्थः । भाष्यश्लोके-**तत्रेति** । अव्ययसंज्ञाविधावित्यर्थः । **पञ्चेति** । 'स्वरादी'त्यादीर'व्ययीभावश्चे'त्यन्ताः ।

[ गौरवप्रदर्शकश्लोकवार्तिकम् ]

**'कृत्तद्धितानां ग्रहणं तु कार्यं**
**संख्याविशेषं ह्यभिनिश्रिता ये ।'**
**तेषां प्रतिषेधो भवतीति वक्तव्यम् ।**
**इह मा भूत्—एको द्वौ बहव इति ।**

[ गणपाठाश्रयणवार्तिकखण्डं ]

**'तस्मात् स्वरादिग्रहणं च कार्यं**
**कृत्तद्धितानां ग्रहणं च पाठे ॥ २ ॥'**

**(प्र०)** इदानीमतिव्याप्तिपरिहारार्थं तद्धितग्रहणं कर्तव्यम् , तस्मिन् कृते 'कृन्मेजन्त'इत्याद्यपि कर्तव्यमिति दर्शयति— **कृत्तद्धितानामिति । संख्याविशेषमिति** । तन्निवृत्त्यर्थमित्यर्थः । **तेषामिति** । असति तद्धितग्रहणे एकादीनामतद्धितान्तानामप्यसर्वविभक्तित्वात् प्रतिषेधो वक्तव्यः स्यादिति तद्धितग्रहणं कर्तव्यम् । तस्मिन्कृते स्वरादिग्रहणं कर्तव्यं, स्वरादिनामतद्धितान्तत्वात् । **ननूभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वं**, तथा **'गोदौ' 'वरणा'** इति, तत एषामपि 'तद्धितश्चासर्वविभक्ति'रित्यव्ययसंज्ञाप्रसङ्ग इत्याह—**कृत्तद्धितानामिति** । प्रतिपदं तद्धिताः पठितव्या येषामव्ययसंज्ञेष्यत इत्यर्थः । तस्माद्गणपाठ एवाश्रयितव्यः । प्रपञ्चार्थस्तु सूत्रारम्भः ॥

**(उ०)** ये इति यच्छब्दस्य तच्छब्दसाकाङ्क्षत्वादाह-**तन्निवृत्त्यर्थमिति** । तदेवं सूत्रं स्थापितमिति वार्तिकोक्तं 'सिद्धं तु पाठा'दित्यप्यनाश्रितं स्यात् । एवं चोभयशब्दादौ दोष इति शङ्कोत्तरत्वेनोत्तरभाष्यमवतारयति-**ननूभयेति** । अत एवोभयोऽन्यत्रेत्यस्योदाहरणम् 'उभये उभयः' इति भाष्ये सर्वादिसूत्रे दत्तम् । गोदावित्यादौ वरणादिभ्यश्चेति चातुरर्थिकलुपि युक्तवद्भावात्प्रत्ययार्थस्य द्वित्वादीति बोध्यम् । **इत्याहेति** । इत्याशङ्कायामाहेत्यर्थः । भाष्ये-**चस्त्वर्थे** । 'कृत्तद्धिताना'मित्यत्र कृद्ग्रहणेन कृतामव्ययसंज्ञाविधायके सूत्रे अपि गणे पाठ्ये इति सूचितम् । कृदित्युपलक्षणमव्ययीभावश्चेत्यस्यापि । तदाह—**तस्मादिति** । तदेवं गणपाठमाश्रित्य 'तद्धितश्चासर्वविभक्ति'रित्यष्टाध्यायीपाठः प्रत्याख्यातः । तदाह-**प्रपञ्चार्थस्त्विति** ॥

[ शङ्कातत्समाधानभाष्यम् ]

**पाठेनेयमव्ययसंज्ञा क्रियते, सेह न प्राप्नोति—परमोच्चैः । परमनीचैरिति ॥**
**तदन्तविधिना भविष्यति ॥**

**(प्र०) तदन्तविधिनेति** । 'प्रयोजनं सर्वनामाव्ययसंज्ञाया'मिति वचनेनेति भावः ॥

**( उ० )** शङ्कते भाष्ये-**पाठेनेयमिति** । 'स्वरादिनिपात'मितीत्यर्थः ॥

[ शङ्काभाष्यम् ]

**इहापि तर्हि प्राप्नोति—अत्युच्चैः अत्युच्चैसौ अत्युच्चैस इति ।**

**(प्र०)** अत्युच्चैसाविति । शक्तिप्रधानान्यप्यव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि भवन्ति । यथा-'दोषामन्यमहः' 'दोषाभूतमह'रिति । तत उच्चैः-शब्दस्य प्रक्रियायां द्वितीयान्तस्य समासः ॥

**(उ०)** नन्वत्यादयो द्वितीययेत्युक्तेः कथमुच्चैःशब्देनाधिकरणशक्तिप्रधानेन द्वितीयान्तेन समास इत्यत आह—

१ तत्राऽनतिप्रसङ्गाय तदावश्यकत्वादेवेत्यर्थः ।

२ 'एकादीनामप्यसर्व' पाठा० ।

**शक्तीति । द्वितीयान्तस्येति ।** अतिक्रान्तार्थान्वययोग्यकर्मद्वितीयान्तस्येत्यर्थः । 'दोषामन्य'मित्यत्र कर्मणीत्यधिकार आत्ममाने खश् । दिनं रात्रिं मन्यत इत्यर्थः ॥

[ समाधानभाष्यम् ]

**'उपसर्जनस्य ने'ति प्रतिषेधो भविष्यति ॥ स तर्हि प्रतिषेधो वक्तव्यः ? । न वक्तव्यः । सर्वनामसंज्ञायां प्रकृतः प्रतिषेध इहानुवर्तिष्यते । स वै तत्र प्रत्याख्यायते ॥**

[ उक्तिप्रत्युक्तिभाष्यम् ]

**यथा स तत्र प्रत्याख्यायते इहापि तथा शक्यः प्रत्याख्यातुम् ॥**

**कथं च स तत्र प्रत्याख्यायते ? ॥**

**महतीयं संज्ञा क्रियत इति । इयमपि च महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥ कुत एतत् ? ॥ लघ्वर्थं हि संज्ञाकरणं । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम् 'अन्वर्था संज्ञा यथा विज्ञायेत-न व्येतीत्यव्यय'मिति ॥**

**क्व पुनर्न व्येति ? ॥**

**(प्र०) क्व पुनरिति ।** श्लोके सप्तमीनिर्देशात् प्रश्नेऽपि सप्तमी निर्दिष्टा ॥

**(उ०) प्रश्नेऽपीति । व्येती**त्यस्य विविधं प्रकारं गच्छतीत्यर्थः । **क्वे**त्यस्य किंविषये इत्यर्थ इति भावः । अन्ययोत्तराऽनुसारेण [1]कानीति प्रश्न उचितः । [2]अत एवाग्रे उक्तम्-'एतानार्थान् केचिद्वियन्ती'त्यादि । विपूर्वस्येणो रूपम् ॥

[ समाधानभाष्यम् ]

**स्त्रीपुंनपुंसकानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च । एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति ।**

**ये न वियन्ति तदव्ययम् ॥**

**"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" ॥१॥**

**( प्र० ) सदृशमिति ।** लिङ्गविशेषप्रतिपादने सामर्थ्याऽभावात् ॥ **विभक्तिष्विति ।** [3]कारकेषु । तत्र यानि साधनप्रधानान्यव्ययानि तेषां शक्त्यन्तराऽनावेशात् क्रियाप्रधानानां च शक्तिसम्बन्धाऽभावात् 'सर्वासु च विभक्ति'ष्वित्युक्तम् । **वचनेष्विति ।** एकत्वादिषु । अव्ययीभावस्य शक्तिलिङ्गविशेषयोगेऽपि वचनादव्ययत्वम् । यथा स्वत्यादीनां कर्मप्रवचनीयसंज्ञा । [4]तत्र यान्यसत्त्वभूतार्थाभिधायीन्यव्ययानि तेषां लिङ्गादिभिरयोगः, तेषां [5]द्रव्यधर्मत्वात् । सत्त्ववाचिनाऽपि शब्दशक्तिस्वाभाव्यात्तदयोगो, यथा युष्मदस्मदोर्लिङ्गाऽयोगः । केचित्तु लिङ्गादिविशेषेणाऽयोगात्, तत्सामान्येन तु योगमव्ययानामाहुः। तदयुक्तम् । लिङ्गादिसामान्यसद्भावे प्रमाणाऽभावात् । **यन्न व्येतीति ।** [6]नानात्वं न गच्छतीति सत्त्वधर्मान्न गृह्णातीत्यर्थः ॥

**( उ० ) ये न वियन्ति**-एतानर्थान्येऽर्था न वियन्ति विविधप्रकारप्रापकान्न प्राप्नुवन्ति, **तत्**-तद्वाचकमव्ययमित्यर्थः। द्वित्वादेरर्थधर्मत्वादिति बोध्यम्। ननु विभक्तिवचनशब्दयोः प्रत्ययपरत्वेऽन्यतरवैयर्थ्यमत आह-**कारकेष्विति।** विषयसप्तम्य एताः । सादृश्यं तत्तल्लिङ्गाद्यभावानुयोगित्वेन । [7]नन्वेवं स्वरादिवाच्यानां कर्मत्वादियोगसत्त्वेन सकलकारकविषये न कारकाऽभावानुयोगित्वरूपं सादृश्यमत आह-**तत्र यानीति । साधनं**-शक्तिः । तादृशान्युच्चैरादीनि । [8]तेषु च कारकशक्त्यन्तराऽयोगात्सर्वकारकविषये कारकाऽभावानुयोगित्वमस्त्येवेत्यर्थः । **शक्तिः**-कर्मत्वादिः । **वचनादिति ।** 'अव्ययीभावश्चे'ति वचनादित्यर्थः । **सङ्ख्याऽभावादिति** वार्थः। 'मन्थकार्थे' इत्यादावभावस्य फलत्ववदत्र तदभावस्य कारणत्वमिति बोध्यम् । **यथेति ।** क्रियाहेतुकसंबन्धविशेषद्योतका हि अन्वर्थबलात्कर्मप्रवचनीयाः । स्वत्योस्तत्त्वाऽभावेऽपि क्रियापदसंनिधौ क्रियागतविशेषद्योतकयोरपि यथा संज्ञा, तथा प्रकृतेऽव्ययीभावादीनामित्यर्थः । **सत्त्ववचनानामपीति ।** 'स्वरादीना'मिति शेषः । तदयोगः । लिङ्गसङ्ख्याऽयोग इत्यर्थः । **सदृश**मित्यत्रोक्तं सादृश्यं निरूपयितुं-**यन्नव्येतीत्यादि ।** अत्रापि लिङ्गे [9]ष्वित्याद्यावृत्त्या संबध्यते । **नानात्वमिति ।** एतेषु यन्न व्येति एतद्विषये यन्नानात्वं न प्राप्नोति तदव्ययमित्यर्थः । कचित्तु 'नाना न गच्छती'ति पाठः, तदा एतद्विषयमनेकप्रकारं न प्राप्नोतीत्यर्थः ॥ [ तद्धितश्चा ]

## कृन्मेजन्तः ॥ १ । १ । ३८ ॥

[ चोद्यभाष्यम् ]

**कथमिदं विज्ञायते-कृद्यो मान्त इति,**

---

१ 'कानिति' । २ **अतएवेति ।** कर्माकाङ्क्षाया अन्तरङ्गत्वादेवेत्यर्थः । ३ **कारकेष्विति ।** कारकादिष्वितीत्यर्थः । आदिपदेन चात्र संबन्धपरिग्रहः; । प्रसिद्धत्वात्तु कारकमात्रोक्तिः । ४ व्यवस्थामाह-**तत्रेति ।** अव्ययेषु मध्ये इत्यर्थः । आदिना-संख्याकारके । ५ **तेषां**-लिङ्गादीनाम् । द्रव्यधर्मत्वादित्यर्थः । ६ 'नाना न गच्छति' । ७ **एवम्**-उक्तरूपेण सादृश्याङ्गीकारे । ८ **तेषु च**-तेषु तु । ९ **एतेषु**-लिङ्गादिषु ।

**आहोस्वित्-कृदन्तं यन्मान्तमिति ॥ किं चातः ? ॥ यदि विज्ञायते-'कृद्यो मान्त' इति,'कारयांचकार' 'हारयांचकारे'त्यत्र न प्राप्नोति॥ अथ विज्ञायते-'कृदन्तं यन्मान्त' मिति 'प्रतामौ' 'प्रतामः'-अत्रापि प्राप्नोति॥**

( प्र० ) कृन्मेजन्तः । **कथमिति** । किं मेजन्तग्रहणेन कृद्विशेष्यते पूर्वं, पश्चात्तु कृता तदन्तविधिः, आहोस्वित्पूर्वं कृता तदन्तविधिः, पश्चात्तु कृदन्तं मेजन्तग्रहणेन विशेष्यत इति प्रश्नः । 'प्रयोजनं सर्वनामाव्ययसंज्ञाया'मिति वचनात् तदन्तविधिः । अथवाऽन्वर्थसंज्ञाश्रयणात्प्रत्ययग्रहणे संज्ञाविधावप्यत्र तदन्तविधिर्भवति । नहि केवलस्य प्रत्ययस्याऽप्रयोगार्हस्य नानागमनमगमनं वा संभवति । **कारयांचकारेति** । लिडत्र कृत् , स च मान्तो न भवति । **प्रतामाविति** । क्विपि लुप्ते प्रत्ययलक्षणेन कृदन्तमेतद्भवति, श्रुत्या च मान्तम् ॥

( उ० ) कृन्मेजन्तः । **किं मेजन्तेति** । कृतो मेजन्तस्य प्रत्ययमात्रस्य संज्ञा, उत कृदन्तस्येति न शङ्कार्थः । 'प्रयोजनं सर्वनामव्ययसंज्ञाया'मिति तदन्तविधेरित्याशयः । **पश्चात्त्विति** । मेजन्तो यः कृत्तदन्तमव्ययमित्यर्थ इति भावः । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादाह-**प्रयोजनमिति** । ननु तद्वचनमप्रत्ययांशे चरितार्थमत आह-**अथवाऽन्वर्थेति** । एवं चाऽव्ययत्वप्रयोजकस्य महासंज्ञालभ्यार्थस्य केवलप्रत्ययेष्वभावात्तदन्तविधिरिति भावः । अनयैव रीत्या सर्वादिगणे डतरडतमाभ्यां तदन्तविधिर्बोध्यः । नानागमनमिवाऽनानागमनमपि न संभवति, संभावितप्रतियोगिदेश एव तदभावबुद्धेः शब्देन जननात् । संभवितप्रतियोगितावच्छेदक एवाऽब्राह्मण इत्यादिना भेदबुद्धिवदित्याशयः । **लिडत्र कृदिति** । तिङ्भावित्वाऽभावेनाऽतिङिति न कृत्त्वप्रतिषेध इति भावः । **प्रतामाविति** । तमेः क्विप् । 'अनुनासिकस्ये'ति दीर्घः । **श्रुत्या चेति** । तथा चाऽव्ययत्वाल्लुक् स्यादिति भावः ।

[ समाधानभाष्यम् ]

**यथेच्छसि तथास्तु । अस्तु तावत्-'कृद्यो मान्त' इति ।**

[ दोषोपन्यासभाष्यम् ]

**कथं कारयांचकार हारयांचकारेति ?॥**

[ चोद्यभाष्यम् ]

**किं पुनरत्राव्ययसंज्ञया प्रार्थ्यते ? ॥ 'अव्यया'दिति लुग्यथा स्यात् [ इति ] ।**

( प्र० ) अव्यादिति लुगिति । ननु 'हल्ङ्यादि'लोपेन सिद्धत्वात्किं लुका प्रयोजनम् । यदा तर्ह्यनुप्रयोगवशाद्द्वित्वबहुत्वावगतिस्तदाऽस्ति द्विवचनबहुवचनोत्पत्तिरिति लुगेषितव्यः । अकच् तु न भवत्यपरिसमाप्तार्थत्वादज्ञातादिभिर्योगाऽभावात् [च]।

( उ० ) **द्विवचनेत्यादि** । ननु सङ्ख्याया अनुप्रयुज्यमानोत्तरतिङैवाऽभिव्यक्तत्वात्कथं द्विवचनादिप्रसङ्ग इति चेत् । उपलक्षणमिदम् । सर्वैकवचनोत्पत्तिपक्षेऽमादिलुगर्थमिदमावश्यकमिति न दोषः । 'अव्ययात् सुपो लु'गिति ज्ञापकात्सर्वविभक्तिरिति पक्षे च अकजर्थं तर्ह्यामन्तस्याऽव्ययत्वमेष्टव्यमत आह-**अकच्त्विति** । **अपरिसमाप्तार्थत्वं** च-सङ्ख्याकारकादिविषयकोत्थिताकाङ्क्षत्वम् । अत एवाऽनुप्रयोगः प्रार्थ्यते । स्वार्थे परिपूर्णस्यैव चार्थान्तरेण संबंध इति भावः ॥

[ दोषनिरासभाष्यम् ]

**मा भूदेवम् 'आमः' इत्येवं भविष्यति ॥ न सिध्यति । लिग्रहणं तत्रानुवर्तते ॥ लिग्रहणं निवर्तिष्यते ॥**

**यदि निवर्तते, प्रत्ययमात्रस्य लुक् प्राप्नोति ॥**

**इष्यते च प्रत्ययमात्रस्य । आतश्चेष्यते । एवं ह्याह-'कृञ्चानुप्रयुज्यते लिटी'-ति । यदि च प्रत्ययमात्रस्य लुग्भवति तत एतदुपपन्नं भवति ॥**

( प्र० ) **इष्यते चेति** । पूर्वोक्ताद्धातोस्तरबाद्यनुत्पादादनुप्रयोग एव तरबाद्युत्पत्तिः, समाप्तार्थस्य प्रकर्षादियोगादित्यर्थः । अत्रैवार्थे ज्ञापकमाह-**आतश्चेति** । तत्र ह्युक्तं 'व्यवहितनिवृत्त्यर्थं चे'ति ।

( उ० ) ननु तरबाद्यनुत्पत्तावामन्तार्थे प्रकर्षादिप्रतीतिः कथमत आह-**अनुप्रयोग एवेति** । तदुत्पन्नतरपैवैतद्गतप्रकर्षप्रतीतिः, कारकादिवदित्यर्थः । भाष्ये लुक्पदमदर्शनमात्रपरमिति भावः ॥

[ पक्षान्तरस्वीकारभाष्यम् ]

**अथवा पुनरस्तु-'कृदन्तं यन्मान्त'-**

१ शङ्कते-**अकजर्थमिति** । २ 'लिग्रहणं तत्र' । **तर्हि**-पूर्वोक्तफलाभावेऽपि । ३ **एतत्**-अनुप्रशब्दबलेनाऽऽमन्ताद्व्यवधानेनाऽनुप्रयोगविधायकं 'कृञ्चानुप्रे'त्येतत् । **उपपन्नं**-सफलम् । ४ **कारकादीति** । तदुत्तरप्रत्ययेन कारकादिवदित्यर्थः ।

**मिति ॥ कथं प्रतामौ–प्रताम इति ? ॥ आचार्यप्रवृत्तिर्ज्ञापयति–'न प्रत्ययलक्षणेनाऽव्ययसंज्ञा भवती'ति, यदयं प्रशान्शब्दं स्वरादिषु पठति ॥**

(**प्र०**) **प्रशान्शब्दमिति** । तस्य 'मो नो धातो'रिति नत्वस्याऽसिद्धत्वात्सिद्धमव्ययत्वमिति भावः। तुल्यजातीयस्य धातोर्नियमेन व्यावृत्तिः क्रियते इति 'कारयांचकारे'ति भवत्येव मान्तस्याव्ययसंज्ञा। 'शान तेजने' इत्यस्य तु प्रशानिति रूपं न भवति, तस्य क्विबन्तस्य प्रयोगाऽदर्शनात् । 'लावयतेर्लौरि'त्यस्याऽपि न भवति, अस्मादेव ज्ञापकाल्लाक्षणिकत्वाद्वौकारस्य ॥

(**उ०**) धातुत्वेन तुल्यजातीयतेत्याह–**धातोरिति** । **तस्य क्विबन्तस्येति** । अत्र चेदमेव भाष्यं मानम्। प्रशामाविति तु शान्तिमद्वाचकस्य । शान्त्यर्थकस्यैव च गणे पाठः, तस्यैव स्वभावेन लिङ्गाद्यभावात् । वस्तुतो गणे मान्तपाठः, प्रयोगे एव तु नत्वम् । यथा स्वरादीनां गणे रेफान्तपाठः, प्रयोगे तु विसर्ग इति भाष्याशयः। **अस्मादेवेति**। धातुमात्रापेक्षं ज्ञापकमिति भावः । **लाक्षणिकत्वाद्वेति** । वर्णग्रहणेऽपि तत्प्रवृत्तेरिति तात्पर्यम् ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ कृन्मेजन्तश्चाऽनिकारोकारप्रकृतिः ॥*॥*

**कृन्मेजन्तश्चानिकारोकारप्रकृतिरिति वक्तव्यम् । इह मा भूत्—आधये आधेः. चिकीर्षवे चिकीर्षोरिति ।**

*॥*॥ अनन्यप्रकृतिरिति वा ॥*॥*

**अथवाऽनन्यप्रकृतिः कृदव्ययसंज्ञो भवतीति वक्तव्यम् ॥**

(**प्र०**) **अनिकारोकारेति** । एच एतद्विशेषणं, न मकारस्य, व्यवच्छेद्याऽसम्भवात् । **आधय इति** । गुणे कृतेऽन्तरङ्गबहिरङ्गयोरिति न्यायादव्ययसंज्ञा स्याद्यत्वयादयः। अन्तरङ्गत्वादेव[च]सुब्लुक् स्यात् । परिभाषान्तरप्रयोजनकथनार्थं 'लक्षणप्रतिपदोक्तयो'रित्येतदनाश्रितम् । लाक्षणिकं ह्यनुमेयं, प्रतिपदोक्तं तु प्रत्यक्षमिति तस्यैव ग्रहणं न्याय्यम् ॥

(**उ०**) भाष्ये–**अनिकारोकारेति** । यत्त्वन्तग्रहणान्नित्ययोगबहुव्रीहिणोपदेशे एजन्तमित्यर्थादत्र न दोष इति, तन्न । परिभाषयैव सिद्धेऽन्तग्रहणं न कार्यमिति तदाशयात्। **गुणे कृत इति** । तत्र कृते सुबनपेक्षत्वेनान्तरङ्गाऽव्ययसंज्ञा । सुप्संबन्धजपेक्षत्वादयादयो बहिरङ्गाः। **अन्तरङ्गत्वादेवेति** । ननु वर्णमात्रापेक्षयाऽयादय एवान्तरङ्गाः । एवं तर्हि अन्तरङ्गत्वेन बाधकत्वं लक्ष्यते। तेनान्तरङ्गानपीतिन्यायेन लुगिति बोध्यम् । तेन च लुक इव तत्प्रयोजकानामपि प्राबल्यबोधनेनाऽनेनैव गुणेऽयादीन्बाधित्वाऽव्ययत्वं बोध्यम्।

[ चोद्यसमाधानभाष्यम् ]

**किं पुनरत्र ज्यायः ? ॥**

**'अनन्यप्रकृति'रिति वचनमेव ज्यायः। इदमपि सिद्धं भवति—कुम्भकारेभ्यो नगरकारेभ्य इति ॥**

[ तटस्थाक्षेपभाष्यम् ]

**तत्तर्हि वक्तव्यम् ? ॥**

[ सिद्धान्तिसमाधानवार्तिकम् ]

*॥*॥ न वा, संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ॥*॥*

**न वा वक्तव्यम् ॥ किं कारणम् ? ॥ [ 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति' ] ॥**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'त्येषा परिभाषा कर्तव्या ॥**

(**प्र०**) **संनिपातलक्षण इति** । संनिपातः संश्लेषस्तन्निमित्तो यो विधिः स तद्विघातस्याऽनिमित्तम् । तं संनिपातं यो विहन्ति तस्येत्यर्थः ॥

(**उ०**) **तद्विघातस्येति** कर्मण्यणित्याह–**तमिति** । नचाऽनया लुको बाधेऽपि संज्ञाबाधे मानाऽभावः । साक्षात्परम्परया वा तद्विघातकमात्रस्याऽनया प्रतिबन्धात् । अत एवोपादास्तेत्यत्र कित्त्वं न । अन्यथाऽनया साक्षादेज्विषयसन्निपातविघातकक्ङिति चेति निषेधाऽप्रवृत्तिः स्यात् । कित्त्वं तु स्यादेव । तत्फलं तु सन्नियोगशिष्टत्वसिद्धिरेव । एवं चोपादस्तेति रूपं स्यात् । अत्र हि किदिति न कार्यातिदेशः,

१ **इदमेव**–ज्ञापकपरं भाष्यमेव । २ 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदि'ति परिभाषान्तरमिदम् । ३ **लाक्षणिकमिति** । अस्य 'अन्यथे'त्यादिः । तथाच नैवातिप्रसङ्ग इति भावः । ४ **तदाशयात्**–वार्तिककृदाशयात् । ५ **अनेनैव**–उक्तन्यायेनैव । तत्प्रयोजकत्वस्य गुणादौ सत्वात् । एवञ्च तदर्थं परिभाषान्तरस्वीकारो मुधैवेत्याशयः । ६ लुक्स्यात् । ७ **सञ्ज्ञेति** । सञ्ज्ञायाः सन्निपातविघातकत्वाऽभावादित्याशयः । तदाह–**साक्षादिति** । ८ सामान्यतः सर्वप्रतिबन्धाद्वा । ९ अन्यथा–साक्षात्सन्निपातविघातकमात्रप्रतिबन्धे तु । १० स्थाघ्वोरिच्चेत्यर्थः ।

ह्रस्वकाले तत्कार्याऽसंभवात्। तस्माद्व्यपदेशातिदेश एव। तस्मात्सन्निपातविघातकशास्त्रप्रवृत्तिनिमित्तातिदेशवत्संज्ञाया अप्यनेनाऽप्रवृत्तिः। अकजाद्यर्थसंज्ञा तु न, अन्तरङ्गायां तस्यां बहिरङ्गगुणादेरसिद्धत्वात्॥

[ आक्षेपतत्समाधानभाष्यम् ]

**कः पुनरत्र विशेषः–एषा वा परिभाषा क्रियेत, 'अनन्यप्रकृति'रिति वोच्येत ?॥ अवश्यमेषा परिभाषा कर्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि॥**

[ परिभाषाप्रयोजनजिज्ञासाभाष्यम् ]

**कानि पुनस्तानि ?॥**

[ प्रयोजनप्रदर्शनवार्तिकम् ]

*॥*॥ [1]प्रयोजनं,–ह्रस्वत्वं तुग्विधेर्ग्रामणिकुलम् ॥*॥*

**[ ह्रस्वत्वं[2] तुग्विधेरनिमित्तम् ॥ क ?॥ 'ग्रामणिकुलम्'] ॥ ग्रामणिकुलं सेनानिकुलमित्यत्र ह्रस्वत्वे कृते 'ह्रस्वस्य पिति कृति तुग्भवती'ति तुक् प्राप्नोति। 'संनिपात लक्षणो विधिरनिमित्तं तद्विघातस्ये'ति न दोषो भवति।**

**(प्र०) ग्रामणिकुलमिति।** 'इको ह्रस्व'इति पूर्वोत्तरपदसन्निपातनिमित्तं ह्रस्वत्वं तुको न निमित्तम्। तुकि हि सति पूर्वोत्तरपदयोरान्तर्यविघातः। यदा तु ह्रस्वमात्रस्य तुगागमो न तदन्तस्य, अवयवावयवश्च समुदायावयवो न भवति तदैतत्प्रयोजनं, न त्वन्यथा॥

**(उ०) पूर्वोत्तरेति।** अधिकृतेनोत्तरपदेन पूर्वपदस्याक्षेपादिति भावः। **अवयवेति।** तथा ऽप्रतीतेरित्यभिमानः। वस्तुतस्तु इगन्तपूर्वपदस्योत्तरपदसन्निपातविघातः पूर्वपदस्येगन्तत्वसंनिपातविघातश्चेति भाष्याशयः। एवं 'वृत्रहभि'रित्यत्र नान्तस्य स्वादिसन्निपातविघातः। नान्तस्वादिसन्निपातनिमित्तकपदत्वनिमित्तको हि नलोप इति[3]। लोके [4]पाण्याद्यवयवाङ्गुल्यादेर्भुजपुरुषाद्यवयवत्वव्यवहारात्, कैयटोक्तं चिन्त्यम्। ... भवितेत्यादौ तासवयवेऽ... लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य 'दीधीवेवीटा'मिति निषेधो व्यर्थः स्यात्। न च ह्रस्वावयवत्वे तुको ...

इणेन तुग्विशिष्टस्य ग्रहणान्न सन्निपातविघातः। 'आने'मुगिति ज्ञापकेन तदनङ्गीकारात्। एतेनावयवावयवस्य समुदायावयवत्वे अवयवावयवेऽपि अवयविनः समवेतत्वापत्तौ घटस्यापि परमाणुषु समवेतत्वेनाऽप्रत्यक्षसमवेततया वायुवृक्षसंयोगवदप्रत्यक्षत्वं स्यादिति परास्तम्। भूयोवयवसंनिकर्षस्यैव फलबलात् कारणत्वेनाऽक्षतेः। संयोगप्रत्यक्षे तु यावदाश्रयप्रत्यक्षमेव हेतुः, फलबलादिति दिक्॥

[ प्रयोजननिरासभाष्यम् ]

**नैतदस्ति प्रयोजनम्। बहिरङ्गं ह्रस्वत्वमन्तरङ्गस्तुक्। 'असिद्धं बहिरङ्गमन्तरङ्गे'।**

**(प्र०) बहिरङ्गमिति। द्विपदाश्रयत्वात्।** यदपि 'ह्रस्वो नपुंसके प्रातिपदकस्ये'ति ह्रस्वत्वं, तदपि अर्थाश्रयत्वाद्बहिरङ्गम्, तुक्तु वर्णाश्रयत्वादन्तरङ्गः। यदि तु 'सन्निपातलक्षण' इत्याश्रीयते तदा 'ग्रामणिच्छत्र'मित्यत्राऽपि तुग्न स्यात्। ह्रस्वत्वतुगागमयोस्त्वत्र साम्यादन्तरङ्गत्वं बहिरङ्गत्वं नास्तीति छलक्षणस्तुक् सिद्धो भवति॥

**(उ०)** असिद्धत्वेन समाधानं चावश्यकमित्याह–**यदपीति।** अर्थाश्रयत्वादिति। इदं 'त्र्यादेशे स्नन्तस्य प्रतिषेधो वक्तव्य' इति स्थानिवत्सूत्रस्थेन वार्तिकेन, तत्प्रत्याख्यानपरेण भाष्येण च विरुद्धम्। प्रातिपदिकरूपसमुदायाश्रयत्वादिति वक्तुं युक्तम्। तदेवाह–**वर्णाश्रयत्वादिति।** इयं च ... सिद्धिर्नाजानन्तर्य इति निषेधमनाश्रित्य। 'कुलं ... नपुंसकह्रस्वत्वेन संनिपातपरिभाषयैव न तुक्। प्रातिपदिकस्याऽजन्तत्वसंनिपातेन जात... तदविघातकत्वात्। एतेन परनिमित्तकत्वेन कृत्त्वपित्त्वज्ञानसापेक्षत्वेन च तुगपि ह्रस्वसमान इति नपुंसकह्रस्वत्वे तुग् दुर्वार इत्यपास्तमिति अनुपदमेव वक्ष्यामः। तुकि संनिपातपरिभाषाश्रयणे दोषमप्याह–**यदित्विति।** [5]अत्रापि वर्णमात्राश्रयत्वेन तुगन्तरङ्गः, पूर्वपदोत्तरपदाश्रयो ह्रस्वो बहिरङ्गस्तद्दोषेष्वस्याऽगणनाच्च। तस्मादत्र तुग्न भवेत्येत्यन्ये॥

*॥ * ॥ नलोपो वृत्रहभिः ॥ * ॥*

**[ नलोपस्तुग्विधेरनिमित्तम् ॥ क ? ॥ 'वृत्रहभिः' ।] । वृत्रहभिर्भ्रूणहभिरित्यत्र न ... ह्रस्वस्य पिति कृति तुग्भवतो'ति ... 'संनिपातलक्षणो विधिर... तद्विघातस्ये'ति न दोषो भवति॥**

१ प्रयोजनमिति। ग्रामणि... धेरनिमित्तमिति संनिपातपरिभाषाप्रयोजनमित्यर्थः। ...ग्रेऽपि बोध्यम्। २ लुप्त स्यात्। ३ इतीत्यस्य 'बोध्य'मिति ...ति–लोक इति। ५ किञ्चेत्यस्य– ... ...वयवत्वाभावे'इति शेषः। ६ अत्रापीति। ग्रामणिच्छत्रमित्यत्रापीत्यर्थः॥

( उ० ) **'वृत्रहभि'**रित्यादौ पदसंज्ञाद्वारा नलोपस्य सन्निपातलक्षणत्वम् ॥

[ प्रयोजननिरासभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्। असिद्धो नलोपस्तस्याऽसिद्धत्वान्न भविष्यति ॥**

( प्र० ) **असिद्धो नलोप इति।** 'नलोपः सुप्स्वरे'ति, 'असिद्धं बहिरङ्ग'मिति वा ॥

( उ० ) **असिद्धमिति।** सुब्निरपेक्षतुगपेक्षया पदत्वद्वारा तदपेक्षनलोपो बहिरङ्ग इति भावः ॥

*॥*॥ उदुपधत्वमकित्त्वस्य निकुचिते ॥*॥*

**उदुपधत्वमकित्त्वस्याऽनिमित्तम् ॥ क?॥ 'निकुचिते'। निकुचितं[1] इत्यत्र नलोपे कृते 'उदुपधाद्भावादिकर्मणोरन्यतरस्या"मित्यकित्त्वं प्राप्नोति। "संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति न दोषो भवति ॥**

(प्र०) **निकुचित इति।** कुञ्चेर्भावे क्तप्रत्ययः। **अनिदितामिति** नलोपः। तत्र कित्त्वनिमित्तमुदुपधत्वमुदुपधादित्यकित्त्वस्याऽनिमित्तमिति गुणो न भवति ॥

[ प्रयोजननिराकरणभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्। अस्त्वत्राऽकित्त्वं, 'न धातुलोप आर्धधातुके' इति प्रतिषेधो भविष्यति ॥**

[ प्रयोजनवार्तिकम् ]

*॥*॥ नाभावो यञि दीर्घत्वस्यामुना ॥*॥*

**नाभावो यञि दीर्घत्वस्याऽनिमित्तम्। क?॥ 'अमुना'। नाभावे कृते 'अतो दीर्घो यञि' 'सुपि चे'ति दीर्घत्वं प्राप्नोति।**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति न दोषो भवति ॥**

( प्र० ) **अमुनेति। न मु न** इत्यस्यायमर्थः- ने कर्तव्ये मुभावः सिद्धो भवति, नतु ने परतो यद्दीर्घत्वं प्राप्नोति। तत्र मुभावस्याऽसिद्धत्वादकारान्तत्वाद्दीर्घप्रसङ्गः। तस्मिन्कृते 'अदसोऽसे'रिति दीर्घस्य दीर्घ ऊकारः प्राप्नोति। ततश्चाऽमूनेति स्यात्। उकारसन्निपातनिमित्तस्तु नाभावो दीर्घत्वस्याऽनिमित्तमिति सिद्धममुनेति ॥

( उ० ) 'यद्दीर्घत्वं प्राप्नोती'यस्य 'तत्रापि मुभावः सिद्ध इत्यर्थ' इति शेषः॥ **तत्रेति।** अस्य च 'एवं चे'त्यादिः। क्वचित्तु-'प्राप्नोति तत्र। तथा च तत्रे'ति पाठः। **असिद्धत्वादिति।** शास्त्राऽसिद्धत्वादिति भावः। **कृतेदसोसेरिति।** ननु मुत्वाऽसिद्ध्या उकार एवाऽकारबुद्धौ सुपिचेत्यन्तरतमे दीर्घे आकारे मस्य स्वत एव सत्त्वाद्दात्परत्वाऽभावेन कथमनेन दीर्घोकारप्रवृत्तिरिति चेन्न। लोकसिद्धसंनियोगशिष्टन्यायेन मुत्वस्यापि निवृत्तेर्दात्परत्वसत्त्वात्। नचाऽचः परस्मिन्निति स्थानिवत्त्वाद्दीर्घस्य नान्यतरापाय इति वाच्यम्। 'पूर्वत्रासिद्धीये न स्थानिव'दिति निषेधात्। लक्ष्ये लक्षणस्येति न्यायस्तु न, लक्ष्यभेदादित्यभिमानः। केचित्तु 'अमाना' 'अदाना' इति वापत्तिरित्याहुः। **दीर्घत्वस्येति।** उकारस्वरूपविनाशकस्येत्यर्थः ॥

[ प्रयोजननिरासभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्-'न मु टादेशे' इति ॥**

( प्र० ) **न मुटादेश इति।** अनेकविभक्त्यन्तस्तत्र समास आश्रितः-टाया आदेशः, टायामादेश इति ॥

( उ० ) नन्वेवमपि टादेश एव सिद्धत्वं स्यादत आह-**अनेकेति।** अनेकविभक्त्यन्तपूर्वपद इत्यर्थः। संबन्धसामान्यषष्ठ्या समास इति तात्पर्यम् ॥

*॥*॥ आत्वं कित्त्वस्योपादास्त ॥*॥*

**आत्त्वं कित्त्वस्याऽनिमित्तम् ॥ क[2] ?॥ उपादास्तास्य स्वरः शिक्षकस्येति। आत्वे कृते 'स्थाघ्वोरिच्चे'तीत्त्वं प्राप्नोति। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति न दोषो भवति ॥**

(प्र०) **उपादास्तेति।** एज्विषय आत्त्वविधानादकित्त्वसन्निपातनिमित्तमात्त्वं 'स्थाघ्वोरिच्चे'ति कित्त्वस्याऽनिमित्तम्। कित्त्वसंनियुक्तं चेत्त्वमिति कित्त्वाऽभावे न भवति ॥

(उ०) **कित्त्वस्येति।** भाष्येऽपि 'स्थाघ्वोरिच्चे'ति

१ 'निकुचितमित्यत्र'। २ 'क ?। उपादास्त स्वरः' इत्यादि तु **गौडाः** पठन्ति।

किस्त्वं प्राप्नोती'ति पाठः। 'इत्त्व'मिति पाठे किस्त्वसहितमित्त्वमित्यर्थः। किस्त्ववारणेपीत्त्वं स्यादत आह—किस्त्वेति ॥

[ प्रयोजननिरासभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्। उक्तमेतत्—'दीङः प्रतिषेधः स्थाघ्वोरित्त्वे'इति।**

*॥*॥ तिसृचतसृत्वं[2] ङीब्विधेः ॥*॥*

**तिसृचतसृत्वं ङीब्विधेरनिमित्तम् ॥ क ? ॥ 'तिस्रस्तिष्ठन्ति चतस्रस्तिष्ठन्ती'[3]ति। तिसृचतसृभावे कृते 'ऋन्नेभ्यो ङी'बिति ङीप् प्राप्नोति। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति न दोषो भवति ॥**

[ वार्त्तिकोक्तप्रयोजननिरासभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति—'न तिसृचतसृभावे कृते ङीब्भवती'ति यदयं 'न तिसृचतसृ'[4]नामि दीर्घत्वस्य प्रतिषेधं शास्ति ॥**

(प्र०) **यदयमिति**। ननु समस्तार्थमेतत्स्यात् 'प्रियतिसृणां ब्राह्मणाना'मिति। अत्र ह्यङ्गं पुंसि वर्तत इति नास्ति ङीपः प्राप्तिरिति केचित्। तदयुक्तम्। न हि ङीब्विधानेऽङ्गाधिकारोऽस्ति। तत्रा[5]ऽवयवस्य स्त्रीत्ववृत्तित्वान्ङीपः प्राप्तिः केन वार्यत इति ज्ञापकमेव। ज्ञापकादेव च सिद्धत्वात्स्वस्रादिष्वनयोः पाठो न कर्तव्यो भवति ॥

(उ०) **नास्ति ङीप इति**। यत्त्वन्तरङ्गत्वात्समासात्पूर्वमेव ङीबिति। तन्न। 'अन्तरङ्गानपी'ति न्यायेनान्तर्वर्तिविभक्त्याश्रयतिस्रादेशस्याऽप्रवृत्तेः। **ज्ञापकमेवेति**। ङ्यन्ते तु नास्य प्रवृत्तिः, विभक्तौ लिङ्गविशिष्टाऽग्रहणात्। नन्वेवं स्वस्रादिपाठो व्यर्थः स्यादत आह—**ज्ञापकादेवेति**। एवं चैतज्ज्ञापकपरभाष्यप्रामाण्यात्स पाठोऽप्रामाणिक इतिभावः॥

**इमानि तर्हि प्रयोजनानि—**

[ प्रयोजनान्तरवार्त्तिकानि ]

*॥ * ॥ 'शतानि[6] सहस्राणि' ॥ * ॥*

**नुमि कृते 'ष्णान्ता षडि'ति षट्संज्ञा प्राप्नोति। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति न दोषो भवति ॥**

(प्र०) **शतानीति**। विभक्तिसन्निपातनिमित्तो नुमागमः षट्संज्ञाहेतुकस्य विभक्तिलुको न निमित्तम्। ष्णान्ता षडित्यन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थमित्यत्र न भवतीति[7] चेत्, संख्यासंप्रत्ययार्थं बहुव्रीह्यर्थं तत्स्यादित्यदोषः ॥

(उ०) **विभक्तिलुक इति**। तन्नि[8]मित्तसंज्ञायाश्चेत्यपि बोध्यम्। **अन्तग्रहणमिति**। तत्सामर्थ्यादिति मन्यते। सामर्थ्यमसिद्धमिति परिहारः—**संख्येति**। बहुव्रीहेः फलं संख्यासंप्रत्ययः ॥

[ प्रयोजनवार्त्तिकभाष्यम् ]

*॥*॥ शर्कटौ पद्धतौ ॥*॥*

**अत्वे कृते 'अत' इति टाप् प्राप्नोति ॥ 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति न दोषो भवति ॥**

(प्र०) **शकटाविति**। विभक्तिसंनिपातकृतमत्वं यदि टापो निमित्तं स्यादानन्तर्यं विहन्येत। शास्त्रीये च कार्येऽन्तादिवद्भावो'नाऽनन्तर्ये लौकिके। टापि च सति 'शकटाया'मिति स्यात्। 'अच्च घे'रिति तपरकरणेनाऽप्यत्र टाब्निवर्तयितुं शक्यते। इदुतोर्हि स्थाने मात्रिक एवाऽकारो भविष्यति, भाव्यमानत्वाद्वा सवर्णस्याऽकारो ग्राहको न भविष्यतीति लक्षणान्तरेणापि प्राप्तस्य दीर्घत्वस्य निराकरणार्थं तपरकरणं संपद्यते ॥

(उ०) **विभक्तीति**। 'घेः परस्य ङेरौद्धेरन्तादेशश्चाकार' इति सूत्रार्थान्ङ्यादेशौत्वसन्नियोगेन विधीयमानमत्वमङ्गप्रत्ययसन्निपातकृतमित्यर्थः। नन्वेकादेशेऽन्तवद्भावान्नटाब् व्यवधायकोऽत आह—**शास्त्रीये चेति**। ननु टापि वृध्द्येरेकादेशे शकटाविति सिद्धयेदेवा[9]ऽत आह—**टापि चेति**। वृद्धेः परत्वादाङ्गत्वाच्च याडामाविति भावः। **संपद्यत इति**। तपरत्वाद्धि सवर्णदीर्घत्वं न स्यात। टाप्तु स्यादेव। किं च शकटावित्यादौ वृद्धिरप्येवं न स्यादिति चिन्त्यमिदम् ॥

[ प्रयोजनवार्त्तिकम् ]

*॥*॥ इयेष[10] उवोष ॥*॥*

---

१ शङ्कते—**किस्त्वेति**। अस्य 'न'न्वित्यादिः। २ अत्र **तिसृचतसृत्वं ङीब्विधेस्तिस्र** [ रितष्ठन्ति चतस्ररितष्ठन्ति'] इत्येवं वार्तिकपाठ इत्यन्ये ॥ ३ इतिः क्वचिन्न। ४ **न तिसृचतस्रिति**। 'इत्यनेने'ति शेषः। ५ **तत्रेति**। समस्ते इत्यर्थः। ६ इदं भाष्यमित्यन्ये ॥ वार्तिकमित्यन्ये। ७ 'भविष्यतीति' पा०। ८ इदं भाष्यमित्यन्ये। प्रयोजनवार्त्तिकमित्यन्ये। ९ 'सिद्धयेदत आह' पा०। १० इदं भाष्यं वार्त्तिकं वेति सन्दिग्धम्।

**गुणे कृते 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् प्राप्नोति ॥ 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति न दोषो भवति ॥**

**(प्र०) इयेषेति ।** आमि सति लुक् स्यादिति प्रकृतिप्रत्ययसंनिपातस्य विघातः स्यात् । 'उषविदे'ति विकल्प ओषांचक्रतुः ऊषतुरित्यादौ सावकाश इत्युवोषेति नित्य आम् प्रसज्येत । प्रतिपदविधेस्तु बलवत्त्वात्परत्वाच्चाऽत्रापि विकल्पेनैव भाव्यमित्यनुदाहरणमेतत् । 'गुरुमत' इति नित्ययोगे मतुबाश्रयणादपि शक्योऽत्राऽऽमभावः प्रतिपादयितुम् ॥

**(उ०) लुक् स्यादितीति ।** लुगभावेऽपि शक्टाविति वद्यत्संनिपातेन गुणो जातस्तदानन्तर्यविघातस्य सत्त्वेनैतत्कथनस्योपयोगश्चिन्त्यः । ननूषविदेत्याम्विधानादुवोषेत्यसङ्गतमत आह—**उषविदेति**।तत्र न द्विर्वचनात्प्राग् गुरुमत्त्वमिति भावः । **प्रतिपदविधेरिति** । क्वचिद्गुणे क्वचिद्द्वित्वे एकादेशे गुरुमत्त्वादिजादेरित्येतन्नाप्राप्तमिति भावः । **परत्वादिति** । तदुक्तस्य[3] ऊषतुरित्यस्यावकाशत्वमभ्युपगम्येदमुच्यते । 'उवोखे'ति कवर्गद्वितीयान्तो वा भाष्ये पाठः । उषेर्विकल्पेन पक्षे आमभावेऽपि कृतद्वित्वादुवोषाद्वार एवाम् । रूपे चास्त्येव विशेष उवोषाञ्चकारेति । उषेस्त्वामि ओषांचकारेतीति **परे । नित्ययोगेति ।**'इजादेर्गुरो'रित्युक्तावपि 'अनृच्छ' इति प्रतिषेधादिजादेर्गुरुमत इत्यर्थलाभे मतुब्ग्रहणादिति भावः । परैत्वेवं सत्यनृच्छ इत्यस्यानर्थक्यापत्तिः । तुग्युत्पत्तेः प्राग् गुरुमत्त्वाऽभावात् । उम्भादीनां गुरुमतामामनापत्तेश्च । तेषामाशीर्लिङि गुरुमत्त्वाऽभावादिति भाष्याशयमाहुः ॥

[ परिभाषाप्रयोजनदूषणवार्तिकानि ]

*॥*॥ तस्य दोषो-वर्णाश्रयः प्रत्ययो वर्णविचालस्य ॥*॥*

**तस्यैतस्य लक्षणस्य[4] दोषो-वर्णाश्रयः प्रत्ययो वर्णविचालस्याऽनिमित्तं स्यात् ॥ क ? ॥ 'अत इञ्' । दाक्षिः प्लाक्षिः ॥**

**(प्र०) दाक्षिरिति ।** प्रयोगे व्यवस्थितस्यैवेकारस्याऽन्वाख्यानमनेन क्रियत इति संनिपातलक्षणत्वं प्रत्ययस्य संभाव्यते ॥

**(उ० )** नन्विञ्प्रत्ययो नोभयाधिष्ठानसंबन्धलक्षण सन्निपाताश्रय इत्यत आह—**प्रयोग इति ।** अन्वाख्यानं-साधुत्वेन । **प्रत्ययस्य**—साधुत्वावच्छिन्नस्य ॥

[ दूषणनिरासभाष्यम् ]

**न प्रत्ययः संनिपातलक्षणः ॥**

**(प्र०) न प्रत्यय इति ।** कल्पितप्रकृतिप्रत्ययविभागेनाऽन्वाख्यानात्प्रकृतेरविद्यमान एव प्रत्यय उत्पाद्यत इत्याशयः ॥

**(उ०) अविद्यमान एवेति ।** मन्दमध्यानां तथैव प्रतीतेः । साधुत्वान्वाख्यानेऽपि साधुत्वस्य सन्निपातनिमित्तकत्वं, न प्रत्ययस्येति भावः ॥

[ दूषणस्थापनभाष्यम् ]

**अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात् ॥**

**(प्र०) अङ्गसंज्ञेति ।** सत्यामङ्गसंज्ञायामकारलोप इति स्यादानन्तर्यविघातः । तत्र—'वर्णविचालस्याऽनिमित्तं स्या'दिति अङ्गसंज्ञाद्वारेणेत्यर्थः । अत्र केचिद्वर्णाश्रय इति व्याचक्षते तेषामात्रेयाद्यप्युदाहरणम् । अन्ये त्ववर्णाश्रय इत्यकारप्रश्लेषमाहुः ।

**(उ०) सत्यामिति ।** 'यस्मा'दित्यस्य प्रत्ययविधावुद्देश्यतावच्छेदकावच्छिन्नादित्यर्थेऽवर्णान्तादिञि तदङ्गसंज्ञमिति सूत्रार्थ इति भावः । यद्यङ्गसंज्ञाऽनिमित्तम्, कथं तर्हि वार्तिके 'प्रत्यय'[6] इत्युक्तमत आह—**तत्रेति । आत्रेये**-इतश्चानिञ इति ढक् । **परे** तु वार्तिकस्यामाशयः—निमित्तनिमित्तिनोः संबन्धवद्विशेषणविशेष्ययोः संबन्धोऽपि सन्निपातः । एवं च प्रातिपदिकस्यादन्तत्वसंबन्धनिमित्तः प्रत्ययस्तद्विघातस्याऽनिमित्तमिति । इममाशयमजानानः शङ्कते—**न प्रत्यय इति** । एकदेश्युत्तरयति—**अङ्गसंज्ञा तर्हीति** । युक्तं चैतत् । उपजीव्यविरोधस्याऽन्याय्यत्वं हि एतन्न्यायमूलम् । तस्य च प्रकृतेऽपि सत्त्वात् । अतिप्रसङ्गस्तु त्वयेव मयाप्यनित्यत्वेन दुःशकवारणः । अत एव 'ग्रामणि कुल'मित्यादौ नपुंसकह्रस्वत्वे तुङ् । उपजीव्यस्य प्रातिपदिकाजन्तत्वसम्बन्धस्य विघातात् । बहिरङ्गपरिभाषयाऽसिद्धत्वं तु न, तस्य तत्त्वाऽभावात् । 'शैवो' 'गाङ्गेय' इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या 'वर्णाश्रय' इत्यंशस्य वार्तिके वैयर्थ्यापत्तेश्चेत्याहुः ॥

*॥*॥ आत्वं पुग्विधेः क्नापयति ॥*॥*

**आत्वं पुग्विधेरनिमित्तं स्यात् ॥ क ? ॥ क्नापयतीति ॥**

---

१ **इति**—इत्यतोऽपि । २ **आम्विधानादिति ।** आम्विकल्पविधानसामर्थ्यादित्यर्थः। **उवोषेति ।** इदमुदाहरणमित्यर्थः। ३ **तदुक्तस्येति** । उदाहरणत्ववादिनोक्तस्येत्यर्थः।

४ **लक्षणस्य**—'संनिपाते'ति परिभाषारूपस्य लक्षणस्य, **दोषः**—अतिव्याप्तिः । **विचालो**—नाशः । ५ 'तेनात्रेदा' पा० । ६ **इति**—इत्यन्तमुक्तम् ।

(प्र०) क्रापयतीति । णिचि वृद्धौ कृताया-मात्वं पुको न निमित्तं स्यादङ्गस्य य आकारस्तस्य पुगित्यवयवभक्तं पुकं मत्वा दोषोपन्यासः ॥

(उ०) आत्वम्-'क्रीङ्जीनां णौ'[1]विति । स्वाङ्गस्याऽव्यवधायकत्वादाह—आकार इति । श्रुतत्वात्तस्यैव पुगिति भावः॥ परे तु पुकोऽङ्गभक्तत्वेऽपि न क्षतिः, यादृशयोः सन्निपातः पुङ्निमित्तं तस्य निघातसत्त्वात् । 'यदागमा' इति परिभाषया तद्ग्रहणेन ग्रहणेऽपि सूत्रश्रुतसन्निपातस्याऽभावात् । अत्रचेदमेव भाष्यं मानम् , 'ह्रस्वत्वं तुग्विधे'रित्यादि च । सिद्धान्ताशयस्तु परिभाषाया अनित्यत्वमाश्रयणीयमित्येवेत्याहुः ॥

*॥*॥ पुग्घ्रस्वत्वस्याऽदीदपत् ॥*॥*

**पुग्घ्रस्वत्वस्याऽनिमित्तं स्यात् ॥ क ? ॥ अदीदपदिति ॥**

(उ०) भाष्ये-पुग् ह्रस्वत्वस्येति । ण्याकारसन्निपातनिमित्तः पुक् । ह्रस्वे हि तद्विघातः स्पष्ट एव । न च ह्रस्वस्य चङ्परणिनिमित्तस्य णिनिमित्तपुगपेक्षया बहिरङ्गत्वेनाऽसिद्धत्वात्कथमत्र परिभाषाप्राप्तिः । एतद्भाष्यप्रामाण्येनाऽनयाऽसिद्धस्यापि निवृत्तिस्वीकारात् । किं च तया शास्त्रीयकार्येऽसिद्धत्वेऽपि लौकिके सन्निपातेऽसिद्धत्वाभावात्

*॥*॥ त्यदाद्यकारष्टाब्विधेः [ या सा ] ॥*॥*

**त्यदाद्यकारष्टाब्विधेरनिमित्तं स्यात् । क ? ॥ या सेति ॥**

*॥*॥ इड्विधिराकारलोपस्य [ ययिवान् ] ॥*॥*

**इड्विधिराकारलोपस्यानिमित्तं स्यात् ॥ क ? ॥ 'ययिवान् तस्थिवा'निति ।**

(उ०) इड्विधिरिति । वस्वेकाजाद्घसामित्याकारान्तलक्षण इट् । नियमशास्त्राणां च विधिमुखेनैव प्रवृत्तिरिति भावः ॥

*॥ * ॥ मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य [ अग्निमान् ] ॥ * ॥*

**मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्याऽनिमित्तं स्यात् ॥ क ?॥ अग्निमान् वायुमान्[3] । परमवाचा परमवाचे इति ॥**

(प्र०) अग्निमानिति । पूर्वमुदात्तमाश्रित्य मतुप उदात्तत्वं क्रियमाणं पूर्वस्य निघातं न कुर्यात् । परमवाचेति । 'अन्तोदात्तादुत्तरपदा'दिति विभक्त्युदात्तत्वं विधीयमानं पूर्वनिघातस्याऽनिमित्तं स्यात् ॥

(उ०) पूर्वमिति । 'ह्रस्वनुड्भ्या'मित्यत्रान्तोदात्तादित्यनुवृत्तेरिति भावः ॥

*॥*॥ नदीह्रस्वत्वं संबुद्धिलोपस्य [ नदि ] ॥*॥*

**नदीह्रस्वत्वं संबुद्धिलोपस्यानिमित्तं स्यात् ॥ क ? ॥ नदि कुमारि किशोरि ब्राह्मणि ब्रह्मबन्धु इति[3] । नदीह्रस्वत्वे कृते "एङ्ह्रस्वात्सम्बुद्धेः"ति संबुद्धिलोपो न प्राप्नोति ॥**

(उ०) ह्रस्वत्वम्-अम्बार्थेत्यनेन ॥

[ दूषणनिरासभाष्यम् ]

**मा भूदेवं ङ्यन्तादित्येवं भविष्यति ।**

(प्र०) माभूदिति । हल्ङ्यादिसूत्रे दीर्घग्रहणमदृष्टेर्[4]दमुच्यते । तत्र कृतेऽपि ह्रस्वत्वे स्थानिवद्भावाद्भविष्यतीति भावः । ब्रह्मबन्धुशब्दापेक्षया च नैतदुच्यते, तस्याऽङ्यावन्तत्वात् ॥

[ दूषणस्थापकभाष्यम् ]

**न सिध्यति । 'दीर्घा'दित्युच्यते, ह्रस्वान्ताच्च न प्राप्नोति । इदमिह संप्रधार्यं-ह्रस्वत्वं क्रियतां संबुद्धिलोप इति । किमत्र कर्तव्यम् ? ॥ परत्वाद्ध्रस्वत्वम् ॥**

[ दूषणबाधकभाष्यम् ]

**नित्यः संबुद्धिलोपः, कृते ह्रस्वत्वे प्राप्नोति, अकृतेऽपि ॥**

(प्र०) नित्य इति । कार्यं तावन्नित्यं, तद्येन केनचिल्लक्षणेन भवत्विति भावः । संबुद्धिलोपस्यावकाशो हे देवदत्तेति ॥

(उ०) ननु ह्रस्वग्रहणं निरवकाशत्वेन सन्निपातपरिभाषाबाधकं स्यादत आह-संबुद्धिलोपस्येति ॥

[ दूषणस्थापकभाष्यम् ]

**अनित्यः संबुद्धिलोपः । नहि कृते ह्रस्वत्वे प्राप्नोति ॥ किं कारणम् ? ॥ संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ।**

[ आक्षेपोपसंहारभाष्यम् ]

**एते दोषाः समा भूयांसो वा । तस्मान्नार्थोऽनया परिभाषया ॥**

---

१ इति-इत्यनेन । स्वाङ्गस्येति । अङ्गस्य । पुकीत्यादिः ।

२ लुप्तं स्यात् । ३ कश्चिन्न ४ अदृष्टेति । तद्विशेषणत्वेनाऽदृष्टेत्यर्थः ।

(प्र०) भूयांसो वेति । दुष्टत्वप्रतिपादनाय प्रकर्षारोपः । सर्वादिषु समशब्दस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञाविधानात्तुल्यवाचिनोऽत्र 'समा' इति प्रयोगः । अस्ति समशब्दः सर्वपर्यायः । यथा 'समराज्यं वर्तते'। सर्वेषां राज्यं वर्तते इत्यर्थः। वेदेऽपि–'मा नः समस्य दूढ्य' इति प्रयोगः। सर्वस्य दुर्धियो मा न इत्यर्थः। तत्रे प्रयोजनानामल्पत्वात्तान्येवोपसंख्यातव्यानीत्यर्थः ॥

( ड० ) भाष्ये–एते दोषाः समा इति। वार्त्तिककारोक्तसकलप्रयोजनापेक्षमिदम् । यद्यपि प्रयोजनानि नव, दोषा अष्टौ, तथापि अल्पान्तरत्वात्समत्वोक्तिः । यद्वाऽन्यत्रापि दोषः संभाव्यत इत्यभिमानः, ननूक्तदोषाणामुक्तप्रयोजनेभ्यो बहुत्वमेव न कुतस्तदतिशयोऽत आह– दुष्टत्वेति। अन्ये तूक्तेषु दूषितप्रयोजनानि त्यक्त्वा स्थितप्रयोजनत्रयापेक्षया भूयस्त्वोक्तिरित्याहुः । ध्यायतेर्विंचि षष्ठ्येकवचने 'आतो धातो'रिति लोपे 'दुरोदाशनाशदभध्येषि'ति उत्वे उत्तरपदादेः ष्टुत्वे 'दूढ्य' इति । तदाह–दुर्धिय इति। सर्वस्य दुर्बुद्धेरंहतिरुपद्रवो नोऽस्मान्मा वधीदित्यर्थः। दुःस्थिता धीर्येषामिति विग्रहे गतिकारकपूर्वकत्वाभावाऽयण् न। तस्मान्नार्थं इति। पूर्वपक्षाशयमाह–तत्रेति ॥

[ सिद्धान्तिसमाधानभाष्यम् ]

**नहि–'दोषाः सन्ती'ति परिभाषा न कर्तव्या, लक्षणं वा न प्रणेयम्। नहि–भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते न च मृगाः सन्तीति यवा नोप्यन्ते ।**

[ सिद्धान्तिनो युक्त्यन्तरभाष्यम् ]

**दोषाः खल्वपि साकल्येन परिगणिताः। प्रयोजनानामुदाहरणमात्रम्॥कुत एतत्?॥ नहि दोषाणां लक्षणमस्ति। तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं दोषेषु।**

( प्र० ) प्रतिविधेयमिति । तत्र विधानसामर्थ्यादाङ्गो वर्णविचालो भविष्यति । 'कष्टाये'ति । ज्ञापकाद्यशब्दे दीर्घो भविष्यति । 'न यासयो'रिति लिङ्गादाब्भविष्यति । ययिवानिति । वस्वेकाजादिस्वयं नियम इटो, न त्वपूर्वोऽयं विधिरित्याकारस्य लोपः। 'क्रापयती'त्याकारान्तभक्तः पुग्न व्यवधायकः। 'अदीदप'दिति लिङ्गाद्ध्रस्वः, यदयं मारणतोषणेति जानातेर्मित्त्वमुपधाह्रस्वार्थं शास्ति तज्ज्ञापयति–'पुकि कृते उपधाह्रस्वत्वं भवती'ति । नहि जानातेरकृते पुकि ह्रस्वभाविन्युपधा भवति। अग्निमानिति। अनुदात्तं पदमेकवर्जमिति परिभाषा स्वरविषया संनिपातपरिभाषां बाधते । 'एङ्ह्रस्वा'दित्यत्रापि 'गुणात्संबुद्धे'रिति वक्तव्ये ह्रस्वग्रहणसामर्थ्यात्संनिपातपरिभाषाऽभावः। दधीत्यत्र च्छन्दसि गुणाऽभावपक्षे छान्दसो लुग्भवति[3] ॥

(उ०) सिद्धान्ती समाधत्ते भाष्ये–नहीति । परिभाषयाः कर्तव्यत्वे युक्त्यन्तरमप्याह सिद्धान्ती–दोषाः खल्वपीति। लक्षणमिति। उपलक्षकं रूपं नास्तीत्यर्थः। तत्र विधानेति । यादृशप्रकृतिप्रत्ययसन्निपातनिमित्ताङ्गसंज्ञा तादृशसन्निपातविघातं विना यस्येति लोपस्य चरितार्थ्याऽभावादिति भावः। कष्टायेति । आकारसन्निपातनिमित्तो ङेर्यो यत्रादिनिमित्तदीर्घस्याऽनिमित्तं स्यादिति भावः। नैवं 'दोषाः साकल्येने'ति भाष्यविरोधः, 'कष्टायेति यादेशो दीर्घत्वस्ये'ति ग्रन्थो भाष्यपुस्तकेषु नष्टोऽतो न दोषः। एवं च 'समा' इत्यपि यथाश्रुतमेवेत्याहुः। लिङ्गादिति। इवनिषेधवैयर्थ्यादिति भावः । नत्वपूर्व इति। क्रादिनियमादार्धधातुकस्येडित्येवेट्सिद्ध इति नेडाकारान्तसन्निपातनिमित्त इति भावः ॥

परे तु नियमशास्त्राणां विधित्वमेव, आर्थी त्वितरनिवृत्तिरित्यर्थस्य भाष्यसंमतत्वेनाऽऽकारान्तसन्निपातनिमित्त एवेडित्यनित्यत्वेनैवात्र समाधानं युक्तमित्याहुः। आकारान्तेति। अङ्गस्येत्यनेन सामानाधिकरण्यस्योचितत्वादिति भावः। अत्र यद्वक्तव्यं तत्प्रागेवोक्तम्। तज्ज्ञापयतीति। अतएव 'भरज्ञपी'ति निर्देशः सङ्गच्छते। मितां ह्रस्वे चोपधाया इत्यनुवर्त्तत इति भावः । 'ह्रस्वभाविनीति। 'अचश्चे'त्युपस्थितेरिति भावः। 'अचश्चे'त्यस्य श्रुतित्वेन तद्बाधकल्पनापेक्षयाऽस्यैवानुमितस्य लोकन्यायसिद्धस्य बाधकल्पनोचितेति तात्पर्यम्। बाधते इति। ह्रस्वनुड्भ्या'मित्यत्रोपस्थितयोपस्थितिसामर्थ्यादिति भावः। गुणाभावेति। 'जसादिषु छन्दसि वावचन'मिति वचनादिति भावः।

## अव्ययीभावश्च ॥ १ । १ । ४० ॥

[ प्रयोजनवार्तिकम् ]

*॥*॥ अव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचाराः ॥*॥*

**अव्ययीभावस्याव्ययत्वे प्रयोजनं ॥ किम्?॥ 'लुङ्मुखस्वरोपचाराः' ॥ लुक्–उपाग्नि प्रत्यग्नि। 'अव्यया'दिति**

१ तत्रेवीति। दोषप्रयोजनयोर्मध्य इत्यर्थः।
२ तत्रेति। दोषाणां मध्य इत्यर्थः। ३ 'भविष्यति'पा०।

४ अस्य 'अन्यथे'त्यादिः। ५ एवम्–अत्र दोषसद्भावे। ६ समाधत्ते–कष्टेति। 'यत'इत्यादिः।

लुकसिद्धो भवति ॥ मुखस्वरः—उपाग्निमुखः । प्रत्यग्निमुखः । 'नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः' इत्येष प्रतिषेधः[1] सिद्धो भवति ॥ उपचारः-उपपयःकारः उपपयःकाम इति । 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्ये'तिप्रतिषेधः सिद्धो भवति ।

( प्र० ) अव्ययीभावश्च । प्रयोजनमिति । मुखस्वरोपचारौ निवर्त्त्यमानौ प्रयोजनम् । यथा 'मशकार्थो धूम' इति ॥

(उ०) अव्ययीभावश्च । उपचारो नाम 'अतः कृ' इति विहितविसर्गस्थानिकसत्वम् । यथा मशकार्थ इति । एतदेव 'निवृत्तिकारण'मिति पातञ्जलैर्व्यवह्रियते ।

[ आक्षेपभाष्यम् ]

किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम् ? ॥

[ समाधानभाष्यम् ]

परिगणनमित्याह ॥ अपि खल्वाहुः[2] 'यदन्यदव्ययीभावस्याऽव्ययकृतं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः' इति ॥

( प्र० ) अपि खल्विति । एवं खल्वित्यर्थः । परिगणनमनेन दृढीक्रियते ॥

(उ०) अनेनेति । ऋष्यन्तरवचनसंवादेनेत्यर्थः । तत्र[3] वक्तव्य इत्यन्तं तत् । तत्र यदन्यदित्यन्यत्वे प्रतियोगिनस्त्रय उक्ता इत्याहुः ॥

[ अनुयोगभाष्यम् ]

किं पुनस्तत् ? ॥

[ परिगणनाऽभावे दूषणभाष्यम् ]

पराङ्गवद्भावः[4] । पराङ्गवद्भावेऽव्ययप्रतिषेधश्चोदित उच्चैरधीयान नीचैरधीयानेत्येवमर्थम्, स इहापि प्राप्नोति—उपाग्न्यधीयान प्रत्यग्न्यधीयान ॥

अकच्यव्ययग्रहणं क्रियते उच्चकैर्नीचकैरित्येवमर्थम् । तदिहापि प्राप्नोति,—उपाग्निकं प्रत्यग्निकम् ॥

मुम्यव्ययप्रतिषेधश्चोद्यते—दोषामन्यमहर्दिवामन्या रात्रिरित्येवमर्थम् । स इहापि प्राप्नोति,—उपकुम्भंमन्य उपमणिकंमन्य इति[5] ॥

अस्य च्वावव्ययप्रतिषेध उच्यते—दोषाभूतमहर्दिवाभूता रात्रिरित्येवमर्थम्, स इहापि प्राप्नोति,—उपकुम्भीभूतम् उपमणिकीभूतम् ॥

( प्र० ) उपाग्न्यधीयानेति । अग्निसमीपे अधीयानेत्यर्थः । तत्र 'षष्ठ्यामन्त्रितकारकवचन'मिति पराङ्गवद्भावो भवति ॥

(उ०) किं पुनस्तत्पराङ्गवदित्यादिना तस्यैवोदाहरणप्रदर्शनम् । षष्ठ्येति । अत्र च कारकत्वम् । तेन समुदायस्य षाष्ठमामन्त्रितस्य चेत्याद्युदात्तत्वम् ॥

[ प्रत्याख्यानभाष्यम् ]

यदि परिगणनं क्रियते, नार्थोऽव्ययीभावस्याव्ययसंज्ञया ॥

[ आक्षेपभाष्यम् ]

कथं यान्यव्ययीभावस्याव्ययत्वे प्रयोजनानि ? ॥

[ प्रत्याख्यानसाधकप्रथमप्रयोजननिरासभाष्यम् ]

नैतानि सन्ति । यत्तावदुच्यते-लुगिति । आचार्यप्रवृत्तिर्ज्ञापयति-भवत्यव्ययीभावाल्लुगिति यदयं—'नाव्ययीभावादतः' इति प्रतिषेधं शास्ति ॥

(उ०) भाष्ये-यदयं नाव्ययीभावादिति । स ह्यनन्तरत्वादव्ययादाप्सुप इत्यस्यैव निषेधो, न तु सुपो धात्वित्यस्येति 'उपमणिकमुख' इत्यादौ तन्निषेधेन[6] चरितार्थमिति[7] न भ्रमितव्यम् ॥

[ तृतीयप्रयोजननिरासभाष्यम् ]

उपचार इति[4] । अनुत्तरपदस्थस्येति वर्तते ॥

[ द्वितीयप्रयोजननिरासभाष्यम् ]

तत्र[8] मुखस्वर एकः प्रयोजयति । न चैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्–'नाव्ययादव्ययीभावाच्चे'ति ॥

१ 'निषेधः' । २ 'अपि खल्वप्याहुः' । ३ तत्र-संवादे । तत्-वचनम् । तत्र-वचने । ४ कश्चिन्न । ५ 'श्चोद्यते' । ६ तन्निषेधेन-सुप इत्यस्य निषेधेन । ७ 'चरितार्थमिति' पा० । ८ तत्र-उभयोरन्यथासिद्धौ सत्याम् ।

( प्र० ) न चैकमिति । सामान्यलक्षणमेकप्रयोजनार्थं न कर्तव्यमित्यर्थः । तत्रैवायमिति । न चोक्तम्, तस्मान्मुखस्वरेणाऽत्र भवितव्यमित्याहुः । अन्ये तु वर्णयन्ति—अनव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानान्मुखस्वरनिवृत्तिर्भविष्यतीति नार्थः सूत्रेणेति । केचित्तु—स्वरादिपाठात्सिद्धायामव्ययसंज्ञायां पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेन कतिपयान्येवाऽव्ययकार्याणि भवन्तीति नार्थः परिगणनेनेत्याहुः । तेषां वचनमन्तरेण विशेषे प्रमाणाऽभावः ।

( उ० ) न चोक्तमिति । भाष्ये यदीत्यसन्दिग्धे संदिग्धवचनं 'वेदाः प्रमाणं चे'दितिवत् । तस्मात्तत्र ग्रहणं कर्त्तव्यम् । सूत्रं च न कार्यमिति भाष्याशय इति वयम् । अन्येत्विति । च्विना ह्यारोपितमव्ययत्वं, वास्तवमनव्ययत्वं च प्रतीयते इति यथालक्ष्यं किञ्चिदव्ययकार्यं भवति किंचिन्नेतीष्टं सिद्धमिति भावः । विशेषे-कार्यविशेषे । किंच[2] 'द्विर्बद्धं सुबद्ध'मिति न्यायेन पुनर्विधानात् सार्वत्रिकत्वमेव स्यादित्यपि द्रष्टव्यम् । एवं चा[3]व्ययीभावस्याव्ययत्वात्क्यच्नेति हरदत्ताद्युक्तं चिन्त्यम् । भाष्यविरोधात् । अन्ये तु—मुखस्वरे नाव्ययीभावादिति नोक्तम् । सूत्रं च कृतम् । तस्मादन्यदपि प्रयोजनम्—नद्या उपकूलमित्यादौ षष्ठीसमासप्रतिषेधादीत्याहुरिति मतं हरिटीकायां स्पष्टम् । तदपि खल्वप्याहुरित्यादिभाष्याननुगुणम् ॥ [ क्रन्मेजन्तः ]

## शि सर्वनामस्थानम् ॥१।१।४१॥

## सुडनपुंसकस्य ॥१ । १ । ४२॥

॥*॥ *शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शि[4]प्रतिषेधः* ॥*॥

शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शेः प्रतिषेधः प्राप्नोति । कुण्डानि तिष्ठन्ति वनानि तिष्ठन्ति ॥

( प्र० ) शि सर्व । सुडनपुंसकस्येति चेदिति । अस्मिन्सूत्रन्यासे दोषः, सुट् स्त्रीपुंसयोरित्यस्मिन्न्यासे न दोष इत्यर्थः ॥

[ ॥*॥ *असमर्थसमासश्च* ॥*॥ ]

असमर्थसमासश्चायं द्रष्टव्योऽनपुंसकस्येति । नहि नञो नपुंसकेन सामर्थ्यम् । केन तर्हि ? ॥ भवतिना । न भवति, नपुंसकस्येति ॥

( प्र० ) प्रसज्यप्रतिषेधाश्रयेण पूर्वपक्षः, पर्युदासाश्रयेण सिद्धान्तः ॥

( उ० ) शि सर्वना । भाष्ये समर्थसमासश्चेति दूषणान्तरम् । तत्राऽसामर्थ्यमसंबन्धात् । चेन वाक्यभेदस्यापि संग्रहः । पर्युदासेति । एवं हि समर्थसमासैकवाक्यते लभ्येते । यद्यपि पर्युदासेऽपि लक्षणा, तथापि दोषद्वययुक्तप्रसज्यप्रतिषेधापेक्षया लघुरेवेति भावः । वस्तुतो नञो निपातत्वेनाऽनेकार्थत्वात्पर्युदासपक्षे लक्षणेति रिक्तं वचः । पर्युदासपक्षे सुडित्यनेनैकवाक्यतया तस्याऽप्राप्तावपि आद्यस्याऽप्राप्तौ न मानमिति तात्पर्यम् ॥

[ समाधानभाष्यम् ]

यत्तावदुच्यते-'शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसिशिप्रतिषेधः'-इति ॥

॥*॥ *नाऽप्रतिषेधात्* ॥*॥

नायं प्रसज्यप्रतिषेधो—नपुंसकस्य नेति ॥ किं तर्हि ?॥ पर्युदासोऽयं-यदन्यन्नपुंसकादिति । नपुंसके न व्यापारः । यदि केनचित्प्राप्नोति, तेन भविष्यति[5] । पूर्वेण च प्राप्नोति ।

(उ०) नपुंसके न व्यापार इति । निषेधस्येतिशेषः॥

[ समाधानवार्तिकम् ]

॥ * ॥ *अप्राप्तेर्वा* ॥ * ॥

अथवा-अन्तरा या प्राप्तिः सा निषिध्यते ॥ कुत एतत् ? ॥ 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति । पूर्वा प्राप्तिरप्रतिषिद्धा, तया भविष्यति ॥

(प्र०) अप्राप्तेर्वेति । प्रसज्यप्रतिषेधेऽप्यदोषः। तत्र 'सु'डित्यनेन या प्राप्तिः, सा निषिध्यते । न तु 'शि सर्वनामस्थान'मिति प्राप्तिः । अन्यथा 'शि सर्वनामस्थान'मिति निरवकाशं स्यात् । नपुंसकस्यैव हि शिः संभवति ॥

(उ०) अप्राप्तेरितिवार्त्तिकस्य पूर्वसूत्रविहितसंज्ञायाः प्रतिषेधाऽप्राप्तेरिति अक्षरार्थः । भाष्ये तु वस्त्वर्थ[7] उच्यते ।

१ नहि च तथोक्तमाचार्येणेत्यर्थः । २ दोषान्तरमाह--किञ्चेति । ३ एवं च-परिगणनस्यावश्यकत्वे च ।

४ जशः शेः संज्ञाप्रतिषेध इत्यर्थः । ५ लुप्तं स्यात् । ६ 'ऽव्यापारः' । ७ वस्त्वर्थः-परमार्थः ।

**अन्यथेति** । सुडित्यनपेक्ष्य नपुंसकसंबन्धिमात्रस्य निषेध इत्यभिमानः । सुट्संबन्धे तु इदं चिन्त्यं, शसः शौ चरितार्थत्वात् ॥

[ आक्षेपभाष्यम् ]

**ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते ॥**

**(प्र०) ननु चेयमिति** । परत्वादित्यर्थः । प्रतिषेधयुक्ताऽयुक्तत्वाच्च विरोधसद्भावः । तत्र परत्वात् सुडिति प्राप्तिः पूर्वां प्राप्तिं बाधते तामपि प्रतिषेध इति दोषः॥

**(उ०)** ननु संज्ञाया एकत्वेन कार्यैक्ये विरोधाऽभावात्कथं परत्वमत आह-**प्रतिषेधेति** । शसि सावकाशत्वात् । एवं चोभयोर्यौगपद्याऽसंभवरूपो विरोधोऽस्तीति भावः । **पूर्वां प्राप्तिमिति** । एवं च सकृद्गतिन्यायेन पुनर्न प्रवर्त्तत इति भावः ॥

[ समाधानभाष्यम् ]

**नोत्सहते प्रतिषिद्धा सती बाधितुम् ।**

**(प्र०) नोत्सहत इति** । अपवादविषयपरिहारेणाऽस्याः प्रवर्तनादित्यर्थः ॥

**(उ०) अपवादेति** । एवं च स्वयमप्रवर्त्तमाना कथमन्यबाधिकेति तन्न्यायावसरो नेति भावः ।

[ दूषणान्तरसमाधानभाष्यम् ]

**यद्प्युच्यते-'असमर्थसमासश्चायं द्रष्टव्यः'—इति । यद्यपि वक्तव्योऽथवैतर्हि बहूनि प्रयोजनानि ॥ कानि ?॥**

**असूर्यपश्यानि मुखानि, अपुनर्गेयाः श्लोकाः, अश्राद्धभोजी ब्राह्मण इति । [सुड]।**

**(प्र०) अथवैतर्हीति** । इदानीमित्यर्थः । तत्र 'स्त्रीपुंसयो'रिति वक्तव्ये 'अनपुंसकस्ये'ति वचनं ज्ञापकम्–'प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्ती'ति ॥

**( उ० ) इदानीमित्यर्थ इति** । तथापीत्यर्थ इत्युचितम् । 'यद्यपि वक्तव्य' इत्युपक्रमात् । **स्त्रीपुंसयोरिति** । मात्राधिक्येऽपि स्पष्टप्रतिपत्त्यर्थमित्यर्थः । 'पुंस्त्रियो'रिति तु वक्तुमशक्यम्, तस्याऽसाधुत्वादिति बोध्यम् । अत्र पर्युदासप्रसज्यप्रतिषेधयोः समफलत्वोक्त्या शास्त्रप्रापितस्य प्रतिषेधे विकल्प' इति मीमांसकोक्तं चिन्त्यम् । सामान्यविशेषन्यायेन बाधस्यैवौचित्यात् । त्वाऽभावे संभावितस्यैव च प्रतिषेध इत्यादि मञ्जूषायां विस्तरः ॥

# नवेति विभाषा ॥ १ । १ । ४३ ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ नवेतिविभाषायामर्थसंज्ञाकरणम् ॥*॥*

**नवेतिविभाषायामर्थस्य संज्ञा कर्तव्या नवाशब्दस्य योऽर्थस्तस्य संज्ञा भवतीति वक्तव्यम् ॥**

**(प्र०) नवेति । नवेतिविभाषायामिति** । समुदायस्यानुकरणत्वादनुकरणस्यानुकार्येण चाऽर्थवत्त्वात्प्रातिपदिकत्वे सति विभक्त्युत्पत्तिः । स्त्रीप्रत्यये च तदादिनियमाऽभावाद्याडामौ भवतः । अथ वा नवेत्युच्चार्य या विभाषा कृता तस्यामिति व्याख्या । तत्र लोके क्रियापदसंनिधाने नवाशब्दयोर्योऽर्थो द्योत्यो विकल्पप्रतिषेधलक्षणः स संज्ञीत्यर्थः । अन्यथा विभाषाप्रदेशेषु नवाशब्दाविवादेशौ स्याताम् ॥

**( उ० ) नवेतिविभा** । ननु समुदायस्य समासग्रहणनियमेनाऽप्रातिपदिकत्वात् 'नवेतिविभाषाया'मित्यनुपपन्नमत आह-**समुदायस्येति** । वार्तिकोचारितसमुदायस्येत्यर्थः । नन्वेवमपि समुदायस्यानाऽबन्तत्वात् कथं याडादीत्यत आह-**स्त्रीप्रत्यये चेति** । 'स्त्रीप्रत्यये चानुपसर्जने ने'ति 'ष्यङः संप्रसारण'मित्यत्र भाष्यपठितवचनेनेति भावः । यत्तु ह्रस्वड्याबिति दीर्घग्रहणादिति । तन्न । बहुश्रेयसीत्यादौ लोपार्थं 'प्रत्ययग्रहण' इति तदन्तविधिना ङ्यन्तेत्यर्थे, तस्य स्वादिप्रत्ययलब्धयस्माद्विधिस्तदादेरित्येतद्विशेषणतया ङ्यन्तान्तेत्यर्थेन निष्कौशाम्बिव्यावृत्तये दीर्घग्रहणस्यावश्यकत्वादिति दिक् । अनुकरणस्यावन्तत्वं तु प्रकृतिवदनुकरणमिति न्यायात् । तस्याऽनित्यत्वाच्च न प्रत्ययान्तत्व प्रयुक्तप्रातिपदिकत्वनिषेध इति बोध्यम् । **अथवेति । कृता** उच्चारिता । समासत्वादेव प्रातिपदिकत्वम्, असमासेऽपि लिङ्गविशिष्टपरिभाषया विभक्तिरिति भावः । नामपदसन्निधाने 'नवा शाटी'त्यादौ प्रत्यग्रोर्थावगतेराह-**क्रियापदेति**। **अन्यथेति** । प्रकरणादिवशाच्चार्थविशेषावसायः इति भावः॥

[ वार्तिकावतरणभाष्यम् ]

**किं प्रयोजनम् ? ॥**

*।*।शब्दसंज्ञायां ह्यर्थाऽसंप्रत्ययो यथाऽन्यत्र।*।*

---

**१ शसीति** । अस्य 'पूर्वस्ये'तिशेषः । **२ एवञ्च**–उभयोः सावकाशत्वे च । ३ 'नुकरणस्य चानु' पा० । ४ द्वितीयपक्षे समस्तमसमस्तं वा ?, तत्राद्ये आह–**समासेति** । असमस्तं वेति द्वितीयपक्षेऽप्याह-**असमासेपीति** । ५ **प्रत्यग्रेति**। नवीनेत्यर्थः । ६ **अन्यथेतीति**। तयोरेव संज्ञाया करणे इत्यर्थः । असम्भवाशयमाह–**प्रकरणादीति** । ७ **अर्थविशेषावसायः**–अर्थविशेषनिश्चयः ।

**शब्दसंज्ञायां हि सत्यामर्थस्याऽसंप्रत्ययः स्यात्। 'यथान्यत्र'। अन्यत्रापि हि[1] शब्दसंज्ञायां शब्दस्य[2] संप्रत्ययो भवति, नार्थस्य ॥ क्वान्यत्र ? ॥ 'दाधा घ्वदाप्' 'तरप्तमपौ घः' इति। घुग्रहणेषु घग्रहणेषु च शब्दस्य[3] संप्रत्ययो भवति, नार्थस्य ॥**

( प्र० ) **घुग्रहणेष्विति**। शब्दस्य[4] संज्ञाकरणात्प्रदेशेषु तस्यैव संप्रत्यय इत्यर्थः ॥

( उ० ) ननु दाधा[5] घ्वित्यादौ न घुशब्दादिना दाधादीनां प्रत्ययः, किंतु दाधाशब्दैरेवेत्यत आह–**प्रदेशेष्विति**। भाष्ये **घुग्रहणेष्वि**त्यादेर्घुप्रदेशेष्वित्यर्थः ॥

[ आक्षेपतत्समाधानभाष्यम् ]

**तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥**

*॥*॥ इतिकरणोऽर्थनिर्देशार्थः ॥*॥*

**इतिकरणः[6] क्रियते सोऽर्थनिर्देशार्थो भविष्यति ॥**

(प्र०) **इतिकरण इति**। क्रियत इति करणः। कर्मणि ल्युट्। इतिऽश्चासौ करणश्चेति समासः। **क्रियत इति**। सामान्यविशेषभावेन निर्देशः ॥

(उ०) करणल्युटि अर्थाऽसङ्गतेराह–**कर्मणीति**। बाहुलकादिति भावः। **सामान्येति**। 'पाकं पचती'तिवत्।

[ चोदनाभाष्यम् ]

**किं[7] गतमेतदितिना, आहोस्विच्छब्दाधिक्यादर्थाधिक्यम् ? ॥**

( प्र० ) **शब्दाधिक्यादिति**। उपहासपरमेतच्चोदकस्य वचनम्। अशब्दार्थस्याऽलाभादिति भावः।

[ समाधानभाष्यम् ]

**गतमित्याह ॥ कुतः ? ॥**

[ समाधानसाधकवार्तिकम् ]

*॥ * ॥ लोकतः[9] ॥ * ॥*

**तद्यथा लोके 'गौरित्ययमाहे'ति गोशब्दादितिकरणः प्रयुज्यमानो, गोशब्दं स्वस्मात्पदार्थात्प्रच्यावयति। सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो याऽसावर्थपदार्थकता तस्याः,–शब्दपदार्थकः संपद्यते। एवमिहाऽपि नवाशब्दादितिकरणः परःप्रयुज्यमानो, नवाशब्दं स्वस्मात्पदार्थात्प्रच्यावयति। सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो–यासौ शब्दपदार्थकता तस्या लौकिकमर्थं संप्र[10]त्याययति-नवेति यद्गम्यते नवेतियत्प्रतीयत इति।**

( प्र० ) **गौरित्ययमाहेति**। यद्य[11]पि नित्ये शब्दार्थसंबन्धे उपात्तस्याऽर्थस्य त्यागो ना[12]स्ति, तथापि प्रसिद्धिवशादेतदभिधीयते–**'अर्थपदार्थकतायाः प्रच्युत'इति**। तत्त्वतस्त्वादावेव स्वरूपपदार्थको गोशब्दः प्रयुक्तः। सादृश्यात्तु तमर्थमनभिव्यक्तमितिशब्दो द्योतयतीति पदार्थविपर्यासकृदितिरुच्यते। **अर्थपदार्थकतेति**। संबन्धे भा[13]वप्रत्ययः। संबन्धात्प्रच्युतोऽर्थादपि प्र[14]च्युतो भवति ॥

( उ० ) भाष्ये 'स्वस्मात्पदार्थात्प्रच्युतः शब्दपदार्थकः संपद्यत' इत्यन्वयः। **स्वस्मात्पदार्था**दित्यस्य विवरणम्–**यासा**विति। दार्ष्टान्तिके च–**शब्दपदार्थकता**–'स्वं रूप'-मिति वचनात्। **'तस्या'** इत्यस्य 'प्रच्युत' इति शेषः। कोऽसौ लौकिकोऽर्थस्तत्राह–**'नवेति यद्गम्यत इति**। तद्विवृणोति–**नवेति यत्प्रतीयत इति**। 'स लौकिकोऽर्थ' इति शेषः। **यद्यपीति**। एवं च 'स्वस्मात्पदार्था'दित्यनुपपन्नं, सर्वस्यापि स्वपदार्थत्वात्, प्रच्युतिश्चानुपपन्नेति भावः। **त्यागो नास्ती**ति। चाऽर्थाऽन्तरग्रहणाऽभावस्याप्युपलक्षणम्। **प्रसिद्धिवशादिति**। लोकप्रसिद्ध्यैव तत्र स्वपदार्थत्वव्यवहारः। तेषामेव–'अस्यायं प्रसिद्धोऽर्थस्त्यक्तोऽप्रसिद्धश्च गृहीत' इति प्रसिद्ध्या भाष्ये प्रच्युत्यङ्गीकारावुक्ताविति भावः। वस्तुतो न प्रच्युत्यादिकमित्याह–**तत्त्वत इति**। **सादृश्यादिति**। 'अर्थभेदाच्छब्दभेद'इति पक्षे इदम्। एकशब्दत्वे त्वभेदादिति बोध्यम्। वस्तुतः प्रच्युत्यङ्गीकारौ

१ हिःकचिन्न। २ **'शब्दस्यैव'** पा०। ३ **शब्दस्येति**। घ्वादिशब्दैर्दादेः शब्दस्य संप्रत्यय इत्यर्थः। ४ **शब्दस्य**–दाधादेः। **सञ्ज्ञेति**। घ्वादिसञ्ज्ञेत्यर्थः। **प्रदेशेषु**–स्थाघ्वोरिच्चेत्यादौ। **तस्यैव**–दाधाशब्दस्यैव। ५ **इत्यादौ**–इत्यादिसञ्ज्ञासूत्रेषु। **इत्यर्थः**–इत्याद्यर्थः। ६ **क्रियमाण इतिरित्यर्थः**। ७ **गतं**–प्राप्तम्। ज्ञातमिति यावत्। ८ उपहासे बीजमाह–**अशब्देति**। ९ इदं भाष्यमित्यन्ये। १० 'प्रत्यायय'। ११ **यद्यपीति**। 'गौरित्ययमाहेत्यादा'विति शेषः। १२ **नास्ति** इतिनाऽपि न संभवति। १३ ननु पदार्थादित्युक्तत्वात्तस्या इत्ययुक्तमत आह–**सम्बन्धे इति**। वाच्यवाचकभावरूपशब्दार्थ सम्बन्धाभिधाने त्व प्रत्यय इत्यर्थः। 'कृत्तद्धितसमासैः सम्बन्धाभिधान'मित्युक्तत्वात्। १४ क्वचिन्न।

तयोरर्थयोर्बोधाऽविषयत्व-बोधविषयत्वे एव, न तु मुख्याविति बोध्यम् । **पदार्थविपर्यासकृदिति** । लोके शब्दविशेषण-कार्थप्रतीतिः, शास्त्रे ऽर्थविशेषणकशब्दस्य । इतिशब्द-समभिव्याहारे विपरीतमिति विपर्यासः । भाष्येऽपि–**'स्वस्मात्पदार्थात्प्रच्युत'**इत्यस्य–विशेष्यभूता'दिति शेषः। अन्यथाऽर्थप्रतीतेः शब्दाऽनालिङ्गिताया अभावेन एतदसङ्गतिः स्यादिति दिक् ॥

*॥ * ॥ समानशब्दप्रतिषेधः[2] ॥ * ॥*

**समानशब्दानां प्रतिषेधो वक्तव्यः । नवा[3] कुण्डिका, नवा घटिकेति ॥**

( प्र० ) **समानशब्दप्रतिषेध इति** । समानः[4] शब्दो वाचको येषामर्थानां तेषामित्यर्थः ॥

( उ० ) इतिकरणस्याऽर्थनिर्देशार्थत्वे स्थिते नैव समानानां शब्दानां प्राप्तिरत आह–**समान इति** ।

[ आक्षेपभाष्यम् ]

**किंच स्याद्यद्येतेषा[6]मपि विभाषासंज्ञा स्यात् ? ॥**

[ समाधानभाष्यम् ]

**'विभाषा दिक्समासे बहुव्रीहौ' । दक्षिणपूर्वस्यां शालायाम् । अचिरकृतायां संप्रत्ययः स्यात्[7] ॥**

( प्र० ) **विभाषा दिक्समास इति** । विभाषाशब्देनाऽभिनवलक्षणोऽर्थः प्रत्याय्यते । तत्र[8] प्रत्यग्रवाची यो दिक्समास इति संप्रत्ययः स्यात् । तत्र दिशो नित्यत्वान्नवपुराणत्वाऽसंभावात्तन्निमित्तो यदा शालायां व्यपदेशः–दक्षिणपूर्वा शाला, सा चाभिनवा तदा संज्ञा[9] स्यादित्यर्थः। संज्ञाकार्यव्यङ्ग्यं च प्रत्यग्रत्वं स्यात् ।

(उ०) **प्रत्यग्रेति**। यद्यपि 'न चेह **वयं** विभाषाग्रहणेन सर्वादीन्यभिसंबध्नीम' इति भाष्यपर्यालोचनया सर्वादिविशेषणत्वलाभात्प्रत्यग्रत्वं समासविशेषणमयुक्तं, तथापि दिग्वाचकसर्वादीनामर्थस्य दिशो, नवपुराणत्वाऽसंभवादुदाहरणपरभाष्याच्च तत्र 'सर्वादीनी'त्यनेन तद्घटितसमासो लक्षणीय इति भावः । **तन्निमित्त इति** । लक्षणयेत्यर्थः । **तदा संज्ञेति** । 'न बहुव्रीहा'विति निषेधे प्राप्ते इदं नित्यार्थं स्यादिति भावः। भाष्ये–**अचिरकृतायामिति** । तस्यां बोध्यायामित्यर्थः। **'संप्रत्ययः स्या'**दित्यस्य 'संज्ञाया' इति शेषः ।

[ समाधानवार्तिकम् ]

*॥*॥ न वा विधिपूर्वकत्वात्प्रतिषेधसम्प्रत्ययो यथा लोके ॥*॥*

**न वैष दोषः ॥ किं कारणम् ? ॥ 'विधिपूर्वकत्वात् ।' विधाय किंचिन्नवेत्युच्यते, तेन प्रतिषेधवाचिनः संप्रत्ययो भवति । तद्यथा—लोके 'ग्रामो भवता गन्तव्यो नवा' ? । नेति गम्यते ॥**

( प्र० ) **न वा विधिपूर्वकत्वादिति । प्रदेशे**[10]**वाक्यार्थं पर्यालोच्येयं संज्ञा व्यवस्थाप्यते । प्रदेशेषु च कार्याणि विधाय विभाषाशब्द उच्चारितो नवाऽर्थं गमयति । तत्र लोकवन्निपातार्थाऽवगतिर्भवति न तु प्रत्यग्रार्थाऽवगतिरित्यर्थः ॥**

( उ० ) ननु प्रदेशे विभाषा[11] दि'गित्यादौ न नवाशब्द उच्चारितः 'नवेति विभाषे'ति सूत्रे तु न किंचिद्विधायोक्तम्, पूर्वोत्तरसाहचर्येणाऽस्य संज्ञासूत्रत्वादित्यत आह–**प्रदेशेति** । **इयं संज्ञेति** । 'नवेति विभाषे'त्येतत्संज्ञासूत्रार्थ इत्यर्थः । **कार्याणि**–सर्वनामसंज्ञादीनि । **नवार्थ**–नवाशब्दार्थम् । विभाषाशब्दस्याऽर्थसंज्ञात्वात् । कचित्तु तथैव

१ **विपरीतमिति** । 'वेदे लोके चे'त्यादिः । २ **समानेति** । प्रत्यग्रादीनामित्यर्थः । ३ **नवा**–नूतना । ४ **समानः**–नवादिशब्दैस्तुल्यः, **शब्दः**- नवाशब्दः । **येषां**–नूतनार्थानाम् । ५ शङ्कते–**इतीति** । 'नन्वि'त्यादिः । ६ **एतेषां**–नवाशब्दादीनाम् । ७ **संप्रत्ययः**–सञ्ज्ञासंप्रत्ययः । ८ **तत्र** तेन तत्प्रतीतौ । **तत्र**–बहुव्रीहौ समासे । अस्य संज्ञेत्यग्रेऽन्वयः । दक्षिणपूर्वाशब्दस्याग्नेय्यां शक्तिस्तत्रस्थितत्वाच्छालाप्युच्यते । तदाह–**तन्निमित्त इति** । दिग्निमित्तः । ९ **संज्ञा**–सर्वनामसंज्ञा । **भाष्यपर्यालोचनया**–उत्तरभाष्यग्रन्थपर्यालोचनया । **सर्वादीति** । 'शङ्काग्रन्थे'इत्यादिः । **अर्थस्य** सर्वनाम्नः । **तद्घटितेति** । सर्वादिघटितेत्यर्थः । **नित्यार्थमिति**।इदानीं विभाषाशब्देन विकल्पार्थाऽप्रतीतेरित्याशयः ।

१० **प्रदेशेति** । विभाषादिगित्यादिप्रदेशेत्यर्थः । **सञ्ज्ञा**-विभाषासञ्ज्ञासूत्रार्थः । **कार्याणि**–सर्वादीनिसर्वनामानीत्यादीनि । **तत्र**–प्रदेशे । तस्मिन्सतिवा । **लोकवत्**–भाष्योक्तलोकदृष्टान्तवत् । **नन्विति** । विधायोक्तत्वादितिभावः । ११ **प्रदेश इति** । 'यत्र किंचिद्विधायोक्तं तत्रे'त्यादिः ॥ **नवेतीति** । 'यत्रोच्चारितस्तत्रे'त्यादिः । **उक्तमिति** । नवेति शब्दस्वरूपमित्यर्थः । ननु पूर्वं सर्वनामस्थानसंज्ञां विधाय तदुक्तमेवेति तत्प्रतिषेधप्रतीतिः स्यादत आह–**पूर्वोत्तरेति** । तथाच तत्रैवाऽस्य तात्पर्यं न प्रतिषेध इति कथं प्रतिषेधवाचिनः संप्रत्यय इति भावः । ननु संज्ञासूत्रत्वमस्य पूर्वोत्तरसाहचर्यान्निर्णीतमत आह–**इयं सज्ञेतीति** ।

पाठः। भाष्ये-**नवेत्युच्यते** इत्यस्य-तदर्थबोधको विभाषाशब्द उच्यते इत्यर्थः। **प्रतिषेधवाचिन इति**। 'प्रतिषेधवाच्ययं शब्द' इति प्रत्ययो भवतीत्यर्थः। **नत्विति**। एवं च प्रदेशाऽऽनुगुण्येन प्रकृतसूत्रेऽपि न प्रत्यग्रवाचिनो ग्रहणमित्यर्थः॥

[ समाधाननिराकरणभाष्यम् ]

**अस्ति कारणं-येन 'नवे'ति लोके प्रतिषेधवाचिनः संप्रत्ययो भवति॥**

**किं कारणम्?॥**

**विलिङ्गं[1] हि भवाँल्लोके निर्देशं करोति। अङ्ग! हि समानलिङ्गो निर्देशः क्रियतां, प्रत्यग्रवाचिनः संप्रत्ययो भविष्यति। तद्यथा-'ग्रामो भवता गन्तव्यो नवः'। प्रत्यग्र इति गम्यते॥**

(प्र०) **विलिङ्गमिति। भिन्नलिङ्गं।** व्यधिकरणमित्यर्थः। विलिङ्गत्वेन वैयधिकरण्यं लक्ष्यते, न तु[2] प्रतिषेधवाचिनो नवाशब्दस्य लिङ्गयोगोऽस्ति॥

(उ०) **भिन्नेति।** अग्रे 'समानलिङ्ग'इति दर्शनाद्विशब्दो भिन्नार्थ इति भावः। **नत्विति।** अव्ययत्वादिति भावः।

[ समाधानस्थापकभाष्यम् ]

**एतच्चैव न जानीमः-क्वचिद्व्याकरणे समानलिङ्गो निर्देशः क्रियत इति॥**

(प्र०) **एतच्चैवेति।** नैव क्वचिद्व्याकरणे समानलिङ्गो निर्देशः क्रियते इत्यर्थः। 'विभाषा सेना' यद्यपि समानलिङ्गो निर्देशस्तथापि भिन्नविभ... त्सामानाधिकरण्याऽभावः॥

(उ०) **नैवेति।** भाष्ये **क्वचित्क्रियत** इत्येतच्चैव न जानीम' इत्यन्वयः। **'नवा विधी'**त्युक्तवतो[3]ऽयं ग्रन्थः। एवं च शास्त्रे समानलिङ्गनिर्देशस्य काऽप्यभावान्न कापि प्रत्यग्राऽर्थावगतिरित्याशयः॥

[ युक्त्यन्तरेण समाधानस्थापनभाष्यम् ]

**अपि चात्र[5] कामचारः प्रयोक्तुः शब्दानामभिसंबन्धे। तद्यथा-'यवागूर्भवता भोक्तव्या नवा'। यदा यवागूशब्दो भुजिना संबध्यते, भुजिर्नवाशब्देन, तदा प्रतिषेधवाचिनः संप्रत्ययो भवति-'यवागूर्भवता भोक्तव्या नवा'। नेति गम्यते॥ यदा [तु[3]] यवागूशब्दो नवाशब्देनाऽभिसंबध्यते, न भुजिना, तदा प्रत्यग्रवाचिनः संप्रत्ययो भवति। [यथा[4]]-'यवागूर्नवा भवता भोक्तव्या'। प्रत्यग्रेति गम्यते॥ न[6] चेह वयं विभाषाग्रहणेन सर्वादीन्यभिसंबध्नीमः-'दिक्समासे बहुव्रीहौ सर्वादीनिविभाषा भवन्ती'ति॥ किं तर्हि?॥ भवतिरभिसंबध्यते-'दिक्समासे बहुव्रीहौ सर्वादीनि भवन्ति विभाषे'ति॥**

(प्र०) **अपि चेति।** तत्र[8] सामर्थ्याद्विशेषावगतिः। यदाऽप्राप्ते यवागूभोजने वाक्यमुदीर्यते तदा प्रत्यग्राऽर्थावगतिः। यदा त्वातुरं प्रति गुरुभोजननिषेधार्थमुच्यते, तदा निषेधाऽवगतिः। **न चेहेति।** क्रियायाः प्राधान्यात्सैव विभाषाग्रहणेन संबध्यते, नतु तदङ्गमित्यर्थः। तदेवं स्थितमेतत्[10]-'नवा विधिपूर्वकत्वा'दिति॥

(उ०) ननूभयविधाऽन्वयसंभवे कथमन्यतरनिर्णय ... आह-**तत्रेति।** **अप्राप्ते यवागूभोजन इति।** ... 'प्ररोचनाये'ति शेषः[11]। **न तु** ... क्रियाकर्त्रुद्देश्यरूपं तदङ्गमित्यर्थः। भाष्ये ... **भवन्तीत्यत्र** 'विभाषे'त्यग्रे 'सर्वनामानी'ति शेषः। 'भवन्ति विभाषे'त्यस्य 'सर्वनामानी'त्यादिः॥

[ आक्षेपवार्तिकम् ]

*॥*॥ विध्यनित्यत्वमनुपपन्नं, प्रतिषेधसंज्ञाकरणात् ॥*॥*

**विधेरनित्यत्वं नोपपद्यते। शुश्राव**

---

१ **विलिङ्गं**-विधेयगतलिङ्गविरुद्धम्। २ **न तु**-नहि। ३ **'नवाविधी'**त्यस्य यत् **'अस्ति'**-इत्यादिना दृष्टान्तविघटनेन पूर्वं खण्डनं कृतं तत्खण्डनमित्याह-**नवाविधीति**। ४ समानलिङ्गनिर्देशेन त्वदुक्तरीत्या प्रत्याग्रार्थावबोधः स्यान्नच तथा निर्देशोऽस्तीतिसर्वत्र निषेधस्यैव संप्रत्यय इत्युत्तराशयः। ५ **अत्र**-वाक्ये। अत्रेतिक्वचिन्न। **अभिसम्बन्धे**-अन्वये। ६ **नचेहेति**। 'येन प्रत्यग्रार्थावगतिः स्या'दिति शेषः। ७ तेन निषेधार्थसंप्रत्ययो भवति, यवागूर्भवता भोक्तव्या न वेतिवत्। ८ **तत्रेत्यस्य**-'अन्वये कामचारे सिद्धे'इत्यादिः। ९ प्रकरणवशाद्विशेषान्वयावगतिरित्यर्थः। तदाह-**यदेति**। **सैव**-भवतिक्रियैव। १० **विधाय**-सर्वनामसंज्ञा स्यादित्युक्ता-किंचित् नवेत्युक्तेः क्रियान्वयस्य विशेष्यता नवाशब्दे इति निषेधार्थसंप्रत्यय इति प्रतिपादितम्॥ ११ नूतनत्वमुद्दीपकमित्याशयः। १२ भवतिक्रियाकर्तृसर्वनामसंज्ञोद्देश्यसर्वादिरूपं क्रियाङ्गमित्यर्थः। १३ क्वचिन्न।

**शुशुवतुः शुशुवुः । शिश्वाय शिश्वियतुः शिश्वियुः ॥ किं कारणम् ?॥ [ 'प्रतिषेधसञ्ज्ञाकरणात्' ] 'प्रतिषेधस्येयं संज्ञा क्रियते । तेन विभाषाप्रदेशेषु प्रतिषेधस्यैव संप्रत्ययः स्यात् ॥**

( प्र० ) **विध्यनित्यत्वमिति** । विकल्प इत्यर्थः । नवाशब्द एवे[2] निपातः प्रतिषेधवाची, तस्येहोपादानादिति भावः । परिहारान्तराभिधानाय तु[2] 'न बहुव्रीहाविल्यसंबद्धं स्या'दिति नोक्तम् ॥

( उ० ) ननु दिक्समासेऽपि नित्यनिषेधे 'न बहुव्रीहा'विति सामान्यसूत्रेणैव सिद्धे 'विभाषा दि'गिति सूत्रस्य वैयर्थ्यापत्तिरत आह–**परिहारान्तरेति** ।' इति सिद्धे 'विभाषा दि'गित्यसंबद्धं स्यादित्यर्थः ॥

[ समाधानवार्तिकम् ]

*॥*॥ सिद्धं तु प्रसज्य[3] प्रतिषेधात् ॥*॥*

**सिद्धमेतत् ॥ कथम् ? ॥ 'प्रसज्य प्रतिषेधात्' । प्रसज्य[4] किंचिन्नवेत्युच्यते तेनोभयं भविष्यति ॥**

( प्र० ) **सिद्धं त्विति** । प्रतिषेधाद्विधिरनुमास्यते, ततो विकल्पः सेत्स्यतीत्यर्थः ॥

( उ० ) ननु प्रसक्तस्य[5] निषेधेऽभाव एव दृष्टो, न तु विकल्पोऽत आह–**प्रतिषेधादिति** । 'विभाषा श्वे'रित्यादौ पिद्विषये विधेरनुमानं करिष्यते इत्यर्थः । निषेधानुपपत्तिकल्पितशास्त्रेण[6] प्रसज्येति वार्त्तिकार्थ इति भावः । एवं च[7] षोडशिग्रहणाऽग्रहणवदेकविषयत्वाद्विकल्पप्रसिद्धिरिति तात्पर्यम् । **तत इति** । अन्यथा कल्पितं शास्त्रं व्यर्थं स्यात् । **प्रक्षालनाद्धीति** न्यायविरोधान्न निषेधार्थमेव तदिति भावः ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ विप्रतिषिद्धं तु ॥*॥*

**विप्रतिषिद्धं तु भवति । अत्र न विज्ञायते[10]–'केनाभिप्रायेण प्रसजति, केन निवृत्तिं करोती'ति ? ॥**

( प्र० ) **विप्रतिषिद्धं त्विति** । एकविषययोर्विधिप्रतिषेधयोर्विरोधादित्यर्थः ॥

( उ० ) ननु विकल्पो विरुद्ध[11]विषय एवेति किमुच्यते विप्रतिषिद्धं त्विति, अत आह[12]–**एकेति** । 'युगप'दिति शेषः । विप्रतिषेधोपपादकं भाष्यम्—**अत्र नेति** । **प्रसजति** । 'भाव'मिति शेषः ॥

[ समाधानवार्तिकम् ]

*॥*॥ न वा, प्रसङ्ग[13]सामर्थ्यादन्यत्र प्रतिषेधविषयात् ॥*॥*

**नवैष दोषः ॥ किं कारणम् ?॥ 'प्रसङ्गसामर्थ्यात्' । प्रसङ्गसामर्थ्याच्च विधिर्भविष्यति—अन्यत्र प्रतिषेधविषयात् ॥ प्रतिषेधसामर्थ्याच्च प्रतिषेधो भविष्यति, अन्यत्र विधिविषयात् ॥**

( प्र० ) **नवा प्रसङ्गेति** । सामर्थ्याद्विधिप्रतिषेधयोः पर्यायो भविष्यतीत्यर्थः ॥

( उ० ) प्रसज्यते इति **प्रसङ्गो**–विधिः । **प्रतिषेधविषया**दित्यस्य कालविशेषविशिष्टात्ततोऽ**न्यत्र** तत्रैव कालान्तरविशिष्टे इत्यर्थः । निषेधसामर्थ्यलब्धोऽयमर्थः । सामर्थ्यात्प्रतिषेधविषयादन्यत्र विधिरित्युक्ते यत्फलितं तदाह **प्रतिषेधसामर्थ्याच्चेति** । इदमपि पूर्ववद्व्याख्येयम् । तद्ध्वनयन्नाह–**पर्याय इति** ॥

[ आक्षेपभाष्यम् ]

**तदेतत्क सिद्धं भवति–याऽप्राप्ते विभाषा' या हि प्राप्ते [विभाषा][14] कृतसामर्थ्यस्तत्र[15] पूर्वेण विधिरिति कृत्वा प्रतिषेधस्यैव संप्रत्ययः स्यात् ॥**

( उ० ) भाष्ये–**या हि प्राप्ते इति** । केवलोभयत्रविभाषारूपा चेत्यर्थः । **कृतसामर्थ्य इति** । **पूर्वेणैव** कृप्त-

---

१ लुप्तं स्यात् । २ क्वचिन्न । ३ **प्रसज्य**–विधाय । ४ **प्रतिषेधात्**–'विभाषादि'गितिप्रतिषेधात् । ५ **प्रसक्तस्य**–सामान्यतो यथाकथंचित्प्राप्तस्य शब्दत्वात्कथमनुमानमत आह–**पिद्विषयेइति** । पिद्विषयेपीत्यर्थः । **शास्त्रेण**–तेनापि । ६ विभाषाश्वेरितिनिषेधानुपपत्तिकल्पितपिद्विषयशास्त्रेण, **प्रसज्य**–सम्प्रसारणं विधाय इत्यर्थः । ७ सामान्यशास्त्रेण प्राप्तस्य विशेषशास्त्रेण निषेधे नित्यमभाव एव भवति, यथा,–सर्वादीनीत्यस्य न बहुव्रीहाविति निषेधे सर्वदैवाऽभावः । अत्रतु विभाषाश्वेरिति निषेधानुपपत्तिकल्पितशास्त्रेण श्वयतेः पिति सम्प्रसारणमिति विशिष्य विधाय श्वयतावेव निषेधे समानविषयकत्वादुभयोः षोडशिग्रहतुल्यत्वाद्विकल्प इत्याशयः। **अन्यथा**–विकल्पाऽभावे । **कल्पितं**–पितिकल्पितम् । ८ **भाव इति** । एवं च विकल्पः सिद्ध इति भावः । ९ निषेधानुपपत्तिकल्पितशास्त्रेण विधाय निषेधे विरुद्धमित्यर्थः । १० 'विज्ञायते' पा० । ११ भावाऽभावस्य विरुद्धत्वात् । १२ विधिप्रतिषेधाभिप्रायकमाहेत्यर्थः । १३ **प्रसङ्गेति** । विधिप्रसङ्गेत्यर्थः । १४ क्वचिन्न । १५ 'नत्र पूर्वेणैव' पा० ।

शास्त्रेणैव, विधिः **कृतसामर्थ्यो**–विहतविधिकल्पकनिषेधीयशक्तिक इत्यर्थः । [1]एवं च तत्र विधिकल्पनाऽभावात्प्रतिषेधमात्रप्रत्ययः स्यादिति भावः । एतद्भाष्यादपि सामान्यशास्त्रप्राप्तनिषेधे विकल्पं वदन्तो **मीमांसकाः** परास्ताः ॥

[ समाधानभाष्यम् ]

**एतदपि सिद्धम् ॥ कथम् ? ॥ विभाषेति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥ कुत एतत् ? ॥**

**लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्—उभयोः संज्ञा यथा विज्ञायेत–नेति च, वेति च । तत्र या तावदप्राप्ते विभाषा, तत्र 'प्रतिषेध्यं नास्ती'ति कृत्वा 'वे'त्यनेन विकल्पो भविष्यति । या हि प्राप्ते विभाषा तत्रोभयमुपस्थितं भवति–नेति च, वेति च । तत्र 'ने'त्यनेन प्रतिषिद्धे 'वे'त्यनेन विकल्पो भविष्यति ॥**

**एवमपि–**

**( प्र० ) महती संज्ञेति** । तेन द्वावत्र संज्ञिनौ विकल्पप्रतिषेधावित्यर्थः । यदि हि केवलः प्रतिषेधः संज्ञी स्यात्, संज्ञाकरणमनर्थकं स्यात्, विभाषाप्रदेशेषु 'ने'त्येव ब्रूयात् । तत्र समुदायस्येयं संज्ञेति विभाषाप्रदेशेषु विकल्पप्रतिषेधावुपतिष्ठेते ॥ अप्राप्तविभाषासु च प्राप्त्यभावात्प्रतिषेधस्याऽव्यापाराद्विकल्प एवोपतिष्ठते ॥

**(उद्द्योतः) महत्याः संज्ञाया इति** भाष्येण संज्ञैव न कर्तव्येति विवक्षितम्, न तु लघ्वी कर्तव्येति इत्याह–**यदि हीति** । **समुदायस्येति** । प्रत्येकधर्मावच्छिन्नस्योभयस्येत्यर्थः । **विकल्पप्रतिषेधाविति** । प्राप्तविभाषाविषये इत्यर्थः । **विकल्पएवोपेति** । उभयोः संज्ञाकरणेऽपि निषेधस्यान्वयाऽयोग्यत्वाद्वितीयस्यैवोपस्थितिरिति भावः ॥ अत्राऽप्राप्तविभाषाशब्देन केवलाऽप्राप्तविभाषोच्यते ॥

[ आक्षेपवार्तिकम् ]

*॥*॥विधिप्रतिषेधयोर्युगपद्वचनाऽनुपपत्तिः॥*॥*

**विधि[2]प्रतिषेधयोर्युगपद्वचनं नोपपद्यते । शुशाव शुशुवतुः शुशुवुः । शिश्वाय शिश्वियतुः शिश्वि[3]युः ॥ किं कारणम् ? ॥**

[ आक्षेपसाधकवार्तिकम् ]

*॥*॥ भवतीति चेन्न प्रतिषेधः ।*॥*

**भवतीति चेत्[4]प्रतिषेधो न प्राप्नोति ॥**

[ आक्षेपसाधकवार्तिकम् ]

*॥*॥ नेति चेन्न [5]विधिः ॥*॥*

**नेति चेद्विधिर्न सिध्यति ॥**

**(प्रदीपः) एवमपीति** । यद्यपि विरुद्धयोरेका संज्ञा क्रियते, तथापि प्रदेशेषु युगपद्विरोधाद्भावाऽभावौ विधातुं न शक्येते इत्यर्थः ॥

**( उ० ) युगपदिति** । अन[6]वगतसंज्ञिद्वयक्रमोपस्थानस्य चोद्यमेतदित्यभिप्रायः । **भावाऽभावाविति** । इमावेव भाष्ये विधिप्रतिषेधशब्देनोक्तौ ॥

[ समाधानवार्तिकम् ]

*॥*॥ सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात्॥*॥*

**सिद्धमेतत् ॥ कथम् ? ॥ ['पूर्वस्योत्तरेण बाधित[7]त्वात्'] पूर्वविधिमुत्तरो विधिर्बाधते । इतिकरणोऽर्थनिर्देशार्थ इत्युक्तम् ॥**

**(प्र०) सिद्धं त्विति** । उभयत्र विभाषासु प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तत इत्यर्थः । यदि तु पूर्वं[8] विकल्पः प्रवर्तते पश्चात्प्रतिषेधस्ततो विकल्पप्रवृत्तिरनर्थिकैव स्यात् । आनुपूर्वी च यैवं संज्ञाविधावाश्रिता सैव प्रदेशवाक्येष्वाश्रीयते । उभयत्रविभाषा[9]ऽर्था चेयं संज्ञा, प्राप्तविभाषायामप्राप्तविभाषायां च संज्ञाकरणस्याऽनुपयोगात् । तथाहि प्राप्तविभाषासु पक्षे निवृत्तिः क्रियते, पक्षे तु प्रवृत्तिः स्थितैव । अप्राप्तविभाषासु च पक्षे कार्यस्य प्रवृत्तिः क्रियते, पक्षान्तरे त्वप्रवृत्तिः स्थितैवेति नास्ति तत्र संज्ञाफलम् । 'विभाषा श्वे'रित्यत्र तुं[10] यदि विधिमुखेन विभाषाश्रुतिः प्रवर्तते, पित्स्वेव संप्रसारणं विभाषा स्यात्, कित्सु यजादित्वान्नित्यमेव स्यात् ।

---

१ **एवञ्च**–तेन प्रतिबन्धे च । २ उभयोः संज्ञाऽस्तु परमेकत्र युगपदेककालं विरुद्धौ भावाऽभावौ न विधातुं शक्यावित्यर्थः । ३ वैकल्पिकं रूपमत्र न सेत्स्यतीत्यर्थः ।

४ **प्रतिषेधः**–अभावः । ५ **विधिः**–भावः । ६ अनवगतेति बहुव्रीहिः । तस्यैव व्याख्यानमिदमिति सूचयन्नाह–**इमावेवेति** । ७ लुप्तं । ८ एवः क्वचिन्न । ९ 'र्थात्वियं' । १० क्वचिन्न ।

अथ प्रतिषेधमुखेन प्रवृत्तिस्तदा कित्स्वेव विकल्प इति, पित्सु न स्यात्। संज्ञाकरणे तु पूर्वं प्रतिषेधे कित्सु प्रवृत्ते, पश्चाद्विधिमुखेन सर्वत्र पक्षे संप्रसारणस्य प्रवर्तनादिष्टं सिध्यति। यदा तु प्रतिलक्ष्यं भेदेन 'विभाषा श्वे'रित्यस्य व्यापारः क्वचिद्विधिमुखेन, क्वचित्प्रतिषेधमुखेन तदा संज्ञाकरणमन्तरेणापि सिध्यतीत्यशि योऽयं योग इति वक्ष्यते-'अशिष्यो वा विदितत्वा ति॥

(उ०) भा॰ पूर्वस्योत्तरेणेति। पूर्वस्य-प्रतिषेस्य, उत्तरेण-विकल्पेन। बाधश्चात्र न निषेधप्रवृत्तिप्रतिबन्धः, किंतु तत्फलस्याभावनिष्ठसार्वकालिकत्वस्य प्रतिबन्ध इति बोध्यम्। नन्वेवमपि पूर्ववाक्येन 'न'शब्द एवादेशः स्यात, तत्रार्थपरत्वे मा ऽभावादत आह-इतिकरण इति। एवं चोभयत्रापीतिशब्दान्वय इति भावः। एवं चाऽर्थद्वयसंज्ञाकरणसामर्थ्यादेव वाक्यभेदेन क्रमेणान्वयं इति भावः॥ एवं च केवलप्राप्तविभाषायामुभयत्रविभाषायां च क्रमेण निषेधविकल्पयोरुपस्थितिः, शुद्धाऽप्राप्तविभाषायां तु निषेधस्याऽन्वयाऽयोग्यत्वाच्छुद्ध विकल्पोपस्थितिरिति तात्पर्यम्॥ पूर्वविकल्पाऽप्रवृत्तौ हेत्वन्तरमाह-आनुपूर्वीचेति। अनुप्रयोगादिति। उभयगतिरिहेत्युक्तेर्लोकगृहीतविकल्पे शक्तैयैव सिद्धेरिति भावः॥ पक्षे निवृत्तिरिति। एवं च तत्र निषेधतात्पर्यकतयैव प्रवृत्तिरिति भावः॥ अप्राप्तेति। तत्र विधितात्पर्यकतयैव प्रवृत्तिरिति भावः।

पित्स्वेवेति। तत्राऽप्राप्तेरिति भावः। एकस्योभयत्र तात्पर्यं तु न संभवतीत्याशयः। भावेतात्पर्यकतालोभेन पिद्विषयतैव स्यादिति तत्त्वम्॥ अस्योभयत्रविभाषाविषयत्वं भाष्ये 'विभाषा श्वे'रित्यस्यैवोदाहरणदानेन बोधितम्। एवं च तदर्थमावश्यकेऽस्मिन्, अन्यत्रापि स्वशास्त्रगृहीतसङ्केतेनैव बोधान्न 'या हि प्राप्तेविभाषा तत्रोभयमुपस्थित'मित्याद्युक्तभाष्यविरोध इति दिक्॥

[ आक्षेपवार्तिकम् ]

*॥*॥ साध्वनुशासनेऽस्मिन् [शास्त्रे] यस्य विभाषा तस्य साधुत्वम् ॥*॥*

साध्वनुशासनेऽस्मिञ्छास्त्रे यस्य विभाषा क्रियते स विभाषा साधुः स्यात्। समासश्चैव हि विभाषा [क्रियते], तेन समासस्यैव विभाषा साधुत्वं स्यात्॥

(प्र०) साध्वनुशासन इति। साधुत्वप्रतिपादनार्थत्वाच्छास्त्रस्य, साधुत्वस्यैव प्राधान्याद्विकल्पेन सबन्धः स्यान्न तु तदङ्गभूतानां समाससंज्ञादीनामिति भावः। ततश्च 'विभाषा श्वे'रित्यस्याऽयमर्थः स्यात्—'विभाषा श्वयतेः साधु संप्रसारणं भवति, पक्षे त्वसाध्वि'ति॥

(उ०) 'साधुत्वप्रतिपादनाच्छास्त्रस्ये'ति पाठः। शास्त्रस्येति कर्तुः शेषत्वे षष्ठी। क्वचित्तु 'साधुत्वप्रतिपादनार्थत्वा'दिति पाठः। प्राधान्यादिति। 'यदिह परिनिष्ठितं तत्साध्वि'ति अर्थापत्तिकल्पितवाक्यस्यैव मुख्यत्वात्तेन मुख्यतया साधुत्वस्यैव विधानादित्याशयः। तदङ्गभूतानामिति। तदुद्देश्यभूतानामित्यर्थः। भाष्ये-यस्य विभाषा क्रियत इति। यत्सम्बन्धेन विभाषोच्यत इत्यर्थः। समासश्चैव हीति। हि-यतः समासो विभाषा क्रियते, समासो विभाषेत्युच्यते, तत्र समासोद्देशेन साधुत्वविधानात्तस्यैव विकल्पः स्यादिति भावः। साधुत्वं च जातिविशेषः। समासप्रकरणीयविभाषाऽधिकारस्य भाष्ये प्रत्याख्यानादाह-विभाषा श्वेरिति॥

[ आक्षेपनिरासभाष्यम् ]

अस्तु। यः साधुः स प्रयोक्ष्यते। असाधुर्न प्रयोक्ष्यते॥

(प्र०) अस्तु यः यः साधुरिति। यथा भक्ष्याऽभक्ष्यसंनिधौ भक्ष्यमेवोपादीयते॥

[ आक्षेपसाधकभाष्यम् ]

न चैव हि कदाचिद्राजपुरुष इत्येतस्यामवस्थायामसाधुत्वमिष्यते॥ अपि च-

(प्र०) नचैव हीति। सर्वदा ह्यस्य साधुत्वं, ...ल्लमित्यर्थः॥

१-एवमपि वाशब्देन तदर्थपरत्वस्येतिशब्दमाहम्ना ला भेपि। २ 'वाक्ये' पा०। ३ मानाऽभावेति। इतरेतराश्रयाऽप्रतिबन्धादितिभावः। ४ भाष्यस्येति भावः। एवञ्च न पूर्वोक्तदोषलेशः। ५ विभाषापदशक्त्येत्यर्थः। ६ कैयटोक्ति खण्डयति-भावेति। ७ लाभेति क्वचित्पठन्ति। ८ उभयंनेति वेति च। ९ साध्विति। शब्दानां नित्यत्वादितिभावः। १० क्वचिन्न। ११ यस्य-यत्सम्बन्धेन। क्रियते- अ... ...ऽस्त्वि'त्युच्यते। हि-यतः। १२ शास्त्रेण... ...र्थः। १३ तदिति। साधुत्वमुद्दिश्येत्यर्थः। १४ तत्र-तथा सति। एवञ्चेत्यर्थः। १५ एवञ्च शुशावेति-साधु, कदाचिच्च (पक्षे) सम्प्रसारणघटितमसाध्विति शिश्वायेत्येवसाधु, तदेव प्रयोक्ष्यत इत्याशयः। १६ साधुत्वविकल्पं वदतस्तव तु पक्षे समासघटितस्याऽसाधुत्वमनिष्टमप्यापद्येत॥

(उ०) साधुत्वविकल्पे दूषणमाह भाष्ये-**नचैवेत्यादिना**। तद्व्याचष्टे—**सर्वदात्विति**। साद्दश्यादसाधुत्यागपुरःसरं साधूपादानं दुष्करमित्यपि बोध्यम् ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ द्वेधाऽप्रतिपत्तिः ॥*॥*

**द्वैधं शब्दानामप्रतिपत्तिः [स्यात्][1]। इच्छामश्च-'पुनर्विभाषाप्रदेशेषु द्वैधं शब्दानां प्रतिपत्तिः स्या'दिति। तच्च न सिध्यति, यस्य पुनः कार्याः शब्दाः, विभाषाऽसौ समासं निर्वर्त्तयति ॥**

(प्र०) **द्वेधाऽप्रतिपत्तिरिति**। साधुत्वविकल्पने विभाषाग्रहणस्योपयुक्तत्वाच्छिश्रियतुरित्यादि रूपं न सिध्यतीत्यर्थः। **यस्य पुनरिति**। एवं मन्यते—व्याकरणेनैव शब्दा उत्पाद्यन्ते, तन्मते[2] विभाषाग्रहणेनाऽपूर्वत्वेन विधेयत्वात्संप्रसारणमेव विकल्प्यत इति द्वैधं प्रतिपत्तिः शब्दानां सिध्यतीति[3]।

(उ०) तत्र **साध्वनुशासन** इत्युक्त्या-शब्दनित्यत्व पक्ष एवायं दोषः, न तु कार्यत्वपक्षे-इत्युक्तम्। तदुपपादकं-**'यस्य पुन'**रित्यादिभाष्यम् ॥

[ आक्षेपनिरासभाष्यम् ]

**यस्यापि नित्याः शब्दास्तस्याप्येष न दोषः[4] ॥ कथम्? ॥ न विभाषाग्रहणेन साधुत्वमभिसंबध्यते ॥**

**किं तर्हि? ॥ समाससंज्ञाऽभिसंबध्यते-'समास इत्येषा संज्ञा विभाषा भवती'ति। तद्यथा-'मेध्यः पशुर्विभाषितो मेध्योऽनड्वान्विभाषित' [इति][1]। नैतद्विचार्यते-अनड्वाननड्वानिति ॥ किं तर्हि? ॥ आलब्धव्यो नालब्धव्य इति ॥**

(प्र०) **यस्यापीति**। साधुत्वस्याऽपौरुषेयत्वादविकल्प्यत्वात्तदज्ञानामेव विकल्पः। **तद्यथेति**। पशुत्वाऽनडुत्त्वयोरविकल्प्यत्वात्क्रिया विकल्प्यते। नन्वन्यत्रोक्तं-**'न च संज्ञाया भावाभावाविष्येते'**—इति, इह तूक्तं-**संज्ञाऽभिसंबध्यते**[5]-इति, ततश्च विरोधः। नैष दोषः। इह वृत्तिवाक्ययोर्मुख्यार्थाभेदादभिन्नार्थत्वमाश्रित्योक्तम्। अन्यत्र तु व्यपेक्षैकार्थीभावभेदाद्भिन्नार्थत्वमाश्रित्यैकार्थीभावे एव संज्ञाया भावाऽभावौ नेष्येते इत्युक्तमित्यविरोधः ॥

(उ०) प्राधान्यात्साधुत्वस्यैव विकल्पः स्यादिति यदुक्तं, तत्राह-**साधुत्वस्येति**। 'संज्ञायाः श्रुतत्वेन, साधुत्वस्याऽश्रुतत्वेन श्रुतस्य श्रुतेनैव संबन्धस्य न्याय्यत्वात्प्रयोगाऽसमवायिलङादिस्थले श्रुते विधेयत्वस्यावश्यकत्वाच्चेत्यपि बोध्यम्। **पशुत्वेति**। साक्षाच्छ्रूयमाणेऽप्ययोग्यत्वाद्यदा न संबन्धस्तदा, किं वक्तव्यमश्रूयमाणेऽयोग्ये संबन्धो नेतीत्यर्थः ॥ **अन्यत्रेति**। समर्थसूत्रे ॥ **मुख्यः**-प्रधानः ॥ **अभिन्नार्थत्वमिति**। एवं च तदर्थे कश्चित्साधुत्वेनान्वाख्यायमानोऽनन्वाख्यातस्य तदर्थकस्याऽन्यस्य निवर्त्तकः स्यादिति तस्यापि साधुत्वार्थं **विभाषा**धिकार आवश्यक इति भावः। वाक्ये-व्यपेक्षा परस्पराकाङ्क्षारूपा, पदार्थानामपृथगुपस्थितिविषयत्वमेकार्थीभावो-वृत्तिविषयः। एवं च वृत्तिवाक्ययोर्भिन्नार्थत्वान्न वाक्यानुशासनाय विभाषाग्रहणम्। किंतु वृत्तिविषये एव संज्ञाविकल्पार्थं वाच्यम्। न च वृत्तौ संज्ञायाः स इष्यते। तस्मादेकार्थीभावस्यैव मन्दमत्यनुग्रहाय स विशेषणमिति तत्रोक्ततात्पर्यमित्यविरोध इति भावः। भाष्ये-**समाससंज्ञे**त्यस्य तद्विषयैकार्थीभाव इत्यर्थः।

[ आक्षेपवार्तिकम् ]

*॥*॥ कार्येषु[6] युगपदन्वाचययौगपद्यम् ॥*॥*

**कार्येषु शब्देषु, युगपदन्वाचयेन च यदुच्यते, तस्य युगपद्वचनता प्राप्नोति। 'तव्यत्तव्यानीयरः' 'ढक् च मण्डूका'-दिति। यस्य पुनर्नित्याः शब्दाः, प्रयुक्तानामसौ साधुत्वमन्वाचष्टे ॥**

(प्र०) नित्यवादी कार्ये पक्षे दूषणमाह-**कार्येष्विति**। युगपद्भावे युगपच्छब्दो वर्तत इति द्वन्द्वः कृतः। अन्वाचयः समुच्चयोऽभिमतो, यस्य चकारेण स्वरितत्वेन वा विधानम्। यस्य कार्याः शब्दाः स प्रयोगनिरपेक्षः शब्दानन्वाचष्ट इति तव्यादीनां युगपदुत्पत्तिः प्राप्नोति ॥

(उ०) ननु युगपच्छब्दस्यैककाल इत्यर्थकस्य सप्तम्यर्थवृत्तेरन्वाचयशब्देनाऽतादृशेन कथं द्वन्द्व इत्यत आह-**युगपद्भाव इति**। 'कार्येषु शब्देषु यौगपद्यान्वाचय विषये तेषां यौगपद्यं युगपत्प्रयोगः प्राप्नोती'ति वार्तिकाक्षरार्थः। भाष्ये-'युगपद्वचनते'ति बहुव्रीहेस्तल्। **अन्वाचयेने**त्युक्त्वा

1 क्वचिन्न। २ 'तन्मतेन'। ३ 'इति भावः'। ४ 'दोषो न भवति'। पा०। ५ 'संज्ञाभिः'। ६ 'कार्ये'।

ढकचेति समुच्चयोदाहरणमसङ्गतमित्यत आह–**समुच्चय इति । स्वरितत्वेन वेति ।** यथा काश्यादिभ्यष्ठञ्ञिठाविति वर्त्तमाने **वाहीकग्रामेभ्यश्चे**त्यत्र । नित्यशब्दवादे तु प्रयोगदृष्टानामेव शास्त्रे काल्पनिकविधेयत्वेनेष्टप्रत्ययविभागसिद्धिः । रेखागवयन्यायस्याद्यन्ताविति सूत्रे भाष्य एव वक्ष्यमाणत्वात् ॥

[ आक्षेपनिराकरणभाष्यम् ]

**ननु च यस्यापि कार्यास्तस्याप्येष न दोषः ॥ कथम् ? ॥ 'प्रत्ययः परो भवती'त्युच्यते। न चैकस्याः प्रकृतेरनेकस्य प्रत्ययस्य युगपत्परत्वेन संभवोऽस्ति ॥**

**(प्र०) नचैकस्या इति ।** ननु व्यवहितेऽपि परशब्दः प्रवर्तते । सत्यम् । अन्तरालस्थमनपेक्ष्यानन्तर्यमारोप्य तत्र परशब्दप्रयोगः । निर्दिष्टग्रहणं त्वानन्तर्यार्थमिति कुतो व्यवहितस्य प्रयोगः । कथं तर्ह्युक्तम्–**'एका प्रकृतिर्बह्वश्च यत्र'** इति ?, तत्र यद्याकृतेरेकत्वात्तस्याश्च परत्वादानन्तर्याचाऽदोषः । तव्यदादयस्त्वेकाकृतियुक्ता न भवन्ति ।

**(उ०) व्यवहितेऽपीति ।** लोके तथा दर्शनादिति भावः । **आनन्तर्यमारोप्येति ।** अनेन परादिशब्दानामव्यवहित एव प्रवृत्तिः, अत एव **व्यवहिताश्चे**ति सूत्रं सार्थकमिति भावः । शास्त्रे तु सर्वथा न व्यवहिते प्रवृत्तिरित्याह **निर्दिष्टग्रहणं त्विति । तु**श्चाऽर्थे । छन्दसि परेऽपि **परश्चे**त्यादावपि उत्तराङ्गविकलतस्मादिति परिभाषायाः प्रवृत्तेरिति भावः। **कथं तर्हीति। सरूपसूत्रे** इति भावः। **एकाकृतीति ।** एकानुपूर्वी हि एकाकृतिरत्र ॥

[ आक्षेपाभिप्रायप्रकाशनेन तत्स्थापनभाष्यम् ]

**नापि ब्रूमः–प्रत्ययमाला प्राप्नोतीति ॥ किं तर्हि ?॥ 'कर्तव्य'मिति प्रयोक्तव्ये युगपद्द्वितीयस्य तृतीयस्य च प्रयोगः प्राप्नोतीति।**

**(प्र०) नापि ब्रूम इति ।** एकस्याः प्रकृतेः सर्वे भवन्तीति न **ब्रूमः । किं तर्हि ? ।** प्रत्ययान्तरेण प्रकृत्यन्तरस्याऽऽक्षेपात्कर्तव्यमिति प्रयुयुक्षिते करणीयादीनामपि प्रयोगः प्राप्नोति ।

**(उ०) भाष्ये–नापि ब्रूम** इत्यस्य नैव ब्रूम इत्यर्थः ।

[ आक्षेपनिराकरणभाष्यम् ]

**नैष दोषः । 'अर्थगत्यर्थः शब्दप्रयोगः'। अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते। तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम् , 'उक्तार्थानामप्रयोगः' इति ॥**

**(प्र०) अर्थगत्यर्थ इति । 'तव्यत्तव्यानीयर'** इत्यस्माद्वाक्यान्तराण्युपप्लवन्ते तत्प्रतिपादकानि–'धातोस्तव्यद्भवति भावकर्मणो'रित्यादीनि । तत्र कर्तव्यशब्देन तस्याऽर्थस्य प्रतिपादितत्वात्करणीयशब्दो न प्रयुज्यते ॥

**(उ०)** अर्थोऽपि समुदायस्येति शङ्कमानं प्रत्याह–**तव्यदिति ।** प्रत्ययादिसंज्ञा**स्तव्यत्तव्यानीयर** इति बहुवचननिर्देशात्प्रत्येकमिति प्रत्येकमेव भावाद्यर्थकत्वमिति भावः ।

[ आक्षेपवार्तिकम् ]

॥*॥ *आचार्यदेशशीलने च तद्विषयता* ॥*॥

**आचार्यशीलनेन देशशीलनेन च यदुच्यते, तस्य तद्विषयता प्राप्नोति । 'इको ह्रस्वोऽङ्यो गालवस्य' 'प्राचामवृद्धात्फिन्बहुल'मिति गालवा एव ह्रस्वान्प्रयुञ्जीरन्, प्राक्षु चैव हि फिन् स्यात् । तद्यथा–'जमदग्निर्वा एतत्पञ्चममवदानमवाद्यत् । तस्माज्जाऽजामदग्न्यः पञ्चावत्तं जुहोति' ॥ यस्य पुनर्नित्याः शब्दा, गालवग्रहणं तस्य पूजार्थं, देशग्रहणं च कीर्त्यर्थम् ॥**

**(प्र०) आचार्येति ।** आचार्यस्य देशस्य च पुनः पुनः संकीर्तनमाचार्यदेशशीलनं, तत्र तस्य शब्दस्य तद्विषयत्वमेव स्यात् । सर्वप्रयोक्तृत्वप्रसङ्गे गालवस्येति नियमार्थं स्यात् ॥ **यस्य पुनरिति ।** अनादित्वाच्छब्दव्यवहारस्य नित्यत्वपक्षे नास्ति प्रयोक्तृत्वेनियमः । केवलं गालवः स्मर्तृत्वेन स्मृतोऽस्यैं शास्त्रस्य प्रामाण्यं प्रतिपादयितुमिति पूजार्थमाचार्यग्रहणम् । शास्त्रस्य ह्यनाद्यर्थप्रतिपादकत्वत्पूजा [शास्त्रस्यैं]भवति । **कीर्त्यर्थमिति ।** कीर्तौ सत्यां तेषां स्वर्गाद्यवस्थानं स्थिरं भवति यथा इन्द्रद्युम्नादीनाम् ।

**(उ०) पुनः पुनः संकीर्तनमिति ।** अत्र पुनः

१ इदं वार्तिक[illegible] । २ [illegible]नीयरय च'। ३ 'त'दिति क्वचिन्न। ४ वै–यस्मात्। **अवाद्यत्**–अगृह्णात, **पञ्चावत्तम्**–[illegible]भिघारणानि । ५ तत्र–तत्संकीर्तनविषये । ६ 'प्रयोक्तृ'। ७ क्वचिन्न ।

**पुन**रित्यस्योपयोगश्चिन्त्यः । एकैकस्मिन् शास्त्रे तदभावाच्च। तस्मात्संकीर्तनमात्रमेवाऽत्र **शीलन**मिति बोध्यं। तेन यत्कार्यमुच्यते इति वार्त्तिकाक्षरार्थः ॥ अत एवाग्रे भाष्ये **तत्कीर्तने** चेत्येवोक्तम। तद्विषयत्वमुपपादयति–**सर्वप्रयोक्तिति**। 'इको ह्रस्वो भवति, तत्प्रयोक्तृत्वं च गालवस्ये'त्यादिक्रमेण सूत्रार्थः। भाष्ये–**प्राक्षु चैवेति**। प्राग्देश एव फिन्प्रयोगः स्यादित्यर्थः। **अनादित्वादिति**। एवं च गालवाऽतिरिक्तशिष्टैरपि प्रयुज्यमानत्वान्नियमाऽसंभवः ॥ किंचैतत्पक्षे शास्त्रं रेखागवयन्यायेन कल्पितशब्दविषयमिति कल्पितशब्दे प्रयोक्तनियमाऽसंभव इति भावः। **शास्त्रस्य प्रामाण्यमिति**। एवं च **पूजार्थ**मित्यस्य स्वशास्त्रपूजार्थमित्यर्थ इति भावः ॥ तदेवाह–**शास्त्रस्य हीति**। भाष्ये–**देशग्रहणं चेति** चेनाऽऽचार्यग्रहणम्। देशग्रहणस्य पूजार्थत्वं तु वक्तुमशक्यम्। देशस्य स्मर्तृत्वाद्यभावादिति भावः। **स्थिरं भवतीति**। ततश्च देशकीर्तौ तद्देशीयानां स्वरवस्थानमित्यर्थः। तेन च पाणिनेरपि तदिति भावः। ननु नित्यशब्दवादे गालवादिग्रहणस्य पूजार्थत्वे ह्रस्वाऽभावविशिष्टस्य साधुत्वबोधनं न स्यात्, तत्पक्षे सल्लघूपायेन साध्वसाधुविवेकाय शास्त्रमिति चेन्न। 'गालवः स्मर्ता नान्य' इति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पसिद्धेः। वाग्रहणे एव कर्त्तव्ये गालवग्रहणं व्यर्थमिति शङ्कानिरासार्थं तु भाष्ये **पूजार्थ**मित्युक्तम् ॥ ।

[ आक्षेपनिराकरणभाष्यम् ]

**ननु च–यस्यापि कार्या[ः शब्दा]स्तस्यापि गालवग्रहणं पूजार्थं स्याद्देशग्रहणं च कीर्त्यर्थम् ॥**

(प्र०) **ननु च यस्यापीति**। कार्यपक्षेऽपि पूजा शक्यते व्याख्यातुं–'यस्माद्गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात्त्वमपि प्रयुङ्क्ष्वे'ति स्तुत्यर्थोऽर्थवादः स्यादित्यर्थः ॥

[ आक्षेपवार्तिकम् ]

||*|| *तत्कीर्तने च द्वैधाऽप्रतिपत्तिः* ||*||

**तत्कीर्तने च द्वैधं शब्दानामप्रतिपत्तिः**[2] **स्यात्। इच्छामश्च पुनराचार्यग्रहणेषु देशग्रहणेषु च द्वैधं शब्दानां प्रतिपत्तिः स्यादिति, तच्च न सिध्यति ॥**

(प्र०) इदानीं कार्यपक्षे दूषणमाह–**तत्कीर्तन इति**। कार्यपक्षेऽयमर्थः स्यात्–'यस्माद्गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात्प्रयोक्तव्य'मिति। ततश्च ह्रस्वत्वस्य विकल्पो न स्यात्। नित्यत्वपक्षे तु गालवो ह्रस्वस्य स्मर्ताऽन्यो दीर्घस्येति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पः सिध्यतीति नित्यपक्ष एव युक्तः ॥

(उ०) भाष्ये–**तत्कीर्तनेचेति** आचार्यदेशकीर्त्तने चेत्यर्थः। 'यस्य कार्याः शब्दास्तस्ये'ति शेषः। तदेवाह–**इदानीमिति** ॥ **प्रयुक्तमिति**। कृतमित्यर्थः। **नित्यपक्षेत्विति**। कार्यपक्षे त्वेवं वक्तुमशक्यं,—यतो गालवेन कृतोऽतः कर्तव्यः, नान्येन कृतोऽतो न कर्त्तव्य'–इति। अन्येन[3] कृतस्य पुनः करणवैयर्थ्यात्। नह्यन्यकृतस्य पुनः करणमस्ति। नाप्यन्येनाऽकृतस्याऽकरणम्। तादृशस्यैव[4] करणात्। एतेना[5]ऽन्येन कृतस्याऽनुवादोऽन्याऽकृतत्वबोधनद्वारा विकल्पबोधक इति परास्तम्। पाणिनिकृतानामपि 'पचो व' इत्यादीनामन्याऽकृतत्वेन तेषामपि विकल्पापत्तेश्च। तस्मात्कार्यवादोऽसङ्गत इति दिक्।

[ सिद्धान्तिनः सूत्रप्रत्याख्यानवार्तिकम् ]

||*|| *अशिष्यो वा विदितत्वात्* ||*||

**अशिष्यो वा पुनरयं योगः ॥ किं कारणम्? ॥ 'विदितत्वात्'। यदनेन योगेन प्रार्थ्यते तस्याऽर्थस्य विदितत्वात् ॥ येऽपि ह्येतां संज्ञां नारभन्ते तेऽपि 'विभाषे'त्युक्तेऽनित्यत्वमवगच्छन्ति ॥ याज्ञिकाः खल्वपि संज्ञामनारभमाणा 'विभाषे'त्युक्तेऽनित्यत्वमवगच्छन्ति। तद्यथा–"मेध्यः पशुर्विभाषितो मेध्योऽनड्वान्विभाषितः" इति। आलब्धव्यो नालब्धव्य इति गम्यते ॥ आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैरेतमर्थं संप्रत्याययति–बहुलमन्यतरस्यामुभयथा, वा, एकेषामिति॥**

(प्र०) **अशिष्यो वेति**। 'वा'शब्दो विकल्पे। तेनाकृतिपक्षे उभयत्रविभाषार्थं सूत्रं कर्तव्यम्। व्यक्तिपक्षे तु लक्ष्यभेदेन लक्षणभेदात्क्वचित्किंचिल्लक्षणं विधिमुखेन प्रवर्तते, क्वचिन्निषेधमुखेन प्रवर्तत इतीष्टसिद्ध्या सूत्रं न कर्तव्यमित्यर्थः ॥

(उ०) ननु लोकतोऽनित्यत्वा[6]र्थलाभेऽपि निषेधविकल्पयोरलाभ इत्यत आह भाष्ये–**आचार्यः खल्वपीति**।

१ कश्चिन्न। २ द्वैधं च–कार्यशब्दवादे बोध्यम्। ३ **अन्येन**–गालवेन। ४ **तादृशस्यैव**–अकृतस्यैव। ५ **एतेन**–वैयर्थ्येन। ६ **अनित्येति**। अस्य 'विभाषापदस्ये'त्यादिः।

एवं च ह्रक्रोरित्याद्युभयत्र विभाषायां यथा तव तयोर्लाभस्तथा विभाषापदघटितेऽपि भविष्यतीति नार्थः सूत्रेणेति भावः । **वाशब्दो विकल्पे इति ।** यत्तु अर्थस्य संज्ञित्ववद्विभाषापदार्थस्यैव संज्ञात्वं, तत्राऽपीतेः संबन्धात् । न च पदजन्यपदार्थोपस्थित्यभावेनाऽन्वयाऽसंभवः । विकल्पवाचिपदस्य तदर्थे लक्षणाऽभ्युपगमात् । एवं च लक्षणातात्पर्यग्राहकमिदं सूत्रम् । अर्थे न संज्ञात्वमिति चेत् । तदर्थाक्षिप्तशब्दमात्रस्य संज्ञात्वमस्तु, इतिशब्दसंबन्धसामर्थ्यादिति, तन्न । एकस्याऽनेकसंज्ञायाः शास्त्रेऽदर्शनात्, 'अनाकृतिः संज्ञे'ति वृद्धिसूत्रस्थभाष्यविरोधाच्च । **तेनाकृतीति ।** तत्पक्षे लिट्त्वजातौ विधिमुखेन प्रवृत्तौ पित्येव स्यात्, निषेधमुखेन प्रवृत्तौ कित्येव स्यात्, न तु सर्वत्रेति सूत्रं कर्त्तव्यम् । सति च सूत्रे लिट्त्वजातौ प्राप्तस्य निषेधे तस्यामेव विकल्पो विधीयमानः सर्वत्र सिध्यतीति भावः । प्रत्याख्यानाशयमाह-**व्यक्तिपक्षे त्विति । क्वचिद्विधिमुखेनेत्यन्वयः । किंचिल्लक्षणम्**-उभयत्रविभाषारूपम् । उत्तरत्र तु 'क्वचित्प्रतिषेधमुखेने'त्येव पाठः । परे तु-आकृतिपक्षे किं तज्जात्याश्रयसकलव्यक्तिविषयं[1] लक्षणम्, उत-तज्जात्याश्रययत्किंचिद्विषयम् ? । नाद्यः । सूत्रारम्भेऽपि 'न'पदघटितवाक्यस्य तद्विषयताया वक्तुमशक्यत्वात् । तस्य यत्किंचिद्विषयता, 'वा'घटितस्य सर्वविषयतेति तु दुर्लभम्[2] । नान्त्योऽपि । 'न ब्राह्मणं हन्या'दित्यादौ जातिपक्षे सर्वव्यक्तिविषयताया एव दृष्टत्वात् । किंच तत्र किं विधिमुखप्रवृत्त्या पिद्विषयत्वं, निषेधमुखप्रवृत्त्या किद्विषयत्वं वेत्यत्र विनिगमनाविरहात्सूत्रं विनाप्युभयमुखेन प्रवृत्ताविष्टसिद्धेः । न च भावतात्पर्यकता पिद्विषयत्वे विनिगमिका । 'विभाषोपयमने 'इत्यादौ त्रिसंशयत्वाऽनुपपत्तेः। भावतात्पर्यकतालोभेनाऽप्राप्तविभाषात्वस्यैव संभवात् । विप्रतिषेधशास्त्रवदत्राभावतात्पर्यकताऽपि स्यादिति चेत्, प्रकृतेऽपि तुल्यम् । तस्मात्पक्षद्वयेऽपि सूत्रप्रत्याख्याने भाष्यतात्पर्यम् । किं च सूत्रे कृते त्रिसंशयप्राप्तविभाषास्वपि तत्प्रवृत्तिः स्यादिति सोच्छिद्यैतैव । लक्ष्यानुसारादप्रवृत्तौ तु सूत्रं व्यर्थमेवेति भाष्याशयः । एतदेव ध्वनयंस्त्रिसंशयाप्राप्तविभाषां दर्शयति । त्रिसंशयास्वप्राप्तविभाषात्वमेवेति भ्रमनिरासायेतरयोरपि कथनमित्याहुः ॥

[ अधिकारवार्तिकम् ]

||*|| *'अप्राप्ते', त्रिसंशयाः* ||*||

**इत उत्तरं या विभाषा अनुक्रमिष्यामोऽप्राप्ते ता द्रष्टव्याः ॥ त्रिसंशयास्तु भवन्ति-प्राप्ते, अप्राप्ते, उभयत्र वेति ।**

(प्र०) **अप्राप्ते इति ।** अधिकारोऽयम् । **त्रिसंशया इति ।** त्रिष्वर्थेषु संशयो यासु तास्त्रिसंशयाः॥

( उ० ) **इत उत्तरमित्यस्य** लाभे युक्तिमाह-**अधिकार इति ।** संशयत्रयस्य काप्यभावादाह-**त्रिष्विति ।**

[ अप्राप्तविभाषोदाहरणवार्तिकम् ]

||*|| *द्वन्द्वे च विभाषा जसि* ||*||

**['द्वन्द्वे च विभाषा जसि']प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः ।**

[ आक्षेपभाष्यम् ]

**कथं च[3] प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? ॥**

[ संदेहोपपादकभाष्यम् ]

**उभयशब्दः सर्वादिषु पठ्यते । तयपश्चाऽयजादेशः क्रियते । तेन वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

(प०) **द्वन्द्वे चेति ।** प्रकरणोपलक्षणार्थमेतदुपात्तम् । 'प्रथमचरमतये'त्यत्र तयग्रहणे संशयः । तत्र'तय'शब्देन 'प्रयोजनं सर्वनामाव्ययसंज्ञाया'मिति वाऽन्वर्थसंज्ञाविज्ञानाद्वा केवलस्य प्रयोगाऽभावात्तदन्तस्यैव सर्वनामत्वसम्भवात्प्रत्ययग्रहण **इति** परिभाषया तदन्तविधिः । तत्र[4] यदि सर्वादिग्रहणेन तयाऽन्तं विशेष्यते । नेमशब्दोऽव्यभिचारात्,प्रथमादयस्त्वसंभवान्न विशेष्यन्ते, तदोभयशब्दस्य जसि नित्या संज्ञा विभाष्यत इति प्राप्तविभाषा स्यात् । अथ 'सर्वादीनी'ति निवृत्तं, पूर्वविप्रतिषेधश्च, तदाऽप्राप्तविभाषा । अथ परविप्रतिषेधस्तदोभयत्रविभाषा।

( उ०) 'द्वन्द्वे च विभाषा जसी'त्युक्त्वोभयशब्दोदाहरणमसङ्गतमत आह-**उपलक्षणेति ।** 'विभाषा जसो'त्यस्य द्वन्द्वविषयतया, द्वन्द्वे च संज्ञानिषेधेन सर्वनामसंज्ञायाऽप्राप्तविभाषात्वनिश्चयेन, निषेधीयप्राप्तविभाषात्वनिश्चयेन वा त्रिसंशयत्वाऽभावादिति भावः । 'द्वन्द्वे' इत्यस्याऽसंबन्धे पूर्वादीनां जसि विकल्पारम्भो व्यर्थः स्यादिति तात्पर्यम् । ननु तयशब्देऽपि कथं संशयः, प्रथमादिसूत्रेण प्रत्ययमात्रस्य संज्ञा, सर्वादिसूत्रेण तूभयशब्दस्य समुदायस्येति भिन्नविषयत्वेनाऽप्राप्तविभाषात्वनिर्णयादत आह-**तत्रेति । तयशब्दे ने**'त्यस्य 'तदन्तविधि'रित्यनेनान्वयः । अन्वर्थत्वेन कथं तदन्त-

[1] **विषयमिति** । तादृशव्यक्तिविषयकमित्यर्थः ।
[2] लुप्तं स्यात् ।

[3] 'कथं वा' ।
[4] **तत्र**-तथा सति । एवञ्चेति यावत् ।

विधिरत आह-केवलस्येति । सर्वनामत्वसंभवात्- सर्वार्थबोधकत्वसंभवात्। तथा च तस्य सर्वार्थबोधकत्वाऽभावात्सामर्थ्येन संज्ञाविधावपि प्रत्ययग्रहणपरिभाषया तदन्तविधिरिति भावः। पूर्वविप्रतिषेधश्चेति। सर्वादित्वनिबन्धना संज्ञा जस्भिन्ने सावकाशा, द्वितयादिषु च विकल्पः, उभयशब्दे जस्युभयप्राप्तौ पूर्वविप्रतिषेधः। न च नित्या संज्ञाऽन्तरङ्गा, अन्तरङ्गपरिभाषाया अप्रवृत्तेः। तथाहि-न 'अन्तरङ्गं बलीय' इत्यस्या अत्र विषयः, युगपत्प्राप्त्यभावात्। जसादेः सर्वनाम्नो विहितत्वसंपत्तये तस्याः पूर्वमेव प्रवृत्तिः, अस्यास्तु जसुत्पत्त्यनन्तरमिति स्पष्टमेव। नाप्यसिद्धं बहिरङ्गमन्तरङ्गे इत्यस्याः, अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेरनया तत्प्रवृत्तेर्वारयितुमशक्यत्वात्। बहुशस्तथा सत्त्वात्। तदुत्तरमप्येतत्प्रवृत्त्या पक्षे तदभावविशिष्टस्य साधुत्वबोधनं पूर्वादिष्विव त्रिसंशयत्वस्य भाष्योक्तस्याऽसङ्गत्यापत्तेश्चेति दिक्॥ भाष्ये-तेन वेत्यादि। तेन नित्ये प्राप्ते वा, अन्यत्राऽप्राप्ते वेत्यन्वयः॥

[ सिद्धान्तभाष्यम् ]

**'अप्राप्ते'। अयच् प्रत्ययान्तरम्॥**

(प्र०) प्रत्ययान्तरमिति। आदेशपक्षे पूर्वविप्रतिषेधो वक्तव्य इति प्रत्ययान्तरपक्ष आश्रितः। 'उभादुदात्तो नित्य'[1]मित्यत्र 'तयस्ये'ति नानुवर्तते, तदा प्रत्ययान्तरमयज्भवति॥

(उ०) प्रत्ययान्तरेति। एवं चोभयशब्देऽस्याऽप्राप्तेरप्राप्तविभाषात्वमेवेति भावः।

[ शङ्कान्तरतत्समाधानभाष्यम् ]

**यदि प्रत्ययान्तरम्,-'उभयी'ति ईकारो न प्राप्नोति?॥ माभूदेवं, 'मात्रच'[2] इत्येवं भविष्यति॥ कथम्?॥ 'मात्र'जिति नेदं प्रत्ययग्रहणम्॥ किं तर्हि?॥ प्रत्याहारग्रहणम्॥ क संनिविष्टानां प्रत्याहारः?॥ 'मात्र'शब्दात्प्रभृत्याऽयचश्चकारात्॥**

[ शङ्काभाष्यम् ]

**यदि प्रत्याहारग्रहणं-'कति तिष्ठन्ति'-अत्रापि प्राप्नोति?॥**

[ समाधानभाष्यम् ]

**'अत' इति वर्तते॥**

[ समाधानबाधकभाष्यम् ]

**एवमपि-'तैलमात्रा घृतमात्रा'-अत्रापि प्राप्नोति॥**

(प्र०) तैलमात्रेति। प्रत्याहारे सति चकारेण मात्रशब्दो न विशेषित इति 'हुयामाश्रुभसिवसिभ्यस्त्रन्नि'ति त्रन्नन्तादपि मात्रशब्दान्ङीप्प्रसङ्गः॥

(उ०) न विशेषित इति। न प्रत्याहारघटकइतरव्यावर्त्तकः, समुदायानुबन्धस्याऽवयवानुबन्धत्वाऽभावादिति भावः॥

[ समाधानसाधकभाष्यम् ]

**सद्दशस्याऽप्यसंनिविष्टस्य न भविष्यति प्रत्याहारेण ग्रहणम्॥**

(प्र०) सद्दशस्यापीति। प्रमाणे वर्तमानाद्प्रमेये यो मात्रज्विहितः स प्रत्याहारेण गृह्यते इत्यर्थः।

(उ०) प्रमाणे इति। तादृशस्यैव तत्संनिवेशे सत्त्वादिति भावः॥

[ उदाहरणवार्तिकम् ]

॥*॥ *ऊर्णोर्विभाषा* ॥*॥[3]

**[ ऊर्णोर्विभाषा[4] ] प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः॥**

[ आक्षेपभाष्यम् ]

**कथं च[5] प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र?॥**

[ सन्देहोपपादकभाष्यम् ]

**'असंयोगाल्लिट् कि'दिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥**

(प्र०) ऊर्णोर्विभाषेति[3]। 'विभाषोर्णो'रिति सूत्रं यद्यसंयोगाल्लिट् किदित्यत्राऽनुवर्तते ऊर्णुश्चाऽसंयोगान्त एवेत्यसंयोगग्रहणाद्वाक्यभेदेनोर्णोः परस्येडादेर्लिटो नित्यं कित्त्वं प्राप्तं विकल्प्यते, ततः प्राप्तविभाषा। इड्डुपजीवनार्थं तु स्थानान्तरे सूत्रं पठितम्। अथ तत्र सूत्रं नानुवर्तते, परविप्रतिषेधश्च, ततोऽप्राप्तविभाषा। अथ पूर्वविप्रतिषेधस्तदोभयत्रेति संशयः।

(उ०) भाष्ये-ऊर्णोर्विभाषेति[3]। ऊर्णोर्धातोः[6] कित्त्वविषयविभाषेत्यर्थः। 'वाक्यभेदेने'त्यस्य 'विकल्प्यत'

---

१ 'नित्य'मिति क्वचिन्न। २ 'मात्रजित्येवं' पा०। ३ 'ऊर्णोतेर्वि' इत्ययुक्तः पाठः, प्रायोऽदर्शनात्। ४ लुप्तं स्यात्। ५ 'कथंवा'। ६ ननूतो वृद्धिरिति नित्यवृद्धौ प्राप्तायां तदपवादत्वेनोर्णोतेर्विभाषेत्यस्यारम्भेण प्राप्तविभाषात्वनिर्णयादप्राप्ताधिकारे कथमुपन्यासोऽत आह-ऊर्णोरिति। ७ क्वचिन्न।

इत्यनेनान्वयः । इदं सर्वं ङित्त्वकित्त्वयोरैक्याऽभिमानेन । किमर्थं तर्हि पुरस्तात्कृतमत आह–**इडुपेति** ॥

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते**

[ सन्देहनिरासभाष्यम् ]

**अन्यद्धि कित्त्वम्, अन्यङ्ङित्त्वम् ॥**

(प्र०) **अन्यद्धीति** । व्यपदेशातिदेशोऽयमिति कित्त्वङित्त्वयोर्भेदः ॥

(उ०) शङ्कते–भाष्ये–**अन्यद्धीति** । **तद्व्याख्याभेद इति** । तथा च त्रिसंशयत्वाऽनुपपत्तिरिति भावः ॥

[ संदेहोपपादकवार्त्तिकम् ]

|| * || *एकं चेन्ङित्किती* || * ||

**यद्येकं ङित्कितौ, ततोऽस्ति सन्देहः ॥**

(प्र०) **एकं चेदिति** । कार्याऽतिदेशपक्षे गुणनिषेधस्य कार्यस्यैकत्वादेकत्वमनयोरित्यर्थः ॥

(उ०) **गुणनिषेधस्येति** । यद्यपि ङित्कित्कार्याणि भिन्नानि बहूनि सन्ति, तथाप्यूर्णोतावन्याऽसम्भव इति भावः॥

[ आक्षेपभाष्यम् ]

**अथ हि नाना, नास्ति सन्देहः ॥**

[ समाधानभाष्यम् ]

**यद्यपि नाना, एवमपि सन्देहः ॥ कथं ? ॥ प्रौर्णुवीति ।**

(प्र०) **प्रौर्णुवीतीति** । लङ उत्तमैकवचनम् ।

[ संदेहोपपादनभाष्यम् ]

**'सार्वधातुकमपि'दिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

(प्र०) 'सार्वधातुकमपि'दित्यत्र यदि 'विभाषोर्णो'रित्येतद्वाक्यभेदेन संबध्यते ततः प्राप्तविभाषा॥ अथाऽसम्बन्धः, पूर्वविप्रतिषेधश्च, तते उभयत्र विभाषा, परविप्रतिषेधे त्वप्राप्ते ॥

(उ०) **इत्यत्रेति** । इत्यत्रैवेत्यर्थः। **वाक्यभेदेनेति** । पृथक्पाठसामर्थ्यादिति भावः। **परविप्रतिषेधेत्विति** ॥ 'विज इ'डित्यतोऽर्थाधिकारादत्रेडागम एव गृह्यत इति पक्षे त्विदत्यपि बोध्यम् ॥

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते ॥**

[ उदाहरणवार्तिकम् ]

||*|| *विभाषोपयमने* ||*||

**[ विभाषोपयमने ] प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः ॥**

[ आक्षेपभाष्यम् ]

**कथं च प्राप्ते, कथं वा ऽप्राप्ते, कथं वोभयत्र ? ॥**

[ सन्देहोपपादकभाष्यम् ]

**गन्धन इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

(प्र०) **विभाषोपयमन इति** । यदा गन्धनाङ्गमुपयमनं तत्र गृह्यते, तदा प्राप्ते । पूर्वविप्रतिषेधेऽप्राप्ते । परविप्रतिषेधे तूभयत्र वेति संदेहः ॥

(उ०) 'यमो गन्धने' विभाषोपयमने' इत्येते सिचः कित्त्वविधायके। **यदेति । गन्धनं–सूचनम् । उपयमनं–** स्वीकारः ! **गन्धनाङ्गमिति** बहुव्रीहिः । तत्र गन्धनपूर्वकस्वीकरणे यदि कित्त्वविकल्पः, ततः प्राप्तविभाषेत्यर्थः ॥

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते । गन्धन इति निवृत्तम् ॥**

(उ०) परभूताद्धु 'दीपजने'ति भिन्नाद्धु अप्राप्तविभाषाद्धु पूर्वविषयनिवृत्तिः पूर्वविप्रतिषेधाङ्गीकारश्चाऽप्राप्तविभाषात्वे बीजमिति बोध्यम् ॥

[ उदाहरणवार्तिकम् ]

||*|| *अनुपसर्गाद्वा* ||*||

**[ अनुपसर्गाद्वा] प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥ कथं वा प्राप्ते कथं वाऽप्राप्ते कथं वोभयत्र ? ॥ 'वृत्तिसर्गतायनेषु क्रमः' इति च नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

(उ०) **'वृत्तिसर्गे'**त्यात्मनेपदविधायकम् ।

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते । वृत्त्यादिष्विति निवृत्तम् ॥**

[ उदाहरणवार्तिकम् ]

||*|| *विभाषा वृक्षमृगादीनाम्* ||*||

**[ विभाषा वृक्षमृगादीनाम् ] प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः ॥**

---

१ **किमर्थमेत्ति** । अस्य 'नन्वि'त्यादिः । २ कचिन्न । ३ 'मन्यद्धि' । ४ 'लङ्' । ५ 'तदोभ' । ६ लुप्तं स्यात् ।

७ 'कथं वा' । ८ 'त्वप्राप्ते' । ९ 'धे उभय' ।

**कथं च[1] प्राप्ते, कथं वाऽप्राप्ते कथं वोभयत्र ?॥ 'जातिरप्राणिना'मिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

(प्र०) **जातिरिति** । चर्मादिमयास्तदा मृगादयो ग्राह्याः ।

(उ०) ननु मृगादीनां प्राणित्वा'दप्राणिनामिति नित्ये प्राप्ते' इत्ययुक्तम्, मृगादिविषये एव[2] च त्रिसंशयत्वादत आह-**चर्मादीति** ॥

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते । 'जातिरप्राणिना'मिति निवृत्तम् ॥**

(प्र०) **निवृत्तमिति** । तन्निवृत्तौ च गौणत्वाच्चर्मादिमयानामग्रहणम् ॥

[ उदाहरणवार्तिकम् ]

*॥*॥ उषविदजागृभ्योऽन्यतरस्याम्॥*॥*

**[ उषविदजा[3]गृभ्योऽन्यतरस्याम् ]प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः॥ कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? ॥ प्रत्ययान्तादिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

(प्र०) **प्रत्ययान्तादिति वेति** । कथं पुनः प्रत्ययान्ताः शब्दा रूपान्तरयुक्ता उषादिव्यपदेशं लभन्ते ? ॥ उच्यते—'सनाद्यन्ता धातव' इत्यस्य यदाऽयमर्थो व्याख्यायते—'धातवः सनाद्यवयवा भवन्ति धातूनामन्तावयवाः सनादयो भवन्ति, यथा समासान्ताष्टजादयः',तदा पूर्वोक्तचोद्याऽभावः ॥

(उ०) **प्रत्ययान्ता इति** । प्रत्ययः सनादिरन्तावयवो येषामित्यर्थः । उषादयश्च तदेकदेशा, न प्रत्ययान्तरूपा इति भावः ॥

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते। प्रत्ययान्ता धात्वन्तराणि ॥**

(प्र०) **प्रत्ययान्ता इति** । 'सनाद्यन्ता धातव' इत्ययं योगः संज्ञासंज्ञिसम्बन्धार्थ इति भावः ॥

(उ०) **संज्ञासंज्ञिसंबन्धार्थ इति** । अत एव क्यजाद्यन्तानां संज्ञासिद्धिः । आवृत्तौ तु गौरवमिति भावः ॥

केचित्तु-प्रत्ययान्ता'दित्यनुवृत्तौ उषादिभ्यः कर्तृक्किबन्तप्रकृतिकाचारक्किबन्तेभ्य एव स्यादिति प्राप्ते विभाषा, तन्निवृत्तौ पूर्वविप्रतिषेधेऽप्राप्तविभाषा । निवृत्तौ परविप्रतिषेधे उभयत्रेति भाष्याशयः । **प्रत्ययान्ता धात्वन्तराणीति** । अस्यायं भावः-हलन्तेभ्य आचारक्विपोऽनभिधानमेव । इतरप्रत्ययान्तास्तु नोषादय इत्यप्राप्तविभाषात्वमेवेति वदन्ति ॥

[ उदाहरणवार्तिकम् ]

*॥*॥ दीपादीनां विभाषा ॥*॥*

**[दीपादीनां वि[3]भाषा] प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥ कथं च प्राप्ते कथं वाऽप्राप्ते कथं वोभयत्र ? ॥ 'भावकर्मणो'रिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

(प्र०)**भावकर्मणोरिति वेति**।'**चिण्भावकर्मणो**'-रित्यत्र सूत्रे यदि **दीपजने**त्येतत्सूत्रमनुवर्त्य वाक्यभेदेन संबन्धः क्रियते पृथक्पाठसामर्थ्यात्तदा प्राप्तविभाषा । अथ नाऽनुवर्तते परविप्रतिषेधश्च,तदाऽप्राप्तविभषा । पूर्वविप्रतिषेधे तूभयत्र वि[4]भाषेति संशयः॥

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते । कर्तरीति हि वर्तते ॥**

[ आक्षेपभाष्यम् ]

**एवमपि सन्देहः— 'न्याय्ये वा कर्तरि, कर्मकर्तरि वे'ति ? ॥**

[ समाधानभाष्यम् ]

**नास्ति सन्देहः । सकर्मकस्य कर्ता कर्मवद्भवत्यकर्मकाश्च दीपादयः ॥**

(प्र०) **अकर्मकाश्चेति** । यद्यपि बुधिः सकर्मकस्तथापि एकपरिहारोपन्यासार्थमविशेषेणैतदुक्तम्॥

(उ०) **एकपरिहारः**-कर्मस्थभावकत्वा[5]ऽभावरूपः ॥ ननु कर्तरीत्यनुवृत्तिर्व्यर्था, कर्मणि, भावे, कर्मकर्तरि च परत्वाच्चिण्भावकर्मणोरित्यस्य प्रवृत्तेरिति चेन्न, विप्रतिषेधलब्धार्थस्यैव स्फुटत्वाय अनुवृत्त्या प्रदर्शनादिति दिक् ॥

[ समाधाननिरासभाष्यम् ]

**अकर्मका अपि वै सोपसर्गाः सकर्मका भवन्ति ॥**

---

१ 'कथं वा'। २ एवचेति । प्राणिविषय एव चेत्यर्थः । अन्यथा तदनुपपत्तिरेवेति भावः । ३ लुप्तं स्यात । ४ कचिन्न।

५ कर्मस्थभावेति । अपरिस्पन्दसाधनसाध्यो भावः । सपरिस्पन्दसाधनसाध्या तु क्रिया ।

(प्र०) सोपसर्गा इति । अर्थान्तरवृत्तित्वात्, अनुभवतिवदिति भावः ।

[ समाधानस्थापनभाष्यम् ]

**कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां वा भवन्ति । कर्तृस्थभावकाश्च दीपादयः ॥**

(प्र०) कर्तृस्थभावकाश्चेति । 'अचः कर्तृयकि'-त्यत्र 'जायते स्वयमेवे'त्युदाहृतं, तस्य ण्यर्थवृत्तित्वात्कर्मस्थभावकत्वमिति नास्ति तेनाऽस्य विरोधः ॥

[ उदाहरणवार्तिकम् ]

*॥*॥ विभाषाऽग्रेप्रथमपूर्वेषु ॥*॥*

**[ विभाषाऽग्रे प्रथमपूर्वेषु ] प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥ कथं च प्राप्ते कथं वाऽप्राप्ते कथं वोभयत्र ? ॥**

**'आभीक्ष्ण्ये' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते । 'आभीक्ष्ण्ये' इति निवृत्तम् ।**

(प्र०) आभीक्ष्ण्य इति निवृत्तमिति । पूर्वविप्रतिषेधश्चेति भावः ॥

[ उदाहरणवार्तिकम् ]

*॥*॥ तृन्नादीनां विभाषा ॥*॥*

**[ तृन्नादीनां विभाषा ] प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥ कथं च प्राप्ते कथं वाऽप्राप्ते कथं वोभयत्र ? ॥ 'आक्रोशे' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

(प्र०) तृन्नादीनामिति । 'आक्रोश' इत्यत्र यद्यच्कौ नानुवर्तेते, ततोऽयं संशयः ॥

(उ) तृन्नादीनामिति । 'आक्रोशे च' 'संज्ञायां' 'विभाषा तृन्नन्नतीक्ष्णशुचिष्वि'ति सूत्रे इत्यर्थः ॥ यद्यच्काविति । 'अच्कावशक्ता'वित्यतः । तदनुवृत्तौ तु निःसन्देहमप्राप्तविभाषेति भावः । एतद्भाष्यविरोधाच्च तत्राच्कावित्यनुवृत्तिपरा ग्रन्था अयुक्ता एवेति तात्पर्यम् ॥

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते । 'आक्रोशे' इति निवृत्तम् ।**

१ लुप्तं स्यात् । २ 'कथं च' ।

[ उदाहरणवार्तिकम् ]

*॥*॥ एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥*॥*

**[एकहलादौ पूरयितव्येऽन्यतरस्यां ] प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥ कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र? ॥ 'उदकस्योदः संज्ञाया'मिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ।**

(प्र०) एकहलादाविति । पूरयितव्यस्य चास्ति संज्ञा-'उदपान'मिति ॥

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते । 'संज्ञाया'मिति निवृत्तम् ।**

[ उदाहरणवार्तिकम् ]

*॥*॥ श्वादेरिञि पदान्तस्यान्यतरस्याम् ॥*॥*

**[श्वादेरिञि पदान्तस्याऽन्यतरस्याम् ] प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥ कथं च प्राप्ते, कथं वाऽप्राप्ते कथं वाऽप्राप्ते कथं वोभयत्र ? ॥ 'इञी'ति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते । 'इञी'ति निवृत्तम् ॥**

[ उदाहरणवार्तिकम् ]

*॥*॥ सपूर्वायाः प्रथमाया विभाषा ॥*॥*

**[सपूर्वाया प्रथमाया विभाषा] प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

**कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभत्र ? ॥ 'चादिभिर्योग' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

(प्र०) चादिभिरिति । प्रतिषेधस्याऽप्राप्तविभाषा स्थाप्यते, विधिस्तु प्राप्तविभाषैव ॥

[ सिद्धान्तभाष्यम् ]

**अप्राप्ते । 'चादिभिर्योग'इति निवृत्तम् ।**

[ उदाहरणवार्तिकम् ]

*॥*॥ ग्रो यङ्यचि विभाषा ॥*॥*

**[ग्रो यङ्यचि विभाषा] प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः ॥ कथं च प्राप्ते कथं**

३ 'स्यास्ति संज्ञा' ।

वाऽप्राप्ते, कथं वोभयत्र ? ॥

'यङीति' वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

(प्र०) यङीति वेति। यङ्लुकि कृतेऽजादिः परः संभवति–जेगिले इति। अत्र च पचाद्यचि कृते 'यङोऽचि चे'ति यङ्लुक् ॥

(उ०) यङ्लुकीति। 'अचि विभाषे'त्यत्र 'यङी'ति वर्त्तते। तत्रोभयोर्यङजाधोरव्यवहितपरत्वाऽसंभवात् श्रुतस्याचीत्यस्य परविशेषणत्वं 'यङि'ति विषयसप्तमी। अचि परे यङ्विषये रेफस्य लत्वमित्यर्थः। यत्र विभाषारम्भसामर्थ्याद्यङ्लुकः पूर्वं 'ग्रो यङी'ति न भवति। 'नलुमते'ति निषेधाऽनित्यत्वेन पृथग्योगलोपेन स्थानिवद्भावेन वा यङ्विषय इति प्राप्तविभाषात्वोपपत्तिः। 'यङी'त्येतन्निवृत्तौ विभाषाया असिद्धत्वादेव नित्यं लत्वम्। समुदायलुक्यपि 'न लुमते'ति निषेधान्न तत्प्राप्तिरित्यप्राप्तविभाषात्वोपपत्तिः॥ उभयत्र विभाषात्वे त्वियमनुपपत्तिः–'ग्रो यङी'त्येतत्प्रति 'प्रकरणे प्रकरणमसिद्ध'मिति विभाषाया असिद्धत्वाऽभावः। लुकः पूर्वं यङीत्यस्य न प्रवृत्तिः, 'अन्तरङ्गानपी'ति न्यायेन लुकस्तत्प्रयोजकाऽच्प्रत्ययस्य च पूर्वं प्रवृत्तेः॥ न च लुकि 'न लुमते' ति निषेधेन यङ्परत्वाऽभावात् 'ग्रो यङी'त्यस्याऽप्राप्तेः कथमुभयत्रविभाषात्वमिति वाच्यं, दत्तोत्तरत्वादिति दिक्।

[ सिद्धान्तभाष्यम् ]

अप्राप्ते। 'यङी'ति निवृत्तम् ॥

[ अधिकारवार्तिकम् ]

॥*॥ *प्राप्ते च* ॥*॥

इत उत्तरं या विभाषा अनुक्रमिष्यामः प्राप्ते ता द्रष्टव्याः। त्रिसंशयास्तु भवन्ति प्राप्ते, अप्राप्ते, उभयत्र वेति ॥

(प्र०) प्राप्ते चेति। प्रकृतानुवृत्त्या प्राप्तविभाषा व्यवतिष्ठते ॥

[ उदाहरणवार्तिकम् ]

॥*॥ *विभाषा विप्रलापे* ॥*॥

[विभाषाविप्रलापे]प्राप्ते, अप्राप्ते,उभयत्र वेति संदेहः॥ कथं च[३] प्राप्ते कथं वाऽप्राप्ते कथं वोभयत्र?॥'व्यक्तवाचा'मिति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते, उभयत्र वेति।

(प्र०) अन्यत्र वेति। 'विप्रवदन्ति शकुनय' इत्यत्र पूर्वविप्रतिषेधश्च यदीति भावः।

१ 'निजेगिल इति' पा०। २ क्वचिन्न।

[ सिद्धान्तभाष्यम् ]

प्राप्ते। 'व्यक्तवाचा'मिति हि वर्तते ॥

[ उदाहरणवार्तिकम् ]

॥*॥ *विभाषोपपदेन प्रतीयमाने* ॥ * ॥

[ विभाषोपपदेन प्रतीयमाने ] प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः॥ कथं च[३] प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? ॥ 'स्वरितञितः' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

[ सिद्धान्तभाष्यम् ]

प्राप्ते। स्वरितञितः'इति हि वर्तते ॥

(प्र०) विभाषोपपदेन प्रतीयमाने इति। कर्त्रभिप्राये क्रियाफले विषये आत्मनेपदं भवतीत्येवं प्राप्तविभाषा व्यवतिष्ठते। अथ तु तदर्थद्योतनायात्मनेपदं क्रियते, तदोपपदेनैव द्योतितत्वादप्राप्तविभाषा स्यात् ॥

(उ०) अथत्विति। तथा च स पक्ष एतद्भाष्यविरुद्ध इति भावः। वस्तुतो द्योतकत्वपक्षेऽपि 'व्यतिलुनीते' 'गार्ग्यार्णा'त्यादौ द्योतकसमुच्चयस्य, 'द्वा'वित्यादौ द्योतकवाचकसमुच्चयस्य च दृष्टत्वेनाऽत्राप्यात्मनेपदप्राप्तिरस्तीति प्राप्तविभाषा सूपपादेति चिन्त्यमेतत्।

॥*॥ *तिरोऽन्तर्धौ, विभाषा कृञि* ॥*॥

[ संदेहभाष्यम् ]

[ तिरोऽन्तर्धौ विभाषा कृञि ] प्राप्ते, अप्राप्ते उभयत्र वेति संदेहः॥ कथं च[४] प्राप्ते, कथ वाऽप्राप्ते, कथं वोभयत्र ?॥

[ संदेहोपपादकभाष्यम् ]

'अन्तर्धा'विति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

॥*॥ *अधिरीश्वरे, विभाषा [illegible]* ॥*॥

[ अधिरीश्वरे विभाषा [illegible] ] प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः।

[ आक्षेपभाष्यम् ]

कथं च[४] प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? ॥

३ लुप्तं स्यात्। ४ 'कथं वा'। ५ 'फलविषये'।

[ संदेहोपपादकभाष्यम् ]

ईश्वर इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

[ सिद्धान्तभाष्यम् ]

प्राप्ते । 'ईश्वरे' इति हि वर्तते ॥

॥*॥ *दिवस्तदर्थस्य, विभाषोपसर्गे* ॥*॥

[ दिवस्तदर्थस्य विभाषोपसर्गे ] प्राप्तेऽप्राप्ते, उभयत्र वेति सन्देहः ।

[ आक्षेपभाष्यम् ]

कथं च[2] प्राप्ते कथं, वाऽप्राप्ते, कथं वोभयत्र ? ॥

[ संदेहोपपादकभाष्यम् ]

तदर्थस्येति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

[ सिद्धान्तभाष्यम् ]

प्राप्ते । 'तदर्थस्ये'ति हि वर्तते ॥

॥*॥ *उभयत्र च* ॥*॥

इत उत्तरं या विभाषा अनुक्रमिष्यामः, उभयत्र ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति-प्राप्ते, अप्राप्ते उभयत्र वेति ।

॥*॥ *हृक्रोरन्यतरस्याम्* ॥*॥

[हृक्रोरन्यतरस्यां ] प्राप्ते,अप्राप्ते,उभयत्र वेति संदेहः ॥

[ आक्षेपभाष्यम् ]

कथं च[2] प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? ॥

[ संदेहोपपादकभाष्यम् ]

'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णा'विति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते,उभयत्र[3] वेति ।

[ सिद्धान्तभाष्यम् ]

उभयत्र । प्राप्ते तावत्-अभ्यवहारयति सैन्धवान्, अभ्यवहारयति सैन्धवैः । विकारयति सैन्धवान्, विकारयति सैन्धवैः । अप्राप्ते—हरति भारं देवदत्तः, हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन । करोति कटं देवदत्तः, कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेन ॥

(प्र०) गतिबुद्धीति । तत्र[4] विपूर्वो हरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसानार्थः । करोतिः क्वचिदकर्मकः यथा-विकुर्वते सैन्धवा' इति ॥

(उ०) भाष्ये-गतिबुद्धीति नित्ये प्राप्ते इति । नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति भावः ॥ तत्र विपूर्व इति । 'विहरति ग्राम'मित्यादौ गच्छतीत्यर्थोऽवगमादिति भावः । भाष्ये-अप्राप्ते हरति भारमिति । ननु गत्यर्थत्वादस्यापि प्राप्तिरस्त्येवेति चेन्न । प्रापणार्थत्वेऽपि गत्यर्थत्वाऽभावस्य 'न गतौ'ति सूत्रे वक्ष्यमाणत्वात् ॥

[ उदाहरणवार्तिकम् ]

॥*॥ *न यदि, विभाषा साकाङ्क्षे* ॥*॥

[ न[5] यदि विभाषा साकाङ्क्षे ] प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

[ आक्षेपभाष्यम् ]

कथं न्व[2] प्राप्ते कथं, वाऽप्राप्ते, कथं वोभयत्र ? ॥

[ संदेहोपपादकभाष्यम् ]

'यदी'ति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

(प्र०) यदीति वेति । प्रतिषेधे प्राप्ते इत्यर्थः । लृट् तु यदि प्रतिषिद्धः ॥

[ सिद्धान्तभाष्यम् ]

उभयत्र । प्राप्ते तावत्-अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामः। यत्कश्मीरे[6]ष्ववसाम । यत्तत्रौदनं भोक्ष्यामहे । यत्तत्रौदनमभुञ्ज्महि । अप्राप्ते-अभिजानासि देवदत्त कश्मीरान् गमिष्यामः । कश्मीरानगच्छाम । तत्रौदनं[7] भोक्ष्यामहे । तत्रौदनमभुञ्ज्महि ।

॥ * ॥ *विभाषा श्वेः* ॥ * ॥

[ विभाषा श्वेः ] प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

१ इदं लुप्तं स्यात् । २ 'कथं वा' ।
३ 'सन्देहः' इत्यधिकं क्वचित् ।

४ तत्र-हृक्रोर्मध्ये । ५ यदि—यद्योगे । 'न यदी'ति प्रतिषिद्ध इत्यर्थः । ६ 'काश्मी' पा० । ७ 'तत्रौदनान्' ।

[ आक्षेपभाष्यम् ]

कथं च[1] प्राप्ते कथं वाऽप्राप्ते, कथं वोभयत्र ? ॥

[ संदेहोपपादकभाष्यम् ]

कितीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ।

[ सिद्धान्तभाष्यम् ]

उभयत्र । प्राप्ते तावत्-शुशुवतुः शुशुवुः, शिश्वयतुः शिश्वियुः । अप्राप्ते— शुशाव शुशविथ, शिश्वाय शिश्वयिथ ॥

॥ * ॥ *विभाषा संघुषास्वनाम्* ॥ * ॥

संपूर्वाद्धुषेः-प्राप्ते ऽप्राप्ते, उभयत्र वेति संदेहः ॥

[ आक्षेपभाष्यम् ]

कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? ॥

[ संदेहोपपादकभाष्यम् ]

'घुषिरविशब्दने' इति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते, उभयत्रवेति ॥

[ सिद्धान्तभाष्यम् ]

उभयत्र । प्राप्ते तावत्-संघुष्टा रज्जुः, संघुषिता रज्जुः । अप्राप्ते-संघुष्टं वाक्यमाह[2], संघुषितं वाक्यमाह ॥

आङ्पूर्वात्स्वनेः-प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

[ आक्षेपभाष्यम् ]

कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? ॥

[ संदेहोपपादकभाष्यम् ]

'मनसी'[3]ति वा नित्ये प्राप्ते, अन्यत्र वा अप्राप्ते, उभयत्र वेति ॥

[ सिद्धान्तभाष्यम् ]

उभयत्र । प्राप्ते तावत्-आस्वान्तं मनः, आस्वनितं मनः। अप्राप्ते-आस्वान्तोदेवदत्त, आस्वनितो देवदत्तः-इति ॥ इतिश्रीमद्भगवत्पतञ्जलिकृतौ व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

(प्र०) दैवयज्ञीत्यादि न विचारितं, तस्माद्दिङ्मात्रप्रदर्शनार्थं कृतम् ॥ इत्युपाध्यायजैयटपुत्र-कैयटकृते भाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

(उ०) दैवयज्ञीत्यादीति । 'अनार्षयो'रित्यनुवृत्त्यादिनाऽत्रापि सन्देहसंभव इति भावः ॥ आदिना 'विभाषा पुरुषे' इति ॥ इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्द्योते प्रथमस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ।

---

*इग्यणः संप्रसारणम् १।१।४४*

[ प्रश्नभाष्यम् ]

किमियं वाक्यस्य संप्रसारणसंज्ञा क्रियते-'इग्यण इत्येतद्वाक्यं संप्रसारणसंज्ञं भवती'ति, आहोस्विद्वर्णस्य-'इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो भवती'ति?॥

(प्र०) इग्यणः संप्रसारणम् ॥ पक्षद्वयस्यापि लिङ्गदर्शनाद्युगपच्चोभयोः संज्ञित्वस्यैकस्मिन्वाक्येऽनुपादाना[4]देकतरपक्षाश्रयणे सर्वकार्याऽसिद्धिप्रसङ्गात् प्रश्नः-किमियमिति। वाक्यशब्देन वाक्यार्थ उच्यते। 'इग्यण' इत्यत्र 'भवती'त्यध्याहारादिग्यणो भवतीति योऽयं वाक्यार्थस्तस्येयं संज्ञेत्यर्थः । अथवा वाक्यस्यैवेयं संज्ञा, तत्प्रतिपादितं[5] च वाक्यं स्वार्थमपि[6] प्रतिपादयति । 'यणः स्थाने य इग्वर्णः स संप्रसारणसंज्ञो भवती'ति वर्णसंज्ञापक्षः ॥

(उ०) इग्यणः । लिङ्गेति । प्रदेशेषु प्रथमानिर्देशो वाक्यसंज्ञायामन्यविभक्तिनिर्देशश्च वर्णसंज्ञायां लिङ्गमिति भावः । ननु तर्हि लिङ्गादुभयोरपि संज्ञित्वमस्त्वित्यत आह-युगपच्चेति । अनेकस्याऽर्थस्यैकशब्देन युगपदनुपस्थितेरिति भावः । ननु वाक्यस्य संज्ञायां प्रदेशेषु तस्यैव विधानं स्यादत आह-वाक्यार्थ इति । पूर्वसूत्रादितीत्यनुवर्त्य 'इग्यण इति संप्रसारणसंज्ञ'मित्यर्थादिति भावः। 'स्वं रूप'मित्युक्तेः शास्त्रे शब्दपरत्वस्यौत्सर्गिकत्वेनेतिसमभिव्याहारं विनाऽर्थपरत्वाऽसंभवादिति बोध्यम् । ननु यण्स्थानिकत्वोपलक्षित इगेव वाक्यार्थ इति वर्णपक्षादस्य को भेद इत्यत

१ 'कथं वा' । २ 'आहे'ति कचिन्न। ३ मनसीति 'क्षुब्धस्वान्ते'त्यनेनेत्यर्थः ।

४ 'नुपादाना' पा० । ६ 'स्वार्थं प्रतिपादयति' ।
५ तदिति । संज्ञाप्रतिपादितमित्यर्थः ।

आह-भवतीति । एवंचेग्भवनं वाक्यार्थ इति भावः । तत्प्रतिपादितमिति । संज्ञयोपस्थितस्याऽनर्थकत्वे तदर्थानुपयोगे वा संज्ञोपस्थितस्वरूपस्यैवोपादानम् । नचैत्तदुभयमप्यत्रेति भावः ॥ प्रतिपादयतीति । 'ष्यङः संप्रसारण' मित्यादौ ॥ उच्चारितस्यैव प्रत्यायकत्वमित्यणुदिदितिसूत्रस्थभाष्यविरुद्धमिदम् ॥

[ विशेषजिज्ञासाभाष्यम् ]

**कश्चात्र विशेषः ? ॥**

[ वाक्यसंज्ञापक्षदूषणवार्तिकम् ]

*॥*॥ संप्रसारणसंज्ञायां वाक्यसंज्ञा चेद्वर्णविधिः ॥*॥*

**संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिर्न सिध्यति,–'संप्रसारणात्परः पूर्वो भव[ती]ति, 'संप्रसारणस्य दीर्घो भवती'ति । नहि वाक्यस्य संप्रसारणसंज्ञायां सत्यामेष निर्देश उपपद्यते। नाप्येतयोः कार्ययोः संभवोऽस्ति ॥**

(प्र०) वर्णविधिरिति । वर्णाश्रयो विधिर्दीर्घादिः ॥ नहीति । वाक्यार्थेन पौर्वापर्याऽभावात्तस्य चाऽसत्त्वभूतस्य स्थानित्वाऽसंभवादित्यर्थः ॥

( उ० ) 'वर्णविधि'रित्यस्य वर्णविषयविधानमित्यर्थेऽसिद्धेरभावादाह- वर्णाश्रय इति । सम्बन्धसामान्यषष्ठ्या समासः ॥ 'विधि'रिति कर्मणि किरिति भावः । आदिना-एकादेशः । वाक्यार्थेनेति । क्रियारूपेणेत्यर्थः । नाप्येतयोरिति भाष्यं व्याचष्टे-तस्य चेति । चोऽसंभवादित्युत्तरं योज्यः । भाष्ये-एतयोः कार्ययोरिति । पूर्वरूपदीर्घयोरित्यर्थः ॥

[ द्वितीयपक्षाभ्युपगमभाष्यम् ]

**अस्तु तर्हि वर्णस्य ॥**

[ वर्णसंज्ञापक्षदूषणवार्तिकम् ]

*॥*॥ वर्णसंज्ञा चेन्निर्वृत्तिः ॥*॥*

**वर्ण[स्य] संज्ञा चेन्निर्वृत्तिर्न सिध्यति–'ष्यङः सम्प्रसारण'मिति । स एव हि तावदिग्दुर्लभो यस्य संज्ञा क्रियते ॥ अथापि कथंचिल्लभ्येत, केनाऽसौ यणः स्थाने स्यात् ? । अनेन ह्यसौ व्यवस्थाप्यते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥**

(प्र०) दुर्लभ इति । कार्यपक्षे न लभ्यते, नित्यपक्षे तु लभ्येत इति दुर्लभत्वमुक्तम् । केनासाविति । लोके इगेव नित्यं प्रयोगेऽस्ति, तस्य तु यण्स्थानिकत्वं शास्त्रसमधिगम्यमित्यर्थः । भाविसंज्ञा ...ज्ञानं तु परिहारान्तराभिधानाय न तावदत्रोक्तम्॥

(उ०) 'स एव तावन्नास्ती'ति वक्तव्ये दुर्लभत्वोक्तिरनुचितेत्यत आह-कार्यपक्षे इति । अनेन भाष्येणाऽतीतानागतयोर्...मानयोरप्रत्यासत्त्या शक्तिग्रहदौर्लभ्यमुक्तम् । निरूपितं चेदं मञ्जूषायां नामार्थवादे । नित्यपक्षे त्विति । अनेनाऽथापिकथंचिदित्यपि भाष्यं व्याख्यातम् ॥ शास्त्रेति । सितमित्यादौ यण्स्थानिकत्वाऽभावेन, शास्त्रमात्रैकगम्यं तदित्यर्थः । शास्त्रगम्यत्वे चेतरेतराश्रयमेवेति भावः ॥ भाष्ये-केनासाविति । केन-मानेन यणः स्थाने इति ज्ञातः स्यात् ॥ अनेन-संप्रसारणसंज्ञाविधायकेन शास्त्रेण, असौ-इग् यणः स्थाने स्थाप्यत इत्यर्थः ॥

[ समाधानवार्तिकम् ]

*॥*॥ विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्य ॥ **

**[ 'विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसञ्ज्ञात्वस्य']। यदयं विभक्तिविशेषैर्निर्देशं करोति 'संप्रसारणात्परः पूर्वो भवती'ति, 'संप्रसारणस्य दीर्घो भव[ती]'ति, 'ष्यङः संप्रसारणंभव[ती]'ति,तेन ज्ञायते–'उभयोः संज्ञा भवती'ति ॥ यत्तावदाह–'संप्रसा**

१ इग्भवनं वाक्यार्थः सम्प्रसारणसञ्ज्ञमित्यर्थः। २ उपादानम्—उपादानं भवति । ३ नच–नहि । एतत्–पूर्वोक्तं युक्तिद्वयम् । ४ अनुवादेऽसंभवाद्विधावाह–'ष्यङ इति । ५ 'वाक्यस्य' ६ । कचिन्न । ७ वाक्यार्थेनेति । एतेन पूर्वरूपाऽसंभवो दर्शितः । तस्य चेत्यादिना च दीर्घाऽसंभव उपपादित इत्यवधेयम् । ८ अभावादिति । अत्र पक्षे हि ष्यङः संप्रसारणमित्यादाविको वर्णस्य विधिसंभवादित्यर्थः । उभयोस्तयोः संग्रहायाह–संबन्धेति । वर्णसंबन्धी विधीयमान इत्यर्थः । सच प्रकृतत्वात्सम्प्रसारणनिमित्तक एव । सत एव दार्घपदेन संप्रसारणस्य 'हल' इति दीर्घः । तदेतद्ध्वनयन्नाह–एकेति । सम्प्रसारणाच्चेति पूर्वरूपमित्यर्थः । ९ क्रियेति । भवनक्रियेत्यर्थः । १० लभ्येतेति । 'इष्टम्' 'उप्त'मित्यादौ लभ्येतेत्यर्थ इत्याशयः । ११ 'षिञ्बन्धने'धातोः क्ते सितमित्यादौ यस्थानिकत्वाऽभावेन, इष्टमुप्तमित्यादौ च तथा सत्त्वेन क यण्स्थानिकत्वंनेत्यस्य शास्त्रैकसमधिगम्यत्वमित्यर्थः । १२ ननु-नोत्पत्तिर्भाष्यार्थः, नित्यत्वपक्षे तद्बाधादत आह–केनेति । १३ ज्ञातः–इष्टादिशब्दघटकेकरादिर्यण्स्थानिक इतिज्ञातःस्यात् ।

**रणात्परः पूर्वो भव[ती[१]]ति,'संप्रसारणस्य दीर्घो भवती'ति, तेन ज्ञायते-'वर्णस्य भवती"ति। यदप्याह"-'ष्यङः संप्रसारण'-मिति, तेन ज्ञायते—'वाक्यस्यो[१]ऽपि संज्ञा भवती"ति ॥**

**(प्र०) उभयसंज्ञात्वस्येति**। उभयोः संज्ञा, उभयसंज्ञा, तस्या भाव उभयसंज्ञात्वम्। त[२]त्र तन्त्रावृत्त्येकशेषाणामन्यतमाश्रणेनोभयोःसंज्ञा सिध्य[१]तीति।

**(उ०)** उभयोः संज्ञात्वमित्यर्थोऽसंभवी, एकस्यैव संज्ञात्वादत आह-**उभयोः संज्ञेति**। एकशेषश्च प्रतिपदम्। [३]अनेकमर्थमुद्दिश्यैकस्याः संज्ञाया एकवाक्यतयैव विधातुं शक्यत्वादत्रावृत्तेः क उपयोग इति चिन्त्यम् ॥

[ प्रथमपक्षाभ्युपगमभाष्यम् ]

**अथ वा पुनरस्तु वाक्यस्यैव ॥**

[ दोषस्मारणभाष्यम् ]

**ननु चोक्तं-'संप्रसारणसंज्ञायां वाक्य[४]संज्ञा चेद्वर्णविधि'रिति ॥**

[ समाधानभाष्यम् ]

**नैष दोषः। यथा काकाज्जातः काकः, श्येनाज्जातः श्येनः। एवं संप्रसारणाज्जातं संप्रसारणम्। [ यत्तत्सं[५]प्रसारणाज्जातं सम्प्रसारणं ] तस्मात्परः पूर्वो भवति, तस्य दीर्घो भवतीति ॥**

**(प्र०) यथा काकादिति**। ननु काकत्वाभिसंबन्धात्काकः। अन्यत्र चोक्तं-'येनैव हेतुनैकः काकस्तेनैवापरोऽपी'ति। नैष दोषः,यदानुऽपजातजात्यभिव्यञ्जकसंस्थानविशेषः काको भवति, निर्ज्ञातं च तस्य काकाज्जन्म भवति तदैतदुक्तम्। एवमिहापि संप्रसा[६]रणाज्जातत्वादुपचाराद्वर्णोऽपि ताच्छब्द्यं लभते इति भावः ॥

**(उ०)** भाष्ये-**यथा काकादिति**। अज्ञात एव काकत्वे त[७]ज्ज्ञातत्वमात्रेण तथा व्यवहारवदत्रापीत्यर्थः। तत्र शङ्कते-**नन्विति**। **अन्यत्र**-'एको गोत्रे' इत्यत्र। **यदानुपेति**। न[१]े उपजातो जात्यभिव्यञ्जकः संस्थानविशेष आकारविशेषो यस्येत्यर्थः। क[८]थं तर्हि तथा व्यवहार इत्यत आह-**निर्ज्ञात**मिति। एवं च तस्माज्ज्ञातत्वेनाऽवगते तच्छब्दप्रयोग उभयत्रापीति, दृष्टान्तत्वोपपत्तिः। अन्ये तु काकाज्ज्ञातो यथा काकत्वाभिसंबन्धात्काक एवं संप्रसारणाज्ज्ञातोऽपि संप्रसारणत्वारोपात् संप्रसारणमिति भाष्यार्थमाहुः ॥

[ समाधानान्त(रवार्त्तिक)भाष्यम् ]

*॥[*॥ वा[९]क्यैकदेशप्रयोगाद्वा ॥*]॥*

**अथ वा दृश्यन्ते हि,-वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः, पदेषु च पदैकदेशान्। वाक्येषु तावद्वाक्यैकदेशान्,-प्रविश, पिण्डीम्, प्रविश, त[१०]र्पणमिति। पदेषु पदैकदेशान्-देवदत्तो, दत्तः, सत्यभामा, भामेति। ए[ व]मिहापि,-संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्येत्येतस्य वाक्यस्यार्थे संप्रसारणात्संप्रसारणस्येत्येष वाक्यैकदेशः प्रयुज्यते। ते[११] निर्वृत्तस्य विधिं विज्ञास्यामः-'संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्ये'ति।**

**(प्र०) प्रविशेति**। प्रवेशनक्रिया, कर्म योग्यमाक्षिपति, तत्र पिण्ड्यां [१२]प्रवेशाऽसंभवाद्गृहप्रतिपत्तिः। एवं पिण्डीमिति कर्म योग्यां क्रियामाक्षिपद्भक्षणक्रियां प्रकरणवशात्प्रत्याययति। एवं संप्रसारणादित्येतन्निर्वृत्तार्थमाक्षेप्स्यतीत्यर्थः। यथा च पदैकदेशप्रयोगस्तथा 'सिद्धे शब्दार्थसंबन्धे' इत्यत्र प्रतिपादितम् ॥

**(उ०) वाक्येष्विति**। स्वार्थबोधनाय वाक्येषु प्रयोक्तव्येष्वित्यर्थः ॥ योग्या क्रिया दर्शनादिरपीत्यत आह-**प्रकरणेति**। तत्तद्वाक्यस्य वाक्यार्थे शक्तिग्र[१३]हणकाले तत्तदेकदेशस्यापि तत्तद्वाक्यार्थे शक्तिग्रहः, पदैकदेशस्य पदार्थ इवेति शक्त्यैव बोधः ॥ पूर्वपरिहारे संप्रसारणपदस्य तज्जन्यवर्णे उपचारात्प्रयोगः। अत्र त्वेकदेशेनैव शक्त्या तदर्थप्रतिपत्तिरिति भेदः। तदाह-**आक्षेप्स्यतीति**। **आक्षेपो**ऽत्र बोधनमेव ॥ भाष्ये-**इत्येतस्य वाक्यस्यार्थे इति**। अत्र 'वाक्य'पदं पदसमुदायपरम्। **इत्येतस्य**-इत्येतदर्थकस्य-संप्रसारणादुत्पन्नो यस्तस्मादित्यस्येति, संप्रसारणस्य यत्कार्यं तस्येति च-वाक्यस्यार्थे इत्यर्थः ॥

---

१ कचिन्न। २ **तत्र**-तेषां ज्ञापकत्वे सति। ३ **अनेकं**-वर्णवाक्यरूपमनेकम्। ४ 'वाक्यस्य'। **काकः**-काकशावकः। ६ **जातत्वात्**-संप्रसारणं भवतीति वाक्याज्ज्ञातत्वात्। **ताच्छब्द्यं**-सम्प्रसारणशब्दव्यपदेशम्।

७ **तज्जातत्वेति**। तज्ज्ञातत्वज्ञानमात्रेणेत्यर्थः। ८ शङ्कते-**कथमिति**। नन्वि'त्यादिः। ९ लुप्तं स्यात्। १० गङ्गां प्रविश, तर्पणं कुर्वित्यर्थः। ११ 'ते' पाठा०। १२ 'प्रवेशन'। १३ 'ग्रहण'।

[ समाधानान्तर (वार्त्तिक) भाष्यम् ]

*[ ॥*॥ वचने[1]प्रामाण्याद्वा ॥*॥ ]*

**अथवाऽऽहायं 'संप्रसारणात्परः पूर्वो भवती'ति, 'संप्रसारणस्य दीर्घो भवती'ति, न[2] च वाक्यस्य संप्रसारणसंज्ञायां सत्यामेष निर्देश उपपन्नो, नाप्येतयोः कार्ययोः संभवोऽस्तीति, तत्र[3] वचनाद्भविष्यति ॥**

(प्र०) अथवेति । 'यथा ब्राह्मणशतं भोज्यता'मित्युक्ते सामर्थ्यात्संख्येया ब्राह्मणा भोज्यन्ते, तथेहापि 'संप्रसारणा'दित्युक्ते वाक्यार्थेन पौर्वापर्याऽभावात्तत्फलस्य वर्णस्य प्रतीतिः ॥

(उ०) पूर्वेभ्यः पक्षेभ्योऽस्य भेदमाह-**यथा ब्राह्मणेति** । एवं च यथा तत्र सङ्ख्यान्वयः सङ्ख्येयद्वारा, तथा प्रकृते स्वनिर्वृत्तद्वारेति भावः । तदेवाह-**तत्फलस्येति** । यथा पितृनाम्ना सङ्कल्पितं द्रव्यं तस्याऽयोग्यत्वे तत्पुत्राय समर्प्यते तद्वदिति भावः ॥

[ द्वितीयपक्षाभ्युपगमभाष्यम् ]

**अथवा पुनरस्तु वर्णस्य ॥**

[ आक्षेपरमारणभाष्यम् ]

**ननु चोक्तं 'वर्णसंज्ञा चेन्निर्वृत्ति'रिति ॥**

[ समाधानभाष्यम् ]

**नैष दोषः । इतरेतराश्रयमात्रमेतच्चोदितं । सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि-'सिद्धं तु नित्यशब्दत्वा'दिति ।**

(उ०) भाष्ये-**एकत्वेनेति** । साजात्यादेकत्वेन विश्लिष्टानि बुद्धया कृत्वेत्यर्थः । सर्वेषामेकत्वेनैकजातीयत्वेनैकपरिहारेण सर्वाणि परिहृतानीति भावः ॥

[ समाधाननिरासभाष्यम् ]

**नेदं तुल्यमन्यैरितरेतराश्रयैः । नहि तत्र किं चिदुच्यते-'अस्य स्थाने ये आकारैकारौकारा भाव्यन्ते ते वृद्धिसंज्ञा भवन्ती'ति । इह [हि[4]] पुनरुच्यते-'इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो भवतीति ॥**

(उ०) **नेदं तुल्यमिति** । नित्यशब्दवादेऽपि यण्स्थानिकत्वस्य शास्त्रैकसमधिगम्यत्वादिति भावः ॥

[ समाधानस्थापन(वार्त्तिक)भाष्यम् ]

*[॥*॥ भाविसञ्ज्ञा[1]विज्ञानाद्वा ॥*॥]*

**एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते। यद्यथा— कश्चित्कंचित्तन्तुवायमाह— 'अस्य सूत्रस्य शाटकं वये'ति। स पश्यति[5]- 'यदि शाटको न वातव्योऽथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम् , भाविनी[6] खल्वस्य[7] संज्ञाऽभिप्रेता, स मन्ये वातव्यो—'यस्मिन्नुते शाटक इत्येतद्भवती'ति । एवमिहापि-स यणः स्थाने भवति यस्याऽभिनिर्वृत्तस्य संप्रसारणमित्येषा संज्ञा भविष्यति ॥**

(प्र०) **भाविनीति** ॥ 'ष्यङ संप्रसारणं'मितिविधिप्रदेशेषु भाविसंज्ञाविज्ञानमित्यर्थः ॥

(उ०) **भाविसंज्ञेति** । संप्रसारणादिपदस्य तत्त्वेन व्यवहरिष्यमाणे लक्षणेतिभावः । अयं समाधिर्वृद्ध्यादिविषयेऽपि बोध्यः॥

[ समाधानान्तर(वार्त्तिक)भाष्यम् ]

*[॥*॥ इजा[1]दियजादिप्रवृत्तेश्च ॥*॥]*

**अथवा—इजादियजादिप्रवृत्तिश्चैव हि लोके लक्ष्यते । यजाद्युपदेशात्तु इजादिनिवृत्तिः प्रसक्ता। प्रयुञ्जते च पुनर्लोका-इष्टम् उप्तमिति । ते मन्यामहे—'अस्य यणः स्थाने इममिकं प्रयुञ्जत' इति । तत्र तस्याऽसाध्वभिमतस्य शास्त्रेण साधुत्वमव[8]स्थाप्यते—किति साधुर्भवति, ङिति साधुर्भवतीति ॥ [ इग्यणः संप्रसारणम् ] ॥**

(प्र०) 'सिद्धं तु नित्यशब्दत्वा'दित्येतत्समर्थनार्थमाह—**अथवेति** । बुद्धिविपरिणाममात्रं स्थान्यादेशभाव इत्यर्थः ॥ **असाध्वभिमतस्येति** । प्राक् संप्रसारणशास्त्रादिति भावः । यथासंख्यसंबन्धाददुहितरामितीकारस्य संप्रसारणसंज्ञा न भवति । 'दिव उ'दित्युत्त्वे यणादेशे कृते 'हल'इति दीर्घत्वं तपरकरणान्न भवति-द्युभ्यामिति । अक्षद्युवावित्यत्र

१ लुप्तंस्यात् । २ **नच** नहिं । ३ **तत्र**-तथासति । ४ कश्चित्र । ५ **पश्यति**-विचारयति । ६ अस्य 'अत' इत्यादिः । ७ **अस्य**-वक्तुः । **मन्ये**-निश्चिनोमि । ८ 'मित्यत्र' । मित्यादि' । ९ 'व्याख्यायते' ।

'संप्रसारणाच्चे'ति पूर्वैकादेशो न भवत्यचः पश्चात्सन्निधानात्, अथवा वार्णादाङ्गस्य बलीयस्त्वात् ॥

(उ०) **बुद्धीति** । तदर्थं सूत्रार्थः–'यण्प्रयोगे प्राप्ते इक् प्रयुज्यमानः संप्रसारणसंज्ञकः[1]' इति ॥ तज्ज्ञानं च यजाद्युपदेशज्ञानमात्रेण 'वचीस्वपी'त्येतज्ज्ञानं विनापि जातमिति नान्योन्याश्रय इत्यर्थः । 'वचीस्वपी'त्यादेश्चायमर्थः–'एतत्संबन्धियण्प्रयोगे प्राप्ते इक् प्रयुज्यमानः साधुरिती'ति भावः । असाधोः साधुत्वं[2] ब्रह्मणाऽप्युपपादयितुमशक्यमत आह–**प्रागिति** । एतदेव[चे]ध्वनयितुम'भिमतस्ये'त्युक्तम् । ननु दुहेर्लङि उत्तमपुरुषे लस्येटि तस्य संप्रसारणत्वेऽदुहितरामित्यादौ 'हल' इति दीर्घः स्यादत आह–**यथासंख्येति** । एवं हि यथासङ्ख्यार्थम् लृकारोपदेशस्यावश्यकत्वे 'लृकारोपदेशः किमर्थं' इति ऋलृक्सूत्रस्थभाष्याऽसङ्गतिरिति चिन्त्यमिदम् । तस्मात् 'संप्रसारणस्ये'त्यादौ तद्भावितपरत्वाश्रयणान्न दोषः । ध्वनितं चेदं वाक्यसंज्ञापक्षस्थापने वाक्यैकदेशन्यायं वदता भगवता । एतेन 'द्युभ्याम्' 'अक्षद्युवा'वित्यपि सिद्धम् । **अचः पश्चादिति** । समानाङ्गग्रहणस्य करिष्यमाणत्वादौकारस्य चाऽनङ्गस्थत्वादित्यर्थः । तत्प्रत्याख्यानेऽप्याह–**वार्णेति** । आङ्गम्–उवङ् । [ इग्यणः ] ॥

## आद्यन्तौ टकितौ ॥१।१।१।४५॥

[ आक्षेपभाष्यम् ]

**समासनिर्देशोऽयं, तत्र[3] न ज्ञायते–क आदिः कोऽन्त इति । तद्यथा–'अजाविधनौ देवदत्तयज्ञदत्ता'वित्युक्ते तत्र न ज्ञायते–कस्याजाधनं, कस्याऽवयः–इति ॥**

(प्र०) **आद्यन्तौ** । लोकव्यवहारादत्र क्रमव्यवस्था न सिध्यति, अपि तु शास्त्रेणैवेति प्रदर्शनाय पूर्वपक्षः–**समासनिर्देशोऽयमिति** । अभिन्नस्याऽर्थस्य समासेन प्रतिपादनादित्यर्थः । यद्यपि 'देवदत्तस्य यज्ञदत्तस्य चाऽजा अवयश्च धन'मिति वाक्येपि क्रमव्यवस्था नास्ति तथापि समासे सुतरां नास्तीति प्रतिपादयितुं 'समासनिर्देश' इत्युक्तम् ॥

(उ०) **आद्यन्तौ । अपित्विति** । एतदर्थमेव स्थानाख्यप्रमाणेन सिद्धेऽपि यथासङ्ख्यसूत्रमावश्यकमिति भावः । **अभिन्नस्य**–अपृथग्भूतस्य । **सुतरामिति** । यत्र न साहित्यस्य नियमेन प्रतीतिः, पृथगुपस्थितिश्च, तत्रापि चेन्न क्रमव्यवस्था, किमु वक्तव्यं साहित्यप्रतीतावपृथगुपस्थितौ चेत्यर्थः । तथान्वयबोधे तत्तत्पदार्थानां सर्वसाधारणव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनोपस्थितिस्तन्त्रमिति तात्पर्यम् ॥

[ समाधानभाष्यम् ]

**यद्यपि तावल्लोक एव दृष्टान्तः, दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति ।**

(प्र०) **यद्यपीति** । दर्शनं–दृष्टं, तस्याऽन्तो निश्चयः । यद्यपि लोके एतद्दर्शनमित्यर्थः ।

(उ०) **अन्तो निश्चय इति** । दर्शनस्याऽवसानं निश्चये सत्याकाङ्क्षाऽभावाद्भवतीति 'दृष्टान्त'शब्देन निश्चय उच्यते इत्यर्थः । **एतद्दर्शनमिति** । निश्चय इत्यर्थः। एवंच यथासंख्यान्वयाभिप्रायेणेदृशप्रयोगो लोकेऽसाधुरिति भावः ॥

[ प्रश्नभाष्यम् ]

**अस्ति वेह[4] कश्चित्पुरुषारम्भः ? ॥**

(उ०) भाष्ये-**अस्तिवेति** प्रश्नः। 'च'पाठस्त्वयुक्तस्तस्य प्रश्नेऽयुक्तत्वात् ॥

[ समाधानभाष्यम ]

**अस्तीत्याह ॥**

**कः ? ॥ संख्यातानुदेशो नाम ॥**

[ आक्षेपभाष्यम् ]

**कौ पुनष्टकितावाद्यन्तौ भवतः ? ॥**

(उ०) **कौ पुनरिति** । यौ टकितावाद्यन्तौ तौ किमागमौ उतादेशौ इति प्रश्नः ॥

[ समाधानभाष्यम् ]

**आगमावित्याह ॥**

(उ०) **आगमावित्याहेति** । आद्यन्तपदसत्त्वादिति भावः ॥

[ आदेशवादिन आक्षेपभाष्यम् ]

**युक्तं पुनर्यन्नित्येषु नाम शब्देष्वागमशासनं स्यात् । ने[5] । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । आगमश्च नामाऽपूर्वः शब्दोपजनः ॥**

(उ०) **नित्येष्विति** । वर्णास्तद्घटिताः प्रयोगेषु श्रूयमाणाः शब्दाश्च व्याकरणाऽकार्या आकाशवन्नित्या इति मते इदम् ॥

[ आगमवादिनः प्रतिवन्दीभाष्यम् ]

**अथ युक्तं यन्नित्येषु शब्देष्वादेशाःस्युः?॥**

[ आदेशवादिनः समाधानभाष्यम् ]

**बाढं युक्तम् । शब्दान्तरैरिह[6] भवित-**

१ 'सञ्ज्ञ' । २ क्वचिन्न । ३ तत्र–समासनिर्देशे ॥ ४ 'चेह' । ५ नेति । "ने'त्यत्र 'युक्त'मित्यस्यानुषङ्गः। तत्र हेतुमाह–नित्येष्विति । आगमश्चेति । चो ह्यर्थे" इत्येकेभाष्यार्थमाहुः । ६ इह–आदेशविधाने ।

व्यम्। तत्र[1] शब्दान्तराच्छब्दान्तरस्य प्रतिपत्तिर्युक्ता॥

(उ०) तत्र शब्दान्तरादिति। प्रसक्तां शब्दान्तरबुद्धिं विहायेत्यर्थः॥

[ इष्टापत्तिभाष्यम् ]

**आदेशास्तर्हीमे भविष्यन्त्यनागमकानां सागमकाः॥**

[ आक्षेपभाष्यम् ]

**तत्कथम्?॥**

[ एकदेशिसमाधानभाष्यम् ]

**संज्ञाधिकारोऽयम्। आद्यन्तौ चेह संकीर्त्येते, टकारककारावितावुदाह्रियेते। तत्र[2]ाद्यन्तयोष्टकारककारावितौ संज्ञे भविष्यतः। तत्र[3] 'आर्द्धधातुकस्येड्वलादेः' इत्युपस्थितमिदं भवति—आदिरिति। तेनेकारादिरादेशो भविष्यति॥**

( प्र० ) संज्ञाधिकारोऽयमिति। यद्येवं संज्ञासंज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य स्वयमेव निवर्तत इति किमिद्ग्रहणेन, टकावित्येवास्तु। नैष दोषः। इत्संज्ञत्वेन देशविशेष उपलक्ष्यते। तेनेत्संज्ञकस्य यो देशस्तद्देशावस्थितौ टकौ संज्ञे भवत इति 'आलजाटचा'वित्याटच्प्रत्यये टकारः संज्ञा न भवति। तत्रेड्ग्रहणेनेकारादिः शब्दो गृह्यते। स्थानेऽन्तरतमश्च[4]ादेशो भवतीति तव्यस्य इतव्यो भवतीति सिद्धमिष्टम्॥

( उ० ) 'अनागमकाना'मित्यादेर्यद्यपि 'घुसंज्ञा'सूत्रे आशय उक्त एव, तथापि तं विस्मृत्य 'तत्कथ'मिति प्रश्ने एकदेशी साहचर्यादस्य संज्ञासूत्रत्वेन तदुपपत्तिमाह—**संज्ञाधिकारोऽयमिति**। तत्र शङ्कते—**यद्येवमिति**। **उपलक्ष्यत इति**। एवंचाऽनयोरित्त्वमेव नेति भावः। **आटजिति**। यद्यपि प्रत्ययविधौ नाऽस्य प्रवृत्तिः, षष्ठ्यात्यपकर्षणात्। अत एव टा—टिठन्—ऐकागारिकडित्यादौ नास्य [illegible]त्तिः। तथापि टुकः पर्यायेणाद्यन्तता स्यादिति दोष इति [illegible]म्। 'आटश्चे'त्यादिभिस्तु टकारार्थादित्वोपलक्षिताकारा[illegible]नुवादेन वृद्ध्यादिविधानम्। भाष्ये—**सङ्कीर्त्येते**। प्रथमत उच्चार्येते। **उदाह्रियेते**। पश्चादुच्चार्येते इत्यर्थः। अन्तर

तम इति। अर्थतः, श्रुतितश्चेति भावः॥

[ शङ्काभाष्यम् ]

**एतावदिह[5] सूत्रम् 'इट्'-इति। कथं पुनरियता सूत्रेणेकारादिरादेशो लभ्यः?॥**

[ समाधानभाष्यम् ]

**लभ्य इत्याह॥ कथम्?॥**

*[ ॥*॥ "बहुव्रीहिनिर्देशात्[6]" ॥*॥ ]*

**बहुव्रीहिनिर्देशोऽयम्। इकारः 'इ[7]'—आदिरस्य[8]ेति॥**

[ आक्षेपभाष्यम् ]

**यद्यपि तावदत्रैतच्छक्यते वक्तुमिह तु कथं—'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति, यत्र[9]ाशक्यमुदात्तग्रहणेनाऽकारो विशेषयितुम्॥**

[ दोषजिज्ञासाभाष्यम् ]

**तत्र को दोषः?॥**

[ दोषदर्शनभाष्यम् ]

**अङ्गस्योदात्तत्वं प्रसज्येत॥**

(प्र०) अङ्गस्योदात्तत्वमिति। तच्चाऽलोऽन्त्यस्येत्यन्त्यस्य स्यात्॥

( उ० ) ननु प्रथमाऽतिक्रमे कारणाऽभावादाद्युदात्तत्वेनेष्टसिद्धिरत आह—**तत्रेति**।

[ समाधानभाष्यम् ]

**नैष दोषः। त्रिपदोऽयं बहुव्रीहिः। तत्र वाक्य एवोदात्तग्रहणेनाऽकारो विशेष्यते—अकार उदात्त [illegible]ादिरस्येति॥**

( प्र० ) त्रिपदोऽयमिति। विशेषणस्याप्युदात्तस्य सौत्रत्वान्निर्देशस्य परनिपातः॥

( उ० ) भाष्ये—**तत्र वाक्ये एवेति**। त्रिपदे वाक्य एवेत्यर्थः। एवः—प्रसिद्धौ। एवं च तत्समानार्थकवृत्तावप्यकार[illegible]विशेषणत्वं सुलभमिति भावः॥

[ शङ्काभाष्यम् ]

**[illegible] [illegible]नुवृत्त्यैतद्भवति—'आडजादीना'मिति**

---

१ तत्र—शब्दान्तरभवने। २ तत्र—तथासति। ३ तत्र—संज्ञासंज्ञिभावे सति। ४ कश्चित्। ५ इह—'आर्द्धधातुकस्येड्वलादे'रित्यत्र, अष्टाध्याय्यां वा। सूत्रमिति त्ववयवे समुदायारोपाद्बोध्यम्। ६ तुल्यं स्यात्। ७ 'इकार आदिरस्येति'

पा०। ८ यत्रा[illegible]क्यमिति। अकारः इ आदिरस्येति द्विपदबहुव्रीहिणाऽऽझोपस्थितैः। उदात्त इति च भिन्नं पदमिति भावः। ९ 'तत्राऽशक्यमुदात्तग्रहणेनाऽऽकारो विशेषयितु'मिति[illegible]

( प्र० ) यत्र तर्हीति । तत्र ह्युदात्तग्रहणमेवाऽनुवर्तत इत्यशक्यो बहुव्रीहिराश्रयितुमिति भावः ॥

[ समाधानभाष्यम् ]

**वक्ष्यत्येतत्–'अजादीनामटा सिद्ध'मिति ॥**

( प्र० ) वक्ष्यत्येतदिति । सूत्रस्यैव प्रत्याख्यानाददोष इत्यर्थः ॥

( उ० ) प्रत्याख्यानादिति । यासुड्विधायकं च 'यासुडुदात्तः परस्मैपदेष्वि'ति पाठ्यमिति न दोषः ॥

[ सिद्धान्तिभाष्यम् ]

**अथवा–यत्तावदयं सामान्येन शक्नोत्युपदेष्टुं तत्तावदुपदिशति–प्रकृतिम् । ततो वलाद्यार्धधातुकं, ततः पश्चादिकारम् । तेनाऽयं विशेषेण शब्दान्तरं समुदायं प्रतिपद्यते । तद्यथा–खदिरबुर्बुरयोः–'खदिरबुर्बुरौ गौरकाण्डौ सूक्ष्मपर्णौ' । ततः पश्चादाह–'कङ्कटवान्खदिर'–इति । तेनाऽसौ विशेषेण द्रव्यान्तरं समुदायं प्रतिपद्यते ॥**

( प्र० ) अथवेति । परिभाषापक्षेऽपि न दोष इत्यर्थः । नहि व्यवस्थितस्य तव्यस्य पश्चादिकारोऽवयव आगच्छति, येनाऽनित्यत्वं स्यात् । किं तर्हि, नित्यं पदमनेनोपायेनान्वाख्यायते । खदिरबर्बुरयोरिति निर्धारणे षष्ठी । 'तयोः कङ्कटवान् खदिर'इत्युक्ते द्रव्यान्तरं खदिरं प्रतिपद्यते, न तत्र कङ्कटास्तदानीमारोप्यन्ते, प्रतिपादनोपाय एवाऽयमित्यर्थः ॥

( उ० ) 'आड्जादीना'मिति कुर्वतः सूत्रकृतो नायं पक्षस्तात्पर्यविषयीभूत इत्यतो 'घु'संज्ञासूत्रोपपादितमेव पक्षं सिद्धान्त्याह भाष्ये–**अथवेति । परिभाषापक्षेऽपीति ।** परिभाषात्वे नागमत्वपक्षेऽपीत्यर्थः । भाष्ये–**तेनायं विशेषेणेति । 'ततः पश्चादिकार'**मित्यन्तेनेत्यर्थः । **शब्दान्तरम् ।** तव्याद्यपेक्षया भिन्नं समुदायमितव्यादिरूपमित्यर्थः । **प्रतिपद्यते ।** तव्यबुद्धिनिवर्त्तनेनेत्यर्थः । **नित्यं पदमिति ।** व्याकरणाऽनिष्पाद्यमित्यर्थः । **अन्वाख्यायत इति ।** क्रमेण सिद्धतत्तदवयवप्रतिपादनेन पूर्वपूर्वनिरवयवकबुद्धिविपरिणामद्वारा प्रत्याय्यत इति आदेशस्थल इवाऽत्रापि बुद्धिविपरिणामान्न नित्यत्वहानिः । तदेव दर्शयति–**न तत्र कङ्कटा इति । कङ्कटः**–सन्नाहः । उपरितनशुष्कत्वचः । भाष्ये–**खदिरबुर्बुरयोरिति ।** 'सामान्यमुपदिशतो'त्यध्याहृतसामान्यापेक्षया षष्ठी । सामान्यमेव दर्शयति–**खदिरबुर्बुरौ गौरकाण्डाविति । द्रव्यान्तरं ।** कङ्कटाद्भिन्नं तदवयवकम् । **समुदायमिति ।** पतञ्जलिमते गुणसमुदायस्यैव द्रव्यत्वादिति भावः । तत्र यथा 'गौरकाण्डावि'त्यादिना खदिरेऽपि प्रसक्तां बुर्बुरबुद्धिं 'कङ्कटवा'नित्यनेन निवर्त्य खदिरबुद्धिः स्थाप्यते, तथेहापि समान्योपदेशात्सर्वत्र तव्यबुद्धौ प्रसक्तायामिड्बोधकविशेषेणागमत्वबोधनद्वारैव इतव्यबुद्धिः स्थाप्यते इत्यर्थः । निरूपितं चैद्वृसंज्ञासूत्रे । अत्र पक्षे वाचकस्यैवाऽनया प्रणाल्या व्युत्पादनम् । उत्तरपक्षे तु कल्पितस्याऽनेन साक्षाद्बोधनम् । तेन च बोधकस्याऽखण्डस्य बोधनमिति भेदः ॥

[ समाधानान्तरभाष्यम् ]

**अथवैतयाऽनुपूर्व्याऽयं शब्दान्तरमुपदिशति–प्रकृतिम्, ततो वलाद्यार्धधातुकम्, ततः पश्चादिकारं, यस्मिंस्तस्यागमबुद्धिर्भवति ॥**

( प्र० ) अथवेति । एतदाह–अस्ति स्त एधीति तत्त्वतो रूपाऽर्थान्वयाऽभावात्कल्पिताभ्यामेवान्वयव्यतिरेकाभ्यामर्थवत्तामाश्रित्याऽसत्यप्रकृतिप्रत्ययोपदेशेन सत्यस्य पदस्य व्युत्पादनं क्रियते रेखागवयेनेव सत्यगवयस्य ॥

( उ० ) **रूपार्थान्वयाऽभावादिति ।** व्याकरणेन यस्य 'अ'सितिरूपस्यऽर्णो दर्शितस्तेन रूपेण तस्यार्थस्य प्रयोगेष्वन्वयाऽभावः, स्त एधीत्यादौ व्यभिचारादित्यर्थः । **असत्येति ।** शास्त्रप्रक्रिया कल्पिता असत्या इत्यर्थः । यद्यपि सत्यगवयो रेखागवयवत्सावयव एव, सर्वे कल्पितावयवसदृशावयवानां तत्राऽन्वयात् । तथापि सत्यं पदमखण्डमेव, एधीत्यादौ शास्त्रकृत्कल्पितावयवसदृशानामनुपलम्भादित्येतत्पक्षनिष्कर्षः । **सत्यस्य पदस्येति ।** एवं च रेखागवयवत्कल्पिताऽनित्यपदविषयकं शास्त्रम् । तत्रागमेष्वपि न क्षतिर्न च तल्लोके प्रयुज्यमानं, किं तु तत्प्रत्याय्यमेव पदं तथेति भावः । **एतयेत्यादि**भाष्यस्यायमर्थः,–**एतया**–वक्ष्यमाणयाऽऽनुपूर्व्या,अयं–पाणिनिः,**शब्दान्तरं**-बोधकशब्दापेक्षया भिन्नं रेखागवयस्थानीयम्, **उपदिशति**-प्रतिपादयति । तत्रागमबुद्धावपि न शब्दनित्यताहानिरिति ॥

१ यासुड्विधौ दोषं निरस्यति–**यासुडिति** ।
२ 'सामान्येनोपदेष्टुं' । ३ 'बर्बुर' ।
४ तत्र–रेखागवये । ५ तत्र–सत्यगवये । ६ तत्र एवं सति । ७ न च=नापि ।

[ आक्षेपवार्तिकम् ]

*॥ * ॥ टकितोराद्यन्ताविधाने प्रत्यय-प्रतिषेधः ॥ * ॥*

**टकितोराद्यन्तविधाने प्रत्ययस्य प्रतिषेधो वक्तव्यः । प्रत्यय आदिरन्तो वा मा भूदिति । 'चरेष्टः' 'आतोऽनुपसर्गे कः' इति ॥**

( प्र० ) प्रत्ययप्रतिषेध इति । प्रत्ययपरत्वस्याप्ययमपवादः प्राप्नोतीति भावः ॥

( उ० ) ननु टकितोराद्यन्तविधाने कस्यापि प्रत्ययस्याऽप्राप्तेः कस्य प्रतिषेधो वक्तव्य इत्यत आह-**प्रत्ययपरत्वस्यापीति । अपिना**-स्थानेयोगत्वस्य ॥

[ समाधानवार्तिकम् ]

*॥ * ॥ परवचनात्सिद्धम् ॥ * ॥*

**[ परवचनात्सिद्धम् ]। परवचनात्प्रत्यय आदिरन्तो वा न भविष्यति ॥**

( प्र० ) **परवचनादिति** । पुरस्तादपवादन्यायेन स्थानेयोगत्वमेवानेन बाध्यते, न प्रत्ययपरत्वमिति भावः ॥

[ समाधानबाधकैकदेशिवार्तिकम् ]

*॥ * ॥ परवचनात्सिद्धमिति चेन्नाऽपवादत्वात् ॥ * ॥*

**परवचनात्सिद्धमिति चेत्तन्न ॥ किं कारणम् ? ॥ 'अपवादत्वात्' । अपवादोऽयं योगः ॥ तद्यथा-'मिदचोन्त्यात्परः' इत्येष योगः स्थानेयोगत्वस्य,प्रत्ययपरत्वस्य चाऽपवादः ॥**

( प्र० ) **नापवादत्वादिति** । बाध्यमात्रापेक्षायां पुरस्तादपवादन्यायो नास्तीति भावः ॥

[ दृष्टान्तवैषम्यभाष्यम् ]

**विषम उपन्यासः । युक्तं तत्र यदनवकाशं मित्करणं स्थानेयोगत्वं, प्रत्ययपरत्वं च बाधते । इह तु पुनरुभयं सावकाशम् । कोऽवकाशः॥ टित्करणस्याऽवकाशः-'टितः' इति ईकारो यथा स्यात् । कित्करणस्यावकाशः-'किती'त्याकारलोपो यथा स्यात् ॥**

( उ० ) भाष्ये-**युक्तं तत्रेति** । नुम्श्नमादीनां मित्त्वमनवकाशम् । **उभयं**-प्रत्ययसंबन्धिटित्त्वं,कित्त्वं च । एवं चागमटित्त्वकित्त्वयोरनवकाशत्वात्प्रत्ययसंबन्धिनश्च सावकाशत्वाद्येन नाऽप्राप्तिन्यायेनेदं स्थानेयोगत्वस्यैवाऽपवाद इति भावः॥

[ सर्वापवादवादिनः समाधानबाधकभाष्यम् ]

**प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात् । यदि चायं नियोगतः परः स्यात्तत एतत्प्रयोजनं स्यात् । कुतो नु खल्वेतत्-टित्करणादयं परो भविष्यति न पुनरादिरिति, कित्करणाच्च परो भविष्यति न पुनरन्त इति ? ॥**

( प्र० ) सर्वापवादवाद्याह-**प्रयोजनमिति** । सति परत्वे प्रयोजनमेतत्स्यात् । परत्वमेव त्वलभ्यमित्यर्थः । **टित्करणादिति** । ङीबर्थादित्यर्थः । **कित्करणादिति** । आकारलोपार्थात् ॥

( उ० ) **सति परत्व इति** । टिदन्तान्ङीब्विधानात्, किति परे आलोपविधानाच्चेति भावः । 'टित्परो भवती'-ति वचनाऽभावादाह- **ङीबर्थादिति** । यद्यप्युभयथा टित्त्वस्य सावकाशत्वे परत्वात्परश्चेत्यस्य प्रवृत्या पर एव भविष्यति, तथापि 'मिदचोन्त्या'दिति साहचार्याद्बाध्यसामान्यचिन्तामेव न्याय्यां मन्यते ॥

[ किदंशेऽपवादत्वबाधकभाष्यम् ]

**टितः खल्वप्येष परिहारो यत्र नास्ति संभवो यत्परश्च स्यादादिश्च । कितस्त्वपरिहारः, अस्ति हि संभवो यत्परश्च स्यादन्तश्च ॥**

( प्र० ) प्रयोजनमभ्युपेत्याह-**टित इति** । **कितस्त्विति** । ननु परत्वाऽवयवत्वयोर्विरोधात्कथमुच्यते-**परश्च स्यादन्तश्चेति**।नैष दोषः,परस्यसतोऽन्तवत्कार्यप्राप्त्यान्तत्वमुच्यते,यथा समासान्तानाम्॥

(उ०) अभ्युपगम्य [अपि] परश्चेत्यस्य परत्वात्प्रवृत्तिमाह-**टितः खल्वपीति । एष परिहारः । 'युक्तं तत्रे'**त्यादिनोक्तः । टितो यथाकथंचिद्भवेदपीत्यर्थः । तत्राऽसंभवरूपविरोधसद्भावात् । किति तु तदभावात्समावेशः स्यादिति

१ क्वचिन्न । २ लुप्तं स्यात् । ३ 'कित्त्वस्य च तत्रे'त्यस्य फलितामर्थमाह-**नुमिति** । ४ **प्रत्येति**। तत्सम्बन्धिनःटित्त्वस्य ।

भावः॥ [अवयवत्वेति[1] । अन्त[2]शब्दोऽवयववाचीति भावः]।

[ आक्षेपभाष्यम् ]

**तत्र को दोषः ? ॥**

[ समाधानभाष्यम् ]

**'उपसर्गे घोः किः' । आध्योः प्रध्योः । 'नोङ्धात्वो'ति प्रतिषेधः प्रसज्येत ॥**

( उ० ) तत्र दोषमाह—नोङित्यादि ॥

[ टिदंशेऽप्यपवादत्वबाधकभाष्यम् ]

**टितश्चाऽप्यपरिहारः । स्यादेव ह्ययं टित्करणादादिर्न पुनः परः ॥**

(प्र०) **टितश्चापीति** । पूर्वोक्तमेव समर्थयतेऽधिकं वक्तुम् ॥

(उ०) **पूर्वोक्तम्** । 'कुतो नु खल्वि'त्यादिनोक्तम् । **अधिकम्**-ङीपोऽनवकाशत्वपूर्वपक्षसमाधानम् । भाष्ये-**स्यादेव हीति** । बाध्यसामान्यचिन्तामेव न्याय्यां मन्यते ।

[ आक्षेपभाष्यम् ]

**क तर्हि इदानीमिदं स्यात्-'टित ईकारो भवती'ति ? ॥**

[ समाधानभाष्यम् ]

**य उभयवान्-'गापोष्ट'गिति ॥**

( प्र० ) **गापोष्टगित्यत्र** कित्त्वात्परत्वादन्तत्वमिति टिदन्तमेतद्भवतीति ङीपोऽयमवकाशः । ततश्च **चरेष्ट** इत्ययमादिः स्यात् ॥

( उ० ) **परत्वादिति** । शब्दपरविप्रतिषेधात् । **आद्यन्ताविति** सूत्रे च किदन्त इत्यस्य परत्वादित्यर्थः । भाष्ये **गापोष्टगित्युपलक्षणं**, नदट्चोरडादीनाम्[4] ॥

[ सिद्धान्त्येकदेशिनः समाधानवार्तिकम् ]

*॥*॥ सिद्धं तु षष्ठ्याधिकारे वचनात् ॥*॥*

**सिद्धमेतत् ॥ कथम् ? ॥ [षष्ठ्यधिकारेवचनात्[3]' ] । षष्ठ्यधिकारेऽयं योगः कर्तव्यः-'आद्यन्तौ टकितौ' षष्ठीनिर्दिष्टस्ये'ति॥**

(प्र०) **षष्ठ्यधिकार इति** । यत्र स्थानषष्ठीप्राप्ता तत्रोपस्थानमस्याः, न तु प्रत्ययपरत्वबाधनाय ॥

( उ० ) बाध्यसामान्यचिन्ताश्रयणेऽपि दोषाऽभावमाह-**सिद्धं त्विति। षष्ठ्यधिकारे इति** । तत्राऽनुवर्त्त्येदं व्याख्येयम् । तत्रत्यषष्ठीपदं वाऽत्राऽपकृष्टव्यमिति भावः । **प्राप्तेति** । 'एतदुपस्थितेः प्रा'गिति शेषः । **नत्विति** । प्रत्ययविधौ प्रसक्तस्थानषष्ठ्यभावादित्यर्थः ॥

[ तस्यैव समाधानान्तरवार्तिकम् ]

*॥*॥ आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावेऽसंप्रत्ययः ॥*॥*

**आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावे-षष्ठ्या अभावे—असंप्रत्ययः स्यात् । आदिरन्तो वा न भविष्यति ॥**

(प्र०) **आद्यन्तयोर्वेति** । षष्ठ्याः प्रयोजकावाद्यन्तौ । षष्ठ्यभावाच्चाद्यन्ताऽभावावगतिरित्यर्थः ॥

( उ० ) भाष्ये षष्ठीपदासंऽबन्धेऽपि समाधानमाह-**आद्यन्तयोर्वेति** । 'अर्थ'शब्दः प्रयोजनवाची । **'षष्ठ्यर्थत्वा'**दिति बहुव्रीहिरित्याह-**षष्ठ्याः प्रयोजकाविति** । षष्ठ्यर्थस्य प्रयोजकावित्यर्थः । षष्ठ्यन्तार्थस्यावयवभूताद्यन्तनिरूपकत्वेन तत्प्रयोजकत्वमेतयोर्बोध्यम् । यद्यत्रा[5]वयवभूताद्यन्तरूपोऽर्थः स्यात्तदा तस्य निरूपकाऽऽकाङ्क्षत्वात् स्यादेव षष्ठ्यर्थस्तद्बोधनाय च षष्ठीप्रयोगः । न च सोऽस्ति । तस्मादाद्यन्ताऽभावाऽवगतिरिति भावः । भाष्ये **'षष्ठ्यभावे'**-इत्यस्य तदर्थाऽभावे इत्यर्थः ॥

[ शङ्काभाष्यम् ]

**युक्तं पुनर्यच्छब्दनिमित्तको नामार्थःस्यान्नार्थनिमित्तकेन नाम शब्देन भवितव्यम् ॥**

( प्र० ) **युक्तं पुनरिति** । शब्दभावाऽभावाभ्यामर्थभावाऽभावयोः शब्दनिमित्तकत्वमर्थस्य प्राप्तं, तच्च पुनर्न युक्तम् । ज्ञापको हि शब्दोऽर्थस्य , न तु कारकः, सर्वेण सर्वस्यार्थस्य क्रियाप्रसङ्गादिति भावः ॥

( उ० ) षष्ठी[6]रूपशब्दाऽभावात्तदर्थाऽभावस्तदभावाच्चाद्यन्ताऽभाव इत्यर्थं मन्वानस्य शङ्का भाष्ये-**युक्तं पुनरिति** । **'नार्थ'**त्यत्र काकुः । **शब्दभावेति** । षष्ठीसत्त्वे तदर्थसत्त्वादाद्यन्तस्थितिः, षष्ठ्यभावे तदर्थाऽभावादाद्यन्ताऽभाव इत्युक्तेरिति भावः। कारकत्वे बाधकमाह-**सर्वेण** रत्नादिशब्देन । **सर्वस्य**-रत्नादिरूपस्य ॥

---

१ अयं पाठो **नोङित्यादी**त्यनन्तरमेवोपलभ्यते । २ विरोधबीजमूलमाह-**अन्तेति** । ३ लुप्तंस्यात् । ४ **चोरडादीनामिति** । समुदायस्य तत्र टित्त्वमिति भावः ॥ ५ पूर्वोक्तमेव स्पष्टयति **यदीति** । ६ शङ्कामुपपादयति-**षष्ठीति**।

[ समाधानभाष्यम् ]

**अर्थनिमित्तक एव शब्दः ॥ तत्कथम् ?॥ आद्यन्तौ षष्ठ्यर्थौ। नचात्र षष्ठीं पश्यामः। ते[1] मन्यामहे–आद्यन्तावेवाऽत्र न स्तः। तयोरभावे षष्ठ्यपि न भवतीति ॥**

( प्र० ) अर्थनिमित्तक एवेति । अर्थ एव शब्दस्य प्रयोजकस्तत्प्रतिपादनाय शब्दप्रयोगः । अप्रयोगाच्चानुमीयते–नूनमर्थ एवाऽत्र प्रयोजको नास्ति शब्दप्रयोगं यः प्रयुञ्जीतेत्यर्थः । 'चरेष्ट' इत्यत्र 'परश्चे'त्यधिकारात् पञ्चम्येव युक्ता । 'गापोष्टक्' 'व्रीहिशाल्योर्ढ'गित्यादावप्यानन्तर्यसंबन्धे षष्ठी । न त्ववयवावयविसंबन्धे, प्रत्ययपरत्वेन प्रतियोगं संनिहितेनाकाङ्क्षाविच्छेदादनर्थित्वाद-स्या अ[2]नुपस्थानात् । पुरस्तादपवादन्यायस्तु यथोद्देशपक्षे संभवति, न कार्यकालपक्ष इति नाश्रितः ।

( उ० ) भाष्ये समाधत्ते–**अर्थनिमित्तक एवेति** । तद्व्याचष्टे–**अर्थ एवेति** । **अनुमीयते इति**। कार्याऽभावेन कारणाऽभावोऽनुमीयते । यथा नदापूराऽभावेनोपरिदेशे वृष्ट्यभाव इति भावः । भाष्ये–**आद्यन्तौ** । तावर्थौ षष्ठ्यर्थद्वारा षष्ठीप्रयोगप्रयोजकौ इत्यर्थः । एवं कार्याऽभावात्कारणाभावानुमाने कारणाऽभावात्कार्यमपि नेति निगमयति भाष्ये–**तयोरभाव इति**। ननु प्रत्ययविधावपि क्वचित्षष्ठी दृष्टेत्यत आह–**चरेष्ट इत्यादि** । **नत्विति** । एतत्सूत्रोपस्थानेनेति भावः । त[3]त्र हेतुमाह– **प्रत्ययेति** । **आकाङ्क्षेति** । देशांश इत्यर्थः । **अनर्थित्वात्**–एतदाकाङ्क्षाऽभावात् । अत[4] एव 'धातोः' 'प्रातिपदिका'दित्यधिकारानुग्रहो भवति । धात्वादिभ्यः परो गादिभ्योऽनन्तर इत्यर्थात् । **न कार्यकालेति** । एतत्तत्त्वमिको गुणवृद्धी इत्यत्र निरूपितम् । वस्तुतस्त्वाश्रित एव, **'परवचनात्सिद्ध'**मित्यस्यैव सिद्धान्त्युक्तित्वात् । **'नापवादत्वा'**दित्यादेः पूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरुक्तित्वादिति तत्त्वम् ॥ [ आद्यन्तौ ] ॥

## मिदचोऽन्त्यात्परः ॥१।१।४६॥

[ आक्षेपभाष्यम् ]

**किमर्थमिदमुच्यते ? ॥**

(प्र०) मिदचोऽन्त्या । किमर्थमिति । किमनेन व्यावर्त्यत इति प्रश्नः ॥

(उ०) **मिदचो** । प्रयोजनप्रश्नेऽपवादत्वाभिधानमसङ्गतमत आह–**किमिति** । किं व्यावर्त्यत्वेन प्रयोजनमित्यर्थः । किं स्थानेयोगत्वमुत प्रत्ययपरत्वमपीति प्रश्न इति भावः ॥

[ समाधानवार्तिकम् ]

*॥*॥ मिदचोऽन्त्यात्पर इति स्थानपर-प्रत्ययाऽपवादः ॥*॥*

**मिदचोऽन्त्यात्पर इत्युच्यते । स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चाऽप[5]वादः । स्थानेयोगत्वस्य तावत्–कुण्डानि वनानि पयांसि यशांसि । प्रत्ययपरत्वस्य–भिनत्ति छिनत्ति ॥**

(प्र०) स्थानेति । परस्य सतः प्रत्ययस्याऽपवादस्तेन सामर्थ्यादयमर्थः-**प्रत्ययपरत्वस्यापवाद इति** । कुण्डानीति । 'नपुंसकस्य झलच' इत्यत्र झलज्भ्यां नपुंसक[6]स्य तदन्तविधिरित्यस्ति स्थानेयोगत्वस्य प्रसङ्गः । मित्त्वात्त्वस्मिन्नुपस्थिते नपुंसकस्याऽङ्गस्येत्यवयवषष्ठी संपद्यते ॥

( उ० ) उभयाऽपवादत्वे बीजं तु तत्र तत्र मित्त्ववैयर्थ्यरूपं पूर्वसूत्र एवोक्तम् । ननु 'नपुंसकस्ये'ति सूत्रे 'झलच' इति पञ्चमीति क स्थानेयोगत्वप्रसङ्गोऽत आह–**नपुंसकस्येति** । पञ्चम्यां हि 'तस्मा'दिति परिभाषोपस्थाने 'पयांसि' 'ज्ञानानी'त्युभयोरप्यसिद्धिरिति षष्ठ्येवेति भावः ।

[ प्रश्नभाष्यम् ]

**भवेदिदं युक्तमुदाहरणं–कुण्डानि वनानि, यत्र नास्ति संभवो यदयमचोऽन्त्यात्परश्च स्यात्स्थाने चेति । इदं त्वयुक्तं–पयांसि यशांसीति । अस्ति हि संभवो यदयमचोऽन्त्यात्परश्च स्यात्स्थाने चेति[7] ॥**

( प्र० ) स्थाने चेति । ततश्च सकारस्य स्थाने नुम् भवत्वित्यर्थः ॥

[ समाधानभाष्यम् ]

**एतदपि युक्तम् ॥ कथम् ? ॥ नैवेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति–'अपवादैरुत्सर्गा बाध्यन्ता'मिति ॥**

---

१ 'तेन' पा० । २ 'अस्यानुप' । ३ तत्र–निषेधे । ४ **अत एव**–प्रतियोगं तस्य संनिहितत्वादेव । आकाङ्क्षाविरहादेव ॥ ५ 'वापवादः' । ६ **नपुंसकस्येति**। 'विशेषणतये'ति शेषः । ७ इतिः क्वचिन्न ।

किं तर्हि ? ॥ लौकिकोऽयं दृष्टान्तः। लोके हि सत्यपि संभवे बाधनं भवति। तद्यथा—'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याये'ति, सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति। एवमिहापि सत्यपि संभवेऽचामन्त्यात्परत्वं षष्ठीस्थानेयोगत्वं बाधिष्यते॥

(प्र०) दृष्टान्त इति। निश्चय इत्यर्थः। तत्र[1] वृद्धव्यवहारादीदृश[2] एव वाक्यार्थे व्युत्पत्तिर्यत्सामान्यविहितो विशेषविहितेन बाध्यते, न समुच्चीयते नापि विकल्प्यते॥

(उ०) भाष्ये—नैवेश्वर इति। ईश्वरो—वेदः। धर्मसूत्रं—धर्मशास्त्रम्। भाष्ये—'अपवादे'रित्यस्या-'ऽसंभवे'इत्यादिः। क्वचित्तथैव पाठः। बाध्यन्तामितिलोट्॥

[आक्षेपवार्तिकम्]

॥*॥ *अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थम्* ॥*॥

[अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थमिति वक्तव्यम्]॥

अन्त्यात्पूर्वो मस्जेर्मिद्वक्तव्यः॥ किं प्रयोजनम्?॥ 'अनुषङ्गसंयोगादिलोपार्थम्'। अनुषङ्गलोपार्थं संयोगादिलोपार्थं च। अनुषङ्गलोपार्थं तावत्—मग्नः मग्नवान्। संयोगादिलोपार्थं—मङ्क्ता, मङ्क्तुम्, मङ्क्तव्यम्॥

(उ०) मग्ने—मस्जेर्जात्पूर्वे[5] नुमि 'अनिदिता'मिति लोपे सस्य संयोगादिलोपे कुत्वे निष्ठानत्वे रूपम्। अन्त्याचः परे तु सति अविशेषेण संयोगत्वे संयोगादिलोपसिद्धावपि[6] तस्याऽसिद्धत्वान्नस्योपधात्वाऽभावान्नलोपो न स्यादिति भावः। संयोगादिलोपस्तु बहूनां समवधाने बहूनामेव संयोगसंज्ञेति पक्षे फलत्वेन बोध्यः। मङ्क्तेत्यादि त्वनुषङ्गलोपाऽभावेऽपि उदाहरणमुक्तम्॥

[आक्षेपवार्तिकम्]

॥*॥ *भर्जिमर्च्योश्च* ॥*॥

भर्जिमर्च्योश्चाऽन्त्यात्पूर्वो मिद्वक्तव्यः। भरूजा मरीचय इति।

(प्र०) भर्जिमर्च्योश्चेति। भृजी भर्जन इत्यस्यौणादिकेऽचि कृते गुणे रपरत्वे च जकारात्पूर्वं ऊमागमः। 'मर्च शब्दार्थ' इत्यस्य चौरादिकस्य णिच्यच इरिति इप्रत्यये णिलोपे च चकारात् पूर्वं ईमागमः॥

(उ०) भाष्ये—ऊमीमावौणादिकौ॥

[आक्षेपनिरासभाष्यम्]

स तर्हि वक्तव्यः॥ न वक्तव्यः॥

॥*॥ *निपातनात्सिद्धम्* ॥*॥

किं निपातनम्?॥ 'भरूजा' शब्दोऽङ्गुल्यादिषु पठ्यते। 'मरीचि' शब्दो बाह्वादिषु॥

[प्रश्नभाष्यम्]

किं पुनरयं पूर्वान्त आहोस्वित्परादिराहोस्विदभक्तः?॥

[प्रतिप्रश्नभाष्यम्]

कथं चाऽऽयं पूर्वान्तः स्यात्कथं वा परादिः कथं वाऽभक्तः?॥

[समाधानभाष्यम्]

यद्यन्त इति वर्तते, ततः पूर्वान्तः। अथाऽऽदिरिति वर्तते ततः परादिः। अथोभयं निवृत्तं, ततोऽभक्तः॥

(प्र०) पूर्वान्त इति। सङ्घातस्य पूर्वस्य भक्तो न तदेकदेशस्य। अथादिरिति। नहि संभवोऽस्ति यदचोन्त्यात्परश्च स्यात्, पूर्वस्य चाऽऽदिरिति सामर्थ्यात्परादित्वं विज्ञायते॥

(उ०) नन्वन्त्यादचः परत्वं, तस्य[7] च वर्णान्तरावयवत्वमिति विरुद्धमत आह—सङ्घातेति। 'अन्त्या'दित्यनेन समुदायाक्षेपेण समुदायस्योपस्थितत्वात्समुदायावयवसन्निधौ समुदायग्रहस्य न्याय्यत्वाच्च वर्णस्य वर्णावयवत्वाऽसम्भवाच्चेत्याशयः। नन्वादिरित्यनुवृत्तौ पूर्वादित्वं कुतो नेत्यत आह—नहीति। परादित्वमिति। वाचनिकमेव वर्णस्य वर्णाऽवयवत्वं 'ङः सी'ति धुडादेरिवेति[8] भावः॥

कश्चात्र विशेषः?॥

[दूषणवार्तिकम्]

॥*॥ *अभक्ते दीर्घनलोपस्वरणत्वाऽनुस्वारशीभावाः* ॥*॥

१ तत्र—लोके। २ 'ईदृश्येव'। ३ 'मस्जेरनुषङ्ग' पा०। ४ क्वचिन्न। ५ जात्—जकारात्।

६ सकारस्य संयोगादिलोपसिद्धावपीत्यर्थः। ७ तस्य—संयोगादिलोपस्य। ८ 'वाऽयं'।

**यद्यभक्तो दीर्घत्वं न प्राप्नोति । कुण्डानि वनानि । 'नोपधायाः' 'सर्वनामस्थाने चाऽसंबुद्धा'विति दीर्घत्वं न प्राप्नोति॥ दीर्घ॥**

( प्र० ) कुण्डानीति । नान्तमङ्गं न भवतीति दीर्घत्वाऽप्राप्तिः। ननु 'तदादिवचनं स्यादिनुमर्थ'-मित्युक्तम्। एवं तर्हि तत्स्मर्तव्यं भवतीति गौरवापत्तिः ॥

( उ० ) **'अभक्त'**इति वार्तिकस्य 'एते न सिध्यन्ती'ति शेषः । अभक्तत्वेऽपि नान्तत्वमस्त्येवेत्यत आह-**नान्तमङ्गमिति** । दीर्घविधावङ्गाधिकारादिति भावः । **गौरवापत्तिरिति** । प्रतिपत्तिगौरवापत्तिरित्यर्थः ॥

[ उदाहरणभाष्यम् ]

**नलोप—नलोपश्च न सिध्यति । 'अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम्' 'न लोपः प्रातिपदिकान्तस्ये'ति नलोपो न प्राप्नोति ॥ नलोप ॥**

(उ०) **त्री ते इति । 'शेश्छन्दसि बहुल'मिति** शेर्लोपः । त्रीणि वाजिनानि तानि तानीत्यर्थः ॥

**स्वर—स्वरश्च न सिध्यति । 'सर्वाणि ज्योतींषि' । 'सर्वस्य सुपी'त्याद्युदात्तत्वं न प्राप्नोति । स्वर ॥**

( प्र० ) सर्वाणीति । नुमा सुपो व्यवधानात् स्वरो न सिध्यति ॥

( उ० ) **नुमेति** । व्यञ्जनाऽविद्यमानवद्भावस्तु हल्स्वरप्राप्तौ, स्वरोद्देश्यकविधिप्राप्तौ वा, नाऽन्यत्रेति भावः । **'सुपी'**ति न तदन्तसप्तमीत्यभिमानेनेदम् ॥

**णत्व—णत्वं च न सिध्यति । माषवापाणि, व्रीहिवापाणि । पूर्वान्ते 'प्रातिपदिकान्तनकारस्ये'ति सिद्धं, परादौ विभक्तिनकारस्येति । अभक्ते नुमो ग्रहणं कर्तव्यम् ॥**

[ णत्वोदाहरणनिरासभाष्यम् ]

**न कर्तव्यम् । क्रियते न्यास एव-[1] 'प्रातिपदिकान्तनुम्विभक्तिषु चे'ति । णत्व ॥**

( प्र० ) क्रियते न्यास एवेति[2] । उत्तरपदस्य प्रातिपदिकस्याऽन्तस्तत्र नकारो गृह्यते, गर्गाणां भगिनी गर्गभगिनीत्यत्र णत्वं मा भूदित्यवश्यं नुमो ग्रहणङ्कर्त्तव्यम् । स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवतीति ॥

( उ० ) **उत्तरपदस्येति** । एवं[2] च सर्वपक्षेष्वपीदमावश्यकमिति भावः । 'भग'शब्दादिनौ तन्नकारः प्रातिदिकान्तो भवतीति 'भगिनी'त्यत्राऽनुच्यमाने **'उत्तरपदस्ये'**त्यस्मिन्' णत्वप्रसङ्गः । 'भगिनी'त्यत्र च ङ्यन्तमुत्तरपदं न नान्तम् । सूत्रं तु 'माषवापिणा'वित्यादौ चरितार्थमिति भावः । **स हीति** । नुम्विधावङ्गस्येत्यधिकारादित्यर्थः। एवं (च[3])'माषवापाणी'त्यादिसिद्धयर्थं नुम्ग्रहणमिति भावः । समासरूपप्रातिपदिकान्तस्येत्यर्थेन गर्भभगिनीत्यस्य व्यावृत्तौ माषवापाणीत्यस्य सिद्धौ च प्रह्विण्वन्नित्याद्यर्थं नुम्ग्रहणमावश्यकमिति तत्त्वम् ॥

[ अनुस्वारोदाहरणभाष्यम् ]

**अनुस्वार-अनुस्वारश्च न सिध्यति । द्विषंतपः परंतपः । 'मोऽनुस्वारो हली'-त्यनुस्वारो न प्राप्नोति ॥**

( प्र० ) **द्विषंतप इति** । प्रसङ्गोच्चारितमेतत् । अत्रहि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति मुमो द्विषद्ग्रहणेन ग्रहणमस्ति ॥

( उ० ) द्विषन्तपादौ 'द्विषत्परयोस्तापे'रिति खच् । 'खचि ह्रस्वः' । 'अरुर्द्विष'दिति मुम् । **प्रसङ्गेति** । द्विषद्ग्रहणेन मुम्विशिष्टस्य ग्रहणे तस्य पदत्वात्तकारस्य संयोगान्तलोपे 'एकदेशविकृत' न्यायेन 'द्विष'मित्यस्य मान्तस्य पदत्वात्सिद्धोऽनुस्वार इत्यर्थः । वस्तुतस्तस्य[6] न्यायस्याद्याप्यज्ञानात्तदनाश्रयेणेदम् । बहिरङ्गाऽसिद्धत्वं त्रिपाद्यां नेति तन्नोक्तम् ।

[ उदाहरणनिरासभाष्यम् ]

**मा भूदेवं, 'नश्चाऽपदान्तस्य झली'[7]त्येवं भविष्यति ॥**

[ उदाहरणान्तरप्रदर्शनभाष्यम् ]

**यस्तर्हि न झलपरः-वहंलिहो गौः, अभ्रंलिहो वायुः ॥ अनुस्वार ॥**

( उ० ) वहंलिहे 'वहाभ्रे लिह'इति खश् ॥

[ शीभावोदाहरणभाष्यम् ]

**शीभाव-शीभावश्च न सिध्यति ।**

---

१ 'क्रियते एतन्न्यासे' । २ कैयटाशयमाह-**एवञ्चेति** । ३ क्वचिन्न । ४ 'नित्यर्थः' ।

५ कैयटाशयमाह-**द्विषदिति** । ६ **तस्य न्यायस्य**-तन्मध्यपतितन्यायस्य । ७ 'झलीत्यनुस्वारो भविष्यति' ।

त्रपुणी जतुनी तुम्बुरुणी । 'नपुंसकादुत्तरस्यौङः शीभावो भवती'ति शीभावो न प्राप्नोति ॥ [ शीभाव ] ॥

( प्र० ) त्रपुणी इति । नित्यत्वात्परत्वाच्च नुमि कृते व्यवधानमिति भावः ॥

[ परादिपक्षाङ्गीकारभाष्यम् ]

एवं तर्हि परादिः करिष्यते ॥

[ परादिपक्षे दूषणवार्तिकम् ]

॥ * ॥ *परादौ गुणवृद्ध्यौत्वदीर्घनलोपानुस्वारशीभावेनकारप्रतिषेधाः* ॥ * ॥

[ परादौ गुणवृद्ध्यौत्वदीर्घनलोपानुस्वारशीभावेनकारप्रतिषेधाः ] ।

यदि परादिर्गुणः प्रतिषेध्यः-त्रपुणे जतुने तुम्बुरुणे । 'घेर्ङिती'ति गुणः प्राप्नोति । गुण ॥

(उ०) परादाविति वार्त्तिके 'शीभावे नकारप्रतिषेधः'इति पाठः । शीभावे इत्यलुगार्षः । 'एते दोषस्थानानी'ति शेषः ॥

[ वृद्ध्युदाहरणभाष्यम् ]

वृद्धि-वृद्धिः, प्रतिषेध्या-अतिसखीनि ब्राह्मणकुलानि । 'सख्युरसम्बुद्धा'विति णित्वे 'अचो ञ्णिती'ति वृद्धिः प्राप्नोति । वृद्धि ॥

( प्र० ) अतिसखीनीति बहुव्रीहिः ॥

(उ०) टजभावाय नपुंसकत्वाय चाह-बहुव्रीहिरिति ।

[ औत्वोदाहरणभाष्यम् ]

औत्व-औत्वं च प्रतिषेध्यम् । त्रपुणि जतुनि तुम्बुरुणि । 'इदुद्भ्यामौदच्च घे'रित्यौत्वं प्राप्नोति ॥ औत्व ॥

[ दीर्घोदाहरणभाष्यम् ]

दीर्घ-दीर्घत्वं च न सिध्यति । कुण्डानि वनानि । 'नोपधायाः सर्वनामस्थाने चासंबुद्धा'विति दीर्घत्वं न प्राप्नति ॥

[ उदाहरणनिरासभाष्यम् ]

मा भूदेवम् 'अतो दीर्घो यञि सुपि चे'त्येवं भविष्यति ॥

[ उदाहरणान्तरभाष्यम् ]

इह तर्हि-अस्थीनि दधीनि प्रियसखीनि ब्राह्मणकुलानि ॥ दीर्घ ॥

[ नलोपोदाहरणभाष्यम् ]

नलोप-नलोपश्च न सिध्यति । 'अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डा नाम्' । 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपो न प्राप्नोति ॥ नलोप ॥

( उ० ) भाष्ये-अग्ने त्री त इति । ननु परादिपक्षे 'नलोपः प्रातिपदिकान्तस्ये'त्यस्याप्राप्तावपि 'शेश्छन्दसिबहुल'मित्यनेन नलोपः सिद्ध इति चेन्न, 'निर्दिश्यमान'परिभाषयाऽलोऽन्त्यपरिभाषया च इकारस्यैव लोपापत्तेरित्याशयात् ॥

[ अनुस्वारोदाहरणभाष्यम् ]

अनुस्वार-अनुस्वारश्च न सिध्यति,-द्विषन्तपः परन्तपः । 'मोऽनुस्वारो हली'त्यनुस्वारो न प्राप्नोति ॥

(प्र०) द्विषन्तप इति । परादिपक्षे तकारस्य मकारो भक्तस्तकारश्च पदान्त इति मकारोऽपि तद्भक्तत्वात्पदान्त इति सिद्धोऽनुस्वार इत्याहुः । अन्ये तु तद्भक्तत्वात्तकारग्रहणेनाऽस्य ग्रहणं भवतु न तु पदान्तत्वम् । नहि द्वयोर्मकारतकारयोः पदान्तत्वमुपपद्यत इत्याहुः ॥

( उ० ) तद्भक्तत्वात्पदान्त इति । 'यदागमा' इत्यस्य तद्ग्राहकेण शब्देनागमस्य ग्रहणमित्यप्यर्थ इति भावः । नहि द्वयोरिति । ननु संयोगान्तलोपे उक्तरीत्याऽस्येत्र मस्य पदान्तत्वमिति चेदुक्तमेवैतत् ॥

[ उदाहरणनिरासभाष्यम् ]

मा भूदेवम् । 'नश्चाऽपदान्तस्य झली'त्यनुस्वारो भविष्यति ॥

[ उदाहरणान्तरभाष्यम् ]

यस्तर्हि न झल्परः-वहंलिहो गौः, अभ्रंलिहो वायुः ॥ अनुस्वार ॥

[ उदाहरणभाष्यम् ]

'शीभावे नकारप्रतिषेधः'। शीभावे नकारस्य प्रतिषेधो वक्तव्यः । त्रपुणी जतुनी तुम्बुरुणी । सनुम्कस्य शीभावः प्राप्नोति ॥

(प्र०) शीभावे नकारप्रतिषेध इति । शीभावे विधीयमाने नकारस्य स्थानित्वप्रतिषेधो वक्तव्य इत्यर्थः ।

१ 'प्रतिषेधः' इति मुद्रितः पाठः । २ लुप्तं । ३ 'प्रतिषेध' इत्ययमपाठ इत्यर्थः । ४ णित्त्वातिदेशे । ५ 'स्थान इतिदीर्घ' । ६ अपिना विशिष्टस्यापि ग्रहणमिति बोध्यम् । 'मित्यर्थः'पा० । ७संयोगान्तलोपे-दान्तभक्ततयासंयोगान्तलोपे । ८ 'झलीत्येवं' ।

[ उक्तोदाहरणनिरासभाष्यम् ]

**नैष दोषः । 'निर्दिश्यमानस्यादेशा भवन्ती'त्येवं न भविष्यति ॥**

( प्र० ) निर्दिश्यमानस्येति । यथा 'पादः प'दिति पद्भावः पाच्छब्दस्यैव भवति, न तदन्तस्य ॥

( प्र० ) न तदन्तस्येति । पादन्तस्यानुच्चारणादिति भावः ॥

[ उदाहरणसाधकभाष्यम् ]

**यस्तर्हि निर्दिश्यते तस्य न प्राप्नोति ॥ कस्मात् ? ॥ नुमा व्यवहितत्वात् ॥**

( प्र० ) यस्तर्हीति । यो निर्दिश्यते तस्य न प्राप्नोति, श्रुतिसन्निपाति यद्रूपमौ इति, तन्नकारेण भक्तेनाऽपि तत्त्वतो व्यवहितमित्यर्थः ॥

(उ०) श्रुतिसंनिपातीति । उच्चारितमिति यावत् ॥

[ पूर्वान्तपक्षाभ्युपगमभाष्यम् ]

**एवं तर्हि पूर्वान्तः करिष्यते ।**

[ पूर्वान्तपक्षे दूषणवार्तिकम् ]

*॥ * ॥ पूर्वान्ते नपुंसकोपसर्जन-*

*ह्रस्वत्वं द्विगुस्वरश्च ॥ * ॥*

**यदि पूर्वान्तः क्रियते, नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिध्यति ॥**

[ उदाहरणभाष्यम् ]

**नपुंसकोपसर्जनह्रस्वत्वम्–आराशस्त्रिणी धानाशष्कुलिनी निष्कौशाम्बिनी निर्वाराणसिनी ॥ द्विगुस्वर–पञ्चारत्निनी दशारत्निनी । नुमि कृतेऽनजन्तत्वादेते विषयो न प्राप्नुवन्ति ॥**

( प्र० ) धानाशष्कुलिनी इति । नित्यत्वात्पूर्वं नुमं मन्यते । तत्र कृतेऽनजन्तत्वाद्ध्रस्वाऽप्राप्तिः । निष्कौशाम्बिनी इति । नपुंसकह्रस्वत्वमुपसर्जनह्रस्वत्वेन परत्वाद्बाध्यते तदपि नुमि कृते तथैव न प्राप्नोति ॥

( उ० ) धानाशष्कुलिनीति । स[1]माहारद्वन्द्वे तद्द्वित्वविवक्षायां द्विवचनम् । तत्र पूर्वं ह्रस्वः । ततो नुमि नास्ति दोष इत्यत आह–नित्यत्वादिति । इदं च पदस्य विभज्याऽन्वाख्यानपक्षे बोध्यम् । अनजन्तत्वादिति । 'अच' इत्यनेन प्रातिपदिकस्य विशेषणादित्यर्थः । परत्वादिति । यद्यपि कार्यैक्ये यौगपद्याऽसम्भवेन विरोधाऽभावेन 'परत्वा'दित्यसङ्गतम् । तथापि नुमि कृते उभयोरप्यप्राप्त्योभयोः सम्भवसत्त्वेन च भाष्ये न काचिदनुपपत्तिः । अत एव भाष्ये 'नपुंसकोपसर्जनह्रस्वत्व'मिति संश्लिष्टमेवोक्तमिति बोध्यम् । तथैवेति । अनजन्तत्वादिति भावः ।

[ दूषणनिरासवार्तिकम् ]

*॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥*

**न वैष दोषः ॥ किं कारणम् ? ॥ 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गो नुम्, अन्तरङ्गा[2] एते विधयः ॥**

**'असिद्धं बहिरङ्गमन्तरङ्गे' ।**

**द्विगुस्वरे भूयान् परिहारः–सङ्घातभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुमिति कृत्वा द्विगुस्वरो भविष्यति ॥**

( प्र० ) नवेति । 'नित्यादप्यन्तरङ्गो बलीया'निति । स्वरह्रस्वौ च विभक्तिनिरपेक्षत्वादन्तरङ्गौ । तदत्र निर्दोषत्वात्पूर्वान्तपक्षः स्थितः ॥

( उ० ) अन्तरङ्गो बलीयानिति । 'असिद्धं बहिरङ्ग'मित्येव समानकालप्राप्तिकबहिरङ्गासिद्धत्वबोधकं, पूर्वजातबहिरङ्गाऽसिद्धत्वबोधकं चेति भावः । अत एव भाष्येणाऽविरोधः । 'अकृ[3]तव्यूह'परिभाषा तु नास्त्येवेति भावः । 'पञ्चारत्नि'शब्दे समाहारे द्विगुः, प्रमाणे मात्रचो लुग्वा ॥

## एच इग्घ्रस्वादेशे ॥१।१।४७॥

[ प्रयोजनप्रश्नभाष्यम् ]

**किमर्थमिदमुच्यते ? ॥**

(प्र०) एच इक् । किमर्थमिति । विनापि सूत्रेणेष्टसिद्धिरिति प्रश्नः ॥

( उ० ) एच इक् । विनापीति । वक्ष्यमाणसूत्रप्रत्याख्यानप्रकारेणेति भावः ।

[ प्रयोजनप्रदर्शनवार्तिकम् ]

*॥*॥ एच इग्वचनं[4] सवर्णाऽकार-*

*निवृत्त्यर्थम् ॥*॥*

**'एच इग्भवती'त्युच्यते । 'सवर्णनिवृ-**

१ समाहारद्वन्द्व इति । धानाश्च शष्कुल्यश्चेति कृतैकशेषेणेत्यर्थः । २ एते विधयः–द्वौ ह्रस्वौ, एकः स्वर इति विधयः । ३ भाष्याऽसंगतिं परिहरति–अकृतेति । ४ 'वचन'मिति क्वचिन्न ।

त्यर्थमकारनिवृत्त्यर्थश्च' । सवर्णनिवृत्त्यर्थं तावत्-एङो ह्रस्वादेशशासनेषु अर्द्ध एकारोऽर्द्ध ओकारो वा मा भूदिति ॥ अकारनिवृत्त्यर्थं च-इमावैचौ समाहारवर्णौ मात्राऽवर्णस्य, मात्रेवर्णोवर्णयोः । तयोर्ह्रस्वशासनेषु कदाचिदवर्णं स्यात् कदाचिदिवर्णोवर्णौ । मा कदाचिदवर्णं भूदित्येवमर्थमिदमुच्यते ॥ अस्ति प्रयोजनमेतत् ॥ किं तर्हीति ॥

( प्र० ) एङ इति । एङः प्रश्लिष्टाऽवर्णत्वात्प्रश्लिष्टावर्णावर्धैकाराद्धौकारौ प्राप्नुतो, न तु विश्लिष्टावर्णयोरैचोरिति भावः । समाहारवर्णाविति । समाह्रियमाणावयवत्वात् । मात्राऽवर्णस्येति । अष्टादशभेदभिन्नस्याऽवर्णस्य मात्राऽवयव इति भेदसद्भावात् षष्ठ्या निर्देशः ॥

( उ० ) 'एचे'इति वक्तव्ये एङ इति अनुचितमत आह-एङ इति । प्रश्लिष्टेति । पांसूदकवदित्यर्थः । प्रश्लिष्टाऽवर्णत्वादिनाऽप्यान्तरतम्यं गृह्यत इति भावः । ऐचोस्तदप्राप्तौ हेतुमाह-नत्विति । ऐचौ त्वर्द्धौ न स्त एवेति भावः । 'सवर्णाकारनिवृत्त्यर्थं'मित्येतद्विषयभेदेन योज्यत इति बोध्यम् । कर्मघञन्तसमाहारशब्दस्य वर्णशब्देन न बहुव्रीहिर्वर्णैकदेशस्य वर्णत्वाऽभावादत आह-समाह्रियमाणाविति । मध्यमपदलोपी समास इति भावः । मात्राऽवर्णस्येति भाष्यस्य मात्राकालाऽवर्णादिसदृश ऐचोरवयव इति तात्पर्यम् । मात्रावयव इति । तत्सदृशश्चैतयोरवयव इत्यर्थः ।

[ आक्षेपवार्तिकम् ]

*||*|| दीर्घप्रसङ्गस्तु ||*||*

दीर्घास्त्विकः प्राप्नुवन्ति ॥ किं कारणम् ? ॥ स्थानेऽन्तरतमो भवतीति ॥

( प्र० ) दीर्घास्त्विति । स्वतन्त्रमिदं निर्वर्तकमिति भावः । भाव्यमानस्यापि सवर्णग्रहणं दृश्यतेऽमूभ्यामित्यादाविति दोषोपन्यासः ॥

( उ० ) नन्वस्य नियमत्वेन ह्रस्वविध्येकवाक्यतया कथं दीर्घप्राप्तिरत आह-स्वतन्त्रमिति । नियमत्वेऽनुवादादिदोषाद्विधित्वमेव न्याय्यमित्यभिमानः । भाव्यमानस्येति । सम्बन्धसामान्ये षष्ठी ॥

[ आक्षेपबाधकभाष्यम् ]

ननु च 'ह्रस्वादेश'इत्युच्यते, तेन दीर्घा न भविष्यन्ति ।

( प्र० ) ननु चेति । अयं हि वाक्यार्थः 'एचो ह्रस्वप्रसङ्गे इगेव ह्रस्व' इति ॥

[ आक्षेपस्थापकभाष्यम् ]

विषयार्थमेतत्स्यात्-'एचो ह्रस्वप्रसङ्गे इग्भवती'ति ॥

( प्र० ) विषयार्थमिति । यत्र ह्रस्वो विधीयते तत्रैवाऽस्योपस्थानं यथा स्यात्, देवदत्तेति प्लुतादिविधावुपस्थानं मा भूत् । अस्मिंश्चोपस्थिते वाक्यभेदेनैच इको विधीयमाना अन्तरतमा दीर्घा एव प्राप्नुवन्ति । ह्रस्वस्य बाधितत्वाद्दीर्घेषु कृतेषु पुनर्ह्रस्वाऽप्रसङ्गः ॥

( उ० ) देवेति । देवदत्तेत्येतद्विषयक'गुरोरनृत' इत्येतत्प्लुतविधावित्यर्थः । आदिनोदात्तादिस्वरसंग्रहः । नन्वनेन दीर्घे पुनस्तेन लक्षणेन ह्रस्वः स्यादत आह-ह्रस्वस्येति । अपवादस्य प्रवृत्त्या तद्विषये उत्सर्गाऽप्रवृत्तेरिति भावः ॥

[ समाधानवार्तिकम् ]

*||*|| दीर्घाऽप्रसङ्गस्तु निवर्तकत्वात् ||*||*

दीर्घाणां त्विकामप्रसङ्गः ॥ किं कारणम् ? ॥ 'निवर्तकत्वात्'॥ नाऽनेनेको निर्वर्त्यन्ते ॥ किं तर्हि ? ॥ अनिको निवर्त्यन्ते ॥ सिद्धा ह्यत्र ह्रस्वा इकश्चाऽनिकश्च । तत्रानेनाऽनिको निवर्त्यन्ते ॥

(प्र०) निवर्तकत्वादिति । एकवाक्यभावेनैच इगेव ह्रस्वो भवति नान्य इत्येवमनिको व्यावर्त्यन्ते । यदि तर्ह्येकवाक्यता, एज्व्यतिरेकेणान्यस्य ह्रस्वो न प्राप्नोति । नैष दोषः । पूर्वं ह्रस्वश्रुत्याऽच उपस्थानाद्ध्रस्वत्वं क्रियते । तत्रैचोऽप्यन्तर्भावाद्ध्रस्वे क्रियमाणे 'एच इ'गित्यस्योपस्थानम् ॥

(उ०) एकवाक्यभावेनैच इति । एकवाक्यभावो नाम 'एच इ'गित्यस्य ह्रस्वे शेषभावः । न तु परस्परवियोगाऽभावः । अन्वयस्तु वाक्यभेदेनैवेति । एतदजानानो नोद-

१ 'अवर्णः' । २ अस्य नन्वित्यादिः ।
३ एङैज्रूपविषयभेदेनेत्यर्थः । ४ तुः क्वचिन्न ।
५ ह्रस्वप्रसङ्गे-ह्रस्वप्रसञ्जके ।
६ 'निवर्त्तन्ते' म्रा० ।

यति-यदीति । उक्ताभिप्रायेणैवोत्तरयति-पूर्वं ह्रस्वेति । एवं हि परिभाषाद्वयस्याप्यनुग्रहो भवतीति भावः ॥

[ प्रथमप्रयोजनप्रत्याख्यानभाष्यम् ]

**सवर्णनिवृत्त्यर्थेन तावन्नार्थः ।**

॥ * ॥ *सिद्धमेङः सस्थानत्वात्* ॥ * ॥

**सिद्धमेतत् ॥ कथम् ? ॥ [ 'एङः सस्थानत्वात्' ] एङः सस्थानत्वादिकारोकारौ भविष्यतः, अर्द्ध एकारोऽर्द्ध ओकारो वा न भविष्यति ॥**

(प्र०) सिद्धमेङ इति । एकारस्य तालव्यस्य तालव्य इकारः, ओकारस्य चौष्ठ्यस्य ओष्ठ्य उकारो भविष्यतीत्यर्थः ॥

( उ० ) एकारस्येति । यत्तु कण्ठताल्वादिस्थानत्वेऽपि विप्रतिषेधेन पूर्वावयवो न स्वान्तरतमादेशप्रयोजकः, किन्तु परावयव एवेति न दोष इति । तन्न । लक्ष्यगतपरत्वमादाय विप्रतिषेधशास्त्राऽप्रवृत्तेः स्थानिवत्प्रकरणभाष्ये स्पष्टत्वात् । किन्त्वन्तरङ्गत्वेन पूर्वावयव एव तथेति बोध्यम् ॥ भाष्ये-अर्ध एकार ओकारो वा न भविष्यतीति । तयोरसत्त्वादिति भावः ॥

[ आक्षेपभाष्यम् ]

**ननु चैङः सस्थानतरावर्द्धैकारार्द्धौकारौ ॥**

( उ० ) इतरस्तु सस्थानत्वाऽभावादिति हेतुरनेनोक्त इति मत्वा नोदयति-ननुचेति । सस्थानतराविति । कण्ठतालुस्थानमिति पक्षेऽपि स्थानसाम्यसत्त्वमिति बोधयितुं तरनिर्देशः ॥

[ समाधानभाष्यम् ]

**न तौ स्तः । यदि हि तौ स्यातां तावेवाऽयमुपदिशेत् ॥**

(उ०) स्वाशयं प्रकटयति-न तौ स्त इति । तावेवेति । प्रत्याहारसूत्रे इति भावः । एतच्च एओङ्सूत्रे निरूपितम् ॥

[ समाधानबाधकभाष्यम् ]

**ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्द्धमेकारमर्द्धमोकारं चाधीयते-'सुजाते एअश्वसूनृते 'अध्वर्यो ओअद्रिभिः सुतं' 'शुक्रन्ते एअन्यत्' 'यजतं ते एँअन्यदिति'।**

१ एवंहीति । क्रमेण तत्सत्त्वे इत्यर्थः । २ लुप्तं स्यात् । ३ क्वचिन्न । ४ 'वर्द्धैकारौकारौ' । ५ सात्यमुग्रयो राणायनीयाश्च सामशाखाविशेषाऽध्येतारः ।

[ समाधानसाधकभाष्यम् ]

**पार्षदकृतिरेषा तत्रभवताम् । नैव लोके नाऽन्यस्मिन्वेदे-अर्ध एकारः, अर्ध ओकारो वास्ति ॥**

( उ० ) पार्षदेति । तत्रभवतां या पर्षत्-सभा, तत्र भवेत्यर्थः । भाष्यप्रयोगादेव गमकत्वात्साधुत्वं बोध्यम् ॥

[ द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् ]

**अकारनिवृत्त्यर्थेनाऽपि नार्थः ।**

[ प्रत्याख्यानवार्तिकम् ]

॥*॥ *ऐचोश्चोत्तरभूयस्त्वात्* ॥*॥

**ऐचोश्चोत्तरभूयस्त्वादवर्णो न भविष्यति । भूयसी मात्रेवर्णोवर्णयोः, अल्पीयस्यवर्णस्य । भूयस एव ग्रहणानि भविष्यन्ति । तद्यथा 'ब्राह्मणग्राम आनीयता' मित्युच्यते । तत्र चाऽवरतः पञ्चकारुकी भवति ॥ [ एच एग्घ्रस्वादेशे ] ॥**

( प्र० ) ऐचोश्चेति । ऐकारः कण्ठ्यतालव्य, औकारः कण्ठ्योष्ठ्यः । न च तथाविधो ह्रस्वोऽस्तीति अवयवान्तरतमेन भाव्यम् । भूयसा चाऽवयवेन व्यपदेशो भवति । तदात्मक एव हि समुदायो लक्ष्यत इतीदूतावेव भविष्यतः । ब्राह्मणग्राम इति । ब्राह्मणानां वास्तव्यत्वे उदाहरणम् । न तु स्वामित्वे ॥ [ एचइग्घ्रस्वादेशे ] ।

(उ०) भूयस एवेति । भूयोंऽशस्यान्तरतम्यप्रतियोगितया ग्रहणमित्यर्थः । ब्राह्मणस्वामिकग्रामस्य भूयसा व्यपदेशे दृष्टान्तत्वाऽसङ्गतेराह-वास्तव्यत्वे इति । वास्तव्यः कर्त्तरि तव्यान्तः । कुलालकर्मारवर्धकिनापितरजकाः पञ्चकारुकी ॥ [ एच इग्घ्रस्वादेशे ] ।

## षष्ठी स्थानेयोगा ॥१।१।४८॥

[ आक्षेपभाष्यम् ]

**किमिदम्—स्थानेयोगेति ? ॥**

(प्र०) षष्ठीस्था । किमिदमिति । समासे विभक्तेः श्रवणाऽप्रसङ्गोऽसमासेऽपि युक्तिरिति प्राप्नोति न तु योगेति प्रश्नः ॥

(उ०) षष्ठीस्था । युक्तिरिति । षष्ठीति स्त्रीलिङ्गविशेषणत्वादिति भावः ॥

६ 'एश्व' । ७ 'एन्यत्' पा० । ८ तत्रेति-पूज्यानां तेषामेव या सभा, तत्र भवा चासौ कृतिः-अध्ययनादिक्रियेत्यर्थः । ९ क्वचिन्न ।

[ समाधानभाष्यम् ]

**स्थाने योगोऽस्याः सेयं स्थानेयोगा । सप्तम्यलोपो निपातनात् । तृतीयाया वैत्वम् । स्थानेन योगोऽस्याः सेयं स्थानेयोगेति[1] ॥**

(प्र०) **स्थानेयोगोऽस्या इति** । स्थाननिमित्तसम्बन्धेत्यर्थः । **तृतीयाया वेति** । निपातनादिति योज्यम् । यथा 'देवदत्तस्य यज्ञदत्त' इति पुत्रत्वादिद्वारकः संबन्धोऽवगम्यते, एवमस्तेर्भूरित्यत्राप्यस्यां परिभाषायां सत्यां स्थाननिमित्तः संबन्धोऽवसीयते । स्थानमर्थ इति केचिदाहुः । तिष्ठन्त्यस्मिन् शब्दा इति स्थानम् । अर्थे च शब्दस्ति[2]ष्ठति । तेनाऽस्तेरर्थे भूरित्यर्थः । अन्ये त्वाहुः– 'भ्रस्जो रोपधयो रमन्यतरस्या'मित्यादौ रोपधादीनामानर्थक्याद्भावसाधनः प्रसङ्गवाची स्थानशब्द आश्रीयते । तेनाऽस्तेः प्रसङ्गेऽस्तेः प्राप्तौ भूः प्रयुज्यते इत्यर्थः संपद्यते । स्वाभाविकोऽस्तेरप्रयोग, आर्धधातुके भूशब्दस्य च प्रयोगोऽनेन प्रकारेणान्वाख्यायते ॥

(उ०) **निपातनादिति** । तृतीयान्तस्य समासे तृतीयाया लुक्यस्यैत्वमित्यर्थः । तृतीयायाः स्थाने एतद्विधाने तु अन्तरङ्गबाधे मानाऽभावादिनादेशेऽन्त्यस्य स्यात्, लुग्बाधे मानाऽभावा[3]च्च । वृद्ध[4]यापत्तेश्च । अत एवेत्त्वं नोक्तमिति बोध्यम् । अत्र स्थानसामीप्यादयः षष्ठ्यर्थसम्बन्धनिरूपकाः, न तु षष्ठ्यर्था इति न मतुप्सूत्रस्थभाष्यविरोधः । अत एवात्र भगवता सप्तम्यन्तेन तृतीयान्तेन वा समासो दर्शितः, न तु समानाधिकरणबहुव्रीहिः । तद्ध्वनयतीोक्तम्–**स्थाननिमित्त संबन्धेत्यर्थ इति** । नन्वादेशविधौ स्थानशब्दाऽभावेन कथं स्थाननिमित्तः संबन्धोऽत आह–**यथेति** । तथा च 'देवदत्तस्य यज्ञदत्त' इत्युक्ते किमित्याकाङ्क्षावशात्पुत्र इत्यध्याहारो यथा, तथा प्रदेशेषु स्थानपदाध्याहारेण, वाक्यैकदेशन्यायेन वा बोध इति भावः । **अर्थे चेति** । वाचकत्वसंबन्धेनेति भावः । **'अस्तेः प्रसङ्ग'** इत्यस्य व्याख्या–**अस्तेः प्राप्ताविति** । **प्रयोग इति** । स्वाभाविक इत्यनुषज्यते । शब्दनित्यत्वभङ्गापत्त्या स्थानशब्दो निवृत्तिवाची नोपपद्यत इति भावः । रम्विधौ रोपधघटितस्याऽर्थे रम्घटित इत्यर्थे न क्षतिरित्यत्राऽरुचिः ॥

[ आक्षेपभाष्यम् ]

**किमर्थं पुनरिदमुच्यते ? ॥**

(प्र०) **किमर्थमिति** । विनापि सूत्रेणेष्टं सिध्यति, आरब्धे चाऽतिप्रसङ्ग इति प्रश्नः ॥

(उ०) **आरब्धेचेति** । तत्राऽतिप्रसङ्गवारणाय **व्याख्यानत** इत्येतदाश्रयणे तयैव सिद्धौ परिभाषेयं व्यर्थेति भावः।

[ समाधानवार्तिकम् ]

*॥*॥ ष[5]ष्ठीस्[6]थानेयोगवचनं नियमार्थम् ॥*॥*

**[ष[8]ष्ठीस्थानेयोगवचनं क्रियते, नियमार्थं[8]] । नियमार्थोऽयमारम्भः । एकशतं षष्ठ्यर्थाः, यावन्तो वा [ स[7]न्ति ] ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति । इष्यते च-व्याकरणे या षष्ठी सा स्थानेयोगैव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति षष्ठ्याः स्थानेयोगवचनं नियमार्थम् । एवमर्थमिदमुच्यते ॥**

[ काकुभाष्यम् ]

**अस्ति प्रयोजनमेतत् ॥ किं तर्हीति ॥**

( प्र० ) **एकशतमिति** । षष्ठीदण्डकपाठाश्रयेणैतदुक्तम् । **यावन्तो वेति** । शब्दे यावतां सम्भव इत्यर्थः ॥

( उ० ) **षष्ठीदण्डकपाठो**–ग्रन्थविशेषः । भाष्ये **षष्ठ्यर्था इति** । षष्ठीप्रयोजनकास्तदर्थान्वयिनः शब्दाः शतमित्यर्थः । यद्वा षष्ठ्यर्थानां शतत्वे तेषां शतत्वमर्थसिद्धं बोध्यम् । 'एकशत'मिति निर्णयेनाऽभिधाय पुनः संदिग्धाभिधानमयुक्तमत आह—**शब्द इति** । 'वा'शब्दो वाक्यालङ्कारे । भाष्ये–**प्राप्नुवन्तीति** । तेषां सर्वेषां बोधः प्राप्नोतीत्यर्थः ।

*॥ * ॥ अवयवषष्ठ्यादिष्वातिप्रसङ्गः शासो गोह इति ॥ * ॥*

**अवयवषष्ठ्यादयस्तु न सिध्यन्ति ॥ तत्र को दोषः ? ॥ ['शासो गोह इति' ।] 'शास इदङ्हलोः' इति शासेश्चान्त्यस्य स्यादुपधामात्रस्य च । 'ऊदुपधाया गोहः' इति गोहेश्चान्त्यस्य स्यादुपधामात्रस्य च ॥**

( प्र० ) **अवयवेति** । नियमेन संबन्धान्तराणां निवर्तनादिति भावः । **उपधामात्रस्य चेति** । शासिना संबन्धाऽभावात् पचादिसम्बन्धिनोऽपी-

---

१ इतिः क्वचिन्न । २ 'शब्दास्तिष्ठन्ति' । ३ 'भावश्चे'ति पाठः । ४ अतोगुणेन बाधादयमपपाठ इति प्राञ्चः ।

५ 'षष्ठीस्थान' । ६ लुप्तं स्यात् । ७ क्वचिन्न ।
८–८ एतन्मध्यस्थः पाठः क्वचिल्लुप्तः ।

त्यर्थः । तत्र ह्यनिदितामित्यत उपधाया इत्यनुवर्तते॥

(उ०) नियमेन-प्रकृतसूत्रेण । शासिनेति । तस्य स्थानषष्ठीत्वेनोपधाविशेषणे सामर्थ्याऽभावादिति भावः ॥

[ आक्षेपबाधकसमाधानवार्तिकम् ]

*॥ * ॥ अवयवषष्ठ्यादीनां चाऽप्राप्ति-योगस्याऽसन्दिग्धत्वात् ॥ * ॥*

**अवयवषष्ठ्यादीनां च[6] नियमस्याऽप्राप्तिः ॥ किं कारणम् ? ॥ 'योगस्याऽसंदिग्धत्वात्' । संदेहे नियमो न चावयवषष्ठ्यादिषु संदेहः ॥**

(प्र०) असंदिग्धत्वादिति । अनियमप्रसङ्गे हि नियमः क्रियते न तु प्रागेवाऽवस्थिते नियमे ॥

(उ०) भाष्ये-अवयवषष्ठ्यादीनामिति । अवयवषष्ठ्यादीनामिष्टानां निवृत्तये नियमाऽप्राप्तिरिति वार्तिकार्थः ।

[ तत्समाधाने आक्षेपभाष्यम् ]

**किं वक्तव्यमेतत् ? ॥ नहि ।**

**कथमनुच्यमानं गंस्यते ? ।**

**लौकिकोऽयं दृष्टान्तः । तद्यथा लोके-कश्चित् कंचित् पृच्छति-ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशत्विति । स तस्मायाचष्टे-अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्यः, अमुष्मिन्नवकाशे हस्तवाम इति । यस्तत्र तिर्यक्पथो भवति, न तस्मिन् संदेह इति कृत्वा नासावुपदिश्यते । एवमिहापि संदेहे नियमो, न चावयवषष्ठ्यादिषु संदेहः ॥**

(प्र०) हस्तदक्षिण इति । हस्तो दक्षिणो यस्येति बहुव्रीहिः । भाष्यकारवचनात्सर्वनाम्नोऽपि परनिपातः ॥

(उ०) दक्षिणो यस्येति । दक्षिणो हस्तो यस्य सन्निहित इत्यर्थः । तिर्यक्पथः । अनृजुमार्ग इत्यर्थः । पूर्वपश्चिमान्यतरदिशि गच्छतो दक्षिणोत्तरमार्ग इति यावत् ॥

[ समाधान्तरभाष्यम् ]

*[॥*॥ स्थानेऽयोगा स्थानेऽयोगा वा ॥*॥]*

**अथवा स्थानेऽयोगा स्थानेऽयोगा ॥**

**किमिदमयोगेति ? ॥ अव्यक्तयोगा अयोगा ।**

(प्र०) अयोगेति । योगमन्तरेण षष्ठ्या एवाऽभावाद्विशिष्टो योगो यस्या नास्तीति सामर्थ्यात्प्रतीयते ॥

(उ०) विशिष्ट इति । निर्णयविशिष्ट इत्यर्थः । अयमेव भाष्ये व्यक्तशब्दस्याऽर्थः । अत्र पक्षे योगशब्दः कर्मव्युत्पत्त्या संबन्धिपरः । योगवतीति पक्षेऽप्येवमेव स्थानरूपसंबन्धिनियमार्थत्वादस्य ॥

[ समाधानान्तरभाष्यम् ]

*[॥*॥ योगवती वा योगा ॥*॥ ]*

**अथवा-योगवती योगा ॥**

**का पुनर्योगवती ? ॥**

**यस्या बहवो योगाः ॥ कुत एतत् ? ॥**

**भूम्नि हि मतुव् भवति ॥**

(प्र०) योगवतीति । षष्ठ्या अवश्यंभावी योग इति सामर्थ्याद्भूम्नि मत्वर्थीयोऽकारः[3] ॥

[ आक्षेपबाधकवार्तिकम् ]

*॥*॥ विशिष्टा वा षष्ठी स्थानेयोगा ॥ * ॥*

**अथ वा किंचिल्लिङ्गमासज्य वक्ष्यामि-इत्थंलिङ्गा षष्ठी स्थानेयोगा भवतीति ॥ न च तल्लिङ्गमवयवषष्ठ्यादिषु करिष्यते ॥**

(प्र०) किंचिल्लिङ्गमिति । कलादिकम् ॥

(उ०) 'विशिष्टा वे'ति वार्तिकं व्याचष्टे-अथवा किंचिदिति ॥

[ आक्षेपभाष्यम् ]

**यद्येवं 'शास इदङ्हलोः' 'शा हौ' शासिग्रहणं कर्तव्यम्-स्थानेयोगार्थं लिङ्गमासङ्क्ष्यामीति ॥**

[ आक्षेपबाधकभाष्यम् ]

**न कर्तव्यम् । यदेवाऽदः पुरस्तादवयवषष्ठ्यर्थं प्रकृतमेतदुत्तरत्राऽनुवृत्तं सत् स्थानेयोगार्थं भविष्यति ॥ कथम् ? ॥ 'अधिकारो नाम त्रिप्रकारः । कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति' ॥ अपरोऽधिकारो यथा रज्ज्वाऽयसा**

१ लुप्तंस्यात् । २ भाष्ये-मतुबित्यस्य मतुबादिरित्यर्थः । तदाह-मत्वर्थीय इति ।

३ 'कारो भवतीति' । ४ इदं वार्तिकमिति परे । ५ 'ज्वालयति' ।

वा बद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेण ॥ अपरोऽधिकारः प्रतियोगं तस्याऽनिर्देशार्थ इति योगेयोगे उपतिष्ठते ॥ तद्यदैष पक्षः-अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति, तदा हि यदेवाऽदः पुरस्तादवयवषष्ठ्यर्थमेतदुत्तरत्रानुवृत्तं सत् स्थानेयोगार्थं भविष्यति ॥

(प्र०) अधिकारो नामेति। पारार्थ्यसाम्यात्परिभाषाऽप्यधिकार इत्युच्यते। कश्चिदिति। परिभाषारूप इत्यर्थः। चकारेणेति। यथा 'सहस्य स' इत्यविशेषेण 'ग्रन्थान्ताधिके चे'त्यादावनुकृष्यते ॥

(उ०) कश्चिदेकदेशस्थ इति। इदं च यथोद्देशपक्षे स्पष्टमेव। कार्यकालेऽपि स्वविषयसर्वशास्त्रैकवाक्यत्वादेवमुक्तिः, पठितदेशस्थेनैव तत्र तत्र तद्बुद्धिजननात्। दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकम्। न तु तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशे गमनमस्तीति बोध्यम्। पठितदेशस्थत्वमेव सर्वथा बोधयितुमेकदेशस्थ इत्युक्तम्। तस्यानिर्देशार्थ इति। अधिक्रियमाणस्यानुच्चारणार्थ इत्यर्थः। यदेवाऽद इति। शब्दाधिकार आश्रयिष्यत इत्यर्थः ॥

[ आक्षेपभाष्यम् ]

**संप्रत्ययमात्रमेतद्भवति। नह्यनुच्चार्य शब्दं लिङ्गं शक्यमासङ्क्तुम् ॥**

(प्र०) संप्रत्ययमात्रमिति। स्वरितत्वप्रतिज्ञानादुत्तरेषु योगेषु तस्य शब्दस्याऽनुमानं भवतु, लिङ्गासङ्गस्त्वनुच्चारितस्य कथं स्यादित्यर्थः ॥

(उ०) अनुमानमिति। उच्चरित एव प्रत्यायक इत्यणुदित्सूत्रस्थभाष्यविरुद्धमिदम्। तस्माद्बोद्धुरनुमानपूर्वकमुच्चारणं नत्वाचार्यस्येत्यर्थः। शास्त्रप्रणयनकालिकतत्कृतलिङ्गासङ्ग एवैतच्छास्त्रप्रवृत्त्युपयोगी नान्यकृतोऽतिप्रसङ्गात्। पाणिनिना त्वनुच्चारणाच्छास्त्रप्रणयनकाले लिङ्गासङ्गः कर्त्तुमशक्य इति भावः। भाष्ये-संप्रत्ययमात्रमिति। स्वरितत्वबलात्स एवोत्तरत्रेति ज्ञानमात्रमाचार्यकृतमित्यर्थः। आसङ्क्तुमित्यस्य-आचार्येणेति शेषः ॥

[ आक्षेपबाधकभाष्यम् ]

**एवं तर्ह्यादेशे तल्लिङ्गं करिष्यते तत्प्रकृतिमास्कन्त्स्यति ॥**

(प्र०) एवंतर्हीति। आदेशे लिङ्गासङ्गात्तस्य च षष्ठ्यभावात्तत्सम्बद्धस्थानिनो लिङ्गकार्यं फलिष्यतीत्यर्थः ॥

[ प्रत्याख्यानभाष्यम् ]

**यदि नियमः क्रियते यत्रैका षष्ठी अनेकं च विशेष्यं तत्र न सिध्यति। अङ्गस्य हलः अणः संप्रसारणस्येति। हलपि विशेष्योऽणपि विशेष्यः,संप्रसारणमपि विशेष्यम् ॥ असति पुनर्नियमे कामचार -एकया षष्ठ्याऽनेकं विशेषयितुम्। तद्यथा—देवदत्तस्य पुत्रः पाणिः कम्बल इति। तस्मान्नार्थो नियमेन ॥**

(प्र०) यदीति। अङ्गस्येति। स्थानषष्ठीत्वाद्विशेषणविशेष्यभावो न प्रकल्पत इत्यर्थः। देवदत्तस्येति। संबन्धसामान्यमुपक्रम्यते पश्चात्पदान्तरसन्निधानाद्विशेषावसायः ॥

(उ०) यदिनियम इति। स्थाननिमित्तसंबन्धार्थकत्वनियम इत्यर्थः। अनेकं विशेष्यं-प्रसङ्गरूपमवयवरूपं च। तत्राद्यं 'शा हा'वित्यादौ, अन्त्यं तु भाष्ये एव वक्ष्यति। तत्र न सिध्यतीति। अवयवादिनिमित्तसंबन्धार्थकत्वं न सिध्यतीत्यर्थः। अणपीति। हल इति सूत्रे तृतीये दीर्घव्यावृत्त्यर्थमण्ग्रहणस्याऽपि संबन्धादिति भावः। तत्रा'लोऽन्त्यस्ये'त्येकवाक्यतयाऽङ्गावयवाद्धलः परं यदङ्गान्त्यावयवाण्रूपसंप्रसारणं तस्य दीर्घ इति सूत्रार्थः। तत्राङ्गस्येत्यस्य 'शा हा'वित्यादौ स्थानषष्ठीत्वे हलादिनिरूपितमवयवषष्ठीत्वं न सिध्येदित्यर्थः। स्थानेति। तत्त्वाद्धल इत्यादिनाऽवयववाचकेन विशेषणविशेष्यभावो न स्यादित्यर्थः। विशेषावसाय इति। तत्तदन्वय्यर्थकपदकल्पनयेति भावः ॥

[ आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तम्-एकशतं षष्ठ्यर्था यावन्तो वा [ सन्ति ] ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्तीति ॥**

[ आक्षेपबाधकभाष्यम् ]

**नैष दोषः, यद्यपि लोके बहवोऽभिसंबन्धा आर्था यौना मौखाः स्रौवाश्चेति।**

१ उपतिष्ठति'। २ तत्पक्षे-कार्यकालपक्षे। ३ 'मात्र एतद्भ'।

४ 'प्रकृतमास्क'। ५ क्वचिन्न। ६ 'श्रौचा'। 'स्रौना'। ७ इतिः क्वचिन्न।

**शब्दस्य तु शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हति-अन्यदतः स्थानात् ॥**

(उ०) आर्याः-स्वस्वामित्वादयः । यौनाः-पितृत्वादयः। मौखः-गुरुशिष्यभावः। स्त्रौवाः। ऋत्विक्त्वादयः॥

[ आक्षेपस्थापकभाष्यम् ]

**शब्दस्यापि शब्देनानन्तरादयोऽभिसंबन्धाः। अस्तेर्भूर्भवतीति संदेहः स्थानेऽनन्तरे समीपे इति ॥**

(उ०) स्थानेऽनन्तरे इत्यादि। स्थानादिरूपे संबंधिसन्देह इत्यर्थः। आनन्तर्यमव्यवधानम्। सामीप्यं-साधारणम् ॥

[ आक्षेपबाधकभाष्यम् ]

**सन्देहमात्रमेतद्भवति। सर्वसन्देहेषु चेदमुपतिष्ठते-'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षण'मिति। स्थान इति व्याख्यास्यामः ॥**

(प्र०) स्थान इति। अन्तरङ्गत्वाल्लक्ष्यापेक्षणाच्चेति भावः ॥

(उ०) अन्तरङ्गत्वादिति। स्थानशब्दोऽर्थवाची प्रसङ्गवाची वोभयथाप्यन्तरङ्गत्वम्। 'स्थानिवदादेश' इति ज्ञापकमप्यत्र बोध्यम् ॥

[ आक्षेपभाष्यम् ]

**न तर्हीदानीमयं योगो वक्तव्यः? ॥**

[ समाधानभाष्यम् ]

**वक्तव्यश्च ॥ किं प्रयोजनम् ? ॥ षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चारिता ॥ किं कृतं भवति ? ॥ 'निर्दिश्यमानस्यादेशा भवन्ती'त्येषा परिभाषा न कर्तव्या भवति। [ षष्ठी स्थानेयोगा ]।**

(प्र०) यतः षष्ठीति। तेन 'पादः प'दित्यस्याऽयमर्थः-पादन्तस्याङ्गस्य योऽवयवः पाच्छब्दः सूत्रे षष्ठ्या निर्दिष्टस्तस्य पच्छब्द आदेशो भवति, न तु प्रतीयमानस्य पादन्तस्य। अस्यैव सूत्रस्य 'निर्दिश्यमानस्यादेशा भवन्ती'त्ययमर्थः। षष्ठीति षष्ठ्यन्तं गृह्यते। तेन षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते, न तु प्रतीयमानमित्यर्थः। अलोऽन्त्यस्याऽऽदेः परस्येत्येतत्तु वचनसामर्थ्यान्न बाध्यते ॥

(उ०) निर्दिश्यमानमिति। उच्चार्यमाणमित्यर्थः। निर्दिश्यमानं षष्ठ्यन्तमेवेत्यन्वयः। निर्दिश्यमानपदस्य चाऽध्याहार इति भावः। न बाध्यते इति। किंतु स्वव्यवस्थापकत्वेनाश्रीयत इत्यर्थः। एवमनेकाल्सूत्रे सर्वोऽप्येतत्परिभाषाबोधित एव गृह्यते। पदन्न इत्यादावपि आदेशैः पाणिनिकृतस्थान्युच्चारणानुमानाद्व्यवस्थार्थत्वाद्वा न दोषः। यत्त्वलोन्त्यस्यादेः परस्येत्यमू एतद्बाधकाविति। तत्तु उदस्थादिति पादःपदिति सूत्रस्थभाष्यविरुद्धम्। व्यवस्थापकत्वे संभवति बाधकत्वकल्पनानौचित्यग्रस्तं च ॥

[ षष्ठीस्थाने ]

## स्थानेऽन्तरतमः ॥ १ । १ । ४९ ॥

[ आक्षेपभाष्यम् ]

**किमुदाहरणम् ? ॥**

(प्र०) स्थाने। किमुदाहरणमिति। कंचिल्लक्षणान्तरेणेष्टं सिद्धमिति प्रश्नः ॥

(उ०) स्थानेन्त। इतिप्रश्नइति। एवंच परोक्तोदाहरणदूषणायाऽयं प्रश्नो, नतूदाहरणाऽसंभवकृत इति भावः॥

[ समाधानभाष्यम् ]

**'इको यणचि'। दध्यत्र मध्वत्र। तालुस्थानस्य तालुस्थानः, ओष्ठस्थानस्य ओष्ठस्थानो यथा स्यादिति ॥**

(प्र०) इको यणचि। दध्यत्रेति। अस्य सूत्रस्य लक्षणमप्युदाहरणं प्रयोगोऽपीत्युभयोपन्यासः। इको ह्रस्वादिभेदात् षट्षष्टिर्यणस्तु ससेति वैषम्यात्संख्यातानुदेशो न सिद्ध्यतीत्यर्थः ॥

(उ०) उदाहरणप्रश्ने इकोणमचीत्यस्योल्लेखो व्यर्थोऽत आह-अस्य सूत्रस्येति। सामान्यतो ज्ञातस्य विशेषाकारेण यत्र प्रतिपत्तिरतदुदाहरणमिति भावः। षट्षष्टिरिति। लृवर्णस्य दीर्घाऽभावात्। दीर्घप्लुतऋकारस्य प्लुतलृकारस्य चाऽनुनासिकस्याऽदर्शनादिदं चिन्त्यम्। ससेति। रेफस्य सानुनासिकस्याऽभावादिति भावः। इदं चिन्त्यम्। अणुदित्सूत्रेऽण्ग्रहणसामर्थ्येन यणंशे गुणभेदकत्वस्यैव न्याय्यत्वेन विधीयमानत्वेन च तेषामग्रहणात्। तत्प्रत्याख्यानेऽपि आरम्भप्रत्याख्यानयोः फलाऽभेदाय भेद-

---

१ संबन्धि-संबन्धनिरूपकम्। २ 'द्वेति'। ३ षष्ठ्यन्तमिति। तदित्यादिः। ४ नेति। अपूर्वा नेत्यर्थः॥ ५ एवंच-कश्चिदन्यथेष्टसिद्धौ च। ६ इतिः क्वचिन्न। ७ 'तीति भावः'। ८ इदम्-इदमपि।

कत्वस्यैवाश्रयणेन तेषामग्रहणम् । अत एव मतोर्मस्य नानुनासिको वकार इति ॥

[ समाधानबाधकभाष्यम् ]

**नैतदस्ति । संख्यातानुदेशेनाप्येतत्सिद्धम् ॥**

(प्र०) **नैतदस्तीति** । प्रत्याहारपाठे शब्दतः साम्यमस्तीति भावः । 'घस्लादेश' इत्यादौ लकारोऽपि लृकारस्यादेशो दृश्यत इति लृकारस्य स्थानित्वाऽभावो नाशङ्कनीयः ॥

(उ०) **सङ्ख्यातानुदेशः**-क्रमेणान्वयः । **शब्दत इति** । अयं भावः-यथा'स्यतासी लृलुटो'रित्यत्रार्थवैषम्येऽपि बोधकशब्दसाम्याद्यथासङ्ख्यम्, तथा इक्पदयण्पदाभ्यामनेकोपस्थितावपि बोधक[1]शब्दसाम्यमस्त्येवेति न दोष इति । न[2] च ऋकारे लकारस्य लृकारे रेफस्य चापत्तिः, ऋदिल्लृदितोर्भेदेन निर्देशात् सावर्ण्याऽनित्यत्वेनात्र ऋलृभ्यां न लृकारर्कारयोर्ग्रहणमिति नोक्तदोष इति तदाशयात् । ननु लृकारोदाहरणाऽभावात्कथं यथासङ्ख्यमत आह-**घस्लेति** । वस्तुतः प्रतिपत्तिकालिकं सङ्ख्यासाम्यमेव यथासङ्ख्यप्रवृत्तौ नियामकम्, न तु लक्ष्यसंस्कारकालिकमपीति प्रत्याहाराह्निके भाष्ये स्पष्टत्वान्नायं दोष इति बोध्यम् । अनुनासिकस्थाने सानुनासिकार्थमपि न तत्रैतदुपयोगः । विधेयेऽणि गुणभेदकपक्षस्यैव सत्त्वेन तत्र तदप्राप्तेः ॥

[ उदाहरणभाष्यम् ]

**इदं तर्हि-'तस्थस्थमिपां तांतंतामः' इति । एकार्थस्यैकार्थौ द्व्यर्थस्य द्व्यर्थौ, बह्वर्थस्य बह्वर्थौ यथा स्यादिति ॥**

(प्र०) **एकार्थस्येति** । सादृश्यहेतुधर्मोपलक्षणमेतत् । तेन प्रत्यक्त्वादयोऽपि धर्मा गृह्यन्ते ॥

(उ०) आदेशानां तत्स्थानापन्नत्वेन न तदर्थत्वम्,किंतु स्वभावत एव, शब्दार्थसंबन्धानां नित्यत्वादित्याशयेन भाष्ये-**एकार्थ इति** । तावन्मात्रोक्तौ तसस्तमपि प्राप्नोति, थसस्तामपीत्यत आह-**सादृश्येति** । उत्तमे **प्रत्यक्त्व**रूपोऽहंकारास्पदचेतनधर्मः, मध्यमे अहंकारानास्पदचेतनधर्मः **पराक्त्वम्** । प्रथमे त्वनियतम् ॥

[ उदाहरणबाधकभाष्यम् ]

**ननु च एतदपि संख्यातानुदेशेनैव सिद्धम् ॥**

[ उदाहरणान्तरभाष्यम् ]

**इदं तर्हि-'अकः सवर्णे दीर्घः' इति । दण्डाग्रम्, क्षुपाग्रम्, दधीन्द्रः, मधूष्ट्रः । कण्ठस्थानयोः कण्ठस्थानस्तालुस्थानयोस्तालुस्थान ओष्ठस्थानयोरोष्ठस्थानो यथा स्यादिति ॥**

[ आक्षेपभाष्यम् ]

**अथ स्थान इति वर्तमाने पुनः स्थानग्रहणं किमर्थम् ? ॥**

[ समाधानभाष्यम् ]

**यत्राऽनेकविधमान्तर्यं तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात् ॥ किं पुनस्तत् ? ॥ चेता स्तोता । प्रमाणतोऽकारो गुणः प्राप्नोति, स्थानत एकारौकारौ । पुनः-स्थानग्रहणादेकारौकारौ भवतः ॥**

(प्र०) **यत्रानेकमिति** । स्थानग्रहणेऽनुवर्तमाने वाक्यभेदः क्रियते, स्थानेऽन्तरतमो भवति, यत्र चाऽनेकमान्तर्यमस्ति तत्र स्थानकृतमेवान्तर्यमाश्रीयत इति । वाक्यभेदस्य च तमब्ग्रहणमेव लिङ्गम् । स्थानकृत एव हि सादृश्ये गृह्यमाणे सादृश्यान्तरपरित्यागात्तमग्रहणमनर्थकमेवं स्यात् ॥

(उ०) भाष्ये-**अनुवर्त्तमाने इति** । एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः । **वाक्यभेद इति** । अनुवृत्तप्रसङ्गवाचिस्थानशब्देनैकं[6] वाक्यम्, ताल्वादिवाचीहत्यस्थानशब्देनाऽपरम् । अत्र[7] च '**स्थाने**' इति तृतीयार्थे सप्तमीति भावः । **तमग्रहणमनर्थकमिति** । प्रसङ्गे स्थानकृतान्तर्यवानित्यर्थेनैव सिद्धे स्थानेग्रहणं न वाक्यभेदे मानमितीदमुक्तम् । तथै[8]कवाक्यतायां तु स्थानकृतान्तर्याऽभावे 'तद्धसती'त्यादावव्यवस्थैव स्यात् । वाक्यभेदे तु सादृश्यान्तरमादाय तत्र व्यवस्थेति भावः ॥

[ प्रश्नभाष्यम् ]

**अथ तमब्ग्रहणं[9] किमर्थम् ? ॥**

[ समाधानभाष्यम् ]

**'झयो होऽन्यतरस्या'मित्यत्र 'सोष्मणः**

---

१ **बोधकेति** । एतदुभयवाच्यवर्णबोधकेत्यर्थः । २ अत एवाह-**नचेति** । **निर्देशात्** । अस्य 'ज्ञापितेने'ति शेषोबोध्यः । ३ इतिः क्वचिन्न । ४ मधृष्णः' । ५ एवः क्वचिन्न । ६ **एकम्** [illegible]

७ ननु स्थानकृतमित्यर्थः कथमत आह-**अत्रचेति** । द्वितीय इत्यर्थः । ८ नन्वेवं वाक्यभेदः किमर्थोऽत आह-**तथैकवाक्येति** । उक्तेत्यर्थः ।

९ 'तमग्रहणं' ।

**सोष्माणः' इति द्वितीयाः प्रसक्ताः, 'नादवतो नादवन्तः' इति तृतीयाः [प्रसक्ताः] ॥ 'तमब्ग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः-वाग्घसति त्रिष्टुब्भसतीति।**

(प्र०) **सोष्मण इति** । ऊष्मत्वगुणयुक्तस्येत्यर्थः । **तमग्रहणादिति** । ईषत्सदृशेऽपि लोके सदृशव्यवहारदर्शनादिह तमग्रहणं कृतम् ॥

(उ०) **ऊष्मत्वेति** । सदृशब्दप्रयोगोपपत्तये धर्मपर ऊष्मशब्द इति भावः ॥

[ आक्षेपभाष्यम् ]

**किमर्थं पुनरिदमुच्यते ? ॥**

(प्र०) **किमर्थमिति** । यदीदं नोच्येत तदा किं स्यादिति प्रश्नः ॥

(उ०) नन्वनन्यथासिद्धोदाहरणरूपप्रयोजनोक्तेः पुनः प्रश्नानुपपत्तिरत आह-**यदीति** । सूत्राऽभावे किमनिष्टमिति प्रश्नतात्पर्यमिति भावः ॥

[ समाधानवार्तिकम् ]

*॥ * ॥ स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वप्रसङ्गस्तस्मात्स्थानेऽन्तरतमवचनं [नियमार्थम्] ॥*॥*

**स्थान्येकत्वेन निर्दिश्यते-अक इति। अनेकश्च पुनरादेशः प्रतिनिर्दिश्यते-दीर्घ इति। 'स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वसङ्गः'। सर्वे सर्वत्र प्राप्नुवन्ति। इष्यते चान्तरतमा एव स्युरिति। तच्चान्तरेण यत्नं न सिध्यति। 'तस्मात्स्थानेऽन्तरतम इति वचनं नियमार्थम्' ॥**

**एवमर्थमिदमुच्यते ॥**

(प्र०) **स्थानिन इति** । यद्यपि 'अकः' इत्यनेन स्थानिनो बहव उपात्तास्तथापि प्रयोगे एकैकः स्थानी, तस्य पर्यायेण बहवो दीर्घा आदेशाः प्राप्नुवन्तीत्यर्थः ॥

(उ०) **बहव इति** । एवंचैकत्वनिर्देशादित्यनुपपन्नमिति भावः । **प्रयोग इति** । 'अक' इत्येतद्बोध्यः स्थानी प्रयोगे एकत्वविशिष्ट उच्चार्यत इति भाष्याक्षरार्थः । यद्यपि 'पूर्वपरयो'रित्युक्ते'रेकः स्थानी'त्युक्तम्, तथापि तत्समुदायाभिप्रायेणेदम् । युगपदेककर्तृकं सर्वोच्चारणमशक्यमत आह-**पर्यायेणेति** ॥

[ काकाऽभ्युपगमभाष्यम् ]

**अस्ति प्रयोजनमेतत् ॥**

**किं तर्हीति ॥**

[ आक्षेपभाष्यम् ]

**यथा पुनरियमन्तरतमनिर्वृत्तिः, सा किं प्रकृतितो भवति-स्थानिन्यन्तरतमे षष्ठीति। आहोस्विदादेशतः-स्थाने प्राप्यमाणानामन्तरतम आदेशो भवतीति ॥**

**कुतः पुनरियं विचारणा ? ॥ उभयथा[3]पि[4] तुल्या संहिता 'स्थानेऽन्तरतम उरण् रपरः' इति ॥**

(प्र०) **यथा पुनरिति**। येन प्रकारेण-संहितापाठलक्षणेनेत्यर्थः । प्रतिसूत्रं तु विच्छिद्य पाठे संशयाऽभावः । 'पदप्रकृतिः संहिते'ति संहिताया एव नित्यत्वात्ततः पदाऽपोद्धारे क्रियमाणेऽन्तरतमशब्दः किं सप्तम्यन्तोऽपोद्ध्रियते अथ प्रथमान्त इति प्रश्नः। तत्र सप्तम्यन्तपक्षे 'षष्ठी'ति वर्तते, अन्तरतमो य आदेशस्य स्थानी तत्रैव षष्ठी, यत्रैव षष्ठी तत्रादेश इति प्रकृतिर्नियम्यते। प्रथमान्तपक्षे तु अन्तरतम आदेशो भवतीत्यादेशोनियम्यते।

(उ०) **येन प्रकारेण संहितापाठलक्षणेनेति।** अनेन संहितापाठ एव पूर्वं स्थित इत्युक्तम् । अस्तु तर्हि विच्छिद्य पाठोऽत आह-**पदप्रकृतिरिति** । षष्ठीतत्पुरुषः । बहुव्रीहिरित्यन्ये, तत्प्रकृतग्रन्थाननुगुणम् । भाष्ये-**सा किं प्रकृतित इति**। 'सेती'यमित्यस्य प्रतिनिर्देशः । 'इदं'शब्दोऽपि यच्छब्दार्थः क्वचित् । केचित्तु 'यथापुन'रिति येत्यर्थेऽव्ययसमुदाय इत्याहुः । अन्तरतमशब्दार्थस्य विशेषणत्वेन या प्रतिपत्तिः सा किं सौत्रस्थानशब्दस्य तिष्ठन्त्यस्मिन्नादेशा इत्यधिकरणव्युत्पत्त्याऽन्तरतमे स्थानिनीत्यर्थात् स्थानिनं प्रति उताऽऽदेशं प्रतीत्यर्थः। **षष्ठीति वर्तत इति**। अन्तरतमेऽर्थादादेशस्य स्थानिनि षष्ठी उपसंहर्तव्येत्यर्थः । 'यत्रैव षष्ठी'-त्यादि तु पर्यवसितार्थकथनम् ॥

[ भाष्यम् ]

**किं चातः ? ॥**

१ क्वचिन्न । २ 'तमग्रह' ।

३ 'उभयथाऽपि तुल्या' । ४ 'हि' ।

[ सप्तम्यन्तपाठदूषणभाष्यम् ]

**यदि प्रकृतितः-'इको यणचि'[1] । यणां[2] येऽन्तरतमा इकस्तत्र षष्ठी, यत्र षष्ठी, तत्रादेशा भवन्तीतीहैव स्यात्-दध्यत्र मध्वत्र । कुमार्यर्थे[3] । ब्रह्मबन्ध्वर्थमित्यत्र न स्यात् ॥ आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी । यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवति[4] ॥**

(प्र०) **इहैवेति** । यणामर्धमात्रिकाणां सदृशा इको मात्रिका न तु दूरविप्रकृष्टा दीर्घा इति भावः। आदेशनियमपक्षे चैतदुदाहरणत्वेन दूषितम् । प्रकृतिनियमपक्षे तु भवत्येवैतदुदाहरणम् ॥

(उ०) ननु भाष्ये सङ्ख्यातानुदेशेनैतदुदाहरणस्य दूषितत्वात पुनरुपन्यासोऽयुक्तोऽत आह-**आदेशेति** । **भवत्येतदिति** । दीर्घव्यावृत्तये इत्यर्थः ॥

[ दूषणान्तरभाष्यम् ]

**तथा-इको गुणवृद्धी,-गुणवृद्ध्योर्येऽन्तरतमा इकस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्यात्-नेता लविता नायको लावकः । चेता स्तोता चायकः स्तावक इत्यत्र न स्यात् । आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी। यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीति[5] ॥**

(प्र०) **चायक इति** । 'अचो ञ्णिती'त्यत्रापि अयमेव दोष इत्युपन्यासः ।

(उ०) भाष्ये-**इको गुणवृद्धी इति** विध्येकवाक्यतापन्नस्य खण्ड इति बोध्यम् । नन्विको गुणवृद्धी इत्युक्त्वा 'चायक' इत्युदाहरणमसङ्गतमत आह-**अचइति** । केचित्तु-'इको यत्र गुणवृद्धी इष्टे, तत्रे'ति भाष्यार्थान्न दोप इत्याहुः ॥

[ दूषणान्तरभाष्यम् ]

**तथा-ऋवर्णस्य गुणवृद्धिप्रसङ्गे-गुणवृद्ध्योर्यदन्तरतममृवर्णं तत्र षष्ठी, यत्रषष्ठी तत्रादेशा भवन्तीतीहैव स्यात्-कर्ता, हर्ता, आस्तारकः निपारकः [इति][6] । आस्तरिता निपरिता कारको हारक इत्यत्र न स्यात् । आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी। यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीति ॥**

(प्र०) **ऋवर्णस्येति** । ऋकारस्य ह्रस्वस्यैव गुणः स्याद्दीर्घस्यैव च वृद्धिरिति विशेषप्रदर्शनाय ॠवर्णस्य पृथगुपन्यासः ।

(उ०) ननु ऋकारस्येग्वोरन्तर्भावात्पुनरुपन्यासो वृथेत्यत आह-**ऋकारस्येति** । एवं च सप्तम्यन्तच्छेदो लक्ष्याऽसिद्ध्या दुष्ट इति भावः ॥

[ प्रथमान्तपाठदूषणभाष्यम् ]

**अथादेशतोऽन्तरतमनिर्वृत्तौ सत्यामयं दोषः-'वान्तो यि प्रत्यये' । स्थानिनिर्देशः कर्तव्यः । ओकारौकारयोरिति वक्तव्यम्, एकारैकारयोर्माभूदिति । प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां वान्तादेशस्य एक्षु याऽन्तरतमा प्रकृतिस्तत्र षष्ठी । यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेण स्थानिनिर्देशं सिद्धं भवति ॥**

(प्र०) **वान्तो यीति** । 'एच' इत्यनुवर्तनात् सर्वेषां वान्तादेशप्रसङ्गः । यदा त्वेवं व्याख्यायते-'यादृशो वान्त आदेशः पूर्वं दृष्टस्तादृशो यि प्रत्यये भवति, ओकारस्थानिकोऽवादेशो दृष्ट औकारस्थानिकश्चाऽऽवादेश' इति, तदा न दोषः ॥

(उ०) **यादृश इति** । 'अची'त्यनुवर्त्त्याऽचि परतो यस्य यो वान्तो दृष्टस्तस्य यि प्रत्यये स इति व्याख्येयमित्यर्थः । अन्ये तु वाच्यवृत्त्येदृशार्थस्याऽलाभाद्यि प्रत्यये इति दृष्टाऽचीत्यस्याऽसंबन्धाच्च भाष्योक्तं वचनमेव ज्याय इत्याहुः।

[ दूषणोद्धारभाष्यम् ]

**आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः ॥ कथम् ? ॥ वान्तग्रहणं न करिष्यते-'यि प्रत्यये'। [यिप्रत्यये][8] एचोऽयादयो भवन्तीत्येव ॥**

[ दोपदर्शिभाष्यम् ]

**यदि न क्रियते, सेयं जेयमित्यत्रापि प्राप्नोति ॥**

[ उक्तदोषनिरासभाष्यम् ]

**'क्षय्यजय्यौ शक्यार्थे' इत्येतन्निय-**

1 'यणचीति' । २ 'यणो ये' । ३ 'कुमार्यत्र' । ४ 'भवतीति । ५ 'भवति' । ६ क्वचिन्न ।

७ एवंचेति। बहुदोषसत्त्वेचेत्यर्थः । ८ लुप्तं स्यात् । ९ 'थं-एतन्नि'।

मार्थं भविष्यति—'क्षिज्योरेवैच' इति ॥

(उ०) भाष्ये—क्षिज्योरेवेति । ह्रस्वनिर्देशात्क्षीइति दीर्घान्तस्य, जैजय इत्यस्य च नेदं निपातनमिति बोध्यम् ॥

[ दोषस्थापकभाष्यम् ]

तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति-क्षेयं पापं जेयो वृषल इति ॥

[ दोषनिरासभाष्यम् ]

उभयतो नियमो विज्ञास्यते-'क्षिज्योरेवैचः' 'अनयोश्च[1] शक्यार्थ एवे'ति ॥

(प्र०) उभयत इति । योगविभागेनेति भावः॥

(उ०) योगविभागेनेति । विनिगमनाविरहाद्ब्रह्मभ्रूणेत्यादाविवोभयतो नियम इत्यन्ये ॥

[ इष्टानुपपत्तिप्रदर्शनभाष्यम् ]

इहापि तर्हि नियमान्न प्राप्नोति-लव्यं पव्यम् । अवश्यलाव्यम् अवश्यपाव्यमिति ॥

(प्र०)इहापीति । सामान्येन नियम इति प्रश्नः।

[ इष्टानुपपत्तिभाष्यम् ]

तुल्यजातीयस्य नियमः ॥ कथ्ञ तुल्यजातीयः ? ॥ यथाजातीयकः क्षिज्योरेच् ॥ कथंजातीयकः क्षिज्योरेच् ? ॥ एकारः ॥

(प्र०) तुल्यजातीयस्येति । कण्ठतालव्यस्येत्यर्थः ।

(उ०) भाष्ये—तुल्यजातीयस्येति । अन्यथा 'यि प्रत्यये' इति विधिवैयर्थ्यं स्यादिति भावः । तत्त्वं[2] च यत्वेन, तर्हि ऐकारे आयादेशः स्यादत आह—कण्ठ्येति । भाष्ये एकारग्रहणमुपलक्षणमिति भावः ॥

[ अनिष्टापत्तिभाष्यम् ]

एवमपि[3] रायमिच्छति रैयति। अत्रापि[4] प्राप्नोति।

(प्र०) रायमिच्छतीति । एकारस्यैव नियमेन व्यावृत्तिः कृता न त्वैकारस्येति प्रश्नः ॥

(उ०) एतदनभिज्ञः शङ्कते-भाष्ये-रायमिच्छतीति। तदाह—एकारस्यैवेति । एकारस्य तालव्यत्वमेवेति भाष्याशयः ॥

[ अनिष्टापत्तिवारणभाष्यम् ]

रायिश्छान्दसः । दृष्टानुविधिश्छन्दसि भवति ॥

(प्र०) छान्दस इति । क्यजन्तस्य रैशब्दस्य भाषायां नास्ति प्रयोगोऽन्यत्र तु विद्यत एवेति व्याचक्षते । क्यच् त्वैकारान्तान्नास्ति, गोसमानाक्षरनान्तात्' इति वचनात् । अन्ये तु भाषायां रैशब्दस्य प्रयोग एव नास्तीत्याहुः ॥

(उ०) क्यजन्तेति । राः-रैशब्दो, यि यकारादिप्रत्यये इति भाष्यार्थ इति भावः । भाष्ये विसर्गरहित एव पाठः। एतेन रायिरित्ययुक्तम्, आत्वस्य दुर्लभत्वात्, रैशब्दात्क्विक् दुर्लभ इत्यपास्तम् । नास्तिप्रयोग इति । अनभिधानादिति भावः । क्यचत्वित्यादिवचनादित्यन्तोऽग्रन्थः, तस्यैकीयमतत्वात् । अत एव नः क्ये इति सूत्रे वाच्यतीति भाष्ये प्रयुक्तम् । अन्येत्विति । अत्राऽरुचिबीजं तु रायमिच्छतीति भाष्यप्रयोगविरोधः । न हि विग्रहश्छन्द इति बोध्यम् । भाष्ये यीत्यस्य वैयर्थ्याच्च ॥

[ प्रथमान्तपाठे दूषणान्तरभाष्यम् ]

'ऊदुपधाया[6] गोहः'। आदेशतोऽन्तरतमनिर्वृत्तौ सत्यामुपधाग्रहणं कर्तव्यम् ॥ प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यामूकारस्य गोहो याऽन्तरतमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेणोपधाग्रहणं सिद्धं भवति ।

(प्र०) गोह इति । एतत्परिभाषोपस्थाने सति गोह इति षष्ठ्यन्तरतमे स्थानिन्युपसंह्रियते ॥

(उ०) भाष्ये गोहः-संबन्धिन ऊकारस्य याऽन्तरतमा प्रकृतिरित्यन्वयः । स्थानिन्युपसंह्रियत इति । एवं च 'गोह' इति गोहवयवे लाक्षणिकम्-ऊकारान्तरतमस्य गोहवयवस्योदित्यर्थ इति भावः ॥

[ दूषणोद्धारभाष्यम् ]

आदेशतो[7]ऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियते[8] एतन्न्यास एव ॥

(प्र०) क्रियते न्यास एवेति । अन्यथा परत्वादलोऽन्त्यस्येत्यनेन 'गोह' इति षष्ठ्यन्त्येऽल्युपसंह्रियेतेति भावः ॥

(उ०) ननूपधाग्रहणाऽकरणलाघवे दर्शिते क्रियत इत्युत्तरमसङ्गतमत आह—अन्यथेति । परत्वादलोऽन्त्यस्येत्येव व्यवस्थापकं स्यादित्यर्थः । एवं च पक्षद्वयेऽप्यावश्यकं तदिति भावः ॥

---

१ 'तयोश्च' । २ शङ्कते–तत्त्वं चेति। तत्त्वमपीत्यर्थः । ३ केचिदिदं नेच्छन्ति । ४ 'इत्यत्र' । ५ 'वैयर्थ्यं चे'ति पा. । पञ्चम्यन्तपाठेतु 'नेदं युक्त'मिति शेषो बोध्यः ।

६ प्रथमान्तपाठे उक्तस्य पूर्वदोषस्य परिहृतत्वाद्दोषान्तरमाह—ऊदिति । ७ इत्यादेशतः' ।

८ एतदितिकचिन्न ।

[ प्रथमान्तपाठे दूषणान्तरभाष्यम् ]

**'रदाभ्यां निष्ठा तो नः पूर्वस्य च दः' । आदेशतोऽन्तरतमनिर्वृत्तौ सत्यां तकारग्रहणं कर्तव्यम् ॥ प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां नकारस्य निष्ठायां याऽन्तरतमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेणा[ऽपि] तकारग्रहणं सिद्धं भवति ।**

(प्र०) रदाभ्यामिति । चरितमित्यादौ व्यवधानान्न भवति । 'निष्ठाया'इति षष्ठ्यास्तकार एवोपसंहारात्तस्यैवानन्तर्येण नत्वविधानात् ।

(उ०) ननु 'त'ग्रहणाऽभावे चरितमित्यादावपि रेफानन्तरा[3] निष्ठेति नत्वं स्यादत आह-**चरितमिति** । 'रदाभ्या' मित्यस्य प्रधानविशेषणताया न्याय्यतया परिभाषासंस्कृते लक्ष्यसंस्कारके वाक्ये रेफदकाराभ्यां परस्य निष्ठासंबन्धिनोऽन्तरतमस्य नकारादेश इत्यर्थ 'इति भावः । **आदेःपरस्य स्थानेऽन्तरतम** इत्याभ्यामादेरन्तरतमस्य न[1] इत्यर्थे इकारस्याऽन्तरतमत्वादभावेन तकारस्य चादित्वाऽभावेना प्राप्तिरिति **परे** ॥

[ दूषणपरिहारभाष्यम् ]

**आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियत एतन्न्यास एव ॥**

(प्र०) **क्रियत एतन्न्यास एवेति** । अन्यथा हि 'भिन्नवद्भ्या'मित्यत्र दकारस्य नत्वं स्यात् । स हि नकारस्य सुसदृशः, 'यथा तृतीयास्तथा पञ्चमा' इति वचनात् ॥

(उ०) पक्षान्तरेपि तुल्यत्वान्न गौरवमित्याह-**अन्यथेति । दकारस्य नत्वं स्यादिति** । अनया परिभाषयेतिभावः । वस्तुतस्तु 'आदेः परस्ये'त्यनेनाऽन्त्यस्याऽप्राप्तिः । सूत्रं तु उभयाऽविरोधेन भिन्नमित्यादौ चरितार्थमित्यत्र प्रयोगे न स्यादेव नत्वमिति उभाभ्यामपि तग्रहणं कर्त्तव्यमिति भाष्यतात्पर्यम् । एवं च प्रथमान्तच्छेदो निर्दोषः सप्तम्यन्तच्छेदस्तु दुष्ट एव । अत एव 'न भूसुधियो' रित्यादि चरितार्थम् । 'नृनरयोर्वृद्धिश्चे'ति शार्ङ्गरवाद्यन्तर्गणसूत्रं यद्यार्थं तदा नरः-अ इति व्याख्यानादाद्याकारस्यैव वृद्धिरिति न तत्र दोषः । तत्र 'नृनरयो'रित्यावर्त्तते, एकत्र पञ्चम्यर्थे षष्ठी । पृथगपि वा तौ गणे पठ्येते इति बोध्यम् ॥

[ प्रश्नभाष्यम् ]

**किं पुनरिदं निर्वर्तकम्—अन्तरतमा अनेन निर्वर्त्यन्ते । आहोस्वित्प्रतिपादकम्-अन्येन निर्वृत्तानामनेन प्रतिपत्तिः ? ॥**

(प्र०) किंपुनरिति । किं स्वतन्त्रमिदं लक्षणम् , आहोस्विल्लक्षणान्तरेणाऽभिनिर्वृत्तानामनेन नियमः क्रियते । अथ लक्षणान्तरशेषभूतमिति प्रश्नः ।

(उ०) अथेति । वाक्यभेदाऽभेदाभ्यां पक्षद्वयभेद इति बोध्यम् । तत्र[2] तृतीयः सिद्धान्तो भविष्यति ॥

**कश्चात्र विशेषः ? ॥**

[ प्रथमपक्षदूषणवार्तिकम् ]

॥ * ॥ *स्थानेऽन्तरतमनिर्वर्तके[3] सर्वस्थानिनिवृत्तिः* ॥ * ॥

**स्थानेऽन्तरतमे निर्वर्तके सर्वस्थानिनां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति-दधि मधु ॥**

(प्र०) स्थानिनिवृत्तिरिति । दधिशब्दस्य यदि दधिशब्द आदेशः क्रियते, तदा प्रयोजनाऽभावः । भिन्नरूपस्त्वादेशस्तदर्थस्याऽप्रत्यायक इति शब्दव्यवहारोत्साद एवेति भावः ॥

(उ०) भिन्नरूप इति । पर्यायो यद्यपि भिन्नरूपस्तदर्थप्रत्यायकश्च, तथापि विनिगमकाऽभावादुभयोः स्थानित्वमादेशत्वं च वाच्यम् । तथा च सूत्रमनारम्भसमं स्यादिति भावः ॥

[ आक्षेपबाधकभाष्यम् ]

**अस्तु, न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्रान्तर्यतो दधिशब्दस्य दधिशब्द एव, मधुशब्दस्य मधुशब्द एवादेशो भविष्यति ॥**

(प्र०) अस्त्विति । वचनसामर्थ्याच्छब्दव्यवहारस्य चाऽनादित्वादिति भावः ॥

(उ०) शास्त्रप्रवृत्तौ हेतुर्वचनसामर्थ्यम् । सदृशादेशे हेतुः-**शब्देति** ॥

[ आक्षेपस्थापकभाष्यम् ]

**यदि[5] चैवं, कचिद्वैरूप्यं, तत्र दोषः**

१ क्वचिन्न । २ तत्र-द्वितीयतृतीययोर्मध्ये ।
३ 'तमे' । ४ विनिगमकेति । 'अयं स्थान्ययमादेश इत्यत्रे'त्यादिः ।
५ यदि चैवं-यद्यपि तत्रैवं निर्वाहस्तथापि ।

**स्यात्-विसं विसम् । मुसलं मुसलमिति 'इ[2]ण्कोरादेशप्रत्यययो'रिति षत्वं प्राप्नोति॥**

(प्र०) क्वचि[1]द्वैरूप्यमिति । यदा बिसशब्दस्य बिसशब्द आदेशस्तदा षत्वं नास्ति, नहि तदा सकार आदेशः । यदा तु सकारस्य सकार आदेशस्तदा षत्वप्रसङ्ग इति वैरूप्यप्राप्तिः। 'अस्तेर्भू'रित्यादयस्तु विशेषविहितत्वादस्य बाधकाः ।

(उ०) भाष्ये-**यदिचैवमिति** । स्थान्यपेक्षयाऽऽदेशे यत्र वैरूप्यं प्रसक्तं तत्र दोष इत्यर्थः। **नहि तदेति** । आदेशरूपस[3]स्यैव तेन षत्वविधानादिति भावः। **यदात्विति** । तद्वनयन् भाष्यकृद्वक्ष्यति-**इमे वर्णा इत्यादि** । नन्वस्य निर्वर्तकत्वे आर्धधातुकेऽप्यस्त्यादीनामस्त्याद्यादेशा स्युरिति कुतो नोक्तम् । किं चाऽनेन सिद्धे तद्व्यर्थं चेत्यत आह-**अस्तेरिति** । विद्यतिनिवृत्तिस्तत्फलमिति भावः ॥

[ आक्षेपान्तरभाष्यम् ]

**अपि चेष्टा व्यवस्था न प्रकल्प्येत । तद्यथा-तप्ते भ्राष्ट्रे तिलाः प्रक्षि[4]प्ता मुहूर्तमपि नावतिष्ठन्ते एवमिमे वर्णा मुहूर्तमपि नावतिष्ठेरन् ॥**

(प्र०) अपिचेति । पुनरन्येनान्येनाऽऽदेशेन भवितव्यमिति भावः । प्रयोजनमन्तरेण प्रवृत्तौ सत्यामसकृदपि प्रवृत्तिः स्यात् । ततश्च सर्वस्य निवृत्त्यभिमुखत्वात्साधुत्व[5]व्यवस्था नोपपद्यते ॥

(उ०) सदृशादेशविषयेऽपि दोषमाह भाष्ये-**अपिचेष्टेति** । ननु सदृशादेशे कथमिष्टव्यवस्थासिद्धिरत आह-**पुनरिति** । ननु 'लक्ष्ये लक्षणस्ये'ति न्यायविरोधोऽत आह-**प्रयोजनमिति** । सप्रयोजने[6] शास्त्रप्रवृत्तौ हि प्रथमप्रवृत्त्यैव प्रयोजननिष्पत्तेर्न द्वितीयादिप्रवृत्तिरिति तद्बीजम् । नचेदं प्रकृते इति भावः । भाष्ये **व्यवस्थेत्यस्य** सापेक्षत्वादाह-**साधुत्वस्येति** । परिनिष्ठितत्वव्याप्यत्वात्साधुत्वस्येति भावः । एवं च[7] दोषान्तरमेव शास्त्रं स्यादिति तात्पर्यम्॥

[ द्वितीयपक्षाङ्गीकारभाष्यम् ]

**अस्तु तर्हि प्रतिपादकम्-अन्येन निर्वृत्तानामनेन प्रतिपत्तिः ॥**

(प्र०) अस्तु तर्हीति । निर्वृत्तेषु लक्षणान्तरेणादेशेषु नियमोऽनेन क्रियते तत्रान्तरतमः साधुर्नान्य इत्यर्थः ॥

(उ०) **निर्वृत्तेष्विति** । अन्येन निर्वृत्तानां मध्येऽनेनाऽन्तरतमस्यैव साधुत्वप्रतिपत्तिरिति भाष्यार्थ इति भावः ॥

[ दोषदर्शिवार्तिकम् ]

*॥ * ॥निर्वृत्तप्रतिपत्तौ निर्वृत्तिः ॥ * ॥*

**निर्वृत्तप्रतिपत्तौ निर्वृत्तिर्न सिध्यति । सर्वे सर्वत्र प्राप्नुवन्ति ॥**

(प्र०) निर्वृत्तिरिति । अभिमतस्य शब्दस्येत्यर्थः ॥

(उ०) **अभिमतस्येति** । शास्त्रप्रामाण्यादुभयोरपि पाक्षिकसाधुत्वापत्त्येति भावः॥

[ दोषदर्शितात्पर्यजिज्ञासाभाष्यम् ]

**किं तर्ह्युच्यते-निर्वृत्तिर्न सिध्यतीति ? । न साधीयो निर्वृत्तिः सि[8]द्धा भवति ॥**

[ तात्पर्यवर्णनभाष्यम् ]

**न ब्रूमो-निर्वृत्तिर्न सिध्यतीति ॥ किं तर्हि ? ॥ इष्टा व्यवस्था न प्रकल्प्येत । न सर्वे सर्वत्रेष्यन्ते ॥**

(प्र०) इष्टा व्यवस्थेति । 'अकः सवर्णे दीर्घ' इत्यनेन लक्षणेन यदा सर्वे दीर्घाः कृतास्तदा तेषां साधुत्वं विज्ञातम् । न चाऽनेन तेषामेवाऽसाधुत्वं शक्यं प्रतिपादयितुमिति भावः ॥

(उ०) दीर्घादेरिष्टा व्यवस्थाऽनेन भविष्यतीत्यत आह-**अक इति**। एकप्रमा[9]णबोधितस्य सामान्यविशेषभावाऽभावेन प्रमा[10]णान्तरेण आत्यन्तिको निरासोऽशक्यः कर्तुमिति भावः॥

[ प्रत्याक्षेपभाष्यम् ]

**इदमिदानीं किमर्थं स्यात् ? ॥**

(उ०) ननु शास्त्रप्रामाण्यादुभयोरपि साधुत्वे इदं व्यर्थं स्यादिति पृच्छति-**इदमिदानीमिति** ॥

[ रामाधानवार्तिकम् ]

*॥ * ॥ अनर्थकं च ॥ * ॥*

**अनर्थकमेतत्स्यात् । यो हि भुक्तवन्तं ब्रूयान्मा[11] भुक्थाः' इति, किं तेन कृतं स्यात् ।**

---

१ कश्चिन्न । २ 'इण्कोरितिषत्वं' । ३ 'रूपस्यैव' । ४ 'क्षिप्ताः' । ५ 'साधुत्वस्य' । ६ सप्रयोजना या शास्त्रप्रवृत्तिरित्यर्थः । ७ एवञ्च-पुनः पुनः प्रवृत्तौ च ।

८ 'सिद्धा न' । ९ एकेति । अक इत्येतद्बोधितसाधुत्वस्येत्यर्थः । १० प्रमाणान्तरेणेति । अनेनेत्यर्थः । ११ भुंक्थाः ।

(उ०) उत्तरयति–अनर्थकमिति । मुक्त्वा इति निरनुस्वारः पाठः ॥

[ समाधानभाष्यम् ]

॥ * ॥ उक्तं वा ॥ * ॥

[उक्तं वा][1] ॥ किमुक्तम् ? ॥ 'सिद्धं तु षष्ठ्यधिकारे वचना'दिति । षष्ठ्यधिका[2]रेऽयं योगः कर्तव्यः 'स्थानेऽन्तरतमः षष्ठीनिर्दिष्टस्ये'ति ॥

(प्र०) उक्तं वेति । 'इको गुणवृद्धी' इत्यत्र । यत्र षष्ठी तत्रेदमुपतिष्ठते, तेनैकवाक्यतानेन सूत्रेण विधिवाक्यानामिति विधानकाल एवाऽन्तरतम आदेशो विधीयते ॥

(उ०) आनर्थक्यं परिहरति–उक्तं वेति । द्वितीयपक्षाद्भेदमुपपादयति–एकवाक्यतेनि । एवं चेतरस्याऽविधानमेवेति इष्टव्यवस्थासिद्धिरिति भावः । परे तु उत्पन्नानमनेन निवृत्तिर्लुगादिनेवेति भावः । एतदाशयमजानान आह–निर्वृत्तिर्न सिध्यतीति । तदभ्युपेत्य समाधत्ते–उक्तंवेति । भुक्तवतो भोजनफलतृप्तेर्जातत्वान्निषेधस्य वैयर्थ्येऽपि शास्त्रे वृद्धिरादैच्सूत्रभाष्योक्तशास्त्रप्रामाण्याल्लुगादिनेव जातनिवृत्तिरिति वाशब्देन सूचितमित्याहुः ॥

[ आक्षेपवार्तिकम् ]

॥ * ॥ प्रत्यात्मवचनं च ॥ * ॥

प्रत्यात्ममिति च वक्तव्यम् ॥

किं प्रयोजनम् ? ॥ यो यस्यान्तरतमः स तस्य स्थाने यथा स्यात्। अन्यस्याऽन्तरतमोऽन्यस्य स्थाने मा भूदिति ॥

(प्र०) प्रत्यात्ममिति । आत्मानमात्मानं प्रतीति समासः । स्थान्यात्मनोऽन्तरतम इत्यर्थः ॥

(उ०) आत्मानमिति । अनश्चेति टच् । स्थान्यात्मन इति । स्थानिपदार्थस्येत्यर्थः[3] ॥

[ समाधानवार्तिकम् ]

॥ * ॥ प्रत्यात्मवचनमशिष्यं, स्वभावसिद्धत्वात् ॥ * ॥

प्रत्यात्मवचनमशिष्यम् ॥ किं कारणम् ? ॥ 'स्वभावसिद्धत्वात्' । स्वभावत एतत्सिद्धम् । तद्यथा–'समाजेषु समाशेषु समवायेषु चाऽऽस्यता'मित्युक्ते न चोच्यते प्रत्यात्ममिति, प्रत्यात्मं चाऽऽसते ॥

(प्र०) स्वभावसिद्धत्वादिति । तुल्यन्यायतया सूत्रप्रत्याख्यानायैतदुक्तं[4] न तु संबन्धिशब्दत्वादिति । समाजेष्विति । समाज उत्सवेषु सङ्घातः । समाशः-सहभोजनम् । समवायः-कस्यांचित्क्रियायां मेलनम् ॥

(उ०) नन्वन्तरतमशब्दस्य सदृशार्थकत्वेन 'तुल्यास्यप्रयत्न'मित्यत्रेव संबन्धिशब्दत्वादिति कुतो नोक्तमत आह–तुल्येति । प्रत्यात्मं चासत इति । स्वस्वसमाजे[5]ष्वेवाऽऽसत इत्यर्थः । कस्यांचिदिति । धर्मनिर्णयादिक्रियायामित्यर्थः ॥

[ प्रत्याख्यानवार्तिकम् ]

॥*॥ अन्तरतमवचनं च ॥*॥

अन्तरतमवचनं चाऽशिष्यं । योगश्चाप्ययमशिष्यः ॥ कुतः ? ॥ 'स्वभावसिद्धत्वादेव' । तद्यथा–'समाजेषु समाशेषु समवायेषु चास्यता'मित्युक्ते नैव कृशाः कृशैः सहासते, न पाण्डवः पाण्डुभिः । येषामेव किंचिदर्थकृतमान्तर्यं तैरेव सहासते ॥ तथा[6] गावो दिवसं चरितवत्यो यो यस्याः प्रसवो भवति, तेन सह शेरते । तथा–यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति तान्यन्योन्यं पश्यन्ति[7] शब्दं कुर्वन्ति ॥

(प्र०) नैव कृशा इति । गुणप्रमाणकृतसादृश्यपरिहारेण विद्याद्यर्थकृतमान्तर्यं लोक आश्रीयत इत्यर्थः । एवमिहापि यदीयमर्थं यः शक्नोति वक्तुं तस्य स्थाने स एव भवति । गाव इति । तिरश्चामप्ययं व्यवहारः सङ्कीर्णानामसङ्करलक्षणः । एवं चोदनायां सङ्कीर्णा अप्यादेशा असङ्करेण प्रवर्त्स्यन्ति । तथा यानीति । यथा तत्र सादृश्याद्वर्गीभवनं विच्छिन्नसाहचर्याणामपि भवति तथा स्थान्या-

१ लुप्तं । २ षष्ठ्यधीति । षष्ठ्यधिकारे वर्तमानोऽयं योगो वक्ष्यमाणप्रकारेण व्याख्येय इत्यर्थः । तत्प्रकारमेवाह–स्थाने इति । स्थानस्य प्रसङ्गे विहितानामन्तरम एवेत्यर्थः ।

३ 'स्थानिरूपदार्थ' । ४ प्रत्याख्यानाय–प्रत्याख्यानमग्रे प्रतिपादयितुम् । ५ स्वस्वसमाजेष्वेवेति । तादृशसमाजादिष्वेवेत्यर्थः । ६ 'तद्यथा' । ७ 'मपश्यन्ति' ।

देशानां स्थानादिना सादृश्येन वर्गीभवनमित्यर्थः ।

(उ०) अर्थकृतान्तर्ये सति तदेव प्रयोजकमित्याह–गुणेत्यादि । पाण्डुत्वं–गुणः । कृशत्वादि-प्रमाणम् । विद्यादीति । आदिनोत्सवाश्रनाद्यर्थित्वब्राह्मणत्वादिजातिधनादिसङ्ग्रहः । एवंच 'अन्तरतमो भवती'ति 'यत्रानेकविध'मिति च न्यायसिद्धमिति भावः । दृष्टान्ते विवक्षितार्थमाह–सङ्कीर्णानामिति । भाष्ये प्रसवो–वत्सः । तेन सह–स्वस्वप्रसवेन सह । शेरत इति । शेतिः स्थितौ । एवं चोदनायामिति । अनया रीत्या विधिशास्त्रेऽपीत्यर्थः । 'युक्तक'शब्दो युग्मवाची । 'संघुष्टक'शब्दस्तत्तद्युगवहनादिनाऽत्यन्तपरिचितवाची । अनेनापि ग्रन्थेन 'यत्रानेकविध'मित्यर्थः साधित इत्याहुः । सादृश्यादिति । तत्तद्युगवहनाद्यत्र सादृश्यम् ॥

[ दृष्टान्तबाधकभाष्यम् ]

**एवं तावच्चेतनावत्सु ॥**

[ दृष्टान्ताऽन्तरभाष्यम् ]

**अचेतनेष्वपि । तद्यथा–लोष्टः क्षिप्तो बाहुवेगं[1] गत्वा नैव तिर्यग्गच्छति नोर्ध्वमारोहति पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः ॥ तथा–या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः । स आकाशदेशे[2] निवाते नैव तिर्यग्गच्छति नाऽवागवरोहति[3], अब्विकारोऽप एव गच्छत्यान्तर्यतः ॥ तथा ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितो[4] नैव तिर्यग्गच्छति नावागवरोहति । ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः॥**

(प्र०) अचेतनेष्वपीति । न्यायस्य व्याप्तिप्रतिपादनपरमेतत् । अब्विकार इति । अन्तरिक्षे सूक्ष्मः समुद्रोऽस्तीति तद्विकारः सर्वा आप इति काष्ठादिस्थानामपामग्निसंयोगाद्धूमो विकारः । सूर्यविकारोऽर्चिः सूर्यमेव गच्छति ।

(उ०) अन्तरिक्षे इति । अन्तरिक्षे भवा आन्तरिक्ष्यः । अत एव निदाघे निशि निरावरणे शयानानां शैत्योपलम्भः । तस्यैव च[5] रविकिरणसंपर्केण मेघरूपतया वायुयोगाद्वृष्टिः । आन्तरिक्ष्याणामपां परम्परया धूमो[6] विकार इति दर्शयति–तद्विकारः सर्वा इति । सूर्यविकार इति । अत एव दावाग्नेर्मध्याह्नादौ सूर्यकरसंपर्कात् क्रौर्यातिशयो दृश्यते ॥

[ दूषणवार्तिकम् ]

*॥*॥ व्यञ्जनस्वरव्यतिक्रमे च तत्कालप्रसङ्गः ॥*॥*

**व्यञ्जनव्यतिक्रमे स्वरव्यतिक्रमे च तत्कालता प्राप्नोति ॥ व्यञ्जनव्यतिक्रमे–इष्टम् उप्तम् । आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्याऽर्धमात्रिक इक् प्राप्नोति ॥**

(प्र०) लोकव्यवहाराश्रयेणेन[7] प्रत्याख्याते सूत्रे तदनाश्रयेण[8] योगारम्भे दोषमाह–व्यञ्जनेति । व्यतिक्रमः–स्थानित्वेन निवृत्तिः । इदमेव शास्त्रं निर्वर्तकमिति भावः ॥

(उ०) तदनाश्रयणेनेति । मन्दमध्यबुद्ध्यर्थः । ननु नाऽर्धमात्रिक इगित्यत आह–इदमेवेति कार्याः शब्दा इति दर्शने प्रमाणादिना तत्तदन्तरतमवर्णनिर्वर्तकमित्यर्थः । एवं च लोकवेदयोरभावेऽपि एतच्छास्त्रसिद्ध एव स इति भावः ॥

[ दूषणबाधकभाष्यम् ]

**नैव लोके न च[11][12] वेदेऽर्धमात्रिक इगस्ति॥ कस्तर्हि ? ॥**

**मात्रिकः ॥ योऽस्ति स भविष्यति ।**

(प्र०) नैव लोक इति । नित्याः शब्दा अन्वाख्यायन्ते, निर्वृत्तिपक्षेऽप्युच्चारणस्याऽशक्यत्वादिति भावः ॥

(उ०) यदुक्तम्–इदमेवेति, तत्राह–नित्या इति । निर्वृत्तिपक्षेऽपीति । 'शास्त्रकार्याः शब्दा' इति दर्शनेऽपीत्यर्थः । उच्चारणस्येति । तस्य लोकाधीनत्वादितिभावः ॥

[ दूषणान्तरभाष्यम् ]

**स्वरव्यतिक्रमे–दध्यत्र मध्वत्र कुमार्यर्थे[9] ब्रह्मबन्ध्वर्थमिति । आन्तर्यतो मात्रिकं[10] द्विमात्रिकस्यैको मात्रिको द्विमात्रिको वा[11] यण् प्राप्नोति ॥**

[ दूषणबाधकभाष्यम् ]

**नैव लोके न च[12] वेदे मात्रिको वा यणस्ति॥**

---

१ 'बहुवेगं' । २ 'आकाशे' । ३ 'नार्वाग' । ४ प्रज्वलतं' । ५ तस्यैव च–सूक्ष्मसमुद्रस्यैव च । ६ 'सधूमः' ।

७ 'श्रयेण' । ८ 'श्रयणेन' । ९ 'कुमार्यत्र' । १० 'मात्रिकस्य' । ११ क्वचिन्न । १२ 'नैव वेदे' ।

कस्तर्हि ? ॥ अर्धमात्रिकः ॥
योऽस्ति स भविष्यति ।

(प्र०) नैव लोक इति । कुक्कुटादिषु द्वे व्यञ्जने, न त्वेकं मात्रिकमिति भावः ॥

[ दूषणवार्तिकम् ]

॥ * ॥ *अक्षु चानेकवर्णादेशेषु* ॥ * ॥

अक्षु चाऽनेकवर्णादेशेषु तत्कालता प्राप्नोति । 'इदम इश्' । आन्तर्यतोऽर्धतृतीयमात्रिकस्येदमः स्थानेऽर्धतृतीयमात्रमिवर्णं प्राप्नोति ॥

(प्र०) अर्धतृतीयमात्रमिति । अत्वैकादेशयोः कृतयोरिश्भाव इति यदा प्रक्रियेति भावः ॥

(उ०) इदमस्त्रिमात्रिकत्वेनाऽर्धतृतीयमात्रिक इत्ययुक्तमत आह—अत्वेति । परत्वादत्वेऽन्तरङ्गत्वादेकादेशे इति भावः ॥

[ दूषणबाधकभाष्यम् ]

नैष दोषः । 'भाव्यमानेन सवर्णानां ग्रहणं ने' त्येवं न भविष्यति ॥

(प्र०) भाव्यमानेनेति । 'नैव लोक' इत्ययं परिहारो नोक्तः । यदा विशेषविहितत्वादत्वमिश्भावेन बाध्यते इति न्यायस्तदा त्रिमात्रस्य त्रिमात्रसंभवात्स्यादेव प्लुतः । प्लुताऽप्लुतप्रसङ्गे च 'प्लुतश्च विषये स्मृत' इत्युच्यते । अत्र तु प्लुतस्यैव प्राप्तिः ॥

(उ०) प्लुताप्लुतेति । तादृशस्थले हि सपादसप्ताध्यायीस्थेन प्लुतविधौ त्रिपादीस्थप्लुतस्याऽसिद्धत्वात्तद्विषयेऽप्यनेनैव प्लुतविधौ तदंशेऽनुवादत्वमन्यांशे विधित्वमिति शास्त्रस्य वैरूप्यापत्तिस्तद्बीजं । शास्त्रं त्वप्लुतविधानेन चरितो[1]ऽर्थमिति । प्लुतमात्रविधाने तु तद्विषयकलक्षणवैयर्थ्यापत्त्यांशेऽनुवादत्वकल्पना सोढव्यैव । सामर्थ्येनान्तरतमपरिभाषाबाधकल्पनापेक्षयाऽनुवादत्वस्य युक्तत्वाच्चेति भावः ॥

[ दूषणवार्तिकम् ]

॥ * ॥ *गुणवृद्धयेज्भावेषु च* ॥ * ॥

गुणवृ[2]द्ध्योज्भावेषु च तत्कालता प्राप्नोति । खट्वा-इन्द्रः खट्वेन्द्रः । खट्वा-उदकम् । खट्वोदकम् । खट्वा-ईषा खट्वेषा । खट्वा-ऊढा खट्वोढा । खट्वा-एलका खट्वैलका । खट्वा-ओदनः । खट्वौदनः । खट्वा-ऐतिकायनः, खट्वैतिकायनः । खट्वा-औपगवः खट्वौपगव इति । आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशाः प्राप्नुवन्ति ॥

(प्र०) खट्वेन्द्र इति । संज्ञयाऽत्र गुणवृद्ध्योर्भावनम् । संज्ञा च भिन्नकालानामपि स्यादिति 'भाव्यमानेने'ति परिहारस्यात्राऽसंभवः ॥

(उ०) संज्ञा चेति । कार्यकालपक्षेऽपि यथा भाव्यमानत्वाऽभावस्तथोपपादितं वृद्धिसंज्ञासूत्रे ॥

[ दूषणनिरासभाष्यम् ]

नैष दोषः । तपरे गुणवृद्धी ।

[ दूषणस्थापनभाष्यम् ]

ननु च तः परो यस्मात्सोऽयं तपरः ॥

[ दूषणबाधकभाष्यम् ]

नेत्याह । तादपि परस्तपर इति[3] ॥

[ आक्षेपभाष्यम् ]

यदि तादपि परस्तपरः, 'ऋदोर'बितीहैव स्यात्-यवः स्तवः । लवः पव इत्यत्र न स्यात् ॥

[ आक्षेपबाधकभाष्यम् ]

नैष तकारः ॥ कस्तर्हि ? ॥ दकारः ॥

[ आक्षेपस्थापनभाष्यम् ]

किं दकारे प्रयोजनम् ? ॥

[ प्रतिबन्द्या समाधानभाष्यम् ]

अथ किं तकारे ? ॥ यद्यसन्देहार्थस्तकारो, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपि ॥

[ दूषणवार्तिकव्याख्याशेषभाष्यम् ]

एज्भावे—कुर्वाते कुर्वाथे । आन्तर्यतोऽर्धतृतीयमात्रस्य टिसंज्ञकस्याऽर्धतृतीयमात्र एँ[4]ः प्राप्नोति ॥

(प्र०) एज्भाव इति । प्रत्याहारः 'पूतक्रतोरै च' 'मनोरौ वा' इत्यादिसंग्रहार्थः । तत्र हि मात्रिक एवैकार औकारश्च स्यात् ॥

१ अस्य क्तेः—अग्रे 'भाव'इत्यनेनान्वयः ।

२ 'वृद्धयोरेज्भा' । ३ क्वचिन्न । ४ 'एच्' ।

(उ०) प्रत्याहार इति । 'वार्तिके गुणवृद्धयेज्भावेषु' इति द्वन्द्वो, न तु कर्मधारयः, भाष्यविरोधादिति भावः। तत्र हीति। प्रमाणत आन्तर्यादिति भावः ॥

[ दूषणोद्धारभाष्यम् ]

नैव लोके न च वेदेऽर्धतृतीयमात्र ए[1]रस्ति ॥

[ शङ्कावार्तिकम् ]

॥ * ॥ *ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गोऽविशेषात्* ॥ * ॥

ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गः। [सर्वगुणवृद्धिप्रसङ्गः] सर्वे गुणवृद्धिसंज्ञका ऋवर्णस्य स्थाने प्राप्नुवन्ति ॥

किं कारणम् ? ॥ 'अविशेषात्' । नहि कश्चिद्विशेष उपादीयते–एवंजातीयको गुणवृद्धिसंज्ञक ऋवर्णस्य स्थाने भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ॥

(प्र०) ऋवर्णस्येति । अ[3]त्र ह्रस्वस्याऽकार एव गुणः स्यात्स चेष्यत एव । दीर्घस्य त्वेङौ स्यातां, तुल्यप्रमाणत्वात् । तथा ह्रस्वस्य दीर्घस्य च सर्वे वृद्धिसंज्ञकाः प्राप्नुवन्ति । समुदायापेक्षया तु सर्वप्रसङ्ग इत्युच्यते ॥

(उ०) नन्वेवं ह्रस्वे सर्वगुणप्रसङ्गस्याऽनुपपादनाद्वर्णमात्रे सर्वप्रसङ्ग इत्यनुपपन्नमत आह-समुदायापेक्षयेति। ऋवर्णीयह्रस्वादिसमुदायापेक्षयेत्यर्थः ॥

[ समाधानवार्तिकम् ]

॥ * ॥ *न वा ऋवर्णस्य स्थाने रपरप्रसङ्गादवर्णस्यान्तर्यम्* ॥ * ॥

न वैष दोषः ॥ किं कारणम् ? ॥ 'ऋवर्णस्य स्थाने रपरप्रसङ्गात्' । उः स्थानेऽण्प्रसज्यमान एव रपरो भवतीत्युच्यते । तत्र ऋवर्णस्यान्तर्यतो रेफवतो रेफवानकार एवान्तरतमो भवति ॥

(प्र०) नवेति। 'उरण्रपर' इत्यनेन गुणवृद्धिशास्त्रस्यैकवाक्यतायां विधीयमान एवाऽण् रपरो भवतीति र[4]श्रुतेरुः स्थानेऽरारौ क्रियमाणौ गुणवृद्धी भवत इत्यर्थः ॥

(उ०) गुणवृद्धिशास्त्रस्येति । प्रति[5]लक्ष्यं लक्षणभेदाद्वर्णविषयगुणादिशास्त्रस्येत्यर्थः । अङ्गाऽन्त्यस्यैक ऋवर्णस्य रपरोऽण्रूपो गुण इति वाक्यार्थ इति भावः । 'रश्रुते' रित्यनेनैकदेशद्वारा स्थानत आन्तर्यमुक्तम् ॥

[ शङ्कावार्तिकम् ]

॥ * ॥ *सर्वादेशप्रसंगस्त्वनेकाल्त्वात्* ॥ * ॥

सर्वादेशस्तु गुणवृद्धिसंज्ञक ऋवर्णस्य प्राप्नोति ॥ किं कारणम् ?॥ 'अनेकाल्त्वात्'। 'अनेकाल्शित्सर्वस्ये'ति ॥

(प्र०) सर्वादेश इति । ॠवर्णस्य स्थानेऽरारौ क्रियमाणावलोऽन्त्यस्येत्येतद्बाधेनाऽनेकाल्त्वात्सर्वादेशौ प्राप्नुतः ॥

(उ०) ऋवर्णस्येति । ऋवर्णान्ताङ्गस्येत्यर्थः । सर्वादेशाविति । त[6]त्त्वेऽपि समुदायान्तर्वर्तित्वादृवर्णस्य तदा[7]देशत्वमपि खट्वर्श्यं इत्यादाविव वक्तुं शक्यमिति भावः ॥

[ समाधानवार्तिकम् ]

॥*॥ *न वाऽनेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्याऽविघातः* ॥*॥

न वैष दोषः ॥

किं कारणम् ?॥ 'अनेकाल्त्वस्य तदाश्रयत्वात्'। यदायमुः स्थाने[ऽण्] तदायमनेकाल्, अनेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्य विघातो न भविष्यति ॥

(प्र०) नवेति । 'अङ्गस्ये'ति षष्ठी पूर्वमेवाऽन्त्यमि[8]त्यनुसंह्रियते । ततश्च ऋवर्णस्य स्थानित्वे विज्ञातेरपरत्वमानुपूर्व्या सिद्धत्वात् पूर्वप्रवृत्तमलोऽन्त्यस्येत्ये[9]त्युपसंहारं न बाधत इत्यर्थः ॥

(उ०) पूर्वमेवेति । अन्यथा ऋवर्णस्थानिकत्वाऽभावाद्रपरत्वमेव न स्यात् । न च समुदायान्तःपातिऋकाराश्रयेण रपरत्वम् । प्रत्यक्षे ऋवर्णस्थानित्वे चरितार्थस्याऽनुमानिके प्रवृत्त्ययोगात् । खट्वर्श्यं इत्यादौ तु 'पूर्वपरयो'रित्यधिकारात् प्रत्यक्षमेव स्थानित्वमिति भावः । पूर्व-

1 'एजरित' । २ कचिन्न । ३ अत्र–एषां गुणादीनां मध्ये । ४ 'रश्रुतिस्थाने' । ५ यथाश्रुतेऽन्यत्रानिष्टापत्तेराह–प्रतीति। रश्रुतेरिति बहुव्रीहिः। ६ सर्वादेशत्वेपीत्यर्थः। ७ तदादेशत्वम्-ऋवर्णादेशत्वम्। ८'मुपसं'। ९'त्यनुसंहारं'।

**प्रवृत्तमिति** । उपजीव्यं चेत्यपि बोध्यम् । **न बाधत** इत्यत्रऽनेकाल्शित्सर्वस्येति सूत्रं कर्तुं ॥

[ समाधानान्तरभाष्यम् ]

*॥[*॥ अनान्तर्यमेवे वैतयोरान्तर्यम् ॥*]॥*

**अथवाऽनान्तर्यमेवैतयोरान्तर्यम्। एकस्याप्यन्तरतमा प्रकृतिर्नास्ति, अपरस्याप्यन्तरतम आदेशो नास्ति, एतदेवैतयोरान्तर्यम्॥**

(प्र०) **अथवेति** । निर्वृत्तस्याऽणो रपरत्वविधानेऽपि न दोष इत्यर्थः । **अनान्तर्यमेवेति** । नहि स्थानार्थगुणप्रमाणकृतमेवान्तर्यं परिभाषितं, रूपान्तरेणापि सादृश्यसंभवात्परिग्रहाच्चेति भावः ॥ ऋवर्णस्य मात्रिकस्य मात्रिकोऽकारो गुणोऽन्तरतमोऽस्त्येवेति चेत् । तदर्थस्य प्रयत्नस्याऽकरणाददोष एव । दीर्घस्य तुल्यप्रमाणंत्वादेकारौकारावन्तरतमौ स्त इति चेत् । भवेदेतद्यदा भेदापेक्षा क्रियते । ऋवर्णमात्रस्य ह्रस्वाद्यवान्तरभेदानपेक्षायां स्थानकृतमान्तर्यं न केनचिदस्तीत्यनान्तर्यमेवेत्याद्युक्तम् ॥

(उ०) रेफवतो रेफवानन्तरतम एवेति अथवेत्ययुक्तमत आह–**निर्वृत्तस्येति** । **परिग्रहाच्चेति** । 'पाददन्त' त्यादौ स्थान्यादेशभावमते वर्णसाम्यकृतस्येति भावः । सदृशसंबन्ध्यभाववत्त्वमुभयोः साधारणधर्मरूपं सादृश्यमिति तात्पर्यम् । **यत्नस्येति** । परिहारान्तराभिधानरूपस्येत्यर्थः । **स्थानकृतमिति** । **अनान्तर्यमिति** भाष्यस्य स्थानकृतान्तरतमाऽभाव इत्यर्थः ॥

[ समाधानान्तरवार्तिकम् ]

*॥*॥ संप्रयोगो वा नष्टाश्वदग्धरथवत् ॥*॥*

**अथवा नष्टाश्वदग्धरथवत्सह संप्रयोगो भवति । तद्यथा-'तवाऽश्वो नष्टो ममापि रथो दग्धः, उभौ संप्रयुज्यावहै' इति । एवमिहापि—'तवाप्यन्तरतमा प्रकृतिर्नास्ति, ममाप्यन्तरतम आदेशो नास्ति, अस्तु नौ संप्रयोगः' इति ॥**

(प्र०) **सम्प्रयोगो वेति** । यदा 'स्थानेऽन्तरतम' इत्येतत्प्रत्याख्यातमित्यर्थः ॥

(उ०) **नष्टाश्वदग्धरथवदिति**–बहुव्रीहिगर्भद्वन्द्वादतिः । पूर्वोक्तेनाऽथवेत्यनेन पौनरुक्त्यं परिहरति–**यदेति** ॥ केचित्तु–"तत्प्रत्याख्यानेऽपि लोकन्यायेन सदृश एवादेश इत्यर्थः साधितो भगवतेति प्रत्याख्यानाऽप्रत्याख्यानयोः को विशेषस्तस्मादनान्तर्यं स्याऽभावरूपस्य सादृश्यत्वाऽनङ्गीकारेऽप्याह–**नष्टाश्वेति** । ऋवर्णस्य स्थानित्वेनाऽवर्णस्यादेशत्वेन ग्रहणसामर्थ्यादसादृश्येऽपि स्थान्यादेशभावः । यथा नष्टाश्वदग्धरथयोरत्यन्तभिन्नयोरपि असदृशयोरपि संप्रयोग इति तात्पर्यं"मित्याहुः ॥

[ एतत्समाधानबाधकभाष्यम् ]

**विषम उपन्यासः । चेतनावत्स्वर्थात्प्रकरणाद्वा लोके संप्रयोगो भवति । वर्णाश्च पुनरचेतनाः, तत्र किंकृतः संप्रयोगः ? ॥**

[ समाधानस्थापनभाष्यम् ]

**यद्यपि वर्णा अचेतना यस्त्वसौ प्रयुङ्क्ते स चेतनावान् ॥**

[ आक्षेपवार्तिकम् ]

*॥*॥ एजवर्णयोरादेशेऽवर्णं, स्थानिनोऽवर्णप्रधानत्वात् ॥*॥*

**एजवर्णयोरादेशेऽवर्णं प्राप्नोति । खट्वैलका मालौपगवः ॥**

**किं कारणम् ? ॥ "स्थानिनोऽवर्णप्रधानत्वात्" । स्थानी ह्यत्राऽवर्णप्रधानः ॥**

(प्र०) **अवर्णप्रधानत्वादिति** । इममेव हि न्यायमाश्रित्योक्तमैचोश्चोत्तरभूयस्त्वादिति ।

(उ०) **प्रधानत्वं**–भूयस्त्वेन ॥

[ समाधानवार्तिकम् ]

*॥*॥ सिद्धं तूभयान्तर्यात् ॥*॥*

**सिद्धमेतत् ॥**

**कथम् ? ॥ उभयोर्योऽन्तरतमस्तेन भवितव्यम् । न चावर्णमुभयोरन्तरतमम् ।**

(प्र०) **उभयान्तर्यादिति** । ह्रस्वशासने ह्यैचः समुदायान्तरतमाभावादैचोश्चेत्युक्तम् । इह तु संभवत्येव स्थानेन समुदायान्तरतम इत्यर्थ ।

---

१ इदं वार्तिकं लुप्तं स्यादिति मन्नहे । व्याख्याभागस्य दर्शनात् । २ अपिः क्वचिन्न । ३ 'यत्न' । ४ **वर्णसाम्यकृतस्य** = वर्णसाम्यकृतस्यान्तरतम्यस्य ।

५ **सादृश्यम्** = आन्तर्यम् । इदं च प्राचां मते इत्यवधेयम् ।

६ क्वचिन्न । ७ **न्यायं** = दृष्टान्तम् ।

(उ०) भूयस्त्वेन्यायस्तर्हि केत्यत आह–ह्रस्वेति ॥

—•—

## उरण् रपरः ॥ १ । १ । ५० ॥

[ प्रश्नभाष्यम् ]

**किमिदमुरण्रपरवचनमन्यनिवृत्त्यर्थम्-'उः स्थानेऽणेव भवति रपरश्चे'ति । आहोस्विद्रपरत्वमात्रमनेन विधीयते–'उः स्थानेऽण् चाऽनण् च । अण् तु रपरः' इति ? ॥**

(प्र०) उरण् । किमिदमिति । षष्ठीप्रकरणाद्यत्र षष्ठी तत्रेदमुपतिष्ठते । तत्र किमादेशान्तराणां बाधकमणं निर्वर्तयति, तस्य च वा[2]क्यभेदेन रपरत्वम् । आहोस्विद्रपरत्वमात्रमनेन क्रियते–'उः स्थाने लक्षणान्तरेण निष्पन्नो योऽण् स रपर'इति प्रश्नः । तत्र[3] केषांचित्पाठो'ऽण् भवति रपरश्चे'ति । तत्रा[4]ऽपूर्वोऽण् विधीयमान आदेशान्तराणां बाधकः । अन्येषां तु पाठो'ऽणेव भवती'ति । तत्र सामर्थ्याच्चाऽन्यनिवृत्तिः । सैवैवकारेण प्रदर्श्यते ॥

(उ०) उरण्र । भाष्ये–**उरण्रपरवचनमिति** सूत्रस्थविसर्गप्राग्भागानुकरणेन षष्ठोसमासः । नन्वन्यशब्देन न स्थानी, आदेशस्य स्थानिनिवर्त्तकत्वस्वभावत्वात् । न स्थानिव्यतिरिक्तः, 'उर'णित्येतावतः स्थानिव्यतिरिक्तनिवर्त्तने सामर्थ्याऽभावादत आह–**षष्ठीति** । यत्र षष्ठ्या ऋवर्णस्यादेशप्रसक्तिस्तत्रेत्यर्थः । स्वातन्त्र्येणाऽस्य विधायकत्वं तु–'इको गुणवृद्धी'इत्यत्र भाष्ये एव निराकृतम् । त[5]त्र यद्यन्यनिवृत्त्यर्थत्वं नियमाकत्वेन, तदा '**अथ मतमेत**'दिति वक्ष्यमाणस्य विशेषो न स्यादत आनुषङ्गिकं तदित्याह–**तत्रेति** । **अपूर्व इति** । वाक्य[6]भेदेन–ञ्नित्यादिरुदात्तो भवति, ऋवर्णस्य त्वण् भवति, स च रपरः' इत्यर्थ इति भावः । **तत्र सामर्थ्यादिति** । विशेषविधेः सामान्यविधिबाधकत्वेनेत्यर्थः । न तु वाच्यवृत्त्याऽस्य नियमपरत्वमिति भावः ॥

**कश्चाऽत्र विशेषः ? ॥**

*॥ * ॥ उरण्रपरवचनमन्यँनिवृत्त्यर्थं चेदुदात्तादिषु दोषः ॥ * ॥*

**उरण्रपरवचनमन्यनिवृँत्त्यर्थं चेदुदात्तादिषु दोषो भवति ॥ के पुनरुदात्तादयः?॥ उदात्तानुदात्तस्वरितानुनासिकाः । कृतिः, कृतं हृतम्, प्रकृतं प्रहृतम्, नॄँ पाहि ॥**

(प्र०) उदात्तादिष्विति । अन्तरतमस्य बाधकोऽण् प्रसज्येतेति[7] भावः । स चोदात्तादिगुणो न वेति सर्वथा दोषः । नॄँः पाहीति । यद्यप्यस्मिन् पक्षे पूर्वसवर्ण ॠकारो न लभ्यते, तथापि 'नॄन् पे' इति निपातनाद्भवति । नकारस्य तु रुत्वे कृतेऽनुनासिको विधीयमानोऽणेव स्यान्न तु ॠकार इति दोषः । प्रतिपदविहितैरित्त्वोत्त्वादिभिरयं हि बाध्यत इति तेषां रपरत्वं न स्यात् ॥

(उ०) **स चोदात्तादिगुण इति** । अत्र पक्षेऽनन्तरस्येति न्यायेनाऽन्तरतमपरिभाषाया अनेन बाध इति भावः । **नवेति** । यत्रोपस्थितिस्तद्विधेयस्य बाध इत्यभिमानः । भाष्ये **कृतिर्नित्स्वरेणाद्युदात्तः** । **कृतमित्यत्र** प्रत्ययस्वरेणान्तोदात्तत्वे शेषनिघातेन ऋकारोऽनुदात्तः । **प्रकृते**–'गतिरनन्तर' इति पूर्वपदप्रकृतिस्वरे शेषनिघाते '**उदात्तादनुदात्तस्ये**'ति स्वरितत्व[8]म् । **उच्चैरुदात्त** इत्यादिषु षष्ठ्यन्तमच इत्यनुवर्त्तत इति पक्षे 'ञ्नित्यादि'रित्यादावच इत्युपस्थितेः षष्ठीसद्भावादुरणित्यस्योपस्थानमिति द्रष्टव्यम् । नियमपक्षे वक्ष्यमाणदोषमत्राप्याकृष्य दर्शयति–**प्रतिपदेति** । **तेषामिति** । प्रत्यासत्त्योरणित्यनेन विधीयमानस्याऽणो विधीयमानमितिशेषः ॥

[ द्वितीयपक्षाभ्युपगमभाष्यम् ]

**अस्तु तर्ह्युः स्थाने अण् चाऽनण् च । अण् तु रपर इति ।**

[ द्वितीयपक्षदूषणवार्तिकम् ]

*॥ * ॥ य उः स्थानेऽण् स रपर इति चेद्गुणवृद्ध्योरवर्णाऽप्रातिपात्तिः ॥ * ॥*

**य उः स्थाने अण् स रपर इति चेद्गुणवृद्ध्योरवर्णस्याऽप्रतिपत्तिः । कर्ता हर्ता वा[9]र्षगण्यः ॥**

(प्र०) गुणवृद्ध्योरिति । भूतस्य चेदणो रपरत्वं क्रियते, तदा तु गुणवृद्धिविधावणेव दुर्लभ इति दोषः ॥

(उ०) **दुर्लभ इति** । ह्रस्वस्य गुणाऽकारलाभेऽपि दीर्घस्याकारगुणाऽलाभः, वृद्धिस्तु नियमेनाऽण् न लभ्यते

---

१ कश्चिन्न । २ एकत्र विधेयद्वयाऽसंभवादाह **वाक्येति** । ३ **तत्र**–अन्यनिवृत्त्यर्थे । ४–**तत्र**=तत्रोपस्थितौ सत्याम् । ५ **तत्र**–तथा सति । ६ शेषपूरणेन योजनामाह–**वाक्येति** ।

७ 'मितिचेत्' पा० । ८ 'प्रसज्यते इति' । ९ **वार्षेति** । वृषगणस्यापत्यं वार्षगण्यः । ८ **स्वरितत्वम्**–ऋकारस्य स्वरितत्वम् ।

इत्यर्थः। कर्तेत्याद्युदाहरणं भाष्ये दीर्घान्तस्याप्युपलक्षणम् ॥

[ द्वितीयपक्षदूषणभाष्यम् ]

**किं हि साधीयः-ऋवर्णस्याऽसवर्णे यद्वर्णं स्यान्न पुनरेङैचौ ? ॥**

(प्र०) किं हि साधीय इति। किं साधुतरं कारणमित्यर्थः। न पुनरिति। ततश्चाऽवर्णस्यैव नियमेनाऽप्रतिपत्तिरिति व्याख्येयम् ॥

(उ०) किमित्यस्य[1] विशेष्यमाह-**कारणमिति**। भाष्ये असवर्णे। सदृशाऽभावे इत्यर्थः। ननु नियामकाऽभावे कदाचिदवर्णस्यापि प्रतिपत्तौ कथमवर्णाऽप्रतिपत्तिरत आह-ततश्चेति ॥

[ द्वितीयपक्षवादिभाष्यम् ]

**पूर्वस्मिन्नपि पक्षे एष दोषः। किं हि साधीयस्तत्रापि ऋवर्णस्याऽसवर्णे यद्वर्णं स्यान्न पुनरिवर्णो[2]वर्णौ ॥**

[ आद्यपक्षवादिभाष्यम् ]

**अथ मतमेतत्-'उः स्थानेऽणश्चानणश्च प्रसङ्गेऽणेव भवति रपरश्चे'ति, सिद्धा पूर्वस्मिन् पक्षेऽवर्णस्य प्रतिपत्तिः ॥**

(प्र०) अथ मतमिति। स एव पक्षाक्षेपवाद्याह। नानेनाऽन्येषां बाधकोऽपूर्वोऽण् विधीयते, किंत्वणनणोः प्रसङ्गेऽणेव भवतीति नियमः क्रियते, स च रपरः। न च गुणवृद्धिप्रसङ्गे इकारोकारयोः[3] प्राप्तिः ॥

(उ०) दोषपरिहारायाऽऽक्षेपवाद्येवान्यनिवृत्त्यर्थ[4]मित्यस्य नियमपरतया व्याख्यानमाशङ्क्य दूषयति भाष्ये-**अथ मतमिति। एतत्**-वक्ष्यमाणं नियमरूपत्वमन्यनिवृत्त्यर्थमिति वदतो, **मतं**-संमतं विवक्षितमित्यर्थः। **सिद्धा पूर्वस्मिन्निति**। अन्यनिवृत्त्यर्थमिति पक्षे[5] इत्यर्थः। **स चेति**। वाक्यभेदेनेत्यर्थः। नन्वेवमिकारोकारावपि स्याताम् अत आह-**नच गुणेति** ॥

[ आक्षेपभाष्यम् ]

**यत्तु तदुक्तम्[6]-'उदात्तादिषु दोषः' इति, स इह दोषो जायते, न जायते ? ॥**

(प्र०) **यत्तु तदुक्तमिति**। किं भवान्मन्यत इति विचारयति ॥

(उ०) **भवानिति**। नियमपक्षवादीत्यर्थः ॥

[ समाधानभाष्यम् ]

**जायते स दोषः ॥ कथम् ? ॥ उदात्त-इत्यनेनाणोऽपि प्रतिनिर्दिश्यन्ते, अनणोऽपि॥**

(प्र०) स एव युक्तियुक्तं पक्षं गृह्णाति-**जायत इति** ॥

(उ०) **स एवेति**। विचारक एवेत्यर्थः ॥

[ समाधानबाधकभाष्यम् ]

**यद्यपि-[अ[7]णोऽपि] प्रतिनिर्दिश्यन्ते न तु प्राप्नुवन्ति ॥ किं कारणम् ? ॥ स्थानेऽन्तरतमो भवतीति ॥**

(उ०) शङ्कते भाष्ये-**यद्यप्यणोपीति** ॥

[ समाधानस्थापकभाष्यम् ]

**कुतो नु खल्वेतत्-द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः 'स्थानेऽन्तरतमः' इति 'उरण् रपरः' इति च, 'स्थानेन्तरतम' इत्यनया परिभाषया व्यवस्था भविष्यति, न पुनरुरण् रपर इति ? ॥**

**अतः किम् ? ॥**

**अत एव दोषो जायते-'उदात्तादिषु दोषः' इति ॥**

(प्र०) कुतो नु खल्विति। अन्तरतमपरिभाषाया अवकाशो'ऽकः सवर्णे दीर्घः','झयो होऽन्यतरस्या'मिति। 'उरण् रपर' इत्यस्यावकाशः-कर्ता हर्त्तेति। इहोभयं प्राप्नोति-कृतिरिति। परत्वादियमेव प्राप्नोतीति दोषः ॥

(उ) परिहरति-**कुतो न्विति**। तमब्ग्रहणसहितस्याप्यवकाशप्रदर्शनाय **'झयो ह'** इत्युक्तम्। **उरण रपर इत्यस्यावकाश इति**। गुणविधौ **'स्थानेन्तरतम'**परिभाषानुपस्थितिः ऋवर्णसमुदायान्तरतमगुणाऽभावादितिभावः। यद्यपि भाष्याद्विनिगमनाऽभावो लभ्यते, तथापि 'एष दोषो जायत'इत्युत्तरग्रन्थाऽसङ्गतेर्विनिगमकं प्रदर्श्यान्तरतमपरिभाषाऽवृत्तिमुपपादयति-**परत्वादिति** ॥

[ दोषान्तरप्रदर्शनभाष्यम् ]

**ये चाप्येते ऋवर्णस्य स्थाने प्रतिपद-**

१ अस्य 'तदंशे साकाङ्क्षत्वा'दिति शेषः। २ 'रिकारोकारौ' ३ 'इकारोकारप्रसङ्गः'। ४ **इत्यस्य**-आद्यवार्तिकोक्तस्य। ५ **इतिपक्षे**-इत्यभिमतनियमपक्षे। ६ **तदुक्तमिति**-तस्मिन्पक्ष उक्तमित्यर्थः। ७ क्वचिन्न।

मादेशा उच्यन्ते, तेषु रपरत्वं न प्राप्नोति- 'ऋत इद्धातोः' 'उदोष्ठ्यपूर्वस्ये'ति ।

(प्र०) ये चाप्येत इति । यत्र ह्यनियमप्रसङ्गस्तत्राऽनेन नियोगः क्रियते, तत्र तच्छेषभूतं रपरत्वं भवति न त्वन्यत्र प्रतिपदविधाविति दोषः[1] ॥

(उ०) ननु प्रतिपदविहिता अप्यण एवेति कुतो रपरत्वाऽप्राप्तिरत आह-**यत्रहीति** । 'ग्रो यङी'ति लत्वविधानादाद्वृत्या तेषामपि रपरत्वमिति चेत्, ऋकारान्तर्गतरेफस्य लत्वार्थं तत्स्यादिति न दोषः[2] । भाष्ये-**येचाप्येत इति** बहुवचनेनाऽऽक्षिप्यधामिति ईत्वसङ्ग्रहः ॥

[ समाधानवार्तिकम् ]

॥ * ॥ *सिद्धं तु प्रसङ्गे रपरत्वात्* ॥ * ॥

**सिद्धमेतत् ॥ कथम्? ॥ 'प्रसङ्गे रपरत्वात्' । उः स्थाने अण् प्रसज्यमान एव रपरो भवतीति[3] ॥**

(प्र०) सिद्धं त्विति । विधिवाक्यैरस्यैकवाक्यतायां विधानकाल एवाऽणो रपरत्वं[4] क्रियत इत्यर्थः॥

(उ०) विधीति। ऋवर्णस्थानिकाऽण्विधिवाक्यैरित्यर्थः । **एकवाक्यतायामिति** । वाक्यैकवाक्यतायामित्यर्थः ।

[ आक्षेपतत्समाधानभाष्यम् ]

**किं वक्तव्यमेतत्? ॥ नहि ॥ कथमनुच्यमानं गंस्यते? ॥ स्थान इति वर्तते । स्थानशब्दश्च प्रसङ्गवाची ॥**

[ आक्षेपभाष्यम् ]

**यद्येवमादेशोऽविशेषितो भवति ॥**

(प्र०) यद्येवमिति । नह्यनेनोः स्थानेऽण् विधीयतेऽपि तु लक्षणान्तरेण । तत्र विध्यङ्गभूता 'षष्ठी स्थानेयोगे'ति परिभाषा नोपतिष्ठते । तथा चोदीचामातः स्थाने यकपूर्वाया इत्यत्र स्थानग्रहणं कृतम्। तत उः समीपे योऽण् तस्यापि रपरत्वप्रसङ्ग इति स्थानग्रहणाऽनुवृत्त्या 'उः स्थाने य आदेशोऽणि'त्येतावल्लभ्यते, न तु प्रसज्यमान इति । आदेश इति । प्रसज्यमानत्वेनेत्यर्थः । अथ वा स्थानग्रहणानुवृत्त्या प्रसज्यमान इत्येषोऽर्थो लभ्यते, नतुः स्थान इति । ततश्चाऽण आदेशरूपतानियमेन न लभ्यत इति सामीप्य[6]लक्षणोऽपि संबन्धोऽवगम्येतेत्यर्थः ।

(उ०) ननु 'उ'रिति षष्ठ्याः स्थानेयोगत्वस्य लाभः स्यादत आह-**नहीति** । एवं चाऽयमनुवाद इति भावः । **विध्यङ्गेति**। विधेयेन साक्षाद्यत्र संबन्धस्तत्र सा परिभाषेत्यर्थः । 'उदात्तस्वरितयोर्यणो' 'लः परस्मैपद'मित्यादावनुवादेऽप्यस्याः प्रवृत्तेर्यद्येवमित्यादिभाष्यमेकदेशिनोक्तिरिति बोध्यम् । **उःसमीप इति** । तथा च तृतीय इत्यादावप्यणो रपरत्वप्राप्तिरित्यर्थः । सामीप्यं चेषद्व्यवहितेऽपीतिभावः ।

**स्थाने य आदेशोऽणिति**। अनुवर्तमानस्थानेग्रहणमुरित्यस्य संबन्धिशब्दत्वात्तत्रैव संबध्येतेत्यर्थः। नन्वेवमादेशः स्थानेन विशेषित एवेति **'आदेशोऽविशेषित'** इति भाष्याऽसङ्गतिरित्यत आह-**प्रसज्यमानत्वेनेति । अथवा स्थानेति** । 'स्थान'शब्दस्य प्राधान्याद्रपर इत्यनेन संबन्ध इति भावः । **तत[7] इति** । अणः स्थाने-पदार्थेनाऽविशेषणादित्यर्थः । एवं च[8] नादेऽऽशान्तराणां बाधकोऽण्विधीयते, नापि नियमः, नापि विहितस्य रपरत्वं, प्रसज्यमानत्वेन विशेषणात् । किं तु तत्तद्विधिभिर्वाक्यैकवाक्यतैवाऽस्येति बोध्यत इति बोध्यम्। **अथवेति** । स्थानपदेन प्रसङ्गकालो लक्ष्यत इति भावः ॥

[ समाधानभाष्यम् ]

**आदेशश्च विशेषितः ॥ कथम्? ॥ द्वितीयं स्थानग्रहणं प्रकृतमनुवर्तते । तत्रैवमभिसंवन्धः करिष्यते-उः स्थाने अण् स्थान इति । उः प्रसङ्गेऽण् प्रसज्यमान एव रपरो भवति ॥**

(प्र०) द्वितीयमिति । तच्चाऽर्थात् प्रथमान्तं संपद्यते । अथ वा सप्तम्यन्त एव तस्मिन्नयमर्थो भवति-प्रसङ्ग एवाऽत्राऽण् रपरो भवतीति । इदानीमुदात्तादिषु दोषो नास्ति, 'स्थानेन्तरतम' इत्यनया परिभाषया कृतिरित्यादावृकारस्य ऋकारएव प्रवर्तत इत्यणः प्रसङ्ग एव नास्ति । गुणवृद्धी च ऋकारस्य विधीयमाने अरारावेवान्तरतम्याद्भवत इत्यवर्णप्रतिपत्तिरप्यस्ति ॥

(उ०) **ऋकार एवेति** । स्थानतः प्रमाणतः स्वरूपतश्च सदृशत्वादिति भावः ॥

---

१ दोषः-रपरत्वादिप्राप्तिरूपो दोषः । २ न दोषः=न भाष्यासङ्गतिः। ३ इतिः क्वचिन्न। ४ रपरत्वं=रपरत्वमात्रम्। ५ क्वचिन्न । ६ 'समीप' । ७ तत इति। तदनुपस्थितेरित्यर्थः । ८ एवंचेति । तथाऽर्थलाभे चेत्यर्थः ।

[ आक्षेपभाष्यम् ]

**अथाऽण्ग्रहणं किमर्थं, न 'ऊ रपर' इत्येवोच्येत ? ॥**

[ जिज्ञासाभाष्यम् ]

**'ऊ रपर' इतीयत्युच्यमाने क इदानीं रपरः स्यात् ? ॥**

[ जिज्ञासासमाधानभाष्यम् ]

**य उः[1] स्थाने भवति ? ॥**

**कश्च उः स्थाने भवति ? ॥ आदेशः ॥**

[ समाधानवार्तिकम् ]

*॥ * ॥ आदेशो रपर इति चेद्रीरिविधिषु रपरप्रतिषेधः ॥ * ॥*

**'आदेशो रपर' इति चेद्रीरिविधिषु रपरत्वस्य प्रतिषेधो वक्तव्यः ॥ के पुना रीरिविधयः ? ॥ अकङ्लोपाऽऽनङनङ्-रीङ्रिङादेशाः ॥**

**अकङ्-सौधातकिः । अकङ्[2] ॥**

**लोप-पैतृष्वस्रेयः । लोपे[2] ॥ आनङ्-होतापोतारौ । आनङ्[2] ॥ अनङ्-कर्ता हर्ता । अनङ्[2] ॥ रीङ्-मात्रीयति पित्रीयति । रीङ्[2] ॥ रिङ्-क्रियते ह्रियते । रिङ्[2] ॥**

( प्र० ) **रीरिविधिष्विति** बहुवचननिर्देशाद्रीरिशब्दावुपलक्षणमिति पृच्छति-के पुनरिति । **पैतृष्वसेय इति ।** लोपवचनं तु सर्वादेशार्थं स्यात् । **होतापोताराविति ।** रेफस्य संयोगान्तलोपे कृते तस्याऽसिद्धत्वान्नलोपो न स्यात् ॥

**(उ०)** ननु वार्तिकोक्तरीरिविध्योर्ज्ञातत्वात्तस्य चोपलक्षणत्वे प्रमाणाऽभावात् **'के पुन'**रिति प्रश्नानुपपत्तिरत आह-**बहुवचनेति । सौधातकौ**-'सुधातुरकङ्चे'ति इञ् । **पैतृष्वसेये**-ढकि लोपस्तत एव ढक्च । ननु लोपस्य रपरत्वे तं विनाऽपि यणादेशेन तत्साध्यरूपसिद्धिरत आह-**लोपेति ।** रपरत्वाऽभिधानमुखेन सर्वादेशत्वमेव लोपस्याऽभिधित्सितमिति भावः । यदि सर्वादेशो लोपस्तदा उः स्थाने नेति कथं रपत्वमितीदं चिन्त्यम् । तस्माल्लोपविधिवैयर्थ्यापादनमेव दोष इति तत्त्वम् । **आनङनङौ**-'आनङ् ऋतोद्वन्द्वे' 'ऋदुशने'ति विहितौ । **रेफस्येति ।** झल्ग्रहणापकर्षाद्यणः प्रतिषेधारम्भाच्च चिन्त्यमिदम् । तस्माद्रेफश्रवणमेव दोषोऽत्रेति बोध्यम् ॥

[ आक्षेपसमाधानवार्तिकम् ]

*॥ * ॥ उदात्तादिषु च ॥ * ॥*

**उदात्तादिषु च ॥ ॥ किम् ? ॥**

**रपरत्वस्य प्रतिषेधो वक्तव्यः ॥ कृतिः हृतिः । कृतं हृतम् । प्रकृतम् प्रहृतम् । नॄः पाहि । तस्मादण्ग्रहणं कर्तव्यम् ॥**

[ आक्षेपवार्तिकम् ]

*॥ * एकादेशस्योपसंख्यानम् ॥ * ॥*

**एकादेशस्योपसंख्यानं कर्तव्यम् । खट्वर्श्यः मालर्श्यः ॥ किं पुनः कारणं न सिध्यति ? ॥ उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते, न चायमुरेव स्थानेऽण् शिष्यते ॥ किं तर्हि ? ॥ उश्चाऽन्यस्य च ॥**

( प्र० ) **एकादेशस्येति ।** पूर्वपरयोरिति समुदायस्य स्थानित्वेन चोदितत्वात्तस्य च ऋवर्णरूपत्वाऽभावादिति भावः ।

( उ० ) **समुदायस्येति ।** द्वन्द्वस्य सत्त्वादिति भावः ।

*॥*॥ अवयव[3]ग्रहणात्सिद्धम् ॥*॥*

**यदत्र ऋवर्णं तदाश्रयं रपरत्वं भविष्यति । तद्यथा 'माषा न भोक्तव्या' इत्युक्ते-मिश्रा अपि न भुज्यन्ते ।**

**(प्र) अवयवग्रहणादिति ।** पूर्वपरयोरित्यननोद्भूतावयवभेदः समुदायो निर्दिश्यते । अवयवावेवचाऽपेक्षितपरस्परौ समुदाय इति भवत्ययमृवर्णस्थान इति भावः ।

**(उ०) उद्भूतेति ।** अतएव द्विवचननिर्देशः । तत्सामर्थ्यादेव प्रत्येकं स्थानित्वबुद्धिरिति भावः । न चावयवभेद-

१ 'रपरो भवतीत्येवो' ।

२ क्वचिन्न । ३ भाष्यमिदमित्यन्ये ।

स्योद्भूतस्वविवक्षा नाम तद्गतसंख्यायाः समुदाये आरोपो, नैतावता प्रत्येकं स्थानित्वलाभोऽत आह—**अवयवावेव चेति**। 'इतरेतरयोग' इति शेषः। एवंच तत्र समुदायस्याऽवयवाऽभेदेन बोधनाद्विवचनेन प्रत्येकं तयोः स्थानित्वलाभः। अयमेव चोद्भूतावयवभेदः समुदाय इत्यस्यार्थं इति भावः॥

[ समाधाननिरासवार्तिकम् ]

॥*॥ *अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तप्रतिषेधः* ॥*॥

**अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तस्य प्रतिषेधो वक्तव्यः। होतापोतारौ। यथैवोश्चाऽन्यस्य च स्थानेऽण् रपरो भव[ [1]ती]ति, एवं य उः स्थानेऽण् चाऽनण् च सोऽपि रपरः स्यात्॥**

(प्र०) **रान्तप्रतिषेध इति**। आनङि विधीयमाने आकारस्याऽणो भावादित्यर्थः। तस्मादवयवग्रहणादित्यस्याऽतिव्यापकत्वाद्यत्र साक्षाद्वर्णस्याऽण् विधीयते तत्रैवेदमुपतिष्ठत इत्येकादेशस्योपसङ्ख्यानं कर्तव्यमेव॥

(उ०) भाष्येऽगृहीताभिप्रायः समुदायस्यातिरिक्तस्य स्थानित्वेपि तदन्तर्गतावयवस्यापि स्थानित्वमादाय ऋस्थानिकत्वमनेनोक्तमित्यभिप्रायवानाह—**अवयवग्रहणात्सिद्धमिति चेदिति। रान्तस्येति**। रान्तत्वस्येत्यर्थः॥

[ व्याख्यान्तरे दूषणभाष्यम् ]

**यदि पुनर्ऋवर्णान्तस्य स्थानिनो रपरत्वमुच्येत। खट्वर्श्यः मालर्श्यः—नैवं शक्यम्। इह हि दोषः [2] स्यात्—कर्ता हर्ता किरति गिरति। ऋवर्णान्तस्येत्युच्यते, न चैतदृवर्णान्तम्॥**

(प्र) **यदि पुनरिति**। 'उ'रिति वर्णग्रहणाद्वर्णग्रहणं च सर्वत्र तदन्तविधिं प्रयोजयतीति न्यायादृवर्णान्तस्य ग्रहणम्। 'खट्वर्श्य' इत्यत्र च समुदाय ऋवर्णान्तो भवतीति सिद्धं रपरत्वम्। **कर्तेति**। 'अङ्गस्ये'ति षष्ठी अन्त्यमलमुपसंहृतेति ऋवर्णस्य गुणेन भाव्यम्। न च ऋवर्णमृवर्णान्तो भवतीति दोषः। न चेह तदन्तविधिरस्ति, 'उर'-णिति भूतानुवादात्। न च प्रदेशेषु तदन्तस्य कार्यम्, अन्त्यस्यैवाऽनुसंहारेण स्थानित्वप्रतिपादनादिति भावः॥

(उ०) **ऋवर्णान्तेति**। शब्दशास्त्रप्रस्तावाच्छब्दरूपं विशेष्यमादाय तदन्त [3] विधिरिति भावः। नन्विकाऽङ्गे विशेष्यमाणे तदन्तविधेर्ऋवर्णान्तस्य गुणेन [4] भाव्यमत आह—**अङ्गस्येति। षष्ठीति**। 'इगन्ताङ्गान्त्यस्य गुण' इति वाक्यार्थं इति भावः। भाष्ये लक्ष्याऽसिद्धिदोषो ऋवर्णान्तस्येत्यर्थे उक्तः। स्वयं तदर्थाऽसम्भवमप्याह—**न चेहेति। भूतानुवादादिति**। एवंचाऽनुवादे परिभाषाया इव संज्ञाया अप्यप्रवृत्तिः। यद्वा समानविभक्त्यन्तविशेष्यरहिताभूतानुवादादित्यर्थः। यत्र हि साक्षादर्थाद्वा विशेषणसमानाधिकरणं विशेष्यमुपादीयते तत्रैव वर्णग्रहणे तदन्तविधिः। गमकं विना शब्दरूपं विशेष्यमादाय तु न तदन्तविधिरिति भावः॥ **नच प्रदेशेष्विति**। इह तदन्तविध्यभावेपि यदि प्रदेशेषु ऋवर्णान्तस्य षष्ठीनिर्देशेन स्थानित्वं स्यात्ततस्तदनुरोधेनाऽनुवादेपि एकदेशद्वारा ऋवर्णान्तं ग्राह्यं, तदपि नास्तीति भावः। [5] इदं चिन्त्यम्। वृद्धिर्यस्येत्यादावीदूदेद्द्विवचनमित्यादौ चानुवादेपि संज्ञाप्रवृत्तेः। सर्वत्रेति च शब्दरूपविशेष्यमादाय तदन्तविधौ गमकम्। अतो भाष्योक्त एव दोषः।

[ उक्तदूषणनिरासभाष्यम् ]

**ननु चैतदपि व्यपदेशिवद्भावेन ऋवर्णान्तम्॥**

[ दूषणस्थापनभाष्यम् ]

**अर्थवता व्यपदेशिवद्भावो, न चैषोऽर्थवान्। तस्मान्नैवं शक्यम्॥ न चेदेवमुपसंख्यानं कर्तव्यम्। इह च रपरत्वस्य प्रतिषेधो वक्तव्यः—मातुः पितुरिति॥**

(प्र) **अर्थवतेति**। यथैवेयायेत्यत्रैकाच्त्वम्। अर्थस्य हि त्यागोपादानाभ्यां वर्णरूपता धातुरूपता च व्यवस्थाप्यते। **इह चेति**। उपसंख्यानस्याऽतिव्याप्त्येत्यर्थः। **मातुरिति**। रपत्वे कृते विभक्तिसकारस्य रुत्वम्। पूर्वस्य 'रोरी'तिलोपः। 'ढ्रूलोप' इति दीर्घत्वम्। तत्र 'मातू' रिति प्राप्नोतीति भावः।

---

1 क्वचिन्न। २ 'न प्रसज्येत'। ३ तदन्तविधिरिति। 'स्वीक्रियत' इति शेषः।

४ **भाव्यमिति**। तथाच 'भाष्याऽसङ्गतिरिति भावः। ५ **इदम्**—कैयटोक्तम्।

(उ०) भाष्ये–अर्थवतेति। इदमसहायत्वोपलक्षणम्। अत एव 'कुरुते' इत्यादावनर्थकेनाऽपि सः। तत्र हि स टिसंज्ञोपयोगिसहायरहित एवेति दिक्। भाष्ये–इह चेति। 'एकादेशस्योपसङ्ख्यान'मित्यौपसङ्ख्यानिकरपरत्वप्रतिषेधश्च वक्तव्य इत्यर्थः। मातुरित्यादौ तदुपसङ्ख्यानाऽतिव्याप्तेरिति भावः। **मातूरितीति।** **'ऊ रपर'** इति पूर्वोक्तभाष्यप्रयोगविरोधात् **'ऋत उ'** दिति तपरत्वान्मातूरित्यादौ न दीर्घ इत्यपास्तं वेदितव्यम्।

[ समाधानभाष्यम् ]

**उभयं न वक्तव्यम् ॥ कथम् ? ॥ यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति लभतेऽसावन्यतरतो व्यपदेशम्। तद्यथा—देवदत्तस्य पुत्रः, देवदत्तायाः पुत्र इति ॥**

(प्र) द्वयोरिति। अवयवावेवात्राऽपेक्षितपरस्परौ स्थानिनौ। अत एवैकग्रहणं स्थानिभेदादादेशभेदनिवृत्त्यर्थं कृतम्। **अन्यतरत इति**–तृतीयान्तादाद्यादित्वात्तसिः। **तद्यथेति।** एकः पुत्र उभाभ्यामपि यथा व्यपदिश्यते, तथेहापि पूर्वपराभ्यां तत्स्थानिकत्वेनादेशस्य व्यपदेशः। अकङ्गादेस्तु समुदायस्यादेशत्वं नाऽण इति रपरत्वाऽभावः।

(उ) उक्तेऽर्थे गमकमाह–**अतएवेति।** पञ्चम्यन्तात्तसिल्यर्थासङ्गतेराह–**तृतीयान्तादिति। समुदायस्येति।** प्रत्येकमादेशत्वे प्रमाणाऽभावादित्यर्थः।

[ आक्षेपभाष्यम् ]

**कथं मातुः पितुरिति ? ॥**

[ आक्षेपनिरासभाष्यम् ]

**अस्त्वत्र रपरत्वम् ॥**

[ आक्षेपस्थापनपरभाष्यम् ]

**का रूपसिद्धिः ?**

[ आक्षेपनिरासभाष्यम् ]

**'रात्सस्ये'ति सकारस्य लोपो, रेफस्य विसर्जनीयः ॥**

(उ) भाष्ये–**रात्सस्येति।** सलोपे उत्वस्याऽसिद्धत्वादिति भावः।

[ आक्षेपस्थापनभाष्यम् ]

**नैवं शक्यम्। इह हि—मातुः करोति पितुः करोतीति, 'अप्रत्ययविसर्जनीयस्ये'ति षत्वं प्रसज्येत ॥**

(प्र) **अप्रत्ययेति।** 'अ'सित्ययं समुदायः प्रत्ययो न त्वकार इति तदादेशोऽप्यप्रत्यय इति भावः।

(उ) **असित्ययमिति।** प्रत्ययरूपविसर्गभिन्नस्येत्यर्थ इति भावः।

[ आक्षेपनिरासभाष्यम् ]

**'अप्रत्ययविसर्जनीयस्ये'त्युच्यते प्रत्ययविसर्जनीयश्चाऽयम् ॥**

(प्र) प्रत्ययेति। प्रत्ययावयवत्वादकारोऽपि प्रत्ययः। अतस्तदादेशोऽपि प्रत्यय इति भावः॥

(उ) अकारोपीति। सूत्रस्थप्रत्ययशब्दस्तदवयवे लाक्षणिक[2] इति भावः।

[ आक्षेपस्थापनभाष्यम् ]

**लुप्यतेऽत्र प्रत्ययो 'रात्सस्ये' ति।**

(प्र) लुप्यत इति। सकारसन्निधिकालेऽकारेण नैव लब्धा प्रत्ययसंज्ञा, समुदायसन्निवेशिनीत्वात्तस्या इति कुतस्तदादेशस्तां[3] लप्स्यते। उत्वे च कृतेऽवशिष्टः सकार एव प्रत्ययसंज्ञः; स च लुप्त इति भावः।

(उ) **उत्वे च कृत इति।** न चैकादेशस्य परादिवत्त्वेनोसित्यस्य प्रत्ययतया[4] लोपे 'एकदेशविकृत'न्यायेनोरित्यस्य प्रत्ययतया विसर्गस्य प्रत्ययाऽवयवत्वमस्त्येवेति वाच्यम्, त्रिपाद्या असिद्धत्वेन तत्रा[5]न्तादिवद्भावाऽप्रवृत्तेः। स्थानिवत्त्वेन तु न निर्वाहः उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाऽभावात्। सर्वे सर्वपदादेशा इत्यनेन तु 'मातृ अ'सित्यस्य स्थानित्वेऽपि असित्यस्य स्थानित्वाऽभावात्। भाष्ये'लुप्यतेऽत्र प्रत्ययविसर्जनीय'इति पाठे योऽत्र प्रत्ययस्थानिकत्वेन तवाभिमतो विसर्जनीयः, स लुप्यते न दृश्यते, स्थानिनः प्रत्ययस्यैव लोपादित्यर्थः।

**एवं तर्हि–**

[ समाधानवार्तिकम् ]

*॥*॥ भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात्षत्वप्रतिषेधस्य ॥*॥*

---

१ 'प्राप्नोति'। २ **'लाक्षणिक इति'**। एवश्च प्रत्ययावयवभिन्नविसर्गस्येत्यर्थः। अतएव कविभिः कृतमित्यादौ न षत्वम्। अग्निःकरोतीत्यादौ तु व्यपदेशिवद्भावेन प्रत्ययावयवाऽभिन्नत्वं बोध्यम्। ३ **तदादेशः** अकारादेश उत्। तथा च विसर्गस्य तत्संबन्धित्वाऽभावात्षत्वं स्यादेवेति भावः। ४ **लोपइति।** उत्वस्याऽसिद्धया रात्सस्येति सूत्रेण सलोप इत्यर्थः। ५ **तत्र**–तत्र कर्तव्ये। सूत्राऽप्रवृत्तेरित्यर्थः।

**यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति, तज्ज्ञापयत्याचार्यो-नैकादेशनिमित्तात् षत्वं भवतीति ॥**

(प्र०) एकादेशनिमित्तादिति । एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्येत्यर्थः ।

(उ०) **एवं तर्हि भ्रातुष्पुत्रेति** । त्रिपाद्यामप्यन्तादिवद्भावप्रवृत्तिज्ञापनद्वारेति गूढोऽभिसन्धिः । कर्मधारये निमित्तपदवैयर्थ्यमिति बहुव्रीहिमेकादेशपदे लक्षणां च दर्शयति-**एकादेशशास्त्रमिति** ।

[ प्रश्नभाष्यम् ]

**किं पुनरयं पूर्वान्तः, अहोस्वित्परादिः, आहोस्विदभक्तः ? ॥**

[ जिज्ञासाभाष्यम् ]

**कथं चाऽयं पूर्वान्तः स्यात् ? कथं वा परादिः ?, कथं वा अभक्तः ? ॥**

[ जिज्ञासासमाधानभाष्यम् ]

**यद्यन्त इति वर्तते, ततः पूर्वान्तः । अथादिरिति वर्तते, ततः परादिः । अथोभयं निवृत्तं, ततोऽभक्तः ॥**

(प्र०) यद्यन्त इति । यद्यपि रपर इत्यत्रान्यपदार्थस्य प्राधान्यम्, तथापि रेफस्य विधेयतया प्राधान्यात्तस्यैवाऽन्तत्वं विशेषणमिति भावः। यद्यपि प्रसज्यमान एवाऽण् रपरो विधीयते, तथाप्यानङ इव साक्षादत्राऽर् आर् इत्येवमविधानात्तात्पर्यपर्यालोचनन्यायेन केवलावस्थानात्पक्षत्रयविमर्शः।

(उ०) **यद्यपीति** । तथा च तस्यैव विशेषणं स्यादिति भावः । **प्राधान्यादिति** । रपरशब्दतात्पर्यविषयत्वादित्यर्थः । एवं च पूर्वान्तावयवभूतरेफपरोऽणित्यर्थः । सूत्रे 'रपर' इति समासश्च सौत्रत्वात्साधुः । [रः पेरो[2] यस्येति बहुव्रीहिः । अवयवत्वमेव षष्ठ्यर्थः । वर्णे वर्णान्तरावयवत्वं तु गौणम् । यथा 'ह्रस्वस्य तु'गित्यादाविति तात्पर्यम् ]।

नन्वराराादिरूपेण विधानात्कथमभक्तत्वादिशङ्केत्यत आह-**यद्यपीति** । **अविधानादिति** । अनुच्चारणादित्यर्थः । **तात्पर्येति** । प्राप्ताऽप्राप्त[3]विवेकन्यायेनेत्यर्थः । **केवलेति** । रेफमात्रविधौ सूत्रतात्पर्यादिति भावः । यत्तु अयमपि विचारो 'भूतस्याऽणो रपरत्व'मिति पक्षे 'नष्टाश्वरथ'न्यायेन[4] । अनान्तर्यमेवान्तर्यमिति ऋकारस्याकारावेव गुणवृद्धी भविष्यतः । अराराादिरूपेण विधानमिति पक्षे तु आनङादौ नकारविषयो यथा न विचारस्तथात्रापीति तत्त्वमिति । तत्तु प्रकृतसूत्रे तस्य पक्षस्याऽस्थितत्वादयुक्तम् ॥

**कश्चाऽत्र विशेषः ? ॥**

[ अभक्तत्वपक्षे दूषणवार्तिकम् ]

*॥*॥अभक्ते[5] दीर्घलत्वयगभ्यस्तस्वरहलादिशेषविसर्जनीयप्रतिषेधः प्रत्ययाऽव्यवस्था च[6] ॥*॥*

**यद्यभक्तो दीर्घत्वं न प्राप्नोति-गीः पूः । 'रेफवकारान्तस्य धातो'रिति दीर्घत्वं न प्राप्नोति ॥**

(उ०) वार्त्तिके **प्रतिषेधः**-अभावो निवर्त्तनं च । आद्ये 'स्या'दिति शेषः, द्वितीये 'वक्तव्य'मिति । गृप्रोः क्विपि गीः पूः । ऋत इत्, उदोष्ठ्येतीत्त्वोत्त्वे ।

[ अनुपपत्तिभाष्यम् ]

**किं पुनः कारणं रेफवकाराभ्यां धातुर्विशेष्यते, न पुनः पदं विशेष्यते—रेफवकारान्तस्य पदस्येति ? ।**

(उ०) भाष्ये-पदमिति । पदस्येत्यनुवर्त्तमानमित्यर्थः ॥

[ उपपत्तिभाष्यम् ]

**नैवं शक्यम् । इहापि प्रसज्येत—अग्निर्वायुरिति ॥**

[ अनुपपत्तिभाष्यम् ]

**एवं तर्हि रेफवकाराभ्यां पदं विशेषयिष्यामो धातुनेदं-'रेफवकारान्तस्य पदस्येको धातो'रिति ॥**

[ उपपादनभाष्यम् ]

**एवमपि—प्रियं ग्रामणि कुलमस्य प्रियग्रामणिः, प्रियसेनानिः-अत्रापि प्राप्नोति । तस्माद्धातुरेव विशेष्यते । धातौ च विशेष्यमाणे इह दीर्घत्वं न प्राप्नोति-गीः पूः । दीर्घ ॥**

[ लत्वोदाहरणभाष्यम् ]

**लत्व-लत्वं च न सिध्यति । निजे-**

१ 'वाऽयं' । २ कचिन्न । ३ **प्राप्तेति** । दध्ना जुहोतीत्यादिवत्प्राप्ताप्राप्तन्यायेनेत्यर्थः । ४ न्यायेनेति पूर्वान्वयी । 'अनान्तर्य'मित्यस्य तदाहीत्यादिः । ५ व्युत्क्रमेण दोषमाह-**अभक्ते** इति । ६ व्याख्या लुप्ता स्यात् ।

गिल्यते। 'ग्रो यङी'ति लत्वं न प्राप्नोति॥

(प्र०) लत्वंचेति। 'ग्र' इत्यवयवषष्ठीति चोद्यम्।

[ दोषनिरासभाष्यम् ]

नैष दोषः।'ग्र' इत्यनन्तरयोगैषा षष्ठी॥

(उ०) अनन्तरयोगेति। अनन्तरशब्दोऽव्यवहित-वाची।

[ दोषसाधकभाष्यम् ]

एवमपि स्वर्जेगिल्यते इत्यत्राऽपि प्राप्नोति॥

[ दोषबाधकभाष्यम् ]

एवं तर्हि यङा आनन्तर्यं विशेषयिष्यामः। अथ वा'ग्र' इति पञ्चमी॥ लत्व॥

[ यक्स्वरोदाहरणभाष्यम् ]

यक्स्वर। यक्स्वरश्च न सिध्यति। गीर्यते स्वयमेव। पूर्यते स्वयमेव। 'अचः कर्तृयकी'त्येष स्वरो न प्राप्नोति, रेफेण व्यवहितत्वात्॥

[ दोषनिरासभाष्यम् ]

नैष दोषः। 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति[1] नास्ति व्यवधानम्॥ यक्स्वर॥

(उ०) स्वरविधाविति। यद्यपि इत्स्वरप्राप्तौ स्वरोद्देश्यकविधौ चेदम्। अत एवाऽचः कर्तृ-इति सूत्रेऽच इति चरितार्थं,तथापि तदनाश्रयेणैकदेश्युक्तिर्भाष्यमितितत्त्वम्।

[ अभ्यस्तस्वरोदाहरणभाष्यम् ]

अभ्यस्तस्वर—अभ्यस्तस्वरश्च न सिध्यति। मा हि स्म ते पिपरुः। मा हि स्म ते बिभरुः। 'अभ्यस्तानामादिरुदात्तो भवति अजादौ लसार्वधातुके' इत्येष स्वरो न प्राप्नोति, रेफेण व्यवहितत्वात्।

(प्र०) पिपरुरिति। पृ लङ् झि शपः श्लुर्द्विर्वचनम्। अर्तिपिपर्त्योश्चेतीत्त्वम्। 'सिजभ्यस्ते'ति जुस्। 'जुसि चे'ति गुणः।

(उ०) भाष्ये माङ्प्रयोगोऽडभावाय, तस्मिन् हि अद्स्वरः स्यात्[2]। हिप्रयोगो 'हि चे'ति निघातनिषेधाय, 'स्म'शब्दो लङ्सिद्धये।

नैष दोषः। 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति नास्ति व्यवधानम्॥ अभ्यस्तस्वर॥

[ हलादिशेषोदाहरणभाष्यम् ]

हलादिशेष हलादिशेषश्च न सिध्यति। ववृते ववृधे। अभ्यासस्येति हलादिशेषो न प्राप्नोति। हलादिशेष॥

(प्र०) ववृत इति। अभ्यासावयवस्याऽनादेर्हलो निवृत्त्या भाव्यमिति रेफस्य निवृत्त्यसिद्धिः।

(उ०) अभ्यासावयवस्येति। गर्भवदनवयवस्यापि तद्ग्रहणेन ग्रहणं 'तन्मध्यपतित'न्यायेन, नत्वेतावताऽवयवत्वमिति भ्रमितव्यमिति भावः। यद्वा ऋवर्णान्ताभ्यासस्येत्यर्थे पूर्वं तकारस्य हलादिःशेषेण निवृत्तावुरदत्वम्, ततः पुनर्हलादिः शेषो न स्यात्, अनवयवत्वादिति भावः। नचैवं 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनर्हलादिःशेषाऽनापत्तिरिति वाच्यम्। लक्ष्यभेदात्॥

[ विसर्जनीयोदाहरणभाष्यम् ]

विसर्जनीय [प्रतिषेधः]। विसर्जनीयस्य च प्रतिषेधो वक्तव्यः। नार्कुटः नार्पत्यः। 'खरवसानयोर्विसर्जनीय' इतिविसर्जनीयः प्राप्नोति। विसर्जनीय [ प्रतिषेधः[3] ]॥

(प्र०) नार्कुट इति। यस्मात्सुतिङ्विधिस्तदादि सुबन्तं तिङन्तं चेति रेफान्तस्य पदत्वाद्विसर्जनीयप्रसङ्गः॥

( उ० ) नृकुटीशब्दाद्भवादावण्। नृपतेर्दित्यदित्येति ण्यः। ननु रेफान्तान्न सुब्विधिरिति कथं तदन्तस्य प्रत्ययलक्षणेन पदत्वमत आह—यस्मादिति। यस्माद्विधिस्तद्वृत्तिनृशब्दत्वं नाशब्दस्य स्थानिवद्भावेन, तदादित्वं च रेफान्तस्य मुख्यम्, सुबन्तत्वं च प्रत्ययलक्षणेनेति भावः॥

[ प्रत्ययाऽव्यवस्थोदाहरणभाष्यम् ]

प्रत्ययाऽव्यवस्था च। प्रत्यये च व्यवस्था न प्रकल्पते-किरतः गिरतः। रेफोऽप्यभक्तः, प्रत्ययोऽपि। तत्र व्यवस्था न प्रकल्पते॥

1 'वद्भवतीति'।

2 लुप्तं स्यात्। 3 क्वचिन्न।

(प्र०) किरत इति । एकवचने किरतीति नित्यत्वात्पूर्वं विकरणः । आङ्गं तु कार्यमनित्यम् । अकृते हि विकरणे गुणः प्राप्नोति, कृते त्वित्वमिति । द्विवचने तु द्वयोरपि नित्यत्वात्परत्वादित्वम्, तत्र रेफोऽभक्तत्वान्न धात्ववयव इति विकरणो न स्यात् । स हि धातोः परो विधीयते । अथ विकरणात्परो रेफस्तदाऽप्यणः परो न स्यादिति व्यवस्था द्वयोर्न प्रकल्पते । अथ व्यवहितेऽपि परशब्दस्य प्रवृत्तिस्तथापि समीहिता व्यवस्था न प्रकल्पत इति प्रत्ययाऽव्यवस्थोक्ता ॥

(उ०) एकवचनान्तानुदाहरणे बीजमाह–एदेति । नित्यत्वादिति । विकरणविधौ 'सार्वधातुके' इति विषयसप्तमी । अन्यथाऽभक्तत्वेऽनन्तरसार्वधातुकाऽभावेन विकरणाऽप्राप्तेर्नित्यत्वं व्याहतं स्यादिति भावः । नित्यत्वादिति । तस्रो ङित्वादित्वस्यैव प्रवृत्तेः । न प्रकल्पत इति । नियमेन विकरणस्यैव व्यवहितपरत्वं न सिध्येदिति भावः ।

[ पूर्वान्तपक्षाभ्युपगमभाष्यम् ]

**एवं तर्हि पूर्वान्तः करिष्यते ।**

[ पूर्वान्तपक्षे दूषणाक्षेपवार्तिकम् ]

*॥*॥ पूर्वान्ते वेवधारणं विसर्जनीयप्रतिषेधो यक्स्वरश्च ॥*॥*

**यदि पूर्वान्तो रोरवधारणं कर्तव्यं– 'रोः सुपि' ! रोरेव सुपि नान्यस्य रेफस्य[1] । सर्पिष्षु धनुष्षु । इह माभूत्–गीर्षु–पूर्षु ॥**

(प्र०) गीर्ष्विति । परादौ सुब्ग्रहणेन गृह्यत इति न पदान्तत्वमिति भावः । अभक्तपक्षेऽपि तदादित्वात्प्राप्तिरिति कर्तव्यं वेवधारणम् ॥

[ पक्षान्तरेऽपि लाघवाऽभावभाष्यम् ]

**परादावपि सत्यवधारणं कर्तव्यं–चतुर्ष्वित्येवमर्थम् । [ वेवधारणम्[3] ] ॥**

[ विसर्जनीयप्रतिषेधोदाहरणभाष्यम् ]

**विसर्जनीयप्रतिषेधः। विसर्जनीयस्य च प्रतिषेधो वक्तव्यः । नार्कुटः । नार्पत्यः । 'खरवसानयोर्विसर्जनीय' इति विसर्जनीयः प्राप्नोति ॥**

[ इतरपक्षेऽपि लाघवाऽभावभाष्यम् ]

**परादावपि विसर्जनीयस्य प्रतिषेधो वक्तव्यो नार्कलिपरित्येवमर्थम् । कल्पिपदसङ्घातभक्तोऽसौ नोत्सहतेऽवयवस्य पदान्ततां विहन्तुमिति कृत्वा विसर्जनीयः प्राप्नोति ॥ [ विसर्जनीयप्रतिषेधः[3] ] ॥**

(प्र०) कल्पिपदेति । नृकल्पशब्दादिञि वृद्धौ च रेफः प्रत्ययसमुदायस्य कल्पिशब्दस्य भक्तत्वादवयवो न तु कल्पशब्दस्य । ततश्च [नृशब्दस्य[1]] कल्पशब्दे परतः पदसंज्ञा विधीयमाना तदादीत्यधिकाराद्रेफान्तस्य भवतीति विसर्जनीयप्रसङ्गः । पदशब्देन च पद्यतेऽनेनार्थ इति प्रत्यय उच्यते । तेन प्रत्ययसमुदायभक्तो रेफः कल्पिशब्दे परतो व्यवस्थितो न कल्पशब्दस्याऽवयव इति तयोः पौर्वापर्यमस्त्येवेत्यवयवस्यात्मन एव पदान्ततां विहन्तुं नोत्सहत इत्यर्थः । क्वचित्तु 'कल्पपदसंघातभक्त' इति पाठः । तत्रायमर्थः–कल्पशब्दस्य संबन्धि यत्पदं 'नार्कलिप'रिति तस्य पदस्य योऽवयवः प्रत्ययसङ्घातः कल्पिशब्दस्तद्भक्त इत्यर्थः ॥

(उ०) नृकल्पेति । नृशब्दात्कल्पप्प्रत्ययः । पदसंज्ञेति । स्वादिष्वित्यनेन । यद्यसौ कल्पशब्दावयवः स्यात्तदा स्वावयवभूतरेफान्तस्य 'ना'रित्यस्य न स प्रत्ययः परः स्यादिति भावः । परादिरित्यत्र परशब्देन परत्वपर्याप्त्यधिकरणो यावान्[4] स सर्वोऽपि गृह्यते, न तदवयवोऽपीति तात्पर्यम् । ननु प्रत्ययस्य कथं पदत्वमत आह–पदशब्देनेति । कल्पिरूपः पदसङ्घातः पदसमुदाय इति भाष्यार्थः । तस्मात्पक्षत्रयेऽपि विसर्जनीयप्रतिषेधस्य वक्तव्यतया नायं दोष इति भावः। वृद्धेर्बहिरङ्गाऽसिद्धत्वं तु नोक्तम्, त्रिपादीस्थेऽन्तरङ्गे तत्परिभाषाया अप्रवृत्तेः ॥

[ यक्स्वरोदाहरणभाष्यम् ]

**यक्स्वरः । यक्स्वरश्च न सिध्यति । गीर्यते स्वयमेव, पूर्यते स्वयमेव । 'अचः[5] कर्तृयकी'त्येष स्वरो न प्राप्नोति ॥**

[ दूषणबाधकभाष्यम् ]

**नैष दोषः । उपदेश इति वर्तते॥[यक्स्वरः[3]]॥**

(उ०) भाष्ये उपदेश इति वर्तत इति । अचः कर्त्रित्यत्र तास्यनुदात्तेदित्यत इत्यर्थः ॥

---

१ क्वचिन्न । २ 'तदादिवचनात् । ३ लुप्तं स्यात् । ४ यावान्–यावान् पदप्रत्ययः संभवति ।

५ अचः कर्त्रिति । उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वेति सूत्रार्थः ।

[ परादिपक्षाभ्युपगमभाष्यम् ]

**अथ वा पुनरस्तु परादिः ॥**

[ परादिपक्षे दूषणवार्तिकम् ]

*॥ * ॥ परादावकारलोपौत्वपुक्प्रतिषेधश्च-ङ्व्युपधाह्रस्वत्वमिटो व्यवस्थाऽभ्यासलोपोऽभ्यस्ततादिस्वरो दीर्घत्वं च[1] ॥ * ॥*

**यदि परादिः । अकारलोपः प्रतिषेध्यः । कर्ता हर्ता । 'अतो लोप आर्द्धधातुके' इत्यकारलोपः प्राप्नोति ॥**

**(उ०)** भाष्ये-अथवा पुनरस्तु परादिरिति । वैधारणविसर्जनीयप्रतिषेधयोः कर्त्तव्यतायाः पूर्वान्तपरादिपक्षयोः समत्वात् परादिपक्षो वा वक्तव्यः, पूर्वान्तो वेत्यत्र न विशेष इति चेत् कश्चिद्ब्रूयात्तत्राह वार्त्तिककारः-परादाविती त्यर्थः । 'परादा'विति वार्त्तिके पुगन्तद्वन्द्वस्य प्रतिषेधपदेन षष्ठीतत्पुरुषः । 'वक्तव्य' इति शेषः । चङ्युपधाह्रस्वत्वं वक्तव्यम् । अग्रे सर्वत्राऽयमेव शेषो बोध्यः ॥

[ दूषणनिरासभाष्यम् ]

**नैष दोषः, उपदेश इति वर्तते ॥**

**(उ०)** उपदेश इति वर्त्तत इति । अतो लोप इत्यत्रानुदात्तोपदेशेत्यत इत्यर्थः ॥

[ दूषणस्थापनभाष्यम् ]

**यद्युपदेश इति वर्तते-धिनुतः, कृणुतः । अत्र लोपो न प्राप्नोति ॥**

**(प्र०)** धिनुतइति । एकवचनेऽसत्यप्यकारलोपे आद्गुणेन वा, विकरणस्य वा गुणेपररूपेण वा[2] धिनोतीति सिद्ध्यतीति द्विवचनमुदाहृतम्[3] ॥

**(उ०) पररूपेण**-अतोगुण इत्यनेन ॥

[ दूषणबाधकभाष्यम् ]

**नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते ॥ किं तर्हि ? ॥ आर्धधातुकमभिसंबध्यते-आर्धधातुकोपदेशे यदकारान्तमिति ॥ अकारलोप ॥**

**(प्र०)** आर्धधातुकोपदेश इति । सन्नियोगेन[4] चाऽकारस्य विधानादार्धधातुकप्रतिपत्तिकालेऽकारान्तप्रतिपत्त्या सिद्धो लोपः ॥

[ औत्वोदाहरणभाष्यम् ]

**औत्व-औत्वं च प्रतिषेध्यम् । चकार जहार । 'आत औ णलः' इत्यौत्वं प्राप्नोति ॥**

[ दोषनिरासभाष्यम् ]

**नैष दोषः । 'निर्दिश्यमानस्यादेशा भवन्ती'त्येवं न भविष्यति ॥**

**(प्र०)** निर्दिश्यमानस्येति । नन्वादेः परस्येति रेफस्यौत्वेन भाव्यम् । नैष दोषः, 'णल' इत्यनेन यत्प्रत्यायितं प्रयोगविषयमकारमात्रं, तस्याऽकाराऽरान्तादङ्गादुत्तरस्यादेशः प्रवर्तते, सरेफस्य त्वनुमीयमानत्वादादेशाऽभावः । प्रत्याय्यप्रत्यायकाऽभेदविवक्षायां षष्ठीनिर्दिष्टस्यादेशा इत्युच्यते[5] ॥

**(उ०) नन्विति** । 'आदेः परस्ये'ति 'निर्दिश्यमान'-परिभाषाबाधकमित्यभिमानः । **'तस्यैवायमनुसंहार'** इत्युत्तरम् । ननु सूत्रे उच्चारितस्य णलो नादेशः, किंतु तत्प्रत्यायिताऽकारस्येति षष्ठीनिर्दिष्टस्यादेशा इत्ययुक्तं स्यादत आह-प्रत्याय्येति । निर्दिश्यमानस्ये'त्यस्य प्रतिपादितस्येत्यर्थे तुपादन्तस्यापि पदादेशापत्तिरिति बोध्यम् ॥

[ आक्षेपभाष्यम् ]

**यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?॥**

[ समाधानभाष्यम् ]

**रेफेण व्यवहितत्वात् ॥ औत्व ॥**

**(प्र०) रेफेणेति** । यद्रूपं षष्ठीनिर्दिष्टमकारमात्रं तद्व्यवहितमित्यर्थः । यदि तु प्रत्ययस्येत्युच्यते लिट इति च तदा व्यवधानाऽभावात् स्यादेवादेशः ॥

**(उ०) यदि त्विति** । तथा तु वक्तुमशक्यं[6], सर्वत्रादेशापत्तेरिति भावः ॥

[ पुक्प्रतिषेधोदाहरणभाष्यम् ]

**पुक्प्रतिषेधः । पुक् च प्रतिषेध्यः । कारयति हारयति । 'आतां पु'गिति पुक् प्राप्नोति ॥ पुक्प्रतिषेधः ॥**

[ चङ्युपधाह्रस्वत्वोदाहरणभाष्यम् ]

**चङ्युपधाह्रस्वत्वम्-चङ्युपधाह्रस्वत्वं**

---

१ 'ईदृश्येव व्याख्या लुप्ता स्यात् । २ क्वचिन्न । ३ 'वचनं समुदाहृतं' । ४ संनियोगेनेति । अकारस्य संनियोगेनार्धधातुकस्य विधानादित्यर्थः । ५ 'च्यन्ते । ६ वक्तुं-वक्तुमप्यशक्यम् ।

च न सिध्यति। अचीकरत् अजीहरत्। 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वत्वं न न प्राप्नोति ॥ चङ्युपधाह्रस्वत्वम् ॥

[ इटोऽव्यवस्थोदाहरणभाष्यम् ]

इटोऽव्यवस्था। इटश्च व्यवस्था न प्रकल्पते। आस्तरिता निपरिता। इडपि परादी, रेफोऽपि। तत्र व्यवस्था न प्रकल्पते ॥ इटोऽव्यवस्था ॥

(प्र०) आस्तरितेति। नित्यत्वाद्गुणे रपरत्वे च कृते 'नेड्वशि कृती'ति प्रतिषेधादप्रवृत्तिलक्षणेटोऽव्यवस्था। प्रवृत्तौ वा रेफात् पूर्व इडित्यनिष्टा व्यवस्था प्राप्नोति ॥

(उ०) कथं तर्हीडपीत्यादिभाष्यमत आह–प्रवृत्तौ वेति। नेड्वशीत्यत्रोपदेश इत्यपकृष्योपदेशे वशादेरेव निषेध इति भावः ॥

[ अभ्यासलोपोदाहरणभाष्यम् ]

अभ्यासलोपः। अभ्यासलोपश्च वक्तव्यः। ववृते ववृधे। 'अभ्यासस्ये'ति हलादिशेषो न प्राप्नोति ॥ अभ्यासलोपः ॥

(उ०) भाष्ये–ववृत इति। ऋवर्णान्ताभ्यासरयाऽदित्यर्थे पूर्वं तलोपे पश्चाद्रेफः, तस्य लोप इति पक्षे इदम्। 'वव्रे' इत्यप्युदाहार्यम् ॥

[ अभ्यस्तस्वरोदाहरणभाष्यम् ]

अभ्यस्तस्वरः। अभ्यस्तस्वरश्च न सिध्यति। मा हि स्म ते पिपरुः, मा हि स्त ते बिभरुः। 'अभ्यस्तानामादिरुदात्तो भवत्यजादौ लसार्वधातुके' इत्येष स्वरो न प्राप्नोति ॥ अभ्यस्तस्वर ॥

[ तादिस्वरोदाहरणभाष्यम् ]

तादिस्वरः-तादिस्वरश्च न सिद्ध्यति। प्रकर्ता प्रकर्तुम्। 'तादौ च निति कृत्यता'वित्येष स्वरो न प्राप्नोति ॥

(उ०) प्रकर्तेति। तृन्। एषस्वरः–पूर्वपदप्रकृतिस्वरः ॥

[ उक्तदूषणबाधकभाष्यम् ]

नैष दोषः। उक्तमेतत्–"कृदुपदेशे वा ताद्यर्थमिडर्थम्" इति ॥ तादिस्वरः ॥

(उ०) कृदुपदेशकालिकतादिप्रत्ययप्रतीत्यर्थं तादाविति सूत्रे कृद्ग्रहणमिति भाष्योदाहृतवार्त्तिकार्थः। तादावितिसूत्रेण गतेः स्वरो विधीयते। क्रियायोगे च गतित्वम्। क्रियावाची च धातुः। तत्र तिङन्ते पूर्वपदाऽभावेन कृदन्त एव सिद्धमिति कृद्ग्रहणमुक्तार्थम्। न च कृद्ग्रहणाऽभावे तादित्वमुत्तरपदस्य विशेषणं स्यात्। तथा च प्रतरितेत्यादावेव स्यादिति तस्य कृद्विशेषणत्वाय तदिति वाच्यम्। श्रुतनितप्रत्ययविशेषणताया एव न्याय्यत्वादिति दिक् ॥

[ दीर्घोदाहरणभाष्यम् ]

दीर्घत्वं। दीर्घत्वं [च] न सिध्यति। गीः पूः। 'रेफवकारान्तस्य धातो'रिति दीर्घत्वं न प्राप्नोति ॥ दीर्घत्व ॥ [उरण्रपरः]।

(प्र०) गीरिति। अन्तरङ्गत्वाद्धिलोपे कृते इत्त्वे रपरत्वे च सुपोऽयमादी रेफ इति कल्पनायां रात्सस्येति सलोपे कृते दीर्घत्वं न स्यादिति पूर्वान्तपक्षोऽत्र स्थितः ॥

(उ०) ननु रेफस्य परादित्वेऽपृक्तत्वाऽभावाद्धिलोपो न प्राप्नोतीति कुतो नोक्तमत आह–अन्तरङ्गत्वादिति। तदानीं सुपोऽभावादाह–कल्पनायामिति। पदस्य विभज्यान्वाख्यानमिति भावः। पूर्वान्तेति। नार्कुटादौ वचनेनैव निर्वाहो भाष्ये उक्त इति बोध्यम्। एवं च 'रपर' इति अवयववाचिपरशब्देन षष्ठ्यर्थे बहुव्रीहिरिति ध्वनितम्। अवयवत्वं चाऽवयवसादृश्ये पर्यवस्यति। न हि वर्णस्य वर्णान्तरमवयवो भवति। अत एव प्रसङ्गावस्थायां रपरत्वेपि गुणादिशब्देन विधानम्। 'यदागमा' इति न्यायेन विशिष्टस्य गुणादित्वात्। एवं च ऋवर्णादचि पूर्वपरयोरन्तरतमो रपरोऽण् भवतीत्यर्थं इति बोध्यम्। गुणादिशब्देनारारोर्ग्रहणाभावे तु 'ऋकारस्य गुणवृद्धी अरारावेवे'ति नियमो न स्यात्। यतो गुणादिशब्देन अकारादे रेफः परो यस्मात्ताद्दशस्य विधानम्। गुणत्वादिकं चाऽकारादिनिष्ठमेव। तेन च नान्तर्यम्। एतदेवाभिप्रेत्य रदाभ्यामिति सूत्रे भाष्ये 'गुणो भवति वृद्धिर्भवती'ति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तत' इति वक्ष्यति। अत एव 'यथन्त इति वर्त्तते ततः पूर्वान्त' इत्युपक्रमस्थं भाष्यमेकदेश्युक्तिः। तथा हि सति यथा परादिपक्षे नार्कलिपरित्यादौ रेफस्य कल्पीति समुदायावयवत्वोपपत्तये परत्वपर्याप्त्यधिकरणादिरित्यर्थस्तथा पूर्वान्त इत्यस्य पूर्वत्वपर्याप्त्यधिकरणाऽन्त इत्यर्थापत्तौ उक्तदोषो,

१ अचीकरदिति। अत्र हि णिनिमित्तायां वृद्धावाकारस्यानुपधात्वाण्णौचङीत्यनेन ह्रस्वत्वं न स्यात्। २ 'वाकृते'। ३ 'स्वर'। ४ तादाविति। तुशब्दवर्जितेनिति तकारादौ कृति परेऽनन्तरो गतिः प्रकृत्येति हि तदर्थः।

५ 'दीर्घः'। कचिन्न। ६ अन्तरङ्गत्वादिति। अनैमित्तिकत्वादिति भावः। ७ एवंचेति। विशिष्टे तत्त्वे चेत्यर्थः। ८ रपर इति। गुण इत्यपि बोध्यम्। ९ उक्तेति। तन्नियमाऽसिद्धिरूप इत्यर्थः।

सूपपादेति । अनित्यविज्ञानं त्वित्याद्येकदेश्युक्तिः ।

भारद्वाजीयाः पठन्ति-

॥*॥ एकदेशविकृतेषूपसङ्ख्यानम् ॥*॥

एकदेशविकृतेषूपसङ्ख्यानं कर्तव्यम् ॥ किं प्रयोजनम् ? ॥

।*। पचतु[1] पचन्तु ।*।

तिङ्ग्रहणेन ग्रहणं यथा स्यात् ॥

किञ्च कारणं न स्यात् ? ॥

[ भारद्वाजीयवार्तिकम् ]

॥*॥ अनादेशत्वात्[2] ॥*॥

आदेशः स्थानिवदित्युच्यते । न चेमे आदेशाः ॥

[ भारद्वाजीयवार्तिकम् ]

॥ * ॥ रूपान्यत्वाच्च[3] ॥ * ॥

अन्यत्खल्वपि रूपं-पचतीति, अन्यत्पचत्विति ॥

(प्र०) न चेम इति । तुशब्दादयः । एरुरित्यत्र साक्षात्समुदायानुपादानात् । रूपान्यत्वाच्चेति । यद्ययमवयवादेशो रूपं न भिन्द्यात्स्यादेव प्रत्यभिज्ञानात्तिङ्त्वम् । यतस्तु भेदको रूपस्य, तस्मान्नास्ति तिङ्त्वमिति भावः ।

(उ०) कात्यायनीयाद्भारद्वाजीयपाठे हेत्वभिधानं बहुवचनं च विशेषः । एरुरित्यत्रेति । प्रत्यक्षादेशत्वं चेह निषेध्यमिति भावः। लोकन्यायेन सिद्धिखण्डनाय रूपान्यत्वाच्चेति । तद्व्याचष्टे—यदीति । इदमो म इत्यादिवदिति भावः । अर्थस्यान्यथाभावेन जात्यभिव्यञ्जकाभाव इति तात्पर्यम् । 'एकदेशविकृतेष्वि'ति बहुवचनेन लोपस्यापि सङ्ग्रहादपचदित्यादावपि स्थानिवत्त्वमिति बोध्यम् ।

[ दोषनिरासभाष्यम् ]

इमेऽप्यादेशाः ॥ कथम् ? ॥ आदिश्यते यः स आदेशः । इमे चाप्यादिश्यन्ते[2] ॥

(उ०) भाष्ये वचनं खण्डयति-इमेऽपीति । आनुमानिकादेशस्याप्यादेशपदसामर्थ्येन ग्रहणादिति भावः । इममाशयमजानानः पृच्छति-कथमिति । उक्तेनैवाभिप्रायेणाह—आदिश्यत इति । इमेचेति । तुशब्दादयः।

[ आक्षेपसाधकवार्तिकम् ]

॥*॥ आदेशः स्थानिवदिति चेन्नानाश्रितत्वात्[3] ॥ * ॥

आदेशः स्थानिवदिति चेत् । तन्न ॥ किं कारणम् ? ॥ 'अनाश्रितत्वात्' । योऽत्रादेशो नासावाश्रीयते । यश्चाश्रीयते नासावादेशः ॥

(प्र०) योऽत्रादेश इति । इकारस्य उकारः । नासावाश्रीयते–पदसंज्ञायाम् । सा हि तिशब्दनिबन्धना नावयवनिबन्धना । यश्चेति । तुशब्दः । साक्षादविधानान्नादेशः, पदसंज्ञानिमित्तभावेन चाश्रीयत इत्यर्थः ।

(उ०) आदेशपदसामर्थ्यमजानान आह-आदेश इत्यादि । प्रत्यक्षादेशस्यैव ग्रहणं न्याय्यमित्यभिमानः । तदाह—योऽत्रेति । ननु तामादेः पदसंज्ञायामनाश्रयणेऽपि यथा स्थानिवत्त्वात्पदत्वमेवमुकारस्यापीत्यत आह—सा हीति । तेश्च नायमादेश इति भावः । तिङ्त्वं समुदायपर्याप्तमिति तात्पर्यम् । स्थानिवत्त्वद्वारापि नायमुकारः पदत्वहेतुतयाऽऽश्रीयत इति भाष्यार्थः । आश्रीयते इत्यर्थ इति । आश्रयितुमिष्यत इत्यर्थः ।

[ एकदेशिन उत्तरभाष्यम् ]

नैतन्मन्तव्यं-'समुदाये आश्रीयमाणेऽवयवो नाश्रीयते' इति । अभ्यन्तरो हि समुदायस्यावयवः । तद्यथा-वृक्षः प्रचलन्सहावयवैः प्रचलति ।

(प्र०) अत्रोत्तरमाह[4] नैतदिति । 'तिप्' 'तस्' 'झि' इति तिप्सन्निवेशे इकारतकारावपि सन्निविष्टावितीकारस्य तिङ्त्वात्तदादेशस्याप्युकारस्य तिङ्त्वमिति सिद्धा पदसंज्ञा ।

(उ०) तत्रोत्तरमाहेति । 'एकदेशी'ति शेषः । भाष्ये-समुदाये इत्यादि । 'सुप्तिङन्त' मित्यादौ 'ति' इति समुदाये निमित्तत्वेनाश्रितेऽवयवातिरिक्तसमुदायाऽभावात् तकारेकारान्तं पदमित्यर्थः । एवं चेकारस्योकारादेशे स्थानिवद्भावेनेकारबुद्धौ निमित्तभूतसमुदायसत्त्वात्पदत्वं सिद्धमिति भावः। तिङ्त्वात्–तदवच्छिन्नावयवत्वात् । तिङ्त्वं। तदवच्छिन्नावयवेकारत्वमित्यर्थः । यथाश्रुते हि पचतीत्यादौ तान्तस्यापि पदत्वापत्तौ जश्त्वापत्तिरिति बोध्यम् ।

[ दोषदर्शिवार्तिकम् ]

॥*॥ आश्रय[5] इति चेदल्विधिप्रसङ्गः ॥*॥

आश्रय इति चेदल्विधिरयं भवति ।

---

१ भाष्यमिदमित्यन्ये । २ अनुज्ञायन्त इत्यर्थः। ३ 'चेन्न'। ४ 'तत्रोत्तर' । ५ 'आश्रीयते' ।

**तत्रानल्विधाविति प्रतिषेधः प्राप्नोति ॥**

(प्र०) अल्विधिप्रसङ्ग इति । इकारस्य पदसंज्ञानिमित्तत्वादल्विधिः पदसंज्ञा स्यादित्यर्थः ।

[ दोषनिरासभाष्यम् ]

**नैष दोषः । नैवं सति कश्चिदनल्विधिः स्यात्, उच्यते चेदमनल्विधाविति । तत्र प्रकर्षगतिर्विज्ञास्यते–साधीयो योऽल्विधिरिति ॥**

**कश्च साधीयः ? ॥ यत्र प्राधान्येनाऽलाश्रीयते । यत्र नाऽन्तरीयकोऽलाश्रीयते नासावल्विधिरिति ।**

(प्र०) यत्र प्राधान्येनेति । यत्र साक्षादल् निर्दिष्टः, तत्र प्रतिषेधो, नानुमीयमाने सम्भवमात्रेणाऽलीत्यर्थः । प्राधान्यग्रहणं प्रत्यक्षोपलक्षणम् ।

(उ०) ननु प्राधान्येनेत्युक्तौ प्रदीव्येति न सिध्येदत आह–यत्रेति । प्रत्यक्षेति । अनान्तरीयकेत्यर्थः ।

[ सिद्धान्तिसमाधानभाष्यम् ]

**अथवोक्तमादेशग्रहणस्य प्रयोजनम् 'आदेशमात्रं स्थानिवद्यथा स्या'दिति ॥**

(प्र०) आदेशमात्रमिति । आनुमानिकमपीत्यर्थः ।

(उ०) इदानीं सिद्धान्ती एकदेश्युक्तमनुमन्यमान इव पक्षान्तरत्वेन स्वाशयं प्रकाशयति–भाष्ये अथवेति ।

[ आक्षेपवार्तिकम् ]

*॥*॥ अनुपपन्नं स्थान्यादेशत्वं नित्य–[शब्द] त्वात् ॥*॥*

**स्थानी आदेश इत्येतन्नित्येषु शब्देषु नोपपद्यते ॥ किं कारणम् ? ॥ 'नित्यशब्दत्वात्' । स्थानी हि नाम–यो भूत्वा न भवति । आदेशो हि नाम–योऽभूत्वा भवति । एतच्च नित्येषु शब्देषु नोपपद्यते–यत्सतो नाम विनाशः स्यादसतो वा प्रादुर्भाव इति ॥**

(प्र०) अनुपपन्नमिति । एकदेशविकारेऽपि यत्र नित्यत्वहानिस्तत्र सर्वविकारे कुतो नित्यत्वम्; यत्रान्वयोऽपि कस्यचिन्नास्तीत्यर्थः ।

(उ०) सर्वविकार इति । 'अस्तेर्भू'रित्यादौ । यो भूत्वेत्यादिभाष्यस्य प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वं नित्यत्वमिति तात्पर्यम् ।

[ समाधानवार्तिकम् ]

*॥*॥ सिद्धं तु यथा लौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानशब्दप्रयोगात् ॥ * ॥*

**सिद्धमेतत् ॥ कथम् ? ॥ ['यथा लौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानशब्दप्रयोगात्'] यथा लौकिकवैदिकेषु च कृतान्तेषु अभूतपूर्वेऽपि स्थानशब्दो वर्त्तते । लोके तावत्–'उपाध्यायस्य स्थाने शिष्यः' इत्युच्यते, न च तत्र उपाध्यायो भूतपूर्वो भवति । वेदेऽपि–'सोमस्य स्थाने पूतीकतृणा[6]न्यभिषुणुया'दित्युच्यते । न च[3] तत्र सोमो भूतपूर्वो भवति ॥**

(प्र०) सोमस्येति । सोमस्तृणविशेषः । तदसन्निधौ पूतीकतृणानि प्रतिनिधीयन्ते ।

(उ०) स्थानशब्दः प्रसङ्गवाचीत्युत्तरम् । तदसंनिधाविति । नित्यस्यावश्यकर्त्तव्यत्वादारब्धस्य चावश्यसमापनीयत्वादिति भावः ।

[ समाधानान्तरवार्तिकम् ]

*॥*॥ कार्यविपरिणामाद्वा सिद्धम् ॥*॥*

**अथ वा कार्यविपरिणामात्सिद्धमेतत् ॥ किमिदं कार्यविपरिणामादिति ? ॥ कार्या बुद्धिः सा विपरिणम्यते ॥**

(प्र०) कार्या बुद्धिरिति । अन्यस्याऽत्र विपरिणामाऽसम्भवात्सामर्थ्यात्कार्यत्वेन बुद्धिर्गृह्यते न तु कार्यशब्दो बुद्धिपर्यायः ।

[ शब्दाऽसिद्धिशङ्काभाष्यम् ]

**ननु 'कार्याविपरिणामा'दिति भवितव्यम् ॥**

[ समाधानभाष्यम् ]

**सन्ति चैव ह्यौत्तरपदिकानि ह्रस्वत्वानि ॥**

(प्र०) सन्तीति । ङ्यापोरित्यत्र बहुलग्रहणात् ।

१ 'नित्यत्वात्' । २ लुप्तं स्यात् । ३ क्वचिन्न । ४ दृष्टान्तेष्वित्यर्थः । ५ 'पूर्वेष्वपिस्थानशब्दप्रयोगो' ।

६ पूतीकतृणानि स्नुहीदण्डसदृशानि कण्टकशून्यानि वैदिकप्रसिद्धानि ।

(उ०) संज्ञाछन्दसत्वयोरभावादाह–बहुलेति ।

[ प्रयोगसाधकयुक्त्यन्तरभाष्यम् ]

अपि च 'बुद्धिः संप्रत्यय'इत्यनर्थान्तरम् । कार्या हि[1] बुद्धिः, कार्यः संप्रत्ययः । कार्यस्य संप्रत्ययस्य[2] विपरिणामः–कार्यविपरिणामः, कार्यविपरिणामादिति ॥

[ समाधानान्तरबाधकभाष्यम् ]

परिहारान्तरमेवेदं मत्वा पठितम् ।

[ उपपत्तिप्रश्नभाष्यम् ]

कथंचेदं परिहारान्तरं स्यात् ? ॥

[ परिहारान्तरबाधकभाष्यम् ]

यदि[3] भूतपूर्वे स्थानशब्दो वर्तते ॥

(उ०) भूतपूर्वे स्थानशब्दप्रयोगमभ्युपेत्येदं परिहारान्तरम् । अन्यथानर्थक्यप्रसङ्गात् । न च तत्र स्थानशब्दो दृश्यते 'सोमस्य स्थाने' इत्यादावभूतपूर्वे एव प्रयोगदर्शनादिति 'यदिभूतपूर्व'त्यादि भाष्यतात्पर्यम् ॥

[ समाधानान्तरस्थापनभाष्यम् ]

भूतपूर्वे[4] चापि स्थानशब्दो[5] वर्तते ॥ कथम् ? ॥ बुद्ध्या । तद्यथा कश्चित्कस्मैचिदुपदिशति–'प्राचीनं ग्रामादाम्रा' इति । तस्य सर्वत्राम्रबुद्धिः प्रसक्ता । ततः पश्चादाह– ये क्षीरिणोऽवरोहवन्तः[6] पृथुपर्णास्ते न्यग्रोधाः' इति । स तत्राऽऽम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते । स ततः पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधांश्चोपधीयमानान्[7] । नित्या एव च स्वस्मिन्विषये आम्राः, नित्याश्च न्यग्रोधाः, बुद्धिस्त्वस्य विपरिणम्यते । एवमिहाप्यस्तिरस्मा अविशेषेणोपदिष्टः । तस्य सर्वत्रास्तिबुद्धिः प्रसक्ता । सः 'अस्तेर्भूर्भवती'[8] त्यस्तिबुद्ध्या भवतिबुद्धिं प्रतिपद्यते । स ततः पश्यति–बुद्ध्या अस्तिं चापकृष्यमाणं, भवतिं चोपधीयमानम्, नित्य एव च स्वस्मिन्विषयेऽस्तिर्नित्यो भवतिश्च[9] । बुद्धिस्त्वस्य विपरिणम्यते ॥

(प्र०) भूतपूर्वे चापीति । न च नित्यत्वविरोधः । बुद्धिधर्माः केवलमर्थेषु प्रतिपत्तृवशादारोप्यन्ते, न तु तद्वशादर्थानां तथाऽवस्थानम् । प्राचीनमिति । प्राचि देशे प्राक् । 'ततो विभाषाञ्चेरदिक् स्त्रिया'मिति स्वार्थे खः । तत्र सप्तम्यर्थस्याभिहितत्वादन्तर्भूतत्वाच्च प्रथमैव कृता । आम्रबुद्ध्या इति । तस्या अनन्तरमित्यर्थः ॥

(उ०) न चेति । भूतपूर्वे हि स्थानशब्दो निवृत्तिवचनः स्यादिति भावः । तत्पक्षे नित्यत्वं कथमिति पृच्छति–भाष्ये-कथमिति । उत्तरमाह–बुद्ध्येति । प्रतिपत्तृवशादिति । प्रतिपत्तृशब्देन तदीया प्रतिपत्तिर्लक्ष्यते, तद्वशात् प्रतिपत्तॄणां तथा ज्ञानव्यवहाराभ्यां बुद्धिधर्मारोपस्तत्रानुमीयते,[6]स्वतस्तद्वत्त्वस्य तत्र बाधादिति भावः । कचित्तु प्रतिपत्तिवशादिति पाठः । तदाह–नत्विति । आरोपितभूतपूर्वत्वव्यवहारान्न नित्यत्वहानिरिति भावः । ननु प्राचीनमित्यस्यात्राधिकरणप्रतिपादकत्वात् सप्तमी स्यादत आह–प्राचीति । सप्तम्यन्तादुत्पन्नाऽस्तातेरञ्चेर्लुगिति लुक् । भाष्ये–तस्य सर्वत्रेति । प्राग्देशवृक्षत्वावच्छिन्न इत्यर्थः । स तत्र–न्यग्रोधेषु । नन्वाम्रबुद्ध्या इति न तृतीया, अर्थासङ्गतेः, नापि षष्ठी, संबन्धिनोऽनुपस्थितेरत आह–तस्या अनन्तरमिति । अनन्तरपदाध्याहारेण षष्ठीति भावः ॥ केचित्तु आम्रबुद्ध्या इत्यस्य तां विहायेत्यर्थ इत्याहुः । भाष्ये अपकृष्यमाणानिति । तत्र यथा बुद्धेरेवाऽपकर्ष उपधानं च आम्रेषु न्यग्रोधेषु चारोप्यते, तथाऽत्रापि बुद्धिगतोत्पादविनाशयोः स्थान्यादेशभावस्य च शब्देष्वारोप इति भावः ॥ उपधानमुत्पत्तिः ॥

[ आक्षेपवार्तिकम् ]

*॥ अपवादप्रसङ्गस्तु स्थानिवत्त्वात् ॥*

अपवादे उत्सर्गकृतं च[10] प्राप्नोति । 'कर्मण्यण्' । 'आतोऽनुपसर्गे कः' इति । केऽपि अणिकृतं प्राप्नोति ॥ किं कारणम् ? ॥ 'स्थानिवत्त्वात्' ॥

(प्र०) अपवादप्रसङ्गस्त्विति । बुद्धिविपरिणाममात्रं यदि स्थान्यादेशभाव इति भावः ॥ 'कर्मण्य'णिति सर्वत्राऽण्बुद्धिः प्रसक्ता 'आतोऽनुपसर्गे क' इति कबुद्ध्या निवर्तते इति केऽप्यण्कृतप्रसङ्गः ॥

(उ०) ननु उत्सर्गापवादयोः स्थान्यादेशभावाभावात् कथं स्थानिवत्त्वमत आह–बुद्धीति । अण्कृतेति । ङीबित्यर्थः ॥

---

१ कश्चिन्न । २ 'सम्प्रत्ययो । ३ यदि यदा वर्त्तते वर्त्तते तदा । गुरवस्तु कथमितिवर्त्तते इत्यन्ता शङ्केत्याहुः । ४ इदमुत्तरमिति गुरवः । ५ 'स्थानि' ।

६ अवरोहः जटा । ७ 'चाऽऽधीय' । ८ 'ततः पश्चादाह, आर्द्धधातुकेऽस्तेर्भूर्भवत्यस्तिबुद्ध्या' । ९ 'भूरित्यस्तिबुध्या' । १० 'आधानं' ।

[ आक्षेपनिरासभाष्यम् ]

||*|| उक्तं वा ||*||

[ उक्तं वा ] ॥ किमुक्तम् ? ॥ 'विपर्येण तु नानालिङ्गकरणात् सिद्ध'मिति ॥

(प्र०) विपर्येण त्विति । तुशब्दः पुनरर्थे । यदयं गापोष्टगिति कापवादस्य टकः कित्त्वं शास्ति तज्ज्ञापयति–'नोत्सर्गकृतमपवादे भवती'ति ।

(उ०) भाष्ये 'उक्तं वे'ति वार्त्तिकस्थमुक्तमित्यंशं व्याचष्टे–विपर्येण त्वित्यादि । अइउण्सूत्रे एकोऽकार इति पक्षेऽनुबन्धसङ्करः प्राप्नोति केऽप्यण्कृतं प्राप्नोतीति पूर्वपक्षे 'विपर्येण तु नानालिङ्गकरणात्सिद्ध'मित्युक्तम् । विपर्येविपर्येऽणकादौ भिन्नलिङ्गकरणात् 'इह मुण्डो भव इह जटी भवे'ति लोकव्यवहारे यथा यद्गुणको यत्रोच्यते तत्र तद्गुण एव भवति तथा यल्लिङ्गो यत्रोच्यते तत्र तल्लिङ्गकार्यमेव नान्यानुबन्धकार्यमिति तदर्थश्चोक्तः । एवं च सामान्यापेक्षत्वान्नियमस्य स्थानिवत्त्वप्रयुक्तस्यापि व्यावृत्तिरिति भावः । वार्त्तिकेऽधिकरणस्यैव करणत्वविवक्षया तृतीया । कैयटोक्तव्याख्याने तु अथवा यदयं श्यन्नादीनिति वक्ष्यमाणपक्षे एतत्पक्षाद्वैलक्षण्यं दुर्लभम् । शब्दमर्यादया वार्त्तिकात्तदर्थोऽलाभश्च । तुशब्दस्य पुनरर्थत्वेऽपि नानापदानन्वयस्तदवस्थश्च । किंच कैयटोक्तार्थकं विपर्येण तु पुनर्लिङ्गकरणात्सिद्धमिति भाष्ये तत्र पठितं नत्वेवमिति दिक् ॥

अथ वा—

|| * || सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात् || * ||

सिद्धमेतत् ॥ कथम् ? ॥ [ 'षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात्' ] । षष्ठीनिर्दिष्टस्यादेशः स्थानिवदिति वक्तव्यम् ॥

( प्र० ) षष्ठीनिर्दिष्टस्येति । न चापवादः षष्ठीनिर्दिष्टस्य स्थाने विधीयते । 'नाभि नभं चे' त्यादौ षष्ठ्याः स्थाने प्रथमाया विधानादस्ति षष्ठी । विश्रवणरवणेति तु शब्दान्तरं प्रत्ययविषयं विज्ञेयम् । यथोक्तं–'वालवायो विदूरं च प्रकृत्यन्तरमेव वे'ति । विश्रवःशब्दात्त्वनभिधानात् प्रत्ययाऽभावः ।

( उ० ) तत्रस्थं वेत्यंशं व्याचष्टे–अथवा सिद्धं त्विति । अनुवर्तमानं षष्ठीति पदं षष्ठीनिर्दिष्टलाक्षणिकं षष्ठ्या विपरिणम्यत इत्याशयेनाह–षष्ठीनिर्दिष्टस्येति । नन्वेवं 'नाभि नभ'मित्यादौ षष्ठीनिर्देशाऽभावात्स्थानिवत्त्वाभावेन यत्प्रत्ययसंनियुक्तनभस्य भत्वाङ्गत्वयोरभावाद्यस्येति लोपो न स्यादत आह–नाभीति । विधानात्–करणात् । यत्र तर्हि स्थान्यनुमानं तत्र कथमत आह–विश्रवणेति । प्रत्ययविषयम्–शिवाद्यण्विषयम् । वालवेति । वैदूर्यस्य विदूरान्न प्रभवः किंतु वालवायादिति विदूराञ्ञ्य इत्यस्याऽसङ्गतौ इदं वार्त्तिकं । वालवायो विदूरमापद्यतेऽथास्मात्प्रत्ययः । यद्वा वालवायार्थवाचको विदूरोऽन्य एव ञ्यप्रत्ययविषय इति तदर्थः । ननु विश्रवणादेरनादेशत्वे विश्रवःशब्दादपि प्रत्ययः स्यादत आह–विश्रव इति ।

[ प्रश्नभाष्यम् ]

तत्तर्हि षष्ठीनिर्दिष्टग्रहणं कर्तव्यम् ? ॥

[ समाधानभाष्यम् ]

न कर्तव्यम् । प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'षष्ठी स्थानेयोगे'ति ॥

[ समाधानान्तरभाष्यम् ]

अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति–'नापवादे उत्सर्गकृतं भवती'ति यदयं श्यन्नादीन्कांश्चिच्छितः करोति । श्यन् श्नम् श्ना शः श्नुरिति ॥

( प्र० ) यदयमिति । न च पित्त्वनिवृत्त्यर्थं नियमार्थं शित्त्वम् । श्यनो नित्त्वाज्ज्ञापकात्पित्त्वनिवृत्तेः सिद्धत्वात् । नह्यत्र पित्त्वस्य नित्त्वस्य वा विशेषोऽस्तीति केचिदाहुः । तदयुक्तम् । ताच्छील्यादौ विषये चानशि[3] श्यनो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यात् । तस्मादिष्टसिद्धये सामान्येन ज्ञापकं शित्त्वमाश्रीयते–अपवादे उत्सर्गकृतं न भवतीति ॥

( उ० ) विशेषोऽस्तीति । नित्त्वं हि प्रत्ययाद्युदात्तत्वबाधेनाद्युदात्तत्वाय । स्थानिवत्त्वात्पित्त्वेनानुदात्तत्वे तु लसार्वधातुकस्याप्यदुपदेशादित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति भावः । आद्युदात्तार्थमिति । इष्टमपि चित्त्वप्रयुक्तान्तोदात्तत्वं बाधित्वेत्यर्थः । अन्यत्र विकरणेभ्य इत्यपि नित्त्वसामर्थ्याद्बाध्यत इति भावः । किंच वावृन् इत्यस्यानेकाचो दिवादौ सत्त्वेन तत्रापि नित्त्वपित्त्वयोर्विशेषः । कैयटस्वरसस्तु तस्य धातोर्दिवादावभाव एवेति बोध्यम् । इष्टसिद्धये इति । वैयर्थ्यान्नियमत्वं वा ज्ञापकत्वं वेत्यत्र विनिगमकाऽभावान्नित्त्वसामर्थ्यादन्यत्र विक-

---

१ 'उक्तं च' । लुप्तं स्यात् । २ 'श्यन्नादीनां' ।

३ चानशीति । बुध्यमान इत्यादावित्यर्थः ।

रणेभ्य इत्युपदेशबाधकल्पनापेक्षया स्थानिवदित्यतिदेशबाधकल्पनस्यैवौचित्याच्चेति भावः । सामान्येनेति । न विकरणविषयमेव, नापि पित्त्वविषयमेवेत्यर्थः । भाष्ये इयङादीनिति उत्सर्गसजातीयानुबन्धवदपवादानामुपलक्षणम्॥

[ आक्षेपवार्तिकम् ]

*॥ तस्य दोषस्तयादेशे उभयेप्रतिषेधः ॥*॥*

तस्यैतस्य लक्षणस्य दोषः तयादेश उभयेप्रतिषेधो वक्तव्यः । उभये देवमनुष्याः । तयपो ग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोति ॥

[ सिद्धान्तिभाष्यम् ]

नैष दोषः । अयच् प्रत्ययान्तरम् ॥

[ आक्षेपसाधकभाष्यम् ]

यदि प्रत्ययान्तरम्, 'उभयी'ति ईकारो न प्राप्नोति ॥

[ आक्षेपबाधकभाष्यम् ]

मा भूदेवम् । 'मात्रच' इत्येवं भविष्यति ॥ कथम् ? ॥ 'मात्र'ञिति नेदं प्रत्ययग्रहणम् ॥ किं तर्हि ? ॥ प्रत्याहारग्रहणम् ॥ क सन्निविष्टानां प्रत्याहारः ? ॥ मात्रशब्दात्प्रभृति आ अयचश्चकारात् ॥

[ आक्षेपसाधकभाष्यम् ]

यदि प्रत्याहारग्रहणं, 'कति तिष्ठन्ति'-अत्रापि प्राप्नोति ॥

( प्र० ) कति तिष्ठन्तीति । परिहारान्तरसद्भावान्न षट्स्वस्रादिभ्य इति प्रतिषेधोऽत्र नोक्तः॥

[ आक्षेपबाधकभाष्यम् ]

'अत' इति वर्तते ॥

[ आक्षेपसाधकभाष्यम् ]

एवमपि 'तैलमात्रा घृतमात्रा' अत्रापि प्राप्नोति ॥

( प्र० ) तैलमात्रेति । चकारस्य प्रत्याहारार्थस्योपादानात्तस्याऽविशेषकत्वान्मात्रशब्दमात्रग्रहणप्रसङ्गः ।

[ आक्षेपबाधकभाष्यम् ]

सदृशस्याऽप्यसंनिविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणम् ॥

( प्र० ) सदृशस्येति । प्रत्ययाऽनुकरणं मात्रशब्द इति प्रातिपदिकस्याऽग्रहणमित्यर्थः ॥

(उ०) प्रत्ययानुकरणमिति । टिड्ढाणञ्सूत्रे साहचर्यादिति भावः ॥

[ आपक्षेवार्तिकम् ]

*॥*॥ जात्याख्यायां वचनातिदेशे स्थानिवद्भावप्रतिषेधः ॥*॥*

जात्याख्यायां वचनातिदेशे स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः । व्रीहिभ्य आगत इत्यत्र 'घेर्ङिती'ति गुणः प्राप्नोति ।

(प्र०) जात्याख्यायामिति । एकस्मिन् यत् प्राप्तमेकवचनं तस्य प्रसङ्गे बहुवचनमादेश इति कल्पनाऽऽश्रयेण दोषोपन्यासः ।

(उ०) नन्वेकस्मिन् बहुवचनमित्युक्त्या षष्ठ्यभावात्कथमादेशत्वमत आह–एकस्मिन्निति ।

[ आक्षेपनिरासभाष्यम् ]

नैष दोषः । उक्तमेतत् 'अर्थातिदेशात्सिद्धम्' इति ॥

(उ०) भाष्ये–अर्थातीति । बहुवचनशब्दो न प्रत्ययपरः, किं त्वर्थपर इति भावः ।

[ आक्षेपवार्तिकम् ]

*॥*॥ ङ्याब्ग्रहणेऽदीर्घः ॥*॥*

ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥

*॥*॥ निष्कौशाम्बिः । अतिखट्वः ॥*॥*

ङ्याब्ग्रहणेन ग्रहणात्सुलोपो मा भूदिति ॥

( उ० ) 'ङ्याब्ग्रहणेऽदीर्घ' इति भाष्ये । ननु गङ्गाया इर्गङ्गिः, गङ्गीयतेः क्विपि गङ्गीरित्यादौ स्थानिवत्त्वनिषेधो न स्यात् । न च तत्र स्थानिवत्त्वे इष्टापत्तिरस्तु, सुलोपश्चास्त्विति वाच्यम् । आकारेकारप्रश्लेषमादायैतत्प्रत्याख्यानपरभाष्यविरोधात् । सूत्रमतेऽपि नात्र लोपः, प्रत्यासत्त्या ङ्याप्पदोपस्थितेकाराऽकारयोरेव दीर्घग्रहणेन ग्रहणादिति चेन्न । तेषामनभिधानात् । नैवेदं विशेषणं व्यर्थम्, खट्वा

१ 'उभय' । २ एवं । तयबन्ततया माभूदीकारइत्यर्थः । ३ 'वचनादेशे ।

४ दोषः–अतिव्याप्तिरूपो दोषः । ५ भाष्यमिदमित्यन्ये । ६ इदम्—अदीर्घ इति ।

इत्यादौ सवर्णदीर्घे परत्वेन परादिवद्भावप्राप्त्या स्थानिवत्त्वस्यैवाऽभावादिति वाच्यम् । न 'स्थानिव'दित्यस्य स्थानिकार्यं न लभते इत्यर्थे येन केनापि प्राप्तस्य स्थानिकार्यस्य निषेध इति दीर्घेप्याप्स्वप्रयुक्तकार्याऽभावशङ्कावारणार्थं तत् । 'ह्रस्व' इति नोक्तम्, चित्रायां जातश्चित्र इत्यादौ जातार्थलुकि टापो लुक्यपि प्रत्ययलक्षणेन हल्ङ्यादिलोपापत्तेः । मम तु लुकोपि दीर्घभिन्नत्वात्तत्रापि न स्थानिप्रयुक्तकार्यातिदेश इति दिक् । **अतिखट्व इति ।** न चात्र ह्रस्व आकारस्येति तद्गतमाप्त्वमल्विधिरिति वाच्यम् । **गोस्त्रियो**रित्यस्य स्त्रीप्रत्ययान्तान्तप्रातिपदिकान्त्यस्य ह्रस्व इत्यर्थः । अचश्चेति तु नोपतिष्ठते, अनियमाऽऽसक्तेः । स्त्रीप्रत्ययत्वं च टाङीत्यादिविशिष्टनिष्ठमिति न दोषः । सूत्रोपात्तस्यैव स्थानितावच्छेदकत्वमित्युक्तम् । अत एव 'गोटाङ्ग्रहणं कर्तव्य'मिति वार्तिककृतोक्तम् । स्वरितत्वबलात् 'स्त्रिया'मिति प्रकृत्य ये विहितास्तेषां ग्रहणमिति भाष्यकृतोक्तम् । विधानं चानुबन्धविशिष्टस्यैवेति स्पष्टमेवेति दिक् ।

[ आक्षेपबाधकभाष्यम् ]

**ननु च दीर्घादित्युच्यते ॥**

[ आक्षेपसाधकभाष्यम् ]

**तन्न वक्तव्यं भवति ॥**

[ तटस्थाक्षेपभाष्यम् ]

**किं पुनरत्र ज्यायः ? ॥**

[ तत्समाधानभाष्यम् ]

**स्थानिवत्प्रतिषेध एव ज्यायान् । इदमपि सिद्धं भवति-अतिखट्वाय अतिमालाय । 'याडापः' इति याण्न भवति ॥**

**(उ०) अतिखट्वायेति ।** न चावन्तादङ्गात्परस्य याडिति तदर्थः । उपसर्जनस्त्रीप्रत्यये च तदादिनियमान्नैतदङ्गमाबन्तमिति स्थानिवत्त्वेऽपि न याट्प्रवृत्तिरिति वाच्यम्, प्रत्ययग्रहणपरिभाषयाऽऽबन्तग्रहणे तेन चाङ्गविशेषणे आबन्तान्तं यदङ्गमित्यर्थान्न दोषः । अत एवार्धखट्वायामित्यादौ याट्सिद्धिरिति भावः ।

[ प्रश्नभाष्यम् ]

**अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे कृते पिच्चासौ भूतपूर्व इति कृत्वा याडापि इति याट् कस्मान्न भवति ? ॥**

**(प्र०) भूतपूर्व इति ।** अनुबन्धकार्ये सर्वत्र भूतपूर्वगत्याश्रयणात्, आ इति च रूपसद्भावात् ।

[ समाधानभाष्यम् ]

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥**

**(प्र०) लक्षणेति ।** अत्र चाऽन्तरा ह्रस्वे कृते स एवायमिति बुद्धेर्विच्छेदः ।

(उ०) नन्वेवमपि दीर्घे कृते स्थानिवद्भावेनाप्त्वं स्यादेव, अयं निषेधस्तु न, दीर्घत्वादत आह—**अत्रचेति** । एवं च स्थानिवद्भावेन तदलाभः, तत्स्थानिन्यसत्त्वादिति भावः ।

[ आक्षेपभाष्यम् ]

**ननु चेदानीं सत्यपि स्थानिवद्भावे एतया परिभाषया शक्यमिहोपस्थातुम् ॥**

(उ०) भाष्ये—**ननुचेदानीमिति ।** वार्तिकाऽकरणे इत्यर्थः । **सत्यपीति** । निष्कौशाम्बिरित्यादौ ।

[ समाधानभाष्यम् ]

**नेत्याह । नेहेदानीं क्वचिदपि स्थानिवद्भावः स्यात् ॥**

[ आक्षेपभाष्यम् ]

**तर्हि वक्तव्यम् ॥**

[ समाधानभाष्यम् ]

**न वक्तव्यम् ॥**

॥ * ॥ *प्रश्लिष्टनिर्देशात्सिद्धम्* ॥ * ॥

**प्रश्लिष्टनिर्देशोऽयम्, ङी-ई । ईकारान्तात् । आ-आप् । आकारान्तादिति ।**

**(उ०) प्रश्लिष्टनिर्देशादिति ।** अतिखट्वायेत्यादौ आकारस्य लाक्षणिकत्वादेव न दोषः । खट्वायै इत्यादौ तु न दोषो, यतो लक्षणप्रवृत्तिं विना यद्रूपाऽसंभवस्तदेव लाक्षणिकं परिभाषाया निषेधविषयः । न चेह तथा । एकादेशतः प्रागपि तद्रूपसत्त्वादित्याहुः । अयं च प्रश्लेषो 'याडापः' 'आङि चापः' 'औङ आपः' 'ङेराम्नद्याम्नीभ्यः', 'हल्ङ्याब्भ्यो' इत्येतेषु । 'ह्रस्वनद्याप' इत्यत्र तु प्रश्लेषे न मानमिति दिक् । ननु भाष्यमते सूत्रमते च अतिखट्वस्य अः अतिखट्वा इत्यत्र सुलोपो भवति । वार्त्तिकमते तु न, अतिखट्वे आबन्तत्वस्य विच्छेदादग्रे प्ररोहाऽसंभवादिति चेन्न । अनभिधानेनैषां प्रयोगाणामभावात् । यद्वा स्थानिवद्भावस्य कार्यार्थत्वेनाऽतिखट्वाशब्दे आकारप्रश्लेषे फलाऽभावात्तदप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे तदारोहः सूत्रमते भाष्यमते च दुर्लभः, परम्परया कार्यमादाय स्थानिवत्त्वप्रवृत्तौ मानाभावात् । यत्तु वार्तिकमते लोपाऽप्राप्त्या भाष्यादिमतेऽपि

१ न स्थानीति । यत इत्यादिः । येनेति । परादिवत्त्वे नापीत्यर्थः । २ 'ङ्याब्ग्रहणे' इत्यस्य च ङ्याप्स्थानिको दीर्घभिन्नआदेशोन स्थानिवदित्यर्थः । ३ 'वद्भावप' । ४ क्वचिन्न । ५ 'न तर्हि' ।

[ आक्षेपनिराकरणभाष्यम् ]

नैष दोषः। इदमिह संप्रधार्यम्-तिसृभावः क्रियतां, त्रयादेश इति। किमत्र कर्तव्यम्? ॥ परत्वात्तिसृभावः ॥

(उ०) परत्वात्तिसृभाव इति। नच लिङ्गविशेष विभक्तिसंज्ञापेक्षतिस्रपेक्षया प्रत्ययविशेषापेक्षस्याप्यन्तरङ्गत्वात्त्रयादेशापत्तिः। किंच स्वरूपेणोपादाने विशेषापेक्षत्वकृतबहिरङ्गत्वं नेत्यर्थस्य पादः पदिति सूत्रे भाष्ये ध्वनितत्वेन सर्वथा त्रयादेशस्यान्तरङ्गत्वमिति वाच्यम्। अर्थसंज्ञाकृत[1] बहिरङ्गत्वस्य शास्त्रेऽनाश्रयणात्। एतेन 'चतस्र' इत्यपि व्याख्यातमिति दिक् ॥

[ आक्षेपभाष्यम् ]

अथेदानीं तिसृभावे कृते पुनःप्रसङ्गविज्ञानात्त्रयादेशः कस्मान्न भवति? ॥

[ समाधानवार्तिकम् ]

'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति ॥

[ आक्षेपवार्तिकम् ]

॥*॥ आम्विधौ च ॥*॥

आम्विधौ च स्रन्तस्य प्रतिषेधो वक्तव्यः। 'चतस्रस्तिष्ठन्ति'। चतसृभावे कृते 'चतुरनडुहोरामुदात्तः' इत्याम्प्राप्नोति ॥

[ आक्षेपनिरासभाष्यम् ]

नैष दोषः। इदमिह संप्रधार्यम्-चतसृभावः क्रियताम्, 'चतुरनडुहोरामुदात्तः' इत्यामिति ॥ किमत्र कर्तव्यम्? ॥ परत्वाच्चतसृभावः ॥

[ आक्षेपभाष्यम् ]

अथेदानीं चतसृभावे कृते पुनःप्रसङ्गविज्ञानादाम्कस्मान्न भवति? ॥

[ समाधानभाष्यम् ]

'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति ॥

[ आक्षेपवार्तिकम् ]

॥*॥ स्वरे वस्वादेशे ॥*॥

स्वरे वस्वादेशे प्रतिषेधो वक्तव्यः ॥ विदुषः पश्य। 'शतुरनुमो नद्यजादी अन्तोदात्ता'दित्येष स्वरः प्राप्नोति ॥

(उ०) विदुष इत्यत्र विदेः शतुर्वसुरिति शत्रादेशो वसुः। शतुरनुम इत्यादि। अनुम्यः शता तदन्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्तेत्यर्थः।

[ आक्षेपनिराकरणभाष्यम् ]

नैष दोषः। 'अनुमः' इति प्रतिषेधो भविष्यति ॥

[ अनुपपत्तिभाष्यम् ]

'अनुम' इत्युच्यते, न चात्र नुमं पश्यामः ॥

[ परिहारभाष्यम् ]

अनुम इति नेदमागमग्रहणम्॥ किं तर्हि?॥ प्रत्याहारग्रहणम् ॥ क्व सन्निविष्टानां प्रत्याहारः?॥ उकारात्प्रभृत्या नुमो मकारात् ॥

(प्र०) उकारात्प्रभृतीति। तनादिकृञ्भ्य उरित्यतः। तत्र च वसुरन्तर्भूतः ॥

[ अनिष्टापत्तिभाष्यम् ]

यदि प्रत्याहारग्रहणं 'लुनता पुनता' अत्रापि प्राप्नोति ॥

(प्र०) यदीति। श्नाप्रत्ययस्य प्रत्याहारेऽन्तर्भावात् ॥

(उ०) यदि प्रत्याहारेति। उम्रहितशत्रन्तेत्यर्थ इत्यभिमानः ॥

[ परिहारभाष्यम् ]

अनुम्ग्रहणेन न शत्रन्तं विशेष्यते ॥ किं तर्हि? ॥

शतैव विशेष्यते-शता योऽनुम्क इति ॥ अवश्यं चैतदेवं विज्ञेयम्। आगमग्रहणे हि सतीह प्रसज्येत-मुञ्चता मुञ्चत इति ॥

(प्र०) शता य इति। न चाऽत्र श्ना शतुः कृत इत्यनुमेव शता। मुञ्चतेति। शत्रन्तस्य सनुम्कत्वादिति भावः। तस्मादागमग्रहणेऽपि शतैव विशेषणीय इति प्रत्याहारग्रहणेपि स एव विशेष्यत इत्यदोषः ॥

(उ०) भाष्ये अनुम्क इति। वसोरपि व्यपदेशिवद्भावेनोम्वत्त्वम्। आगमग्रहणे हीति। हिरप्यर्थे। तद्ग्रहणेऽपीत्यर्थः। कैयटे-अनुमेव शतेति। यद्यपि शतापि प्रत्याहारान्तर्गतस्तथापि सामर्थ्यात्तद्भिन्नस्यैव प्रत्याहारान्त-

---

1 कृतेति। उभयकृतेत्यर्थः।

1 क्वचिन्न।

ईकारादिप्रश्लेषान्तरेण लोपाऽभाव एव वाच्यः। एकप्रश्लेषेणै-वातिखट्व्यावृत्तौ सिद्धायां दीर्घग्रहणं सूत्रमते भाष्यमते तत्प्रत्याख्यानाय कृतप्रश्लेषान्तरं च नियमार्थम्—न कदाचि द्रूपान्तरं प्राप्तौ यौ ङ्यापाविति। एवं च न दोष इति। तन्न। मानाऽभावात्। [किंच] अतिखट्वायेत्येव वार्त्तिकप्रयोजनं प्रदर्श्याकारप्रश्लेषेण हि तत्प्रत्याख्यातं भाष्ये ॥

[ आक्षेपवार्तिकम् ]

॥*॥ *आहिभुवोरीट्प्रतिषेधः* ॥*॥

**आहिभुवोरीटः[1]प्रतिषेधो वक्तव्यः। आत्थ अभूत्। अस्तिब्रूग्रहणेन ग्रहणादीट् प्राप्नोति।**

(उ०) भाष्ये-आहिभुवोरिति। 'भुव ईट्' अस्ति-सिचो पृक्ते' इत्याभ्यां प्राप्तः ॥

[ आक्षेपनिरासभाष्यम् ]

**आहेस्तावन्न वक्तव्यः। आचार्यप्रवृत्ति-र्ज्ञापयति–नाहेरीड् भवतीति। यदयम्-'आहस्थः' इति झलादिप्रकरणे थत्वं शास्ति ॥**

[ ज्ञापकबाधकभाष्यम् ]

**नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेत-स्य वचने प्रयोजनम् ॥ किम् ? ॥ भूत-पूर्वगतिर्यथा विज्ञायेत झलादिर्यो भूतपूर्व इति ॥**

(प्र०) झलादिरिति। णलादिषु थलेव भूत-पूर्वो झलादिरिति भावः ॥

[ ज्ञापकस्थापनभाष्यम् ]

**यद्येवं थवचनमनर्थकं स्यात्। आथि-मेवायमुच्चारयेत्—'ब्रुवः पञ्चानामादित आथो ब्रुवः' इति ॥**

(प्र०) आथिमिति। तिबादयो हि सर्वे झला-दय इति णलादयो भूतपूर्वा झलादय इति भावः ॥

[ भ्वंशेप्याक्षेपनिराकरणभाष्यम् ]

**भवतेश्चापि न वक्तव्यः। 'अस्तिसिस-चोऽपृक्ते' इति द्विसकारको निर्देशः। अस्तेः सकारान्तादिति ॥**

(उ०) **द्विसकारको निर्देश इति।** अस्तिस्सिच इति सूत्रपाठ इति भावः। प्रकारान्तरे तु आदेशैरपहाराद् सद्वयोच्चारणाऽभावेन निर्देश इति भाष्याऽस्वारस्यम्। अत एव वार्त्तिककृता सिज्लुकः स्थानिवत्त्वस्य प्रत्ययलक्षणस्य वा प्रतिषेधो नारब्धः। सकारस्य सिज्विशेषणत्वमित्याशयेन तद्विशेषणसामर्थ्यात् श्रूयमाणसान्तपरमिति प्रत्ययलक्षण-सूत्रस्य विध्यर्थत्वेऽपि न दोषः। भाष्यकृता तु मध्यमणि-न्यायेनोभयसंबन्धमङ्गीकृत्य भुवः स्थानिवत्त्वप्रतिषेधोऽपि प्रत्याख्यात इति बोध्यम् ॥

[ आक्षेपवार्तिकम् ]

॥*॥ *वध्यादेशे वृद्धितत्वप्रतिषेधः* ॥*॥

**वध्यादेशे वृद्धितत्वयोः प्रतिषेधो वक्तव्यः। वधकं पुष्करमिति। स्थानिव-द्भावाद्वृद्धितत्वे प्राप्नुतः ॥**

[ आक्षेपनिराकरणभाष्यम् ]

**नैव दोषः। उक्तमेतत्–'नायं ण्वुल्, किंत्वन्योऽयमकशब्दः किदौणादिको रुचक इति यथा' ॥**

(उ०) **नायं ण्वुलिति।** यद्यपि वृद्धिर्वधस्यादन्त-त्वेनापि वारयितुं शक्या, तथापि तत्वांशप्रत्याख्यानायेदमा-वश्यकमिति भावः ॥

[ आक्षेपवार्तिकम् ]

॥*॥ *इड्विधिश्च* ॥*॥

**इड्विधेयः। आवधिषीष्ट। 'एकाच उप-देशेऽनुदात्तात्' इति प्रतिषेधः[2] प्राप्नोति ॥**

(उ०) **इड्विधिश्चेति।** यथेड्विधिः सिध्यति तथा तन्निषेधे स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः। **इड्विधेय** इत्यस्य 'तन्निषेधे स्थानिवत्त्वप्रतिषेधद्वारे'ति शेषः। **आवधि-षीष्टेति।** आङो यमहन इत्यात्मनेपदम्। **प्रतिषेधः प्राप्नोतीति।** तत्र वधेः स्थानिवत्त्वेनाङ्गतया निषेधः प्राप्त इण्निषेधरूपे कार्ये स्थानिवत्त्वप्रतिषेधेनाङ्गत्वाऽभावान्नेत्यर्थः। वधेरपि सूत्रे स्थान्यनुरूपानुदात्तस्यैवोच्चारणेन अनुदात्तत्वं बोध्यम् ॥

[ आक्षेपनिरासभाष्यम ]

**नैष दोषः। आद्युदात्तनिपातनं करि-ष्यते। स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ॥**

(उ०) **प्रकृतिस्वरस्य।** प्रकृतितः स्थान्यनुरूपतया प्राप्तस्यानुदात्तत्वस्य ॥

१ 'रीट्प्रतिषेध॰'। २ 'इतीट्प्रति'।

(प्र०) आवधिषीष्टेति । यदा यच्छब्दप्रयोगः यदावधिषीष्टे'ति [ भवति, तदा ] तिङ्ङतिङ इति निघातः प्राप्तो निपातैर्यद्यदीति प्रतिषिद्धस्तदैतदुदाहरणम् । क्वचित्तु 'यदावधिषीष्टे'ति पाठः ॥

[ प्रत्याक्षेपभाष्यम् ]

**एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः प्रकृतिस्वरं बाधत एवं प्रत्ययस्वरमपि बाधेत-आवधिषीष्टेति ॥**

(उ०) प्रत्ययस्वरम्-तत्प्रयुक्तनिघातम् । नन्वत्रोदाहरणे तिङ्ङतिङ इति निघातेन भाव्यमत आह यदायदिति । यदेत्यस्य तदैतदुदाहरणमित्यनेनान्वयः । मध्ये भवति तदेत्यपाठः ॥

[ आक्षेपनिरासभाष्यम् ]

**नैष दोषः । आर्धधातुकीयाः सामान्येन भवन्ति अनवस्थितेषु प्रत्ययेषु । तत्रार्धधातुकसामान्ये वधिभावे कृते सतिशिष्टत्वात् प्रत्ययस्वरो भविष्यति ॥**

(उ०) भाष्ये आर्धधातुकसामान्ये इति । आर्धधातुक इतिवल्लिङीत्यत्रापि विषयसप्तम्येवेति भावः । एवं चाद्युदात्तनिपातने उपदेशिवद्भावारम्भगौरवाभावेन उपदेशत्वावच्छेदेनानुदात्तत्वाऽभावात् स्थानिवद्भावेनाङ्गत्वे सत्यपि निषेधाऽप्राप्त्या तन्निषेधो न कार्य इति तात्पर्यम् ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ आकारान्तान्नुक्पुक्प्रतिषेधः ॥*॥*

**आकारान्तान्नुक्पुकोः प्रतिषेधो वक्तव्यः । विलापयति । भापयते । लीभीग्रहणेन ग्रहणान्नुक्पुकौ प्राप्नुतः ॥**

(उ०) आकारान्तादिति । विभाषा लीयतेः बिभेतेर्हेतुभये इत्यात्वम् । लीलोर्नुग्लुकाविति, भियो हेतुभये इति च नुक्-पुकौ ॥

[ आक्षेपपरिहारभाष्यम् ]

**[ नैष [1]दोषः ]**

*॥*॥ लीभियोः प्रश्लिष्टनिर्देशात्सिद्धम् ॥*॥*

**लीभियोः प्रश्लिष्टनिर्देशोऽयम्-लीई ईकारान्तस्य, भीई ईकारान्तस्य चेति ।**

(उ०) प्रश्लिष्टनिर्देशादिति । यद्यपि भिय इत्यत्र प्रश्लेषे एकादेशस्य कृदतिङसूत्रभाष्योक्तरीत्या पूर्वधर्मावच्छिन्नोद्देश्यके इयङ्विधौ अचः परस्मिन्निति स्थानिवत्त्वेनेयङ् दुर्लभः, तथापि सौत्रत्वात्स इति बोध्यम् । 'क्षियो निष्ठायाम्' इति दीर्घविधाविवेति दिक् ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ लोडादेशे शाभावजभावधित्वहिलोपैत्त्वप्रतिषेधः ॥*॥*

[ भाष्यम् ]

**लोडादेशे [4]एषां प्रतिषेधो वक्तव्यः ॥ शिष्टात् । हतात् । भिन्तात् । कुरुतात् । स्तात् । लोडादेशे कृते शाभावो जभावो धित्वं हिलोप [5]एत्वमित्येते विधयः प्राप्नुवन्ति ॥**

(उ०) शाभावेत्यादि । शाहौ, हन्तेर्जः, हुझल्भ्यो हेर्धिः, उतश्च प्रत्ययात् , घ्वसोरेद्धावित्येतैः ॥

[ आक्षेपपरिहारभाष्यम् ]

**नैष दोषः । इदमिह संप्रधार्यम्-लोडादेशः क्रियताम्, एते विधय इति किमत्र कर्तव्यम् ? ॥**

**परत्वाल्लोडादेशः ॥**

(उ०) परत्वादिति । युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्याऽभावरूपाऽसंभवस्य सत्त्वात् । तादृशाऽसंभव एवच विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी । स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरम्, न प्रवृत्तिकाले इति युगपदसंभवः स्पष्ट एवेति भावः । एवमग्रेऽपि ॥

[ आक्षेपभाष्यम् ]

**अथेदानीं लोडादेशे कृते पुनः प्रसङ्गविज्ञानात्कस्मादेते विधयो न भवन्ति ? ॥**

[ तद्बाधकभाष्यम् ]

**'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति कृत्वा ॥**

[ आक्षेपवार्तिकम् ]

*॥*॥ त्रयादेशे स्रन्तप्रतिषेधः ॥*॥*

**त्रयादेशे स्रन्तस्य प्रतिषेधो वक्तव्यः । 'तिसृणाम्' । तिसृभावे कृते 'त्रेस्त्रयः' इति त्रयादेशः प्राप्नोति ।**

---

1 इदं क्वचिन्न । 2 इदं भाष्यमित्यन्ये । 3 'न्तस्येति' ।

4 'एषां लोडा' । 5 एतैः । 'प्राप्नुवन्ति'मिति शेषः ।

अयं भावः—अभावातिदेशेऽपि स्थानिप्रयुक्तं भवत्यादेशप्रयुक्तं नेत्यर्थ इति । तदाह—**समुदायेति** । यथा सूत्रे सानुबन्धकग्रहणे तस्याऽनल्विधित्वम्, स्थानित्वं च नाऽलः, तथा आदेशत्वमपि सूत्रोपात्तस्यैवेति भावः । एवं च यण् नादेशप्रयुक्तः, किंतु तदवयवप्रयुक्त इति नासौ वार्यत इति तात्पर्यम् । **आदेशो गृह्यत इति** । आदेश इति गृह्यते इत्यर्थः । **न प्राप्नोतीति** । 'स्थानिवत्त्वेने'ति शेषः ।

[ प्रयोजनदर्शनोपपादनभाष्यम् ]

**इदं तर्हि प्रयोजनम्—आकाष्टाम् । सिचो लोपः परनिमित्तकः । तस्य स्थानिवद्भावात्-'षढोः कः सी'ति कत्वं प्राप्नोति । 'अच' इति वचनान्न भवति ॥**

[ उक्तदोषनिराकरणभाष्यम् ]

**एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्-'पूर्वत्रासिद्धे न स्थानिव'दिति ॥**

[ प्रयोजनभाष्यम् ]

**इदं तर्हि प्रयोजनम्—आगत्य । अभिगत्य । अनुनासिकलोपः परनिमित्तकः, तस्य स्थानिवद्भावाद्ध्रस्वस्येति तुङ् न प्राप्नोति । 'अच' इति वचनाद्भवति ॥**

( उ० ) भाष्ये–**आगत्येति** । मलोपस्यापि ह्रस्वस्य पित्प्रत्ययपरत्वसंपादकतया तुग्विधावाश्रयणमित्यर्थः । अभावातिदेशे चैतत्फलम् । अतएवाऽभावादितिदेशे पटयती'त्यादौ वृद्धिर्नेत्यग्रे भाष्यं संगच्छते ॥

[ प्रयोजनप्रश्नभाष्यम् ]

**अथ परस्मिन्निति किमर्थम् ? ॥**

[ प्रयोजनदर्शिभाष्यम् ]

**युवजानिः; वधूजानिः । द्विपदिका । वैयाघ्रपद्यः । आदीध्ये ॥**

[ प्रयोजनोपपादनभाष्यम् ]

**युवजानिः वधूजानिरिति,-जायाया निङ् न परनिमित्तकः । यस्य स्थानिवद्भावा'द्वली'ति यलोपो न प्राप्नोति । 'परस्मि'न्निति वचनाद्भवति ॥**

( प्र० ) **युवजानिरिति** । अव्युत्पन्नत्वादुणादीनां जाशब्दस्याऽऽकारलोपो न भवति । अन्यथाऽऽकारस्य निङि कृते यलोपे च निङिः स्थानिवद्भावात्प्रत्ययत्वादाकारलोपः स्यात् । न चाऽसिद्धवदत्राभादित्याकारलोपे कर्तव्येऽसिद्धत्वमालस्य, व्याश्रयत्वात् ॥

( उ० ) ननु स्वाश्रयवत्त्वादिना यलोपसिद्धावपि आलोपः स्थानिवत्त्वेन स्यादिति तद्वारणाय परग्रहणमावश्यकमेवेत्यत आह–**अव्युत्पन्नत्वादिति । आकारलोप इति** । 'आतो लोप' इत्यनेन । जनेरौणादिके यकि 'ये विभाषे'त्यात्वे टापि तेनैकादेशे तस्य पूर्वान्तवद्भावादार्धधातुकत्वेन युवतिशब्देन बहुव्रीहौ निङादेशे यलोपेऽवशिष्टस्य स्थानिवत्त्वेनार्धधातुकत्वादिसत्त्वाद्यातिरितिवदिति भावः। ननु आभीयत्वेनात्वस्याऽसिद्धत्वाल्लोपो नेत्यत आह–**नचेति । व्याश्रयत्वादिति** । ये आत्वम् , आस्थानिके निङि लोप इत्यात्वनिमित्तापेक्षया न्यूननिमित्तकत्वा द्व्याश्रयता ।

[ प्रयोजननिरासभाष्यम् ]

**नैतदस्ति प्रयोजनम् । स्वाश्रयमत्र वलत्वं भविष्यति । अथ वा योऽत्रादेशो नासावाश्रीयते । यश्चाश्रीयते नासावादेशः।**

[ प्रयोजनदर्शिभाष्यम् ]

**इदं तर्हि प्रयोजनम्-द्विपदिका त्रिपदिका । पादस्य लोपो न परनिमित्तकः, तस्य स्थानिवद्भावात्पद्भावो न प्राप्नोति । परस्मिन्निति वचनाद्भवति ॥**

( उ० ) भाष्ये–**द्विपदिकेति** । द्वौ द्वौ पादौ ददातीति तद्धितार्थेति समासे पादस्येति वुन्लोपौ । **परस्मिन्नितीति** । सहविधाने परनिमित्तकत्वव्यवहाराऽभावादित्यर्थः।

[ उक्तनिराकरणभाष्यम् ]

**एतदपि नास्ति प्रयोजनम् । पुनर्लोपवचनसामर्थ्यात्स्थानिवद्भावो न भविष्यति ।**

( प्र० ) **पुनरिति** । यस्येति लोपे सिद्धे 'पादशतस्ये'त्यत्र पुनर्लोपवचनं स्थानिवत्त्वनिषेधार्थम् । पुनर्लोपवचने सति लुप्यत एवाऽकारः, कार्ये नाऽऽश्रीयते इत्यर्थः ॥

( उ० ) पुनर्लोपवचनेन यथा स्थानिवत्त्वाऽभावस्तथाऽभिनयति–**पुनर्लोपेति ।**

---

१ **तदाह**–तद्भनयन्नाह । २ 'एवं तर्हि'। ३ कचिन्न। ४ **आ**त्वे । 'ततः सवर्णदीर्घे' इति शेषः । ५ **अवशि**ष्टस्य–निङः । ६ 'अपरनिमित्तकः'। ७ **भवतीति** । स्थानिवद्भावाऽभावेन पादः पदिति पद्भावो भवतीत्यर्थः।

र्नतस्य ग्रहणमिति भावः । व्यापकत्वात्प्राधान्याच्च तनादी-त्युकारेण प्रत्याहार इति तात्पर्यम् ॥

[ आक्षेपवार्तिकम् ]

॥*॥ गोः पूर्वणित्त्वात्वस्वरेषु ॥*॥

**गोः पूर्वणित्त्वात्वस्वरेषु प्रतिषेधो वक्तव्यः । चित्रग्वग्रं शबलग्वग्रम् । 'सर्वत्र विभाषा गो'रिति विभाषा पूर्वत्वं प्राप्नोति ॥**

(प्र०) सर्वत्रेति । प्रकृतिभावोऽनेन विधीयते, न तु पूर्वत्वम् । तस्मादेङः पदान्तादतीति पूर्वत्वं-प्राप्नोतीति वाच्यं । यदा त्वप्रकृतिभावः, तदाऽयं प्रसङ्ग उक्तः । उत्तरं त्वल्विधित्वात्स्थानिवत्त्वाऽभावः ।

(उ०) भाष्ये विभाषा पूर्वत्वं प्राप्नोतीति । अत्र वार्त्तिके भाष्ये च पूर्वशब्देन तदपवादो लक्ष्यते । भाष्ये-सर्वत्रेति चाऽवङिति सूत्रस्याप्युपलक्षणम् । ध्वनितं चेदमवङ्सूत्रे भाष्ये इति षष्ठे निरूपयिष्यामः । **अनन्तरस्ये**ति न्यायेन तदपवादोऽपि परत्वाद्यणमपि बाधित्वा स्यादित्याशयः । यत्तु कैयटेन-**तस्मादेङ** इत्या-दिप्रसङ्ग उक्त इत्यन्तमुक्तम् । तत्तु चिन्त्यमेव । **एङः पदान्तादि**ति सूत्रे एङ्पदोच्चारणसत्त्वेन शङ्काया असंभवदु-क्तिकत्वात् । भाष्योक्ते तु एङ्पदाऽभावादनुवृत्तिमजानतः शङ्केत्युक्तिसंभवात् ।

[ दूषणनिराकरणभाष्यम् ]

**नैष दोषः । एङ इति वर्तते । तत्रान-ल्विधाविति प्रतिषेधो भविष्यति ॥**

[ दूषणस्थापनभाष्यम् ]

**एवमपि 'हे चित्रगो अग्रम्' अत्र प्राप्नोति ॥**

(उ०) भाष्ये-**एवमपी**ति । लाक्षणिकत्वादस्य गोश-ब्दस्य स्वतः प्रकृतिभावाऽप्राप्तावपि स्थानिवत्त्वेन प्राप्नोतीति तत्प्रतिषेधो वक्तव्य इत्यर्थः । यदि तु ओत्सूत्रभाष्योक्तरीत्या वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्त्तते, तदेदं वचनं न कार्यम् । पक्षे लाक्षणिकत्वात् । तदंशे[1] स्थानिवत्त्वानपेक्ष-णेनाऽतिदेशविषये तदप्रवृत्तिरित्यपि नेत्याहुः ॥

[ आक्षेपभाष्यम् ]

**णित्त्वम्-चित्रगुः चित्रगू चित्रगवः । 'गोतो णित्' इति णित्त्वं प्राप्नोति ॥**

**आत्वम्-चित्रगुं पश्य शबलगुं पश्य । 'आ-ओतः[2]-' इत्यात्वं प्राप्नोति ॥**

[ आक्षेपवारणभाष्यम् ]

**नैष दोषः-* तपरकरणात्सिद्धम् * । तप-रकरणसामर्थ्यात् णित्वात्वे न भविष्यतः॥**

(उ०) भाष्ये-तपरकरणसामर्थ्यादिति । एवं च गत्याविवक्षितत्वेनाल्विधित्वात्स्थानिवत्त्वाऽभाव इति भावः ।

[ आक्षेपभाष्यम् ]

**स्वर—बहुगुमान् । 'न गोश्वन्साव-वर्णे'ति प्रतिषेधः प्राप्नोति ॥**

[ आक्षेपवार्तिकम् ]

॥*॥ करोतिपिब्योः[3] प्रतिषेधः ॥*॥

**करोतिपिब्योः प्रतिषेधो वक्तव्यः । कुरु पिबेति । स्थानिवद्भावाल्लघूपधगुणः प्राप्नोति ॥**

[ तन्निराकरणवार्तिकम् ]

॥*॥ उक्तं वा ॥*॥

**[ उक्तं वा ] किमुक्तम् ? ॥ 'करोतौ तपरकरणनिर्देशात्सिद्धम्' ॥ 'पिबिरदन्तः[4]' इति ॥ [ स्थानिवदादेशो ]**

## अचः परस्मिन्पूर्वविधौ ॥१।१।५६॥

(प्र०) अचः परस्मिन् । अल्विध्यर्थमिदम् । तथा हि-वव्रश्चेति उरदत्त्वे कृते 'न संप्रसारणे संप्रसारणम्' इति वकारस्य संप्रसारणनिषेधः स्थान्यलाश्रयः। एवमचितीकः सुचितीकः बहुचितीक इति 'चितेः कपी'ति दीर्घे कृते 'ह्रस्वान्तेऽन्त्यात्पूर्व'-मिति स्थान्यलाश्रयः स्वरोऽस्माद्वचनाद्भवति ॥

(उ०) अचःपर । पूर्वेणैव सिद्धे इदं किमर्थमत आह-अलिति । उरदत्त्वे इति । 'अङ्गाक्षिप्तप्रत्ययपरत्व-निमित्तके' इति शेषः । **लिट्यभ्यासस्ये**त्युभयेषां ग्रहणा-द्धलादिः शेषात्प्राक् संप्रसारणे वस्य संप्रसारणात्तन्निषेधाच्च प्राङ् नित्यत्वात्परत्वाच्चोरदत्वमिति भावः। **एवमचितीति** । उत्तरपदस्याऽधिकृतस्य ह्रस्वेन विशेषणात्तदन्तग्रहणे लब्धे **ह्रस्वान्ते** इत्यत्रान्तग्रहणेन भूतपूर्वगतेराश्रयणेनेदं साधयितुं शक्यमिति कश्चित् । तन्न । तदभावे ह्रस्वादावित्यर्थापत्तेः । **ह्रस्वान्ते** इत्यत्र नञ्सुभ्यामित्यनुवृत्तावपि **बहोर्नञ्वदि**ति वचनाद्बहुचितीक इत्युदाहृतम् ॥

१ एङंशे इत्यर्थः । २ 'गोतः' । ३ भाष्यमिदमित्यन्ये । ४ 'पिब्योः' । ५ लुप्तं स्यात् ।

[ आक्षेपभाष्यम् ]

**अच इति किमर्थम् ? ॥**

(प्र०) वार्त्तानि प्रत्युदाहरणानि कानिचिच्छक्यप्रतिविधानानीति प्रश्नः—**अच इति किमर्थमिति ॥**

(उ०) प्रत्युदाहरणादिचिन्ता वृत्तिकाराणामुचिता न तु भाष्यकृतोऽत आह—**वार्त्तानीति** । वृत्त्युदाहृतानि ॥

[ प्रयोजनप्रदर्शनभाष्यम् ]

**प्रश्नः । विश्नः । द्यूत्वा स्यूत्वा । आक्राशम् । आगत्य ॥ प्रश्नो विश्न इत्यत्र छकारस्य शकारः परनिमित्तकस्तस्य स्थानिवद्भावा'च्छे चे'ति तुक् प्राप्नोति । 'अच' इति वचनान्न भवति ॥**

(उ०) भाष्ये—शकारः—च्छ्वोःशूडिति विहितः ॥

[ दोषवारणभाष्यम् ]

**नैतदस्ति प्रयोजनम् । क्रियमाणेऽपि वा अज्ग्रहणेऽवश्यमत्र तुगभावे यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोति ॥**

(प्र०) **अन्तरङ्गत्वादिति** । अत एव युगपत्प्राप्त्यभावाद्वार्णादाङ्गं बलीय इत्येतदत्र नास्ति । यत्र हि युगपदाङ्गवार्णयोः प्राप्तिर्यथा कारक इति वृद्धियणादेशयोः, यथा च किरतीति यणित्त्वयोस्तत्रैतदुपतिष्ठते । तत्रायं यत्नः—च्छ्वोः शूडिति तकारछकारयोः समुदायनिर्देशात्सतुक्छकारः स्थानी, समुदायनिर्देशसामर्थ्याच्चाल्लोऽन्त्यस्येत्यस्यानुपस्थानमनर्थकत्वाद्वा । एवं च नङो ङित्करणं विश्न इत्यत्र गुणनिषेधार्थमर्थवद्भवति ॥

(उ०) **अत एवेति** । प्रत्ययनिरपेक्षतयाऽन्तरङ्गत्वेन तुकः शादेशात्प्राक् प्रवर्त्तनादेवेत्यर्थः । अत्राऽन्तरङ्गत्वं प्रथमप्रवृत्तिकत्वरूपम् । **युगपदिति** । बलाऽबलविचारस्य प्रतियोगिसापेक्षत्वेन तत्रैव संभवादिति भावः । **यथेति** । कारकः किरतीत्यादौ अन्तरङ्गत्वात्पूर्वमकादेशविकरणाविति भावः । **सतुगिति** । यद्यप्यकृतव्यूहपरिभाषया तुग्व्यावृत्तिः कर्तुं शक्या, तथापि तदभावस्यापि सतुङ्निर्देशो ज्ञापकः । न च वाञ्छतेः क्विपि वाञ्छावित्यादौ शाऽभावाय सतुक्निर्देश इति वाच्यम्, शादेशयोग्यप्रत्ययपरस्य वाञ्छतेः प्रयोगाऽभावात् । अत एव सतुङ्निर्देशसामर्थ्यात्सर्वादेशः श इति षाष्ठभाष्योक्तं सङ्गच्छते । ननु सतुङ्निर्देशेऽपि तेनाङ्ग-

१ अस्य नन्वित्यादिः । २ क्वचिन्न । ३ 'किरतः किरन्ती' । ४ तत्र—तुगभावे । ५ 'देशस्यावयव' ।

विशेषणात्तदन्तविधौ अलोन्त्यस्येत्यस्यैव स्यादत आह—**समुदायेति । अनर्थकत्वादिति । नानर्थक** इति निषेधादिति भावः । सतुक्छनिर्देशे लिङ्गमाह—**एवं चेति ॥**

[ द्वितीयप्रयोजनोपपादनभाष्यम् ]

**इदं तर्हि प्रयोजनम्—द्यूत्वा स्यूत्वा । वकारस्य ऊठ् परनिमित्तकः । तस्य स्थानिवद्भावादचीति यणादेशो न प्राप्नोति । अच इति वचनाद्भवति ॥**

[ दोषवारणभाष्यम् ]

**एतदपि नास्ति प्रयोजनम् । स्वाश्रयमत्राऽच्त्वं भविष्यति ।**

**अथवा योऽत्रादेशो नाऽसावाश्रीयते, यश्चाश्रीयते नाऽसावादेशः ।**

(प्र०) **स्वाश्रयमिति** । न ह्यतिदेशेन स्वाश्रया धर्मा निवर्त्यन्ते यथा 'ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्य'मिति क्षत्रियस्य क्षत्रियधर्माः । वाय्वोरित्यादौ तु सत्यपि स्वाश्रये वल्त्वे बहिरङ्गत्वाद्यणोऽसिद्धत्वाद्वलिलोपाऽभावः । द्यूत्वेत्यत्र तु 'नाजानन्तर्ये' इति असिद्धत्वनिषेधाद्यण् प्रवर्तते । ऊठः स्थानिवत्त्वाद्यलोपः कथं नाशङ्कित इति चेत्, 'योऽनादिष्टादच' इत्येवमर्थस्याऽज्ग्रहणस्य स्थापयिष्यमाणत्वात् । **योऽत्रादेश इति** । समुदायरूप ऊठ् । **यश्चाश्रीयत इति** । यण्विधावच् । **नासावादेश इति** । समुदायस्यादेशत्वात् । न चादेशोऽवयव आदेशो गृह्यते । मुख्यसंभवे गौणग्रहणस्याऽयुक्तत्वात् । ख्यागादीनां तद्धानुबन्धवियुक्तानां धातुसंज्ञा आदेशावयवत्वान्न प्राप्नोति । घस्लादेशस्य लृदित्त्वादङर्थाज्ज्ञापकाज्ज्ञातुकार्याणि भविष्यन्तीत्यदोषः ।

(उ०) **स्वीति** । अयोगवाहेषु हल्त्वाऽच्त्वयोः समावेशदर्शनेन तयोरविरोध इति भावः । ननु स्वाश्रयाऽनिवृत्तौ वाय्वोरित्यत्र दोषोऽत आह—**वाय्वोरितीति । असिद्धत्वनिषेधादिति** । 'ऊठ' इति शेषः । बहिरङ्गपरिभाषाऽनित्यत्वादित्यन्ये । **योऽनादिष्टादच** इति अज्ग्रहणं सिद्धान्तरीत्या स्थान्यपेक्षया पूर्वत्वमाश्रीयत इत्यत्र तात्पर्यम् । **स्थापयिष्यमाणत्वादिति** । व्याख्यास्यमानत्वादित्यर्थः । अत्र स्वाश्रयकार्याऽभावातिदेशस्यापि सिद्धान्तयिष्यमाणत्वाद्भाष्ये परिहारान्तरम्—**अथवा योऽत्रेति** ।

६ **दोष इति** । स्वाश्रयं वल्त्वमादाय यलोपापत्तिरित्यर्थः ।

(प्र०) **माथितिक इति** । यदा 'ठस्येक' इति संघातग्रहणं, तदा स्थानिवद्भावादिकस्य कादेशः प्राप्नोति । [ स्थान्यादेशयोः ] वर्णनिर्देशे त्वल्विधित्वात्कादेशस्याऽप्रसङ्गः । सन्निपातपरिभाषां चानाश्रित्यैतदुक्तम् ।

(उ०) **वर्णनिर्देशे त्विति** । स्थानिन्यकारो न विवक्षित इति वर्ण एव तत्र स्थानि, ठगादिप्रत्ययेष्वप्यकारस्तथैव । आदेशे च विवक्षित इति ठत्वाऽभावात्प्राप्तिरेव नेति भावः । **संनिपातेति** । इदं च **ठक्छसोश्चे**ति वार्तिकभाष्ये स्पष्टम् ।

**'अपीपच'न्निति एकादेशे कृते 'अभ्यस्ताज्झेर्जुस्भवती'ति जुस्भावः प्राप्नोति[2] । स्थानिवद्भावान्न भवति ।**

(प्र०) **अपीपचन्निति** । झेरितश्चेतीकारलोपे कृते 'एकदेशविकृतमनन्यवद्भवती'ति झिरेवायम् । तत्राऽन्तादेशे कृते चङकारस्य च पररूपे कृते तस्यादिवद्भावाज्जुस् प्राप्नोति । स्थानिवद्भावे तु णिलोपस्य पररूपस्य च व्यवधानान्न भवति । ननु पूर्वस्मादपि विधौ स्थानिवद्भावे कथं 'हे गौ'रित्यादि सिध्यति?। उच्यते—अचो यः पूर्वस्तस्मान्निमित्तत्वेनाश्रितादित्याश्रयणात् । तथाहि—गोशब्दे ओकारात् पूर्वो गकारो, न च तस्माद्विधिरिति ।

(उ०) **न भवतीति** । न चाऽपीपचन्नित्यत्र न पदान्तेति निषेधात्स्थानिवद्भावो दुर्लभ इति वाच्यम् । पदचरमावयवे कर्त्तव्ये आदेशस्य पदान्तरस्थस्यैव ग्रहणादत्र तदप्राप्तेः । **पदेऽन्त** इत्यर्थस्य भाष्ये वक्ष्यमाणत्वेनैतदर्थलाभः । केचित्तु पूर्वोत्तरसाहचर्येणाऽभ्यस्तस्य भावरूपादेशानपहृतविकरणकस्य ग्रहणादत्र प्रत्यैषिषन्नित्यादौ च न दोष इत्याहुः । वस्तुत ईदृशसाहचर्याश्रयणापेक्षया पञ्चमीसमासाश्रयणे गौरवाऽभाव इत्यपीपचन्निति तदुदाहरणमेव बोध्यम् । **नच तस्मादिति** । 'निमित्तत्वेनाऽऽश्रिता'दिति शेषः । वस्तुतो'निमित्तत्वेनाश्रिता'दित्यव्यवधानोपलक्षणम् । **नच तस्मादिति** । ओकारेण व्यवधानादित्यर्थः । तदंशे निर्दिष्टपरिभाषबाधे'मानाऽभावादिदमेव युक्तम् । 'निमित्तत्वेने'त्यादेः शब्दमर्यादयाऽलाभाच्च । अतएव 'तथाहि गोशब्द' इत्यादि सार्थकम् । अन्यथोक्तार्थस्योपपादनानपेक्षत्वेन तद्वैयर्थ्यम् । 'निमित्तत्वेनाश्रिता'दित्येतद्ग्रहितस्य तस्यायुक्तत्वं चेत्यन्ये ॥

[ निराकरणभाष्यम् ]

**नैतानि सन्ति प्रयोजनानि ॥ कुतः ॥**

**प्रातिपदिकनिर्देशोऽयम् । प्रातिपदिकनिर्देशाश्चाऽर्थतन्त्रा भवन्ति, न कांचित्प्राधान्येन विभक्तिमाश्रयन्ति[3] । तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते, सा साऽऽश्रयितव्या ॥**

[ विधिग्रहणप्रयोजनान्तरभाष्यम् ]

**इदं तर्हि प्रयोजनं-विधिमात्रे स्थानिवद्[4]यथा स्यात् । अनाश्रीयमाणायामपि प्रकृतौ-वाय्वोरध्वर्योः, 'लोपो व्योर्वली'ति यलोपो मा भूदिति ॥**

**अस्ति प्रयोजनमेतत् ॥ किं तर्हीति ॥**

(प्र०) **विधिमात्र इति** । 'अचः परस्मिन् पूर्वस्ये'त्यनेन स्थानिवद्भावे विहिते पुनर्विधाविति वचनं नियमार्थं, स्थानिवदेव यथा स्यात्, मा भूत् स्वाश्रयमित्यर्थः । **अनाश्रीयमाणायामिति** । कार्ये निमित्तत्वेनेत्यर्थः ॥

(उ०) ननु विधिग्रहणे कृतेऽपि कथं स्थानिवत्त्वेन स्वाश्रयनिवृत्तिरत आह—**अच इति** । 'अचः परस्मिन्पूर्व'त्येको योगः । **पूर्व**ति लुप्तविभक्तिकम् । **विधा**विति द्वितीयः । तेन स्थानिवदेवेति नियमाश्रयणमिति भावः । भाष्ये—**विधिमात्रे** इत्यस्य विवरणम्-'अनाश्रीयमाणायामपि प्रकृता'विति । स्थानिनीत्यर्थः । **वाय्वोरिति** । अत्र न बहिरङ्गासिद्धत्वम् उभयोर्वर्णनिमित्तत्वेनाऽसमत्वात् । पूर्वं पूर्वमन्तरङ्गमित्यपि युगपत्प्राप्तौ पूर्वमन्तरङ्गप्राप्तिनियामकं न तु जातस्याऽसिद्धत्वे इति भावः ॥

[ आक्षेपवार्तिकम् ]

[ ॥*॥ *अपर[5]विधाविति तु* ॥*॥ ]

**अपरविधाविति तु वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ स्वविधावपि स्थानिवद्भावो यथा स्यात् ॥**

(उ०) भाष्ये स्वशब्देन स्थान्यादेशश्चोच्यते । 'अपरविधाविति तु वक्तव्य'मित्यारभ्य 'कथं यानि स्वविधौ स्थानिवद्भावस्य प्रयोजनानी'त्यन्ता एकदेश्युक्तिः । आयन्नासन्नित्यनयोरसिद्धवत्सूत्रेण सिद्धेः । धिन्वन्तीत्यादावुकारवृत्त्यार्धधातुकत्वस्याल्धर्मत्वेन वस्य दुर्लभत्वादिटोऽप्राप्तेः । सिद्धान्तिनाऽपि भावसाधनविधिशब्दस्याप्यु[6]पादानमत्रेति सिद्धान्तं बोधयितुं तन्नोक्तम् ॥

---

१ क्वचिन्न । २ 'प्राप्नोती'ति । ३ 'माश्रयन्ते' ।

४ 'वद्भावो' । ५ लुप्तं स्यात् । ६ 'शब्दस्योपादान' ।

[ प्रयोजनभाष्यम् ]

**इदं तर्हि प्रयोजनम्-वैयाघ्रपद्यः ॥**

( उ० ) भाष्ये-**वैयाघ्रपद्य** व्याघ्रस्येव पादावस्येति बहुव्रीहौ **पादस्य लोप** इति लोपे गर्गादित्वाद्यञि 'पादः प'दिति पद्भावे 'न य्वाभ्या'मित्यैच् ॥

[ आक्षेपभाष्यम् ]

**ननु चाऽत्रापि पुनर्वचनसामर्थ्यादेव न भविष्यति ॥**

( प्र० ) ननु चाऽत्रापीति । यस्येति लोपे सिद्धे 'पादस्य लोप' इति पुनर्लोपवचनादित्यर्थः ॥

[ समाधानभाष्यम् ]

**अस्ति ह्यन्यत्पुनर्लोपवचने प्रयोजनम् ॥ किम् ? ॥ यत्र भसंज्ञा न-व्याघ्रपात् श्येनपादिति ॥**

[ उदाहरणभाष्यम् ]

**इदं चाप्युदाहरणम्-आदीध्ये आवेव्ये । इकारस्यैकारो न परनिमित्तकः, तस्य स्थानिवद्भावात् 'यीवर्णयोर्दीधीवेव्यो'रिति लोपः प्राप्नोति । परस्मिन्निति वचनान्न भवति ।**

( प्र० ) आदीध्य इति । इट एत्वे कृते लोपः प्राप्नोति, विकरणश्च । तत्र नित्यत्वाद्विकरणः । तस्य लुक् । 'एरनेकाच' इति यण् न प्रवर्तते, 'क्ङिलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्वि'ति स्थानिवत्त्वनिषेधात् ॥

( उ० ) ननु तस्य **स्थानिवत्त्वा**दित्ययुक्तम्, तेन विनापि टित एत्वात् प्राग्यीवर्णयोरित्यस्य परत्वात्प्राप्तेरत आह-**इट इति** । अन्तरङ्गत्वादिति भावः । **नित्यत्वादिति** । लोपस्तु विकरणे कृते तेन व्यवधानान्न प्राप्नोतीति भावः । यद्यपि लुकि[1] इलोपप्राप्तेः सोपि नित्यः । तथापि विकरणसंप्रधारणामात्राभिप्रायेणेदम् । ननु परस्मिन्नित्यस्याऽभावे श्लुकः स्थानिवत्त्वेन, 'एरनेकाच' इति यण् स्यात् । तत्र च कृते यलोपे स्थानिवत्त्वनिषेधेन इकारपरत्वाऽभावान्न लोपप्राप्तिः, यलोपे लोपरूपाऽजादेश एव नेति नियमस्तु निमित्तभूताऽजादेशविषय एवास्तु । परस्मिन्निति च न कार्यमत आह-**एरनेकाच इति** । एतेन[2] श्लुकः स्थानिवत्त्वेन व्यवधानाद्यीवर्णयोरित्यस्य न प्राप्तिरित्यपास्तम् ।

[ प्रश्नभाष्यम् ]

**अथ पूर्वविधाविति किमर्थम् ? ॥**

[ समाधानभाष्यम् ]

**हे गौः । बाभ्रवीयाः । नैधेयः ॥**

[ उपपादनभाष्यम् ]

**'हे गौ'रित्यौकारः परनिमित्तकः । तस्य स्थानिवद्भावादेङ्ह्रस्वात्संबुद्धेरिति लोपः प्राप्नोति । पूर्वविधाविति वचनान्न भवति ॥**

[ निराकरणभाष्यम् ]

**नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति-'न संबुद्धिलोपे स्थानिवद्भावो भवती'ति । यदयम् 'एङ्ह्रस्वात्संबुद्धे', रित्येङ्ग्रहणं करोति ।**

(प्र०) यदयमिति । अग्ने वायो इति स्थानिवत्त्वाद्ध्रस्वादित्येव लोपः सिद्धः । खट्वे माले इत्यादौ हल्ङ्याब्भ्य इति । नयत्यादीनां विजन्तानां विचि गुणे ने लो इति कथं संबुद्धिलोप इति चेत् । नैतेभ्यो-विच् दृश्यते ।

(उ०) ह्रस्वादित्येवेति । से-स्मृतोश्शब्दादावप्येवम् । यत्र स्थानिवत्त्वेऽपि न ह्रस्वान्तता तत्राह-**खट्व इति** । 'लोपः सिद्धः' इत्यनुषज्यते । स्थानिवत्त्वादवेकाराकारप्रश्लेषेऽपि न दोषः । **नैतेभ्य इति** । एवं दीर्घेकारान्तप्रकृतिकसे-इत्यादीनामेकाक्षरकोशबोधितस्य एदन्तस्य च संबुद्धावभिधानाऽभावो बोध्यः । अत्रेदं चिन्त्यम् । ओग्रहणस्य भाष्ये कृतत्वेन दीर्घौकारान्तप्रकृतिकओकारान्तानभिधाने मानाऽभावः । 'गोऽर्थ'मिति भाष्यं तु गोशब्दस्य सर्वसमतया ओकारान्तोपलक्षणतया व्याख्येयमेव सर्वैः । किंच संबुद्धावनभिधानेनोपपत्तौ सर्वथा विजभावकल्पना कुत इति । **अपरे तु** पूर्वविधावित्यस्याऽभावेऽयं विचारः, तत्र दीर्घान्तप्रकृतिक-एकारान्ते स्थानिवत्त्वनैङोऽभावाद्विनातिदेशबाधं प्रत्याहारग्रहणचारितार्थ्यस्य वक्तुमशक्यत्वादनभिधानकल्पने न मानम् । नचेदं भाष्यमभावातिदेशानङ्गीकारेणैव प्रवृत्तमिति वाच्यम् । **अथ वा योऽत्रादेश** इति भाष्येण तदाश्रयणात् । आगत्य वैयाघ्रपद्य इत्यच इत्यादेः प्रत्युदाहरणेन तदाश्रयणाच्चेत्याहुः ।

[ प्रयोजनसाधकभाष्यम् ]

**नैतदस्ति ज्ञापकम् । गोऽर्थमेतत्स्यात् ।**

(उ०) भाष्ये-**गोर्थमेतदिति** । अनिष्टलोपासिद्ध्यर्थमेव तत्, स्थानिवद्भावेनैङ्त्वादिति भावः ।

[ प्रयोजनबाधकभाष्यम् ]

**यर्त्ताह प्रत्याहारग्रहणं करोति । इत-**

1 लुकि-विकरणलुकि । 2 एतेन-क्ङितिनिषेधेन । 3 स्थानिवद्भावप्रवृत्तावपिदीर्घस्यैव सत्त्वादित्याशयः । 4 'दभावोबोध्यः ।

रथा हि 'ओहस्वा'दित्येव ब्रूयात् ।

[ उदाहरणभाष्यम् ]

**इदं तर्हि प्रयोजनं-बाभ्रवीयाः माधवीयाः । वान्तादेशः परनिमित्तकः, तस्य स्थानिवद्भावाद्धलस्तद्धितस्येति यलोपो न प्राप्नोति । पूर्वविधाविति वचनाद्भवति ।**

(प्र०) बाभ्रवीया इति । सन्निपातपरिभाषाया अनित्यत्वाद्यशब्दसन्निपातनिमित्तो वान्तादेशो यलोपनिमित्ततां प्रतिपद्यते ।

(उ०) बाभ्रवीया इति । मधुबभ्र्वोरिति यञि वृद्धावोर्गुणेऽवि[1] वृद्धाच्छे यस्येति लोपे हलस्तद्धितस्येति सूत्राद्धलइत्यनुवर्त्तमाने आपत्यस्येति सूत्रेण यलोपः । ननु तत्र सिद्धान्तेऽपि यनिमित्तो वान्तादेशः, कथं यलोपनिमित्तं स्यादत आह-संनिपातेति ।

[ निराकरणभाष्यम् ]

**एतदपि नास्ति प्रयोजनं । स्वाश्रयमत्र हल्त्वं भविष्यति । अथ वा-योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नाऽसावादेशः ।**

(प्र०) योऽत्रादेश इति । वान्तः समुदायः । यश्चेति । लोपं प्रति निमित्तत्वेन वकारः ।

[ प्रयोजनभाष्यम् ]

**इदं तर्हि प्रयोजनं-नैधेयः । आकारलोपः परनिमित्तकः । तस्य स्थानिवद्भावात् द्व्यज्लक्षणो ढग् न प्रा[3]प्नोति । पूर्वविधाविति वचनाद्भवति ।**

(प्र०) नैधेय इति । स्थानिवद्भावाद्[3]च्कत्वव्यदेशे सति विरोधात्स्वाश्रयं द्व्यच्त्वं न लभ्यते । यदविरुद्धं स्वाश्रयं तदतिदेशेन न बाध्यते, विरुद्धं तु बाध्यत एव । संख्याकृतस्तु व्यपदेशः परस्परपरिहारेण लोके स्थितः । नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते ।

(उ०) भाष्ये नैधेय इति । निपूर्वाद्धाञः किप्रत्यये आतो लोपे गतिसमासे 'द्व्यचः' 'इतश्चानिञः' इति ढक्[4] ।

[प्रश्नभाष्यम्]

**अथ विधिग्रहणं किमर्थम् ? ॥**

(प्र०) अथेति । 'अचः परस्मिन् पूर्वस्ये'-त्येवं षष्ठ्या विध्यर्थ आक्षिप्तः, पूर्वस्य कार्ये कर्तव्य इति । कार्यं च विधिरिति प्रश्नः ।

[ समाधानभाष्यम् ]

**सर्वविभक्त्यन्तः समासो यथा विज्ञायेत-पूर्वस्य विधिः पूर्वविधिः, पूर्वस्माद्विधिः पूर्वविधिरिति ।**

[ प्रयोजनप्रश्नभाष्यम् ]

**कानि पुनः पूर्वस्माद्विधौ स्थानिवद्भावस्य प्रयोजनानि ? ॥**

[ प्रयोजनभाष्यम् ]

**बेभिदिता [चेच्छिदिता] माथितिकः । अपीपचन् ॥ बेभिदिता चेच्छिदितेति । अकारलोपे कृते एकाज्लक्षण इट्प्रतिषेधः प्राप्नोति । स्थानिवद्भावान्न भवति ।**

(प्र०) बेभिदिति । बेभिद्यशब्दात्तृच् । नित्यत्वादल्लोपयलोपौ । तत 'एकाच' इतीट्प्रतिषेधः प्राप्नोति । 'उपदेश'ग्रहणं द्वयोरपि विशेषणम् । उपदेशे एकाच उपदेशेऽनुदात्तादिति । द्विःप्रयोगश्च द्विर्वचनम् । अल्लोपस्य तु स्थानिवत्त्वे व्यवधानादिट्प्रतिषेधाऽभावः ।

(उ०) ननु च बेभिदितेत्यत्राऽल्लोपयलोपाभ्यां प्रागेव परत्वादिट् । न च तदा प्रतिषेधप्राप्तिरत आह-नित्यत्वादिति । 'तत' इत्यनेनेटोऽनित्यत्वमुक्तम् । ननु कृतद्विर्वचनं नैकाजत आह-उपदेशेति । ननु 'भिद् भिद्' इति द्विर्वचनरूपादेशस्य न भिदुपदेश उपदेश इति कथमुपदेशे एकाच्त्वमत आह-द्विःप्रयोगश्चेति । यलोपेऽवशिष्टस्यैव 'भि'दित्यस्य स उपदेश इति भावः । परे तु 'एकाच उपदेश' इत्यत्र 'एकाचो द्वे' इति सूत्रस्थभाष्यरीत्या विहितविशेषणाश्रयणादङ्गसंज्ञायामल्लोपस्य षडिके भसंज्ञायामल्लोपस्येव स्थानिवत्त्वेन तृजादिनिरूपिताङ्गत्वस्य बेभिदिति समुदायेऽभावाच्च पञ्चमीसमासं विनापि नाऽत्रानुपपत्तिरित्याहुः ।

**माथितिक इति अकारलोपे कृते 'तान्तात्कः' इति कादेशः प्राप्नोति । स्थानिवद्भावान्न भवति ।**

1 अवि-अवादेशे । २ तत्र-बाभ्रवीया इत्यादौ । ३ 'प्राप्नोतीति' । 'द्व्यच्त्व' । ४ ढगिति । तस्येयादेश इति शेषः । ५ 'भावे' । ६ क्वचिन्न । ७ न च-नहि । ८ भिदुपेति । तयोःस्वरूपभेदादितिभावः । ९ सः-भिदुपदेशः । १० तृजादीत्यादिना तव्यादिपरिग्रहः । इति समुदाये=इत्यादि समुदाये । अत्र-बेभिदितेत्यादौ ।

**स्येति** । संप्रति पदान्तस्य स्थाने विधाविति हि तदाऽर्थः ।

[ सिद्धान्त्येकदेशिभाष्यम् ]

**अयं च विधिशब्दोऽस्त्येव कर्मसाधनः-विधीयंते विधिरिति ॥**

[ पूर्वपक्ष्याक्षेपसाधकभाष्यम् ]

**अस्ति च भावसाधनो-विधानं विधिरिति । तत्र भावसाधनस्य विधिशब्दस्योपादाने एष दोषो भवति ॥ इह च-ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै । धकारस्य जश्त्वं प्राप्नोति॥**

( प्र० ) **ब्रह्मबन्ध्वेति** । ब्रह्मबन्धुशब्दादूङ् । ऊङनूङोरेकादेश आदिवद्भावादूङ्ग्रहणेन गृह्यत इति तस्मिन् स्वादिष्विति पदसंज्ञायां धकारस्य पदान्तता विधेयेति स्थानित्वाऽनिषेधाज्जश्त्वं स्यात् । भसञ्ज्ञान्तु प्रत्येकादेशस्य स्थानिवत्त्वादुकारान्तमेतदिति भिन्नावधिकत्वाद्भपदसंज्ञयोर्नास्ति बाध्यबाधकभावः । यणादेशोच्चारणं चाऽतन्त्रम् । एकादेशस्यैवोदाहरणत्वात् ।

( उ० ) **तत्र भावसाधनस्येति** । कर्मसाधनत्वे हि द्विर्वचनादिभिः सामानाधिकरण्यं, पदान्तेन वैयधिकरण्यं च स्यात् । भावसाधने पदचरमावयवद्विर्वचनादिकर्मक विधाने इत्यर्थः । तत्र हि पदचरमावयवत्वेन सिद्धकर्मके विधाने इति वक्तुमशक्यम्, सिद्धत्वे विधानवैयर्थ्यात् । एवं चाकारान्तमेतदिति प्रतीकोक्तयुक्त्या पदत्व एव स्थानिवत्त्वनिषेधात्सान्तमेव पदत्वं प्रति, भत्वे तु निषेधाभावादकारान्तं भत्वं प्रतीति स्यादेव रुत्वमिति भावः । **जश्त्वं प्राप्नोतीति** । 'झलां जशोऽन्ते' इत्यस्य पदचरमावयवविधायकत्वात् । जश्ग्रहणं तु 'झलां जश् झशि'ति जश्त्वे तन्निषेधार्थम् । **एकादेशस्यैवेति** । अत एवोभयत आश्रयणे नेत्यनेन वक्ष्यमाणं समाधानं सङ्गच्छते ।

[ सिद्धान्त्येकदेशिनःप्रश्नभाष्यम् ]

**अस्ति पुनः किञ्चिद्भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतमाहोस्विद्दोषान्तमेव ? ॥**

(उ०) सिद्धान्त्येकदेश्याह-**अस्तिपुनरिति** ।

[ पूर्वपक्षिसमाधानभाष्यम् ]

**अस्तीत्याह ॥इह-कानि सन्ति । यानि सन्ति । कौ स्तः, यौ स्त इति । योऽसौ पदान्तो यकारो वकारो वा श्रूयेत, स न श्रूयते ॥ षडिकश्चाऽपि सिद्धो भवति ॥**

(प्र०) **कानि सन्तीति** । पक्षद्वयसाधारणमिदं प्रयोजनम् । भावसाधनपक्षेऽपि सिध्यत्येवेति तूपन्यस्तम् । **यकार इति** । यकारवकारौ विधीयमानावेव पदान्तौ भवत इत्यस्ति पदान्ततया विधानम् ।

इदानीमसाधारणं प्रयोजनमाह-**षडिक इति** । षडङ्गुलिशब्दात् 'बह्वचो मनुष्यनाम्नष्ठज्वे'ति ठचि कृते 'ठाजादावूर्ध्वं'मिति ङ्गुलिशब्दस्य लोपे यस्येति लोपे षषित्ययं शब्दोऽन्तर्वर्तिन्या विभक्त्या सिद्धः पदत्वेनेति पदान्ततायाः अविधानान्नास्ति स्थानिवत्त्वनिषेध इत्यकारलोपस्य स्थानिवद्भावादकारान्तस्य भसंज्ञा । पदसञ्ज्ञा त्वन्तर्वर्तिविभक्त्याश्रयेण षकारान्तस्येति सिद्धं जश्त्वन् । कर्मसाधने तु षषः षकारः पदान्तत्वेन सिद्ध इति स्थानिवत्त्वनिषेधात्षकारान्तस्यैव भसंज्ञेति तुल्यावधिकया भसंज्ञया पदसंज्ञाया एकसंज्ञाधिकाराद्बाधनाज्जश्त्वाऽसिद्धिः ॥

(उ०) पूर्वपक्ष्याह-**इह कानीति** । इह पदान्त एव यकारादिर्विधेय इति भावसाधनेऽपि सिध्यतीति भावः । **असाधारणमिति** । भावसाधनपक्षमात्रसाध्यमित्यर्थः । भाष्ये-**षडिकश्चापीति** । अन्तेकादेशाल्लोपान्तसपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतयाऽसिद्धत्वेन जश्त्वाऽप्रवृत्तिः, तदनन्तर त्वल्लोपस्य स्थानिवत्त्वप्रसक्तिस्तत्र कर्मसाधने 'यस्ये'ति लोपे इक्निमित्तभत्वेन समासान्तर्वर्तिविभक्तिनिमित्तकपदत्वस्यापि निवृत्तेः षडिकाऽसिद्धिः। न च भत्वे स्थानिवत्त्वमल्लोपस्येति न समानावधिकत्वं भत्वपदत्वयोरिति वाच्यम् । साक्षात्परम्परया वा पदान्तस्थानिकविधिप्रापकप्रतिबन्धकस्थानिवत्त्वस्य निषेधेन भत्वेऽपि तन्निषेधात् । पदान्तत्वेन सिद्धस्य विधावित्यर्थे पदत्वस्य सिद्धत्वेन तद्वारकपरम्पराया वक्तुमशक्यत्वेनाऽन्यद्वारिकाया अपि ग्रहणात् । भावसाधनत्वे तूपस्थितपदत्वद्वारिकैव परम्परा गृह्यते इति भत्वे निषेधाऽभावेन स्थानिवत्त्वादकारान्ते भत्वेपि षान्ते पदत्वस्याव्याघातेन न दोष इत्याशयः । कैयटे **पदान्तताया अविधानादिति** । पदत्वस्याऽविधानेन धर्मविशिष्टत्वेनाऽपि पदान्तस्याऽविधानादिति भावः। **सिद्ध इति**। 'जश्त्वे कार्ये' इति शेषः ॥

[ सिद्धान्त्येकदेशिनः प्रश्नभाष्यम् ]

**वाचिकस्तु न सिध्यति ॥**

१ 'विधीयते इति' । २ क्वचिन्न । ३ **तत्र**-तयोर्मध्ये । ४ **एवं च**-भावसाधनपक्षाङ्गीकारे च । **उक्तयुक्त्या**-पदत्वद्वारिकैव नान्यद्वारिका परम्परेतियुक्त्या । ५ 'मेवेति'। ६ 'श्रूयते' ।

(प्र०) वाचिकस्त्विति । चकारस्य पदान्तत्वात्कुत्वप्रसङ्गात् । कथं पुनः षडिकस्य सिद्धिः, यावतोक्तं–'योऽसौ पदान्तो यकार' इति । तद्वदिहापि डकारस्य पदान्तस्य विधेयत्वात्पदान्तताया विधिरिति स्थानिवत्त्वनिषेधप्रसङ्गः । नैष दोषः । पूर्वमेव जश्त्वेन डकारस्य निष्पन्नत्वान्नेदानीं विधिरिति भावसाधने षडिकसिद्धिः । कर्मसाधने तु डकारस्य पदान्तत्वेन प्रसिद्धस्य भत्वात्पदत्वनिवृत्तौ षकाररूपापत्तिर्विधेयेति स्थानिवत्त्वनिषेधात्तुल्यावधिकया भसंज्ञया पदसञ्ज्ञाया बाधनाज्जश्त्वनिवृत्तौ षडिकाऽसिद्धिः। न च भावसाधने षकारापत्तिर्भाव्येति शक्यते वक्तुम्, तस्या अपदान्तरूपत्वात् । पदान्तत्वे हि जश्त्वं स्यात् । न च जश्त्वविधिनिमित्तस्थानिवत्त्वनिषेधः । यत्र स्थानिवत्त्वनिषेधाज्जश्त्वं विधीयते सग्धिर्बब्धामिति, सोऽस्य विषयः । इह तु पूर्वमेव जश्त्वं कृतं, स्थानिवत्त्वनिषेधात्तु तन्निवृत्तिराशङ्क्यते । 'पूर्वत्रासिद्धे न स्थानिव'दित्यस्याप्ययमविषयः । नह्यत्र पूर्वत्रासिद्धीयं किंचित्कार्यं विधेयम् ॥

(उ०) सिद्धान्त्येकदेश्याह–वाचिकस्त्विति । चकारस्येति । वाचिकेऽपि वागाशीर्दत्तशब्दाट्ठचि ठाजादाविति शीर्दत्तशब्दलोपे यस्येति लोपे पूर्वोदाहरणे जश्त्ववदत्रापि कुत्वापत्तिरिति भावः । एवं मदुक्तरीत्या भाष्यस्य सामञ्जस्ये कथं पुनरित्यादि 'नह्यत्र पूर्वत्रासिद्धीयं किंचित्कार्यं विधेय'मित्यन्तः कैयटग्रन्थश्चिन्त्यः । स्फुटार्थत्वाच्च न व्याख्यातः । तथाहि–पूर्वमेव डस्य निष्पन्नत्वादित्यसङ्गतं सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्राप्तेः । किंच षकाररूपापत्तिर्न शास्त्रीया, पदचरमावयवस्य शास्त्रीयस्यैव ग्रहीतुमुचितत्वादित्याद्यूह्यम् ॥

[ तटस्थप्रश्नभाष्यम् ]

**अस्तु तर्हि कर्मसाधनः ॥**

[ सिद्धान्त्येकदेशिसमाधानभाष्यम् ]

**यदि कर्मसाधनः, षडिको न सिध्यति॥**

[ तटस्थप्रश्नभाष्यम् ]

**अस्तु तर्हि भावसाधनः ॥**

[ सिद्धान्त्येकदेशिसमाधानभाष्यम् ]

**वाचिको न सिध्यति ॥**

[ तटस्थभाष्यम् ]

**वाचिकषडिकौ न संवंदेते ॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**कर्तव्यो ऽत्र यत्नः ॥**

(प्र०) कर्तव्योऽत्र यत्न इति । 'एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य' इति वाचिकः सिद्धः । षडिकस्तु 'षषष्ठाजादिवचनात्सिद्धम्' इत्युत्तरपदलोपाऽभावे 'ठजादा'विति लोपे यस्येतिलोपे च सिद्धः॥

(उ०) सिद्धान्त्याह–कर्तव्योऽत्रेति । पञ्चमे वक्ष्यमाणं यत्नं दर्शयति–एकेति । तथा चाऽज्झलादेशत्वाद्वाचिके भत्वेऽपि न स्थानिवत्त्वमिति भावः । एवं च भावसाधनपक्षोऽत्र स्थितः ॥

[ प्रश्नभाष्यम् ]

**कथं ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै ? ॥**

(उ०) पूर्वपक्ष्याह–कथं ब्रह्मबन्ध्वेति ॥

[ समाधानभाष्यम् ]

**उभयत आश्रयणे नान्तादिवदिति ।**

(प्र०) उभयत इति । यस्मात्स्वादिविधिस्तत्स्वादौ पदमिति पूर्वपरोभयाश्रयणम् ॥

(उ०) सिद्धान्त्येकदेशी उक्तमपि यः संप्रति पदान्त इत्येवंरूपं सिद्धान्तं परेणाऽगृहीततत्वाघक्षानुरूपबलिन्यायेनाह–उभयत इति । तद्व्याचष्टे–'यस्मात्स्वादिविधि'रिति। अत[२] एवात्र नैकदेशविकृतन्यायेन धान्तस्य पदत्वसंभावना, उकारान्तादूङ्विधानेनाऽक्तपरिमाणसंज्ञात्वेन दुर्लभत्वात् । उभयत आश्रयणे इत्यस्यैकदेशिमतत्वाच्च । एतच्चान्तादिवत्सूत्रे वक्ष्यते ॥

[ आक्षेपभाष्यम् ]

**कथं वेतस्वान् ?॥**

(उ०) पूर्वपक्ष्याह–कथं वेतस्वानिति ॥

[ समाधानभाष्यम् ]

**नैवं विज्ञायते-पदस्यान्तः पदान्तः, [ पदान्तस्य विधिः पदान्तविधिः ] पदान्तविधिं प्रतीति ॥ कथं तर्हि ? ॥ पदे अन्तः पदान्तः, [ पदान्तस्य विधिः पदान्तविधिः ] पदान्तविधिं प्रतीति ॥**

(प्र०) पदेऽन्त इति । न च ङ्तुप्प्रत्ययः पदम् । एवं षडिके इकप्रत्ययो न पदमिति नास्ति स्थानिवत्त्वनिषेधः ॥

(उ०) अथ वेतस्वानित्येवंजातीयकानामेतदनुदाहरण-

१ नैकेन पक्षेण सिध्यत इत्यर्थः ।

२ अतएव–अस्याऽसिद्धान्तत्वादेव । ३ कचित्र ।

त्वमेवेति बोधयितुं वास्तवं सिद्धान्तमाह–**नैवमिति** । तद्याचष्टे–**नच ङमुत्विति** । एवं ब्रह्मबन्धूशब्दे ऊकारो न पदमिति बोध्यम् । नन्विदमयुक्तं, गतिकारकोपपदानां सुबुत्पत्तेः पूर्वं समासेऽसुबन्तत्वेन, सुबन्तेन समासे **उत्तरपदत्वे चेति** प्रत्ययलक्षणनिषेधेन चोत्तरस्याऽपदत्वाद्रोचेत्यादावल्लोपस्य स्थानिवत्त्वेनाऽवश्यापत्तेरिति चेत्, न, उत्तरपदस्य कार्यित्वे एव प्रत्यासत्त्या तन्निषेधप्रवृत्तेः । अत्र चेदं भाष्यमपि मानम् । सुबुत्पत्तेः पूर्वं समासस्य चैतद्विषयेऽनित्यत्वान्न प्रवृत्तिरिति भावः । एवं विग्रहद्वयप्रदर्शनेन 'पदचरमावयवे कर्तव्ये परपदस्थाऽजादेश एव न स्थानिवदि'ति भाष्ये ध्वनितम् । कानि सन्तीत्याद्येवोदाहरणम् । एवं च पूर्वसूत्रे **'अपरविधा'विति** प्रघट्टकस्थकैयटग्रन्थो, 'भोभगो' इति सूत्रस्थकैयटग्रन्थश्च चिन्त्य एव । एवं षडिक इत्याद्यपि चिन्त्यम्, इकस्य पदत्वाऽभावेऽपि क्रुलिशब्दाकारयोर्लोपे तस्य स्थानिवद्भावेन पदत्वात्तस्मिन्नन्तस्य विधिसत्त्वेन दोषादिति दिक् ॥

[ समाधानान्तरभाष्यम् ]

**अथवा यथैवाऽन्यान्यपि पदकार्याण्युपप्लवन्ते रुत्वं जश्त्वं च । एवमिदमपि पदकार्यमुपप्लोष्यते ॥ किम् ?॥ भसंज्ञा नाम ॥**

(प्र०) **अथवेति** । 'यचि भ'मित्यत्र 'तसौ मत्वर्थे' इत्यत्र च पदमिति वर्तते । तेन पदं सद्भं भवतीति लब्धे पदत्वे तन्निबन्धनरुत्वप्रतिबन्धार्था भसंज्ञा तद्विषयत्वात्पदान्तविधिरिति स्थानिवत्त्वनिषेधाद्भत्वाद्रुत्वाऽभावः सिद्धः ॥

(उ०) भाष्ये–**'पदस्यान्त'** इति पूर्वपक्षे पूर्वपक्ष्यभिमते एकपदस्थाजादेशस्य स्थानिवत्त्वनिषेधेऽपि न दोष इति प्रौढ्या प्रतिपादयितुं 'भसंज्ञाऽत्र बाधिका भविष्यती'ति स्वोक्तेरेकदेशयाशयमाह–**अथवेति** । 'यः संप्रति पदान्त' इत्येतत्तु न शब्दमर्यादालभ्यमिति भावः । अस्य पक्षस्य कैयटोक्तव्याख्या चिन्त्या, तावतापि भसंज्ञायाः पदान्तविधित्वानुपपादनात् । किंच यथा कारकाधिकारे कारकं सत्कर्मेति व्याख्यानेन तयोः संज्ञयोः समावेश उक्तस्तथात्रापि स्यात् । न हि भत्वपदत्वयोः समावेश इष्टः । तस्मादेवं व्याख्येयम्–यथा रुत्वजश्त्वादीनां साक्षात्प्रापकः प्रतिबन्धको वा स्थानिवद्भावः प्रतिबध्यते, तथा भसंज्ञाविषयातिदेशस्यापि परम्परया तत्त्वान्निषेध इति । **यथैवान्यानि पदकार्याणि**–पदचरमावयवकार्याणि रुत्वजश्त्वादीनि, तत्प्रापकपदसंज्ञारूपं चात्र सूत्रे **उपप्लवन्ते**–पदान्तविधिशब्देन गृह्यन्ते । पदचरमावयवप्रापकाद्यपि तत्त्वेन गृह्यते । **एवमिदमपि**–भसंज्ञारूपमपि पदकार्यं परम्परया पदचरमावयवप्रापकं प्रतिबन्धकं वा पदचरमावयवत्वेन गृह्यते इत्यर्थः ।

अयं भावः–यथा पदान्तपदे उपस्थितत्वात्पदत्वद्वारिका परम्परा गृह्यते तथा पदत्वबाधकतया भत्वस्यापि प्रत्यासन्नत्वेन तद्द्वारापि पदचरमावयवविषयस्थानिवत्त्वप्रतिषेध इति । षडिके तु 'षषष्ठाजादिवचनात्सिद्ध'मिति द्वितीयादच ऊर्ध्वं लोपविधायकवचनप्रामाण्यात्तद्विषये न भत्वद्वारा पदचरमावयवसंपादकस्थानिवत्त्वप्रतिषेध इति न दोषः । वाचिके त्वेवं न दोषः, उत्तरपदलोपविधानात् । पञ्चमे चेदमुपपादयिष्यते । एवं चामलकी–तटी–सरसीत्यादौ जश्त्वादिप्रसक्तिरेव नेति बोध्यम् । यद्यपि **पूर्वत्रासिद्धे न स्थानिवदिति** निषेधोऽत्र प्राप्नोति । तथापि विधिशब्दो भावसाधनोऽन्तशब्दश्चरमावयववाचीत्यादिसिद्धान्तान्बोधयितुं **पूर्वत्रासिद्धे** इत्यादावपि साक्षात्परम्परया प्रापकप्रतिबन्धकस्य निषेध इत्यादि बोधयितुं **पदेऽन्त** इति सप्तमीसमासेन वेतस्वानित्यादौ **न पदान्तेति** निषेधवारणेन **पूर्वत्रासिद्धे** नेत्यत्र पदचरमावयवविधायकातिरिक्तस्यैव ग्रहणम् । एवं जश्पदेनेति बोधयितुं चायमुपक्षेप इति बोध्यम् ॥

[ प्रश्नभाष्यम् ]

**'वरे यलोपविधिं प्रति न स्थानिवद्भवती'त्युच्यते । तत्र 'तेऽप्सु यायावरः प्रवपेत पिण्डान्' । अवर्णलोपविधिं प्रति स्थानिवत्स्यात् ॥**

(उ०) भाष्ये–**अवर्णलोपविधिमिति** । **आतो लोप इटि चे**'त्येतं प्रतीत्यर्थः । एवं च वरेयलोपग्रहणे कृतेऽपि यायावर इत्यस्यासिद्धिरिति शङ्का ॥

[ समाधानभाष्यम् ]

**नैष दोषः । नैवं विज्ञायते–वरे यलोपविधिं प्रति न स्थानिवद्भवती'ति ॥ कथं तर्हि ? ॥ वरेऽयलोपविधिं प्रतीति ॥ किमिदमयलोपविधिं प्रतीति ? ॥ अवर्णलोपविधिं प्र[ती]ति, यलोपविधिं च प्रतीति ॥**

[ समाधानान्तरभाष्यम् ]

**अथवा योगविभागः करिष्यते–'वरे लुप्तं न स्थानिवत्' । ततो 'यलोपविधिं प्रति न स्थानिव'दिति ॥**

(उ०) यातिरित्यस्याऽत्रासिद्धेः सिद्धान्तमाह–**अथवेति** ॥

१ कचिन्न । २ **एवंच**–उक्तरीत्या तस्य निषेधे न ।

३ 'वदिति '।

[ प्रश्नभाष्यम् ]

**यलोपे किमुदाहरणम् ? ॥**

(उ०) यलोपे किमिति। यावावरे यलोपस्य वरे इत्यनेनैव सिद्धत्वात्प्रश्नः॥

[ उदाहरणभाष्यम् ]

**कण्डूयतेरप्रत्ययः कण्डूरिति ॥**

(प्र०) कण्डूयतेरिति। क्यजन्तात् क्विप्। यगन्तात्तु क्विन्न भवति। उक्तं हि भाष्ये–'न तेभ्यः क्विब् दृश्यत' इति।

(उ०) कैयटे उक्तंहीति। 'कण्ड्वादिभ्यो य'गित्यत्र भाष्ये।

[ उदाहरणनिरासभाष्यम् ]

**नैतदस्ति। कौ लुप्तं न स्थानिवत्।**

(प्र०) क्वौ लुप्तमिति। यद्यप्यप्रत्ययशब्देन विजप्युच्यते, तथापि तस्य काचित्कत्वान्न दोषः। क्विग्रहणं विचोऽप्युपलक्षणमित्यन्ये।

[ उदाहरणान्तरभाष्यम् ]

**इदं तर्हि प्रयोजनम्–सौरी बलाका ॥**

(प्र०) सौरीति। एकोऽण्यकारलोपो द्वितीय ईकारे, तयोः स्थानिवत्त्वाद्यकारस्योपधात्वं न स्यात्। स्थानिवत्त्वनिषेधे द्वितीयलोपस्य समानाश्रयत्वादसिद्धत्वादणि लोपस्य व्याश्रयत्वात्सिद्धत्वाद्यकारस्य उपधात्वाल्लोपः सिध्यति ॥

[ तन्निरासभाष्यम् ]

**नैतदस्ति। उपधात्वविधिं प्रति न स्थानिवत् ॥**

(उ०) उपधात्वविधिं प्रतीति। 'प्रत्ययविधा'वित्यनाश्रित्येम्॥

[ प्रयोजनान्तरभाष्यम् ]

**इदं तर्हि प्रयोजनम्–आदित्यः ॥**

(प्र०) आदित्य इति। अदितेः सास्य देवतेत्यत्रार्थे ण्यस्ततो भवादावर्थे द्वितीयो ण्यः। 'हलो यमां यमी'ति लोप इष्यते। स च स्थानिवत्त्वनिषेधात्सिध्यति ॥

(उ०) तत इति। आदित्यशब्दादित्यर्थः। अदितेरपत्यण्यान्ताद्देवतार्थे ण्य इति तु नोक्तम्। 'आपत्यस्ये'त्यस्य प्राप्त्या 'पूर्वत्रासिद्ध' इत्युत्तरग्रन्थाऽसङ्गतेः। तस्मादेतत्खण्डनमेतदज्ञानेनैवेति बोध्यम्॥

[ तन्निरासभाष्यम् ]

**नैतदस्ति। पूर्वत्रासिद्धे न स्थानिवत् ॥**

[ प्रयोजनान्तरभाष्यम् ]

**इदं तर्हि–कण्डूतिर्वल्गूतिः ॥**

[ प्रयोजननिरासभाष्यम् ]

**नैतदस्ति प्रयोजनम्। कण्डूया वल्गूयेति भवितव्यम् ॥**

[ प्रयोजनान्तरभाष्यम् ]

**इदं तर्हि–कण्डूयतेः क्तिच्। ब्राह्मणकण्डूतिः क्षत्रियकण्डूतिः ॥**

(प्र०) ब्राह्मणकण्डूतिरिति। षष्ठीसमासः। कर्मधारये कण्डूतिशब्दस्य पूर्वनिपातप्रसङ्गः॥

(उ०) कण्डूतिशब्दस्येति। विशेषणत्वादित्यर्थः। न चात्राऽल्लोपस्य स्थानिवत्त्वादुवङ् यण्वा स्यादिति वाच्यम्। जाते तत्रोठा सिद्धेः। ऊठि तु न स्थानिवत्त्वमनादिष्टादचः पूर्वत्वाऽभावात्। अस्मादेव भाष्यप्रयोगात्स्थानिद्वारकं तदाश्रयणं काचित्कमित्याहुः॥

[ आक्षेपवार्तिकम् ]

॥*॥ *प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्* ॥*॥

**प्रतिषेधे स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवद्भवतीति वक्तव्यम्। स्वर–आकर्षिकः। चिकीर्षकः। जिहीर्षकः। यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति–पञ्चारत्न्यः दशारत्न्यः॥ स्वर॥**

(प्र०) आकर्षिक इति। चरत्यर्थे आकर्षात् ष्ठलिति ष्ठल्। यस्येति लोपस्य स्थानिवत्त्वात्ककारस्योदात्तत्वं न स्यात्। 'कारक' इत्यादौ च 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति व्यञ्जनस्याऽविद्यमानत्वादनन्तरस्य च स्वरभाजः संभवादन्यव्यवधाने न स्यात्। यत्र तु व्यवहितेपि पूर्वशब्दो वर्तते, तत्राप्यवध्यवधिमतोरानन्तर्याऽसंभवादन्तरालस्थानसतोप्यर्थाननादृत्य व्यवहारः। यत्र त्वानन्तर्यसंभवस्तत्र व्यवहितं नैवाश्रीयते। ष्ठलो लित्करणाद्व्यवधानेऽपि भविष्यतीति चेत्। आकारस्यापि पक्षे स्या-

१ कण्डूयेति। अप्रत्ययादित्यनेन क्तिनो बाधात्। २ 'क्तिन्'। ३ 'द्वारकतदा'। ४ 'लोपे'। 'लोपविधिषुलोपा'। ५ 'वद्भितिवक्तव्यं'।

दिति स्थानिवत्त्वनिषेधः ॥

(उ०) ननु ङितीति वचनसामर्थ्यात्स्यादेवेत्यत आह—**कारक इतीति**। अत्र[1] वचनं सावकाशमिति भावः। **स्वरविधाविति**। हल्स्वरप्राप्तेः सत्त्वादिति भावः। **अन्यव्यवधाने इति**। अज्व्यवधाने इत्यर्थः। 'अज्व्यवे'[2]ति वापाठः। लुप्ततया तदनुच्चारणेन तदाश्रय[3]स्यापादयितुमशक्यत्वात्तस्य स्यादिति नापादितम्, स्वविधौ स्थानिवत्त्वाभावाच्च। ननु ङितीत्यत्र प्रत्ययात्पूर्वमित्यनुवृत्तेः पूर्वग्रहणस्य सत्त्वान्निर्दिष्टपरिभाषानुपस्थितिः। पूर्वशब्दश्च व्यवहितेऽपीति न दोषोऽत आह—**यत्र त्विति**। तत्राप्यव्यवधानारोपेणैव प्रयोगः। पूर्वादीनां चाऽव्यवहिते एव शक्तिरिति भावः। **यत्रत्विति**। मुख्ये संभवति आरोपितग्रहणे मानाऽभाव इति भावः। परंत्विदं चिन्त्यम्। तस्मिन्निति सूत्रे निर्दिष्टग्रहणात्। तस्मात् उत्तरांशविकलपरिभाषोपस्थितेः प्रत्ययः परश्चेत्यादौ दृष्टत्वादत्राप्युपस्थितिरिति तत्त्वम्। **पक्षे स्यादिति**। 'अनुदात्तं पद'मिति वचनात्पक्षे इत्युक्तम्। 'चिकीर्षक'इत्याद्यर्थमावश्यकेन निषेधेनैव सिद्धे[4] लित्त्वसामर्थ्यमेव कथमिति चिन्त्यम्। भाष्ये—**पञ्चारत्न्य इति**। अन्तरङ्गत्वेनापीदं सिद्धम्। बहुखट्वक इत्युदाहरणम्। अत्र कपि 'आपोऽन्यतरस्या'मिति ह्रस्वत्वे तस्य स्थानिवत्त्वाद्ध्रस्वान्तेऽन्त्यादिति स्वरो न भवति ॥

[ दीर्घोदाहरणोपपादनभाष्यम् ]

**दीर्घ-प्रतिदीव्ना प्रतिदीव्ने। यो ह्यन्य आदेशः स्थानिवदेवासौ भवति-किर्योः। गिर्योः। दीर्घ ॥**

(प्र०) **प्रतिदीव्नेति**। रेफवकारान्तस्य भस्य 'न भकुर्छुरा'मिति दीर्घत्वनिषेध इत्यत्र न प्रवर्तते॥

(उ०) 'प्रतिदीव्ने'त्यत्र बहिरङ्गत्वेनाऽसिद्धत्वमल्लोपस्येति न शङ्क्यं, त्रिपाद्यां तदप्रवृत्तेः। वाय्वोरित्यत्रापि यथा न सा, तथोक्तम्। **रेफेति**। अत्र तु नान्तं भमिति भावः॥

[ यलोपोदाहरणोपपादनभाष्यम् ]

**यलोप-ब्राह्मणकण्डूतिः। क्षत्रियकण्डूतिः। यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति-वाय्योरध्वर्य्वोरिति।[यलोप][5]॥**

[ प्रश्नभाष्यम् ]

**तत्तर्हि वक्तव्यम्?॥**

[ समाधानभाष्यम् ]

**न वक्तव्यम्। इह हि लोपोऽपि प्रकृतः, आदेशोऽपि, विधिग्रहणमपि प्रकृतमनुवर्तते, दीर्घादयोऽपि निर्दिश्यन्ते[6]। केवलं तत्राभिसंबन्धमात्रं कर्तव्यं-'स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिव'दिति।**

(प्र०) इह हि लोपोऽपीति। प्रकृतः—प्रस्तुतः ॥

(उ०) न सूत्रान्तरवृत्तित्वं प्रकृतत्वमित्याह—**प्रस्तुत इति** ॥

[ प्रश्नभाष्यम् ]

**आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसंबन्धः शक्यते कर्तुम्। न चैतान्यानुपूर्व्येण सन्निविष्टानि ॥**

(प्र०) **आनुपूर्व्येति**। तत्र पदार्थानां समन्वयाऽवगमात्। इह तु लोपो यशब्देन संबद्धः, सकृच्च श्रुतो, द्विधा चास्योपयोग इष्यते, स्वरदीर्घयलोपाश्च विक्षिप्ताः कथं समुच्चीयन्तामिति भावः ॥

(उ०) पदान्तरेणाऽव्यवधानरूपासत्ति**रानुपूर्व्यम्**। **विक्षिप्ताः**—विभिन्नदेशस्थाः। भाष्ये '**यथेष्टं संबन्धः**—इष्टवाक्यार्थबोधजनकत्वरूपः ॥

[ समाधानभाष्यम् ]

**अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसंबन्धो भवति। तद्यथा-'अनड्वाहमुदहारि! या त्वं हरसि शिरसा कुम्भं भगिनि! साचीनमभिधावन्तमद्राक्षी[7]'रिति। तस्य यथेष्टमभिसंबन्धो भवति-उदहारि भगिनि! या त्वं कुम्भं हरसि शिरसा, अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति ॥**

(प्र०) **अनानुपूर्व्येणापीति**। लोपशब्द आवर्तते। तत्र लोपाऽजादेश इति विज्ञायते। तत्र द्विर्वचनविधौ लोपाजादेशस्याऽसम्भवात्सवर्णादिविधौ तु तस्यैव संभवान्न तत्रादेशस्य लोपो विशेषणम्। पदान्ते तु यद्यपि संभवव्यभिचारौ स्तस्तानि सन्ति कानि सन्तीति, तथापि 'न पदान्ते'ति योग-

---

१ अत्र—आकर्षिक इत्यादौ।
२ 'अत्रव्यवेति'।
३ तदाश्रयस्य—स्वरस्य।

४ सिद्धेः—इलो लित्त्वस्य साफल्यस्य सिद्धेः।
५ क्वचिन्न। ६ 'प्रतिनिर्दिश्यन्ते'।
७ 'मप्राक्षीः'।

विभागात्तद्विधौ लोपो न विशेषणमिति पारिशेष्यात् 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिव'दिति विज्ञायते। स्मृतिशास्त्रत्वाचास्य एतावन्तोऽर्थाः संनिहिता इत्येतावत्प्रतीयते। ग्रहणकवाक्यात्तु लक्ष्यसंस्कारकं प्रक्रियावाक्यमुपप्लवत इति सिद्धमिष्टम्। **अनड्वाहमिति**। पाठक्रमादार्थक्रमो बलीयानिति यथेष्टमत्राभिसंबन्धः ॥

(उ०) **असंभवादिति**। चख्नतुः, जग्मतुरित्यादौ संभवाच्चिन्त्यमिदम्। **पारिशेष्यादिति**। व्याख्यानाच्चेत्यपि बोध्यम्। **एतावदिति**। पूर्वोक्तो नियमोऽपीत्यर्थः। ननु सूत्रस्यैकत्वात्तावन्मात्रविषये तादृशो वाक्यार्थो दुर्वच इत्यत आह–**ग्रहणकवाक्यात्त्विति**। **पाठक्रमादिति**। आर्थक्रमो नाम राजपुरप्रवेशन्यायेन स्वस्याकाङ्क्षितार्थान्वयक्रमः। एवं च कल्पितासन्नवाक्याद्बोधविषये तात्पर्यं नियामकमिति भावः। भाष्यात्तु आसत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षावशाद्व्युत्पत्त्यनुसारेणान्वयबोध इति लभ्यते[1]।

**'साचीन'**मित्यस्य तिर्यग्गच्छन्तमित्यर्थः ॥

[ आक्षेपवार्तिकम् ]

॥ * ॥ *क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्* ॥ * ॥

**क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानं कर्तव्यम्** ॥

(उ०) **क्विलुगिति** वार्त्तिके क्वावित्यत्र विधावित्येतदध्याह्रियते। तेन क्विनिमित्तविधावित्यर्थः। आवृत्त्या क्वावित्यादेशेनापि संबध्यते। क्विनिमित्तादेश इत्यर्थस्तदेतदर्थतः पठ्यते—**क्वौ लुप्तमिति**। इदं च काचित्कमिति वक्ष्यते। एवं लुग्रूपे–आदेशे, उपधात्वप्रयुक्ते कार्ये, चङ्परह्रस्वे, कुत्वे च स्थानिवत्त्वं नेत्यर्थः ॥

[ प्रश्नभाष्यम् ]

**क्वौ किमुदाहरणम् ?** ॥

(उ०)भाष्ये–**क्वावित्यस्य** क्वौ लुप्तमित्यर्थे उदाहरणम्॥

[ समाधानभाष्यम् ]

**कण्डूयतेरप्रत्ययः कण्डूरिति**[3] ॥

(उ०) **'कण्डू'**रिति। क्यजन्तात् क्विप्। अत्र यण् **न**, यलोपश्च भवतीति भावः ॥

[ समाधानदूषणभाष्यम् ]

**नैतदस्ति । यलोपविधिं प्रति न स्थानिवत्** ॥

(उ०) तत्राऽन्त्यं खण्डयति—**यलोपेति** ॥

[ समाधानान्तरभाष्यम् ]

**इदं तर्हि–पिपठिषतेरप्रत्ययः–पिपठीः** ॥

[ तद्बाधकभाष्यम् ]

**नैतदस्ति । दीर्घविधिं प्रति न स्थानिवत्** ॥

(उ०) **पिपठीरिति**। अल्लोपस्य स्थानिवत्त्वेन रेफान्तस्याऽपदत्वाद्दीर्घो न स्यादिति भावः। अत्र रुत्वमप्येतदधीनमेव।

[ समाधानान्तरभाष्यम् ]

**इदं तर्हि–लावयतेर्लौः। पावयतेः पौः।**

(प्र०) **लौरिति**। णिलोपस्य स्थानिवत्त्वादूण् न स्यात् ॥

(उ०) **लावयतेरिति**। ण्यन्तलूधातोरित्यर्थः। **ऊण्नेति**। क्वौ वान्तस्यानङ्गत्वादितिभावः। ऊठि 'एत्येधती'ति वृद्धिः।

[ तद्बाधकभाष्यम् ]

**नैतदस्ति । अकृत्वा वृद्ध्यावादेशौ णिलोपः। प्रत्ययलक्षणेन वृद्धिर्भविष्यति॥**

(प्र०) **अकृत्वेति**। 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्ध'मिति णिलोपस्ततो वृद्धिः। आवादेशस्तु वर्णाश्रयत्वात्प्रत्ययलक्षणेन न भवति। यथा गोहितमित्यवादेशः। एतच्चाऽन्तरङ्गत्वमनाश्रित्योक्तम्। तत्र त्वाश्रितेऽन्तरङ्गबहिरङ्गयोर्विप्रतिषेधाऽभावः।

(उ०) **वर्णाश्रयत्वादिति**। 'अचः परस्मिन्नि'ति स्थानिवत्त्वं तु न, वृद्धेरनादिष्टादचः पूर्वत्वाऽभावात्। **तत्र त्विति**। कारक इत्यादौ णिस्थानिकवृद्धिविषये स चरितार्थः, तथैव चातो लोप इति सूत्र भाष्ये स व्याख्यात इति भावः। परे तु षत्वतुकोरिति ज्ञापकादनित्यत्वेनान्तरङ्गत्वमनाश्रित्य 'क्वौलुप्त'मिति न कार्यम, नित्यत्वाच्च पूर्वं णिलोपः। वृद्धिस्वकृते णिलोपे उपदेशेन, कृते त्वतिदेशेनेत्यनित्येति पूर्वपक्ष्याशयमाहुः।

[ समाधानान्तरभाष्यम् ]

**इदं तर्हि–लवमाचष्टे लवयति। लवयतेरप्रत्यये—लौः पौः। स्थानिवद्भावाण्णेरूण्न प्राप्नोति। क्वौ लुप्तं न स्थानिवदिति भवति ॥**

---

1 'एवञ्च आसत्त्यभावेऽपिपदार्थो'''बोध इति भावः' पाठ०। २ क्वचिन्न। ३ 'कण्डूतिरिति'।

(प्र०) लवमाचष्ट इति । 'क्वौ विधिं प्रति न स्थानिव'दित्यस्यार्थस्य-प्रदर्शनायेदमुदाहृतम् । इदं तु क्वौ लुप्तस्योदाहरणं देवयतेर्द्यूरिति ॥

(उ०) देवयतेरिति । ण्यन्तदिवेरित्यर्थः । नन्वत्रो ठ् 'क्वौ विधि'मित्येव सिद्धः । न चोकारस्य वृद्धिः स्याण्णेः स्थानिवत्त्वादिति वाच्यम् । ऊठ आदिष्टादचः पूर्वत्वादिति नेदमसाधारणमुदाहरणमिति चेन्न । सखीयतेः सख्युरिति ख्यत्यात्सूत्रभाष्योक्तं, गोमत्यतेर्गोमानिति उगिदचामिति सूत्रभाष्योक्तं, ण्यन्तपदेः पात् पादिति येन विधिरिति सूत्रभाष्योक्तं, कण्डूः पिपठीरित्यादौ यणभावरत्वयोःसिद्धिश्च तस्याऽसाधारणमुदाहरणम् । स्थानिद्वारकेऽनादिष्टादचः पूर्वत्वे तु इदमप्युदाहरणमिति बोध्यम् ।

[ समाधानबाधकभाष्यम् ]

**एवमपि न सिध्यति ॥ कथम् ? ॥ क्वौ णिलोपो, णावकारलोपस्तस्य स्थानिवद्भावादूण् न प्राप्नोति ॥**

[ समाधानसाधकभाष्यम् ]

**नैष दोषः नैवं विज्ञायते क्वौ लुप्तं न स्थानिवदिति ॥ कथं तर्हि ? ॥**

**क्वौ विधिं प्रति न स्थानिवदिति ॥**

(उ०) नैवं विज्ञायते क्वौलुप्तमिति । नैवमेवविज्ञायते किं त्विदमपि काचिकं लक्ष्यसिद्धये आश्रयणीयमिति भावः ।

[ आक्षेपभाष्यम् ]

**लुकि किमुदाहरणम् ?॥**

[ समाधानभाष्यम् ]

**बिम्बं बदरम् ॥**

(प्र०) बिम्बमिति । बिम्बीबदरीशब्दाभ्यां ङीषन्ताभ्यामनुदात्तादेश्चेत्यञ्, तस्य फले लुक्, लुक्तद्धितलुकीति ङीषो लुकि तस्य स्थानिवद्भावायस्येति लोपः प्राप्नोतीति प्रतिषेध उच्यते । तद्धितस्य स्थानिनः परत्वाल्लुकोऽपि परत्वाश्रयणात् परनिमित्तकत्वं स्त्रीप्रत्ययलुक आश्रीयते । अन्यथा अभावेन पौर्वापर्याऽभावात्कुतः परनिमित्तकत्वम् । अथवा बुद्धिपरिकल्पितमभावेनापि पौर्वापर्यं भवति ॥

[ समाधानबाधकभाष्यम् ]

**नैतदस्ति । पुंवद्भावेनाप्येतत्सिद्धम् ।**

(प्र०) पुंवद्भावेनेति । 'भस्याऽढे तद्धिते' इति पुंवद्भावः । अत्र च भाषितपुंस्कत्वं नाश्रीयते इत्येवमुक्तम् । तदाश्रये तु नास्ति पुंवद्भावः ॥

(उ०) तदाश्रये इति । 'वृक्षजातिः स्त्रिया'मिति लिङ्गानुशासनाद्वृक्षे स्त्रीलिङ्गत्वं, फले च नपुंसकत्वमिति भावः । वस्तुत आम्र इत्यादौ लिङ्गानुशासनस्य व्यभिचारादेतद्भाष्यप्रामाण्याच्च बिम्बबदराऽमलका वृक्षेऽपि त्रिलिङ्गा इत्याहुः ।

[ समाधानान्तरभाष्यम् ]

**इदं तर्हि—आमलकम् ॥**

(प्र०) आमलकमिति । वृद्धत्वान्मयटो विधानाद्भत्वाऽभावः ॥

[ समाधानबाधकभाष्यम् ]

**नैतदस्ति । वक्ष्यत्येतत्-'फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वा'दिति ॥**

(प्र०) प्रकृत्यन्तरत्वादिति । बिम्बबदराऽमलकादयो न यौगिकाः शब्दाः । किं तर्हि, विशिष्टफलजातिवाचिन इत्यर्थः ॥

(उ०) किंतर्हीति । यौगिकत्वे हि वृक्षसंबन्धात् फले न पुनः फलसंबन्धाद्वृक्षे इत्यत्र विनिगमनासंभवादिति भावः । विशिष्टेति । विजातीयेत्यर्थः ।

[ समाधानान्तरभाष्यम् ]

**इदं तर्हि-पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुर्दशपटुरिति ॥**

(प्र०) पञ्चभिरिति । 'आर्हा'दिति ठक् । तस्याध्यर्द्धपूर्वे'ति लुक् । लुक्तद्धितलुकीति ङीषो लुक् । 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति यणादेशः पूर्वं न प्रवर्तते । कृते तु लुकि तस्य स्थानिवत्त्वाद्यणः प्रसङ्ग इति स्थानिवत्त्वनिषेध उच्यते । अव्यविकन्यायेन पटुशब्दान्तादेव ठग् भविष्यति न तु पट्वीशब्दान्तादितिचेत्प्रतिपत्तिगौरवप्रसङ्गः ॥

(उ०) अन्तरङ्गानपीति । अस्य न्यायस्यान्तरङ्गनिमित्तविनाशकलुक एव तदन्तरङ्गबाधकताबोधकत्वे तु तत्परिभाषाप्रवृत्त्यभावसंपादकस्थानिवत्त्वनिषेधायेदमिति बोध्यम् । अव्यविकेति । 'वोतो गुणे'ति ङीषो वैकल्पिकत्वादिति भावः । प्रतिपत्तिगौरवेति । ज्ञानगौरवेत्यर्थः ।

[ समाधानदूषणभाष्यम् ]

**ननु चैतदपि पुंवद्भावेनैव सिद्धम् ॥**

१ ङीषन्ताभ्यां-गौरादित्वान्ङीषन्ताभ्याम् ।

२ 'भसञ्ज्ञा' : ३ 'एतदपि नाऽस्ति' ।

**कथं पुंवद्भावः ? ॥**

**'भस्याढे तद्धिते पुंवद्भवती'ति ॥**

[ समाधानसाधकभाष्यम् ]

**भस्येत्युच्यते । यजादौ च भं भवति ।**

**न चात्र यजादिं पश्यामः ॥**

[ समाधानदूषकभाष्यम् ]

**प्रत्ययलक्षणेन यजादिः ॥**

[ समाधानसाधकभाष्यम् ]

**वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥**

(प्र०) वर्णाश्रय इति । यद्यपि पुंवद्भावे 'सिद्धश्च प्रत्ययविधा'वित्यस्ति तथापि यत्र भावि भत्वं तत्र पुंवद्भावः। इह तु लुकि भत्वाऽभावात्कुतः पुंवद्भावः ।

(उ०) ननु भसंज्ञकस्य न पुंवत्त्वम्, येन वर्णाश्रयतया भत्वाऽभावेन पुंवत्त्वं न स्यात्, किंतु तत्प्रत्ययविषये पूर्वमेव पुंवत्त्वप्रतिपत्तिरत आह–यद्यपीति । इहतु लुकीति। अनेन न लुमतेति निषेधान्न प्रत्ययलक्षणम् । किंच ढभिन्नतद्धितविषयाऽभावादपि न तत्प्रवृत्तिरित्यपि ध्वनितम् । किंचा'न्तरङ्गानपी'ति न्यायेनैकादेशात्पूर्वमेव लुकि प्रत्यय लक्षणसत्त्वेऽपि यजादित्वाऽभावान्न भत्वम्। न च वर्णप्राधान्याऽभावात्कथं 'वर्णाश्रये नास्ती'त्युक्तिर्भगवत इति वाच्यम् 'प्रत्ययलक्षण'सूत्रस्य नियमार्थत्वमिति पक्षेऽदोषात् ।

[ समाधानदूषणभाष्यम् ]

**एवं तर्हि-'ठक्छसोश्चे'त्येवं भविष्यति ।**

[ समाधानसाधकभाष्यम् ]

**ठक्छसोश्चेत्युच्यते। न चात्र ठक्छसौ पश्यामः ॥**

[ समाधानबाधकभाष्यम् ]

**प्रत्ययलक्षणेन ।**

[ समाधानस्थापकभाष्यम् ]

**'न लुमता तस्मिन्नि'ति प्रत्ययलक्षणस्य प्रतिषेधः ॥ न खल्वप्यवश्यं ठगेव क्रीतप्रत्ययः, क्रीताद्यर्था एव वा तद्धिताः ॥ किं तर्हि ? ॥ अन्येऽपि तद्धिता ये लुकं प्रयोजयन्ति । पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः । दशेन्द्रः । शतेन्द्रः । पञ्चाग्निः । दशाग्निः । शताग्निः ॥**

(प्र०) किंतर्ह्यन्येऽपीति । यत्र पुंवद्भावो नास्ति । पञ्चेन्द्र इति । साऽस्य देवतेत्यण् तस्य द्विगोर्लुगनपत्य इति लुक्, ततो ङीषो लुक् । तस्य स्थानिवत्त्वान्ङीष् संनियुक्त आनुक् श्रूयेत, यथेन्द्राणीति । तथा पञ्चाग्नाय्यो देवता अस्य पञ्चाग्निरिति ऐकारः श्रूयेत । समानायामाकृतौ भाषितपुंस्कत्वाऽभावाद्वर्णाश्रयत्वाद्भत्वाऽभावाच्च पुंवद्भावो नास्ति। अथ वा यस्येति लोपप्रसङ्गः । लुकि च स्थानित्त्वनिषेधादादीध्य इति 'परस्मि'न्नित्यस्य पूर्वसूत्रे प्रत्युदाहरणमुपपद्यते । शब्लुकि कृते टेरेत्त्वस्य स्थानिवद्भावाद्व्यवधानाच्च लोपप्रसङ्गात् ॥

(उ०) 'न लुमताङ्गस्ये'ति यथाश्रुतेऽभ्युपेत्याऽपि ठक्छसोश्चेति पुंवत्त्वं भाष्ये आह–खल्वपीति । नन्वानुक् न ङीषीत्युच्यते, येन स्थानिवत्त्वेन तदापत्तिरत आह–संनियुक्त इति। एवं च संनियोगशिष्टपरिभाषाप्राप्तानुग्निवृत्तिप्रतिबन्धद्वारा आनुग्रक्षणमेव पूर्वविधिरिति भावः । अत एवैनेय इत्यादौ 'यस्ये'ति लोपे नस्य श्रवणम् । अत एवाऽचः परस्मिन्निति सूत्रे विधिशब्दस्य भावसाधनत्वे पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति पूर्वः स्यादिति स्थानिवदित्यर्थ उक्तः । पूर्वः स्यादित्यस्य पूर्वः स्थितः स्यादित्यप्यर्थो बोध्यः । एवं च पूर्वसूत्रे तन्त्रेणोभयसाधनविधिशब्दघटितग्रहणम् । यत्तु कैयटादिभिः 'संनियोगशिष्ट'परिभाषाऽनित्यत्वेनेदं साधितम्, तद्वृथैव । नन्वत्रापि 'भस्याऽढे' इति पुंवत्त्वं स्यादत आह–समानायामिति । पुंसि इन्द्रत्वादि प्रवृत्तिनिमित्तं, स्त्रियां तु तत्संबन्ध इति भावः । नन्वेवमग्नायी देवता अस्याग्नेयं हविरिति उदाहरणाऽसिद्धिस्तस्मादारोपितेन्द्रत्वाद्येव स्त्रियामपि प्रवृत्तिनिमित्तमित्यत आह–वर्णाश्रयत्वादिति। अणो लुकि न लुमतेति निषेधाड्ढभिन्नतद्धितविषयाऽभावाच्चेत्यपि बोध्यम् । अथवेति । ङीलुकः स्थानिवत्त्वेन भत्वादीकारपरत्वाच्चेति भावः। शब्लुकीति। अन्यथा शब्लुकः स्थानिवत्त्वेन व्यवधानात्प्राप्तिरेव नेति भावः । वस्तुतः शब्लुकः परनिमित्तकत्वाऽभावादेव न स्थानिवत्त्वप्रसक्तिः । अत एव जुहुत इत्यादौ श्लोः स्थानिवत्त्वान्न गुणः ॥

[ प्रश्नभाष्यम् ]

**उपधात्वे किमुदाहरणम् ? ॥**

[ समाधानभाष्यम् ]

**पिपठिषतेरप्रत्ययः पिपठीरिति ॥**

---

१ 'कचिन्न'। २ एवं च–संनियुक्तत्वे च ।
३ 'आनुग्ग्रहण' मिति शिवदत्तस्य त्वशुद्धः पाठः।
४ अत एव–एवंरीत्या स्थानिवद्भावाङ्गीकारादेव ।
५ इदम्–एनेय इत्यादि । ६ अत्रापि–पञ्चेन्द्रादावपि ।
७ प्रागुक्तमेवात्राप्याह–अणइति ।
८ अन्यथा–लुकि निषेधाऽभावे ।

[ समाधानदूषणभाष्यम् ]

**नैतदस्ति । दीर्घविधिं प्रति न स्थानिवत् ॥**

[ समाधानान्तरभाष्यम् ]

**इदं तर्हि-सौरी बलाका ॥**

[ समाधानदूषणभाष्यम् ]

**नैतदस्ति । यलोपविधिं प्रति न स्थानिवत् ॥**

[ समाधानान्तरभाष्यम् ]

**इदं तर्हि-पारिखीयः ॥**

(प्र०) पारिखीय इति । परिखाशब्दाच्चातुरर्थिकेऽणि कृते आकारलोपस्य स्थानिवत्त्वात्पारिखे भव इति 'वृद्धादकेकान्तखोपधा'दिति च्छो न स्यात् ॥

[ उदाहरणभाष्यम् ]

**चङ्परनिर्ह्रासे चोपसङ्ख्यानं कर्तव्यम् । वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन ॥ किं पुनः कारणं न सिध्यति?। योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद्ध्रस्वत्वं न प्राप्नोति ॥**

(उ०) भाष्ये योऽसौ णाविति। 'णेर्णिच्युपसङ्ख्यान' मिति सिद्धमेतत् । वक्तृभेदान्न दोष इति तत्त्वम् । अत एव ज्ञापकात्प्रायोगिकमच्स्थानिकादेशत्वमेवा'चः परस्मि'न्नित्येतत्प्रवृत्त्युपयोगीति बोध्यम् ।

[ तद्बाधकभाष्यम् ]

**ननु चैतदप्युपधात्वविधिं प्रति न स्थानिवदित्येव सिद्धम् ॥**

[ तत्साधकभाष्यम् ]

**विशेषेत[1] एतद्वक्तव्यम् ॥**

**क? ॥ प्रत्ययविधाविति । इह मा भूत्-पटयति लघयतीति ॥**

(उ०) प्रत्ययविधाविति । अत एव चङ्परह्रस्वे निषेधः सार्थकः । ननूपधात्वे स्थानिवत्त्वनिषेधेऽपि ञ्णित्परत्वांशे णिपरत्वांशे च तस्य दुर्वारत्वेन न पटयतीत्यादौ वृद्धिर्नापि ह्रस्वे निषेधो व्यर्थ इति चेन्न । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन ञ्णिति णावित्यादेरङ्गविशेषणत्वस्यैवौचित्यात् । उपधात्वप्रयुक्तकार्ये एव तन्निषेधेन णित्परत्वाद्यंशेऽपि स्थानिवत्त्वनिषेधाच्च ॥

[ कुत्वोदाहरणभाष्यम् ]

**कुत्वे चोपसङ्ख्यानं कर्तव्यम् । अर्चयतेरर्कः । मर्चयतेर्मर्कः ॥**

(उ०) अर्क इति । कर्मणि घञ् । चजोरिति कुत्वमिति भावः ॥

[ तद्बाधकभाष्यम् ]

**नैतद्घञन्तम् । औणादिक एव कशब्दस्तस्मिन्नाष्टमिकं कुत्वम् ॥**

(उ०) नैतद्घञन्तमिति । एरचः प्रसङ्गादित्यर्थः ॥

[ साधकभाष्यम् ]

**एतदपि चिणा व्यवहितत्वान्न प्राप्नोति॥**

(उ०) एतदपीति । एवं च कुत्वे इत्यावश्यकमिति भावः ॥

[ आक्षेपवार्तिकम् ]

*॥ * ॥ पूर्वत्राऽसिद्धे च ॥ * ॥*

**पूर्वत्राऽसिद्धे च न स्थानिवदिति वक्तव्यम् ॥**

(उ०) वस्तुतस्तदनावश्यकमित्याह-**पूर्वत्रासिद्धे** इति । अचः परस्मिन्नित्येतद्दृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयम् । तत्फलं त्वतिदेशान्तराणां वतिघटितानामन्तादिवदित्यादीनां त्रिपाद्यां प्रवृत्तिबोधनम् । तेनामी, क्षीरपेणेत्यादौ तत्सिद्धिरिति दिक् ॥

**किं प्रयोजनम्?॥**

*॥ * ॥ प्रयोजनं क्सलोपः सलोपे ॥ * ॥*

**क्सलोपः सलोपे प्रयोजनम् । अदुग्ध अदुग्धाः।'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' इति लुग्ग्रहणं न [॥] कर्तव्यं भवति ॥**

(प्र०) क्सलोप इति । अदुग्धेत्यर्थं लुग्वचनं कर्तव्यमेव । तदर्थं 'लुग्ग्रहणं ने'तिच्छेदं कुर्वन्ति । 'कर्तव्यं भवती'त्युत्तरम् । अवश्यकार्यमित्यर्थः ॥

(उ०) अदुग्धेति । क्सस्यान्त्यलोपे झलो झलीति सलोपे तदीयाऽल्लोपस्य स्थानिवत्त्वं न ।

[ प्रयोजनवार्तिकम् ]

*॥*॥ दर्घे आकारलोप आदिचतुर्थत्वे ॥*॥*

---

1 'विशेषे एत' । २ 'कप्रत्ययः' ।

३ अन्त्यलोपे इत्यस्य 'कृते' इति, सलोपे इत्यस्य च 'कार्ये' इति शेषः ।

४ क्वचिन्न ।

**दध आकारलोप आदिचतुर्थत्वे प्रयोजनम्-धत्से धद्ध्वे धद्ध्वमिति । 'दधस्तथोश्चे'ति चकारो न कर्तव्यो भवति ।**

(प्र०) चकारो न कर्तव्य इति । झषन्तत्वात् पूर्वेणैव सिद्धत्वात् ॥

(उ०) **चतुर्थत्वे इति ।** भष्भावे इत्यर्थः । **चकार इति ।** स्ध्वोरित्यनुकर्षणार्थं इत्यर्थः । **पूर्वेणेवेति ।** 'एकाचो बश' इत्यनेनेत्यर्थः ।

[ प्रयोजनवार्तिकम् ]

|| * || *हलो यमां यमि लोपे* || * ||

**हलो यमां यमि लोपे प्रयोजनम् । आदित्यः । हलो यमां यमि लोपः सिद्धो भवति ।**

[ प्रयोजनवार्तिकम् ]

|| * || *अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु* || * ||

**अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनम् । पापच्यतेः पापक्तिः । यायज्यतेर्यायष्टिः । पाचयतेः पाक्तिः । याजयतेर्याष्टिः ।**

( प्र० ) **पापक्तिरिति ।** क्तिच् । संयोगान्तलोपादयः पदान्तविधौ स्थानिवत्त्वनिषेधात्सिद्धा इति भाष्ये नोदाहृताः । स्कन्दयतेः स्कन्, काष्ठं तक्षयतीति काष्ठतक् । 'संयोगादिलोपलत्वणत्वेष्वि'ति वचनात्संयोगादिलोपे स्थानिवत्त्वात्तदभावादत्र संयोगान्तलोपः । दोहयतेर्धोक् । लेहयतेर्लेट् । उणादीनामव्युत्पन्नत्वात् किर्योः गिर्योरित्यत्र दीर्घाऽभावः ॥

(उ०) ननु संयोगान्तलोपप्रभृतिषु इत्युक्त्वा तं विहाय कुत्वाद्युदाहरणदाने बीजाभावोऽत आह-**संयोगान्तेति । पदान्तेति ।** चिन्त्यमेतत् । पदचरमावयव एव तन्निषेधात्, परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्चेति । तदुदाहरणानि दर्शयति-**स्कन्दयतेरित्यादिना । काष्ठतगिति ।** न च 'काष्ठशगेव नास्ति, कुतः काष्ठशक्स्थाते'ति परेश्चेति सूत्रस्थभाष्यादेषामनभिधानमिति वाच्यम् । यत्र संयोगादिलोपप्रसक्तिस्तद्विषयत्वेनानभिधानस्याऽदोषात् । नन्वत्र संयोगादिलोपः प्राप्नोति । न च तत्र पदान्तविधित्वमिति न तेन सिद्धिरत आह-**संयोगादिलोपेति ।** केचित्तु एतद्भाष्यप्रामाण्यादेषां प्रयोगाणामनभिधानमेवेत्याहुः ।

[ प्रयोजनवार्तिकम् ]

|| * || *द्विर्वचनादीनि च* || * ||

**द्विर्वचनादीनि च-[ प्रयोजनानि ] न पठितव्यानि भवन्ति । पूर्वत्रासिद्धेनैव सिद्धानि भवन्ति ॥**

**किमविशेषेण ? । नेत्याह ॥**

||*|| *वरेयलोपस्वरवर्जम्* ||*||

**वरेयलोपं स्वरं च वर्जयित्वा ।**

(उ०) भाष्ये-**वरेयलोपस्वरवर्जमिति ।** सवर्णानुस्वारदीर्घादयः साहचर्यान्नैपादिका एव गृह्यन्ते इति भावः । नन्वेवं यङन्ताण्णिजन्तप्रकृतिकण्यन्ताद्वा चिणि अशंशामि अशामीत्यादौ दीर्घो न स्यात् । णिलोपाऽल्लोपयोः स्थानिवत्त्वादिति चेन्न । णेर्णिच्युपसङ्ख्यानादशामीत्यस्य सिद्धेः । अशंशामीति तु यङ्लुगन्ताण्णिचि भविष्यति । न हि यङ्यङ्लुकोः स्वरे रूपे वा विशेषः । ग्राहितमित्यादौ विहितविशेषणाश्रयणान्न दीर्घ इति दिक् । अन्ये तु तृतीयषष्ठाध्यायस्थभाष्यप्रामाण्यादत्र दीर्घमप्युपलक्षयन्ति । एतच्च तत्रैव निरूपयिष्यामः ।

[ प्रतिप्रसववार्तिकम् ]

|| * || *तस्य दोषः संयोगादिलोपलत्वणत्वेषु* || * ||

**तस्यैतस्य लक्षणस्य दोषः संयोगादिलोपलत्वणत्वेषु ।**

**संयोगादिलोपे[3]-काक्यर्थम् वास्यर्थम् । 'स्कोः संयोगाद्योरन्ते चे'ति लोपः प्राप्नोति ।**

(उ०) भाष्ये **'काक्यर्थ'**मिति । न च स्कोरिति सूत्रे झल्ग्रहणापकर्षेण झलन्तसंयोगस्यैव ग्रहणात् प्रकृते न दोष इति वाच्यम् । 'झलो लोपः संयोगान्तलोपः' इत्याष्टमिकभाष्येण संयोगादिलोपे तदसंबन्धबोधनात् । त्रिपाद्यां बहिरङ्गाऽसिद्धत्वाप्रवृत्तेश्चेति भाष्याभिप्रायः ।

[ उदाहरणभाष्यम् ]

**लत्वं-निगार्यते निगाल्यते । 'अचि विभाषे'ति लत्वं न प्राप्नोति ।**

(उ०) **निगाल्यत इति ।** नन्वत्रान्तरङ्गत्वादेव लत्वं सिध्यतीति वाच्यम् । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्रवृत्तेः । त्रिपाद्यां तत्परिभाषाऽप्रवृत्तेश्च ।

१ कचिन्न ।

२ 'दीनिच नारब्धव्यानि' । ३ 'लोपे' ।

न च प्रत्ययलक्षणम्, अल्विधित्वात् । प्रत्ययलक्षणसूत्रस्य नियमार्थताया एव भाष्यसंमतत्वात् ।

[ णत्वोदाहरणभाष्यम् ]

**णत्वम्–माषवपनी व्रीहिवपनी । 'प्रातिपदिकान्तस्ये'ति णत्वं प्राप्नोति ।**

[ न पदा तद्विर्वचन ] ॥

**(प्र०) माषवपनीति ।** समासान्तस्य नकारस्य णत्वं विधीयमानमल्लोपस्य स्थानिवत्त्वनिषेधान्ङीबुत्पत्तेः प्राक्समासविधानात् प्राप्नोति ॥

**(उ०)** ननु स्थानिवत्त्वनिषेधेऽपि माषशब्दस्य वपनीशब्देन समासे समासान्तो नकारो नेति णत्वं न स्यादत आह–**ङीबुत्पत्तेरिति** । [सुबुत्पत्तेरप्युपलक्षणम्[1] ] । 'गतिकारकोपपदानां कृद्भि'रिति वचनादिति भावः । न च बहिरङ्गाऽसिद्धत्वेनेदं सिद्धम्, त्रिपाद्यां तदप्रवृत्तेरिति दिक् ।

## द्विर्वचनेऽचि ॥ १ । १ । ५९ ॥

**(प्र०) द्विर्वचने ॥ अचः परस्मिन्नि-**त्यत्र योऽनादिष्टादचः पूर्व इति स्थितम् । साच्कस्य च द्विर्वचनमिति पूर्वविधित्वाऽभावादप्राप्तं स्थानिवत्त्वं विधीयते । अथापि निमित्तात् पूर्वमित्यस्मिन् पक्षे प्राप्तिः स्यात्तथापि **न पदान्तद्विर्वचनेति** प्रतिषेधप्रसङ्गादिदं वचनम् ॥

**(उ०) द्विर्वचनेचि ॥ अथापीति ।** प्रौढिवादोयम् । तत्पक्षस्याऽस्थितत्वात् । **नपदान्तसूत्रे** आष्टमिकद्वित्वस्यैव ग्रहणाच्च ।

[ आक्षेपसाधकवार्तिकम् ]

॥ * ॥ *आदेशे स्थानिवदनुदेशात्तद्वतो द्विर्वचनम्* ॥ * ॥

**आदेशे स्थानिवदनुदेशात्तद्वतः ॥ किंवतः ?॥ आदेशवतः । द्विर्वचनं प्राप्नोति ।**

[ प्रत्याक्षेपभाष्यम् ]

**तत्र को दोषः ? ।**

[ दोषदर्शिवार्तिकम् ]

॥ * ॥ *तत्राभ्यासरूपम्* ॥ * ॥

**तत्राभ्यासरूपं न सिद्ध्यति । चक्रतुश्चक्रुरिति ।**

**(प्र०) आदेश इति ।** कार्यातिदेश इति पूर्वः पक्षः । चक्रतुरित्यत्र यणादेशे कृते एकाचो विधीयमानं द्विर्वचनमनच्कत्वादप्राप्तमिति स्थानिवत्त्वाद्यण्युक्तस्यैव प्राप्नोति ॥

**(उ०) यण्युक्तस्यैवेति ।** यद्यपि स्थानिवत्त्वे द्विर्वचनं नित्यं तथापि यणपि नित्य इति परत्वात्स स्यादिति भावः । इदमेवाभिप्रेत्य भाष्येऽभ्यासरूपं न सिद्ध्यतीत्येतावदेवोक्तम् । न तु निन्यतुरित्यादावियङ उत्तरखण्डे श्रवणं स्यादित्यापादितम्, तस्यां[2]ऽनित्यत्वेन ततः पूर्वं द्वित्वस्यैव प्रवृत्तेरिति[3] ।

[ समाधानवार्तिकम् ]

॥*॥ *अज्ग्रहणं तु[4] ज्ञापकं रूपस्थानिवद्भावस्य* ॥*॥

**[अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य]॥**

**यदयमज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो–रूपं स्थानिवद्भवतीति ॥ कथं कृत्वा ज्ञापकम् ? ॥ अज्ग्रहणस्यैतत्प्रयोजनम्–इह मा भूत् जेघ्रीयते देध्मीयते इति । यदि च रूपं स्थानिवद्भवति ततोऽज्ग्रहणमर्थवद्भवति । अथ हि कार्यं, नाऽर्थोऽज्ग्रहणेन । भवत्येवाऽत्र द्विर्वचनम् ।**

**(प्र०) अथ हीति ।** कार्यातिदेशे हि घ्री ध्मीति भाव्यमेव द्विर्वचनेनेति किमज्ग्रहणेन । नन्वज्ग्रहणस्य प्रयोजनं भसेः क्सौ 'घसिभसोर्हली'त्युपधालोपे कृते द्विर्वचनं मा भूदिति । नैतदस्ति । सत्यसति वा द्विर्वचने प्सानिति श्रुतौ विशेषाऽभावात् । छान्दसश्चैवोपधालोपः । छन्दसि च दृष्टानुविधिः । रूपस्थानिवत्त्वे च निन्यतुरित्यत्र पूर्वमियङादेशे कृते स्थानिरूपातिदेशान्नीनीति द्विर्वचने 'एरनेकाच' इति यणा बाधितत्वात्पुनरियङ् न प्रवर्तते ॥

**(उ०)** दुर्लक्ष्यो[7]ऽपि विशेषः सूक्ष्मदृशं प्रति दुर्वारोऽत आह–**छान्दसश्चैवेति ।** एवं च 'दाति प्रियाणी'तिवद्द्वित्वाऽभाव इति भावः । अत्रोपधालोपस्य छान्दसत्वं वदता[8] क्सोर्लौकिकत्वमभ्युपेतम् । ननु सिद्धान्ते द्वित्वनिमित्तेऽचीत्यर्थस्तदाऽचीति किमर्थम् । अरिरिषतीत्यादिसिद्धये कार्यमनुभवतः कार्यिणो निमित्तत्वानाश्रयणेनाऽत्रापि 'नटभार्याववद्यञ्जनानि' इति षाष्ठभाष्यरीत्या द्वितीयाजवधिकस्य घ्रोय्' इत्यस्यैव द्वित्वप्राप्त्या यङः कार्यित्वेन द्वित्वनिमित्तत्वाऽभावात्, कथं[9] तन्निमित्तादेशे स्थानिवत्त्वप्रसक्तिरिति

१ क्वचिन्न । २ तस्य–इयङः । ३ इतीत्यस्य बोध्यमिति शेषः । ४ 'च' । ५ लुप्तं स्यात् । ६ क्वचिन्न ।

७ शङ्कते–दुरिति । ८ वदता–कैयटेन ।
९ कथमिति । अस्य 'एवं चे'त्यादिः ।

चेन्न । द्वितीयहल्पर्यन्तस्यैव द्वित्वमिति मते तत्सत्त्वात् । अत एव प्रातिशाख्ये उक्तम्–'स्वरान्तरे व्यञ्जनान्युत्तरस्ये' ति । अरिरिषतीत्यादौ 'रि'इत्यस्य द्वित्वेऽपि इकारस्य सनवयवतया सनो द्वित्वानुभवेन तन्निमित्तत्वाऽभावादिति दिक् । षाष्ठभाष्यरीत्या त्वधिजगे इति व्यावर्त्यं बोध्यम् ।

[ तद्दूषणवार्तिकम् ]

*॥*॥ तत्र गाङ्प्रतिषेधः ॥*॥*

**तत्र गाङः प्रतिषेधो वक्तव्यः । अधिजगे । इवर्णाभ्यासता प्राप्नोति ।**

(प्र०) अधिजग इति । कृते एकादेशे गाङिति प्रक्रियाश्रयेण चोद्यम् । ङकारस्यानुबन्धत्वादिकारस्य गाङ् भवत्यजादेशः ॥

(उ०) ननु लिटि विधीयमानस्य गाङः कथमच्यादेशत्वमत आह–कृते इति । ङकारस्येति । प्रकृतसूत्रे प्रयोगे निवर्त्त्यस्यैव स्थानित्वेन ग्रहणमचः परस्मिन्निति-वदिति भावः ।

[ समाधानस्थापकभाष्यम् ]

**न वक्तव्यः । 'गाङ्लिटी' ति द्विलकारको निर्देशः । लिटि लकारादाविति ।**

(उ०) द्विलकारक इति भाष्ये । एवं चाऽचि नायमिति भावः । एवं च इदमज्ग्रहणव्यावर्त्यमिति स्पष्टमेवोक्तमिति बोध्यम् । न च सिद्धान्ते 'आर्धधातुके लिटी' त्यादीनां तत्र विषयसप्तमीत्वेनाऽनैमित्तिकत्वान्न तत्र दोष इति वाच्यम् । विषयसप्तमीत्वेऽपि बुद्धिकृतनिमित्तत्वस्य दुर्वारत्वेन सनिमित्तकत्वमस्त्येवेति भाष्याशयात् ।

[ दूषणवार्तिकम् ]

*॥ * ॥ कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपम् ॥ * ॥*

**कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपं न सिद्ध्यति । कृति–अचिकीर्तत् । कृति । एजन्त–जग्ले मम्ले । एजन्त । दिवादि–दुद्यूषति सुस्यूषति । दिवादि । नामधातु–भवनमिच्छति भवनीयति, भवनीयतेः सन् बिभवनीयिषति ॥**

(प्र०) कृत्येजन्तेति । अचि योऽजादेशः स द्विर्वचने कर्तव्ये स्थानिवदिति सूत्रार्थमाश्रित्यैतदुच्यते । जग्ल इति । शित्सदृशे आत्वमित्यत्र पक्षेऽयं दोषः ।

(उ०) अत्र पञ्च पक्षाः–अचि योऽजादेशः स द्वित्वे कार्ये स्थानिवदित्येकः । अजादौ प्रत्यये योऽजादेशः स द्वित्वे स्थानिवदिति द्वितीयः । द्विर्वचनशब्दस्याधिकरणल्युडन्तत्वादर्शआद्यजन्तत्वाद्वा द्वित्वनिमित्तेऽचीत्यादीति तृतीयः । द्वित्वनिमित्तेऽचि आदेशनिषेध इति चतुर्थः। द्वित्वनिमित्तेऽचि योऽजादेशः स स्थानिवत् , न भवति वा, द्वित्वे कार्ये इति पञ्चमः । तत्राद्ये दोषोद्भावनमित्याह–अचीकि । कृतेरुपधायाश्चेतीत्त्वम् । तस्य च णिनिमित्ततयाऽच्यादेशता, अङ्गाक्षिप्ते प्रत्यये तद्विधानात् । नन्वात्वं कथमच्यादेशोऽनैमित्तिकत्वादत आह–शित्सदृश इति । शिदिति तत्पुरुषः । इत्संज्ञकशकारादिप्रत्ययभिन्नप्रत्यय इत्यर्थः । अन्तरङ्गत्वात्तिबादिषु एशि च कृते आत्वमिति भावः । दिवेः सनि सनीवन्तेतीड्भावपक्षे हलन्ताच्चेति कित्त्वे च्छ्वोरित्यूठि यणि सन्यङोरिति द्वित्वे रूपम् ।

[ समाधानभाष्यम् ]

**एवं तर्हि प्रत्यय इति वक्ष्यामि ॥**

[ द्वितीयपक्षनिरासवार्तिकम् ]

*॥*॥ प्रत्यय इति चेत्कृत्येजन्तनामधातुष्वभ्यासरूपम् ॥*॥*

**प्रत्यय इति चेत्कृत्येजन्तनामधातुष्वभ्यासरूपं न सिद्ध्यति । दिवादय एके परिहृताः ।**

(उ०) द्वितीयं निराकरोति भाष्ये–प्रत्यय इति चेदिति ।

[ तृतीयपक्षाङ्गीकारेण समाधानभाष्यम् ]

**एवं तर्हि–द्विर्वचननिमित्तेऽच्यजादेशः स्थानिवदिति वक्ष्यामि ॥**

(प्र० ) द्विर्वचननिमित्त इति । अस्मिन् पक्षे जग्ल इत्यपरिहृतम् । उत्तरत्र तु परिहरिष्यते ॥

[ तद्दूषणभाष्यम् ]

**स तर्हि निमित्तशब्द उपादेयो नह्यन्तरेण निमित्तशब्दं निमित्तार्थो गम्यते ॥**

[ समाधानभाष्यम् ]

**अन्तरेणापि निमित्तशब्दं निमित्तार्थो**

---

१ तस्य निमित्तानाश्रयणादित्यर्थः । २ 'गाङःप्रति' । ३ एवं च–लावस्थायां गाङादेशे च । ४ एवं च तस्याऽनिमित्तत्वान्निमित्तत्वाभावेन । तत्र–गाङलिटीत्यत्र । दोषः–स्थानिवत्त्वप्रसक्तिरूपो दोषः । ५ बुद्धिकृतेति । तद्भावभावित्वेनेव तद्बुद्धिभाविताभात्रकृतेत्यर्थः । ६ 'कृत्येजन्त' । ७ कर्मधारय इत्यर्थः ।

गम्यते। तद्यथा-'दधित्रपुसं प्रत्यक्षो ज्वरः'। ज्वरनिमित्तमिति गम्यते । 'नड्वलोदकं पादरोगः'। पादरोगनिमित्तमिति गम्यते । 'आयुर्घृतम्'। आयुषो निमित्तमिति गम्यते॥

( प्र० ) दधित्रपुसमिति । समाहारद्वन्द्वः । कर्मधारयो वा । दध्येव विशिष्टावस्थायुक्तं 'त्रपुस'-मुच्यते ! तत्र[1] द्विर्वचननिमित्तत्वात्तद्रूपाऽऽरोपेणाऽजेव द्विर्वचनमुच्यते । अथ वा अधिकरणे ल्युट् । द्विरुच्यतेऽस्मिन्निति द्विर्वचनम् ॥

(उ०) त्रपुसमिति । 'तृपस'मितिपाठान्तरं । तृपुसमिति च । कर्मधारयमुपपादयति—दध्येवेति । विशिष्टावस्थेति । रूपरसगन्धान्तरयुक्तमित्यर्थः । आद्ये त्रपुसं फलविशेषः[2] । द्वितीये समासाऽभावेऽपि न क्षतिरिति बोध्यम् । तद्रूपारोपेणेति । दृष्टान्तबलेन तथैव लाभात् ।

[ परिहारान्तरभाष्यम् ]

अथ वाऽकारो मत्वर्थीयः । द्विर्वचनमस्मिन्नस्ति सोऽयं द्विर्वचनोद्विर्वचनेइति ।

(प्र०) एतदप्रतिपद्यमानं प्रति परिहारान्तरमाह—अथ वाऽकार इति ।

(उ०) ननु दृष्टान्ते लक्षणायामव्यभिचारेण[3] कार्यजननप्रतीतिः प्रयोजनम्, प्रकृते च न किंचित्तथेति लक्षणा दुरुपपादेत्यत आह—अथवेति ।

[ प्रश्नभाष्यम् ]

एवमपि न ज्ञायते-कियन्तमसौ कालं स्थानिवद्भवतीति ॥

( प्र० ) एवमपीति । एकत्वाद्विर्वचनशब्दस्य तस्य चाऽज्विशेषणे उपयुक्तत्वात्कालावधारणाऽभावः॥

(उ०) कालेति । द्विर्वचनविधानसमय एवेत्यवधारणाऽभाव इत्यर्थः। एवं च[4] चक्रतुरित्याद्यसिद्धिः, पुनर्यणादेशानापत्तेरिति भावः ।

[ समाधानभाष्यम् ]

यः पुनराह 'द्विर्वचने कर्तव्ये' इति, कृते तस्य द्विर्वचने स्थानिवन्न भविष्यति ।

[ चतुर्थपक्षाङ्गीकारभाष्यम् ]

एवं तर्हि-प्रतिषेधः प्रकृतः सोऽनुवर्तिष्यते ॥ क्व प्रकृतः ?॥ 'न पदान्तद्विर्वचनेति । द्विर्वचननिमित्ते अचि अजादेशो न भवतीति ।

(प्र०) एवं तर्हीति । स्थानिवदिति नानुवर्तते इति भावः ॥

[ प्रश्नभाष्यम् ]

एवमपि न ज्ञायते-कियन्तमसौ कालमादेशो न भवतीति ।

[ समाधानभाष्यम् ]

यः पुनराह-द्विर्वचने कर्तव्य इति । कृते तस्य द्विर्वचने अजादेशो भविष्यति ।

[ पञ्चमपक्षाभ्युपगमभाष्यम् ]

एवं तर्हि-उभयमनेन क्रियते-प्रत्ययश्च विशेष्यते, द्विर्वचनं च ।

(प्र०) प्रत्ययश्चेति । द्विर्वचनेन प्रत्ययस्याक्षिप्तत्वात्तद्विशेषणं द्विर्वचनम् । अचीत्येतच्च तस्य । तदादिविधिर्भवत्यजादाविति ॥

(उ०) 'प्रत्ययश्च विशेष्यते द्विर्वचनं चे'त्यस्य 'चिकीर्षितत्वेन निर्दिश्यते'इति शेषः । तत्राऽश्रुतस्य प्रत्ययस्य कथं विशेष्यत्वमत आह-द्विर्वचनेति । अचीत्युपादानात्वाच्चमिह द्विर्वचनं । तच्च प्रत्यये इति । तेन तद्वाचकप्रत्ययपदाक्षेप इत्यर्थः । तद्भावभावितामात्रेण निमित्ततायाश्चाश्रयणात्सन्यङन्तस्य द्वित्वेऽपि तदाक्षेपः । स[6] चाऽचीत्यस्य श्रवणात्सप्तम्यन्तस्यैवेति भावः । अचीत्येतच्च तस्येति । विशेषणमित्याकृष्यते । तदादिविधिरित्यस्य 'तेने'त्यादिः । तदयमर्थः—द्वित्वनिमित्ताऽजादिप्रत्ययनिमित्तोऽजादेशः स्थानिवत्, द्वित्वे कर्त्तव्ये इति ।

[ प्रश्नभाष्यम् ]

कथं पुनरेकेन यत्नेनोभयं लभ्यम् ? ॥

(प्र०) कथं पुनरिति । विरुद्धत्वादनयोरर्थयोरेकेन द्विर्वचन इत्यनेन पदेनानुपादानादिति भावः ॥

(उ०) विरुद्धत्वादिति । एवं च[7] सहविवक्षाऽभावान्नैकशेषो वक्तुं शक्य इति भावः ।

[ समाधानभाष्यम् ]

लभ्यमित्याह । कथम् ? ॥

॥ * ॥ 'एकशेषनिर्देशात्' ॥ * ॥

एकशेषनिर्देशोऽयम्—द्विर्वचनं च

१ तत्रेति । अचीत्यर्थः । २ फलेति । 'किरी काकडी' 'फूट' इति प्रसिद्धः । ३ 'लक्षणायाः । ४ एवंचेति । अवधारणाऽभावेचेत्यर्थः । ५ विशेष्यत्वम्—तन्निरूपितं विशेष्यत्वम् । ६ चस=आक्षेपश्च । ७ एवञ्च—विरुद्धत्वे चा । ८ इदं भाष्यमित्यन्ये ।

**द्विर्वचनञ्च द्विर्वचनम् । द्विर्वचने चं कर्तव्ये द्विर्वचनेऽचिप्रत्यय इति । द्विर्वचननिमित्तेऽचि स्थानिवद्भवति ।**

(प्र०) **एकशेषनिर्देश इति** : सहविवक्षाऽभावेऽपि 'सरूपाणा'मित्येकशेषः संज्ञापरिभाषावल्लक्षणाङ्गत्वात्तस्येति प्रागेवोक्तम् । विभक्त्यन्तयोश्चैकशेषविधानादप्रातिपदिकत्वाच्च द्विर्वचनाऽभावः । अथवैकशेषेण समानफलत्वात्तन्त्रमावृत्तिर्वा लक्ष्यते ॥

(उ०) **प्रागेव**–सर्वादीनीत्यत्र । नन्वेकशेषे द्विवचनापत्तिरत आह–**विभक्त्यन्तयोरिति** । परिभाषावच्छास्त्रमात्रोपयोगित्वादिति भावः। प्रातिपदिकानामेवैकशेषेऽप्याह–**अथवेति।** 'नीलोत्पलस्पर्धिनी नेत्रे तनुर्वे'तिवदिति भावः। क्रमेण बोधादत्रावृत्तिर्बोद्धारं प्रति, उच्चारयितुस्तन्त्रम् । इह निमित्तशब्देन साक्षात्परम्परासाधारणं प्रयोजकम्, न तु साक्षादेवेत्याग्रहः । तद्भावभावितामात्रेण निमित्तत्वस्येहाऽङ्गीकारात् । अत एव[3] चक्रतुरित्युदाहरणसङ्गतिः ॥

[ पञ्चमपक्षदूषणवार्तिकम् ]

*॥ * ॥ द्विर्वचनानीमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्वचनम् ॥ * ॥*

**द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्भावो वक्तव्यः । अवनुनावयिषति अवचुक्षावयिषति ।**

[ समाधानभाष्यं वार्तिकञ्च ]

**न वक्तव्यः ।**

*॥ * ॥ ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य ॥ * ॥*

**['ओःपुंयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य' ] यदयम्–'ओः पुयण्ज्यपरे' इत्याह, तज्ज्ञापयत्याचार्यो–भवति णौ स्थानिवदिति ।**

(प्र०) **ओः पुयण्जिष्विति** । नहि णौ कृतस्य स्थानिवद्भावमन्तरेण पुयण्जिषु सर्वेष्ववर्णपरेषु उवर्णान्तोऽभ्यासः संभवति । 'पिपविषते' 'यियविषती'त्यत्रैवानेन स्थानिवद्भावात् । तत्र पु इति वर्गग्रहणाद्यणिति प्रत्याहारग्रहणाज्जग्रहणाच्च ज्ञापकाण्णौ कृतस्य स्थानिवद्भावोऽनुमीयते । ननु तत्र णाविति नास्ति तत्कथं तत्रैव स्थानिवत्त्वानुमानं न तु निनवनीयिषति दिदवनीयिषतीत्यादावपि । नैतदस्ति । 'येन नाव्यवधान'मित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणाण्णेरेव केवलस्य व्यवधायकस्य संभवात् ॥

(उ०) स्वोक्तसर्वेष्वित्यस्य, **पुयण्जिष्विति** भाष्ये निर्धारणसप्तमीनिर्देशस्य च कृत्यमाह–**पिपविषत इति । अनेन**–द्विर्वचनेऽचीत्यनेन । न चात्रोत्तरखण्डे जातयोरचोरचः परस्मिन्निति स्थानिवत्त्वेनाऽवर्णपरत्वाऽभावात्कथमोः पुयणित्यस्य प्राप्तिरिति वाच्यम् । एतत्सूत्रारम्भसामर्थ्येनैव तदप्रवृत्तेः । स्मिपूङिति सनीवन्तेति चोभयत्रेट् । नन्ववर्णपरपुयण्जयो णौ प्रत्ययान्तरे च संभवन्ति तत्कथं णावित्युक्तमित्याशङ्कते–**नन्विति । येन नेति ।** प्रकृतसूत्रे परस्मिन्निति वर्तते । तेन द्वित्वनिमित्तेऽजादौ प्रत्यये प्रत्ययान्तरेणाऽव्यवहिते परे सति योऽजादेशः स स्थानिवदिति सूत्रार्थः । तत्रानेन ज्ञापकेन व्यवाये प्रवृत्तिर्ज्ञाप्यते । तत्र प्रत्ययव्यवधानं विना वर्गादीनामुदाहरणाऽसंभवेन येन नाव्यवधानन्यायेनैकव्यवधाने एव प्रवृत्तिः । स च णिरेव संभवतीति भावः । न चोरुञ्जुअभ्रुशब्दादिभ्य आचारक्विपि सनि इटि द्वित्वे गुणाद्यभावे उरुरविषतीत्यादावित्वार्थं वर्गादिग्रहणं चरितार्थम् । किंच भ्वादिभ्यो विजन्तेभ्य आचारे क्विपि सनि विभविषतीत्यादौ चरितार्थमिति कथं ज्ञापकत्वमिति वाच्यम् । 'सनिग्रहे'त्यत्रोपदेशाधिकाराभावस्य 'एकाच उपदेश' इति सूत्रे भाष्ये ध्वनितत्वेनोक्तप्रयोगेषु तेन निषेधेनेटो दुर्लभत्वादेषामनभिधानाच्च । विचोऽसार्वत्रिकत्वाच्च । एतेन दवादिभ्य आचारक्विपि सनि दिदविषतीत्यादावेकव्यवधानस्यैव सत्त्वेन दोष इत्यपास्तम् । भाष्ये **णौ स्थानिवदिति** । अत्र णाविति प्रत्ययग्रहणे 'यस्माद्विहितस्तदादे'रित्यस्योपस्थित्या तस्याचो णिनिमित्तकादेश इत्यर्थः । यदि त्वनियमप्रसक्त्यभावेन नियमफलायास्तस्या नोपस्थितिः । अत एव 'ह्रस्वस्य पिती'त्यादौ न तदुपस्थितिरित्युच्यते तर्हि मास्तु । णौ पर इत्यर्थे रेफेण व्यवधानात्पुस्फारयिषतीत्याद्यसिद्धिरिति बोध्यम् । ज्ञापनफलं–तुतावयिषतीत्यादि ॥

[ आक्षेपभाष्यम् ]

**यद्येतज्ज्ञाप्यते–अचिकीर्तत्–अत्रापिप्राप्नोति।**

[ समाधानभाष्यम् ]

**तुल्यजातीयस्य ज्ञापकम् ।**

(उ०) **तुल्यजातीयस्येति** । प्वादिघटितधात्वच्-

१'नश्च'। २ 'क्वचिन्न'। ३ तथाङ्गीकारादेवेत्यर्थः। ४ लुप्तं । ५'वद्भवतीति। ६ **अत्र**–यियविषतीत्यादौ। ७**तत्र**–तथा सूत्रार्थे च । ७ **अनेन**–पुयण्जीतिज्ञापकेन । **तत्र**–व्यवाये प्रवृत्तिज्ञापने। ८ **स च**–प्रत्ययश्च। ९ **एतेन**–ईदृशानामनभिधानेन ।

तुल्यस्याऽच आदेश इत्यर्थः । षष्ठ्यन्तस्य षष्ठ्यन्ताऽच इत्यनेनैवान्वययोग्यत्वादिति बोध्यम् ॥

[ आक्षेपभाष्यम् ]

**कश्च पुल्यजातीयः ? ॥**

(उ०) अच्त्वेन तुल्यत्वं कृतेऽपीति पृच्छति-**कश्चेति ॥**

[ समाधानभाष्यम् ]

**यथाजातीयकाः पुयण्जयः ।**

(उ०) उत्तरयति-**यथाजातीयका इति ।** प्वादिघटितधात्वच इत्यर्थः । प्वादिभिरचस्तुल्यत्वाऽसंभवात् ॥

[ आक्षेपभाष्यम् ]

**कथं जातीयकाश्चैते ? ॥**

[ समाधानभाष्यम् ]

**अवर्णपराः ॥**

(उ०) **अवर्णपरा इति ।** अवर्णपरत्वसंपादकादेशस्थानिन इत्यर्थः । एवं चाऽवर्णपरत्वसंपादकादेशस्थानित्वेन तुल्यतेति भावः । एवं चौननत् औजढदित्यादि चिन्त्यमेव । किंच यत्र द्विरुक्तौ परभागस्थोऽजवर्णस्तत्रेदमिति 'द्विर्वचनेऽचो'त्यादौ भाष्यकैयटयोः स्थितमिति माधवोक्तं कथं भाष्यारूढमित्यपि चिन्त्यमेवेत्याहुः ॥

[ प्रश्नभाष्यम् ]

**कथं जग्ले मम्ले ? ॥**

[ समाधानभाष्यम् ]

**अनैमित्तिकमात्वम्, शिति तु प्रतिषेधः ।**

(उ०) **अनैमित्तिकमात्वमिति ।** अत एव 'ह्वामश्चे'ति ह्वः कबाधनार्थं पुनरज्विधानं चरितार्थमिति पर्युदासपक्षेऽप्यदोषमादेच इत्यत्र भाष्यकारो वक्ष्यति ॥

[ प्रयोजनप्रश्नभाष्यम् ]

**कानि पुनरस्य योगस्य प्रयोजनानि ?॥**

(प्र०) **कानिपुनरिति ।** अन्यथा सिद्धत्वात्प्रश्नः ।

[ समाधानभाष्यम् ]

**पपतुः पपुः । तस्थतुस्तस्थुः । जग्मतुर्जग्मुः । आटिटत् आशिशत् । चक्रतुश्चक्रुरिति । आल्लोपोपधालोपणिलोपयणादेशेषु कृत्वेष्वनच्कत्वाद्विर्वचनं न प्राप्नोति । स्थानिवद्भावाद्भवति ।**

१ इदं वेन्नोऽप्युपलक्षणम् ।

(उ०) **अनच्कत्वादिति ।** आटिटदित्यत्र णिलोपे धातोर्द्वितीयस्याऽज्रहितत्वादित्यर्थो बोध्यः ।

[ समाधानदूषणभाष्यम् ]

**नैतानि सन्ति प्रयोजनानि । पूर्वविप्रतिषेधेनाप्येतानि सिद्धानि ॥ कथम् ? ॥ वक्ष्यति ह्याचार्यः-द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः'इति ॥**

(प्र०) **पूर्वविप्रतिषेधेनापीति ।** अपूर्वो वाचनिकः पूर्वविप्रतिषेधः । न हि नित्यानामाल्लोपादीनामनित्येन द्विर्वचनेन च न्याय्यो विप्रतिषेधः । अथ निन्यतुरिति कथं, नह्यत्रेयङ् परिगणितः । एवं तर्हि 'प्रकल्प्य चापवादविषय'मिति न्यायाद्यणाऽत्र भवितव्यमितीयङ् न प्रवर्तत इति द्विर्वचने कृते 'एरनेकाच' इति यणा सिद्धम् ॥

(उ०) **पूर्वविप्रतिषेधेनाप्येतानीति ।** द्विर्वचनेऽचीति सूत्रसाध्यानि, णौ स्थानिवदिति ज्ञापकसाध्यानि चेत्यर्थः । **न हि नित्यानामिति ।** आल्लोपादीनामित्यर्थः । द्विर्वचनेऽचीत्यादेरभावे द्विर्वचनमनित्यम् । भाष्ये—**वक्ष्यति हीति ।** दाश्वान्साह्वानिति सूत्रे । **यणात्र भाव्यमिति ।** यदीयङ् स्यात् तर्हि स स्यादिति तत्सम्भावनासत्त्वादित्यर्थः । जग्लावित्याद्यर्थं वृद्धिपाठोऽप्यत्र बोध्यः । वस्तुतोऽत्र यणादिग्रहणं अच्स्थानिकस्य द्विर्वचनात्परस्य विधेरुपलक्षणं बोध्यम् ।

[ आरम्भवादिनः समाधानस्थापनभाष्यम् ]

**स पूर्वविप्रतिषेधो न पठितव्यो भवति ॥**

(उ०) सूत्रारम्भवादी आह-**सपूर्वविप्रतिषेधइति ।**

[ तृतीयस्य प्रश्नभाष्यम् ]

**किं पुनरत्र ज्यायः ? ॥**

(उ०) उभयोः समतया तृतीयः पृच्छति-**किं पुनरिति ।**

[ समाधानभाष्यम् ]

**स्थानिवद्भाव एव ज्यायान् । पूर्वविप्रतिषेधे हि सतीदं वक्तव्यं स्यात्-'ओदौदादेशस्य उद्भवति चटुतुशरादिरभ्यासस्ये'ति ।**

( प्र० ) **ओदौदादेशस्येति ।** ओदौतोरादेशो यस्मिन्नङ्गे तस्य योऽभ्यासश्चुटुतुशरादिस्तस्य योऽकारस्तस्योकारादेशो भवतीत्यर्थः । यथा चुक्षावयिषति

२ 'औदौदा' ।

ऊर्णुनावयिषति नुनावयिषति तुतावयिषति पुस्फारयिषति । अत्र चिस्फुरोर्णाविल्योकारस्यात्त्वम् । अत्र च यद्यपि खयः शेषे कृते अभ्यासस्य शरादित्वं नास्ति, तथाप्यभ्याससंज्ञाप्रवृत्तिसमयेऽस्ति । एतेष्वन्तरङ्गत्वात्प्रागेव द्विर्वचनाद्वृद्ध्यावादेशयोः प्रवर्तनादिवर्णान्ततायामभ्यासस्य प्राप्तायामुत्त्वं विधीयते ॥

(उ०) **स्थानिवद्भाव एव ज्यायानिति ।** अयं भावः-अयं[2] पूर्वविप्रतिषेधोऽन्तरङ्गाणां बाधको न वा । नाद्यः, बिभवनीयिषतीत्याद्यसिद्ध्यापत्तेः[3] । किंचेष्टाऽनिष्टविवेकस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वेन सर्वत्रैव पूर्वविप्रतिषेधवचनस्यावश्यकत्वेनेह नित्यान्तरङ्गबाधाय सुतरां वचनावश्यकत्वेन क सूत्रमतापेक्षया लाघवमिति । अन्ये दूषणमाह-**ओदौदादेशस्येति ।** अत्र समानाधिकरणबहुव्रीह्यङ्गीकारे चुक्षावयिषतीत्यादौ दोषः । स्थानिवत्त्वं त्वल्विधित्वान्नेत्यत आह-**ओदौतोरादेशो यस्मिन्निति ।** इदमेव[4] ज्ञापकमन्तरङ्गाणामिदमबाधकमिति न बिभवनीयिषतीत्यादौ दोषः । अत्र[5] सनीत्यंशोऽपि पूरणीयः । अन्यथा दिदवनीयिषतीत्यादौ अनेनोत्वापत्तिः । तत्र कृते तु निर्दिष्टपरिभाषयाऽनेकव्यवधानान्न तत्र दोषः । एकणिज्व्यवधानं तु 'येन नाव्यवधान' न्यायेन सह्यत एव । नन्विदं वचनं जोः सौत्राण्णिचि चङि सनि वाऽजीजवत्-जिजावयिषतीत्यादौ अतिव्याप्तम् । न च चकार एव पाठ्यः । गुङ्घुङ्भ्यां णिचि चङि सनि वाऽजूगवदित्यादौ दोषापत्तेरिति चेन्न, जोर्न इत्यस्यापि वाच्यत्वात् । ओदौतोः किम्'? । चिखादयिषति । चिच्छ्यादि किम् ? । बिभावयिषतीत्यादि । यद्यपि च्छोछेदने चिच्छासति इत्यत्रैवातिप्रसक्तम्, तथापि औत्साहचर्यादोकारोऽपि लाक्षणिक एव गृह्यते तदादेशो वा औदादेशसाहचर्यादवेव गृह्यत इति न दोषः। **ऊर्णुनावयिषतीति ।** यद्यपि 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्याऽनित्यतया नुशब्दस्यैव द्वित्वेनाऽभ्याससंज्ञाप्रवृत्तिकाले द्व्यादित्वाभावः, तथाऽपि द्वित्वे कृतेऽपि द्वित्वनिष्पन्नस्य कार्ये कर्तव्ये पूर्वत्रासिद्धीयस्याऽसिद्धत्वाभावबोधनात्तत्रानित्यत्वकल्पने मानाऽभावाच्च तत्प्रवृत्तिकाले द्व्यादित्वमस्त्येवेति बोध्यम्। **अभ्याससंज्ञाप्रवृत्तिसमये इति ।** एवं च[6]ाभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा यत्र कुडतुशरादित्वं तत्रास्य प्रवृत्तिरिति भावः । तत्राऽन्त्योदाहरणं चुक्षावयिषतीत्यादि । नहि तत्राद्यकाले तत्त्वं, 'क्षु' इति कवर्गादित्वादित्याहुः ।

[ उत्ववादिभाष्यम् ]

**ननु च त्वयाऽपीत्त्वं वक्तव्यम् ।**

(प्र०) **ननु च त्वयापीति ।** ओः पुयण्ज्ष्विति ज्ञापनार्थमवश्यं वाच्यमित्यर्थः । उत्त्ववादी तु ओः पुयण्जीति न पठति, सन्यत इतीत्त्वस्य सिद्धत्वात् ॥

(उ०) ननु णेर्द्वित्वनिमित्तात्त्वाऽभावेन स्थानिवत्त्वाऽभावाद्बिभावयिषतीत्यादि सिद्धमिति त्वयाऽपीत्ययुक्तमत आह—**ओःप्विति ।** चुक्षावयिषतीत्यादिसिध्यर्थमित्यर्थः ।

[ इत्ववादिनो लाघवभाष्यम् ]

**परार्थं मम भविष्यति सन्यत इद्भवती'ति ।**

(प्र०) **परार्थमिति ।** इत्त्वार्थम् । प्रसङ्गात्तु ज्ञापकम् । त्वया त्वपूर्वमुत्वं वक्तव्यमित्यर्थः ॥

(उ०) **परार्थ**मित्यत्र परशब्देन ज्ञापकापेक्षया परमित्वं विवक्षितमित्याह-**इत्वार्थमिति । द्विर्वचनेऽचीति** स्थानिवत्त्वात् पिपविषते यियविषतीत्याद्यर्थमित्यर्थः । **प्रसङ्गादिति ।** वर्गप्रत्याहारजग्रहादित्यर्थः । **सन्यत इद्भवतीति ।** 'विहितमित्वमिहानुवर्त्तमानं परार्थं भविष्यती'ति भाष्येऽन्वयः । तत्र 'सन्यत' इत्यभिधानं स्वरूपेणेत्वमपूर्वं न भवतीति प्रदर्शनार्थं, तद्ध्वनयन्नाह-**अपूर्वमुत्वमिति ।**

[ उत्ववादिभाष्यम् ]

**ममापि तत्वं पर्हुरार्थं भविष्यति 'उत्परस्यातस्ति चे'ति ।**

(प्र०) **ममापीति ।** उत्वमप्यन्यार्थं वक्तव्यम् । तदेवाधिकविषये उपजीव्यत इत्यर्थः । तत्रायं न्यासः 'उत्परस्यातः' 'ति च' 'ओदौदादेशस्य चुडतुशरादेः' इति । अभ्यासस्येति वर्तते ।

(उ०) अपूर्वत्वतदभावमात्रेण वैषम्यमस्याभिप्रेतमिति मन्वानस्तद्विघटयितुमाह परः-**ममापि तर्ह्युत्वमिति ।** तद्व्याचष्टे-उत्वमपीति ।

[ इत्ववादिभाष्यम् ]

**इत्त्वमपि त्वया वक्तव्यम् । यत्समानाश्रयं तदर्थम्— उत्पिपविपते संयियविषतीत्येवमर्थम् । तस्मात्स्थानिवदित्येष एव पक्षो ज्यायान् । इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादेऽष्टममाह्निकम् ।**

---

(प्र०) **इत्त्वमपीति ।** यत्रान्तरङ्गत्वं नास्ति

---

१ 'काले' । २ **अयं**-वाचनिकः । ३ अभ्यासे उकारश्रवणापत्तेरित्याशयः । ४ **इदमेव**—उत्वविधायकमेव । **इदं**-पूर्वविप्रतिषेधवचनम् । ५ **अत्र**-उत्त्वविधायकेशास्त्रे । तत्र तु-तथापूरणेकृतेतु । ६ **एवञ्च**-अत्र तथा सत्त्वे च । ७ **इह**-ओः पुणजितिसूत्रे ।

समानाश्रयत्वात्। पवतेर्यौतेश्च सनि 'स्मिपूङ्रञ्ज्वशां सनि' 'सनीवन्तर्धे'ति चेटि कृते परत्वाद्गुणः। पूर्वविप्रतिषेधादवादेशात् पूर्वं द्विर्वचनमितीत्त्वं वक्तव्यम्। तथा जिजावयिषतीत्यत्रोत्त्वबाधानार्थं वक्तव्यम्। त मा-दिति। नन्वसत्यस्मिन् सूत्रे ओः पुयण्जीति ज्ञापकमेवं समर्थयिष्यते—अन्तरङ्गो नित्यश्च विधिर्द्विर्वचनेन प्रतिषिध्यत इति तत्र द्विर्वचने कृते यथाप्राप्तं भविष्यति। तद्युक्तम्। यदि सामान्येन ज्ञापकमाश्रीयते—अचिकीर्तदित्यत्रापि पूर्वं द्विर्वचनप्रसङ्गादनिष्टरूपप्राप्तिः। अथ तुल्यजातीयापेक्षं ज्ञापकं व्याख्यायते, यथोक्तं भाष्यकारेण, तथा सति चक्रतुरित्यादि न सिध्यतीति सूत्रमेव कर्तव्यम्। यत्तु तेन न सिध्यति तदर्थं ज्ञापकमाश्रयणीयं तुल्यजातीयापेक्षमिति सर्वेष्टलक्ष्यसिद्धिः॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादेऽष्टममाह्निकम्॥ *

(उ०) नापूर्वत्वतदभावमात्रेण वैषम्यमभिप्रेतम्, किंतु गौरवतदभावाभ्यामिति दर्शयितुं भाष्ये—**इत्वमपीति**। तदुपपादयति—**यत्रेति**। 'गुणायादेशयो'रिति शेषः। **वक्तव्यमिति**। 'जोर्न्ने'ति वक्तव्यमित्यर्थः। **नन्वसतीति**। असत्यपीत्यर्थः। **यदीति**। लघुपरत्वाऽभावेन सन्वत्त्वाभावोऽचिकीर्तदित्यत्र दोषः, दिदवनीयिषतीत्यादावपि दोषो बोध्यः। **अथ तुल्येति**। अवर्णपरत्वं यत्राभ्यासोत्तरखण्डाद्यवर्णस्य अभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा, तत्र द्विर्वचनेनाऽन्तरङ्गनित्ये बाध्येते इत्यर्थः। **चक्रतुरिति**। दिदवनीयिपतीत्याद्यसिद्धिरित्यपि बोध्यम्। इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते प्रथमस्य प्रथमेऽष्टममाह्निकम्॥ ८॥

---

## अथ नवममाह्निकम्।

## अदर्शनं लोपः॥१।१।५९॥

*[॥*॥ लोप[1]संज्ञायामर्थसंज्ञाकरणम्॥*॥]*

**[ लोपसंज्ञायाम्[1] ] अर्थस्य[2] संज्ञा कर्तव्या, शब्दस्य मा[3] भूदिति।**

(प्र०) अदर्शनं लोपः। अर्थस्येति। 'स्वं रूप'मिति वचनाच्छब्दस्यैव संज्ञा प्राप्नोतीति भावः॥

(उ०) **अदर्शनं लोपः**। नन्वपत्यादिवदर्थपरोऽदर्शनशब्द इति सिद्धैवाऽर्थस्य संज्ञेत्यत आह—**स्वं रूपमिति**॥

*[॥*॥ इ[4]तरेतराश्रयं च॥*॥]*

**इतरेतराश्रयं च भवति॥ का इतरेतराश्रयता?॥ सतोऽदर्शनस्य संज्ञया भवितव्यम्, संज्ञया चाऽदर्शनं भाव्यते, तदेत[5]दितरेतराश्रयं भवति। इतरेतराश्रयाणि च का[7]र्याणि न प्रक[6]ल्पन्ते॥**

(प्र०) इतरेतराश्रयमिति। विधिप्रदेशेष्वेतच्चोद्यम्, नाऽनुवादे—चादिलोपे विभाषेत्यादौ॥

(उ०) **नानुवादे इति**। तत्र हि न संज्ञाकृतोऽभाव इत्यर्थः॥

[ समाधानभाष्यम् ]

*॥ * ॥ लोपसंज्ञायामर्थसतोरुक्तम्॥ * ॥*

**[लोपसञ्ज्ञायामर्थसतोरुक्तम्]॥ किमुक्तम्?॥ अर्थस्य तावदुक्तम्। 'इतिकरणोऽर्थनिर्देशार्थः' इति। सतोऽप्युक्तं 'सिद्धं तु नित्यशब्दत्वात्' इति। नित्याः शब्दाः। नित्येषु च शब्देषु सतोऽदर्शनस्य संज्ञा क्रियते, न संज्ञयाऽदर्शनं भा[8]व्यते॥**

(प्र०) इतिकरण इति। इहापि स एवानुवर्तते। लोप इत्यन्वर्थसंज्ञाविज्ञानाद्वाऽर्थस्य संज्ञा, न शब्दस्य॥

(उ०) भाष्ये—**उक्तमिति**। **नवेति** विभाषेत्यत्रेत्यर्थः। असंबद्धपदव्यवायान्नानुवृत्तिरत आह—**लोप इतीति**। तदर्थान्वययोग्यताया अर्थे एव सत्त्वाददर्शनशब्दस्य तादृशान्वर्थसंज्ञाकरणे फलाऽभाव इति भावः। प्रसक्ताऽदर्शनस्येत्यर्थलाभार्थं स्थानेपदस्येवास्याप्यनुवृत्तिः सुलभा। **लुप्लृच्छेदन** इति धात्वर्थानुसारेणान्वर्थत्वाऽसंभवादिति तु भाष्यतात्पर्यम्। **अभावो लोप** इत्यवसानसंज्ञासूत्रभाष्योक्तेरदर्शनशब्देन तत्समनियतो वर्णाऽभाव एवात्रेति बोध्यम्। **स्वंरूप**मित्यस्य प्रत्याख्याने तदनुवृत्तिं विनापि सिद्धिरिति बोध्यम्।

[ आक्षेपवार्तिकम् ]

*॥ * ॥ सर्वप्रसङ्गस्तु सर्वस्यान्यत्राऽदृष्टत्वात्॥ * ॥*

---

१ क्वचिन्न। २ अर्थस्य—स्वरूपातिरिक्तार्थस्य। ३ दाधाध्वदाविति यथा शब्दस्य सञ्ज्ञातथेयमपि मा भूदित्यर्थः।

४ इदं वार्त्तिकं लुप्तं स्यात्। ५ 'तदितरेतरा'। ६ 'प्रकल्प्यन्ते'। ७ लुप्तं स्यात्। ८ 'विभाव्यते'।

**सर्वप्रसङ्गस्तु भवति । सर्वस्यादर्शनस्य लोपसंज्ञा प्राप्नोति ॥ किं कारणम् ?। 'सर्वस्यान्यत्राद्दष्टत्वात्' ॥ सर्वो हि शब्दो यो यस्य प्रयोगविषयः, स ततोऽन्यत्र न दृश्यते। त्रपु जतु इत्यत्राणोऽदर्शनम्। 'तत्राऽदर्शनं लोप'इति लोपसंज्ञा प्राप्नोति ॥**

(उ०) नित्यशब्दाश्रयणे इतरेतराश्रयपरिहारेऽप्ययं दोषे[1] इत्याह-यदीति ।

**तत्र को दोषः ? ॥**

(प्र०) सर्वप्रसङ्गस्त्विति । यदि स्वभावतोऽप्रयुक्तस्याऽन्वाख्यानमात्रं क्रियते, तदा सर्वस्य स्वविषयादन्यत्राऽप्रयोगादस्त्यदर्शनमिति लोपसंज्ञाप्रसङ्गः ॥

[ आक्षेपवार्तिकम् ]

*॥ * ॥ तत्र प्रत्ययलक्षणप्रतिषेधः ॥ * ॥*

**तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति । तस्य प्रतिषेधो वक्तव्यः । 'अचो ञ्णिती'ति वृद्धिः प्राप्नोति ॥**

[ तन्निराकरणभाष्यम् ]

**नैष दोषः । ञ्णित्यङ्गस्याचो वृद्धिरुच्यते । यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गं भवति । यस्माच्चात्र प्रत्ययविधिर्न तत्प्रत्यये परतो, यच्च प्रत्यये परतो न तस्मात्प्रत्ययविधिः ॥**

(प्र०) ञणित्यङ्गस्येति । अङ्गसंज्ञा च विधानप्रतिवद्धा । न चात्र प्रत्ययस्य णितो विधानम् । यस्माच्चेति । त्रपुशब्दात्सोर्विधानम् । न प्रत्यय इति । ञ्णिति वृद्धिनिमित्त इत्यर्थः । यच्चेति । सुशब्दे । न तस्मादिति । तस्मात्रपुशब्दात्सोरन्यस्याऽणो विधानं नास्तीत्यर्थः ॥

(उ०) अत्र प्रत्ययो नाऽणित्याह-**सोरिति । ञ्णिति वृद्धिनिमित्ते इति ।** अङ्गसंज्ञासूत्रे प्रत्यासत्त्या प्रत्ययपदार्थयोरैक्याश्रयणाद्वृद्धिविधौ ञ्णित्प्रत्ययनिरूपिताऽङ्गग्रहणाच्चेति भावः ॥

[ आक्षेपस्थापनभाष्यम् ]

**क्विपस्तर्ह्यदर्शनम् । तत्र 'अदर्शनं लोपः' इति लोपसंज्ञा प्राप्नोति ॥ तत्र को दोषः ?॥ 'तत्र प्रत्ययलक्षणप्रतिषेध'। तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः। 'ह्रस्वस्य पिति कृति तुग्भवती'ति[5] तुक् प्राप्नोति ॥**

(प्र०) अनाङ्गं कार्यं चोदयति-क्विप इति । त्रपु इत्यत्र क्विपोऽदर्शनमस्ति स च कृदिति तुक्प्रसङ्गः ।

[ समाधानवार्तिकम् ]

*॥ * ॥ सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञित्वात्[6] ॥ * ॥*

**सिद्धमेतत् ॥ कथम् ?॥ [ 'प्रसक्ता[7]ऽदर्शनस्यलोपसंज्ञित्वात्'] प्रसक्तादर्शनं लोपसंज्ञं भवतीति वक्तव्यम् ॥**

(प्र०) सिद्धं त्विति । शास्त्रादर्थाद्वा प्रसक्तस्य यददर्शनं तल्लोपसंज्ञं भवति । स्थानेग्रहणमिहाप्यनुवर्तते । स्थानं च प्रसङ्गः । तेन प्रसङ्गे यददर्शनमिति लभ्यते ॥

(उ०) **चादिलोप** इति सङ्ग्रहायाह-**अर्थाद्वेति । एकवचनमुत्सर्ग** इत्यादिशास्त्रमर्थनिरपेक्षं विभक्तिप्रसञ्जकम् । अर्थोऽप्येकत्वादिर्विवक्षित एकवचनादिप्रसञ्जक इति बोध्यम् । ननु कथं प्रसक्तस्येति लभ्यतेऽत आह-**स्थाने इति ।** न च पित्कृता प्रकृत्याक्षेपेणापि तुग्वारयितुं शक्यः । आक्षेपे: आक्षिप्तस्य शाब्देऽन्वये च मानाभावात् । अत्र चेदमेव भाष्यं मानम् । किंचानुपपद्यमानेन स्वोपपादकमाक्षिप्यते, यथा पीनत्वेन रात्रिभोजनम् । न चैवं प्रकृते । न ह्येतत्सूत्रे आक्षेपं विना पित्कृत्प्रत्ययानुपपत्तिरस्ति । नापि तदाक्षेपेण तदुपपत्तिः, नापि प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरित्युपस्थितिः, अनियमप्रसक्त्यभावेन नियमफलायास्तस्या अनुपस्थितेरित्यावेदितम् । किंचात्रैव प्रकृतिं विना प्रत्ययज्ञानसत्त्वे व्यभिचारात्तदाक्षेपाऽसंभव इति दिक् । यत्तु ग्रामाधिकरणिका स्थितिरित्यर्थके ग्रामे तिष्ठतीति वाक्ये 'ल्यब्लोप' इति पञ्चम्यापत्तिवारणाय 'प्रसक्तस्ये'त्यावश्यकमिति । तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेनाऽत्राऽप्राप्तेः । तत्त्वेत्विष्टापत्तिः पञ्चम्या इत्यलम् ॥

[ आक्षेपभाष्यम् ]

**यदि 'प्रसक्तादर्शनं लोपसंज्ञं भवती'-**

---

१ अयं-वार्तिककृदुक्तो दोषः ।
२ क्वचिन्न । ३ 'सञ्ज्ञत्वात्' । ४ लुप्तं स्यात् । ५ ह्रस्वस्यपिति कृतीति सूत्रे इत्यर्थः । ६ अत्रैव-ह्रस्व पितीति सूत्र एव । ७ प्रसक्तेति । प्रसक्ताऽदर्शनमात्रमित्यर्थः ।

त्युच्यते-ग्रामणीः सेनानीः-अत्र वृद्धिः प्राप्नोति ॥

(प्र०) ग्रामणीरिति । अर्थोपपदधातुसंनिधानादर्थाच्छास्त्राच्चाऽणः प्रसङ्गोऽस्तीति भावः ॥

(उ०) अर्थादिति । कर्तृलक्षणादित्यर्थः । शास्त्रात्-कर्मण्यणित्यतः । अणः प्रसङ्ग इति । 'यस्मात्प्रत्ययविधि'-रित्यत्र विधिः प्रसङ्ग एव निर्दिष्ट इत्यङ्गत्वमस्तीत्यभिमानः ॥

[ समाधानभाष्यम् ]

प्रसक्ताऽदर्शनं लोपसंज्ञं भवति षष्ठीनिर्दिष्टस्य ॥

(प्र०) षष्ठीनिर्दिष्टस्येति । षष्ठीग्रहणमप्यनुवर्तते ॥

(उ०) षष्ठीग्रहणमिति । तच्च षष्ठ्यन्तं वैयधिकरण्येनाऽदर्शनान्वयीति बोध्यम् ॥

[ षष्ठीनिर्दिष्टपक्षे दोषदर्शिभाष्यम् ]

यदि षष्ठीनिर्दिष्टस्येत्युच्यते 'चाहलोप एवेत्यवधारणं'चादिलोपे विभाषा'-इत्यत्र लोपसंज्ञा न प्राप्नोति ॥

(प्र०) चादिलोप इति । ततश्च 'शुक्ला व्रीहयो भवन्ति श्वेता गा आज्याय दुहन्ती'ति निघातविकल्पो न स्यात् ॥

[ षष्ठीनिर्दिष्टवादिनः शङ्काभाष्यम् ]

अथ 'प्रसक्ताऽदर्शनं लोपसंज्ञं भवती'-त्युच्यमाने कथमेवेतत्सिद्ध्यति ? ॥

(प्र०) अथेति । अत्राऽपि चादीनां शास्त्राऽस्ति प्रसङ्गः ॥

(उ०) अत्रापीति । शास्त्रतः प्रसक्तिरेवाभिमतेति चोद्यमिति भावः ॥

[ प्रसक्तादर्शनवादिनः समाधानभाष्यम ]

को हि शब्दस्य प्रसङ्गः ? । यत्र गम्यते चार्थो, न च प्रयुज्यते ॥

(उ०) अर्थतोऽपि प्रसक्तिर्गृह्यत इत्युत्तरम् ॥

[ उपसंहारभाष्यम् ]

अस्तु तर्हि प्रसक्तादर्शनं लोपसंज्ञं भवतीत्येव ॥

[ दोषस्मारणभाष्यम् ]

कथं-ग्रामणीः सेनानीः ? ॥

[ समाधानभाष्यम् ]

योऽत्राऽणः प्रसङ्गः क्विपाऽसौ बाध्यते॥

(प्र०) क्विपाऽसौ बाध्यत इति । सत्सूद्विषेति क्विपो विधानादणोऽत्र प्रसङ्गाऽभावः ॥

( उ० ) अणोऽत्रेति । 'परिहृत्य चापवादविषय'-मिति न्यायेन प्रसङ्ग एव नास्तीति भावः ॥

## प्रत्ययस्य लुक्श्लुलुपः ॥१।१।६०॥

[ प्रश्नभाष्यम् ]

प्रत्ययग्रहणं किमर्थम् ? ॥

(प्र०) प्रत्ययस्य । प्रत्ययग्रहणमिति । लुगादिविधौ क्वचित्प्रत्ययः साक्षान्निर्दिश्यते, क्वचिदनुवर्तते, क्वचित्सामर्थ्यात्प्रतीयत इति प्रश्नः ॥

(उ०) प्रत्ययस्य । ननु लुगादिविधौ प्रत्ययाऽदर्शनविधिर्यथा स्यादित्यर्थं प्रत्ययस्येतीत्यत आह-लुगादीति । साक्षादिति । 'लुगणिञो'रित्यादौ । क्वचिदिति । यथा 'लुग्वादुहे'त्यादौ क्सस्येति । क्वचिदिति । वक्ष्यमाणसूत्रेषु वक्ष्यमाणयुक्तिभिरित्यर्थः ॥

[ समाधानवार्तिकम् ]

*॥*॥ लुमति प्रत्ययग्रहणमप्रत्ययस्संज्ञाप्रतिषेधार्थम् ॥*॥*

लुमति प्रत्ययग्रहणं क्रियते । अप्रत्ययस्यैताः संज्ञा मा भूवन्निति ।

(प्र०) अप्रत्ययस्येति । अविद्यमानः प्रत्ययो-यस्मिन्नदर्शने इति तदप्रत्ययम् ॥

( उ० ) नन्वदर्शनस्येमाः संज्ञा इति अप्रत्ययस्यैताः इत्यनुपपन्नमत आह-अविद्यमान इति । 'प्रतियोगिविशेषणत्वेने'ति शेषः । वस्तुतोऽवसानसंज्ञासूत्रे वक्ष्यमाणरीत्या प्रत्ययाऽभावस्यैवेमाः संज्ञा इति भाष्याभिप्रायः॥

कि प्रयोजनम् ? ॥

[ प्रयोजनवार्तिकम् ]

*॥*॥ प्रयोजनं ताद्धितलुकि कंसीयपरशव्ययोर्लुकि च गोप्रक्रातिनिवृत्त्यर्थम् ॥*॥*

---

१ क्वचिन्न ।

१ 'भवतीति' । २ 'भवतीत्युच्यमाने कथमेवैतत्सिध्यति । कोहि शब्दस्य प्रसङ्गो यत्र गम्यते चाऽर्थो नतु प्रयुज्यते । अस्तुतर्हि प्रसक्तादर्शनं लोपसञ्ज्ञं भवतीति षष्ठीनिर्दिष्टस्य ॥ यदि षष्ठीनिर्दिष्टस्येत्युच्यते'पा०। ३ 'प्रत्यये सञ्ज्ञानिषेधा' ।

[ प्रयोजनं तद्धितलुकि कंसीयपरशव्ययोर्लुकि च गोप्रकृतिनिवृत्त्यर्थम् ]।

तद्धितलुकि गोनिवृत्त्यर्थम्। कंसीयपरशव्ययोश्च लुकि प्रकृतिनिवृत्त्यर्थम्। 'लुक्तद्धितलुकी'ति गोरपि लुक् प्राप्नोति। प्रत्ययग्रहणान्न भवति ॥ 'कंसीयपरशव्ययोर्यञञौ लुक् चे'ति प्रकृतेरपि लुक् प्राप्नोति। प्रत्ययग्रहणान्न भवति ॥

(प्र०) गोरपीति। पञ्चेन्द्र इत्यादौ तु 'निर्दिश्यमानस्यादेशा भवन्ती'ति वचनात् स्त्रीप्रत्ययस्यैव लुग्भविष्यति, न तदन्तस्य। 'गोरतद्धितलुकी'त्यत्र गोर्लुकि कृते पञ्चगुरित्यादौ गोशब्दान्तत्वाऽभावात्समासान्ताऽप्राप्तावतद्धितलुकीति प्रतिषेधोऽनर्थकः स्यादिति चेत्, कृते समासान्ते लुक्स्यादित्यर्थवानेव प्रतिषेधः। ननु स्वभावतोऽप्रवृत्तस्याऽदर्शनं लुक्संज्ञम्। न च तत्र गोशब्दस्य स्वभावतोऽप्रवृत्तिः। नैष दोषः। शास्त्रानुसारिभिरस्यार्थस्य दुर्ज्ञानत्वात्। प्रकृतेरपीति। समुदायस्य षष्ठीनिर्देशात् ॥

(उ०) भाष्ये—गोरपीति। 'गोस्त्रियो'रिति समुदायानुवृत्तेरिति भावः। ननु 'गोस्त्रियो'रित्यत्र स्त्रीति स्वरितगुणयुक्तमिति 'स्त्रिया'मित्यधिकारविहितप्रत्ययग्रहणेन तदन्तग्रहणात् प्रत्ययान्तस्य लुक् स्यादिति तद्धितलुकि तन्निवृत्त्यर्थत्वमपि कुतो नोक्तमत आह—पञ्चेन्द्र इति। गोनिवृत्तिः प्रत्ययग्रहणं विनापि सिध्यतीति शङ्कते—गोरिति। 'पञ्चगु'रित्यत्र क्रीतार्थठकोऽध्यर्धेति लुक्। कृते इति। परत्वादिति भावः। 'अन्तरङ्गानपी'ति न्यायस्तु अन्तरङ्गनिमित्तविनाशकप्रत्ययलुग्विषय इति तात्पर्यम्। न च समासान्ते तेन व्यवधानात्कथं लुक्, गोरित्यनुवृत्तिसामर्थ्येन लुक्प्राप्तेरिति बोध्यम्। नित्यशब्दान्वाख्यानाभिप्रायेण शङ्कते—नन्विति। समुदायस्येति। 'यस्येति चे'त्यकारलोपे सिद्धे लुग्विधानसामर्थ्येन सर्वादेशः स्यादित्यर्थः ॥

[ प्रयोजननिरासभाष्यम् ]

गोनिवृत्त्यर्थेन तावन्नार्थः।

॥*॥ *योगविभागात्सिद्धम्* ॥*॥

[ योगविभागात्सिद्धम् ]। योगविभागः करिष्यते—'गोरुपसर्जनस्य'। गोऽन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति ॥ ततः 'स्त्रियाः'। स्त्रीप्रत्ययान्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति ॥ ततो 'लुक्तद्धितलुकि' इति। स्त्रिया इति वर्तते। गोरिति निवृत्तम् ॥

(प्र०) योगविभागादिति। एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिरित्येतत्प्रकारान्तरेण प्रतिपाद्यते ॥

(उ०) ननु योगविभागे सूत्रभेदः कृतः स्यादत आह—एकयोगेति। प्रकारान्तरम्—योगविभागरूपम् ॥

॥*॥ *कंसीयपरशव्ययोर्विशिष्टनिर्देशात् सिद्धम्* ॥*॥

कंसीयपरशव्ययोरपि विशिष्टनिर्देशः कर्तव्यः। कंसीयपरशव्ययोर्यञञौ भवतश्छयतोश्च लुग्भवतीति ॥

(प्र०) विशिष्टनिर्देशादिति। छयतावेवात्र निर्देष्टव्याविति अर्थः ॥

(उ०) छयताविति। कंसात्-प्राक्क्रीताच्छः। परशोरुगवादिभ्यो यत् ॥

सचावश्यं विशिष्टनिर्देशः कर्तव्यः। क्रियमाणेऽपि वै प्रत्ययग्रहणे उकारसकारशब्दयोर्मा भूदिति। 'कमेः सः' कंसः। परान् शृणातीति परशुरिति ॥

(उ०) कंसे 'कमेः सः'। परशौ-'आङ्परयोः खनिशृभ्यां डिच्चे'त्युप्रत्ययः ॥

[ बाधकभाष्यम् ]

नैष दोषः। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥

(प्र०) उणादय इति। 'अतः कृकमिकंसकुम्भे'ति कंसशब्दस्य भेदेनोपादानात्क्वचिदुणादयो व्युत्पत्तिकार्यं न लभन्त इत्यर्थः। यञञोस्तु विधानसामर्थ्याल्लुगभावः ॥

(उ०) अतः कृ इति। 'धातौ सप्तमीनिर्दिष्टे तदादिग्रहणात्कमिग्रहणेनैव सिद्धे' इति शेषः। कंसेस्तु कंस इति न रूपम्। अनभिधानादिति भावः। अत एव 'कमेः सः कंसः' इति भाष्ये उक्तम्। नन्वेवमपि विशिष्टनिर्देशाऽभावे यञञोरपि लुक् स्यादत आह— यञञोरिति। विकारावयवार्थप्रतीतये औत्सर्गिकाऽण एव लुकं विदध्यात्। न च यञञ्लुकां सामर्थ्याद्विकल्पोऽस्तु। वेत्यनु-

१ लुसंस्यात्। २ कचिन्न।

३ 'सकारयो'। ४ एवमपि। उकारसकारयोर्वारणेऽपि।

क्तिस्तु यञञ्यां मुक्ते औत्सर्गिकाऽणः श्रवणाऽभावायेति वाच्यम्। यञञ्लुकामेककालप्रतीतानामुद्देश्यविधेयभावाऽसंभवात्। ण्युट्युलौ तुट् चेत्यादौ तु 'अनद्यतन' इत्यादिनिर्देशाद्वाक्यभेदाङ्गीकारः। किं च 'कंसीयपरशव्ययो'रिति षष्ठीनिर्देशादपि न यञञोर्लुक्। अन्यथा पञ्चम्यैव निर्दिशेदिति भावः॥

[ उपसंहारभाष्यम् ]

**स एषोऽनन्यार्थो विशिष्टनिर्देशः कर्तव्यः, प्रत्ययग्रहणं वा कर्तव्यम्॥**

(प्र०) स एषोऽनन्यार्थ इति। प्रकृतिनिवृत्त्यर्थ एव न तु प्रत्ययान्तरनिवृत्त्यर्थोऽपीत्यर्थः॥

(उ०) प्रकृतीति। प्रकृतिव्यतिरिक्तप्रत्ययान्तरवाची अन्यशब्दः। तेन नञः समासे प्रकृतिरुच्यत इत्याशयः।

[ प्रत्याख्यानवार्तिकम् ]

||*|| *उक्तं वा* ||*||

**[ उक्तं वा ]॥**

**किमुक्तम्?॥ ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थं यच्छयोश्च लुगर्थ'मिति।**

(उ०) भाष्ये—ङ्याबिति। प्रातिपदिकात्परस्य लुगित्यर्थे यञञोर्विधानसामर्थ्याल्लुगभावे उसयोः प्रातिपदिकात्परत्वाऽभावेन परिशेषात् कंसीयाद्यवयवप्रातिपदिकात्परयोः छयतोरेव लुगित्यर्थः॥

[ प्रयोजनवार्तिकम् ]

||*|| *षष्ठीनिर्देशार्थं तु* ||*||

**षष्ठीनिर्देशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम्। षष्ठीनिर्देशो यथा प्रकल्पेत॥**

[ प्रयोजनवार्तिकम् ]

||*|| *अनिर्देशे हि षष्ठ्यर्थाऽप्रसिद्धिः* ||*||

**अक्रियमाणे हि प्रत्ययग्रहणे षष्ठ्यर्थस्याऽप्रसिद्धिः स्यात्॥**

**कस्य?॥ स्थानेयोगत्वस्य॥**

(प्र०) षष्ठीनिर्देशार्थं त्विति। विशिष्टस्य षष्ठ्यर्थस्य स्थानेयोगत्वस्य निर्देशार्थमित्यर्थः। असति प्रत्ययस्येत्येतस्मिन्यः कश्चिदानन्तर्यादिः संबन्धः स्यात्। ततश्च 'जनपदे लु'बिति 'पञ्चालाः शोभना' इत्यादौ जनपदवाचिनोऽनन्तरस्य शोभनादेरपि लुप् स्यात्॥

(उ०) विशिष्टेति। जनपदार्थकप्रत्ययसम्बन्धिन इत्यर्थः। 'शोभनाः पञ्चाला इत्यादौ' इति पाठ उचितः। अनन्तरस्येति। अव्यवहितस्येत्यर्थः। जनपदार्थवाचके शब्दे सति तदनन्तरस्य लुबित्यर्थ इति भावः।

[ प्रत्याख्यानसाधकप्रश्नभाष्यम् ]

**क्व पुनरिह षष्ठीनिर्देशार्थेनार्थः प्रत्ययग्रहणेन। यावता सर्वत्रैव षष्ठ्युच्चार्यते—अणिञोः, तद्राजस्य, यञञोः, शप इति?॥**

[ समाधानभाष्यम् ]

**इह न काचित् षष्ठी—'जनपदे लु'बिति।**

[ बाधकभाष्यम् ]

**अत्रापि प्रकृतं प्रत्ययग्रहणमनुवर्तते॥ क्व प्रकृतम्?॥ 'प्रत्ययः परश्चे'ति॥**

(उ०) भाष्ये—प्रकृतमिति। अत एव लवणाल्लुगित्यत्र प्रकृतठक एव लुगिति बोध्यम्॥

[ समाधानसाधकभाष्यम् ]

**तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः॥**

[ समाधानबाधकभाष्यम् ]

**'ङ्याप्प्रातिपदिका'दित्येषा पञ्चमी प्रत्यय इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्ये'ति॥**

[ समाधानस्थापकभाष्यम् ]

**प्रत्ययविधिरयं, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति॥**

[ समाधानबाधकभाष्यम् ]

**नायं प्रत्ययविधिः। विहितः प्रत्ययः प्रकृतश्चानुवर्तते॥**

[ प्रयोजनवार्तिकम् ]

||*|| *सर्वादेशार्थं वा, वचनप्रामाण्यात्* ||*||

**सर्वादेशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम्। लुक्श्लुलुपः सर्वादेशा यथा स्युः॥ अथ क्रियमाणेऽपि प्रत्ययग्रहणे कथमिव लुक्श्लुलुपः सर्वादेशा लभ्याः?॥ 'वचनप्रामाण्यात्'॥ प्रत्ययग्रहणसामर्थ्यात्॥**

(प्र०) सर्वादेशार्थं वेति। षष्ठीनिर्देशार्थत्वं तु स्थितमेवेति वार्तिककारेण विकल्पार्थो वाशब्दः प्रयुक्तः॥

---

१ कश्चित्। २ अव्युत्पन्नत्वेन तदभावादित्याशयः। ३ लुप्तं स्यात्।

४ उसयोः—उकारसकारयोः। ५ अतएव–प्रकृतत्वस्यानुवृत्तिसाधकत्वादेव।

'आगस्त्यकौण्डिन्ययो'रित्यत्र हि यदि लुगनुवर्तते, तदैकैकस्य त्रय आदेशाः स्युः। अथ नानुवर्त्तते, द्वावेवादेशौ विधीयेते। तदागस्त्यादेशेन सर्वत्र भाव्यमिति आगस्तीयाश्छात्रा इति न सिध्यति, अवृद्धत्वात्प्रकृतेः। प्रत्ययस्येति तूच्यमाने 'गोत्रेऽलुगची'ति लुकि प्रतिषिद्धे संनियोगशिष्टत्वाल्लुग्भागावादगस्त्यादेशाभावादागस्तीया इति सिध्यतीति षष्ठीनिर्देशार्थंप्रत्ययग्रहणम्। भाष्यकारस्तु तदर्थे वाशब्दं व्याचक्षाणः षष्ठीनिर्देशार्थत्वं नेच्छति। स ह्येवं मन्यते-आगस्त्यकौण्डिन्ययो'रित्यत्र 'यस्का दिभ्यो गोत्रे'इत्यतो गोत्रग्रहणमनुवर्तते, लुगिति च। तेनागस्त्यकौण्डिन्ययोर्यो गोत्रे विहितस्तस्य लुक्। परिशिष्टस्य तु प्रकृतिभागस्य यथासंख्यमगस्तिकुण्डिनचावादेशाविति सूत्रार्थः। **अथ क्रियमाणेऽपीति।** 'अलोऽन्त्यस्ये'ति वचनात् प्रत्ययस्य योऽन्त्यस्तस्यैव प्राप्नुवन्तीति भावः। **वचनप्रामाण्यादिति।** प्रत्ययस्येति वचनसामर्थ्यादलोऽन्त्यस्येति बाध्यते। 'वचनप्रामाण्या'दिति ब्रुवतो वार्तिककारस्यापि षष्ठीनिर्देशार्थत्वमनभिप्रेतमेव, षष्ठीनिर्देशार्थत्वे हि प्रत्ययस्येत्यस्य चरितार्थत्वात्कथमलोऽन्त्यविधिर्बाध्येते[ति]॥

(उ०) वार्त्तिककृदभिमतषष्ठीनिर्देशार्थत्वमुपपादयति- **आगस्त्येति। त्रय इति।** ए[3]वं च वैषम्याद्यथासङ्ख्याप्राप्तेरगस्तयोऽपि कुण्डिनाः, कुण्डिनाश्चागस्तयः स्युः, लुक्च ज्ञापकात्सर्वादेश इति विभक्तिमात्रं श्रूयेतेति भावः। **द्वावेवेति।** तेन नोक्तापत्तिरिति भावः। **सर्वत्रेति।** अजादिप्राग्दीव्यतीयविषयेऽपीति भावः। **अवृद्धत्वादिति।** यद्यपि स्थानिवद्भावेन वृद्धत्वाच्छः सिध्यति, तथाप्यवृद्धत्वात्प्रकृतेश्छस्य वृद्धयनिमित्तत्वाच्च आकारश्रवणं न स्यादिति भावः। सन्नियोगशिष्टत्वादगस्त्यादेशाऽभावे प्रतिषेधप्रयुक्तलुगभावो हेतुः। **गोत्रेविहित इति।** नन्वागस्त्यस्य गोत्रप्रत्ययान्तस्यैव ग्रहणम्, नत्वनन्तरापत्यप्रत्ययान्तस्येत्येतदर्थं तदनुवृत्तिः स्यात्। शिवादिभ्य इत्यत्रैव गोत्र इति निवृत्तेः, ऋष्यणसाधारणः अगस्त्यप्रकृतिकऋष्यणन्त एवाऽत्राऽगस्त्यः, नत्वगस्तिप्रकृतिकगर्गादियञन्तः 'यञञोश्चे'ति लुका सिद्धत्वादिति चेन्न। कौण्डिन्यसाहचर्येणागस्त्यस्यापि गोत्रप्रत्ययान्तस्यैव ग्र[3]हणात्। भाष्यमते गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारेण ऋष्यणन्तस्यापि तत्त्वाच्च। वस्तुतो वार्त्तिककारस्यापीत्थमेव संमतमित्याह-**प्रत्ययस्येतिवचनेति।**

[ प्रयोजननिरासभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति-'लुक्श्लुलुपःसर्वादेशा भवन्ती'ति यदयं-'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये'इति लोपे प्रकृ[5]ते लुकं शास्ति॥**

(प्र०) **यदयमिति।** विपर्ययस्तु न कल्प्यते, अनुपसञ्जातविरोधित्वात्। लोपस्तावदन्त्यादेशः स्थितस्ततो लुगारभ्यमाणो यद्यन्त्यस्य स्याल्लोपानुवृत्त्यैव सिद्धत्वाल्लुकं न विदध्यात्। विहितस्तु सर्वादेशत्वस्य ज्ञापकः संपद्यते॥

(उ०) सामर्थ्याल्लोपस्यैव सर्वादेशत्वं कुतो न कल्प्यत इत्यत आह-**विपर्यय इति।** न उपसंजातो विरोधो वैयर्थ्यशङ्कोद्भवो यस्य तत्त्वादित्यर्थः।

[ प्रयोजनवार्तिकम् ]

**॥ * ॥ उत्तरार्थं तु ॥ * ॥**

**उत्तरार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम्॥**

[ खण्डनभाष्यम् ]

**[ न कर्त्तव्यं ] क्रियते तत्रैव-'प्रत्ययलोपे प्रत्ययलक्षण'मिति॥ द्वितीयं कर्तव्यम्। कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यादेकदेशलोपे मा भूदिति। 'आघ्नीत' 'संरायस्पोषेण ग्मीय' इति॥ [प्रत्ययस्य]।**

(प्र०) **द्वितीयमिति।** लोपविशेषणापेक्षया द्वितीयं, पाठापेक्षया तु तृतीयं भवति। **एकदेशलोप इति।** अवयवक्रिया समुदायेऽपि व्यपदिश्यते-यथा पटो दग्ध इति। अवयवे हि पटाख्योऽवयवी समवेत इति तस्याप्यसौ दाहः। न त्वयं गौणत्वे तथाहि हि सति मुख्यस्यैव संप्रत्ययात्त्र कर्तव्यमेव प्रत्ययग्रहणं स्यात्। आघ्नीतेति। परत्वादुपधालोपे कृते पुनःप्रसङ्गविज्ञानादनुनासिकलोपः स्यात्॥

(उ०) **नत्वयमिति।** अयमवयवदाहादौ समुदायदाहादिव्यपदेशो गौणो न किन्तु मुख्य एव, अवयवलोपे समुदायस्यापि लोपादित्यर्थः। **अनुनासिकेति।** अनुदात्तोपदेशेत्यनेन। आघ्नीतेत्यत्र आङो यमहन इत्यात्मनेपदैकवचनम्। **संग्मीयेति।** गमेर्विधिलिङि समो गमीत्यात्मनेपदे इटि शपो बहुलं छन्दसीति लुकि लिङः सलोपे इटोऽति उपधालोपे रूपम्। तत्र प्रत्ययलक्षणेन झलादिङित्परत्वादनुनासिकलोपः स्यात्। इदं च प्रयोजनं अप्रा-

१ 'मनवस्थितं, तदर्थत्वेहि'। २ एवंच-तदनुवृत्तौ च। ३ 'ग्रहणात्'। ४ प्रकृते-धोर्लोपोलेटिवेति प्रकृते।

५ कश्चिन्न। ६ 'संग्मीय'। ७ तत्र-उभयत्र। ८ 'गौणव्यपदेशः। गौणत्वेहि सति'।

धान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रमिति वार्त्तिकमते बोध्यम् । [ प्रत्ययस्य लुक् ] ।

## प्रत्ययलोपे प्रत्ययलक्षणम् ॥१।१।६१॥

[ आक्षेपभाष्यम् ]

**प्रत्ययग्रहणं किमर्थम् ? ॥**

(प्र०) प्रत्ययलोपे । प्रत्ययग्रहणमिति । प्रत्ययनिमित्तं कार्यं लोपे भवतीत्युक्ते प्रत्यासत्त्या प्रत्ययस्यैव लोप इति विज्ञास्यत इति भावः ॥

( उ० ) प्रत्ययलोपे । लक्षणशब्दार्थमाह-**निमित्तमिति। कार्यमिति** बहुव्रीहिलभ्यम् । **प्रत्यासत्त्येति।** क्रियमाणेऽपि प्रत्ययग्रहणेऽन्यप्रत्ययलोपेऽन्यप्रत्ययनिमित्तकार्यवारणाय प्रत्यासत्तिराश्रयणीयेति भावः ।

[ समाधानभाष्यम् ]

**'लोपे प्रत्ययलक्षण'मितीयत्युच्यमाने सौरथी वैहतीति । गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत ॥**

(प्र०) सौरथीति । प्रत्ययस्य लक्षणं दर्शनं प्रादुर्भाव इत्यर्थं परिकल्प्यैतदुच्यते । सुरथस्य विहतस्य चापत्यं गोत्रं स्त्रीति इञि कृते मकारनकारयोर्भावे यथा गुरूपोत्तमत्वात् ष्यङ्भवति, एवं लोपेऽपि स्यात् । प्रत्ययग्रहणे तु सति विरुद्धत्वान्नायमर्थो भवति-प्रत्ययस्य लोपे [कृते] तस्यैव पुनः प्रादुर्भाव इति । एवं हि लोपविधानमनर्थकं स्यात् । तस्मात्-प्रत्ययनिमित्तं कार्यं [प्रत्येय] लोपे भवतीति वाक्यार्थ आश्रीयते ॥

( उ० ) ननु प्रत्ययलक्षणमित्यस्य बहुव्रीहितयाऽनेन स्थान्यभावेऽप्राप्तकार्यप्रापणायातिदेश इति अत्र प्रत्ययस्य सत्त्वेन किं तन्निमित्तकार्यातिदेशेनात आह-**प्रत्ययस्य लक्षणमिति ।** यस्य लोपस्तस्मिन्सति यः प्रत्ययो भवति, तस्य तल्लोपेऽपि प्रादुर्भाव इत्यर्थः । लाघवात्षष्ठीतत्पुरुष एव स्यादिति तात्पर्यम् । **रमेः** क्वनि **हन्तेश्च** क्ते **अनुदात्तो**पेत्यनुनासिकलोपेऽगुरूपोत्तमत्वादप्राप्तः ष्यङतिदेशतः स्यादित्यर्थः । **एवं हि लोपेति ।** ननु **णेरनिटी**त्यादिना मथ्यान्मा भूत्तत्र प्रवृत्तिः । यत्तु सामान्येन लोपे **णाविष्ठवदि**ति, सोऽप्रत्ययविषये चरितार्थ इति भिक्षुमाचष्टे भिक्षयतीत्यत्र पुनः प्रादुर्भावार्थमिदं स्यादिति चेन्न । एवं हि तत्रैव **प्रत्ययस्य नलोप** इति वदेत् । एवं च गुरुतरन्यासो ज्ञापक इति बोध्यम् ॥

[ समाधाननिरासभाष्यम् ]

**नैष दोषः । नैवं विज्ञायते-लोपे प्रत्ययलक्षणं भवति-प्रत्ययस्य प्रादुर्भाव इति ॥ कथं तर्हि ? ॥ प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्तेऽपि भवति ॥**

(प्र०) नैवमिति । सन्देहेऽपि व्याख्यानात्करणसाधनो लक्षणशब्द आश्रयिष्यते । अन्यथा क्रियमाणेऽपि प्रत्ययग्रहणे भावसाधनाशङ्का न निवर्तते-प्रत्ययलोपे प्रत्ययान्तरस्य प्रादुर्भाव इति । यथा ग्रामणीरिति क्विपो लोपेस्वाद्युत्पत्तिः । ततश्चाऽधोगित्यत्र पदसंज्ञा न स्यादिति करणसाधनत्वे व्याख्यानमेव शरणमिति भावः । लक्षणशब्दोपादानसामर्थ्याद्वा करणसाधनो लक्षणशब्दः । अन्यथा लोपे प्रत्यय इत्येव वक्तव्यं स्यात् ॥

(उ०) **अन्यथा**-व्याख्यानस्य शरणत्वाऽभावे । **पदसंज्ञा न स्यादि**ति । तिङन्तत्वाऽभावादितिभावः । **लोपे प्रत्यय इति ।** अस्य 'प्रादुर्भवती'ति शेषः ॥

[ प्रयोजनभाष्यम् ]

**इदं तर्हि प्रयोजनम् । सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणेन यथा स्यात् । लोपोत्तरकालं यत्प्राप्नोति तत्प्रत्ययलक्षणेन माभूदिति ॥ किं प्रयोजनम् ?॥ ग्रामणिकुलं सेनानिकुलम् । औत्तरपदिके ह्रस्वत्वे कृते 'ह्रस्वस्य पिति कृति तुगि'ति तुक् प्राप्नोति । स मा भूदिति ॥**

(प्र०) सति प्रत्यय इति । प्रत्ययशब्दोऽत्र लुप्तसप्तमीको निर्दिश्यते । तेन प्रत्यये सति यत्कार्यं दृष्टं तल्लोपे सति भवति । न च ग्रामणीरित्यत्र क्विपि सति तुग्दृष्टः, ह्रस्वाऽभावात् । कृते क्विलोपे ह्रस्वत्वे च तुक्प्राप्तिः ।

(उ०) ननु 'प्रत्ययलोप' इत्युक्ते कथं 'सति प्रत्यये'इति लभ्यतेऽत आह-**प्रत्ययशब्द इति । यत्कार्यमिति ।** प्रत्ययलक्षणं यत्कार्यं दृष्टमित्यर्थः ॥

[ प्रयोजननिरासभाष्यम् ]

**यदि तर्हि यत्सति प्रत्यये प्राप्नोति तत्प्रत्ययक्षणेन भवति, लोपोत्तरकालं यत्**

१ क्वचिन्न । २ अत्र-सौरथीत्यादौ । ३ तस्य-प्रत्ययस्य । ४ 'किं तर्हि' । ५ 'लक्षणं' । ६ 'इत्यत्रौत्तर' ।

**प्राप्नोति तन्न भवति । जगत् जनगदिति । अत्र तुग्न प्राप्नोति लोपोत्तरकालं ह्यत्र[1] तुगागमः । तस्मान्नार्थ एवमर्थेन प्रत्ययग्रहणेन ॥**

(प्र०) जगदिति । 'द्युतिगमिजुहोत्यादीनां द्वे चे'ति गमेः क्विप् । अत्राऽन्तरङ्गत्वात्पूर्वं विलोपः । गम क्वावित्ययं हि लोपोऽङ्गविशेषापेक्षत्वाद्बहिरङ्गः । भिन्नविषयत्वाच्च 'येन नाप्राप्ति'न्यायो न भवति । सति त्वस्मिन्न्याये नैव विलोपः स्यात् । तस्मात्सति क्विपि नाऽत्र तुकः प्राप्तिः । अपि तु विलोपे कृते ॥

(उ०) ननु जगदित्यादौ विलोपात्परत्वात्पूर्वं गमः क्वावित्यनुनासिकलोपे क्विपि सत्यपि तुकः प्राप्तेराह—**अत्रेति । भिन्नविषयत्वादिति** । वार्तिकमते एतत् । अचिरादेशे नुडपवादत्वपरभाष्यरीत्या विषयभेदेऽपि तत्त्वे तु लोपेनानुत्पत्तेरेवान्वाख्यानेनापवादत्वं नेति बोध्यम् । वैयात्यान्न्यायाङ्गीकारे दोष माह—**सति त्विति** ।

[ आक्षेपभाष्यम् ]

**कस्मान्न भवति—ग्रामणिकुलं सेनानि कुलम् ? ॥**

[ समाधानभाष्यम् ]

**बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक् । 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥**

[ प्रयोजनान्तरभाष्यम् ]

**इदं तर्हि प्रयोजनम्—कृत्स्नप्रत्ययलोपे 'प्रत्ययलक्षणं यथा स्यादेकदेशलोपे माभूदिति । 'आघ्नीत' 'संरायस्पोषेण ग्मीय' ॥**

[ आक्षेपभाष्यम् ]

**पूर्वस्मिन्नपि योगे प्रत्ययग्रहणस्यैतत्प्रयोजनमुक्तम् ॥**

[ समाधानभाष्यम् ]

**अन्यतरच्छक्यमकर्तुम् ॥**

(प्र०) अन्यतरदिति । एकमेव प्रत्ययग्रहणं सामर्थ्यात्कृत्स्नप्रत्ययलोपप्रतिपादने समर्थम् ।

(उ०) **एकमेवेति** । अवयवस्य प्रत्ययत्वपार्याप्त्यधिकरणत्वाऽभावादिति भावः । एवं चानयोः फलान्तराभिनिवेशो भाष्यविरुद्ध इति बोध्यम् ॥

[ प्रश्नभाष्यम् ]

**अथ द्वितीयं प्रत्ययग्रहणं किमर्थम् ? ॥**

[ समाधानभाष्यम् ]

**प्रत्ययलक्षणं यथा स्यात् । वर्णलक्षणं मा भूदिति । गवे हितं गोहितम् । रायः कुलं रैकुलमिति ॥**

(प्र०) **वर्णलक्षणमिति** । 'प्रत्ययलोपे तल्लक्षण'मित्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययत्वरूपाऽऽश्रयेण वर्णरूपताऽऽश्रयेण वा तत्सर्वं स्यात् । सर्वनाम्नो वस्तुमात्रपरामर्शित्वात् । प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे भवति, न वर्णरूपतानिमित्तम् । **रैकुलमिति** । अवयवद्वारेणात्र प्रत्ययस्याप्यादेशं प्रति निमित्तत्वमस्त्येव, प्रत्ययाश्रयस्त्वायादेशो न भवतीति न प्रवर्तते । अनेनैव न्यायेन 'न धातुलोप आर्धधातुके'इत्यत्र धिन्विकृण्व्योर्विंचि 'लोपो व्योर्वली'ति वलोपस्य वल्निमित्तत्वादार्धधातुकनिमित्तत्वाऽभावाद्गुणप्रतिषेधो न भवति । तेन सुधे सुकरिति भवति, न तु सुधी सुकीरिति ॥

(उ०) ननु द्वितीयप्रत्ययग्रहणाऽभावे बहुव्रीहिलाभात्तल्लभ्यकार्यातिदेशो न सिध्येदत आह—**तल्लक्षणमिति । वस्तुमात्रेति** । प्रत्ययमात्रेत्यर्थः । **प्रत्ययनिमित्तमेवेति** । प्रत्ययत्वेन प्रत्ययनिमित्तमित्यर्थः । **न वर्णेति** । प्राधान्येन वर्णनिमित्तमित्यर्थः । ननु रैकुलमित्यत्रायादेशो न प्रत्ययाश्रयः, किंतु तदवयवाश्रयोऽत आह—**अवयवद्वारेणेति** । केचित्तु प्रत्ययग्रहणमित्यस्य द्वितीयप्रत्ययपदघटितं प्रत्ययलक्षणग्रहणमित्यर्थः । **प्रत्ययलोपेऽपी**त्येव सूत्रं कार्यम् । अस्य 'तद्भवति यत्प्रत्यये सती'ति शेषः । स्थानिवदित्यनुवृत्तिर्वा । **प्रत्ययलक्षणमिति** । प्रत्ययत्वतद्व्याप्यान्यतरधर्मावच्छिन्नलक्षणमित्यर्थः । **वर्णलक्षणं**—वर्णत्वव्याप्यधर्मावच्छिन्ननिमित्तम् । प्रत्यये सति वर्णनिमित्तं भवतीति तल्लोपेऽपि स्यादिति भावः । कैयटव्याख्या तु चिन्त्या । प्रकृते तच्छब्दप्रत्ययशब्दयोः पर्यायत्वेन तद्विचारस्यायुक्तत्वापत्तेरित्याहुः । **अनेनैवेति** । अत्र प्रत्ययग्रहणसामर्थ्यात्तथार्थलाभेऽपि तत्र तादृशार्थग्रहे न मानम् । 'आर्धधातुक' इत्यस्य कैयटरीत्या तोतोर्तीत्यादिव्यावृत्त्या चरितार्थत्वात् । 'पूर्वसूत्रे आर्धधातुकग्रहणमनवकाश'मिति क्ङितिचेति सूत्रस्थभाष्यविरोधाच्च । आवृत्त्यादिना तथार्थकल्पने तु न मानम् । किंच तथार्थकल्पने यङ्यक्क्यवलोपे इति वार्त्तिकं तदुदाहरणपरं **जीरदानु**रिति भाष्यं चासङ्गतं स्यादिति चिन्त्यमेतत् । **सुधेइत्यादि** । धिविकृव्योर्नुमि विचि वलोपेऽपृक्तलोपे गुणे सुना समासे सौ हल्ङ्यादिलोपनलोपयोरिमे

१ 'कालो ह्यत्र' ।

२ **तद्व्याप्येति** । सुप्त्वादीत्यर्थः ।

रूपे। गुणनिषेधे तु सुधिन्शब्दे 'इन्हन्नि'ति दीर्घः। सुकृणः 'सर्वनामस्थानेचे'ति दीर्घं उपधायाश्चेतीत्त्वे रपरत्वे सुनलोपयोर्त्रोरिति दीर्घः स्यादिति भावः॥

[ आक्षेपभाष्यम् ]

**किमर्थं पुनरिदमुच्यते ?॥**

(प्र०) **किमर्थमिति**। स्थानिवद्भावेन सिद्धमिति भावः।

(उ०) **स्थानिवद्भावेनेति**। वर्णाश्रयस्य तवा[2]प्यनिष्टत्वादित्वादित्यर्थः॥

[ समाधानभाष्यम ]

॥ * ॥ *प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य* ॥ * ॥

**'प्रत्ययलोपे प्रत्ययलक्षण'मित्युच्यते। 'सदन्वाख्यानाच्छास्त्रस्य'। सच्छास्त्रेणान्वाख्यायते, सतो वा शास्त्रमन्वाख्यायकं भवति। सदन्वाख्यानाच्छास्त्रस्य 'उगिदचां सर्वनामस्थानेऽधातो'रितीहैव स्यात्—गोमन्तौ यवमन्तौ, गोमान् यवमानित्यत्र न स्यात्। इष्यते च स्यादिति। तच्चान्तरेण यत्नं न सिध्यति, अतः प्रत्ययलक्षणवचनम्। एवमर्थमिदमुच्यते।**

(प्र०) **सदन्वाख्यानादिति**। शास्त्रं कर्तृ करणं वा शेषत्वेन विवक्षितमिति षष्ठी कृता। **सच्छास्त्रेणेति**। शास्त्रेण करणेनाचार्यः स्मर्ता सद्विद्यमानं वस्तु निमित्तत्वेनान्वाचष्टे। **सतो वेति**। शास्त्रस्यैवाऽविच्छेदेन प्रवर्तमानस्य'स्वतन्त्रत्वमन्वाख्यान इति पूर्वस्माद्व्याख्यानादस्य विशेषः। न च स्थानिवद्भावेन सिध्यति, अतृणेडित्यादावल्विधित्वात्॥

(उ०) ननु शास्त्रस्य कर्तृत्वे सतः कर्मत्वेनोभय**प्राप्तौ**विति नियमाच्छास्त्रस्येति षष्ठ्यनुपपन्ना, **कर्मणि चेति** समासनिषेधापत्तिश्च। करणत्वे तु षष्ठ्यनुपपन्नेत्यत आह—**शास्त्रमिति**। शेषत्वे चोभयप्राप्तावित्यस्याऽप्राप्तेः षष्ठीस[5]मासो नानुपपन्नइति भावः। 'आचार्यःस्मर्त्ते'ति फलितार्थकथनम्। स्मर्त्राचार्येणेति त्वन्वाख्यायत इत्यन्वययोग्यम्। **स्वतन्त्रत्वमिति**। करणस्य कर्तृत्वविवक्षेति भावः। **अल्विधित्वादिति**। 'इमादे' रिति शेषः। **वर्णाश्रयेइति** तु वर्णप्राधान्यविषयकम्। एवं [6]चाऽप्राधान्येनालाश्रयणे तस्य तद्विषयकत्वे चेत्यर्थः। विध्यर्थं सूत्रमिति भावः॥

[ काका प्रश्नभाष्यम् ]

**अस्ति प्रयोजनमेतत् ?॥**

(उ०) भाष्ये—**अस्तिप्रयोजनमेतदिति**। उक्तप्रयोजनविशिष्टं सूत्रं निर्दोषं वेति काका प्रश्न इति बोध्यम्।

[ समाधानभाष्यम् ]

**किं तर्हीति।**

(उ०) **किंतर्हीति**। मम तु निर्दोषमेव, तव कश्चिद्दोषप्रतिभासोऽस्ति चेद्वदेति प्रश्नगर्भमुत्तरम्।

[ आक्षेपवार्तिकम् ]

॥*॥ *लुक्युपसंख्यानम्* ॥*॥

**लुक्युपसंख्यानं कर्तव्यम्। पञ्च सप्त।**

[ प्रश्नभाष्यम् ]

**किं पुनः कारणं न सिध्यति ?॥**

[ उत्तरवार्त्तिकम् ]

॥*॥ *लोपे हि विधानम्* ॥*॥

**लोपे हि प्रत्ययलक्षणं विधीयते। तेन लुकि न प्राप्नोति।**

(प्र०) **लुक्युपसङ्ख्यानमिति**। 'तक्रकौण्डिन्य'-न्यायेन लोपसंज्ञाया लुगादिसंज्ञाभिर्बाधनादिति भावः। लु-ग्रहणस्योपलक्षणार्थत्वात् श्लुलुपावपि गृह्येते॥

(उ०) **बाधनादिति**। एवं च[7] पचेत्यादौ पदत्वं न स्यादिति भावः। **उपलक्षणार्थत्वादिति**। तयोरपिपूर्वं पक्षबीजस्य समत्वादिति भावः। तत्र श्लुलुपोः प्रत्ययलक्षणस्य फलं चिन्त्यं, लुकि तु पचेत्यादौ पदत्वं फलमस्ति।

[ समाधानवार्तिकम् ]

॥*॥ *न वाऽदर्शनस्य लोपसंज्ञित्वात्* ॥*॥

**न वा कर्तव्यम्॥ किं कारणम् ?॥ 'अदर्शनस्य लोपसंज्ञित्वात्'। अदर्शनं लोपसंज्ञं भवतीत्युच्यते। लुमत्संज्ञाश्चाप्यदर्शनस्य क्रियन्ते[9]। तेन लुक्यपि भविष्यति।**

(प्र०) **न वाऽदर्शनस्येति**। अदर्शनमात्रस्य लोपसंज्ञा विधीयमाना लुगादिसंज्ञाविषयमप्यवगा-

---

२ **तवापि**—एतत्सूत्रकृतोऽपि सिद्धान्ते। ३ 'तीत्यतः'। ४ 'इत्येवमर्थं'। ५ 'समासौ नानुपपन्नौ'। ६ **एवंचेति**। ७ **एवंचेति**। प्रत्ययलक्षणाऽभावे चेत्यर्थः। ८ 'नचा'। ९ 'क्रियते'।

हते । न च संज्ञानां बाध्यबाधकभावः, समावेशदर्शनात्तासामिति—कडारसूत्रे वक्ष्यते । लोपस्य संज्ञि लोपसंज्ञि, तस्य भावो लोपसंज्ञित्वं, तस्मादित्यर्थः ।

(उ०) समावेशदर्शनादिति । क्रुत्कृत्यादिष्विति भावः । लोपः संज्ञा यस्येति बहुव्रीहौ मत्वर्थीयानुपपत्तिः । त्वान्तेन षष्ठीसमासेऽर्थासङ्गतिरत इन्नन्तेन षष्ठीसमास इत्याह—लोपस्येति ।

**यद्येवम्—**

[ साङ्कर्यवार्त्तिकम् ]

*॥*॥ प्रत्ययादर्शनं तु लुमत्संज्ञम् ॥*॥*

**प्रत्ययाऽदर्शनं तु लुमत्संज्ञमपि प्राप्नोति ।**

(प्र०) प्रत्ययादर्शनं त्विति । लुक्श्लुलुप्संज्ञानां संकरः प्राप्नोतीत्यर्थः ।

(उ०) सङ्कर इति । परस्परं लोपशब्दभावितप्रत्ययादर्शनविषये लोपसंज्ञया चेत्यर्थः । प्रत्ययादर्शनमात्रं सकललुमत्संज्ञं प्राप्नोतीति भाष्याक्षरार्थः ॥

[ आक्षेपभाष्यम् ]

**तत्र को दोषः ? ॥**

[ दोषदर्शनवार्तिकम् ]

*॥*॥ तत्र लुकि श्लुविधिः[1]प्रतिषेध्यः ॥*॥*

**तत्र लुकि श्लुविधिः प्राप्नोति स प्रतिषेध्यः । अत्ति हन्ति । 'श्लौ' इति द्विर्वचनं प्राप्नोति ।**

(प्र०) तत्र लुकि श्लुविधिरिति । उपलक्षणं चैतत् । तेन श्लावपि लुग्विधिः प्राप्नोति—जुहोतीति । उतो वृद्धिर्लुकि हलीति । लुप्यपि लुग्विधिप्रसङ्गः—हरीतकीति लुक्तद्धितलुकीति । तथा लुकि लुब्विधिः—लवणः सूप इति । युक्तवद्भावः स्यात् ।

(उ०) उतो वृद्धिरिति । न च तत्र नाभ्यस्तस्येति वर्त्तनाददोषः । अत्र पक्षे तदनुवृत्तेर्वक्तुमशक्यत्वात् । हरीतकीति । नन्वत्र सत्यपि ङीपो लुकि युक्तवद्भावात् पुनर्ङीप् स्यादिति चेन्न । 'लक्ष्ये लक्षणस्ये'ति न्यायादित्याहुः । हरीतक्यां हरीतक्यादिभ्यश्चेत्यणो लुप् । यद्वा हरीतकीवेयं प्रतिकृतिरिति कनो लुप् । लवण इत्यत्र लवणाल्लुक् ।

[ सांकर्यनिवारणवार्तिकम् ]

*॥*॥ न वा पृथक्संज्ञाकरणात् ॥*॥*

**न वैष दोषः ॥ किं कारणम् ? ॥ 'पृथक्संज्ञाकरणात्' । पृथक्संज्ञाकरणसामर्थ्याल्लुकि श्लुविधिर्न भविष्यति ।**

(प्र०) न वा पृथगिति । एकयैव संज्ञया प्रदेशवाक्येषु संज्ञिप्रत्यायने सिद्धेऽनेकसंज्ञाविधानसामर्थ्यात्तद्भावितग्रहणं विज्ञायते । तत्राश्रितस्वरूपव्यापारा वा लुगादय आश्रीयन्ते, आवृत्तिर्वा लुगादिशब्दानामाश्रीयत इति तद्भावितग्रहणं सिध्यति । विधिप्रदेशेषु चेतरेतराश्रयदोषानवतारो नित्यशब्दाश्रयणाद्भाविसंज्ञाविज्ञानाद्वा ।

( उ० ) तद्भावितग्रहणे युक्तिमाह—तत्राश्रितेति । आश्रितः स्वरूपस्य व्यापारोऽदर्शनविषयो यैस्ते[4] तथोक्ता इत्यर्थः । अदर्शनबोधका लुगादिशब्दाः प्रत्ययादर्शनस्य संज्ञेत्युक्ते प्रत्यासत्त्या यया संज्ञया यददर्शनं भाव्यते तस्यैव सा संज्ञेति सा लभ्यत इति भावः । प्रत्यासत्तिः सर्वैर्दुर्ज्ञेयेत्यत आह—आवृत्तिर्वेति । तेन लुगादिशब्दभावितमदर्शनं क्रमेण तत्तत्संज्ञमित्यर्थः । अदर्शनस्य नित्यत्वेऽपि तद्भावितत्वस्य शास्त्रायत्तत्वादितरेतराश्रयत्वं तदवस्थमेवेत्यत आह—भाविसंज्ञेति ।

[ उपसंहारभाष्यम् ]

**तस्माददर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते ।**

[ सांकर्यसाधकभाष्यम् ]

**यथैव तर्हि अदर्शनसामान्याल्लोपसंज्ञा[5] लुमत्संज्ञा अवगाहते एवं लुमत्सञ्ज्ञा अपि लोपसंज्ञामवगाहेरन् ॥ तत्र को दोषः ? । अगोमती गोमती सम्पन्ना गोमतीभूता ॥ 'लुक्तद्धितलुकी'ति ङीपो लुक् प्रसज्येत ।**

(प्र०) यथैतिवे । तिसृणां संज्ञानां विधानसामर्थ्यात्परस्परविषयावगाहनं तासां मा भूत् । लोपसंज्ञाविषये तु ताः प्रवर्तेरन् । गोमतीभूतेति । च्वेर्लोपे कृते लुक्संज्ञायां सत्यां लुक्तद्धितलुकीति लुक् प्राप्नोति । पुंवद्भावस्त्वत्र न भवति, वैयधिकरण्यात् । महद्भूता ब्राह्मणीत्यत्र तु भवति, सामानाधिकरण्यात् । नित्यत्वाद्धि शब्दानां क्वचिद्विकारस्य जनिकर्तृत्वं, क्वचित्प्रकृतेः ।

(उ०) तद्भावितग्रहणपक्षे यथैवेत्यादिग्रन्थोऽनुपपन्न

१ 'विधिप्रतिषेधः' । २ कश्चिन्न । ३ 'अस्ति' ।

४ 'व्यापारास्ते' । ५ 'अदर्शनस्यसामान्याल्लोप' ।

इत्यत आह–तिसृणामिति । इतरेतराश्रयपरिहाराय भाविसंज्ञाविज्ञाने गौरवापत्त्या सामर्थ्यात्तिसृणामसङ्करः प्रतिपादितो न तु तद्भावितपक्षाश्रयेणेत्यभिमानः । वैयधिकरण्यादिति । भवनक्रियायां प्रकृतेः कर्तृत्वादिति भावः । क्वचिद्विकारस्येति । वस्तुतो वृत्तौ तद्वाक्ये च सर्वत्र प्रकृतेरेव कर्तृत्वम् । विकृतिशब्दस्यापि गौण्या प्रकृतिवृत्तित्वात्सामानाधिकरण्यम् । अत एव गौणत्वान्महच्छब्द आत्वाऽभावः । गोमतीशब्दे तु गोमतीनदीभिन्ना गोमतीनदीभूतेत्यर्थेनाऽभाषितपुंस्कत्वात् पुंवत्त्वाऽभाव इति बोध्यम् ॥

[ सांकर्यबाधकभाष्यम् ]

**ननु चात्रापि 'नैवा पृथक्संज्ञाकरणा'-दित्येव सिद्धम् ॥**

(प्र०) ननु चात्रापीति । लुगादिसंज्ञानां भेदेनोपादानात्तद्भावितग्रहणमित्यर्थः ॥

[ प्रश्नभाष्यम् ]

**यथैव तर्हि पृथक्संज्ञाकरणसामर्थ्या-दत्र लुमत्संज्ञा लोपसंज्ञां नावगाहन्ते, एवं लोपसञ्ज्ञाऽपि लुमत्संज्ञा नावगाहेत। तत्र स एष दोषो-'लुक्युपसंख्यान'मिति ॥**

(उ०) भाष्ये–एवं लोपेति । लोपसंज्ञायामपि तद्भावितग्रहणं मन्वानस्य चोद्यमेतत् ॥

[ समाधानभाष्यम् ]

**अस्त्यन्यल्लोपसंज्ञायाः पृथक्संज्ञाकरणे प्रयोजनम् ॥ किम् ? ॥ लुमत्संज्ञासु यदुच्यते तल्लोपमात्रे मा भूदिति ॥**

(प्र०) अस्त्यन्यदिति । प्रत्ययाप्रत्ययाऽदर्शनस्य लोपसंज्ञा यथा स्यादिति । लोपमात्रे माभूदिति । यथा गोमतीभूतेति च्वेर्लोपे कृते लुक्तद्धितलुकीति न भवति तस्माल्लोपसंज्ञायां नास्ति तद्भावितग्रहणम्॥

(उ०) अत्र[3] सामर्थ्यात्तद्भावितग्रहणेऽपि लोपसंज्ञायां तद्ग्रहणे मानाऽभावः। न च लुगादिभ्यो लोपसंज्ञायाः पृथक्करणं मानम्, तस्याः प्रयोजनान्तरसत्त्वादित्याह—अस्त्यन्यदिति । तद्दर्शयति—तल्लोपमात्र इति भाष्ये । स्वयं प्रयोजनान्तरमप्याह—प्रत्ययाप्रत्ययेति ॥

[ समाधानान्तरवार्तिकम् ]

*॥ * ॥ लुमति प्रतिषेधाद्वा ॥ * ॥*

[ भाष्यम् ]

**अथ वा यदयं-'न लुमताङ्गस्ये'ति [प्रत्ययलक्षण] प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो-भवति लुकि प्रत्ययलक्षणमिति ॥**

(उ०) भाष्ये लुमतिप्रतिषेधाद्वेति । भवतु लोपसंज्ञायामपि तद्भावितग्रहणं, न लुमतेति निषेधेन तत्र[4] लोपत्वनिमित्तकार्यप्रवृत्तिर्ज्ञाप्यत इत्यदोष इति भावः ॥

*॥ * ॥ सतो निमित्ताऽभावात्पदसंज्ञाऽभावः ॥ * ॥*

**['सतो निमित्ताऽभावात्'] । सन् प्रत्ययो येषां कार्याणामनिमित्तं राज्ञः पुरुष इति, स लुप्तोऽप्यनिमित्तं स्यात्-राजपुरुष इति ॥**

(प्र०) सतो निमित्ताभावादिति । निमित्तशब्देन निमित्तत्वमुच्यते । तेन यस्य सतः कार्यं प्रति निमित्तत्वं नाऽभूत्स लुप्तोऽप्यनिमित्तं स्यादित्यर्थः । राज्ञ इति । सति ङसि भसंज्ञायां स्वादिष्विति पदसंज्ञा बाधितेति नलोपो नाऽभूदल्लोपश्चाभूदिति लुप्तेऽपि तस्मिन्नलोपो न स्यादल्लोपश्च स्यात् ॥

(उ०) 'लुक्युपसङ्ख्यान'मिति दोषे परिहृते, दोषान्तरमाशङ्कते–सतो निमित्तेति । वार्तिकतद्व्याख्यानयोर्विरोधं परिहरति–निमित्तशब्देनेति ॥

[ समाधानभाष्यम् ]

**अस्तु तस्या अनिमित्तं-या स्वादौ पदमिति पदसंज्ञा, या तु 'सुबन्तं पद'मिति पदसंज्ञा सा भविष्यति । सत्येतत्प्रत्यय आसीत् । अनया भविष्यत्यनया न भविष्यतीति ॥**

(प्र०) अस्तु तस्या इति । द्वे चाऽत्र पदसंज्ञे । एका स्वादिष्वित्यवयवस्य, सा च भसंज्ञया बाधिता । द्वितीया सुबन्तत्वेन समुदायस्य, सा च लुप्तेऽपि स्थितैव । अल्लोपस्तु न लुमताङ्गस्येति प्रतिषेधान्न भवति । सत्येतदिति । कालविप्रकर्षप्रतिपादनायाऽनद्यतनप्रत्ययप्रयोगः । राज्ञ इत्यत्रावधिभेदाद्भसंज्ञयाऽवयवस्यैव पदसंज्ञा बाध्यते, न समुदायस्य सुबन्तत्वनिमित्ता । लुप्ते प्रत्ययेऽवधिभेदा-

१ क्वचिन्न ।
२ 'लोपसंज्ञा लुमत्सं' ।
३ शङ्कते–अत्रेति । अत्र–लुगादिसंज्ञासु । ४ तत्र–लुगादिसंज्ञासु । लोपत्वं–लोपसंज्ञा । ५ 'अनिमित्तत्वं' ।

ऽभावात्प्रत्ययलक्षणेन प्राप्तया भसंज्ञया द्वे अपि पदसंज्ञे बाधितव्ये । एकाऽपवादत्वेन, द्वितीया परत्वेनेति भावः । अनयेति । पदसंज्ञाद्वयमनेन दर्शितम् । भसंज्ञा प्रत्ययलक्षणेन वर्णाश्रयाऽपि भवति । यथा अतृणेडितीमागमः ।

( उ० ) नन्वेवं पदत्वेऽपि भत्वस्याऽपि सत्त्वादल्लोपः स्यादत आह–अल्लोपस्त्विति । कालविप्रकर्षेति । अस्य चोत्तरस्य नायमवसर इत्यर्थः । भाष्ये— एतत्—वक्ष्यमाणवाक्यार्थरूपम् । पदसंज्ञाद्वयमिति । अनया पदसंज्ञया नलोपो भविष्यतीत्यादि भाष्यार्थः । यथेति । वर्णप्राधान्यविषय एव से निषेध इति भावः ।

[ आक्षेपस्थापकभाष्यम् ]

लुप्त इदानीं प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा तावत एव वाऽवधेः सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन यञादिपरतेति कृत्वा भसंज्ञा प्राप्नोति ॥

[ आक्षेपान्तरवार्तिकम् ]

*॥*॥ तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात्परिवीरिति ॥*॥*

तुग्दीर्घत्वयोश्च विप्रतिषेधो नोपपद्यते॥ क्व ? ॥ परिवीरिति ॥ किं कारणम् ? ॥ 'एकयोगलक्षणत्वात्' । एकयोगलक्षणे हि तुग्दीर्घत्वे ॥ इह लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्याणि पर्यवपन्नानि भवन्ति तान्येतेन प्रत्युत्थाप्यन्ते । अनेनैव तुग्, अनेनैव च दीर्घत्वमिति तदेकयोगलक्षणं भवति । एकयोगलक्षणानि च न प्रकल्पन्ते ॥

( प्र० ) तुग्दीर्घत्वयोश्चेति । अनेनैव प्रत्ययनिमित्तानि कार्याणि लुप्तेऽपि प्रत्यये विधीयन्ते इति क्रमाऽभावात्पौर्वापर्यं न प्रकल्प्यते । कार्यस्य प्राधान्यान्नाऽनेन शास्त्र-व्यपदेशौ विधीयेते ॥

(उ०) भाष्ये–पर्यवपन्नानि । मृतानि । अप्राप्तानीति यावत्। नन्वेतत्कार्यातिदेशे स्यात्स एव कुतः । शास्त्रनिमित्तातिदेशयोरपि संभवात् । अत आह–कार्यस्येति । व्यपदेशो–निमित्तम् । विधीयेते इति । 'इत्यभिमान' इति शेषः । वस्तुतः कार्यशास्त्रातिदेशयोरभेद एवेत्युक्तम् । भाष्ये एकयोगलक्षणानि चेति । तादृशानि विप्रतिषेधविषयत्वेन न प्रकल्पन्त इत्यर्थः ॥

[ समाधानभाष्यम् ]

*॥ * ॥ सिद्धं तु स्थानिसंज्ञानुदेशादान्यभाव्यस्य ॥ * ॥*

सिद्धमेतत् ॥ कथम् ? ॥ [ 'स्थानिसंज्ञानुदेशादान्यभाव्यस्य'] ॥ 'स्थानिसंज्ञाऽन्यभूतस्य भवती'ति वक्तव्यम् ॥ किं कृतं भवति ? ॥ सत्तामात्रमनेन क्रियते । यथाप्राप्ते तुग्दीर्घत्वे भविष्यतः ॥

(प्र०) सिद्धंत्विति । अन्यो भावोऽन्यद्वस्तु, स्थान्यपेक्षयाऽऽदेशः । अन्यभाव एवाऽऽन्यभाव्यमिति स्वार्थे ष्यञ् । तत्र परिवीरिति स्थानिनः क्विपो या संज्ञा यो व्यपदेशः–पित् कृत्प्रत्यय इत्यादिः, स लोपस्याऽनेन विधीयते । ततस्तन्निबन्धनं शास्त्रं प्रवर्तेत इति सिद्धो विप्रतिषेधः । सत्तामात्रमिति । कृदादिव्यपदेशस्येत्यर्थः ।

( उ० ) नन्वन्यभाव इति षष्ठीतत्पुरुषः कर्मधारयो वा, उभयत्रापि ष्यञनुपपन्नः, भावस्य भावान्तरेणाऽयोगात् । समाससंज्ञया गुणवचनसंज्ञाया बाधाच्चार्थाऽसङ्गतेश्चेत्यत आह अन्यो भाव इति, भाष्ये–अन्यरूपं प्राप्तस्येत्यर्थकम् । अन्यभूतस्येत्येतत्तु फलितार्थो बोध्यः । स्वार्थे इति । चातुर्वर्ण्यादित्वात् । ननु सत्तास्थानिनश्चेद्विरुद्धमतिदेशसहस्रेण सत्ताया अशक्यत्वाच्चाऽत आह–कृदादिव्यपदेशस्येति। एतदर्थमेव स्थानिसंज्ञानुदेशादित्युक्तं, न तु स्थान्यनुदेशादिति । तथा सति स्थानिकार्यातिदेश एव स्यादिति बोध्यम्॥

[ आक्षेपभाष्यम् ]

तद्वक्तव्यं भवति ॥

(उ०) भाष्ये शङ्किता आह–तद्वक्तव्यमिति । वचनान्तरेण सूत्राक्षेपपरिहारो न युक्त इति भावः ।

[ समाधानभाष्यम् ]

यद्यप्येतदुच्यते, अथवैतर्हि स्थानिवद्भावो नारभ्यते, 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधा'विति वक्ष्यामि ॥

( उ० ) परिहरति–यद्यपीति । अथवैतर्हीति । तथापीत्यर्थः । एवं च लघुतरत्वाद्वचनान्तरेणाऽपि परिहारो युक्त इति भावः ॥

१ सः–'वर्णाश्रये नास्ति'ति प्रतिषेधः । २ क्वचिन्न । ३ 'सन्नानि' । ४ 'भवतीति' । ५ लुप्तं स्यात् ।

[ आक्षेपभाष्यम् ]

**यद्येवम् 'आङो यमहन आत्मनेपदं भवती'ति हन्तेरेव स्याद्वधेर्न स्यात्। नहि काचिद्धन्तेः संज्ञास्ति या वधेरतिदिश्येत॥**

( प्र० ) यद्येवमिति। हन्ति स्वरूपेणोपादायात्मनेपदं विधीयते न तु कांचित्संज्ञामाश्रित्येति भावः। न हीति। यद्यपि धातुसंज्ञाऽस्ति, तथापि न तदुपादानेनात्ममेपदं विधीयते॥

(उ०) संज्ञामिति। निमित्तभूतव्यपदेशमित्यर्थः॥

[ समाधानभाष्यम् ]

**हन्तेरपि संज्ञाऽस्ति॥ का?॥ हन्तिरेव॥ कथम्?॥ 'स्वं रूपं शब्दस्याशब्दसंज्ञे'ति वचनात्स्वं रूपं शब्दस्य संज्ञा भवतीति हन्तेरपि हन्तिः संज्ञा भविती'ति॥**

( प्र० ) हन्तेरपीति। 'आङो यमहन' इति सूत्रोपात्तो हन्तिः संज्ञा, प्रयोगस्थस्तु संज्ञीति वधेरपि हन्तिसंज्ञाऽतिदिश्यते॥

( उ० ) ननु संज्ञासंज्ञिनोर्भेदाद्धन्तेर्हन्तिसंज्ञेत्ययुक्तमत आह—सूत्रोपात्त इति।

[ प्रयोजनान्तरवार्तिकम् ]

॥*॥ *भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धम्* ॥*॥

**भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धं भवति॥**

(उ०) फलान्तरमपि वचनान्तरारम्भे दर्शयति भाष्ये—भेत्यादि। सिद्धमिति। 'इष्ट'मिति शेषः। वक्ष्यमाणान्यल्विधित्वाद्वार्त्तिकमते नातिदेशेन भविष्यन्ति। सूत्रारम्भे तु 'वर्णाश्रये'इत्यस्य वर्णप्राधान्यविषयत्वादतिदेशेन स्युरेवेति भावः।

**भसंज्ञा—राज्ञः पुरुषो राजपुरुषः। प्रत्ययलक्षणेन 'यचि भ'मिति भसंज्ञा प्राप्नोति। 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न भवति॥ [भसंज्ञा]॥ ङीप्—चित्रायां जाता चित्रा। प्रत्ययलक्षणेनाऽणन्तादितीकारः प्राप्नोति। 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न भविष्यति॥ [ ङीप्[2] ]॥**

(प्र०) चित्रायां जातेति। 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यान'मित्यणो लुक्। 'टिड्ढाण'-ञित्यत्राऽत इत्यधिकारान्ङीपोऽल्विधित्वम्॥

(उ०) चित्रेति। 'नक्षत्रेण युक्त' इत्यणो 'लुबविशेषे' इति लुप्। युक्तवद्भावात्स्त्रीत्वं। ततो जातेऽर्थे सन्धिवेलादीत्यणो वार्तिकेन लुगिति भावः। नचाऽणो लुकि लुक्तद्धितेति टापो लुकि पुनष्टाब्दुर्लभः, लक्ष्ये लक्षणस्येति न्यायादिति वाच्यम्। जातिगतस्त्रीत्वबोधनरूपफलस्याऽसिद्धतया प्रवृत्तेः। अत इत्यधीति। अकारान्तादण इत्यर्थः।

**ष्फ—वतण्डी। प्रत्ययलक्षणेन 'यञन्ता'दिति ष्फः प्राप्नोति। 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न भवति॥ [ष्फः]॥**

(प्र०) वतण्डीति। यथा आवट्यायनीति चापं बाधित्वा सर्वत्रग्रहणाऽपकर्षात् ष्फो भवति, एवं शार्ङ्गरवादिपाठात्प्राप्तं ङीनं बाधित्वा प्राचां ष्फः स्यात्। अत इत्यधिकारादल्विधिः ष्फः॥

(उ०) ननु वतण्डात् स्त्र्यपत्ये यञो 'लुक् स्त्रिया'मिति लुकि प्रत्ययलक्षणेन प्राचामिति प्राप्तष्फं बाधित्वा परत्वान्ङीन् स्यात् शार्ङ्गरवादिपाठादत आह—यथेति। तत्र हि सूत्रे यञ इति वर्तते। सर्वत्र ग्रहणादिति। तद्धि पूर्वं सूत्रेऽपकृष्यते॥

**गोरात्वम्। गामिच्छति-गव्यति। प्रत्ययलक्षणेनाऽमि 'औतोऽम्शसो'रित्यात्वं प्राप्नोति। 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न भवति॥ [ गोरात्वम् ]॥**

( प्र० ) गव्यतीति। 'औतोऽम्शसो'रित्यत्राऽचीत्यनुवर्तनादल्विधिरात्वम्॥

( उ० ) औतोमिति। एकादेशविधायकं हि तत्। अचीति। अजाद्योरित्यर्थः। अत एव तद्धितशसो निवृत्तिः॥

[ सूत्रारम्भवादिनो न्यासान्तरदूषणवार्तिकं ]

॥*॥ *तस्य दोषो ङौनकारलोपेत्त्वेम्विधयः* ॥*॥

**तस्यैतस्य लक्षणस्य दोषो ['ङौनकारलोपेत्त्वेम्विधयः']।**

(उ०) भाष्ये सूत्रारम्भवादी वचनान्तरवादिनं प्रति दूषणमाह—तस्य दोष इति। स्थानिसंज्ञानुदेशादित्यस्येत्यर्थः।

**ङौ नकारलोपः—आर्द्रे चर्मन् लोहिते**

१ 'भविष्यती'ति। २ क्वचिन्न। ३ पूर्वसूत्रे—प्राचामित्यत्र। ४ लुक्स्यात्। ५ 'लोप'।

चर्मन् । प्रत्ययलक्षणेन 'यचि भ'मिति भसंज्ञा सिद्धा भवति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न प्राप्नोति ॥

(प्र०) चर्मन्निति । सुपां सुलुगिति ङेर्लुक् । अत्र भसंज्ञाया अभावान्नलोपः प्राप्नोतीति 'न ङिसंबुद्ध्यो'रिति वक्तव्यं जायते ॥

इत्त्वम्–आशीः । प्रत्ययलक्षणेन 'हली'तीत्त्वं सिद्धं भवति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न प्राप्नोति ॥

( उ० ) इत्त्वम्–'शास इदङ्हलो'रिति ॥

इम्–अतृणेट् । प्रत्ययलक्षणेन हलीति इम् सिद्धो भवति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न प्राप्नोति ॥

( उ० ) इम् । 'तृणह' इत्यनेन ॥

[ तटस्थभाष्यम् ]

सूत्रं च भिद्यते ॥

[ सिद्धान्तिभाष्यम् ]

यथान्यासमेवास्तु ॥

[ दोषस्मारणभाष्यम् ]

ननु चोक्तं–'सतो निमित्ताऽभावात्पदसंज्ञाभावस्तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात्परिवी'रिति ॥

[ परिहारभाष्यम् ]

नैष दोषः । वक्ष्यत्यत्र परिहारम् ॥

(उ०) भाष्ये वक्ष्यत्यत्रेति । 'न ङी'ति ङौ नलोपप्रतिषेधाज्ज्ञापकात्प्रत्ययलक्षणेन भसंज्ञा नेत्येवं रूपम्, अनुपदमेतत्सूत्र एवेत्यर्थः ॥

इहापि परिवीरिति । शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यति ॥

( प्र० ) परत्वाद्दीर्घत्वमिति । सति प्रत्यये यत्कार्यं दृष्टं तल्लुप्तेऽपि भवतीति सूत्रार्थः । परिवीयेत्यादौ च सति प्रत्यये दीर्घो दृष्टो, न तुगिति परिवीरित्यत्रापि दीर्घ एव भवति ॥

(उ०) शास्त्रपरेति । उपदेशशास्त्रपरेत्यर्थः । अतिदिश्यमानकार्याणामुत्पत्तिदेश एव विप्रतिषेधशास्त्रोपयोगीति भावः । तदाह–सति प्रत्यये इति । इदं सूत्रं तत्तच्छास्त्रनिमित्तसम्पादनद्वारा तत्तच्छास्त्रप्रवृत्तिसम्पादकमिति भावः । अत एव पूर्वं 'तान्यनेन प्रत्युत्थाप्यन्ते' इत्युक्तम् । तानि–तत्कार्यबोधकानि शास्त्राणीति तदर्थं उचितः, न तु कार्याणि क्रियन्त इत्यर्थः। [क्रियन्ते इत्यस्यैव वक्तुमुचितत्वात् ] । अत एव 'टित आत्मनेपदाना'मिति सूत्रे पर्यवपादो रूपान्तरापत्तिरित्युक्तं कैयटेन । विद्यमानस्य हि रूपान्तरापत्तिर्भवति । शास्त्रमेव च विद्यमानं न तु कार्यम् । तस्य च रूपान्तरमेतद्विषये कार्यान्तरप्रवर्त्तकत्वम् । एवं च पर्यवपन्नत्वमपि शास्त्रस्येत्यन्ये ॥

[ प्रयोजनप्रश्नभाष्यम् ]

कानि पुनरस्य योगस्य प्रयोजनानि ?॥

(उ०) भाष्ये–कानि पुनरिति । पूर्वमेतत्सूत्रकरणे का युक्तिरिति युक्तिप्रश्नः । इदानीं तु प्रयोजनप्रश्न इति न पौनरुक्त्यम् । अत एव सदन्वाख्यानादिति प्रागुक्तरितम् ॥

[ प्रयोजनवार्तिकम् ]

*||*|| प्रयोजनमपृक्तशिलोपे नुममामौ गुणवृद्धिदीर्घत्वेमडाट्श्नम्विधयः ||*||*

अपृक्तलोपे शिलोपे च कृते नुम्, अमामौ, गुणवृद्धी, दीर्घत्वमिम्, अडाटौ, श्नम्विधिरिति प्रयोजनानि ॥

(प्र०) प्रयोजनमिति । यद्यप्यल्विध्यर्थमिदमतृणेडित्यादौ, तथापि विशेषविहितत्वान्नुमादयोऽप्यस्यैवोदाहरणानीति भावः ॥

(उ०) यद्यप्यल्विध्यर्थमिति । 'इद'मिति शेषः । विशेषविहितत्वादिति । प्रत्ययविषये शीघ्रोपस्थितिकत्वादित्यर्थः ।

नुम्–अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम् । नुंम् ॥ अमामौ–हे अनड्वन् अनड्वान् ॥ गुण:–अधोक् अलेट् । वृद्धिः–न्यमार्ट् । दीर्घत्वम्–अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम् । इम्–अतृणेट् ॥ अडाटौ–अधोक् अलेट् ऐयः औनः ॥ श्नम्विधिः–अभिनोऽत्र । अच्छिनोऽत्र ॥ अपृक्तशिलोपयोः कृतयोरेते विधयो न प्राप्नुवन्ति । प्रत्ययलक्षणेन भवन्ति ॥

१ 'भवति' । २ 'नुमामौ' । ३ 'ङी' ।

४ क्वचिन्न ।

**(प्र०) अनड्वन्निति ।** पूर्वं संबुद्धिलोपमाश्रित्यै-तदुक्तम् । यदि तु विशेषविहितत्वादम्संबुद्धाविति पूर्वमम् प्रवर्तते, तदा संबुद्धिलोपो न स्यात् ॥ **ऐय इति ।** इयर्तेर्लङ्, तिप्, शपः श्लुः, द्विर्वचनम् । 'अर्तिपिपर्त्योश्चे'तीत्वम् । अभ्यासस्यासवर्णे इतीयङ् ॥ **औन इति ।** उन्देर्लङ् सिप् श्नम् श्नान्नलोपः दश्चेति रुत्वम् ॥

**(उ०)** त्री|ते इत्यादौ 'शेश्छन्दसी'ति लोपः । नुम्-फलं तु दीर्घः । **आश्रित्येति ।** अपवादबाधकवाचनिकपूर्व-विप्रतिषेधाश्रयेणेति भावः । **विशेषविहितत्वादिति ।** येन नाप्राप्तिन्यायेनाऽपवादत्वादित्यर्थः । **तदेति ।** 'अपवादविषयं परित्यज्ये'ति न्यायेनापवादविषये उत्सर्गाऽप्रवृत्तेरिति भावः । **यदीत्यनेन** विषयभेदादपवादत्वमेव नास्तीति सूचितम् । यदि तु 'नुड्विषये रप्रतिषेधो वक्तव्य' इत्यादिसाप्तमिक-भाष्येण विषयभेदेऽप्यपवादत्वं तर्हि प्रत्ययलोपस्थलेऽनुत्पत्ति-रेवान्वाख्यते इति **सरूप**सूत्रस्थभाष्ये उक्तत्वेनापवादत्वसंभा-वनैव नेत्याहुः। **इतीयङिति ।** ततो गुणेऽपृक्तलोपेऽडाटाविति भावः । आडागमे रूपान्तरेण तत्तच्छास्त्रनिमित्तविघातात् केनापि कार्येणाऽनयोर्न यौगपद्यमिति भावः । 'लावस्थाया-म'डितिपक्षेऽपि **बहुलं छन्दस्यमाङ्योगेऽपी**ति बाहुल-कादत्रैवमेव प्रक्रिया बोध्या । 'अभिनोऽत्रे'त्यत्रापीकारलोपा-पृक्तलोपाभ्यां श्नमो यौगपद्याऽसम्भवेन परत्वाल्लोपे तस्य[1] अप्रवृत्तिरिति बोध्यम् ।

[ प्रत्याख्यानभाष्यम् ]

**नैतानि सन्ति प्रयोजनानि । स्थानि-वद्भावेनाप्येतानि सिद्धानि ॥**

[ सूत्रमण्डनभाष्यम् ]

**न सिध्यन्ति । आदेशः स्थानिवदित्यु-च्यते । न च लोप आदेशः ॥**

**(प्र०) न च लोप इति ।** दिशिरुच्चारणक्रियो, न च लोप उच्चार्यते, अभावरूपत्वात् ।

[ प्रत्याख्यानभाष्यम् ]

**लोपोऽप्यादेशः । कथम् ?॥ आदिश्यते यः स आदेशः, लोपोऽप्यादिश्यते ॥**

**(प्र०) लोपोऽपीति ।** प्रतिपादनक्रियोऽत्र[2] दिशिरिति भावः ।

[ प्रत्याख्यानसाधनभाष्यम् ]

**दोषः खल्वपि स्याद्यदि लोपो नादेशः स्यात् । इह 'अचः परस्मिन् पूर्वविधौ' इत्येतस्य भूयिष्ठानि लोप उदाहरणानि तानि न स्युः ॥**

[ सूत्रारम्भावश्यकताभाष्यम् ]

**यत्र तर्हि स्थानिवद्भावो नास्ति, तद-र्थमयं योगो वक्तव्यः ॥**

**क्व च स्थानिवद्भावो नास्ति ?॥**

**योऽल्विधिः ॥ किं प्रयोजनम् ? ॥**

[ आरम्भवादिवार्त्तिकम् ]

॥*॥ *प्रयोजनं[3] ङौनकारलोपेत्त्वेम्विधयः[3]* ॥*॥

**[ङौनकारलोपेत्त्वेम्विधयः प्रयोजयन्ति]। [ ङौनकारलोप-'आर्द्रे चर्मन्' 'लोहिते चर्मन्' । 'अनल्विधौ' इतिवचनात्स्थानि-वद्भावो न प्राप्नोति । प्रत्ययलक्षणेन यचीति भसंज्ञा सिद्धा भवति ॥ इत्त्वम्-आशीः । 'अनल्विधौ' इति वचनात्स्थानि-वद्भावो न प्राप्नोति । प्रत्ययलक्षणेन हलीती-त्त्वं सिद्धं भवति ॥ इम्-अतृणेट् । 'अनल्वि-धौ' इति वचनात्स्थानिवद्भावो न प्राप्नोति । प्रत्ययलक्षणेन हलीतीम्सिद्धो भवति ] ।**

(उ०) भाष्ये-प्रयोजनं ङाविति । सूत्रारम्भवादी ।

[ प्रत्याख्यानवादिवार्तिकम् ]

॥*॥ *भसंज्ञाङीप्ष्फगोरात्वेषु च दोषः* ॥*॥

**भसंज्ञाङीप्ष्फगोरात्वेषु च दोषो भवति ॥**

**(उ०)** प्रत्याख्यानवाद्याह-**भसंज्ञेत्यादि ।**

**[ [4]भसंज्ञा-राज्ञः पुरुषो राजपुरुषः । प्रत्ययलक्षणेन यचीति भसंज्ञायां 'न लोपः प्रातिपदिकान्तस्ये'ति नलोपो न प्राप्नोति ।**

**ङीप्-चित्रायां जाता चित्रा । प्रत्यय-लक्षणेनाऽणन्तादितीकारः प्राप्नोति ॥**

**ष्फ-वतण्डी । प्रत्ययलक्षणेन यञन्ता-दकारान्तादिति ष्फः प्राप्नोति ॥**

**गोरात्व-गामिच्छति गव्यति । प्रत्यय-लक्षणेन 'औतोम्शसो' रित्यात्वं प्राप्नोति]॥**

---

१ 'तस्य प्रवृत्ति' । २ क्वचिन्न । ३ इदं भाष्यमित्यन्ये ।

४ इयमीदृशी वा व्याख्या लुप्ता स्यात् ।

[ सूत्रारम्भवादिभाष्यम् ]

**भसंज्ञायां तावन्न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति-'न प्रत्ययलक्षणेन भसंज्ञा भवती'ति, यदयं-'न ङिसंबुद्ध्यो'रिति ङौ प्रतिषेधं शास्ति॥ ङीप्यपि,-नैवं विज्ञायते-अणन्तादकारान्तादिति।**

**कथं तर्हि?॥ अण्योऽकार इति॥ ष्फेऽपि,-नैवं विज्ञायते-यञन्तादकारान्तादिति॥ कथं तर्हि?॥ यञ्योऽकार इति॥ गोरात्वेऽपि, नैवं विज्ञायते-अमि अचीति॥ कथं तर्हि?॥ अच्यमीति॥**

(प्र०) **अण्योऽकार इति।** अकारेणाऽणन्तं न विशेष्यते, किं तर्ह्यणेव, सवर्श्चाण् अकार एवेति विशेषणसामर्थ्याच्छ्रूयमाणाऽकाररूपादण इति विज्ञायते। अथवाऽण्योकार इति अणाऽकारो विशेष्यत वर्णनिमित्तो ङीप्, न तु प्रत्ययनिमित्त इति प्रत्ययलक्षणाऽभावः। **यञ्योऽकार इति।** अकारावयव इत्यर्थः : अथ वा-यञवयवे यञ्शब्दोऽत्र वर्तते। यञवयवो योऽकार इत्यर्थः। पूर्ववदेतदपि व्याख्येयम्। **अच्यमीति।** अच् प्रधानं, तद्विशेषणममीति तदादिविध्यभावः। तत्र वर्णनिमित्तमात्वम्, न प्रत्ययनिमित्तमिति दोषाऽभावः॥

(उ०) सूत्रारम्भवाद्याह-**भसंज्ञायां तावदिति। यदयं न ङीति।** अङ्गाधिकारप्रतिनिर्देशपक्षेऽयं ज्ञापकोपन्यासः। **अकारेणाऽणन्तमिति।** तद्धि जातेरखांत्यादे राखुरित्यादौ व्यावृत्तये आवश्यकम्। ननु प्रत्ययग्रहणसामर्थ्येन प्रधानतया प्रत्ययत्वेन प्रत्ययस्य यत्र निमित्तता तत्रैवाऽल्विध्यर्थमिदम्। एवं चाकाररूपो योऽणित्यर्थेऽपि प्रत्ययलक्षणं दुर्वारमत आह-**विशेषणेति।** वस्तुतोऽकार एव विशेष्य इत्याह-**अणेति। ननु प्रत्ययनिमित्त इति।** प्राधान्येन प्रत्ययनिमित्त इत्यर्थः। अज्झलात्मकयञोऽकारेण सामानाधिकरण्याऽसंभवादाह-**अकारावयवेति।** बहुव्रीहिः। अस्य विशेषणत्वे इदम्। 'गुणे त्वन्याय्यकल्पने'ति न्यायादिति भावः। नन्वेवं सति मत्यादिष्वतिप्रसङ्गवारणायाऽजाद्यत इत्यत्र मुख्यार्थस्योत्तरत्र लक्षणायां वक्तव्यं स्यादतो व्याख्यानान्तरमाह-**अथवेति। तद्विशेषणमिति।** अमोऽवयवेऽचीत्यर्थ इति भावः।

[ प्रत्याख्यानभाष्यम् ]

**प्रयोजनान्यपि तर्हि तानि न सन्ति[१]।**

(उ०) एवं प्रत्याख्यानवाद्युक्तदोषेषु परिहृतेषु प्रत्याख्यानवाद्याह-**प्रयोजनान्यपीत्यादि।**

[ तस्यैव दूषणोद्धारभाष्यम् ]

**यत्तावदुच्यते-ङौ नकारलोप इति। क्रियत एतन्न्यास एव-'न ङिसंबुद्ध्यो'रिति॥**

(प्र०) **क्रियत एतदिति।** त्वयापि ज्ञापनार्थमवश्यं वक्तव्यमिति भावः॥

(उ०) **ज्ञापनार्थमिति।** 'प्रत्ययलक्षणेन भत्वं नेत्य-स्ये'ति शेषः। 'न लुमता तस्मि'न्नित्यनाश्रित्येदम्॥

[ दूषणोद्धारभाष्यम् ]

**इत्त्वमपि—वक्ष्यत्येतत् 'शास इत्त्वे आशासः क्वा' इति॥**

(प्र०) **शास इत्त्वे इति।** कृतेऽप्यस्मिन् सूत्रे नियमार्थमेतद्वक्तव्यमाशास्ते इत्यादौ मा भूत्। अकृते तु विध्यर्थम्। आशास्त इत्यादौ तु न भवति, शासु अनुशिष्टावित्यस्यैव तत्र ग्रहणात्॥

(उ०) **अकृतेस्त्विति।** परस्मैपदिविहिताङ्साहचार्यात् शासुधातोरेव ग्रहणं तत्रेति पक्षे विध्यर्थम्। नन्वेवमप्याशीरित्यादिसिद्धिरिति चेत्। अत्राहुः शास इदिति सामान्यसूत्रम्। ततोऽङि। इत्यादौ चेदङ्येवेति नियमार्थमिदम्। एवं च सूत्रे हल्ग्रहणं मास्त्विति मित्रशीरित्यादिसिद्धिः। **आशासः क्वाविति** त्वत्र शासेरेव ग्रहणे विध्यर्थम्। अन्यथा नियमार्थमिति आशास्ते इत्यादौ न दोष इति॥

**इग्विधिरपि-हलीति निवृत्तम्॥**

[ आक्षेपभाष्यम् ]

**यदि हलीति निवृत्तं-तृणहानि,-अत्रापि प्राप्नोति॥**

[ समाधानाभाष्यम् ]

**एवं तर्हि—'अचि ने'त्यप्यनुवर्तिष्यते॥**

[ प्रश्नभाष्यम् ]

**न तर्हीदानीमयं योगो वक्तव्यः?॥**

(उ०) अथ वार्तिकोक्तविध्यर्थत्वे दूषिते भाष्यकृन्नियमार्थं सूत्रमिति प्रश्नपूर्वकमाह-**न तर्हीत्यादि॥**

[ सिद्धान्तिनः समाधानभाष्यम् ]

**वक्तव्यश्च॥ किं प्रयोजनम्?॥ प्रत्ययं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन यथा**

१ अपिः क्वचिन्न।

२ नैतानि।

**स्यात् । शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूदिति ॥ किं प्रयोजनम् ? ॥ शोभना दृषदोऽस्य [ ब्राह्मणस्य ] सुदृष ब्राह्मणः । 'सोर्मनसी अलोमोषसी' इत्येष स्वरो माभूदिति ॥ [ प्रत्ययलोपे प्रत्यय ] ॥**

( प्र० ) **प्रत्ययं गृहीत्वेति** । स्थानिवद्भावेन सिद्धे सत्ययं योगो नियमार्थः । प्रत्यय एव यस्य लक्षणं तत्प्रत्ययलोपे यथा स्यात् । 'सोर्मनसी' इत्यत्र लनिनस्मन्ग्रहणानि चेति वचनादस्प्रत्ययश्चाऽप्रत्ययश्च गृह्यते इति सुदृषदित्यत्राऽपि स्थानिवद्भावाऽभावादुत्तरपदाद्युदात्तत्वाऽभावे नञ्सुभ्यामित्यन्तोदात्तत्वं भवति । तत्र चोत्तरपदादिरित्यधिकारादसन्तमुत्तरपदं गृह्यते इति सुदृषदित्यत्रापि स्थानिवद्भावादसन्तत्वमुत्तरपदस्य स्यात् ॥

(उ०) **प्रत्ययं गृहीत्वेति** । प्रत्ययत्वतद्व्याप्यधर्मपुरस्कारेण यदुच्यत इत्यर्थः । **शब्दं गृहीत्वेति** । उक्तधर्मातिरिक्तपुरस्कारेण यदुच्यत इत्यर्थः । ननु शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूत्स्थानिवत्त्वेन तु स्यादत आह—**स्थानिवदिति** । **प्रत्यय एवेति** । उक्तोऽर्थः[2] । एतदर्थमेव द्वितीयं प्रत्ययपदम् । न चाऽ**लोमोषसी** इति पर्युदासेन श्रूयमाणाऽसन्तस्यैव ग्रहणमिति नियमो व्यर्थ इति वाच्यम् । पर्युदासेन प्रत्ययाऽसन्तस्यैव ग्रहणापत्तौ सुव इत्यादौ स्वरानापत्तेरिति भाष्याशयात् । ननु स्थानिनिमित्तं यदन्यस्य कार्यं तत्स्थानिवत्त्वेन लोपेऽपि, न तु तस्यैव । असतो वचनशतेनापि कार्यित्वाऽप्रतिपादनात् । इह चाऽसत एव कार्यित्वमत आह—**तत्र चेति** । **सोर्मनसी** इति सूत्रे इत्यर्थः ॥

---

## न लुमताङ्गस्य ॥ १ । १ । ६२ ॥

*॥*॥ लुमति प्रतिषेध एकपदस्वरस्योपसङ्ख्यानम् ॥*॥*

**लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानं कर्तव्यम् ॥ एकपदस्वरे च लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् ॥**

( प्र० ) **न लुमताङ्गस्य** । **लुमतीति** । लुमत्संज्ञया प्रतिपादितमदर्शनं लुमत् , तत्र यः प्रतिषेधस्तस्मिन्नित्यर्थः । **एकपदस्वरस्येति** । एकपदाश्रयो यः स्वरस्तस्येत्यर्थः । यस्तु 'पदस्य पदा'दिति पदद्वयाश्रयः स्वरः, तत्र प्रत्ययलक्षणं भवत्येव, दधि तिष्ठतीति । 'तिङ्ङतिङ' इति निघातः । 'अङ्गस्ये'त्यङ्गाधिकारनिर्देशात् ञ्निति कित्स्वरस्य चाऽनाङ्गत्वात्प्राप्तिरिति भावः ॥

(उ०) **न लुमता** । लोपक्रियानिरूपिता करणे तृतीया । यद्यपि लुशब्दयोगात्संज्ञा लुमद्वाच्या । न च तत्रायं प्रतिषेधः किंतु तत्प्रतिपादिताऽदर्शने । एवं च 'लुमति प्रतिषेध' इत्यनुपपन्नम् । तथापि वाचकधर्मस्य[3] वाच्य उपचार इत्याह **लुमदिति** । ननु सर्वोऽपि स्वरः कार्यित्वेनैकमेव पदं गृह्णातीत्यत आह—**एकेति** । 'सर्वामन्त्रिते'त्यत्रामन्त्रितपदेनाष्टमिकमपि ग्रहीतुं शक्यमिति 'पदस्य पदा'दित्यधिकारेऽनन्तरमप्यामन्त्रितस्येत्युल्लङ्घ्य व्यवहितमुदाहरति—**दधीति** । **अङ्गस्येत्यधिकारेति** । वस्तुतस्तदनिर्देशेऽप्यावश्यकमेतत् । तथाहि—सौवरीणां सप्तमीनां 'भीह्रीमदे'ति[4] सूत्रे 'प्रत्ययात्पूर्व'मिति पूर्वग्रहणेन तदन्तसप्तमीत्वस्य षाष्ठभाष्ये तत्सूत्रे एवोक्तत्वेन स्वराणां प्रत्यये परतः पूर्वकार्यत्वाऽभावात् । कित्स्वरे षष्ठ्या एव सत्त्वाच्च । ननु 'संज्ञायामुपमान'मिति 'उपमानशब्दः संज्ञायामाद्युदात्त' इत्यर्थकं कनो लुपि चञ्चेव चञ्चेत्यादावाद्युदात्तसाधकं 'ञ्नित्यादि'रित्येव सिद्धे व्यर्थं सदनुबन्धलक्षणे स्वरे प्रत्ययलक्षणाऽभावज्ञापकमिति तत्सूत्रे[5] भाष्ये स्पष्टम् । तेनेदं विरुध्येतेति चेन्न । प्रकृतसूत्रे वार्त्तिकव्याख्यानमात्रं, षष्ठे तु प्रत्याख्यातानीमानीत्यविरोधात् । अत एव तत्र भाष्ये पथिमथिस्वरार्थं वचनं कर्तव्य'मित्युक्तम् । एवं च तदर्थस्यात्रत्यवचनस्य कर्त्तव्यत्वं वदताऽन्येषामकर्त्तव्यत्वमर्थादुक्तमेव । एतेन 'भीह्री'ति ज्ञापकं विशेषापेक्षं' सप्तम्यर्थग्रहणे तदन्तग्रहणे च यत्र फलभेदस्तद्विषयम् । एवं **चोपोत्तमं रिती**त्यादावेव तत्प्रवृत्तिरिति न 'ञ्नित्यादि'रित्यादौ तत्प्रवृत्तिरिति कैयटाशय इति परास्तम् । 'संज्ञायामुपमान'मिति सूत्रस्थभाष्यविरोधात् । तस्माज्ज्ञापकस्य सामान्यापेक्षत्वमेवोचितम् । तत्र सप्तम्या यथाश्रुतत्वे हि **न लुमते**ति निषेधात्तदप्राप्तौ 'ञ्नितीं'ति प्रयोजन'मिति भाष्यासङ्गतिः स्पष्टैव । न चाङ्गाधिकारप्रतिनिर्देशपक्षे तद्भाष्यं, सिद्धान्तपक्षे योजयितुं शक्यत्वादिति दिक् ॥

[ प्रत्याक्षेपतत्समाधानभाष्यम् ]

**किमविशेषेण ? ॥ नेत्याह ॥**

*॥*॥ सर्वामन्त्रितसिज्लुक्स्वरवर्जम् ॥*॥*

**सर्वस्वरमामन्त्रितस्वरं सिज्लुक्स्वरं**

---

१ क्वचिन्न । २ उक्तः–प्रत्ययत्वतद्व्याप्यान्यतरधर्माक्रान्तः । ३ धर्मस्य–लुशब्दयोगस्य । ४ भीह्रीमदेति सूत्रे इत्यर्थः । ५ 'सञ्ज्ञायामुपमान'मितिसूत्रे इत्यर्थः । ६ 'सर्वस्वर' ।

च वर्जयित्वा ॥

सर्वस्वर-सर्वस्तोमः सर्वपृष्ठः। 'सर्वस्य सुपी'त्याद्युदात्तत्वं यथा स्यात्।

( प्र० ) सर्वस्तोम इति । 'सर्वस्य सुपी'ति यदाद्युदात्तत्वं, तदेव 'बहुव्रीहौ प्रकृत्ये'ति विधीयत इत्येकपदस्वरो भवत्येव ॥

(उ०) षष्ठीसमासादौ परत्वात्सतिशिष्टत्वाच्च समासान्तोदात्तत्वस्यैव प्राप्तेर्भाष्ये सर्वस्तोम इति बहुव्रीहिरुदाहृतः । तत्र बहुव्रीहिस्वरस्य द्विपदाश्रयत्वात्प्रतिषेधस्यैवाप्राप्तेः कथं तदपवादे इदमुदाहरणमत आह-सर्वस्येति । विधीयत इति । अपवादनिवर्त्तनेन व्यवस्थाप्यत इत्यर्थः॥

आमन्त्रितस्वर—सर्पिरागच्छ सप्ताऽऽगच्छत। 'आमन्त्रितस्य चे'त्याद्युदात्तत्वं यथा स्यात्।

( प्र० ) सर्पिरिति । सर्पिःशब्दोऽन्तोदात्तः प्रत्ययस्वरेण, घृतादित्वाद्वा । सप्तन्शब्दोऽपि घृतादित्वादन्तोदात्तः । नित्स्वरेण त्वाद्युदात्तत्वे विशेषो न स्यात् ॥

( उ० ) प्रत्ययस्वरेणेति । इसिप्रत्ययान्तत्वादिति भावः । नब्विषयस्येत्यस्य तु न प्राप्तिः, 'अनिसन्तस्ये'ति पर्युदासात्। घृतादित्वकल्पनं तु किमर्थमिति चिन्त्यम्। नित्स्वरेणेति। सप्तन्शब्दो हि 'सप्यशूभ्यां तुट् चे'ति कनिन्नन्तः। 'ष्नः सङ्ख्याया' इत्यप्याद्युदात्तत्वं प्राप्नोतीति द्रष्टव्यम् ॥

सिज्लुक्स्वर—मा हि दाताम्, मा हि धाताम्। 'आदिः सिचोऽन्यतरस्याम्' इत्येष स्वरो यथा स्यात् ॥

(प्र०) मा हि दातामिति। 'गातिस्थाघ्वि'ति सिचो लुक्। लेरेव लुकि विधातव्ये सिचो लुग्विधानं प्रत्ययलक्षणार्थम् ॥

(उ०) 'माहिदाता'मित्यत्राट्प्रतिषेधाय माङ्। हिशब्दो हि चेति निघातप्रतिषेधार्थः। सिज्लुक्स्वरवर्जनं न कार्यमित्याह-लेरिति। गातीत्यनेन च्लेरेव लुकि 'मन्त्रे घसे'त्यत्र पुनर्लिग्रहणं न कार्यम्। जुस्विधावात इत्येतच्च विध्यर्थं स्यादिति लाघवमिति भावः। प्रत्ययलक्षणार्थमिति। प्रत्ययलक्षणेन सिज्निमित्तकार्यार्थमित्यर्थः ॥

किं प्रयोजनम् ? ॥

[ प्रयोजनवार्तिकम् ]

॥*॥ प्रयोजनं ञिनिकिल्लुकि स्वराः ॥*॥

ञिनिकित्स्वरा लुकि प्रयोजयन्ति। गर्गा वत्सा विदा उर्वाः, उष्ट्रग्रीवा वामरज्जुः। 'ञ्निति' इत्याद्युदात्तत्वं मा भूदिति॥ इह च-अत्रयः,-'कितः' इत्यन्तोदात्तत्वं मा भूदिति ॥

( प्र० ) ञिनिकिल्लुकीति। इकार उच्चारणार्थः। ञिन्कितां प्रत्ययानां लुकि कृते स्वरा निवर्त्यमानतया प्रयोजनमिति पदानां सम्बन्धः। भाष्यकारस्तु वस्त्वर्थं व्याचष्टे-ञिनिकित्स्वरा इति। 'प्रतिषेध'मित्यध्याहारः। उष्ट्रग्रीवा वामरज्जुरिति। देवपथादित्वात्कनो लुप्। असंज्ञायां चेदमुदाहरणम्। संज्ञायां तु संज्ञायामुपमानमिति भवितव्यमाद्युदात्तत्वेन। अत्रय इति। 'राशदिभ्यां त्रिप्', 'अदेस्त्रिनिश्चे'ति त्रिबन्तोऽत्रिशब्द आद्युदात्तः ॥

( उ० ) ननु ञिनिकित्स्वरा इति भाष्यदर्शनाञ्ञिनिकितां स्वरविशेषणत्वेन लुका समासोऽनुपपन्न इत्यत आह-ञ्नित्कितामिति। 'प्रयोजयन्ती'त्यस्य कर्माकाङ्क्षायामाह-प्रतिषेधमिति। लुबिति। वार्त्तिके लुकीत्युपलक्षणमिति भावः। भाष्ये आद्युदात्तत्वं माभूदिति। एवं च प्रातिपदिकादिस्वरेणान्तोदात्तत्वमेवेति भावः। अत्रिशब्दादितश्चाऽनिञ इति ढकोऽत्रिभृग्विति लुक्। नन्वत्रय इत्यत्र कित्वप्रयुक्तान्तोदात्तत्वाभावेऽपि प्रातिपदिकस्वरेण तत्त्वं दुर्वारमत आह-राशदीति। त्रिबन्त इति। नान्तस्त्वन्तोदात्त इति भावः। इदं प्रयोजनं कित्तद्धितान्तस्यान्त उदात्त इत्यर्थे बोध्यम्। कितः प्रत्ययस्यैवान्तोदात्तत्वे तु प्रत्ययलक्षणेन कार्यिणोऽसम्पादनान्न दोषः। अत एव नस्निर्भिन्न इत्यैलेत्याहुः ॥

[ प्रयोजनान्तरवार्तिकम् ]

॥*॥ पथिमथोः सर्वनामस्थाने [लुकि] ॥*॥

पथिमथोः सर्वनामस्थाने लुकि प्रयोजनम् ॥ [लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् ]। पथिप्रियः मथिप्रियः। 'पथिमथोः सर्वनामस्थाने' इत्येष स्वरो मा भूदिति ॥

(प्र०) पथिप्रियो मथिप्रिय इति। पूर्वपद-

१'उदात्तं'। २ कचिन्नायमंशः। ३ 'ञ्निकि'। ४ 'प्रयोजनं'। ५'ग्रीवाः'। ६अत एव-तेन कार्यिणोऽसम्पादनादेव। ७कचिन्न।

प्रकृतिस्वरेणान्तोदात्तौ पथिमथिशब्दौ भवतः ॥

(उ०) पथिमथिशब्दौ इनिप्रत्ययान्ततया प्रत्ययस्वरेण फिषोन्त इति वाऽन्तोदात्तौ। तयोः सर्वनामस्थाननिमित्तमाद्युदात्तत्वमत्रापि स्यादित्यर्थः ॥

[ आक्षेपवार्तिकम् ]

*॥ * ॥ अह्नो रविधौ ॥*॥*

**अह्नो रविधाने लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् ॥ अहर्ददाति अहर्भुङ्क्ते । 'रोऽसुपी'ति प्रत्ययलक्षणेन प्रतिषेधो मा भूदिति ॥**

(प्र०) अहर्ददातीति। 'अंसुपी'ति प्रसज्यप्रतिषेधः। पर्युदासे तु 'दीर्घाहा निदाघ' इत्यत्रापि सुप्सदृशे निदाघशब्दे परतो रत्वं स्यात्। रुत्वं चेष्यते। लोपशब्देन सोर्लुप्तत्वात्प्रत्ययलक्षणेन सुपि नेति रत्वप्रतिषेधाद्रुत्वे यत्वे तस्य च लोपे दीर्घाहा निदाघ इति सिध्यति। लुकि तु प्रत्ययलक्षणप्रतिषेधाद्रत्वे सत्युत्वाऽभावादहर्ददातीत्यादि सिध्यति।

(उ०) भाष्ये प्रतिषेधो माभूदिति। तेन[1]ऽपर्युदासत्वं सूचितम्। तदुपपादयति-पर्युदासे तु इति। प्रत्ययत्वेन सुप्सादृश्ये तु अहर्ददातीत्यत्रापि रत्वं न स्यादित्यर्थः। नन्विष्यमाणमपि रुत्वं न प्राप्नोति। प्रत्ययलक्षणनिषेधेन रत्वस्यैव प्राप्तेरत आह—लोपशब्देनेति। हल्ङ्यादि सूत्रेणेति भावः। लुमता लुप्त एव स निषेध इति तात्पर्यम्। 'न लुमता तस्मिन्नि'ति पक्षे तु नेदमावश्यकम् ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ उत्तरपदत्वे चाऽपदादिविधौ ॥*॥*

**उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। परमवाचा परमवाचे, परमगोदुहा परमगोदुहे, परमश्वलिहा परमश्वलिहे। पदस्येति प्रत्ययलक्षणेन कुत्वादीनि मा भूवन्निति ॥**

**अपदादिविधाविति किमर्थम् ? ॥ दधिसेचौ दधिसेचः-'सात्पदाद्यो'रिति प्रतिषेधो यथा स्यात् ॥**

(प्र०) उत्तरपदत्वे चेति। उत्तरपदमुत्तरशब्देनोच्यते, पदैकदेशलोपात्। तेनोत्तरपदस्य पदत्वे पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः। परमवाचेति। समासार्था या विभक्तिः कृता, तां प्रत्ययलक्षणेनाश्रित्य पदत्वनिबन्धनानि कुत्वादीनि प्राप्नुवन्ति। भसंज्ञा तु यस्माद्यजादिविधिरिति समुदायस्यैव, न त्ववयवस्य। दधिसेचाविति। दध्नः सेचाविति षष्ठीसमासः। उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात्सेचशब्दस्य पदसंज्ञाया अभावात्पदादित्वं सकारस्य न स्यात्। अनभिधानाच्च सोपपदाद्विजभावाद्दधिषेचावित्यादिप्रयोगाऽभावात्॥

(उ०) 'उत्तरपदत्वे च'ति सर्वथा कार्यम्। ननु सामान्यत उत्तरस्य पदत्व इत्यर्थे 'परमं चर्मे'त्यत्रापि निषेधापत्तौ नलोपो न स्यादत आह-उत्तरपदमिति। अत एव 'बहुच्पूर्वस्य ने'ति वचनमर्थवदिति भावः। उत्तरपदशब्दश्च समासचरमावयवे रूढ इत्यसमासे नातिप्रसङ्ग इति बोध्यम्। समासार्थेति। तत्र सुप्सुपेत्यधिकारादिति भावः। तां-'सुपो धातु'ति लुप्ताम्। कुत्वादीनि-कुत्वघत्वढत्वानि। ननु भत्वेन पदत्वबाधोऽतआह-यस्मादिति। तथा च भिन्नावधित्वान्न बाध्यबाधकभाव इति भावः। भाष्ये-पदस्येतीति। 'पदस्ये'त्यधिकृत्य यानि विहितानीत्यर्थः। ननु सोपपदात्सिचेर्विचि दधिषेचाविति स्यादेव। न चेष्टापत्तिः। पदादादिरिति पक्षे दुर्लभत्वादत आह-अनभिधानादिति। तस्य[2] च्छान्दसत्वादिति भावः॥

[ आक्षेपभाष्यम् ]

**यद्यपदादिविधावित्युच्यते उत्तरपदाधिकारो न प्रकल्पेत॥तत्र को दोषः? ॥'कर्णो वर्णलक्षणा'दित्येवमादिविधिर्न सिध्यति ॥**

( प्र० ) कर्णो वर्णलक्षणादिति। नन्वपदादिविधावित्युच्यते, स्वरश्चाऽयं पदादिविधिः। ककारोऽत्रादिः, नत्वकार इत्यदोषः। स्वरविधौ व्यञ्जनमविद्यमानवत्, नत्वादिव्यपदेशे। सूत्रं चाऽसमासार्थं स्यात्। कर्णशब्दादर्शआदित्वादचि कृते शुक्लः कर्ण इत्याद्युदात्तत्वं यथा स्यात् ॥

( उ० ) भाष्ये यद्यपदादीत्येकदेशेन सम्पूर्णवार्तिकमुपलक्ष्यते। यतः प्रतिषेधस्याऽतिव्याप्तिर्न प्रतिषेधापवादस्येति बोध्यम्। स्वरश्चेति। उत्तरपदादिरित्यधिकारादिति भावः। नञ्समासे 'स्वाङ्गशिटा'मिति कर्णस्याद्युदात्तत्वं सिद्धमेवेत्यत आह—कर्णशब्दादिति। 'एवमादि-

१ तेन–प्रतिषेधपदेन।

२ तस्य–विनः।

विधिर्न सिध्यती'ति भाष्यादुत्तरपदादिरित्यधिकारस्थ-सूत्राणां वैयर्थ्यस्यैव दूषणत्वेन प्रतीतिरित्येके ॥

[ आक्षेपबाधकभाष्यम् ]

**यदि पुनर्नलोपादिविधौ प्रत्यन्ते 'लुमता लुप्ते प्रत्ययलक्षणं न भवती'त्युच्येते ॥**

( प्र० ) यदि पुनरिति । तेन पूर्वस्मिन् परत्र च भवत्येव प्रत्ययलक्षणम् ॥

[ न्यासान्तरनिरासभाष्यम् ]

**नैवं शक्यम् । इह हि राजकुमार्यौ राजकुमार्यं इति । शाकलं प्रसज्येत ॥**

(प्र०) राजकुमार्याविति । इकोऽसवर्ण इत्यत्रै-ङः पदान्तादतीत्यतः पदान्तग्रहणमनुवर्तते । तत्र प्रत्ययलक्षणेन पदान्तत्वाच्छाकलप्रसङ्गः ॥

[ न्यासान्तरस्थापनभाष्यम् ]

**नैष दोषः । यदेतत्-'सिति शाकलं ने'ति, एतत्-'प्रत्यये शाकलं ने'ति वक्ष्यामि॥**

[ आक्षेपभाष्यम् ]

**यदि 'प्रत्यये शाकलं ने'त्युच्यते,'दधि अधुना' 'मधु अधुना' अत्राऽपि न प्रसज्येत॥**

( प्र० ) दधि अधुनेति । अधुनाप्रत्यय इदमो विधीयते, तत इदम इश् । 'यस्येति चे'ति लोपः ॥

[ दोषनिरासभाष्यम् ]

**प्रत्यये शाकलं न भवति ॥ कस्मिन् ? ॥ यस्माद्यः प्रत्ययो विहित इति ॥**

(प्र०) यस्माद्य इति । प्रत्यासत्त्येति भावः । राजकुमार्यावित्यत्र यद्यपि समुदायाद्विहितस्तथाप्य-वयवादप्यसौ विहित इति बुद्धिर्भवत्येव । समुदाय-द्विर्वचनेऽवयवद्विर्वचनबुद्धिवत् ॥

( उ० ) प्रत्यासत्त्येति । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादे'रित्युपस्थित्येति भावः । तथापीति । वस्तुतो राजकुमार्यावित्यत्रापि दोषः । समुदायादसौ विहितो नावय-वात् । अन्यथा कौरुचरेय इत्यादौ चकाराकारस्यापि वृद्धिः स्यात् । इहतर्हीत्यादिभाष्यं तु अभ्युपेत्यवादेन । प्लुतेरग्रे तु नोत्तरपदत्वेचेत्यस्य प्रवृत्तिः । अत एव पूर्वत्रैव दोषेणेदं दूषितं भगवतेति बोध्यम् । ङमोह्रस्वादिति सूत्रस्थभाष्यं त्वेकदेश्युक्तिरिति न दोष इति तत्रैव निरूपयिष्यामः ॥

[ आक्षेपभाष्यम् ]

**इह तर्हि परमदिवा परमदिवे । 'दिव उ'दित्युत्त्वं प्राप्नोति ॥**

(प्र०) उत्त्वमिति । उत्त्वविधा'वेङः पदान्ता'-दिति पदाऽधिकारः ॥

[ पक्षान्तरभाष्यम् ]

**अस्तु तर्ह्यविशेषेण ॥**

[ दोषस्मारणभाष्यम् ]

**ननु चोक्तम्—'उत्तरपदाधिकारो न प्रकल्पेते'ति ॥**

[ परिहारभाष्यम् ]

**वचनादुत्तरपदाधिकारो भविष्यति ॥**

(प्र०) वचनादिति । समासे ह्युत्तरपदं भवति । न च कर्णशब्दो अच्प्रत्ययान्तोऽस्ति, अर्शआदिषु हि 'स्वाङ्गाद्धीना'दिति पठ्यते । तेन खञ्जादिभ्य एव हीनस्वाङ्गवाचिभ्योऽच्प्रत्ययो भवति । न च कर्ण-शब्दो हीनस्वाङ्गवाची ॥

(उ०) समासचरमावयवे उत्तरपदशब्दो रूढ इत्यभि-प्रेत्याह-समासे हीति । न तु पदत्वमपि तद्व्यवहारे प्रयो-जकमित्यर्थः । केवलरूढत्वे मानमुक्तम्, तुष्यतु दुर्जनन्यायेन केवलयोगेऽप्याह-न च कर्णेति । राजवाचककर्णशब्दस्य तु 'अभिव्यक्तपदार्था ये'इति न्यायान्न तत्र ग्रहणमिति भावः। काश्यपिनावित्यादौ 'छन्दोब्राह्मणानी'ति तद्विषयताबोधक-शास्त्रबलात् सुबुत्पत्तेः प्रागेव तद्धित इति न दोषः ॥

[ आक्षेपभाष्यम् ]

**तत्तर्हि वक्तव्यम् ॥**

(प्र०) तत्तर्हीति । 'उत्तरपदत्वे चापदादिवि-धा'वित्येतत् ॥

[ समाधानभाष्यम् ]

**न वक्तव्यम् । अनुवृत्तिः करिष्यते । इदमस्ति'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये-ऽङ्गम्'। 'सुप्तिङन्तं पदम्' । यस्मात्सुप्तिङ्वि-धिस्तदादि सुबन्तं च ॥ 'नः क्ये' । नान्तं क्ये पदसंज्ञं भवति, यस्मात् क्यवि-धिस्तदादि सुबन्तं च ॥ 'सिति च' । सिति च पूर्वं पदसंज्ञं भवति, यस्मात्सिद्विधिस्त-**

१ 'उच्यते' ।

२ 'कस्मिन्' ।

दादि सुबन्तं च॥ 'स्वादिष्वसर्वनामस्थाने'। स्वादिष्वसर्वनामस्थाने पूर्वं पदसंज्ञं भवति, यस्मात्स्वादिविधिस्तदादि सुबन्तं च॥ 'यचि भम्'। यजादिप्रत्यये पूर्वं भं भवति, यस्माद्यजादिविधिस्तदादि सुबन्तं च॥

(प्र०) यचि भमिति। ततश्च परवाचेत्यत्र वाक्शब्दस्य भत्वात्पदत्वाऽभावः॥

(उ०) भाष्ये—नः क्ये इत्यादितदादि सुबन्तं चेति। 'यस्मात्प्रत्ययविधि'रिति अवश्यमुत्तरत्रा[2]नुवर्त्यं परमैश्चतुर्भिरित्यादौ परमघटितसमुदायस्य पदत्ववारणाय। [3]तत्त्वे हि 'झल्युपोत्तम'मिति परमैरित्यस्यापि निघातापत्तिः। एवं च[4] तस्य 'नः क्ये' इत्यत्रापि संबन्धे यस्मात् क्यविधि स्तदादि यदि क्ये तन्निमित्तान्तर्वर्तिसुपा पदं तदा नान्तमेवेति नियमः स्यात्। तथा च 'परमवाच्यती'त्यादाववयव वाक्शब्दस्य पदत्वेन कुत्वं स्यात्। सूत्रं तु समिध्यतीत्येतद्व्यावृत्त्यर्थं स्यादिति सुबन्तमित्यपि संबध्यत इति भावः। तस्य च 'मध्ये चेत् सुबन्तं तदा तदपि नान्तमेव पद'मित्यर्थः। अन्वाचयशिष्टं च सुबन्तमिति सर्वत्र। संनियोगशिष्टत्वे 'षड्भ्य' इत्याद्यसिद्धिः। 'सिति चे'त्यत्र यद्यपि नास्योपयोगोऽवयवसुबन्ताऽप्रसिद्धेः, तथापि उत्तरत्रानुवृत्तिं दर्शयितुं तत्रापि तत्संबन्धो दर्शितः। व्यपदेशिवद्भावेन कथंचिदन्वयः संपाद्यः। एवं 'स्वादिष्वि'ति सूत्रेऽपि तदनुवृत्तिकरणमुत्तरार्थमेव। 'यचि भ'मित्यत्रापि पदसंज्ञया तुल्यावधिकत्वसिद्ध्यर्थं यस्मादित्याद्यनुवर्त्यमिति बोध्यम्॥

[ आक्षेपभाष्यम् ]

इह तर्हि—वाक् परमवाक्। 'असर्वनामस्थाने' इति प्रतिषेधः प्राप्नोति॥

(प्र०) इह तर्हीति। 'असर्वनामस्थाने'इति प्रसज्यप्रतिषेधं मन्यते। ततश्च सर्वनामस्थाने परतो यस्मात् स्वादिविधिस्तदादि सुबन्तं च पदसंज्ञं न भवतीति प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात् पदत्वप्रतिषेधात् कुत्वाऽप्राप्तिः॥

[ समाधानभाष्यम् ]

अस्तु तस्याः प्रतिषेधः—या स्वादौ पदमिति पदसंज्ञा, या तु 'सुबन्तं पद'मिति पदसंज्ञा सा भविष्यति। सत्येतत्प्रत्यये आसीदनया भविष्यत्यनया न भविष्यतीति।

(प्र०) सत्येतदिति। अवधिभेदात्संज्ञिनां भेदात्॥

(उ०) संज्ञिनां भेदादिति। सति सौ तदन्तस्य 'सुबन्त'मिति पदत्वम्। तत्प्राग्भागस्य स्वादिष्वितीति भावः॥

[ आक्षेपभाष्यम् ]

लुप्त इदानीं प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा, तावत एवावधेः सुबन्तं पदमिति। अस्ति च प्रत्ययलक्षणेन सर्वनामस्थानपरतेति कृत्वा 'प्रतिषेधाश्च बलीयांसो भवन्ती'ति प्रतिषेधः प्राप्नोति॥

(प्र०) बलीयांस इति। विध्युन्मूलनरूपत्वात्॥

(उ०) ननु अपरनिमित्तकत्वेनान्तरङ्गतया सुबन्तमिति पदत्वं स्यादत आह भाष्ये—प्रतिषेधाश्चेति। विध्युन्मूलनं—प्राप्तस्य विधेर्निवर्त्तनम्। एवं चापवादन्यायेनात्रान्तरङ्गाऽसंभव इति भावः। अ[त्रा॰ऽ]नुवर्तमानं 'सुबन्त'मित्यपि 'स्वादिष्वि'तिसूत्रेण तदनुवृत्त्या मध्यस्य सुबन्तस्य यत्प्राप्तं तन्निषेधकम्, न तु 'सुबन्त'मिति सूत्रप्राप्तस्येति बोध्यम्॥

[ समाधानवार्तिकम् ]

॥*॥ नाऽप्रतिषेधात् ॥*॥

नायं प्रसज्यप्रतिषेधः—सर्वनामस्थाने नेति॥ किं तर्हि?॥ पर्युदासोऽयम्—यदन्यत्सर्वनामस्थानादिति। सर्वनामस्थाने अव्यापारः। यदि केनचित्प्राप्नोति तेन भविष्यति। पूर्वेण च प्राप्नोति॥

॥*॥ अप्राप्तेर्वा ॥*॥

अथ वा—अनन्तरा या प्राप्तिः सा प्राप्तिः प्रतिषिध्यते॥ कुत एतत्?॥ 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति। पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति॥

[ आक्षेपभाष्यम् ]

ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधेते॥

[ समाधानभाष्यम् ]

नोत्सहते प्रतिषिद्धा सती बाधितुम्॥

(उ०) भाष्ये—नोत्सहत इति। स्वयमप्रवर्तमाना कथमन्यं बाधेतेति भावः॥

[ आक्षेपभाष्यम् ]

यद्येवं परमवाचौ परमवाच इति।

१ क्वचिन्न। २ उत्तरत्र—सुप्तिङन्तं पदमित्यत्र। ३ तत्त्वे—पदत्वे। ४ उत्तरत्रानुवृत्तौ चेत्यर्थः। ५ 'बाधेत'।

'सुप्तिङन्तं पद'मिति पदसंज्ञा प्राप्नोति ॥

[ समाधानभाष्यम् ]

एवं तर्हि योगविभागः करिष्यते— [ स्वादिषु']। स्वादिषु पूर्वं पदसंज्ञं भवति॥ ततः-'सर्वनामस्थाने अयचि'। [ सर्वनामस्थानेऽयचि ] पूर्वं पदसंज्ञं भवति। ततो-'भम्'। भसंज्ञं भवति यजादावसर्वनामस्थान इति ॥

(प्र०) एवं तर्हीति। योगविभागे सति सर्वा प्राप्तिः प्रतिषिध्यत इति दोषाऽभावः। 'असर्वनामस्थान' इति नञः क्रियापदेन सम्बन्धादुत्तरपदेनाऽसम्बन्धो, यचीत्येतच्च सर्वनामस्थानविशेषणम्। तेनायमर्थो भवति–यजादौ सर्वनामस्थाने परतः पदसंज्ञा न भवतीति। हलादौ तु सुशब्दे भवत्येव। भाष्ये तु वस्तुमात्रमुपन्यस्तं-'सर्वनामस्थानेअयचीति। यजादौ सर्वनामस्थाने पदसंज्ञानिषेधात्सामर्थ्यादयमर्थः संपद्यते–अयजादौ सर्वनामस्थाने पदसंज्ञा भवतीति ॥

(उ०) ननु सर्वनामस्थानेऽयचीति न्यासस्य पदत्वनिषेधकत्वेऽनन्तरस्येति न्यायेन स्वादिष्वित्यस्यैव निषेधे परमवाचावित्यादौ सुबन्तमिति पदत्वं स्यादत आह–योगविभागे इति। एवं च[2] तत्सामर्थ्याद[3]नन्तरस्येति न्यायबाध इति भावः। यचीत्यस्यपुरस्तादपकर्षफलमाह–हलादाविति। वस्तुमात्रम्–अर्थसिद्धोऽर्थः। तत्फलं नञः सर्वनामस्थानपदेनाऽसंबन्धप्रदर्शनम्।

[ आक्षेपभाष्यम् ]

यदि तर्हि-साचपि पदं भवति, पचः प्लुतविकारे पदान्तग्रहणं चोदयिष्यति, इह मा भूत्-भद्रं करोषि गौरिति। तस्मिन् क्रियमाणेऽपि प्राप्नोति ॥

(उ०) भाष्ये–प्लुतविकारे इति। प्लुतसहितविकारे इत्यर्थः। एचोऽप्रगृह्यस्याऽदूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुता' वित्यत्रेति भावः ॥

[ समाधानभाष्यम् ]

वाक्यपदयोरन्त्य[4]स्येत्येवं तत् ॥

(प्र०) वाक्यपदयोरिति। गौरित्यौकारो वाक्यान्तो न भवतीत्यादुतौ न भवतः ॥

[ आक्षेपभाष्यम् ]

इह तर्हि-दधिसेचौ दधिसेचः, 'सात्पदाद्यो'रिति पदादिलक्षणः षत्वप्रतिषेधो न प्राप्नोति ॥

(उ०) भाष्ये–इह तर्हीति। वार्तिकारम्भे त्वपदादिविधावित्युक्तेर्न दोषः। प्रत्याख्याने तु दोषः। कुत्वाऽभावाय पदत्वनिषेधप्रवृत्तेरावश्यकत्वात्। एतेन योगविभागसिद्धस्य कादाचित्कत्वान्न दोष इत्यपास्तमिति भावः।

[ समाधानभाष्यम् ]

मा भूदेवम्—पदस्यादिः पदादिः, पदादेर्नेति ॥ कथं तर्हि ?॥ पदादादिः पदादिः, पदादेर्नेत्येवं भविष्यति ॥

(प्र०) पदादादिरिति। 'पञ्चमी'ति योगविभागात्समासः ॥

(उ०) पञ्चमीति योगविभागादिति। 'पदा'दित्यस्य परशब्दान्वयेनाऽसामर्थ्यादत्र समासशास्त्राऽप्राप्तेः सौत्रः समास इति वक्तुमुचितम्।

[ आक्षेपभाष्यम् ]

नैवं शक्यम्। इहापि प्रसज्येत-ऋक्षु वाक्षु त्वक्षु कुमारीषु किशोरीष्विति ॥

[ समाधानभाष्यम् ]

सात्प्रतिषेधो ज्ञापकः–'स्वादिषुपरत्वेन येषां पदसंज्ञा, न तेभ्यः प्रतिषेधो भवतीति॥

(उ०) भाष्ये–न तेभ्यः प्रतिषेध इति। तेभ्यः परस्य 'सुबन्तं पद'मिति पदत्वमाश्रित्याऽपि न प्रतिषेध इत्यर्थः। अत एव परमवाक्षु इत्यादावपि न दोषः।

[ आक्षेपभाष्यम् ]

इह तर्हि—बहुसेचौ बहुसेचः। बहुजयं प्रत्ययः। अत्र पदादादिः पदादिः पदादेर्नेत्युच्यमानेऽपि न सिध्यति ॥

(उ०) भाष्ये–पदादादेर्नेत्युच्यमानेऽपीति। षष्ठीतत्पुरुषेऽपि न सिध्यति, कुत्वाऽभावाय पदत्वाऽभावस्यावश्यकत्वादित्यपेरर्थः। अयं बहुसेचि दोषो वार्तिकारम्भेऽपि, उत्तरपदत्वाऽभावेन निषेधाऽप्राप्त्या पदत्वसत्त्वेन षष्ठीतत्पुरुषेण षत्वनिषेधसाम्राज्येऽपि कुत्वप्राप्तेः।

एवं तर्हि–

'उत्तरपदत्वे च पदादिविधौ लुमता

१ कोष्ठगतः पाठो लुप्तः। ५ 'स्वादिषु पदत्वेन'। २ एवंच–योगविभागेच। ३ तत्सामर्थ्यात्–योगविभागसामर्थ्यात्। ४ 'न्तस्ये'।

**लुप्ते प्रत्ययलक्षणं भवती' ति वक्ष्यामि। तन्नियमार्थं भविष्यति—'पदादिविधावेव, न पदान्तविधा'विति ॥**

(उ०) इदानीं प्रत्याख्यानप्रकारस्य गौरवदुर्ज्ञेयत्वाभ्यामयुक्तत्वं मनसि निधाय लाघवाय नञ्रहितवचन पाठमाह-**एवं तर्हीति** । **न पदान्तविधाविति** । पदान्तस्थानिके विधावित्यर्थः । नञ्घटितवार्तिकस्याप्यत्रैव प्रवृत्ति र्व्याख्यानादेकफलत्वायेति बोध्यम् । [ न पदान्तविधाविति प्रतिनिर्देशादुत्तरपदत्वेचेत्यस्य वार्तिकस्य ङमुडादिविधौ णत्वादिविधौ चाऽप्रवृत्तिरिति बोध्यम् । ङमुट्सूत्रस्थ भाष्यं त्वेतद्विरोधादुञि च पद इति सूत्रभाष्यविरोधाच्च 'न लोपादिप्लुत्यन्त' इति वार्तिकस्थभाष्यविरोधाच्चैकदेश्युक्ति रिति बोध्यम्। एवं च प्रत्याख्यानप्रकारोऽपि योगविभागस्य काचित्कत्वेन ङमुडादिविषये न। इदमेव ध्वनयितुं प्रत्याख्यातमपि वार्तिकं पुनरक्षरान्तरैरुपात्तमित्याहुः ] ।

**कथं बहुसेचौ बहुसेचः ? ॥**

(प्र०) कथं बहुसेचाविति । समासाऽभावान्नोत्तरपदत्वम्, नापि पूर्वस्य पदत्वम् ।

(उ०) एतावतापि बहुसेचावित्यस्याऽसिद्धिरिति शङ्कते-**कथं बहुसेचाविति** । तदुपपादयति-**समासेति**। एवं च नियमाऽप्राप्तौ प्रत्ययलक्षणेन पदत्वात् षत्वनिषेधवत् 'चोः कुः पदान्तस्ये'ति कुत्वं स्यादिति भावः । पञ्चमी समासेऽपि षत्वापत्तिरित्याह-**नापि पूर्वस्येति** ।

[ समाधानवार्तिकम् ]

*॥[*॥ बहुच्पूर्वस्य [च] ॥*]॥*

**बहुच्पूर्वस्य च पदादिविधावेव, न पदान्तविधाविति ॥**

(उ०) भाष्ये-**बहुच्पूर्वस्य चेति** । आद्यवार्तिकारम्भे तत्प्रत्याख्याने च 'सात्पदाद्यो'रित्यत्रेदं कार्यमिति गूढ आशयः ।

[ आक्षेपवार्तिकम् ]

*॥*॥ द्वन्द्वेऽन्त्यस्य ॥*॥*

**द्वन्द्वेऽन्त्यस्य लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् ।[वाक् च स्रक् च त्वक् च] वाक्स्रक्त्वचम् ।**

(प्र०) द्वन्द्वेऽन्त्यस्येति । 'उत्तरपदत्वे चे'त्यनेनैव सिद्धे नियमार्थमिदमन्त्यस्यैवेति । मध्यमपदस्यापि पूर्वपदापेक्षयोत्तरपदत्वसंभवात्प्रत्ययलक्षणप्रतिषेधप्रसङ्गात् । मुख्ये तूत्तरपदे संभवति कथं मध्यमपदस्य ग्रहणं स्यादिति चिन्त्यमेतत् ।

(उ०) **मुख्येत्विति** । उत्तरपदशब्दस्य समासचरमावयवे रूढेरिति भावः । रूढस्यैव ग्रहणमित्येतदन्वाख्यापकं 'द्वन्द्वेचे'ति इति तत्त्वम् । प्रत्याख्यानेऽपि न मध्यमस्य प्राप्तिः, मध्यसुबन्तस्यापि स्वादिपरत्वेन विशेषणादिति बोध्यम् ।

[ आक्षेपभाष्यम् ]

**इहाऽभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति ॥**

[ समाधानवार्तिकम् ]

*॥*॥ सिचि जुसोऽप्रसङ्ग आकारप्रकरणात् ॥*॥*

**सिचि सिज्निमित्तस्य जुसोऽप्रसङ्गः । किं कारणम् ? ॥ 'आकारप्रकरणात्' । 'आतः' इतिवर्त्तते, तन्नियमार्थं भविष्यति—'आत एव च सिज्लुगन्तान्नान्यस्मात्सिज्लुगन्ता'दिति ।**

(प्र०) आकारप्रकरणादिति । आकारस्य नियमार्थत्वेन प्रस्तावादित्यर्थः । अथ वाऽऽकारे प्रकरणात्-आत इत्यत्र सिचः प्रकृतत्वादित्यर्थः ।

(उ०) **प्रस्तावादिति** । 'आत' इत्यस्यारम्भादित्यर्थः। **सिच इति** । अनेन विधित्वाऽसंभवो दर्शितः ।

[ आक्षेपभाष्यम् ]

**इह—'इतियुष्मत्पुत्रो ददाति' 'इत्यस्मत्पुत्रो ददाती'त्यत्र प्रत्ययलक्षणेन 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ' इति वान्नावादय आदेशाः प्राप्नुवन्ति।**

(प्र०) इतियुष्मत्पुत्र इति । पदादुत्तरयोर्युष्मदस्मदोरादेशविधानादितिशब्दप्रयोगः ।

[ समाधानवार्तिकम् ]

*॥*॥ युष्मदस्मदोः स्थग्रहणात् ॥*॥*

**स्थग्रहणं तत्र क्रियते तच्छ्रूयमाण-**

१ अयं पाठोऽग्रे 'गूढ आशय' इत्यतोऽग्रे दृश्यते सर्वत्र । २ क्वचिन्न । ३ 'इह मा भूवन्निति' । ४ 'सिच उसोऽप्रसङ्गः' । 'सिचि जुसोऽप्रसङ्गः' । ५ 'प्रकरणत्वात्' । ६ 'आत इत्येतन्निय' । ७ 'लक्षणत्वेन' ।

विभक्तिविशेषणं विज्ञास्यते ।

(प्र०) श्रूयमाणविभक्तिविशेषणमिति । षष्ठी-चतुर्थीद्वितीयास्वित्येव सिद्धे स्थग्रहणे सत्ययमर्थो भवति। तासु ये त्वेवस्थिते युष्मदस्मदी इति । श्रूयमाणासु चाऽवस्थानं भवति, न तु लुप्तासु, लुप्तस्याऽऽधारत्वाऽसंभवात् ।

(उ०) भाष्ये-श्रूयमाणेति। श्रूयमाणत्वार्थकं विभक्तिविशेषणमित्यर्थः। तल्लाभायोपायं दर्शयति-षष्ठीत्यादि ।

[ समाधानबाधकभाष्यम् ]

अस्त्यन्यत्स्थग्रहणस्य प्रयोजनम् ॥ किम् ? ॥ सविभक्तिकस्य वान्नावादयो यथा स्युरिति॥

(प्र०) अस्त्यन्यदिति । तिष्ठतिरहानावपि वर्तते । यथा—तपसि स्थितः । तपो न जहातीत्यर्थः । तथा-समये तिष्ठ सुग्रीवेति, समयं मा हासीरित्यर्थः । तेन सति स्थग्रहणे तत्सहितयोः कार्यं विज्ञायते । अथ वा यथा 'रथस्थ आनीयता'मिति सरथ आनीयते, तथा षष्ठ्यादिसहितयोर्युष्मदस्मदोः कार्यं भवतीति विज्ञायते ।

(उ०) अथवा यथा रथेति । स्थशब्दः साहित्यवाचीति भावः ।

[ तत्साधकभाष्यम् ]

नैतदस्ति प्रयोजनम् । पदस्येति वर्तते । विभक्त्यन्तं च पदम् । तत्राऽन्तरेणापि स्थग्रहणं सविभक्तिकस्यैव भविष्यति ।

(प्र०) पदस्येति वर्तत इति । केवलयोः पदत्वाऽभावात्तदवयवं पदं गृह्यत इति भावः ।

(उ०) 'तदवयव'मिति बहुव्रीहिः । 'युष्मदस्मदो' रिति तद्घटितसमुदाये लाक्षणिकमिति भावः ।

[ समाधानबाधकभाष्यम् ]

भवेत्सिद्धम्-यत्र विभक्त्यन्तं पदम् । यत्र तु खलु विभक्तौ पदं तत्र न सिध्यति ग्रामो वां दीयते, ग्रामो नौ दीयते, जनपदो वां दीयते, जनपदो नौ दीयते ।

(प्र०) यत्र त्विति । अत्र हि ते एव पदे इति तयोरेवादेशप्रसङ्गः ।

(उ०) मुख्येऽर्थे एव पदसामानाधिकरण्ये संभवति किं लक्षणयेत्याह-अत्र हीति ॥

[ समाधानस्थापकभाष्यम् ]

सर्वग्रहणमपि प्रकृतमनुवर्तते । तेन सविभक्तिकस्यैव भविष्यति ॥

(प्र०) सर्वग्रहणमपीति । अनेकाल्त्वात्सर्वादेशत्वे लब्धे सर्वग्रहणमनुवृत्तं षष्ठ्यन्तं विपरिणम्यमानं सर्वस्य प्रयोगार्हस्य विभक्त्यन्तस्य स्थानित्वमवगमयतीत्यर्थः ॥

(उ०) यद्यपि द्वितीयायां षष्ठ्यां च तयोः पदत्वाऽसंभवेन तत्र लक्षणाया आवश्यकत्वेनान्यत्राप्येकरूपत्वाय लक्षणा युक्ता । तथापि पदस्येत्यस्य 'मादुपधाया' इत्यादाववयवषष्ठीत्वस्य क्लृप्ततया पदावयवयोरित्यर्थ एव स्यादत ईदृशलक्षणाऽलाभः सर्वग्रहणसाध्य एवेत्याह-सर्वग्रहणमिति । 'अनुदात्तं सर्व'मित्यतः ॥

[ आक्षेपभाष्यम् ]

इह-'चक्षुष्कामं याजयांचकारे'ति 'तिङ्ङतिङ' इति, तस्य च निघातस्तस्माच्चाऽनिघातः प्राप्नोति ॥

(प्र०) याजयांचकारेति । परत्वात्तिबादिषु कृतेषु आम इति लुकि प्रत्ययलक्षणेन 'याजया'मित्यस्य तिङन्तत्वमिति पूर्वः पक्षः ॥

(उ०) ननु लावस्थायामेव अन्तरङ्गानपीतिन्यायेन लुकि प्रत्ययलक्षणेनापि न तिङन्तत्वमत आह-परत्वादिति ॥

[ समाधानवार्तिकम् ]

॥ * ॥ *आमि लिलोपात्तस्य चानिघातस्तस्माच्च निघातः* ॥ * ॥

आमि लिलोपात्तस्य चाऽनिघातस्तस्माच्च निघातः सिद्धो भविष्यति ॥

(प्र०) आमि लिलोपादिति । नाप्राप्तेषु तिबादिषु लुगारभ्यमाणस्तेषां बाधकः ॥

(उ०) नाप्राप्तेष्विति । 'अन्तरङ्गानपी'ति न्यायादित्यपि बोध्यम् ॥

[ आक्षेपवार्तिकम् ]

॥*॥ *अङ्गाधिकार इटो विधिप्रतिषेधौ* ॥*॥

१ क्वचिन्न । २ 'भविष्यन्ति' ।
३ 'सर्वस्यं पदस्य विभक्तिसहितस्य स्थानि' ।
४ अन्यत्रापि-चतुर्थ्यामपि ।
५ चक्षुष्कामो-नाम राजा ।

**अङ्गाधिकारे इटो विधिप्रतिषेधौ न न सिध्यतः ॥ जिगमिष संविवृत्स । अङ्गस्येतीटो विधिप्रतिषेधौ न प्राप्नुतः ॥**

(प्र०) **अङ्गाधिकार इति** । 'अङ्गस्ये'ति स्वर्यते । तेनाऽङ्गाधिकारविहितं यत्कार्यं तल्लुमता लुप्ते प्रत्यये न भवतीति सूत्रार्थे दोषोपन्यासः । **जिगमिषेति** । 'अतो हे'रिति लुकि कृते, 'गमेरिट् परस्मपदेष्वि'तीड् न प्राप्नोति । **संविवृत्सेति** । 'न वृद्भ्यश्चतुर्भ्य' इतीट्प्रतिषेधः ॥

(उ०) **इटप्रतिषेध** इत्यत्र 'न प्राप्नोती'त्यनुषङ्गः ॥

[ आक्षेपवार्तिकम् ]

*॥ * ॥ क्रमेर्दीर्घत्वं च ॥ * ॥*

[ क्रमेर्दीर्घत्वं च ]

(उ०) दीर्घत्वं-क्रमः परस्मैपदेष्विति ॥

[ प्रश्नभाष्यम् ]

**किं च ?** ॥

(प्र०) **क्रमेरिति**। कार्यसमीपे श्रूयमाणश्चकारः कार्यमेव समुच्चिनुयादित्यभिप्रायेण–**किञ्चेति** ॥

(उ०) **समुच्चिनुयादिति** । 'तच्चाऽसंभवी'ति शेषः । **इत्यभिप्रायेणेति** । प्रश्न इत्यर्थः ॥

[ एकदेशिनःसमाधानभाष्यम् ]

**इटश्च विधिप्रतिषेधौ ॥**

(उ०) भाष्ये तटस्थोऽभिप्रायानभिज्ञ उत्तरयति–**इटश्चेति** ॥

[आचार्यस्य सिद्धान्तिनोभाष्यम् ]

**नेत्याह । अदेशोऽयं चः पठितः । क्रमेश्च दीर्घत्वम् । उत्क्राम संक्रामेति ॥**

(प्र०) **अदेश इति** । कार्यस्य समुच्चेतव्यस्याऽभावात्सामर्थ्यात्प्रकृतिसमुच्चय इत्यर्थः ॥

(उ०) आचार्य आह–**नेत्याहेति** । गम इड्विधिः, वृतेस्तत्प्रतिषेधः, क्रमेश्च दीर्घत्वं न सिध्यतीत्यर्थ इति भावः॥

[ अङ्गाधिकारपरत्वदूषणोपसंहारभाष्यम् ]

**इह किं चिदङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणेन भवति, किञ्चिच्चाऽन्यत्र न भवति ॥**

(प्र०) **किञ्चिच्चेति** । ञिनिकित्स्वराः ॥

(उ०) अनन्तरोक्तातिव्याप्तेरुपक्रमोक्ताऽव्याप्तेश्चाङ्गाधिकारपरत्वं न युज्यत इत्युपसंहरति भाष्ये–**इहेति** । **ञिनिकित्स्वरा इति** । इदमुपलक्षणम् ,अहर्ददातीत्यत्रासुपीति प्रतिषेधस्यापि । वस्तुतः **किञ्चिच्चे**त्यत्र किञ्चित्पदेन रोऽसुपी'त्येव । ञ्नित्स्वरविषये सौवरीणां सप्तमीनां तदन्तसप्तमीत्वेन 'न लुमता तस्मिन्नि'ति न्यासेऽपि वचनस्यावश्यकत्वादिति बोध्यम् ।

**यदि पुनः–**

[ न्यासान्तरवार्तिकम् ]

*॥ * ॥ न लुमता तस्मिन् ॥ * ॥*

**–इत्युच्येत ॥**

(प्र०) **न लुमता तस्मिन्निति** । लुमता यो लुप्तः प्रत्ययस्तस्मिन्यत्कार्यमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः । 'अत्रय' इत्यत्र स्वरो न भवति, तद्धितस्यैव कितोऽन्तोदात्तत्वविधानात् । लुकि कृते कार्यिणोऽसत्त्वात् । प्रत्ययलक्षणं हि यदन्यस्य कार्यं तत्प्रत्ययलोपेऽपि भवति । न तु यत्प्रत्ययस्यैव कार्यं तदपि । नहि वचनेनाऽसतः कार्यित्वं शक्यते प्रतिपादयितुम् ॥

(उ०) **तस्मिन् यत्कार्यमिति** । तस्मिन्परतस्तन्निमित्तकं तत्प्रकृतिभूतस्य यत्कार्यमित्यर्थः । 'कित' इत्युदाहरणभूताऽत्रय इत्यस्योभयपक्षेऽप्यसिद्धेस्तत् परिहरति–**अत्रय इत्यत्रेति** । **यदन्यस्येति** । 'प्रत्ययज'मित्येव सिद्धे लक्षणग्रहणसामर्थ्येन प्रत्ययनिमित्तकमेव, न तु प्रत्ययस्थानिकमित्यर्थादिति भावः । युक्त्यन्तरमप्याह–**नहीति** । षष्ठ्यर्थस्योच्चारणरूपप्रसङ्गस्य वक्तुमशक्यत्वादिति भावः । अत एव नखनिर्भिन्न इत्यादावैसादिकं न । एवमसतः सत्तापि न वचनेन शक्येति बोध्यम् ॥

[ आक्षेपभाष्यम् ]

**अथ 'न लुमता तस्मिन्नि'त्युच्यमाने किं सिद्धमेतद्भवति–'इटो विधिप्रतिषेधौ क्रमेर्दीर्घत्वं च'? ॥**

[ समाधानभाष्यम् ]

**बाढं सिद्धम् । न इटो विधिप्रतिषेधौ परस्मैपदेष्वित्युच्यते ॥ कथं तर्हि ? ॥ सकारादाविति । तद्विशेषणं परस्मैपदग्रहणम् ॥ न खल्वपि क्रमेर्दीर्घत्वं परस्मैपदेष्वित्युच्यते ॥ कथं तर्हि ? ॥ शितीति । तद्विशेषणं परस्मैपदग्रहणम् ॥**

---

१ लुप्तं स्यात् । २ इदं भाष्यमित्यन्ये ।

३ 'उच्यते' ।

(प्र०) तद्विशेषणमिति । विशेषण एवोपक्षीणत्वात्कार्यं प्रति निमित्तभावो नास्तीत्यर्थः ॥

(उ०) परस्मैपदपरत्वादेरङ्गत्वनिमित्तस्येडित्याद्यर्थे न दोष इत्याह–विशेषण एवेति । एवं च लुप्तप्रत्ययनिमित्तकं तत्प्रकृतेस्तत्र कार्यमिति भावः ॥

[ आक्षेपवार्तिकम् ]

॥*॥ *न लुमता तस्मिन्निति चेद्धनिणिङा-देशास्तलोपे* ॥ * ॥

**'न लुमता तस्मिन्नि'ति चेद्धनिणिङादेशास्तलोपे न सिध्यन्ति ॥ अवधि भवता दस्युः । अगायि भवता ग्रामः । अध्यगायि भवताऽनुवाकः । तलोपे कृते लुङीति हनिणिङादेशा न प्राप्नुवन्ति ॥**

(प्र०) हनिणिङादेशा इति । लुका लुङो विषयस्यापहाराद्विषयसप्तम्याश्रयणेऽप्यसिद्धिः ॥

(उ०) नन्वार्धधातुक इत्यादीनां विषयसप्तमीत्वात्पूर्वमेव तेषां प्रवृत्तेर्न प्रत्ययलक्षणापेक्षेत्यत आह–लुकेति । एवं च[1] विषयत्वज्ञानायाऽवश्यं प्रत्ययलक्षणमाश्रयणीयम् । तच्च 'न लुमता तस्मि'न्निति न्यासे न प्राप्नोतीति भावः ॥

[ समाधानभाष्यम् ]

**नैष दोषः । न लुङीति हनिणिङादेशा उच्यन्ते ॥ किं तर्हि ? ॥ आर्धधातुक इति। तद्विशेषणं लुङ्ग्रहणम् ॥**

(प्र०) तद्विशेषणं लुङ्ग्रहणमिति । तेन लुङ्परे चिण्यादेशविधानम् ॥

(उ०) लुङ्परे चिणीति । लुङ्परार्धधातुकविषये इत्यर्थ इति भावः ॥

[ आक्षेपभाष्यम् ]

**इह च–सर्वस्तोमः सर्वपृष्ठः–'सर्वस्य सुपी'त्याद्युदात्तत्वं न प्राप्नोति ॥**

[ एकदेशिनः समाधानभाष्यम् ]

**तच्चाऽपि वक्तव्यम् ॥**

(उ०) भाष्ये–तच्चापीति । 'न लुमता तस्मिन्नि'त्येतदित्यर्थः ॥

[ सिद्धान्तिनः समाधानभाष्यम् ]

**न वक्तव्यम् ॥ 'न लुमताङ्गस्ये'त्येव सिद्धम् ॥ कथम् ? । न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते ॥ किं तर्हि ? ॥**

**योऽसौ लुमता लुप्यते तस्मिन् यदङ्गं तस्य यत्कार्यं तन्न भवति ॥**

(प्र०) न लुमतेति । 'अङ्गस्ये'त्यस्य स्वरितत्वाऽप्रतिज्ञानात्तत्र लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यं प्रत्ययनिमित्तमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः॥

(उ०) लुप्ते प्रत्यये यदङ्गमिति । लुप्तप्रत्ययनिरूपिताङ्गसंज्ञकस्य यत्कार्यमित्यर्थः। 'उत्क्रामे'त्यादौ तु परस्मैपदनिमित्ताऽङ्गसंज्ञकस्य न कार्यम् । किन्तु शिदादिनिमित्ताङ्गसंज्ञकस्येति न दोषः । 'संजिगमिषे'त्यादौ सनः कार्यं नाङ्गसंज्ञकस्येति न दोषः । किञ्च परस्मैपदग्रहणस्य तङानाभावोपलक्षणत्वादपि न दोषः । 'अगायी'त्यादौ तु न दोषः, लुङ्निमित्ताङ्गत्ववतश्चिणन्तस्य कार्याऽभावादिति बोध्यम्॥

[ आक्षेपभाष्यम् ]

**एवमपि–सर्वस्वरो न सिध्यति ॥**

(उ०) भाष्ये–एवमपीति । अङ्गाधिकारप्रतिनिर्देशाऽभावेऽपीत्यर्थः ॥

[ समाधानभाष्यम् ]

**कर्तव्योऽत्र यत्नः॥ [न लुमताङ्गस्य]॥**

(प्र०) कर्तव्योऽत्र यत्न इति । सर्वशब्दार्थं वचनं कर्तव्यम् ॥ [ न लुमताऽङ्गस्य ] ॥

(उ०) वचनं कर्तव्यमिति । 'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इत्येतत् ॥ [न लुमताऽङ्गस्य ] ॥

## अलोऽन्त्यात्पूर्व उपधा ॥१।१।६४॥

[ आक्षेपभाष्यम् ]

**किमिदमल्ग्रहणमन्त्यविशेषणम् ? ॥**

(प्र०) अलोऽन्त्यात् । किमिदमिति । प्रथमा पञ्चमी वेति सन्देहात्प्रश्नः ॥

[ इष्टापत्तिभाष्यम् ]

**एवं भवितुमर्हति ॥**

(प्र०) एवमिति । प्रथमायामभिप्रेतायामसन्देहार्थमल्त्येकवचनं वक्तव्यं स्यात् । अन्त्यादिति पञ्चमी साहचर्याच्चाऽल इत्यपि पञ्चम्यन्तमिति भावः ।

(उ०) अलोऽन्त्यात् । असन्देहार्थमिति । अन्त्यात् पूर्वोऽलित्येव वदेदिति भावः[2] ॥

[ आक्षेपवार्तिकम् ]

॥ * ॥ *उपधासंज्ञायामल्ग्रहणमन्त्यानिर्देशश्चेत्संघातप्रतिषेधः* ॥ * ॥

---

1 एवं च–अदुष्टोक्तार्थोक्ती च ।

2 एवं च–तेन तदपहारे च ।

**उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातस्य प्रतिषेधो वक्तव्यः ॥ संघातस्योपधासंज्ञा प्राप्नोति ॥ तत्र को दोषः ? ॥ 'शास इदङ्हलोः' । शिष्टा शिष्टः । संघातस्येत्त्वं प्राप्नोति ।**

(प्र०) **अल्ग्रहणमिति** । निर्दिश्यतेऽभिधीयतेऽनेनेति निर्देशः । यद्यन्त्यः प्रत्याय्यत इत्यर्थः । **सङ्घातप्रतिषेध इति** । पूर्वस्याऽविशेषितत्वात्समुदायावयवसन्निधौ च समुदायस्यैव कार्यित्वात्, एकाज्द्विर्वचन इवेति भावः। अन्त्यविशेषणत्वे वर्णनिर्देशे जातिग्रहणेप्यल इत्युपादानसामर्थ्यात्संख्या विवक्ष्यते ॥

( उ० ) 'अल्ग्रहणमन्त्यनिर्देश' इत्यनयोः समानाधिकरण्यमनुपपन्नमत आह–**अभिधीयतेऽनेनेति** । अल्ग्रहणमन्त्यप्रत्यायकं चेदित्यर्थः । 'घञजपः पुंसी'ति निर्देशशब्दस्य पुंस्त्वम् । प्राप्तिपूर्वकत्वात्प्रतिषेधस्य प्राप्तिमाह–**पूर्वस्येति** । **एकाजिति** । यद्यप्यत्र समुदायसंज्ञया नावयवानामनुग्रहस्तथापि कदाचिदविशेषात्सङ्घातस्यापि स्यादित्यनिष्टमात्रापादने भाष्यतात्पर्यमिति बोध्यम् । ननु संज्ञिवदवधिरपि कस्माज्जातिग्रहणप्राप्तः समुदायो न निषिध्यतेऽत आह–**अन्त्येति** । **संख्या विवक्ष्यत इति** । ज्ञापकसिद्धस्याऽसार्वत्रिकत्वादत्राऽनेका व्यक्तिर्न गृह्यत इति भावः । सङ्ख्याविवक्षा तु उद्देश्यगतत्वाद्युक्ता ॥

[ प्रथमान्तपक्षाङ्गीकारभाष्यम् ]

**यदि पुनरलन्त्यादित्युच्यते ॥**

(प्र०) **यदि पुनरिति** । अत्राप्यल्ग्रहणसामर्थ्यात् संख्या विवक्ष्यते । पिबेरदन्तत्वप्रतिज्ञानाच्च लिङ्गात् । अल्समुदायस्य संज्ञित्वे गुणस्य प्राप्तिरेव नास्ति किमदन्तत्वप्रतिज्ञानेन ॥

( उ० ) **पिबेरदन्तत्वेति** । अल्समुदायस्य लघुत्वाऽभावादिति भावः । सूत्रं तु उखादौ चरितार्थम् । कदाचिदिकारस्याप्युपधात्वेन चिन्त्यमिदम् ।

[ प्रथमान्तपक्षे दूषणभाष्यम् ]

**एवमप्यन्त्योऽविशेषितो भवति । तत्र को दोषः ? ॥ संघातादपि पूर्वस्योपधासंज्ञा प्रसज्येत ॥ तत्र को दोषः ? ॥ 'शास इदङ्हलोः' । शिष्टः शिष्टवान् । शकारस्येत्त्वं प्रसज्येत ॥ सूत्रं च भिद्यते ॥**

(प्र०) **सूत्रं चेति** । 'अलन्त्या'दिति पठ्यमान इत्यर्थः ॥

[ सिद्धान्तिभाष्यम् ]

**यथान्यासमेवास्तु ॥**

[ आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तम् 'उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्सङ्घातप्रतिषेधः' इति ॥**

[ परिहारभाष्यम् ]

**नैष दोषः ॥**

[ समाधानवार्तिकम् ]

||*|| *अन्त्यविज्ञानात्सिद्धम्* ||*||

**सिद्धमेतत् ॥ कथम् ? ॥ [ 'अन्त्यविज्ञानात्' ]॥ अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति ॥**

(प्र०) **अन्त्यविज्ञानादिति** । उपधाया इति षष्ठ्यन्त्यमलं नीयत इत्यर्थः ॥

[ समाधानदूषणवार्तिकम् ]

||*|| *अन्त्यविज्ञानात्सिद्धमिति चेन्नाननर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे* ||*||

**अन्त्यविज्ञानात्सिद्धमिति चेत्तन्न ॥ किं कारणम् ? ॥ 'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे' । अनर्थकेऽलोन्त्यविधिर्नेत्येषा परिभाषा कर्तव्या ॥**

**किमविशेषेण ? ॥ नेत्याह–'अनभ्यासविकारे' । अभ्यासविकारान्वर्जयित्वा । 'भृञामित्' 'अर्तिपिपर्त्योश्चे'ति ॥**

(प्र०) **अनभ्यासविकार इति** । अभ्यासोऽनर्थकः । शब्दस्य ह्यावृत्तिर्नाऽर्थस्य ॥

( उ० ) **शब्दस्य इति** । एकाज्धातुविषयमिदम् । अनेकाक्षु प्रथमस्यैकाचो द्वित्वेनार्थवत्त्वशङ्कैव नेति बोध्यम् । एवं चोत्तरखण्ड एवाऽर्थवानिति भावः ॥

---

१ 'शिष्टः शिष्टवान्' । 'शिष्टात् शिष्टः' । 'शिष्टःशिष्टात्' २ **अविशेषात्**–विनिगमनाविरहात् । ३ **संज्ञिवदिति** । यथात्र पक्षेऽविशेषात्प्राप्तसमुदायसंज्ञिनिषेधो वार्तिककृतोच्यते एवं तथा प्राप्ततन्निषेधोऽपि कुतो नोच्यत इत्यर्थः ।

४ **ज्ञापकसिद्धस्य**–वर्णग्रहणे जातिग्रहणस्य ।

५ लुप्तं स्यात् । ६ कश्चिन्न ।

[ जिज्ञासाभाष्यम् ]

**कान्येतस्याः परिभाषायाः प्रयोजनानि ? ॥**

[ प्रयोजनदर्शिवार्तिकम् ]

*॥*॥ प्रयोजनमव्यक्तानुकरणस्यात इतौ ॥*॥*

**[ 'अव्यक्तानुकरणस्याऽत इतौ' ] इत्यन्त्यस्य प्राप्नोति। अनर्थकेऽलोऽन्त्यविधिर्न भवतीति न दोषो भवति ॥**

**(प्र०)** अव्यक्तानुकरणस्येति। अव्यक्तानुकरणस्य योऽच्छब्दस्तस्येतौ पररूपमिति सूत्रार्थः ॥

**(उ०)** अव्यक्तानुकरणस्येति। अच्छब्दान्तस्याव्यक्तानुकरणस्येत्यर्थे सम्पूर्णस्याऽच्छब्दस्य पररूपानापत्तिरित्यतो वैयधिकरण्यमुक्तम्। अव्यक्तानुकरणं योऽच्छब्द इति तु नार्थः, 'एकाचो ने'ति निषेधारम्भादित्यलम् ॥

[ उक्तप्रयोजननिरासभाष्यम् ]

**नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति नान्त्यस्य पररूपं भवतीति, यदयं-'नाम्रेडितस्यान्त्यस्य तु वे'त्याह।**

**(प्र०)** यदयमिति। 'वाऽऽम्रेडितस्ये'त्येव वक्तव्यं स्यात् ॥

**(उ०)** ननु विकल्पार्थं तदावश्यकमत आह-**वाम्रेडितस्येति**। 'अन्त्यस्य पूर्वेण नित्ये पररूपे प्राप्ते' इति शेषः ॥

[ प्रयोजनवार्तिकम् ]

*॥*॥ घ्वसोरेद्धावभ्यासलोपश्च ॥*॥*

**घ्वसोरेद्धावभ्यासलोपश्चेत्यन्तस्य प्राप्नोति। अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति ॥**

**(प्र०)** घ्वसोरिति। 'अनभ्यासविकारे' इति प्रतिषेधो रूपवत्यादेशे। लोपस्तु नीरूपः। तथा च पस्पशायां 'लोपागमवर्णविकारज्ञ' इति लोपविकारौ भेदेन निर्दिष्टौ ॥

**(उ०) भेदेन निर्दिष्टाविति।** यद्यप्येकदेशविकृतस्येत्यादौ लोपोऽपि विकारपदेनोच्यते तथापि व्याख्यानादेवात्रेदृशार्थाऽवगतिरिति बोध्यम् ॥

[ तन्निराकरणभाष्यम् ]

**एतदपि नास्ति प्रयोजनं। पुनर्लोपवचनसामर्थ्यात्सर्वस्य भविष्यति ॥**

**(प्र०) पुनर्लोपेति। लोपो यीत्यतो लोपग्रहणे**ऽनुवर्तमान इति भावः। तत्र[1] घ्वसोरेद्धावभ्यासस्य चेति वक्तव्यम्। तत्र[2] व्याख्यानादभ्यासस्य लोप एव भविष्यति, नत्वेत्त्वम्। योगविभागो वा करिष्यते-'घ्वसोरेद्धौ'। ततो'ऽभ्यासस्ये'ति। अत्र च लोपोऽनुवर्तिष्यते। तत्र[3] पुनर्लोपवचनात्सर्वापहारार्थादलोऽन्त्यस्येति बाध्यते ॥

**(उ०)** ननु लोपग्रहणाऽभावे घ्वसोरेद्धावभ्यासस्येत्युक्ते चकाराऽभावादन्यवचनाच्च प्रकृताऽसंबन्धे एत्वमेव स्यादत आह-**तत्र घ्वसोरित्यादि**। ननु चैनानुवृत्तावपि लोपोऽभ्यासस्यैवेत्यत्र नियामकाऽभावात्पर्यायेण त्रयाणामप्येत्वलोपौ स्यातामत आह-**तत्र व्याख्यानादिति**। आगन्तूनामन्ते निवेशेनाभ्यासस्य लोपसंनिहितत्वादिति भावः। नन्वभ्यासपदोत्तरश्चकारः स्थान्यन्तरमेव समुच्चिनुयान्न विधेयान्तरमिति एत्वमभ्यासस्यापि स्यादतः परिहारान्तरमाह-**योगविभागो वेति। अत्रेति।** नत्वेत्वमित्यर्थः। योगविभागसामर्थ्यादिति भावः। **सर्वापहारेति।** लोप एव, नावशेषः कस्यचिदित्यर्थादिति भावः ॥

[ एकदेशिनो युक्त्यन्तरभाष्यम् ]

**अथ वा-शिल्लोपः[5] करिष्यते स 'शित्सर्वस्ये'ति सर्वादेशो भविष्यति ॥**

[ आक्षेपतत्समाधानभाष्यम् ]

**स तर्हि शकारः कर्तव्यः ?॥ न कर्तव्यः। क्रियते न्यास एव द्विशकारको निर्देशो 'घ्वसोरेद्धावभ्यासलोपश्चे'ति ॥**

**(प्र०) द्विशकारको निर्देश इति।** लोपशब्दात् कृदन्तात्संज्ञिनाऽर्थेनाऽर्थवत्त्वाद्विभक्तौ कृतायां शकारः प्रतिनिर्दिश्यते। तस्य चेत्संज्ञायां सत्यां सर्वादेशो लोपो भवति। इत्संज्ञोपदेशे एव प्रवर्तते। तत्कार्यं तु प्रयोग इत्येष सिद्धान्तः ॥

**(उ०)** ननु लोपशशब्दस्याऽसंज्ञात्वेनानर्थक्यात्सुरेव न स्यात्, उत्पत्तौ वा हल्ङ्यादिलोपाद्विशकारक इत्यनुपपन्नमत आह-**लोपशब्दादिति**। पदस्य संयोगान्तत्वाऽभावादसन्देहाय च झलां जशित्यत्र जश्त्ववत्संयोगान्तलोपसंयोगादिलोपौ नेति बोध्यम्। **इत्संज्ञेति**। धातुप्रातिपदिकप्रत्ययनिपातागमादेशानां हलन्त्यमितीत्संज्ञायामपि न दोषः। शस्य स्वरूपेणाऽर्थवत्तया प्रातिपदिकत्वात्, कुण्डिनच इव। **उपदेश** इति तु तत्र नानुवर्तत इति तत्र भाष्ये स्पष्टम्। **उपदेश एवेति।** अन्तरङ्गत्वादिति भावः। एतेन लोपविधानकाले

१ लुप्तं स्यात्। २ तत्र-तदनुवृत्तौ सत्याम्। ३ तत्र-चकारेण तदनुवृत्तौ। ४ तत्र-तथानिर्वाहे सति। ५ 'शिल्लोपः'।

शित्त्वाऽभावात्कथं सर्वादेश इत्यपास्तम्। कार्यत्विति। अनेकाल्शिदित्यादौ समीपेऽप्यवयवत्वारोपेण न दोष इति भावः। 'एकान्ता अनुबन्धा' इति मुख्यपक्षे तु आद्यमेव समाधानमिति बोध्यम्॥

[ प्रयोजनवार्तिकम् ]

॥*॥ *आपि लोपोऽकोऽनचि* ॥*॥

**[आपिलोपोऽकोऽनचीत्यन्त्यस्य प्राप्नोति]।[1] तिष्ठति सूत्रम्॥**

(प्र०) **तिष्ठति सूत्रमिति** । लक्ष्यलक्षणभावस्याऽविवक्षितत्वात्तिष्ठत्सूत्रमिति न कृतम्। तत्रायमर्थः[2]– तिष्ठति सूत्रम्। ————

[ समाधानभाष्यम् ]

**–अन्यथा व्याख्यायते॥**

(प्र०)—न प्रत्याख्यायते । तत्तु अन्यथा व्याख्यायते । तत्राऽनचीत्यनेन हलीत्यस्यार्थो व्याख्यातः। आप्यक इत्यनुवृत्तिर्दर्शिता॥

(उ०) भाष्ये–**अन्यथाव्याख्यायत इति**। न तु तत्प्रत्याख्याय तत्स्थाने वचनान्तरं पठितमिति भ्रमितव्यमिति भावः॥

**'आपि हलि लोप' इत्यन्त्यस्य प्राप्नोति॥ अनर्थकेऽलोन्त्यविधिर्नेति न दोषो भवति॥**

(उ०) **इत्यन्त्यस्येति**। एवं च तेन दलोपे आभ्यामित्यसिद्धिरिति भावः॥

[ प्रयोजननिरासभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्। अन एव लोपं वक्ष्यामि॥**

[ गौरवप्रदर्शनभाष्यम् ]

**तदनो ग्रहणं कर्त्तव्यम्?॥**

[ तन्निराकरणभाष्यम् ]

**…र्तव्यम्। प्रकृतमनुवर्त्तते॥**

**क्व प्रकृतम्?॥ अ[3] नाप्यकः[4]' इति॥**

[ अनुवृत्तिबाधकभाष्यम ]

**तद्वै प्रथमानिर्दिष्टं, षष्ठीनिर्दिष्टेन चेहार्थः।**

[ अनुवृत्ति…भाष्यम् ]

**'हली'त्येषा सप्तमी अन्निति प्रथमायाः षष्ठीं प्रकल्पयिष्यति–'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति॥**

(प्र०) **अन एवेति**। 'अनाप्यक' इति सामान्येनाऽनादेशं विधाय हलादौ तु तस्यैव लोपो विधीयते इत्यर्थः। येन नाव्यवधानमिति त्यदाद्यत्वेन व्यवधानमाश्रीयते॥

(उ०) ननु मस्थानिकत्यदाद्यत्वेन व्यवधानान्नानो हलादिविभक्तिपरतेत्यत आह–**येन नेति**। आप्परत्वेनेदमो विशेषणाच्चेत्यपि बोध्यम्। इदमिदो लोप इत्यर्थेऽप्यावश्यकम्। एवं च नलोपे द्वयोरकारयोः पररूपे **सुपिचेति** दीर्घे सिद्धमाभ्यामिति।

[ प्रयोजनवार्तिकम् ]

॥*॥ *अत्र लोपोऽभ्यासस्य* ॥*॥

**अत्रे[5] लोपोऽभ्यासस्येत्यन्त्यस्य प्राप्नोति। 'नानर्थकेऽलोऽन्त्यविधि'रिति न दोषो भवति।**

[ तन्निराकरणभाष्यम् ]

**एतदपि नास्ति प्रयोजनम्। अत्रग्रहणसामर्थ्यात्सर्वस्य भविष्यति।**

(प्र०) **अत्रग्रहणसामर्थ्यादिति**। मीमादीनामभिकारादेव सिद्धेरत्रग्रहणादयमर्थ आश्रीयते–योऽभ्यासत्वेन निर्ज्ञातस्तस्य समग्रस्य लोपो नत्वलोऽन्त्यस्येति॥

(उ०) **अत्रग्रहणादिति**। अत्रशब्देन पुनः सनः परामर्शात्सनि योऽभ्यासत्वाक्रान्तस्तस्य सर्वस्य लोप इत्यर्थ इति भावः।

[ तत्साधकभाष्यम् ]

**अस्त्यन्यदत्रग्रहणस्य प्रयोजनम्॥ किम्?॥ सन्नधिकारोऽपेक्ष्यते। इह मा भूत्–दधौ ददौ।**

[ प्रयोजनबाधकभाष्यम् ]

**अन्तरेणाऽप्यत्रग्रहणं सन्नधिकारमपेक्षिष्यामहे॥**

[ प्रयोजनस्थापकभाष्यम् ]

**संस्तर्हि सकारादिरपेक्ष्यते—सनि सकारादाविति। इह मा भूत्–जिज्ञापयिष[ती ]ति।**

[ प्रयोजनबाधकभाष्यम् ]

**अन्तरेणाप्यत्रग्रहणं सनं सकारादिमपेक्षिष्यामहे॥**

1 लुप्तं स्यात्। २ तन्त्र–तदभावे। ३ 'अ' इति प्रथमान्तं क्लीबे रूपम्। ४ 'अत्रा'। ५ कचिन्न।

[ प्रयोजनस्थापकभाष्यम् ]

**प्रकृतयस्तर्ह्यपेक्ष्यन्ते-एतासां प्रकृतीनां लोपो यथा स्यात् । इह मा भूत्-पिपक्षति यियक्षति ॥**

[ तद्बाधकभाष्यम् ]

**अन्तरेणाप्यत्रग्रहणमेताः प्रकृतीरपेक्षिष्यामहे ।**

[ तत्साधकभाष्यम् ]

**विषयस्तर्ह्यपेक्ष्यते-'मुचोऽकर्मकस्य गुणो वे' ति । इह मा भूत्-मुमुक्षति गामिति ।**

[ प्रयोजनबाधकभाष्यम् ]

**अन्तरेणाप्यत्रग्रहणमेतं विषयमपेक्षिष्यामहे ॥ कथम् ? ॥ अकर्मकस्येत्युच्यते तेन यत्रैवायं मुचिरकर्मकस्तत्रैव भविष्यति। तस्मान्नार्थोऽनया परिभाषया-नानर्थकेऽलोऽन्त्यविधिरिति ॥**

(उ०) भाष्ये-विषयमपेक्षिष्यामह इति । 'मुचोऽकर्मकस्य गुण' इत्यनुवर्तनीयम् । यत्र मुचोऽकर्मकस्य गुणस्तत्राभ्यासस्य लोप इत्यर्थः । अकर्मकग्रहणमात्रानुवृत्तौ तु 'मुमुक्षते वत्सः स्वयमेवे'त्यत्रापि स्यादिति भावः । 'विभाषा भव'दिति वार्त्तिकेऽपि वस्येत्येव सिद्धेऽवस्येत्युच्चारणसामर्थ्यादलोऽन्त्यस्येति न प्रवर्त्तते इति प्रत्याख्याता परिभाषा ॥

[ न्यासान्तरवार्तिकम् ]

॥*॥ *अलोऽन्त्यात् पूर्वोऽलुपधेति वा* ॥*॥

**अथ वा व्यक्तमेव पठितव्यम्-अलोऽन्त्यात्पूर्वोऽलुपधासंज्ञो भवतीति ॥**

(उ०) एवं च अन्त्यविज्ञानात्सिद्धमित्यस्य स्थितत्वाद्वार्त्तिके वाशब्दप्रयोगस्तदाह-**अथवा व्यक्तमेवेति** ।

[ आक्षेपतत्समाधानभाष्यम् ]

**तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥**

॥*॥ *अवचनाल्लोकविज्ञानात्सिद्धम्* ॥*॥

**अन्तरेणापि वचनं लोकविज्ञानात् सिद्धमेतत् । तद्यथा-लोके-'अमीषां ब्राह्मणानामन्त्यात्पूर्व आनीयता' मित्युक्ते यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्व आनीयते ॥ [ अलोऽन्त्यात्पूर्व ] ।**

(प्र०) **यथाजातीयकोऽन्त्य इति** । एतच्च ब्रुवता पञ्चमीपक्ष एवाश्रितः । षष्ठीप्रथमयोरपि न दोषः । षष्ठीपक्षे निर्धारणे षष्ठी । निर्धारणं च तुल्यजातीयस्य भवतीति अलां मध्ये योऽन्त्योऽलस्तस्मात्पूर्व उपधासंज्ञ इत्यलेवोक्तान्यायात्प्रतीयते । प्रथमाबहुवचनपक्षेऽप्ययमर्थः-अन्त्यात्पूर्वोऽलुपधासंज्ञ इति । 'अल' इति जातौ बहुवचनम् । अवधिमत्तुल्यजातीयश्चावधिरिति अलोन्त्यादिति विज्ञायते ॥

(उ०) **एतच्चेति** । अवधिनाऽवधिमता निर्णयं ब्रुवतेत्यर्थः । संयोगोपधेत्यादिव्यवहारास्तु गौणा[2] इति भावः । **षष्ठीप्रथमयोरपीति** । दृष्टान्तेऽमीषां ब्राह्मणानामित्युपाददता भगवता सूचितमिदम् । **उक्तान्न्यायादिति** । भाष्योक्तादित्यर्थः । **जातौ बहुवचनमिति** । भाष्यकृता जात्याख्यायामिति सूत्रप्रत्याख्यानादिदं चिन्त्यम् ॥ ६४ ॥

# तस्मिन्निति निर्दिष्टे पूर्वस्य ।१।१।६५॥

# तस्मादित्युत्तरस्य ॥१।१।६६॥

[ आक्षेपभाष्यम् ]

**किमुदाहरणम् ? ॥**

(प्र०) **तस्मिन्निति । तस्मादिति । किमुदाहरणमिति** । इतिकरणस्य गौरित्ययमाहेत्यादौ स्वरूपपदार्थकत्वेन व्यवस्थापकत्वदर्शनात्प्रश्नः ॥

(उ०) **तस्मिन्निति । तस्मादिति । स्वरूपपदार्थकत्वेनेति** । स्वरूपस्य तत्र विशेष्यत्वादिति भावः ॥ **प्रश्न इति । तस्मिन्नणि** चेत्यत्रैव बोताऽन्यत्रापीति प्रश्न इति भावः ॥

[ समाधानभाष्यम् ]

**इह तावत् 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति 'इको यणचि' । दध्यत्र मध्वत्र । इह 'तस्मादित्युत्तरस्ये'ति 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' । द्वीपम् अन्तरीपं समीपम् ॥**

(प्र०) **दध्यत्रेति** । यदि तस्मिन्नणि चेति तस्माच्छस इति चात्रैवैते परिभाषे उपास्थास्येतां तदा तत्रैव पूर्वग्रहणमुत्तरग्रहणं चाकरिष्येतामिति भावः । अत्र व्यवच्छेद्यमस्ति यौष्माकीण ! अस्मभ्यं देहि,

1 क्वचिन्न ।

2 अवयवधर्मस्य समुदाये आरोपाद्गौणत्वम् ।

आस्माकीन ! युष्मभ्यं दीयतामिति खञः परयोर्युष्मदस्मदोरादेशौ न भवतः। वृक्षानित्यत्र च पूर्वसवर्णदीर्घभूताच्छसः पूर्वस्य सकारस्य नत्वं न भवति। अथ 'शस' इति स्थानषष्ठीति व्याख्यानात् सकारस्य न भवतीत्युच्यते, एवमप्युचरत आनुपलभत इत्यादौ पूर्वसवर्णदीर्घात्पूर्वस्य शसो नत्वं व्यवच्छेद्यमेव ॥

(उ०) **तत्रैव पूर्वेति**। ननु 'तस्मान्नुडचि' 'तस्मान्नुड्द्विहलः' 'तस्माच्छस' इति सूत्रत्रये उत्तरग्रहणे विपरीतं गौरवमिति चेन्न। यतो द्विहलो नुड्विधायके नास्योपयोगः, तत्राऽङ्गाधिकारेण लिण्निमित्ताङ्गसंबन्धिदीर्घात्पूर्वस्य प्रत्यासत्त्या तदङ्गसम्बन्धिनोऽसंभवेन फलाऽभावात्। एवं तस्मान्नुडचीत्यत्रापि न दोषः, उत्तरपदाधिकारेण प्रत्यासत्त्या नञ्रूपपूर्वपदनिरूपितोत्तरपदस्यैव तेन नुड्विधानादिति भावः। **तस्मिन्निति** परामृष्टखञ्व्यवधानाय संबुद्ध्यन्तमुदाहरति—**यौष्माकीणेति**। **सकारस्येति**। तस्मादित्येतत्साहचर्याच्छस इति पञ्चमी। शसा च मुख्यार्थे सामानाधिकरण्यं शसवयवे लक्षणैवेति भावः। मुख्यार्थे सामानाधिकरण्याऽसंभवात् स्थान्याकाङ्क्षासत्त्वाच्च अवयवषष्ठीत्याशङ्कते—**अथेति**। 'शस इति स्थानषष्ठी'त्यपाठः। 'इति षष्ठी'त्येव पाठः। **'आ'**नित्यशब्दस्य शसि रूपम्।

[ समाधानबाधकभाष्यम् ]

**अन्यथाजातीयकेन शब्देन निर्देशः क्रियते, अन्यथाजातीयक उदाह्रियते ॥**

(प्र०) **अन्यथाजातीयकेनेति**। इतिकरणात् स्वरूपग्रहणेनैव भाव्यमिति भावः। थाला प्रकारमात्रमभिधीयत इति तद्वतोऽभिधानाय जातीयर्प्रत्ययः कृतः। लौकिके प्रयोगे लाघवानादरप्रदर्शनाय प्रत्ययद्वयप्रयोगः। केवलेनापि जातीयरा प्रकारवान् गम्यत एव ॥

(उ०) **इतिकरणादिति**। लोकेऽर्थप्रधानस्य पदार्थविपर्यासकेतिना शब्दप्रधानत्वदर्शनादिति भावः। नन्वेकार्थकप्रत्ययद्वयोपादानं व्यर्थमत आह—**थालेति**। एवं च 'शब्देने'त्यनेन सामानाधिकरण्यानुपपत्तिः, जातीयस्तु तद्वति स्वभावादिति भावः। नन्वेवं जातीय एव प्रयुज्यतां किं थालेत्यत आह—**लौकिके इति**। उभयोः प्रकारवद्वृत्तित्वेऽप्येवं वक्तुं शक्यमिति उक्तयत्नो वृथा। अत एव कस्य प्रयोग इति चिन्त्यम्।

[ उदाहरणप्रश्नभाष्यम् ]

**किं तर्ह्युदाहरणम् ?।**

[ तत्समाधानभाष्यम् ]

**इह तावत् 'तस्मिन्निति निर्दिष्टे पूर्वस्ये' ति, 'तस्मिन्नणि च युष्माकास्माकौ' इति। 'तस्मादित्युत्तरस्ये' ति—'तस्माच्छसो नः पुंसी'ति ॥**

[ सिद्धान्तिभाष्यम् ]

**इदं चाप्युदाहरणम्—'इको यणचि' 'व्यन्तरुपसर्गेभ्योऽप ईद्' दिति ॥ कथम् ?॥ सर्वनाम्नायं निर्देशः क्रियते। सर्वनामा च सामान्यवाची। तत्र सामान्ये निर्दिष्टे विशेषा अप्युदाहरणानि भवन्ति ॥**

(प्र०) इदं चाऽपीति। सिद्धान्तवादी। इतिकरणोऽत्रार्थनिर्देशार्थ एव, स्वं रूपमिति वचनात्स्वरूपग्रहणे प्राप्ते। सर्वनाम्नाऽयमिति। सूत्रान्तरोपात्तस्य तस्मिन्नित्यस्य तस्मादित्यस्य च नैतदनुकरणम्। किं तर्हि ? सर्वनाम्ना निर्देश इत्यर्थः। तेन यत्र सप्तम्यर्थनिर्देशः पञ्चम्यर्थनिर्देशश्च तत्रोभयोरुपस्थानम्। विशेषा अपीति। अपिः संभावनायाम्, न समुच्चये। नहि विशेषपरित्यागेनेह शास्त्रे सामान्यमस्ति, यदुदाहरणं स्यात्। तस्मात्सर्वे विशेषा इहोदाहरणमित्यर्थः। सामान्यस्य सर्वविशेषेषु भावात्।

(उ०) ननु दूषितस्यैव कथमुदाहरणत्वेन दानमत आह—**सिद्धान्तेति**। **अर्थनिर्देशार्थ एवेति**। अन्यथा तस्मिन्निति शब्देऽचीत्यादिशब्दे वाऽव्यवहिते इत्यर्थः स्यादिति भावः। **नैतदनुकरणमिति**। प्रागुक्तयुक्तेरिति भावः। **सर्वनाम्नेति**। सप्तम्यन्तार्थकसर्वनाम्नेत्यर्थः। सप्तमी स्वस्य सप्तम्यन्तार्थकत्वबोधनायाऽनुवादिकेति भावः। इतिशब्दलभ्यमर्थमाह—**यत्र सप्तम्यर्थेति**। सप्तम्यर्थबोध इत्याद्यर्थः। अत एव **तस्मान्नुडचीत्यादौ** न प्रवृत्तिः, अचि इत्यस्य षष्ठ्यर्थत्वादिति भावः। **सप्तमीपञ्चम्यर्थाव**धिकरणावधी। अयं पदोपस्थितिपक्षेऽर्थो दर्शितः। पक्षान्तरेऽपि सप्तम्यन्तार्थेऽव्यवहिते सतीत्यर्थो बोध्यः। भाष्ये **सामान्यवाचीति**। बुद्धिस्थत्वेनैव तदादीनां बोधकतेति भावः। **सामान्यम्**—अनिर्धारितविशेषम्। 'तस्मिन्नणिचे'त्यादेरपि सप्तमीपञ्चमीविशेषत्वादित्याशयः। **सामान्यस्य**—उक्तबुद्धिस्थत्वस्य। **सर्वविशेषेषु भावात्**। सत्त्वादित्यर्थः।

[ आक्षेपभाष्यम् ]

**किं पुनः सामान्यं को वा विशेषः ? ॥**

१ अन्येन—सर्वनामत्वेन प्रकारेण—अन्यथा, अन्यथाप्रकारौ स्मात्स्मिनावस्य—अन्यथाजातीयकः। तेनेतिविग्रहः।

२ प्रकारमात्राभिधाने वेत्यर्थः।

३ कस्य—कप्रत्ययस्य। ४ क्वचिन्न।

**(प्र०) किं पुनरिति ।** सामान्यविशेषभावस्यानवस्थानात्प्रश्नः । कदाचिददूराद्गोत्वमात्रग्रहणं, पश्चात् कृष्णादिविशेषावगमः, कदाचित्तु पूर्वं कृष्णादेर्ग्रहणं पश्चाद्गोत्वादेः ॥

**(उ०)** उक्तमर्थमजानानस्य चोद्यमित्यभिप्रायेणाह—**सामान्येति** । तस्मिन्नितीत्यस्य तस्मिन्नणि चेत्यादिः कथं विशेषः तस्यापि खञादिनिरूपितसामान्यत्वादिति, अचीत्यस्याप्यकाराद्यपेक्षया सामान्यत्वादिति च प्रश्न इत्यपि बोध्यम् । ननु कथमनवस्थितिः पूर्वावगतं **सामान्यम्**, पश्चादवगतो **विशेषः**, इति व्यवस्थासंभवादत आह—**कदाचिदिति** । परिच्छेद्यपरिच्छेदकभावोऽनियत इत्यर्थः । एवं प्रकृतेऽप्यचीत्यादीनां बुद्धिस्थत्वेन परिच्छेदाद्बुद्धिस्थस्यापि तैः परिच्छेदादनिर्णय इति भावः ।

[ समाधानभाष्यम् ]

**गौः सामान्यम् । कृष्णो विशेषः ॥**

**(प्र०) गौः सामान्यमिति ।** यद्विशेष्यं प्रधानं तत्सामान्यम् । यत्तु विशेषणत्वेन परोपकारितया निर्दिश्यते स विशेष इति तात्पर्यम् । इहापि तस्मिन्नित्यनेन सप्तम्यर्थमात्रं सामान्यं निर्दिष्टम् । अचिहलीत्यादयस्तु विशेषाः ॥

**(उ०) विशेष्यं प्रधानमिति ।** परिच्छेद्यमित्यर्थः । **परोपकारितया**—परिच्छेदकत्वेन । एवं प्रकृतेऽपि तस्मिन्नित्यर्थस्य परिच्छेद्यत्वेन विवक्षणात्सामान्यत्वम् । अचीत्यादीनां परिच्छेदकत्वविवक्षणाद्विशेषत्वमिति भावः । तदाह—**इहापीति ।** अयं भावः—सप्तम्यन्तार्थे इत्युक्ते कस्मिन्नित्याकाङ्क्षोदयादचीत्याद्यर्थस्य परिच्छेदकत्वाद्विशेषत्वमेवेति ॥

[ आक्षेपभाष्यम् ]

**न तर्हीदानीं कृष्णः सामान्यं भवति । गौर्विशेषो भवति ? ॥**

[ समाधानभाष्यम् ]

**भवति च[1] ।**

[ आक्षेपभाष्यम् ]

**यदि तर्हि सामान्यमपि विशेषो, विशेषोऽपि सामान्यम्, सामान्यविशेषौ न प्रकल्पेते ॥**

[ समाधानभाष्यम् ]

**प्रकल्पेते च ॥ कथम् ? ॥ 'विवक्षातः' । यदाऽस्य गौः सामान्येन विवक्षितो भवति कृष्णो विशेषत्वेन, तदा गौः सामान्यं कृष्णो विशेषः । यदा[2] कृष्णः सामान्येन विवक्षितो भवति गौर्विशेषत्वेन विवक्षित[3]स्तदा कृष्णः सामान्यं, गौर्विशेषः ।**

[ दृष्टान्तान्तरभाष्यम् ]

**अपर आह—'प्रकल्पेते च' ॥ कथम् ? ॥ 'पितापुत्रवत्' । तद्यथा—स एव कंचित्प्रति पिता भवति, कंचित्प्रति पुत्रो भवति । एवमिहापि स एव कंचित्प्रति सामान्यं कंचित्प्रति विशेषः । एते खल्वपि नैर्देशिकानां वार्त्ततरका भवन्ति, ये सर्वनाम्ना निर्देशाः क्रियन्ते । एतैर्हि बहुतरकं व्याप्यते ॥**

**(प्र०) पितापुत्रवदिति ।** जन्यजनकशक्तिद्वययोगवदेकस्यैव विशेषणविशेष्यशक्तिद्वययोगात्कदाचित्काचिच्छक्तिराश्रीयते । 'सप्तमीनिर्दिष्टे पूर्वस्ये'त्येव कस्मान्नोच्यत इत्याह—एते खल्वपीति । नैर्देशिकानां—निर्देश[4]प्रयोजनानां मध्ये । वार्त्ततरकाः । युक्ततरका इत्यर्थः । भाष्यकारवचनप्रामाण्यादत्र तरप्प्रत्ययः । तमपा ह्यत्र भाव्यम् । एतैर्हीति । यदि हि सप्तमीनिर्दिष्ट इत्युच्यते, तदा सप्तमीशब्देन यो निर्दिष्ट इति प्रतीयेतेति भावः ॥

**(उ०)** तदेवं पर्यायेण सामान्यविशेषभावमुपपाद्य द्वितीयविषया कृतं प्रश्नं समाधातुं यौगपद्येनापि तमुपपादयितुमाह भाष्ये—**पितेत्यादि** । यथा 'पराशरात्मजं वन्दे शुकतातं तपोनिधिम्' इत्यत्र । तथा राजपुरुषाश्व इत्यत्र पुरुषो राजापेक्षया विशेष्यः, अश्वापेक्षया विशेषणम् । एवं प्रकृते खञादिनिरूपितसामान्यस्यापि तस्मिन्नणिचेत्यस्य तस्मिन्नितीत्येतत्प्रति विशेषत्वमिति भावः । **इत्याहेति ।** इत्यत आहेत्यर्थः । **निर्देशप्रयोजनानामिति ।** बोधप्रयोजनकानां शब्दानां मध्ये इत्यर्थः । द्विवचनविभज्योपपदत्वाभावादाह—**भाष्यकारेति** । परे तु नैर्देशिकानां मध्येऽन्येभ्यः शब्देभ्य[5] इत्यध्याहृत्य विभज्योपपदेऽत्र तरप् । अत एव न खल्वपि बहूनां प्रकर्षे तरपा भवितव्य'मिति **तरप्सूत्रस्थभाष्येणाऽविरोध** इत्याहुः। **सप्तमीशब्देनेति** । तथा च 'सप्तम्यां जनेर्डः' इत्यादावेवेदमुपतिष्ठेतेति भावः । किंच यत्र सप्तम्यन्तनिर्देश इत्यर्थे नेड्वशि कृतीत्यादौ दोषः । तत्र **कृतीति** सप्तमीनिर्देशसत्त्वात, परंतु षष्ठ्यर्थे स इति भावः । 'सप्तमीति निर्दिष्टे' इति सूत्रकरणेऽपि तदर्थङ्यादिनिर्देश इत्यर्थे स एव दोषः ॥

---

१ क्वचिन्न । २ 'यदाऽस्य' । ३ 'स्पष्टप्रतिपत्तये'इति शेषः ।

४ **निर्देशो**-बोधः । ५ **अन्येभ्यः**-असर्वनामभ्यः ।

[ प्रश्नभाष्यम् ]

**अथ किमर्थमुपसर्गेण निर्देशः क्रियते?॥**

**(प्र०) किमर्थमिति** । किमर्थमुपसर्गयुक्तस्य धातोर्निर्देशः क्रियते–तस्मिन्निति पूर्वस्येति कस्मान्नोच्यत इति प्रश्नः । न पुनर्दिष्ट इत्येवोच्यतामिति प्रश्नः, केवलस्य दिशेर्दानार्थत्वादिहानुपयोगात् ।

**(उ०)** यथाश्रुतमेव कस्मान्न गृह्यत इत्यत आह–**न पुनरिति** । अत एव किमर्थमुपसर्गनिर्देशो न दिष्ट इत्येवोच्येतेति नोक्तम् ॥

[ समाधानभाष्यम् ]

**शब्दे सप्तम्या निर्दिष्टे पूर्वस्य कार्यं यथा स्यात् । अर्थे मा भूत्—जनपदे, अतिशायन इति ॥**

**(प्र०) शब्द इति** । अन्तरेणाऽपि निर्दिष्टग्रहणं 'तस्मिन्निति पूर्वस्ये'त्येव निर्दिष्टत्वे लब्धे पुनर्निर्दिष्टशब्द उपादीयमानो बहिर्भावं गमयति । शब्दाच्च बहिर्भूतः शब्द एव भवतीति । जनपद इति । तत्रा[1]यमर्थः स्यात्–जनपदवाचिनि शब्दे परतश्चातुरर्थिकस्य लुब्भवतीति ॥

**(उ०) अन्तरेणापीति** । साकाङ्क्षतयोच्चारित इति पदाध्याहारादिति भावः । **पुनर्निर्दिष्टेति** । एवं च सप्तम्यन्तार्थे बहिर्भूते उपश्लिष्टस्य पूर्वस्येत्यर्थः । बहिर्भावस्य चावध्यपेक्षत्वादवधेश्च सूत्रोपात्तस्यैव ग्रहीतुमुचितत्वेन त[2]स्य च शब्दात्मकत्वादवधिमानपि शब्द एवेति शब्दे सप्तमीनिर्दिष्टे पूर्वस्येति लभ्यत इति भावः । ननु प्रत्ययस्यार्थेन पौर्वापर्याऽसंभवात् कथं जनपदे इत्यत्रास्योपस्थानमत आह–**तत्रायमर्थः स्यादिति** । लक्षणा स्यादिति भावः । निर्दिष्टग्रहणे तु यत्र मुख्यया वृत्त्या शब्दतात्पर्यको निर्देशस्तत्राऽस्योपस्थानमिति न दोष इति तात्पर्यम् ॥

[ आक्षेपतत्समाधानभाष्यम् ]

**किं गतमेतदुपसर्गेण, आहोस्विच्छब्दाधिक्यादर्थाधिक्यम् ॥**

**गतमित्याह ॥कथम्?॥ निरयं बहिर्भावे वर्तते । तद्यथा–निष्क्रान्तो देशान्निर्देशः । बहिर्देश इति गम्यते । शब्दश्च शब्दाद्बहिर्भूतः, अर्थोऽबहिर्भूतः ॥**

[ आक्षेपभाष्यम् ]

**अथ निर्दिष्टग्रहणं किमर्थम्?।**

**(प्र०) अथेति** । ननु प्रयोजनस्योक्तत्वात् पुनः प्रश्नानुपपत्तिः । अयं भावः–'जनपदे लु'बित्यत्रार्थेन पौर्वापर्याऽभावात् 'जनपदे यः प्रत्यय उत्पन्नस्तस्य लु'बिति, तथा 'अतिशायने वर्तमानात्तमबादयः' इत्यर्थनिर्देशेषूपस्थानं न भविष्यति । यदि चैतत्प्रयोजनम्, तदा 'तस्मिन्निति शब्दे पूर्वस्ये'ति वक्तव्यम् ॥

**(उ०) अर्थेन पौर्वेति** । तद्वाचकशब्दलक्षणायां च न मानमिति भावः । अत्रार्थनिर्देशे च व्याख्यानमेव शरणम्, एवं चाथ किमर्थमित्यादिपूर्वपक्षसिद्धान्तावेकदेशिनोरिति बोध्यम् । किं चाऽर्थनिर्देशे 'जनपदे यः प्रत्यय' इत्यन्वये नियमप्रसङ्गाऽभावान्नियमफला परिभाषा नोपतिष्ठते इत्यपि बोध्यम् ॥

[ समाधानवार्तिकम् ]

*॥*॥ निर्दिष्टग्रहणमानन्तर्यार्थम् ॥*॥*

**निर्दिष्टग्रहणं क्रियते । 'आनन्तर्यार्थम्' । आनन्तर्यमात्रे कार्यं यथा स्यात्-'इको यणचि' । दध्यत्र, मध्वत्र । इह मा भूत्—समिधौ समिधः । दृषदौ दृषदः ॥**

**(प्र०) निर्दिष्टग्रहणमिति** । पूर्वोक्तप्रयोजनाऽभावादिति भावः । निःशब्दश्च नैरन्तर्ये वर्तते । दिशिश्चोच्चारणक्रियः । तेन निरन्तरोच्चारिते कार्यं लभ्यते ॥ समिधाविति । ननु 'संहिताया'मित्युच्यते न च व्यवहितयोः संहिताऽस्ति । अचीति चाधिकरणमौपश्लेषिकं निर्दिष्टम् । न च व्यवहित उपश्लिष्टो भवति । नैष दोषः–वर्णानां परः संनिकर्षः संहिता । सा चात्रास्ति । अचीति सत्सप्तमी विज्ञायते । व्यवहितेऽपि पूर्वशब्दो वर्तते इति यत्र विषये यथाभूत इक्संभवति अनन्तरो व्यवहितो वा तथाभूतस्यैव यणादेशः स्यात् ॥

**(उ०)** भाष्ये–**आनन्तर्यमात्रे इति** । न तु व्यवधाने इत्यर्थः । **ननु संहितायामिति** । निमित्तस्थानिनोरन्येनाऽव्यवधानं संहितेति भावः । **उपश्लिष्ट इति** । उप समीपे श्लिष्टोऽत्यन्तसमीप इति हि तदर्थः । **नैषदोष इति** । वर्णशून्यकालाऽभावः संहितेति भावः । **सत्सप्तमीति** । औपश्लेषिकाधिकरणत्वस्य व्यवहिते बाधात्सत्ता तु व्यवहितेऽपीति भावः । एवं च निर्दिष्टग्रहणमौपश्लेषिकाधिकरणसप्तम्यां तात्पर्यग्राहकमिति तात्पर्यम् । वस्तुत उपश्लेषोऽप्यत्यव्यवहितेऽस्त्येव, किञ्चिद्दूरस्थितेऽपि वृक्षमूले तिष्ठतीति

१ तत्र–तत्रैतदुपपस्थितौ । २ तस्य च–सप्तम्यन्तार्थस्य च । ३ सदर्था'।

कटव्यवधानेऽपि भूमौ शेत इति च व्यवहारात्। ननु व्यवहिते इकोऽचः पूर्वत्वाऽभावेनाऽप्राप्ते निर्दिष्टग्रहणं व्यर्थमत आह–**व्यवहितेऽपीति**। 'मथुरायाः पूर्वं पाटलिपुत्र'मित्यादिव्यवहारादिति भावः। **यत्र विषये इति**। लक्ष्यभेदेन लक्षणभेद इति भावः। वस्तुतः संहिताऽधिकारो न कर्त्तव्य इत्यभिप्रायमिदं भाष्यम्। संहिताधिकारप्रत्याख्यानं च तत्सूत्रे भाष्ये स्पष्टम्।

[ प्रश्नभाष्यम् ]

**किमर्थं पुनरिदमुच्यते ? ॥**

(प्र०) **किमर्थमिति**। किं नियमार्थमथ षष्ठीप्रक्लृप्त्यर्थमिति प्रश्नः॥

(उ०) **किमुदाहरण**मित्यादिना सूत्रप्रयोजनस्योक्तत्वात्प्रश्नानुपपत्तिरत आह–**किंनियमार्थ**मित्यादि॥

[ समाधानवार्तिकम् ]

*॥*॥ तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगाऽविशेषान्नियमार्थं वचनं दध्युदकं पचत्योदनम् ॥*॥*

**तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थोऽयमारम्भः। ग्रामे देवदत्तः। पूर्वः पर इति सन्देहः। ग्रामाद्देवदत्तः। पूर्वः पर इति सन्देहः। एवमिहापि 'इको यणचि'। दध्युदकम्। पचत्योदनम्॥ उभाविकौ उभावचौ। अचि पूर्वस्य अचि परस्येति सन्देहः। 'तिङतिङः' इति। अतिङः पूर्वस्य, अतिङः परस्येति संदेहः॥ इष्यते चात्राऽचि पूर्वस्य स्यात्, अतिङ[श्च] परस्येति। तच्चान्तरेण वचनं न सिध्यतीति नियमार्थं वचनम्॥**

**एवमर्थमिदमुच्यते॥**

(प्र०) **पूर्वोत्तरयोरिति**। कर्मणि षष्ठी। योगः संबन्धः। तदयमर्थः[इकोयणचीत्यत्र]अच्युपश्लिष्टस्येको यणा भाव्यम्। यथा च परस्मिन् पूर्व उपश्लिष्ट एवं पूर्वस्मिन्नपि परः। तिङतिङ इत्यत्रापि यथाऽतिङन्तात्परं तिङन्तं भवत्येवं पूर्वमपि। तत्र षष्ठीप्रक्लृप्तिपक्षे षष्ठ्यनुवर्तयितव्येति गौरवप्रसङ्गान्नियमार्थमित्युक्तम्। योगयोरिति। युज्येते इति योगौ। कर्मणि घञ्। अचीति सत्सप्तमीपक्षेऽप्यनियमप्रसङ्गः। अचि पूर्वस्येति। 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति न्यायादधिकरणसप्तमी कृता, न तु दिग्योगलक्षणा पञ्चमी। तत्र दध्युदकमित्यादौ पर्यायप्रसङ्गः। नहि युगपदेकस्य स्थानित्वं निमित्तत्वं चोपपद्यत इति नियमार्थं वचनं-पूर्वस्यैवाऽनन्तरस्यैव भवतीति। द्वयं चानेन क्रियते परनिवृत्तिर्व्यवहितनिवृत्तिश्च। संदेहस्तूपक्रममात्रतयोपन्यस्तः। 'न हि संदेहादलक्षण'मिति न्यायात्पर्यायप्रसङ्गात्।

(उ०) ननु 'पूर्वोत्तरयोर्योगयो'रिति भाष्यदर्शनेन पूर्वोत्तरयोरित्यस्य योगसमानाधिकरणत्वात्सापेक्षस्याऽसमर्थत्वेन 'योगाऽविशेष'इति समासो न स्यादत आह–**कर्मणि षष्ठीति**। तथाच क्रियायाः कारकांशे नित्यसापेक्षत्वेनाऽविरुद्धः समास इति भावः। 'पूर्वोत्तरयोर्योगयो'रिति तु फलितार्थकथनम्। **अच्युपश्लिष्टस्येति**। औपश्लेषिकेऽधिकरणे सप्तमीति भावः। आद्यसूत्रोदाहरणं–**दध्युदेति**। द्वितीयसूत्रोदाहरणं–**पचत्यविति**। ननु नियमपक्षात्षष्ठीप्रक्लृप्तिपक्षः प्रशस्तोऽनुवाददोषाऽभावादत आह–**तत्र षष्ठीति**। भाष्ये योगयोरिति द्विवचनोपपत्तये आह–**कर्मणीति**। युज्यमानयोः पूर्वपरयोरविशेषात् सम्बन्धाऽविशेषादित्यर्थः। वस्तुतस्तु व्यधिकरणे षष्ठ्यौ। प्रतियोगिद्वित्वेन सम्बन्धद्वित्वाच्च द्विवचननिर्देश इति बोध्यम्। **सत्सप्तमीपक्षेपीति**। 'यस्य च भावेने'ति सप्तमीति भावः। इदं चिन्त्यमित्याह–**उपपदविभक्तेरिति**। कारकविभक्तित्वं च–कारकाधिकारपठितसंज्ञानिमित्तकविभक्तित्वम्। एतच्च 'तत्र च दीयत' इति सूत्रे कैयटे स्पष्टम्। **ननु दिग्योगेति**। सत्सप्तम्या अप्युपलक्षणमिदम्। एतच्च 'श्नान्नलोप' इत्यत्र निरूपयिष्यामः। पर्यायस्यैवापादने बीजमाह–**नहि युगपदिति**। स्थानित्वे हि कार्यित्वेन प्राधान्यं निवर्त्यत्वं च, निमित्तत्वे च पारार्थ्येन गुणत्वं सत्त्वं च, तच्चोभयमेकदा एकस्य विरुद्धमिति भावः। ननु 'सन्देह' इति भाष्योक्त्या शास्त्रस्य मूकत्वमित्याभातीत्यत आह–**सन्देहस्त्विवति**।

[ प्रश्नभाष्यम् ]

**अस्ति प्रयोजनमेतत् ? ॥**

[ समाधानभाष्यम् ]

**किं तर्हीति ? ॥**

[ आक्षेपभाष्यम् ]

**अथ यत्रोभयं निर्दिश्यते, किं तत्र पूर्वस्य कार्यं भवत्याहोस्वित् परस्येति ? ॥**

(प्र०) **अथ यत्रेति**। यथा **बहोर्लोप** इत्यत्र।

१ 'गयोर'। २ 'इकोयणचीति'। ३ क्वचिन्न।

४ 'यलम्। ५ 'वचनं नियमार्थं'। ६ लुप्तं।

युगपच्चैकस्य कार्यित्वनिमित्तत्वाऽसंभवात्प्रश्नः ॥

[ समाधानवार्तिकम् ]

*॥*॥ उभयनिर्देशे विप्रतिषेधात्पञ्चमी निर्देशः ॥*॥*

**उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशो भविष्यति ॥**

(प्र०) विप्रतिषेधादिति । सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमित्यर्थः ॥

(उ०) ननु कार्यकालत्वात्परिभाषयोः पौर्वापर्याऽभावात्कथं विप्रतिषेधोऽत आह-**सूत्रपाठेति**। अत एवाग्रे ङमो ह्रस्वादिति त्रैपादिकमुदाहरणं सङ्गच्छते। तत्र हि कार्यकालपक्षाश्रयेणैव परिभाषाप्रवृत्तिरिति बोध्यम् ॥

[ प्रश्नभाष्यम् ]

**किं प्रयोजनम् ? ॥**

(प्र०) किं प्रयोजनमिति । विभक्तिविशेषनिर्देशस्यानवकाशत्वाद्वक्ष्यमाणोऽभिप्रायः ॥

(उ०) विभक्तिविशेषनिर्देशस्यानवकाशत्वादिति । इदमुदाहरिष्यमाणोदाहरणविशेषापेक्षम् । अत एव 'ङः सिः धु'ङित्यत्र द्वयोरनवकाशत्वेऽपि न क्षतिः ॥

[ प्रयोजनवार्तिकानि ]

*॥*॥ प्रयोजनमतो लसार्वधातुकानुदात्तत्वे ॥*॥*

**[ अतो लसार्वधातुकानुदात्तत्वे प्रयोजनम् ] ॥ वक्ष्यति-तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थः' इति । तस्मिन् क्रियमाणे तास्यादिभ्यः परस्य लसार्वधातुकस्य, लसार्वधातुके परतस्तास्यादीनामिति सन्देहः। तास्यादिभ्यः परस्य लसार्वधातुकस्य ॥**

(प्र०) संदेह इति । संदेहाच्च पर्यायप्रसङ्गः ॥

(उ०) भाष्ये-**वक्ष्यति तास्यादिभ्य इति**। 'तास्यनुदात्ते'दिति सूत्रे। **अभ्यस्तसिजर्थ इति**। 'अभ्यस्तानामादिः' 'आदिः सिच' इति सूत्रयोर्लसार्वधातुक इति सप्तम्यन्तानुवृत्तिसिद्धये इत्यर्थः ।

*॥ * ॥ बहोरिष्ठादीनामादिलोपे ॥ * ॥*

**[बहोरिष्ठादीनामादिलोपे प्रयोजनम्] बहोरुत्तरेषामिष्ठेमेयसाम्, इष्ठेमेयःसु परतो बहोरिति सन्देहः । बहोरुत्तरेषामिष्ठेमेयसाम् ॥**

(प्र०) इष्ठेमेयःस्विति । तदा च बहुशब्दस्य लोपभूभावौ पर्यायेण स्याताम् ॥

*॥ * ॥ गोतो णित् ॥ * ॥*

**[गोतोणित् प्रयोजनम्] । गोतः परस्य सर्वनामस्थानस्य, सर्वनामस्थाने परतो गोत इति सन्देहः । गोतः परस्य सर्वनामस्थानस्य ॥**

(प्र०) गोतो णिदिति । यदि गोशब्दस्य णित्त्वं स्यात्तदा 'तिष्ठति गौ'रित्यत्र वचनसामर्थ्यादनङ्गस्यापि वृद्धिः स्यात् ॥

(उ०) ननु भाष्ये सर्वनामस्थानस्य गोत इति षष्ठीदर्शनाण्णिदित्यनेनान्वयो न स्यादत आह-**णित्त्वमिति**। भावप्रधानो निर्देश इति भावः। गोतो णित्त्वे को दोषस्तत्राह-**तिष्ठतीत्यादि** ॥

*॥*॥ रुदादिभ्यः सार्वधातुके ॥ * ॥*

**[ रुदादिभ्यः सार्वधातुके प्रयोजनम् ] । रुदादिभ्यः परस्य सार्वधातुकस्य, सार्वधातुके परतो रुदादीनामिति सन्देहः । रुदादिभ्यः परस्य सार्वधातुकस्य ॥**

*॥ * ॥ आने मुगीदासः ॥ * ॥*

**[ आने मुगीदासः प्रयोजनम् ] । आस उत्तरस्यानस्य, आने परत आस इति सन्देहः । आस उत्तरस्यानस्य ॥**

*॥ * ॥ आमि सर्वनाम्नः सुट् ॥ * ॥*

**[आमि सर्वनाम्नः सुट् प्रयोजनम्] ॥ सर्वनाम्न उत्तरस्यामः, आमि परतः सर्वनाम्न इति सन्देहः॥ सर्वनाम्न उत्तरस्यामः॥**

*॥ * ॥ घेर्ङित्याण्नद्याः ॥ * ॥*

**[ घेर्ङित्याण्नद्याः प्रयोजनम् ] । नद्या उत्तरेषां ङिताम्, ङित्सु परतो नद्या इति सन्देहः ॥ नद्या उत्तरेषां ङिताम् ॥**

---

१ लुप्तं स्यात् ।

२ इति-इत्यनयोः सूत्रयोः ।

|| * || *याडापः* || * ||

[ याडापः प्रयोजनम् ] ॥ **आप उत्तरस्य ङितः, ङिति परत आप इति सन्देहः ॥ आप उत्तरस्य ङितः ॥**

|| || *ङमो ह्रस्वादचि ङमुण्नित्यम्* || ||

[ ङमो ह्रस्वादचि ङमुण्नित्यं प्रयोजनम् ] ॥ **ङम उत्तरस्याऽचः भन्नि परतो ङम इति सन्देहः ॥ ङम उत्तरस्याचः ॥**

(प्र०) ङमो ह्रस्वादिति । ङमो ङमुडागमे सति 'कुर्वन्नास्ते' इत्यत्र णत्वप्रसङ्गः । पदस्य चैको नकारोऽन्तो न तु द्वाविति णत्वनिषेधो नास्ति ॥

(उ०) **पदस्य चैक इति** । व्यक्तिपक्षे इदम् । व्यक्तिपक्षेऽप्येवंविधप्रयोगसाधनायैवं व्याख्यानमिति भावः । यद्वाऽन्तशब्दस्यावयववाचित्वेनेदृशे विषये जातिग्रहणाऽसंभव एवेत्याहुः ॥

[ विप्रतिषेधानुपपत्तिवार्तिकम् ]

|| * || *विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः* || * ||

**विभक्तिविशेषनिर्देशस्यानवकाशत्वादयुक्तोऽयं विप्रतिषेधः । सर्वत्रैवाऽत्र कृतसामर्थ्या सप्तमी अकृतसामर्थ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यति ॥**

(प्र०) विभक्तीति । पूर्वोपात्तेषु सूत्रेषु सप्तमीनिर्देशस्य क्वचित्पूर्वार्थत्वात्क्वचिदुत्तरार्थत्वात्सावकाशत्वम् । पञ्चमी तु निरवकाशेति परस्य कार्यित्वं बोधयिष्यतीति भावः ॥

(उ०) 'ङः सि धु'ङित्यादावुभयोरप्यनवकाशत्वादाह—**पूर्वोपात्तेष्विति** । बहोरिति पञ्चमी अचरितार्था । अत एवेष्ठादिषु षष्ठी । अत एव 'भू च बहो'रिति पृथङ्निर्देशश्चरितार्थः । **गोत** इत्यादौ 'सर्वनामस्थाने' इति सप्तमी पूर्वत्र चरितार्था । गोशब्दस्य णित्ववैयर्थ्यं च । तिष्ठति गौरित्यत्र गोशब्दं प्रति तिष्ठतेरनङ्गत्वान्न दोषः । **रुदादिभ्यः सार्वधातुक** इति,—सार्वधातुक इति 'लिङः सलोप' इत्यादौ चरितार्थम् । तत्र हि सार्वधातुके विद्यमानस्य सस्य लोप इत्यर्थः । **'आमि सर्वनाम्न'** इत्यामीति **त्रेस्त्रय** इत्यत्र सावकाशम् । **'ङम'** इति सूत्रेऽचीति **मय उञ** इति सूत्रे चरितार्थम् ।

भाष्ये-**पञ्चमीनिर्देशो भविष्यतीत्यस्य** बलवान्स्वार्थे एव भविष्यतीत्यर्थः । सप्तमी तु षष्ठ्यर्थे इति भावः ॥

[ एकदेशिनःसमाधानवार्तिकम् ]

|| * || *यथार्थं वा षष्ठीनिर्देशः* || * ||

**यथार्थं वा षष्ठीनिर्देशः कर्तव्यः । यत्र पूर्वस्य कार्यमिष्यते तत्र पूर्वस्य षष्ठी कर्तव्या । यत्र परस्य कार्यमिष्यते तत्र परस्य षष्ठी कर्तव्या ॥**

(प्र०) यथार्थं वेति । यथाविषयमित्यर्थः । प्रदेशेषु कार्यिणः षष्ठ्यैव निर्देष्टव्याः ॥

(उ०) भाष्ये एकदेशी प्रौढ्याह-**यथार्थं वेति** । तत्र अर्थशब्दो न प्रयोजनादिवाचीत्याह-**यथाविषयमिति** । **प्रदेशेष्विति** । प्रागुक्तेष्वित्यर्थः । भाष्ये-**पूर्वस्य षष्ठीति** । पूर्वबोधकपदस्य षष्ठ्यन्तस्योच्चारणं कार्यमित्यर्थः । एवंचोभयोच्चारणे गौरवमित्येकदेश्युक्तिरियम् ॥

[ आक्षेपभाष्यम् ]

**स तर्हि तथा निर्देशः कर्तव्यः ? ॥**

(उ०) तत्र तत्र सप्तम्यन्तषष्ठ्यन्तयोर्द्वयोः पाठे गौरवं मत्वेतर एकदेशी आह-**स तर्हीति** ।

[ एकदेशिनःसमाधानभाष्यम् ]

**न कर्तव्यः । अनेनैव प्रक्लृप्तिर्भविष्यति-तस्मिन्निति निर्दिष्टे पूर्वस्य षष्ठी, तस्मादित्युत्तरस्य षष्ठी [ति] ॥**

(उ०) स एकदेशी प्रौढ्यैवाह-**न कर्तव्यः** । **अनेनैवेति** । षष्ठीपदानुवृत्तिगौरवादयमेकदेशी । उभयोः प्रकल्पकत्ववारणाय परत्वानवकाशत्वे चावश्यके इति च । **निर्दिष्टे पूर्वस्य षष्ठीति** । पूर्वस्य कार्यित्वप्रतिपादनयोग्या षष्ठी तद्बोधकपदे भवतीत्यर्थः । एवमुत्तरस्येत्यपि ॥

[ आक्षेपभाष्यम् ]

**तत्तर्हि षष्ठीग्रहणं कर्तव्यम् ॥**

[ समाधानभाष्यम् ]

**न कर्तव्यम् । प्रकृतमनुवर्तते ॥**

**क प्रकृतम् ? ॥ 'षष्ठी स्थानेयोगे' ति ॥**

[ प्रकल्पकपक्षदूषणवार्तिकम् ]

||*|| *प्रकल्पकमिति चेन्नियमाऽभावः* ||*||

**प्रकल्पकमिति चेन्नियमस्याऽभावः ।**

१ लुप्तं स्यात् । २ क्वचिन्न ।

२ इतः क्वचिन्न ।

उक्तं चैतत्–नियमार्थोऽयमारम्भ इति ॥

(प्र०) प्रकल्पकमिति चेदिति। यत्र षष्ठी नास्ति तत्र तस्याः प्रक्लृप्तिः क्रियते। यत्र षष्ठ्यस्ति–'इको यणची'त्यादौ, तत्रानेन नियमो न क्रियते। नहि व्यापारद्वयमुपपद्यते, येन षष्ठीप्रक्लृप्तिस्तस्या नियमश्चेति भावः ॥

(उ०) नहीति। आवृत्तिप्रसङ्गादिति भावः ॥

[ अपरदूषणभाष्यम् ]

प्रत्ययविधौ खल्वपि पञ्चम्यः प्रकल्पिकाः स्युः ॥ तत्र को दोषः ? ॥ गुप्तिज्किद्भ्यः सन्'। 'गुप्तिज्किद्भ्य' इत्येषा पञ्चमी 'स'न्निति प्रथमायाः षष्ठीं प्रकल्पयेत्–'तस्मादित्युत्तरस्ये'ति ॥

[ तद्बाधकभाष्यम् ]

अस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते। तत्राऽऽन्तर्यतः सनः सन्नेव भविष्यति ॥

[ एकदेशिनस्तत्साधकभाष्यम् ]

नैवं शक्यम्। [ तत्र[1] ] इत्संज्ञा न प्रकल्पेत। उपदेश इतीत्संज्ञोच्यते ॥

(प्र०) इत्संज्ञेति। आदेशस्योपदेशाऽभावात्तस्येत्संज्ञा न सिध्यतीत्यर्थः। स्थानी चोत्पत्तिकाल एव निवृत्त्यभिमुखतया प्रतिपन्न इति स्थानिन्यपीत्संज्ञा नास्ति ॥

(उ०) इतर एकदेशी उपदेश इति हलन्त्यमित्यत्रानुवर्तत इति मत्वाह–इत्संज्ञेति। तद्व्याचष्टे–उपदेशाभावादिति। स्थानेऽन्तरतमपरिभाषयाऽनुमीयमानत्वेनादेशस्योच्चारणाऽभावादित्यर्थः। ननु स्थानिन्येव तस्याः प्रवृत्तेरनुमीयमानादेशो निरनुबन्धक एवेत्यत आह–स्थानी चेति। यदा धातोः प्रत्ययस्तदानीमेवादेशो भवेदिति नेत्संज्ञादि प्रतीक्षते। यत्र कार्यं तत्रेत्संज्ञेति प्रयोग एवेत्संज्ञेत्याभिमानः। एकदेश्युक्तित्वादत्र नात्यन्तं निर्भरः कार्यं इति बोध्यम् ॥

[ प्रकल्पकपक्षेदोषान्तरवार्तिकम् ]

॥ * ॥ *प्रकृतिविकाराव्यवस्था च* ॥ * ॥

प्रकृतिविकारयोश्च व्यवस्था न प्रकल्पते–'इको यणचि'। अचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत्–'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति ॥

(प्र०) यणिति प्रथमाया इति। ततश्चैकः स्थाने यण्न लभ्येत। इकोऽप्यन्य आदेशः स्याद्यणोऽप्यन्य इत्यभिमता स्थान्यादेशभावव्यवस्था न स्यात् ॥

(उ०) ततश्चेति। पूर्वस्य जायमानो यणपि पूर्व एवेति तत्रापि षष्ठीकल्पनमिति भावः ॥

॥ * ॥ *सप्तमीपञ्चम्योश्च[2] भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः* ॥ * ॥

सप्तमीपञ्चम्योश्च भावादुभयत्रैव षष्ठी प्राप्नोति। 'तास्यादिभ्य' इत्येषा पञ्चमी लसार्वधातुक इत्यस्याः सप्तम्याः षष्ठीं प्रकल्पयेत्–'तस्मादित्युत्तरस्ये'ति। तथा लसार्वधातुक इत्येषा सप्तमी 'तस्यादिभ्य' इति पञ्चम्याः षष्ठीं प्रकल्पयेत्–'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति ॥ तत्र को दोषः ? ॥ 'तत्रोभयकार्यप्रसङ्गः' ॥ उभयोः[3] कार्यं तत्र प्राप्नोति ॥

(प्र०) उभयकार्यप्रसङ्ग इति। विरोधाऽभावाद्यौगपद्येनोभयोः कार्यं प्राप्नोति ॥

(उ०) विरोधाभावादिति। स्थानिभेदादित्यर्थः। अत एव विप्रतिषेधाऽप्रवृत्तिः। यद्यपि कार्यित्वनिमित्तत्वे युगपद्विरुद्धे, तथाप्येकदेश्युक्तित्वान्नात्यन्तनिर्भरः कार्यं इति बोध्यम्। एवमग्रेऽपि बोध्यम् ॥

[ दूषणोद्धारभाष्यम् ]

नैष दोषः। यत्तावदुच्यते–'प्रकल्पकमिति चेन्नियमाऽभाव'इति'। मा भून्नियमः। सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते, पञ्चमीनिर्दिष्टे परस्य। यावता सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते एवं पञ्चमीनिर्दिष्टे परस्य। नोत्सहते सप्तमीनिर्दिष्टे परस्य कार्यं भवितुं, नापि पञ्चमीनिर्दिष्टे पूर्वस्य ॥

(प्र०) मा भून्नियम इति। षष्ठीप्रक्लृप्त्यैव तत्फलस्य लब्धत्वादिति भावः। यत्र षष्ठी नास्ति तत्रासौ प्रकल्प्यते। यत्र त्वस्तीको यणचीति, तत्रापि पूर्वस्यैव षष्ठी न परस्येति प्रकल्प्यते ॥

(उ०) यत्रत्वस्तीति। तस्मिन्नितीत्यस्य बहुविषयत्वलाभाय विषयभेदेन भेदात् क्वचित्पूर्वस्य षष्ठीति विधि-

१ क्वचिन्न। २ 'पञ्चमीसप्त'।

३ 'तत्रउभयोः कार्यं'।

परम्, कचिन्नियमार्थपरमित्यर्थः ॥

[ आक्षेपनिरासभाष्यम् ]

**यदप्युच्यते-'प्रत्ययविधौ खल्वपि पञ्चम्यः प्रकल्पिकाः स्यु'रिति। सन्तु प्रकल्पिकाः ॥**

[ आक्षेपस्मारणभाष्यम् ]

**ननु चोक्तं-'गुप्तिज्किद्भ्यः स'न्नित्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत् 'तस्मादित्युत्तरस्ये'ति ॥**

[ परिहारस्मारणभाष्यम् ]

**परिहृतमेतत्-न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते। तत्रान्तर्यतः सनः सन्नेव भविष्यतीति ॥**

[ परिहारनिराासस्मारणभाष्यम् ]

**ननु चोक्तम्-'नैवं शक्यमित्संज्ञा न प्रकल्पेत, उपदेश इतीत्संज्ञोच्यते' इति ॥**

[ परिहारस्थापनभाष्यम् ]

**स्यादेष दोषो यदीत्संज्ञा आदेशं प्रतीक्षेत। तत्र[तु]खलु कृतायामित्संज्ञायां लोपे च कृते आदेशो भविष्यति। उपदेश इति हीत्संज्ञोच्यते ॥**

(प्र०) कृतायामित्संज्ञायामिति। सूत्रएवोच्चारितस्य इत्संज्ञेति प्रयोगे स शब्द एव सन्नित्कार्यं लभत इत्यर्थः।

(उ०) **सूत्र एवेति**। षष्ठीप्रकॢप्तेः प्रागेव परत्वादन्तरङ्गत्वाच्च उपदेशोत्तरकालं सूत्र एवेत्संज्ञा। कार्यं तु प्रयोग एवेति भावः। एवंचे निरनुबन्ध[क]स्यैव प्रत्ययत्वेन विधानात्तदादेशस्य कुतः सानुबन्धकतेति तात्पर्यम्। भाष्ये **उपदेश इति हीत्संज्ञोच्यत इति**। एवंचे त्वदुक्तिर्व्याहतेति भावः।

[ परिहारान्तरभाष्यम् ]

**अथ वा नानुत्पन्ने सनि प्रकॢप्त्या भवितव्यम्। यदा चोत्पन्नः सन्, तदा कृतसामर्थ्या पञ्चमीति कृत्वा प्रकॢप्तिर्न भविष्यति ॥**

(प्र०) **अथ वेति**। परत्वविशिष्टस्य सन उत्पादने उपक्षयात्प्रवृत्त्यन्तराऽभावान्नास्ति पञ्चम्याः प्रकल्पकत्वमित्यर्थः॥

(उ०) **हलन्त्यसूत्रे** उपदेशपदाऽसंबन्ध एवेति तत्सूत्र वक्ष्यमाणपक्षेऽप्याह—**अथवेति**। **परत्वविशिष्टस्येति**। अनुत्पत्तौ धातोः परस्येति वक्तुमशक्यत्वादिति भावः। **उपक्षयादिति**। 'पञ्चम्या' इति शेषः। **प्रवृत्त्यन्तराभावादिति**। पुनः प्रवृत्तौ मानाऽभावादिति भावः।

[ आक्षेपबाधकभाष्यम् ]

**यदप्युच्यते 'प्रकृतिविकाराव्यवस्थाचे'ति। तत्रापि कृता प्रकृतौ षष्ठी इक इति, विकृतौ प्रथमा यणिति। यत्र च नाम सौत्री षष्ठी नास्ति, तत्र प्रकॢप्त्या भवितव्यम् ॥**

(प्र०) **प्रकृतौ षष्ठीति**। 'इको यणची'ति श्रुतयोरेव स्थान्यादेशभावोपपादनान्नास्ति षष्ठीप्रकल्पनम्। अपेक्षाया अभावादित्यर्थः॥

(उ०) **अपेक्षाया इति**। श्रुतयोः संबन्धाऽभावे हि तस्मिन्नित्यनेन षष्ठीप्रकॢप्त्यपेक्षा। न चे प्रकृते तथा। लिङ्गाच्छ्रुतेर्बलीयस्त्वादित्यर्थः।

**अथ वाऽस्तु तावदिको यणचीति यत्र [च]नाम सौत्री षष्ठी। यदि चेदानीमचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत् 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'त्यस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते। तत्राऽऽन्तर्यतो यणो यणेव भविष्यति।**

(उ०) भाष्ये-**अथवाऽस्तु तावदिति**। प्रथमाषष्ठीनिर्देशसामर्थ्यात्प्रथमत इग्यणोः स्थान्यादेशभावोऽस्तु। तत एतत्सूत्रबलाद्यणः स्थानित्वेऽपि न क्षतिरित्यर्थः। **यत्र नाम सौत्री षष्ठी, यदिचेदानीमिति**। यत्र सौत्री षष्ठ्यस्ति तत्रापीदानीं यदि प्रकल्पयेत्तर्ह्यस्तु—प्रकल्पयत्वित्यर्थः। परं त्विदं प्रौढ्या। 'अथवा नानुत्पन्ने सनी'ति प्रागुक्तन्यायात् 'गाङ्कुटादिभ्य' इत्यादौ षष्ठीप्रकॢप्तावपि न दोषः, ङित्पदस्य षष्ठंपरत्वादिति बोध्यम्।

[ आक्षेपबाधकभाष्यम् ]

**यदप्युच्यते-'सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रकॢप्तिस्तत्रोभयकार्यप्रसङ्गः' इति। [ नैष दोषः ]। आचार्यप्रवृत्तिर्ज्ञापयति—'नोभे युगपत्प्रकल्पिके भवतः' इति, यदय'मेकः पूर्वपरयो' रिति पूर्वपरग्रहणं करोति। [ तस्मिन्निति निर्दिष्टे ] ॥**

(प्र०) **यदयमिति**। यद्युभयनिर्देशात्परस्पर-

१ इतिः कचिन्न। २ कचिन्न। ३ एवंच-तत्रैवेत्संज्ञायां च। ४ एवंच तत्र तदनुवृत्तौ च। ५ 'अत्रापि'। ६ 'यणिति'।

षष्ठीप्रकल्पने सति ग्रहणकवाक्याद्वाक्यान्तरमनुमीयते तास्यादिभ्यो लसार्वधातुकस्य लसार्वधातुके तास्यादीनामनुदात्तत्वं भवतीति तदाङ्गुण इत्यादावपि तथैव प्रक्लृप्तिर्भविष्यतीति किं पूर्वपरयोरित्यनेनेत्यर्थः । तत्र परत्वानवकाशत्वाभ्यां नियमपक्षवत्षष्ठीप्रकल्पनपक्षे व्यवस्था । 'दीर्घाच्छे तुग्भवती'त्यत्र षष्ठीस्थाने व्यत्ययेन पञ्चमीति व्याख्यानात्, 'सुराच्छाये'त्यादेर्वा ज्ञापकाद्दीर्घस्यैव तुग्भवति, न तु च्छस्य ॥ [ तस्मिन्निति ]

(उ०) यद्यपि युगपत् प्रक्लृप्तिर्विरोधान्न संभवति, तथाप्येकदेशित्वादेव ज्ञापकेन परिहरति–**नोभे** इत्यादिना। **तथैव प्रक्लृप्तिरिति ।** अवर्णादचि अवर्णस्याऽचश्चैको गुणो भवतीत्यर्थ इति भावः। ननूभयोः प्रकल्पकत्वाऽभावेऽपि एकस्य कस्य प्रकल्पकत्वमत आह—**तत्र परत्वेति**। 'ङः सि धु'डित्यादौ परत्वमुक्तेष्वनवकाशत्वमिति भावः। ननु **दीर्घादि**ति सूत्रे पञ्चम्या अनवकाशत्वेन परत्वेन च च्छकारे षष्ठीप्रकल्पनं स्यादत आह–**दीर्घाच्छे इति । सुराच्छायेति** । पदान्ते तुको वैकल्पिकत्वाच्चिन्त्यमिदम् । तुक्सहितं पाणिनिपाठमभिप्रेत्य तु ज्ञापकोऽन्यासः। युक्तश्च तथा पाठः, वैकल्पिकेषु भावानुष्ठानस्य धर्माधिक्यफलकत्वात् । [ **तस्मादित्युत्तरस्य** ] ।

## स्वंरूपं शब्दस्याशब्दसंज्ञा १।१।६७

(प्र०) स्वं रूपं शब्द । स्वरूपस्य पर्यायाणां तद्विशेषाणां च ग्रहणे प्राप्ते नियमार्था परिभाषेयमिति केचिदाहुः । अन्ये तु लिङ्गाऽभावाद्विध्यन्तरशेषभावाच्च नेयं परिभाषा अपि तु संज्ञासूत्रमिदमिति प्रतिपन्नाः । देवदत्तादयश्च संज्ञाशब्दा नियमार्था इति सिद्धान्तः । सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः सर्वशब्दप्रत्याय्यशक्तियुक्तश्चार्थ इति व्यवहाराय नियमः क्रियते । रूपशब्देन चेहाऽग्निशब्दत्वादिकं शुकसारिकापुरुषोदीरितभिन्नशब्दव्यक्तिसमवेतं सामान्यमभिधीयते । तत्र[1] व्यक्तेः सामान्यं सञ्ज्ञा, सामान्यस्य वा व्यक्तिरिति व्याख्याने कामचारः । व्यक्तिः कार्यं प्रतिपद्यमाना सामान्यप्रतिबद्धैव प्रतिपद्यते, सामान्यमपि कार्यं प्रतिपद्यमानं व्यक्तिद्वारेणैव प्रतिपद्यत इति फले न कश्चिद्भेदः ॥

(उ०) **स्वंरूपम् । स्वरूपस्येति ।** शब्देनार्थप्रतीतावर्थे केषांचित्कार्याणामसंभवात्तद्वाचकशब्दमात्रग्रहणादिति भावः । **अन्ये त्विति** । शब्दस्य स्वरूपमिह ग्राह्यत्वेन विधित्सितमिति नेह प्रदेशविशेषसमर्पकं लिङ्गमस्तीति भावः । ननु शब्दस्येत्येव लिङ्गम्, यत्र शब्दग्रहणं तत्र स्वरूपमेव ग्राह्यं न तु पर्यायादीत्यर्थः । तेन 'जनपदे' 'अपत्य' मित्यादौ नास्याः प्रवृत्तिरत आह—**विध्यन्तरेति ।** न हि स्वरूपमित्यस्याग्नेर्ढगित्यादौ पञ्चम्यन्तेन सामानाधिकरण्येन वैयधिकरण्येन वा संबन्धः संभवतीति भावः । भाष्यकारोऽप्याह—**रूपं शब्दस्य संज्ञे**तीत्ययमेव पक्षो युक्तः । ननु संज्ञापक्षे उभयगतिन्यायादेकस्यानेकार्थसंभवाच्चार्थस्यापि प्रतीतौ तत्र कार्याऽसंभवे ढगादयः पर्यायादिभ्योऽपि दुर्वारा इत्यत आह–**देवदत्तादयश्चेति ।** नियमार्थत्वमुपपादयति—**सर्वार्थेति** । एकस्य सकलशब्दार्थात्मकस्फोटस्यैव सर्वबोधकत्वादिति भावः । **शक्तियुक्त इति ।** शक्त्याश्रय इत्यर्थः । **सर्वशब्दप्रत्याय्यशक्तिरिति ।** प्रत्याय्यत्वे[2] शक्तियुक्त इत्यर्थः । अनेन नियमद्वयं दर्शितम्–अनेन शब्देनायमेवार्थो ग्राह्यः, अयमर्थोऽनेनैव शब्देन बोधनीय इति चेति । वस्तुतस्तु सर्वेषां सर्वार्थवाचकत्वेऽपि तन्नाऽस्मदादिज्ञानविषयः । सर्वार्थसर्वशब्दानामस्माकं विशिष्याऽज्ञानात् । किंतु योगिनामेव तज्ज्ञानम् । एवंच शास्त्राधिकारिणोऽस्मदादीन्प्रति नियमार्थत्वं शास्त्रस्याऽसंभव्येव । इयं कथा[3] तु सर्वस्य ब्रह्मरूपत्वकथावन्न व्यवहारोपयोगिनी । तस्मात् प्रकरणादस्यैवार्थस्य शास्त्रे उपस्थितौ अर्थान्नियमः फलित इति बोध्यम् । तत्र द्वितीयो नियमश्चिन्त्यः, आकारादीनां वृद्धिशब्दातिरिक्तैराकारादिशब्दैर्व्यवहारानापत्तेरिति केचित् । ननु रूपरूपिणोरत्र भेदाऽभावाच्छब्दस्येति षष्ठ्यनुपपन्ना, संज्ञासंज्ञिसंबन्धश्चानुपपन्न इत्यत आह–**रूपेति** । सामान्यलक्षणघटकानेकसमवेतत्वसिद्धये आह–**शुकेति ।** न च तत्रोच्चारणक्रियैव भिद्यते न शब्द इति वाच्यम् । ताल्वादिव्यापाररूपस्योच्चारणस्याऽश्रौतत्वेन शब्दश्रवणानन्तरं ज्ञायमानवक्तृविशेषानुमानानापत्तेः, उदात्तत्वादिविरुद्धधर्माध्यासाच्च भेदसिद्धेः, वर्णनिष्ठतया प्रतीयमानानां ध्वनिनिष्ठत्वकल्पने मानाभावादिति भावः । ननु प्रायेण सामानाधिकरण्यं संज्ञासंज्ञिनोर्दृष्टम्, न चेह तदित्यत आह–**तत्रेति** । स्वशब्दो व्यक्तिबोधक आत्मीयत्वेन । एवंच **शब्दस्य**–तत्तज्जातिविशिष्टस्य, **स्वं**–व्यक्तिः, **रूपं**–सामान्यसंज्ञकमित्याद्यः पक्षः। 'शब्दस्य रूप'मित्युद्दिश्य 'स्व'मित्यनेन व्यक्तिसंज्ञकत्वं विधीयत इति द्वितीयपक्षसंभवः, सामानाधिकरणस्य चोपपत्तिः । न चानयोः पक्षयोः फले कश्चिद्विशेष इत्याह—**व्यक्तिरिति । व्यक्तिद्वारेणेति** । सामान्यस्य ढगादिभिः साक्षात्पौर्वापर्याऽसंभवादिति भावः ।

[ आक्षेपभाष्यम् ]

**'रूप'ग्रहणं किमर्थम् । न 'स्वं'[4] शब्द-**

---

१ तत्रेति । रूपशब्दस्य तदर्थकत्वे इत्यर्थः। २ प्रत्याय्यत्वरूपशक्तीत्यर्थः। ३ इयं–सर्वे सर्वार्थवाचका इति कथा। ४ क्वचिन्न ।

**स्याशब्दसंज्ञा भवती' त्येव रूपं शब्दस्य संज्ञा भविष्यति । नह्यन्यत्स्वं शब्दस्याऽस्त्यन्यदतो रूपात् ? ।**

(प्र०) **रूपग्रहणमिति ।** प्रतीतावुपदेशानपेक्षत्वादन्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपमेव ग्रहीष्यते । अर्थो हि सम्बन्धग्रहणमपेक्षते । अनुकरणशब्देषु नार्थः प्रतीयते । साधारणश्च पर्यायैरपि प्रत्यायनात् । न चार्थः संज्ञा शक्यते वक्तुं, संज्ञित्वे चाऽर्थस्य सूत्रमनर्थकमिति प्रश्नः ॥

(उ०) **'रूपग्रहणं किमर्थं'**मिति भाष्यस्य स्वशब्देनैव जातिर्ग्राह्या व्यक्तिर्वा । शब्दस्य स्वं स्वीया जातिर्व्यक्तिर्वा बोध्येत्यर्थो भविष्यति । सामानाधिकरण्यमेव संज्ञासंज्ञिनोरिति तु न नियमः । उञ इत्यादौ व्यभिचारादित्याशयः । शब्दस्य सूत्रोच्चारितस्य स्वं स्वीयं रूपं प्रयोगस्थं संज्ञीत्यर्थ इति केचित् । भाष्ये-**रूपं शब्दस्य संज्ञे**त्यत्र संज्ञाशब्दो बोध्यपरः, कर्मव्युत्पत्तेः । अन्यथा स्वशब्देनार्थग्रहणाय रूपग्रहणमित्युत्तरभाष्याऽसङ्गतेः । नह्यर्थः शब्दस्य संज्ञा, किंतु बोध्य एवेति बोध्यम् । तत्रात्मीयवाचिना स्वशब्देन रूपस्यैव कथं परिग्रह इत्यत आह-**प्रतीताविति । उपदेशः**-संबन्धग्रहणम् । **अन्तरङ्गत्वं**-प्रथमतः श्रोत्रेणोपस्थित्या । अहेयत्वमुपपादयति-**अनुकरणेति ।** शब्दमात्रतात्पर्यकोच्चारणस्यैवानुकरणत्वात् । अर्थस्य रूपतुल्यत्वमभ्युपेत्याप्याह-**नचार्थ इति ।** शब्दात्मिकानामेवावर्तिनोत्वेन संज्ञात्वात्ताद्रूश्यसंज्ञयाऽव्यवहाराच्चेति भावः । ननु स्वशब्दस्याऽभिधेयमित्येवार्थोऽस्त्वित्यत आह-**संज्ञित्वे चेति ।** लोकत एव सिद्धेरिति भावः ॥

[ समाधानभाष्यम् ]

**एवं तर्हि सिद्धे सति यद्रूपग्रहणं करोति तज्ज्ञापयत्याचार्यः-अस्त्यन्यद्रूपात्स्वंशब्दस्येति ॥ किं पुनस्तत् ? ॥ अर्थः ॥ किमेतस्य ज्ञापने प्रयोजनम् ?॥ 'अर्थवद्ग्रहणेनानर्थकस्ये'त्येषा परिभाषा न कर्तव्या भवति ॥**

(प्र०) **एवं तर्हीति ।** यत एवेह रूपग्रहणस्य व्यावर्त्यं नास्ति तत एव ज्ञापकम् । सति तु व्यावर्त्ये तत्रैवोपक्षयान्न ज्ञापकं स्यात् । **अर्थवद्ग्रहण इति ।** अर्थयुक्तं रूपं गृह्यत इत्यर्थः । तेन काशे कुशे इत्यत्र 'शे' इति प्रगृह्यसंज्ञा न भवति । यत्र चार्थवता रूपेण शब्दो नाश्रीयते तत्रेदं नोपतिष्ठते, यथा वर्णग्रहणेषु टेरेत्वे चेति पचेते इत्यत्रानर्थकस्यापि टेरेत्वं भवति ॥

(उ०) **ज्ञापकमिति ।** स्वशब्देन बहिरङ्गस्याप्यर्थस्य ग्रहणे इत्यर्थः । नन्वन्यस्य स्वीयस्य सत्त्वेन तद्व्यावृत्त्यर्थं रूपग्रहणमित्यर्थो भाष्याल्लभ्यते । एवं च शास्त्रेऽर्थस्याऽग्रहणे कथमर्थवत्परिभाषासिद्धिरिति चेन्न । अन्यत् स्वीयमस्ति यतोऽतस्तस्यापि शब्दबोध्यत्वबोधनार्थमुभयोपादानमिति भाष्याशयात् । एवं चाधिकसङ्ग्रहार्थं रूपग्रहणम् । रूपग्रहणेन चान्तरङ्गत्वादिन्यायबाधपूर्वकं स्वशब्देनार्थस्य शब्दबोध्यत्वं बोध्यत इति तात्पर्यम् । तत्रोभयानुग्रहाय सति संभवेऽर्थवतो रूपस्य ग्रहणम् । असति तु केवलार्थस्य शुद्धस्य वा रूपस्य ग्रहणम् । तदाह-**यत्र चार्थवतेत्यादि ।** अर्थोपस्थापकेन रूपेणेत्यर्थः । अत एव भिन्नविभक्तिनिर्देशश्चरितार्थः ।

[ प्रश्नभाष्यम् ]

(प्र०) **किमर्थमिति ।** वक्ष्यमाणोऽभिप्रायः ॥

**किमर्थं पुनरिदमुच्यते ? ॥**

[ समाधानवार्तिकम् ]

*॥*॥ शब्देनार्थगतेरर्थ[ कार्य ]स्याऽसंभवात्तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम् ॥*॥*

**शब्देनोच्चारितेनार्थो गम्यते-गामानय दध्यशानेत्यर्थ आनीयते ऽर्थश्च भुज्यते । अर्थे कार्यस्याऽसंभवात्'[3] । इह च व्याकरणे अर्थे कार्यस्याऽसंभवः । 'अग्नेर्ढगि'ति न शक्यतेऽङ्गारेभ्यःपरो ढक्कर्तुम् । शब्देनार्थगतेरर्थे कार्यस्याऽसंभवाद्यावन्तस्तद्वाचिनः शब्दास्तावद्भ्यः सर्वेभ्य उत्पत्तिः प्राप्नोति । इष्यते च तस्मादेव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम् ॥**

**एवमर्थमिदमुच्यते ॥**

(प्र०) **शब्देनार्थगतेरिति ।** कात्यायनवचनप्रामाण्यादक्रियामिति प्रतिषेधस्याऽनित्यत्वाद्विभाषा गुणेऽस्त्रियामिति पञ्चमी । इह योग्यतालक्षणेन संबन्धेन शब्दोऽर्थं लोके प्रत्याययति । व्याकरणेऽपि पशुरपत्यं देवता प्राञ्च उदञ्चो भरता इत्यर्थ एव गृह्यते । अग्नेर्ढगित्यादौ त्वर्थस्य प्रत्ययेन पौर्वापर्यासंभवात्साहचर्यात् सर्वस्य तद्वाचिनः संप्रत्ययः स्या-

१ क्वचिन्न । २ 'स्वं रूप' ।

३ 'अर्थस्याऽसम्भवात्' ।

दिति सूत्रारम्भः। संज्ञाप्रतिषेधार्थमिति। संज्ञासम्प्रत्यय उच्यते॥

(उ०) इह योग्यतेति। योग्यता—बोधजनकतारूपा, तया लक्ष्यते कल्प्यत इति योग्यतालक्षणः—शक्तिः, तस्या उभयाश्रयकत्वेन उभयाधीनत्वलक्षणगुणयोगाद्गौण्या वृत्त्या वा संबन्धपदव्यवहार्यत्वमिति बोध्यम्। इत्यथ एवेति। अर्थे कार्यस्य संभवादिति भावः। ननु संज्ञाविषायकस्य तत्प्रतिषेधार्थकत्वमयुक्तमत आह—संप्रत्यय इति। भावेऽङिति भावः॥

[ प्रयोजननिरासवार्तिकम् ]

*॥*॥ न वा शब्दपूर्वको ह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः ॥*॥*

**न वैतत्प्रयोजनमस्ति॥ किं कारणम्?॥ 'शब्दपूर्वको ह्यर्थे संप्रत्ययः'। [शब्दपूर्वको ह्यर्थस्य संप्रत्ययः]। आतश्च शब्दपूर्वकः। योऽपि ह्यसावाहूयते नाम्ना। नाम च यदानेन नोपलब्धं भवति, तदा पृच्छति—'किं भवानाहे'ति। शब्दपूर्वकश्चार्थस्य संप्रत्ययः॥ इह च व्याकरणे शब्दे कार्यस्य संभवः, अर्थेऽसंभवः। 'तस्मादर्थनिवृत्तिः'। तस्मादर्थ[स्य]निवृत्तिर्भविष्यति॥**

(प्र०) नवेति। शब्द उपलब्धोऽर्थं प्रत्याययति, न सत्तामात्रेण, चक्षुरादीनि तु सत्तामात्रेण विषयमवगमयन्ति। अर्थस्य शास्त्रीये कार्ये क्वचिदयोग्यत्वात् प्रत्यासत्त्या स एवोपात्तः शब्दो ग्रहीष्यते, न तु विप्रकृष्टं शब्दान्तरमिति भावः। शब्दपूर्वक इति। अस्य—उपलब्धुः शब्दपूर्वक इत्यर्थः।

(उ०) नन्वर्थप्रत्ययस्य शब्दपूर्वकत्वेऽपि कथं स्वरूपस्यैव ग्रहणमत आह—शब्द इति। तथा च प्रथमप्रतीतस्वरूपकारणादुच्चारितशब्दस्यैव ग्रहणं युक्तमिति भावः। शब्दपूर्वक इत्यस्य शब्दज्ञानपूर्वक इत्यर्थः। प्रत्यासत्त्येति। अर्थबोधानुकूलत्वेन ज्ञाते प्रथमप्रतीते शब्द एवार्थेऽसंभवे कार्यं, न तु तत्पर्यायादिष्विति भावः। अर्थे कार्यसंभवे तु तस्यैव। एवंचोपस्थितस्यार्थस्य सर्वथात्यागे मानाऽभावादर्थवत्परिभाषापि सूत्रं विना सिद्धेति तात्पर्यम्। एवं चैतन्न्यायानुवादकमिदं सूत्रं मन्दमत्यनुग्रहायेति बोध्यम्। ननु अर्थज्ञानोत्तरं परं प्रति तद्बोधनाय शब्दप्रयोग इति कथं शब्दपूर्वकत्वमर्थप्रतीतेरत आह—अस्योपलब्धुरिति। श्रोतुरित्यर्थः। भाष्ये—शब्दपूर्वको हीति। हिः प्रसिद्ध्यर्थः। श्रोतुः शब्दज्ञानपूर्वकोऽर्थप्रत्यय इति लोकप्रसिद्धमित्यर्थः। युक्त्यन्तरमप्याह—आतश्चेति। एवंच शब्दस्यार्थप्रतीतौ कारणत्वादर्थे कार्याऽसंभवे तद्बोधकारणत्वेनोपस्थिते शब्दे कार्यमिति भावः। इदानीं तत्तच्छब्दजन्यार्थबोधे प्रकारतया भासमानशब्द एव कार्यमर्थेऽसंभवे इत्याह—शब्दपूर्वकश्चेति। शब्दविशेषणकश्चार्थविशेष्यकः प्रत्यय इत्यर्थः। 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति भावः। चकारेण चास्य युक्त्यन्तरत्वं सूचितम्। भाष्ये—तस्मादर्थनिवृत्तिरिति। अर्थवाचकशब्दान्तरनिवृत्तिरित्यर्थः॥

[ प्रयोजनदर्शिभाष्यम् ]

**इदं तर्हि प्रयोजनम्—'अशब्दसंज्ञेति वक्ष्यामी'ति। इह मा भूत्-'दाधा घ्वदाप्' 'तरप्तमपौ घः' इति॥**

(प्र०) अशब्दसंज्ञेति। न्यायात्स्वरूपग्रहणे सिद्धे शब्दसंज्ञायां स्वरूपग्रहणं मा भूदित्येवमर्थमिदमित्यर्थः। अन्यथोपसर्गे घोः किरिति किः प्रत्ययो घोर्धातोः शब्दार्थात्स्यान्न तु दाधाभ्यः। 'कुमारीघ' इत्यत्र घरूपेति ह्रस्वः प्रसज्येत। ईहल्यघो'रित्यत्र तु घुशब्दस्याऽऽकारान्तत्वाभावाद्दाधामेव ग्रहणं सिध्यति॥

(उ०) फलान्तरं शङ्कते—इदं तर्हीति। एवमर्थमिति। निषेधप्रतियोगिज्ञानार्थं न्यायसिद्धस्यापि विध्यंशस्यानुवाद इत्यर्थः। किः प्रत्यय इति। नचैवं 'पेषंवासवाहनधिषु चे'ति धिग्रहणं व्यर्थं स्यात्। न हि धाधातोः किं विना उदकस्य ध्युत्तरपदत्वं संभवति। तत्र हि 'कर्मण्यधिकरणे चे'ति तदुत्तरसूत्रेण किरिति वाच्यम्। उपलक्षणमिदं सनि मीमाघु नेर्गदेत्यादौ घुधातोर्ग्रहणं स्यादिति बोध्यम्। कुमारीघ इति। नन्वयं षष्ठीतत्पुरुषः कर्मधारयो वा, उभयथापि नात्र प्राप्तिः, तत्र 'स्त्रियां समानाधिकरण' इत्यनुवृत्तेरिति चेत्, न। घोऽस्त्यस्याः सा घा, कुमारी घा अस्य इति बहुव्रीहौ कुमारीघ इत्यर्थात्। 'घादिषुङस्वत्वं पुंवद्भावाद्विप्रतिषेधेने'त्युक्तेः पुंवत्त्वं बाधित्वा ह्रस्वप्राप्तिरत्रेत्याशयात्। घुसंज्ञाविधानस्य तर्हि कोऽवकाश इत्यत आह—ई हलीति। घसंज्ञापि 'किमेत्तिङव्ययघा'दित्यादौ चरितार्था। तत्र हि तिङन्तात्परान्यघान्तप्रातिपदिकासंभवादिति बोध्यम्॥

[ प्रयोजननिरासवार्तिकम् ]

*॥*॥ [शब्द] संज्ञाप्रतिषेधानर्थक्यं वचनप्रामाण्यात् ॥*॥*

---

१ क्वचिन्न। २ 'यदा तेन'।

३ कचित्कम्।

[शब्द] संज्ञा प्रतिषेधश्चाऽनर्थकः ॥

शब्दसंज्ञायां स्वरूपविधिः कस्मान्न भवति ? ॥

'वचनप्रामाण्यात्' । शब्दसंज्ञावचनसामर्थ्यात् ॥

(प्र०) वचनप्रामाण्यादिति । प्रदेशेषु संज्ञिप्रत्यायनार्थं संज्ञाकरणमिति सामर्थ्यात् स्वरूपग्रहणं न भविष्यति ॥

(उ०) प्रदेशेष्विति । सर्वप्रदेशेष्वित्यर्थः । संज्ञावचनसामर्थ्यगम्यप्रकरणात्प्रत्यासत्तिन्यायो बाध्यत इत्यभिप्रायः । न चेहत्यघोः किमेत्तिङव्ययघेत्यत्र तयोश्चारितार्थ्यम् । तावन्मात्रफलकत्वे तत्रैव दाधाग्रहणं तरप्तमब्ग्रहणं च कुर्यादिति बोध्यम् ॥

[ प्रयोजनसाधकयुक्तिभाष्यम् ]

ननु च वचनप्रामाण्यात्संज्ञिनां संप्रत्ययः स्यात्, स्वरूपग्रहणाच्च संज्ञायाः ।

(प्र०) ननु चेति । उभयगतिरिह शास्त्रे दृष्टा सङ्ख्याकर्मकरणादिष्विति इहापि स्वरूपस्य[1] संज्ञिनश्च प्रदेशेषु ग्रहणं स्यात् ॥

(उ०) उभयगतिरिति । संज्ञावचनस्य प्रत्यासत्तेश्चाऽनुग्रहायोभयगतिरिति भावः । सूत्रारम्भमभ्युपेत्येदम् ॥

[ प्रयोजननिरासभाष्यम् ]

एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति–'शब्दसंज्ञायां न स्वरूपविधिर्भवती'ति यदयं–'ष्णान्ता ष'डिति षकारान्तायाः सङ्ख्यायाः षट्संज्ञां शास्ति । इतरथा हि वचनप्रामाण्याच्च नकारान्तायाः सङ्ख्यायाः संप्रत्ययः स्यात्, स्वरूपग्रहणाच्च षकारान्तायाः ॥

[ ज्ञापकनिरासेन प्रयोजनस्थापनभाष्यम् ]

नैतदस्ति ज्ञापकम् । न हि षकारान्ता संज्ञाऽस्ति ॥ का तर्हि ? ॥ डकारान्ता ॥

(प्र०) नहीति । 'षड्भ्यो लु'गित्यादावुच्चारितेतिभावः । का तर्हीति । तत्र डकारान्तः शब्द उच्चारितो जश्शसोश्च षकारान्ताल्लुक्कर्तव्यः । षण्णामितिच नुट् ।

(उ०) षड्भ्यइति । भाष्ये-संज्ञाशब्दो बोधकपरः । न हि षकारान्तो बोधकशब्दस्तत्रोच्चारित इत्यर्थ इति भावः । षकारान्तादिति । जश्शसोर्लुकः प्राग् जश्त्वाऽभावात् । एवंच तदर्थं तस्य षट्संज्ञा विधीयत इति न ज्ञापकत्वमिति भावः ॥

[ प्रयोजननिरासभाष्यम् ]

असिद्धं जश्त्वं, तस्याऽसिद्धत्वात्षकारान्ता ॥

(प्र०) असिद्धमिति । डकारान्तः श्रूयमाणोऽपि डत्वस्याऽसिद्धत्वात्षकारान्तस्य स्वरूपस्य ग्राहको भविष्यतीत्यर्थः ॥

(उ०) डकारान्त इति । षष उत्तरयोर्जश्शसोरिति स्वरूपग्रहणेन लुकि कार्ये जश्त्वमसिद्धमिति भावः । तवापि[3] संज्ञासूत्रे टान्तोच्चारणात्षड्भ्य इत्यादौ डत्वाऽसिद्धत्वेनैव निर्वाहः । संहितापाठेन डान्तस्य संज्ञात्वे 'षट्चतुर्भ्य' इत्यत्र चर्त्वाऽसिद्धत्वमात्रश्रयकमिति तात्पर्यम् ॥

[ प्रयोजनदर्शिभाष्यम् ]

*॥*॥ [ मन्त्राद्यर्थम् ] ॥*॥*

मन्त्राद्यर्थं तर्हीदं वक्तव्यम् । मन्त्रे, ऋचि, यजुषीति यदुच्यते तन्मन्त्रशब्दे ऋक्शब्दे यजुःशब्दे च मा भूत् ।

(प्र०) मन्त्राद्यर्थमिति । मन्त्रादयः शब्दस्य संज्ञा ।

(उ०) ष्णान्तेत्यादि ज्ञापकं शास्त्रीयशब्दसंज्ञायां न स्वरूपग्रहणमित्यर्थं बोधयितुं, न तु शब्दपदार्थके इत्याशयेनाह भाष्ये-मन्त्राद्यर्थमिति ॥

[ तन्निरासवार्तिकम् ]

*॥*॥ मन्त्राद्यर्थमिति चेच्छास्त्रसामर्थ्यादर्थगतेः सिद्धम् ॥*॥*

मन्त्राद्यर्थमिति चेत् । तन्न ॥ किं कारणम् ?॥ [ 'शास्त्रसामर्थ्यादर्थगतेः सिद्धं' ]। शास्त्रस्य सामर्थ्यादर्थस्य गतिर्भविष्यति । मन्त्रे ऋचि यजुषीति यदुच्यते, मन्त्रशब्दे ऋक्शब्दे च यजुश्शब्दे च तस्य कार्यस्य सम्भवो नास्तीति कृत्वा मन्त्रादिसहचरितो योऽर्थस्तस्य गतिर्भविष्यति साहचर्यात् ॥

(प्र०) शास्त्रसामर्थ्यादिति । 'दिवसुन्नयो'रि

1 क्वचिन्न । २ 'सञ्ज्ञायाः प्रतिषेधोऽनर्थकः' ।

३ आरम्भवादिनस्तवापीत्यर्थः । ४ लुप्तं स्यात् ।

त्यादौ क्यजादीनां निमित्तत्वेनोपादानाद्यजुषि ऋचि मन्त्र इति च स्वरूपं न ग्रहीष्यते। न च तथाविधं लक्ष्यमस्तीति भावः। **मन्त्रादिसहचरित इति।** साहचर्यं च शब्दानुविद्धस्यैवाऽर्थस्यावगमात् ॥

(उ०) **शब्दानुविद्धस्यैवेति।** 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति हर्युक्तेरिति भावः। तद्बोध्यत्वेन सहचरितत्वमित्यन्ये ॥

[ आक्षेपवार्तिकम् ]

*॥*॥ सित्तद्विशेषाणां [ च ] वृक्षाद्यर्थम् ॥*॥*

**सिन्निर्देशः कर्तव्यः। ततो वक्तव्यं-'तद्विशेषाणां ग्रहणं भवती'ति ॥ किं प्रयोजनम्? ॥ 'वृक्षाद्यर्थम्'। 'विभाषा वृक्षमृगे'-ति। प्लक्षन्यग्रोधं प्लक्षन्यग्रोधाः ॥**

(प्र०) **सित्तद्विशेषाणामिति।** वृक्षस्-मृगसित्येवं निर्देशः कर्तव्यः। एतदपि न्यायसिद्धं। तुल्यजातीयानां द्वन्द्व एकवद्भवतीति वक्ष्यते। पर्यायाणां च युगपत्प्रयोगाऽभावात्सामान्यविशेषाणां चार्थाऽभावात्सामान्यशब्देन सर्वविशेषाणामाक्षेपाद्भव वृक्षमिति द्वन्द्वाऽभावाद्विशेषाणामेव प्लक्षन्यग्रोधादीनां ग्रहणं सिद्धम् ॥

(उ०) चाऽर्थाभावमुपपादयति-**सामान्यशब्देनेति।** एवंच पदार्थभेदाऽभावात्साहित्यरूपचार्थाऽसम्भव इति भावः।

[ आक्षेपवार्तिकानि ]

*॥*॥ पित्पर्यायवचनस्य च स्वाद्यर्थम् ॥*॥*

**पिन्निर्देशः कर्तव्यः। ततो वक्तव्यं-'पर्यायवचनस्य च तद्विशेषाणां च ग्रहणं भवति स्वस्य च रूपस्ये'ति ॥ किं प्रयोजनम्? ॥ 'स्वाद्यर्थम्' ॥ 'स्वे पुषः'। स्वपोषं पुष्यति। रैपोषम्[1]। धनपोषम्। विद्यापोषम्। गोपोषम्। अश्वपोषम्[2] ॥**

(प्र०) **पित्पर्यायवचनस्य चेति।** चशब्दात् स्वरूपस्य विशेषाणां च ग्रहणम्। इदं वाचनिकमेव ॥

*॥*॥ जित्पर्यायवचनस्यैव राजाद्यर्थम् ॥*॥*

**जिन्निर्देशः कर्तव्यः। ततो वक्तव्यं-'पर्यायवचनस्यैव ग्रहणं भव[ती']ति ॥ किं प्रयोजनम्? ॥ 'राजाद्यर्थं'। 'सभा राजामनुष्यपूर्वा'। इनसभम् ईश्वरसभम् ॥ तस्यैव न भवति-राजसभा। तद्विशेषाणां च न भवति-पुष्य[3]मित्रसभा [ चन्द्रगुप्तसभा ] ॥**

(प्र०) **जित्पर्यायेति।** इदं न्यायसिद्धमित्याहुः। 'अराजे'ति पर्युदास आश्रीयते। तेन राजशब्दसदृशानां तत्पर्यायाणामेव ग्रहणं सिध्यति ॥

(उ०) **पर्युदास इति।** कश्चित्त **'अराजे'**ति च्छेदाऽभावात, किंच राजशब्दः शब्दपरः, मनुष्यशब्दश्चार्थऽपर इति दुर्लभं स्यात्। किंच अमनुष्यशब्देनापि मनुष्यपर्यायाणामेव ग्रहणं स्यादितीदं वाचनिकमेवेत्याह ॥

*॥*॥ झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम् ॥*॥*

**झिन्निर्देशः कर्तव्यः। ततो वक्तव्यं-'तस्य च ग्रहणं भवति तद्विशेषाणां चे'ति॥ किं प्रयोजनम्? ॥ 'मत्स्याद्यर्थम्' ॥ 'पक्षिमत्स्यमृगान्हन्ति'। मात्सिकः[4]। तद्विशेषाणां-शाफरिकः। शाकुलिकः। पर्यायवचनानां न भवति-अजिह्मान्हन्ति [ अनिमिषान् हन्तीति ][5] ॥ अस्यैकस्य पर्यायवचनस्येष्यते-मीनान् हन्ति-मैनिकः ॥**

(प्र०) **झित्तस्य चेति।** इदं वाचनिकमेव। मत्स्याद्यर्थमिति। मृगपक्षिणोस्तु पिन्निर्देशस्तत्फललाभार्थः कर्तव्यः। **अस्यैकस्येति।** इयमिष्टिरेव ॥

(उ०) आद्यन्तौ विहाय मध्योपादानेऽभिप्रायमाह-**मृगेति।** एवंच **मत्स्याद्यर्थ**मित्यादिशब्दप्रयोजनं चिन्त्यम् ॥

## अणुदित्सवर्णस्य चाऽप्रत्ययः १।१।६८

[ प्रश्नभाष्यम् ]

**अप्रत्यय इति किमर्थम्? ॥**

(प्र०) **अणुदित्।** अप्रत्यय इति किमर्थमिति। किं यस्य प्रत्ययसंज्ञा विहिता तस्य प्रतिषेधः, उत यः प्रतीयते विधीयत इति यौगिकः प्रत्ययस्तस्यापीति प्रश्नः ॥

(उ०) **अणुदित्। किं यस्येति।** नाक्षेपोऽयम्, किंतु विशेषजिज्ञासेत्यर्थः। उत यौगिक इत्यन्वयः।

१ क्वचिन्न। २ 'रैपोषं विद्यापोषं अश्वपोषं' गोपोषम्। ३ 'पुष्प'। ४ 'मात्स्यिकः। ५ इतिः क्वचिन्न।

किमर्थमित्यत्राऽर्थशब्दोऽभिधेयपर इति तात्पर्यम् ॥

[ समाधानभाष्यम् ]

**'सनाशंसभिक्ष उः' 'अ सांप्रतिके' ॥**

[ आक्षेपभाष्यम् ]

**अत्यल्पमिदमुच्यते-अप्रत्यय इति । 'अप्रत्ययादेशटित्किन्मितः' इति वक्तव्यम्। प्रत्यये-उदाहृतम् ॥ आदेशे-'इदम् इश्' इतः, इह ॥ टिति-लविता, लवितुम् । किति-बभूव । मिति-हे अनड्वन् ॥**

(प्र०) **इत इति** । विशेषविहितत्वात्त्यदाद्यत्वं बाधित्वा त्रिमात्र आदेशः प्राप्नोति । **बभूवेति** । अनुनासिकः प्राप्नोति । **अनड्वन्निति** । आमपि पक्षे प्राप्नोति ।

(उ०) नन्विदमः परत्वात्त्यदाद्यत्वेऽन्तरङ्गत्वाच्च पररूपेऽर्धतृतीयमात्रस्य सवर्णग्रहणेऽपि नाऽन्तरतम आदेशः सम्भवतीति श्रुत एव भविष्यति । न च श्रुतापेक्षया दीर्घप्लुतयोरन्तरतमत्वात्ते एव भविष्यतः । ह्रस्वोच्चारणं तु लाघवार्थं स्यादिति वाच्यम् । एवं तर्हि परत्वाद्धलि लोपे मात्रिकत्वान्मात्रिक एव भविष्यति, तत्र नाऽऽपीति वर्त्तते फलाऽभावादत आह-**विशेषेति** । येन नाप्राप्तिन्यायादिति भावः । शार्दीनां चोपदेशे एवेत्संज्ञालोपयोरण्त्वेन सवर्णग्रहणप्रसक्तिः । **अनुनासिक इति** । 'पक्षे' इति शेषः ॥

[ परिहारभाष्यम् ]

**टितः परिहारः-आचार्यप्रवृत्तिर्ज्ञापयति-'न टिता सवर्णानां ग्रहणं भवतीति यदयं-ग्रहोऽलिटि[2] दीर्घत्वं शास्ति ॥**

(प्र०) **यदयमिति** । ग्रहेरेव दीर्घो नान्येभ्य इति नियमाऽभावादिति भावः ।

(उ०) नियमार्थं तत् स्यादत आह-**ग्रहेरेवेति** । **'वृतो वे'**त्यनेन विरोधादिति भाव इति केचित् । वस्तुतस्तु यथा 'दिक्सङ्ख्ये' इति नियमादप्राप्तसमासविधायकं **तद्धितार्थेति**, एवं ग्रहेरेवेति नियमादप्राप्तदीर्घविध्यर्थं **वृतो वेति** स्यादिति चिन्त्यैषा व्याख्या । तस्माद्विधेयसङ्कोचस्याऽन्याय्यत्वान्न तथा नियम इति भावः ॥

[ परिहारनिरासभाष्यम् ]

**नैतदस्ति ज्ञापकम् । नियमार्थमेतत् स्यात्-'ग्रहोऽलिटि दीर्घ एवे'ति ॥**

(प्र०) **नियमार्थमिति** । ग्रहेर्दीर्घ एव, न ह्रस्व इत्येवमर्थं स्यादित्यर्थः ॥

[ परिहाराय ज्ञापकान्तरभाष्यम् ]

**यत्तर्हि 'वृतो वे'ति विभाषां शास्ति ॥**

(प्र०) **वृतो वेति** । ननु ववरिथेति लिटि दीर्घो मा भूदित्येवमर्थमेतत्स्यादिति कथं ज्ञापकम् ? । एवं तर्हि 'वृत' इत्यत्रापि अलिटीत्यनुवर्तनाल्लिटि दीर्घनिषेधादन्यत्र उभयस्मिन्सिद्धे वाग्रहणं ज्ञापकमीट इटा ग्रहणाऽभावस्य ॥

(उ०) **ववरिथेति** । ववर्थेति छन्दसि इडभावनिपातनाद्भाषायां क्रसृभृवृस्त्विति इट्प्रतिषेधो न । अलिट्येव वृतो वेत्यर्थाल्लिटि ह्रस्व एवेति भावः । **वाग्रहणमिति** । अत एव भाष्ये-'यद्विभाषां शास्ती'त्युक्तम् ॥

[ अप्रत्ययइतिपर्युदासवैयर्थ्याय परिहारभाष्यं ]

**सर्वेषामेष परिहारः-'भाव्यमानेन सवर्णानां ग्रहणं ने'त्येवं भविष्यति ॥**

(उ०) भाष्ये-**भाव्यमानेनेति** । इयं[4] च जातिग्रहणप्राप्तं, गुणाऽभेदकत्वप्राप्तं चाऽनण्साधारण्येन प्राप्तं सवर्णग्रहणं वारयितुमावश्यकीति भावः ॥

[ संज्ञापरत्वेऽपि तद्वैयर्थ्यभाष्यम् ]

**प्रत्यये भूयान् परिहारः-अनभिधानात्प्रत्ययः सवर्णान्न[5] ग्रहीष्यति । यान्हि प्रत्ययः सवर्णग्रहणेन गृह्णीयान्न तैरर्थस्याभिधानं स्यात् । अनभिधानान्न भविष्यति ॥**

(प्र०) **प्रत्यये भूयानिति** । साधारणश्चाऽसाधारणश्चेत्यर्थः । प्रत्यय इत्यन्वर्था संज्ञा कृता, येनार्थं प्रतियन्ति स प्रत्ययः । न च दीर्घप्लुतयोरर्थस्याभिधानमस्ति ॥

(उ०) **साधारणश्चेति** । भूयानित्युक्तिर्नापूर्वाऽनेकसमाधानाभिप्राया, किंतु सूत्रोक्ताऽप्रत्ययग्रहणमपेक्ष्यते । **भूयानिति** प्रतिज्ञायैकपरिहारोपन्यासेऽपि न विरोध इति भावः । नन्वस्य च्वावित्यादाविवार्थाभिधानाऽसमर्थस्यापि सवर्णस्य ग्रहणं स्यादत आह-**प्रत्यय इतीति** । प्रत्ययविधौ सवर्णग्रहणे हि तेषामपि प्रत्ययत्वमेष्टव्यम् । तच्चान्वर्थत्वादसंभवीति न तत्र सवर्णग्रहणमिति भावः ॥

[ प्रयोजनभाष्यम् ]

**इदं तर्हि प्रयोजनम्-इह केचित्प्रतीयन्ते, केचित्प्रत्याय्यते । ह्रस्वाः प्रतीयन्ते**

१ 'अः' । २ 'दीर्घ इति दीर्घत्वं' । ३ 'मेव' ।

४ इयं च-भाव्यमानपरिभाषा च । ५ 'सवर्णान् गृह्णी' ।

स्यादिति भावः । अचामित्यस्य तूत्तरार्थैवानुवृत्तिः स्यात् । तत्संबन्धस्येहाऽयोग्यत्वात् । निर्धारणस्य समानजातीयविषयत्वात् । त्वदीय इति । व्यपदेशिवद्भावोऽत्र नास्ति, अप्रातिपदिकेनेति निषेधात् ॥

(उ०) ननूपसर्जनानां गणबहिर्भावेन कथं त्यदादित्वमत आह—**आदीति** । सामर्थ्याद्भूतपूर्वगतिराश्रयिष्यत इति भावः । **अचामित्यस्य त्विति** । इहादिग्रहणसम्बन्ध एव भाष्यतात्पर्यमिति भावः । व्यपदेशिवद्भावेन केवलेपि सिद्धमिति **इह च नेति** भाष्यमयुक्तमत आह—**व्यपदेशिवदिति** । स निषेधः प्रत्ययविधौ तन्मात्रोपयोगिसंज्ञाविधौ चेति भावः । तदनाश्रित्यैवेदम् ॥

[ दूषणभाष्यम् ]

**अथ निवृत्तम्, 'एङ् प्राचां देशे' । यस्याचामादिग्रहणं कर्तव्यम् ॥**

[ अभ्युपगमभाष्यम् ]

**एवं तर्ह्यनुवर्त्तते ॥**

[ प्रश्नभाष्यम् ]

**कथं त्वात्पुत्रा मात्पुत्रा इति ? ॥**

[ समाधानभाष्यम् ]

**सम्बन्धमनुवर्तिष्यते—'वृद्धिर्यस्याचादिस्तद्वृद्धम्' । 'त्यदादीनि च' । वृद्धसंज्ञानि भवन्ति । 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' ॥ 'एङ् प्राचां देशे' । यस्याचामादिग्रहणमनुवर्तते, वृद्धिग्रहणं निवृत्तम् । तद्यथा— कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते । स यदा निष्क्रान्तकान्तारो भवति तदा सार्थं जहाति ॥** [ त्यदादीनिच ] ॥

(प्र०) **संबन्धमिति** । द्वितीयान्तमेतत् । संबन्धमनुरोत्स्यते न हास्यतीत्यर्थः । अथ वा संबध्यत इति संबन्धम् । कर्मणि घञ्नपुंसकेऽपि बाधकाऽभावाद्भवति । वृद्धिग्रहणसंबद्धमादिग्रहणमिहानुवर्तत इति नास्ति तस्य त्यदादिभिः संबन्धः । तद्यथेति । एतद्दर्शयति—स्वरितत्वप्रतिज्ञानादुत्तरसूत्र एव योग्यत्वाद्यस्याचामादिरिति संबध्यते । एङ् यस्याचामादिस्तद्वृद्धमिति वाक्यार्थसंपादनाय । इह त्वयोग्यत्वात्संबन्धानुपपत्तिः । तुल्यजातीयस्य निर्धारणात् । त्यदादीनां चाजूपत्वाऽभावाद्यस्याचामादयस्त्यदादय इति तत्संबन्धाऽभावात् ॥

(उ०) ननु नपुंसके भावे क्तल्युटौ घञजपवादौ । स्त्र्यधिकारात्परतो वासरूपविधिश्च नेति सम्बन्धमिति नपुंसकप्रथमैकवचनमनुपपन्नमत आह—**द्वितीयान्तमिति** । **नपुंसकेपीति** । 'घञजपः पुंसी'ति भावघञ्विषयकं, क्वाचित्कं वेति भावः । चेतनावतस्त्यागोपादाने संभवतः, यस्यादिरित्यस्य तु कथं ते स्यातामत आह—**एतदिति** । **योग्यत्वादादिरित्यस्यैङित्येकवचनान्तेन सम्बन्ध** इति शेषः । **तुल्यजातीयस्ये**त्युपलक्षणम् । त्यदादीनीत्यनेनादिरित्यस्य भिन्नविभक्तिकत्वाच्चेत्यपि बोध्यम् ॥

## एङ् प्राचां देशे ॥१।१।७४॥

[ आक्षेपवार्तिकम् ]

॥*॥ *एङ् प्राचां देशे शैषिकेषु* ॥*॥

**एङ् प्राचां देशे शैषिकेष्विति वक्तव्यम् । सैपुरिकी सैपुरिका । स्कौनगरिकी स्कौनगरिकेति** । [ एङ् प्राचां देशे ] ॥

**इति श्रीमद्भागवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् ॥ पादश्चायं समाप्तः ॥**

---

(प्र०) **एङ् प्राचाम्** । कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषार्थं चेति व्याख्यातम् । तेन कोडो नामोदग्ग्रामस्तत्र भवः कौड इत्यणेव भवति । अन्येन तु प्राग्ग्रहणं देशविशेषणं व्याख्यातम् । तेन देवदत्तो नाम वाहीकेषु ग्रामस्तत्र भवो दैवदत्त इत्यवृद्धत्वाट्ठञ्ञिठौ न भवतः । भाष्यकारस्तु कुणिदर्शनमशिश्रियत् । सेपुरं स्फोनगरं च वाहीकग्रामौ । तत्र वृद्धत्वाद्वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ भवतः । शैषिकेष्विति वचनादपत्यविकारयोर्वृद्धलक्षणप्रत्ययाऽभावः । कोडदेवदत्तयोस्त्वप्राग्देशवाचिनोर्व्यवस्थितविभाषया न भवतीति प्राग्देशवाचिनस्तु देवदत्तस्य वृद्धसंज्ञत्वात्काश्यादित्वाद्वृद्धलक्षणौ ठञ्ञिठौ भवतः ॥

इत्युपाध्यायजैयटपुत्र**कैयट**कृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् ॥

**पादश्चायं प्रथमः समाप्तः ॥**

---

१ 'अचीत्यस्य' । २ निष्क्रान्तारीभूतो' । ३ इदं वार्तिकं क्वचिन्न । ४ 'सौपुरिकी' 'सौपुरिका' । ५ क्वचिन्न ।

(उ०) एङ्प्राचाम् । कुणिनेति । विधेयसंबन्धलाभात्प्राग्ग्रहणमाचार्यनिर्देशार्थम् । अन्यथा प्राग्देश इत्येव वदेदितिभावः । लक्ष्याऽवैषम्याय च व्यवस्थितविभाषाश्रयणम् । तत्फलमाह–तेनेति । अन्ये त्विति । श्रुतान्वये संभवत्यन्येनाऽन्वयोऽनुचित इति तद्भावः । वाहीकश्च देशविशेषः । तत्र स ग्रामः प्राग्देशबहिर्भूतः । वाहीकदेशश्चोभयसंबद्धः प्राग्देशबहिर्भूतो वा । अत एवाऽव्ययत्यस्त्वबिति सूत्रे शाकलनाम्नो ग्रामस्य उदीच्यवाहीकोभयरूपता भाष्यकृतोक्ता । एतेनोभयबहिर्भूता वाहीका इत्यपास्तम् । वाहीकग्रामाविति । आद्ये अस्याऽप्राग्देशीयाविति शेषः पूरणीय इति बोध्यम् । अन्यथा कुणिमताश्रयणेऽस्य प्रमाणता नोपपद्येत । ठञ्ञिठाविति । वाहीकग्रामेभ्यश्चेत्यत्र वृद्धादित्यनुवृत्तेः । प्रागुदिभागस्तु 'शरावत्यास्तु योऽवधेः । देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः' इत्यमरेण दर्शितः । शरावती चोत्तरपूर्वाभिमुखीत्येके । ऐशानीतो नैर्ऋत्यां पश्चिमाब्धिगामिनी सेत्यन्ये । उभयथापि प्रागुदक्स्वरूपे न विवादः । वाहीकलक्षणं च–'पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः । वाहीका नाम ते देशा न तत्र दिवसं वसेत् ॥' इति कर्णपर्वणि । एवं च धर्मबहिर्भूतत्वाद्वाहीकत्वम् । शतद्रुर्विपाशेरावती वितस्ता चन्द्रभागेति पञ्च नद्यः, सिन्धुः षष्ठः । तन्मध्यदेशो वाहीक इति तद्व्याख्यातारः । कुणिमताश्रयणे शैषिकेष्वित्यस्य वैयर्थ्यम् । व्यवस्थिताविभाषयैव सिद्धेः । अतोऽन्यमताश्रयेणैव भाष्यम् । भाष्यप्रामाण्याच्चैतावदवाहीकग्रामावपीत्यन्ये । भाष्योक्तव्यवस्थितविभाषातिरिक्ता न व्यवस्थिता इत्यस्याऽर्थस्य शैषिकेष्विति ज्ञापकमित्यपरे । अपत्येत्यादि । उदीचां वृद्धादिति नित्यं वृद्धेति चेति सर्वेष्टसिद्धिः ॥ [ एङ् प्राचां देशे ] ॥

हरिदीक्षितपादाब्जसेवनाऽवाप्तबुद्धिना[2] ।
भट्टनागेशविदुषा कृतोऽयं सङ्ग्रहो मुदा ॥ १ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य प्रथमे नवममाह्निकम् ॥
पादश्च प्रथमः समाप्तः ॥

१ इदं नदी सम्प्रति ताप्तीनाम्ना प्रसिद्धा वर्त्तते ।

२ कश्चिन्न ।

---

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो, नान्यस्य कस्य चित् ॥१॥ (मनुः)

इति पण्डितप्रकाण्ड–षट्शास्त्रवाचस्पति–मरुमण्डलमार्त्तण्ड–तर्करत्न–पण्डितवर श्रीस्नेहिरामशास्त्रिणां पौत्रस्य, न्यायाचार्य–श्रीशिवनारायणशास्त्रिणां पुत्रस्य, न्याय-व्याकरण-दर्शनाद्याचार्यस्य श्रीगुरुप्रसादशास्त्रिणः कृतै महाभाष्यादि-त्रिवलिव्याख्यानभूतायामभिनवराजलक्ष्म्यां नवाह्निकम् ।

* हरि ॐ तत्सत् *

जन्माष्टमी १९९६



नवाह्निकं समाप्तम् ।

❀ अथ ❀

*श्रीभट्टोजिदीक्षितविरचिते–*

# श्री शब्दकौस्तुभे पञ्चममाह्निकम्

**ईदूदेद्द्विवचनं प्रगृह्यम्** ॥ ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्। हरी एतौ, विष्णू इमौ, गङ्गे अमू। तपरकरणमसन्देहार्थमिति **वृत्तिकाराः**। अन्यथा हि यणादेशे कृते ह्रस्वस्यायं निर्देश इत्यपि सम्भाव्येत। ततश्चाऽकुर्वह्यत्रेत्यादावतिप्रसङ्गः स्यादिति भावः। भाष्ये तु 'व्यक्तिः पदार्थो, भेदकाश्च गुणा'इति पक्षमाश्रित्य गुणान्तरयुक्तानां दीर्घाणां संग्रहार्थं तपरकरणमित्युक्तम्। इदश्चेदिति प्रथमतकारस्यैव फलमित्यवधेयम्। तावतैव ऊकारेपि सिद्धेः। 'तात्पर'इति पञ्चमीसमासपक्षस्यापि स्थितत्वात्। एकारस्य त्वण्त्वादेवाऽणुदित्सूत्रेण सवर्णग्राहकतासिद्धेः। ईदूतोः परमनण्त्वाद्गुणान्तरयुक्तसङ्ग्रहाय युक्तो यत्नः। तस्माद्भाष्यमतेऽपि ऊदेतोस्तपरकरणमसन्देहार्थमेव, गुणानामभेदकत्वे त्वीदित्यपि तथेत्यभिप्रेत्यैकरूप्यं वृत्तिकृद्भिरुक्तम्। इह तपर इति सूत्रे पञ्चमीसमासो मास्त्विभिप्रेत्य ऊदिति। तथाऽतपर एवैकारो निर्दिष्ट इत्यपि सुवचम्। स्यादेतत्– असन्देहायापि क्रियमाणन्तपरत्वं प्लुतं व्यावर्त्तयेदेव। 'घटायोन्मीलितं चक्षुः पटं न हि न पश्यती'ति न्यायात्।

अथाऽयं दकारः ऋदोरबितिवदिति चेत्। एवमप्येकारो गृह्णातु प्लुतम् अण्त्वात्, न त्वीदूतौ, वाक्यापरिसमाप्तिन्यायेनाऽनण्त्वात्। जातिपरो निर्देश इति चेत्। तर्हि ह्रस्वेप्यतिप्रसक्तिः। दीर्घव्यक्तिरपि विशेषणीभूता विवक्षितेति चेत्, कथं तर्हि प्लुतसङ्ग्रहः?। न च प्लुतव्यावृत्तिरिष्टैवेति वाच्यम्। 'अग्नी ३ इती'त्यत्राप्लुतवदुपस्थित इति सूत्रेण प्लुतत्वप्रयुक्ते प्रकृतिभावे निषिद्धेपि प्रगृह्यत्वप्रयुक्तस्य तस्येष्यमाणत्वात्। 'अप्लुतव'दित्यस्य तु देवदत्तेतीत्यादौ चरितार्थत्वाद्वैयर्थ्यं न शङ्क्यम्। तथा च पाठे वार्त्तिकम्–'**वद्वचनं प्लुतकार्यप्रतिषेधार्थं, प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वा'दिति**। अत्राह भाष्यकारः–यथोद्देशं संज्ञापरिभाषमित्याश्रयणात् प्रगृह्यसंज्ञां प्रति प्लुतोऽसिद्धः। तथा च द्विमात्रत्वबुद्धेरप्रतिघातात् सिद्धा संज्ञा। कार्यकालपक्षे परं प्रगृह्यसंज्ञावा अप्यणो प्रगृह्यस्येत्येतद्देशतया तां प्रति प्लुतस्य सिद्धत्वेनानुनासिकः प्रवर्त्तेतैवेति स्यादेव दोषः। एतेनाग्नी ३ इतीत्यादौ प्रकृतिभावोपि व्याख्यातः। 'प्लुतप्रगृह्या अची'ति ज्ञापकात्स्वरसन्धिषु प्लुतस्य सिद्धत्वेपि संज्ञां प्रत्यसिद्धत्वाऽनपायात्। 'यथोद्देशपक्ष एवेहाश्रीयत'-इत्युक्तत्वात्। वस्तुतस्त्वनुनासिकप्रवृत्तिभयेनैवेह यथोद्देशपक्षाश्रयणम्। प्रकृतिभावस्तु कार्य्यकालपक्षेपि सूपपादः। न च 'प्रगृह्यः प्रकृत्ये'त्यनेनैकवाक्यतापन्नां संज्ञां प्रति प्लुतस्य सिद्धतया त्रिमात्रस्य संज्ञा दुरुपपादेति वाच्यम्। प्लुतस्य सिद्धतायां बीजाऽभावात्। यत्तूक्तं 'प्लुतः प्रकृत्येत्येतदेव ज्ञापक'मिति। तन्न। 'प्लुत'शब्देन तत्स्थानिनो लक्षणया सर्वसामञ्जस्यात्। न चैवं लक्षणैव दोष इति वाच्यम्। श्रुतार्थापत्तिमूलकवाक्यान्तरकल्पनापेक्षया लक्षणाया एवाभ्यर्हितत्वात्। अस्तु वा विशेषापेक्षं ज्ञापकं 'सिद्धः प्लुतः प्लुतत्वप्रयुक्ते प्रकृतिभाव' इति, न तु प्रगृह्यत्वप्रयुक्तेपि। तस्मात्कार्य्यकालपक्षमाश्रित्य प्रकृतिभावस्य समर्थयितुं शक्यत्वेप्यनुनासिकप्रवृत्तिवारणायैवेह यथोद्देशपक्षाश्रयणमिति स्थितम्। अत्र **हरदत्तः**–"यद्यपि संज्ञायामसिद्धः प्लुतस्तथाप्यनुनासिकपर्युदासे सिद्ध एव, ततश्च यस्यानेन संज्ञा कृता द्विमात्रस्य, न सोऽनुनासिकविधौ स्थानी, किन्तु त्रिमात्रः। न च स्थानिवद्भावात्तस्यापि प्रगृह्यत्वम्, अल्विधित्वात्। किञ्चावश्यं 'सिद्धः प्लुतः स्वरसन्धिष्वि'त्याश्रयणीयम्। 'दण्ड ३ आढक'मिति प्लुतस्य दीर्घेण निवृत्तिर्यथा स्यात्। अत एव सुश्लोका ३ इति सुश्लोकेतीत्यत्र गुणो भवन् प्लुतमेव निवर्त्तयति न तु स्थानिनम्। अन्यथा ह्यादेशरूपे प्लुतः श्रूयेत। तदिह यथोद्देशेपि संज्ञापरिभाषे कथमिवेष्टसिद्धिः, कथं वा ग्रन्थेषु न पूर्वापरविरोध इति विपश्चितः प्रष्टव्या"इति। अत्राहुः यद्यपि द्विमात्रस्त्रिमात्रेणापहृतस्तथापि 'पूर्वत्रासिद्ध'मिति शास्त्रासिद्धत्वबोधनशासनात्त्रिमात्रेऽपि द्विमात्र एवाय'मिति बुद्ध्या प्रगृह्यसंज्ञा क्रियते। अत एवाऽमुनेत्यत्र मुत्वे कृते तदुपजीवनेन नाभावे च कृते सुपि चेति दीर्घो 'मुशब्दोय'मिति बुद्ध्या प्राप्नोति, तत्परिहाराय तत्रावृत्त्याद्याश्रयणेन 'नाभावे कर्त्तव्ये कृते च सति मुभावो नाऽसिद्ध' इत्यष्टमे व्याख्यातम्। कृन्मेजन्तसूत्रे च सन्निपातपरिभाषया समाहितम्। न त्विह द्विमात्रे कृतां संज्ञां स्थानिवद्भावेन त्रिमात्रे आनयामः, येनानल्विधाविति निषेधः शङ्क्येत। न हि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयतीति युक्तम्। एतावानेव परं विशेषः–रजतभ्रमोऽनाहार्यः प्रवर्त्तकः, इह तु शास्त्रप्रामाण्यादाहार्यारोपोपि तत्तच्छास्त्रप्रवृत्तावप्रवृत्तौ च नियामक इति। तदेतत्कैयटेनैव स्फुटीकृतम्। यदाह–'शास्त्राऽसिद्धत्वाश्रयणाच्च प्लुतबुद्धावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्रत्वबुद्धिः प्रवर्त्तते। तथा च वक्ष्यति, 'असिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं चे'ति। 'षत्वतुकोरसिद्ध'इत्येतत्सूत्रस्थं वार्त्तिकमिदम्। उत्सृज्यते निवर्त्यते आदेशेनेत्युत्सर्गः स्थानी, स लक्षणं निमित्तं यस्य कार्यस्य तुगादेस्तस्य प्रवृत्त्यर्थमित्यर्थः। तथा चैकरूप्यार्थं

सर्वत्र शास्त्रासिद्धत्वमेवेति भावः। एतेन 'यस्यानेन संज्ञा कृता न सोऽनुनासिकविधौ स्थानी'ति प्रथमदूषणमुद्धृतम्। यदपि 'दण्डाढकं सुश्लोकेतीत्यादावादेशः प्लुतः श्रूयेते'ति। तदपि न, उक्तरीत्या तत्राप्यादेशेन प्लुतस्यैव निवृत्तेः, 'प्लुतो मयाऽपह्नियत'इति बुद्धिः परं तस्य नास्तीत्यन्यदेतत्। यत्तु षष्ठे भाष्यकारो वक्ष्यति,–'सिद्धः प्लुतः स्वरसन्धिष्वि'ति, तत्त्विहानुनासिकपर्य्युदासानुरोधाद्यथोद्देशपक्ष एवाश्रयणीय इति स्थिते स्वरसन्धिसामान्यापेक्षज्ञापकाश्रयणेपि न दोष इत्याशयेन, न तु सामान्यापेक्षतायामेव किञ्चिदाग्रहे बीजमस्तीति दिक्।

ननूदाहरणेष्वीदादिकमेव द्विवचनं न तु तदन्तमिति चेन्न, व्यपदेशिवद्भावेन तदन्तत्वात्। नन्वीदूदन्तं द्विवचनान्तमित्येव कथं न व्याख्यातम्। एवं हि सति व्यपदेशिवद्भावो नाश्रयणीय इति चेन्न। कुमार्योरगारं कुमार्यगारं, वध्वोरगारं वध्वगारमित्यत्र प्रत्ययलक्षणेन द्विवचनान्तेऽतिव्याप्तेः। 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति 'सुप्तिङन्तं पद'मित्यत्राऽन्तग्रहणेन ज्ञापितत्वाच्च। एतेनेदाद्यन्तं यद् द्विवचनं, तदन्तम्प्रगृह्यं, कुमार्य्यगारादौ तु सकारान्तं द्विवचनं नत्वीदाद्यन्तमिति परास्तम्। संज्ञाविधौ प्रत्ययग्रहणे तदन्ताऽग्रहणात्। यत्त्वस्मिन्पक्षे दूषणान्तरमुक्तम्–अशुक्ले शुक्ले समपद्येतां 'शुक्ल्यास्तां वस्त्रे' इत्यत्र शब्दान्तरप्राप्त्याऽनित्यं लुकं बाधित्वा परत्वाच्छ्वीभावे कृते तस्य लुकि प्रत्ययलक्षणेन शुक्लीत्यस्य प्रगृह्यता स्या'दिति; तन्न। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत' इति परिभाषयौकारस्यैव लोपात्। तस्य चेदाद्यन्तत्वविरहात्। अस्तु तर्हि ईदादि विशेष्यं, तथा च द्विवचनसंज्ञं ईदादि प्रगृह्यमित्यर्थं इति चेन्न। 'गङ्गे'इत्यादेः सिद्धावपि 'दृश्येते' इत्याद्यसिद्धेः। द्विवचनावयवो ह्ययमेकारो न तु द्विवचनम्। किञ्च 'प्रगृह्य'मित्यस्य सन्निहितत्वाद् द्विवचनमेव संज्ञि न त्वीदादि, विप्रकृष्टत्वात्। तस्माद्यथाव्याख्यानमेव मनोरमम्। अत्र **वृत्तिकाराः**–मणीवादीनां प्रतिषेधो वक्तव्य इति पठित्वा मणीव रोदसीव दम्पतीव जम्पतीवेत्युदाजह्रुः। मुनित्रयानुक्तत्वादप्रमाणमिदमिति **कैयटादयः**। एवं वदद्भिः समानन्यायतयाऽन्येषां मुनित्रयानुक्तानां वृत्तिकृन्मात्रोक्तानां 'तुरीयस्येष्टिः' 'शंसिदुहिगुहिभ्यो वा''क्रमेके छन्दसि', 'भाषायां च अङ्गगात्रकण्ठेभ्यस्त्विष्यत'इत्यादीनामनादर्त्तव्यतोक्ता। 'मणीवोष्ट्रस्य लम्बेते'इति तु इवार्थकेन वाशब्देन निर्वाह्यमित्याहुः। **न्यासकारस्तु**–सम्बुद्धौ शाकल्यस्येताविति शाकल्यग्रहणस्य सिंहावलोकितन्यायेनेह सम्बन्धाद्व्यवस्थितविभाषाश्रयणाच्चेदं लभ्यत इत्याह। केचित्त्विवार्थेऽयं वशब्दः प्रयुक्तो, भीमो भीमसेन इतिवत्। 'काम्बदखण्डितदलानि व पङ्कजानी'त्यादिवच्चेत्याहुः। वस्तुतस्तु 'वद्वा यथा तथैवैवं साम्य'इत्यमरग्रन्थे व वेति पाठमाश्रित्य 'शात्रवं व वपुर्यश'इति कालिदासप्रयोगस्य तद्व्याख्यातृभिरुदाहरणात्सर्वं सुस्थम्। युक्तश्चायमेव पाठः। प्रातिपदिकप्रक्रमे तद्धितस्य वतेरननुगुणत्वात्। एतेन–'**स्फुटोत्पलाभ्यामलिदम्पती व विलोचनाभ्यां कुचकुड्मलाशया। निपत्य बिन्दू हृदि कज्जलाविलौ मणी व नीलौ तरलौ विरेजतु**'रिति श्रीहर्षप्रयोगोऽपि गतार्थः॥

**अदसो मात्।** अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते। न चाऽमू इत्युदाहरणं पूर्वसूत्रेण गतार्थमिति वाच्यं, तस्मिन् कर्त्तव्ये मुत्वस्याऽसिद्धत्वात्। अदसोमादिति सूत्रं प्रति तु नाऽसिद्धत्वम्। आरम्भसामर्थ्यात्। तथा च वार्त्तिकम्–'**आश्रयात्सिद्धत्वं यथा रोरुत्वे**'इति। पुंद्विवचनमेवोदाहरणं, स्त्रीनपुंसकयोर्द्विवचने तु मुत्वस्यासिद्धत्वेप्येकारान्तत्वात्पूर्वेणैव सिद्धा संज्ञा। ततश्च प्रकृतिभावोऽनुनासिकपर्य्युदासश्च सिद्ध एवेत्यवधेयम्। यत्तु **हरदत्तेनोक्तम्**–'अणोप्रगृह्यस्येत्यत्रोपस्थितेन पूर्वसूत्रेण संज्ञायां क्रियमाणायां मुत्वस्य सिद्धत्वाल्लिङ्गत्रयेऽपि द्विवचनेऽनुनासिकपर्युदासः पूर्वेणैव सिद्धः। एतत्सूत्रारम्भस्त्वद्विवचनार्थः, पुंसि द्विवचने प्रकृतिभावार्थश्चे'ति,तच्चिन्त्यम्। प्लुतसंग्रहानुरोधेन पूर्वसूत्रे यथोद्देशपक्षस्यैव स्थापितत्वात्। तस्मात् पुंसि द्विवचनेऽनुनासिकपर्युदासोप्येतत्सूत्रस्य फलं, न तु प्रकृतिभावमात्रमित्यवधेयम्। अथापि कथञ्चिद्धरदत्तोक्तिस्समर्थयितव्येत्याग्रहस्तर्हि इत्थं समर्थनीया,–पूर्वसूत्रे कार्यकालपक्ष एवास्तु। न चैवं प्लुतस्यानुनासिकपर्युदासो न स्यादिति वाच्यम्। ईई३त्, ऊऊ३दिति दीर्घात्परभागे प्लुतस्यापि प्रश्लिष्टनिर्देशात्। एकारस्त्वण्त्वादेव प्लुतं ग्रहीष्यति। न च तादपि परस्तपर इति तत्कालग्रहणापत्तिः। ऋदोरबिति वदकार एवायमित्याशयात्। युक्तश्चैतत् यथोद्देशपक्षे प्लुतात् प्रागेव संज्ञाप्रवृत्तौ सत्यां ततः प्लुते कृते तमेव द्विमात्रत्वेन पश्यन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाऽभावात्। नाभादस्तु मुभावात्प्रागप्राप्तस्ततो मुत्वनिमित्तकं नाभावमाश्रित्य मुभावे 'दशब्दोय'मिति बुद्ध्या प्राप्नुवन् दीर्घः प्रतिविधीयत इत्युचितम्। नह्यसौ प्लुतात् प्राक् प्रगृह्यसंज्ञावन्मुभावात्प्रागेव प्रवृत्तो, येन पुनर्न प्रवर्त्तेत। एतेन पूर्वसूत्रस्थहरदत्तग्रन्थोऽप्युज्जीवित इति यावद्बाधं साधु। भाष्यकैयटयोस्त्वयं भावः–प्लुतात्प्राक् प्राप्तापि प्रगृह्यसंज्ञा फलाऽभावान्न क्रियते। न च प्लुतेऽनुनासिकप्रवृत्तिरेव फलमस्त्विति वाच्यम्। संज्ञाया अप्रवृत्तावपि तल्लाभात्। प्रगृह्यत्वप्रयुक्तपर्य्युदासस्यैव विधिस्पृष्टस्य तत्फलत्वौचित्याच्चेति। सुश्लोकेतीत्यादावप्यन्तरङ्गत्वात्प्लुतः,'अन्तरङ्गम्बलीय'इति न्यायात्॥ प्रकृतमनुसरामः–नन्वारभ्यमाणेप्यस्मिन् सूत्रे पूर्वसूत्रेणैकरूप्यार्थं यथोद्देशपक्ष एवाश्रयणीयः। तथा च रुत्वस्योत्वं प्रतीव प्रगृह्यसंज्ञां प्रत्येव मुत्वमीत्वयोः सिद्धत्वं स्यान्न त्वयादीन् प्रत्यपि। ततश्चाऽमी आसत इत्यत्राऽयादेशप्रसङ्गः। अमू

आसाते इत्यत्र पुंस्यावादेशः । अमी अत्रेत्येङः पदान्तादतीत्येकादेशप्रसङ्गश्च । न च संज्ञां प्रत्येव सिद्धत्वे वचनानर्थक्यं स्यादिति वाच्यम् । अनुनासिकपर्युदासेन चरितार्थत्वात् । अत्रोच्यते—यद्यनुनासिकपर्य्युदासमात्रं प्रयोजनं स्यात्तर्हि संज्ञासूत्रं न प्रणयेत् । 'अणोऽप्रगृह्यस्यानुनासिकः,' 'अदसो ने'त्येव ब्रूयात् । असौ अमुके अमुकाभ्यामित्यादौ तु सिद्धान्तेपि न भवत्येवाऽनुनासिकः । अनण्त्वादनवसानत्वाच्च । अतस्तत्र माद्ग्रहणमीदूद्ग्रहणं वा न कर्त्तव्यम् । न चैवं हे अमुक इत्यत्रापि निषेधापत्तिः । त्यदादीनां सम्बोधनविभक्तिविरहस्यौत्सर्गिकत्वात् । अतः संज्ञारम्भसामर्थ्यात्प्रकृतिभावार्थत्वमप्यस्य विज्ञायते । तद्बलाच्चाऽयादिविरहोऽपि सिद्ध्यति, प्रकृतिभावस्यापवादरूपतयोपसञ्जातनिमित्तोप्युत्सर्ग उपसंजनिष्यमाणनिमित्तेनाप्यपवादेन बाध्यत इति परिभाषावताराच्च । यत्तु संज्ञारम्भसामर्थ्यादयादीन्संज्ञां च प्रति मुत्वमीत्वयोः सिद्धत्वज्ञापनादयादीन् बाधित्वा परत्वान्मुत्वमीत्वे इति; तन्न । अयाद्यभावस्य ज्ञापने लाघवात् । अर्थापत्तेर्हि साक्षादुपपादकविषयतौत्सर्गिकी । किञ्च मुत्वमीत्वयोरेकपदाश्रयत्वेन बलीयस्त्वम्, 'अन्तरङ्गम्बलीय' इति न्यायात् । तत्कथं विप्रतिषेधोपन्यासः । 'नाजानन्तर्य्ये' इति निषेधस्त्वसिद्धं बहिरङ्गमित्यस्यैव न तूदाहृतपरिभाषायाः । यद्यप्यसिद्धं बहिरङ्गमन्तरङ्ग इत्यनयैव गतार्थत्वादन्तरङ्गम्बलवदिति पृथक् परिभाषा न कर्त्तव्येति 'विप्रतिषेधे पर'मितिसूत्रे भाष्यकृद्वक्ष्यति, तथाप्यभ्युच्चयमात्रं तत्, साऽपवादनिरपवादत्वाभ्यां फले विशेषात् । 'वृक्ष इहे'त्यत्र हि सप्तम्येकवचनेन सह गुणोऽन्तरङ्गः । सवर्णदीर्घत्वं तु बहिरङ्गम् । न चेहाऽसिद्धपरिभाषया गुणो लभ्यते । 'नाजानन्तर्य्ये'इति निषेधात् । अत एवाऽचः परस्मिन्निति सूत्रे भाष्यकृद्वक्ष्यति–'**आरभ्यमाणो नित्योसौ परश्चासौ व्यवस्थया । युगपत्सम्भवो नास्ति बहिरङ्गेण सिद्ध्यति**' इति । एतच्च तत्रैव स्फुटीकरिष्यते । अत एवोक्त वार्त्तिककृता,–'श्चङन्तस्यान्तरङ्गलक्षणत्वा'दिति । धियति अदुद्रुवदित्यादि च तत्रोदाहृतम् । ज्ञापकं चात्र ओमाङोश्चेत्याङ्ग्रहणम् । तद्धि खट्वा आ ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गयोः कार्यमन्तरङ्गमित्यन्तरङ्गत्वाद्गुणे कृते वृद्धिप्राप्तौ सत्यां पररूपं यथा स्यादिति क्रियते, एतच्च 'सम्प्रसारणाच्चे'ति सूत्रे भाष्ये स्पष्टम् । कथं तर्हि वार्तिककृतोक्तं–'विप्रतिषेधाद्वे'ति ?। सत्यम् । अत एवाऽपरितोषाद्भाष्यकारेणा**ऽथवेति** पक्षान्तरमाश्रितमिति दिक् ।

मात् किम् ? । अमुकेऽत्र । नन्विह सूत्रे ईदूतावेवानुवर्त्तितौ नत्वेकारः । सत्यम् । सति माद्ग्रहणे एकारो नानुवर्त्तते,अदसो मात्परस्य तस्याऽसम्भवात् । अन्यथा त्वनुवर्त्तेत । एकदेशानुवृत्तिस्तु दुर्ज्ञाना । तस्मादेकाराननुवृत्तितात्पर्यग्राहकफलकं माद्ग्रहणमिति स्थितम् । अत्रेदं चिन्त्यम्,–ईदूतौ सप्तम्यर्थे प्रगृह्यौ, अदसः, एच्च द्विवचन'मित्येव कुतो न सूत्रितम् । एवं हि पूर्वसूत्रस्थमीद्ग्रहणं प्रकृतसूत्रे माद्ग्रहणं च न कर्त्तव्यमिति महल्लाघवम् । एकदेशानुवृत्तिश्च नाश्रयणीया भवती'ति ॥ [ **अदसो मात्** ] ॥

**शे** । अयं प्रगृह्यः स्यात् । अस्मे इन्द्राबृहस्पती । चतुर्थीबहुवचनस्य स्थाने 'सुपां सुलु'गिति सूत्रेण 'शे' आदेशः । शित्त्वात् सर्वादेशः, शेषे लोपः । न युष्मे वाजबन्धवः । युष्मास्वित्यर्थः । अत्र पदपाठकाले 'युष्मे' इत्युदाहरणं बोध्यम् । संहितायान्त्वच्परत्वाऽभावेन सत्यसति वा प्रगृह्यत्वे वा विशेषाऽलाभात् । एवं 'त्वे रायः सुदुघास्त्वे ह्यश्वा' इत्यादीनामपि पदपाठकाले उदाहरणत्वं बोध्यम् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् । तेनेह न काशे कुशे वंशे हरिशे बभ्रुशे । हरि बभ्रु–आभ्यां लोमादित्वाच्छप्रत्ययः । ततः सप्तम्येकवचनम् ॥ [ **शे** ]

**निपात एकाजनाङ्** । एकोऽज्निपात आङ्भिन्नः प्रगृह्यः स्यात् । '**अ'निषेधाधिक्षेपयोः** । अ अवद्यम्' । **इ विस्मये,** इ इन्द्रः। **उ जुगुप्सासंतापान्वर्थाप्यर्थेषु** । उ उमेशः । एकाजिति कर्मधारये वर्तिपदार्थप्राधान्येनान्तरङ्गत्वात्, 'व्याहरति मृग' इत्यादिनिर्देशाच्च । तेनेह न । प्रेदं ब्रह्म वृत्रतूर्येष्वाविथ । प्रेद्ध इत्यादि ॥

स्यादेतत् । यद्ययं कर्मधारयस्तर्हि एकग्रहणं व्यर्थम् । निपातो योऽच् इत्येतावतैवाभिमतसिद्धेः । न च विपरीतविशेषणविशेष्यभावेनाऽजन्तो यो निपात इत्यर्थः स्याद्विशेषणेन तदन्तविधिरिति वाच्यम् । तथाऽसति व्यावर्त्त्याऽलाभेन विशेषणवैयर्थ्यापत्तेः । न च हलन्तं व्यावर्त्त्यम् । तस्य संज्ञायां सत्यामपि बाधकाऽभावात् । न च पुरोऽस्तीत्यादौ हलन्तस्य संज्ञायां सत्यां प्रकृतिभावाद्रोरुत्वं न स्यादिति वाच्यम् । प्रगृह्यसंज्ञां प्रति रुत्वस्याऽसिद्धतया दोषाऽभावात् । न च सान्तस्य कृता प्रगृह्यसंज्ञा एकदेशविकृतस्यानन्यतया रेफान्तस्यापि स्यादेवेति प्रकृतिभावप्रसङ्गस्तदवस्थ एवेति वाच्यम् । प्रगृह्यसंज्ञां प्रतीव प्रकृतिभावं प्रत्यपि रुत्वस्याऽसिद्धत्वात् । सकारान्तस्य तु न किंचिदपि सिद्धकाण्डस्थं प्राप्नोति यत्प्रकृतिभावेन व्यावर्त्त्येत । तस्मादचा निपातस्य विशेषणेऽज्ग्रहणं व्यर्थमेव स्यादिति सुष्ठूक्तम् । नन्वजन्तस्यैव यथा स्यादज्मात्रस्य मा भूदित्येवमर्थं विशेषणं किन्न स्यादिति चेन्न । व्यपदेशिवद्भावेन तस्याप्यजन्तत्वाऽनपायात् । विशेषणसामर्थ्याद्व्यपदेशिवद्भावो न प्रवर्त्तत इति चेन्न, तदन्तविधिपरित्यागेनापि तत्सार्थक्यस्य सुवचत्वात् । तथाऽप्यन्यतरपरित्यागे आवश्यके विनिगमकं किमिति चेत्, आङ्ग्रहणमेवेत्यवेहि । तद्धि व्यपदेशिवद्भावमात्रबाधे व्यर्थं स्यात् । तस्मादचो विशेषणत्वेनाऽऽङ्ग्रहणाज्ज्ञापकात्तदन्तविधिर्न । अचोविशेष्यत्वे तु सुतरान्तदन्तविधिरिति । उभयथाप्येकग्रहणं व्यर्थमेवेति स्थितम् । नन्वच्समुदायनिवृत्त्यर्थमेकग्रहणमस्तु ।

'अइउअपेही'ति समुदायस्यैव संज्ञा स्यान्नावयवानामेकाज्द्विर्वचनन्यायादिति चरमस्यैव प्रकृतिभावः स्यान्न तु पूर्वयोरिति। मैवम्। अजित्येकत्येकत्वस्य विवक्षयैव समुदायनिराससम्भवात्। अत्राह **भाष्यकारः**–'अच्समुदायग्रहणशङ्कानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति वर्णग्रहणेषु व्यक्तिसंख्या न विवक्ष्यते किन्तु जातिरेव निर्दिश्यत'इति। तेन दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धमिति वार्तिककृता वक्ष्यमाणं सूत्रेणैव ज्ञापितं भवति। दम्भेः सिद्धमित्यन्वयः। अत्र हेतुर्हल्ग्रहणस्य जातिवाचकत्वादिति। तेन दम्भेः सनि कृते 'सनीवन्ते'ति विकल्पादिडभावे दम्भइच्चेतीदीतोः कृतयोरत्र लोपोऽभ्यासस्येत्यभ्यासलोपे हलन्ताच्चेति सनः कित्त्वान्नलोपे भष्भावे च कृते धिप्सति धीप्सतीति रूपद्वयं सिद्ध्यति। हल्ग्रहणस्य व्यक्तिपरत्वे तु योऽत्रेकः समीपो हल् नकारो, न ततः परः सन्, यस्माच्च परः सन् भकारान्नासाविकः समीप इति कित्त्वं न स्यात्। तथा–'तृंहू हिंसायां' तुदादिः, ऊदित्वादिड्वा,–तितृंहिषति तितृक्षतीति स्यादिति दिक्।

स्यादेतत्। अइउअपेहीत्यत्र एकाज्द्विर्वचनन्यायोपन्यासो न युक्तः, समुदायसंज्ञयाऽवयवानामननुग्रहात्। अत एव हि निर्ग्लायान्निर्ग्लेयादित्यादौ बहूनां सन्निपाते द्वयोः संज्ञा स्वीकृता। नापि निपातसमुदायस्य निपातग्रहणेन ग्रहणम्, एकैकस्मिन्निपाते संज्ञाविधानसम्भवात्। सत्यम्। एकाज्समुदायग्रहणशङ्कामात्रं तु स्यादेव। तन्निरासायैव क्रियमाणमेकग्रहणं प्रागुक्तमर्थं ज्ञापयति। वस्तुतस्त्वपृक्तसंज्ञायामेकग्रहणमुक्तार्थे ज्ञापकमित्याश्रित्य प्रकृतसूत्रे एकग्रहणस्य परित्याग एव ज्यायान्।

निपात इति किम्?। चकारात्र। तथा अततेर्डः अः। हे अ आगच्छेत्यपि प्रत्युदाहरणम्। आङनाङोर्व्यवस्थामाह भाष्यकारः–'**ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्॥**' इति॥ इह एतच्छब्देन पूर्वमनिर्दिष्टत्वादेतमित्यस्यैनादेशो न कृत इति **कश्चित्**। तन्न। 'अन्वादेशश्च कथितानुकथनमात्रं न त्विदमैव कथितस्येदमाऽनुकथन'मिति भाष्यकृता वक्ष्यमाणत्वात्। तस्माद्यत्किञ्चिद्विधाय वाक्यान्तरेणान्यदुपदिश्यते सोऽन्वादेशः। इह तु ईषदर्थादौ यो वर्त्ततइति वृत्तिर्न विधेया, किन्तु परिचायकतामात्रेणोपात्ता, अतो नैनादेशः। एतेन 'नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापये'त्यपि व्याख्यातम्। भीरुत्वस्य विधेयत्वाऽविवक्षणात्, सिद्धस्यैव हेतुत्वेनानुवादादिति दिक्। **ईषदर्थे**–आ उष्णं ओष्णम्। 'आङीषदर्थे' इति कुगतीति सूत्रे वार्त्तिककृता ङित्त्वव्यवहृतः। **क्रियायोगे**–आ इतः एतः। प्रादिषु ङित्पठितः। मर्यादाभिविधौ चेति समाहारद्वन्द्वे आगमशासनस्याऽनित्यत्वान्नुमभावः। मर्यादया सहिते अभिविधाविति मध्यमपदलोपी वा समासः। **मर्यादायाम्**–आ उदकान्तात् ओदकान्तात्। **अभिविधौ**–आ अहिच्छत्रात् आऽहिच्छत्रात्। विना तेनेति मर्यादा, सहतेनेत्यभिविधिः। 'आङ् मर्यादाभिविध्यो'रिति च ङिन्निर्दिष्टः। पूर्वप्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतनाय आकारः प्रयुज्यते। आ एवंनु मन्यसे। नैवं पूर्वममंस्थाः संप्रत्येवं मन्यसइत्यर्थः। वाक्यारम्भसूचनाय आकार इत्यपरे। तथा स्मृतेः सूचक आकारः प्रयुज्यते। ततः स्मृतोऽर्थो निर्दिश्यते। 'आ एवङ्किलत' दिति। अत्र च वाक्यस्मरणयोरङिदित्यत्रैव तात्पर्यम्। अतो वाक्यस्मरणाभ्यामन्यत्रेषदर्थाद्यभावेऽपि ङित्त्वं बोध्यम्। तेनामेन्यस्य रजसो यदभ्रआँ अपो वृणानेत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य ङित्त्वेनाङोनुनासिकश्छन्दसीति प्रवर्त्ततइति षष्ठे **हरदत्तादयः**। युक्तश्चैतत्। ङिदङितोरन्यतरलक्षणमात्रेणाऽर्थादुभयविवेकलाभे तत्रापि लाघवादङिल्लक्षणे तात्पर्य्यमाश्रित्य भागान्तरस्याऽवयुत्यानुवादरूपत्वात्॥

**ओत्**। ओदन्तो निपातः प्रगृह्यसंज्ञः स्यात्। आहो इति उताहो इति। निपात इति किम्? देवोसि वषट्ते, विष्णवासआ। वायवायाहि। विष्णोऽव। यत्तु 'गवित्ययमाहे'त्येतदेव निपातग्रहणस्य व्यावर्त्त्य'मिति। तन्न। प्रगृह्यसंज्ञायां सत्यामपि क्षत्यभावात्। न चैवं प्रकृतिभावापत्तिः। प्रकृतिभावविधौ पदान्ताऽधिकारात्। न चायं पदान्तो भवत्येवेति भ्रमितव्यम्। अनुकार्यानुकरणयोरभेदविवक्षयामर्थवत्त्वाऽभावेनाऽप्रातिपदिकत्वाद्विभक्तेरनुत्पत्तावेवैतद्रूपाभ्युपगमात्। अन्यथा विभक्तिश्रवणापत्तेः। न चैवमपदस्य प्रयोगाऽसङ्गतिरिति वाच्यम्। 'अपदन्न प्रयुञ्जीते'त्युद्घोषस्य अपरिनिष्ठितं न प्रयुञ्जीतेत्येवंपरत्वात्। तस्य च सुप्तिङादिविषयकतत्तद्विधिशास्त्रमूलकत्वात्। इह तूक्तरीत्या सुब्विभक्तेरप्यप्राप्त्या 'गो'इति स्वरूपस्यैव परिनिष्ठितत्वात्। अत एवेह लोपः शाकल्यस्येत्यपि न प्रवर्त्तते। कथं तर्हि पूर्वसूत्रे **शेर्थवद्ग्रहणादिति** वार्त्तिके एङः पदान्तादिति पूर्वरूपं कृतमिति चेत्। तत्रानुकार्यानुकरणयोर्भेदं विवक्षित्वा विभक्तिं च कृत्वा शेष्वर्थवान् शेऽर्थवानिति समासेन सुपो लुकं कृत्वा व्याख्यानात्। एतेनोत्तरसूत्रे सम्बुद्धाविति किं, गवित्ययमाहेत्युदाहरन्तो **वृत्तिकारा** अपि प्रत्युक्ताः। तस्मादिह देवोऽसीत्यादिकमेव प्रत्युदाहरणं बोध्यम्। न चैङः पदान्तादित्यारम्भसामर्थ्यादेव तत्सिद्धिः। हरेऽव गच्छेत्यादौ चारितार्थत्वात्। न चैङ्ग्रहणसामर्थ्यम्। ङसिङसोश्चेत्युत्तरार्थत्वात्। उत्तरसूत्रे तु सम्बुद्धिग्रहणाऽभावे आहो इतीत्यादावपि परत्वाद्विकल्पापत्तिः। पूर्वसूत्रस्याऽहो ईशा इत्यादावुत्तरस्य तु विष्णो इतीत्यादौ लब्धावकाशतया विप्रतिषेधसम्भवात्। नचेह ओदन्तस्य कार्यितयोत्तरत्र तु विशेष्याऽसन्निधानेन तदन्तविधिविरहादोकारमात्रस्य कार्यितया भिन्नविषयकत्वे कथं विप्रतिषेध इति वाच्यम्। त्रपूणामित्यादौ प्रकृतिप्रत्ययावयवयोर्नुम्नुटोरिवेहापि फलाऽविरोधेन विषयभेदेऽपि विप्रतिषेधसम्भवात्। अर्थाधिकाराश्रयणे उत्तरसूत्रेऽप्योकारान्तस्य

संज्ञित्वाच्च। शब्दाधिकारपक्षेपीकोझलित्यत्र सनाक्षिप्तस्य धातोरिका विशेषणवदिहापि सम्बुद्ध्याक्षिप्तायाः प्रकृतेरोकारेण विशेषणे तदन्तविधिसम्भवाच्च। तस्मात्सूत्रद्वयेपि गवित्ययमाहेति प्रत्युदाहरणं नेति स्थितम्। प्रकृतिभावे पदान्तग्रहणं न सम्बध्यतइत्याशयेन तु वृत्तिग्रन्थो योज्यः। अस्मिंश्च पक्षे मण्डूकप्लुतिन्यायेनेको सवर्णइत्यत्र पदान्तग्रहणं सम्बन्धनीयमेव। अन्यथा गौयौं गौर्य्यं इत्यादावतिप्रसक्तेरिति दिक्।

स्यादेतत्–निपातसमुदाया एते। आह उ आहो, उत आहउ उताहो इत्यादि। ततश्चादिवद्भावान्निपातएकाजित्यनेनैव सिद्धा संज्ञा। न चैवमाहो इतीत्यादिषु 'ऊँ'इत्यस्य प्रसङ्गः। निरनुबन्धकोयमुकारो न तूञिति समाधानात्। अत एवोञ इति सूत्रे ञकारोच्चारणमपि सार्थकम्। अत एव चोञ ऊँ इत्यत्र भाष्यकृतोक्तम्,–द्वावुकाराविमौ। एकोऽननुबन्धकः। अपरः सानुबन्धक इति। न चैवमपि आउओ इत्यत्राङनाङोरेकादेशस्याऽनाङिति प्रतिषेधे प्राप्ते प्रतिप्रसवार्थमिदमिति वाच्यम्। अनाङित्यस्य पर्युदासाश्रयणेनाङनाङोरेकादेशस्यादिवद्भावादनाङ्ग्रहणेन ग्रहणात्। प्रसज्यप्रतिषेधे ह्यसमर्थसमासो वाक्यभेदश्च स्यात्। भाष्येपि–'प्रतिषिद्धार्थमेत'दित्युक्तिरभ्युच्चयमात्रम्। कथमन्यथाऽनुपदमेवाऽदोभवदित्यत्रातिप्रसङ्गमाशङ्क्य प्रतिपदोक्तस्यैवौकारस्य ग्रहणमिति समादधीत। तस्मादिदं सूत्रं विनापिसर्वं लक्ष्यं निर्व्यूढमेवेति चेत्, अत्रोच्यते,–आहो उताहोइत्यादयो न निपातसमुदायाः किन्तु खण्डा एव। एतच्च एतत्सूत्रबलात्प्रतिपदोक्तस्योकारस्य ग्रहणमिति भाष्यबलाच्चाध्यवसीयते। तेन आम् आह देवदत्तेत्यत्राम एकान्तरमामन्त्रितमिति निघातप्रतिषेधः सिद्धः। अत **एव पदकारैरपि**–'ओपुवर्त्तमरुत' इत्यादौ ओइत्याद्यैकपद्येनैव पठ्यते। तदेवं सूत्रकारभाष्यकारपदकाराणां संवाद एवेति स्थिते निपातसमुदाय एवायमित्याश्रित्यैतत्सूत्रं प्रत्याचक्षाणाः परास्ताः। स्यादेतत्,अनदोऽदः समभवदित्यत्रातिप्रसङ्गः,च्व्यन्तस्य निपातत्वात्। 'ऊर्यादिच्विडाचश्चे'ति गतिसंज्ञाविधानेपि 'प्राग्रीश्वरान्निपाता' इत्यस्याऽधिकारात्। न च लक्षणप्रतिपदोक्तपरिभाषया लाक्षणिक ओकारो व्यावर्त्त्य इति वाच्यं, वर्णग्रहणेषूक्तपरिभाषाया अप्रवृत्तेः। अन्यथैचोऽयवायाव इत्यपि हरये इत्यादौ न प्रवर्त्तेत, चक्रेचक्रिरइत्यादौ प्रतिपदोक्ते चारितार्थ्यात्। वर्णस्य प्राधान्ये मास्तु परिभाषा, विशेषणत्वे तु स्यादेवेति चेन्न। अविशेषेणाऽप्यप्रवृत्तेः सूपपादत्वात्। तथा च षष्ठे वक्ष्यामः। अभ्युपेत्यापि ब्रूमः, अगौर्गौः समभवद्गोभवदित्यादौ गमेर्डोइत्योकारस्य प्रतिपदोक्ततयाऽतिप्रसङ्गः स्यादेव। नन्विह गौणमुख्यान्यायेन समाधानमस्तु। तथाहि,–सङ्घीभवन्ति ब्राह्मणाः, त्वद्भवति देवदत्तः मद्भवसि त्वं, त्वद्भवाम्यहमित्यादौ वचनपुरुषव्यवस्थानुरोधेन च्विप्रत्ययस्थले सर्वत्र प्रकृतेरेव कर्तृत्वमिति सिद्धान्तस्थितिः। तथा च प्रकृतावारोपेण वर्त्तमानाद्विकृतिवाचकाच्छब्दाच्च्वेरुत्पत्तौ च्विप्रत्ययं प्रति प्रकृतिभूतस्य वाहीकादिवृत्तेर्गोशब्दस्य गौणार्थता स्पष्टैव। अत एवाऽमहान् महान् भूतो महद्भूतश्चन्द्रमा इत्यादावान्महत इत्यात्वं न प्रवर्त्ततइति चेन्न। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। तथाहि विशिष्टरूपोपादाने गौणमुख्यन्यायः। तस्याऽर्थवद्ग्रहणे नानर्थकस्येत्येतत्परिभाषामूलकत्वात्। अर्थोपस्थितेश्च रूपविशेषग्रहसापेक्षत्वात्। तथा चान्महत इति विशिष्टरूपग्रहणेन विधीयमानमात्वं गौणे न भवतीति युक्तम्। इह त्वोदिति वर्णपुरस्कारेण विधीयमाना प्रगृह्यसंज्ञा कथं गौणार्थवृत्तेर्न भवेत्?। निपातसंज्ञा तु तस्यापि मुख्यैव। अत एव संज्ञाश्वशुरस्यापत्यं श्वाशुरिरित्यत्र राजश्वशुराद्यन्न प्रवर्त्तते। अत इञ् तु प्रवर्त्तत एव। अन्यथा इञो यतश्च तुल्ययोगक्षेमतैव स्यात्। अत एव गौर्वाहीको ब्रूते गां वाहीकं पाठयेत्यादौ वृद्ध्यात्वे स्त एव। तयोरपि वर्णाश्रयत्वात्। 'गोत' इति तपरत्वमोकारान्तोपलक्षणार्थमिति वक्ष्यमाणत्वात्। तथा चौतोमिति सूत्रे भाष्यकृद्वक्ष्यति–गामित्यत्र परापि वृद्धिर्निरवकाशेनात्वेन बाध्यत'इति। तत्रैव कैयटोपि वक्ष्यति,–'ओत इति सूत्रं पाठ्यम्। ओकारान्तोपलक्षणतया वा गोतइत्येतद्व्याख्येय'मिति। वृत्त्यादिग्रन्थेष्वप्येवमेवास्थितम्। यत्तु वदन्ति 'मुख्य एव स्वार्थे सास्नादिमति गोशब्दो वृद्ध्यात्वे लभते, ततो वाहीकादिशब्दान्तरसन्निधानाद्गौणताप्रतीतिः। गोभवदित्यत्र तु गौणार्थतां विना च्विरेव दुर्लभ इति वैषम्यम्। तस्मात् पदकार्येष्वयं न्यायो, न प्रातिपदिककार्येष्विति स्थित'मिति। तच्चिन्त्यम्। वाक्यसंस्कारपक्षे वृद्ध्यात्वप्रवृत्तितः प्रागेव गौणार्थावगतेः। यत्तु कारकाणां क्रिययैव श्रौतः सम्बन्धस्ततएकक्रियावशीकृतानामरुणैकहायनीन्यायेन पार्ष्णिकः परस्परावच्छेदः। तथा च गामानयेत्यन्वयवेलायां न गौणार्थता, किन्तु वाहीकेन सह पार्ष्णिकावच्छेदवेलायाम्। न चान्तरङ्गत्वेन प्रवृत्तः पदसंस्कारो बहिरङ्गगौणत्वप्रतीतावपि निवर्त्तेत इति, तदपि न, तावताऽपि ब्रूते पाठयेति क्रियान्वयायैव गौणताया आश्रयणीयत्वात्। 'कटोपि कर्म भीष्मादयोपी'ति पक्षे कथञ्चिदुक्तिसम्भवेपि सामानाधिकरण्याद्भीष्मादेर्द्वितीयेत्येवं रूपे भाष्योक्तपक्षान्तरे त्वदुक्तन्यायानवताराच्च। श्वाशुरिरित्यत्रेञोप्यभावापत्तेश्च, शब्दप्रयोक्त्रा वाहीकनिष्ठस्यैव कर्मत्वादेर्विवक्षितत्वाच्च। तस्माद्वर्णाश्रयत्वाद्वृद्ध्यात्वे इत्येव तत्त्वं, न तु प्रातिपदिककार्यत्वादिति। अत एव चैकाच्च प्राचामित्यादौ प्रातिपदिककार्यत्वेपि न स्मायादयः। विशिष्टरूपपुरस्कारेणैव सर्वनामसंज्ञाविधानात्। **'अभिव्यक्तपदार्था ये'**इत्यपि गौणमुख्यन्यायसिद्धार्थकथनपरं, प्रसिद्धाऽप्रसिद्धत्वे एव हि मुख्यत्वगौणत्वे इत्यन्यत्र विस्तरः। अत एव सर्वादिसूत्रे 'संज्ञोपसर्जनप्रतिषेध' इति वार्त्तिकं प्रत्याचक्षाणो हरदत्त आह–"संज्ञाप्रतिषेधस्तावन्न वक्तव्यः। 'अभिव्यक्तपदार्थाये' इत्येव सिद्धत्वा'दिति। यत्तु तत्र कैयटो वक्ष्यति–'प्रसिद्ध्यप्रसिद्धि

वशात्संभवन्नपि गौणमुख्यन्यायो नेहोक्तः, पदकार्येष्वयं न तु प्रातिपदिककार्येष्विर्त्योत्सूत्रे उक्तत्वा'दिति । तदभ्युच्चयमात्रम् । युष्मदस्मदोः स्वरूपमात्राश्रयाणां कार्याणामुपसर्जनतायामिव संज्ञायां प्रवृत्त्यापत्तेः । 'युष्मद्युपपदे'"अस्मद्युत्तम'इत्यादावपि तदापत्तेश्चेति दिक् । तदेवमदोऽभवद्गोऽभवदित्यादौ ओदिति प्रगृह्यसंज्ञाऽव्ययत्वादिवद् दुर्वारेति पूर्वपक्षः पर्य्यवसन्नः । अत्रोच्यते,–पूर्वसूत्रेऽनाङिति पर्युदासादाङ्सदृशाः प्रतिपदघटिता एव निपाता गृह्यन्ते, इहाप्यर्थाधिकारेणाऽनाङ्ग्रहणानुवृत्त्या वा तथैवेति सर्वं सुस्थम् । तथा च सर्वादिसूत्रे 'अकाराऽत्कारौ अनुपसर्जनत्वे सत्येव' भवत इति प्रघट्टके तदोः सः साविति सत्वं तद्यविशेषितत्वाद्गौणतायामपि स्यादित्याशङ्क्य त्यदादीनाम इत्यत्रानुपसर्जनादिति परिभाषयानुपसर्जनानामेव ग्रहणे सिद्धे तथाभूतानामेव सत्वविधावनुवर्त्तनान्न कश्चिद्दोष इति समाधत्त कैयटः ॥ [ ओत् ] ॥

**सम्बुद्धौ शाकल्यस्येतावनार्षे ।** ऋषिर्वेदः । 'तदुक्तमृषिणे'त्यादौ तथा दर्शनात् । सम्बुद्धिनिमित्तक ओकारोऽवैदिके इतौ परे प्रगृह्यो वा स्यात् । विष्णो इति । विष्णविति । सम्बुद्धाविति किं, गवित्ययमाहेति **वृत्तिकारः** । एतन्निष्कर्षश्च पूर्वसूत्रे उक्त एव । अनार्षे किम् ? ब्रह्मवन्धवित्यब्रवीत् । इताविति किम् ? पटोत्र ॥ [ सम्बुद्धौ शाक]

**उञः ।** उञ इतौ प्रगृह्यसंज्ञा वा स्यात् । उ इति, विति ॥

**ऊँ ।** उञ इत्यनुवर्त्तते शाकल्यस्येति प्रगृह्यमिति च । प्रगृह्यस्य उञ इतौ परे ऊँ आदेशो वा स्यात्, दीर्घोनुनासिकश्च 'ऊँ' इति । इह यद्येको योगः स्यात्–उञ ऊँ इति, तदादेशे विकल्पिते रूपद्वयमेव स्यात्, ऊँ इति, उ इति । अतो योगं विभज्य प्रगृह्यसंज्ञापि विकल्पिता । एवमपि 'ऊँ' इति द्वितीयसूत्रे यदि प्रगृह्यग्रहणं शाकल्यग्रहणं चेत्युभयमपि नानुवर्त्तेत तदा उञ्मात्रस्य नित्यमूँभावविधात्प्रगृह्यस्याप्यादेशः स्यात् । तत्र प्रगृह्यस्यादेशे कृते स्थानिवद्भावेन प्रगृह्यत्वात् ऊँइतीति रूपं सिद्धम् । न चानल्विधाविति प्रतिषेधः । उञ इति समुदायरूपेणाश्रयणात् । तथा चेटईटीति सूत्रे इट इति समुदायरूपाश्रयणादग्रहीदित्यत्र च ग्रहोऽलिटीति दीर्घस्य स्थानिवद्भावमाश्रित्य सिज्लोपः सिद्ध्यतीति स्थानिवत्सूत्रे वक्ष्यते । अप्रगृह्यस्य त्वादेशेऽनुनासिको यण् स्यात् । तथा चेष्टरूपत्रितयमध्ये 'ऊँ इती'त्येकमेव सिद्धं न त्वपरं द्वयमित्यव्याप्तिः। अतिव्याप्तिश्च, सानुनासिकवकारयुक्तस्यानिष्टस्यापि प्रसङ्गात् ।

अथ प्रगृह्यग्रहणमात्रमनुवर्त्तेत तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्ततश्च विति ऊँ इतीति द्वे एव रूपे स्यातां न तु 'उइती'ति तृतीयम् । अथ शाकल्यग्रहणमात्रमनुवर्त्तेत तत उञ्मात्रस्यादेशविकल्पनात् ऊँ इति उइतीति द्वयं प्रगृह्यस्य, विति विँतीति द्वयमप्रगृह्यस्येति संकलनया रूपचतुष्टयं स्यात्। तत्र त्रितयस्येष्टत्वेपि सानुनासिकवकारयुक्तमनिष्टमापतति । तस्माच्छाकल्यग्रहणं प्रगृह्यग्रहणं चेत्युभयमनुवर्त्ततइत्युक्तम्। इह विभक्तिविपरिणामेन प्रगृह्यस्योञ इति व्याख्यातम् । आदेशसामानाधिकरण्येन प्रगृह्य 'ऊँ' इत्येतदादेशो भवतीति व्याख्यानेपि न कश्चिद्विशेष इत्यवधेयम् । ननु परिनिष्ठितमेव प्रयोगार्हं, परिनिष्ठितत्वं च अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम् । निहते तिङन्ताद'व्याप्तिवारणायाऽ**प्रवृत्तेति ।** वैकल्पिकेड्डागमोद्देश्यतावच्छेदकाक्रान्ते सेद्धेत्यादावव्याप्तिवारणायोक्तं–**नित्येति ।** अत एव 'पच् लट्' इत्यादीनामलौकिकतेति सिद्धान्तः । तथा च उ इतीत्येतद्रूपं न स्यादेव । अत्र हि शाकल्यमते ऊँआदेशेन भाव्यमेव । इतरेषां मते तु प्रगृह्यत्वमेव नास्तीति चेत् । भवेदेवं यदि शाकल्यग्रहणं यथाश्रुतं स्यात् । तत्तु विकल्पमात्रतात्पर्यकम् । तथा च **भाष्यम्**–'शाकल्यस्य विभाषा यथा स्यादिति ऊँ वा शाकल्यस्ये'ति च । तथाच तत्र **कैयटः**–'शाकल्यश्रुतेरेव फलं वाग्रहणेन प्रतिपादयती'ति। स्मृत्यन्तरानुसन्धानद्वारेण विभाषासम्पद्यत इति च । यद्वा । अस्तु शाकल्यग्रहणं यथाश्रुतम् । तथापि निपातएकाजित्यनेनैव सिद्धे उञ इति तान्नियमार्थम्। तथा च शाकल्यभिन्नमते न प्रगृह्यतेति प्रथमसूत्रार्थः। उत्तरसूत्रे च प्रगृह्यस्योञ इत्येतावतैव शाकल्ये लब्धे पुनः शाकल्यानुवृत्त्येतरेषामपि मते पाक्षिकः प्रगृह्योस्तीत्यनुमीयते। तेन 'उ इति' रूप सिद्धम् । अथ वोत्तरसूत्रे पुनः शाकल्यानुवृत्तिसामर्थ्याच्छन्दाधिकाराश्रयणेन शाकलस्यैव ऋषेरपत्यान्तरं गृह्यते । अस्मिंश्च पक्षे प्रगृह्यस्योञ इत्यनुवादसामर्थ्यादेव प्रगृह्यतापि लभ्यते, यथा 'ढकि लोप' इत्यनुवादसामर्थ्याद्डुगिति दिक् । आदेशश्चायमनुनासिक इति निर्देशादेव व्यक्तम् । तथा च बह्वृचप्रातिशाख्यम्,–'उकारश्चेतिकरणेन युक्तो रक्तो पृक्तो द्राघितः काकलेने'ति । रक्तसंज्ञोनुनासिक इति च । अत एव यदेतन्ँ इति पदकाराः पठन्तीत्यनुकरणे यरोनुनासिकेनुनासिको वेत्येष विधिः प्रवर्त्तते । [उञ ऊँ] ।

**ईदूतौ च सप्तम्यर्थे ।** शाकल्यस्येताविति निवृत्तम् । ईदन्तमूदन्तं च शब्दरूपं सप्तम्यर्थे वर्तमानं प्रगृह्यं स्यात् । अध्यस्यां मामकीतनू। मामक्यां तन्वामिति प्राप्ते सुपांसुलुगिति लुप्तसप्तमीकावेतौ। मामकी इति, तनू इतीति पदकाले कार्योदाहरणे बोध्ये । सोमो गौरी अधिश्रित इति संहितायामप्युदाहरणम् । ईदूताविति किम् ? । प्रियः सूर्ये प्रियो अग्ना भवाति । अग्निशब्दात्परस्याः सप्तम्या डाआदेशः । पदकारैः प्रगृह्येष्वितिशब्दप्रयोगस्य नियमितत्वेनेहापि पदकाले इतिशब्दप्रयोगप्रसङ्ग इति प्रत्युदाहरणमिदम् । सप्तमीग्रहणं किम् ? धीती मती सुष्टुतीति । धीत्या मत्या सुष्टुत्येति प्राप्ते तृतीयैकवचनस्य पूर्वसवर्ण ईकारः। ततोऽकःसवर्णे दीर्घ इत्येकादेशः। न त्विह सुपोलुक् ह्रस्वश्रवणापत्तेः । अर्थग्रहणं किम् ? । वाप्यामश्वो वाप्यश्वः । नद्यामातिर्नद्यातिः । 'संज्ञाया'मिति सप्तमीसमासः । ननु सप्तम्यर्थोपादानस्यैव तत्कथमर्थग्रहणे कृतेऽपीष्टसिद्धिरिति चेत् । इत्थम्–जहत्स्वा-

र्थावृत्तिरिति पक्षे पदे वर्णवद्वृत्तौ वर्त्तिपदानामानर्थक्यादीदन्तमिहानर्थकं न तु सप्तम्यर्थवृत्तीति स्पष्टमेव। अजहत्स्वार्थावृत्तिरिति पक्षेपि उपसर्जनपदं न स्वार्थमात्रे पर्यवस्यति किन्तु तत्संसृष्टे प्रधानार्थे। अर्थग्रहणसामर्थ्याच्च यावानर्थः सप्तम्याऽभिधीयते आधेयासंसृष्टो निष्कृष्टाधिकरणरूपस्तावन्मात्रस्येह ग्रहणमिति वृत्तिप्रविष्टे न भविष्यति। यद्यपि वाक्यवत्समासेपि लुप्तसप्तमीबलेनाधिकरणमात्रबोधः पश्चाद्वाक्यार्थतया संसृष्टबोध इति वक्तुं शक्यते, तथापि सिद्धान्ते तावत्समर्थः पदविधिरिति परिभाषानुरोधात् समासस्थले एकार्थीभावएव सामर्थ्यं, न तु व्यपेक्षा। अत एवोपसर्जने विशेषणान्वयो न भवति शक्यैकदेशत्वादिति द्वितीये वक्ष्यते। मीमांसकादीनामपि निपादस्थपतिन्यायेन पूर्वपदार्थसम्बन्धिनि लक्षणाऽभ्युपगमाद्युक्तैवाऽर्थग्रहणेन वाप्यश्वनद्यातिप्रभृतेर्व्यावृत्तिः। **आतिर्बलाका**। 'शरारिराटिराटिश्च बलाका बिसकण्टिके'त्यमरः। आद्यास्त्रयोपि स्त्रीलिङ्गाः, बलाकासाहचर्यादिति केचित्। वस्तुतस्तु शरार्यादयस्त्रयः पक्षिविशेषवाचका न तु बलाकापर्यायाः। अतो बलाकासाहचर्यमकिञ्चित्करं, स्त्रीत्वम्परमस्त्येव। रत्नकोशे स्त्रीलिङ्गकाण्डे 'आटिः शरारिर्वरटी'त्युक्तेः, आतेरपि तत्साहचर्यात्। तपरकरणमसन्देहार्थमिति **वृत्तिः**। अत्र **वार्त्तिकम्**,–**'ईदूतौसप्तमीत्येव लुप्तेर्थग्रहणाद्भवेत्। पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते। वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि। ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत्।** अस्यार्थः–ईदूतौ सप्तमीत्येवास्तु नार्थोर्थग्रहणेन। अत्रोत्तरमाह–**लुप्तइति**–संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावात्–सप्तम्या एव संज्ञा स्यात्। लुप्तेपि सुपि प्रकृतिभागस्य संज्ञासिद्धये तु कर्त्तव्यमेवाऽर्थग्रहणमित्यर्थः। ननु सोमोगौरीत्यादौ विभक्तिर्न लुप्यते किन्तु धीती मतीत्यादाविव पूर्वसवर्णे कृतेऽकः सवर्णइति दीर्घएकादेशे तस्यादिवद्भावात्सप्तमीग्रहणादस्त्येव सप्तमीत्याशंक्याह–**पूर्वस्येति। आडाम्भावइति**। एकादेशं बाधित्वापरत्वादाङ्गत्वाच्चाऽऽडामौ स्यातामित्यर्थः। तस्माल्लुगेवेति स्थितेऽर्थग्रहणं कर्त्तव्यमेवेति भावः। नन्वर्थग्रहणं मास्तु, वचनसामर्थ्याच्च संज्ञाविधावपि तदन्तविधिर्भविष्यतीत्याशंक्याह––**वचनादिति**। यत्र दीर्घत्वं तत्रैव वचनात्स्यात्–दृतिं न शुष्कं सरसी शयानमिति यथा। अत्र हि सरश्शब्दात्परस्य सप्तम्येकवचनस्येयाडियाजीकाराणामुपसंख्यानमितीकारादेशे सप्तमी श्रूयते। तथा च सोमो गौरीत्यादौ न स्यादेवेत्यर्थः। एतद् दूषयति–**तत्रापीति**। तत्रापि सप्तम्या लुगेव न त्वीकारः, यदि सरसीशब्दोऽपि वर्त्तते। असन्दिग्धे सन्दिग्धवचनमेतच्छास्त्राणि चेत्प्रमाणं स्युरिति यथा। अस्ति हि सरसीशब्दो 'दक्षिणापथे हि महान्ति सरांसि सरस्य इत्युच्यन्ते' इति भगवदुक्तेः, 'कासारः सरसो सर' इत्यमरकोशाच्च। तथा च 'सरसीः परिशीलितुं मये'त्यादि प्रयोगोपि दृश्यते। एवञ्च सरसीशब्दोपि लुप्तविभक्तिक एवेति वचनात्तदन्तविधिरिति स्थितम्। ननूक्तरीत्याऽस्तु सरसीशब्दः, सरश्शब्दोपि सान्तो निर्विवाद एव, तथा च सान्तादेवेकारादेशोऽयमस्तु। एवं हि सति संज्ञाविधौ ज्ञापकात्त्यक्तस्य तदन्तग्रहणस्य पुनराश्रयणं न कर्त्तव्यं भवतीति चेन्न। तथा सतीकारस्य सुप्त्वेनानुदात्ततया सरःशब्दस्य च सृधातोरसुनि व्युत्पादितस्य नित्स्वरेण सरसीति पदमाद्युदात्तं प्रसज्येत। गौरादिषु 'पिप्पल्यादयश्चे'ति पाठात्पिप्पल्याद्यन्तःपातिनः सरःशब्दान्ङीषा त्वन्तोदात्तइष्यते। तथैव वेदे पाठात्। एवन्तर्हि प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं नास्तीति ज्ञापनायेदमर्थग्रहणमस्तु। एवञ्चेदूदेद्द्विवचनमिति सूत्रे ईदूदेदन्तं द्विवचनान्तमिति पक्ष, ईदूदेदन्तं यद्द्विवचनं तदन्तमिति पक्षश्च समर्थितो भवति। तत्र हि कुमार्य्योरगारं कुमार्य्यगारम्। अशुक्ले शुक्ले समपद्येतां शुक्ल्यास्तां वस्त्रे इत्यत्रातिव्याप्तिरिति दोषः। स च प्रत्ययलक्षणविरहादेवोद्धृत इत्याह–**ज्ञापकमिति**। 'प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणाऽभावस्ये'ति शेषः। क्वेदं ज्ञापकमुपयुज्यते, तदाह **तदन्तत्वइति**। तदन्तगर्भे पक्षद्वयेपीत्यर्थः। ननु संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावादेव तदन्तपक्षस्तत्र न स्थित इत्यपरितोषादाह–**मावेति**। वाप्यश्व इत्यादौ मा भूदित्यर्थः। अत्रेदमवधेयम्। 'अवितृस्तृतन्त्रिभ्य ई'रिति सूत्रादीरित्यनुवर्त्तमाने 'यापोः किद्द्वे च' 'वातप्रमी'रिति सूत्राभ्यां शब्दत्रयं व्युत्पादितम्। यान्त्यनेनेति ययीर्मुक्तिमार्गः। पिबति रसान्पाति वा लोकमिति **पपीः** सूर्य्यः। वातं प्रमिमीते सम्मुखधावनादिति **वातप्रमीः** निःशृङ्गो मृगाकृतिर्वातमृगनामा पशुविशेषः। एभ्यस्त्रिभ्योऽपि ङौ सर्णदीर्घात् पपी ययी वातप्रमीति रूपं निर्विवादम्। तथा चेह श्रूयमाणस्येकारस्य सप्तमीत्वात्तत्रापि सरसी यदीत्यसङ्गतम्। ईकारस्य श्रूयमाणस्याऽसम्भवात्। सामर्थ्यात्तदन्तविधिर्भविष्यतीत्यर्थः। तस्मादूकारांशे सामर्थ्यात्तदन्तविधौ लब्धे सोमो गौरीत्यादावपि भविष्यतीत्याशयः। ययी आसक्त इत्यादौ तु भाव्यमेव प्रकृतिभावेन। न चायं योगश्छान्दसस्तथाविधानामेवोदाहरणानां दत्तत्वादिति वाच्यं, मुनित्रयोक्तिं विनास्मदिच्छया छन्दसत्वकल्पनेऽतिप्रसङ्गात्। लोके प्रगृह्यत्वं न भवतीत्यस्मिन्नर्थे प्रमाणानुपलम्भाच्च। अप्रतिषिद्धमनुमतं भवतीतिन्यायेन लोके ययी पपी वातप्रमीत्येतेषां प्रगृह्यत्वस्यैव न्याय्यत्वाच्च। अत एव दृग्दृश्यवतुष्विति सूत्रे दृक्षे चेति वार्त्तिकमुपादाय क्सप्रत्ययः सादेशश्च छन्दस्येव भाष्ये सदृक्षास इत्युदाहृतत्वादिति केचिदिति व्याचक्षाणा हरदत्तादयश्छान्दसत्वं वदतां मते स्वस्यापरितोषमाविश्चक्रुरिति दिक्॥ [ ईदूतौ च ]॥

**दाधाघ्वदाप्**॥ दारूपा धारू[illegible] धातवो घुसंज्ञाः स्युर्दाप्दैपौ वर्जयित्वा। तत्र दारूपाश्चत्वारः, डुदाञ्, प्रणिददाति। दाण्, प्रणियच्छति। दो, प्रणिद्यति। देङ, प्रणिदयते।

धारूपौ द्वौ । डुधाञ्, प्रणिदधाति । धेट्, प्रणिधयति वत्सो मातरम् । अदाविति किम् । दाप्लवने, दातं बर्हिः । लून-मित्यर्थः । घुत्वाभावाद्दोदद्धोरिति न प्रवर्त्तते । दैप्शोधने अवदातं मुखम् । इह घुत्वाभावादच उपसर्गात्त इत्येतन्न । घुप्रदेशा नेर्गदनदेत्यादयः । इह दोदेङ्धेटामनुकरणानि न्यवस्थाप्य तत्र प्रकृतिवदनुकरणमित्यतिदेशादादेच उपदेशेऽशितीत्यात्वं क्रियते । अनैमित्तिकमात्वं शिति तु प्रतिषेध इति सिद्धान्तात् । न चैवं विभक्तेरुत्पत्तिर्न स्यादधातुरिति प्रातिपदिकसंज्ञानिषेधादिति वाच्यम् । अधातुरिति पर्युदासोऽयं न तु प्रसज्यप्रतिषेधः । अस्ति चेह स्वाश्रयमधातुत्वम् । यद्वा यत्तदेतेभ्य इत्यादाविवेहापि कार्यविशेषपुरस्कारेणैवातिदेशप्रवृत्त्यप्रवृत्ती भविष्यतः । ततश्चतुर्णां दारूपाणां द्वयोश्च धारूपयोरेकशेषं कृत्वा द्वन्द्वः कर्त्तव्यः । प्रणिदातेत्यादौ कृतात्वानां दोदेङ्धेटां तु स्थानिवद्भावात्सिद्धं घुत्वं । लक्षणप्रतिपदोक्तपरिभाषाया निरनुबन्धकग्रहणे नसानुबंधकस्येत्यस्याश्च नेह प्रवृत्तिः, सर्वेषां स्वरूपेणैवानुकृतत्वात् । अत एव दारयतिधारयत्योर्नातिप्रसङ्गः । तयोरनुकरणे आत्वाऽसंभवेनेह दृधृइत्यनयोरनुपात्तत्वात् । ननु कृतात्वस्य सूत्रे निर्देशात्प्रणिद्यति प्रणिधयतीत्यादौ चात्वविरहात्कथं धुत्वमिति चेत् । भ्रान्तोऽसि । न हि वयं कृतात्वमनुकुर्मो येनोक्तदोषः स्यात् । अपि तु देदोधेङ्त्येङ्तेष्वेवानुक्रियमाणेषु लक्षणवशनिष्पन्नमात्वमित्युक्तम् । न च लक्षणेन स्वरूपान्यत्वेऽप्यनुकरणता हीयते । सख्युरसंबुद्धावित्यत्रापि सखिरूपप्रतीतेः, गवित्ययमाहेत्यत्र गोशब्दप्रतीतेश्च । दीङ्स्तु नेह ग्रहणं, तदनुकरणे आत्वाऽसम्भवात् । वार्तिकमते एजन्तानां दोङादीनामात्वविधानात् । भाष्यमते त्वेज्निमित्ते परतस्तद्विधानात् । तेन दीङस्तृजादावात्वे कृतेपि घुसंज्ञाविरहात्प्रनिदातेत्यत्र नेर्गदेति नित्यं णत्वं न भवति, शेषे विभाषेति वैकल्पिकं तु स्यादेव । तथोपादास्ताऽस्य स्वरः शिक्षकस्येत्यत्र स्थाघ्वोरिच्चेतीत्वं न भवतीति सूत्रकारस्य मतम् । नन्वस्मिन्पक्षे दाप्दैपावनुकृतौ न वा? । आद्येऽनुकरणपर्युदासोभयसामर्थ्यात्तयोर्घुसंज्ञाविकल्पः स्यात् । अन्त्येऽदाबिति व्यर्थं स्यात् । अननुकृतत्वादेव दाप्दैपोर्घुसंज्ञाप्राप्तिविरहादिति चेन्न । अदाबित्यस्मिन्नसति तयोरप्यनुकरणं संभाव्येत । न हि लक्षणैकचक्षुषा दोदेङादीनां दाप्दैपोश्च वैलक्षण्यं किं चिदनुभूयते यद्बलाद्ग्रहणाऽग्रहणे व्यवस्थाप्येयाताम् । व्याख्यानतो विशेषप्रतिपत्तिरिति परमवशिष्यते । किं त्वगतिकगतिरेषाऽनभिधानवत् । न च तद्बलेन सिद्धस्य प्रत्याख्यानं शोभते । वार्त्तिककारमते तु प्रयोगस्थानामेव दाधारूपाणामिदमनुकरणम् । न चैवं प्रणिद्यति प्रणिदयतइत्यादौ शिति न स्यात् । आत्वाऽभावात् । तथा देङ् रक्षणे, अदित । धेट्—व्यत्यधित । प्रणिधातेत्यादावपि न स्यादात्वस्य लाक्षणिकत्वात् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणमिति न्याया-

तिदि वाच्यम् । वचनबलेनैव तत्समाधानात् । तथा च **कात्यायनवार्तिकम्**—'घुसंज्ञायां प्रकृतिग्रहणं शिदर्थ'मिति । **भारद्वाजीयास्तु** पठन्ति—शिद्विकृतार्थमिति । तथा च 'दाधाप्रकृतयो घु'इति पठित्वा दाश्च धाश्च प्रकृतयश्चेति द्वन्द्वं कृत्वा सन्निधानाद्दाधामेव प्रकृतय इति व्याख्येयम् । भाष्यकारास्तु वार्त्तिकं प्रत्याचख्युः । तथाहि नेर्गदेतिसूत्रे तावदवश्यं प्रकृतिग्रहणं कर्त्तव्यं प्रणिमयते प्रण्यमयतेत्यत्रापि णत्वं यथा स्यात् । तदेव पुरस्तादपकृष्य 'घुप्रकृतिमा'इति पठिष्यामः । घुश्च प्रकृतिश्च माश्चेति द्वन्द्वः । सन्निधानाच्च पूर्वोत्तरयोः प्रकृतिर्ग्रहीष्यते । न चैवं मीनातिमिनोत्योरपि माप्रकृतित्वाद्ग्रहणापत्तिः । माङो ङकारानुबन्धस्यैव तत्रावश्यं पठनीयत्वात् । अन्यथा मा मानइत्यत्रातिप्रसङ्गात् । तस्माद्घप्रकृतिमाङिति पाठेन प्रणिद्यति प्रणिदयतइत्यादेः सिद्धत्वाच्छिदर्थं तावद्घुसंज्ञायां प्रकृतिग्रहणं न कर्त्तव्यमिति स्थितम् । भारद्वाजीयोक्तरीत्या विकृतार्थं कर्त्तव्यमिति पुनरवशिष्यते । तदपि न । 'गामादाग्रहणेष्वविशेष'इति परिभाषयैव लाक्षणिकस्यापि दारूपस्य घुसंज्ञासिद्धेः । अस्यां च परिभाषायां दैपः पित्त्वं लिङ्गम् । तद्धयदाबिति सामान्यग्रहणार्थं क्रियते, लाक्षणिकत्वादेव घुसंज्ञायां दैप्ग्रहणाभावे तु किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन । न चैवमपि धेटो घुसंज्ञा न स्याद्देवेति वाच्यम् । दो दद्घोरित्यत्र धेटो निवृत्त्यर्थं क्रियमाणेन द इत्यनेन धेटोपि घुसंज्ञाज्ञापनात् । न च दधातिनिवृत्त्यर्थन्द इत्युक्तमिति वाच्यम् । तत्र दधातेर्हिरिति ह्यादेशविधानादेव दद्भावाऽप्रसङ्गात् । नन्वेवमपि 'गामादाग्रहणेष्वविशेष'इत्येतेन लक्षणप्रतिपदोक्तपरिभाषाया निरनुबन्धकग्रहणइतिपरिभाषायाश्च यथा बाधस्तथार्थवद्ग्रहणपरिभाषाया अपि बाधः स्यात् । तथा च प्रनिदारयति प्रनिधारयतीत्यत्राप्यतिप्रसङ्ग इति चेन्न । गदादीनां य उपसर्गस्तत्स्थान्निमित्तादुत्तरस्य तानेव गदादीन् प्रत्युपसर्गस्य नेरिति व्याख्यानात् । दारयतिधारयत्यवयवयोस्तु दाधारूपयोरनर्थकत्वान्न तं प्रत्युपसर्गत्वम् । 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा' इति वक्ष्यमाणत्वात् । न चैवं प्रणिदापयति प्रणिधापयतीत्यत्रापि णत्वं न स्यादिति वाच्यम् तत्र पुगागमात्पूर्वं दा धा इत्यवस्थायां घुसंज्ञाप्रवृत्तौ पुग्विशिष्टस्यापि घुग्रहणेन ग्रहणात् । 'अनागमकानां सागमका आदेशा'इति पक्षे तु स्थानिवद्भावेन घुसंज्ञाप्रवृत्तेः। नन्वनान्तर्यमेवैतयोरान्तर्यं सम्प्रयोगो वा । नष्टाश्वदग्धरथवदिति स्थानेन्तरतमसूत्रस्थभाष्यरीत्या दारयत्यादेरपि दापयत्यादिसाम्यमेव । निष्पन्नस्याऽणो रपरत्वाभ्युपगमेन रेफपुकोरविशेषादिति चेत्—सत्यम् । 'सिद्धन्तु प्रसक्ते रपरत्वा'दित्युरण्रपरसूत्रस्थवार्त्तिकरीत्या समाधानं कृतम् । उक्तभाष्यरीत्या तु प्रसक्तो दोषः प्रागुक्तसूत्रकारमतमाश्रित्योद्धर्त्तव्यः। न हि दृधृइत्यनयोरनुकरणे आत्वं लभ्यतइति दिक् । इदं

त्त्ववधेयम्। प्रणिदापयतीत्यत्राप्युपसर्गयोः प्रकृत्यर्थविशेषणत्वे सत्येव नेर्गदेति नित्यं णत्वं, ण्यर्थविशेषकत्वे तु घुसंज्ञकं प्रत्यनुपसर्गत्वाच्छेषे विभाषेति विकल्प एव, न तु नित्यं णत्वमिति। स्यादेतत्–उपदिदीषतइत्यत्र सनिमीमेतीस्भावः स्यात्, वार्तिककृता घुसंज्ञायां प्रकृतिग्रहणात्। सूत्रकारभाष्यकारयोस्तु नासौ दोषः। सूत्रकृता दीङोऽननुकृतत्वात्। भाष्यमते णत्वे प्रकृतिग्रहणेपि घुसंज्ञायान्तद्विरहादिति चेत्–सत्यम्। वार्त्तिकमतेपि नेयं दाप्रकृतिः। एजन्तानामात्वविधानाभ्युपगमात्। न चैवमादन्तत्वनिबन्धनयुच्प्रत्ययाद्यसिद्धिः। तत्राऽऽकारान्तलक्षणप्रत्ययविधिरिति वचनेनैव तत्सिद्धेः। भाष्ये त्वेतद्वचनप्रत्याख्यानायैज्विषये आत्वं सिद्धान्तितमित्यन्यदेतत्। इदं त्ववशिष्यते, भाष्यवार्त्तिकोभयमतेपि 'उपादास्तास्य स्वरः शिक्षकस्ये'त्यत्र स्थाघ्वोरितीत्त्वं प्राप्तं, तच्च भाष्ये सन्निपातपरिभाषया परिहृतम्। उप दी स् त इति स्थिते एज्विषये प्रवर्त्तमानमात्वं सिचोऽकित्त्वमुपजीवति। यदि चाऽत्र घुसंज्ञा स्यात्तर्हि स्थाघ्वोरिच्चेति सिचः कित्त्वं स्यादतोऽकित्त्वमुपजीव्य प्रवृत्त आकारः कित्त्वप्रवर्त्तिकां घुसंज्ञां न प्रवर्त्तयत्येवेति। वार्त्तिककृता तु 'दीङः प्रतिषेधः स्थाघ्वोरित्वे' इति वचनमेव कृतम्। उभयमतेपि दीङस्तृजादावात्वे कृते प्रणिदातेत्यादौ नेर्गदेति णत्वं भवति। अत एव वार्त्तिककृता 'दीङः प्रतिषेध' इत्येव नोक्तं किन्तु स्थाघ्वोरित्वे इति विषयविशेषो निर्दिष्टः। सूत्रमते तु न भाव्यं णत्वेनेति स्पष्टमेव। किञ्च भाष्यवार्त्तिकयोर्न केवलं सूत्रकृता सह विरोधः किन्तु परस्परेणापि। तथाहि–भाष्यमते प्रणिदीयते प्रणिदीन इत्यादावपि नित्यं णत्वं, णत्वविधौ प्रकृतिग्रहणात्। वार्त्तिकमते तु वैकल्पिकम्। एजन्तानामेव प्रकृतित्वाभ्युपगमेनेदन्तस्याऽप्रकृतित्वात्। अन्यथोपदिदीषत इत्यत्रेस्भावापत्तेः। तदेवं प्रणिदातेत्यादौ सूत्रकृता सह द्वयोर्विरोधः। 'प्रणिदीन' इत्यादौ तु भाष्यकृता सहेतरयोर्विरोधो दुष्परिहर इति। अत्रेदं वक्तव्यम्। यथोत्तरं मुनीनां प्रामाण्यमिति सिद्धान्ताद्भाष्योक्तरीत्या सर्वत्र दीङि परे नेर्नित्यं णत्वमिति स्थिते सूत्रवार्त्तिकमतेपि शेषे विभाषेति व्यवस्थितविभाषामाश्रित्य भाष्याऽविरोधः सम्पादनीयः। एकवाक्यतयैव सर्वनिर्वाहसम्भवे मतभेदकल्पनस्याऽनाश्रयणीयत्वादिति। नन्वदाविति प्रतिषेधे दाप्लवनइत्यस्यैव ग्रहणं युक्तम्, न तु दैपः। पकारे श्रूयमाणे आत्वाऽयोगादिति चेन्न। 'अनुबन्धा अनेकान्ता' इति पक्षे श्रूयमाणस्यापि पकारस्य काकादिवदनवयवत्वेन धातोरेजन्तत्वानपाये आत्वप्रवृत्तेः। 'एकान्ता अनुबन्धा' इति पक्षेपि भवत्येवात्वम्, नानुबन्धकृतमनेजन्तत्वमिति सिद्धान्तात्। अत्र चोदीचां माङो व्यतीहारइति कृतात्वस्य मेङो निर्देशो ज्ञापकः। न च माङ् मान इत्यस्यैवायं निर्देशो, व्यतिमिमीतइत्यादौ तस्यापि कदा चिद्व्यतीहारे वृत्तिसम्भवादिति वाच्यम्। अपूर्वकालार्थस्य क्त्वाप्रत्ययस्य माङ् मानइत्यस्मादनभिधानात्। अत्र च भाष्योक्तेरेव प्रमाणत्वादित्याहुः। एवं च 'मेङ' इत्येव पठनीये 'माङो व्यतीहार'इति गुरुकरणं 'नानुबन्धकृतमनेजन्तत्व'मिति ज्ञापनार्थमेव। भाष्यकारास्तु नायं दैप्, किन्तु दिवादिषु दाप्लोधनइत्येव पठिष्यतइत्याहुः। न च स्वरे भेदः। दायतीत्यादेरुभयथाऽप्याद्युदात्तत्वात्। ननु ताच्छीलिके चानशि दायमान इत्यत्र स्वरे भेदः। श्यनि धातोराद्युदात्तत्वं, शपि तु चानशोन्तोऽदात्तत्वमिति चेन्न। उभयथाप्यन्तोदात्तत्वानपायात्। न च श्यन्स्वरस्य सतिशिष्टत्वेन प्राबल्यमिति वाच्यम्। अन्यत्र 'विकरणेभ्य' इति पर्युदासात्। आत्ममाने खश्चेत्यत्रत्यभाष्यकैयटबलेन खशीव चानश्यप्यन्तोदात्तताया निर्णयात्। स्थानिवत्सूत्रीयः कैयटग्रन्थस्तु खश्सूत्रस्थभाष्यस्वोक्तिभ्यां विरोधात्प्रामादिक इति वक्ष्यते। ध्यायत्यादयस्तु दिवादिष्वेवादन्तत्वेन न पठिताः, गणकार्यमनित्यमिति ज्ञापयितुम्। तेन न 'विश्वसेदविश्वस्तं' 'पथिकवनिताः प्रत्ययोदाश्वसन्त्य' इत्यादि सिद्धम्। यत्तु भाष्ये 'एकोन्तत्वपक्षेपि न दोष' इत्युपक्रम्य 'पकारलोपे कृते भविष्यति, दाप्त्वं तु भूतपूर्वमनुबन्धमाश्रित्य व्युत्पादनीय'मिति सिद्धान्तितम्। तत्रेत्थं प्रत्यवतिष्ठन्ते—सत्यप्येजन्तत्वे उपदेशे एजन्तत्वं कथमिति ?। अत्रोच्यते–पित्करणसामर्थ्यादुपदेशे एजन्तत्वाऽभावेप्यात्वप्रवृत्तिः। वस्तुतस्तूपदेशग्रहणं भाष्यकारो न मन्यते। तथा च तत्र वक्ष्यति,–"उपदेशग्रहणं न करिष्यते। यद्युपदेशग्रहणं न क्रियते चेता स्तोतेत्यत्रापि प्राप्नोति। अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति न परनिमित्तस्यैच आत्वं भवतीति यदयं क्रीङ्जीनां णावेच आत्वं शास्ति। नैतदस्ति ज्ञापकं नियमार्थमेतत्स्यात् क्रीङ्जीनां णावेवेति। यत्तर्हि मीनातिमिनोतिदीङां ल्यपि चेत्यत्रैज्ग्रहणमनुवर्त्तयती"ति। ननु प्रणिदापयतीत्यत्राप्यदाबिति प्रतिषेधः स्यादिति चेन्न, यथोद्देश्यपक्षेन्तरङ्गत्वाद्दावस्थायामेव घुसंज्ञाया निर्वृत्तत्वात्। कार्यकालपक्षे तु घुसंज्ञाया णत्वसमानदेशतया पुकं प्रति णत्वघुसंज्ञयोरसिद्धत्वेन प्रागेव पुक् तयो घुसंज्ञा न स्यादिति दोषः प्रसज्यत्येव। अत एव भाष्ये द्वेधा समाहितं, दाधाघ्वपिदिति वक्ष्यामि। यद्वा वान्तावेतौ धातू, सूत्रमपि वान्तम्। चर्त्वेन सर्वत्र पकारो निर्दिष्टः। अतो दापयतीत्यत्र नासौ निषेधः। तस्याऽपित्त्वादवान्तत्वाच्चेति॥

**आद्यन्तवदेकस्मिन्।** असहायेपि आदाविवान्तइव कार्याणि स्युः। औपगवः। यथा तव्यादीनां प्रत्ययाद्युदात्तत्वं प्रवर्त्तते एवमिहाऽणोपि। आभ्याम्। यथा वृक्षाभ्यामित्यादौ सुपि चेति दीर्घत्वं भवति एवमिहापि। इङ् गतौ दिवादिः। एयम्। अचो यदिति अजन्ताद्धातोर्विधीयमानो यत्प्रत्ययो यथा चेयञ्जेयमित्यादौ भवति तथेहापि। इणस्तु एतिस्त्वति क्यपि–इत्यमित्येव रूपं न तु एयमिति। एकस्मिन्निति किम् ? सभासन्नये भवः साभासन्नयनः। अत्र ह्याकारस्यादित्वे

सति तमेवाश्रित्य सभासन्नयनशब्दस्य वृद्धत्वं स्यात्। ततश्चाऽणं बाधित्वा 'वृद्धाच्छ' इति छः प्रसज्येत । ननु वृद्धिर्यस्याचामादिरिति सूत्रे आदिग्रहणस्यापीदमेव व्यावर्त्यम्, तत्सामर्थ्यादेव सभासन्नयनशब्दे वृद्धसंज्ञा न भविष्यतीति चेन्न । यदि हि वृद्धसंज्ञासूत्रे आदिग्रहणसामर्थ्यादनातिदेशिकस्य मुख्यस्यैवादेर्ग्रहणं तर्हि जानातीति ज्ञा ब्राह्मणीत्यादिरसहायोपि वृद्धो न स्याद् । ततश्च ज्ञाया अयं ज्ञीय इत्यादि न सिद्ध्येत् । असति हि प्रकृतसूत्रस्थैकग्रहणे यत्रादिव्यपदेशो मुख्यो नास्ति असहाये मध्ये अन्ते च, सर्वोप्यविशेषादतिदेशस्य विषयः स्यात् । यदि त्वतिदेशसामर्थ्याज्ज्ञाशब्दे वृद्धत्वं तर्ह्यविशेषात्सभासन्नयनेऽपि स्यात् । वृद्धसंज्ञायामादिग्रहणं तर्हि व्यर्थमेवेति चेत् । हन्तैवमतिदेशस्यादिग्रहणस्य च सामर्थ्यात्सर्वत्र विकल्पापत्तिः । इहैकग्रहणे कृते त्वन्त्यमध्ययोर्व्यावृत्त्या वृद्धसंज्ञायामादिग्रहणं सार्थकमिति दिक् । यत्तु न्यासकृतोक्तम् , अतिदेशसूत्रे एकग्रहणाऽभावे वृद्धसंज्ञासूत्रस्थमादिग्रहणमनातिदेशिकप्रतिपत्त्यर्थं सदसहायानां ज्ञादीनामेव वृद्धसंज्ञां वारयेन्नतुसभासंनयनस्य, सन्नयनेत्येतदन्तर्गताश्चतुरोऽचोऽपेक्ष्यानातिदेशिकस्यादित्वस्य तत्र सत्त्वादिति । तच्चिन्त्यम् । परस्मिन्सति यस्मात्पूर्वो नास्ति स आदिरिति सिद्धान्तरीत्या मध्यस्थेप्यादित्वविरहात् । इयानेव हि विशेषः । असहाये सत्यन्तविशेषणविरहाद्विशिष्टाऽभावः, मध्यस्थे तु विशेष्याऽभावाद्विशिष्टाऽभाव इति। वार्तिककारस्तु लाघवादपूर्वत्वमात्रमादिशब्दस्य प्रवृत्तिनिमित्तमनुत्तरत्वमात्रं चान्तशब्दस्य, न तु सत्यन्यस्मिन्नित्यपि विशेषणं, गौरवात् । तथा चाऽसहायेपि मुख्ययोरेवाद्यन्तयोः सम्भव इति मन्वानः सूत्रमेतत्प्रत्याचख्यौ । आह च–'अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मि'न्निति। भाष्यकारस्तु नैतन्मेने । सत्यन्यस्मिन्निति विशेषणप्रक्षेपप्रयुक्तस्य गौरवस्य प्रामाणिकत्वात् । लोके ह्ययमादिरन्तो वेत्युक्तेऽवशिष्टमपि किंचिदस्तीति नियमेन प्रतीयन्ति । पदान्वियतोपिस्थितिश्च शक्तिसाध्या । अनुभवमपलप्यैकदेशमात्रे शक्तिकल्पनेतु श्वशुरादिपदानामपि लाघवाद्भार्यात्वमात्रं पितृत्वमात्रं तद्घटकपुंस्त्वमात्रं वा शक्यतावच्छेदकं स्यादिति विशिष्टविषयकशक्त्युच्छेदेन सकलशिष्टव्यवहारव्याकोपः स्यादिति । नन्वेवमपि व्यपदेशिवद्वचनं कर्त्तव्यमेव, इयाय आरेत्यादौ धात्ववयवत्वं प्राथम्यमेकाच्त्वं चाश्रित्य द्वित्वं यथा स्यात् । एकाच इति हि बहुव्रीहिरिति वक्ष्यते । न चेणो वृद्ध्यायादेशयोरर्तेश्च वृद्धौ रपरत्वे च कृते आय्आर् इत्यनयोरेकाच्त्वं पचादेरिव मुख्यमेवास्तीति वाच्यम् । द्विर्वचनेचीति रूपातिदेशेन इ ऋ अनयोरेव द्विरुक्तेः । किंच यजेः पञ्चमलकारे स देवान् पक्षदिषितो यजीयानित्यादौ सिब्बहुलं लेटीति सिप् । तस्य षत्वं व्यपदेशिवद्भावेनैव साध्यं, प्रत्ययस्य यः सकारस्तस्य षत्वमिति सिद्धान्तात् । तस्माद्व्यपदेशिवदेकस्मिन्नित्येव सूत्र्यतां किं प्रकृतसूत्रेण ?। व्यपदेशो नाम विशिष्टो मुख्योऽपदेशो व्यवहार एकाच्-इत्यादिः सोस्यास्तीति व्यपदेशी-पचिप्रभृतिस्तस्मिन्निवाऽसहायेपि कार्य्यं स्यादित्यर्थः । अत्राह भाष्यकारः–**अवचनाल्लोकविज्ञानात्सिद्धमिति** । वचननिरपेक्षाल्लोकव्यवहारादेव व्यपदेशिवद्भावसिद्धेराद्यन्तवदिति व्यपदेशिवदिति चोभयमपि न सूत्रयितव्यमित्यर्थः । अस्ति हि लोके निरूढोऽयं व्यवहारोऽयमेव मे ज्येष्ठः पुत्रोयमेव मध्यमोऽयमेव कनिष्ठ इति । तथा असूतायामसोष्याणायां च प्रथमगर्भेण हतेति व्यवहरन्ति । तथा पूर्वमनागतोऽग्रेऽनाजिगमिषुश्चाह 'इदं मे प्रथममागमन'मिति । ननु सर्वे इमे गौणा व्यवहारास्तत्कथं मुख्ये चारितार्थं शास्त्रं गौणे प्रवर्त्ततेति चेन्न । निरूढतरतया गौणस्याप्यस्य मुख्यसमकक्षत्वात् । ज्ञापकाच्च । यदियमिट ईटीति सिचो लोपं शास्ति तज्ज्ञापयति–'व्यपदेशिवदेकस्मि'न्निति। न ह्यन्यथेट् लभ्यते । वल्रूपत्वेपि वलादित्वविरहात् । तथा दीर्घ इणः कितीत्यादीन्यपि ज्ञापकानि । न हि व्यपदेशिवद्भावं विना इणोऽभ्यासो लभ्यतइति दिक् । यत्तूक्तं कैयटेन 'अर्थवता व्यपदेशिवद्भावात्कुरुतइत्यादौ तशब्दाकारस्यानर्थकत्वेन तत्र टिसंज्ञासिद्धये आदिवद्भावो वचनेनैव साधनीय'इति । अत्रेदं वक्तव्यम् , अर्थवता व्यपदेशिवद्भाव इति तावन्नेयं परिभाषा, तस्या विध्यङ्गत्वात् । व्यपदेशिवद्भावस्तु लौकिक इत्युक्ततया तं प्रत्यङ्गत्वाऽयोगात् । किन्तु शास्त्रे व्यपदेशिवद्भावयोजनाय शब्दार्थसमुदायमाश्रित्य तस्यैकदेशः शब्द इति व्युत्पादयितुमर्थवत्ताऽपेक्षितेति परं तस्याशयः । अत एव षष्ठे 'निजौ चत्वार एकाच' इत्येतेषु व्युत्पादनावसरे भाष्यकैयटयोरनर्थकेनापि व्यपदेशिवद्भावः स्वीकृतो, लोक इव शास्त्रेऽप्यनर्थकस्य व्यपदेशिवद्भावसम्भवात् । तस्मादर्थवतेति प्रायोवादमात्रं, सूत्रप्रत्याख्यानं तु सम्यगेवेति दिक् ॥

**तरसमपौ घः** ॥ एतौ घसंज्ञौ स्तः । कुमारितरा । कुमारितमा । घरूपेति ह्रस्वः । नद्यास्तरो नदीतर इत्यत्र तु न भवति । तमपा साहचर्येण प्रत्ययस्यैव तरपो ग्रहणात् । यद्वा तरबिति रूपं संज्ञाप्रवृत्तावाश्रितं, तच्च परिनिष्ठिते प्रयोगे क्वापि नास्तीत्यौपदेशिकं गृह्यते । तच्च तरप्प्रत्ययस्यैवास्ति । अपि च प्रतिपदोक्तत्वमपीह सुलभम् । तेनावयवशो व्युत्पादिते नदीतरे नातिप्रसङ्गः । किंच समानाधिकरणे स्त्रीलिङ्गे परे ह्रस्वत्वं विधीयते । अन्यथा महिषीव रूपं महिषीरूपमित्यत्रापि स्यात् । सुप्सुपेति समासः । रूपमाकृतिः, महिषीवेयमाकृतिरित्यर्थः । सामानाधिकरण्यस्त्रीत्वे च स्वार्थिकत्वादातिशायनिकस्य स्तो न तु नदीतरे, अतो नोक्तदोषः । नन्वातिशायनिकप्रकरण एव'वा दीर्घ इति''पितौ घ' इति वा क्रियतां लाघवादिति चेन्न । प्रकरणोत्कर्षेणेह संज्ञाप्रकरणस्याऽन्योपि तरबस्तीति ज्ञापनार्थत्वात् । स चाऽनिर्दिष्टार्थत्वात्स्वार्थे भवति । तेनाल्पाच्तरं लोपश्च बलत्तर

इत्यादि सिद्धम् । केचित्तु सामान्यापेक्षं ज्ञापकमाश्रित्य ईयसुनोपि स्वार्थिकतामाहुः । तेनाऽद्यो महीयरतव साहसिक्यमित्यादि प्रयोगाः समर्थिता भवन्ति ॥ [ **तरप्तमपौ** ]

**बहुगणवतुडति संख्या** ॥ एते संख्यासंज्ञाः स्युः । बहुकृत्वः । संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । बहुधा । संख्याया विधार्थे धा । बहुभिः क्रीतो बहुकः । संख्याया अतिशदन्तायाः कन् । बहुशः । 'बह्वल्पार्थाच्छस्कारका'दित्यनुवर्त्तमाने 'संख्यैकवचनाच्च वीप्साया'मिति शस् । गणकृत्वः गणधा गणकः गणशः । तावत्कृत्वः तावद्धा तावत्कः तावच्छः । यत्तदेतेभ्यः परिमाणे वतुप् । आ सर्वनाम्नः । शेषं प्राग्वत् । कतिकृत्वः कतिकः कतिधा कतिशः । किमः संख्यापरिमाणे डति च । शेषं प्राग्वत् । स्यादेतत् । वैपुल्येपि बहुशब्दो वर्त्तते । बहुर्हिमवानिति, सङ्घे च गणशब्दः, भिक्षुकाणां गण इति । 'समवायश्चयो गण' इत्यमरः । तथा च सङ्घवैपुल्यवाचिनोरप्यनयोः संख्यासंज्ञा स्यादिति चेन्न । संख्यायतेऽनयेत्यन्वर्थसंज्ञाविज्ञानात् । तस्मात्संख्यावाचिनोरेव बहुगणशब्दयोरिह ग्रहणं, तच्च नियमार्थम्–'अनियतबहुत्ववाचिनां मध्येऽनयोरेव संख्यासंज्ञा न तु भूर्यादीना'मिति । तेन बहुविषययोर्द्व्येकयोर्नियतबहुत्ववाचिनां त्र्यादीनां च न व्यावृत्तिः । ननु नियमार्थत्वे सिद्धे सजातीयापेक्षत्वान्नियमस्य त्वदुक्तव्यवस्था सिद्ध्येत्, नियमार्थत्वमेव तु दुरुपपादम् । विध्यर्थताया एवौचित्यात् । तथाहि–अस्ति तावत्कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसम्प्रत्यय इति परिभाषा । सा च न्यायमूला । संज्ञासूत्रेण संज्ञिविशेषे नियम्यमानो हि संज्ञाशब्दः कथं तदितरं बोधयेत् । एवं स्थिते बहुगणयोरिह ग्रहणाऽभावे संख्याप्रदेशेषु ग्रहणमेव न स्यात् । अकृत्रिमत्वात् । तस्मात्स्वसङ्ग्रहार्थमेव बहुगणग्रहणं, न तु भूर्यादिनिवृत्त्यर्थमिति । अत्राहुः–संज्ञिविशेषे क्रियमाणः संज्ञानियमो यदि सामान्यापेक्षस्तदा युक्ताऽकृत्रिमस्य व्यावृत्तिः । विशेषपरत्वे तु सजातीयं कृत्रिमान्तरमेव नियमेन व्यावर्त्येत न त्वकृत्रिममपि । तदेतदुच्यते–'उभयगतिरिह शास्त्रे भवती'ति । कृत्रिमाऽकृत्रिमयोरुभयोरपि ग्रहणमित्यर्थः । अस्ति च संख्याप्रदेशेषूभयग्रहणे लिङ्गं संख्याया अतिशदन्तायाः कन्निति सूत्रे शदन्तपर्युदासः । न हि कृत्रिमा संख्या शदन्तास्तीति दिक् । तेन पञ्चधा पञ्चकृत्व इत्यादि सिद्धं भवति । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति तथापि वतुडत्योः केवलयोः संज्ञायाः प्रयोजनाऽभावात्सामर्थ्यादन्तग्रहणम् । तद्धितविधौ हि ङ्याप्प्रातिपदिकादित्यधिकृतं, न च केवलस्य प्रत्ययस्य प्रातिपदिकत्वमस्तीति बोध्यम् । एतच्च सूत्रं भाष्ये प्रत्याख्यातम् । बहुपूगगणसङ्घस्य तिथुक् । वतोरिथुक् । षट्कतिकतिपयचतुरां थुगिति सूत्रैर्डति परे आगमा विधीयमाना बहुप्रभृतीनां डटोनिर्वाहकं संख्यात्वं ज्ञापयन्तीति किमनेन सूत्रेण ? । ननु बहुपूगगणसङ्घेत्यादौ विशेषाश्रयणात्सङ्घवैपुल्यवाचिनोरपि बहुगणशब्दयोः संख्याकार्यं स्यादिति चेन्न । अनियतसंख्यावाचिनोरप्येतयोः संख्याकार्यं भवतीत्येतावन्मात्रज्ञापनेन चरितार्थत्वे सति सर्वथा संख्यामप्रतिपादयतोरपि संख्याकार्यकल्पनस्य गौरवपराहतत्वात् । भूर्यादीनां त्वनियतसंख्यावाचिनां ग्रहणं न भवति, नियतसंख्यावाचिनां पञ्चादीनामेव लोके संख्याशब्दत्वेन प्रसिद्धतरत्वात् । प्रसिद्धाऽप्रसिद्धयोः प्रसिद्धग्रहणस्य न्याय्यत्वात् । नन्वेवमपि बहुगणयोरिव पूगसंघादीनामपि धाशस्कृत्वसुजादिसंख्याकार्यप्रसङ्गः । न च बहुगणयोः सामान्यापेक्षं ज्ञापकं, पूगादीनां तु डड्विषयकमेवेति वाच्यम् । अनुपपत्तेः । 'समानत्वेन एकसूत्रोपात्तत्वेन च वैषम्ये बीजाऽभावादिति चेत् । मैवम् । लक्ष्यानुरोधेन क्वचित्सामान्यापेक्षं क्वचिद्विशेषापेक्षं ज्ञापकमित्याश्रयणात्तदनुरोधेन वैरूप्यस्य सोढव्यत्वादिति दिक् । इमां कुसृष्टिमसहमानेनैव सूत्रकृता सूत्रमिदं प्रणीतमिति तु परमार्थः । अत्रवार्तिकानि–**अध्यर्द्धग्रहणं च समासकन्विध्यर्थम्** । अर्द्धेनाधिकमध्यर्धम् । एकदेशवाचकोऽयमर्द्धशब्दः । तस्याधिशब्देन समासे कृते यौगिकार्थः प्रतीयते न संख्येतिवार्त्तिकारम्भः । अध्यर्द्धेन शूर्पेण क्रीतमध्यर्द्धशूर्पं । दिक्संख्येइत्यनुवर्त्तमाने तद्धितार्थेति समासः । ततः शूर्पादञन्यतरस्यामित्यञष्ठञो वा अध्यर्द्धपूर्वेति लुक् । अध्यर्द्धेन क्रीतमध्यर्द्धकम् । संख्याया अतिशदन्तायाः कनिति कन् । इह समासकन्विध्यर्थमिति सम्बन्धसामान्ये षष्ठी । समासे विधीयमाने समासनिमित्ते वाऽन्यस्मिन्कार्ये विधीयमान इत्यर्थः । तेन द्विगुनिमित्तो लुगपि लभ्यते । तथाचाऽध्यर्द्धपूर्वेति, सूत्रेऽध्यर्द्धग्रहणं न कर्त्तव्यं भवति । तदुक्तं–**लुकि चाग्रहण**मिति । अध्यर्द्धपूर्वपदश्च पूरणप्रत्ययान्तः । संख्येत्यनुवर्त्तते । पूरणप्रत्ययान्त इत्यस्य पूरणप्रत्ययान्तोत्तरपद तत्यर्थः । समासकन्विध्यर्थमित्येव । अर्द्धं पञ्चमं येषामिति बहुव्रीहिः । अर्द्धपञ्चमैरर्द्धाधिकैश्चतुर्भिः शूर्पैः क्रीतमर्द्धपञ्चमशूर्पं । पूर्ववदञष्ठञो वा लुक् । अर्द्धपञ्चमेन क्रीतमर्द्धपञ्चमकम् । **अधिकग्रहणं चालुकि समासोत्तरपदवृद्ध्यर्थम्** । अधिकया षष्ट्या क्रीतोधिकषाष्टिकः । अधिकसाप्ततिकः । तद्धितार्थेति समासः । प्राग्वतेष्ठञ् । अलुकीति वचनाल्लुकि कर्त्तव्ये संख्यासंज्ञा नास्तीति द्विगुत्वमपि न, तेनाध्यर्द्धपूर्वद्विगोरिति लुङ् न । ततः 'संख्यायाः संवत्सरसंख्यस्य चे'त्युत्तरपदवृद्धिः । नन्वलुकीतिव्यर्थम् । 'उत्तरपदवृद्ध्यर्थ'मिति वचनादेव लुगभावस्याऽऽक्षेप्तुं शक्यत्वादिति चेन्न । अर्हत्यर्थात्परेष्वर्थेषु ये प्रत्ययास्तेषां लुगप्राप्त्या तत्रैवोत्तरपदवृद्धेः सावकाशत्वात् ॥

**ष्णान्ता षट्** । षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । षट् तिष्ठन्ति । षट् पश्य, पञ्च सप्तेत्यादि । संख्येति किम् । विप्रुषः पामानः । ननु शतानि सहस्राणीत्यत्र नुपि

कृते तस्य पूर्वभक्ततया नान्ता संख्येति षट्संज्ञा स्यादिति चेत्। अस्तु। न चैवं षड्भ्यो लुगिति लुक् स्यादिति वाच्यम्। सर्वानमस्थानसन्निपातेन कृतस्य नुमः तदविघातकत्वात्। नन्वेवमप्यष्टानामिति न सिद्धति। तथाहि अष्टन् आमिति स्थिते परत्वान्नित्यत्वाच्चाष्टन आ विभक्तावित्यात्वेकृतेऽनान्तत्वात्संज्ञायामसत्यां षट्चतुर्भ्यश्चेति नुण्न प्राप्नोतीति चेन्न। यथोद्देशपक्षे आत्वात्प्रागेव षट्संज्ञा, अन्तरङ्गत्वात्। ततः कृतेप्यात्वे एकदेशविकृतस्यानन्यतया षट्संज्ञकत्वेन नुटः सिद्धत्वात। कार्यकालपक्षे तदुक्तदोषस्तदवस्थ एव। किञ्च यथोद्देशेऽप्यल्विधित्वादतिदेशो दुर्लभः। अत एव वन्नश्चेत्यचः परस्मिन्नित्यस्य फलमिति कैयट इति चेन्न। अष्टनो दीर्घा'दिति दीर्घग्रहणेन कृतात्वस्यापि षट्संज्ञाज्ञापनात्। तथाहि–त्रः संख्याया इत्याद्युदात्तत्वं बाधित्वा घृतादिपाठादन्तोदात्तोऽष्टन्शब्दः साधितः। तस्माद्भिरष्टभिरष्टाभिरिति रूपद्वयमुदाहृतम्। तत्राऽऽत्वाऽभावे मध्योदात्तमात्वपक्षे त्वन्तोदात्तमिति सिद्धान्तः। तत्र षट्त्रिचतुर्भ्यो हलादिरिति सूत्रेण षण्णां षड्भिरित्यादाविव विभक्तेरुदात्तत्वं प्राप्तं, तद्बाधित्वा झल्युपोत्तममिति प्राप्तं। षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवतीति हि तस्यार्थः। तद्बाधनायाष्टनो दीर्घादित्यारभ्यते। दीर्घान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवतीति सूत्रार्थः। तत्र यद्यात्वपक्षे षट्संज्ञा न स्यात्तर्हि सावकाशोऽष्टनः स्वरः परत्वादात्वाऽभावपक्षे झल्युपोत्तममिति षट्स्वरेण बाधिष्यत इति किं दीर्घग्रहणेन?। कृतात्वस्यापि षट्संज्ञायां सत्यां तु षट्स्वरस्याष्टनः स्वरोपवादः संपद्यते। न चाष्टनः स्वरः शसि सावकाश इति वाच्यम्। तत्रैकादेश उदात्तेनोदात्त इति सूत्रेणैव गतार्थत्वात्। अष्टन्शब्दोन्तोदात्त इति समनन्तरमेवोक्तत्वात्। तेन दीर्घपक्ष इव तदभावपक्षेपि विभक्तेरुदात्तता स्यादिति तद्व्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं सार्थकमेव। तस्माद्दीर्घग्रहणेनात्वपक्षेपि षट्संज्ञा ज्ञाप्यतइति स्थितम्। न चैवं दीर्घग्रहणस्यात्वविकल्पज्ञापकत्वं न स्यादिति वाच्यम्। उभयज्ञापकत्वसम्भवात्। न ह्येकेनैकमेव ज्ञाप्यत इति नियमः। यावता विनानुपपत्तिस्तावतो ज्ञाप्यत्वात्। तच्चैकमनेकं वेत्यन्यदेतत्। प्रकृते चोभयं विना दीर्घग्रहणवैयर्थ्यानुद्धारादिति दिक्। यदि तु ष्णाः षकारनकाराकारा अन्ते यस्याः सा ष्णान्तेति प्रकृतसूत्रएवनकारोपि प्रश्लिष्येत तदा द्वाभ्यामित्यत्र षट्त्रिचतुर्भ्यो हलादिरिति विभक्तेरुदात्तत्वं स्यात्। 'आद्वाभ्यां हरिभ्यामिन्द्रयाहि'त्यादावाद्युदात्तमेव तु द्वाभ्यामितिपदं पठ्यते तस्मादिहाकारप्रश्लेषो न वर्णनीयः, किन्तूक्तप्रकार एवादर्त्तव्य इति स्थितम्। तथा सप्तमे योगविभागं कृत्वा तद्बलेनापि द्वेधा भाष्ये समाहितम्। तथाहि–षड्भ्यो लुगित्यत्र षड्भ्य इति विभज्यते। अष्टाभ्य औशिति सूत्रादष्टाभ्य इत्यनुवर्तते। तेन षड्भ्यो यदुक्तं कृताकारादष्टनोपि तत्स्यादिति सूत्रार्थः। न चैवं जश्शसोर्लुगप्यतिदिश्येतेति वाच्यम्। औश्त्वविधिवैयर्थ्यापत्तेः। अथ वाऽष्टन आ विभक्तावित्यस्मादनन्तरं 'राय' इति योगं विभज्य हलीत्युभयोर्योगयोः शेषो व्याख्येयः। तेनाष्टानामित्यत्र नुटः पश्चादेवात्वं न तु ततः प्राक्। न चैवं जश्शसोरात्वं न स्यादिति वाच्यम्। लाघवार्थमष्टभ्य इति निर्देष्टव्येऽष्टाभ्य औशिति कृतात्वनिर्देशेन जश्शसोर्विषये आत्वानुमानात्। यत्रात्वं तत्रैवौश्त्वं यथा स्यादित्येतदर्थं हि तत्र दीर्घोच्चारणं कृतमिति। स्यादेतत्–हलीति यद्युभयोः शेषस्तर्हि प्रियाष्टन्शब्दे औजसमौट्शस्टाङेङसिङसोसाम्ङ्योरसु वैकल्पिकतयेष्यमाणमात्वं न सिद्ध्येत्। न च तत्रात्वं नेष्यतएवेति वाच्यम्। इतः प्राचीनपक्षाणामतिव्याप्तिप्रसङ्गात्। तेषु ह्यात्वं प्राप्यतएव, विभक्तिमात्रे तद्विधानात्। न च षड्भ्यो लुक् षट्चतुर्भ्यश्चेति सूत्राभ्यां विधीयमानौ लुग्नुटौ यथा गौणतायां न स्तस्तथात्वमपि न स्यादेवेति वाच्यम्। वैषम्यात्। लुग्नुटोर्विधौ हि षड्भ्य इति षट्चतुर्भ्य इति बहुवचननिर्देशात् षडर्थप्राधान्यएव तौ प्रवर्त्तेते। आत्वविधौ त्वष्टन इत्येकवचननिर्देशाद्गौणेपि प्रियाष्टाभ्यामित्यादावात्वं प्रवर्त्ततएव। 'पदाङ्गाधिकारे तस्य तदुत्तरपदस्य चे'ति वक्ष्यमाणत्वात्। न च जश्शसोरष्टाभ्य औशिति कृतात्वनिर्देशेनानुमीयमानमात्वं केवले प्राधान्ये चाष्टौ परमाष्टावित्यत्र यथा भवत्येवं गौणत्वेपि भविष्यतीति तदंशे नानुपपत्तिरिति वाच्यम्। औश्त्वं हि लुग्नुटाविव गौणत्वे न भवति। अष्टाभ्य इति बहुवचननिर्देशात्। अन्यथा हि कृतात्वानुकरणेप्येकवचनेनैव निर्दिशेत्–अष्टा औशिति अष्ट इति वा। स्पष्टं चैतदिहैव सूत्रे भाष्यकैयटयोः। तथा चौश्त्वविधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वमपि प्रधान्य एवस्यान्नतु गौणातायामिवि तदंशेप्यनुपपत्तिसाम्यात्। तस्मात्–**हलीत्युभयशेषश्चेन्न स्यादात्वं प्रियाष्टनः। टाङेङसिङसोसाम्सु तथैवौजसमौट्छसि। प्रागुक्तेषु तु पक्षेषु भवेदात्वममीष्वपि। फलभेदे महत्येवं कथं पक्षविकल्पनम्**। अत्रोच्यते–प्रियाष्टन्शब्दस्याजादावात्वनिष्टमेव। हलीत्युभयोः शेषस्य भाष्यएव सिद्धान्तितत्वात्। तथा सत्यौजसोः क्रमेण प्रियाष्टानौ प्रियाष्टान इत्येव रूपं स्यान्न तु प्रियाष्टौ प्रियाष्टा इत्यपीत्याशंक्य यथालक्षणमप्रयुक्ते इत्यभिहितत्वाच्च। अत एव यथालक्षणमिति प्रतीकसुपादाय न भवत्येवात्रात्वमित्यर्थ इति कैयटो व्याख्यत्। एवं स्थिते प्राचीनाः पक्षा अपरितोषग्रस्ता एव, व्यवस्थितविभाषया गौणतायामजादिष्वात्वं न भवतीत्याशयेन वा योज्याः। उदाहृतभाष्यकैयटप्रामाण्यात्। तस्मात्प्रियाष्टनः सर्वेषु वचनेषु राजन्शब्दसाधारणं रूपं, हलादौ तु हाहाशब्दसाधारणमपरं रूपम्। औश्नुटोस्तु प्राप्तिरेव नास्तीति प्रामाणिकः पन्थाः। अत एव 'सर्वा-

दीनि सर्वनामानी'ति सूत्रे हरदत्तेन गौणत्व औङन भवतीति स्पष्टमेवाभिहितम्। अत एवाष्टाभ्य औशिति सूत्रे तदन्तग्रहणमत्रेष्यते। परमाष्टावित्युक्त्वा प्रियाष्टान इत्यत्रात्वस्याऽभावादौङन भवतीति **काशिका** संगच्छते। अत एव चाष्टन आ विभक्ताविति सूत्रे तदन्तविधिश्चात्रेष्यते। प्रिया अष्टौ यस्य प्रियाष्टावित्यपि यथा स्यादिति **काशिका**ग्रन्थोऽपि सङ्गच्छते। हलादावात्वस्य निर्बाधत्वात्। **हरदत्तस्त्वष्टाभ्य** औशिति सूत्रे प्रियाष्टान इत्यत्रेति **वृत्ति**ग्रन्थमुपादाय यथा पुनर्गौणतायामात्वं न भवति तथा तद्धिधावेव वक्ष्यतइति प्रतिज्ञायाष्टन आ विभक्ताविति सूत्रे एकवचननिर्देशात्स्वरूपस्य ग्रहणं नार्थस्य, तेनोपसर्जनेप्यष्टनि भवति, तत्रापि विकल्पितत्वात् प्रियाष्टा प्रियाष्टानौ प्रियाष्टान इत्यपि भवति। तत्राप्यात्वपक्षे भसंज्ञाविषये आतो लोपमिच्छन्ति प्रियाष्टः पश्येत्यदि। आत्वाभावपक्षेप्यल्लोपे ष्टुत्वं प्रियाष्ट्ण इति भवतीत्यन्तेन ग्रन्थेन पूर्वप्रतिज्ञातार्थविपरीतं भाष्यवृत्त्यादिविरुद्धं च कथमभिहितवानिति तस्याशयं स एव प्रष्टव्यः। अल्लोपे ष्टुत्वमित्यपि तदुक्तिश्चिन्त्यैव। पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावेन ष्टुत्वाऽयोगात्। न च पूर्वत्रासिद्धीये न स्थानिवदिति निषेधः। तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति सापवादत्वात्। 'ननु रषाभ्यां नो ण' इति प्रतिपदोक्तं णत्वं तत्र गृह्यते न तु ष्टुत्वविधिलभ्यमपि विलंबितप्रतीतिकत्वादिति चेन्न। 'अपदान्तस्य मूर्द्धन्य' इति सूत्रं संपूर्णं 'रषाभ्या'मिति सूत्रेऽनुवर्त्य तत्रत्यस्य णग्रहणस्य पदान्तस्येतिनिषेधसूत्रस्य च भाष्ये प्रत्याख्यातत्वात्। यथोत्तरं मुनीनां प्रमाण्यात्। न च मूर्धन्यशब्देन ष्टुशब्देन वा निर्वर्त्यमाने णकारे वैषम्यमस्ति, सूत्रकाररीत्या कथंचित्संभवन्नपि न्यायोऽत्र भाष्यानुरोधात्त्याज्य एव। तथा च 'शर्पूर्वाः खय' इति सूत्रे 'खर्पूर्वग्रहणं कर्त्तव्य'मिति वार्त्तिकं प्रत्याचक्षाणो भगवानाह–'अभ्यासजश्त्वचर्त्वं सिद्धमित्येव परवतुग्ग्रहणं न कर्त्तव्य'मिति। तथा च हलादिः शेषे कर्त्तव्ये तुकश्चुत्वेन निष्पन्नस्य चकारस्यापि चर्त्वेन सिद्धतयोच्चिच्छिषतीति रूपं सिद्धमिति तदाशयः कैयटेन वर्णितः। तदेवं प्रियाष्ट्ण इत्यादेव रूपमुचितम्। न चैवं पूष्णइत्यादावपि नकार एव पठ्येतेति वाच्यम्। तत्राट्कुप्वाङिति सूत्रेण णत्वप्रवृत्तेरिति दिक्॥

**डति च**। डत्यन्ता संख्या षट्संज्ञा स्यात्। कति सन्ति। कत्यद्राक्षीः। षट्त्वाज्जश्शसोर्लुक्। संख्येति किम्। पातेर्डतिः पतयः। न चास्य संख्यासंज्ञापि स्यादिति वाच्यम्, वतुसाहचर्येण तत्र तद्धितस्यैव ग्रहणात्। इदं सूत्रं प्रत्याख्यातं भाष्ये। बहुगणवतुसंख्या। डति। संख्येत्यनुवर्त्तते। ततः 'ष्णान्ता षट्'। संख्या डतीत्युभयमप्यनुवर्त्तते। पूर्वसूत्रेप्यन्वर्थसंज्ञाविज्ञानात् संख्याप्रश्नविषयस्यैव डतेर्ग्रहणं न त्वौणादिकस्येति॥ [ **डति च** ]॥

**क्तक्तवतू निष्ठा**॥ एतौ निष्ठासंज्ञौ स्तः। कृतः। कृतवान्। ननु विहितयोः प्रत्यययोरनेन संज्ञा, संज्ञया च विधानम्। वक्ष्यति हि तृतीये–निष्ठेति। तथा चान्योन्याश्रय इति चेन्न। सूत्रशाटकवद्भाविसंज्ञाविज्ञानात्। तौ भूते काले भवतो ययोर्विहितयोर्निष्ठेत्येषा संज्ञा भविष्यतीति। स्यादेतत्। अनुबन्धाः कार्यार्थमुपादीयन्ते न तु श्रवणार्थं, तेषां लोपविधानात्। तथा च लुप्तानुबन्धस्य परिनिष्ठितस्य यत्र सारूप्यं तत्र क्तानुबन्धकार्यं भवतु क्त वा नेति तु निश्चेतुमशक्यम्। न च काकादिवदुपलक्षणस्यापि व्यावर्त्तकता भविष्यतीति वाच्यम्। काकादिनापि हि वेदिकापुण्डरीकादिकं स्थिरं किञ्चित्परिचाय्यते, तद्बलाच्चोड्डीनेपि काके व्यवहारो न सङ्कीर्य्यते। न चेह परिचेयान्तरमुपलभ्यते। क्तप्रत्ययतन्प्रत्यययोः काकादिकल्पौ हि ककारनकारौ, तदपगमे संवृत्ते'त' इत्यत्र परिचेयस्य परस्परव्यावृत्तस्य दुर्वचत्वादिति। अत्राहुः। कालकारकविशेषादयो अर्था एवात्र वेदिकापुण्डरीकादिस्थानापन्नास्तद्दर्शनाच्चानुबन्धस्मृतौ सत्यां तत्तत्प्रयुक्तं कार्य्यं साधुतया ज्ञायते। तथा लूनः शालिरिति केन चित्प्रयुक्ते लक्षणज्ञेन कर्मभूतकालबलात्क्तप्रत्ययोऽयमिति निर्णीयते। लोतमालभेतेति प्रयुक्ते तु मेषवाची लोतशब्दस्तन्प्रत्ययान्तः प्रयुक्त इति निर्णीयते। हसिमृग्रिण्वामिमिदमिलूपूधूर्विभ्यस्तन्नित्युणादिसूत्रात्। 'लोतः स्यादश्वमेषयो'रिति तु पश्चपादीवृत्तौ स्थितम्। तथा 'प्राभित्त घटं देवदत्त' इति प्रयोगे कर्त्रैकत्वावगमाल्लुङन्तस्यायं प्रयोगो न तु निष्ठान्तस्येति निर्णीयते। स्यादेतत्। अञ्जिघृसिभ्यः क्त इति क्तप्रत्यये अक्तं घृतं सितमिति व्युत्पादितम्। तत्रापि निष्ठा संज्ञा स्यात्। ततश्च 'निष्ठा च द्व्यजना'दिति स्वरः स्यात्। निष्ठान्तं द्व्यच्कं संज्ञायामाद्युदात्तं स्यात्स चेदादिराकारो नेति सूत्रार्थः। न चेष्टापत्तिः। घृतं मिमिक्षइत्यादावन्तोदात्तस्यैव पठ्यमानत्वादिति। अत्राहुः। अतः कृकमीतिसूत्रे कृमिग्रहणेनैव सिद्धे कंसग्रहणेन ज्ञापितमुणादयः क्व चिद्व्युत्पत्तिकार्यं न लभन्तइति। अतो नात्र निष्ठा संज्ञेति। यद्वा घृतादीनां चेति फिट्सूत्रेण सिद्धम्॥ इति **श्रीशब्दकौस्तुभे** प्रथमस्याध्यायस्य **प्रथम पादे पञ्चमाह्निकम्**॥

---

**सर्वादीनि सर्वनामानि**। एतानि सर्वनामसंज्ञानि स्युः। तद्गुणसंविज्ञानोऽयं बहुव्रीहिः। तस्यान्यपदार्थस्य गुणानां वर्त्तिपदार्थरूपाणां विशेषणानां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञानः। तत्र सर्व आदिर्येषां तानीति विग्रहः। तच्छब्दप्रयोगेणान्यपदार्थप्राधान्यं लभ्यते। एवं चित्रा गावो यस्य स इत्यादावपि। अन्यथा हि यस्य गावश्चित्रा इति गोशब्दार्थप्राधान्यं स्यात्। न चैवंविधेर्थे बहुव्रीहिरिष्यते। यत्तु वृत्तिवाक्ययोर्विशेष्यैक्यसम्पत्तये चित्राणां गवामयमित्यादि विग्रहवर्णनं **मीमांसावार्त्तिके** कृतम्। तत्तु

न मुनिवचसामनुकूलम् । 'अप्रथमाविभक्त्यर्थेबहुव्रीहि'रिति वार्त्तिककृता वक्ष्यमाणत्वात् । भाष्यकृता च शेषो बहुव्रीहिरिति सूत्रे त्रिकतः शेषमाश्रित्य सूत्राक्षरैरेवोक्तस्यार्थस्य साधितत्वात् । द्वितीया श्रितातीतादिभिस्तृतीया तत्कृतार्थेनेत्यादि क्रमेण हि षण्णां त्रिकाणां समास उक्तस्तदपेक्षया शेषः प्रथमारूपः त्रिकस्तस्यैव बहुव्रीहिसंज्ञेति वृष्टे देवे गत इत्यादेरिव चित्राणां गवामित्यस्यापि दूरापास्तं बहुव्रीहित्वम् । किञ्च 'मत्वर्थे बहुव्रीहि'रिति कात्यायनवचनात्कथं चित्राणां गवामित्यत्र तत्प्रसक्तिः । ननु दण्डीत्यादावपि दण्डस्यायमिति विग्रहाभ्युपगमादस्मद्रीत्याऽयमेव मत्वर्थ इति चेत्तर्हि सुतरां मुनिवचनविरोधः । तदस्यास्त्यस्मिन्निति सूत्रेण प्रथमान्तादस्त्युपाधिकात्संबन्धिनि मतुब्विधानात् । समार्थानां प्रथमाद्वेति सूत्रेण प्रथमानिर्दिष्टस्यैव प्रकृतित्वावधारणाच्च । नन्वेतान्यपि सूत्रवार्त्तिकभाष्यवचांसि कथंचिद्भंक्त्वा नेष्याम इति चेत् । समर्थः पदविधिरित्यादीनि व्रीहिभिर्यजेतेत्यादिषु पदविधिभिन्नेष्वपि योजयित्वा सामर्थ्यं च भाष्यादिसम्मताद्विपरीतमेव वर्णयन् भवादृशो निरंकुशः किंकिं न कुर्यात् । किन्तु व्याकरणाधिकरणे सिद्धान्तितं व्याकरणप्रामाण्यं कथं स्वेच्छया व्याकुलयसीति पारम्पर्य्यानुयोगे समाधानं विभावय । तस्माच्चित्रा गावो यस्येत्येव विग्रहः सकलशिष्टसम्प्रदायसिद्धो मुनित्रयवचसामनुकूलश्चेति दिक् । आदिशब्दस्यावयववाचित्वादुद्भूतावयवभेदःसमुदायः समासार्थस्तस्य च समुदायस्य युगपल्लक्ष्ये प्रयोगाभावादानर्थक्यात्तदङ्गेष्विति न्यायेन तदवयवेषु प्रवर्त्तमाना सर्वनामसंज्ञाऽविशेषात्सर्वशब्देपि प्रवर्त्तत इति युक्तं तद्गुणसंविज्ञानत्वम् । हलि सर्वेषामित्यादिनिर्देशाश्चेह लिङ्गम् । जक्षित्यादयः षडिति सूत्रे तु 'ज'क्षिति योगं विभज्य जक्षेः संज्ञाविधानसामर्थ्यादेव 'इत्यादय' इत्यतद्गुणसंविज्ञानो बहुव्रीहिः। **एतेन** कतन्तेभ्यः कण्वादिभ्य इत्युभयत्रापि शकलशब्दसंग्रहार्थं यथा तत्पुरुषबहुव्रीह्योरेकशेष इति चतुर्थे वक्ष्यते तथेहापि 'नपुंसकमनपुंसके ने'ति वा, 'स्वरभिन्नानां यस्योत्तरः स्वरविधिः स शिष्यत'इति वा तत्पुरुषबहुव्रीह्योः सह विवक्षायां बहुव्रीहेः शेष इति **परास्तम्** । तद्गुणसंविज्ञानबहुव्रीहिणैव सर्वशब्दस्यापि संग्रहे सिद्धे एकशेषाश्रयणस्य गौरवपराहतत्वात् । महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं- 'सर्वेषां नोमानी'ति । तत्सामर्थ्याच्च सर्वार्थाभिधानसामर्थ्यविशिष्टानामेव संज्ञित्वमनुमीयते । तथा च तथाभूतानां गणे पाठस्यावश्यकतया प्रकारांतरजुषां च पाठे प्रमाणाऽभावादेव विशेषेऽवस्थितानां संज्ञानामुपसर्जनानां च सर्वादित्वमेव नास्ति । तेन तेषां गणकार्यं संज्ञाप्रयुक्तकार्य्यं चेत्युभयमपि न भवति । **गणकार्यं**–यथा त्यदादीनामः । तत् नाम कश्चित् । अतिक्रान्तस्तमतितत् । तथाऽड्डु तरादिभ्यः । अन्यमतिक्रान्तमत्यन्यम् । अतिकतरम् । **संज्ञाप्रयुक्तं** यथा– सर्वनाम्नः स्मैः । अतिसर्वाय । तदेतदभिप्रेत्योक्तं वार्तिककृता;–**संज्ञोपसर्जनप्रतिषेधः पाठात्पर्युदासः पठितानां संज्ञाकरणमिति** । तस्मात्प्रसिद्धेन प्रवृत्तिनिमित्तेन प्रयुक्तमितरं प्रत्यनुपसर्जनीभूत एवेह संज्ञीति स्थितम् । यत्तु स्वरूपमात्राश्रयं कार्य्यं न तु गणपाठं संज्ञांवाऽपेक्षते । यथा युष्मदस्मद्भ्यां ङसोऽशित्यादि, तदुपसर्जनत्वेपि भवत्येवेत्यवधेयम् । न चैवं युष्मद्युपपदइत्यादावपि त्वमादिप्रसङ्गः । लोकप्रसिद्धार्थपरतायामेव तत्प्रवृत्तेः । 'अभिव्यक्तपदार्था य'इति न्यायात् । तदन्तग्रहणमत्र बोद्धव्यम् । द्वन्द्वे चेति ज्ञापकात् । तच्च तत्रैव वक्ष्यते । 'प्रयोजनं सर्वनामाव्ययसंज्ञाया'मिति वार्तिकवचनाच्च । तेन परमसर्वतः परमसर्वत्र परमसर्वके'इत्यत्र समस्तात्तसिल्त्रलकच्च सिद्ध्यति । न च तसिलादिविधौ प्रातिपदिकादित्यनुवृत्तेः सर्वनाम्ना च तद्विशेषणे तदन्तविधिर्भविष्यतीति वाच्यं, 'समासप्रत्ययविधौ न तदन्तविधि'रिति निषेधात् । न चैवमतिसर्वायेत्यादावतिप्रसङ्गः । उपसर्जनपर्युदासस्योक्तत्वात् । अत एव 'परमसर्वस्मा'इत्यादौ स्मायादयो भवन्त्येव ।

**स्यादेतत्**–'असः' 'अतस्मिन्' 'अनेष' इत्यादावप्यत्वसत्वस्मिन्नादीनि न स्युः । 'अतिसर्व'इत्यत्रेवोपसर्जनत्वात् । तथा चाऽब्राह्मण इत्यादेर्ब्राह्मणभिन्न इत्यादिक्रमेण पूर्वपदार्थप्राधान्येन विवरणं कुर्वन्ति । सत्यम् । वैयाकरणमते नञ्समासस्योत्तरपदार्थप्राधान्यमेव । नञ्सूत्रे भाष्यकारेण तथैव सिद्धान्तितत्वात् । तथाहि–आरोपितत्वं नञर्थः । तथा च,मायामनुष्यमायामृगव्याजनिशाकरकपटब्राह्मणादिशब्देभ्य इव आरोपितो मिथ्याभूतोऽयं ब्राह्मण इत्येव शाब्दबोधपर्यवसाने ब्राह्मणभिन्न इत्यादिकमार्थिकार्थविवरणं न तु शाब्दोऽयमर्थः । अत एव 'एतत्तदो'रिति सूत्रेऽनञ्समासइति सार्थकम् । अत एव चौत्सर्गिकी तत्पुरुषस्योत्तरपदार्थप्रधानतापि निर्वहतीति दिक् । ननु यदीह तदन्तविधिरिष्टस्तर्हि भाष्यविरोधः । तत्र हि 'संज्ञोपसर्जनप्रतिषेध' इति वार्त्तिकस्य प्रत्याख्यानमुपक्रम्याऽर्थद्वारकं विभक्तिविशेषणमाश्रित्यातिप्रसङ्ग उद्धृतः–सर्वनामार्थसमवेतसंख्याकारकाद्यभिधायिनो ङेः स्मै स्यादित्यादिनोक्तरीत्या । तदन्तविधौ सति त्वतिसर्वायेत्यादौ समुदायस्य सर्वनामतयाऽर्थद्वारकविभक्तियोगाश्रयणेपि स्मायादिप्रसङ्गस्तदवस्थ एव स्यादिति चेत् । सत्यम् । अत एवाऽपरितोषाद्भाष्ये–**अथवा महतीयं संज्ञा क्रियत** इति पक्षान्तरमुपन्यस्तमिति गृहाण । ननु यदीयमन्वर्थसंज्ञा तर्हि 'पूर्वपदात्संज्ञायामग' इति णत्वं स्यादिति चेत् । सत्यम् । अत एव निपातनाण्णत्वाऽभावः । सणत्वं तु रूपमसाध्वेव । निपातनेन णत्वशास्त्रस्य बाधितत्वात् । अत एव 'शाश्वत्क' इत्याद्यप्यसाध्वेव । 'येषां च विरोधः शाश्वतिक' इति निपातनेनेसुसुक्तान्तादित्यस्य बाधितत्वात् । नन्वेवमपरस्पराः क्रियासातत्य इति निपातनेन

सन्ततशब्दो बाध्येतेति चेन्न। तत्र सातत्यइत्यनेनैकदेशानुमतिद्वारा 'लुम्पेदवश्यमः कृत्य' इति पूर्वाचार्य्यपठितस्य श्लोकस्यैव ज्ञापनात्। नन्वेमपि पुराणप्रोक्तेषु ब्राह्मणकल्पेष्विति पुराणेशब्देन पुरातनशब्दस्य बाधः प्राप्नोति। सत्यम्। पृषोदरादिषु 'पुरातन' शब्दस्य पाठो बोद्धव्यः। आगमशास्त्रस्याऽव्ययटिलोपस्य चाऽनित्यतामात्रं पुराणेति निर्देशेन ज्ञाप्यतइति तु तत्त्वम्। तदेवं 'बाधकान्येव निपातनानी'ति भाष्ये स्थितम्। **यद्वा**–नेदं संज्ञासूत्रम्। किन्तु गणशुद्धिमात्रफलकम्। यानि सर्वनामानि तान्येव सर्वादीनि न त्वितराण्यपीति व्याख्यानात्। यथा 'तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययो'रिति सूत्रे 'कुत्सनाभीक्ष्ण्ययो'रिति योगं विभज्य गोत्रादीनीत्यनुवर्त्यैतयोरर्थयोर्यानि वर्त्तन्ते तान्येव गोत्रादीनीति गणशुद्धिपरतया व्याख्यास्यते। तेन 'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः' 'कुत्सने च सुप्यगोत्रादा'विति सूत्रयोरपि विशिष्टार्थानामेव गोत्रादीनां ग्रहणं तथेहापि। ननूक्तरीत्या 'त्यदादीनाम' इत्याद्यन्तर्गणकार्यं सिद्ध्यतु, 'सर्वनाम्नः स्मै' इत्यादिकं तु कृत्स्नसकलादिशब्देष्वतिव्याप्तं स्यादिति चेन्न। गणपाठसामर्थ्यात्तत्र पठितानामेव ग्रहणात्। एतावानेव हि भेदः–यत्पूर्वोक्ते पक्षे संज्ञाविधे या, गणशुद्धिस्त्वार्थिकी, अस्मिंस्तु पक्षे गणशुद्धिः शाब्दी, कृत्स्नातिव्यावृत्तिस्त्वर्थादिति। अथवोभयमनेन क्रियते पाठशुद्धिः संज्ञा च, तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणात्। तत्र सहविवक्षां विनाऽपि वाचनिक एकशेषः। आकृतिपक्षे हि प्रत्याख्यातं सरूपसूत्रमिको गुणवृद्धी इत्यादिवच्छास्त्रप्रक्रियार्थं तत्सहविवक्षां विनाप्येकशेषं विधत्ते। तदित्थं पञ्चापि पक्षाः स्थिताः। संज्ञाभूतानां व्यावृत्तिस्तु गौणमुख्यन्यायेनापि सिद्ध्यति। न चासौ पदकार्येष्वेवेति वाच्यं, विशिष्टरूपोपादाने सर्वत्र तत्प्रवृत्तेरित्युपपादितमोत्सूत्रे। वार्त्तिकरीत्यात्वेकसंज्ञाधिकारे सर्वनामसंज्ञानन्तरमेकद्रव्यनिवेशिनी संज्ञेति संज्ञासंज्ञया सर्वनामसंज्ञा बाध्यतइत्यपि समाधानान्तरं बोद्धव्यम्। **यद्वा**–पूर्वपरावरेति गणसूत्रेऽसंज्ञायामिति योगं विभज्य पूर्वोत्तरयोः शेषो व्याख्येयः। 'उक्ता सर्वादयो वक्ष्यमाणा स्वादयश्चाऽसंज्ञाया'मिति। तस्मादुपसर्जनव्यावृत्तिरेवाऽन्वर्थसञ्ज्ञाश्रयणस्य मुख्यं फलम्। नन्वनुपसर्जनादिति योगं प्रकारान्तरेण व्याख्याय तद्बलेनैवान्तर्गणकार्यं वारितं भाष्ये। तद्यथा–'अनुपसर्जने'ति लुप्तषष्ठीकं पदम्। अः आदिति च च्छेदः। अश्च अच्च तयोः समाहारः आत्। 'अकारात्परौ अ अत् इत्यादेशौ यत्र क्रियेते तत्रानुपसर्जनस्य ग्रहण'मिति परिभाषार्थः। तेन त्यदाद्यत्वमद्ड्डुतरादिभ्य इत्यद्ड्भावश्च गौणतायां न भवति। अकारात्परत्वेन विशेषणत्वं किम्?। पञ्चम्या अत्। युष्मानतिक्रान्तेभ्योऽतियुष्मत्। एकवचनस्य च युष्मानतिक्रान्तानतियुष्मत्। न ह्ययमकारात्परो विधीयत इति। तथा चोपसर्जनव्यावृत्तेरप्यन्यथासिद्धौ किं महासंज्ञयेति चेन्न। 'अतिसर्वाये'त्यादिवारणस्य तदेकसाध्यत्वात्। न हीदमनुपसर्जनादित्यनेन साधयितुं शक्यते। एतदपरितोषादेव हि भाष्ये पक्षान्तराश्रयणमिति दिक्। एवं चानुपसर्जनादिति सूत्रं परिभाषात्वेनाऽपि नोपयुज्यतइत्यर्थात्प्रत्याख्यानमेव भवतीत्यवधेयम्। **स्यादेतत्**–कौम्भकारेयसिद्धये सूत्रमारम्भणीयम्। तत्र हि 'कुम्भकारी'शब्दादेव ढगुत्पादयितव्यः। अन्यथा कुम्भेत्युकारस्य वृद्धिर्न स्यात्। तथा च विशिष्टस्य स्त्रीप्रत्ययान्तताप्येष्टव्या, सा च तदैव निर्वहति यदि टिड्ढाणञिति सूत्रे प्रत्ययग्रहणपरिभाषयाऽणित्यनेनाऽणन्तग्रहणे तेन च प्रातिपदिकविशेषणादण्णन्तान्तं प्रकृतिः स्यात्। तच्च 'समासप्रत्ययविधौ प्रतिषेध' इति 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्ने'ति च प्रतिषेधाद्दुर्लभम्। अनुपसर्जनादित्युपसर्जननिषेधसामर्थ्यात्तु प्रधानेन तदन्तविधौ ज्ञापिते कौम्भकारेयः सिद्ध्यतीति स्पष्टमेव। न च 'कृद्ग्रहणे गतिकारकपूर्वस्यापी'ति परिभाषया कुम्भकारशब्दादेव स्त्रीप्रत्ययोस्त्विति वाच्यम्। अणिति हि तद्धितोपि गृह्यते। 'औपगवी'ति यथा। 'कृद्ग्रहण'इति परिभाषा तु कृन्मात्रग्रहणे प्रवर्त्तते न तु कृदकृद्ग्रहणेऽपि। एवमर्थमेवेदं सूत्रमिति भाष्यकृतैव **चतुर्थे** स्थापयिष्यते। तत्कथमिहोक्तमनुपसर्जनादित्ययं योगः प्रत्याख्यातइति। अत्रोच्यते—चतुर्थे सूत्रकाराभिप्रायवर्णनमात्रं करिष्यते। निष्कर्षे तु क्रियमाणे सूत्रवैयर्थ्यमेवायातीत्याशयेनेह भगवतोक्तं **प्रत्याख्यायत**इति। तथाहि–कारशब्दान्ङीबुत्पत्तावपि कौम्भकारेयः सिध्यत्येव, 'ष्यङः सम्प्रसारण'मित्यत्र भाष्यकृता पठिष्यमाणया वाचनिक्या 'स्त्रीप्रत्यये चानुपसर्जनेने'ति परिभाषयाऽनुपसर्जने स्त्रीप्रत्यत्यये तदादिनियमनिषेधेन कुम्भकारीशब्दाड्ढगनुत्पत्तेः। अत एव हि 'परमकारीषगन्धीपुत्र' इत्यत्र ष्यङन्तस्योच्यमानं सम्प्रसारणं परमकारीषगन्ध्याशब्दस्यापि भवत्येव। न चैवमतिकारीषगन्ध्यापुत्र इत्यादावतिप्रसङ्गः। अनु पसर्जनइत्युक्तत्वेनोपसर्जने तदादिनियमसत्त्वात्। न चैवमर्धपिप्पलीत्यादौ हल्ङ्याब्भ्यादिलोपो न स्यादिति वाच्यम्। हल्ङ्यादिसूत्रे दीर्घग्रहणसामर्थ्येन तत्रोपसर्जनेनापि तदादिनियमो नास्तीति ज्ञापितत्वात्। वस्तुतस्तु निष्कौशाम्ब्यादौ समुदायस्याऽङ्याबन्तत्वेप्यवयवस्य ङ्यावन्ततया ततः परस्य सोर्लोपप्राप्तेर्नैतज्ज्ञापकम्। अर्द्धपिप्पल्यादावप्यवयवस्य ङ्यन्ततयैव निर्वाहः। न च विहितविशेषणता वक्तुं शक्या। या सेत्यादावव्याप्तेः। न च तत्र हलन्ताद्विहितत्वेन निर्वाहः। कर्त्ता हर्त्तेत्यादावलोपापत्तेः। यः स इत्यादौ लोपापत्तेश्च। **यद्वा**–सुतिसीतिप्रत्ययैः प्रकृतिराक्षिप्यते। हलन्त्यसूत्रे कैयटग्रन्थनिर्वाहाय **विवरणे** तथैव वर्णनात्। एवं च ज्ञापकं सुस्थम्, एकदेशस्याऽप्रकृतित्वात्। अत एव पञ्चमसमाप्तौ, 'गोस्त्रियोरुपसर्जनस्ये'ति सूत्रे च कैयटेन ज्ञापकत्वपक्ष एवोक्तः। ननूभयथापि

माला दृष्टेत्यादौ समुदायादाबन्तत्वप्रयुक्तः सुः स्यात्ततश्चैकपद्यैकस्वर्ययोरापत्तिः । एकवाक्यतया विधिरिति पक्षेपि पचतिकल्पमित्यादिसिद्धये एकवचनमुत्सर्गं इत्यस्यावश्याश्रयणीयत्वादिति चेन्न । ङ्याब्ग्रहणस्यान्यार्थतया यथा कथंचित्प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणेन ङ्याबन्तत्वात्सुबुत्पत्तेश्च वक्ष्यमाणत्वात् । इह च समुदायस्याप्रातिपदिकत्वात् । अर्थवत्समुदायानां समासग्रहणं नियमार्थमिति हि स्थास्यति । न चैवमपि कदा चित्कारीशब्दाङ्ङ्क स्यादेवेति वाच्यम् । एकाज्द्विर्वचनन्यायेन समुदायादेवोत्पत्तेः । कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्येन योग इति वक्तुमशक्यत्वाच्च । किञ्च सूत्रमारभमाणस्याप्येषैव गतिः । औपगवीत्यादाविव केवलात्कारशब्दादपि कदाचिन्ङीप्प्रसंगेन काम्भकारेये पाक्षिकदोषस्य त्वन्मतेपि तुल्यत्वात् । **स्यादेतत्**–अक्रियमाणेस्मिन्सूत्रे कुम्भकारीत्यत्र ङीबेव न स्यात् । कुम्भेनैकार्थीभूतस्याणन्तस्य स्त्रीऽत्वेनायोगात् । यस्य च स्त्रीत्वेन योगो विशिष्टस्य, न तदणन्तम् । तस्मादमहत्पूर्वादिति निषेधेन ज्ञाप्यमानस्तदन्तविधिरुत्तरत्राप्यभ्युपगन्तव्यः। स च यथा पूर्वत्रोपसर्जनेनापि भवति 'न षट्स्वस्रादिभ्यः' प्रियपञ्चा द्रौपदी,'वनोरच', अतिधीवरीति, तथा टिदादावपि स्यात् । ततश्च बहुकुरुचरेत्यादावतिप्रसङ्गः । अतो निषेधसूत्रमिदं सार्थकम् । ननु पूर्वत्रोपात्तं तदन्तं च स्त्रियामित्यनेन विशेष्यते, टिड्ढाणञित्यादौ तूपात्तं टिदादिकमेव, तेन बहुकुरुचरेत्यादौ टिदादेरस्त्रीत्वान्न ङीप् । कुम्भकारीत्यादौ त्वणन्तस्य स्त्रियां वृत्तेस्तदन्तादपि ङीप् भविष्यतीति चेन्न । एतद्विषयविभागस्य दुरूहतया तज्ज्ञानार्थमेव सूत्रारम्भस्योचितत्वात् । नैतदेवम् । आरब्धेप्यस्मिन्सूत्रे व्याख्यानस्यैव शरणीयत्वात् । अन्यथा पञ्चाजीत्यत्राऽजानामस्त्रीत्वेपि तदन्तस्य स्त्रियां वृत्त्या टाप्प्रसङ्गात् । अतो विशेषणविशेष्यभावं प्रति कामचारादजाद्यतष्टाबित्यत्र ढिड्ढाणञित्यादौ चोपात्तं स्त्रीत्वेन विशेष्यते, वनोरचेत्यादौ तूपात्तं तदन्ते चेति, सकलेष्टसिद्धेः सूत्रं व्यर्थमेव । **स्यादेतत्**–तदन्तविधिज्ञापनार्थमेवेदंसूत्रमारम्भणीयम् । न चाऽमहत्पूर्वेत्यनेनैव तत्सिद्धिरिति वाच्यम् । तस्य ज्ञापकत्वाऽयोगात् । पञ्चाजीत्यादिसिद्ध्यर्थमजादिभिः स्त्रीत्वं विशेष्यतइति हि वक्ष्यते । तथा च 'महाशूद्री'त्यत्र समुदायस्य स्त्रियां वृत्तावप्यवयवस्याऽतथात्वेन सत्यपि तदन्तविधौ टाप् न प्राप्नोतीति कथं तदन्तविधिं ज्ञापयित्वा निषेधः पर्यवस्येत् । मैवम् । इतरैरजादिभिः स्त्रीत्वविशेषणेपि शूद्रशब्देनाऽविशेषणात् । एवं च स्पष्टमेव ज्ञापकपर्यवसानम् । न चैवं पञ्चशूद्रीत्यत्रापि प्रसङ्गः । **'जाति'**रित्यनेन शूद्रस्य विशेषणात् । **स्यादेतत्**–'पूर्वसूत्रनिर्देशो वापिऽऽशलमधीत' इतीति कात्यायनोक्तरीत्या सूत्रं सार्थकम् । तथाहि–अप्रधानमुपसर्जनम् । तथैव पूर्वाचार्यसूत्रेषु लोके च व्यवहारात् । ततश्चापिशलिना प्रोक्तम् । इञश्चेत्यण् । ततोध्येत्र्यां तदधीतइत्यण् । तस्यप्रोक्ताल्लुगिति लुक्आपिशला ब्राह्मणी । अत्र प्रोक्तार्थस्याणोऽप्रधानत्वात्तदन्तान्न ङीप् । अण् यः अः अनुपसर्जनमप्रधानमिति विशेषणात् । न चैवमप्यध्येत्र्यामुत्पन्नस्याणोनुपसर्जनतया तदाश्रयो ङीप् स्यादेवेति वाच्यम् । तस्य लुप्तत्वात् । न च प्रत्ययलक्षणं शक्यम् । वर्णाश्रये तन्निषेधात् । टिड्ढाणञित्यत्र ह्यत इत्यनुवर्तते । अणा च अकारो विशेष्यते । 'अण्यो ऽकार' इति, न तु विपरीतो विशेषणविशेष्यभावः । वर्णस्याऽप्राधान्ये प्रत्ययलक्षणापत्तेः, अतृणेडित्यत्र तृणह इम्वत् । ननु स्त्रियामित्यनेनाऽणो विशेषणान्नोक्तदोष इति चेन्न । काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी । तामधीते काशकृत्स्ना ब्राह्मणी । अत्र द्वितीयेऽणि प्रोक्ताल्लुगिति लुप्ते प्रथमोऽप्यण् स्त्रियामेवोत्पन्न इति तदन्ताद्ब्राह्मण्यां वर्त्तमानान् ङीप् स्यात् । तस्मात्प्रधानाद्यथा स्यादप्रधानान्मा भूदित्येतदर्थमारम्भणीयं सूत्रमिति । **अत्रोच्यते** अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम् । यश्चेहाध्येत्र्यामणुत्पन्नः स लुप्त एव । यश्च श्रूयते तस्मादीकार उत्पन्नो लुप्तश्चेति पुनर्न भवति सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात् । तस्मादनुपसर्जनादित्ययं योगः प्रत्याख्यात इति भगवदुक्तिर्निर्बाधैवेति दिक् ।

सर्वादयश्च पञ्चत्रिंशत् । सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । 'स्वमज्ञातिधनाख्यायाम्' । 'अन्तरं बहिर्योगोपसंव्यानयोः'। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् इति। तत्र **सर्वविश्व**शब्दौ कृत्स्नपर्यायौ । सर्वशब्दस्य 'स्वाङ्गशिटा' मित्याद्युदात्तत्वे प्राप्तेऽन्तोदात्तत्वं गणे निपात्यतेतेन सर्वेषां विकारः सार्व इत्यत्रानुदात्तादेरञ् सिद्धः । स ह्यनुदात्तादिप्रकृतिकाद्विधीयतइति ङ्याप्सूत्रे भाष्ये स्थितं,प्रयोगे तु'सर्वस्य सुपी'त्याद्युदात्त एव । **उभ**शब्दो द्वित्वविशिष्टस्य वाचकः । अत एव नित्यं द्विवचनान्तः । यद्येवं तर्हि।किमर्थमसौ सर्वादिषु पठ्यते ; न ह्यत्र स्मायादयः सम्भवन्ति । काऽकचोस्तु नास्ति रूपे स्वरे वा विशेषः । अवग्रहस्तु कप्रत्ययेपि **पदकारै**र्न क्रियते; 'चित्र इद्राजा राजका इदन्यके' इत्यादौ तथैव निर्णीत्वात् । न चोभाभ्यां हेतुभ्यामुभयोर्हेत्वोरित्यत्र सर्वनाम्नस्तृतीया चेति पाक्षिकतृतीयासिद्ध्यर्थमिह पाठ इति वाच्यम् । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'मिति वार्तिकेन गतार्थत्वात् । न च वृत्तिकृता 'सर्वनाम्नस्तृतीया चे'ति सूत्रे पठितत्वादिदं वार्त्तिकमपि सर्वनामसंज्ञासापेक्षमेवेति वाच्यम् । भाष्ये हेताविति सूत्रे तस्य पठितत्वात् । अत एवाऽन्नेन कारणेन वसत्यन्नस्य कारणस्येत्युदाहृतं हरदत्तेन । अत्रोच्यते–उभशब्दस्तावद्द्विवचनमात्रविषयः । वृत्तौ तु द्विवचनलोपान्नासौ प्रयुज्यते । 'उभाभ्यां पक्षाभ्यां विनीतनिद्रा'इति विग्रहे 'उभयपक्षे'त्यादिप्रयोगदर्शनात् ।

कथं तर्हि उभस्थाने उभयशब्दसिद्धिरिति चेत्। इत्थम्–**'उभादुदात्तो नित्यमित्यत्रोभादिति योगो विभज्यते।** 'अवयववृत्तेः संख्यावाचिन उभशब्दादवयविन्यर्थे अयच्स्यात्। उभयो मणिः। ततो **'नित्यम्'**। उभशब्दाद् वृत्तिविषये नित्यमयच्स्यात्। अनिर्दिष्टार्थत्वात्स्वार्थे। तदेतदुक्तं वार्त्तिककृता–**उभयोन्यत्रेति**। एवं स्थिते उभयत उभयत्रेत्यादाविव कप्रत्ययेप्युभय एव प्राप्तः। अकचि तूभकावित्यादि सिद्ध्यति। न चेहाप्युभयइति स्यादेवेति वाच्यम्, अकजर्थं सर्वादिषु पाठेनायचो बाधात्, अन्यथा पाठवैयर्थ्यापत्तेरिति दिक्। 'स्वाङ्गशिटामदन्ताना'मित्याद्युदात्तार्थं पाठ इति तु न युक्तम्। गण एवान्तोदात्तस्य निपात्यमानत्वात्। अन्यथो'भे भद्रे जोषयेते', 'उभा उ नूनम्'। 'उभाभ्यां देव सवितः' 'सपत्यत उभयोर्नृम्णमयो'रित्यादावाद्युदात्तप्रसङ्गात्। उभयशब्दस्त्ववयवद्वयारब्धेऽवयविनि वर्त्तते–'उभयो मणि'रिति यथा। श्यामलोहिताभ्यामवयवाभ्यामारब्ध इत्यर्थः। तिरोहितावयवभेदत्वादेकवचनम्। 'उभयमेव वदन्ति मनीषिण' इत्यादौ तु समुदायद्वयघटितः समुदायोऽर्थः। तिरोहितावयवभेदत्वं तु तुल्यमेव। यदा तु वर्गद्वयारब्धे महासमुदाये वर्त्तते तदा वर्ग्यभिन्नेन वर्गद्वयेन महाभेदविवक्षयोद्भूतावयवभेदत्वाद्बहुवचनान्त एव, उभये देवमनुष्याः। 'तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपा' इति यथा। यदा तु प्रागुक्तरीत्योभयो मणिरिति व्युत्पाद्य तादृशमेव मणिद्वयं सह विवक्ष्यते तदैकशेषेण द्विवचनं प्राप्नोति। अनभिधानात्तु न भवति। तथा च 'तद्धितश्चासर्वविभक्ति'रिति सूत्रे 'कृत्तद्धितानां ग्रहणं च पाठ'इति भाष्यमवतारयन्**कैयट** आह–उभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वमिति। **हरदत्तस्तु** तस्मिन्नेव सूत्रे उभयशब्दाद् द्विवचनमंगीकृत्य पाठाश्रयणं तु पचतिकल्पं पचतिरूपमित्यादावतिप्रसङ्गं वारयितुमित्याह। इहाऽयजादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया प्रथमचरमेति सूत्रेण जसि विभाषा प्राप्नोति, व्यवस्थितविभाषया पूर्वविप्रतिषेधेन वा नित्यमेव जसि सर्वनामतेति के चित्। विभक्तिनिरपेक्षत्वेनान्तरङ्गया नित्यसंज्ञया बहिरङ्गा वैकल्पिकी बाध्यत इति तु सिद्धान्तः। 'न वेति विभाषे'ति सूत्रे भाष्यकारस्त्वाह–अयच्प्रत्ययान्तरमेव, न त्वसौ तयस्यादेश, उभादुदात्त इति सूत्रे तयपोऽननुवृत्तेः। न चैवमुभयीत्यत्र टिड्ढाणञिति सूत्रेण तयबन्तत्वप्रयुक्तो ङीब् न स्यादिति वाच्यं, तत्र मात्रजिति मात्रशब्दात्प्रभृत्ययचश्चकारेण प्रत्याहारग्रहणात्। एवं च तयब्ग्रहणमपि न तत्र कार्यम्। यद्वा 'द्वयस'जिति प्रत्याहारः। तथा च दघ्नञ्मात्रचोरपि ग्रहणं न कर्त्तव्यमिति महदेव लाघवम्। **वस्तुतस्तु** 'प्रमाणे मात्रच्द्वयसज्दघ्नच' इति पाठ्यमिति भाष्याशयः। तथा च ततोऽपि लाघवम्। न चैवं कति स्त्रिय इत्यत्राऽतिप्रसङ्गः। अत इत्यनुवृत्तेः, 'न षट्स्वस्रादिभ्य' इति निषेधाद्वा। न चैवं तैलमात्रेत्यादावतिप्रसङ्गः। सदृशस्याप्यस्य प्रत्याहारेऽसन्निविष्टत्वादिति। अत्र **कश्चित्**–उभयेत्यर्थपरो निर्देशः। तेन 'व्यर्था द्वयेषामपि मेदिनीभृता'मिति **माघ**प्रयोगः समर्थितो भवतीत्याह। तन्न। अर्थपरतायां वृत्तिकाराद्यभियुक्तवचनानुपलम्भात्। महाकविप्रयोगबलादेव कल्प्यत इति चेन्न। महाकविभिरेव तद्विपरीतस्य बहुशः प्रयोगात्। तथा च **माघः**–'गुरुद्वयाय गुरुणो'रिति। **कालिदासोपि**–'अस्मिन् द्वये रूपविधानयत्ने' इति। **श्रीहर्षश्च**–'अये ममोदासितमेव जिह्वया द्वयेऽपि तस्मिन्ननतिप्रयोजने'इति। तस्माद् द्वयं द्वैधमिष्यन्ति गच्छन्तीति द्वयेषस्तेषां द्वयेषामितीषेः क्विबन्तस्य रूपं बोध्यम्। यत्तु **कश्चिदाह**–"चान्द्रवर्मणव्याकरणे द्वयशब्दस्यापि सर्वनामताभ्युपगमात्तद्रीत्यायं प्रयोग" इति। तदपि न। मुनित्रयमतेनेदानीं साध्वसाधुविभागस्तस्यैवेदानीन्तनशिष्टैर्नैदाङ्गतया परिगृहीतत्वात्। दृश्यन्ते हि नियतकालाः स्मृतयः। यथा 'कलौ पाराशरस्मृति'रित्यादीति शताच्च ठन्यतावशतइति सूत्रे सर्वैकवाक्यतया सिद्धान्तितत्वात्।

**डतरडतमौ** प्रत्ययौ। यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं, नास्ति तथापीह 'प्रयोजनं सर्वनामव्ययसंज्ञाया'मिति वाचनिकस्तदन्तविधिः, केवलयोः संज्ञायाः प्रयोजनाऽभावाद्वा। **अन्यो**–भिन्नः। अन्यतराऽन्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्त्तेते इति **पस्पशायां कैयटः**। तत्राऽन्यतमशब्दस्य गणे पाठाभावान्न सर्वनामकार्यं, नाप्यद्ड्डुतरादिभ्य इत्याद्यन्तर्गणकार्य्यम्। तथा च प्रयुज्यते-'न तावत्सामान्यादिष्वन्यतमं तम' इति। **शाकटायन**स्त्वन्यतराऽन्यतमशब्दौ डतरडतमान्तौव्युत्पादितवान्। तन्मतेऽप्यन्यतरशब्दपाठस्य नियमार्थत्वादन्यतमशब्दोन्तर्गणकार्यं सर्वनामसंज्ञाकार्यं च न लभतइति तद्व्याख्यातारः। 'इतरस्त्वन्यनीचयो'रित्यमरः। **'त्व'** 'त्व' इति द्वावप्यदन्तावन्यपर्यायौ, तत्रैक उदात्तः परोऽनुदात्तः। 'एवं त्वं नन्ये दश पुत्रमुत्स'मित्युदात्तस्य प्रयोगः। 'उत त्वः पश्य'न्नित्यादिरनुदात्तस्येति विवेकः। **केचित्तु** त्वदिति तान्तमेकं पठन्ति। तथा च **जयदेवः** प्रायुङ्क्त–'त्वदधरमधुरमधूनि पिबन्त'मिति। त्वत्तोऽन्यस्या अधर इति षष्ठीतत्पुरुषो न तु तवाधरस्त्वदधर इति। 'पश्यति दिशिदिशि रहसि भवन्त'मिति पूर्ववाक्येन सहाऽनन्वयापत्तेः। अनुदात्तश्चायं, 'त्वत्वसमसिमेत्यनुच्चानो'ति फिट्सूत्रात्। तथा च प्रयुज्यते–स्तरीरुत्वद्भवति सूत उत्वदिति। त्वदिति सर्वनामसु पठितोऽनुदात्तोयमन्यपर्याय इति तद्व्याख्यायां **वेदभाष्यकाराः**। इह प्रागुक्तरीत्योदात्तानुदात्तयोरकारान्तयोरनुदात्तस्य तकारान्तस्य च प्रामाणिकत्वं निर्विवादमेव। गणपाठे परं विप्रतिपत्तिः। तत्राप्यनुदात्तस्याकारान्तस्य गणपाठे न संशयः। 'उतो त्वस्मै तन्व'मित्यादि-

प्रयोगात् । अवशिष्टयोर्मध्ये कतरस्य गणे पाठ इति तु संशयः, उदाहृतप्रयोगाणां तत्रौदासीन्यात् । तस्मात्तान्तस्याकजादिकमुदात्तस्य वा स्मायादिकं कचिच्छाखायां प्रयुज्यते नवेति विभाव्य तत्त्वं निर्णेयं बहुश्रुतैरिति दिक् ।

**वस्तुतस्त्वाद्यस्य** तान्तच्छेद एव युक्तः । अन्यथा 'ऐक्ष्वाक'शब्द इव स्वरसर्वनाम्ना एकश्रुत्योभयसङ्ग्रहसम्भवात्त्वशब्दमेकमेवाऽपठिष्यदिति ध्येयम् । 'त्वे वसूनि' 'त्वे राय' इत्यादयस्तु शेप्रत्ययान्तस्य युष्मदः प्रयोगो न तु त्वशब्दस्य । **पदकारैः** प्रगृह्यत्वप्रयुक्तस्येतिशब्दस्य प्रयोगादिति स्थितं **वेदभाष्ये**। **'नेम'** इत्यर्द्धे। प्रयोगश्च—'प्रनेमस्मिन्ददृशे सोम' इति । **समः** सर्वपर्यायः । 'नभन्तामन्यके समे' । 'मानो वृकाय वृक्ये समस्मै' । 'उरुष्याणो अघायतः समस्मात्' । 'उतो **समस्मिन्**' । तुल्यपर्यायस्य तु समशब्दस्य न सर्वनामता । 'यथासङ्ख्यमनुदेशः समाना'मिति ज्ञापकात् । **कृन्मेजन्त** इति सूत्रे—'एते दोषाः समा भूयांसो वे'ति **भाष्यकार**प्रयोगाच्च । एतेन 'समे यजेते'ति प्रयोगो व्याख्यातः । 'सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयो'रिति निघण्टुः । 'आद्रात्री वासस्तनुते सिमस्मै' । 'उच्छुक्रमत्कमजते सिमस्मात्' । यद्यपीह 'त्वत्त्वसमसिमेत्यनुच्चानी'ति प्राप्तं, तथापि सिमस्याथर्वणेऽन्त उदात्त इत्युदात्तता । अथर्ववेदप्रविष्टे मन्त्रे ऋग्वेदादिगतेपीत्यभियुक्तैर्व्याख्यातत्वादित्यवधेयम् । **पूर्वपरावरोत्तरापराः** पञ्च दिक्काल्योस्तदवच्छिन्ने च । 'पूर्वस्यां दिशि पूर्वस्मिन्काले पूर्वस्यां वाप्यां पूर्वस्मिन्पुरौ'इत्यादि । **दक्षिणाधर**शब्दौ दिशि तदवच्छिन्ने च । अर्थनियमश्चायं व्यवस्थायामित्युक्तेर्गम्यते । स्वाभिधेयेनापेक्ष्यमाणस्यावधेर्नियमो हि **व्यवस्था** । पूर्वादिशब्दानामुक्तोऽर्थो हि नियमेन कं चिदवधिमपेक्षते । 'स्थागापापचो भावे'इति क्तिनि प्राप्तेऽत एव निपातनादङ् । व्यवस्थायां किम् ?। दक्षिणा गाथकाः । प्रवीणा इत्यर्थः । अधरे ताम्बूलरागः, उत्तरे प्रत्युत्तरे वा शक्तः । कथं तर्हि तथा 'परेषां युधि चे'ति **कालिदासः** । अपरे प्रत्यवतिष्ठन्ते' इत्यादि च । अत्राहुः—देशवाचितया व्यवस्थाविषययोरेव पराऽपरशब्दयोरुपचाराच्छत्रौ प्रतिवादिनि च प्रयोगः । न चैवमुपसर्जनता, न हि लाक्षणिकत्वमुपसर्जनत्वं, किन्तु स्वार्थविशिष्टार्थान्तरसङ्क्रमः । स तु न वृत्तिप्रविष्टस्यापि प्रधानस्य, न वा लाक्षणिकस्यापि वृत्तिमप्रविष्टस्य । अत एव तस्माद्वह्निमानित्यादौ ज्ञानलक्षणापक्षेपि सर्वनामकार्यं, तद्योऽहं सोसौ योसौ सोहमित्यत्र भागत्यागलक्षणायामपि सर्वनामकार्यप्रवृत्तिरिति । भूवादिसूत्र एतान्यपीत्येतत्प्रतिपाद्यानि वस्तूनीत्यर्थ इति **कैयटश्च** । वस्तुतस्त्वत्र शत्रुत्वादिप्रकारको बोधोऽनश्वादिशब्देभ्यो भिन्नत्वादेरिवार्थिकः । शब्दात्तु देशान्तरनिष्ठत्वादिप्रकारक एवेति तत्त्वम् । असंज्ञायाङ्किम् ?। उत्तराः कुरवः । सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दो वर्त्ततइत्यस्तीह व्यवस्था । प्रसिद्धत्वात्तु नावधेः प्रयोगो, मेघो वर्षतीत्यत्र जलस्य यथा । एवं 'दिशः सपत्नो भव दक्षिणस्या' इत्यादावपि । वस्तुतो व्यवस्थाऽस्तीति सर्वनामकार्यं सम्भवत्येव । न च संज्ञात्वान्निषेधः । आधुनिकसङ्केतो हि संज्ञा, न च दिक्षु साऽस्तीति पञ्चमेऽस्तातिप्रकरणे **कैयटहरदत्तादयः** । अत्र दिक्षु चिरन्तनः कुरुषु त्वाधुनिकः सङ्केत इत्यत्र व्याख्यातृवचनमेव प्रमाणम् । स्वशब्दस्य चत्वारोऽर्थाः । आत्मा आत्मीयो ज्ञातिर्धनं चेति । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने'इत्यमरः । यद्यपि स्वामिन्नैश्वर्यइति सूत्रे ईश्वरत्ववाच्यपि स्वशब्दः स्वीकृतस्तथाप्यसौ मत्वर्थीयामिनिच्प्रत्ययमात्रविषयो न तु केवलः प्रयोगार्हः । तत्र ज्ञातिधनयोर्निषेधादात्मात्मीययोरेव संज्ञा । आख्याग्रहणं किम् ?। आत्मीयत्वं पुरस्कृत्य ज्ञातिधनयोरपि प्रवृत्तौ सर्वनामता यथा स्यात् । आत्मात्मीययोरित्येव तु वक्तुमिहोचितं । 'स्वस्मै' इत्यादि । जसि विभाषाविधायकेऽष्टाध्यायीस्थे सूत्रेप्येवम् । यत्तु तत्र 'स्वमात्मीय'इत्येव वक्तुमुचितम् , आत्मवाचिनो नपुंसकतया जसि विभाषायामुपयोगाऽभावादिति **केचित्** । तच्चिन्त्यं । सूत्रसामर्थ्यादेवात्मन्यपि पुंस्त्वलाभात् । अत एवाऽमरकोशेप्यात्मनीति पूर्वान्वयि, स्वमिति तूत्तरान्वयि । तथा च **हेमचन्द्रः**—'द्यौः स्वर्गनभसोः स्वो ज्ञात्यात्मनोः स्वं निजे धने' इति । मेदिनीकारोपि—'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये स्त्रियां धने' इति । वस्तुतस्तु पूर्वपरेत्यादित्रिसूत्र्यामर्थनिर्देशः पाठविशेषणम् । तेनेतरेषां पाठादेव पर्युदासः । तथा च 'विभाषा जसी'ति प्रकरणे 'पूर्वादीनि नवे'त्येव लाघवात्कर्त्तव्यं, त्रिसूत्री तु न पठनीयैवेति **निष्कर्षः** । अथवा गणपाठे एव पूर्वादिनवकपाठानन्तरं विभाषाजसीति कर्त्तव्यं, पूर्वादीनि चार्थविशिष्टान्यनुवर्त्तनीयानि । न च सर्वादीनामप्यनुवृत्तिःशङ्क्या, नेमस्य जसि विभाषारम्भात् । **यद्वा**-'जस्ङसिङीनां शिस्मात्स्मिनः' 'पूर्वादिभ्यो नवभ्यो वा,' 'औङ आपः शी,' 'नपुंसकाच्चे'ति, सप्तमे न्यासः कर्त्तव्यः । परमार्थस्तु सप्तमे यथान्यासमेवाऽस्तु । 'पूर्वादिभ्यो नवभ्यो वे'त्येतत्तु 'जसः शी'त्यत्रानुवर्त्य वाक्यभेदेन सम्भन्त्स्यते, वाच्छन्दसीत्येतदमिपूर्व इत्यत्र यथा, तथा चेयं त्रिसूत्री अष्टाध्याय्यां न पाठ्येति स्थितम् । असंज्ञायामिति तु न कार्यम् , अन्वर्थसंज्ञयाऽभिव्यक्तपदार्था य इति न्यायेन वा संज्ञाया व्युदस्तत्वात् ।

**अन्तरशब्दस्तु** नानार्थः । तथा चाऽमरः—'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि चे'ति । तत्र बहिर्योगोपसंव्यानयोरेवार्थयोः संज्ञा । बहिरित्यनावृतो देशो, बाह्यं चोच्यते । तत्राद्ये अन्तरे अन्तरा वा गृहाः । नगरबाह्याश्चण्डालादिगृहा इत्यर्थः । द्वितीये—नगराभ्यन्तरगृहा इत्यर्थः । उपसंव्यान-

शब्दोपि करणव्युत्पत्त्योत्तरीयपरः । कर्मव्युत्पत्त्या त्वन्तरीयपरः । उभयथापि बहिर्योगेण गतार्थत्वात् उपसंव्यानग्रहणं न कर्त्तव्यमिति भाष्ये स्थितम् । केचित्तु शाटकानां त्रये शरीरसंयुक्तस्य तृतीयस्य, चतुष्टये तु चतुर्थस्य तत्संयुक्तस्य वा तृतीयस्य बहिर्योगाऽभावादुपसंव्यानग्रहणं कर्त्तव्यं। शाटकयुगाद्यर्थमिति वदतो वार्त्तिककारस्याप्ययमेवाशय आदिशब्दबलादवगम्यते। भाष्यमते तु बहिर्योगग्रहणं स्वर्यते। तेन शीतोष्णाभ्यां कारिणीत्यादाविव गौणग्रहणात्परम्परया बाह्यसम्बद्धस्यापि भविष्यतीत्याहुः । सत्यपि बहिर्योगे पुरीविषयतायां न सर्वनामता, 'अपुरी'ति च वक्तव्यमिति वार्त्तिकात्। तद्धि गणसूत्रस्य शेषो न तु जसि विभाषाविधायकस्य, अत इत्यधिकृत्य जसः शीविधानादावन्तात्प्राप्त्यभावात् । अन्तरायां पुरि । प्राकाराद्बाह्यायां तदन्तर्वर्त्तिन्यां वेत्यर्थः । लिङ्गविशिष्टपरिभाषयैकादेशस्य पूर्वान्तग्रहणेन ग्रहणाद्वा प्राप्तिर्बोध्या ।

**त्यद्-तद्**-एतौ पूर्वोक्तपरामर्शकौ । 'तत्राद्यश्छान्दस एषस्यभानु'रिति गणरत्नकारस्तन्न । तथा सति 'स्यश्छन्दसि बहुल'मिति सूत्रे छन्दोग्रहणवैयर्थ्यापत्तेः। **यत्**-उद्देश्यसमर्पकः । **एतदिदमौ**-प्रत्यक्षोपस्थिते । **अदस्**-व्यवहिते । **एको**ऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते'। **द्वि**शब्दो द्वित्वविशिष्टे ।अलिङ्गः संबोधनैकविषयश्च **युष्मदर्थः । अस्मच्छब्द**स्तूच्चारयित्रर्थः । सलिङ्गः संबोधनव्यभिचारी च **भवत्वर्थः** । भातेर्डवतुरिति व्युत्पादितोऽयम्। यद्यप्यस्मात्स्मायादयो न सम्भवन्ति, 'सर्वनाम्नस्तृतीया चे'ति, 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'मित्यनेनैव गतार्थं, तथापि,-'फिञद्रिमयटः पूर्वनिपातश्छक्छसौ तथा । आत्वैकशेषष्यञ्विरहादकच्च भवतः फलम्' । **फिञ**-भावतायनिः । त्यदादित्वेन वृद्धत्वादुदीचां वृद्धादिति फिञ् । भवन्तमञ्चतीति भवद्र्यङ् । विष्वग्देवयोश्चेति चकारेण सर्वनाम्नोऽनुकर्षणादद्र्यादेशः । **भवन्मयः** । 'नित्यं वृद्धशरादिभ्य' इति **मयट्** ।**भवन्मित्रः**,-सर्वनामसंख्ययोरिति प्राङ्निपातः । भावत्कः, भवदीयः । भवतष्ठक्छसावित्यत्र हि शत्रन्तनिवृत्तये वृद्धादित्यनुवर्त्यते । **आत्वम्** भवादृक् । आ सर्वनाम्नइत्यात्वम् । देवदत्तश्च भवांश्च भवन्तौ । त्यदादीनि सर्वैरित्येक**शेषः** । भवतो भावो भवत्तेत्यत्र सर्वनामसंज्ञया गुणवचनसंज्ञाबाधात ष्यञ्विरहोपि फलम् । अन्यथा हि भावत्यमिति स्यात् । **अकच्च**-भवकान् । 'सर्वनाम्नो वृत्तिमात्र' इति पुंवद्भावोपि फलम् । भवत्याः पुत्रो भवत्पुत्रः । **किं**शब्दः प्रश्ने आक्षेपे चेति दिक् । **वृत्** । सर्वादिगणो वृत्तः समाप्त इत्यर्थः । यदिंद्राग्नी अवमस्यां, पृथिव्यां मध्यमस्यां, परमस्यामुत्तस्थे इत्यत्र त्ववममध्यमपरमशब्देषु छन्दसि सकलविधिव्यत्ययात् स्याडागमः। नन्वेतदनुरोधेन सर्वादेराकृतिगणत्वमिति मन्तव्यम् । अत एव छन्दस्यपि सर्वनामकार्यमेषां न नियतम् । 'ये मध्यमाः पितरः,' 'विष्णोः पदे परमे' इत्यादौ तदभावात् । 'व्यूह्यावुभौ तावितरेतरस्मात्', 'अन्योन्येषां पुष्करैरामृशन्त' इत्यादि तु 'द्विःप्रयोगो द्विर्वचन'मिति पक्षे तदन्तविधिना सिद्धम्। स्थाने द्विर्वचनपक्षे तु स्थानिवद्भावेनेत्यवधेयम् । ननु वस्नसादाविव प्रकृतिप्रत्ययविभागस्य संमोहात्स्थानिवद्भावेनापि पदत्वमात्रं स्यात् न तु सर्वनामता, सुब्विशिष्टे स्थानिनि तद्विरहादिति चेन्न । सन्नियोगशिष्टत्वेनाऽन्तरङ्गमपि द्वित्वं बाधित्वा समासवच्च बहुल'मिति समासवद्भावप्रयुक्तस्य लुकः प्रथमं प्रवृत्तेः । 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत' इति वक्ष्यमाणत्वात् । ततः प्रत्ययलक्षणेन पदत्वमाश्रित्य द्वित्वप्रवृत्तेः। एतेन 'तत्तत्तामसभूतभीतय'इत्यादि व्याख्यातम् । नन्वस्तूक्तरीत्येतरेतरस्मादित्यस्य सिद्धिः, अन्योन्येषामिति तु कथम् ? । न ह्यत्र समासवद्भावोस्तीति चेत् । तत्र प्रथमैकवचनान्तत्वं पूर्वपदस्य, द्वितीयादयस्तु परपदे इति वचनबलेनैव प्रकृतिप्रत्ययविभागस्य सिद्धेरिति दिक् । 'वन्येतरा जानपदोपदाभि'रिति तु वन्या इतरे येभ्य इति बहुव्रीहिणा समाधेयम् । तपर इति ज्ञापकात्सर्वनाम्नः पूर्वनिपातोऽनित्यः । 'पुत्रादेकात्पराजय' इति तु प्राधान्यादिना आख्यातादित्यर्थे आख्यातणिजन्ताद् घञर्थे कप्रत्यये लाक्षणिकस्य सर्वनामताविरहात्समाधेयम्॥**[सर्वादीनि सर्वना.]**

**विभाषा दिक्समासे बहुव्रीहौ ।** अत्र सर्वनामसंज्ञा वा स्यात् । उत्तरपूर्वस्यै । उत्तरपूर्वायै । 'दिङ्नामान्यन्तराल'इति प्रतिपदोक्तो दिक्समासो गृह्यते । तेनेह न - या पूर्वा सैवोत्तरा यस्य भ्रान्तस्य तस्मै पूर्वोत्तराय । एवं च बहुव्रीहिग्रहणं न कर्त्तव्यम् । दक्षिणोत्तरपूर्वाणामिति द्वन्द्वस्य लक्षणप्रतिपदोक्तपरिभाषयैव वारणात् । ननूत्तरार्थं तत् । तथाहि-'एकं बहुव्रीहिवत्', 'आबाधे चे'ति द्विर्भावे एकैकस्मै देहि दक्षिणदक्षिणस्यै इत्यादीष्यते । । तत्रोत्तरसूत्रेण निषेधो मा भूत् । बहुव्रीहिरेव यो बहुव्रीहिर्न त्वतिदिष्टबहुव्रीहिस्तत्रैव यथा स्यादिति । मैवम् । समासग्रहणानुवृत्त्याप्युक्तार्थलाभात्। उत्तरसूत्रस्य प्रत्याख्यानाच्च ॥ **[वि.स.]**

**न बहुव्रीहौ** । बहुव्रीहौ कर्त्तव्ये सति सर्वनामसंज्ञा न स्यात् । त्वकं पिता यस्य त्वत्कपितृकः । अहकं पिता यस्य मत्कपितृकः । द्वकौ पुत्रौ यस्य द्विकपुत्रः । इह हि समासप्रवृत्तेः प्रागन्तरङ्गतयाऽकच् प्रवर्त्तेत, स च समासे सत्यपि श्रूयेत , अतिक्रान्तो भवकन्तमतिभवकानितिवत् । न हि वृत्तेः प्रागप्युपसर्जनताऽस्ति । ननु यदि प्रागेव प्राप्नुवन्नकच् निवर्त्तितस्तर्हि त्वकम्पितेत्यादि कथं विगृह्यते त्वकः पितेत्यादिकप्रत्ययदर्शनौचित्यादिति चेत्। भ्रान्तोऽसि। न हि यस्मिन्प्रक्रियावाक्ये उत्प्रेक्षामात्रगोचरे बहुव्रीहिसंज्ञा प्रवृत्ता सर्वनामसंज्ञा च निषिद्धा तत्प्रयुज्यते, अपरिनिष्ठितत्वात् । किं तु तत्सदृशं बहुव्रीहिसंज्ञाशून्यं वाक्यान्तर-

मेव । यदाह । **कैयटः**—'अप्रयोगसमवायि यत्प्रक्रियावाक्यं तत्रायं निषेधो न तु लौकिके । तस्य पृथगेव प्रयोगात्तादर्थ्याभावा'दिति । अत एव दृष्टाः सर्वे येनेत्येव विग्रहो न तु सर्वा'इति । राज्ञः पुरुष इत्यादिविग्रहेपि ह्येषैव गतिः । अलौकिके वाक्येऽह्लोपो न इत्यादेरप्रवृत्तेः । 'अन्तरङ्गानपि विधी'निति सिद्धान्तात् । अत एव 'गौपतिप्रिय' इत्यादौ सोर्लुगेव, न तु हल्ङ्यादिलोपः । तेन नुम्दीर्घादयो न प्रवर्त्तन्ते । **भाष्ये** तु त्वकत्पितृक इत्याद्येव रूपं स्वीकृत्येदं सूत्रं प्रत्याख्यातम् । यदाह—'अकच्स्वरौ तुकर्त्तव्यौ प्रत्यङ्गं मुक्तसंशया'विति । अङ्गं अङ्गम्प्रतीति **प्रत्यङ्गम्** । अनकारान्तेषु त्वकत्पितृको द्वकिपुत्र इत्यादिष्वकच् । 'विश्वप्रिय'इत्यादिष्वदन्तेषु तु स्वाङ्गशिटामदन्तानामित्याद्युदात्ततेति विषयविवेको बोध्य इत्यर्थः । यथोत्तरं मुनीनां प्रामाण्यात् , भाष्योक्तयैव व्यवस्थेत्यवधेयम् ॥ **[ न बहुव्रीहौ ] ॥**

**तृतीयासमासे** । अत्र सर्वनामता न स्यात् । मासपूर्वाय । लक्षणप्रतिपदोक्तपरिभाषया 'पूर्वसदृशे'ति समासो गृह्यते न तु 'कर्तृकरणे कृते'त्यादिरपि, तेन त्वयका कृतं त्वत्कृतमित्यादौ निषेधो न । समास इत्यनुवर्त्तमाने पुनः समासग्रहणं गौणार्थस्यापि सङ्ग्रहार्थम् । तेन समासार्थवाक्येपि निषेधः । मासेन पूर्वाय । अयं च लौकिके वाक्ये निषेधो न तु न बहुव्रीहावितिवदलौकिके । अकारान्ते काकचोरविशेषेणानकारान्तानां प्रतिपदोक्ततृतीयासमासविरहेण चालौऽकिके निषेधस्य वैयर्थ्यापत्तेः ॥

**द्वन्द्वे च** । इहोक्तसंज्ञा न स्यात् । पूर्वापराधराणाम् । समुदायस्यायं निषेधो न त्ववयवानाम् । तथाहि—त्यदादीनां तावद्द्वन्द्व एव नास्ति । 'त्यदादीनि सर्वैर्नित्य'मित्येकशेषेण बाधितत्वात् । न च द्वन्द्वे कृते एकशेष इति भ्रमितव्यम् । एकवद्भावस्वरसमासान्तप्रसङ्गेन द्वन्द्वापवादत्वपक्षस्यैव स्थापयिष्यमाणत्वात् । अन्यथा 'तेषा'मित्यादावपि 'द्वन्द्वे चे'ति निषेधापत्तेश्च । त्यदादिभ्यः प्राचीनास्त्वदन्ताः । तत्र काऽकचोरविशेषः । 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावस्त्विष्यत एव—दक्षिणोत्तरपूर्वाणामिति । किञ्च सर्वनामसंज्ञानिषेधेनाऽप्यसौ दुर्वारः । तत्र हि मात्रग्रहणं क्वचित्सर्वनामत्वेन दृष्टानां सम्प्रत्यसर्वनामत्वेपि पुंवद्भावार्थम् । अत एव 'दक्षिणपूर्वायै' इत्यत्र संज्ञाऽभावेपि पुंवद्भावः । नन्ववयवे संज्ञा चेन्न निषिद्धा तर्ह्यङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वचनाद्दक्षिणोत्तरपूर्वाणामित्यादौ सुडागमादिप्रसङ्गः । न च निषेधवैयर्थ्यम् , अनाङ्गस्य त्रलादेर्व्यावृत्त्या चरितार्थत्वादिति चेन्न, अङ्गकार्येषु सर्वनाम्नो विहितस्यामो ङेर्ङसिङ्योरित्यादिक्रमेण व्याख्यानात् । विहितविशेषणत्वस्याश्रयणे प्रमाणं तु दक्षिणोत्तरपूर्वाणामिति भाष्यप्रयोग एव । तस्मात्समुदायस्यैवायं प्रतिषेधो, नावयवानामिति स्थितम् । अत एव सर्वनामसंज्ञायां तदन्तविधिसद्भावे द्वन्द्वे चेति ज्ञापकमित्युक्तम् ॥ **[ द्वन्द्वे च ] ॥**

**विभाषा जसि** । 'जसी'ति कार्यापेक्षयाऽधिकरणसप्तमी । जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्त्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात् । वर्णाश्रमेतरे । वर्णाश्रमेतराः । शीभावं प्रत्येवेयं विभाषेति व्याख्यातम् । तेनाऽकच् न भवति । तस्मिन्कर्त्तव्ये द्वन्द्वे चेति नित्यं निषेधात् । अतस्तत्र कप्रत्यय एव भवति । वर्णाश्रमेतरकाः । केन व्यवधानान्नेह शीभावः । अकचि कृते तु तन्मध्यपतितन्यायेन शीभावः स्यादेव ॥ **[ विभाषा जसि ] ॥**

**प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च** । एते जसः कार्यं प्रति सर्वनामसंज्ञा वा स्युः प्रथमे प्रथमा इत्यादि । शेषं रामवत् । नेमे नेमाः । शेषं सर्ववत् । इहापि प्राग्वच्छीभावं प्रत्येव संज्ञाविकल्पः । तेन 'प्रथमा' इत्यादावकज् न । अन्यथा प्रथमके इति स्यात् । उभयशब्दस्य तु नेयं विभाषा किन्तुनित्या संज्ञेति गणव्याख्याप्रसङ्गेनोपपादितम् ।

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरम्बहिर्योगोपसंव्यानयोः** । एषा त्रिसूत्री गणमध्येपि पठ्यते । सा च व्याख्याता । तया यस्मिन्नेवोपाधौ नित्या संज्ञा प्राप्ता तत्रैव जसि विभाषानया विधीयते । पूर्वे पूर्वा इत्यादि । स्वे स्वाः । आत्मीया इत्यर्थः । आत्मान इति वा । इह त्रिसूत्र्यां यद्वक्तव्यं तत्सर्वं गणव्याख्यावसर एवोक्तम् ।

**'विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम्'** । द्वितीयस्मै द्वितीयायेत्यादि । एकादेशस्य पूर्वान्तग्रहणेन ग्रहणाल्लिङ्गविशिष्टपरिभाषया वा द्वितीयस्यै द्वितीयायै इत्याद्यपि सिद्धम् । एवं च'विभाषा द्वितीयातृतीयाभ्या'मिति सूत्रं न कर्त्तव्यं भवति , अर्थवत्त्वात् , प्रतिपदोक्तत्वाच्च । द्वेस्तीयस्त्रेः सम्प्रसारणं चेत्ययमेव गृह्यते । तेनेह न । प्रकारवचने जातीयर् । पटुजातीयाय । 'जात्यन्ताच्छ बन्धुनि', ब्राह्मणजातीयाय । मुखपार्श्वशब्दाभ्यां तसन्ताभ्यां गहादिभ्यश्चेति छः। मुखतीयाय । पार्श्वतीयाय । तथा द्वितीयाय भागायेत्यत्रापि न भवति । 'पूरणाद्भागे तीयाद'न्नित्यनि कृते यस्येति चेत्यकारलोपे च सति तीयस्य लाक्षणिकत्वादिति दिक् ॥

॥ इति **सर्वनामसंज्ञाप्रकरणम्** ॥

**स्वरादिनिपातमव्ययम्** । स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । प्राग्रीश्वरान्निपाता इत्यारभ्याऽधिरीश्वरइत्येतत्पर्यन्तं ये वक्ष्यन्ते ते निपाताः । नन्वेवं चादिष्वेव स्वरादयोपि पठ्यन्तां, प्रकृतसूत्रं च त्यज्यताम् , अव्ययप्रदेशेषु निपातशब्देनैव व्यवह्रियतामिति चेन्न । चादीनां ह्यसत्त्ववाचिनामेव निपातसंज्ञा । यथा 'लोधं नयन्ति पशुमन्यमाना' इत्यत्र सम्यगर्थस्य पशुशब्दस्य न तु सत्त्ववाचिनाम् । यथा 'पशूस्तांश्चक्रे वायव्या'नित्यादौ, स्वरादीनां तु सत्त्ववचनानामप्यव्ययसंज्ञेष्यते । 'स्वरिति वाचयति' । 'स्वः पश्ये'ति यथा ।

अथ प्राग्रीश्वरान्निपातः, स्वरादीनि, चादयोऽसत्त्वे, इति कुतो न सूत्रितमिति चेन्न, एवं हि सति निपात एकाजनाङिति प्रगृह्यसंज्ञा स्वरादीनाप्येकाचां प्रसज्येत। स्तो हि स्वरादिषु किमोत् दक्षिणादाजित्येकाचौ तद्धितौ, केन्प्रभृतयस्तु कृत एकाचः। यदि तु चादिरैकाजनाङिति क्रियते, तदा चादीनामसत्त्ववचनत्वं विशेषणं न लभ्येत ततश्चास्यापत्यमिर्मदनस्तस्य सम्बोधनमे अवेत्यत्र प्रगृह्यत्वं स्यात्। ननु चादयो ऽसत्त्वे इत्यत्राऽसत्त्वइति पाठविशेषणम्। तथा हि– 'चादय' इति योगो विभज्यते। चादयो निपातसंज्ञाः स्युः। ततो–'असत्त्वे'। इह शास्त्रे चादयो ऽसत्त्वे ज्ञेयाः। ततश्च चादीनां सत्त्ववाचिनां पाठात्पर्युदासस्तेन ए अवेत्यादौ न दोषः। एवञ्चोभे संज्ञे कर्तव्ये अव्ययं निपाता इति। किन्तु 'प्राग्रीश्वरान्निपाता'इति वा 'अव्ययानीति' वा सूत्र्यताम्। ततः–'स्वरादीनि'। 'तद्धितश्चाऽसर्वविभक्ति'रित्याद्य'व्ययीभावश्चे'त्यन्तं सूत्र्यताम्। ततश्चादयोऽसत्त्वइत्यारभ्य यावद्**धिरीश्वरे विभाषा कृञीति**। तत्र यस्मिन्प्रदेशे निपातग्रहणं तत्र चादिग्रहणमस्तु। अव्ययप्रदेशे ऽव्ययग्रहणं निपातग्रहणं वेति। उच्यते। अव्ययसंज्ञाविरहे ऽन्वर्थसंज्ञाबललभ्यं वक्ष्यमाणं प्रयोजनं न सिद्ध्येत्। निपातसंज्ञाविरहे तु शान्तनवाचार्यप्रणीतस्य 'निपाता आद्युदात्ता'इति फिट्सूत्रस्य विषयविभागो न लभ्येत। अथ फिट्शिट्नवादिशब्दानामिव निपातशब्दस्याप्यन्यत एवाऽर्थोऽध्यवसेयः तर्ह्यव्ययसंज्ञामात्रेण निर्वाहः सुकर एवेत्यवधेयम्। महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं, न व्येति विविधं विकारं न गच्छति। सत्त्वधर्मान् लिङ्गसङ्ख्याकारकादीन्न गृह्णातीति यावत्। तेनोपसर्जनप्रतिषेधः सिद्धः। अत्युच्चैसौ। अत्युच्चैस इति। अतिक्रान्तप्रधानत्वेन सत्त्वधर्मपरिग्रहान्नेहाव्ययसंज्ञा। ननु स्वरादिषूच्चैःशब्दः पठ्यते, तत्र कथं तदन्तस्य संज्ञेति चेन्न। अन्वर्थसंज्ञयैव तदन्तविधेरपि ज्ञापनात्। अन्यथोपसर्जने प्रसङ्गाऽभावेन तन्निवृत्त्यर्थायास्तस्या वैयर्थ्यापत्तेः। तेन 'परमत्वः', 'परमोच्चै'रित्यादौ स्वरादिप्राधान्ये ऽव्ययत्वं सिद्धम्। अव्ययसंज्ञाया अन्वर्थत्वमाथर्वणे प्रणवविद्यायां श्रुतिरपि दर्शयति–'**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्यय**'मिति। एतेषु 'यन्न व्येति किन्तु सदृशमेकप्रकारं तदव्यय'मिति योजना। यद्वा यस्मान्न व्येति तस्मादव्ययमिति। त्रिषु लिङ्गेषु सदृशं लिङ्गविशेषप्रतिपादने सामर्थ्याऽभावादिति भावः। विभक्तिषु कारकेषु वचनेषु चैकत्वादिसङ्ख्यास्वव्ययीभावस्य यद्यपि लिङ्गकारकसङ्ख्यायोगोऽस्ति तथापि वचनादव्ययत्वम्।

**अथ स्वरादयः।** **स्व**रिति स्वर्गपरलोकयोः। **स्वर्गे,**– 'छायैव या स्वर्जलधेर्जलेषु'। **परलोके,**–स्वर्यातस्य ह्यपुत्रस्येति। **अन्त**रिति मध्ये। अन्तर्बाष्पश्चिरमनुचरः। **प्रात**रिति प्रत्यूषे। प्रातः सन्ध्यामुपासीत। एते त्रयोऽन्तोदात्ता इति **काशिका**। तच्चिन्त्यं, स्वःशब्दस्य स्वरितत्वात्। तथा च फिट्सूत्रं–'न्यङ्स्वरौ स्वरिता'विति। प्रयोगश्च,– 'अन्तरिक्षमथोस्वः'। यत्तु प्रातःशब्द आद्युदात्त इति कश्चित्, तन्न 'प्रातरग्निं प्रातरिन्द्रं हवामहे' इत्यादावन्तोदात्तस्यैव प्रसिद्धतरत्वात्। **पुन**रित्याद्युदात्तो ऽप्रथमे विशेषे च। अप्रथमे पुनरुक्तम्। विशेषे,–किं पुनर्ब्राह्मणाः पुण्याः। **सनुत**रित्यन्तर्द्धाने। सनुतश्चोरो गच्छति। **उच्चै**रिति महति। **नीचै**रित्यल्पे। **शनै**रिति क्रियामान्द्ये। **ऋधगि**ति सत्ये। वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये। **ऋते** इति वर्जने। **युगपदि**त्येककाले। **आरादि**ति दूरसमीपयोः। **पृथगि**ति भिन्ने। एते सनुतरप्रभृतयो नवान्तोदात्ता इति **काशिका**। 'शनैश्चिद्यन्तो अद्रिवः ऋधगित्था समर्त्यं' इत्यत्र तु शनैरृधक्शब्दावाद्युदात्तौ प्रयुज्येते। **ह्य**सिति अतीतेह्नि। **श्वो**इत्यनागतेह्नि। **दिवे**ति दिवसे। **रात्रा**विति निशि। **साय**मिति निशामुखे। **चिर**मिति बहुकाले। **मना**गिति ईषदर्थे। **ईष**दित्यल्पे। **जोष**मिति सुखमौनयोः। **तूष्णी**मिति मौने। **बहिस् अवस्**–इत्येतौ बाह्ये। **समये**ति समीपे मध्ये च। ग्रामं समया। **निकषे**त्यन्तिके। 'विलङ्घ्य लङ्कां निकषा हनिष्यति'। **स्वय**मित्यात्मनेत्यर्थे। स्वयंकृतम्। **वृथे**ति व्यर्थे। **नक्त**मिति रात्रौ। **नञि**ति निषेधे। **हेता**विति निमित्तार्थे। **द्धन्द्वे**ति प्राकाश्ये। **अद्धेति** स्फुटावधारणयोः। तत्त्वातिशययोरित्येके। **सामी**त्यर्द्धजुगुप्सितयोः। एते ह्यस्प्रभृतयः स्वाम्यन्ता द्वाविंशतिरन्तोदात्ता इति **काशिका**। दिवा चित्तमः कृण्वन्ति, वृथा सृजत्यर्थिभिः नक्तं ददृशे कुह चिद्देवेष्वित्यादौ तु आद्युदात्ताः प्रयुज्यन्ते। **वत्**। वत्प्रत्ययान्तमव्ययसंज्ञं स्यात्। ब्राह्मणवत्। तेन तुल्यमित्यादिभिर्विहितो वतिरिह गृह्यते न तूपसर्गाद्धात्वर्थइति विहितः, सत्त्वार्थकत्वात्। 'यदुद्वतो निवतो यासि वप्सत्'। **सनेति** नित्ये। सना तात इन्द्रः, सनातनः। **सनत्**। इदमपि नित्ये। सनत्कुमारः। **तिरसि**त्यन्तर्द्धौ तिर्यगर्थे च। तिरोहितः। तिरः काष्ठं कुरु। परिभूते तु लक्षणा। तिरस्कृतोरिरिति यथा। सनेत्यादयस्तिरोऽन्ता आद्युदात्ता इति **काशिका**। सनाच्च होता नव्यश्चसत्सि, तिरः पुरूचिदश्विनेत्यादौ त्वन्तोदात्तं प्रयुज्यते। **अन्तरे**त्यन्तोदात्तो मध्ये विनार्थे च। त्वां मां चान्तरा कमण्डलुः। त्वामन्तरा तामरसायताक्षि। **अन्तरेणेति** वर्जने। अन्तरेण हरिं न सुखम्। **ज्योगि**ति कालभूयस्त्वे प्रश्ने शीघ्रार्थे सम्प्रत्यर्थे च। **कमिति** वारिमूर्द्धनिन्दासुखेषु। वारिणि–कञ्जं पद्मम्। मूर्द्धनि–कञ्जाः कचाः। निन्दायां–कन्दर्पः। सुखे–कंयुः। **शमिति** सुखे। शङ्करः। **सहसे**त्या**क**स्मिकाविमर्शयोः। दिवः प्रसूनं सहसा पपात, सहसा विदधीत न क्रियाम्। **स्वधेति** पितृदाने। **अल**मिति भूषणपर्याप्तिशक्तिवारण-

निषेधेषु। भूषणे-अलङ्कारः। पर्याप्तौ—अलमस्य धनं, बह्वित्यर्थः। शक्तौ--अलं मल्लो मल्लाय, शक्त इत्यर्थः वारणे—अलमतिप्रसङ्गेन। निषेधे-'आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत्'। न वक्तव्यमित्यर्थः। वषडिति हविर्दाने। विनेति वर्जने। नानेत्यनेकविनार्थयोः'नाना भूतं देहभृतां समाजम्'। नानारीति निष्फला लोकयात्रा। स्वस्तीति मङ्गले। अन्यदित्यन्यार्थे। देवदत्तआख्यातोन्यच्च यज्ञदत्त इति। अस्तीति सत्तायाम्। अस्तिपरलोक इति मतिरस्यास्तिकः। उपांश्विति अप्रकाशोच्चारणरहस्ययोः। क्षमेति क्षान्तौ। क्षमा करोतु भवान्। विहायसेति वियदर्थे। विहायसा रम्यमितो विभाति। दोषेति रात्रौ। मृषा मिथ्येत्येतौ वितथे। मुधेति व्यर्थे। क्त्वातोसुन्कसुनः, कृन्मकारसन्ध्यक्षरान्ताः, अव्ययीभावश्च। इदं गणसूत्रत्रयमष्टाध्यायीस्थत्रिसूत्र्या समानार्थम्। वैयर्थ्यं तूद्धरिष्यते। पुरेति अविरते चिरातीते भविष्यदासन्ने च। पुराऽधीते, अविरतमपाठीदित्यर्थः। पुरि लुङ्चेति लट्। चिरातीते-पुरापि नवं पुराणम्। पुरेदमूर्ध्वं भवतीति वेधसा। समनन्तरं भविष्यतीत्यर्थः। स्यात्प्रबन्धे चिरातीते निकटागामिके पुरेत्यमरः। मिथो इति रहःसहार्थयोः। मन्त्रयन्ते मिथो। मिथसित्यपि पूर्ववत्। प्रायसिति बाहुल्ये। मुहुसिति पुनरर्थे। प्रबाहुकमिति समकाले ऊर्ध्वार्थे च। केचित्तु प्रवाहिकेति पठन्ति। आर्यहलमिति बलात्कारे। शाकटायनस्त्वाह—आर्येति प्रतिबन्धे, हलमिति प्रतिषेधविवादयोरिति। अभीक्ष्णमिति पौनः पुन्ये। साकं सार्द्धमित्येतौ सहार्थे। नमसिति नतौ। हिरुगिति वर्जने। धिगिति निन्दाभर्त्सनयोः। 'तसिलादिस्तद्धित एधाच्पर्यन्तः। शस्तसी, कृत्वसुच्, सुच्, आस्थालौ, च्व्यर्थाश्चे'ति।तसिलादिरित्यादेरयमर्थः—पञ्चम्यास्तसिलित्यारभ्यैधाच्चेत्येतदन्तैः सूत्रैरुक्तो यस्तद्धितस्तदन्ताः स्वरादिषु बोद्धव्याः। तथा च बह्वल्पार्थाच्छस्। प्रतियोगे पञ्चम्यास्तसिः। क्रियाभ्यावृत्तिगणने कृत्वसुच्। द्वित्रिचतुर्भ्यः सुच्। इण आसिरित्युणादिसूत्रेण आसिप्रत्ययो विहितः। अया इत्युदाहरणम्। प्रत्नपूर्वविश्वेमात्थाल् छन्दसि। सम्पद्यकर्तरि च्विः। विभाषा सातिकार्त्स्न्ये। देये त्रा च। एतदन्ता अपि ग्राह्याः। अम् इति, 'अमु च छन्दसी'ति विहितः। आमित्यङ्गीकारे। आम् कुर्मः। किमेत्तिङव्ययघादाम्। कारप्रत्ययादामन्त्रे लिटीत्यपीति केचित्। प्रतामिति ग्लानौ। प्रशानिति समानार्थे। प्रशान् देवदत्तो यज्ञदत्तेन। प्रतानिति विस्तारे। मा इति निषेधे। मा भवतु, मा भविष्यति। माङिति निषेधाशङ्कयोः। मा कार्षीत्। अस्य पापं मा भूदिति। आकृतिगणश्चायम्। येनान्येपि ग्राह्याः। तद्यथा-अमिति शैघ्र्ये अल्पे च। काममिति स्वाच्छन्द्ये। प्रकाममित्यतिशये। भय इति पुनरर्थे। साम्प्रतमिति न्याय्ये। परमिति किन्त्वर्थे, गुणवानसि परमहङ्कारी। साक्षादिति प्रत्यक्षे। साचीति तिर्यगर्थे। सत्यमित्यर्द्धाङ्गीकारे। मङ्क्ष्विति शैघ्र्ये। आश्विति च। संवदिति वर्षे। अवश्यमिति निश्चये। सपदि शैघ्र्ये। बलवदित्यतिशये। 'बलवदपि शिक्षितानाम्'। प्रादुस्–आविस् इति प्रकाशे। अनिशं–नित्ये। नित्यदा, सदा, अजस्रं, सन्ततमेते सातत्ये। उषेति रात्रौ। उषातनो वायुः। रोदसी द्यावापृथिव्यर्थे। ओमिति ब्रह्मवाची। भूर्भुवरिति पृथिव्यन्तरिक्षलोकयोः। भूर्लोकः भुवर्लोकः। झटिति झगिति तरसा शैघ्र्ये। द्राक् द्रुतं शैघ्र्ये, क्षिप्रमिति च। अतीवेत्यतिशये। सुष्ठु इति प्रशंसायाम्। कु इति कुत्सितेषदर्थयोः। कापथः कवोष्णम्। अञ्जसेति तत्त्वशीघ्रार्थयोः। अ इति बहिरर्थे। मिथु इति द्वावित्यर्थे। मिथु मन्त्रयेते। विश्वगिति समन्ताद्भावे। भाजगिति शैघ्र्ये। भाजक्पचति। अन्वगित्यानुकूल्ये। 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः'। आद्यशब्दाच्चिरं चिरेण चिरादिति गृह्यन्ते। अस्तमिति विनाशे। आनुषगित्यानुपूर्व्ये। 'आनुषक् प्रविशतीह बन्धुता'। अनुमानेऽनुषगितिशाकटायनः। आनुषदिति दान्तं केचित्। अम्रस् इति शीघ्रसाम्प्रतिकयोः। अम्र एव गच्छति। अम्रेरेवेति रेफोवा। स्थाने इति युक्तार्थे। वरमिति हि ईषदुत्कर्षे। दुष्टु निष्कृष्टार्थे। बलादिति हठार्थे। शुइति पूजायाम्। शुनाशीरः। क्षमेति क्षान्तौ। अर्वागिति प्राचीने। शुदि–शुक्लपक्षे। वदि–कृष्णपक्षे।

॥ इति स्वरादिः ॥

तद्धितश्चासर्वविभक्तिः। तद्धितान्तः शब्दोऽव्ययं स्यात्। यस्मात्सर्वा वचनत्रयात्मिका विभक्तिर्नोत्पद्यते किं त्वेकवचनम्। ततः। तत्र। तद्धित इति किम्? एकः द्वौ बहवः। असर्वविभक्तिरिति किम्? औपगवः। ननु 'गोदौ' 'वरणा' इत्यादावतिव्याप्तिः। न च 'लुब्योगाप्रख्यानात्', 'योगप्रमाणे च तदभावेऽदर्शनं स्या'दिति पठतः सूत्रकृतो मते नैते तद्धितान्ता इति वाच्यम्। एवमपि पञ्चैव पञ्चकाः शकुनयः, उभयो मणिः, पचतिकल्पं, पचतिरूप-मित्यादावतिव्याप्तेर्दुर्वारत्वादिति चेत्। अत्राह वार्त्तिककारः–सिद्धन्तुपाठात्–तसिलादयः प्राक्पाशपः। शस्प्रभृतयः प्राक् समासान्तेभ्यः। मान्तः। कृत्वोर्थः। तसिवती। नानाञा'विति। न च इवे प्रतिकृतावित्यधिकारे 'प्रत्नपूर्वविश्वेमात्थाल्छन्दसी'इति विधानात्तदन्तस्याऽसङ्ग्रह इति वाच्यम्। 'प्रकारवचने थालि'ति प्रकरणएव 'प्रत्नादिभ्य इवे थाश्छन्दसि'। 'प्रकारवचने इदमस्थमु'रिति पठितुं शक्यत्वात्। स्वरादिगणे आस्थालाविति पठने सिद्धत्वाच्च। मान्तइति। आम् अम्चेत्यर्थः। तसि। प्रतियोगे पञ्चम्यास्तसिः। तेनैकदिक्, तसिश्चेति द्वावपि गृह्येते। स्या-

देतत्–सूत्रमते कथमुक्तिसम्भवो यावता कर्मणि द्वितीया द्वेथकयोर्द्विवचनैकवचने इत्यादीनां स्वादिवाक्येनैकवाक्यतापक्षेऽव्ययेभ्यः स्वादीनां प्राप्तिरेव नास्ति । 'अव्ययादाप्सुप' इति ज्ञापकेन तु सर्वा विभक्तयः । उच्यते–'अव्ययेभ्यः सप्तानामपि विभक्तीनां त्रीण्यपि वचनानि'। तथा 'सप्तानामप्येकवचनान्येव'। अथवा 'प्रथमाया एव वचनत्रयम्'। यद्वा 'प्रथमाया एकवचनमेवे'ति पक्षचतुष्टयं यद्यपि ग्रन्थेषूपलभ्यते, तथापि 'प्रथमैकवचनमात्रमेवे'ति चतुर्थपक्षएव क्षोदक्षमः। तमेव गृहीत्वा सूत्रस्याप्युक्तिसम्भवः स्पष्टः। इतरत्तु पक्षत्रिकमभ्युच्चयवादमात्रेणोपन्यस्यते न तु तात्त्विकम्। तथाहि–यदि 'कर्मणि द्वितीयैव' 'अभिहिते प्रथमैव' 'एकत्वे एकवचनमेवे'त्यादिरर्थनियमः। यदि वा 'द्वितीया कर्मण्येवे'त्यादिः प्रकृतार्थापेक्षो **विभक्तिनियमः**। यदि वा एकवाक्यत्वे सामान्यापेक्षवचनविभक्तिनियमेऽपि वा अव्ययादाप्सुप इति सामान्यापेक्षज्ञापकाद्विभक्तिसिद्धिस्तदाऽविशेषात् सप्तानामपि विभक्तीनां त्रीण्यपि वचनानीति पक्षो लभ्यते। यदा तु 'द्वित्वे द्विवचन'मिति सूत्रयित्वा 'एकवचन'मित्येव पृथक् सूत्र्यते । तदन्यथानुपपत्त्या च कर्मण्येव द्वितीया, न करणादौ, द्वित्वबहुत्वयोरेव द्विवचनबहुवचने न त्वेकत्वइत्यादिक्रमेण सजातीयापेक्षो नियमः, ततश्चाव्ययेभ्यः सकलविभक्तिप्राप्तावेकवचनमित्यनेन नियमः क्रियते । 'यत्रैकवचनं चान्यच्च प्राप्नोति तत्रैकवचनमेवे'ति । यदि वा सामान्यापेक्षनियमाश्रयणादव्ययादप्राप्तावेकवचनमिति सूत्रं क्रियते तस्य च ङ्याप्प्रातिपदिकादित्यनेनैकवाक्यता। तथा च ङ्याबादिभ्यः कर्मादिष्वेकवचनं सिद्धमेवेति। एतत्तत्सूत्रबलादव्ययेभ्य एव भवति, तिङन्तात्तु न भवति। 'एकवचन'मित्यस्याऽप्राप्तप्रापणार्थत्वेपि ङ्याप्सूत्रेणैकवाक्यत्वात्, प्रदेशान्तरे पाठसामर्थ्याच्च स्वातन्त्र्येणापि ङ्याप्सूत्रं विधायकमिति द्वित्वे द्विवचनमित्यादेर्नियामकत्वं सङ्गच्छते। तदाऽव्ययेभ्यः सर्वाण्येकवचनानीति द्वितीयः पक्षो लभ्यते। यदा तु 'द्वितीया कर्मण्येवे'त्यादिः सामान्यापेक्षः प्रत्ययनियमोऽव्ययेभ्यस्तु प्रथमैव, प्रथमा प्रातिपदिकार्थएवेति नियमेन हि कर्माद्याधिक्यस्थलएव सा निवार्य्यते। द्व्येकयोरिति तु यथान्यासमेव। तत्र चैकत्वएवैकवचनं न सङ्ख्यान्तरे इति सजातीयापेक्षप्रत्ययनियमपक्षस्तदा निःसङ्ख्येभ्योऽव्ययेभ्यः प्रथमाया वचनत्रयमपि भवतीति **तृतीयः** पक्षो लभ्यते। त्रिष्वप्यमीषु पक्षेषु पचतिकल्पं पचतिरूपमित्यादौ दोषः। तत्र हि प्रथमैकवचनमात्रमिष्यते उक्तपक्षत्रयेऽप्यधिकं प्राप्नोति। तस्माद्द्वितीयपक्षरीत्या सकलैकवचनानि प्राप्यैकवचनमित्येकत्वस्य विवक्षितत्वात् प्रथमातिक्रमे कारणाभावात्प्रथमैकवचनमेव कर्त्तव्यमिति **सिद्धान्तः**। एवं च सत्यपि सूत्रस्योक्तिसम्भवे पचतिरूपमित्यादावतिव्याप्तिभयात्परिगणनमेव कर्त्तव्यं, सूत्रं तु न कर्त्तव्यमिति स्थितम् ॥

**कृन्मेजन्तः**। कृद्यो मान्त एजन्तश्च तदन्तमव्ययसंज्ञं स्यात्। स्वादुङ्कारं भुङ्क्ते। वक्षे रायः। तुमर्थेसे इति वचेः सेप्रत्यये रूपम्। नन्वेवं कारयाञ्चकारेत्यामन्तस्य न प्राप्नोति, अत्रातिङ्भावितया लिटः कृत्त्वेपि मान्तत्वाऽभावात्। सत्यम् स्वरादिष्वामिति पाठात्सिद्धम्। यदि तु तत्र तद्धितस्यैव ग्रहणं तर्हि कृदन्तत्वादुत्पन्नानामपि सुपामाम इति लुग्भविष्यति। तत्र हि लेरिति नानुवर्त्तते। न चैवं तरबादेरपि लुगापत्तिः। अपरिसमाप्तार्थतया तरबाद्युत्पत्तेरेवाऽभावात्। अपरिसमाप्तार्थत्वं च सङ्ख्याकर्त्रादिविषयकोत्थिताकाङ्क्षत्वम्। अत एवाऽनुप्रयोगः प्रार्थ्यते। आमन्तार्थगतप्रकर्षादिप्रतीतिस्तु अनुप्रयोगादुत्पन्नेन तरबादिना भविष्यति। अत एव सूत्रितं कृञ्चानुप्रयुज्यतइति। अनुशब्दो हि व्यवहितस्य विपरीतस्य च प्रयोगनिवृत्तयइति वक्ष्यते। यद्वा पूर्वसूत्रोक्तनिष्कर्षरीत्या आमन्तात् सोरेवोत्पत्तौ हल्ङ्यादिलोपो भविष्यति। अस्तु वा कृदन्तं यन्मेजन्तमिति वाक्यार्थः। आमन्तं हि प्रत्ययलक्षणेन कृदन्तं, श्रूयते च मान्तम्। न चैवं प्रतामौ प्रतामो, लवमाचक्षणो लौरित्यादावतिप्रसङ्ग इति वाच्यम्, स्वरादिषु प्रशान्शब्दस्य पाठेन धातोः प्रत्ययलक्षणेन कृदन्तत्वमुपजीव्याऽव्ययसंज्ञा न भवतीति ज्ञापितत्वात्। न च मोनोधातोरिति नत्वे कृते नैतन्मान्तमिति कथं ज्ञापकतेति वाच्यम्। नत्वस्याऽसिद्धत्वात्। न च शान तेजन इत्यस्यार्थान्तरवृत्तित्वे शानयतीत्यादिप्रयोगसिद्ध्यर्थं चुरादित्वस्वीकारेण नित्यसन्नन्तत्वाऽभावात्तस्यैवायं स्वरादिषु पाठ इति वाच्यम्, अनभिधानात्। तस्मात्क्विपोऽनुत्पत्तेः। अत्र च ज्ञापकत्ववर्णनपरं भाष्यमेव प्रमाणम्। 'अव्यय'मित्यन्वर्थसंज्ञाबलादसत्त्वार्थस्य साम्यवाचिन एव प्रशान्शब्दस्य तत्र ग्रहणं न तु शान्तिमद्वाचकस्य। तेन प्रशामौ प्रशाम इत्युदाहरणं न विरुध्यते। स्वस्त्यादीनां तु सत्त्ववाचिनामपि पाठसामर्थ्यादव्ययत्वमिति विशेषः। अन्तग्रहणसामर्थ्यान्नित्ययोगे बहुव्रीहिराश्रीयते। तेनौपदेशिक एज् गृह्यते। नेह, आधये चिकीर्षवे कुम्भकारेभ्यः। वस्तुतस्त्वन्तग्रहणं व्यर्थम्। लक्षणप्रतिपदोक्तपरिभाषयैवाऽतिप्रसङ्गभङ्गात्। ननु वर्णग्रहणे इयं परिभाषा न प्रवर्त्तते। अन्यथैचोऽयवायाव इत्यादावतिप्रसङ्गादिति चेन्न। एवमपि बहिरङ्गपरिभाषया, सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया वेष्टसिद्धेः। अयमत्रार्थः–सन्निपातः, संश्लेषः तन्निमित्तो यो विधिः स तद्विघातस्याऽनिमित्तम्। तं सन्निपातं यो विहन्ति स तद्विघातस्तस्येत्यर्थः। एवं च सुप्सन्निपातलक्षणस्य 'घेर्ङिती'ति गुणस्य 'बहुवचने झल्ये'दित्येत्त्वस्य चाव्ययसंज्ञां प्रति निमित्तत्वं नेत्यवधेयम्। तथा परिभाषायाः प्रयोजनान्तराण्यपि सन्ति दिङ्मात्रं तूच्यते। श्रीपं कुलं तस्मै श्रीपायेत्यत्रातोलोपो न भवति। तथा–अगव्यीत्। अनाव्यीत्। अलाव्यीत्। 'यस्य हल' इति लोपो न। तथाऽतिजरं कुलम्। अतिज-

रेण अतिजरैः अतिजरादित्यत्र अम् इन ऐस् आत् इत्येतेषु अकारमुपजीव्य कृतेषु सत्सु जरसादेशो न भवतीत्यादि। अनित्या चेयं परिभाषा 'कष्टाय क्रमणे' 'न यासयो'रित्यादिज्ञापकात्। तेनाऽग्निमानित्यत्र 'ह्रस्वनुड्भ्यां मतु'बित्यन्तोदात्ताद्ध्रस्वान्तात् परस्य मतुप उदात्तत्वे कृते शेषनिघातेन प्रकृतेरनुदात्तत्वं भवत्येवेति दिक्। गौग्लौनौरित्यत्र नेदं सूत्रं प्रवर्त्तते,—उणादीनामव्युत्पन्नत्वात्। व्युत्पत्तिपक्षेपि च्विरव्यमित्युणादिसूत्रेण डौडोप्रत्ययान्ताश्च्व्यन्ता एवाव्ययमिति नियमस्य कृतत्वात्॥ [ कृन्मेजन्तः ]॥

**क्त्वातोसुन्कसुनः।** एतदन्तमव्ययं स्यात्। कृत्वा। पुरा सूर्यस्योदेतोः। पुरावत्सानामपाकर्त्तोः। 'भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्'। पुरा क्रूरस्य विसृपो विरप्शिन्। पुरा जतुभ्य आतृदः। 'सृपितृदोः कसु'न्निति कसुन्॥ [ क्त्वातोसुन्कसुनः ]॥

**अव्ययीभावश्च।** अयमव्ययसंज्ञः स्यात्। विषयपरिगणनं कर्त्तव्यं—'लुकि मुखस्वरोपचारयोर्निवृत्तौ चे'ति। उपाग्नि प्रत्यग्नि। अव्ययादाप्सुप इति सुपो लुक्। उपाग्निमुखः प्रत्यग्निमुखः। 'मुखं स्वाङ्ग'मित्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्य' इति प्रतिषेधः। तथा च 'बहुव्रीहौ प्रकृत्ये'ति पूर्वपदप्रकृतिस्वर एव भवति। पूर्वपदं च समासस्वरेणान्तोदात्तम्। विसर्गस्थानिकस्य सकारस्योपचार इति प्राचां संज्ञा। तन्निवृत्तौ यथा—उपपयःकारः उपपयःकामः। इहाऽतः कृकमीति प्राप्तं सत्वमनव्ययस्येति पर्युदस्यते। इह मुखस्वरनिवृत्तिरेव मुख्यं प्रयोजनम्। लुक् तु 'नाव्ययीभावादत' इति विशेषप्रतिषेधात् सिद्धः। उपचारनिवृत्तिरपि न प्रयोजनम्। अतःकृकमीत्यत्रानुत्तरपदस्थस्येत्यनुवृत्त्यैव तत्सिद्धेः। परिगणनं किम्?। उपाग्न्यधीयान। पराङ्गवद्भावेन षाष्ठमामन्त्रितस्य चेत्याद्युदात्तत्वं यथा स्यात्। तत्र ह्यव्ययानां प्रतिषेध उपसङ्ख्यायते, उच्चैरधीयानेत्यादौ मा भूदिति। तथोपाग्निकमित्यादौ अव्ययसर्वनाम्नामित्यकज् न। उपकुम्भंमन्यः। खित्यनव्ययस्येत्यनुवर्तमानेऽरुर्द्विषेति मुम्प्रतिषेधो न। उपकुम्भीभूतः। अस्य च्वावित्यस्यौपसङ्ख्यानिकः प्रतिषेधो न भवति। वस्तुतस्त्विदं सूत्रं न कर्त्तव्यम्। लुक उपचारनिवृत्तेश्चान्यथोपपत्तेरुक्तत्वात्। मुखस्वरनिवृत्तिः परमवशिष्यते। तत्र केचिदाहुः—मुखस्वरोऽविष्यत एव। यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयान्नाऽव्ययीभावाच्चेतीति भाष्यस्वरसादिति। अन्ये तु अनव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानादेव मुखस्वरनिवृत्तिर्भविष्यतीति।

स्यादेतत्। स्वरादिस्वेनैव सिद्धत्वात्तद्धितश्चेत्यादिचतुःसूत्री व्यर्था। तत्र हि **तसिलादिस्तद्धित एधाच्पर्यन्त** इत्यादिना च्व्यर्थाश्चेत्यन्तेन आसिमौणादिकं वर्जयित्वा तद्धितश्चासर्वविभक्तिरित्यस्यार्थः सङ्गृह्यते। 'कृन्मकारसन्ध्यक्षरान्त' इत्यनेन कृन्मेजन्त इत्यस्यार्थः सङ्गृह्यते। क्त्वातोसुन्कसुनोऽव्ययीभावश्चेति सूत्रद्वयं तु स्वरूपेणैव पठ्यत इति। अत्राहुः—पुनर्वचनमनित्यत्वज्ञापनार्थम्। तेन प्रागुक्तं 'लुङ्मुखस्वरोपचारा'इति परिगणनं लभ्यते। न लोकाव्ययेत्यत्राव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध इति वक्ष्यमाणं च लभ्यतइति। वस्तुतस्तु मास्तु चतुःसूत्री, अव्ययीभावश्चेति तु गणेपि मास्तु, उत्तरीत्याऽन्वर्थसंज्ञयैव सिद्धेः। तोसुन्कसुनोरप्रतिषेध इत्येव लाघवात् पठ्यतामिति युक्तः पन्थाः॥

**शि सर्वनामस्थानम्।** शि इत्येतत्सर्वनामस्थानसंज्ञं स्यात्। वारीणि। सर्वनामस्थाने चासम्बुद्धाविति दीर्घः। यदि तु प्रदेशेष्वेव शौ चेत्याद्युच्येत तर्हि सुटि न स्यात्। अथ शिशुटोरित्युच्येत तर्हि नपुंसकसुटोपि ग्रहणं स्यात्। शिग्रहणं तु श्यर्थं स्यात्। तस्मात्संज्ञा तावत्प्रणेया, महासंज्ञाकरणं तु पूर्वाचार्यानुरोधात्॥ [शि सर्वनामस्थानम्]॥

**सुडनपुंसकस्य।** सुडिति प्रत्याहारः। नपुंसकभिन्नस्य स्वादिपञ्चवचनानि उक्तसंज्ञानि स्युः। राजा राजानौ राजान इत्यादि। प्राग्वद्दीर्घः। अनपुंसकस्येति किम्?। सामनी। 'विभाषा ङिश्यो'रित्यल्लोपाऽभावे दीर्घो न भवति। अनपुंसकस्येति पर्युदासः, तेनास्य सूत्रस्य स्त्रीपुंसयोरेव प्रवृत्तिरिति नपुंसके न विधिर्नापि प्रतिषेधः। तेन 'वनानि सन्ती'त्यत्र पूर्वसूत्रेण प्राप्ता संज्ञा भवत्येव, प्रसज्यप्रतिषेधे तु सापि निषिध्येत। यद्यप्यनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति समाधातुं शक्यते तथापि असमर्थसमासो वाक्यभेदश्चेति गौरवं स्यादेव। यद्वा सुट्स्त्रीपुंसयोरिति वक्तव्येऽनपुंसकस्येति सूत्रयतः प्रसज्यप्रतिषेध एव सम्मतः। गौरवं च प्रामाणिकम्। एतेन हि केचिन्नञ्समासा असामर्थ्येपि साधव इति ज्ञाप्यते। तेनाऽश्राद्धभोजी ब्राह्मण इत्यादि सिद्धं भवति॥ [ सुडनपुंसकस्य ]॥

**नवेति विभाषा।** इतिशब्दः काकाक्षिन्यायेनोभाभ्यां सम्बध्यते। स च पदार्थविपर्यासकृत्। तेनार्थ एवेह संज्ञी, संज्ञा च। निषेधविकल्पयोर्विकल्पसंज्ञा स्यात्। न च तयोरपदार्थतयाऽनन्वयप्रसङ्गः। एतत्सूत्रारम्भसामर्थ्यादेव विधिवाक्येषु विकल्पवाचिपदस्य लाक्षणिकत्वात्। उभयत्रविभाषार्थं चेदं सूत्रम्। प्राप्तविभाषायामप्राप्तविभाषायाञ्च नास्योपयोगः। तथाहि—'विभाषोपदेनप्रतीयमाने' इति प्राप्तविभाषा तत्र स्वरितञित इत्यादिना नित्यमात्मनेपदे प्राप्ते विभाषाश्रुत्या पक्षे तन्निवृत्तिमात्रं क्रियते, पक्षे भवतीति त्वनुवादः। तथा विभाषोर्णोरित्यप्राप्तविभाषा। और्णुवीदित्यत्र परत्वात् सार्वधातुकमपिदिति नित्यङित्त्वाभ्युपगमात्। तत्र ऊर्णवितेत्यादावभावांशस्य स्थितत्वाद्भावांशमात्रपरता। विभाषाश्वेरित्युभयत्रविभाषायां तु यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात्। किन्तु तु यनादित्वान्नित्यमेव स्यात्। अथ प्रतिषेधमुखेन प्रवृत्तिस्तर्हि कित्स्वेव

विकल्पः स्यान्न तु पित्सु । न च पित्सु विधिमुखेन, किन्तु निषेधमुखेनेत्युभयथापि प्रवृत्तिरस्त्विति वाच्यम् । वैरूप्यलक्षणवाक्यभेदापत्तेः । सञ्ज्ञाकरणे तु सति श्रुतक्रमानुरोधेन नेतिनिषेधः प्रथमं किन्तु प्रवर्त्तते, ततः क्विदक्विद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति पक्षे भवतीत्यैकरूप्येण विधिमुखेनैव विकल्पः प्रवर्तते । 'आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्त्तते' इति दर्शने इदं सूत्रमारभ्यते । यदा तु प्रतिलक्ष्यं विभाषाश्वेरित्येतद्भिद्यते, तदा क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन प्रवृत्तेः सम्भवान्नेदं सूत्रमारम्भणीयम् । तथा च वार्तिकम्—अशिष्यो वा विदितत्वादिति । वस्तुतस्त्वाकृतिपक्षेपि प्रदेशेष्वेव नवाश्वेरित्यादि पठित्वेदं सूत्रं प्रत्याख्यातुं शक्यम् । युक्तं चैतत् । अन्यथान्यार्थमप्यारब्धा सञ्ज्ञा विभाषोर्णोरित्यत्र प्रवर्त्तेत । 'प्रतिषेधाश्च बलीयांसो भवन्ती'ति और्णुवीदित्यत्रापि सार्वधातुकमपिदित्यस्य निषेधस्ततो विकल्पश्च स्यात् । नन्वारभ्यमाणे सूत्रे नवेत्यखण्डनिपातस्यार्थो निषेध एव सञ्ज्ञेति किं न स्यादिति चेन्न, तथासति नबहुव्रीहावित्यनेनैव सिद्धौ विभाषादिक्समास इत्यस्य वैयर्थ्यापत्तेः । इतीति किम् ? घुसंज्ञावत् स्वंरूपमिति वचनाच्छब्दस्य सञ्ज्ञा मा भूत् । तथाहि सति विभाषाश्वेरित्यस्य नवाशब्दः श्वयतेरादेश इत्यर्थः स्यात्, इतिशब्दे तु सत्यर्थः सञ्ज्ञेति लभ्यते । तथाहि लोके ह्यर्थप्रधानः शब्दः, गौरित्ययमाहेत्यादौ तु शब्दस्वरूपपरः सम्पद्यते । व्याकरणे तु स्वंरूपमितिपरिभाषणात् स्वरूपपरत्वमौत्सर्गिकम्, इतिशब्दसमभिव्याहारे त्वर्थपरतेति विशेषः । अर्थस्यैव सञ्ज्ञात्वमपि,न तु विभाषाशब्दस्येत्युक्तम् । तेन हृक्रोरन्यतरस्यामित्यादावपि वैरूप्योद्धारो वोध्यः । एतत्प्रसङ्गेन त्रिविधा अपि विभाषाः प्रायेण भाष्ये विवेचिताः । तत्राऽप्राप्तविभाषामध्ये ग्रोयङि, अचिविभाषेति पठितम् । अत्र वदन्ति—अप्राप्तविभाषेयमिति सत्यं, किं तु त्रिसंज्ञया इत्युपक्रम्य प्राप्तेऽप्राप्ते उभयत्र वेत्येवंरूपकोटित्रयप्रकारकसंशयविषयीभूतानामेव व्युत्पाद्यमानत्वादत्रापि कोटित्रयस्योक्तिसम्भवो वक्तव्यः । स च दुर्वचः । तथाहि निजेगिल्यतइत्यत्र ग्रोयङीति नित्यं लत्वं, विभाषायास्तु तत्र प्राप्तिरेव नास्ति । गिलति गिरतीत्यादौ तु विभाषा, 'ग्रो यङी'त्यस्य तु प्राप्तिरेव नास्ति, तत् कुतः प्राप्तविभाषापक्षः । अथोच्येत, 'अचिविभाषे'त्यत्र यङीत्यनुवर्त्त्यं यङ्निमित्तस्य रेफस्याचि अनन्तरे वा लत्वमिति व्याख्यानादस्त्येवोक्तिसम्भव इति । तन्न । निजेगिर् य अच् इतिस्थिते हि ग्रो यङीति प्राप्नोति । न चास्यामवस्थायां विभाषायाः प्राप्तिः । अच्परत्वाऽभावात् । अथ ब्रूयाः विभाषारम्भसामर्थ्याद्यङ्लुकः पूर्वं ग्रोयङीति न भवतीति, एवमप्युभयत्रविभाषात्वं दुर्लभमेव । गिरति गिलतीत्यादौ विभाषायाश्चरितार्थत्वेन यङ्लुकः प्रागेव ग्रोयङीत्यस्य प्रवृत्तेरुभयोरसमानकालिकत्वात् । न च लत्वस्याऽसिद्धतया ततः प्रागेव लुगिति वाच्यम् । अन्तर्भूतयङपेक्षत्वेनान्तरङ्गं लत्वं प्रति बहिर्भूताऽच्प्रत्ययापेक्षत्वेन बहिरङ्गस्य लुकोऽसिद्धत्वात् पूर्वाऽभावेन पूर्वत्रासिद्धमित्यस्याऽप्रवृत्तेरिति । अत्रोच्यते—प्राप्तविभाषात्वे तावत् समनन्तरोक्तरीत्यैवोक्तिसम्भवः । उभयत्रविभाषात्वे त्वित्थम्,-अन्तरङ्गानपीति न्यायेन लत्वात् पूर्वं लुक् । न च लुङ्निमित्तमजेव दुर्लभः, तस्यार्थापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वात् पूर्वाऽभावेन पूर्वत्रासिद्धमित्यस्याप्रवृत्तेः । तथा चाऽचः पूर्वमेव लत्वं स्यादिति वाच्यम् । कृतितुग्विधिग्रहणेन हि बहिरङ्गपरिभाषाया अनित्यत्वज्ञापनात् । धर्मिग्राहकप्रमाणेन लुक इव तदुपजीव्यानां समासादीनामपि प्राबल्यसिद्धेश्च । ननु कृतेऽचि तन्निमित्ते लुकि च सति निजेगिर् अच् इति स्थिते 'ग्रोयङो'ति न प्राप्नोति, यङ्परत्वाभावात्, प्रत्ययलक्षणं तु नलुमतेति निषिद्धम् । तत्र ह्यङ्गस्येत्यनेनाऽङ्गाधिकारो न निर्दिश्यतइति वक्ष्यते । न च स्थानिवद्भावः, 'लुका लुप्तं न स्थानिव'दिति निषेधात् । अज्झलादेशत्वाच्च । तथा च कथमुभयत्र विभाषेति चेन्न । नधातुलोपसूत्रप्रत्याख्यान पक्षे पृथगल्लोपाश्रयणेन स्थानिवद्भावसम्भवात् । न च 'पूर्वत्राऽसिद्धे न स्थानिव'दिति निषेधः। 'तस्य दोषः संयोगादिलोपलत्वणत्वेष्वि'ति सापवादत्वात् । यद्यप्यचि विभाषेत्यस्य पूर्वत्रासिद्धमिति ग्रोयङीति प्रत्यसिद्धत्वाद्विप्रतिषेधाऽसम्भवः। ततश्च सत्यामपि यङीत्यस्य निवृत्तावुभयत्रविभाषात्वं न सम्भवति । तथाप्यधुनेत्यादिवत्प्रक्रियालाघवार्थममुनेत्येव वक्तव्ये नमुनइत्युक्तेर्योगविभागार्थतया न योगे योगो ऽसिद्धः किं तु प्रकरणे प्रकरणमिति चाऽसिद्धत्वं न भविष्यतीत्याशयेनोभयत्रविभाषात्वे उक्तिसम्भवो बोद्धव्यः । सिद्धान्ते तु विभाषाया असिद्धत्वादेव नित्यं लत्वं, समुदायलोपवादिनां तु मते अजपेक्षयान्तरङ्गत्वान्नित्यं लत्वमिति व्यवस्थितविभाषेति वा समर्थयितव्यम् ॥ इति **श्रीभट्टोजिदीक्षित**विरचिते **श्रीशब्दकौस्तुभे** प्रथमस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

---

**इग्यणः सम्प्रसारणम्** ॥ यणः स्थाने इक् भवतीत्येवंरूपो वाक्यार्थः, यण्स्थानिक इग्रूपो वर्णश्चेत्युभयमपि सम्प्रसारणसञ्ज्ञं स्यात् । तत्र 'ष्यङःसम्प्रसारण'मित्यादिषु विधिप्रदेशेषु वाक्यार्थस्य ग्रहणं, सम्प्रसारणाच्चेत्याद्यनुवादप्रदेशेषु वर्णस्येति विवेकः । पूर्वसूत्रादितिशब्दानुवृत्तेर्वाक्यार्थस्य सञ्ज्ञित्वमिति लभ्यते । तत्प्रत्याख्यानपक्षे तु वाक्यमेव सञ्ज्ञि । न चैवं तदेव विधेयं स्यादिति वाच्यम् । वाह ऊठ् सम्प्रसारणमितिसामानाधिकरण्यबलेन तदुपस्थापितार्थस्यैव विधेयत्वनिर्णयात् । न चैवमपि ष्यङः सम्प्रसारणमित्यादौ दोषतादवस्थ्यम् । सामान्यापेक्षज्ञापकाश्रय-

णात् । ननु तथापि वाक्यतदर्थयोरन्यतरस्य सञ्ज्ञित्वमस्तु वर्णस्य तु कथमिति चेन्न । तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेनाऽर्थद्वयाभ्युपगमादित्यवेहि । अत्र च विधेयानुवाद्ये समर्पकविभक्त्या सूत्रे निर्देश एव लिङ्गम् । आह च—**विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसञ्ज्ञात्वस्येति** । उभयोः सञ्ज्ञेति षष्ठीतत्पुरुषः । भर्तृहरिश्चाह—**'सम्प्रसारणसञ्ज्ञायां लिङ्गाभ्यां वर्णवाक्ययोः । प्रविभागस्तथा सूत्र एकस्मिन्नेव जायते ॥ तथा द्विर्वचनेचीति तन्त्रोपायादिलक्षणः। एकशेषेण निर्देशो भाष्य एव समर्थितः ॥' इति** ॥ तन्त्रं च शब्दतन्त्रमर्थतन्त्रं वेति मतभेदेन व्यवस्था बोद्धव्या । अर्थभेदाच्छब्दभेदे आद्यः पक्षः । शब्दैक्ये द्वितीयः । आद्येपि व्यञ्जकध्वनिमात्रभेदे व्यङ्ग्यैक्ये आवृत्तिरेवेत्यादि बोध्यम् । एवं च **'तन्त्रत्वमैकरूप्येण भवेत्तुल्योपकारतः । उपकारान्यथात्वे तु भवेदावृत्तिलक्षणम्॥'** इति मीमांसकमर्यादानुरोधो वैयाकरणैर्न कर्त्तव्यः । तस्य भाष्यादिसकलवैयाकरणग्रन्थविरुद्धत्वात् । मूलयुक्तिशून्यतया दुरुपपादत्वाच्चेति दिक् । यद्वा—वाक्यार्थ एव सञ्ज्ञी, अनुवादे तु तन्निर्वृत्तो वर्णो लक्ष्यते—सम्प्रसारणाज्जातं सम्प्रसारणमिति । अथवा वर्ण एव सञ्ज्ञी । विधिप्रदेशेषु तु सूत्रशाटकवद्भाविसञ्ज्ञाश्रयणीयेति । सर्वेप्येते पक्षा भाष्ये स्थिताः ।

स्यादेतत् । 'अदुहितरा'मित्यत्र लकारस्य यणः स्थाने उत्तमपुरुषैकवचनमिट् । तस्य च सम्प्रसारणसञ्ज्ञायां सत्यां हल इति दीर्घः स्यात् । तरपं प्रति लङन्तस्याऽङ्गत्वादिति । अत्राहुः—सङ्ख्यातानुदेशाद्यकारस्थानिकस्यैव इकारस्य सञ्ज्ञा न तु लकारस्थानिकस्येति । अत्रेदमवधेयम्—वाक्यार्थः सञ्ज्ञीति पक्षे तस्योद्देश्यविधेयसंसर्गरूपतया तत्र यथासङ्ख्यपरिभाषोपस्थितौ यणः स्थाने इक्स्याद्यथासङ्ख्यमित्यवान्तरवाक्यार्थः, सोऽयं सम्प्रसारणसञ्ज्ञः स्यादिति महावाक्यार्थः । न चावान्तरवाक्यार्थं गृहीत्वा यातिवातिद्रातीत्यादावतिप्रसङ्गः । तस्य सञ्ज्ञासम्बन्धमात्रफलकत्वात् । अन्यथा 'ष्यङः सम्प्रसारण' मित्यादेर्वैयर्थ्यापत्तेरतो नोक्तदोषः । अदुहीत्यादेस्तु ङित्वाऽभावाच्च । उभयसञ्ज्ञात्वपक्षेपि उपस्थितत्वाद्यथासङ्ख्यप्रवृत्त एव वर्णः सञ्ज्ञीति । अतोऽदुहितरामित्यत्र नातिप्रसङ्गः । इदं च कर्मकर्त्तरि रूपमिति **हरदत्तः** । उपलक्षणं चैतत् । केवले कर्तर्यपि सम्भवात् । वर्ण एव सञ्ज्ञीति पक्षे तु यथासङ्ख्यं दुर्लभम् । अनुवादे परिभाषाणामनुपस्थानस्योपपादितत्वात् । न चैवं स्थानेयोगोप्यस्मिन्पक्षे न लभ्येतेति वाच्यम् । षष्ठीस्थानेयोगेत्यत्रानुवर्त्य एतत्सूत्रस्य व्याख्येयत्वात् । उक्तं हि इकोगुणवृद्धीइतिसूत्रे-**सिद्धं तु षष्ठ्यधिकारे वचनादि**'ति । इहैव वा सिंहावलोकनन्यायेन स्थानग्रहणाऽपकर्षोऽस्तु । यथासङ्ख्यन्तु दुर्लभमित्युक्तम् । कथं तर्हि अदुहितरामित्यत्र नातिप्रसङ्ग इति चेत् । तन्त्रावृत्त्याद्याश्रयणेन सम्प्रसारणस्येत्यत्र तद्भावितग्रहणात् । यद्वा-कार्यकालपक्षे 'यणः स्थाने सम्प्रसारणमिग्भवती'ति वाक्यार्थादनुवादतैव नास्ति, तत्र परिभाषोपस्थितौ सत्यां यथासङ्ख्यप्रवृत्त एव सञ्ज्ञी । स एव सम्प्रसारणस्येत्यादौ उपतिष्ठते । अथ वा स्थानक्रमेण सम्बन्धो लौकिकन्यायसिद्धत्वादनुवादेपि सुलभः । यथासङ्ख्यसूत्रं परं न प्रवर्त्ततामिति दिक् । द्युभ्यामित्यत्र हल इति दीर्घो न, दिवउदिति तपरकरणात् । अत एव 'द्युलोक' इत्यत्र सम्प्रसारणस्येति दीर्घो न । नन्वेवं 'भाव्यमानोप्युकारः सवर्णान्गृह्णाती'त्यर्थे ज्ञापकतया कथमस्योपन्यास इति चेन्न, तस्य वाक्यार्थः सञ्ज्ञीति पक्षेणोक्तत्वात् । सम्प्रसारणस्येत्यत्र तद्भावितग्रहणाद्वा । पक्षान्तरे तु ऋतउदिति ज्ञापकं बोद्धव्यम् । नन्वेवमक्षद्युवौ अक्षद्युव इत्यादौ ऊठः सम्प्रसारणसञ्ज्ञायां सम्प्रसारणाच्चेति पूर्वरूपं स्यादिति चेन्न । सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणस्य वार्तिकृता कृतत्वात् । तत्प्रत्याख्यानपक्षे तु 'वार्णादाङ्गं बलीय' इत्युवङ् भविष्यति । वाक्यार्थः सञ्ज्ञीत्यादिपक्षान्तरे तु पूर्वरूपप्राप्तिरेव नास्ति । हूतो जोन इत्यादौ तु हल इति सूत्रारम्भसामर्थ्यात्सम्प्रसारणनिर्वृत्तस्याऽऽदेशेपि दीर्घप्रवृत्तिः । वर्णसञ्ज्ञापक्षेऽपि अल्विधौ स्थानिवद्भावाऽसम्भवेन हल इतिसूत्रारम्भसामर्थ्यात्सम्प्रसारणस्याऽऽदेशे कार्यप्रवृत्तेर्वाच्यत्वादिति दिक् ॥ [ **इग्यणः सम्प्रसारणम्** ] ॥

**आद्यन्तौ टकितौ** ॥ टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । भविता । यापयति । 'पुरस्तादपवादा' इतिन्यायेन स्थानेयोगत्वस्याऽयमपवादः । प्रत्ययः परश्चेत्यनेन तु परत्वाद्बाध्येत । तेन चरेष्टः, गापोष्टक्, व्रीहिशाल्योर्ढगित्यादय. परा एव भवन्ति । परेण परिभाषाप्रकरणेन साहचर्यात्परिभाषेयम् । भाष्ये तु सञ्ज्ञापक्षोपि स्थापितः।तथाहि—टकिताविति कर्मधारयः। इत्सञ्ज्ञकौ टकारककारौ आद्यन्तयोः सञ्ज्ञे स्तः । तथा च इट् इति बहुव्रीहिः । इःट् आदिर्यस्येति विग्रहः । तथा च स्थानेऽन्तरतमपरिभाषया तव्यस्य इतव्यादेशे सिद्धमिष्टम् । एवं यापयतीत्यत्र यातेर्याप् आदेशः, पुःक् यस्येति व्याख्यानात् । न चैवमाद्यन्तौ टकौ इत्येवास्त्विति वाच्यम् । 'आलजाटचौ' 'ठस्येक' इत्यादावपि टकयोराद्यन्तसञ्ज्ञात्वप्रसङ्गात् । इत्संज्ञकत्वेन तु देशविशेषो लक्ष्यते । तेन इत्सञ्ज्ञकस्य यो देशस्तत्रावस्थितौ टकौ सञ्ज्ञे, न चाटचष्टकार इकादेशस्य ककारश्चेतथेति नोक्तदोषः । नन्वस्मिन्पक्षे लुङ्लङ्लृङ्क्ष्वित्यादिना भू इत्यस्याऽभू इत्यादेशः स्यात्स चोदात्त इत्यन्तोदात्तः प्रसज्येत । नैष दोषः । अः ट् उदात्तश्च यस्येति त्रिपदबहुव्रीह्याश्रयणात् । विशेषणस्यापि उदात्तस्य सौत्रः परनिपातः । तेनोदात्ताकारादिरादेश इति सिद्धम् । न चैवमप्याङजादीनामित्यत्र दोषतादवस्थ्यम् । अनुवृत्तेनोदात्तशब्देन सह

श्रूयमाणस्य बहुव्रीह्यसम्भवादिति वाच्यम्। आङजादीनामिति सूत्रस्य प्रत्याख्यास्यमानत्वात्। वक्ष्यति हि–अजादीनामटा सिद्धमित्यादि ॥ [ **आद्यन्तौटकितौ** ] ॥

**मिदचोन्त्यात्परः** ॥ सन्निविष्टानामचां मध्ये अन्त्यो योऽच् तस्मात्परो मित्स्यात् स च पूर्वान्तः। स्थाने योगस्य परश्चेति परत्वस्य चापवादः। वनानि। यशांसि। रुणद्धि। ननु पूर्वयोगवदयमपि पुरस्तादपवादन्यायेन स्थानेयोगमात्रस्याऽपवादोऽस्तु न तु प्रत्ययः परश्चेत्यस्यापीति चेन्न। बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यतइतीहाभ्युपगमात्। अन्यथा श्नमो मित्करणं व्यर्थं स्यात्। न च श्रवणार्थ एव श्नमो मकार इति वाच्यम्, 'तृणह' इति निर्देशात्। 'अच' इति जात्यभिप्रायेणैकवचनम्। निर्द्धारणे षष्ठी। नचाऽन्त्यादित्यनेन सामानाधिकरण्यादच इति पञ्चम्येवास्तामिति वाच्यम्। 'शे मुचादीना'मित्यादावन्त्यस्याऽचोऽसम्भवेनैतत्परिभाषाया अप्रवृत्तावलोन्त्यपरिभाषाप्रसङ्गात्। तथा च तत्र मित्करणवैयर्थ्यापत्तेः। पूर्वसूत्रे आद्यन्ताविति समासनिर्देशेपीहान्तग्रहणमात्रमनुवर्त्तते, एकदेश एव स्वरितत्वप्रतिज्ञानात्। तेन मित्पूर्वान्तः। यदि त्वभक्तः स्यात्तदा ताता पिण्डानामित्यादौ शेश्छन्दसि बहुलमिति शेर्लोपे कृते नलोपो न स्यात्। प्रातिपदिकान्तत्वाऽभावात्। तथा 'वहंलिह' इत्यत्र 'वहाभ्रे लिह' इति खशि 'अरुर्द्विषदजन्तस्ये'ति मुमि 'मोनुस्वार' इत्यनुस्वारो न स्यात्, अपदान्तत्वात्। यदि त्वादिग्रहणमनुवर्त्त्य परादिः क्रियेत तदा 'वारिणे' इत्यादौ 'घेर्ङिती'ति गुणः स्यात्। 'वहंलिह' इत्यत्रानुस्वारो न स्यात्। अतिशयितः सखा येषां तान्यतिसखीनि ब्राह्मणकुलानीत्यत्र सख्युरसम्बुद्धाविति णित्वप्रयुक्ता वृद्धिः प्राप्नोति। सा हि गौणत्वेऽपीष्यते अस्थ्याद्यनड्वत्। एतच्चेह सूत्रे भाष्यकैयटयोः स्फुटम्। तस्मात्पूर्वान्तपक्ष एवात्र स्थितः। अत्र वार्त्तिकम्–**अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थम्**। मग्नः। मग्नवान्। ओदितश्चेति निष्ठानत्वम्। तस्याऽसिद्धत्वात्कुत्वम्। मस्जिनशोर्झलीति नुम्। स च यद्यन्तादचः परः स्यात्तदाऽनिदितामित्यनुषङ्गलोपो न स्यात्। उपधाभूतस्य नकारस्यानुषङ्ग इति प्राचां सञ्ज्ञा। अथ स्कोरिति सलोपे कृते नकार उपधात्वाल्लुप्यतामिति चेत्। न। नलोपं प्रति स्कोरितिलोपस्याऽसिद्धत्वात्। बहूनां समवाये समुदायस्यैव संयोगसञ्ज्ञेति पक्षे सलोपस्याऽप्राप्तेश्च। तथा च मङ्क्ता मङ्क्तव्यमित्याद्यपि प्रयोजनं बोध्यम्। **मर्जिमर्च्योश्च**। अन्त्यात्पूर्वो मित् इत्यनुवर्त्तते। भृजि भर्जने। अस्मादौणादिके अचि कृते ऊमागमः। भरूजा। मर्च शब्दार्थे चुरादिकः। अस्मादच इरित्यौणादिक इप्रत्यय ईमागमः। **निपातनासिद्धम्**। भरूजाशब्दो ह्यङ्गुल्यादिषु पठ्यते मरीचिशब्दो बाह्वादिषु। उणादिषु तु मृकणिभ्यामीचिरिति ईचिप्रत्ययं कृत्वा मरीचिशब्दो व्युत्पादितः। तदुपायान्तरं बोध्यम्। [**मिदचोऽन्त्यात्**]॥

**एच इग्घ्रस्वादेशे**। आदिश्यमानेषु ह्रस्वेषु (मध्ये) एच इगेव स्यात्। हेशब्दमतिक्रान्तं कुलमतिहि कुलम्। चित्रगुः। अतिरिः। अतिनु। यदत्र वक्तव्यं तदेओङ्सूत्र एवोक्तम्। [**एच इग्घ्रस्वादेशे**] ॥

**षष्ठी स्थानेयोगा**। अनेकसम्बन्धपरतया सम्भाव्यमाना षष्ठी स्थानप्रयुक्तसम्बन्धपरेति बोध्यम्। **अस्तेर्भूः**। अस्तेः समीपोऽनन्तरो वेति संशये तत्स्थाने उच्चारणीय इत्यर्थः। स्थानं च प्रसङ्गः। दर्भाणां स्थाने शरैः प्रस्तरितव्यमितिवत्। तथा चेगुच्चारणे प्रसक्ते यणुच्चारणीय इत्याद्यर्थपर्यवसाने सामीप्यादयः सम्बन्धा अर्थाद्व्यावृत्ताः। **योगः** सम्बन्धः। स बहुविधोऽस्त्यस्या इति योगा। अर्श-आदित्वान्मत्वर्थीयोच्। सच भूम्नि। अन्यथा विशेषणवैयर्थ्यापत्तेः। तेनानेकसम्बन्धपरतया सम्भाव्यमानेत्यर्थो लभ्यते। 'अयोगेति' वा छेदः। अनिश्चितयोगविशेषेत्यर्थः। योगेत्ययोगेति वा किम्?। ऊदुपधाया गोहः। शास इदङ्हलोरित्यादौ गोह शास इत्यत्र मा भूत्। सति हि तत्रापि स्थाने योगत्वे गोहिशासोः स्थाने धातुमात्रस्योपधायाश्च ऊदितौ स्यातामिति दिक्। यद्वा स्थाने योगो यस्या इति बहुव्रीहिः। अत एव निपातनात्सप्तम्या अलुक्। यद्वा–स्थानेन योगोऽस्या इति विग्रहः। निपातनादेत्वम्। नचानयोः पक्षयोर्गोहः शास इत्यादावतिप्रसङ्गः। परिभाषाणामनियमे नियन्तुं प्रवृत्तेः। युक्तं चैतत्। आकाङ्क्षापूर्वकत्वात्सम्बन्धस्य, इह चोपधासन्निधानेनावयवषष्ठीत्वे निर्णीत आकाङ्क्षाविच्छेदात्। लोकेऽपि हि पन्थानं पृच्छन्तं प्रत्यमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्यो ऽमुष्मिन्नुत्तर इत्यादावुपदिष्टे सति यत्र मार्गद्वैधात्संशयस्तत्रैव तदुपतिष्ठते न त्वसन्दिग्धे तिर्यक्पथेऽपीति दिक्। **भाष्यकारास्त्वाहुः**–अस्तेर्भूरित्यादावनेकसम्बन्धप्रसङ्गेपि लक्ष्यानुरोधादन्तरङ्गत्वात्स्थानिवदादेश इति ज्ञापकाच्च स्थानेयोगतैव व्याख्यास्यते। तस्मान्नाऽयमेतस्य सूत्रस्य सूत्रार्थः। किं तु 'षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न तु प्रतीयमान'मिति सूत्रार्थः। तदेतदुच्यते **निर्दिश्यमानस्यादेशा भवन्ती**'ति। तेन 'पादः प'दित्यस्यायमर्थः,-'पाच्छब्दान्तं यदङ्गं तदवयवस्य पाच्छब्दस्य सर्वस्य पदादेश' इति। अलोन्त्यस्यादेः परस्येति तु योगौ आरम्भसामर्थ्यादस्य बाधकौ। 'अनेकाल्शित्सर्वस्ये'त्यनेन तु सहाऽविरोधादस्य समुच्चयेन प्रवृत्तिरिति। एवं स्थिते तन्त्राद्याश्रयणेन प्रागुक्तोऽपि सूत्रार्थः सुवचः। फलन्तु स्फुटप्रतिपत्तिरितिदिक् ॥ [ **षष्ठी स्थानेयोगा** ] ॥

**स्थानेन्तरतमः** ॥ प्राप्यमाणानां मध्ये सदृशतम आदेशः स्यात्। **सादृश्यं** च चतुर्धा। स्थानतोऽर्थतो गुणतः प्रमाणतश्चेति। **स्थानतो** यथा–सुध्युपास्यः। मध्वरिः

धात्रंशः । लाकृतिः । यत्तु यथासङ्ख्यसूत्रेणैवेहान्यथासिद्धिरित्युक्तं भाष्यादौ । तदभ्युच्चयमात्रम् । अर्थतः साम्यविवक्षायां यथासङ्ख्याऽलाभात् । इको हि षट्षष्टिः, यणस्तु सप्तेति वैषम्यात् । अथेक्शब्दाद्यण्शब्दाच्च प्रथमं चतुर्णां चतुर्णामुपस्थितेरस्त्येव साम्यमिति चेत्तर्हि सुध्युपास्य इति दीर्घस्य कथं यणादेशः । इकारेण ग्रहणादिति चेत्तर्हि तृतीयेन ऋकारेण चतुर्थेन लृकारेण च परस्परस्य ग्रहणाल्लाकृतौ रेफप्रसङ्गः, धात्रंशे च लकारप्रसङ्गः, यवौ च सानुनासिक निरनुनासिकौ न व्यवतिष्ठेयातामिति दिक् । दैत्यारिः श्रीश इत्याद्यपीहोदाहरणम् । **अर्थतो** यथा—वातण्ड्ययुवतिः । वतण्डशब्दाद्वतण्डाच्चेत्यपत्ये यञ् । तस्य लुक्स्त्रियामिति लुक् । शार्ङ्गरवादित्वान् ङीन् । वतण्डी चासौ युवतिश्चेति विग्रहे पोटायुवतीत्यादिना समासः । पुंवत्कर्मधारयेत्यतिदिश्यमानः पुंशब्दो वतण्डापत्यवाचिनो वतण्डीशब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति । **गुणतो** यथा—पाकः । त्यागः । 'चजोः कुघिण्ण्यतो'रिति चकारस्याल्पप्राणस्याघोषस्य तादृश एव ककारः । जकारस्य तु घोषस्याल्पप्राणस्य नादवतः स्थाने तादृगेव गकारः । **प्रमाणतो** यथा—अमुम् । अमू । अमून् । अदसोऽसेरित्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः । इह स्थाने इत्यनुवर्तमाने पुनः स्थानेग्रहणादन्योपि वाक्यार्थः सम्मतः । ताल्वादिरूपे स्थाने योऽन्तरतमस्तत्प्रयुक्तान्तर्यवानिति यावत् । स प्राप्यमाणानां मध्ये स्यादिति । तदुक्तम्—**'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीय'** इति । तेन चेता स्तोतेत्यादौ प्रमाणत आन्तर्यवानप्यकारो न भवति । वाक्यभेदे च तमब्ग्रहणमेव लिङ्गम् । एकस्मिन्नेव वाक्यार्थे सम्मते हि स्थानेन्तरतमइत्येव ब्रूयात् । सिद्धान्ते तु वाग्घरिरित्यादौ सोष्मणः सोष्माण इति द्वितीयाः प्रसक्ताः । नादवतो नादवन्त इति तृतीयाः प्रसक्ताः । तमब्ग्रहणात्तु चतुर्था भवन्ति । ते हि सोष्माणो नादवन्तश्च । ऊष्मा ऊष्मत्वं वर्णधर्मस्तत्सहिताः सोष्माणः । तथा च बह्वृचानां **प्रातिशाख्यं**—'वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणावनुनासिकोऽन्त्य'इति । शादय ऊष्माणः, सस्थानेन द्वितीया, हकारेण चतुर्थां इति **शिक्षा** । इह त्रीणि वाक्यानि, ऊष्मशब्दश्च धर्मिवचनः । 'शषसहा ऊष्माण' इति प्रथमवाक्यार्थः । सस्थानेनेति इत्थंभूतलक्षणे तृतीया । हशषसाः क्रमेण खछठथानां द्वितीयानां सस्थानाः यथा हादय ऊष्माणस्तथैव खादयोपीत्यर्थः । फकारस्य तु यद्यपि सस्थान ऊष्मा नास्ति तथापि तस्य विशिष्यैव ऊष्मत्वं बोध्यम् । **हकारेण चतुर्था इति** । यथा हकार ऊष्मा एवं तेपीत्यर्थः । नन्वेवमिष्ट उप्त इत्यादावान्तर्यादर्धमात्रस्य यणः स्थाने अर्द्धमात्र इक् स्यात् । दध्यत्र सुध्युपास्य इत्यादौ तु मात्रिकद्विमात्रिकयोरिकोस्तथाविध एव यण् स्यादिति चेन्न, अर्द्धमात्रस्येको मात्रिकद्विमात्रिकव्यञ्जनस्य च लोकवेदयोरप्रसिद्धत्वात् । योऽस्ति स एव भविष्यति । इह भाष्ये 'अन्तरतम' इति सप्तम्यन्तपाठोप्युपन्यस्य दूषितः । तथाहि—अन्तरतम उरण् रपर इति संहितया तावत्सूत्रकृदपाठीत् । पदकारास्तु व्याख्यातारः । तत्र सप्तम्यन्तमपि शक्यं छेत्तुम् । षष्ठीति चाऽनुवर्त्तते । अन्तरतमे स्थानिनि षष्ठी उपसंहर्त्तव्येति सूत्रार्थः । एवं चाऽकः सवर्णे दीर्घ इत्यत्र विधेयस्य दीर्घस्याऽन्तरतमे स्थानिन्यक इति षष्ठ्या उपसंहारात्सिद्धमिष्टम् । तथा वान्तो यि प्रत्ययइत्यत्र एच इत्यनुवृत्तायाः षष्ठ्या वान्तादेशस्यान्तरतमयोरोदौतोरुपसंहारात्सिद्धम् । अन्यथा एच्मात्रस्य वान्तादेशः स्यात् । अत्रेदं दूषणम्—इको यणचीति यण् ह्रस्वानामेव स्यान्न तु दीर्घाणाम् । अर्द्धमात्रस्य हि मात्रिकः सन्निकृष्ट इति तत्रैवेक इति षष्ठ्या उपसंहारात् । तथेको गुणवृद्धी अचोञ्णितीति इति षष्ठ्योर्गुणवृद्ध्योरन्तरतमेष्वेव इक्ष्वक्षु चोपसंहारात् नेता लविता नायको लावक इत्यादावेव स्यात् । चेता स्तोता चायकः स्तावक इत्यादौ तु न स्यादिति दिक् । तदेवं सप्तम्यन्तपक्षस्य दुष्टत्वात्प्रथमान्तपक्ष एव युक्त इति स्थितम् । **स्यादेतत्**—एवं सति एज्मात्रस्य वान्तादेशः स्यादिति चेत् । अत्राहुः—पूर्वसूत्रे तावद्यथासङ्ख्यं प्रवृत्तम् । अन्तरतमपरिभाषा वा । अर्थाधिकारश्चेहाश्रीयते । यादृशो वान्तादेशः पूर्वं दृष्ट ओकारस्थानिकोऽव्, औकारस्थानिकश्चाव्, तादृशो यि प्रत्यये भवतीति सूत्रार्थः । यद्वा—वान्त इति न करिष्यते, न चैवं चेयं नेयमित्यादावतिप्रसङ्गः । 'क्षय्यजय्या'विति योगं विभज्य 'कण्ठतालव्यस्य चेद्भवति क्षिज्योरेवे'ति नियमपरतया व्याख्यानात् । 'क्षिज्योः शक्यार्थ एवे'ति द्वितीय सूत्रार्थः । तेनाऽर्हाद्यर्थे तयोरपि नेति बोध्यम् । नन्वेवमपि शार्ङ्गरवादिगणपठितेन नृनरयोर्वृद्धिश्चेति सूत्रेण नरशब्दस्य नारीति रूपं न सिद्ध्येत् । तथा हि—नरशब्दस्य ङीन्सन्नियोगेन विधीयमाना वृद्धिरलोन्त्यस्येत्यन्त्यस्य स्यात् । तथा च यस्येति चेति लोपेन तस्या निवृत्तौ वृद्धिवचनं व्यर्थं स्यात् । नच नृशब्दार्थं तदिति वाच्यम् । एवं हि सति नुर्वृद्धिश्चेत्येव ब्रूयात् । नच नरशब्देपि परत्वाद्यस्येति लोपे कृते वृद्धिर्भवन्ती नानर्थिकेति वाच्यम् । प्रत्ययसन्नियोगशिष्टत्वेन वृद्धेरन्तरङ्गत्वात् । ननु वचनसामर्थ्याद्वृद्ध्या लोपो बाध्यताम्, आहो स्विदन्तरङ्गपरिभाषां बाधित्वा परत्वाद्यस्येति लोपे कृते वृद्धिर्भवत्विति संशये परिभाषाबाध एव न्याय्यः । तदुक्तम्—**अङ्गगुणविरोधे च तादर्थ्यादिति ।** किञ्च—'वाह ऊठि'त्यत्र ज्ञापितत्वेनानुमेयायाः परिभाषाया एव बाधेनोपपत्तौ साक्षाच्छ्रुतस्य यस्येतिलोपस्य बाधो ऽनुचितः । तथा च लोपे कृते वृद्धिरिति सिद्धं नारीति रूपमिति चेत् । सत्यं सिद्धं, किन्तु सप्तम्यन्तच्छेदपक्ष एव । तत्र हि प्रकृतितोऽन्तरतमनिर्वृत्तिरिति वृद्ध्यन्तरतमे स्थानिनि षष्ठ्या उपसंहारात् अकारस्य वृद्धिर्भवति । प्रथमान्त-

च्छेदपक्षे त्वादेशतोन्तरतमनिवृत्तिरित्यलोन्त्यस्येति वचनाद्रेफस्य स्यात् । तस्मात्सिद्धान्ते नारीति रूपं नरशब्दस्य दुःसाधमिति पूर्वः पक्षः ॥ अत्राहुः–नरशब्दपाठस्य प्रत्याख्यानमेव भाष्यकृतोऽभिप्रेतं, सप्तम्यन्तपक्षनिराकरणभाष्येण तथैवानुमानात् । न चैवं नरशब्दाज्जातिलक्षणङीषि सति नरीति रूपं स्यादिति वाच्यम् । इष्टापत्तेः । तथा च प्रयुज्यते–'किं नरीणां नरीणा'मिति । यद्वा । नरशब्दस्य नियतपुँल्लिङ्गत्वमेवाऽस्तु । तथा च क्वातिप्रसङ्गः । उक्तप्रयोगस्तु पुंयोगलक्षणे ङीषि भविष्यति । यथान्यासेपि तस्य दुर्वारत्वात् । अथ वा नृनरयोरित्यत्राऽत इति वर्त्तते, अजाद्यतष्टाबितिसूत्रात् । तच्चानुवृत्तिसामर्थ्यात्षष्ठ्या विपरिणतं नरशब्देन सह वैयधिकरण्येन सम्बध्यते, नतु नृशब्देन । असम्भवात् । तस्मात्सिद्धं नारीति । अत्रेदं वक्तव्यं, प्रत्याख्यायतां नाम नरशब्दः । नृनरयोरिति पठतः सूत्रकृतो मते तु कथमुक्तिसम्भवः । न च नरीत्येवेष्टमितिवाच्यम् । वृद्धिविधायकसूत्रमध्ये नरशब्दपाठस्य वैफल्यापत्तेः । 'अत' इत्यनुवृत्त्या समर्थनमपि क्लिष्टम् । एकदेशाऽनुवृत्तिविभक्तिविपरिणामाद्याश्रयणात् । किञ्च 'नृनरयो'रिति गणपाठे पठ्यते नत्वष्टाध्याय्याम् । गणे चाऽत इति न प्रकृतम् । तथा 'शार्ङ्गरवाद्यञ्' इत्यादिशब्देन गणसूत्रमपि हृदयमागमय्य तत्राऽत इत्यस्यान्वयो वाच्यः । स च क्लिष्टतर इति स्पष्टमेव । तस्मादित्थं समाधेयम् , नर इति रान्तं लुप्ताकारानुकरणं तस्य अः नरः । नुश्च नरस्यचेति द्वन्द्वः । चाद्गणे पाठाच्च ङीन् । यद्वा–स्थानेन्तरतम इत्यत्र तन्त्रेण द्वेधा छेदः सूत्रकृतः सम्मतः । भाष्योक्तरीत्या लौकिकन्यायाश्रयणेन सूत्रप्रत्याख्यानपक्षेपि हि प्रकृतित आदेशतश्चेत्युभयथाप्यन्तरतमनिवृत्तिरस्त्येव । सूत्रकृतो मते वाचनिकी सा । भाष्यकृतस्तु न्यायसिद्धेत्यन्यदेतत् । तथा च वान्तो यि नृनरयोरित्यादि सर्वं सुस्थमेव । अत एव चतुर्थे स्थानितोन्तरतमनिवृत्तिमाश्रित्य नारीति रूपं साधयन्हरदत्तोपि न विरुध्यते । इको यणचीत्यादावतिप्रसङ्गः परमवशिष्यते । स च ल्वादिभ्यः प्वादीनां ह्रस्व इत्यादिज्ञापकेन वाचनिक्या, न्यायमूलिकया वा स्थानितोन्तरतमनिवृत्तेरनित्यतामाश्रित्य परिहर्त्तव्य इति दिक् । सूत्रप्रत्याख्यानप्रकारस्तूच्यते–'सभायामास्यता'मित्युक्ते हि पण्डिताः पण्डितैः सह समासते, शूराः शूरैः, कवयः कविभिः, न तु सङ्करेण । किं बहुना, गवां सङ्घं प्रति गौर्धावति, अश्वोऽश्वानामित्यादिव्यवस्था तिर्यक्ष्वपि दृश्यते । तस्मात्प्रथमवाक्यार्थस्य लोकत एव लाभान्न तदर्थं सूत्रमारम्भणीयम् । एवं 'स्थानत आन्तर्यं बलीय' इत्यपि लोकत एव सिद्धम् । तथाहि—भूयः सहचरितयोरश्वयोर्गवोर्वा सजातीयान्तरसङ्कलने सत्यपि कृशत्वपाण्डुत्वादिगुणसदृशानपि हित्वा स्थानसाम्यपुरस्कारेणैव परस्पराऽपेक्षा दृश्यते । तदेवं लोकतः सिद्धे किं वचनेनेति ॥ [ स्थानेन्तरतमः ] ।

**उरण् रपरः** ॥ ऋवर्णस्य स्थाने यो ऽण् स प्रसङ्गावस्थायामेव रप्रत्याहारपरः स्यात् । ऋकारेण सावर्ण्यात्त्रिंशत उपस्थाने सति स्थानेन्तरतमपरिभाषया रश्रुतिमतः स्थाने रपरो लश्रुतेस्तु लपर इति विवेक्तव्यम् । कृष्णर्द्धिः, तवल्कारः । ऋलृस्थाने यो ऽण् इति ग्रन्थस्तु यथासङ्ख्यभ्रमापादकोऽसङ्गतश्च । शब्दतः साम्येनाऽभिमतानिर्वाहात् । न हि सूत्रे शब्दद्वयमस्ति । अर्थतस्तु नतरां साम्यम् । अथात्र न यथासङ्ख्यमभिमतं, तर्हि किं वृत्तिमध्ये द्वयोरेव विशिष्योल्लेखनेन । ऋ च ऌ च ऋलौ, ऋलोः स्थानमिति विग्रहे, उश्च उल्च ऋलोरिति विग्रहे वा द्वन्द्वस्य दुर्लभत्वाच्च । स हि 'विरूपाणामपि समानार्थाना'मित्येकशेषेण बाध्यते । चित्रगुशब्दस्य चित्रगवीपरतायामिव साधुत्वनिर्वाहार्थं लक्षणमाश्रित्य लक्षितलक्षणया शक्यार्थे पर्यवसानमिति कथं चिन्निर्वाहस्तु ग्रन्थे श्रद्धालुभिरास्थेय इति दिक् । अत्र पक्षचतुष्टयं सम्भाव्यते–उः स्थाने रपरो ऽण् स्यादिति रपरत्वविशिष्टो ऽण् विधीयत इति **प्रथमः पक्षः** । उः स्थाने अणामनणां च प्रसङ्गे अणेवेति नियमः । स च रपर इति वाक्यभेदेन रपरत्वं विधीयत इति **द्वितीयः पक्षः** । उः स्थाने योऽणित्यनूद्य तस्य रपरत्वं विधीयत इति **तृतीयः** । प्रसङ्गावस्थायामेव रपरत्वं विधीयत इति **चतुर्थः** । तत्राद्ये पक्षे नाऽप्राप्तेषूदात्तादिषु विधीयमानोऽण् तेषां बाधकः स्यात् । तैरनवरुद्धस्य विषयस्याऽलाभात् । एवं तदा वचनव्यक्तिः । षष्ठीनिर्दिष्टमात्रस्य भवन्नादेशोऽन्तरतमः स्यात् । ऋवर्णस्य त्वण् रपर इति । ततश्चोदात्तानुदात्तस्वरितानुनासिकेषु दोषः । तथाहि–कृतिरित्यत्र ञ्नित्यादिर्नित्यमिति प्राप्तमृकारं बाधित्वा ऽण् रपरः स्यात् । तथा प्रकृतं प्रहृतमित्यत्र गतिरनन्तर इति पूर्वपदप्रकृतिस्वरे कृते शेषनिघातमुदात्तादनुदात्तस्येति स्वरितं च बाधेत । तथा नॄः पाहीत्यत्र नॄन्पइति ज्ञापकात्पूर्वसवर्णदीर्घसम्भवेप्यनुनासिकं बाधित्वाऽण् रपरः स्यात् । किञ्च कर्त्ता कारक इत्यत्र गुणवृद्धी बाधित्वाऽण् भवन्नकार एवेति नियमाऽभावात् कदाचिदिकार उकारश्च स्यात् । अपि च येऽमी प्रतिपदोक्ता इत्वोत्वादय ऋत इद्धातो रुदोष्ठ्यपूर्वस्येति, तेषु रपरत्वं न स्यात् । द्वितीये तु गुणवृद्धयोर्न दोषः । 'अणनणोः प्रसक्तावणेवे'ति नियमेन कर्त्ता कारक इत्यादिसिद्धेः । ननु ह्रस्वे स्थानिनि सर्वा वृद्धिरनन्तरतमा, तारक इत्यादौ दीर्घे तु सर्वापि प्रमाणतोऽन्तरतमेत्यविशेषादुभयत्रापि सकलवृद्धिप्रसङ्गे नियमोस्तु, गुणस्तु कर्त्ता इत्यादौ मात्रिक एव प्राप्तः । तरितेत्यादौ द्विमात्रस्य तु द्विमात्र एङेव प्राप्तः । तथा च अणनणोः प्रसङ्गाऽभावेन नियमाऽप्रवृत्तौ दीर्घेष्वेङेव स्यात् । ह्रस्वेषु त्वकारो भवन्नपि रपरो न स्यात् । यो हि प्रथमवाक्येनाऽणेवेति नियम्यते तस्यैव द्वितीयेन रपरत्वं विधीयते । तथा च गुणे

दोषोस्त्येवेति चेन्न । 'चजोः कुघिण्ण्यतो'रित्यादौ सावकाशायाः स्थानेन्तरतमपरिभाषाया वृद्धिविधौ चरितार्थयाप्युरण्रपर इत्यनया गुणप्रसङ्गे रपरत्वेन बाध्यत्वात् । तस्माद्द्वितीयपक्षे गुणवृद्ध्योर्न कश्चिद्दोष इति स्थितम् । उदात्तादिषु दोषस्तु स्यादेव । तथा प्रतिपदोक्तेष्वित्वादिष्वपि । तृतीये तूदात्तादिषु न दोषः । तत्तद्विधिभिरन्तरतमपरिभाषासंस्कृतैर्ऋवर्णस्यैव विधानात् । किरतीत्यादावपि न दोषः । गुणवृद्ध्योस्तु दोष एव । तथाहि–आन्तर्यतो मात्रिकस्य मात्रिके गुणे रपरत्वे च कर्त्तेत्यादि यद्यपि सिद्ध्यति, तथापि तरितेत्यादावेङेव स्यात् तथा अविशेषाद्वृद्धित्रयेपि प्रवृत्ते अकारस्याऽण्त्वाद्रपरत्वे कृते कारकस्तारक इत्यादि यद्यपि सिद्ध्यति तथापि कायकस्तावक इत्याद्यनिष्टमप्यापद्यते । यत्तु पूर्वं सूत्रे भाष्यकारैरिमं पक्षमाश्रित्य समाहितम्-अनान्तर्यमेवैतयोरान्तर्यमिति । यच्च तत्रैव वार्त्तिककारैरुक्तं 'सम्प्रयोगो वा नष्टाश्वदग्धरथव'दिति । तदुभयमपि पाक्षिकं बोध्यम् । तथाहि–यदा ऋत्वजात्यवच्छिन्नस्य कोऽन्तरतम इति परीक्ष्यते, अत्वजात्यवच्छिन्नश्च कस्येति तदाऽनुरूपप्रतिसम्बन्धिराहित्येनैव धर्मेणैतयोरान्तर्यम् । न ह्यान्तर्यं चतुर्द्धेति मुनित्रयोक्तिरस्ति, प्रत्युत सोष्मणः सोष्माण इति भाष्याद्वृत्तेश्चाऽनियम एव लभ्यते । एवं च नष्टाश्वदग्धरथन्यायोपि जात्यवच्छेदेन परीक्षायामेव । व्यक्तिपुरस्कारेण परीक्षायां तूक्तरीत्या दुष्टोऽयं पक्षः । तथा चाऽत्र सूत्रे वार्त्तिकम्–य उःस्थाने ऽण् स रपर इति चेद्गुणवृद्ध्योरवर्णाप्रतिपत्तिरिति । किञ्चाऽस्मिन्पक्षे क रेफपरत्वं, क्व वा लकारपरत्वमिति व्यवस्थापि दुरुपपादा स्यात् । स्वतन्त्रः कर्त्तेति निर्देशान्न विनिमयो ग्रोयङ्यन्त्रिविभाषेत्यारम्भाच्च न विकल्प इति समर्थनेऽपि प्रतिपत्तिगौरवं स्यादेव । रेफस्य पूर्वान्ततां साधयितुमाद्यन्तावविति सूत्रात्समासैकदेशभूतमन्तग्रहणमनुवर्त्त्यं तस्य रपर इत्यन्यपदार्थविशेषणीभूतेन रेफान्वयश्च वाच्य इति महान्क्लेशः । चतुर्थपक्षे तु नैतदुपयुज्यत इति वक्ष्यामः । तस्मान्निर्दोषत्वाच्चतुर्थपक्ष एवाश्रितः । स चेत्थमुपपादनीयः–स्थानेशब्दद्वयमिहानुवर्त्तते, तत्रैकमुःस्थाने यो ऽणित्यनुवादेपि स्थानसम्बन्धलाभाय । द्वितीयं तु प्रसङ्गावस्थायामेव रपरो भवतीति कालविधानार्थम् । स्थानेन्तरतमसूत्रे स्थानशब्दस्य ताल्वादिपरत्वेपि शब्दाधिकाराश्रयणादिह प्रसङ्गपरत्वं बोध्यम् । एवं च गुणवृद्ध्योः प्राप्त्यवस्थायामेवाऽणो रपराः सम्पन्ना इति प्रमाणतोन्तरतमावेङवैचौ बाधित्वा स्थानतोन्तरतमोऽणेव भवतीति न कश्चिद्दोषः । 'एवमुदात्तादिविधिष्वप्यन्तरतमत्वादृकारो भवति, न तु अर् इर् इत्यवधेयम् । न चैवं कर्त्तेत्यादावनेकाल्त्वात्सर्वादेशप्रसङ्गः । आनुपूर्व्येण सिद्धत्वात् । तथाहि–ऋस्थानित्वमुपजीव्य प्रवृत्तं रपरत्वं सर्वादेशतां नापादयति । उपजीव्यविरोधात् । तथा च पूर्वसूत्रे वार्तिकं–**सर्वादेशप्रसङ्गस्त्वनेकाल्त्वात् । न वानेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्याऽविघात इति ।** अण्ग्रहणं किम् ? । रीङ्रिङादीनां रपरत्वं मा भूत् । मात्रीयति । क्रियते । तथा ढकि लोपोपि रपरः स्यात् । एवं च सूत्रवैयर्थ्यापत्तौ सामर्थ्यादनेनालोन्त्यविधिं बाधित्वा सर्वादेशः स्यात् । तथा होतापोताराविल्यत्रानङोपि रपरत्वे संयोगान्तलोपे च कृते तस्याऽसिद्धत्वान्नलोपो न स्यादिति दिक् । अथ यो रिङादिष्वण् स रपरः कुतो नेति चेन्न । अनादेशत्वात् । आदेशत्वं हि समुदाये विश्रान्तम् । न चैवं कृष्णर्द्धिरित्यादौ रपरत्वं न स्यात्पूर्वपरसमुदायस्य स्थानित्वादिति वाच्यम् । पूर्वपरयोरिति द्विवचननिर्देशेन सहितयोरवयवयोरेव स्थानित्वावगमात् । अत एव द्वयोः स्थानिनोर्भिन्नादिषु नत्ववद्द्वावादेशौ मा भूतामिति तत्रैकग्रहणं कृतम् । तस्मादृकारस्यापि स्थानित्वमस्त्येव । तदुक्तं–'यो ह्युभयोः स्थाने भवति लभते ऽसावन्यतरतो व्यपदेश'मिति । तस्मादेकादेशेपि रपरत्वं भवतीति स्थितम् । स्यादेतत्–उक्तरीत्या ऋत उदित्युकारादेशस्यापि रपरत्वं स्यात् । तथा च विभक्तिसकारस्य रुत्वे कृते पूर्वस्य रोरीति लोपे ढ्लोपइति दीर्घेण भातूः पितूरिति प्राप्नोतीति चेत् । मैवम् । रुत्वस्याऽसिद्धत्वेन रात्सस्येति सकारलोपे रेफस्य विसर्गेण रूपसिद्धेः । नन्वेवं मातुःकार्यमित्यत्र षत्वं स्यात् । 'इदुदुपधस्य चाप्रत्ययस्ये'ति सूत्रात् । न चायं प्रत्ययविसर्जनीय एवेति वाच्यम् । अकारस्य प्रत्ययावयवत्वेप्यप्रत्ययतया तदादेशस्य सुतरामतथात्वादिति चेत् । उच्यते । 'ऋत उ'दित्येकादेशस्य परादिग्रहणेन ग्रहणादस्ति तावत्सान्तस्य प्रत्ययसञ्ज्ञा, सकारे लुप्ते त्ववशिष्टस्यैव प्रत्ययसञ्ज्ञा । एकदेशविकृतस्योपसङ्ख्यानात् । 'स्थानिवदादेश' इत्यत्रादेशग्रहणाद्वा । अत एव यङो यकारे लुप्ते अकारस्य प्रत्ययसञ्ज्ञेत्युक्तम् तथा चाऽप्रत्ययस्येति षत्वनिषेधः सिद्धः । न चैवं प्रत्ययावयवस्थानिकत्वेपि प्रत्ययस्थानिकत्वाऽभावात् षत्वं स्यादेवेति वाच्यम् । अप्रत्ययस्येत्यनुवादे परिभाषानुपस्थानेन स्थानेयोगस्य दुर्लभत्वात् । अवयवावयविभावस्य षष्ठ्यर्थत्वसम्भवात् । नन्वप्रत्ययस्येति पर्युदासः, तथा च पूर्वान्तत्वेनैकादेशग्रहणात्षत्वं स्यादेव । किञ्च प्रसज्यप्रतिषेधपक्षेपि सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वात् । अप्रत्ययो यो विसर्गस्तस्य षत्वं स्यादिति वाक्यार्थः । तथा चाग्निःकरोतीत्यादौ निबद्धावेन विसर्गस्य प्रत्ययत्वान्मा भूत् षत्वम्, मातुःकार्यमित्यादौ तु स्यादेवेति चेत् । इहेदं तत्त्वम् । कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठो ज्ञापकएकादेशशास्त्रेण निर्वृत्तात्परस्य षत्वं न स्यादिति । यद्वा प्रसज्यप्रतिषेधवैयधिकरण्यान्वयावेव ज्ञाप्येते । यत्तु भाष्यं–'लुप्यते प्रत्ययो रात्सस्ये'ति । यच्च कैयटकृतं तद्व्याख्यानम्–'उत्वे कृतेऽवशिष्टः सकार एव प्रत्ययसञ्ज्ञः स तु लुप्त' इति । तदुभयमपि चिन्त्यम् । इह

सिद्धं तु प्रसङ्गे रपरत्वादिति पक्षे यद्यप्यराराादिरूपेण विधानादभक्तत्वादिशङ्कैव नास्ति तथापि सम्प्रयोगो वेति पूर्वसूत्रोक्तरीत्या तृतीयपक्षमाश्रित्य भाष्ये पक्षत्रयं चिन्तितम्। तत्राऽभक्तत्वपक्षे परादित्वपक्षे च वव्रे इत्यादावुरदत्वे रपरत्वे च कृते हलादिः शेषेण रेफो न निवर्त्तेत। अभ्यासावयवस्यानादेर्हल एव तेन निवर्त्तनात्। तस्मादन्तग्रहणमनुवर्त्य पूर्वान्तपक्ष एवेह स्थापित इति संक्षेपः॥

**अलोन्त्यस्य**। स्थानषष्ठीनिर्दिष्टस्य यदुच्यते तत्तदन्त्यस्याऽलः स्थाने बोध्यम्। त्यदादीनामः। सः। यः। स्थानषष्ठीति किम्। आर्द्धधातुकस्येट् तृच ऋकारात्पूर्वो मा भूत्। इदं च षष्ठीस्थानेयोगेति सूत्रस्यानुवृत्तेर्लभ्यते। अल इति किम्। पदस्येत्यधिकृत्य विधीयमानं वसुस्रंस्विति दत्वं परमानडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत्। एतेनाऽल इति जसन्तमाश्रित्याऽलात्मका आदेशा अन्त्यस्य स्युरिति व्याचक्षाणाः परास्ताः। अन्त्यस्य पदस्यापि प्रसङ्गात्। किं चैवं लाघवार्थमलन्त्यस्येत्येव सूत्रयेत्। अपि चाऽरुर्मनश्चक्षुश्चेतोरहोरजसां लोपः पादशतस्य सङ्ख्यादेरिति लोपो ढकि लोपश्च सर्वादेशः स्यात्। ततश्च विरजीकरोतीत्यादि न सिध्येत्। यत्तु 'अल' इति जसन्तमिति पक्षे अनेकाल्शित्सर्वस्येति सूत्रे अनेकाल्ग्रहणं न कर्त्तव्यमिति लाघवोपवर्णनं, तदपि न, षष्ठीति पक्षेपि ङिच्चेत्यत्र ङिदेवानेऽकाल् अन्त्यस्य स्यात्, न तु अङिदपीति नियमाश्रयणेनानेकाल्ग्रहणप्रत्याख्यानसम्भवात्। वस्तुतस्तु पक्षद्वयेप्यनेकाल्ग्रहणं कर्त्तव्यमेव। अन्यथाऽतो भिस ऐसित्यादिपञ्चमीनिर्देशेष्वनेकाल्प्यादेशः परस्यादेः स्यात्। सत्यनेकाल्ग्रहणे परत्वात्सर्वादेशः। अत एव तस्मादित्युत्तरस्यादेरिति न सूत्रितम्। तथाहि—अलोन्त्यस्येत्यस्य द्वावपवादौ। आदेः परस्य, अनेकाल्शित्सर्वस्येति। तत्र प्रथमस्यावकाशः ईदासः, बह्वोर्लोप इति। आसीनः, भूयान्। द्वितीयस्यावकाशः—अस्तेर्भूरित्यादि। 'अतो भिस' इत्यादेः परत्वात्सर्वादेशत्वे सिद्धं—रामैरित्यादि। न चादेः परस्येत्यत्राऽल इति जसन्तमनुवर्त्य रामैरित्यादि साधनीयमिति वाच्यम्। तथा सति भूयान् भूमेत्याद्यसिद्धयापत्तेः। तदेवं कार्यस्यान्त्येल्यनुसंहारो व्याख्यातः। ङिच्चेत्याद्यग्रिमसन्दर्भानुगुणत्वात्। यद्वा षष्ठ्या एवोऽयमनुसंहारः। या स्थानेयोगा षष्ठी सान्त्यस्याऽलो बोध्येति। अत्र पक्षे ङिच्चेत्यस्यायमर्थः, यत्र ङिदादेशो विधीयते तत्र या षष्ठी सा अन्त्यस्याऽल इति। एवमग्रेपि॥

**ङिच्च**। ङिदनेकाल्प्यन्त्यस्य स्यात्। दध्ना। दध्ने। अनन्यार्थङित्त्वेष्वनङादिषु चरितार्थमिदं तातङि परेणानेकाल्शित्सर्वस्येत्यनेन बाध्यते। ननूत्सर्गापवादयोरयुक्तो विप्रतिषेध इति चेत्। सत्यम्। सर्वादेशेपि तातङि गुणवृद्धिनिषेधरूपं प्रयोजनं सम्भाव्यते। तावता च किञ्चिद्विलम्बेन प्रवृत्तोऽयमपवादोप्यस्मिन्विषये उत्सर्गेण समकक्षतामापन्न इति युक्तो विप्रतिषेधः। यद्वा एरुरित्यस्यानन्तरन्तिह्योस्तादिति वक्तव्ये ङित्करणं गुणवृद्धिप्रतिषेधार्थमेवेति विप्रतिषेधोपपत्तिः। अस्तु वा विनापि विप्रतिषेधं सर्वादेशः। प्रदर्शितस्य गुणवृद्धिप्रतिषेधार्थत्वस्य सर्वादेशतामन्तरेणानुपपत्तेः॥ [ **अलोऽन्त्यस्य** ]॥

**आदेः परस्य**। परस्य यद्विधीयते तदादेरलो बोध्यम्। ईदासः। अत्र तस्मादित्युत्तरस्येत्युपतिष्ठते। तेनादेरीकारः। आसीनः॥ [ **आदेः परस्य** ]॥

**अनेकाल्शित्सर्वस्य**। अनेकालादेशः शिच्च सर्वस्य स्यात्। अस्तेर्भूः। भवति। इदम इश्। इतः। ङिच्चेति नियमात्सिद्धेऽनेकाल्ग्रहणमपवादविप्रतिषेधार्थमित्युक्तम्। यत्तु **वृत्तिकारै**र्जश्शसोः शिरिति शित उदाहरणं दत्तम्। तच्चिन्त्यम्। सर्वादेशतां विना तत्र शित्त्वस्यैवाऽभावात्। सर्वादेशतायाश्चानुपूर्व्यादनेकाल्त्वेनैव णल्डादेशादिष्विव सिद्धत्वात्। तथाहि—णल्डाशिप्रभृतयो यदा सर्वादेशास्तदा प्रत्ययसञ्ज्ञाः। ततः प्रत्ययादित्वप्रयुक्ता इत्सञ्ज्ञा। ततो लोपः। तत एकाल्त्वे सत्यपि न सर्वादेशत्वक्षतिः। उपजीव्यविरोधापत्तेः। अत एव हि कर्तेत्यादौ न सर्वादेशतेत्युक्तम्। शकारेणानुबन्धेन इश्प्रभृतीनामनेकाल्त्वादेव सिद्धे शिद्ग्रहणं नाऽनुबन्धकृतमनेकाल्त्वमिति ज्ञापनार्थम्। तेन दिव उत् अर्वणस्त्रसावित्यादेर्न सर्वादेशतेति बोध्यम्। ननु कथं ज्ञापकता, 'घ्वसोरेद्धावभ्यासलोपश्चे'त्येतदर्थतया, शिद्ग्रहणस्य चरितार्थत्वात्। तत्र हि 'लोपश्' इति छिद्यते, संज्ञायां च कृतं शित्त्वं तत्रानुपयुक्तं सत्सञ्ज्ञिनि फलति, डुमुटश्चित्ववदिति सिद्धान्त इति चेत्। सत्यम्। 'अनेकान्ता' अनुबन्धा'इति पक्षे 'नानुबन्धकृतमनेकाल्त्व'मित्यस्य प्रयोजनाऽभावात्तदभिप्रायको लोपशितिच्छेद इति सिद्धान्तः। 'एकान्ता' इति पक्षे तूक्तरीत्या ज्ञापकमावश्यकम्। 'घ्वसो'रित्यत्र तु 'लोप' इत्येव छेदः। 'लोपो यी'ति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशः। वार्त्तिकमते तु नाऽनर्थकेलोन्त्यविधिरित्येव सिद्धम्। न चानभ्यासविकारेष्विति पर्युदासस्याऽयं विषयः, लोपस्य विकारत्वाऽभावात्। रूपान्तरापत्तिर्हि **विकारः**। यथा भ्रूनामित् अर्त्तिपिपर्त्योश्चेत्यादिः। अत एव **परपशायां** लोपो विकारात्पृथगुपात्तः—'लोपागमवर्णविकारज्ञो हि वेदं परिपालयिष्यती'ति। उक्तं च पृषोदरादीनीति सूत्रे **कैयटेन** 'द्वौ चापरौ वर्णविकारनाशा'विति। वस्तुतस्तूपदेशावस्थायामेवान्तरङ्गतयेत्संज्ञा। अत एवोच्चरितप्रध्वंसिनोऽनुबन्धाः स्मर्यमाणाः सन्त एव कार्यं निर्वाहयन्तीति सिद्धान्तः। इदं चोत्तरसूत्रे एव कैयटे स्फुटम्। तथा च दिव उत् अर्वणस्त्रित्यादेरेकाल्त्वादेकान्तपक्षेपि न सर्वादेशता प्रसज्यते। एवं च नानुबन्धकृतमनेकाल्त्वमितिज्ञापनं व्यर्थम्। शिद्ग्रहणं च सुतराम्। इदम इश्, इदंकिमोरीश्कीतीशोशोस्तु शकारोच्चारणसामर्थ्यात्सर्वादेशताया-

माङ् नलोपः । यत्तु कृतेपि सर्वादेशे प्रयोजनाऽभावाच्छकारस्येत्सञ्ज्ञा न स्यादिति **हरदत्तेनोक्तम्** । तन्न । लोपस्यैव प्रयोजनत्वात् । न चैवमुच्चारणवैयर्थ्यं, सर्वादेशत्वसम्पादनेन कृतार्थत्वादिति दिक् । तस्मादिह सूत्रभाष्यकृतोरभिप्रायश्चिन्त्यः । इह नाऽनेकाल्शिदिति पठित्वा अन्त्यस्यादेरिति चानुवर्त्यानुसंहारद्वयनिषेधे सर्वस्येति शक्यमकर्तुम् ॥

इति **श्री**भट्टोजिदीक्षितविरचिते श्री**शब्दकौस्तुभे** प्रथमाध्यायस्य **प्रथमे** पादे **सप्तममा**ह्निकम् ॥

---

**स्थानिवदादेशोनल्विधौ** । आदेशः स्थानिवत्कार्यं लभते प्रवर्त्तयति च । तृतीयान्ताद्वतिना स्थानिना तुल्यं वर्त्ततेइति वाक्यार्थलाभात् । यद्रूपवैकल्यादुपदेशाऽवृत्तौ सत्यामतिदेशो मृग्यते तच्चेद्रूपं स्थान्यलोऽसाधारणं न भवेत् । आवधिषोष्ट । अत्र हन्तेर्विधीयमानमात्मनेपदमतिदेशाद्वधेरपि भवति । 'आङो यमहन' इत्यत्र हि अल्नाश्रीयते । 'रामाये' त्यादौ 'सुपिचे'ति दीर्घे कर्त्तव्ये यद्यपि यञादौ इत्यलाश्रीयते तथापि न तत्र तद्विरहप्रयुक्ता सुपिचेत्यस्याप्रवृत्तिः: यादेशस्य यञादित्वात् । सुप्त्ववैकल्यात्तूपदेशस्याऽप्रवृत्तिः । सुप्त्वञ्चेह यद्यपि 'ए' इत्यस्मिन्नलि वर्त्तते तथापि न तदलोऽसाधारणम् । भ्यामादौ समुदाये विश्रान्तेः । इदं च कार्यकालपक्षाश्रयेणोक्तम् । यथोद्देशपक्षे तु सुप्संज्ञाया अपि शास्त्रीयत्वात्सैवातिदिश्यते । तत उपदेशेनैव दीर्घ इति न किञ्चित्कष्टम् । एतेनाऽरुदितामरुदितमित्यादाविडागमोपि व्याख्यातः । तत्रापि सार्वधातुकसंज्ञातिदेशसम्भवादिति दिक् । अत्र **धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः प्रयोजनमिति** वृत्तिकृतः । उदाहरणदिक् चेयं, न तु परिगणनमिति भ्रमितव्यम् । च्लेः सिजित्यादीनामसङ्ग्रहापत्तेः । क्रमेणोदाहरणानि—**अस्तेर्भूः** । आर्द्धधातुके विवक्षिते । अत एवाऽङ्गात्पृथक् धातूपादानम् । **धातुत्वाद्धा**तुप्रत्ययाः । भव्यम् । केन काभ्यां कैः । **अङ्गत्वा**दिनादेशदीर्घैस्भावाः । **कृत्**—प्रकृत्य । कृत्वा । ह्रस्वस्य पिति कृतीति तुक् । अद्यतनम् । तद्धितत्वात्तदन्तत्वप्रयुक्ता प्रातिपदिकसंज्ञा । कदश्वः । स्थानिवद्भावेनाव्ययत्वादव्ययपूर्वपदप्रकृतिस्वर इत्याहुः । तच्चिन्त्यम् । स्थानेन्तरतमपरिभाषया गतार्थत्वात् । 'अधोऽध' इति तूदाहरणमाष्टमिकद्वित्वस्य स्थाने द्विर्वचनरूपत्वात्संभाव्यते, किन्तु तत्रापि फलं दुर्वचम् । तस्मादधोऽधःकाम इत्युदाहार्यम् । अतःकृकमीति प्राप्तस्य सत्वस्याव्ययत्वात्पर्युदासः । यत्तु **वृत्तौ** प्रस्तुत्येत्यव्ययादेशोदाहरणम् । तच्चिन्त्यम् । क्त्वामात्रस्याऽनव्ययत्वात् । तदन्तविधेः सदैकवाक्यतया सिद्धान्तितत्वात् । न च जहत्स्वार्थायां वृत्तौ क्त्व आनर्थक्यात्सर्वे सर्वपदादेशा इत्यभिप्रायेणेदमिति वाच्यम् । 'ह्रस्वस्य पिति कृती'ति तुगभावापत्तेरिति दिक् । **सुप्**—रामाय । **तिङ्**—अपचताम् । तिङन्तत्वात्पदत्वम् । वः नः । पदत्वाद्रुत्वादि । नन्वेवमधोध इत्यस्यापि पदादेशत्वादेव गतार्थतेति चेत्सत्यम्, गोबलीवर्दन्यायेनाव्ययग्रहणादिति दिक् ।

इह काभ्यामित्यादावादेशः कार्यं लभते, केन कैरित्यादौ तु परस्प प्रवर्तयतीति विवेकः । ननु वत्करणं मास्तु, 'स्थान्यादेश' इत्येतावताप्यसंयोगाल्लिट् किदित्यादाविव वत्यर्थलाभात् । यदाहुः—'परत्र परशब्दः प्रयुज्यमानो विनापि वतिं वत्यर्थं गमयती'ति । न च स्थानी आदेशं प्रतिपद्यतइत्येव वाक्यार्थः किं न स्यादिति वाच्यम् । तत्तदादेशविधायकैरेव गतार्थत्वात् । न चादेशः स्थानिरूपमापद्यते । वचनद्वयप्रामाण्याच्च विकल्प इति वाच्यम्, वा लिटीत्यारम्भात् । न च चक्षिङः ख्याञादेशः स्थानीति वचनद्वयप्रामाण्यात्सर्वत्र विकल्पापत्तौ लिट्येवेति नियमार्थं तत्स्यादिति वाच्यम् । एवमपि विभाषा लुङ्लृङोरित्याद्यप्राप्तविभासु वाग्रहणवैफल्यापत्तेः । अस्तिभूभ्यां रूपद्वयसिद्धावस्तेर्भूरित्यस्य वैयर्थ्यापत्तेश्च । अत्राहुः—वत्करणाऽभावे स्थानी आदेशस्य संज्ञा स्यात् । प्रायेण ह्यस्मिन्पादे संज्ञासूत्राण्येवारभ्यन्ते । ततश्चाङोयमहन इत्यात्मनेपदं वधेरेव स्यान्न तु हन्तेः । न च स्वंरूपमिति हन्तेरपि ग्रहणम् । 'अशब्दसंज्ञे'ति निषेधात् । न च स्थानिनः संज्ञात्वे 'सिद्धं धर्मिण'मित्यादिन्यायबाधः । 'अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोग'इति पक्षे संज्ञाया एवोद्देश्यकोटिनिवेशात् । न चैवमाङो वधियमइत्येव ब्रूयादिति वाच्यम् । 'वध हिंसाया'मिति भौवादिकस्यापि ग्रहणापत्तेः । न चैवमाङो वधयम इति पठ्यताम् । अकारस्य विवक्षितत्वाच्च न भौवादिकेऽतिप्रसङ्ग इति वाच्यम् । सकलहन्त्यादेशसङ्ग्रहार्थमाङो यमहन इत्यस्यैव वाच्यत्वात् । तथा चाऽऽवधिष्टवदाजघ्ने इत्यत्राप्यात्मनेपदं सिद्धम् । तथाहि—हन्तेर्लिटि लसामान्यापेक्षत्वादन्तरङ्गत्वात्तिबादिषु कृतेषु परत्वनित्यत्वाभ्यां शेषात्कर्त्तरीति बाधित्वा लिटि धातो'रिति द्विःप्रयोगे ऽभ्यासस्य चुत्वे ऽभ्यासात्परस्य घत्वे एकदेशविकाराऽसम्भवेन समुदायस्य समुदायादेशत्वाद्धन्त्यादेशत्वं, ततो वधिना सह तुल्ययोगक्षेमतैवेति दिक् । अस्तु वा स्थानिन आदेशः,संज्ञा,तथाप्यनिष्टं तुल्यमेव । तथाहि 'अस्यतिवक्ती'त्यत्र ख्यातिपदेन चक्षिङेव गृह्यते. कृत्रिमत्वात् । तथा च 'समचक्षिष्टे'त्यत्राङ् स्यात्, आख्यते'त्यत्र च न स्यात् । न चैवं 'चक्षिङ' इत्येव ब्रूयात् । अनुबन्धनिर्देशेनापि यङ्लुग्वारणसम्भवादिति वाच्यम् । एवमपि गाङ्कुटादिसूत्रे गाङा इङाङोर्ग्रहणापत्तेः । इङित्यवचनसामर्थ्याद्द्युभयगतिः स्यात् । 'गमेरिट्परस्मैपदेष्वि'त्यत्र त्विणिङिकामेव ग्रहणं स्यात् । तस्मात्कर्त्तव्यमेव वत्करणम् । नन्वेवं वत्करणाऽभावाधीनलाघवानुरोधात्संज्ञाप्रकरणादन्यत्रैव स्थानिवद्भावप्रकरणं क्रियतामिति चेन्न,। तथा सत्यादेशग्रहणं विना वाक्यार्थोऽनिर्वाहे बहुगौरवापत्तेः । सिद्धान्ते त्वादेशग्रहणमतिरिच्यमानमानुमानिकसंग्रहार्थं

भवतीति तद्बलेनैकदेशविकृतस्योपसंख्यानमिति वार्त्तिकं प्रत्याख्यास्यते। अपि च काममतिदिश्यतां वेति वक्ष्यमाणमपि वत्करणायत्तमिति दिक्। **स्यादेतत्**–यदि संज्ञाप्रकरणे वत्करणं विना अतिदेशाऽलाभस्तर्हि कित् ङिदित्यादौ का गतिरिति चेत्?। उच्यते। किदिति न संज्ञा, 'न क्त्वा से'डिति ज्ञापकात्। न हि क्त्वः कित्संज्ञा प्राप्ता या निषिध्येत। ननु 'मृडमृदे'ति प्राप्ता सा निषिध्यतां, वचनद्वयसार्थक्याय च विकल्पोऽस्त्विति चेन्न। 'मृडमृदे'त्यत्रैव वाग्रहणस्य सम्भवात्। किञ्चैवं 'निष्ठा शी'ङ्स्यादि व्यर्थं स्यात्। न हि शीङादिभ्यो निष्ठायाः केन चित्संज्ञा प्राप्ता। एवं ङिदित्यतिदेशः, कित्साहचर्यात्। किं च ङिदित्यस्य संज्ञात्वे ग्रहिज्यादिसूत्रे ऽस्यैव ग्रहणं स्यात् कृत्रिमत्वात्। तथा च 'न वश' इति सूत्रं व्यर्थं स्यात। वावश्यतइत्यत्र संप्रसारणाऽप्राप्तेः। किं च विङति चेत्यत्राऽस्याऽग्रहणं स्यात, संज्ञास्वरूपानुच्चारणात। तथा च 'गाङ्कुटादी'त्यत्र कुटादिग्रहणं व्यर्थं स्यात्। 'बहुगणे'त्यत्र तु संख्येत्यतिदेशः। अन्यथा टिघुभादिवदेकाक्षराया एव संज्ञायाः कर्त्तव्यतापत्तेः। 'किकिनौ लिट्च्चे'त्यादि तु न संज्ञाप्रकरणं, तेन लिड्वदित्यतिदेशो निर्बाध इति दिक्। अथादेशग्रहणं किमर्थम्?। स्थानिवदित्येतावतैव सम्बन्धिशब्दमहिम्ना तल्लाभात्। यथा 'पितृवदधीते' इत्युक्ते 'पुत्र' इति गम्यते इति चेत्। सत्यम्। द्विविध आदेशः,–अस्तेर्भूरित्यादिः **प्रत्यक्षः**। तेस्तुरित्यादिस्त्वानुमानिकः। तत्र' हीकारेणेकारान्तः स्थान्यनुमीयते। उकारेण चोकारान्त आदेशः। तथा च तेस्तुरिति फलितार्थः। तत्राऽसत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्नानुमानिकस्य। आदेशग्रहणसामर्थ्यात्तूभयपरिग्रहः। तेन पचत्वित्यादेस्तिङन्तत्वात्पदसंज्ञा सिद्ध्यति। नन्वेरुरित्यादि यथाश्रुतमस्तु। एकदेशविकृतस्यानन्यत्वाच्च पदत्वं भविष्यतीति चेन्न। अर्थवत्येव स्थान्यादेशभावविश्रान्तेर्वाच्यत्वात्तस्यैव प्रसङ्गसम्भवात्। तथाहि–'षष्ठीस्थाने योगे'त्युक्तम्। स्थानं च प्रसङ्गः। स चाऽर्थवतः। अर्थप्रत्यायनार्थं शब्दप्रयोगात्। यद्यपि च्लेः सिजादावसम्भवीदं, तथापि सति सम्भवेऽर्थप्रयुक्तप्रसङ्ग एव ग्राह्य इत्यादेशग्रहणेनैव ज्ञाप्यते। उक्तञ्च–'**सर्वे सर्वं पदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते**'। पदमिहाऽर्थवत्,–पद्यते ऽनेनेति व्युत्पत्तेः। यद्यपि सर्वविकारे सुतरां नित्यत्वानुपपत्तिः। तथापीह विकार एव नास्तीति तात्पर्यम्। तथा च वार्त्तिकं **कार्यविपरिणामाद्वेति**। कार्यमिह ज्ञानं, योग्यताबलात्। तथा च ज्ञाननिष्ठमुत्पादविनाशादिकं विषये आरोप्यते इति भावः। नन्वेवं बुद्धिविपरिणाममात्रस्य स्थान्यादेशभावत्वेऽपवादेऽप्युत्सर्गकृतं स्यात्। तथाहि—क्तप्रत्ययान्तादप्यणन्तत्वप्रयुक्तो ङीप्स्यात्। अत्राह **वार्त्तिककारः–सिद्धन्तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनादिति**। षष्ठीस्थानेयोगेत्यनुवृत्तेरिति भावः। न चाऽपवादः षष्ठीनिर्दिष्टस्य स्थाने विधीयते। नाभि नभञ्चेत्यादौ तु षष्ठ्याः स्थाने प्रथमा बोध्या। विश्रवणरवणेत्यादीनि तु शब्दान्तराणि प्रत्ययविषयाणि बोध्यानि। विश्रवःशब्दात्तु प्रत्ययो न भवति,–अनभिधानादिति भावः। तथा च विदूराञ्ञ्य इति सूत्रे भाष्यम्–'**वालवायो विदूरं च प्रकृत्यन्तरमेव वा। न वै तत्रेति च ब्रूयाज्जित्वरीवदुपाचरेत्।** इति। अस्मिन्पक्षे 'षष्ठीनिर्दिष्टस्य स्थाने आदेशा विधीयन्त'इति वृद्धिसूत्रस्थं भाष्यं यथाश्रुतमेवेति निर्बाधम्। यत्तु स्थान्यर्थाभिधानसमर्थस्यैवादेशतेत्येवंपरतया कैयटेन भङ्क्त्वा व्याख्यातम्, तदत्रत्यपक्षान्तराभिप्रायेणेत्यवधेयम्। अथ वा श्यनः शित्करणं ज्ञापकम्–अपवादे उत्सर्गकृतं नेति। न च पित्त्वनिवृत्त्यर्थं तदिति वाच्यम्। नित्त्वादेव तत्सिद्धेः। नित्त्वं ह्याद्युदात्तार्थम्। श्यनः पित्त्वे तु पित्त्वादनुदात्तत्वे लसार्वधातुकानुदात्तत्वे च धातुस्वरेणैव सिद्धौ किं नित्त्वेन। न चानेकाच्सु विशेषः। दिवादौ तदभावात्। वावृतु वर्त्तनइत्यस्तीति चेन्न। वाशब्दस्य विकल्पार्थत्वात्। न च भ्वादिपाठेन सिद्धेस्तद्वैयर्थ्यम्। भ्वादिपाठस्य वृद्भ्यः स्यसनोरित्याद्यन्तर्गणकार्ये उपक्षीणत्वात्। नन्वेवं 'ततो वावृत्यमाना सा रामशालां न्यविक्षते'ति **भट्टि**प्रयोगानुपपत्तिरिति चेन्न, तत्र वाशब्दस्येवार्थतया कामयमानेव न तु तथा, किं तु छलनार्थमागतेत्यर्थात्। अत्र **कैयटः**–ताच्छील्यादिविषये चानशि श्यनो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यादिति। तत्र हि लसार्वधातुकाभावादनुदात्ताऽप्राप्त्या चित इत्यन्तोदात्तत्वमेव प्राप्तमिष्टं च। तत्राऽनिष्टार्थमेव नित्त्वं किन्न स्यादिति तस्याशयः। न त्वेतद्युक्तम्। अन्यत्र विकरणेभ्य इति पर्युदासाच्छ्यन्स्वरस्य दुर्बलत्वात्। न च नित्त्वसामर्थ्यात्तद्बाधः, लसार्वधातुके चरितार्थत्वात्। तत्र स्थानिवद्भावलब्धेन पित्त्वेन गतार्थतेति चेन्न। इह नित्त्वेनाऽतिदेशपर्युदासयोरन्यतरस्मिन्नवश्यंबाध्येऽतिदेशबाधस्यैव न्याय्यत्वात्। 'पूर्वान्बाधन्ते नोत्तरा'निति न्यायाच्च। यत्तु कैश्चिच्चानशन्तस्याद्युदात्तत्वमिष्टमित्येवंपरतया कैयटग्रन्थं व्याख्याय विकरणेभ्योऽन्यत्रेति पर्युदासस्तु यत्र विकरणः स्वरभाक्तद्विषयः, इह तु [विकरणो न स्वरभाक्, किन्तु] विकरणान्तमेव स्वरभाक्। सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति सिद्धान्तादित्युक्तम्। तदेतन्निर्मूलम्। घुसंज्ञासूत्रशेषस्थेन खश्सूत्रस्थेन च भाष्येण विरुद्धं चेत्युपेक्ष्यम्। किञ्चातोनुपसर्गे क इति कापवादस्य गापोष्टगिति टकः कित्करणं ज्ञापकम्–नापवादे उत्सर्गकृतं भवतीति।

अनल्विधाविति किम्?। तेन तस्मात्तस्य तस्मिंश्च विधौ मा भूत्। तत्राऽला विधौ यथा–व्यूढोरस्केन। अत्र सोपदादाविति विसर्जनीयस्य स्थाने विहितस्य सकारस्य स्थानिवत्त्वाद्विसर्जनीयस्य अट्सुपदेशादङ्व्यवायइति णत्वं प्राप्तम्।

अलः परस्य विधौ यथा–द्यौः। पन्थाः। सः। अत्र हल्ङ्यादिलोपो न भवति। अलो विधौ यथा–दिव उत्। द्युकामः। लोपो व्योर्वलीति लोपो न भवति। उत्त्वविधानन्त्वहर्विमलद्यु इत्यादौ चरितार्थम्। अल्वि विधौ यथा–यजेः क्तः, इष्टः, क इष्टइत्यत्र सम्प्रसारणस्य स्थानिवत्त्वात्कोयष्टेत्यादाविव हशिचेत्युत्त्वं न भवति। स इष्ट इत्यत्र एतत्तदोः सुलोपो न भवति। 'अनल'इत्युक्तेपि सम्बन्धसामान्ये षष्ठ्या प्रागुक्ताऽनेकविभक्त्यर्थसङ्ग्रहो यद्यपि सम्भवति तथापि विधिशब्दोपादानमप्राधान्येनाप्यल आश्रयणे निषेधार्थम्। तेन 'प्रपठ्य'-त्यादि सिद्धम्। अत्र हि वलादेरित्यप्राधान्येनाऽलाश्रितः, न तु प्राधान्येन। स्यादेतत्–स्थान्यनुबन्धकार्याण्यपि तर्हि निषिध्येरन्। तथा च प्रदीव्येत्यत्र स्थानिवद्भावेन कित्त्वं न लभ्येतेति चेत्। न। 'अनेकान्ता अनुबन्धा' इति पक्षेऽनुबन्धानां स्थान्यल्त्वाऽभावात्। एकान्तपक्षेप्यन्तरङ्गेण लोपेनादेशसम्बन्धात्प्रागेवानुबन्धानामपहारात्। 'न ल्यपी'ति लिङ्गाच्च। यत्तु सेड्ग्रहणं श्लोकमुच्यते तत्पाक्षिकम्। अपिद्वचनसामर्थ्यात्स्थानेन्तरतमपरिभाषया प्राप्तमनुदात्तत्वं न भवतीत्यस्यापि सुवचत्वात्। यद्यपि सामान्यातिदेशे विशेषानतिदेश इति सिद्धान्तः। उपस्थितसामान्यप्रयुक्तधर्मैस्तदाक्षिप्तव्यापकसामान्यधर्मैश्च विध्याकाङ्क्षापूरणे सत्यनुपस्थितस्य विशेषस्य ग्रहणे प्रमाणाऽभावात्। अत एव ब्राह्मणवदस्मिन्क्षत्रिये वर्त्तितव्यमित्युक्ते माठरादिविशेषकार्यं नातिदिश्यते। अत एव चाशंसायां भूतवच्चेत्यत्र भूतसामान्ये विहितयोर्लुङ्लिटोरेवातिदेशो न तु भूतविशेषे विहितयोर्लङ्लिटोरपीति सिद्धान्तः। तथापीह सूत्रे 'न ल्यपी'ति लिङ्गाद्विशेषोप्यतिदिश्यते। किति परतो विहितमित्त्वं निषेद्धुं हि न ल्यपीत्यारभ्यते। कित्त्वञ्च क्त्वाविशेषधर्मः, सेट्के तदभावात्। तेन प्रदीव्येत्यादि सिद्धम्। तस्मान्न ल्यपीत्येव सूत्रं विशेषातिदेशे ऽनुबन्धकार्यातिदेशे चेत्युभयत्रापि ज्ञापकमिति स्थितम्। यत्तु **प्राञ्चः**–अनल्विधाविति निषेधो विशेषातिदेशज्ञापक इति। तच्चिन्त्यम्। व्यूढोरस्केन क इष्ट इत्यादौ विसर्गत्वस्य यण्त्वस्य च व्यापकीभूतयोरट्त्वहश्त्वयोर्निषेधेन चरितार्थत्वात्। यदपि क्त्वादेशे कृत्त्वप्रत्ययत्वाद्यतिदेशमभ्युपेत्य क इष्ट इत्यादौ हस्त्वादिविशेषातिदेशो न प्राप्नोतीति मिश्रैरुक्तम्। तत्र विसर्गत्वयण्त्वयोरट्त्वहश्त्वे कथं विशेषधर्माविति विपश्चित एव विदाङ्कुर्वन्तु। यद्यपि 'तत्स्थानापन्नस्तद्धर्मं लभत'इति न्यायसिद्धम्। अत एव व्रीहिस्थानापन्नेषु नीवारेषु वचनं विनैव व्रीहिधर्मा अवघातादयः क्रियन्ते। तथाहि तेषां प्रकृताऽपूर्वसाधनत्वप्रयुक्ततया युक्तं नीवारादावनुष्ठानम्। 'आङो यमहन' इति हन्तेरात्मनेपदं तु न हिंसाद्यर्थाभिधानप्रयुक्तं येन वधौ भवेत्। किन्तु स्वंरूपमिति वचनात्स्वरूपविशेषप्रयुक्तम्। अत एवाऽतृणेढित्यादौ न भवति। तस्माद्युक्त एवातिदेशारम्भः। स्यादेतत्—मा भून्न्यायेन गतार्थता, ज्ञापकात्तु भविष्यति। तथाहि–युष्मदस्मदोरनादेशइति सूत्रेऽनादेशग्रहणं ज्ञापयति,–'आदेशः स्थानिवत्स्या'दिति। अदोजग्धिरिति सूत्रे'ति किती'त्येव सिद्धे ल्यब्ग्रहणमनल्विधावितीममंशं ज्ञापयति। अप्राधान्येनाप्यलाश्रयणे निषेध इत्यंशं च। तथा च किं सूत्रेणेति ?। उच्यते। उत्तरार्थं तावत्स्थानिवदादेश इति कर्त्तव्यमेव। तस्यैव योगविभागमात्रेणोपपत्तौ सत्यामर्थापत्तिकं वचनं न कल्प्यम्। एवं स्थिते ऽनल्विधावित्ययमप्यंशः स्पष्टप्रतिपत्त्यर्थं क्रियते। उत्तरसूत्रे द्वितीयविधिग्रहणस्यानुवृत्त्यर्थं च। तत्प्रयोजनं तु तत्रैव वक्ष्यते। एतदेव च सकलमभिसन्धायोक्तं भगवता—'आरभ्यमाणेप्यस्मिन्सूत्र'इति। स्यादेतत्—अस्तु सूत्रारम्भः, तथापि कार्यातिदेश एवायमिति कुतः, प्रकारान्तराणामपि सम्भवात्। तथाहि–अतिदेशः षोढा निमित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपातिदेशभेदात्। तत्र निमित्तमशक्यमतिदेष्टुम् ब्राह्मण्यवत्। नहि ब्राह्मणस्याऽग्रभोजनादौ निमित्तभूतं ब्राह्मण्यं वचनशतेनापि क्षत्रिये ऽतिदेष्टुं शक्यते। 'पूर्ववत्सन' इत्यत्रापि प्रकृतिगतं निमित्तं ङित्वादि न सन्नन्ते ऽतिदिश्यते। किं तु प्रकृतिगतमेव तत्सना व्यवधाने सत्यप्यात्मनेपदं प्रवर्त्तयतीत्येतावन्मात्रमतिदिश्यते। एतावतैव च निमित्तातिदेशोयमिति व्यवहारः। न चायं कार्यातिदेश एवास्तामिति वाच्यम्। चिक्रंसते प्रचिक्रंसतइत्यादाविट्प्रसङ्गात्। निमित्तातिदेशपक्षे त्वनुपसर्गः प्रपूर्वश्च क्रमिरेवेह सना व्यवहितोप्यात्मनेपदं प्रवर्त्तितवानिति स्नुक्रमोरनात्मनेपदनिमित्त इति नियमादिण्न भवति। निमित्तं हि तत्र फलोपहितमेव गृह्यते न तु स्वरूपयोग्यतामात्रमिति वक्ष्यामः। **सिद्धं त्वात्मनेपदेन समानपदस्थस्येट् प्रतिषेधादिति** वार्त्तिकरीत्या त्विहापि कार्यातिदेशता सुवचा न्याय्या चेति तत्रैव वक्ष्यते। व्यपदेशातिदेशस्त्वाद्यन्तवदेकस्मिन्नित्येकस्मिन्नप्यादिरन्त इति च व्यपदेशोऽतिदिष्टे तत्तत्सूत्रैरेव कार्याणीति भावः। तथा च **प्राञ्चः–आद्यन्तवद्व्यपदेशो निमित्तं पूर्ववत्सन** इति। एतच्च निर्मूलमिति तस्मिन्नेव सूत्रे **हरदत्तः**। तस्यायं भावः–कार्यातिदेश एव तत्र युक्तः। सर्वातिदेशानां कार्यार्थतया कार्यस्यैव प्राधान्यात्। अत एव कार्यातिदेशाभ्युपगमे यत्र बाधकावतारस्तत्रैव प्रकारान्तरानुसरणम्। न चाद्यन्तवत्सूत्रे तदस्ति। प्रत्युत व्यपदेशातिदेशपक्षे एव बाधकम्। तथाहि कुरुते कुर्वे इत्यादावन्त्यव्यपदेश आदिव्यपदेशश्चास्तु। तथाप्यन्त्योऽजादिर्यस्येत्येवं रूपस्य बहुव्रीह्यर्थस्याऽभावाट्टिसंज्ञाया अभावे टेरेत्वं न स्यात्। कुर्वीतइत्यादौ दृष्टस्य टेरेत्वाख्यस्य कार्यस्यातिदेशे तु न कश्चिद्दोष इति। **तादात्म्यातिदेशस्तु** भिन्नयोरभेदातिदेशः। सुबामन्त्रिते पराङ्गवत्स्वरइति यथा। तेन 'यच्चे दिवो दुहितर्मर्त्त

भाजन'मित्यादावामन्त्रितस्य चेत्याष्टमिकसूत्रेण पदात्परस्यामन्त्रितस्य क्रियमाणो निघातो दिवो दुहितरिति समुदाये प्रवर्त्तते। **शास्त्रातिदेशस्तु** कर्मवत्कर्मणेत्यत्र पाक्षिको वक्ष्यते। **कार्यातिदेशो** गोतोणिदित्यादिः। **रूपातिदेशस्तु** 'द्विर्वचनेचि' 'तृज्वत् क्रोष्टु'रित्यादिः। तदिह कार्यातिदेश एवेत्यत्र किं विनिगमकमिति चेत्। उच्यते। कार्यस्य प्राधान्यात्तदतिदेश एवायम्। अतिदेशान्तरे बाधकसत्त्वाच्च। तथाहि–निमित्तव्यपदेशातिदेशौ तावत्पाक्षिकावित्युक्तम्। शास्त्रातिदेशोप्येवम्। तादात्म्यातिदेशस्तु द्वयोः सहावस्थितयोः स्यात्। सुबामन्त्रितयोरिव। इह तु स्थानी आदेशेन अपहृत इति तदसम्भवः। रूपातिदेशे त्वादेशविधानं व्यर्थं स्यात्। न च वचनद्वयप्रामाण्याद्विकल्पः। विभाषालुङ्लृङोरिति विकल्पारम्भात्। तस्मात्कार्यातिदेश एवायमिति स्थितम्। यत्तु **न्यासकारेणोक्तं**–'व्यपदेशातिदेशस्संज्ञापक्षे पर्यवसन्नः। स च वत्करणसामर्थ्यादेव न भविष्यती'ति। तत्रेदं वक्तव्यम्–अस्तीह संज्ञापक्षाद्वैषम्यम्। यथाहि–'आङो यमहन' इत्यादौ वधेरेव ग्रहणं स्यान्न तु हन्तेः। तथा केन कस्मादित्यादावङ्गकार्यादीनि न स्युरिति संज्ञापक्षे दोषद्वयम्। न चेदं व्यपदेशातिदेशेऽस्ति। स्वंरूपमिति वचनाद्धि हन्तेर्हन्तिरेव संज्ञा। तद्व्यपदेशस्य वधावप्यतिदेशे ह्यभाभ्यामात्मनेपदं लभ्यते। न तु हन्तेरेव। एवं स्थानिनिष्ठानां धात्वङ्गादिव्यपदेशानामादेशेतिदेशाद्धात्वङ्गादिकार्याण्यपि सुलभान्येव। तस्मात्प्राधान्यात्कार्यातिदेशोयमित्येव तत्त्वम्। अत्र **वार्तिककाराः**–'तस्य दोष' इत्युपक्रम्य–**तयादेशे उभयप्रतिषेधः, ङ्याब्ग्रहणेऽदीर्घः, आहिभुवोरीट्प्रतिषेध** इत्यादि पेठुः। तत्रोभयशब्दे यथा नातिप्रसङ्गस्तथा सर्वादिगणव्याख्यावसरे एवोपपादितम्। ङ्याब्ग्रहणेपि ङी ई आ आविति दीर्घप्रश्लेषादतिखट्वेन अतिखट्वे इत्यादौ नातिप्रसङ्गः। न चैवमप्यतिखट्वायेत्यत्र दोषतादवस्थ्यम्। उपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वात्। न चैवं प्रश्लेषवर्णनवैयर्थ्यम्। अतिखट्व इत्यादावङ्गाधिकारविरहेणावयवाट्टाबन्तात्परत्वमाश्रित्य हल्ङ्यादिलोपापत्तेः। न हि तत्र विहितविशेषणाश्रयणं युक्तम्। 'यः' 'स' इत्यादावतिव्याप्तेर्यासित्यादावव्याप्तेश्चेत्युक्तम्। अत एव सूत्रकारोपि तत्र दीर्घग्रहणं कृतवान्। दीर्घप्रश्लेषस्तु तत्प्रत्याख्यानाय वर्ण्यतइत्यन्यदेतत्। युक्तं चैतत्। वार्तिकमते ऽतिखट्वायेत्यादावङ्गाधिकारबलेन कथंचिन्निर्वाहेपि जरसे नसे पृते इत्यादावतिप्रसङ्गस्य दुर्वारत्वात्। सुतामिच्छन्सुतीरित्यादौ सुलोपापत्तेश्चेति दिक्। अस्तु वा आकारान्तरमपि प्रश्लिष्य तत्सामर्थ्यान्मध्ये ह्रस्वतामापन्नस्य परिहार इति दिक्। आहिभुवोरिति वार्त्तिकन्त्वित्थं **भाष्यकाराः** प्रत्याचख्युः,–आस्थेत्यत्र आहेः स्थानिवद्भावेन प्राप्तोऽपि भुव ईण्न भवति, आहस्थ इति ज्ञापकात। तेन हि झलादौ परे थत्वं विधीयते। न च कृतेपीटि भूतपूर्वगत्या झलादित्वात्थकारोस्त्विति वाच्यम्, एवं हि सत्याथमेव विदध्याल्लाघवात्। तिबादीनां पञ्चानामपि झलादितया णलादीनामपि भूतपूर्वगत्या झलादित्वात्। तस्मादाहस्थ इति ज्ञापकादाहेरीड्विधौ स्थानिवद्भावो नेति स्थितम्। अस्तेर्भूरिति विहितस्य भुवोपि स्थानिवत्त्वनिषेधो न वक्तव्यः। अस्तिसिचोऽपृक्तइति द्विसकारकनिर्देशेन सकारान्तादेवास्तेः परस्येड्विधानादिति। स्यादेतत्–अस् स् इति सकारद्वयनिर्देशे धातुत्वाऽभावात् श्तिबेवानुपपन्नः। पदमध्यप्रविष्टेन सकारेण सिचो विशेषणाऽसम्भवे सिजाश्रयस्य ईटः प्रसङ्गश्च। न चाऽस्तेः सान्तत्वेन विशेषणसामर्थ्यात्सिच्प्रयुक्तोपीण्नेति वाच्यम्। तथापि स्वतन्त्रस्य भवतेरतिप्रसङ्गस्य दुर्वारत्वात्। तथा चाऽर्थभेदाऽभावेपि स्वतन्त्राऽस्वतन्त्राभ्यां भूभ्यां अभूवीत् अभूदिति रूपद्वयापत्तिः। यत्त्वेतद्दोषोपन्यासपूर्वकं माधवाचार्यैरुक्तम्–सिचोल्पाच्कत्वाद्बहुविषयत्वेनाभ्यर्हितत्वाच्च पूर्वनिपाते कर्त्तव्येऽस्तिसिच इति वचनात्तन्त्रादिना विद्यमानात्सिच इत्यर्थो लभ्यते। अत एव श्तिप्प्रयोगोऽपि सार्थकः, अन्यथा सिजस्भ्यामित्येव ब्रूयात्। न चैवमसतावस्यतौ चातिप्रसङ्गः। विकरणव्यवधानेन ताभ्यां परस्याऽपृक्तसार्वधातुकस्याऽसम्भवादिति। तच्चिन्त्यम्। एवमपि श्तिप्प्रत्ययाऽसमाधानेन द्विसकारको निर्देश इति भाष्यस्याऽनिर्वाहात्। एतेन सिच्च अस्च सिचस्। समाहारद्वन्द्वे लुप्तपञ्चमीकं पदम्। अयस्मयादित्वेन भत्वान्न कुत्वजश्त्वे। अस्ति च तत्सिजश्चेति कर्मधारयः। तेन लुप्तात्सिचो भूभावेनाऽपहृतादस्तेश्च परस्य नेति कल्पनापि प्रत्युक्ता। उक्तरीत्या रूपसिद्धावपि भाष्याऽनिर्वाहात्। तस्मादिह भगवतोऽभिप्रायान्तरमेव वक्तव्यमिति। अत्रोच्यते अस्तिसिचस्स्इतिच्छेदः। सान्तादस्तेर्न तु कृतभूभावात्। सान्तात्सिचः श्रूयमाणादिति यावत्। तथा च 'सिच्'इत्यस्यानन्तरं सकारः प्रश्लिष्यते न तु श्तिपः प्राक्। येन **माधवोक्तः** श्तिप्प्रत्ययानुपपत्तिरूपो दोषः स्यात्। अत एव 'सिचोऽपृक्त'इति द्विसकारको निर्देश इत्युक्तं भाष्ये। अन्यथा ह्यस्तीति निर्देश इत्येव ब्रूयात्। नन्वेवमस्तिसिचोऽपृक्तइति संहिता कथं निर्वहतीति चेत्। इत्थम्-संयोगान्तस्य लोप इति द्वितीयः सकारो लुप्यते। ननु लुप्तविभक्तिकं 'स' इति पदम्। न चैतत्संयोगान्तम्। तथा च संयोगान्तं यत्पदं तस्य विधीयमानो लोपः कथमिह स्यादिति चेन्न। संयोगान्तस्य पदान्तस्य लोपः स्यादिति व्याख्यानात्। संयोगेति हि लुप्तषष्ठीकं पृथक् पदम्। संयोगस्य पदस्येत्युभयं चान्तस्य विशेषणम्। एष एव च सूत्रकृतोप्याशयः। यदि ह्ययं बहुव्रीहिः पदं चान्यपदार्थ इति वृत्तिकारकृतं व्याख्यानं संमतं स्यात्तर्ह्यन्तग्रहणं न कुर्यात्, संयोगेन पदविशेषणादेव तदन्तलाभात्। अपि च सरूपसूत्रे पृथक् सर्वेभ्यो विभक्तावेकशेष इति पक्षे वृक्षस्सिति प्रसज्येतेत्याशङ्क्य

संयोगान्तलोपात्सिद्धमिति भाष्यग्रन्थः प्रकृतव्याख्यानएवानुकूलः। यत्तु तत्र **कैयटो** वक्ष्यति 'वस्तुतस्संयोगान्तस्य लोपाद्धल्ङ्यादिलोपा'दिति। तत्तु मूलस्वरसविरुद्धम्। अत्र व्याचक्षत इत्युक्रमादपरितोषग्रस्तश्च। अत एव हलन्त्यसूत्रे अन्योन्याश्रयोद्धारार्थमन्त्यलकारस्येत्संज्ञायां णलो लित्वं स्वरार्थं क्रियमाणं ज्ञापकमिति प्रक्रम्य ननु लकारः श्रवणार्थ एवेत्याशङ्क्याऽपृक्तं हलिति हल्ग्रहणं णल्व्यावृत्तये क्रियमाणं णलोऽपृक्ततां ज्ञापयतीति वक्ष्यति। तस्य ह्ययमाशयः—भेत्तेत्यादौ डादेशो हल्ग्रहणस्य व्यावर्त्त्यो न संभवति। सुतिसीतिप्रत्ययैः प्रकृतेराक्षेपेण हलन्तायाः प्रकृतेः परेषां स्वादीनां लोपः। न च डादेशं प्रति तासन्ता प्रकृतिरिति। एवं चेहापि वृक्षसित्यस्य प्रकृतित्वाऽभावात्कथं हल्ङ्यादिलोपः। अस्तिसिचोऽपृक्तइति द्विसकारको निर्देश इति प्रकृतग्रन्थोप्युक्तव्याख्यायामनुकूल एव। नन्वस्तूक्तरीत्या संयोगान्तलोपस्तथापि तस्याऽसिद्धत्वाद्रोरुत्वं दुर्लभमिति चेन्न। संयोगान्तलोपो रोरुत्वे इति वार्त्तिकेनाऽसिद्धत्वनिषेधात्। हरिवो मेदिनं त्वा इत्यादिवत्। सिचोऽपृक्तइति प्रकृतनिर्देश एव च वार्त्तिकोक्तार्थे ज्ञापको बोध्यः। अथ वा अस्तु वृत्तिकारोक्त एव संयोगान्तस्य लोप इति सूत्रस्यार्थः। अन्तग्रहणन्तु प्रत्येकं संयोगसंज्ञेति पक्षे संयोगावन्तौ यस्येति द्वित्वावगतयेऽस्तु। संयोगसंज्ञापक्षे भाष्यकैयटयोस्तथैवाभिधानात्। प्रकृते तु मास्तु संयोगान्तलोपः। किन्तु द्वयोः सकारयोः रुत्वे कृते अतो रोरित्यनेन एक एवोकारो भविष्यति, विधेयविशेषणस्यैकत्वस्य पश्वेकत्ववद्विवक्षितत्वात्। रोरिति जातिपरनिर्देशेनाऽतः परत्वस्य पूर्वत्वस्य च सम्भवात्। जातिपरत्वे प्रकृतिनिर्देश एव प्रमाणमस्तु। न च परत्वाद्धशि चेति प्रथमस्यैव रोरुः स्यादिति वाच्यम्। रुत्वस्याऽसिद्धतया हशपरत्वाऽभावात्। न चाश्रयात्सिद्धत्वमिति वाच्यम्, स्थान्यंशे तथात्वेपि निमित्तीभूतहशंशे तदसम्भवात्। एष एव च द्विसकारकनिर्देशं वदतो भाष्यकारस्याशयः। न तु संयोगान्तलोप इति। अत एव नुदविदेति सूत्रे 'शुषः क'इत्यादिं बहुयोगविच्छिन्नस्य नकारस्य कथमनुवृत्तिरित्याशङ्क्यान्यतरस्यान्नध्याख्येति संहितापाठेन नकारान्तरप्रश्लेष इत्युक्तं भाष्ये। हलोयमामिति लोप इति हि तस्याशयः। पूर्वोक्तरीत्या तु संयोगान्तलोपेनैव सिद्धौ संहितापाठपर्यन्तं नोपन्यस्येत्। संहितायामपि हि हलोयमामिति लोपस्य बहिरङ्गत्वत्रिपादीस्थत्वाभ्यामसिद्धत्वात्संयोगान्तलोपेनैव भाव्यम्। 'संयोगान्तलोपे यणः प्रतिषेधः, न वा झलो लोपाद्बहिरङ्गलक्षणत्वाद्वे'ति वार्त्तिकोक्तपक्षत्रये प्रथमचरमयोस्तस्य दुर्वारत्वात्। तस्मात्समुदाये प्रत्येकं वा संयोगसंज्ञेति पक्षद्वयानुरोधेनेह समाधानद्वयं व्यवस्थितमिति भाष्यार्थः। पूर्वोक्तरीत्या सिचसिति समाहारमाश्रित्य तदुपरि सितिच्छेद इति पक्षे त्वस्तिग्रहणप्रत्याख्यानपरतयापीदं भाष्यं योजयितुं शक्यमिति दिक्। एतेन 'संयोगान्तस्य लोप'इति सूत्रेऽन्तग्रहणं शक्यमकर्त्तुमिति **पदमञ्जरी** प्रत्युक्ता। पक्षद्वयेपि प्रयोजनस्योक्तत्वात्। विद्यमानं यत्सिचसिति पक्षे वा योज्या। वस्तुतस्तु झल इतिवत्सस्येत्यपकृष्यते, तत्सामर्थ्यात्संयोगान्तस्य पदत्वाऽभावेपि लोप इत्यलम्। यत्तु सिचः परत्वादीटि प्राप्ते आहिभुवोरीट्प्रतिषेध इति वार्त्तिकबलान्निषेध इति कैश्चिदुक्तम्। तन्न। 'तस्य दोष' इत्युपक्रमात्स्थानिवद्भावप्रतिषेधपरेणोक्तवार्त्तिकेनाऽस्तेः परत्वमुपजीव्य प्रवृत्तस्येटो निवृत्तावपि सिच्प्रयुक्तस्याऽनिर्वार्यत्वात्। अस्थादगादित्यादावुक्तदोषतादवस्थ्याच्च। तस्मात्प्रागुक्तेष्वेवान्यतमः पन्थाः शरणमित्यलं बहुना। **वध्यादेशे वृद्धितत्वप्रतिषेध इड्विधिश्चे**ति वार्त्तिकान्तरम्। अस्यार्थः—हन्तेर्ण्वुलि कृते बहुलन्तण्यन्नवधकगात्रविचक्षणाजिराद्यर्थमिति वार्तिकेन संज्ञाछन्दसोर्वधादेशः। स च हलन्त इति मत्वा वृद्धिरापाद्यते। हनस्तोऽचिण्णलोरिति तकारश्च। तयोः कर्त्तव्ययोः स्थानिवद्भावप्रतिषेधः। तथा आवधिषीष्टेत्यादौ स्थानिवद्भावेनाङ्गतयैकाच इतीण्निषेधः प्राप्तः। तस्मिन्नपि कर्त्तव्ये स्थानिवद्भावेनाङ्गता नेति वाच्यम्। तदेतदिड्विधिश्चेत्यनेनार्थादुक्तम्। एतदपि भाष्ये प्रत्याख्यातम्। तथाहि वधादेशस्तावददन्तः। अन्यथाऽवधीदित्यत्रातो हलादेरिति वृद्धिप्रसङ्गात्। एतच्चोत्तरसूत्रे भाष्ये एव स्पष्टम्। 'वधक' इति तु नायं ण्वुल्किं तु हनो वधश्चेत्यौणादिकसूत्रेण क्वुन्प्रत्ययः। तथा चेह वृद्धितत्वयोः प्रसङ्ग एव नास्ति। आवधिषीष्टेत्यादाविण्निषेधोपि न भवति, वध्यादेशे आद्युदात्तनिपातनसामर्थ्यात्। न चैवं सतिशिष्टेन तेन यदावधिषीष्टेत्यादौ प्रत्ययस्वरो बाध्येतेति वाच्यम्, आर्द्धधातुकीयानामादेशानां प्रत्ययविवक्षामात्रेण प्रवृत्त्या प्रत्ययस्वरस्यैव सतिशिष्टत्वादिति। स्यादेतत्। इड्विधिश्चेत्यंशे पूर्वपक्ष एव शिथिलः। तथाहि उपदेशेनुदात्तादिण्निषिध्यते, न च वधिस्तथा। स्थानिवद्भावेऽनायं तथेति चेन्न। अल्विधौ स्थानिवद्भावविरहात्। सत्यम्। नेह स्थानिवद्भावं ब्रूमः। किन्तु हन्त्युपदेश एव वधेरुपदेशः, कृञुपदेश इव कर्त्ता कर्त्तुमित्यादौ करित्यादीनाम्। स्थानिवद्भावस्त्वङ्गसंज्ञार्थं मृग्यत इत्युक्तमेव। नन्वेवमपि परिहारग्रन्थोऽसङ्गत एव। यदि हि प्रागेव प्रत्ययोत्पत्तेर्वधादेशाभ्युपगमस्तर्हि 'वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेने'ति स्यसिच्सूत्रीयं वार्त्तिकं विरुध्येत। अन्तरङ्गबहिरङ्गयोर्विप्रतिषेधाऽयोगात्। तथा च कर्मणि सीयुटि वधिषीष्टेत्येकमेव रूपं स्यात्। इष्यते तु घानिषीष्टेति द्वितीयमपि। अत्रोच्यते वार्त्तिकमते आर्द्धधातुकइत्यस्य विषयसप्तमीत्वेपि लिङ्लुङीत्यादीनां परमसप्तमीत्वाभ्युपगमेन विप्रतिषेधः सम्भवत्येव। अतएवेहाद्युदात्तनिपातनाऽसंभवादिड्विधिश्चेत्युपसङ्ख्यातम्। भाष्यकाराणां त्वयमाशयः, आर्द्धधातुकइतिवल्लिङीत्यादिरपि विषयसप्तम्येव। तथा चाद्युदात्तनिपातनेनैवोपपत्तौ इड्विधि-

श्चेति न कर्त्तव्यमेव । घानिषीष्टेति कथं सिध्येदिति परमवशिष्यते। तत्रेदमुत्तरं 'प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भाव'इति। एतच्च स्यसिच्सूत्रे **कैयटेन** स्पष्टमुक्तम्। तस्माद्वार्त्तिकमते विप्रतिषेधाच्चिण्वद्भावः। भाष्यमते तु प्रतिपदोक्तत्वादिति विवेकः। एतेनैकाच उपदेशइति सूत्रेष्वार्द्धधातुकीयाः सामान्येन भवन्तीत्यादिभाष्यग्रन्था व्याख्याताः। यत्तु 'तत्र कैयटेनोक्तं 'विप्रतिषेधे उपपत्तिश्चिन्त्ये'ति, तत्तु प्रागुक्तोपपत्तिरेव स्मर्त्तव्येत्येवंपरम्। स्यादेतत्। प्रतिपदविधित्वं किमिह विवक्षितम्, अनवकाशत्वं वा? साक्षादुपादानमात्रं वा ?। नाद्यः। स्यसिच्सूत्रे हन्ग्रहणस्य प्रघानिष्यतइत्यादौ लब्धावकाशत्वात्। तत्रस्यस्य सीयुट्ग्रहणस्य तु कारिषीष्टेत्यादौ कृतार्थत्वात्। न चाऽजन्तादीनां चतुर्णां स्यादिचतुष्कसम्बन्धे अस्वरितत्वाच्च यथासंख्याऽभावे हन्तेः सीयुटीति योंऽशस्तस्यानर्थक्यमेव। अन्तरङ्गत्वाद्धि वधभावे कृते तस्य स्थानिवत्त्वेन हन्तिग्रहणेन ग्रहणात्सीयुटि चिण्वदिटि कृते ण्यल्लोपावियङिति पूर्वविप्रतिषेधेनाऽल्लोपे सति वधिषीष्टेत्येव रूपं स्यादिति वाच्यम्। अन्तरङ्गेण वधिनाऽपहारे न्याय्ये सत्यसंभवादेव हन्तेः सीयुटा समं सम्बन्धाऽयोगात्। 'संभवे व्यभिचारे च स्याद्विशेषणमर्थव'दिति न्यायात्। अत एव भञ्जादिसूत्रे आतः स्थाने इत्येतत्स्वशब्दस्यैव विशेषणं न तु भञ्जादीनामिति वक्ष्यते। तथा 'नित्यं क्रीडाजीविकयो'रित्यत्र क्रीडायां तृचोऽसम्भवादकेनैव तदन्वय इति वक्ष्यते। नान्त्यः। वधादेशेपि 'हनो वध लिङी'ति साक्षादुपादानस्याऽविशिष्टत्वात्। अन्तरङ्गत्वस्याधिकत्वाच्चेति चेत्। अत्रोच्यते चिण्वदिट्चेति चकारस्यानुक्तसमुच्चयार्थत्वेन व्याख्यानाद्धन्तेरपि परस्य सीयुटश्चिण्वद्भावो विधीयते। तस्य चानर्थकत्वमेव प्रतिपदविधित्वम् अनुक्तसमुच्चयार्थत्वं चास्य भाष्यकार एव वक्ष्यति'चं भगवान्कृतवांस्तु तदर्थ'मिति। अत एव ह्यामात्सूत्रप्रत्याख्यानपक्षे कृतेऽपीटि णिलोपः सिद्धयति। सूत्रारम्भे परमिट्चाऽसिद्धस्तेन मे लुप्यते णिरिति वक्ष्यमाणं बोध्यम्। यद्वा लिङीति सामान्यमार्द्धधातुके सीयुटीति विशेषः। हन्तेरित्युभयत्राऽविशिष्टम्। तथा चाऽपवादत्वमेव चिण्वदिडिति नास्त्यसम्भवः, येन हन्तिः सीयुटा नान्वियात्। तथाच कैयटोक्तं प्रतिपदविधित्वमपि सम्यगेव। युक्तश्चैतत्। यदि ह्यसम्भवस्तर्हि चेनाप्यसंभविनो विधानाऽयोगेन प्रागुक्तपक्षस्य दुर्बलत्वात्। अथ वा वक्ष्यमाणनिष्कर्षरीत्याऽन्तरङ्गं बलीय इत्यस्याऽसिद्धं बहिरङ्गमित्यनेन प्रत्याख्यानात्तस्य च कृति तुग्ग्रहणेनाऽनित्यत्वाल्लक्ष्यानुरोधेनेह त्यागाद्युक्तो विप्रतिषेधः। अथ वा लिङीति परसप्तम्येवास्तु। परत्वाच्च चिण्वदिट्। आद्युदात्तनिपातनं तु माऽस्तु। न चैवं 'वधिषीष्टे'त्यत्रेण् निषेधापत्तिः, कर्त्तेत्यादाविवेति वाच्यम्। वधेर्हि द्वावुपदेशौ। हन्त्युपदेशो वध्युपदेशश्चेत्येकाच इति सूत्रे भाष्ये एव स्पष्टम्। तथा च वध्युपदेशेऽनेकाच्त्वादिण्निषेधो न भविष्यति। एकेति विशेषणसामर्थ्याद्ध्यनेकाच्कोपदेशो व्यावर्त्यते। नन्वच इत्युक्तेऽजन्तस्यैव स्यात्। मैवम्। पचादीनामनुदात्तत्वस्य वैयर्थ्यापत्तेः। अत एवैकत्वविवक्षया अच इत्यस्यैको योऽच् तद्वत इत्यर्थे लब्धे एकग्रहणसामर्थ्यादुक्तार्थलाभः। न च यत्रैकाज्ग्रहणमिति परिभाषाप्रवृत्तये एकग्रहणमिति युक्तम्। शब्दविशेषमनादृत्य एकाच इत्यर्थमेवाश्रित्य परिभाषाप्रवृत्तेः सुवचत्वात्। न चैवमिहैव विशेषणसार्थक्ये श्तिपा शपेत्यादिपरिभाषाज्ञापकत्वं न स्यादिति वाच्यम्। शीङः सार्वधातुके गुणः दीङो युड चोत्यादिसानुबन्धनिर्देशानामेव तज्ज्ञापकत्वसम्भवात्। तदेवं सर्वथापि वधेः परस्येडस्त्येवेति स्थितम्। अत एवाऽनिट्कारिकासु **व्याघ्रभूतिनाऽ**दन्तपर्युदासः कृतः 'अदन्तमूदन्तमृताश्च वृङ्वृञा' वित्यादिना। यत्तु [ प्रक्रिया ] कौमुद्यां भावकर्मलकारव्युत्पादनावसरे घानिषीष्टेत्युदाहृत्य पक्षे वधादेश इत्युक्तं तत्तूक्तरीत्या भाष्यमते वार्त्तिकमते वा उभयथापि निर्बाधमेव। एवं स्थिते 'पक्षे वधादेश' इति प्रतीकमुपादायेदन्तु सिद्धान्तविरुद्धं, भाष्यादौ वधादेशानभ्युपगमादिति वदन् **प्रसाद**कारः प्रत्युत स्वस्यैव कलङ्कमाविरकरोत्। यदपि तेन स्वकीयभ्रमबीजभूतं वार्त्तिकमुदाहृतं 'हनि णिङादेशप्रतिषेधश्चे' ति। नैतद्धिङि प्राप्तस्य निषेधपरं किं तु स्यादिष्वपि चिण्वदित्यतिदेशेन प्राप्तस्य। अत एवाऽङ्गाधिकारादाङ्गस्यैवातिदेशो न तु हनिणिङादेशानाम्। अनाङ्गत्वादित्यङ्गाधिकारबलेनैव भाष्ये तद्वार्त्तिकं प्रत्याख्यातम्। यद्यप्येतत्सिद्धान्तग्रन्थेऽविवादमेव, तथाप्यन्धस्येवान्धलग्नस्येति न्यायेन प्रसादग्रन्थं दृष्ट्वा बाला मा भ्राम्येयुरित्येतदर्थमस्माभिः स्फुटीकृतम्। प्रकृतमनुसरामः-'आकारान्तान्नुक्पुङ्प्रतिषेध.'। 'लोडादेशे शाभावजभावधित्वह्लिलोपैत्वप्रतिषेधः' 'त्रयादेशे स्रन्तप्रतिषेधः' 'आम्विधौ च'। 'स्वरे च वस्वादेशे' एतान्यपि पञ्च वार्त्तिकानि प्रत्याख्यातानि। तथाहि विलापयति भापयतीत्यत्र नुक्पुकौ न भविष्यतः। ली ई भी ई इतीकारप्रश्लेषात्। ह्रस्वप्रश्लेषाद्वा। तथा शिष्टात् हतात् भिन्तात् कुरुतात् स्तादित्यत्र परत्वात्तातङि कृते शा हौ, हन्तेर्जः, हुझल्भ्यो हेर्धिः, उतश्च प्रत्ययादसंयोगपूर्वात्, घ्वसोरेद्धावित्येते विधयो यद्यपि प्राप्नुवन्ति तातङः स्थानिवद्भावेन हिग्रहणेन ग्रहणात्, तथापि सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति न्यायान्न भवन्ति। एवं पुष्णीतादित्यत्र हलः श्नः शानज्झाविति न भवति। उभयोर्नित्ययोः परत्वात्तातङः प्रवृत्तेः। तथा तिसृणामित्यत्र परत्वात्तिसृभावेन बाधितत्त्वेस्त्रय इति त्रयादेशोपि बाधित एव। एवञ्चतस्रस्तिष्ठन्तीत्यत्र परेण चतसृभावेन चतुरनडुहोरित्याम् बाध्यते। तथा अशासन्त्वाविदुषी सस्मिन्नहन्नित्यत्र विदेः शतुर्वसुरिति वस्वादेशस्य शतृग्रहणेन ग्रहणाच्छतुरनुमो नद्यजादी इति सूत्रेणान्तोदात्ताच्छत्रन्तात्परत्वमुपजीव्य

प्राप्तं नद्या उदात्तत्वम्, यस्यैवं विदुषोऽग्निहोत्रं जुह्वतीत्यत्र विदुष इत्यत्र षष्ठ्या उदात्तत्वं च न भवति, अनुम इति निषेधात् । तथाहि–अविद्यमान उम् यस्येति बहुव्रीहिः । उमिति च सनांशसेत्युकारात्प्रभृत्यानुमो मकारात्प्रत्याहारः। तनादिकृञ्भ्य इत्युकारात्प्रभृति वा । तत्र च वसोः सम्प्रसारणं चान्तर्भूतम् । नन्वेवं द्वितीयपक्षे लुनता अच्छारवं प्रथमा जानती गादित्यादावपि निषेधापत्तिः, तनादिकृञ्भ्य इत्युपक्रमे श्नाप्रत्ययस्यापि तत्रान्तर्भावादिति चेत्, न । शतरि परे श्नाप्रवृत्तावपि शतुरनुम्कत्वाऽनपायात् । नुमागमग्रहणपक्षेपि हि शतुरेव तद्राहित्यं विशेषणं न तु शत्रन्तस्य । मुञ्चता मुञ्चते इत्यादावपि निषेधापत्तेः । इदन्तु वार्त्तिकं सिद्धान्तेपि स्थितं 'गोः पूर्वणित्वात्विस्वरेषु प्रतिषेध' इति । चित्रग्वग्रमित्यत्र हि 'सर्वत्र विभाषा गो'रिति पूर्वरूपं प्राप्तम्। 'नान्तः पाद'मिति पाठस्येको गुणवृद्धीइति सूत्रे षाष्ठभाष्ये च स्थितत्वेन तद्रीत्या सर्वत्रेति सूत्रस्यापि पूर्वरूपविधायकत्वौचित्यात् । कैयटस्तु शाकलसूत्रे ह्रस्वश्चेति चकारेण प्रकृत्येत्यनुकृष्यत इतिभाष्यदर्शनात्प्रकृत्यान्तःपादमिति पाठमनुसृत्य वार्त्तिकस्थं पूर्वपदं तत्प्राप्तिपूर्वकप्रकृतिभावोपलक्षणमिति सूचितवान् । न च सर्वत्र विभाषेत्यत्रैङ इत्यनुवर्त्याऽल्विधित्वान्निषेधः सुवचः । हे चित्रगो अग्रमित्यत्रैवमप्यतिप्रसङ्गात् । न ह्यत्र स्थान्यल आश्रयणम्। स्वत एव एङन्तत्वात् । चित्रगुरित्यत्र गोतोणिदिति णित्वं प्राप्तम् । चित्रगुं चित्रगूनित्यत्र त्वा गोतोम्शसोरिति षाष्ठवार्त्तिकरीत्या आत्वं प्राप्तम् । अत्र णित्वात्त्वग्रहणं तु शक्यमकर्त्तुम्। 'गोत' इति तपरकरणसामर्थ्यादेव णित्वात्वाऽप्रवृत्तेः। औतामिति पाठस्यैव स्थापयिष्यमाणत्वाच्च । अचिनवमित्यादावतिप्रसङ्गस्य शसा साहचर्येणापि वारणसम्भवात् । स्वर । बहुगुमान् । इह ह्रस्वनुड्भ्यां मतुबित्युदात्तताया नगोश्वन्निति निषेधः प्राप्तः । तस्माद्गोः पूर्वस्वरयोरिति पठनीयमिति स्थितम् । एवं च नगोश्वन्निति सूत्रे वृत्तौ यत्पठ्यते 'बहुगुना बहुगुभ्यामित्यादावन्तोदात्तादुत्तरपदादन्यतरस्यामिति प्राप्तः प्रतिषिध्यत'इति । तच्चिन्त्यम् । भाष्यवार्त्तिकविरुद्धत्वात् [ **स्थानिवदा** ] ॥

**अचः परस्मिन्पूर्वविधौ** । परनिमित्तो ऽच आदेशः स्थानिवत्स्यात्स्थानिभूतादचः पूर्वत्वेन यो दृष्टस्तस्य तस्माद्वा निमित्तभूताद्विधौ कर्त्तव्ये । वव्रश्च । इहोरदित्यत्वस्य स्थानिवद्भावेन नसंप्रसारणइति निषेधाद्वकारस्य न संप्रसारणम् । न च पूर्वसूत्रेण गतार्थता । अल्विधित्वात् । न च परनिमित्तत्वमसिद्धमिति वाच्यम् । अङ्गाक्षिप्तप्रत्ययनिमित्तकत्वात् । न च प्रागभ्यासविकारेभ्योङ्गाधिकार इति वाच्यम्। आसप्तमाध्यायसमाप्तेरिति पक्षस्य सिद्धान्तयिष्यमाणत्वात् । **पूर्वस्माद्विधौ** यथा–तन्वन्ति । तन्वते । इह यणादेशस्यस्थानिवद्भावान्नेद् । तत्र हि 'त'नित्यङ्गं निमित्तम् । तच्चोकारात्पूर्वमिति । अच इति किम् । विश्नः । प्रश्नः । द्यूत्वा । स्यूत्वा । अभिगत्य । तथाहि विश्नः प्रश्न इत्यत्र छकारस्य शकारः परनिमित्तकः । तस्य स्थानिवद्भावाच्छेचेति तुक्प्राप्तः, अच इति वचनान्न भवति । स्यादेतत्–इहान्तरङ्गत्वात्पूर्वमेव तुका भाव्यम् । न च 'वार्णादाङ्गं बलीय' इति शकारः स्यादिति वाच्यम् । यत्र ह्येकमेव निमित्तीकृत्य युगपदाङ्गवार्णयोः प्राप्तिस्तत्र वार्णादाङ्गं बलीयः । यथा करोतेर्लिटि णलि कृ अ इति स्थिते गौरित्यत्र सावकाशमचो ञ्णितीति वृद्धिं बाधित्वाऽन्तरङ्गत्वात्प्राप्तं यणं वृद्धिरेव बाधते । 'प्रश्न' इत्यत्र तु शस्य नङ् निमित्तं, तुकस्तु छः । भिन्नकाला चानयोः प्राप्तिः । ननु यत्रैकस्मिन्विषये युगपच्च प्राप्तिस्तत्रैवेयं परिभाषेत्यत्र किं प्रमाणमिति चेत् । धर्मिग्राहकमानमेवेति गृहाण । तथाहि–अभ्यासस्याऽसवर्णे इति सूत्रेऽसवर्णग्रहणमस्याः परिभाषाया ज्ञापकम् । एतच्च षष्ठे प्रथमाह्निकान्ते भाष्ये स्थितम् । तद्धीषतुः ऊषतुरित्यादिवारणाय नोपयुज्यते । अन्तरङ्गेण सवर्णदीर्घेण तत्रेयङुवङोर्बाधात् । तौ हि ह्यङ्गसंज्ञामभ्याससंज्ञां चापेक्षमाणौ बहिरङ्गौ । न चैवमप्यपवादत्वात्तावेव स्यातामिति वाच्यम् । येन प्राप्तिन्यायेन तयोर्यणं प्रत्येवाऽपवादत्वात् । नन्वियेषेत्यादौ प्रवृत्तस्यापि गुणस्य इयायेत्यत्र प्रवृत्ताया वृद्धेश्च द्विर्वचनेचीति रूपातिदेशेनापहारे द्वित्वे च कृते सवर्णदीर्घस्यापि प्राप्त्या सोपि येननाप्राप्तिन्यायेनेयङुवङ्भ्यां बाध्येतेति चेत् । तर्हि कृतेप्यसवर्णग्रहणे निर्विषयतापत्तिः । असवर्णग्रहणसामर्थ्यात्पुनर्गुणवृद्धी सवर्णदीर्घं बाधित्वा स्यातामिति चेत् । न । इयर्त्तीत्यादौ चरितार्थत्वात् । नन्वेवं सत्यसवर्णग्रहणं विनापि येन नाप्राप्तिन्यायेनेयर्त्तीति यणो बाधेन सिद्धे तन्न कुर्यादिति चेत् । तर्हि सामर्थ्यादियेषेत्यादौ गुणादिप्रवृत्तिरिति फलितोऽर्थः । तथा च पुनरप्यसवर्णग्रहणं व्यर्थमेव । अर्त्तेश्चेति सूत्रयित्वा य्वोरिति चानुवर्त्यार्त्तेरिकारस्य लाघवादियङि विधेयेऽभ्यासस्येत्युक्तिसामर्थ्येनापीयेषेत्यादेः सुसाधत्वात् । नन्वर्त्तेरिति श्तिपा निर्देशे अरियर्तीति यङ्लुकि इयङ् न स्यादिति चेत् । तर्ह्युरित्येवोच्यताम् । 'इणो य'णिति साहचर्याच्च धातुग्रहणं भविष्यति । अङ्गेन उर्विशेषणाद्वा । तेन अर्तारमतिक्रान्तैरत्यर्त्तृभिरित्यादौ नातिप्रसङ्गः । नन्वेवमपीयेषेत्यत्रेव ईषतुरित्यत्रापीयङ् स्यादिति चेत् । न । अन्तरङ्गेण दीर्घेण बाध इत्युक्तत्वात् । न चैवमियेषेत्यत्रापि तुल्यमिति वाच्यं, तत्र गुणसम्भावनायां विनाशोन्मुखेन निमित्तेन दीर्घाऽप्रवर्त्तनात् । वक्ष्यते हि 'समर्थानां प्रथमा'दिति सूत्रे 'समर्थग्रहणमकृतव्यूहाः पाणिनीया इति परिभाषां ज्ञापयती'ति । अत एव सौत्थितिर्वैक्षमाणिरित्यत्र भाविन्या आदिवृद्ध्या अन्तरङ्गस्यापि सवर्णदीर्घस्य निमित्तविघातादप्रवृत्तिर्मा भूदिति सावुत्थितिर्वायोक्षमाणिरित्यनिष्टरूपं वारयितुं समर्थग्रहणम् । परिनिष्ठितत्वं

च तत्र समर्थशब्दस्यार्थः। 'कृतमपि निवर्त्तयन्ती'ति वा ज्ञाप्यताम्। फलं तु तुल्यमेव। गौरवं परमधिकमिति दिक्। ततश्चेयेषेत्यादौ गुणे कृते सवर्णदीर्घाऽप्राप्तौ यणि प्राप्ते तस्यैवेयङपवादः। ईषतुरित्यादावन्तरङ्गत्वात्सर्णदीर्घेण बाध्यत इत्यसवर्णग्रहणमनर्थकं सत्ज्ञापकमेवोक्तपरिभाषायाः। ननु गुणेन कथं निमित्तविघातोऽचः परस्मिन्निति स्थानिवत्त्वेन सवर्णदीर्घप्राप्तेस्तदवस्थत्वादिति चेन्न, दीर्घस्य पूर्वपरविधित्वेन तस्मिन्कर्त्तव्ये स्थानिवत्त्वाऽभावात्। पूर्वस्यैव विधौ हि सः न तु पूर्वपरयोरिति विधिग्रहणव्यावर्त्यनिरूपणावसरे उपपादयिष्यमाणत्वात्। सवर्णे यो विधिः सोऽपि सवर्णस्य विधिरिति तत्र कर्त्तव्ये नपदान्तेति निषेधाच्च। एतेनाऽसवर्णग्रहणे कृते स्थानिवद्भावेनेयेषेत्यत्रेयङ् न स्यात्। न चाऽसवर्णग्रहणसामर्थ्याच्छ्रौताऽसवर्णमाश्रित्येयङ् प्रवर्त्ततां घ्नन्तीति घत्ववदिति वाच्यम्। तथा सति परिभाषाज्ञापनाऽसम्भवात्। इयर्त्तीत्येकप्रयोजनाय श्लुश्चेति वक्तव्येऽभ्यासस्येति वचनसामर्थ्याद्भवन्तावियङुवङौ णलौवाऽतुसि दीर्घमप्यविशेषाद्बाधेयातामिति तद्व्यावृत्त्यैवाऽसवर्णग्रहणस्य चरितार्थत्वादिति प्रत्युक्तम्। 'सवर्णे परे न भवती'ति प्रसज्यप्रतिषेधाश्रयणात्। तत्र चोक्तरीत्या स्थानिवद्भावे प्रतिषिद्धे इयेषेत्यादौ यण एव प्राप्त्या तदपवादत्वेन निर्णीतयोरियङुवङोरन्तरङ्गेण दीर्घेण 'ईषतु' रित्यादौ बाधसम्भवात्। सा च ज्ञाप्यमाना समानाश्रये युगपत्प्राप्तौ चेत्येवंरूपविशेषविषयैव लक्ष्यानुरोधेनेति प्राचां भावः। अत एव 'स्योन' इति सिवेरौणादिके नप्रत्यये वलोपापवादे ऊठि च कृते सि ऊ न इति स्थितेऽन्तरङ्गत्वाद्यण्, न त्वाद्गुणोऽप्युपधागुणः। व्याश्रयत्वात्। न चोठं बाधित्वा परत्वाद्गुणः शङ्क्यः। लघुभूताऽनिग्लक्षणामुपधामङ्गं चाऽपेक्षमाणस्य गुणस्य बह्वपेक्षत्वेन बहिरङ्गत्वात्। एतच्च 'येन विधि'रिति सूत्रे कैयटे स्पष्टम्। वृत्तिकारोप्येवम्। प्रकृतमनुसरामः। उक्तरीत्या तुकि कृते शादेशः। तथा च विश्नप्रश्नयोस्तुक् श्रूयेतैवेति तन्निवृत्तौ यत्नान्तरमास्थेयम्, अच इत्यस्य प्रत्युदाहरणान्तरञ्चेति चेत्। सत्यम्। अस्त्येव यत्नान्तरम्। च्छ्वोरिति सतुक्कनिर्देशस्य षाष्ठभाष्यादौ स्थितत्वात्। स्यादेतत्। **'अकृतव्यूहाः पाणिनीयाः' 'कृतं वा निवर्तयन्ती'**ति परिभाषाभ्यां विश्नप्रश्नयोः सिद्धौ किं सतुक्कनिर्देशेन?। न चोक्तपरिभाषयोरनित्यत्वज्ञापनं तत्फलम्। तेन चाखायितेति सिद्धम्। अन्यथा 'यस्य हल' इति भाविनं लोपमालोच्य प्रागेवात्वं न क्रियेत, कृतं वा निवर्त्येत, स्वकल्पितृकोऽतिभवकानित्यादौ चाकच्न श्रूयेतेति वाच्यम्, अदो जग्धिरिति सूत्रे ल्यब्ग्रहणस्य 'प्रत्ययोत्तरपदयो'रिति सूत्रे उत्तरपदग्रहणस्य च क्रमेण ल्यब्लुकोरन्तरङ्गबाधकताज्ञापनार्थतया सिद्धान्तग्रन्थेषु प्रसिद्धस्यैवोक्तपरिभाषाद्वयाऽनित्यत्वज्ञापकत्वसम्भवात्। अथ निर्युक्तिकः सिद्धान्तप्रवादो न श्रद्धेयः, ल्यबुत्तरपदग्रहणयोरप्राप्तविद्ध्यर्थत्वादकृतव्यूहपरिभाषावशादप्राप्तेः स्पष्टत्वादिति चेत्तर्हि मा भूतां ल्यबुत्तरपदग्रहावपि। अकृतव्यूहपरिभाषाया अनित्यत्वे प्रकृतिप्रत्यापत्तिवचनस्यैव ज्ञापकत्वसम्भवात्। माऽस्तु वा तदपि। 'केऽणः' 'सोचि लोप' इत्यादिनिर्देशानामेव ज्ञापकत्वात्। तथाहि—क इ स उ इतीदुतोः पदान्तरप्रयुक्ते यणादेशे कृते आद्गुणस्य निमित्तविघातादकृतव्यूहा इति न्यायेन गुणो न स्यात्। न चाऽसिद्धम्बहिरङ्गमन्तरङ्गे बलीय इति परिभाषाभ्यां निस्तारः। वृक्ष इ इदमित्यादौ कृतेपि दीर्घे निमित्ताऽविघातेन तत्र पचावेदमित्यादौ च सावकाशयोर्द्वयोरपि परिभाषयोर्येन नाप्राप्तिन्यायेनाकृतव्यूहपरिभाषाबाध्यत्वात्। अन्यथोपेयुषो जग्मुष इत्याद्यपि न सिध्येत्। एवं 'विश्न' इत्यत्र गुणं निषेद्धुं क्रियमाणं नङो ङित्त्वमेवाऽकृतव्यूहपरिभाषां ज्ञापयेत्। समर्थानामिति च मास्तु। अत एव समर्थः पदविधिरिति सूत्रेऽकर्त्तव्यं च क्रियते समर्थानां प्रथमादिति भाष्यं सङ्गच्छते। तस्मात्—**प्रत्यापत्तिसमर्थत्वल्यबुत्तरपदग्रहाः। सतुक्त्वं च पञ्चापि न कार्याणीत्यवस्थितम्।** अत्रोच्यते—वार्णादाङ्गम्बलीय इति परिभाषाया अनित्यत्वं ज्ञापयितुं सतुक्ग्रहः। तथाहि—समानाश्रय इति प्राचो ग्रन्थाननुसृत्य प्रागुक्तं, न तु क्षोदक्षमम्। व्याश्रयेष्वपि बहुधा तत्स्वीकारात्। तथा च कैयटेनासिद्धवत्सूत्रे शुन इत्यत्र वार्णादाङ्गस्य बलीयस्त्वात्पूर्वैकादेशं बाधित्वाऽल्लोप उक्तः। न च तत्रोभयोरकारांशे समानाश्रयत्वमस्त्येवेति वाच्यम्। विश्नः स्योन इत्यत्रापि छकारेकारांशसाम्येन व्याश्रयत्वोपन्यासविरोधात्। किञ्चाङ्गस्य आच्छीनद्योः, शीङोरुट्, अचः परस्मिन्, येनविधिः, उपेयिवाननाश्वान्, आडजादीनाम्, अजादेर्द्वितीयस्य, अदस औसुलोपश्च, सार्वधातुकमपित्, उपसर्गाद्ध्रस्व ऊहतेः, स्नुक्रमोरनात्मनेपद इत्यादिसूत्रेषु कैयटहरदत्तादिसकलग्रन्थाः समानाश्रयतां क्वचिदादृत्य क्वचिदनादृत्य प्रवृत्ता इति स्पष्टमेव सिद्धान्तपरिशीलनशालिनाम्। षाष्ठभाष्ये प्रथमाह्निकान्ते वार्णादाङ्गमिति परिभाषायाः प्रयोजनान्यपि व्याश्रयसाधारणान्येव। न माङ्योगे इतिसूत्रस्थकैयटग्रन्थेप्येवमेव। आतोनुपसर्गेकइति सूत्रे भाष्येप्येवमेव। तस्माद्बहिरङ्गपरिभाषाऽकृतव्यूहपरिभाषयोरिव वार्णादाङ्गमित्यस्या अप्यनित्यत्वमेव शरणम्। तच्च सतुक्ग्रहणेन ज्ञाप्यते। न च परस्मिन्पूर्वविधावपि स्थानिवद्भावेन तुकं वारयितुं सः। अन्यार्थतयाऽवश्यकर्त्तव्येनाऽच इत्यनेन गतार्थत्वात्। एवञ्चाऽन्यार्थं क्रियमाणं सतुक्ग्रहणमकृतव्यूहा इत्यस्याप्यनित्यतां कामं ज्ञापयतु, प्रकृतसूत्रे विश्न इति प्रत्युदाहरणन्तु यथाश्रुतरीत्या। एवं स्थिते नङो ङित्त्वस्य गुणनिषेधे चरितार्थत्वादकृतव्यूहपरिभाषायां ज्ञापकान्तरमास्थेयम्। तच्च प्रत्ययवचनमुत्तरपदग्रहणं समर्थग्रहणं वा। तेभ्यो लघुत्वाल्ल्यब्ग्रहणमेवेति तु

निष्कर्षः । आचारक्विबन्तार्थं प्रत्ययग्रहणं तवममादिबाधनार्थमप्राप्तविध्यर्थञ्चोत्तरपदग्रहणमिति हि स्थास्यति । मपर्यन्तानुवृत्तिरेव ज्ञापिकेति हरदत्तोत्प्रेक्षा त्वन्तरङ्गस्यापवादबाध्यत्वादयुक्तेति सप्तमे वक्ष्यते । एवञ्च पामाद्यन्तर्गणसूत्रे 'विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः' रित्यत्राऽकृतसन्धिग्रहणमप्यनावश्यकम् । वीक्षमाणादिभ्यः कृतसन्धिभ्य एव तद्धिता इति स्पष्टीकरणार्थं वाऽस्तु । एवं स्त्रियाः पुंवदिति सूत्रे न ह्येषा परिभाषा सर्वत्राश्रीयतइति कैयटः समीचीन एव । आभात्सूत्रस्थकैयटस्तु निमित्तापायइति परिभाषा भाष्याऽसम्मतेत्येवंरूप आपाततः । छ्वोः शूठ्सूत्रे न हीदं वचनं नापि न्याय इत्येवंरूपो हरदत्तग्रन्थोप्यापातत एव । समर्थानामिति सूत्रे परिभाषापरिष्कारस्य स्वयमेव कृतत्वात् । अथ वोक्तपरिभाषयोर्मध्येऽकृतव्यूहपरिभाषैव लाघवादादर्त्तव्या न तु कृतमपीति, गौरवादित्येवम्परतया कथञ्चिद्ग्रन्थो नेयः । फलन्तु •निर्विवादम् । ज्ञापकान्तराणामपि सुलभत्वात् । तद्यथा—चाविति सूत्रं दीर्घं विदधदिह ज्ञापकम् । अन्तरङ्गे हि यणि कृते प्रतीच इत्यादौ कथं दीर्घस्य विषयलाभः । लौकिकन्यायोऽपीह सुवचः । लोके हि निमित्तमुभयविधमपि दृष्टम् । कार्यस्य स्थितौ नियामकं तदनियमकं च । आद्यं यथा, न्यायनये ऽपेक्षाबुद्धिः, तन्नाशेन द्वित्वनाशाभ्युपगमात् । तथा वेदान्तनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वमुपाधेः स्फटिकलौहित्यादिस्थितिनियामकत्वं च प्रसिद्धमेव । द्वितीयं तु दण्डादि । तन्नाशेपि घटनाशाऽदर्शनात् । एवं स्थिते लक्ष्यानुरोधेनेहापि द्वैविध्यं कथं न भवेत् । तथा च 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते नासावनित्य'इत्यस्य क्वचिदाश्रयणं, क्वचिन्नेत्येवंरूपे सिद्धान्ते लौकिकद्विविधव्यवहार उपष्टम्भकत्वेनोदाहृतः कैयटादिभिः । वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेऽपि न सुग्रीवस्य वालितः प्राबल्यं व्यवहरन्ति । भगवत्सहायैः पाण्डवैर्जये लब्धेपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति दिक् । स्यादेतत् । यदि च्छ्वोरिति सतुक्कनिर्देशस्तर्हि राल्लोपे तस्यैवानुवृत्तिः स्यात् । तथा च हूः हुरौ हुर इत्यत्र लोपो न स्यात् । वितुक्कत्वात् । न चाऽनुवृत्तिसामर्थ्यात्तुकं विनैव तत्र गृह्यताम् । राधो हिंसायामित्यत्राऽत इत्यनुवृत्तेऽप्यवर्ण इवेति वाच्यम् । वकारमात्रान्वयस्यापि सुवचत्वात् । यत्तु सतुक्कवितुक्कौ द्वावपीह निर्दिश्येते इति, तन्न । समाहारद्वन्द्वे एकवचनापत्तेः । इतरेतरयोगे तु बहुवचनापत्तेः । छकारयोःसमाहारे समासं कृत्वा वकारेणेतरेतरयोगद्वन्द्वं करिष्याम इति चेत् । न । समाहारे टच्प्रसङ्गात् । यथासंख्याऽसम्भवापत्तेश्च । अत्रोच्यते । छकारवकारयोः समाहारद्वन्द्वे कृते छकारान्तरस्य द्वन्द्वान्तरमस्तु । आदेशेपि शब्दप्रश्लेषः । तथा चान्तरतम्याद्यथासंख्यन्यायाच्चेष्टं सिद्धम् । अस्तु वा सतुक्कस्यैव निर्देशः । राल्लोपे तु सामर्थ्यात्केवलस्याऽन्वयः । नध्याख्येति नत्वनिषेधाल्लिङ्गाच्च । मूर्त्त इत्यत्र हि छलोपं विना नत्वप्राप्तिरेव न सम्भवति । एवं 'मूर्त्तौ घनः' द्रवमूर्त्तिस्पर्शयोः श्यः' इत्यादिनिर्देशा अपि सङ्गच्छन्तइति दिक् । अस्मिन्पक्षे अच इत्यस्य प्रत्युदाहरणन्तु धूत्वा स्यूत्वेति । अत्र ह्यूठः स्थानिवत्त्वाद्यण्न स्यात् । ननु स्वाश्रयमच्त्वं भविष्यति । अतिदेशानां स्वाश्रयकार्याऽनिवर्त्तकत्वादिति चेत् । न । विधिग्रहणप्रयोजनकथनावसरे इह सूत्रे स्वाश्रयनिवृत्तेः सिद्धान्तयिष्यमाणत्वात् । नन्वेवमपि योऽत्र यण्विधावाश्रीयते अच्नासावादेशः, यश्चादेश ऊठिति समुदायो नासौ यण्विधौ निमित्तमिति चेत् । न । अनुबन्धानामनेकान्ततया, एकान्तत्वेप्युच्चरितप्रध्वंसितयोकारस्यैवादेशत्वात्, वतिनिर्देशादभावोप्यतिदिश्यतइति वक्ष्यमाणत्वाच्च । एवमभिगत्येत्यपि प्रत्युदाहरणम् । अत्र ह्यनुनासिकलोपः परनिमित्तकस्तस्य स्थानिवद्भावाद्ध्रस्वस्य पिति कृतीति तुङ् न प्राप्नोति । अथ परस्मिन्निति किमर्थम् ?। युवजानिः । अत्र जायाया निङः स्थानिवद्भावाद्यलोपो न प्राप्नोति । स्वाश्रयनिवृत्तिरभावातिदेशश्च वक्ष्यतइति ह्युक्तमेव । किञ्च व्याघ्रस्येव पादावस्य व्याघ्रपात् । पादस्यलोपोऽहस्त्यादिभ्य इत्यपरनिमित्तको लोपस्ततो गर्गादित्वाद्यञ् । वैयाघ्रपद्यः । लोपस्य स्थानिवद्भावात्पादः पदिति पद्भावो न स्यात् । वचनसामर्थ्याद्भविष्यतीति चेत्पादेनेत्यादावतिप्रसङ्गः । किञ्च पादशतस्येति लोपवचनसामर्थ्यात्स्थानिवद्भावाऽप्रवृत्तौ सत्यां द्विपदिकेत्यादौ पद्भाववचनं चरितार्थमिति क तस्य सामर्थ्यम् । परस्मिन्निति कृते तु वैयाघ्रपद्य इत्यादौ पद्भावस्य चरितार्थतया पादेनेत्यादावेकादेशस्य स्थानिवद्भावात्पद्भावो नेति स्थितम् । नन्वेकादेशो नाऽचः किंत्वचोः, तत्कथं स्थानिवत्त्वमिति चेन्न । वर्णनिर्देशे जातिग्रहणात् । अत एव श्रायसौ, गौमतौ, चातुरौ, आनडुहावित्यादि सिध्यति । श्रेयसोऽपत्यमित्यण् । देविकाशिंशपादित्यत्राद्दीर्घसत्रश्रेयसामित्याकारादेशः । ततश्चतुर्भ्योऽप्यणन्तेभ्य औप्रत्यये एकादेशस्यादिवत्त्वात्प्राप्तौ नुमामौ न भवतः । तथा उदवाहे । उदकं वहतीति कर्मण्यण् । संज्ञायामुदभावः । ततो ङवेकादेशस्यादिवत्त्वाद्धल्वे सति प्राप्तो वाह ऊण्न भवति ।

पूर्वविधाविति किम् ?। नैधेयः । निपूर्वाद्धाञ उपसर्गे घोः किः । आतो लोपः । द्व्यचः, इतश्चानिञ इति ठक् । आकारलोपस्य स्थानिवत्त्वे तु सति त्र्यच्कत्वव्यपदेशेन द्व्यच्कत्वं विरुद्धत्वाद्बाध्येत । नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते । नन्वेवमपि विधिग्रहणं मास्तु । पूर्वस्येति षष्ठ्या कार्ये कर्त्तव्ये इत्यर्थस्याक्षेप्तुं शक्यत्वादिति चेत् । न । पूर्वस्य विधिः पूर्वस्माद्विधिरिति समासद्वयलाभार्थं विधिग्रहणम् । पञ्चमीसमासे उदाहरणं तु तन्वन्तीत्युक्तमेव । स्यादेतत् । यदि पञ्चमीसमासोभीष्टस्तर्हि विगणय्येत्यादि न सिध्यति । 'ल्यपि लघुपूर्वा'दित्ययादेशे कर्त्तव्येऽल्लोपस्य स्थानिवद्भावात् । न

चारम्भसामर्थ्यम् । अनुगमय्येत्यादौ मित्तु चरितार्थत्वात् । अत्रोच्यते–पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यम् । निष्ठायां सेटीति ज्ञापकात् । तथाहि–तत्र सेटीति पदं न तावदनिड्व्यावृत्त्यर्थम् । णिजन्तोत्तदसम्भवात् । ननु संज्ञपितः पशुरित्यत्र यस्यविभाषेतीण्निषेधः सम्भवत्येव, सनीवन्तेति विकल्पितेट्कत्वादिति चेत् । न । यस्यविभाषेत्यत्रैकाच इत्यनुवृत्तेः । अन्यथा दरिद्रित इतीण्न स्यात् । तस्मात्कालावधारणार्थं सेड्ग्रहणम् । इटि कृते णिलोपो न तु ततः प्रागिति । अन्यथा 'कारित'मित्यादौ णिलोपे कृते एकाच उपदेशइतीण्निषेधः स्यादिति सेटीति वदतो भावः । पूर्वस्माद्विधौ स्थानिवत्त्वे तु न प्राप्त एव निषेधः । णिचा व्यवधानात् । तस्मात्सेड्ग्रहणमनित्यतां ज्ञापयतीति स्थितम् । तथा चाष्टमे अन्त इति सूत्रे **हरदत्तः**,–'अनित्यः पूर्वस्माद्विधौ स्थानिवद्भावः । निष्ठायां सेटीति सेड्ग्रहणात् । एतच्च स्थानिवद्भावप्रकरणे एव व्याख्यात'मिति । यद्यपीह प्रकरणे स्वयं न व्याख्यातं तथापि न्यासकारादिभिर्व्याख्यातमिति तद्ग्रन्थस्यार्थः । लेखकप्रमादाद्ग्रन्थभ्रंशो वा कल्प्यः । एतेन ओः पुयणिति सूत्रे यदत्र वक्तव्यं तद्द्विर्वचनेचीत्यत्रैवोक्तमित्यपि हरदत्तग्रन्थो व्याख्यातः । तथा च वस्वेकाच्सूत्रे कैयटः–पूर्वस्मादपि विधावित्येतदनित्यमिति । **माधवाचार्या**स्तु–परिदृढय्य गत इत्यत्राऽसिद्धतामुद्भाव्य व्याश्रयत्वात्तां परिहृत्य पूर्वस्मादपीति स्थानिवत्त्वमाशङ्क्य प्रबेभिदय्य प्रस्तनय्येत्यादिभाष्योदाहरणबलेन समादधुः । यद्वा–ल्यपि लघुपूर्वादित्यनेन सामर्थ्यादन्यपदार्थस्य वर्णस्यापेक्षायां वर्णग्रहणे जातिग्रहणाद्व्यवधानेपि न दोष इति । केचित्तु पञ्चमीसमास इह मास्तु । प्रयोजनाऽभावात् । तथाहि–बेभिदिता, माथितिकः, अपीपचन्निति प्रयोजनत्रयं भाष्ये उक्तम् । तत्र बेभिदितेति तावदन्यथासिद्धम् । एकाच उपदेशइत्यत्र विहितविशेषणाश्रयणात् । माथितिकेति मथितं पण्यमस्येति विग्रहे तदस्य पण्यमिति ठकि तस्येकादेशे यस्येति चेत्यल्लोपे कृते इसुसुक्तान्तादिति कादेशो न भविष्यति । अनल्विधाविति निषेधेन स्थानिवद्भावाऽसम्भवात् । ठस्येक इत्यत्र स्थान्यादेशयोरकारस्य उच्चारणार्थतया वर्णमात्रस्य स्थानित्वादस्तु वा स्थान्यादेशयोरकारस्य विवक्षा । न चैवमनल्विधित्वात्कादेशप्रसङ्गः । सन्निपातपरिभाषया समाधानात् । न चाऽपीपचन्नित्युदाहरणम् । इह हि अन्तेरकारस्य चङकारस्य चातोगुण इति पररूपत्वे तस्य परं प्रत्यादिवद्भावाज्झिग्रहणेन ग्रहणे सति सिजभ्यस्तेति जुस् प्राप्तः । णिलोपस्यैकादेशस्य वा स्थानिवद्भावान्न भवतीति वाच्यम् । वेत्तेर्हि लङ्येवानन्तरो झिः सम्भवतीति तत्साहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात् । न च सिचा साहचर्याल्लुङोपि ग्रहणमस्त्विति वाच्यं, विप्रतिषेधे परमिति परसाहचर्यस्य बलीयस्त्वादिति । अत एव भवतेर्यङ्लुङन्ताल्लुङि अबोभूवन्निति **माधवः** । पञ्चमीसमासप्रयोजनतया अपीपचन्नित्युदाहरतो भगवतस्तु नेह साहचर्यं नियामकतया सम्मतम्, क्त्वोर्थग्रहणाद्धि ज्ञापकात्साहचर्यं न सर्वत्राश्रीयतइत्युक्तं दीधीवेवीटामिति सूत्रे । तस्माद्यङ्लुकि भुवो लुङि जुसेवोचितः । आत इति नियमस्य सिचः परत्वमाश्रित्य यो जुस्प्राप्तस्तन्मात्रपरतया माधवेनैवोक्तत्वात् । अभ्यस्ताश्रयस्य जुसो दुर्वारत्वात् । यदि तु लाघवादात इति नियमःसामान्यापेक्षस्तदा जुसभावेऽदभ्यस्तादित्यत्, तथा चाबोभूवुरबोभूवदिति पक्षभेदेन रूपद्वयं लभ्यते, नित्यत्वेन वुको गुणबाधकत्वात् । माधवोदाहृतमबोभूवन्निति तु चिन्त्यमेव । अन्तादेशस्य दुर्लभत्वात् । अपीपचन्नित्येतत्सिद्धये च पञ्चमीसमास आश्रयणीयः । विगणय्येत्यादावतिप्रसङ्गस्य तु पूर्वोक्ता एवोद्धाराः स्मर्त्तव्या इति युक्तः पन्थाः ।

ननु पञ्चमीसमासो मास्त्विति वदतो मते तन्वन्तीत्यत्रेट् स्यादिति कुतो नोद्भावितमिति चेन्न । बहिरङ्गस्य यणोऽसिद्धत्वात् । न च नाजानन्तर्यइति निषेधः । अनन्तरे कार्यविधौ यत्राऽच आनन्तर्यमिति कैयटेनाभ्युपगमात् । कथं तर्हि तन्वन्तीति पञ्चमीसमासोदाहरणं प्राग्दत्तमिति चेत् । हरदत्तमतेनेत्यवेहि । स हि यत्रान्तरङ्गे बहिरङ्गे वा अचोरानन्तर्यमिति व्याख्यत् । नन्वेवं नपदान्तसूत्रे दध्यत्रेति वृत्तिमुपादाय स्थानिवद्भावप्रतिषेधसामर्थ्याद्बहिरङ्गपरिभाषा न प्रवर्त्ततइति **मिश्रो**क्तिर्विरुध्येत । बहिरङ्गे यणि अचोराश्रयणेन नाजानन्तर्यइति निषेधादेव परिभाषाया अप्रवृत्तेः । किञ्च 'संयोगान्तस्य लोप' इति सूत्रे असिद्धं बहिरङ्गमिति परिभाषामाश्रित्य क्रियमाणं यणः प्रतिषेध इति वार्त्तिकस्य प्रत्याख्यानमपि विरुध्येत । अपि च लणिति सूत्रे उरण्रपर इति परेण चेत्कर्त्रर्थमित्यत्र रेफद्वयं श्रूयेतेत्युक्तं तदपि विरुध्येत । रोरीति लोपसम्भवात् । असिद्धपरिभाषायाश्चोक्तरीत्या निषेधात् । किञ्च नधातुलोपइतिसूत्रे प्रेद्धमित्यत्रत्यभाष्येण संयोगान्तस्येत्यत्र यण इत्यस्य प्रत्याख्यानभाष्येणाऽपि विरोधः । किञ्च 'पत ऐ' इत्यत्र पचावेदमित्यादौ अतिप्रसङ्गमाशङ्क्य बहिरङ्गतया स्वकृतं समाधानमपि भज्येतेति दिक् । तस्माद्धरदत्तकृता व्याख्या पूर्वापरस्वग्रन्थेन भाष्येण च विरुद्धेति चेत्सत्यम् । अत एवेमां व्याख्यां नधातुलोपसूत्रएवानुपादेयामवोचाम । केण इत्यादिज्ञापकान्नाजानन्तर्यइत्यस्याऽनित्यतामाश्रित्य वा कथंचित्समर्थनीयम् । स्यादेतत् । कैयटमतेप्यचोरिति द्वित्वं विवक्षितं न वा ? । आद्ये मूलभूतज्ञापकविरोधः । नहि कोऽसिचत्कोस्येत्यादावनन्तरे षत्वविधावचोराश्रयणम् । द्वितीये तु मूलभूतं ज्ञापकं सम्भवेत् यदीण्ग्रहणं पूर्वेण स्यात्, तत्तु परेणैवेति स्थितम् । अथ परेणेण्ग्रहणे हलोपि के चिदन्तर्भवन्तु नाम, अजानन्तर्यन्तु न गतमित्याशयः, तर्हिस्तु कथं चिज्ज्ञापकनिर्वाहः । अयजे इन्द्रं वृक्षेइन्द्रमित्यादौ परत्वात्सवर्णदीर्घस्तु

दुर्वार एव । न ह्यत्रासिद्धं बहिरङ्गमिति प्राप्नोति । नाजानन्तर्यंइति निषेधात् । नन्वन्तरङ्गं बलवदिति परिभाषान्तरेणेदं सिद्ध्यति । तथा च विप्रतिषेधसूत्रे अन्तरङ्गं चेत्युपक्रम्य 'इण्ङ्शीनामाद्गुणः सवर्णदीर्घत्वा'दिति प्रयोजनं पठितमिति चेत् । सत्यं पठितम् । किन्तु बहुतमप्रयोजनानि पठित्वा असिद्धपरिभाषयैव गतार्थत्वान्नेयं कर्त्तव्येत्युपसंहृतम् । एतेन प्रकृतसूत्रे पट्व्या मृद्व्येत्युदाहरणदूषणप्रस्तावे ऽसिद्धपरिभाषां भाष्यकारैरुदाहृतामन्तरङ्गम्बलीय इत्येतदुपलक्षणतया व्याचक्षाणोपि कैयटः प्रत्युक्तः । विप्रतिषेधसूत्रस्थभाष्यविरोधात् । तस्मादिह सिद्धान्ततत्त्वमन्यदेव वक्तव्यमिति । उच्यते–अन्तरङ्गपरिभाषाया निरपवादत्वादसिद्धपरिभाषायास्तु नाजानन्तर्यं इति सापवादत्वादुभयोरावश्यकता । विप्रतिषेधसूत्रस्थं भाष्यन्त्वभ्युच्चयपरमेवेति **भागवृत्तिकाराः** । **कैयटलघुविवरणा**दयोप्येवम् । **बृहद्विवरणकारास्तु**–नाजानन्तर्यंइतिपरिभाषा मास्तु । तज्ज्ञापकतया यत्संमतं तेनासिद्धपरिभाषाया अनित्यत्वमेव ज्ञाप्यतइत्याहुः। अस्मिंश्च पक्षे विप्रतिषेधसूत्रस्थंनाजान्तर्यं इति भाष्यमप्यनित्यत्वपरतया भङ्क्त्वा नेयम् । अन्यथा हि तत्रैवान्तरङ्गं बलीय इत्यस्य प्रत्याख्यानं विरुध्येत। अत एव वृत्तौ नलोपः सुप्स्वरेत्यत्र वृत्रहभ्यामित्यत्रनलोपस्यासिद्धत्वात् ह्रस्वस्येति तुक् नेत्युपक्रम्य संनिपातबहिरङ्गपरिभाषाभ्यां गतार्थतामाशङ्क्य परिभाषाद्वयस्याप्यनित्यतांज्ञापयितुं तुग्ग्रहणमित्युक्तम् । अतएवतत्र**मिश्रै**रप्युक्तम् । बहिरङ्गपरिभाषाया अनित्यत्वाद्या सेत्यत्र बहिरङ्गमपि त्यदाद्यत्वमन्तरङ्गे टापि नासिद्धमिति । तथा प्रतिदीव्न इत्यादिसिद्धयेप्यसिद्धपरिभाषाया अनित्यत्वं स्वीकृतम् । अत एव चाऽक्षद्यूरित्यत्र यलोपे कार्ये ऊठ् नासिद्ध इति दिक् । एतदपवादश्चाकृतव्यूहा इत्यादिः । उत्सर्गापवादयोर्द्वयोरप्यनित्यत्वे स्थिते लक्ष्यानुरोध एव व्यवस्थाहेतुरिति सर्वं सुस्थम् । स्यादेतत् पूर्वस्येति सम्बन्धसामान्ये षष्ठी । सम्बन्धश्च द्विविधः कार्यित्वेन निमित्तत्वेन वा । एवं च विधिग्रहणं विनैव समासद्वयस्य फलं लब्धं । विधिग्रहणे सत्यपि हि पूर्वस्मान्निमित्तत्वेनाश्रितादिति व्याख्येयमेव, अन्यथा हे गौरित्यत्र गकारात्परस्य विधौ वृद्धेः स्थानिवद्भावादेङ्ह्रस्वादिति सम्बुद्धिलोपः स्यात् । सत्यम् । विधिग्रहणं योगविभागार्थम् । तेन पूर्वस्य विधौ स्थानिदेवेति नियमात्स्वाश्रयं व्यावर्त्यते । यद्वा मास्तु योगविभागः । विधिग्रहणसामर्थ्याद्विधिमात्रे स्थानिवद्भावो भविष्यति शास्त्रीयेऽशास्त्रीये च । तेन पटयतीत्यादौ वृद्ध्यभावोऽशास्त्रीयोपि सिध्यति । नन्वेवमपि पूर्वसूत्रादेव विधिग्रहणमनुवर्तयिष्यते । सत्यम् । पुनर्विधिग्रहणाद्द्वितीयो नियमः क्रियते–पूर्वस्यैव विधौ स्थानिवन्न तु पूर्वपरयोर्विधाविति । तेन ईयतुरिति सिद्ध्यति । अन्यथा हि इणोऽतुसि द्विर्वचनेचीति यणादेशस्य स्थानिरूपातिदेशाद्द्वित्वे कृते द्वित्वकाले यणोऽपहारात्पुनः प्रवृत्तिवेलायां व्याश्रयत्वेन 'वार्णादाङ्गं बलीय' इत्यस्मिन्नप्रवृत्ते वर्णमात्राश्रयत्वेनान्तरङ्गत्वात्सवर्णदीर्घः स्यात् । न चाऽकृतव्यूहा इति यणिति वाच्यम् । निमित्तविघाताऽभावात् । कृतेपि यणि स्थानिवत्त्वेन सवर्णदीर्घप्राप्तेः। ततश्च सवर्णदीर्घे कृतेऽन्तादिवच्चेत्यनेनाभ्यासग्रहणेन ग्रहणादभ्यासह्रस्वत्वे दीर्घइणः कितीति दीर्घत्वे कृते दीर्घविधानसामर्थ्यादिणो यणभावे ईअतुरिति स्यात् । सिद्धान्ते तु पूर्वपरयोर्विधौ स्थानिवत्त्वाभावान्निमित्तविघातेनाऽकृतव्यूहपरिभाषयेणो यणि सिद्धं रूपम् । यद्वा स्थानिवदिति वतिबलेनाऽभावोप्यतिदिश्यते । उत्तरसूत्रे द्विर्वचनादिग्रहणाल्लिङ्गात् । विधिग्रहणं तु पूर्वस्यैव न तु पूर्वपरयोरित्येतदर्थमिति दिक् । इह स्थान्यादेशनिमित्तानां त्रयाणां सन्निधानाऽविशेषेपि स्थान्यपेक्षमेव पूर्वत्वं गृह्यते न तु आदेशापेक्षं निमित्तापेक्षं वा । 'वैयाकरण' इत्यत्र आयादेशापत्तेः । तदुक्तम् **अचः पूर्वत्वविज्ञानादैचोः सिद्ध**मिति। नन्वेवं समाद्येत्यत्र जग्ध्यादेशप्रसङ्गः, ण्यल्लोपाविति पूर्वविप्रतिषेधेन णिलोपे कृते ततः प्रत्ययलक्षणेन वृद्धौ सत्यामेकदेशविकृतस्यानन्यतयाऽऽदिग्रहणेन ग्रहणात् । एवं घात्यादित्यत्र वधादेशप्रसङ्ग इति चेन्न । आदिघात्योरपि स्थानिद्वाराऽनादिष्टादचः पूर्वत्वात् । ननु स्थानिनः पूर्वत्वेपि आदेशस्य किमायातम् ?। नह्यनादिष्टादचः पूर्वत्वं नाम शास्त्रीयं कार्यं यत्स्थानिवदादेश इति पूर्वसूत्रेणातिदिश्येतेति चेन्न । अनादिष्टादचः पूर्वत्वमुपजीव्याऽचः परस्मिन्निति शास्त्रे प्रवर्तयितव्ये स्थानिवदादेश इत्यस्य प्रवृत्तिसम्भवात् । तथा चाऽचः परस्मिन्नित्यतिदेश एव शास्त्रीयं कार्यं, तच्च पूर्वसूत्रेणातिदिश्यत इति फलितोऽर्थः। अत एव नपदान्तसूत्रे सवर्णग्रहणं कृतम् । अन्यथा श्नसोरल्लोपे कृते पश्चाद्भवन्ननुस्वारो नाऽनादिष्टादचः पूर्व इति तस्य विधौ स्थानिवद्भावविरहात्सवर्णग्रहणं व्यर्थमेव स्यात्। नन्वेवं क्षत्रियकण्डूतिरिति न सिद्ध्यति, तथाहि कण्डूयतेः क्तिचि अल्लोपयलोपयोः कृतयोरल्लोपस्य स्थानिवत्त्वेनोवङि कृते ऊकारस्यानादिष्टादचः पूर्वस्य स्थाने जातस्योवङः स्थानिवदादेश इति स्थानिवद्भावेनानादिष्टादचः पूर्वत्वादचः परस्मिन्निति स्थानिवत्त्वेनाकारेण व्यवायादूठोऽभावेन स्थानिवत्त्वादेव लोपोव्योर्वलीति वलोपाऽभावेन हलिचेति दीर्घे कृते कण्डूव्तिरिति प्राप्नोति । यत्तु यः स्थानिद्वारा पूर्वं उवङ्, न तस्योठ्, कस्य तर्हि, वकारस्य, यस्य चोठ् वकारस्य, न स स्थानिद्वारा पूर्वं इति । तन्न । तैस्तुरितिवत्कण्डू इत्यस्य कण्डुविति आदेशात् । तस्य च कण्डु-ऊ इत्यादेशे कर्त्तव्ये स्थानिवद्भावावश्यम्भावात् । उक्तं हि **सर्वे सर्वपदादेशा इति** । अन्यथा निराद्य घात्यादित्यादावपि स्थानिवद्भावानापत्त्या मूलशैथिल्यापत्तेरिति । अत्रोच्यते–अनादिष्टादचः पूर्वतायाः स्थानिद्वारकत्वमनित्यम्, नपदान्तसूत्रे ब्राह्मणकण्डूतिरिति भाष्योदाहरणाज्ज्ञापकात् ।

आतोनुपसर्गेक इति सूत्रे 'कविधौ सर्वत्र प्रसारणिभ्यो ड'इति वार्त्तिकस्य तत्प्रघट्टकभाष्यस्य च पर्यालोचनयाप्येवमेव लभ्यते । तथा च तत्र भाष्यम्-**योनादिष्टाचः पूर्वस्तत्कार्यं स्थानिवत्त्वं हीति ।** स्थानिद्वारके तु पूर्वत्वे गृह्यमाणे सम्पूर्णः प्रघट्टक एवासङ्गतः स्यादिति तत्रैव स्फुटीकरिष्यते । तत्रत्यः कैयटस्त्वापाततः । एतेन तितउमाचष्टे तितापयतीति हरदत्तग्रन्थोपि व्याख्यातः । तत्र हि णौ टिलोपे कृते तस्य स्थानिवत्त्वादचोञ्णितीति वृद्ध्यभावेपि अत उपधाया इति वृद्धौ आकारे कृते तस्य स्थानिद्वारा उकारात्पूर्वत्वेन पुग्विधावुकारलोपस्य स्थानिवत्त्वात्पुङ्न प्राप्नोति । न च यस्य पुक्-आकारान्तस्य, नासौ पूर्वः, यश्च पूर्वं आकारो, न तस्य पुगिति वाच्यम् । एकदेशविकृतस्यानन्यतया **सर्वेसर्वपदादेशा** इत्युक्तरीत्या चाकारान्तस्यापि पूर्वत्वानपायात् । तस्मात्स्थानिद्वारकं पूर्वत्वमनित्यमित्येव हरदत्तस्य शरणम् ।

अत्र केचित्-तितापयतीत्यसाध्वेव । तथाहि तितउणिजिति स्थिते टिलोपश्च प्राप्नोत्यत उपधाया इति वृद्धिश्च । उभयोर्नित्ययोः परत्वाद्वृद्धिः । ततष्टिलोपे कृते स्वत एवानादिष्टादचः पूर्वमादन्तं न तु स्थानिद्वारेति पुङ् न प्राप्नोति । तस्माच्छपि णिचो गुणे कृते एचि वृद्धावायादेशे तितायतीति भवति । न च तिता णिजिति स्थिते अन्तरङ्गत्वादाद्गुणे शप्ययादेशे तितयतीति स्यादिति वाच्यम् । शपि हि गुणे सति वृद्धिरेचीति बाधेनाद्गुणस्य निमित्तविघातस्योत्पत्स्यमानतयाऽकृतव्यूहपरिभाषया पूर्वमन्तरङ्गस्याप्याद्गुणस्याप्रवृत्तेः । अकृतव्यूहपरिभाषा ह्यन्तरङ्गपरिभाषाया अपवाद इत्युक्तम् । न च शपि गुणस्याचः परस्मिन्निति स्थानिवत्त्वादाद्गुणस्य न निमित्तविघात इति वाच्यम् । पूर्वस्यैव विधौ स्थानिवद्भावो न तु पूर्वपरयोर्विधावित्युक्तत्वात् । तस्मात्तितायतीत्येव साधु न तु तितयति तितापयतीति वा । चङि तु तिता णिच्, चङ् तिबिति स्थिते तनोतेर्डउः सन्वच्चेति व्युत्पत्तिपक्षेऽनभ्यासस्येति द्वित्वनिषेधे टिलोपस्य चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधाद्ध्रस्वाऽभावे णिलोपे तस्य स्थानिवत्त्वादसिद्धत्वाद्वाऽऽतोलोपाऽभावे दीर्घविधिं प्रति स्थानिवत्त्वनिषेधात्सवर्णदीर्घेऽतितदिति भवति न त्वतितापदिति । अत्रेदं वक्तव्यं, परत्वाद्वृद्धिरित्यसङ्गतं, नित्यत्वेन टिलोपात् । न च वृद्धिर्नित्या, अचः परस्मिन्निति कार्यातिदेशेन वृद्धिप्राप्तावपि लक्षणान्तरेण प्राप्नुवन्ननित्य इति न्यायेनाऽनित्यत्वात् । एवं च **हरदत्तोक्तिः** सुष्ठ्वेव । किं तु अनित्यत्वेपि स्थानिद्वारकं पूर्वत्वमिह नेष्यते इत्यस्मिन्नर्थे प्रमाणं चिन्त्यम् । तदेवं स्थानिद्वारकं वा स्वतो वा उभयथाप्यचः पूर्वत्वमिह गृह्यते इति स्थितम् ।

विधीयते इति विधिरिति कर्मणि किप्रत्ययः । पूर्वस्येति शेषे षष्ठी । अनुवादे परिभाषानुपस्थानात् । पुगाद्यागमेपि स्थानिवद्भावः । 'अच'इत्यत्र तु आदेश इति समभिव्याहारायोग्यताबलात्स्थानिसम्बन्धलाभः । षष्ठीस्थानेयोगेत्यतः पूर्वसूत्रे ऽनुवर्त्तितस्य स्थानेग्रहणस्येहाप्यनुवृत्तेर्वेति प्रसिद्धः पन्थाः । **न्यासकारस्तु** निमित्तापेक्षमादेशापेक्षं वा पूर्वत्वमित्यपि पक्षौ भाष्ये उपन्यस्तत्वात्स्वीचकार । वैयाकरणादौ तु बहिरङ्गयोरैचोरसिद्धत्वान्न दोष इत्याह । इदं च नाजानन्तर्यपरिभाषाया बहिरङ्गपरिभाषाया एव वा अनित्यतेति प्रागुक्तमुपष्टभ्य समर्थनीयम् । अस्मिन्पक्षे विधिरिति भावे किः । षष्ठी तु अनभिहितत्वात्कर्मणीत्यपि सुस्थमेव । किं तु निमित्तापेक्षया पूर्वत्वे त्यदाद्यत्वस्य स्थानिवत्त्वात् द्वाभ्यामित्यादौ दीर्घो न स्यात् । ईयतीत्वस्य स्थानिवत्त्वादिगन्तलक्षणो गुणो न स्यात्, देयमिति । तथा गुणवृद्ध्योः स्थानिवत्त्वाल्लवनं लावक इत्यवावौ न स्याताम् । द्वयोरेकस्य, देयमृणे, किरतौ लवन इत्यादिनिर्देशेनोपष्टम्भेनाऽनित्यताश्रयणं तु क्लिष्टमिति दिक् । पूर्वत्वं च नाव्यवधानगर्भं किन्तु व्यवहितसाधारणम् । तस्मिन्निति निर्दिष्ट इति सूत्रे निर्दिष्टग्रहणाल्लिङ्गात् । चङ्परनिर्ह्रासे निषेधारम्भाच्च । तेन पटयति अवधीदित्यादौ स्थानिवद्भावः सिद्ध्यति । वधादेशो ह्यदन्तः । स्यादेतत् । पटयतीत्यत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वाज्जश्त्वं प्राप्नोति । न च स्थानिवद्भावः, जश्त्वविधौ तत्प्रतिषेधात् । सत्यम् । कर्मसमर्पकात्-प्रातिपदिकादेव णिजुत्पत्तिर्न तु सुबन्तादिति वक्ष्यमाणत्वात् । सुबन्ताण्णिजिति पक्षेपि इष्टवदित्यतिदिष्टया भसंज्ञया पदसंज्ञाया बाधात् । पटुमित्यस्यैव हि भसंज्ञा प्रवृत्तेति कथं तत्र पदसंज्ञा प्रवर्त्तेत । तत्र चाऽप्रवृत्ता कथन्तरामेकदेशविकृते लभ्येत । स्रग्विणमाचष्टे स्रजयतीत्यादौ हि प्रातिपदिकाण्णिजुत्पत्तिरिति पक्षेप्येषैव गतिरिति वक्ष्यामः । अवधीदित्युदाहरणं तु भाष्यमते, **आर्द्धधातुकीयाः** सामान्येन भवन्तीति पूर्वसूत्रे एवोपपादितत्वेनार्द्धधातुकोपदेशे यदकारान्तं तस्य लोप इति लोपसम्भवात् । वार्त्तिकमते तु लिङीति परसप्तमीत्युक्तम् । तथा च अत् पदित्यादावियातो लोपो न प्राप्नोति । अत एव हलन्त एवायमादेश इति तन्मतम् । वृद्धिस्तु न भवति । 'वध्यादेशे वृद्धितत्वप्रतिषेध' इति पूर्वसूत्रस्थवार्त्तिकात् । एवमखट्वको बहुखट्वक इत्यादौ केण आपोन्यतरस्यामिति ह्रस्वस्य स्थानिवद्भावाद्ध्रस्वान्तेन्त्यात्पूर्वमिति खकाराकारस्योदात्तो न भवति किन्तु कपिपूर्वमित्युत्तरपदान्तोदात्तत्वमेव भवति । अचितीको बहुचितीक इत्यादौ तु चितेः कपीति दीर्घस्य स्थानिवद्भावाच्चिशब्देकारस्य उदात्तता भवति । न चोभयत्रापि स्वरविधौ न स्थानिवदिति निषेधः शङ्क्यः । लोपाजादेशमात्रविषयः स इति वक्ष्यमाणत्वात् । एवं पट्व्या मृद्व्येति बहुभिर्वृत्तिकारैरुदाहृतत्वान्मूर्द्धाभिषिक्तमिति भाष्ये व्यवहृतमप्युदाहरणं साध्वेव । अकृतव्यूहन्यायेन प्रथमं पूर्वयणादेशाऽयोग्यता ।

न चैवं कर्त्र्यां हर्त्र्येत्याचुदात्तयण इति विभक्तेरुदात्तत्वं न स्यादिति वाच्यम् । स्वरविधौ व्यञ्जनस्याऽविद्यमानवद्भावेन पूर्वंयणमेवाश्रित्य तत्समाधानात् । न च पूर्वस्मादपि विधौ स्थानिवद्भावाद्व्यञ्जनमेव नेति वाच्यम् । रेफस्याऽऽदिष्टादचः पूर्वत्वात् । स्थानिद्वारकस्य पूर्वत्वस्याऽनित्यत्वात् । निष्ठायां सेटीति सेड्ग्रहणेन पूर्वस्माद्विधौ स्थानिवद्भावस्याऽनित्यत्वाच्च । तस्मान्मूर्द्धाभिषिक्तमुदाहरणमितिपक्षो नातीव दुष्यति । अत एव ह्याश्रीयमाणायामेव प्रकृतौ स्थानिवत्त्वमिति पक्षे अकुर्व्याशामलुन्याशाम् व्यत्यजन्याशां राय्याशामित्यत्र क्रमेण ये चेत्युलोपः ईहल्यघोरितीत्वं येविभाषा रायोहलीत्यात्वं च प्राप्नोतीति भाष्यवार्त्तिकयोरुक्तम् । यत्त्वन्तरङ्गं बलवदिति वाऽसिद्धपरिभाषां वाऽऽश्रित्य पट्व्या मृद्व्येष्युदाहरणनिराकरणपरं भाष्यं, तत्तु अकृतव्यूहवचसोऽनित्यताभिप्रायेण कथं चिन्नेयमिति दिक् । [अचः पर] ।

**न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ।** पदान्तादिकर्मकेषु विधिषु पूर्वेण प्राप्तः स्थानिवद्भावो न स्यात् । **पदान्ते**—कानि सन्ति । कौ स्तः । इह यणावादेशयोः कर्त्तव्ययोः श्नसोरल्लोपो न स्थानिवत् । न चाऽनादिष्टादचः पूर्वत्वविरहादेव न स्थानिवदिति वाच्यम् । वाक्यादपोद्धृत्य पदानि संस्क्रियन्तइति पक्षेऽनादिष्टादचः पूर्वत्वस्य सत्त्वात् । न हि पदान्तरनिरपेक्षमेव पदमिहशास्त्रे संस्कार्यमिति नियमः । युष्मद्युपपद इत्याद्यनुशासनस्याऽसङ्गतिप्रसङ्गात् । एतच्चाङ्गसंज्ञासूत्रे कैयटेन ध्वनितम् । केवलपदसंस्कारपक्षे अदद्रीच इत्यादौ अच इत्यल्लोपो न स्थानिवदित्युदाहार्यम् । विधिशब्दश्चेह न कर्मसाधनः । तथात्वे हि कर्मधारयो वा स्याच्छेषषष्ठ्यन्तेन सह तत्पुरुषो वा । नाद्यः । विधिशब्दस्य क्रियाशब्दतया पूर्वनिपातप्रसङ्गात् । नान्त्यः । पदान्तस्य कस्मिंश्चित्कर्त्तव्ये न स्थानिवदिति पर्यवसानेन वृक्षवित्यत्र वलोपापत्तेः । द्वन्द्वनिर्दिष्टेषु द्विर्वचनादिषु अनन्वयापत्तेश्च । तस्माद्भावसाधन एवाऽन्तरङ्गत्वाच्च । अत एव कर्मषष्ठ्यन्तेन समासः । शुकी तटीत्यादौ पदसंज्ञायां कर्त्तव्यायां यस्येति लोपः स्थानिवदेव । न हि स्वादिष्विति सूत्रेण पदस्यान्तो विधीयते येन निषेधः स्यात् । किं तु संज्ञामात्रम् । तत्रापि यथोद्देशपक्षः । जश्त्वादिकार्यकालत्वे 'पूर्वत्रासिद्धे ने'ति निषेधापत्तेः । एकदेशविकृतस्यानन्यत्वाद्वेतस्वानित्यत्र रुः प्राप्तः बहिरङ्गस्याऽसिद्धत्वान्नेति वक्ष्यते । भाष्ये तु पदसंज्ञायाः पदान्ततां स्वीकृत्य पदे अन्त इति भसंज्ञापि पदकार्यमिति च द्वेधा समाहितम् । तत्रान्त्ये षडिके वचनसामर्थ्यादिति बोध्यम् । वाचिकषडिकौ तु पञ्चमे वक्ष्येते ।

**द्विर्वचने**—सुध्युपास्यः । स्थानिवद्भावनिषेधसामर्थ्यादेव बहिरङ्गपरिभाषापीह न प्रवर्त्तते । नाजानन्तर्यइति निषेधाद्वा । **वरे** इति निपातनादलुक् द्वन्द्वश्च । वरे योऽजशादेः स न स्थानिवत् । यायावरः । यातेर्नित्यं कौटिल्ये इति यङ् , यश्चयङ इति वरच् । तन्निमित्तकोऽतो लोपः । स च आतो लोप इटि चेत्यालोपे कर्त्तव्ये न स्थानिवत् । नन्विह परनिमित्तकत्वमेव नास्ति, आर्द्धधातुक इति विषयसप्तम्यभ्युपगमात् । अत एव हि अचोयदिति सूत्रे ऽज्ग्रहणं कृतम् । अन्यथा हलन्ताण्ण्यतो विशेषविहिततया परिशेषादच एव यद्भविष्यति किं तेन ?। विषयसप्तम्यां तु दित्स्यं धित्स्यमित्यादावजन्तभूतपूर्वादपि यत्सिद्धये अज्ग्रहणमिति यतोऽनाव इत्याद्युदात्तस्सिध्यति । सत्यम् । वरेग्रहणेन परसप्तमीपक्षो ज्ञाप्यते । तथा चानुदात्तेतश्च हलादेरिति सूत्रे आदिग्रहणं कृतम् । हलन्तादिति मा विज्ञायीति । अस्ति च हलन्तविशेषणस्य व्यावर्त्यं जुगुप्सनो मीमांसन इति । विषयसप्तमीत्वे त्विहापि अतोलोपे हलन्तत्वाद्युचा भाव्यमेवेति हलन्तविशेषणवैयर्थ्यात्सामर्थ्यादेवादिपरिग्रहसिद्धौ हल इत्येव ब्रूयात् । एवं च यातेर्यङन्तात् क्विचि अतो लोपे यलोपविधिं प्रति स्थातिवत्त्वनिषेधाद्यलोपे च याया—तीति स्थिते यङकारलोपस्य स्थानिवत्त्वादातो लोप इटि चेत्याकारलोपे पुनर्यलोपे यातिरिति भवति । न च पुनराकारयकारयोर्लोपे सति क्विच्प्रत्ययमात्रं श्रूयेतेति वाच्यम् । आल्लोपस्य स्थानिवत्त्वात् । चिणोलुङ्न्यायेनाऽसिद्धत्वाद्वा । **यलोपे**—उदाहरणान्तरमपि । तद्यथा—कण्डूयतेः क्विच् । कण्डूतिः । क्तिन्निति तु काशिकायां प्रमादः । अप्रत्ययादित्यनेन बाधात् । न च शप्तिरित्यादाविवेह आवादित्वकल्पनं बहुलग्रहणं वा शरणीकरणार्हम् । भाष्यकारेणैव कण्डूयेत्येव भवितव्यमिति वदता एतस्यापशब्दतोक्तेः । तस्मादयं क्विजेव । ततोऽल्लोपयलोपौ । अल्लोपस्य स्थानिवत्वादुवङ् । ततश्छ्वोः शूडित्यूठ् । न चोठ्यपि स्थानिवत्त्वम् । आदिष्टादचः पूर्वत्वात् । अत एव ऊठः पुनरुवङ् न भवति । **सर्वे सर्वपदादेशा** इत्याश्रित्य स्थानिद्वारकं पूर्वत्वं यद्यपीह वक्तुं शक्यते भाष्यमते लोलुवः पोपुव इत्यादौ यथा, तथापि स्थानिद्वारकं पूर्वत्वं काचित्कमेवेति पूर्वसूत्रे एवोक्तम् । तथा तिष्ठतेर्यङन्तात् क्विच् । अल्लोपयलोपयोस्तेष्ठि—तीति स्थिते अल्लोपस्य स्थानिवत्त्वादियङ् । गलोपः । तेष्ठितिः । तथा पेपीयतेः क्विचि अल्लोपयलोपयोरेरनेकाच इति यणि यलोपे कृते पेपिरिति भवति । शो तनूकरणे । यङन्तात् क्विचि अल्लोपयलोपाऽऽल्लोपेषु पूर्वत्रासिद्धे नेति स्थानिवत्त्वनिषेधाच्छशांष इति षत्वे कृते शाष्टिरिति भवति । एवं चेचीयतेश्चेक्तिरिति दिक् । तदेवं वरेयलोपेति नैकं निमित्तं किं तु द्वे इति स्थितम् । केचित्तु वर—ई इति ईकारं प्रश्लिष्य ईकारे परतो विधौ न स्थानिवदिति व्याचख्युः । तेनामलक्याः फलमामलकम् । नित्यं वृद्धशरादिभ्य इति मयट् । फले लुक् । ततो लुक्तद्धितलुकीति ङीपो लुक् । स च यस्येतिलोपे न स्थानिवत् ।

पूर्वोक्तव्याख्याने तु लुका लुप्तं न स्थानिवदिति वचनं करिष्यते । तत्र च लुप्तमिति नपुंसके भावे क्तः । लुङ् स्थानिवदिति फलितोर्थः । **स्वरे**–चिकीर्षकः । सनोऽतो लोपो लितीति ककारेकारस्योदात्तत्वे कर्त्तव्ये न स्थानिवत् । न च लितीत्यस्यारम्भसामर्थ्यम् । कारक इत्यादौ सावकाशत्वात् । भाष्ये तु आकर्षिक इत्युदाहृतं, तदापाततः । ठलो लित्त्वसामर्थ्यात्स्थानिवद्भावकृतव्यवधाने सत्यपि लित्स्वरस्य सुवचत्वात्, ध्नन्तीत्यादौ कुत्ववत् । **सवर्णानुस्वारयोः**–शिण्ढि । पिण्ढि । श्नसोरल्लोपोऽत्र न स्थानिवत् । अनुस्वारस्याऽनादिष्टादचः पूर्वत्वं तु स्थानिद्वारेत्युक्तम् । यद्यपि सवर्णग्रहणमात्रेणाऽनुस्वारोप्याक्षेप्तुं शक्यते तथापि विशेषापेक्षं ज्ञापकमित्यपि सम्भाव्येत । तथा च यत्र न परसवर्णप्रसङ्गः शिंषन्तीत्यादौ तत्र स्थानिवद्भावं निषेद्धुमनुस्वारग्रहणम् । अचः परस्मिन्निति सूत्रे उक्तरीत्या अभ्यासस्याऽसवर्णइत्यादिषु सवर्णइति निषेधस्य लब्धावकाशतया शिण्ढीत्यादेरपि असिद्ध्यापत्तेश्चेति दिक् । **दीर्घे**–प्रतिदीव्नः । इह हलि चेति दीर्घेऽल्लोपो न स्थानिवत् । यत्तु **काशिकायामुक्तम्**–उपधायां चेति दीर्घ इति, तत्प्रामादिकम् । तथा च उपधायां चेत्यत्रोक्तम्–

प्रतिदीव्नेत्यत्र हलिचेति दीर्घ इति । यद्वा–आचारक्विबन्तात्क्विप् चेति क्विपि समाधेयम् । नन्वेवमनुनासिकस्य क्विझलोरिति दीर्घः स्यात् । सत्यम् । अकृतव्यूहपरिभाषया भाविनमल्लोपमालोच्याऽन्तरङ्गोपि दीर्घो न करिष्यते, जग्मुष इत्यत्रेडागमनकारादेशाविवेति बोध्यम् । ननु स्थानिवत्त्वाऽभावेप्यसिद्धं बहिरङ्गमित्यल्लोपस्यासिद्धत्वाद्दीर्घो न स्यादिति चेत् । न । कृतितुग्विधिग्रहणेन बहिरङ्गपरिभाषाया अनित्यत्वस्य ज्ञापितत्वात् । यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति दीर्घस्यासिद्धतयाऽन्तरङ्गाभावेन परिभाषाया अप्रवृत्तेश्च । **जश्शि**–सग्धिश्च मे । बब्धान्ते हरी । तथाहि–अदनं ग्धिः । अदेः क्तिनि बहुलं छन्दसीति घस्लादेशः । घसिभसोर्हलिचेत्युपधालोपः । झलो झलीति सकारलोपः । धिसकारे सिचो लोप इत्यस्य भाष्यकृता ऽनाश्रयणात् । वार्त्तिकमते छान्दसो वर्णलोपः । झषस्तथोरिति धत्वम् । न च तस्मिन्कर्त्तव्ये पूर्वस्मादपीति स्थानिवद्भावः । पञ्चमीसमासस्याऽनित्यतायाः पूर्वसूत्रएवोपपादितत्वात् । घस्य झलाञ्जशिति जश्त्वे कर्त्तव्ये उपधालोपो न स्थानिवत् । समाना ग्धिः सग्धिः । सहस्य सः संज्ञायामिति सूत्रात्स इत्यनुवर्त्तमाने समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केष्विति सूत्रेण समानस्य सभावः । बब्धामिति भसेर्लोट् । तसस्ताम् । शपः श्लुः । अन्तरङ्गत्वाद्द्वित्वमभ्यासकार्यम् । ततो घसिभसोरित्युपधालोपादि प्राग्वत् । **चरि**–जक्षतुः । जक्षुः । घसेर्लिट् अतुस् उस् च । गमहनेत्युपधालोपः । खरि चेति चर्त्वं प्रति न स्थानिवत् । तत्र वार्त्तिकम्–**स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति** । तेनान्यः स्थानिवदेव । पञ्चभिररत्निभिः क्रीताः पञ्चारत्नयः । वेदे तु पञ्चारत्न्यः । जसादिषुच्छन्दसि वावचनं प्राङ् णौ चङ्युपधाया इति गुणाभावे यण् । तस्य स्थानिवद्भावादिगन्तकालेत्यादिना पूर्वपदप्रकृतिस्वर इत्याहुः । यद्यपि असिद्धं बहिरङ्गमित्यनेनापीदं सिध्यति तथापि अकृतव्यूहपरिभाषामाश्रित्य योज्यम् । 'अचितीको' 'ऽखट्वक' इत्यत्र ह्रस्वान्तेन्त्यात्पूर्वमित्यस्य क्रमेण प्रवृत्त्यप्रवृत्ती फलमिति तु पूर्वसूत्रे एवोक्तम् । न च तत्र बहिरङ्गपरिभाषायाः प्रसङ्गोऽस्ति । कियोःगियोः । व्युत्पत्तिपक्षे हलि चेति दीर्घः प्राप्तः, यणः स्थानिवद्भावान्न भवति । अच इरित्यधिकारे भुजेः किच्च कृगृशृपृकुटिभिदिछिदिभ्यश्चेति इः। स च कित् । यत्तु हरदत्तेन न्यासकृता च कृग्रोरिच्चेत्युपन्यस्तं तत् क्व चिदुणादिवृत्तौ अन्वेषणीयम् । वाय्वोः । इह यलोपो न । अस्मिंश्च वार्त्तिके स्वरग्रहणमात्रमावश्यकम् । कियोर्गियोरिति तु उपधायां चेति सूत्रे वृत्तिकारोक्तरीत्या उणादीनामव्युत्पत्तिपक्षालम्बनेनापि सिद्धम् । वाय्वोदिति तु बहिरङ्गस्याऽसिद्धतया सिद्धम् । **क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् । पूर्वत्रासिद्धे च । तस्य दोषः संयोगादिलोपलत्वणत्वेषु ।** अस्यार्थः–क्वौ विधिं प्रति न स्थानिवत् । लवमाचक्षाणो लौः । अत्र णिचि यष्टिलोपो यश्च क्वौ णिलोपस्तदुभयं छ्वोः शूडिति वकारस्य क्विनिमित्ते ऊठि कर्त्तव्ये न स्थानिवत् । एत्येधत्यूठ्स्विति वृद्धिः । तथा पिपठिषि ब्राह्मणकुलानीति दीधीवेवीटामिति सूत्रे यदुदाहृतं तदपि क्वौ विधिं प्रतीति व्याख्याने एव सङ्गच्छते । क्वौ लुप्तं न स्थानिवदिति व्याख्याने तु लौः पिपठिषीत्युभयमपि न सिद्ध्येत् । णिचि टिलोपस्य स्थानिवद्भावे ऊठो ऽसम्भवात् । पिपठिषतेरप्रत्यये अतो लोपे नपुंसकबहुवचने शौ झलक्षणे नु कर्त्तव्येऽतो लोपस्य स्थानिवत्त्वनिषेधेन नुम्प्रसङ्गाच्च । एतच्च दीधीवेवीटामिति सूत्रे कण्ड्वादिसूत्रे च **मिश्रग्रन्थे** स्फुटम् । **कैयटोपि** दीधीवेटीटामित्यत्र क्वौ विधिं प्रतीत्यर्थो व्यवस्थितो न तु क्वौ लुप्तं न स्थानिवदितीत्याह । अत्र व्यवस्थितइति वदता क्वौ लुप्तं न स्थानिवदिति पक्षोपि क्वचिदाश्रीयतएव, नियमः परं नास्तीति सूचितम् ।

लुप्तमिति नपुंसके भावे क्तः। एवं च सख्युर्गोमान् पदः त्वम् अहमिति सिद्धम् । तथाहि ख्यत्यात्परस्येतिसूत्रे भाष्यम् । सखीयतेः सख्युः, लूनीयतेर्लून्युरिति । तत्र सखीयतेः क्विपि अल्लोपे यलोपे अल्लोपस्य स्थानिवद्भावात् परत्वात्क्विब्लोपं बाधित्वा इकोयणचीति यण्स्यात् । ततो यलोपे सखो लून इति स्यात् । अत एव क्वौ लुप्तं न स्थानिवदिति तत्र यणं परिजहार **कैयटः** । तथा उगिदचामिति सूत्रे अधातुभूतपूर्वस्यापि नुमर्थमधातुग्रहणमित्युक्त्वा गोमत्यतेर-

प्रत्यये गोमानित्युदाहृतं भाष्ये। तत्राप्यल्लोपस्य स्थानिवत्त्वात्सर्वनामस्थानपरत्वं नास्तीति नुम् न स्यात्। नचाधातुग्रहणसामर्थ्यात्स्थानिवद्भावकृतव्यवाये सत्यपि नुम् स्यादिति वाच्यम्। आचारक्विबन्तात्क्विप्चेति क्विपि चरितार्थत्वात्। तस्मात्क्वौ लुप्तं नेत्येव शरणम्। ननु गोमत्यतेर्गोमतेर्वा उभयथापि गोमानिति न सिध्यति, अत्वसन्तस्येति दीर्घविधौ अधातोरिति विशेषणात्। सत्यम्। तत्राऽधातुग्रहणमसन्तस्यैव विशेषणं न त्वत्वन्तस्यापीति वक्ष्यमाणत्वान्न दोषः। तथा येनविधिस्तदन्तस्येति सूत्रे केवलोपि पाच्छब्दोस्ति। पादयतेः पात्, पद इति भाष्यम्। अत्रापि स्थानिवद्भावाद्व्यवधानेन पद्भावो न स्यात्। क्वौ लुप्तं नेति सिध्यति। अत एव 'पादस्य पदहस्त्यादिभ्य' इति न सूत्रितम्। प्रतिपदोक्तस्याऽस्यैव पदादेशो मा भूत्, किं तु क्विबन्तस्यापि यथा स्यादिति। एवं च पादस्य लोप इति गुरुनिर्देशं कुर्वता सूत्रकृतैव क्वौ लुप्तं न स्थानिवदिति ज्ञापितम्। तच्च क्वाचित्कमिति तु प्रकृतसूत्रस्थेनैवं विज्ञायते। क्वौ लुप्तं नेति भाष्यस्यार्थः विशब्दमाहात्म्यात् ख्यत्यात्सूत्रादिभाष्याच्चेति व्यवस्थितशब्दं प्रयुञ्जानेन कैयटेन ध्वनितम्। युष्मानाचष्टे युष्मयति। ततः क्विपि णिलोपे सौ स्वाहौ सौ इति कर्त्तव्ये णिलोपो न स्थानिवत्। तदुक्तम्-**स्थानिवत्त्वं च णेरत्र क्वौ लुप्तत्वान्न विद्यते** इति। **स्थानिवत्त्वमिति**। लोपस्येति शेषः णेः क्वौ लुप्तत्वादित्यन्वयः। अस्तु तर्हि क्वौ लुप्तमित्यपि नित्यमेव, तावतापि लवमाचक्षाणो लौरित्यस्य सिद्धेरिति चेन्न। पिपठिषोत्यस्याऽसिद्धिप्रसङ्गात्। देवयतेर्द्यूरिति तु इह कैयटेन यदुदाहृतं क्वौ लुप्तं नेति (न) सिध्यतीति। तस्यायमाशयः—यद्यपीह क्वौ विधिप्रत्यूठ् सिद्धः तथापि तस्य स्थानिद्वारा अनादिष्टादचःपूर्वत्वेन णिलोपस्य स्थानिवद्भावादचोञ्णितीति वृद्धिप्रसङ्गः। तस्मात्क्वौ लुप्तं नेत्येव शरणम्। यत्तु लोपो व्योरिति सूत्रे कण्डूयतेः क्यजन्तादप्रत्यये कण्डूः कण्डुवाविति व्युत्पादयन् कैयट आह। अल्लोपस्य स्थानिवद्भावाद्यण्। तस्य ऊठ्। न चऊठि कर्त्तव्ये स्थानिवत्त्वेन प्रतिबन्धः स्यादिति वाच्यम्। वकारस्यादिष्टादचः पूर्वत्वादिति, तत्तु स्थानिद्वारकं पूर्वत्वमनित्यमित्याश्रित्य। तद्रीत्या तु द्यूरित्यपि सुसाधमेव। ननूभयथापि द्यूरित्यत्र प्रत्ययलक्षणेन वृद्धिः स्यादेवेति चेत्। न। बहिरङ्गस्य ऊठो वृद्धिं प्रत्यसिद्धत्वात्। एवं च स्थानिवद्भावे सत्यपि न काचित्क्षतिः। बहिरङ्गत्वेनैव सर्वसमाधानात्। तस्माद्द्यूरिति पक्षद्वयेपि सिद्ध्यतीत्येव तत्त्वम्। नन्वेकदेशविकृतस्यानन्यत्वाद्दिव औत्स्यादिति चेन्न। निरनुबन्धकपरिभाषयाऽधातुग्रहणानुवृत्तेर्वाऽक्षद्यूरित्यत्र न औदिति दिव औत्सूत्रे भाष्ये एव स्पष्टत्वात्। यद्यपि उगिदचामिति सूत्रे अधातुभूतपूर्वादित्यर्थस्तथापीह शब्दाधिकार इति भावः। एतेन हलि चेति दीर्घः दीव्यतीति नामधातुप्रकरणे **कौमुदीप्रसादौ** प्रत्युक्तौ। दिवेर्डिविरिति न्यासोहितसूत्रेण डिविरिति वदन्माधवोपि दिव्यतीति ह्रस्वमेवोपजगाम। प्रकृतमनुसरामः—द्विर्वचनादौ तु ओः सुपीति यण्। द्य्वौ द्य्व इत्यादि खलपूवत्। कण्डूः कण्डुवौ कण्डुव इत्यादि तूवङेव। संयोगपूर्वकतया यणोऽप्राप्तेरिति दिक् अयमत्र संग्रहः—

**सख्युर्गोमान्पदस्त्वं च क्वौ लुप्तस्य निदर्शनम्।**
**अनित्यत्वे पिपठिषि क्वौ विधौ लौद्व्योर्द्यूः।**

**लुक् न स्थानिवत्**। आमलक्याः फलम् आमलकम्। फले लुकः प्रत्याख्यानपक्षे तु पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुरित्युदाहार्यम्। तथा पञ्च इन्द्राण्योऽग्नाय्यश्च देवता अस्य पञ्चेन्द्रःपञ्चाग्निः। ङीषा संनियुक्त आनुक् ऐकारश्च श्रूयेत। न च सन्नियोगशिष्टन्यायेन निवृत्तिः। परतद्धितलुङ्निमित्ताया ङीष्निवृत्तेः, पूर्वयोरानुगैकारयोर्निवृत्तौ कर्त्तव्यायामचः परस्मिन्निति स्थानिवत्त्वात्। ये तु पूर्वोक्तरीत्या वर ई इतीकारप्रश्लेषं कुर्वन्ति तेषामिह लुग्ग्रहणं न कार्यम्। **उपधात्वे कर्त्तव्ये न स्थानिवत्**। तेन परिखाशब्दाच्चातुरर्थिके अणि कृते वृद्धादकेकान्तखोपधादिति पारिखशब्दात्खोपधलक्षणे छप्रत्यये पारिखीयः सिध्यति। अन्यथा उपधासंज्ञायाः पूर्वविधित्वेन तत्र कर्त्तव्यायामाल्लोपः स्थानिवत्स्यात्। नन्वेवं पटयतीत्यादौ वृद्धिः स्यादिति चेन्न। यत्रोपधासंज्ञामुपजीव्य प्रत्ययो विधिरिसतस्तत्रैवायं निषेध इति भाष्ये स्थितत्वात्। अत्र चङ्परनिर्ह्रासग्रहणमेव ज्ञापकम्। कथं तर्हि भाष्ये यलोपे सौरी बलाकेत्युदाहरणं दत्वा उपधाविधौ नेत्येव सिद्धमित्युक्तमिति चेत्। अनास्थावादमात्रं तदित्यवेहि। तत्र हि तेनैकदिगित्यणन्तान्ङीप्यल्लोपद्वयस्यापि यलोपे कर्त्तव्ये स्थानिवद्भावे निषिद्धे समानाश्रयस्याऽणो लोपस्याऽऽभीयत्वेनाऽसिद्धतायां यलोपः सिद्ध्यतीति यलोपे न स्थानिवदित्यस्यैव सौरीत्युदाहरणम्। उपधात्वं तत्र लोपे उपयोगि न तु प्रत्ययविधाविति स्थितम्। चङ्परे णौ यो ह्रस्वः स **चङ्परनिर्ह्रासः**, तत्र न स्थानिवत्। वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन। अत्र प्रथमणिचो लोपस्य स्थानिवत्त्वादनुपधाकार इति णौचङीत्युपधाह्रस्वो न प्राप्नोति। णिसामान्यग्रहणादप्येतत्सिद्धम्। इदं तूदाहरणम्—वारि आख्यत्-अवीवरत्। न च नाग्लोपीति निषेधः शङ्क्यः। परत्वाद्वृद्धौ सत्यां टिलोप इत्यभ्युपगमेनाऽग्लोपित्वाऽभावात्। अतएव हल कलेत्यदन्तनिपातनं सार्थकम्। **कुत्वे न स्थानिवत्**। अर्चयतेरौणादिकः कप्रत्ययः—अर्कः। पाचयतेः क्तिच्। पाक्तिः। चोः कुरिति कुत्वे णिलोपो न स्थानिवत्। इह सूत्रे जश्चर्ष्वित्येव सिद्धे विधिग्रहणं द्वन्द्वाश्रयेण विध्यन्तरोपसंग्रहार्थम्। तद्व्युत्पादनार्थं च क्विलुगित्यादिवार्त्तिकमिति निष्कर्षः। तत्रापि क्विचङ्परनिर्ह्रासोपधानां ग्रहणमावश्यकम्। लुक ईकारप्रश्लेषेण गतार्थत्वात्कुत्वस्य पूर्वत्रासिद्धीयत्वाच्चेत्यवधेयम्। चजोरिति कुत्वे वोदाहरणमन्वेषणी-

यम्। **पूर्वत्रासिद्धे च न स्थानिवत्**। पापच्यतेः क्विच्–पापक्तिः । यायज्यतेर्यायष्टिः। पाचयतेः पाक्तिः । याजयतेर्यांष्टिः । इहाऽल्लोपणिलोपौ कुत्वषत्वयोर्न स्थानिवत् । एवं लेहयतेर्लेढिः । दोहयतेर्दोग्धिः । वेशयतेर्वेष्टिः । दाशयतेर्दाष्टिरित्याद्यूह्यम् । न्यायसिद्धं चेदम्। अचः परस्मिन्नित्यतिदेशं प्रति त्रिपादीस्थस्याऽसिद्धतया तस्मिन् कर्त्तव्येऽतिदेशाप्राप्तेः । न चैवं स्थानिवत्सूत्रस्याप्यप्रवृत्तौ राम इति विसर्गो न स्यादिति वाच्यम् । प्रत्ययः परश्चेत्यादिनिर्देशैर्भोभगो अघो इति सूत्रेऽश्ग्रहणेन च तत्प्रवृत्तेर्ज्ञापितत्वादित्यवधेयम् । एवं स्थिते द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः सूत्रे न पाठ्याः। किं तु नपदान्तवरेयलोपस्वरेष्वित्येव पाठ्यमिति भाष्यवार्तिकयोः स्थितम् । स्यादेतत्–यदि दीर्घग्रहणं त्यज्यते तर्हि साप्तमिके दीर्घविधौ स्थानिवद्भावः प्रसज्येत । तथा च चिण्णमुलोरिति सूत्रे यङन्ताण्णिजन्ताद्वा णिचि ततश्चिणि अशंशामि अशामीति यदुदाह्रियते तन्न सिद्ध्येत् । न च दीर्घग्रहणसामर्थ्यात्स्थानिवद्भावबाधः, कर्मेणिङ्सूत्रे हरदत्ताद्युक्तरीत्या चिण्णमुलोर्दीर्घइत्यत्र कैयटाद्युक्तरीत्या चाहिडि अहीडीत्येतत्सिद्ध्या अहेडीत्यस्य निवृत्त्या तस्य चरितार्थत्वात् । उच्यते । णित्वजात्यैक्यं गृहीत्वा अशमीति सिद्धम्। अशंशामीति तु यङ्लुगन्ताण्णिचि भविष्यति । न हि यङ्यङ्लुकोः स्वरेऽर्थे वा कश्चिद्विशेषोस्ति येन यङ्यैव साधयितुं क्लिश्येत । एवञ्च ग्राहितमित्याद्यपि सिद्धम् । पूर्वस्मादपि विधौ स्थानिवद्भावेन णिचा व्यवधाने सति ग्रहोऽलिटीति दीर्घस्याऽप्रवृत्तेः । सूत्रमते तु विहितविशेषणाश्रयणाद्ग्राहितमित्यादौ न दीर्घः । अत एव यङन्तात्तृचि जरीगृहीतेत्यत्र न दीर्घः स्थानिवद्भावात् । सूत्रमते विहितविशेषणाच्चेति स्थितम् । यङ्लुगन्तात्तु तृजादाविटो दीर्घो भवत्येवेति माधवः, द्विः प्रयोगो द्विर्वचनं षाष्ठमिति सिद्धान्ताद्ग्रहेर्विहितत्वानपायात्। यङ्लुकोऽनैमित्तिकतयाऽज्झलादेशतया लुका लुप्तत्वाच्च स्थानिवद्भावोपि नास्तीति **माधवस्याशयः**। वस्तुतस्तु यङ्लुक्यपि इटो दीर्घोऽनिष्ट एव । एकाचोद्वेप्रथमस्येति सूत्रे भाष्यकैयटादिपर्यालोचनया तथैव निर्णयात् । तथा च तत्र ग्रहेरङ्गादिति भाष्यमुपादाय कैयट आह–तृचो हि जरिगृहीत्यङ्गं न तु ग्रहिः । विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयणमिति । यद्यपि तत्र यङन्तं प्रक्रम्येदमुक्तं तथापि युक्तिसाम्याद्यङ्लुङन्तेपि न दीर्घ इति लक्ष्यते । अत एवैकाचोद्वे इति सूत्रे हरदत्तोपि यङन्ते दीर्घमाशङ्क्याह–एकाच उपदेशइत्यतो दीर्घविधावेकाज्ग्रहणमनुवर्त्ततइति । न ह्यत्र पक्षे यङ्लुकि दीर्घस्योक्तिसम्भवोप्यस्ति । नन्वेवं ग्रहोऽलिटीति सूत्रे यङ्लोपे चोक्तमिति वार्तिकव्याख्यावसरे स्थानिवद्भावाद्विहितविशेषणाश्रयणाद्वा यङन्ते दीर्घं परिहरन् कैयटो विरुध्येत । यङ्लुगर्थं यथाश्रुतरूपाश्रयणस्यैकाज्ग्रहणानुवर्तनस्य वा आवश्यकतया तेनैव गतार्थत्वादिति चेन्न । ग्रहोऽलिटीत्यत्रत्यकैयटग्रन्थस्योपायस्योपायान्तरादूषकत्वादितिन्यायेन यङन्ते उपायान्तराभिधानपरत्वात् । अत एव तत्र कैयट आह–अन्यत्रास्य दोषस्य सम्यगुद्धृतत्वादिति । एवं हि वदन् तत्रत्यपरिहारस्याऽव्यापकतामेकाच्सूत्रोक्तस्यैवावश्यादर्तव्यतां चाभिप्रैति । न च यथाश्रुतरूपपक्षे गृहीतमित्याद्यसिद्धिः । अङ्गसंज्ञाप्रवृत्तिवेलायां यथाश्रुतरूपस्यैव तत्र सत्त्वात् । ग्राहितादौ तु नैवम् । एकाच इति समाधानं तु णिज्भिन्नविषयकमेव । तस्मात्–**यङ्लुङन्ताण्णिजन्ताच्चयङन्ताच्च ग्रहेरिटः । द्विधा त्रिधा चतुर्द्धा च दीर्घो नेति व्यवस्थितम्** । माधवग्रन्थस्तु विहितविशेषणपक्षस्य मुख्यतां, पक्षान्तराणामभ्युच्चयतां च परिकल्प्य कथं चिन्नेय इति प्रतिभातीति दिक् । **तस्य दोष** इत्यादेरयमर्थः,–**तस्य** पूर्वत्रासिद्धे चेत्यस्य स्थलत्रये **दोषः**–अतिप्रसक्तिः, तस्मात्तत्र स्थानिवद्भावस्य प्रतिप्रसवः कर्त्तव्यइत्यर्थः । तेन वाक्यर्थं वास्यर्थगित्यत्र स्कोरितिलोपो न । निगाल्यते । अचिविभाषेति लत्वं सिद्ध्यति । तथा माषवपनीत्यत्र णत्वं न भवति । अल्लोपस्य स्थानिवत्त्वेन नकारस्य समासान्तत्वाऽभावात् । न चाऽसत्यपि स्थानिवद्भावे ङीबेव समासान्तो न तु नकार इति वाच्यम् । ङ.युत्पत्तेः प्रागेव समास इति द्वितीये वक्ष्यमाणत्वात् । एवं स्थिते तक्षयतेः क्विपि तक् , रक्षयतेस्तु रगित्यादि बोध्यम् । अत्र हि संयोगादिलोपे कर्तव्ये णिलोपस्य स्थानिवद्भावान्न तत्प्रवृत्तिः । संयोगान्तलोपे तु स्थानिवद्भावनिषेधाद्भवत्येवासौ । गोरडिति तु शुद्धात्क्विपि बोध्यम् । यत्त्वचः परस्मिन्निति सूत्रे दध्यत्रेति भाष्यमुपादाय कैयटेनोक्तम्, पूर्वत्रासिद्धे चेत्येतदत्र नास्ति, तस्य दोष इत्यत्र संयोगादिलोपस्य संयोगोपलक्षितलोपोपलक्षणत्वादिति । तन्न वास्तवम् । किन्तु तत्रत्यपूर्वपक्षिणोऽभिप्रायवर्णनमात्रम् । अतएवनपदान्तेति सूत्रशेषे तेनैवोक्तम् । स्कन्दयतेः स्कन् । तक्षयतेस्तगिति । यत्तु सिद्धकाण्डे श्चुत्वं धुट्त्वइति वार्त्तिकव्याख्यावसरे कैयटेनोक्तम्–मधुगितीष्यते, मधुडिति प्राप्नोतीति । तत्तु सकारोपदेशसामर्थ्यादिति बोध्यम् । सन्श्चोततीत्यत्र शि तुगित्यस्याऽप्रवृत्त्या सकारश्चरितार्थ इति चेत्तर्हि क्वौ लुप्तमिति समाधेयम् । कुस्म नाम्नोवेत्यत्र कूरिति माधवोदाहृतं सम्यगेव । तत्र सामर्थ्यविरहेण संयोगादिलोपाऽप्रवृत्तेरिति दिक् । स्यादेतत् । इह संयोगादिग्रहणं मास्तु । न चैवं वाक्यर्थमित्यादौ स्कोरिति लोपापत्तिः । स्कोः संयोगेत्यत्र झलोझलीत्यतो झल इत्यनुवर्तते । तच्चोपसर्जनस्यापि संयोगेत्यस्य विशेषणम्, न तु प्रधानयोरपि स्कोः, अव्यभिचारात् । ततश्च झलन्तो यः संयोगस्तदाद्योः स्कोर्लोपः स्यादिति सूत्रार्थात्, बहिरङ्गतया यणोसिद्धत्वाद्वा । अत एव हि दध्यत्रेत्यादौ संयोगान्तलोपो न प्रवर्तते । तथा चाष्टमे वार्तिकम्–**न वा झलो लोपाद्बहिरङ्गलक्षणत्वाद्वेति ।**

न चैवमपि काष्ठतक्राष्ट्ररगित्यादि न सिध्येदेवेति वाच्यम्। अनभिधानात्तत्र क्विप एव दुर्लभत्वात्। अनभिधानं च काष्ठशगेव नास्तीत्याष्टमिकभाष्यबलेन न्यायसाम्यान्निर्णीयत इति। अत्रोच्यते–कुस्मयतेः कूरित्यादिसिद्धये संयोगादीति वाच्यमेव। किञ्च तक् रक इत्याद्यर्थमपि वक्तव्यम्। न चानभिधानम्। प्रमाणाऽभावात्। कैयटादिभिरुदाहृतत्वाच्च। न च काष्ठशगेव नास्तीति भाष्यं तत्र प्रमाणम्। न्यायवैषम्यात्। तथाहि–काष्ठशक् स्थातेत्यत्र झल्परो यः संयोगस्तदादेः ककारस्य लोपमाशङ्क्य तदुक्तम्। तेन यत्र कलोपप्रसक्तिस्तदभिप्रायकमनभिधानम्। अत एव कान्तेभ्यः क्विब्नेत्येवम्परतया तद्व्याख्यातम्। न च णिजन्तेभ्यः क्विपि कलोपप्रसक्तिरस्ति, णिलोपस्य स्थानिवद्भावात्। न च पूर्वत्राऽसिद्धे चेति तन्निषेधः। संयोगादिलोपे प्रतिप्रसवस्य जागरूकत्वात्। तस्मात्संयोगादिलोपग्रहणं कर्त्तव्यमेवेति स्थितम्। इदं त्ववधेयम्। संयोगान्तस्य लोप इत्यत्र न वा झलो लोपाद्बहिरङ्गलक्षणत्वाद्वेति द्वेधा सिद्धान्तव्यवस्थापनात् कूरिति संयोगान्तलोपोपि दुर्लभः। तेन कुस्म् इत्येव भवति प्रथमपक्षे। द्वितीयपक्षाभिप्रायेण तु माधवः। नन्वेवमपि लत्वग्रहणं व्यर्थम्. निगाल्यतइत्यत्र सत्यपि णिलोपे प्रत्ययलक्षणेन लत्वसिद्धेः। न च वर्णाश्रयत्वम्। धातोः स्वरूपे तत्प्रत्यये कार्यविज्ञानात्। इदं च दाण्डिनायनादिसूत्रे भ्रौणहत्येति तत्वनिपातनेन ज्ञापयिष्यते। किञ्चान्तरङ्गत्वादपि लत्वं सुवचमिति। अत्रोच्यते। तृणह इमित्यत्राऽचि नेत्यनुवर्तते। हलीति निवृत्तम्। तथा चाऽतृणेडित्यादिसिद्धये प्रत्ययलक्षणं नारम्भणीयम्। किं तु नियमार्थं तदारम्भ इति भाष्ये स्थितम्। इतरव्यावृत्तिमात्रफलकं प्रत्ययलक्षणसूत्रम्। तत्तत्कार्याणि तु स्थानिवत्सूत्रेण निर्वाह्याणि। तत्र च प्रदीव्येतीण्निवृत्तये अप्राधान्येनाप्यलाश्रयणे निषेधः स्थितः। तथा चाऽचि प्रत्यये विधीयमानं लत्वं स्थानिवद्भावं विना दुर्लभमेव। यदप्यन्तरङ्गत्वाल्लत्वमित्युक्तं, तदपि न। अकृतव्यूहपरिभाषया लत्वाऽप्रवृत्तेः। किञ्चोपसर्गस्यायताविति सूत्रे पक्षद्वयं वक्ष्यते। अयतिपरत्वमुपसर्गस्य विशेषणं रेफस्य वेति। तत्राद्ये पक्षे पल्ययत इति सिध्यति, लायतइति तु न सिध्येत्। एकादेशे कृते व्यपवर्गाऽभावात्। उभयत आश्रयणे अन्तादिवद्भावाऽयोगाच्च। तस्मात्तत्र स्थानिवद्भावेनैव व्यपवर्गो वक्तव्यः। स च पूर्वत्रासिद्धे चेति निषिद्ध इति लत्वे प्रतिप्रसवः सार्थक एव। द्वितीयपक्षे तु पल्ययतइति न स्यात्। यकारेण व्यवधानात्। लायत इत्यत्रैव परं लत्वं स्यात्। पूर्वत्रासिद्धे चेति स्थानिवत्त्वनिषेधेन तत्र रैफस्याऽयतिपरत्वाऽविघातात्। कृते त्विह लत्वग्रहणे येन नाव्यवधानन्यायेन पल्ययत इत्यत्रापि लत्वं सिध्यति। स्फुटं चेदमष्टमे भाष्यएव। तस्मादिह लत्वग्रहणं कर्त्तव्यमेवेति स्थिम्। णत्वग्रहणं तु व्यर्थम्। तथाहि–माषवपनीति तावद्बहिरङ्गपरिभाषयापि सिद्धम्। न च प्रहिणोति प्रमीणीत इत्यादिसिद्धये तदिति वाच्यम्। अचः परस्मिन्निति सूत्रस्य प्रवृत्तिं विनाप्येकदेशविकृतस्यानन्यतया हिनुमीनेत्यस्य प्रवृत्तिसम्भवात्। न च ष्णान्ता षडिति सूत्रे वर्णितरीत्या प्रियाष्ट्न इत्यादिसिद्धये णत्वग्रहणमिति वाच्यम्। कार्यकालपक्षे बहिरङ्गपरिभाषयैव तस्याऽपि सिद्धेः। यथोद्देशपक्षस्तु न ग्रहीष्यते। प्रत्याख्येयेन णत्वेन सह फलसाम्यार्थम्। एतेन प्रियाष्ट्ण इति णत्वाभ्युपगमपरः **पदमञ्जरी**ग्रन्थोप्यपास्तः। बहिरङ्गपरिभाषाया अनित्यत्वेपीह तदप्रवृत्तौ प्रमाणाऽभावात्। तस्मादिह णत्वग्रहणं वृथेति स्थितम्। प्रत्युत णत्वे स्थानिवत्त्वाभ्युपगमे बाधकमप्यस्ति। तथाहि–अनितेरन्त इति सूत्रेऽन्त इति योगं विभज्य हे प्राण् इति रूपसिद्धये पदान्तस्येति प्रतिषेधं बाधितुमन्तइति सूत्रेण पदान्तस्याऽनितेर्णत्वं विधीयतइत्येका व्याख्या। अन्तशब्दं समीपपर्यायमाश्रित्य निमित्तसमीपस्थो योऽनितेर्नकारस्तस्य णत्वं, निमित्तसमीपस्थस्याऽनितेर्यो नकारस्तस्य णत्वमिति च योगविभागं विनापि व्याख्यानद्वयं भाष्ये स्थितम्। तत्र प्रथमपक्षे प्राणितीत्यादावेकेनाकारेण व्यवधानेपि वचनसामर्थ्याण्णत्वं प्रवर्त्तते। द्वितीयपक्षे त्वेकादेशस्यादिवद्भावाद्रेफादव्यवहितस्याऽनितेः सम्भवात्प्रवर्त्तते। पर्यनितीत्यत्र तु वर्णद्वयेनैकेन च व्यवायात्पक्षद्वयेपि णत्वं न प्रवर्त्ततइति स्पष्टमष्टमे। यदि चेह णत्वग्रहणं क्रियते तर्हि पर्यनितीतिवत्प्राणितीत्यत्रापि द्वयेनैकेन वा वर्णेन यथासम्भवं व्यवधानाण्णत्वं न स्यात्। न च वचनसामर्थ्यात्स्थानिवद्भावकृतं व्यवधानमाश्रयिष्यते वृत्रघ्न इति कुत्वइवेति वाच्यम्, निरणिति दुरणितीत्यत्र चरितार्थत्वात्। न चैवं निर्दुरोरनितेरित्येव ब्रूयात्, न त्वनितेरन्त इति सामान्यलक्षणं प्रणयेदिति वाच्यम्। आवृत्तिमाश्रित्य हे प्राणित्यत्र णत्वस्य प्रतिप्रसवार्थं निर्दुरोरित्यपेक्षया ऽन्त इत्युक्तावक्षरलाघवानुरोधाच्च सामान्यलक्षणप्रणयनसम्भवात्। तस्मादाष्टमिकभाष्यपर्यालोचनेनेह णत्वग्रहणं न कर्तव्यमिति निर्णीयते। अत एव व्यूढोरस्केनेत्यत्र णत्वं न। अन्यथा विसर्गस्याट्त्वेन तदादेशस्य सस्य स्थानिवद्भावाण्णत्वं स्यात्। इह णत्वग्रहणस्य प्रयोजनाऽभावस्तूक्त एव। ततश्च तस्य दोषः संयोगादिलोपलत्वयोरित्येव वाच्यम्। वस्तुतस्तु तदपि न वाच्यम्। पूर्वत्रासिद्धे चेति ह्यसिद्धत्वादेव न्यायसिद्धमित्युक्तम्। तच्चाऽसिद्धत्वमनित्यम्। अधुनेतिवदमुनेति वाच्ये नमुनइत्युक्तेर्नेति योगविभागात्, नुटीति वाच्ये नामीतिलिङ्गाच्च। अनश्च इत्यादेरङ्गस्येत्यनेन व्यावृत्तौ सत्यामपि अक्षण्वन्त इत्यादौ हि दीर्घं वारयितुं (हि) नामीत्युक्तम्। रुधादिभ्यः श्नम्, श्नान्नलोप इति सूत्रद्वये भाष्यकैयटाद्यालोचनेनारम्भसामर्थ्यात्सन्निपातपरिभाषाया इवाऽसिद्धत्वस्याप्यविशेषाद्बाधे प्राप्ते नामीत्युक्तिरिति चेन्न। कृति तुग्ग्रहणादिना सन्निपातपरिभाषाया अनित्यत्वज्ञापना·

त्सामर्थ्याद्बाध इति पक्षेऽप्यक्षण्वन्त इत्यादावुभयबाधे गौरवाच्च । तस्मादनित्यताज्ञापनार्थमेव तत् । तेन सिद्धकाण्डमपि संगृहीतं भवति । एतेन रामो रामेभ्य इत्यादौ रुत्वस्याऽसिद्धत्वाद्रोरुकारस्येत्संज्ञालोपौ कथं स्यातामित्येतदपि समाहितम् । प्रत्ययः परश्चेत्यादिलिङ्गाच्च । यत्त्वनुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपौ प्रत्यसिद्धत्वं नेति । तन्न । 'तरुमूल'मित्यादौ हशि चेत्यस्य व्यावृत्तये अतो रोरित्यत्र सानुनासिकस्यैव निर्देशाभ्युपगमेन चारितार्थ्यात् । राम इत्यादावपि सानुनासिकश्रवणस्यापाद्यमानतया चारितार्थ्यस्य स्पष्टत्वादिति दिक् । तेन संयोगादिलोपलत्वयोरसिद्धताविरहात्स्थानिवत्त्वं भविष्यतीति सकलेष्टसिद्धिः ॥ [न पदान्त]॥

**द्विर्वचनेऽचि ।** रूपातिदेशोयम् । द्वित्वनिमित्तेऽचि योऽजादेशः सः स्थानिवद्रूपं लभते द्वित्वे कर्त्तव्ये । चक्रतुः । चक्रुः । द्वित्वनिमित्तत्वेनाज्विशेषणादिह न—दुद्यूषति । सुस्यूषति । न ह्यूठ् द्वित्वनिमित्तम् । नन्वेवं चक्रतुरिति यणोपि स्थानिवद्भावो न स्यात् । अतुसो द्वित्वनिमित्तत्वेप्यकारस्याऽतथात्वात् । सूत्रन्तु चक्रे इत्यादौ सावकाशमिति । सत्यम् । इह निमित्तशब्देन साक्षाद्वा समुदायघटकतया वा द्वित्वप्रयोजकत्वमाश्रीयते न तु साक्षादेवेत्याग्रहः । लक्ष्याऽनुरोधात् । किञ्च सूत्रे निमित्तशब्दो नास्त्येव । किन्तु लक्षणया वा, द्विरुच्यतेस्मिन्निति द्विर्वचनमिति व्युत्पत्त्या वा, द्विर्वचनमस्त्यस्मिन्निति अर्शआद्यचा वा द्विर्वचननिमित्तं लब्धव्यम् । तच्च प्रकारत्रयं साक्षात्परम्परासाधारणे प्रयोजकेऽपि सुवचम् । एतच्च 'ठस्येक'इति सूत्रे कैयटे स्पष्टम् । अत एव ऊर्णोतेः सनि सनीवन्तेतीट्पक्षे विभाषोर्णोरिति ङित्त्वविरहे ऊर्णुनविषतीति सिद्धम् । सन्नन्तस्य द्वित्वविधानेपि सनो द्वित्वप्रयोजकत्वेन तस्मिन् गुणावादेशयोर्द्वित्वे कर्त्तव्ये स्थानिवद्भावात् । तदुक्तम्—**तद्भावभावितामात्रेणेह निमित्तत्वमिति ।** वस्तुतस्तु द्विर्वचनाक्षिप्तः प्रत्ययोऽचीत्यनेन विशेष्यते । परस्मिन्नित्यनुवर्त्तते । 'अमीषां मध्ये देवदत्तात्परमानये'त्युक्ते यथा सजातीयेन मनुष्यान्तरेणाऽव्यवहितः पर आनीयते, तथेहापि प्रत्ययान्तरेणाऽव्यवहितः परो गृह्यते । तेन द्वित्वनिमित्ते अजादौ प्रत्यये प्रत्ययान्तरेणाऽव्यवहिते परे सति योऽजादेशः स स्थानिवत्स्यादिति सूत्रार्थः । एवं च चक्रतुरित्यादौ न काप्यनुपपत्तिः । वक्ष्यमाणज्ञापकबलेन णिचा व्यवहिते प्रवृत्तावपि दिदेवनीयिषतीत्यादावनेकप्रत्ययव्यवधानादप्रवृत्तिः । अपीप्यदित्यत्र वर्णव्यवधानेऽपि प्रत्ययान्तराऽभावात्प्रवृत्तिः । अनुवादे परिभाषानुपस्थानेपि निर्दिष्टपरिभाषाकर्त्तव्यस्य निर्वाहश्चेति बोध्यम् । अत एवेह परस्मिन्नित्यनुवर्ततइति **न्यासकारः**। तथा द्विवचनेनेह प्रत्ययाक्षेपं वदन्णिज्भिन्नेन व्यवहिते ज्ञापकस्याऽप्रवृत्तिं ब्रुवन्कैयटोप्येतदभिप्रैति । ऊर्णुनविषतीत्यादिसिद्धये तु तद्भावभावितामात्रेण निमित्ततेति स्वीक्रियतएवेत्यवधेयम् । नन्वेवमरिरिषतीति न सिद्ध्येत् । ऋधातोः सनि स्मिपूङ्रञ्ज्वशां सनि इतीटि कृते इस्शब्दनिमित्तकस्य गुणस्य स्थानिवद्भावे अजादेर्द्वितीयस्येतीसो द्वित्वप्रसङ्गात् । इष्यते तु रिस्शब्दस्य द्वित्वम् । अत्रोच्यते, न हि कार्यी निमित्ततयाश्रीयतइति दीधीवेवीटामित्यत्रोपपादितत्वान्नेह इस्शब्दो निमित्तम् । अतो न स्थानिवद्भावः । न चैवं सन्नन्तस्य कार्यित्वादूर्णुनविषतीत्यपि न स्यादिति वाच्यम् । मत्वर्थीयेनेनिना कार्यमनुभवत एव कार्यित्वलाभात् । तत्र तु द्वितीय एकज्द्वित्वरूपं कार्यमनुभवति न तु सन् । 'अरिरिषती'त्यत्र तु रिस्शब्दस्यैव कार्यभाक्त्वमिति वैषम्यात् । नन्वेवमचीत्यस्य जेघ्रीयते देध्मीयतइति व्यावर्त्यं न सङ्गच्छते । 'घ्रीय्''ध्मीय्' इति द्वितीयाजवधिकस्यैकाचः कार्यितया यङोपि द्वित्वनिमित्तत्वाभावादिति चेत् । सत्यम् । 'अधिजगे'इत्येवाज्ग्रहणव्यावर्त्यमस्तु । तत्र हि गाङ्लिटीति द्विलकारकनिर्देशमाश्रित्य लावस्थायामेव गाङादेश इति भाष्यएव स्पष्टम् । इदञ्च वार्त्तिकमतमनुसृत्योक्तम् । तत्र लिटिलिङीत्यादीनां परसप्तमीत्वाभ्युपगमात् । भाष्यमते त्वार्द्धधातुकीयाः सामान्येन भवन्तीत्यभ्युपगमाल्लिटीत्यादयोपि विषयसप्तम्य एवेत्युक्तं स्थानिवत्सूत्रे । तन्मते त्वचीत्यस्य जग्ले इत्यादि व्यावर्त्यम्बोध्यम् । तथाहि आदेच इति सूत्रेऽशितीति परसप्तमीति पक्षे श्-इदिति कर्मधारयाश्रयणाद्यस्मिन्विधिस्तदादावल्ग्रहणेऽत्यस्य प्रवृत्त्या आदिशितोऽन्यस्मिन्परे विधीयमानमात्वं लावस्थायां क्रियतेऽतो न स्थानिवत् न चान्तरङ्गत्वात्तिबादिष्वेशि च कृते आत्वं स्यात्तथा स्थानिवत्त्वं दुर्वारमिति वाच्यं, नसम्प्रसारणेसम्प्रसारणं लिटि वयोय इति द्विलकारकनिर्देशमाश्रित्य तं च तत्रानुपयुक्तत्वादिहानुवर्त्य लिटि तु लावस्थायामेवेत्यात्वविधौ व्याख्यानात् । कथं तर्हि जेघ्रीयते देध्मीयत इति भाष्यवृत्त्यादिषु प्रत्युदाहृतमिति चेत् । प्रातिशाख्यरीत्येत्यवेहि । तथाहि 'अनुस्वारो व्यञ्जनं चाक्षराङ्ग'मित्युक्त्वा 'स्वरान्तरे व्यञ्जनान्युत्तरस्ये'ति तत्र सूत्रितम् । एवं च नेनिजत्यनेनिजुरित्यादावेकाच्कस्य धातोः सम्पूर्णस्य द्विर्वचनादभ्यस्ताश्रयमद्भावजुसादि सिध्यतु । द्व्यच्के तु मध्यवर्तिनां हलामुत्तराङ्गत्वात्प्रथमाऽजन्तमेव द्विरुच्यताम् । यथा दरिद्रातौ द इति, जागर्तौ जा इति । न चैतावता कश्चिद्रूपेऽनिष्टमापद्यते येन प्रातिशाख्यपरिभाषामुपेक्ष्य नटभार्यावद्व्यञ्जनानीति चाश्रित्य दर्‌जागित्यादि द्विरुच्यते । अत एव चतुरश्च्यतावाद्यक्षरलोपश्चेति सङ्गच्छतइति दिक् । यदा तु षाष्ठभाष्यवार्त्तिकरीत्या द्वितीयाजवधिक एकाज्गृह्यते, गाङ्लिटीति च विषयसप्तम्याश्रीयते, अनैमित्तिकमात्वं, शिति तु प्रतिषेध इति इति वा, अशितीति विषयसप्तमी वा आश्रीयते, तदा जेघ्रीयते अधिजगे जग्ले इति त्रिविधस्यापि व्यावर्त्यस्याऽसम्भवादचीत्यस्य फलं किमिति विभावनीयं सूरिभिः । स्यादेतत् । घसेः क्वसौ घसिभसोर्हलीत्युपधालोपे कृते द्वित्वं मा

भूदित्येतदर्थमज्ग्रहणं भविष्यतीति चेत्। सत्यसति वा द्वित्वे प्सानिति श्रुतौ विशेषाऽभावात्। ननु दुर्लक्ष्योपि विशेषः सूक्ष्मदृशं प्रति दुर्वार इति चेन्न। दाति प्रियाणि. वीरवद्दातु—इत्यादाविव द्वित्वाऽभावसम्भवात्। वक्ष्यति हि षष्ठे लिटिधातोरिति सूत्रे–'अनभ्यासग्रहणानर्थक्यं च छन्दसि वावचना'दिति। न चैवमपि पाक्षिकं द्वित्वं स्यादेवेति वाच्यम्। दृष्टानुविधानस्यैव छन्दसि कर्त्तव्यत्वात्। अत एव हि उरुर्दित्येव सिद्धे नित्यं छन्दसीति सूत्रं निष्फलमित्यभियुक्ताः। लोके तु भाष्यमते क्वसुर्दुर्लभः। उपधालोपश्च छान्दस एव। तदेवं जेघ्रीयते अभिजगे जग्ले इत्येतत्सिद्धये क्रियमाणमज्ग्रहणमेवेह रूपातिदेशत्वे प्रमाणम्। कार्यातिदेशपक्षे हि घ्रीगाग्लाइत्येषामेव भाव्यं द्वित्वेनेति किं तेन ?। तथा च वार्तिकम्–अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्येति। देध्मीयते शाशय्यते इत्यपि जेघ्रीयते इत्यनेन समानयोगक्षेमसुदाहरणम्। ईघ्राध्मोरिति ईकारः। अयङ्यि क्ङितीति शीङोऽयङादेशः। अचीत्यस्य प्रत्याख्यानपक्षे तु लक्ष्यानुरोधादेव शब्दाधिकारमाश्रित्येह रूपातिदेशो व्याख्येयः। पूर्वसूत्रादच इति षष्ठ्यन्तस्यानुवृत्तिरिह किमर्थेति चेत्। शुशुवतुरित्यादिसिद्धये इति गृहाण। तथाहि–विभाषा श्वेरिति सूत्रं यद्यपि शुशावेत्यादौ विल्सु सावकाशं तथापि शून इत्यादौ चरितार्थस्य वचिस्वपीत्यस्य बाधकमेव, परत्वात्। लिट्यभ्यासस्योभयेषामित्यस्य तु न बाधकम्, श्वयत्यभ्यासविषयकस्य विधेर्निरवकाशत्वात्। अत एव विभाषाश्वेरिति सूत्रे 'श्वेर्लिट्यभ्यासलक्षणप्रतिषेध' इति वार्तिकमारब्धम्। लिट्यभ्यासस्येति सूत्रे अश्वयतीनामिति पूरणीयमिति तदाशयः। अन्यथा हि विहित प्रतिषिद्धतया विकल्पात् शुश्वाय शुश्वियतुरित्यनिष्टमपि पक्षे प्रसज्येत। एवं स्थिते द्विर्वचनेचीत्यत्राऽच इत्यस्यानतु वृत्तौ शुशावेत्यत्र वृद्ध्यावादेशयोरिव सम्प्रसारणस्यापि स्थानिवद्भावः स्यात्। तथा च शिश्राव शिशुवतुरित्याद्यनिष्टमापद्येत। न च 'सम्प्रसारणं तदाश्रयं च बलव'दिति तिबाद्यवस्थायामेव सम्प्रसारणप्रवृत्तेरचीति नास्तीति वाच्यम् एवमपि व्यतिशुशुवाते इत्यादौ दोषध्रौव्यात्। न च विभाषाश्वेरिति लावस्थायामेव प्रवर्त्तत इति वाच्यम्। एवमपि ईजाते ईजाथे इत्यादौ दोषतादवस्थ्यात्। लावस्थायां कित्वाऽभावेन तत्र सम्प्रसारणाऽप्रवृत्तेः। न च कित्त्वमपि प्रवर्त्ततामिति वाच्यम्। अन्तरङ्गैरितवादिभिर्बाधितत्वात्। किं च स्वापेश्चङीति सम्प्रसारणे असूषुपदितीष्यते। स्थानिवद्भावे तु सति न सम्प्रसारणइति निषेधादभ्यासे उवर्णो न श्रूयेतेति दिक्। तन्त्रावृत्त्यैकशेषाणामन्यतमाश्रयणादिह कालावधारणमपि क्रियते। तथा च व्याख्यातम्–द्वित्वे कर्त्तव्ये इति। तेन चक्रतुरित्यादावुत्तरदले पुनर्यथायथं यणादयो भवन्त्येव। अन्यथा प्रकृतिभाव एव स्यात्। निन्यतुरित्यत्र तु प्रथमप्रवृत्तस्यापि यङो द्वित्वकाले ऽपहारात्पुनः प्राप्तोऽप्ययमेरनेकाच इति यणा बाध्यते। यद्वा पूर्वमपीयङ्न प्रवर्तते। प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशतइति न्यायात्। यद्वा आभीयत्वेनेयङो ऽसिद्धत्वाद्यण्भविष्यति।

स्यादेतत्। स्थानिवद्ग्रहणं निवर्त्य नञ्ं चानुवर्त्य द्वित्वनिमित्तेऽचि अच आदेशो न स्याद्द्वित्वे कार्ये इत्येव व्याख्यायताम्। एवं हि सति स्थानिवदिति शब्दाधिकारक्लेशोपि न भवतीति। सत्यम्। अस्मिन्नपि पक्षे नञः स्वरितत्वं प्रतिज्ञातव्यम्। स्थानिवच्छब्दस्य तु क्लृप्तमेव तदिति लाघवम्। अस्तु वा व्याख्यानद्वयमपि, फले विशेषाऽभावादिति दिक्। नन्वेवमपि णौ स्थानिवद्वचनं कर्तव्यम्–नुनावयिषति चुक्षावयिषति तुष्टावयिषतीत्याद्यर्थम्। अत्राहुः–**ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्येति**। अस्यार्थः–यौतेः पूङश्च सनीवन्तेति स्मिपूङ्रञ्ज्वशामितिसूत्राभ्यामिटि कृते यियविषति पिपविषते इत्यत्र द्विर्वचनेचीति स्थानिवद्भावाद्यकारपकारयोरवर्णपरयोः परतो यद्यप्यभ्यास उकारो लभ्यते, तस्य चेकारादेशविधानेन ओः पुयण्सूत्रे पकारयकारग्रहणं चरितार्थम्, तथापि वर्गग्रहणं प्रत्याहारग्रहणं जग्रहणं च ज्ञापकं 'द्वित्वनिमित्तस्याचो णिचा व्यवधानेपि स्थानिवद्भावः प्रवर्त्तते' इति। तं विना अवर्णपरेषु पुयण्जिषु परेषु उवर्णान्तस्याभ्यासस्य दुर्लभत्वात्। येन नाव्यवधानाच्च णिचैवैकेन द्वित्वनिमित्तस्याऽचो व्यवधानमाश्रीयते। तेन निनवनीयिषतीत्यादौ न स्थानिवत्। ल्युट्क्यच्भ्यां व्यवधानात्। एवं णिजन्ताल्ल्युट्क्यच्सन्स्वपि न स्थानिवत्। निनावनीयिषतीत्यादि। न हि णौ कृतं स्थानिवदिति वचनमस्ति, किन्तु ज्ञाप्यमानः स्थानिवद्भावो लाघवादेकेनैव व्यवधानइत्युक्तम्। इह त्वनेकेन व्यवधानं स्पष्टमेव। यद्यप्यनूद्यमानादेशविशेषत्वान्निर्दिष्टपरिभाषा नोपतिष्ठते, तथाप्यचीत्यौपश्लेषिकसप्तमीबलादेव तदर्थः पर्यवस्यति। ईषद्विप्रकृष्टलाभे च नात्यन्तविप्रकृष्टस्य ग्रहणमिति बोध्यम्। वस्तुतस्तु परस्मिन्नित्यनुवर्तत इतिसूत्रोपक्रमएवोक्तम्। एवं चाबीभवदमीमवदरीरवदलीलवदित्यादिषु बिभावयिषतीत्यादिषु च ओःपुयणितीत्वं प्रवर्त्तते। ज्ञापनफलन्तु यत्र ओः पुयणित्यस्याऽप्राप्तिस्तत्र बोध्यम्। तद्यथा–चुक्षावयिषति। उडुरिवाचरति उडवति। उडवतेर्णौ सन्—उडुडावयिषति। चङि–औडूडवत्। तुतावयिषति। अतूतवत्। सौत्रोयं तुरुस्तुशम्यत्र निर्दिष्टः। ऊणुनावयिषति। और्णूनवत्। चिस्फुरोर्णौवित्यात्वस्य स्थानिवद्भावात्पुस्फारयिषति अपुस्फरदित्यादि बोध्यम्। तुल्यजातीयापेक्षं च ज्ञापकम्। तेनाऽवर्णपरे हल्येव स्थानिवत्त्वम्। तेनाचिकीर्त्तदित्यादौ नातिप्रसङ्ग इति भाष्ये स्थितम्। यत्तु**काशिकायां**–पूर्वत्रासिद्धमिति सूत्रे वदेर्णिष्ठान्ताण्णिचि चङि औजढदित्युदाहृत्य क्तिन्नन्तस्य तु औजिढदित्युक्तम्। तत्रैव न्यासेपि–णौ कृतस्य टिलोपस्य स्थानिव-

द्भाव इति व्याख्यातं तदुभयं भाष्यविरुद्धत्वादुपेक्ष्यम्। अचिकीर्त्तदित्यस्य सिद्धये ऽवर्णपरधात्वक्षरविषयकमेव ज्ञापकमिति स्पष्टं भाष्ये। प्रकृतसूत्रप्रत्याख्यानपरे वार्तिके अव्याप्तिरूपदोषोद्भावनपरेण ओदौदादेशस्य चुट्टतुशरादेरित्यादिभाष्येणाप्ययमर्थो लभ्यतइत्यनुपदमेव स्फुटीकरिष्यते। अत एव—**शुष्किका शुष्कजङ्घा च क्षामिमानौजिढत्तथेति** वैयाघ्रपद्यवार्तिके जिशब्द एव पठ्यते। जशब्दपाठस्तु काचित्कः प्रामादिक एवेति **बोपदेवो दुर्गसिंहादि**सम्मतिप्रदर्शनपूर्वकं **कामधेनौ** स्थापितवान्। **वैयाघ्रपद्य**वार्त्तिकं तु पूर्वत्रासिद्धमिति सूत्रस्य प्रयोजनसङ्ग्रहपरं, तच्च तस्मिन्नेव सूत्रे व्याख्यास्यामः। एवं चाऽङ्क पदे लक्षणे चेत्यस्य चङि सणिच्कस्य द्वित्वेनाऽऽञ्चिकदित्येव रूपं न त्वाचकदिति। न चैवमदन्तपाठवैयर्थ्यं स्यादिति वाच्यम्। तत्सामर्थ्यादल्लोपस्याऽप्रवृत्तौ सत्यां वृद्धिपुकोश्च सतोरङ्कापयतीति रूपाभ्युपगमात्। न चैवं सस्यङ्कयतीति रूपं न स्यादिति वाच्यम्। सूचिसूत्रीत्यादिवार्तिके सोसूच्यते सोसूच्यतइत्यादिभाष्योदाहरणेन पक्षे ऽल्लोपस्याभ्युपगमात्। सूचिसूत्र्यादयो ह्यदन्ताः। अत एवानेकाच्त्वेन षोपदेशत्वाऽभावान्न षत्वम्। षोपदेशलक्षणे ह्येकाच्त्वं विवक्षितमिति माधवीये स्पष्टम्। एतच्च सेगादिपर्युदासात्ष्वष्करिवदादिमाहचर्यात्सोपूच्यतइत्यादिभाष्योदाहरणाच्च निर्णीयत इति वक्ष्यते। एवं वाक्यशेषं समर्थयिष्यामहे। 'प्रार्थनाध्यवसायैः' सम्प्रश्नप्रार्थनेषुलिङित्यादिप्रयोगाश्चेह मानम्। तदेतत्सकलमभिसन्धायादन्तत्वसार्थक्याय वा ऽल्लोप इत्याहुः। उक्तञ्च **कामधेनौ—अग्लोपित्वं स्थानिवत्त्वं चाऽदन्तत्वप्रयोजनम्। यत्र त्वेते न विद्येते तत्राल्लोपविकल्पन**मिति। कथयत्याद्यभिप्रायेण पूर्वार्द्धम्, अङ्कयत्याद्यभिप्रायं तूत्तरार्द्धमिति विवेकः। नन्वाचकदित्यत्र दीर्घो लघोरिति प्राप्ते ऽनग्लोपइति निषेधेनाऽकारश्चरितार्थ इति चेन्न। चङ्परे णौ यदङ्गं तस्य योऽभ्यास इति सूत्रार्थव्यवस्थापनात्। इह त्वङ्गावयवस्याभ्यासो न त्वङ्गस्य। एतच्चोर्णुधातौ माधवग्रन्थे स्पष्टम्। अत एव आटिटदित्यादौ न दीर्घः। यत्तु दीर्घविधौ हलादिरिति विशेषणं (प्रक्रिया) कौमुद्यां दत्तं, तन्निर्मूलम्। और्णुनवदित्यादेः सिद्धावपि सन्वल्लघुनीत्यत्र चङ्परे इत्यङ्गस्य विशेषणं लघोर्वेति मतभेदेनेष्यमाणे अचीचकासदचचकासदिति रूपद्वयेप्यतिप्रसक्तं च दीर्घविधौ चङ्परइत्यस्य लघुविशेषणतामाश्रित्यार्थसिद्धकथनं तदिति वा समाधेयम्। सिद्धान्ते तु **माधवोक्त**रीत्या ऊर्णावयतेरिव चकासयतेरपि दीर्घाऽभावः स्पष्ट एवेति दिक्। एतच्च सूत्रं वार्तिककारः प्रत्याचख्यौ। तथाहि—षष्ठे द्वित्वप्रकरणान्ते विप्रतिषेधः पठ्यते,—**द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिंकिनोरुत्वेभ्य** इति। तथा च दध्यत्रेत्यादौ सावकाशो यण्। चयनं चायको लवनं लावक इत्यादौ चाऽयवायावः। गोदः कम्बलद इत्यादावाल्लोपः। श्लेष्मघ्न इत्यादावुपधालोपः। कारणा हारणेत्यादौ णिलोपः। निपूर्त्ता इत्यादावुत्त्वं चेत्येतानि नव बिभिदतुरित्यादौ सावकाशेन द्वित्वेन पूर्वविप्रतिषेधाद्बाध्यन्ते। तेन चक्रतुः चिचाय लुलाव चिचयिथ लुलविथ पपतुः तस्थतुः जग्मतुः जघ्नतुः आटिटत् ततुरिः जगुरिरित्यादि सिद्धम्। नन्वेवं निन्यतुरिति न स्यात्, इयङ इहाऽपरिगणितत्वादिति चेन्न। 'एरनेकाच' इति यणेह भाव्यमिति प्रागपीयङोऽप्रवृत्तेः। प्रकल्प्य चेति न्यायात्। तस्मात् द्विर्वचनेचीति सूत्रं विनापि सर्वं सिद्धमिति। भाष्यकारास्तु सूत्रं समर्थयन्ते—तथाहि—विप्रतिषेधस्तावदयुक्तः, आल्लोपादीनां नित्यत्वात्। द्वित्वस्याऽनित्यत्वेनाऽतुल्यबलत्वात्। किं च पूर्वविप्रतिषेधे सर्वत्र वचनस्यारम्भणीयत्वादिह तु सुतरां तथेति च लाघवम्। अपिच क्रियमाणमपि वचनं यद्यन्तरङ्गाणामपि बाधकं तर्हि निनवनीयिषति दिदवनीयिषतीत्यादावप्यभ्यासे उकारः श्रूयेत। अथाऽत्रान्तरङ्गत्वादवादेशः, वचनं तु नान्तरङ्गाणां बाधकं किन्तु नित्यानामेवेति ब्रूयाः, एवमपि चुक्षावयिषतीत्यादौ वृद्ध्यावादेशयोः प्रवर्तनादभ्यासे इत्वं स्यात्। तथा च तद्बाधनाय उत्वं विधेयम्। तथा च त्वया इत्थं न्यासः कर्त्तव्यः—'उत्परस्यातः,' 'ति च,' ओदौदादेशस्य चुट्टतुशरादेरिति। अभ्यासस्येति वर्त्तते। ओदौतोरादेशो यस्मिन्नङ्गे तस्य योऽभ्यासश्चुट्टतुशरादिस्तस्य योऽकारस्तस्य उत्स्यादित्यर्थः। यथा चुक्षावयिषति उड्डावयिषति तुतावयिषति उर्णुनावयिषति शुश्रावयिषति पुस्फारयिषतीति। अत्र चिस्फुरोर्णावित्यात्वम्। यद्यपीह खयः शेषे कृते शरादित्वं नास्ति तथाप्यभ्याससंज्ञाप्रवृत्तिकालेऽस्त्येवेत्यवधेयम्। ओदौदादेशस्येति किम्। चायृ पूजायां, चिचायिषति, खद स्थैर्ये, चिखदिषति। चुट्टतुशरादेः किम्? बिभावयिषति। अत इति किम्?। ऋजुम् अणुम् ऋतुम् अंशुं चाख्यत्, आर्जिजत्, आणिणत्, आर्त्तितत्, आंशिशदित्यत्र परत्वा वृद्धौ सत्यां टिलोपे सणिच्कस्य द्वित्वे कृते मा भूत्। अभ्यासस्येति किम्। चुट्टुत्वित्यादि तर्ह्यङ्गस्यातो वा विशेषणं स्यात्। उभयथापि दोषः, शीतं लुनाति शीतलूः सूर्यः, तमाख्यातुमिच्छति शिशीतलयिषतीत्यत्र तकारादुत्तरस्यात उत्प्रसङ्गात्। नन्वेवमप्यौजढदाञ्चकदित्यादावभ्यासे ऽकारश्रवणार्थं यत्नान्तरमास्थेयमेवेति गौरवान्तरं वार्त्तिककारं प्रति कुतो नापादितमिति चेन्न। तत्रेकार एवेष्ट इत्युक्तत्वात्। सजातीयापेक्षं हि सिद्धान्तेपि ज्ञापकम्। अन्यथा अचिकीर्त्तदित्यत्राभ्यासेऽकारश्रवणापत्तेः। तस्माद्वार्तिककृता वचनद्वयमपि कर्त्तव्यं स्यादिति स्थितम्। तथा जग्लावित्यादिसिद्धये विप्रतिषेधवार्त्तिके वृद्धिरपि पाठ्या। तथा ओः पुयण्जीति तृतीयमपि कर्त्तव्यमेव। पिपविषते यियविषति जिजावयिषतीत्यत्र इत्वं यथा स्यात्। तथाहि—पु यु इत्यनयोः सनि इटि परत्वाद्गुणे कृते पूर्वविप्रतिषेधेनावादेशा-

त्पूर्वं द्वित्वमितीत्वं वक्तव्यमेव। तथा जुचङ्क्रम्येत्यत्र निर्दिष्टात्सौत्राज्जुधातोर्ण्यन्तात्सनि जिनावयिषतीत्यत्र चुट्टुशरादेरित्युत्वे प्राप्ते तद्बाधनायेत्वं वक्तव्यम्। न च तत्र चकारमेव पठिष्यामि न तु चुशब्दमिति वाच्यम्। गुङ् घुङ् ध्वनौ। आभ्यां णिजन्ताभ्यां चङि सनि च अजूगवत् अजूघवत, जुगावयिषति जुघावयिषतीत्याद्यसिद्धिप्रसङ्गात्। किञ्च–दिदवनीयिषति निनवनीयिषतीत्यत्र चुट्टुशरादेरित्युत्वं स्यादिति तद्वारणाय वचनान्तरमास्थेयम्। अथवा सन्यत इति सूत्राद्गुणोयङ्लुकोरित्याद्यष्टसूत्र्या विच्छिन्नमपि सन्ग्रहणं मण्डूकप्लुत्यानुवर्त्य सूत्रमतोक्तरीत्या येन नाव्यवधानन्यायेन णिञ्भिन्नैर्व्यवधाने उत्वं नेति समाधेयम्। एवमपि तनुशब्दादाचारक्विबन्ताद्धेतुमण्णौ सत्यसति वा यदा सन् तत्र तितनविषति तितनावयिषतीत्यत्राप्युत्वं स्यात, तद्वारणाय ओदौदादेशस्येति वार्तिकमन्यथैव व्याख्येयम्। तद्यथा–अभ्यासस्येत्यवयवषष्ठी। ओदौदित्यादिस्तु सम्बन्धसामान्ये षष्ठी। उभयमप्यतो विशेषणम्। तदयमर्थः–अभ्यासस्यावयवभूतस्तथा ओदौदादेशस्य यथायथमवयव आदेशो वा योऽत्तस्योद्भवति। चुक्षावयियतीत्यवयवः। पुरफारयिषतीत्यादेशः। तथा चाऽद्ग्रहणमपि सार्थकम्। अन्यथा आटिटदित्यादिसिद्धये चङ्परे णौ यदङ्गं तदवयवे लघौ सन्वदतिदेशादाजिजदित्यादावतिप्रसङ्गविरहादत इति व्यर्थं स्यादिति दिक्। तथा च सूत्रमतापेक्षया वार्त्तिकमते महदेव गौरवमिति। स्यादेतत्। मास्तु प्रकृतसूत्रं, मा च वार्तिकम्। ओः पुयण्ज्येतदेव ज्ञापयिष्यति अन्तरङ्गं नित्यं च बाधित्वा द्विर्वचनं स्यादिति। ततो द्वित्वे कृते यथाप्राप्तं यणादि करिष्यते। मैवम्। निनवनीयिषति दिदवनीयिषतीत्याद्यसिद्धेः। किञ्च सामान्यापेक्षं ज्ञापकं, विशेषापेक्षं वा। आद्ये–अचिकीर्त्तदिति न सिध्येत्। अन्त्ये–चक्रतुरित्यादि न सिध्येत्। तस्मात्सूत्रं कर्त्तव्यमेव। चुक्षावयिषतीत्यादिसिद्धये तु ओःपुयण्ज्येति ज्ञापकमाश्रयणीयम्। तच्च तुल्यजातीयापेक्षमिति स्थितम्। अत एव **वामनो**दाहृतमौजढदित्येतद्भाष्यविरुद्धमिति **बोपदेवोप**ष्टम्भेन प्रपञ्चितं प्राक्। वस्तुतस्तु **वामनो**क्तं सम्यगेव। यतः–**बोपदेवमहाग्राहग्रस्तो वामनदिग्गजः। कीर्त्तेरेव प्रसङ्गेन माधवेन विमोचितः।** तथाहि–किं वामनोक्तौ वार्त्तिकदूषणपरभाष्यविरोधः। किं वा सजातीयविषयज्ञापकतावर्णनभाष्यविरोधः। नाद्यः। नित्याऽनित्ययोर्विप्रतिषेधानुपपत्तिरिति दिदवनीयिषतीत्याद्यसिद्धिरिति च दूषणयोर्भाष्येऽनुक्ततया भाष्यं दूषणान्तराणामप्युपलक्षणमिति स्थिते औजढदित्यभ्यासे ऽकारादेशोपि विधेयः स्यादिति वार्तिके दूषणान्तरस्याऽपि देयत्वात्। तदेवं वार्त्तिकं रचनीयम्–'ओदौदादेशस्य चुट्टुशरादेरभ्यासस्योत्सनि' ततो 'अल्लोपवतो णिचोऽत्' । अल्लोपवतोऽङ्गस्याऽभ्यासस्य णिचोऽत्स्यात्। औजढत्, आञ्चकदिति। न द्वितीयः। यत्र द्विरुक्तावभ्यासस्योत्तरखण्डस्याद्योऽजवर्णस्तत्र स्थानिवदिति हि भाष्यस्य फलितोऽर्थः। अस्ति च हतशब्दस्य द्विरुक्तौ प्रक्रियादशायामुत्तरत्राऽवर्णः। ननु पुनः प्रवृत्तेन टिलोपेनापऽहारान्नासौ प्रयोगे समवैतीति चेत्। किं ततः, नहि प्रयोगसमवायित्वं विशेषणं भाष्ये दत्तम्, एवञ्च नुनावयिषतीत्यादौ द्वित्वप्रवृत्तिवेलायामवर्णाऽभावेपि पश्चाद्भाविनं तमाश्रित्य यथा स्थानिवद्भावस्तथा हतशब्दस्य पश्चात्तद्विरहेपि, अध्यजीगपदित्यत्र तु स्थानिवद्भावे सत्यजादितया णिच एव द्वित्वं स्यात्तथा च न द्वित्वप्रवृत्तिवेलायां नापि पश्चादवर्णपरतेत्यचिकीर्त्तदित्यादाविव न स्थानिवद्भावः। एवं चोवर्णस्थानिकस्यैव स्थानिवद्भाव इति दुराग्रहो निर्मूल एव। अत एव लोपः पिबतेरिति सूत्रे ऽपीप्यदित्यत्र पिबतेर्णौ युकि चङि उपधालोपे च तस्य स्थानिवत्त्वात्पाश्शब्दस्य द्विरुक्तिरिति वृत्तिग्रन्थोपि सङ्गच्छते। एवं चाऽऽञ्चकदित्येव साधु, न त्वाञ्चिकदिति। अञ्जापयति आञ्जिकपदित्यादि तु दूरापास्तम्। अल्लोपस्य दुर्वारत्वात्। अकारोच्चारणं त्वभ्यासे ऽकारश्रुत्यादिना चरितार्थम्। यदप्यल्लोपित्वं स्थानिवत्त्वं चेत्याद्युक्तम्। तदपि न। चिन्तेरदित्करणेन घुषिरविशब्दने इत्येतत्सूत्रस्थभाष्येण च णिज्विकल्पस्य सुस्थतया अल्लोपविकल्पस्य निर्मूलत्वात्। णिजभावपक्षे ह्यनेकाच इत्याम्प्रवृत्त्या धातोरन्तोदात्तप्रवृत्त्या चाऽकारः कृतार्थः। अङ्कयादित्यादौ नलोपप्रतिबन्धोपि फलमिति दिक्। न चैवमप्यौजढदित्यभ्यासे इकारः श्रूयेत, पूर्वत्रासिद्धीयमद्विर्वचनइत्युक्तेरिति वाच्यम्। 'उभौ साभ्यासस्ये'ति तदनित्यताज्ञापनात्। यत्तु पदद्विर्वचनविषयं तदिति **बोपदेवस्तन्न**। 'सुविनिर्दुर्भ्य'इति सूत्रे सुपिभूतो द्विरुच्यतइति वार्त्तिकेन तद्भाष्येण च सह विरोधात्। अत एवाभ्यासे इकारं **दुर्गगुप्तादय** आहुः। एवं च वैयाघ्रपद्यवार्त्तिके औजढदिति पाठस्य प्रामादिकत्वकल्पनमेव प्रामादिकम्। जिशब्दपाटस्तु क्तिना निर्वाह्यः। यत्त्वदन्तेषूनधातौ मा भवानूनिनदित्यभ्यासे इकारश्रवणं तदपि लिपिप्रमादप्रयुक्तम्। अन्यथा कृतसंशब्दनइत्यत्र सुब्धातौ च स्वोक्तेन समं विरोधापत्तेः। तस्मादूननदित्येव धातुवृत्तौ साम्प्रदायिकः पाठः। नोनयतिध्वनयतीतिसूत्रे काशिकापदमञ्जर्योरप्येवमेवेत्यवधेयम्। एवञ्चेह **भाष्यकाशिक**योरविरोध एवेति स्थिते **सरस्वतीकण्ठाभरणा**दिग्रन्था अपि निर्बाधा एवेत्यवधेयम्। यत्तु स्तौतिण्योरिति सूत्रे सिषेचयिषतीत्यत्र सिचेर्हेतुमण्णौ गुणे सनि इटि गुणायादेशयोः कृतयोर्गुणस्य स्थानिवद्भावात्सिच्छब्दस्य द्वित्वमिति **न्यासकारेणोक्तं** तदुत्तरखण्डेऽकाराभावाद्भाष्यविरुद्धं, स्थानिवद्भावं विनाप्यभिमतरूपसिद्धेर्निष्फलं चेत्युपेक्ष्यम्। एतेनौजढदपीप्यदित्यादिसिद्धये सामान्यापेक्षतां वदन् अचि–

कीर्त्तदित्यादिसिद्धये चानित्यतां शरणीकुर्वन् **सीरदेवो**ऽप्यपास्तः ॥ इति **श्रीभट्टोजिदीक्षित**विरचिते श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य प्रथमे पादे अष्टममाह्निकम् ॥

---

**अदर्शनं लोपः ॥** स्थाने इत्यनुवर्त्तते । तदर्थश्च प्रसङ्गे इति । प्रसक्तस्याऽनुच्चारणं लोपसंज्ञं स्यात् । संज्ञाप्रदेशा लोपोव्योर्वलीत्यादयः । अर्थस्यैषा संज्ञा न तु शब्दस्य, महासंज्ञाकरणसामर्थ्यात् । नन्वेवं प्रदेशेष्वेव लोप इति लौकिकोर्थो ग्रहीष्यते । पशुरपत्यं देवतेतिवत् , तत्किं संज्ञयेति चेत् । न । प्रसक्तस्येत्येवंरूपविशेषलाभाय सूत्रारम्भात् । अन्यथा दधिमध्वित्यादौ तुगागमप्रसङ्गात् । अस्ति हि तत्र क्विपोऽदर्शनम् । तच्च लोप इति प्रत्ययलक्षणापत्तेः । नन्वस्त्वेवं वार्तिकमते, भाष्यमते तु प्रत्ययलक्षणसूत्रं नियमार्थम् । तत्कथं दध्यादौ तुक्प्रसङ्गः । स्थानिवत्सूत्रं तु न तुकं प्रति प्रवर्त्तयति । षष्ठीग्रहणस्य तत्रानुवर्त्तित्वात् । अत एव ग्रामणीरित्यादावण्कार्यं न भवति । तथा च भाष्यरीत्या संहितावसानयोर्लोकसिद्धत्वादिति वक्ष्यमाणन्यायेनेदं सूत्रं मास्त्विति चेन्न । घटङ्करोति ग्रामे तिष्ठतीत्यादौ ल्यब्लोप इति पञ्चम्यापत्तेः । अग्निमीळइत्यादौ चादिलोप इति निघातप्रतिषेधापत्तेश्च । आरब्धे तु सूत्रे तत्र शास्त्रतो लोकतो वा ल्यपश्चादीनां चाऽप्रसक्तत्वान्नोक्तदोषः । ननु वार्त्तिकमते प्रसक्तस्येत्युक्तेपि ग्रामणीरित्यत्र वृद्धिः स्यात् । कर्मण्यणः प्रसङ्गसत्त्वादिति चेत् । न । वासरूपन्यायेन पक्षेऽणः सम्भवेपि क्विप्पक्षे तेनाऽणप्रसङ्गस्य बाधितत्वात् । वैकल्पिकयोरेकानुष्ठाने तस्मिन्प्रयोगे इतरानुष्ठापकशास्त्राप्रामाण्यस्य शास्त्रसिद्धत्वात् ॥ [ अदर्शनं ] ॥

**प्रत्ययस्य लुक्श्लुलुपः ॥** अनेकसंज्ञाकरणसामर्थ्यात्तन्त्रावृत्त्याद्याश्रित्य तद्भावितसंज्ञा इह विज्ञायन्ते । लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमादेतत्संज्ञं स्यात् । संज्ञाप्रदेशाः लुक्तद्धितलुकि, जुहोत्यादिभ्यः श्लुः, जनपदे लुबिति । विधिप्रदेशेषु भाविसंज्ञाविज्ञानान्नान्योन्याश्रयः । विशेषविहिता अप्येताः संज्ञा लोपसंज्ञां न बाधन्ते । एकसंज्ञाधिकारादन्यत्र संज्ञानां बाध्यबाधकभावो नास्तीति आकडारसूत्रे वक्ष्यमाणत्वात् । प्रत्ययस्येति शक्यमकर्त्तुम् । न चैवं लुक्तद्धितलुकीति विधीयमानमदर्शनं गोस्त्रियोरित्यनुवृत्तेर्गोशब्दस्यापि स्यादिति वाच्यम् । 'गोरुपसर्ज्जनस्ये'ति योगं विभज्य स्त्रियाः । लुक्तद्धितलुकीति सूत्रे स्त्रीग्रहणस्यैवानुवर्तनसम्भवात् । अन्यथा प्रत्ययग्रहणे कृतेपि गमेर्डोर्लुक् स्यात् । 'कंसीयपरशव्ययोर्यञञौ लुक्चे'ति लुगपि प्रकृतेर्न भविष्यति । ङ्याप्प्रातिपदिकादित्यधिकारात्प्रातिपदिकात्परस्य लुग्विधानात् । कृतेऽपि हि प्रत्ययग्रहणे कमेः सः कंसः परान् शृणाति परशुरिति उकारसकारयोर्लुक् प्राप्त एवमेव परिहार्यः । न चैवं यञञोरेव लुगस्तु विधानसामर्थ्याच्च यञञ्लुकां विकल्पः । वेत्यनुक्तिस्तु यञञ्भ्यां मुक्तेऔत्सर्गिकस्य श्रवणं मा भूदित्येवमर्थमिति वाच्यम् । यञञ्लुकामेककालप्रतीतानामुद्देश्यविधेयभावाऽसम्भवात् । ट्युट्युलौ तुट्चेत्यत्र तु घकालतनेष्विति अनद्यतने लङिति च ज्ञापकाद्वाक्यभेदमाश्रित्य ट्युट्युलोस्तुड् विधीयते । तस्मादप्रत्ययनिवृत्तये तावत् प्रत्ययग्रहणं न कर्त्तव्यम् । स्थानिविशेषसमर्पणार्थमपि न । तथाहि—अत्रिभृगुकुत्सेत्यत्र तावत् यस्कादिभ्योगोत्रइत्यतो गोत्रइत्यनुवर्त्तते । तेनाऽत्र्यादिभ्यो यो विहितस्तस्य लुक् सिद्धः । जनपदे लुबित्यत्र तु ङ्याप्प्रातिपदिकात् प्रत्यय इत्यनुवृत्तेः जनपदे विहितस्य चातुरर्थिकप्रत्ययस्य लुप् । लवणाल्लुगित्यत्र प्रकृतत्वाट्ठक एव । सर्वत्रापि इह प्रत्यय इत्यस्य षष्ठी कल्पयिष्यते तस्मादित्युत्तरस्येति । स्यादेतत्—सर्वादेशार्थं प्रत्ययग्रहणम् । तेन यञञोश्च सुपोधातुप्रातिपदिकयोरित्यादिषु यत्रानेकाल्प्रत्ययस्तत्रालोन्त्यस्येति न भवति । तथा लवणाल्लुगित्यादावादेः परस्येति न भवतीति । मैवम् । ज्ञापकादेव सर्वादेशत्वसिद्धेः । 'घोर्लोपोलेटि वे'ति हि लोपे कृते लुग्वादुहेतिलुग्ग्रहणं ज्ञापयति—लुगादयः सर्वादेशा इति । अलोन्त्यस्य ह्यदर्शनं प्रकृतेन लोपेनाऽपि सिद्धम् । न च वैपरीत्यापत्तिः । असञ्जातविरोधित्वेन लोपे ऽलोन्त्यपरिभाषायाः प्रवृत्तेः । सामान्येन लुमद्विषयं ज्ञापकं न तु लुङ्मात्रविषयमिति सर्वं सिद्धम् । स्यादेतत् । आगस्त्यकौण्डिन्ययोरित्यत्र लुगणिञोरित्यतो लुग्ग्रहणमनुवर्त्तते न वा ?। आद्ये स्थानिनौ द्वौ, आदेशास्तु लुका सह त्रय इति वैषम्याद्यथासङ्ख्याऽभावे एकैकस्य त्रय आदेशाः पर्यायेण स्युः । ततश्चागस्तयोपि कुण्डिनाः स्युः । कुण्डिनाश्चागस्तयस्स्युः । लुक्च क्रियमाणो ज्ञापकात्सर्वादेश इति उभयत्रापि विभक्तिमात्रं श्रूयेत । अथ निवृत्तं, ततो ऽगस्तयः कुण्डिना इत्यत्र न कश्चिद्दोषः । किं तु अगस्तीनां छात्राः आगस्तीया इत्यत्र प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षितेप्यगस्त्यादेशस्य निषेधाऽभावादनिवृत्तावृद्धत्वाच्छो न स्यात् । प्रत्ययग्रहणे सति तु लुग्ग्रहणानुवृत्त्या आगस्त्यकौण्डिन्ययोः प्रत्ययांशस्य लुग्भवति । अवशिष्टभागयोर्यथासङ्ख्यमगस्तिकुण्डिनचौ । तेनागस्तयः कुण्डिना इति सिद्धम् । प्राग्दीव्यतीये विवक्षिते तु गोत्रे लुगचीति लुकि प्रतिषिद्धे तत्सन्नियोगशिष्टत्वादगस्त्यादेशेपि निवृत्ते आगस्त्यशब्दाद्वृद्धाच्छे कृते सूर्यतिष्येति यलोपे चागस्तीया इति सिध्यति । कौण्डिन्ये तु नास्ति विशेषः । निवृत्तेपि कुण्डिनजादेशे कौण्डिन्यशब्दादपि कण्वादिभ्यो गोत्रइत्यणि कृते आपत्यस्येति यलोपे कौण्डिना इत्येव भवितव्यम् । तस्मादागस्त्यकौण्डिन्ययोरित्यत्रावश्यमनुवर्त्त्यं लुग्ग्रहणम् । ततश्चेह प्रत्ययग्रहणमपि कर्त्तव्यमेवेति । मैवम् । 'आगस्त्यकौण्डिन्ययो'रित्यत्र 'यस्कादिभ्योगोत्र'इति गोत्रग्रहणमनुवर्त्त्यं गोत्रे यो विहितस्तस्य लुगिति व्याख्यानेनापीष्टसिद्धेः । तस्मादत्र प्रत्ययग्रहणं

मास्त्विति स्थितम् । स्यादेतत् । एवंसति लोपसंज्ञया सह लुगादिसंज्ञानां तुल्यव्यक्तिकत्वं स्यात् । तद्भावितस्य संज्ञेति चेत् । अविशेषाल्लोपेपि तथा स्यात् । उच्यते । असञ्जात विरोधित्वाल्लोपसंज्ञा तावददर्शनमात्रस्य भवति । लुगादिसंज्ञासु परमनेकसंज्ञाप्रणयनसामर्थ्यात्तद्भावितग्रहः । तेन संज्ञासङ्करो नेत्युक्तम् । सति तु सङ्करे हन्तीति शब्लुकि श्लाविति द्वित्वं स्यात् । जुहोतीत्यत्र श्लौ सति 'उतो वृद्धिर्लुकि हली'ति वृद्धिः स्यात् । न च तत्राभ्यस्य नेत्यनुवृत्तेर्योयोति नोनोतीत्यादाविव वृद्धिर्न भविष्यतीति वाच्यम् । संज्ञाऽसंकरपक्षे तदनुवृत्त्यसम्भवात् । अन्यथासूत्रस्य निर्विषयतापत्तेः । न च यौतिरौतीत्यादिरवकाशः । संज्ञासङ्करे तत्रापि द्वित्वस्य दुर्वारत्वात् । लोपसंज्ञा तु लुगादिसंज्ञानां व्यापिकेत्युक्तम् । तेन पचेत्यादौ प्रत्ययलक्षणं सिध्यतीति दिक् । भाष्यमते तु यद्यपि स्थानिवत्सूत्रेण पचेत्यादि सिद्धं तथापि 'सुदृषद्ब्राह्मण' इत्यत्र वक्ष्यमाणरीत्योत्तरपदाद्युदात्तत्वस्योपधादीर्घस्य च वारणाय लोपे सति प्रत्ययलक्षणमेवेति नियमोऽवश्यं प्रवर्त्तनीयः । तथा च तत्र लुकः प्रत्ययसंज्ञाप्यादर्त्तव्येत्यवधेयम् ॥

**प्रत्ययलोपे प्रत्ययलक्षणम् ।** प्रत्यये लुप्तेपि तदाश्रयंकार्यं स्यात् अल्विध्यर्थमिदमिति वार्त्तिकमतम् । तथाहि–अतृणेडित्यत्र तिपो हल्ङ्यादिलोपे कृते 'तृणह इ'मिति सूत्रेणविधीयमानो हलादिपित्सार्वधातुकनिमित्त इमागमोऽस्माद्वचनाद्भवति, स्थानिवत्सूत्रेण तु न सिध्यति, अल्विधित्वात् । नन्वेवंप्रत्ययलक्षणमपि न स्यात् । 'वर्णाश्रये नास्ति प्रत्ययलक्षण'मिति निषेधादिति चेन्न । नह्येवंरूपं वचनमस्ति । किंतु प्रकृतसूत्रे प्रत्ययलोपे तल्लक्षणमित्येवाऽस्तु । यद्वा तल्लक्षणमित्यपि मास्तु, स्थानिवदित्यनुवृत्त्यैवेष्टसिद्धेः । एवं सति 'प्रत्ययलक्षण'मित्युक्तेः फलं तत्पठ्यते । पुनः प्रत्ययग्रहणसामर्थ्याद्धि यत्कार्यं प्रति प्रत्ययस्याऽसाधारणं रूपं निमित्ततयाऽऽश्रीयते सुप्त्वतिङ्त्वादि तदेव भवतीति लभ्यते । तेन गवे हितं गोहितमित्यवादेशो न भवति । तद्धिधावच्त्वमात्राश्रयणात् । तस्य च प्रत्ययाऽप्रत्ययसाधारण्यात् । अथाऽत्र नलुमतेति निषेधः, तर्हि सुयशा इत्यत्र विसर्जनीयस्य सः स्यात्, सुदृङित्यादौ खरिचेति चर्त्वं स्यादिति दिक् । इमागमे तु हलादौ सार्वधातुक इति प्रत्यय एव प्राधान्येनाश्रीयत इति वैषम्यम् । तस्माद्वर्णप्राधान्ये प्रत्ययलक्षणं नास्ति, प्रत्ययप्राधान्ये त्वस्तीति विवेकः । अनेनैव न्यायेन न धातुलोप इति बहुव्रीहिणैव सिद्धे आर्द्धधातुकग्रहणसामर्थ्यात्तत्त्वेन निमित्तता लभ्यते । तेन धिन्विकृण्व्योर्विचि लोपोव्योरिति वलोपस्य वलिनिमित्तत्वात्तत्रार्द्धधातुकतया विचो निमित्तत्वाऽभावाद्गुणो भवत्येव । तेन सुधे सुधेनौ सुधेनः । सुकः सुकर्णौ सुकर्ण इत्यादि भवति । पठन्तिच 'सुधे सुधेवाऽरिवधात्सुराणां सुका'रणे लाघवतश्च रामः ।

विशेषणे हे य इहादिकर्त्तवंदेदधीती स हि कैयटीये' इति । न च तोतोर्त्तीत्यादिव्यावृत्त्या आर्द्धधातुकग्रहणस्य सार्थक्यात्कथं सामर्थ्यमिति वाच्यम् । यङ्लुकश्छान्दसत्वात् । भाषाविषयत्वपक्षे त्वार्द्धधातुकग्रहणमावर्त्त्यं सामर्थ्यमुपपादनीयम् । नन्वेतत् क्ङितिचेत्येतत्सूत्रस्थभाष्येण सह विरुद्धम् । पूर्वस्मिन्योगे यदार्द्धधातुकग्रहणं तदनवकाशमिति तत्रोक्तत्वादिति चेन्न । अनास्थया तथोक्तत्वादित्याहुः । तदुपष्टम्भेनात्र विजेवानभिमत इत्येव किं न स्यादिति चिन्त्यम् । क्विपि तु ऊठ् । तेन धिनूः धिन्वौ धिन्वः । कृणूः कृण्वौ कृण्व इति भवति । सुधीः सुधिनौ सुधिनः, सुकीः सुकृणौ सुकृण इत्यादि तु न भवत्येवेत्याहुः । यङ्लुको भाषाविषयत्वे आर्द्धधातुकग्रहणस्य ततोर्तीत्यत्र चारितार्थ्यादावृत्तौ च मानाऽभावाद्गुणनिषेधप्रवृत्त्या सुधी सुधिनावित्येवास्तु । कृणोतेस्तु दीर्घे सुकीः सुकीर्णौ सुकीर्णे इत्यादि भवत्वित्यपि चिन्त्यम् । नन्वेवं परिवीरित्यत्र तुग्दीर्घौ पर्यायेण स्याताम् । अनेनैवोभयविधाने पौर्वापर्याऽभावेन विप्रतिषेधे परमित्यस्याऽप्रवृत्तेः । सत्यम् । शास्त्रातिदेशस्य व्यपदेशातिदेशस्य वाऽऽश्रयणाददोषः । यद्वा सति प्रत्यये यत्कार्यं भवितुर्हति तदेवातिदिश्यते इति परिवीयेत्यादाविव परिवीरित्यत्रापि दीर्घ एव भवति न तु तुगिति कार्यातिदेशेप्यदोषः । **भाष्यकारास्त्वाहुः**–तृणहइमर्थं तावन्नेदं सूत्रम् । स्थानिवत्सूत्रेणैव गतार्थत्वात् । न चाल्विधिरयं, हलोत्यस्य निवर्त्तनात् । नचैवं तृणहानीत्यत्रापीम् स्यादिति वाच्यम् । नाभ्यस्तस्याचीत्यतोऽचि नेत्यनुवर्त्तनात् । नाप्याशीरित्यत्र शासइदङ्हलोरितीत्वार्थमिदम् । आशासः क्वावुपसंख्यानेनैव सिद्धेः । तद्धि त्वयापि वाच्यम् । 'शास इदङ्हलो'रित्यत्र शासिमात्रग्रहणमिति पक्षे नियमार्थम् । आशासः क्वावेव यथा स्यात्, आशास्ते इत्यादौ मा भूदिति । यस्माच्छासेरङ् विहितस्तस्यैवाङ्साहचर्याद्द्विविधौ ग्रहणमिति पक्षे यथा आशास्ते इत्यादौ न भवति तथा क्विप्यपि न स्यादिति विध्यर्थम् । तस्मात्प्रत्ययलोपे सति प्रत्ययलक्षणमेवेति नियमार्थमिदं सूत्रम् । प्रत्ययाऽप्रत्ययसाधारणं रूपमाश्रित्य यत्कार्यं विधीयते तन्निवृत्तिः फलम् । तेन शोभना दृषदोऽस्य प्रासादस्य सुदृषत् । अत्र सोर्मनसी अलोमोषसी–इति सूत्रेण सुशब्दात्परस्य मन्नन्तस्याऽसन्तस्य चोत्तरपदस्य बहुव्रीहौ विधीयमानमाद्युदात्तत्वं न भवति । अत्र हि लुप्तेऽपि जसि स्थानिवद्भावेनाऽसन्तमुत्तरपदमस्त्येव । किन्त्वसिति रूपं प्रत्ययाऽप्रत्ययसाधारणम् । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ती'ति वक्ष्यमाणत्वात् । अतो नियमेनाद्युदात्तव्यावृत्तिः सिद्धा । तथा च 'नञ्सुभ्या'मित्यन्तोदात्तं पदं भवति । इदमत्रावधेयम्–न केवलं स्वरार्थमेवेदं सूत्रं किन्तूक्तोदाहरणेष्व प्राप्नुवतः सान्तस्येत्युपधादीर्घोऽपि एतन्नियमेनैव व्यावर्त्यः । वार्त्तिकमते तु उक्त–स्वर

स्य दीर्घव्यावृत्तेश्च सिद्धये उपायान्तरमन्वेषणीयमिति । ननु यदि नियमार्थं सूत्रं तर्हि पचेत्यत्र प्रत्ययलक्षणेन पदत्वमिति वृत्तिः कथं योज्या । एवं 'समासत्वात्प्रातिपदिकत्वं, 'त्वक्रमोरितोट', 'उभयप्राप्तौकर्मणीतिकर्मणि षष्ठी'त्यादयोपि तत्रतत्राऽभियुक्तग्रन्थाः कथं योज्या इति' ? अत्रोच्यते । योस्माकं नियमविधिः स मीमांसकरीत्या परिसङ्ख्याविधिरिति तावत्स्पष्टंविवरणादौ । तत्र दोषत्रयं, स्वार्थहानिः, परार्थपरिकल्पना, प्राप्तबाधश्चेति । तच्च यथगत्या सह्यतइति पक्षस्तदा नियमविधेर्निषेध एवाऽर्थः । प्रत्ययलक्षणशब्देन तद्भिन्नं लक्ष्यते । भवतीत्यनेन च न भवतीति । तथा च स्थानेन्तरतमसूत्रे भाष्यम्, नाऽनेनान्तरतमा निर्वर्त्यन्ते अपि तु अनन्तरतमा निवर्त्यन्ते इति । अत एव वार्त्तिककारोपि वक्ष्यति—**उभयप्राप्तौ कर्मणीति प्रतिषेधे ऽकादिप्रयोगे ऽप्रतिषेध** इति । अस्मिन्पक्षे उभयप्राप्ताविति परिशेषिता षष्ठीत्यादिक्रमेण व्याख्येयं न तु विहितेति । यदि तु दोषत्रयगौरवपरिहारार्थं प्रत्ययलक्षणसूत्रं यथाश्रुतं व्याख्याय अतएव ज्ञापकात्स्थानिवत्सूत्रस्य प्रत्ययलोपेतरविषयकता कल्प्यते । सामान्यपुरस्कारप्रवृत्तस्य शास्त्रस्य विशेषतात्पर्यं हि त्वयापि कल्प्यमेव । अन्यथा विकल्पापत्तेः । भाट्टमतेन तौ पशौ करोतीत्यत्र यथा । पदे जुहोतीत्यादिभिराहवनीयविधेरिव विशेषविधिना सामान्यविधेः सङ्कोचसम्भवाच्च । न चैवं सामान्यस्य विशेष उपसंहारापत्तिः । सामान्यशास्त्रप्रणयनवैयर्थ्यापत्तेः । वेदे तु न कश्चित्प्रणेता येनैवं पर्यनुयुज्येतेति चतुर्द्धाकरणस्याग्नेये उपसंहारो मीमांसायामभ्युपेतः । कल्पसूत्रकारास्तु तथापि व्युत्था एव । तथा च भगवता कात्यायनेन सूत्रितम्,—**अविशेषादुभौ वेति** । एवं च सामान्यशास्त्रस्य विशेषलक्षणाया उभयवाच्यत्वात्तथैवोपपत्तौ दोषत्रयं न सोढव्यमिति पक्षस्तदोदाहृतग्रन्थाः सम्यगेव । नैयायिकमते तु तात्पर्यसङ्कोचस्थले लक्षणा नास्त्येवेति निर्विवादम् । विशेषधर्मप्रकारकबोधस्योद्देश्यतायामेव तदभ्युपगमात् । सामान्यप्रकारकस्य विशेषविशेष्यकस्यापि लक्षणां विना निर्वाहादिति सुधीभिराकलनीयम् ।

**न लुमताङ्गस्य** । लुमता शब्देन प्रत्ययलोपे सति प्रत्ययलक्षणमङ्गस्य कार्यं न स्यात् । वार्त्तिकमते पूर्वसूत्रप्राप्तस्यायं निषेधः । भाष्यमते तु स्थानिवत्सूत्रप्राप्तस्य । नियमविधीनान्तात्पर्यसङ्कोचकत्वमात्रं न तु निषेधकतेति प्रागुक्तरीत्या तु भाष्यमतेपि पूर्वसूत्रेण प्राप्तस्यायं निषेध इत्यवधेयम् । एवमग्रेपि । गर्गाः । मृष्टः । जुहुतः । इह यञ्शपोर्लुमता लुप्तयोरङ्गस्य गुणवृद्धी न भवतः । लुमतेति किम् ? । कार्यते । हार्यते । णेरनिटीति णिलोपे कृते णिजपेक्षा वृद्धिर्भवत्येव । अमार्ट । हल्ङ्यादिलोपे नित्यत्वात्कृतेपि वृद्धिः । अङ्गस्येति किं, पञ्च सप्त । अत्र अङ्गस्येति स्वर्यते । तेनाऽङ्गाधिकारो गृह्यते । स्वरितेनाधिकार इति वचनादिति वार्तिककाराः । भाष्ये तु इदं दूषितम् । तथाहि—एवं सति उत्क्रामेत्यत्रातोहेरिति हेर्लुकि कृते क्रमः परस्मैपदेष्विति दीर्घो न स्यात् । जगनिषेत्यत्रगमेरिट् परस्मैपदेष्वितीण्न स्यात् । तथा विवृत्सेत्यत्र नवृद्भ्यश्चतुर्भ्य इतीण्निषेधो न स्यात् । तस्मान्नलुमतेत्यत्र नाङ्गाधिकारः प्रतिनिर्दिश्यते । किन्तु लुमतालुप्ते प्रत्यये यदङ्गन्तस्याङ्गमनाङ्गञ्च सर्वं प्रतिषिध्यतइति । न चैवमुक्तदोषतादवस्थ्यमिति वाच्यम् । उत्क्रामेत्यत्र लुप्तं परस्मैपदम् । तदपेक्षया यदङ्गं शबन्तं न तस्य दीर्घो विधीयते, किन्तु क्रमेः । स तु शपं प्रत्यङ्गं न तु लुप्तं प्रतीति निषेधाऽप्रवृत्तौ प्रत्ययलक्षणेन दीर्घप्रवृत्तेः । एवं जिगमिष विवृत्सेत्यत्रापि इटो विधिप्रतिषेधौ भवत एव । तौ हि लुमता लुप्ते परस्मैपदे यदङ्गं सन्नन्तं तस्य न क्रियते किन्तु सकारादेः प्रत्ययस्य । सचाङ्गं नेति स्पष्टमेव । स्यादेतत् । पक्षद्वयेपि ञ्नित्यादिर्नित्यं, कितः, पथिमथोः सर्वनामस्थानइति त्रिसूत्र्या विधीयमानाः स्वरा लुकि कृतेपि प्राप्नुवन्ति । तथाहि गर्गाः विदाः । यञञोर्लुक् । उष्ट्रग्रीवाः । इवेप्रतिकृताविति कनो देवपथादिभ्यश्चेति लुप् । ततो ञ्नित्यादिरित्याद्युदात्तता प्राप्नोति । तथा अत्रेरपत्यानि अत्रयः । इतश्चानिञ इति ढकोऽत्रिभृगुकुत्सेत्यादिना लुक् । ततः कितस्तद्धितस्यान्त उदात्तो भवतीत्यन्तोदात्तता प्राप्नोति । सा हि प्रत्ययग्रहणे तदन्तग्रहणात्तद्धितान्तस्य विधीयते । न च सिद्धान्तेऽपि फिट्स्वरेणान्तोदात्ततया भाव्यमेवेति वाच्यम् । राशदिभ्यां त्रिप्, अदेस्त्रिनिश्चेत्युणादिसूत्रेण ह्यदेश्चकारानुकृष्टे त्रिप्प्रत्यये तस्य पित्त्वेनानुदात्तत्वादाद्युदात्तोऽत्रिशब्दः । तथा च प्रयुज्यते—अत्रेरिव शृणुतं पूर्वस्तुतिम्, यथा शृणोतेरत्रेः कर्माणि कृण्वत इति । तथा ढको लुक्यप्याद्युदात्त एव प्रयुज्यते । अत्रीणां सोममद्रिव इति । अत्रीणां शृणुतं हवमिति च । त्रिन्प्रत्ययान्तस्त्वन्तोदात्तो नकारान्तश्चेत्यन्यदेतत् । सोऽपि प्रयुज्यते—दूरे वा ये अन्ति वा के चिदत्रिण इति । तथा पन्थाः प्रियो यस्य पथिप्रियः मथिप्रियः । सुपोधात्विति सोर्लुकि पथिमथोः सर्वनामस्थान इत्याद्युदात्तता प्राप्नोति । नह्येषा त्रिसूत्री अङ्गाधिकारस्था येन नलुमतेति निषेधः प्रवर्त्तेत । नाप्येतद्वस्तुतोऽङ्गस्य कार्यम् । लुप्तिङन्तमिति पदसंज्ञावदुक्तस्वराणां प्रत्ययान्तकार्यत्वात् । नन्वस्तु कित इति तथा इतरत्तु द्वयं ञ्नितिसर्वनामस्थान इति सप्तमीनिर्देशाद्वस्तुतोऽङ्गस्य कार्यम्भवत्येवेति चेन्न । ञ्निदन्तस्यादेरित्यादिक्रमेण प्रत्ययान्तस्यैव तद्विधानात् । 'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इति सिद्धान्तात् । एतच्च 'भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिती'ति पूर्वग्रहणेन ज्ञाप्यतइति तत्रैव भाष्ये स्पष्टम् । अत एवोपोत्तमं रितीत्याद्युदात्तत्वमाहवनीयइत्यादौ रिदन्तस्योपोत्तमे नीशब्दस्येकारे प्रवर्त्तते, चङ्यन्यतरस्यामिति च चङन्तस्य । न

चैवं 'चतुरश्शसी'त्युदात्तत्वं शसन्तस्य स्यात्तथा च षट्त्रिंशांश्च चतुरः कल्पयन्त इत्यादौ चतुर इति पदं मध्योदात्तमिष्यमाणं न सिध्येदिति वाच्यम्। तत्र शस्ग्रहणसामर्थ्यात्तदन्तसप्तमीत्वबाधात्। इतरथा ह्यूडिदम्पदाद्यप्पुम्रैद्युचतुर्भ्य इत्येव ब्रूयात्। तत्र ह्यसर्वनामस्थानग्रहणानुवृत्तेः शस एव भविष्यति। 'षट्त्रिचतुर्भ्यो हलादि'रिति हलादेः सिद्धान्तेऽप्युदात्तविधानात्। न चैवं स्वरविधिषु षष्ठ्येव निर्दिश्यतामिति वाच्यम्। रितश्चङ इत्याद्यपेक्षया रिति चङीत्युक्तावर्द्धमात्रालाघवसम्भवेन सप्तमीप्रयोगादिति। अत्रोच्यते—अङ्गाधिकारनिर्देशपक्षे तावदुक्तदोषपरिहाराय वार्त्तिकमारभ्यते—**लुमतिप्रतिषेधे एकपदस्वरस्योपसंख्यानम्। सर्वामन्त्रितसिज्लुक्स्वरवर्जम्। प्रयोजनं ञ्निनिकित्लुक्स्वराः। पथिमथोः सर्वनामस्थाने लुकीति।** अस्यार्थः—लुमति लुमत्संज्ञया प्रतिपादितेऽदर्शने यः प्रतिषेधः तस्मिन्नेकपदाश्रयो यः स्वरस्तस्योपसङ्ख्यानम्। प्रत्ययलक्षणेन प्राप्तोऽप्येकपदस्वरो न भवतीत्यर्थः। पदद्वयाश्रयस्तु स्यादेव। यथा 'दधि तिष्ठती'त्यत्र पदस्य पदादित्यधिकृत्य विहितस्तिङ्ङतिङ इति निघातः। अत्र हि दधीत्यस्य पदसंज्ञार्थं प्रत्ययलक्षणमपेक्ष्यते। तथाऽऽहतिष्ठेत्यादौ तिङन्तत्वलाभायापि। नन्वेवं सर्वस्तोमोऽतिरात्र इत्यत्र 'सर्वस्य सुपी'त्याद्युदात्तत्वं न स्यात्। तथा सर्पिरागच्छ सप्तागच्छतेत्यत्रामन्त्रितस्य चेति षाष्ठमाद्युदात्तत्वं न स्यात्। तथा मा हि दातां मा हि धातामित्यत्रादिः 'सिचोऽन्यतरस्या'मित्याद्युदात्तत्वं न स्यादित्यत आह—**सर्वे**त्यादि। इदं स्वरत्रयं विहाय स्वरान्तरे प्रतिषेध इत्यर्थः। न च सर्वस्तोम इत्यत्र बहुव्रीहौ प्रकृत्या पूर्वपदमिति पदद्वयस्वरोऽयमिति वाच्यम्। सर्वस्य सुपीति यदाद्युदात्तत्वं तस्यैव ह्यनेन प्रकृतिभावमात्रं कर्त्तव्यम्। तथा च तत्प्राप्तिरवश्योपपादयितव्येति भावात्। न च सर्पिःशब्दस्यामन्त्रितस्वरं विनाप्याद्युदात्तता लब्धुं शक्या। अर्चिशुचिहुसृपिछादिछर्दिभ्य इत्यौणादिके इसि प्रत्यये कृतेन्तोऽदात्तत्वात्। अव्युत्पत्तिपक्षेपि फिट्स्वरेण तथात्वात्। न च नब्विषयस्येत्याद्युदात्तत्वम्, अनिसन्तस्येति पर्युदासात्। कैयटेन तु सर्पिःशब्दस्य घृतादित्वं किमर्थं कल्पितमिति चिन्त्यम्। ननु सप्तशब्दः 'सप्यशूभ्यां तुट् चे'ति कनिनन्तो व्युत्पादितः। तथा च नित्त्वादाद्युदात्तः। अव्युत्पत्तिपक्षेपि तथैव, 'ष्णः संख्याया' इति वचनादिति चेत्। न। उभयथापि घृतादित्वेनान्तोदात्तत्वात्। तथा च प्रयुज्यते—सप्त युञ्जन्ति रथमेकचक्रमिति। इह सिज्लुग्ग्रहणं मास्तु। गातिस्थेत्यत्र सिज्ग्रहणसामर्थ्याल्लुकि स्वरः सिद्धः। अन्यथा हि लाघवार्थं च्लेरेव लुकं विदध्यात्। एवं ह्यभूदपादित्यादिसिद्धये ऽस्तिसिचोऽपृक्त इत्यत्र सकारान्तरप्रश्लेषक्लेशोऽपि नाश्रयणीय इति। न चैवं च्लेर्लुकि आत इति सूत्रं विध्यर्थमेव स्यान्न तु नियमार्थं, तथा च तत्र लङ्निवृत्तये च्लिलुकीति वक्तव्यं स्यादिति विपरीतगौरवापत्तिरिति वाच्यम्। ङित इत्यनुवृत्त्यैव लटो व्युदस्तत्वात्। तस्मात्सर्वामन्त्रितस्वरवर्जमित्येवावश्यकम्। वार्त्तिकारम्भस्य प्रयोजनमाह—**प्रयोजनमिति**। ञ्निनिशब्दयोरिकार उच्चारणार्थः, सुट्तिथोरितिवत्। एते स्वरा निवर्त्यमानतया प्रयोजनमित्यर्थः। प्रयोजनान्तरमाह—**पथिमथोरिति**। तदेवं वचनबलेन त्रिसूत्र्याऽतिव्याप्तिरुद्धर्त्तव्येतीह सूत्रे स्थितम्। वस्तुतस्तु नैतदर्थं वचनं क्रियते, ज्ञापकबलेनैव विदा गर्गा इत्यादेः सिद्धत्वात्। तथा च संज्ञायामुपमानमिति सूत्रे वार्त्तिकम्—'उपमानस्याद्युदात्तत्ववचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्ये'ति। अस्मिंश्च पक्षे पथिमथोः सर्वनामस्थाने लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वचनमेव कर्त्तव्यम्। न ह्ययमनुबन्धलक्षणः स्वरः, येनोक्तज्ञापकबलेन वार्येत। न च स्वरमात्रविषयकं ज्ञापकमिति वाच्यम्। आमन्त्रितस्वरसिज्लुक्स्वरयोरसिद्धिप्रसङ्गात्। न चैवमपि सप्तमीनिर्दिष्टे स्वरे प्रत्ययलक्षणं न भवतीति ज्ञाप्यतामिति वाच्यम्। 'सर्वस्तोम' इत्यात्राद्युदात्ताऽसिद्धिप्रसङ्गात्। यद्वा—अस्तु सप्तमीनिर्दिष्टस्वरविषयकमेव ज्ञापकम्। 'सर्वस्य सुपी'ति सप्तमीमपनीय सुप इति षष्ठी पाठ्या। तथा च पथिस्वरार्थं वचनं नारम्भणीयम्। ञ्नित्कित्स्वरार्थं तूभयथापि नारम्भणीयमिति सर्वं सुस्थम्। पक्षद्वयमपीदं संज्ञायामुपमानमिति सूत्रे भाष्यकारैः स्पष्टमुक्तम्। तदयं निर्गलितोऽर्थः—त्रिसूत्र्यां शङ्कितस्याऽतिव्याप्तिदोषस्य वचनेनोद्धारमापाततः उक्त्वा ज्ञापकेनैवेष्टसिद्धिरिति निष्कर्षोऽग्रे कृत इति। एतच्च समाधानमङ्गाधिकारो निर्दिश्यत इति पक्ष इव वस्तुतोऽङ्गस्य यत्कार्यमिति निष्कृष्टपक्षेपि तुल्यम्। अत एव 'संज्ञायामुपमान'मिति सूत्रे भाष्यकारैः पक्षद्वयसाधारण्येनैवोक्तज्ञापनवार्तिकं योजितम्। प्रकृतसूत्रस्थभाष्यकैयटयोस्तु निष्कृष्टपक्षे उक्तदोषप्रसङ्ग एव नास्तीति लभ्यते। तत्रेत्थमाशयमभियुक्ता वर्णयन्ति—ज्ञापकं द्विविधम्। समान्यापेक्षं विशेषापेक्षं च। तत्र यदा भीह्रीत्यत्र पूर्वग्रहणेन यत्र सप्तम्यर्थपक्षे तदन्तग्रहणपक्षे च फलभेदस्तत्रैव सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति ज्ञाप्यते। यथा भीह्रीत्यत्रैव पूर्वग्रहणाऽभावे तदन्तस्य कार्यित्वे प्रत्ययान्तानां भ्यादीनामुदात्त इत्यलोऽन्त्यपरिभाषया प्रत्ययान्त एवोदात्तः स्यात्। सप्तम्यर्थाश्रयणे तु पितमपहाय भ्यादीनामेवोदात्तः स्यादिति स्पष्टः फलभेदः। तथोपोत्तमं रिति, चङ्यन्यतरस्यामित्यत्रापि। ञ्नित्यादिर्नित्यं पथिमथोः सर्वनामस्थान इत्यादौ तु नास्ति फलभेदः। तदन्तस्य हि कार्यित्वे प्रकृत्यादेरेवोदात्तत्वं ञ्निदादिपूर्वस्यापि कार्यित्वे तथैवेति। तथा च तत्र 'सौवर्यं' इत्यस्याऽप्रावृत्त्या तदन्ताऽकार्यित्वादुक्तदोषस्याऽप्रसङ्ग एवेति। 'संज्ञायामुपमान'मित्यत्र भाष्यकैयटादिग्रन्थास्तु सामान्यापेक्षं

ज्ञापकमाश्रित्य योजयितव्या इति। 'अत्रय' इत्यत्र तु स्वरो न भवति। लुकि कृते कार्यिणोऽभावात्। प्रत्ययलक्षणं हि यदन्तस्य कार्यं तत्प्रत्ययलोपेपि भवति, न तु प्रत्ययस्यैव यत्कार्यं तदपि। न च प्रत्ययग्रहणपरिभाषया तदन्तग्रहणं स्यादिति वाच्यम्। येन विधिरिति सूत्रेणैव तल्लाभस्य वक्ष्यमाणत्वात। विशेषणविशेष्यभावे च कामचारात्। नन्वेवमपि स्थानिवत्सूत्रेण स्यादेवोदात्ततेति चेन्न। लोपस्याऽभावरूपतया तदीयाऽन्तस्य तदुदात्ततायाश्च बाधात्। अत एव हि अभूदित्यादी लुप्तस्य सिचो नेट्। नह्यभावस्य भावोऽवयवः सम्भवति। भाष्यमतेऽनल्विधाविति निषेधाच्च। किब्विजादीनां तु नेड्वशीतीण्निषेधो ऽप्यस्ति। न चैवं नखनिर्भिन्ने ऐस्प्रसङ्गः। तस्यापि लुकाऽपहारादिति दिक्। वस्तुतो 'यदङ्ग'मिति व्याख्यानाद्राजपुरुष इत्याद्यपि निर्बाधम्। भसंज्ञाया निषेधेनाऽल्लोपाऽभावात्। सुबन्तत्वप्रयुक्तपदसंज्ञया नलोपाच्च। तथा 'अहर्ददाती'त्यत्र रेफोपि सिद्धः। 'असुपी'ति निषेधो हि वस्तुतोऽङ्गस्य कार्यमिति नेह प्रवर्त्तते। अङ्गाधिकारनिर्देशे तु प्रवर्त्तेताऽसौ। अत एवाह्नो रविधाविति वचनमारभ्यते। न चाऽसुपीति वचनसामर्थ्यात्प्रत्ययलक्षणेनाऽसुपीति निषेधो नेति वाच्यम्। दीर्घाह्नो निदाघ इत्यादौ हल्ङ्यादिलोपेऽपि रेफापत्तेः। एतेनाऽसुपीति पर्युदासमाश्रित्याऽहर्ददातीत्यत्र दाधातोः सुब्भिन्नस्य सत्त्वाद्रेफ इत्यपि कल्पनमपास्तम्। दीर्घाह्नो निदाघ इत्यत्राऽतिप्रसङ्गात्।

यद्यपि रुत्वरत्वयोरसिद्धतया पूर्वं नलोपे कृतेऽकारस्यैव रुत्वरत्वे प्राप्नुतस्तथापि रुत्वरत्वयोर्विषये नलोपो नेष्यते। रुत्वरत्वोभयारम्भसामर्थ्यात्। नह्यकारस्य रौ रे वा विशेषोऽस्ति। न च सम्बुद्धौ नलोपनिषेधाद्धे अहर्गच्छ हे दीर्घाह्नो निदाघेत्यत्र चरितार्थता। एवमपि 'रूपरात्री'ति रुत्वस्य वैयर्थ्यापत्तेः। नन्वेतदपि सम्बोधने चरितार्थमिति चेत्सत्यम्। अहन्नित्यावर्त्त्यैकेन नलोपाऽभावनिपातनात्सिद्धमिति दिक्।

स्यादेतत्—परमवाचा परमगोदुहा परमलिहा परमदण्डिना परमदिवा परमकुमार्येत्यत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्योत्तरखण्डस्य पदसंज्ञा स्यात्। ततश्च 'चोःकुः,' 'दादेर्धातोर्घः,' 'हो ढः,' 'नलोपः प्रातिपदिकान्तस्य,' 'दिव उत्,' 'इकोऽसवर्णे शाकल्यस्यह्रस्वश्चे'त्येते विषयः प्रसज्येरन्। न च भसंज्ञया पदसंज्ञाया बाधः। भिन्नावधिकत्वात्। भसंज्ञा हि समस्तस्य प्राप्ता, पदसंज्ञा तूत्तरखण्डस्य। अत्र भाष्यम्—भसंज्ञासूत्रे सुप्तिङन्तमिति सूत्रात्सुबन्तमित्यनुवर्त्तनीयम्। तदयं सूत्रार्थः—यजादौ असर्वनामस्थाने परे यस्मात्प्रत्ययविधिस्तथाभूतः पूर्वः समुदायो भसंज्ञो भवति। तदवयवभूतं सुबन्तं यद्यस्ति तर्हि तदपि भसंज्ञं स्याद्यजादावनन्तर इति। इह च समुदायस्य भसंज्ञा प्रधानशिष्टा। अवयवस्य त्वन्वाचयशिष्टा, कर्त्तुःक्यङ्सलोपश्चेतिवत्। तेन राज्ञ इत्यादौ सुबन्तावयवाऽभावेपि भवति, सुबन्तावयवसत्त्वे तु तस्य समुदायस्य चेत्युभयोरपि भवतीति विवेकः।

नन्वेवमपि परमवाचौ परमवाच इत्यादौ भत्वाऽभावात्पदकार्यं स्यादेवेति चेन्न। तत्र भत्वाऽभावेप्यसर्वनामस्थानइति पदसंज्ञानिषेधात्। स्वादिष्वसर्वनामस्थानइत्यत्रापि हि सुबन्तमित्यनुवर्तते। प्रसज्यप्रतिषेधश्चायम्। तत्सामर्थ्यादनन्तरस्यविधिर्वेति न्यायो नाश्रीयते। तदयमर्थः—सर्वनामस्थाने परतः पूर्वः समुदायः पदं न स्यात्। तदवयवभूतं सुबन्तं च पदं न स्यादिति। तत्र समुदायस्य स्वादिष्विति प्राप्ता, अवयवस्य तु सुबन्तमिति प्राप्ता पदसंज्ञाऽनेन निषिद्धेति परमवाचावित्यादि सिद्धम्। नन्वेवं सुवाक्सुराजेत्यादौ कुत्वादि न स्यात्। सावपि समुदायस्यावयवस्य च प्राप्तयोर्द्वयोरपि पदसंज्ञयोर्निषेधादिति चेन्न। असर्वनामस्थान इत्यत्रोत्तरसूत्राद्यचीत्यपकृष्य यजादौ सर्वनामस्थाने उभयविधपदसंज्ञानिषेधात्। सौ तु द्विविधापि पदसंज्ञा भवत्येव। नन्वेवं श्रूयमाणे सौ पूर्वस्य पदसंज्ञा स्यादिति चेत्। इष्टापत्तेः। नन्वेवमेचोऽप्रगृह्यस्यादूराद्धूतेपूर्वस्यार्द्धस्यादुत्तरस्येदुताविति सूत्रे भद्रङ्करोषि गौरित्यत्रातिप्रसङ्गं वारयितुं पदान्तग्रहणं कर्त्तव्यमिति वार्तिककृता वक्ष्यमाणं विरुध्येत, क्रियमाणेऽपि पदान्तग्रहणे दोषतादवस्थ्यादिति चेन्न। तत्रान्तग्रहणमात्रं कृत्वा वाक्यस्य टेरित्यतो वाक्यग्रहणमनुवर्त्य वाक्यान्तस्येति व्याख्यानसम्भवात्। तदेवं समासे चरमभागस्य पदसंज्ञा यजादौ क्वापि नास्तीति स्थितम्। क्वचिन्निषेधात्। क्वचित्तु भत्वेन बाधादिति विशेषः। नन्वेवं दूरान्मुक्तमित्यादावलुङ् न स्यात्। होतापोतारावित्यत्राऽऽनङ् न स्यात्। उत्तरपदे तद्विधानादिति चेन्न। उत्तरपदशब्दस्य समासोत्तरावयवे रूढतया पदसंज्ञाविरहेपि तत्प्रवृत्तेः। सर्वान्तएव चेयं रूढिः। तेन 'होतृपोतृनेष्टोद्गातार' इत्यत्र मध्यमानामुत्तरपदत्वाऽभावात्ततः पूर्वस्यानङ् नेति दिक्। नन्वेवं दधिसेचौ दधिसेच इत्यत्र सात्पदाद्योरिति षत्वनिषेधो न स्यादिति चेन्न। पदादादिः पदादिस्तस्य षत्वं नेति व्याख्यानात्। न चैवं रामेषु हरिष्वित्यत्रापि निषेधः स्यादिति वाच्यम्। स्वादाविति या पदसंज्ञा तामुपजीव्य पदादेर्नेति निषेधाऽप्रवृत्तेः। एतच्च सात्प्रतिषेधेन ज्ञाप्यते। उक्तं च—पदादादेर्नेत्येव व्याख्यानं न तु पदस्यादेरिति। तथा सति गतिकारकोपपदानामिति सुबुत्पत्तेः प्रागेव समासे दधिसेगित्यादौ षत्वस्य दुर्वारतापत्तेः। नन्वेवमपि बहुसेचौ बहुसेच इत्यत्र षत्वं स्यादेव। बहुचोऽपदत्त्वेन षत्वप्रतिषेधाऽप्राप्तेरिति चेत्। सत्यम्। वचनमेवेह कर्त्तव्यं—बहुच्पूर्वस्य नेति। अत्रायं सूत्रन्यासः 'सातेः सः'। षत्वं न स्यात्। ततो 'बहुच्पदाभ्याम्'। आभ्यामुत्तरस्य सस्य षत्वं न स्यात्। आदिग्रहणं न कर्त्तव्यम्। तस्मादित्युत्तरस्येत्येव सिद्धेः। तदिदं बहुज्ग्रहणमादिग्रहणेन निमातव्यमिति। वार्त्तिके तूत्तरपदत्वे चापदादिविधाविति वचनेनैव परमवाचेत्यादि साधितम्। उत्तरस्य समासोत्तरभागस्य पदत्वे कर्त्तव्ये लुमता लुप्ते प्रत्ययलक्षणं न स्यात्। अतो न कुत्वादि। पदादिविधौ तु प्रत्ययलक्षणं

स्यादेव । तेन षत्वनिषेधाद्धिसेचेत्यादिसिद्धिः । अस्मिंश्च पक्षे प्राक् सुबुत्पत्तेः समासोऽत्र नाभ्युपगन्तव्यः, धनक्रीतेत्यादिसिद्धये तस्याऽनित्यताया वक्ष्यमाणत्वात् । कैयटस्त्वाह दक्षः सेचाविति विग्रहे षष्ठीति समासो नत्वयमुपपदसमासः। सोपपदात्तु विज्नास्ति । अनभिधानात् । अतो दधिषेचा वित्यादि न भवत्येव । अस्मिन्नपि पक्षे बहुच्पूर्वस्य चेति वचनं कर्त्तव्यमेव । कृते हि बहुचि विशिष्टस्यार्थवत्त्वेन प्रातिपदिकत्वे सुपो लुकि च कृते पुनर्विशिष्टात्सुबन्तरमुत्पद्यत इत्यर्थवत्सूत्रे वक्ष्यते । तत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य प्राप्तं पदत्वं तत्कुत्वादौ कर्त्तव्ये मा भूत्, षत्वनिषेधएव यथा स्यादिति । अत्राऽयं निष्कर्षः–पूर्वसूत्रे एव स्थित्वोत्तरपदत्वे च पदादिविधौ बहुच्पूर्वस्यचेति पाठ्यम् । पदादिविधावेव प्रत्ययलक्षणं भवति न तु पदान्तविधाविति नियमार्थं चेदं वचनद्वयमिति व्याख्येयम् । एवंच नञ् न कर्त्तव्य इति लाघवम्, अस्मिन्पक्षे सौ पदत्वं नास्ति । प्रागुक्तकुसृष्टेरभावात् । तदेतत्पक्षद्वयमभिप्रेत्य हल्ङ्यादिसूत्रे भाष्यकारैरुक्तम्–'अथ सावपि पदं भवतीति एवमप्युभयतस्पाशा रज्जु'रिति । नन्वङ्गाधिकारग्रहणपक्षे वस्तुतोऽङ्गस्येति पक्षे चाभूवन्नित्यत्र जुस् प्राप्नोतीति चेत् । सत्यम् । आत इति नियमान्न भवति । ननु देवदत्तं याजयाञ्चकारेत्यत्र लुकं बाधित्वा परत्वात्तिबादिषु कृतेष्वाम इति तेषां लुकि प्रत्यय लक्षणेन तिङन्तत्वादामन्तस्य निघातः स्यात्ततः परस्य च न स्यादिति चेन्न । लावस्थायामेव येन नाप्राप्तिन्यायेन तिबादीन्बाधित्वा लुक्प्रवृत्तेः । तदुक्तम्—आमिसिलोपात्तस्य चाऽनिघातस्तस्माच्च निघात इति । ननु देवदत्तो युष्मत्पुत्र इत्यादौ षष्ठ्यन्तस्य विधीयमाना युष्मदस्मदोरादेशाः प्राप्नुवन्तीति चेत् । सत्यम् । स्थग्रहणान्न भवन्ति । न च विभक्तौ परतः पूर्वभागमात्रस्य मा भूत्किन्तु विभक्तिविशिष्टस्येत्येतदर्थं स्थग्रहणं स्यादिति वाच्यम् । षष्ठीचतुर्थीद्वितीयानामिति निर्देशेनाऽपि गतार्थत्वात्सर्वस्य पदस्येत्यनुवृत्तेश्च । तस्माद्विभक्तिलोपे कृते मा भूदित्येतदर्थमेव स्थग्रहणम् । अवस्थानं हि श्रूयमाणास्वेव सम्भवति । यद्वा–तिष्ठतिरहानौ वर्तते । यथा 'समये तिष्ठ सुग्रीवे'ति । समयं मा हासीरित्यर्थः । तथा चाऽपरित्यक्तविभक्तिकयोरित्युक्त्या श्रूयमाणविभक्तिकत्वं स्पष्टमेव लभ्यते । इदन्त्ववशिष्यते–वस्तुतोऽङ्गस्येति सिद्धान्ते चिणो लुगिति तलोपे कृते हनिणिङादेशा न स्युः । अवधि भवता दस्युः । अगायि भवता ग्रामः । अध्यगायि भवताऽनुवाक इति । लुङि परतो ह्येते विधीयन्ते इति चेत् । मैवम् । लुङि यदार्द्धधातुकं तत्र हनिणिङादेशविधानात् । तस्माद्वस्तुतोऽङ्गस्येति पक्षो निर्दुष्ट इति स्थितम् । [ नलुमताऽङ्गस्य ] ॥

**अचोऽन्त्यादि टि** । अच इति निर्द्धारणे षष्ठी । जातौ एकवचनम् । अचां मध्ये योऽन्त्यस्तदादि शब्दरूपं टिसंज्ञं स्यात् । टिप्रदेशाष्टित आत्मनेपदानां टेरित्यादयः । पचते । पचेते इत्यादि । अन्ते भवोऽन्त्यः । दिगादित्वाद्यत् । अन्त्य आदिर्यस्येति बहुव्रीहिः । नित्यसापेक्षत्वात्समासः ।

**अलोन्त्यात्पूर्व उपधा** । अन्त्यादलःपूर्वो वर्ण उपधासंज्ञः स्यात् । उपधागुणः । चेतति । च्योतति । वर्द्धत इत्यादि । ननु पूर्वस्याऽविशेषितत्वाच्छासिधातौ शा इति समुदायस्य संज्ञा स्यादिति चेत् । अस्तु । न चैवं शासइदङ्हलोरितीत्वं शा इति समुदायस्य स्यादिति वाच्यम् । अलोन्त्यपरिभाषयेष्टसिद्धेः । स्यादेतत् । नानर्थकेऽलोन्त्यविधिरनभ्यासविकारेष्विति निषेधः प्राप्नोति । इह च बिभर्तीत्यत्र भृञामित्, अन्त्यस्य यथा स्यादित्येतदर्थमनभ्यासविकारेष्वित्युक्तम् । विकारो नाम वर्णात्मक आदेशः । अत एव देहीत्यत्र लोपः सर्वादेश एव भवतीति । अत्रोच्यते । न तावदेषा परिभाषा सूत्रकृतः सम्मता । तस्य लोप इति सूत्रे ञिटुडूनां सर्वलोपार्थं 'तस्य'ग्रहणात् । नापि भाष्यकारस्य सम्मता । एतत्प्रयोजनानामन्यथोपपत्तेर्भाष्ये उक्तत्वात् । तथाहि–अव्यक्तानुकरणस्येति तावदन्तादेशो न भवति । नाम्रेडितस्यान्त्यस्य तु वेति ज्ञापकात् । इतरथा ह्याम्रेडितस्य वेत्येव ब्रूयात् । ध्वसोरेद्धावित्यत्रापि लोपो यीति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशः । तथा चेत्थं सूत्रन्यासः–'घोरभ्यासस्य लोपः' । लोपशब्दान्तरस्यानुवृत्त्या सर्वलोपः स्यात् । 'अस्तेश्चेत्' । अस्तेर्घोश्चेद्भवति हाविति । अथवा लोपश् इतिच्छेदः । संज्ञायां कृतोऽनुबन्धः संज्ञिनि फलति, यथा ङमुटि । भाष्ये तु द्विशकारको निर्देश इत्युक्तम् । तत्र लोपे इति भिन्नं पदम् । श् इत्यस्य चोपदेशएवेत्संज्ञा । तत्फलं तु प्रयोगे । सर्वत्राऽनुबन्धानां काकादिवदनवयवीभूयैव व्यावर्त्तकत्वादिति भावः । अस्मिन्नपि पक्षे झलि परे यः संयोगस्तदादित्वात्सोर्लोपे एकशकारक एव पाठः सुवचः । स्पष्टार्थमनउपधालोपिन इत्यादावकारस्येवेहापि शकारस्य लोपो मास्त्विति तु भाष्याशयः । आभ्यामित्यादौ हलि लोप इति सूत्रेणाऽककारस्येदम इदो विधीयमानो लोपोऽपि तर्ह्यन्त्यस्य स्यादिति चेन्न । 'अनाप्यक' इति सूत्रादनित्यनुवर्त्त्य तस्य हलीति सप्तम्या षष्ठीं प्रकल्प्य अन एव लोपविधानात् । तथा च तत्राऽलोन्त्यपरिभाषया नकारलोपे अतोगुणइति पररूपे च कृते आभ्यामेषामित्यादि सिद्धम् । 'अत्रलोपोभ्यासस्ये'ति सूत्रेपि अत्राभ्यासत्वाश्रये न तु तदेकदेशइति व्याख्यानादत्रग्रहणसामर्थ्यात्सर्वलोपः । यद्यपि सनीत्यपेक्षितं ददौ दधावित्यादिवारणाय, सादाविति च, जिज्ञपयिषतीत्येतद्वारणाय, प्रकृतयोपि पिपक्षतीत्यादिवारणाय, विषयोऽप्यपेक्षितः मुचोकर्मकस्य गुणोवेति मुमुक्षति गामित्यादिवारणाय, तथापीदं सर्वमनुवृत्त्यैव सुलभमिति सर्वलोपार्थमेवाऽत्रग्रहणं बोध्यम् ।

नन्वेवमपि विभाषाभवद्भगवदघवतामोच्चावस्येति वार्त्तिकेन विधीयमान ओकारोऽन्त्यस्य स्यादिति चेन्न । वस्येति सिद्धे अवस्येति गुरुकरणसामर्थ्यात्सर्वादेशसिद्धेः । तस्मान्नानर्थक

इति परिभाषा निष्फला, सूत्रभाष्याऽसम्मता चेति स्थितम् । एवञ्च शासेः शाशब्दस्योपधात्वेपि शिष्ट इत्यादि सिध्यति । संयोगोपधग्रहणं कृञर्थमित्यादिव्यवहाराश्चास्मिन्पक्षे सङ्गच्छन्त इति दिक् । यद्वा—अवध्यवधिमद्भावः सजातीयानामेवेत्युत्सर्गः । लोके ह्यमीषां ब्राह्मणानामन्त्यात्पूर्वमानयेत्युक्ते एक एवाऽन्त्यादव्यवहितपूर्व आनीयते न तु समुदायः । एवं चेहाप्यलोऽव्यवहितपूर्वोऽलेव संज्ञी न तु समुदायः, न वा व्यवहितोऽल् । संयोगोपधव्यवहारस्तु भाक्तः । अवयवधर्मस्य समुदाये उपचारात् । एवं स्थिते–'ऽल' इति जसन्तमपि सुवचम् । जात्याख्यातामिति बहुवचनम् । पूर्वे इत्यपि जसन्तम् । अन्त्योऽप्यलेव साजात्याल्लभ्यते । यद्वा—अल इति निर्धारणे षष्ठी । जातौ चैकवचनम् । अलां मध्येऽन्त्यात्पूर्व इत्यर्थः । तथा चेहाऽल इति जस्ङसिङस् वेति पक्षत्रयमपि स्थितम् ।

**तस्मिन्निति निर्दिष्टे पूर्वस्य ।** सप्तमीनिर्देशेषु पूर्वस्यैव कार्यं स्यात्तच्च निर्दिष्टेऽव्यवहितोच्चारिते सतीत्यर्थः । निःशब्दो नैरन्तर्ये, दिशिरुच्चारणक्रियः । निरन्तरं दिष्टो निर्दिष्टः । नियमार्थमिदं सूत्रम् । तथाहि—इकोयणचीत्यत्राचीति यस्यचभावेनभावलक्षणमिति सप्तमी । अश्रूयमाणक्रियत्वाच्चाऽन्तरङ्गस्यास्त्यर्थस्य लाभः । तेनाऽचि सति यण् भवतीत्यर्थः । यद्वा'गङ्गायां घोष' इतिवदौपश्लेषिकेऽधिकरणे सप्तमी । तत्र सत्त्वं परस्येव पूर्वस्यापि सम्भवति । एवमुपश्लेषेपि । तत्र युगपदेकस्य कार्यित्वनिमित्तत्वयोरसंम्भवाद्ध्युदकं मध्विदमित्यादाविकारोकारयोः पर्यायेण यण् प्राप्तः पूर्वस्यैवेति नियम्यते । तथा अग्निचिदत्रेति व्यवहितस्यापि यण् प्राप्तः, अनन्तरस्यैवेति नियम्यते । ननु गवित्ययमाहेत्यादौ स्वरूपपदार्थकतामितिशब्दः करोति तथेहापि । एवं च तस्मिन्नणीत्यत्रैवेयं परिभाषा प्रवर्त्तेत । अस्ति हि तत्र व्यवच्छेद्यम् । हे यौष्माकीण ! अस्मभ्यं देहि । हे आस्माकीन युष्मभ्यं ददामीत्यादौ खञणभ्यां परस्याप्यादेशप्रसङ्गसत्त्वात् । सत्यम् । इतिकरणः पदार्थविपर्यासकृत् । लोकेऽर्थपरताया औत्सर्गिकत्वात्तत्र शब्दपरतां करोति । शास्त्रे तु विपरीतम् । किञ्च यदि तस्मिन्नणीत्यत्रैवेयं प्रवर्त्तेत तर्हि तत्रैव पूर्वग्रहणं कुर्यात् । तस्मान्नेदं तस्मिन्नित्यनुकरणम् । किन्त्वचि हलीत्यादिसकलविशेषसंग्रहार्थं स्वतन्त्रस्य सर्वनाम्नोऽयं निर्देशः । तस्याऽपत्यं तत्र भव इत्यादिवत् ।

**तस्मादित्युत्तरस्य ।** पञ्चमीनिर्देशेषूत्तरस्यैव कार्यं स्यात्तच्चाऽव्यवहितोच्चारिते । तिङ्ङतिङः । अग्निमीले । इह न भवति—ईलेऽग्निम् । इह कारकविभक्तेरसम्भवाद्दिग्योगलक्षणा पञ्चमी । तत्र दिक्शब्दोऽध्याह्रियमाण उत्तरशब्दवत्पूर्वशब्दोप्यविशेषादध्याह्रियेत । व्यवहितोपि च गृह्येत । तथा चोत्संस्थाता इत्यत्राप्युदः स्थास्तम्भोरित्यस्य प्रसङ्गः । तदेवं पूर्वसूत्रमेतत्सूत्रं चेति द्वयमपि नियमार्थमिति स्थितम् । तथा च वार्त्तिकं—तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगाविशेषान्नियमार्थं वचनं दध्युदकं पचत्योदनमिति । इहापि तस्मादिति स्वतन्त्रस्य सर्वनाम्नो निर्देशः प्राग्वत् । न त्वनुकरणम् । तथाहि सति—यद्यपि तस्मान्नुड्ढिहल इत्यत्राऽत आदेरिति दीर्घात्पूर्वस्याङ्गस्यासम्भवात्प्रयोजनाऽभावान्नैतत्परिभाषोपस्थितिस्तथापि तस्माच्छसोनः पुंसि तस्मान्नुडचीति योगद्वये स्यात् । उच्चरत आनुपलभते गौरश्च इत्यादेर्व्यावर्त्त्यस्य तत्र सम्भवादिति दिक् । स्यादेतत् । एतत्सूत्रं नियमार्थमस्तु । पूर्वसूत्रमप्यौपश्लेषिकसप्तमीपक्षे नियामकमस्तु । सत्सप्तमीपक्षे तु नियामकत्वमयुक्तम् । षाष्ठभाष्यकैयटविरोधात् । तथाहि—श्नान्नलोप इत्यत्र भाष्यम् । नैषा परसप्तमी । का तर्हि ? । सत्सप्तमी क्ङिति सतीति । तथा तत्रैव कैयटः–'कथं पुनः सम्भवत्यां परसप्तम्यां सत्सप्तम्याश्रयितुं युक्ता । यथेष्टं वाक्याध्याहाराददोषः । क्ङिति सतीत्येव हि विज्ञायमाने पौर्वापर्यानाश्रयणान्नास्ति तस्मिन्नित्यस्याः परिभाषाया उपस्थानम् । यदा त्वौपश्लेषिकेऽधिकरणे सप्तमी तदा किं पूर्वस्य कार्यमथ परस्येत्यनियमे नियमाय परिभाषोपस्थान'मिति । अत्रोच्यते—षाष्ठग्रन्थस्य प्रकृतमात्रपरत्वादविरोधः । तथाहि—श्नान्नलोप इति सूत्रे शकारवतो ग्रहणं मास्तु नादित्येवास्त्विति प्रश्ने नन्दनादावतिप्रसङ्ग इत्युत्तरितम् । अनिदितामित्यस्यानुकर्षणे तु हिनस्तीत्यत्र न स्यात् । ततः क्ङितीत्यनुवर्त्य श्नममेव क्ङितमाश्रित्य हिनस्तीत्यत्र लोपोऽस्त्विति शङ्क्यते । यदि चारयामवस्थायान्तस्मिन्निति परिभाषोपतिष्ठेत तदा नन्दमानादौ चानश्चो ङित्त्वाल्लोपः प्रवर्त्तेत । श्नमः शित्करणं चानर्थकं स्यात् । तद्धि शित्त्वात्सार्वधातुकतया ङितमिममेवाश्रित्य हिनस्तीत्यत्र नलोपे क्रियमाणे सार्थकं न त्वन्यथा । नन्वार्द्धधातुकसंज्ञानिवृत्त्या शित्त्वं सार्थकम् । तस्यां हि सत्यामनक्ति भनक्तीत्यत्राऽतो लोपः स्यात् । रुणद्धि भिनत्तीत्यत्र गुणः स्यात् । तृणेढीतीडागमः स्यात् । नेड्वशीति तु न प्रवर्त्तते, अकृत्त्वादिति चेन्न । श्नमः पूर्वभागस्यानङ्गतयोक्तविधीनामप्राप्तेः । कथमनङ्गतेति चेत् । इत्थम्—प्रत्ययविधौ यत्पञ्चमीनिर्दिष्टं धातोः प्रातिपदिकादित्यादि, तदादि तस्मिन्प्रत्यये परतोऽङ्गमिति हि सूत्रार्थः । इह तु यत्पञ्चमीनिर्दिष्टं रुधादिभ्य इति, नाऽस्मात्प्रत्ययः परः । यस्माच्च परः पूर्वभागान्नासौ तस्मिन्विधीयमाने पञ्चमीनिर्दिष्टः । अत एव भनक्तीत्यादावतोदीर्घो यञीति न प्रवर्त्तते । न च श्नसोरल्लोप इत्यत्र विशेषणार्थं शित्करणं स्यादिति वाच्यम् । नसोरल्लोप इत्युक्तेपि दोषाभावात् । नन्वेवं नान्ताऽस्त्योर्ग्रहणं स्यात् । तथा च कनेर्यङ्लुकि चङ्कान्त इत्यत्रापि स्यादिति चेन्न । सिद्धान्तेपि श्नप्रत्ययसान्तयोर्ग्रहणापत्तौ वस्त इत्यादावतिप्रसङ्गसाम्यात् । साहचर्यात्प्रत्ययधात्वोर्ग्रहणमिति तु तुल्यम् । ननु नसोरल्लोप इत्युच्यमाने यत्र नप्रत्ययस्य क्ङित्यानन्तर्यं तत्रैव भविष्यति यत्न इवाचरतः यत्नतः पामनत इति । मैवम् । अनुवर्तमानेन सार्वधातुकग्रहणेन प्रत्ययौ विशेष्यते । तथा च विध्यसंस्पर्शी-

न्निर्दिष्टपरिभाषानुपस्थितौ निमित्तसप्तमी । सार्वधातुकनिमित्तस्य नप्रत्ययस्याऽस्तेश्चाऽल्लोपः क्ङित्यनन्तर इति। ननु चातउत्सार्वधातुकइति सूत्रे सार्वधातुकग्रहणं प्रत्याख्यातमिति चेन्न । सति श्नित्त्वे प्रत्याख्यानात् । तदेवं श्नमः श्नित्त्वकरणसामर्थ्यात् क्ङितीति सत्सप्तम्यामपि परिभाषा नोपतिष्ठत इति स्थितम् । पूर्वपक्षत्वादन्यथा तथोक्तमिति वा वर्णनीयम् । इह सूत्रद्वये षष्ठीप्रकॢप्तिपक्षोऽपि भाष्ये स्थितः । तथाहि–षष्ठीस्थानेयोगेति सूत्रात्षष्ठीत्यनुवर्त्तते । सप्तम्यर्थनिर्देशे पूर्वस्याऽव्यवहितस्य षष्ठी स्यात् । पञ्चम्यर्थनिर्देशे उत्तरस्याऽव्यवहितस्य षष्ठी स्यादिति। तत्रेकोयणचीत्यादौ सूत्रएव षष्ठीश्रवणात्तां षष्ठीमनूद्य पूर्वस्यानन्तरस्यैषा न तूत्तरस्य, न वा पूर्वस्यापि व्यवहितस्येत्येतावन्मात्रमुच्यते । आने मुगित्यादौ तु षष्ठ्या अश्रवणात्सापि प्रकल्प्यतइति विशेषः । सा चाऽनियतयोगत्वात्स्थानषष्ठी, यस्य च स्थानषष्ठी तस्यैव कार्यनियम इति सोऽप्यर्थात्सिद्ध्यति। यत्र तूभयनिर्देशस्तत्रोभयं प्रकल्पकं, कार्यित्वनिमित्तत्वयोरेकत्र युगपदसम्भावाज्ज्ञापकाच्च । तथा चैकः पूर्वपरयोरिति सूत्रे कैयटः। **सूत्रद्वयप्रामाणत्वाद्द्वे भवेतां प्रकल्पिके । षष्ठ्यौ विभक्ती तेनात्र ज्ञापनार्थत्वमाश्रित**मिति । न च पर्यायेणोभयकल्पनम् । अतुल्यबलत्वात् । तथाहि–आनेमुगित्यत्र सप्तमी निरवकाशा, सा पूर्वत्र चरितार्थाया अतोयेय इति पञ्चम्याः षष्ठीं कल्पयति। एवमीदास इति पञ्चमी आन इति सप्तम्याः । तथा च तास्यनुदात्तेत्सूत्रे अभ्यस्तसिजर्थं सार्वधातुकइति सप्तमीनिर्देशं वक्ष्यति। सा च सप्तम्युत्तरत्र चरितार्थेति तस्या एव षष्ठी कल्प्यते । तथा 'बहोर्लोप' इत्यत्र बहोरिति पञ्चमी अकृतार्थाया इष्ठेमेयःस्विति सप्तम्याः षष्ठीं कल्पयति । अत एव भू च बहोरिति पृथक्षष्ठीनिर्देशः । तथा गोतोणिदिति पञ्चमी सर्वनामस्थानइति सप्तम्याः षष्ठीं कल्पयति । गोशब्दस्य णित्त्वे प्रयोजनाऽभावाच्च । न च तिष्ठति गौरित्यादौ पूर्वस्य वृद्धिः फलमिति वाच्यम्। गोशब्दं प्रति तिष्ठतेरनङ्गत्वात् । एवं प्रायेण पञ्चम्या अकृतार्थतेति भाष्ये स्पष्टम् । आमि सर्वनाम्नः सुडित्यत्रापि पञ्चम्यनवकाशा । आमीति सप्तमी तूत्तरार्थतया सावकाशा । यदि त्विह आदित्यनुवृत्तया पञ्चम्या सामानाधिकरण्यं सम्पाद्य सर्वनाम्न इति पञ्चम्यपि कृतार्थेति ब्रूयात्तर्हि यथोद्देशपक्षाश्रयणेन परत्वात्तस्मादित्युत्तरस्येति भविष्यति । तदुक्तम्–उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देश इति । वस्तुतस्तु नेह सामानाधिकरण्यम् । वर्णाश्रमेतराणामित्यस्य सिद्धये सर्वनाम्नो विहितस्येति व्याख्यानात् । येषां तेषामित्याद्यर्थमकारात्परस्येति व्याख्यानाच्च । दीर्घाच्छे तुग्भवतीत्यत्र तु षष्ठ्याः स्थाने पञ्चमी । तेन दीर्घस्यैव तुग्भवति न तु छकारस्य । म्रुराच्छायेति निर्देशश्चेह लिङ्गम् । अन्यथा हि खरिचेति चर्त्वेन म्रुराच्चायेति चकारद्वयं निर्दिशेत् । प्रत्ययविधौ तु पञ्चम्यो न प्रकल्पिकाः । षष्ठ्या अनुवादविभक्तित्वात् । अप्रसिद्धस्य चानुवादाऽसम्भवात् । तत्राऽनियमाऽप्रसङ्गेन नियमकारिण्याः परिभाषाया अप्रवृत्तेश्चेति दिक् ।

**स्वं रूपं शब्दस्याशब्दसंज्ञा ।** शब्दस्य स्वं रूपं संज्ञि, शब्दशास्त्रे या संज्ञा तां विना । अग्नेर्ढक् । आग्नेयम् । आङो यमहनः । आयच्छते । आहते । इह अग्नि आङ् यम् हन् एषामेतत्सूत्रोपात्तानां प्रयोगसमवायिनस्त एव संज्ञिनः । अशब्दसंज्ञेति किम् ? । उपसर्गे घोः किः । दाधाभ्यो यथा स्यात् । घुधातोः शब्दार्थान्मा भूत् । शब्दः–शब्दशास्त्रं, तत्र संज्ञेति सप्तमीसमासः । न तु शब्दस्य संज्ञेति । कर्म करणमित्यादिष्वर्थसंज्ञासु स्वरूपग्रहणापत्तेः । स्यादेतत्–रूपग्रहणं विनापि स्वशब्देन तदेव ग्रहीष्यते, प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वादन्तरङ्गत्वान्नियतोपस्थितिकत्वाच्च । अर्थो हि–प्रतीतौ सम्बन्धग्रहणमपेक्षते साधारणश्च । पर्यायैरपि प्रत्यायनात् । बहिरङ्गश्च, पदज्ञानजन्यबोधविषयत्वात् । अनियतोपस्थितिकश्च अनुकरणदशायामप्रतीतेः । तत्किं रूपग्रहणेनेति चेत् । अत्राहुः–इह शास्त्रे अर्थोपि विवक्षितो रूपवदिति ज्ञापनार्थं रूपग्रहणम् । तेनार्थवद्ग्रहणे नानर्थकस्येत्युपपन्नं भवति। तत्रोक्तज्ञापकादर्थो ग्राह्यः, स्वं रूपमिति वचनाद्रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणम् । तेन काशे कुशे इत्यत्र शे इति प्रगृह्यसंज्ञा न भवति ।

एतत्सूत्रं भाष्ये प्रत्याख्यातं । तथाहि–आरभ्यमाणेपि सूत्रे पशुरपत्यं देवता प्राञ्च उदञ्चो भरता इत्यादयस्तावल्लोकवदर्था एव गृह्यन्ते । अग्नेर्ढगित्यादौ तु शब्द एव ग्रहीष्यते । अर्थस्य प्रत्ययेन पौर्वापर्याऽसम्भवात् । ङ्याप्प्रातिपदिकादित्यधिकाराच्च । उपसर्गे घोः किरित्यादौ तु घुधातुर्न ग्रहीष्यते, दाधाघ्वित्यारम्भात् । उक्तं हि–व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचिदिति । अर्थवद्ग्रहणपरिभाषापि व्रश्चादिसूत्रे राजि पठित्वा पुनर्भ्राजिपाठात्सिद्धा, न्यायसिद्धा च । अग्नेर्ढगित्यादौ हि शब्दविशिष्टस्यार्थस्योत्सर्गत उपस्थितौ विशेष्ये कार्यबाधाद्विशेषणीभूते शब्दे प्रवर्त्तमानंकार्यमुपस्थितार्थोपहितएव न त्वनर्थकेपि। अर्थस्य–विशेषणविशेष्यभावव्यत्यासमात्रेणोपपत्तौ सर्वात्मना त्यागायोगात्। गौणमुख्यन्यायोप्येतन्मूलः, गौणस्य प्रथमतोऽनुपस्थितेः । एतेनाभिव्यक्तपदार्था य इत्यपि व्याख्यातम् । तस्मान्न्यायत एव सकलनिर्वाहे सूत्रं नारम्भणीयमिति । ननूत्तरत्र चतुःसूत्र्यामनुवृत्तये स्वं रूपमित्यवश्यं वाच्यमेवेति चेन्न । अनुवृत्तेरनावश्यकत्वात् । तथाहि–अणुदित्सूत्रे तावत्स्वस्यापि स्वसावर्ण्यादेव सिद्धम् । कथमन्यथा अवात्तामित्यत्र झरो झरीति लोपः । तत्र व्यक्तिभेदात्सावर्ण्यमिति चेत्, इहापि बोध्यबोधकव्यक्त्योर्भेदात् । तथा तपरस्तत्कालस्येत्यत्रापि । आदिरन्त्येनेत्यत्राप्यादिग्रहणावृत्त्या सिद्धम् । आवृत्तौ लिङ्गं तु नादिचीत्यादि । येनविधिरित्यत्र तु वार्त्तिककारस्तस्य चेति वक्ष्यत्येव । वस्तुतस्तु तदपि न वाच्यम् । व्यपदेशिवद्भावेनैव सिद्धेः । अप्रातिपदिकेनेति तु तत्रैव प्रत्याख्यास्यामः । अत एव 'येनविधिस्तदाद्यन्तत्वे प्रयोजन'·

मित्याद्यन्तवत्सूत्रस्थं वार्त्तिकं सङ्गच्छतइतिं दिक् । **सित्तद्विशेषाणां वृक्षाद्यर्थम्** । अत्र सिदित्युपलक्षणं, किंचिल्लिङ्गमासज्य इत्थंलिङ्गा विशेषाणां संज्ञेति वक्तव्यं, तच्च लिङ्गं वृक्षादावासजनीयमित्यर्थः । एवमग्रेपि । तेन विभाषावृक्षमृगेति सूत्रे विशेषाणामेव ग्रहणात्प्लक्षन्यग्रोधं प्लक्षन्यग्रोधा इति सिद्ध्यति । **पित्पर्यायवचनस्य च स्वाद्यर्थम्** । चकाराद्विशेषाणां स्वरूपस्य च ग्रहणम् । 'स्वे पुषः' । रैपोषंपुष्टः । अश्वपोषम् । स्वपोषम् । **जित्पर्यायवचनस्यैव राजाद्यर्थम्** । 'सभा राजाऽमनुष्यपूर्वा' । इनसभम् । ईश्वरसभम् । नेह राजसभा । हरिश्चन्द्रसभा । पर्यायेण यो वक्ति स हि पर्यायवचनः । न च स्वस्य स्वेन सह विकल्पः, नापि विशेषेण, सामान्यविशेषयोर्भिन्नप्रकारकबोधजनकतया तुल्यार्थत्वाऽभावात् । 'तुल्यार्थास्तु विकल्पेर'न्निति न्यायात् । 'इनशब्दोराजशब्दपर्याय'इत्यादिव्यवहारास्तु भीमो भीमसेन इतिवत् । **झित्तस्य तद्विशेषाणां च मत्स्याद्यर्थम्** । 'पक्षिमत्स्यमृगान्हन्ति' । मात्सिकः । शाफरिकः । पर्यायवचनानां न । अनिमिषान् हन्ति । 'मीनस्येष्यते' इति भाष्यम् । मैनिकः । मृगपक्षिणोस्तु झिन्निर्देशःकर्त्तव्यः । तेन स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणमिति व्याख्यातारः । इह वृक्षादौ राजादौ च न्यायेनैवाभिमतं सिध्यतीति तत्रैव वक्ष्यते । इतरत्तु सर्वं वाचनिकमेवेत्यवधेयम् ।

**अणुदित्सवर्णस्य चाप्रत्ययः** । अत्राण् परेण णकारेणेत्युक्तम् । अणुदिच्च सवर्णस्य संज्ञा स्यात् विधीयमानं विना । चकारात् स्वरूपस्य । 'अस्य च्वौ' । शुक्ली स्यात्, माली स्यात् । 'एरनेकाचोऽसंयोगपूर्वस्य' चिच्यतुः, निन्यतुः । 'ॠदोरप्' । यवः, स्तवः, लवः, पवः । 'उरण् रपरः' । कर्त्ता, किरति । न चैवम् ॠदोरप् ह्रस्वान्तेभ्यः कृञादिभ्योऽपि स्यादिति वाच्यम्, दीर्घोच्चारणवैयर्थ्यापत्तेः । नन्वेवमपि 'अष्टन आ विभक्तौ' इत्यत्र सवर्णग्रहो दुर्वारः । न हि तत्रापि सामर्थ्यम्, ह्रस्वोच्चारणे ह्यर्धमात्रिकस्य मात्रिक एव यथा स्यादिति दीर्घग्रहणस्योभयार्थतोपपत्तेरिति चेत्, न, 'अप्रत्ययः' इति निषेधात्, दीर्घाणामनण्त्वेन सवर्णग्राहकता नास्तीति प्रागेवोक्तत्वाच्च । ननु दीर्घाश्चेदनणस्तर्हि 'कारकः' 'हारकः' इत्यादौ रपरत्वं न लभ्येतेति चेत्, भ्रान्तोऽसि । न हि दीर्घाः क्वाप्यण्ग्रहणेन नोपस्थाप्यन्ते इति ब्रूमः, किन्तु ग्राहकशास्त्रे तदुपजीव्येषु वर्णोपदेशादिषु च । इतरत्र तु वाक्याऽपरिसमाप्तिन्यायानवतारादस्त्येवाऽण्ग्रहणेन दीर्घग्रहणमिति तत्त्वम् । उदित् 'कुहोश्चुः' । चकार, जगाद । अप्रत्यय इति निषेधस्तु उगित्सु न प्रवर्त्तते, उगित्करणसामर्थ्यात् । अत एवाहुः 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' इति । तुक्–लुक्–नुक्–तुडादयस्तु नोदितः, 'प्रतिज्ञानुनासिक्याः पाणिनीया' इत्यभ्युपगमात् । अप्रत्यय इति किम् ?, विधीयमानानां प्रत्ययागमादेशानां सवर्णग्राहकत्वं मा भूत् । 'अत इञ्' 'इदम इश्' 'आर्द्धधातुकस्येड्' 'भुवो वुक्' 'अम् सम्बुद्धौ' ।

इह हि सर्वत्रोपदेश इति वचनात्सूत्रान्तर्गतेष्वेव इञादिशब्देष्वित्संज्ञा प्रवर्त्तते । लोपस्तु तत्रानुपूर्व्याद्बाधितोऽपि पदस्वरूपपर्यालोचनायां प्रवृत्तः । ततः 'स्वं रूपम्' इति संज्ञाबलात् जायमाना पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैव भवति । तथा चोपस्थापकस्याऽणत्वात्सवर्णग्रहणं प्राप्तं निषिध्यते इत्युचितम् । अत एव चतुर्दशसूत्र्यामुच्चारणार्थस्याकारस्यवेत्संज्ञकानामपि णकारादीनां लण्मध्याऽकारस्य च पदपर्यालोचनायामेव 'लोपश्च बलवत्तरः' इति न्यायेनापहारादितरान्तर्भावेणैव संज्ञा प्रवर्त्तते इति सिद्धान्तः । इदं च 'अलोऽन्त्यात्पूर्व उपधा' इति सूत्रे 'तस्मिन्निति निर्दिष्टे' इत्यत्र च कैयटग्रन्थे स्पष्टम् । इट् अक इकोचीत्यादौ सानुबन्धाद्विभक्तिस्तु प्राथमिकबोधे विशिष्टस्य विषयतया तस्यैवार्थवत्त्वमादाय । अन्यो हि पश्चादुपतिष्ठते न तु प्रयुज्यते इति कथं ततो विभक्तिः क्रियताम् ? । इत्संज्ञाकार्यं तु आनर्थक्यात्तदङ्गेष्विति न्यायेन प्रत्याय्ये प्रवर्त्तते । विभक्त्यर्थान्वयोऽप्येवम् । दृष्टं हि ङमुडादावुपस्थापके कृतस्य लिङ्गस्य तद्बोध्ये फलप्रवर्त्तकत्वमिति दिक् । स्यादेतत् । उक्तरीत्या 'उदोष्ठ्यपूर्वस्य' इति सूत्रे उच्छब्दे प्रवृत्ता इत्संज्ञा लक्ष्ये तित्स्वरं प्रवर्त्तयेदिति चेत्, सत्यम्, अत एवैतत्समाधानाय पूर्वाचार्यैः पराक्रान्तमिति गृहाण । कथं तर्हि 'एओङ्' सूत्रे तद्दूषणाय प्रवृत्तमिति चेत् ?, तत्कालावधारणेन कृतार्थस्य तकारस्याऽनुबन्धान्तरवैषम्यादिति गृहाण । अत एव 'वैयाकरणः' इत्यत्र ऐचश्चित्स्वरो न भवति । 'पचस्व' इति शपोऽप्येवम् । 'न य्वाभ्याम्' इति सूत्रे 'अचः परस्य द्वे' इत्यत्र च ऐचोश्चकारस्य प्रत्याहारे उपक्षयात् । यद्वा–इञिशादिष्वपि माऽस्तु सूत्रान्तर्गतेष्वित्संज्ञा, किन्तु फलप्रत्यासत्तेः पदार्थेष्वेव साऽस्तु । नैते उपदिष्टा इति चेत्, न ते फलभाज इति तुल्यम् । सामर्थ्यात्परंपरासम्बन्धे फलमिति चेत्, संज्ञापि तत्रैवास्तु सामर्थ्यादिति तुल्यम् । उपदेशेऽन्त्यत्वं हि प्रायोगिकेष्वसम्भवात्तत्प्रत्यायकनिष्ठमानुपूर्वीसाजात्यादाश्रीयते । न चैतत्तपरेष्वस्ति, प्रत्याय्ये तकाराऽभावादिति दिक् । प्रकृतमनुसरामः । भाव्यमानोऽप्युकारादेशः सवर्णान् गृह्णाति, 'ऋत उत' इति तपकरणाल्लिङ्गात् । तेन 'अमुना' 'अमूभ्याम्' इत्यत्र ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घः सिद्ध्यति । न चैवं 'सनाशंस' इत्युप्रत्ययोऽपि सवर्णं गृह्णात्विति वाच्यम्, आदेशविषयकं ज्ञापकमित्युक्तत्वात् । यद्वा 'अदसोऽसेः' इति सूत्रे एव उश्च ऊश्चेति समाहारद्वन्द्वोऽस्तु, अत एव सोलुंका निर्देशः कृतः । अतएव च 'ऊदुपधायाः' इति सूत्रे गोह इति विकृतनिर्देशं प्रत्याख्यातुं भाष्यकारैरूकारान्तरप्रश्लेष उक्तः । नन्वेमपि 'अकः सवर्णे' इत्यत्र अकारोऽष्टादशानां ग्राहकोऽस्तु, अण्त्वात् । अस्तु च स एव इकारादीनामपि ग्राहकः, 'आदिरन्त्येन' इत्युक्तेः, ईकारादयस्तु कथं ग्राह्याः ?' न हि तद्वाचकः शब्दस्तस्मिन्सूत्रे उपात्तोऽस्ति । नन्वक्शब्देन इकारादयोऽप्युपस्थिता इति

वेत्तर्हि वाक्यार्थे ते नयन्तु नाम, पदार्थसंसर्गस्य वाक्यार्थत्वात्। न तु येऽपि स्वार्थोपस्थापकाः, अनुच्चारितत्वादित्युक्तम्। अत एव 'ऋचं वेत्ति' इत्यादौ शब्दविशेषं वेत्तीत्येवार्थो न तु तदर्थं वेत्तीति। तदुक्तं वार्त्तिककृता—'तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात्। ह्रस्वसम्प्रत्ययादिति चेदुच्चार्यमाणसम्प्रत्यायकत्वाच्छब्दस्याऽवचनम्' इति। शब्दस्य प्रतीयमानस्य अवचनम्—अर्थाऽप्रतिपादकत्वमित्यर्थः। अत्रोच्यते। प्रत्याहारग्रहणे सर्वत्र स्ववाच्यवाच्ये निरूढा लक्षणा, 'दीर्घाज्जसि च' इति ज्ञापकात्। 'प्रथमयोः पूर्वसवर्णः' इत्यत्र हि अक इत्यनुवर्त्तते। न चाऽकशब्दवाच्यो दीर्घोऽस्ति, योऽस्य निषेधस्य विषयः स्यात्। नन्वाकारोऽस्तीति चेत्? न, 'नादिचि' इत्यनेनैव तत्र निषेधसिद्धेः। 'प्वादीनाम्' इत्यादिनिर्देशा अपीह लिङ्गम्। नन्वेवम् 'इको यणचि' इति सूत्रे ईदातोर्ग्रहणं न स्यात्, युगपद्वृत्तिद्वयविरोधात्। तथा च 'सुध्युपास्यः' 'दध्यानय'इत्यादि न सिद्ध्येदिति चेत्, न, सति तात्पर्ये युगपद्वृत्तिद्वयस्य स्वीकारे बाधकाऽभावात्। इह च 'आण्नद्याः' इत्यादिनिर्देशानां तात्पर्यग्राहकत्वात्। यदि तु प्राचां मते श्रद्धावशाद्युगपद्वृत्तिद्वयं नाभ्युपैषि, तर्हीह ईदातोरपि इगच्छब्दयोर्लक्षणैवास्तु स्ववाच्यह्रस्ववाच्यत्वाऽविशेषात्। स्ववाच्यतापि परमस्तीत्यन्यदेतत्। नन्वेवमपि 'शरीर'मित्यादौ शकारस्य स्थानसाम्याचकारादेशः प्राप्नोति, इकारवाच्यो हि दीर्घः, तत्सवर्णश्च शकार इति तस्यापीग्ग्रहणेन ग्रहणात्। तथा 'शीतलमि'त्यादावपि यण्प्रसङ्गः, दीर्घः परं न भवति, अक्शब्दवाच्यवाच्यतायाः दीर्घे विश्रान्त्याः तत्सम्बन्धग्रहे मानाऽभावादिति। अत्रोच्यते। भवेदयं शकारस्य यकारादेशरूपो दोषः। यदि स्ववाच्यसवर्णं लक्षणां वदामः। वयन्तु स्ववाच्यवाच्ये सत्येव ब्रूमः। न च ईकारः शकारस्य वाचकः, दीर्घाणामनण्त्वेन सवर्णाऽग्राहकताया असकृदावेदितत्वात्। भाष्यमते त्वज्झलोः सावर्ण्यमेव नास्तीत्युक्तम्। तदयमिह निर्गलितोऽर्थः—अकारोऽष्टादशानां संज्ञा। एवमिदुतौ। ऋ लृ इत्येतौ तु पर्यायशब्दौ त्रिंशतः संज्ञे, ऋलृवर्णयोः सावर्ण्यस्योपसंख्यातत्वात्। 'ऋलृक्' सूत्रे 'ऋत्यकः' इति प्रकृतिभावदर्शनेनैव ज्ञापितत्वाद्वा। न च तुल्यव्यक्तिकसंज्ञाद्वयप्रणयनवैयर्थ्यं, तदर्थमिह सूत्रान्तराऽप्रणयनात्। एचस्तु द्वादशानां संज्ञाः। यवला द्वयोः। रहौ तु स्वस्यैवेति। यद्यपि इकार आकारस्य सञ्ज्ञेति प्राप्तं तथापि तत्परिहाराय 'नाज्झलौ' इत्यत्रैव यत्नः कृतो न विस्मर्त्तव्यः। वार्त्तिककारास्त्विहाऽण्ग्रहणं प्रत्याचख्युः। तन्मते 'अस्य च्वौ' इत्यादौ जातिनिर्देशात्सिद्धम्। अनुवाद्यविशेषणस्य च ह्रस्वत्वस्य ग्रहैकत्ववदविवक्षा। विधिप्रदेशे तु पक्षेकत्ववद्विवक्षेति सर्वेष्टसिद्धिः। यद्यप्यस्मिन्पक्षे ऋकारेण लृकारग्रहणं दुःसाध्यं, तथापि ऋलृक्सूत्रोक्तरीत्या समाधेयमितिदिक्।

**तपरस्तत्कालस्य।** तः परो यस्मात्स तपरः। तात्परोऽपि तपरः। द्विविधोऽप्ययं स्वसमानकालस्य ग्राहकः स्यात्। तेन अत इत् उदिति षण्णां संज्ञाः। ऋदिति द्वादशानाम्। अत एव 'उपसर्गादृति धातौ' इत्यत्र सावर्ण्यात् लृवर्णस्य ग्रहणं, तपरत्वाद्दीर्घे नेति सिद्धान्तः। पञ्चमीसमासोदाहरणन्तु 'वृद्धिरादैच्' इति। इह हि संज्ञायां कृतं तात्परत्वं संज्ञिनोः फलति, डमुटष्टित्वमिवेत्युक्तम्। परम्परासम्बन्धेन लाक्षणिकस्य स्मारकतेति पक्षे तु न कश्चिद्दोषः। 'अदेङ् गुणः' इत्यत्राप्येवं सिद्धम्, तत्र तकारस्योभयार्थतया सामर्थ्यविरहात्। यदि तूकालसूत्रे वक्ष्यमाणरीत्याऽणुदित्सूत्रेऽशब्दसंज्ञायामित्यनुवर्तते, यदि वा कार्यकालपक्षमाश्रित्य भाव्यमानत्वादेव सवर्णग्रहणं वार्यते तदा वृद्धिसूत्रे तपरकरणं स्पष्टार्थम्। इह तु पञ्चमीसमासो नाश्रयणीयः। अत एव शास्त्रान्ते 'अदत्' इति भाष्यं सङ्गच्छते। 'गुणा भेदकाः' इति पक्षे तु वृद्धिसूत्रे तपरकरणमुभयार्थम्, गुणान्तरयुक्तस्य ग्राहकत्वात्। भेदकत्वे ज्ञापकं त्वणुदित्सूत्रस्थमण्ग्रहणमिति 'हल्' इति सूत्रे एवोपपादितम्। तथैतत्सूत्रस्थं तत्कालस्येति पदमपीह ज्ञापकम्। अन्यथा हि स्वस्य रूपस्येत्यनुवृत्त्यैव सिद्धे किं तेन?। न च सावर्ण्याल्लृवर्णग्रहणार्थं तत्। एवं हि तत्रैव लृग्रहणं कुर्यात्, 'ऋति ऋ वा' इति विहितं रेफद्वयमध्यं वोच्चारयेत्। आ इत्येवं सिद्धे 'अतो दीर्घो यञि' इति सूत्रे दीर्घग्रहणमपीह लिङ्गमिति दिक्। अत एवैतत्सूत्रं भाष्यादौ द्वेधा व्याख्यातं—विध्यर्थं नियमार्थं चेति। तथाहि—अणिति नानुवर्त्तते। तेनाऽऽकारादावनणि तत्कालानां सवर्णानां गुणभेदेऽप्यनेन ग्रहणम्। 'अतो भिस ऐस्' इत्यादौ तूभयप्रसङ्गे परत्वादस्यैव प्रवृत्तिः। ननु संज्ञानां बाध्यबाधकभावो नेत्युक्तमिति चेत्। सत्यम्। अविरोधे फलभेदे च भवत्येव समावेशः। इह तु विरोध एवाऽस्ति। अष्टादश ग्राह्याः, षड् ग्राह्या इति हि विरुद्धम्, संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वात्। अत एव 'छादेर्घे' इति सूत्रे 'अद्विप्रभृत्युपसर्गस्य इति वक्तव्य'मिति वार्त्तिकं सङ्गच्छते इत्याहुः। वस्तुतस्तु नेह संज्ञासूत्रद्वये संख्योपात्ता, येन विरोधः स्यात्, किन्तु 'अतो भिस' इत्यादौ तपरकरणसामर्थ्याद्बाध्यबाधकभावोऽनुमीयते इति तत्त्वम्। वस्तुतस्तु तकारविशिष्टेयं संज्ञा, न त्वण्मात्रम्। तत्कालस्येति तच्छब्दस्तु विशेष्यमात्रं परामृशति, न तु विशिष्टम्। तदुच्चारणकालसदृशे लक्षणा तु प्राचां मतेऽप्यस्त्येव। सर्वनामपदेपि 'एतस्यैव वारवन्तीयं' 'तत्त्वमसि' इत्यादौ लक्षणायाः पूर्वोत्तरतन्त्रयोः स्थितत्वात्। तथाच टिघुभाद्यन्तर्गताऽण्वदिह पदैकदेशत्वेनाऽऽनर्थक्याद्ग्राहकताप्रसङ्ग एव नास्ति। विभक्त्युत्पत्तिरप्येवं सति सङ्गच्छते। वृद्धिसूत्रे 'अत्राकारः प्रयोगस्थौकारैकारैरर्थवान्' इति हरदत्तग्रन्थस्तु प्राचां रीत्या नेतव्य इति निष्कर्षः। सोऽयं विध्यर्थतापक्षः। यदा त्वणित्यनुवर्त्तते, तदा नियमार्थमिदं—'तपरोऽण् तत्कालस्यैव' इति। गुणानामभेदकत्वादनण्सु न कश्चिद्दोषः। अस्मिंश्च

पक्षे तत्कालत्वग्रहणं शक्यमकर्त्तुम्, अण्ग्रहणानुवृत्तिश्चानावश्यकी, तपरः स्वरूपस्यैवेति नियमेनापीष्टसिद्धेः । 'दिव औत्' इत्यत्र तपरकरणं स्वरार्थं न तु कालावधारणार्थं, भाव्यमानतया सवर्णग्रहणाऽप्रसक्तेः । तथाच स्वरितः प्रयुज्यते–'द्यौः पितः पृथिवि मातर ध्रुक्' इति । 'पृथिवी उत द्यौः' इत्युदात्तप्रयोगस्तु द्योशब्दस्य बोध्यः । 'औत्' 'अच घेः' इत्यत्र तु मुखसुखार्थं तपरकरणं, व्याख्यानात् । तेन 'समिधाने अग्नौ' इत्यादौ तित्स्वरो नेति वृत्तिकारहरदत्तादयः । यत्तु 'नविभक्तौ तुस्माः' इत्यत्र जयादित्यादिभिरुक्तम् 'इटोऽत्' इत्यत्रायं निषेधो न भवति 'इदमस्थमुः' इत्युकारानुबन्धकरणादनित्यत्वादस्येति । तदभ्युपगमवादमात्रम्, तित्स्वरप्रसङ्गात् । न चेष्टापत्तिः, 'भक्षीय तव राधस' इत्यादावन्तोदात्तश्रवणात् । तस्मात् 'इटोऽत्' 'इत्यत्रापि मुखसुखार्थस्तकारः । 'एत ईद्बहुवचने' 'ऊऋत्' इत्यादिष्वप्येवमेवेति दिक् । वस्तुतस्तु 'दिव औत्' इत्यत्राप्येवमेव, हलः स्रंसनधर्मिणोऽनुदात्ते कृते 'उदात्तस्वरितयोर्यणः' इत्येव स्वरिताऽसिद्धेः । स्यादेतत् । द्रुता मध्यमा विलम्बिता चेति तिस्रो वृत्तयः । तदुक्तम्–**अभ्यासार्थे द्रुता वृत्तिः प्रयोगार्थे तु मध्यमा । शिष्याणां तूपदेशार्थं वृत्तिरिष्टा विलम्बिता ॥** इति । ताश्च क्रमेण त्रिभागाधिकाः । तथाहि–द्रुतवृत्त्या यस्यामृचि पठ्यमानायां नव पानीयपलानि स्रवन्ति तस्यामेव ऋचि मध्यमवृत्त्या पठ्यमानायां द्वादश, विलम्बितायान्तु षोडश । एवं स्थिते यदि सूत्रकृद्विलम्बितायां तपरकरणमकार्षीन्मध्यमायां द्रुतायां वा, तर्हि वृत्त्यन्तरेण पाठकाले अतो भिस ऐस् न स्यात्, कालावधारणेन दीर्घप्लुतयोरिव वृत्त्यन्तरस्यापि वारणादिति । तथा च वार्त्तिकम्–'द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसङ्ख्यानं कालभेदात्' इति । अत एव निपातनान्मध्यशब्दे ह्रस्व इति संहितासंज्ञासूत्रे कैयटः । अत्र सिद्धान्तवार्तिककारा एवमाहुः–'सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद्वृत्तयो विशेष्यन्ते' इति । अस्यार्थः–व्यञ्जकीभूतो ध्वनिर्यद्यपि बहुकालानुवर्त्ती, तथापि कश्चिन्मात्रापर्यन्तमेवाभिव्यनक्ति, तदुत्तरकालोपहितस्तु स्वयमेवानुवर्त्तते न तु परमभिव्यनक्ति । यद्वा–ह्रस्वस्य व्यञ्जको ध्वनिर्वृत्तित्रयेऽपि मात्राकाल एव । मध्यमविलम्बितयोः प्रथमगृहीतध्वन्यनुनिष्पादिना ततो न्यूनकालेन ध्वन्यन्तरेणाभिव्यक्त्यन्तरं जन्यते, अभिव्यङ्ग्यस्तु न भिद्यते । एवं दीर्घव्यञ्जकोऽपि सर्वत्राऽऽद्यो ध्वनिर्द्विमात्र एव । अनुनिष्पादी तु ततो न्यून इत्याद्यूह्यम् । व्यङ्ग्यास्तु स्वत एव परस्परविलक्षणाः । एतच्च सर्वं कैयटेन ध्वनितम्–**तस्मादुच्चारणं तेषां मात्राकालं प्रतीयते । द्विमात्रं वा त्रिमात्रं वा न वर्णो मात्रिकः स्वयम् ॥** इति । शब्दान्तराधिकरणस्थरागककारोक्तिस्तु कथं नेयेति सूरिभिश्चिन्त्यम् । वर्णास्तु नित्या एव । वर्णोत्पत्तिपक्षे तु तदनुष्रादो दूरादपि ग्राह्यः कश्चिद्ध्वनिरवश्याभ्युपेयः । तस्यैव कालभेदाद्वृत्तित्रैविध्यम् । वर्णास्तु वृत्तिभेदेऽप्येकरूपा एव । **कैश्चिद्व्यक्तय एवाऽस्य ध्वनित्वेन प्रकल्पिताः**–इति पक्षे तु कालरूपोपाधिविशेषावच्छिन्नस्यैव व्यक्तित्वमिति दिक् । उक्तं च भाष्ये–**ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते । अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः ॥** इति । अस्यार्थः–शब्दो द्विधा–व्यञ्जको व्यङ्ग्यश्च । शब्दानां व्यङ्ग्यानां व्यञ्जकत्वेन सम्बन्धी यो ध्वनिः स एव महानल्पश्च लक्ष्यते । तदुभयं व्यङ्ग्यं व्यञ्जकरूपं केषाचिदेव ताल्वादिव्यापारजन्यानामेव न तु भेर्यादिजन्यानामपि । कुतः ? । **स्वभावतः ।** कारणवैलक्षण्यात् । अत्रोभयमिति भावप्रधानो निर्देशः । उभयरूपतेत्यर्थः ।

**आदिरन्त्येन सहेता ।** अन्त्येनेता सहोच्चार्यमाण आदिवर्णो वर्णसङ्घातो वा मध्यगानां संज्ञा स्यादादेः स्वरूपस्य च । वर्णो यथा–अल् । सङ्घातस्तु कृञ् । इह 'अभूततद्भावे कृभ्वस्ति' इत्यतः 'कृञो द्वितीये'ति ञकारेण प्रत्याहारः । आद्यन्तौ तावदवयवौ, ताभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाऽभावात्तदवयवेषु संज्ञाऽवतरन्ती मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयात् । अतः स्वं रूपमित्यनुवर्त्तते । स्वं रूपं चादेरेव गृह्यते, नान्त्यस्य, अप्राधान्यात् । अन्त्येनेति ह्यप्रधाने तृतीया । तेन 'दध्यत्र' इत्यादौ केवल एव यकारः प्रवर्त्तते न णकारसहित इति कैयटादयः । अत्रेदं वक्तव्यम्–'प्रत्याहारेष्वाद्या वाचकास्तत्र ग्रहणकशास्त्रं सावकाश'मिति ग्रहणकशास्त्रस्थभाष्यादिपर्यालोचनया वाचकत्वं तावदाद्यवर्णे विश्रान्तम्, अन्त्यस्तु तात्पर्यग्राहकः सहग्रहणात्तु विशिष्टाद्विभक्त्युत्पत्तिरिति द्योतकान्तरवैषम्यमिति स्थितम् । तत्रान्त्यस्येत्संज्ञयाऽपहृतस्य कथं संज्ञित्वप्रसक्तिः, अन्यथाऽऽदिसंज्ञानामपि णकारादावतिप्रसक्तेः क उद्धारः । किञ्च अस्तु विशिष्टस्य यण्संज्ञा, तथापि 'दध्यत्र' इत्यत्र यण्शब्दापादनमसङ्गतमेव, न्यायसाम्येनेक्शब्दस्यैव स्थानित्वप्रसक्तया इकारस्य स्थानित्वाऽसम्भवात् । अन्त्येनेति किम् ? सुडिति तृतीयैकवचनावयवेन मा भूदिति वृत्तिकाराः । 'टाङसिङसामि'त्यादिनिर्देशैष्टकारो न पूर्वान्त इति निर्णयादिति भावः । नन्वेवमपि टकारान्तस्य सङ्घस्य टाटकारोऽन्त्यो भवत्येवेति चेत्, न, व्यवसितान्त्यताविरहात् । इह हि अन्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेन प्रत्याहार इति 'सुडनपुंसकस्य' इति सूत्रे हरदत्तः । न चैवं रप्रत्याहाराऽसिद्धिः, लण्सूत्रेऽनुनासिकप्रतिज्ञासामर्थ्यादनन्तेनापि प्रत्याहारात् । इदं तु वक्तव्यम् । औटष्टित्त्वस्यानन्यार्थतया तेनैव सुट्प्रत्याहारः, प्रत्यासत्तेश्च । तथा चान्त्यग्रहणं मास्त्विति । अत्रेदं समाधानम्–मध्यमेनेता सहित आदिस्तदुत्तरेषामपि ग्राहको मा भूत् । एवमन्त्येन सहितो मध्यमः पूर्वेषां संज्ञा मा भूदित्यादिग्रहणम् । इतेति किम् ?, रप्रत्याहारो यथा स्यात् । स ह्यनन्त्येनाप्यनुनासिकप्रतिज्ञा-

सामर्थ्याद्भवतोत्युक्तम्। न चैतदितेत्यस्य विरहे लभ्यते। **नवीनास्तु** सहाऽऽसमन्तादेतीति सहेता मध्यमो वर्णः। अन्त्येनादिः अणित्यादिसंज्ञको भवतीत्यर्थः। आद्यन्तसमभिव्याहाराच्च **सहेता** मध्यमो वर्णो लभ्यते। स्वं रूपमिति चानुवर्तते। वृद्धिगुणादिसंज्ञास्विवेहापि सामानाधिकरण्यात्संज्ञात्वाऽवगतिः। अस्मिंश्च व्याख्याने 'हलन्त्यम्' इत्यत्रेतरेतराश्रयशङ्काऽपि नास्तीत्याहुः। आद्यन्तावयवद्वारा समुदायानुकरणेन सिद्धेऽन्त्यव्यावृत्तते इदम्।

**येन विधिस्तदन्तस्य**। विशेषणं तदन्तस्य संज्ञा स्यात्स्वस्य च रूपस्य। 'एरच्'। चयः, जयः, अयः,। 'ओरावश्यके'। अवश्यलाव्यम्। इह येनेति करणे तृतीया, न तु कर्त्तरि, कृद्योगलक्षणषष्ठ्या बाधितत्वात्। विधिरिति हि कर्मणि किप्रत्ययः। तेन कर्मणोऽभिहितत्वादुभयप्राप्तौ इति नियमस्य नायं विषयः। करणं च परतन्त्रं, कर्त्रधिष्ठितस्यैव करणत्वात्। एवञ्चेह तृतीयया पारतन्त्र्यं लक्ष्यते। 'सुब्विभक्तौ न लक्षणा' इति नैयायिकोद्घोषस्तु निर्मूलः। न च प्रत्ययानुशासनवैयर्थ्यापत्तिस्तन्मूलम्, तिङ्क्ष्वपि तस्य तुल्यत्वात्, 'रथो गच्छति' इत्यादौ व्यापारे लक्षणायास्त्वयापि स्वीकारात्। अत एव 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यत्र प्रयाजशेषं हविष्युत्क्षारयेदिति मीमांसका व्याचख्युरिति दिक्। न च 'एरच्' इत्यादाविकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं वास्यादीनामिव तक्षादीनामिव च स्वरूपतः सम्भवति, किं तु वैवक्षिकम्। तेन विशेषणमप्रधान तच्चात्मान्तस्य विशेष्यस्य संज्ञेति फलितम्। विशेष्यसन्निधौ च विशेषणत्वं भवति। सन्निधिस्तु क्वचित्साक्षान्निर्देशेन, यथा 'ईदूदेद्द्विवचनम्प्रगृह्यम्' इति द्विवचनस्य, क्वचिच्छब्दाधिकारात्, यथा 'एरच्' इत्यत्र धातोः, क्वचिदाक्षेपाद्यथा–'इको झल्' इत्यत्र सना धातोः। 'इको यणचि' 'एचोऽयवायावः' इत्यादौ तु न कथंचिदपि विशेष्यसन्निधिरतो नेदं प्रवर्त्तते।

स्यादेतत्–'उदोष्ठ्यपूर्वस्य' इत्यत्र ओष्ठ्यपूर्वकत्वं धातोरेव विशेषणं स्यान्न तु ऋकारस्य। स हि विशेषणत्वाद्दन्तस्य संज्ञा। संज्ञा च संज्ञिनं प्रत्याययति, न तु स्वयं विशेषणादियोगमनुभवति। ततश्च 'सङ्कीर्णम्' इत्यादावतिव्याप्तिः, 'पूर्त्तम्' इत्यादावव्याप्तिश्च। एवम् 'उतश्च प्रत्ययात्' इत्यत्राप्यसंयोगपूर्वत्वमङ्गस्य प्रत्ययस्य वा विशेषणं स्यान्न तुकारान्तस्य। ततश्च 'अश्नुहि' इत्यादावतिव्याप्तिः। विशेषणं च यद्यङ्गस्य, तदा 'तक्ष्णुहि' इत्यादावतिव्याप्तिः। अथ प्रत्ययस्य, तर्हि 'तक्ष्णुहि' इत्यादि सिद्ध्यतु, 'अश्नुहि' इत्यादौ तु दोष एवेति। अत्राहुः–गुणप्रधानभावसापेक्षेयं संज्ञा। तथाच 'उतश्च प्रत्यया'दित्यादौ विशेषणसम्बन्धवेलायां गुणभावाऽस्फुरणात्तमनुभूय पश्चाद्विशेष्यसम्बन्धे विशिष्टा संज्ञा भवति। इह हि विशिष्टस्य वैशिष्ट्यम्, न तु विशेषणमिति, व्याख्यानात्। अत एव न विशिष्टे वैशिष्ट्यं नाप्येकत्र द्वयमिति दिक्। तथाच वार्तिकम्–'येन विधिस्तदन्तस्येति चेत् ग्रहणोपाधीनां तदन्तोपाधिताप्रसङ्गः। सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात्' इति। **ग्रहणोपाधीनां** गृह्यमाणविशेषणत्वेन सम्मतानामोष्ठ्यपूर्वत्वादीनामित्यर्थः। यथेष्टत्वादित्यनेनेदं दर्शयति चतुर्विधेषु विशिष्टवैशिष्ट्यबोधेषु मध्ये विशिष्टस्य वैशिष्ट्यमेवेह सम्मतं न त्वितरत्रिकं, व्याख्यानाल्लक्ष्यानुरोधाच्च। इह सिद्धान्ताभिमतं विशेषणविशेष्यभावं स्फुटीकर्त्तुं बहूनि वार्त्तिकानि प्रवृत्तानि। तद्यथा–**समासप्रत्ययविधौ प्रतिषेधः**' 'द्वितीयाश्रित' इत्यादौ श्रितादयो विशेष्यास्तद्विशेषणं च सुप्। एवं 'नडादिभ्यः फक्' इत्यादौ नडादि विशेष्यं, प्रातिपदिकं विशेषणमिति फलितोऽर्थः। एतेन 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इत्यपि व्याख्यातं। तस्याप्युदाहृतप्रतिषेधसमानविषयकत्वस्य 'दिव उत्' सूत्र कैयटादिभिरुक्तत्वात्। अत एव 'गोस्त्रियोः' इति सूत्रे गोऽन्तं यत्प्रातिपदिकमिति व्याख्यातम्। एतेन 'शेषो घ्यसखि' इत्यादौ 'ग्रहणवते'ति प्रतिषेधं सञ्चारयन्तो हरदत्तादयः प्रत्युक्ताः। प्रकृतमनुसरामः–श्रितादयो विशेष्या इत्युक्तम्। तेन' द्वितीया श्रिते'ति समासः 'कृष्णश्रितः' इत्यत्रैव भवति, न 'कृष्णं परमश्रितः' इत्यादावपि। तथा 'नडादिभ्यः फक्' नाडायनः। नेह–सूत्रनडस्यापत्यं सौत्रनाडिः। अनुशतिकादित्वादुभयपदवृद्धिः। ननु 'कृष्णं परमश्रितः' इत्यत्र समासप्राप्तिरेव नास्ति। अत्र हि समासात्सुब्विहितः। तेन श्रितान्तं सुबन्तमेव ! भवति। अत्र कैयटहरदत्तौ सम्बुद्ध्यन्तमुदाहर्त्तव्यं 'कृष्ण परमश्रित' इति। एतद्धि प्रत्ययलक्षणेन सुबन्तं भवति, श्रितान्तं च श्रूयते इति।

स्यादेतत्। सिद्धान्ते श्रितादीनां विशेष्यत्वेऽपि तत्र सुबन्तत्वं बाधितम्। न चाऽत एवान्वयानुपपत्त्या श्रितादिशब्दानां तत्प्रकृतिके लक्षणेति वाच्यम्, सम्बुद्ध्यन्ते एव मुख्यार्थपुरस्कारेणाऽवकाशलाभात्। तथाच 'कृष्णश्रितमि'त्यादि न सिद्ध्येदिति। उच्यते, समासतद्धितप्रकरणे सर्वत्र श्रितादीनां नडादीनां च तत्तत्प्रकृतिके लक्षणैव 'खट्वा क्षेपे' 'नदीभिश्च' इत्यादावभेदस्य बाधात्। न हि तत्र सम्बुद्ध्यन्तता सम्भवति। 'पूर्वकालैके'त्यादौ सम्बुद्ध्यन्ततासम्भवेपि 'एकविभक्तौ' इत्यादिसौत्रनिर्देशो न सिध्येत्। तस्मात्सामान्यापेक्षज्ञापकबलेनैकरूप्याय सर्वत्र तत्तत्प्रकृतिके लक्षणेति स्थिते इहत्यभाष्यवृत्त्योः कैयटहरदत्तकृतं भङ्क्त्वा व्याख्यानं नादेयमित्यवधेयम्। अस्यापवादमाह–**उगिद्वर्णग्रहणवर्ज**मिति। उगिता वर्णेन च प्रातिपदिकं विशेष्यते इति फलितोऽर्थः। महान्तमतिक्रान्ता अतिमहती। उपसर्जनत्वाद्गौरादिलक्षणस्य ङीषोऽभावे उगिदन्तत्वान्ङीप्। बृहन्महतोर्गौरादित्वं नास्तीत्यपि केचित्। युक्तं चैतत्। 'महते सौभगाय' इत्यादौ विभक्तेरुदात्तत्वसिद्धये 'शतुरनुमः' इति सूत्रे 'नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानम्' इति वार्त्तिकस्यारभ्यमाणत्वान्ङीपोऽप्युदात्तत्वसिद्धेः। 'अत

इञ्' । दाक्षिः । न चेह सामर्थ्यात्तदन्तविधिः अस्यापत्यमिः काम इत्यत्र चरितार्थत्वात् । नचैवमिञो ञित्त्वं व्यर्थं स्यादिति वाच्यम्, 'बाह्वादिभ्यश्च' इत्यत्र यथायथं वृद्धयाद्युदात्ताभ्यां चरितार्थत्वात् । नन्वेवमपि 'औपगविः' इत्यादावेव स्यान्न तु 'दाक्षिः' इति, अकारस्येहानर्थकत्वादिति चेत्, न, वर्णग्रहणे अर्थवत्परिभाषाया अप्रवृत्तेः । तथाचैतत्सूत्रशेषे वार्तिकम्–**अलैवानर्थकेनेति** । अत एव सङ्घातेनार्थवतैव । तेन 'स्त्रियाः' इतीयङ् इहैव भवति 'स्त्रियौ परमस्त्रियौ नेह 'शस्त्र्यौ' 'शस्त्र्यः' । तथा 'इन्हन्पूषार्यम्णां शौ' 'सौ च' इत्यत्र हनित्यत्र संघातग्रहणे प्लीहन्ग्रहणं न । तेन 'प्लीहानौ' इत्यादौ 'सौ च' इति नियमाऽप्रवृत्तेः दीर्घः सिद्धयति । 'उदः स्थास्तम्भोः' इत्यत्र 'वा पदान्तस्य' इत्यतः पदग्रहणानुवृत्तिपक्षेऽप्युदेव विशेष्यः । अननुवृत्तौ तु न काचित् क्षतिः । उभयथाप्यनर्थकस्याग्रहणान्नेह 'गर्मुत्स्थास्यति' । 'गर्मुत्सुवर्णतृणयोः' । ननु 'शस्त्र्यौ' 'प्लीहानौ' इत्यत्र प्राप्तिरेव नास्ति 'पदाङ्गाधिकारे तस्य तदुत्तरपदस्य च' इति वचनात् । न हीदन्तत्रापि तदुत्तरमिति चेत्, सत्यम्, 'पदाङ्गाधिकारे' इति वचनसत्त्वे तथैव, किं त्वेतद्दूषितं भाष्ये, सौत्रेण तदन्तविधिनैव गतार्थत्वात् । अत एव परमश्चासावतिमहांश्चेति विग्रहे 'परमातिमहान्' इति सिध्यति । वचनाश्रयणे तु नैतत्सिध्येत्, अतिमहच्छब्दस्य महदुत्तरपदत्वेऽप्यनङ्गत्वात् । परमविशिष्टस्याङ्गत्वेऽपि महदुत्तरपदत्वाऽभावात् । सौत्रेण तदन्तविधिना तु 'सान्तमहतः' इति दीर्घमुगिल्लक्षणो नुमागमश्चेह सिद्धयति । न चेह 'ग्रहणवता' इति निषेधः शङ्क्यः 'समासप्रत्ययविधौ' इत्यनेन सह समानविषयः स इत्युक्तत्वात् । एतेन, वीतजन्मजरसः परं शुचि ब्रह्मणः पदमुपैतुमिच्छताम्' इति भारविप्रयोगो व्याख्यातः । 'अलैव' इत्यस्यापवादः पठ्यते भाष्ये–'**अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति**' इति । अन्–'राज्ञा' इत्यर्थवता, 'साम्ना' इत्यनर्थकेन । इन्–'दण्डी' इत्यर्थवता, वाग्मी' इत्यनर्थकेन । अस्–'सुपयाः' इत्यर्थवता, 'सुस्रोताः' इत्यनर्थकेन । मन्–'सुशर्मा' इत्यर्थवता, 'सुप्रथिमा' इत्यनर्थकेन । तच्च 'इणः षीध्वम्' इति सूत्रेऽङ्गग्रहणेनार्थवद्ग्रहणपरिभाषाया अनित्यत्वज्ञापनात्सिद्धम् 'परिवेविषीध्वम्' इत्यत्र हि षीध्वंशब्दस्यानर्थकत्वादेवाग्रहणे सिद्धे किं तन्निवृत्त्यर्थेनाङ्गग्रहणेनेति दिक् । सूत्रस्योदाहरणान्तराण्याह वार्त्तिककारः–**प्रयोजनं सर्वनामाव्ययसंज्ञायाम्** । अन्वर्थसंज्ञयाऽऽक्षिप्तः संज्ञी सर्वादिभिर्विशिष्यते इति फलितोऽर्थः । **उपपदविधौ भयाढ्यादिग्रहणम्** । भयच आढ्यादयश्चेति द्वन्द्वः । तेन खच्प्रकरणे 'मेघर्त्तिभयेषु कृञः' इतिसूत्रे वाक्यं भित्त्वा उपपदेन मेघर्त्ती विशेष्येते, भयेन तूपपदम् । यदि तु भयाढ्यशब्दयोर्द्वन्द्वं कृत्वा आदिशब्देन बहुव्रीहिः क्रियेत तदा क्षेमप्रियमद्रैरप्युपपदं विशेष्येत । सिद्धान्ते तु क्षेमादय उपपदेन विशेष्यन्ते । भयङ्करः, अभयङ्करः । आढ्यङ्करणं, स्वाढ्यंकरणम् । **ङीप्प्रतिषेधे स्वस्रादिग्रहणम्** । स्वसा परमस्वसा । **अपरिमाणबिस्तादिग्रहणंचप्रतिषेधे** । प्रयोजनमित्यनुवर्त्तते । द्विगुना सन्निधापितमुत्तरपदं बिस्तादिभिर्विशेष्यते इति भावः । द्विबिस्ता, द्विपरमबिस्ता । द्व्याचिता, द्विपरमाचिता । **दिति** । दैत्यः, आदित्यः । 'दित्यदित्यादित्य' इति सूत्रेऽदितिग्रहणं न कर्त्तव्यं, परमदित्यादिभ्यस्त्वनभिधानान्न भवतीति भावः । **रोण्या अण्** । 'रोणी' इति सूत्रेण चातुरर्थिकः । रौणः, आजकरोणः, सैंहकरोणः । **तस्य च** । तस्य चेति वक्तव्यम् । उक्तानां वक्ष्यमाणानां च सर्वेषामयं शेषः । तथाचेह सूत्रे 'स्वं रूपम्' इत्यनुवर्त्तते इति फलितोऽर्थः । ननु व्यपदेशिवद्भावेन 'रौणः' इति सिद्धमिति चेत् ? न, 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधादिति भाष्यकाराः । यद्यपि रोणीशब्दो न प्रातिपादिकं, तथाप्यप्रातिपदिकेनेत्यत्र वाक्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्स्त्रीप्रत्ययान्तैरपि व्यपदेशिवद्भावो नास्तीति भावः । यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणमिति हि ङ्याप्सूत्रे वक्ष्यते । ननु यदि तस्य चेत्युच्यते, स्वरूपग्रहणं चानुवर्त्त्यते, तर्हि 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यस्य निर्विषयत्वं स्यादिति चेत् ? न, 'सूत्रान्ताट्ठक्' 'दशान्ताड्डः' इत्यादौ सावकाशत्वात् । न च तत्रान्तग्रहणसामर्थ्यादेव व्यपदेशिद्भावो न भविष्यतीति वाच्यम्, 'समासप्रत्ययविधौ प्रतिषेधः' इत्येतद्बाधेनान्तग्रहणस्य चरितार्थत्वात् । ज्ञापकसिद्धेयं परिभाषा । पूर्वात्सपूर्वादिनिरिति वक्तव्ये 'पूर्वादिनिः' 'सपूर्वाच्च' इति योगविभागश्चेह ज्ञापकः । वस्तुतस्तु भयाढ्यादाविव 'सूत्रान्ताट्ठक्' 'दशान्ताड्डः' इत्यादावपि विशेषणविशेष्यभावव्यत्यासमात्रेण सिद्धे अन्तग्रहणसामर्थ्यमपि सूपपादमिति परिभाषाश्रयणं व्यर्थम् । न चैवं 'गोकुल'मित्यत्र ह्रस्वः स्यादिति वाच्यम्, उपसर्जनं यो गोशब्दस्तदन्तस्य प्रातिपदिकस्य ह्रस्वविधानात् । सन्निधानाच्च प्रातिपदिकं प्रत्येव विशेषणताश्रयणात् । गोशब्दे च तदभावात् । अत एव 'राजकुमारीपुत्रः' इत्यत्र न ह्रस्वः । उपसर्जनं यत्स्त्रीप्रत्ययान्तं तदन्तस्य प्रातिपदिकस्येत्यत्रापि सन्निधानाश्रयणात् । एष एव तवापि गतिः । न ह्युक्तपरिभाषेह सम्भवति 'व्यपदेशिवद्भावोऽप्रातिपादिकेन' 'ग्रहणवता' इति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति दिवउत्सूत्रे कैयटहरदत्ताभ्यामुक्तत्वात् । एवच 'पूर्वादिनिः' इति योगविभागो व्यर्थः । किम्बहुना 'पूर्वादिनिः' इत्यत्र तदन्तग्रहणसम्भवात् 'सपूर्वाच्च' इति सूत्रं व्यर्थम् । व्यपदेशिवद्भावेन सिद्धे तस्येति प्रकृतवार्त्तिकमपि न कर्त्तव्यम् । स्वं रूपमिति तु प्रागेव प्रत्याख्यातमिति दिक् । **रथसीताहलेभ्यो यद्विधौ** । 'तद्वहति' इति यत् । रथ्यः, परमरथ्यः । सीत्यं, परमसीत्यं क्षेत्रम् । सीतया सम्मितं, सम्मतमित्यर्थः । 'नौवयोधर्मे' ति यत् । हलस्य कर्षो हल्यः । 'मतजनहला-

त्करणजल्पकर्षेषु' इति यत् । यद्विधाविति किम् ? 'हलसीराट्ठक्' इति ठग्विधौ तदन्तग्रहणं मा भूदिति कैयटः । अत्रेदं वक्तव्यम् । 'हलसीरात्' इति द्विः पठ्यते, 'तस्येदम्' इत्यधिकारे 'तदर्हति' इत्यधिकारे च । तत्रोभयत्रापि तदन्तविधिरिष्ट एव । आद्यस्य प्राग्दीव्यतीयत्वाल्लुक,–द्विहलः । अपरस्य श्रवणम्–द्वैहलिकः । स्पष्टं चेदं चतुर्थे हरदत्तग्रन्थे । युक्तं चैतत् । 'रथाद्यत्' 'तदर्हति' इति रथशब्दस्य द्विरुपादानमेतदर्थमिति भाष्येप्युक्तत्वात् । वहत्यधिकारस्थरथहलयोरुपादानसामर्थ्याल्लभ्यो हि तदन्तविधिरविशेषादुभयत्रापि स्यादेव। न चैवमिह यद्विधावित्यसङ्गतमिति वाच्यम्, तस्योपलक्षणत्वात् । यद्वा– 'रथाद्यत्' इति सूत्रे रथाद्रथाङ्गे इतिवद्वोढरीत्युक्तौ तत्प्रकारकशाब्दबोधस्योपपादयितुं शक्यत्वेऽपि हलग्रहणे तदुपपादनस्य वक्तुमशक्यत्वेन हलग्रहणेन न तदन्तविधिः । अस्तु वा संख्यापूर्वपद एवेति कैयटाशयः । 'तस्मै हितम्' इति प्रकरणे 'शरीरावयवाद्यत्' इति सूत्रे 'रथाच्च' इति वार्तिकम् । तत्राप्ययं तदन्तविधि र्बोध्यः । यत्तु तत्र कैयटो वक्ष्यति हलसीताशब्दाभ्यां साहचर्याच्चतुर्थाध्यायविहित एव यदिति तदन्तविधिमाहुरिति । तत्राहुरित्यस्वरसोद्भावनम् 'असमासे निष्कादिभ्यः' इत्यसमासग्रहणेन तस्मिन्प्रकरणे विशिष्यापि तदन्तविधेर्ज्ञापिततया साहचर्याश्रयणेऽपि तदन्तविधेर्दुर्वारत्वादित्यवधयेम् । **सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्य** । सुपाञ्चालकः । सुमागधकः । सर्वपाञ्चालकः । 'अर्द्धपाञ्चालकः । 'अवृद्धादपि बहुवचनविषयात्' इति वुञ् । 'सुसर्वार्द्धाज्जनपदस्य' इत्युत्तरपदवृद्धिः । दिक्शब्दः–पूर्वपाञ्चालकः। अपरपाञ्चालकः । पूर्ववद्वुञ् । 'दिशोऽमद्राणाम्' इत्युत्तरपदवृद्धिः । **ऋतोर्वृद्धिमद्विधावयवानाम्** । ऋतुवाचिनः शब्दाद्यो वृद्धिमान् वृद्धिनिमित्तः प्रत्ययस्तद्विधाने अवयवानां । पूर्वपदत्वे इति शेषः । तदन्तविधिरिह वाचनिक एव । शरदः पूर्वो भागः पूर्वशरत् । 'पूर्वापराधरोत्तरम्' इत्येकदेशिसमासः । तत्र भवं पूर्वशारदम् । 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' 'अवयवादृतोः' इत्युत्तरपदवृद्धिः । वृद्धिमदिति किम् ?, 'प्रावृष एण्यः' इत्यत्र तदन्तविधिर्मा भूत् । तेन तत्र ऋत्वणेव भवति–पूर्वप्रावृषमिति । अवयवानां किम् ? पूर्वस्यां शरदि भवं पौर्वशारदिकमित्यत्राण् न भवति किं तु कालाट्ठञेव भवति । तत्र हि यथाकथञ्चित्कालवाचिनो गृह्यन्ते न तु रूढ्यैवेत्याग्रहः, उत्तरत्र सन्धिवेलाद्यृतुनक्षत्रेभ्य इति विशेषणात् । अत एव सायम्प्रातिकः, पौनःपौनिकः इत्यादि सिद्ध्यति । **ठञ्विधौ संख्यायाः** । द्वे षष्टी परिमाणमस्येति विग्रहे 'तद्धितार्थ' इत्यनेन समासे कृते 'आर्हा'दिति ठक् न भवति, संख्यायास्तदन्तविधौ सति संख्यान्तादपि ठक्प्रतिषेधात् । तेन 'प्राग्वतेः' इति ठञेव भवति । 'अध्यर्द्धपूर्व' इति लुक्तु न भवति 'सोऽस्यांशवस्नभृतयः' इत्यतः सोऽस्येत्यनुवर्तमाने 'तदस्य परिमाण'मित्यत्र पुनःप्रत्ययार्थस्य समर्थविभक्तेश्च निर्देशात्। पुनर्निर्देशेन हि प्रकृताल्लुक्सम्बद्धादिलक्षणमिदमिति सूच्यते । यद्वा–अनुवर्तमानेन सोस्येत्यनेन सहितंपरिमाणं संख्याया इत्येतत्तावत्प्रत्ययं विधत्ते। ततस्तस्य लुकि कृते पुनः 'तदस्यपरिमाणम्' इति वचनसामर्थ्यात्स्वार्थे तज्जातीयः प्रत्ययः । तस्य विधानसामर्थ्याद् द्विगुनिमित्तत्वाऽभावाद्वा लुङ् न भविष्यति । एतच्च वृत्तिकारमतमाश्रित्योक्तम् । भाष्यकारमते तु 'तमधीष्टः' इति सूत्रेण भूतार्थे प्रत्ययं कृत्वा 'द्विषाष्टिक'इत्यादि साध्यम् । न चात्र 'अध्यर्द्धे'तिलुक् प्राप्नोति, अनार्हीयत्वात् । यद्यपि 'तमधीष्ट' इत्यत्र कालादिति वर्तते तथापि काले संख्येये वर्तमानात् षष्टिशब्दादुत्पत्तिर्न विरुध्यते। रमणीयादिभ्यस्त्वनभिधानान्न भवति । परिमाणार्थे तु लुक् दुर्वारः । तथाहि 'प्राग्वतेष्ठञ्' इति ठञ् 'तदर्हति' इत्यतः प्राक् 'तेन क्रीतम्' इत्येवमाद्या येऽर्थास्तेषु भवति, अर्हत्यर्थे च । ततः परेऽपि येऽर्था वर्त्तयतीत्यादयः 'आकालिकडाद्यन्तवचने' इत्येवमन्तास्तेष्वपि भवति । एवञ्च ठञ आर्हीयानार्हीयार्थसाधारणत्वेपि परिमाणस्य 'तदर्हति' इत्यतः प्राङ् निर्देशात्तत्रोत्पन्नष्ठञ् आर्हीय एव । न च तदस्येति पुनरुपादानमात्रेणार्हीयत्वमपगच्छति । न हि काको वाश्यत इत्यार्हीयत्वं निवर्त्तते । किञ्च यद्यार्हीयत्वं निवर्त्तते, तर्हि जीवितपरिमाणादन्यत्रापि लुङ् न स्यात् । द्वौ निष्कौ परिमाणमस्य द्विनिष्कः । न च 'द्वित्रिपूर्वान्निष्कात्' इति वचनसामर्थ्यात्स्यादिति वाच्यम्, परिमाणातिरिक्तेष्वार्हीयार्थेषु वचनस्य सावकाशत्वात् । तस्माद्यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भूतो भावीति 'तमधीष्टो भृत' इत्येव द्विषाष्टिकः साधनीयः । तदस्येति तु त्यक्तव्यं, सोस्येत्यनुवृत्त्यैवेष्टसिद्धेरिति स्थितम् । **धर्माच्च** । 'धर्मं चरति धार्मिकः । अधर्मं चरति आधर्मिकः । 'अधर्माच्च' इत्येतन्न वक्तव्यम् । **पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च प्रयोजनम्** । इष्टकेषीकामालानाञ्चिततूलभारिषु' । इष्टकचितम्, पक्वेष्टकचितम् । इषीकतूलेन, मुञ्जेषीकतूलेन । मालभारी,उत्पलमालभारी । इहोत्तरपदाधिकारे प्रयोजनस्योदाहरणात्पदाङ्गेति पदशब्द उत्तरपदपर इति कैयटादयः । अत एव 'परममहत्परिमाण'मित्यत्र परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुषः । सामानाधिकरण्ये हि 'आन्महतः' इत्यात्वं स्यादित्युदयनाचार्या व्याचख्युः'। यत्तु तत्र **वर्द्धमानेनोक्तम्**–'पदाङ्गाधिकारे' इत्यत्र केवलपदाधिकारो गृह्यते न तूत्तरपदाधिकारः । अन्यथा 'इष्टकेषीकामालाना'मित्यत्र पुनस्तदन्तविध्युपसंख्यानं व्यर्थं स्यात् । तथाच 'परममहत्परिमाण'मित्यत्र कर्मधारयपक्षेप्यात्वप्रसक्तिर्नास्त्येवेति तदेतदनवहिताभिधानम्, 'इष्टकेषीके'त्यस्य प्रयोजनत्वेनोदाहरणात्, उपसंख्यानान्तरस्य गगनकुसुमायमानत्वात् मास्तादाचार्योक्तमेव सम्यक् । एतेन 'सततनैशतमोवृतमन्धतः' इति भारविप्रयोगे 'ओजःसहोम्भस्तमसस्तृतीयायाः' इत्यलुक्कुतो नेत्याशङ्क्य वर्धमानोक्तरीत्योत्तरपदाधिकारे तदुत्तरपदग्रहणं नास्तीति दुर्घटवृत्तिकारोक्तिरप्यपास्ता । यदपि

'ओजःसह' इति सूत्रे हरदत्तेनोक्तम्–ओजःप्रभृतीनामुत्तरपदाक्षिप्तं पूर्वपदं प्रति विशेष्यत्वादिति, तदपि वार्तिकविरोधादुपेक्ष्यम्, विशेष्यविशेषणभावनिर्णयायैवेहत्यवार्तिकानां प्रवृत्तिरिति कैयटवदेव स्वयमपि व्याख्यातत्वात्। भारविप्रयोगस्त्वित्थं समाधेयः। वृतं वृत्तिः, नैशतमसो वृतमिति षष्ठीतत्पुरुषः। नपुंसके भावे क्तस्य योगे शेषत्वविवक्षायां षष्ठी। ततः सततं नैशतमसो वृतं यस्मिन्निति बहुव्रीहिः। यद्वा–'वृतु वर्तने'। घञर्थे कविधानमिति भावे कः। सततं नैशतमसो वृतं वृत्तिर्यस्मिन्निति प्राग्वत्। अङ्गाधिकारे प्रयोजनान्याह–**प्रयोजनं महद्दप्स्वसृनप्तॄणां दीर्घविधौ।** महान्, परममहान्। आपस्तिष्ठन्ति, स्वापः। 'न पूजनात्' इति समासान्तनिषेधः। नन्वेवमपि 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीकारः प्राप्नोति, न ह्ययं समासान्तो येन 'ऋक्पूः' इत्यप्रत्यय इव निषिध्येत इति चेत्, सत्यम्, 'द्व्यन्तरुपसर्गेभ्य' इत्यत्राप इति कृतसमासान्तस्यानुकरणं प्रथमान्तम्। 'अह्नोऽदन्तात्' इतिवद्व्यत्ययेन षष्ठ्यर्थे प्रथमा। इदृत्थं 'स्वाप' इति भाष्यं चास्मिन् व्याख्याने प्रमाणमित्यवधेयम्। स्वसारौ, परमस्वसारौ। नप्तारौ, परमनप्तारौ। **पद्युष्मदस्मदस्थ्याद्यनडुहो नुम्।** पद्भावः प्रयोजनम्। द्विपदः पश्य। केवलस्योदाहरणं तु पादयतेरप्रत्ययः, पात्, पदः, पदा, इत्यादि। इह क्वौ लुप्तत्वाण्णिलोपो न स्थानिवत्। उत्तरपदाधिकारे तु पादशब्दो विशेष्य एव। तेन 'पादस्य पदाज्यातिगोपहतेषु' इति पद्भावः 'पादेनोपहतं पदोपहतम्' इत्यत्रैव भवति। इह तु न दिग्धपादेनोपहतं दिग्धपादोपहतमिति। उत्तरसूत्रेऽप्येवम्। तेन 'पद्यत्यतदर्थे' 'हिमकाषिहतिषु च' इति पद्भाव इहैव भवति–पादौ कषतीति पत्काषी। इह तु न–परमपादकाषी। यस्तु 'परमपत्काषी'ति प्रयोगः स परमश्चासौ पत्काषी चेति विग्रहेण समाधेय इति भाष्यकैयटयोः स्थितम्। यूयं, वयम्, अतियूयम् अतिवयम्। अस्थ्ना, परमास्थ्ना। अनड्वान्परमानड्वान्। **सुपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम्।** द्यौः सुद्यौः। पन्थाः, सुपन्थाः। 'न पूजनात्' इति समासान्ताऽभावः। मन्थाः, परममन्थाः। पुमान्, परमपुमान्। गौः, सुगौः। सखा, सुसखा। सखायौ, चत्वारः, परमचत्वारः। अनड्वाहः, परमानड्वाहः। त्रयाणां, परमत्रयाणाम्। भाष्ये तु परमपन्थाः, परमगौरित्युदाहृतम्। तत्र समासान्तापत्तिः। 'न पूजनात्' इति निषेधस्तु नास्ति, 'स्वतिभ्यामेव' इति वक्ष्यमाणत्वात्। अत एव काचित्कोऽयमपपाठ इति कैयटः। समासान्तविधेरनित्यतया वा समाधेयम्। यद्वा–परमुदाहरणान्तरमित्यर्थः। अपन्थाः, अगौरित्यत्र नञ्स्तत्पुरुषात् 'पथो विभाषा' इति साधुत्वम्। यत्तु 'परमसखायौ' इति पठितं भाष्ये तत्र बहुव्रीहिर्बोध्यः। गौणत्वेऽपि ह्यनङ्णित्त्वे इष्येते एवास्थ्याद्यनङ्वत्। एतच्च 'मिदमोन्त्यात्' इत्यत्र 'द्वितीयाश्रित' इत्यत्र च स्पष्टम्। 'अरुधक्षो वरुण इन्द्रसखा' 'आग्नेया हि मरुत्सखा' इत्यादि प्रयोगाश्चत्वमेव सङ्गच्छन्ते। एतेन पिसंशासूत्रे शोभनः सखा अस्य सुसखिरित्युदाहरन्हरदत्तो न्यासकारश्चापास्तः। 'त्रेस्त्रयः' इति तु त्रिशब्दार्थसमवेतसंख्याद्यभिधायिन्यामि परे इति व्याख्यानाद्गौणे न भवति–प्रियत्रीणाम्, अतित्रीणाम्। प्राधान्ये स्यादेव 'परमत्रयाणाम्' इत्याहुः। अत्र व्याख्याने प्रमाणं मृग्यम्। इह 'पदाङ्गाधिकार' इति कर्त्तव्यम्, तदन्तग्रहणेनैव सकलेष्टसिद्धेरित्युक्तं न विस्मर्त्तव्यम्। **'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्'।** इह प्रत्ययाक्षिप्तस्य धातुप्रातिपदिकाद्यवयवकसमुदायस्य प्रत्ययेन विशेषणात्तदन्तविधिर्लभ्यते। अङ्गसंज्ञासूत्रे 'यस्मात्प्रत्ययविधिस्तदादिप्रत्यये' इति योगं विभज्य परिभाषात्वेन व्याख्यानादंशान्तरलाभः। इदं च संज्ञाविधौ न प्रवर्त्तते, 'सुप्तिङन्तं पदम्' इति ज्ञापकात्। उत्तरपदाधिकारेऽपि न प्रवर्त्तते, 'हृदयस्य हृल्लेखयदण्लासेषु' इति सूत्रे लेखग्रहणाज्ज्ञापकादिति वक्ष्यते। अस्यापवादमाह–**'प्रत्ययग्रहणं चाऽपञ्चम्याः'** इति। यत्र पञ्चम्यन्तं प्रत्ययस्य विशेषणं तत्र तदन्तग्रहणं नेत्यर्थः। यथा 'रदाभ्यां निष्ठा तः' इत्यत्र। तेन 'दृषत्तीर्णा' इत्यत्र तृधातोस्तकारस्य निष्ठान्तप्रत्ययावयवीभूतस्य नत्वं न भवति। इह प्रघट्टके संज्ञाविधावुत्तरपदाधिकारे 'रदाभ्यां' 'स्यतासी लृलुटोः' इत्यादौ च प्रत्ययो विशेष्यतयाऽऽश्रीयते, इतरत्र तु विशेषणतयेति फलितोऽर्थः। तदिदं सकलं सूत्रेणैव सिध्यतीति स्थितम्। सौत्रस्य तदन्तविधेर्वाचनिकमपवादमाह वार्तिककारः–**यस्मिन् विधिस्तदादावल्ग्रहणे।** 'अचि श्नुधातु' इतीयङुवङ् च यथेह भवति–श्रियौ, भ्रुवाविति, एवमिहापि सिद्ध्यति–श्रियः, भ्रुव इति। तदन्तविध्यपवादस्तदादिविधिरतो विशेषणेनैव।

**वृद्धिर्यस्याचामादिस्तद्वृद्धम्।** यस्य समुदायस्यावयवानामचां मध्ये प्राथमिकोऽज् वृद्धिसंज्ञकः स वृद्धसंज्ञकः स्यात्। आम्रगुप्तीयः। 'वृद्धाच्छः'। अचामिति जातौ बहुवचनं, तेन द्वयोरपि भवति–शालीयः। एकस्यापि च भवति व्यपदेशिवद्भावात् शा नाम ब्राह्मणी, तस्या अयं शीयः। **'वा नामधेयस्य'।** पौरुषेयं नाम तस्य वृद्धसंज्ञा वा स्यादित्यर्थः। उभयत्र विभाषेयम्, देवदत्तादीनामप्राप्ते वामनादीनां च प्राप्ते आरम्भात्। देवदत्तीयाः, दैवदत्ताः। 'विधाय मूर्तिं कपटेन वामनीम्' इति श्रीहर्षः। **'गोत्रोत्तरपदस्य च'।** नित्यं वृद्धसंज्ञा वक्तव्येति शेषः। कम्बलचारायणीयाः। ओदनपाणिनीयाः। घृतरौढीयाः। कम्बलप्रियस्य चारायणस्य शिष्या इत्यादिरर्थः। पणनं पणः। 'घञर्थे कविधानम्' इति कः। सोऽस्यास्तीति पणी। पणिनो गोत्रापत्यं पाणिनः। अण्। 'गाथिविदथिकेशिगणिपणिनश्च' इति प्रकृतिभावः। ततो यूनीञ्। पाणिनिः। स्यादेतत्। 'ण्यक्षत्रियार्षञितः' इति सूत्रेणेह इञो लुक्प्राप्नोति, आर्षाद्यून्युत्पन्नत्वादिति चेत्? न, आर्षग्रहणेन 'ऋष्यन्धक' इति सूत्रविहितस्य ऋष्यण एव

ग्रहणात्। अस्य चौत्सर्गिकत्वात्। यद्वा पणिन्शब्दो यौगिको न तु ऋषौ रूढः। लुग्विधौ तु रूढस्यैव ग्रहणम्। एतच्च शास्त्रान्ते 'एकशेषनिर्देशाद्वा भगवतः पाणिनेः सिद्ध मिति वार्त्तिकनिर्देशाव, 'दाक्षीपुत्रस्य पाणिने' रिति भाष्यकारव्यवहाराच्च निर्णीयते। नन्वेवमपि पाणिनेश्छात्राः पाणिनीया इति न सिध्यति। वृद्धाच्छं वाधित्वा 'इञश्च' इत्यणः प्रसङ्गात्। न च छे विवक्षिते 'यूनि लुक्' इतीञो लुकि सति नाऽयमिञन्त इति वाच्यम्। प्रत्ययलक्षणेन इञन्तत्वानपायात्। अत्राहुः—'इञश्च' इत्यत्र 'कण्वादिभ्यो गोत्रे' इत्यतो गोत्रग्रहणमनुवर्त्तते। तच्च पूर्वसूत्र एव स्वर्यते। तेनाऽपत्याधिकारादन्यत्वेन प्राप्तं लौकिकं गोत्रं विहाय गोत्राधिकारो गृह्यते, 'स्वरितेनाधिकारः इति वचनात्। कण्वादिश्च गर्गाद्यन्तर्गणः। ततो 'गर्गादिभ्यो यञ्' इति विधीयमानो यञ् पारिभाषिक एव गोत्रे भवति, तत्राऽपत्याधिकारसत्त्वात्। तेन 'इञश्च' इत्यत्रापि पारिभाषिके गोत्रे य यञ् तदन्ताच्छेषेऽणित्यर्थः फलितः। यद्वा लक्षणप्रतिपदोक्तपरिभाषया कण्वादिसूत्रे यञेव गृह्यते, स च पारिभाषिके विहितत्वात्तस्यैव प्रत्यायकः। एवश्चार्थाधिकारादिञश्च इत्यत्रापि तथा। पाणिनिरिति तु यूनि इञ्, न तु गोत्रे। तेनाऽणोऽप्राप्तेर्निर्बाधश्छप्रत्यय इति स्थितम्। रूढस्यापत्यं रौढिः। अत इञ्—अनन्तरे, गोत्रे वा। न चैवम् 'इञश्च' इत्यण्प्रसङ्गः 'न द्व्यचः प्राच्यभरतेषु' इति निषेधात्। स्यादेतत्। यदि गोत्रोत्तरपदस्य वृद्धसंज्ञा विधीयते, तर्हि पिङ्गलकाण्व्यस्य छात्राः पैङ्गलकाण्वा इत्यत्र वृद्धाच्छः स्यात्। इष्यते तु 'कण्वादिभ्यो गोत्रे' इत्यण्। सत्यम्। अत एवाऽपरितोषादुक्तं वार्त्तिककृता 'गोत्रान्ताद्वाऽसमस्तवत्' इति। शैषिकाधिकारे 'प्राग्दीव्यतोऽण्' इत्यत्र वा इत्यमतिदेशः कर्त्तव्य इत्यर्थः। अपत्याधिकारादन्यत्वाच्च लौकिक गोत्रग्रहणात् 'ओदनपाणिनीयाः' इत्यादि सिद्धयतीति भावः। किमविशेषेण? नेत्याह। **जिह्वाकात्यहरितकात्यवर्ज्जम्।** कतशब्दो गर्गादिः। जिह्वाचपलो, हरितवर्णश्च—कात्यः, तस्य छात्रा इत्यर्थेऽणेव भवति, जैह्वाकाताः, हारितकाताः।

**त्यदादीनि च।** एतानि वृद्धसंज्ञानि स्युः। त्यदीयम्, अदसीयम्, इदमीयम् किमीयम्। त्वादायनिः,मादायनिः। 'उदीचां वृद्धादि'ति फिञ्। प्रत्ययोत्तरपदयोश्च' इति त्वमावादेशौ।

**एङ्प्राचां देशे।** यस्याचामादिरिति मण्डूकप्लुत्याऽनुवर्त्तते। एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने। एणीपचनीयः। गोनर्दीयः। भोजकटीयः। एङिति किम्? आहिच्छत्रः। कान्यकुब्जः। विधेयसंज्ञासम्बन्धबलेन पृथग्विभक्त्युच्चारणाच्च प्राग्ग्रहणमाचार्यनिर्देशार्थम्। व्यवस्थितविभाषा चेयम्। तेन क्रोडदेवदत्तशब्दयोरप्राग्देशवाचिनोर्न वृद्धसंज्ञा, तेन 'क्रौडः' 'दैवदत्तः' इत्यणेव भवति। प्राग्देशवाचिनस्तु देवदत्तशब्दस्य भवत्येव वृद्धसंज्ञा। ततः काश्यादित्वाद्वृद्धलक्षणौ ठञ्ञिठौ भवतः। **शैषकेष्विति वक्तव्यम्।** सैपुरिकी, सैपुरिका। स्कौनगरिकी, स्कौनगरिका। सेपुरं स्कोनगरं च वाहीकग्रामौ। तत्र वृद्धत्वात् 'वाहीकग्रामेभ्यश्च इति ठञ्ञिठौ भवतः। शैषिकेष्विति वचनादपत्ये वृद्धलक्षणः फिञ् न। विकारे च 'नित्यं वृद्धे'ति मयण् न। तदेवं कुणिमतं भाष्यमतं चानुसृत्य प्राग्ग्रहणमाचार्यनिर्देशार्थमिति व्याख्यातम्। **जयादित्यस्तु** प्राचि देशे ये सन्ति ते प्राचः पुरुषास्तेषां यो देशस्तदभिधान इति व्याचख्यौ। प्राचामित्यस्य च श्रूयमाणदेशविशेषणत्वे सम्भवति अध्याहर्त्तव्येन मतेनेत्यनेनान्वयो न कल्प्य इति तस्याशयः। अस्मिन् पक्षे वाहीकग्रामे 'दैवदत्तः' इत्यत्र वाऽवृद्धत्वादेव ठञ्ञिठौ न भवत इति स्पष्टम्। किन्तु 'सैपुरिकी' इत्यादिभाष्योदाहृत—वचनेनैव साधनीयं स्यादिति दिक्। देश इति किम्?। गोमती नाम प्राग्देशनदी, तत्र भवा मत्स्याः 'गौमताः'। देशग्रहणेन नदी गृह्यते 'नदीदेशोऽग्रामाः' इति पृथगुपादानाल्लिङ्गात्। प्रागादिदेशविभागस्त्वित्थम्—**शरावती**नाम नदी उत्तरपूर्वाभिमुखी। तस्या दक्षिणपूर्वस्यां दिशि व्यवस्थितो देशः प्राग्देशः। उत्तराऽपरस्यामुदग्देशः। उक्तञ्च—**प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा। विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती।** इति। अमरसिंहोऽप्याह—**लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः। देशः प्राग्दक्षिणः प्राच्यः उदीच्यः पश्चिमोत्तरः।** इति।अमरव्याख्यातारस्तु ऐशानीतो नैर्ऋत्यां पश्चिमाब्धिगामिनी **शराव**तीति वदन्ति। उभयथाऽपि प्रागुदक्स्वरूपे न विवादः, वाहीकदेशस्तु प्रागुदग्बहिर्भूतः। 'बहिषष्टिलोपो यञ्च' इति व्युत्पादनादिति **विवरणम्।** तच्चिन्त्यम्, 'अव्ययात्त्यप्' इति सूत्रे 'काश्यादिभ्यष्ठञ्ञिठौ' इति वार्तिकं व्याचक्षाणेन भगवता शाकलनाम्नो ग्रामस्योदीच्यवाहीकोभयरूपताभ्युपगमात्। तत्र हरदत्तादिभिस्तथैवानुवादाच्च। तस्माद्वाहीको देशविशेष इत्येव तत्त्वम्। तथाच कर्णपर्वणि—**पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः। वाहीका नाम ते देशा न तत्र दिवसं वसेत्।** इति। एतेन धर्मबहिर्भूतत्वाद्वाहीका इत्युक्तं भवति। शतद्रूर्विपाशा इरावती वितस्ता चन्द्रभागेति पञ्च नद्यः, सिन्धुनदस्तु षष्ठः, तन्मध्यदेशो **वाहीक** इति तद्व्याख्यातारः। व्युत्पत्त्यन्तरं तु तत्रैव दर्शितम्। **वहिकश्च वहीकश्च विपाशायां पिशाचकौ। तयोरपत्यं वाहीका नैषा सृष्टिः प्रजापतेः।** इति। एतच्च विवेचनं 'वाहीकग्रामेभ्यश्च' इत्यादावुपयोक्ष्यत इति सर्वं सुस्थम्॥

**❀ इति श्रीशब्दकौस्तुभे नवमाह्निकम् ❀**